अङ्गम्—वाद्यप्रबन्धः

अङ्गमङ्गीकृतं सान्द्रैरपाटैर्व्यापकाक्षरैः ।

शार्ङ्गः

व्यापकैरक्षरैः सान्द्रैरपाटैश्च विनिर्मितम् ।
यत्या च शुद्धया युक्तमङ्गमङ्गीकृतं बुधैः ॥

वेमः

अङ्गम्—तालप्राणः

तालसम्बन्धाक्षरं द्रुतलघुगुरुप्लुतभेदेनाङ्गमित्युच्यते। आञ्जनेयस्तु विरामद्रुतलघुगुरुप्लुतानीति पञ्चधाह।

तालकलाविलासे आञ्जनेयोक्तविरामस्थानेऽनुद्रुतं पठित्वा तथैवाह पञ्च भेदान्। तद्ग्रन्थकर्ता नाट्येऽप्यनुद्रुतद्रुतयोश्च प्रयोज्यत्वात्तयोरुद्देश इति वक्ति।

हंसपादं काकपादं षष्ठाङ्गं केचिदूचिरे ।
चतुर्भिर्लघुभिर्युक्तं निःशब्दे चित्रतालके ॥

तालकलाविलासे लघुः पञ्चधा उक्तः चतुरश्रत्र्यश्रमिश्रखण्डसङ्कीर्णभेदेन क्रमाच्चतुस्त्रिसप्तपञ्चनवलघ्वक्षरोच्चारणकालनियतः। नृत्तचूडामणिकारस्तु पञ्चवर्णात्मक एव लघुः सर्वासु जातिषु—इति वक्ति। अन्येषां कल्पनामात्रं न तु लक्ष्यानुसारत इति च।

अच्युतरायः

अङ्गदम्

केयूरस्योर्ध्वतः कूर्परोपरि भूषणम् ।

अङ्गपाटः—वाद्यप्रबन्धः

सान्द्रैश्च सरसैः पाटैर्यतिर्यत्र च वाद्यते ।
सोऽङ्गपाटप्रबन्धस्तु वाद्यज्ञैः परिकीर्तितः ॥

वेमः

अङ्गपाटकः—वाद्यप्रबन्धः

पाटैरेव यतिः सान्द्रैः प्राञ्जलैरङ्गपाटकः ।

शार्ङ्गः

अङ्गप्रत्यङ्गानि

अमीषां वाद्यभाण्डानां परस्परसमुच्चयात् ।
ध्वन्यनुग्रहणे चाङ्गप्रत्यङ्गाभिधया विदुः ॥
मृदङ्गो दर्दरश्चैव पणवश्च त्रिपुष्करम् ।
अङ्गं प्रत्यङ्गमन्ये तु झल्लरीपटहादयः ॥
एवमन्येषु वाद्येषु अन्योन्यानुग्रहादिह ।
अङ्गप्रत्यङ्गमुख्यत्वमूहनीयं विचक्षणैः ॥

नान्यः

अङ्गभ्रमरी—नाट्यभ्रमरी

वितस्त्यन्तरितौ पादौ कृत्वाङ्गभ्रमणं तदा ।
तिष्ठेद्यदि भवेदङ्गभ्रमरी भरतोदिता ॥

नाट्यदर्पणे

अङ्गभ्रमरी—भ्रमरी

समपादस्थितो यत्र भृशं मध्यविवर्तनात् ।
सत्वरं भ्रमयेद्गात्रं दण्डपक्षकरावपि ।
प्रयोगवंशगौ कुर्यादङ्गभ्रमरिका तु सा ॥

वेमः

अङ्गरचना

वर्णैर्यदङ्गवर्तनं कार्यं साङ्गरचना। तस्य वर्णाः सितः नीलः पीतः रक्तः। एते प्रधानवर्णाः। संयोगजवर्णा उपवर्णा इत्युच्यन्ते।

अङ्गरूपकम्—वाद्यप्रबन्धः

यत्रोच्यते द्विरुद्ग्राहः ध्रुवाभोगध्रुवास्ततः ।
क्रमेणैव प्रयोज्यन्ते तद्भवेदङ्गरूपकम् ॥

वेमः

द्विरुद्ग्राहो ध्रुवाभोगध्रुवाख्यक्रमशस्ततः ।
यत्राङ्गरूपकं प्राह तत्तेजोन्वयदीपकम् ॥

शार्ङ्गः

अङ्गलता—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स ग रि ग म प नि ध स.
(अव) स नि ध म रि स.

अङ्गसमम्-पुष्करवाद्ये अङ्गप्रत्यङ्गसंज्ञानां वाद्यानां समत्वापादनम्

ध्रुवाणां ग्रहमोक्षेषु कलान्तरकलासु च ।
यदङ्गं क्रियते वाद्यं तदङ्गसममुच्यते ॥

भरतः

यत्तु चच्चत्पुटादीनां ध्रुवाङ्गेन स्थितादिना ।
साम्यं भवेत्प्रयोगज्ञैस्तदङ्गसममुच्यते ॥

नान्यः

अङ्गहारः—देशीलास्याङ्गम्

पर्यायात्पार्श्वयोर्यत्र तालश्छन्दोऽनुसारिणी ।
नतिर्गात्रस्य कन्दर्पधनुर्वल्ली मनोहरा ।
नर्तक्या क्रियते नृत्ते सोऽङ्गहार उदाहृतः ॥

वेमः

अङ्गहारविधिः

विनियोगोऽङ्गहाराणां पूर्वरङ्गाङ्गगो बुधैः ।
ज्ञातव्यो मुरजाद्यैश्च वाद्यैस्ताललयानुगैः ॥
वर्धमानासारितेषु पाणिकागीतिकादिषु ।
उत्थापनादिषु प्रायः श्रेयः परमकाङ्क्षिभिः ॥

अङ्गहारान् गतानां तु करणानामपीरितः ।
विनियोगः फलं वापि पृथक्त्वेन प्रयोगतः ॥

कुम्भः

अङ्गानङ्गः—देशीलास्याङ्गम्

अङ्गं लास्याङ्गमादिष्टमनङ्गं ताण्डवं मतम् ।
यत्र नृत्येऽनयोर्योगस्तदङ्गानङ्गमीरितम् ॥

अशोकः

अङ्गानि

शिरोहस्तावुरःपार्श्वे कटिपादाविति क्रमात् ।
षडङ्गान्याहुरपरे मुखमप्यत्र मन्वते ॥

विप्रदासः

शिरो नेत्रे करौ पादौ चत्वार्यङ्गानि नर्तने ।
उपाङ्गान्यधरः पार्श्वे भ्रुवौ वक्षस्तथा कटिः ॥
प्रत्यङ्गान्युदरं पृष्ठं नासेति त्रितयं मतम् ।
इति द्वादश लक्ष्यन्ते प्राधान्यान्नृत्तकर्मणि ॥
अष्टादशविधान्यङ्गान्युक्तानि भरतादिभिः ।
अत्रैवान्तर्भवन्तीति न तानि कथितानि षट् ॥

हरिपालः

अङ्गिराः—तानः

षड्जग्रामे सपहीनौडुवः
रि नि ध म ग .

कुम्भः

अङ्गुलादिमानम्

लिक्षाष्टकमिता यूका यवो यूकाष्टको मतः ।
तिर्यग्यवोदरैः षड्भिः निस्तुषैः स्यादिहाङ्गुलम् ।
अनेनाङ्गुलमानेन वंशनिर्माणमिष्यते ॥

वेमः

अङ्गुलिपृष्ठगः—पादः

तिष्ठन् सर्वाङ्गुलीपृष्ठैरङ्गुलीपृष्ठगो भवेत् ।
स्फुरितायां तदास्थाने बुधैर्नृत्ये विधीयते ॥

ज्यायनः

अङ्गुलिमुद्रा—अङ्गुलिभूषणम्

पक्षिपद्माद्याकारेणोपेता ।

अङ्गुष्ठसंलग्नाः—पादाङ्गुल्यः

अङ्गुष्ठेन सहाङ्गुल्यः संहताश्च परस्परम् ।
संलग्नाः कथितास्तासामाकर्षे स्यान्नियोजितः ॥

सोमेश्वरः

अग्रे स्तम्बेरमस्येव रज्जुगर्भप्रवेशने ।
आमुक्तौ नूपुरादीनां दूरस्याकर्षणेऽपि च ॥

ज्यायनः

अङ्गोपाङ्गानि

करयोः करभौ पार्ष्णिगुल्फौ चरणयोर्द्वयोः ।
तलेऽङ्गुल्यश्च विज्ञेयान्युपाङ्गान्यत्र पञ्चधा ॥
वक्षो जत्रु स्तनौ पार्श्वकट्योरप्येवमूहचेत् ।
अङ्गेषु हस्तचरणावुपाङ्गेष्वपि दृष्टयः ।
प्रधानमेतेषु यतः सर्वं नृत्तं प्रतिष्ठितम् ॥

विप्रदासः

अङ्घ्रिताडिता—देशीचारी

वैशाखसंज्ञिते स्थाने स्थाने वा समसूचिनि ।
स्थित्वा तु चरणद्वन्द्वं समुत्प्लुत्य परस्परम् ।
तलाभ्यां ताडयेत्तत्र सैषा स्यादङ्घ्रिताडिता ॥

वेमः

अचितः—धावनलागनृत्तम्

जोडे यदि भवेत्तिर्यक् सम्मुखं निपतेद्भुवि ।
विरलेनाङ्घ्रियुग्मेन कथितः सोऽचितो बुधैः ॥

वेदः

अजः—स्वरजातिः

एकपञ्चाशता प्रोक्ता स्वरेणाज उदीर्यते ।

औमापतम्

अजक्रान्तः—तानः

षड्जग्रामे नारदीयतानः
म प नि स ग .

नान्यः

अजसत्वा—स्त्री

कृशा तनुभुजोरस्का निष्टब्धस्थिरलोचना ।
संक्षिप्तपाणिपादा च सूक्ष्मरोमसमाचिता ॥
भयशीला जलोद्विग्ना बह्वपत्या वनप्रिया ।
चञ्चला शीघ्रगमना ह्यजसत्वाङ्गना स्मृता ॥

भरतः

अच्युतरायः

तालकलाद्यधिकर्ता । कालः क्रैस्तवम् १५२९—१५४२.

अश्वतिका—अवनद्धे जातिः

करणैर्बहुभिश्चित्रैः सर्वमृदङ्गप्रहारसंयुक्ता ।
स्वाभाविकोत्तमगतावश्वतिका सा तु विज्ञेया ॥

भरतः

अञ्चितम्—उत्प्लुतिकरणम्

समपादस्थितो यत्र कृतोत्थानोत्प्लुतिर्दिवि ।
विवृत्तः पूर्ववत्तिष्ठेत् तदञ्चितमुदीरितम् ॥

ज्यायनः

अञ्चितम्—करणम्

उक्तोऽथ स्वस्तिको हस्तो दक्षिणो यः स एव चेत् ।
व्यावृत्या परिवृत्या च नासादेशेऽलपद्मवत् ॥
अञ्चिताङ्घ्र्यनुसारी स्यात्तदञ्चितमुदाहृतम् ।
एतस्य सम्मुखानात्मविषये भृशकौतुकात् ॥
वाक्यार्थे विनियोगोऽस्य मतो निर्वर्णनात्मके ।

ज्यायनः

कुम्भस्तु,
स्वस्वामिकौतुकाद्योज्यं सम्मुखप्रेक्षणे हितत् ।
इति विनेयोगं वक्ति ।
स्वकृते कौतुके योज्यं स्यात्सात्विकविचक्षणे ।

लक्ष्मणः

अञ्चितम्—दर्शनम्

पर्यायेण चलत्तारं मन्दं मन्दमथाञ्चितम् ।

शारदातनयः

अञ्चितं स्यान्मन्दमन्दं पर्यायचलतारकम् ।

वेमः

अञ्चितम्—वीथ्यङ्गम्

प्रपञ्चस्य नामान्तरम् । नानार्थानामुपक्षेपोऽञ्चितम् । श्लिष्टानि यत्र पदानि तद्वा अञ्चितम् । यथा —

विचित्ररूपसंपन्ना सामाकान्तवयोन्विता ।
श्यामा रैवतभूमीव धिनोति तिलकोज्वला ॥

अन्ये अञ्चितस्य स्थाने प्रपञ्चनाम वीथ्यङ्गं वर्णयन्ति । यदसंभूतवचनसंस्तवयुक्तो द्वयोः परस्परत एकस्यार्थस्य कृते आलापो हासजननश्च स प्रपञ्चः । यथा—कलावत्यां किञ्चिद्देहीति विदूषकवचनम् ।

सागरः

अञ्चितम्—शिरः

शिरः स्यादञ्चितं किञ्चित्पार्श्वतो नतकन्धरम् ।
रुक्चिन्तामोहमूर्छासु तत्कार्यं हनुधारणे ॥

शार्ङ्गः

किञ्चित्पार्श्वे नतग्रीवं ज्ञेयं मस्तकमञ्चितम् ।
व्याधौ मोहेऽथ मूर्छायां चिन्तायां चैतदिष्यते ।
अञ्चितस्यैव संज्ञान्या स्यात्स्कन्धानतशब्दिता ॥

विप्रदासः

व्याधौ मोहे च मूर्छायां चिन्तायां मदनिद्रयोः ॥

कुम्भः

अञ्चितः—पादः

यो भूमिस्थितपार्ष्णिः सन्नुत्क्षिप्ताग्रतलस्ततः ।
प्रसृताङ्गुलिकः पादः सोऽञ्चितोऽभिहितस्तदा ।
पादाहतौ तथा नानाभ्रमणादिषु कीर्तितः ॥

अशोकः

अञ्चितः—बाहुः

उरसः प्राप्य शीर्षं यो वक्षः पुनरुपाश्रितः ।
स बाहुरञ्चितः खेदे नियोज्यो नृत्यपण्डितैः ॥

अशोकः

अञ्चिता—ग्रीवा

चञ्चला प्रसृता या सावञ्जिताधो निरीक्षणे ।
केशपाशाकर्षणे च विनियुक्ता नियोक्तृभिः ॥

अशोकः

अञ्चितिका—अवनद्धे जातिः

यस्य चित्राः प्रहारास्तु मृदङ्गस्तम्भसंभवाः ।
राज्ञां चैषां चोत्तमानां गतावञ्चितिकेति सा ॥
अस्यामञ्चन्ति गच्छन्ति जातावुत्तमभूमिकाः ।
ततो ह्यञ्चतिकेत्येतां राजनारायणोऽब्रवीत् ॥

नान्यः

अञ्जलिः—हस्तः

वक्ष्यमाणपताकाद्युर्हस्तद्वितयबन्धनात् ।
हृदयासक्तितस्तज्ज्ञैरञ्जलिः समुदाहृतः ॥

उमा

पताकहस्ततलयोः संश्लेषादञ्जलिर्मतः ।
देवतागुरुविप्राणां नमस्कारेष्वयं क्रमात् ।
कार्यः शिरोमुखोरस्थो नृभिः स्त्रीभिर्यथेष्टतः ॥

शार्ङ्गः

पताकतलयोः श्लेषादञ्जलिः प्रणतौ क्रमात् ।
भूदेवगुरुदेवानां वक्षोवक्त्रशिरःस्थितः ।
क्रोधे च परिहासे च नास्त्ययं नियमः पुनः ॥

ज्यायनः

अङ्गुष्ठौ करशाखाश्च करभाङ्गुष्ठमूलके ।
संश्लिष्य यदि तिष्ठन्ति सर्पशीर्षकरद्वये ॥
तदासावञ्जलिर्नाम करः प्रोक्तो मनीषिभिः ।

सोमेश्वरः

मस्तके स्तनमध्ये वा स्थानमस्य विधीयते ।

हरिपालः

अट्टः—ध्रुवतालः

अट्टताले द्रुतौ द्विद्व्यक्षरकालावुभौ स्मृतौ ।
पञ्चपञ्चाक्षरमितौ लघू द्वौ तदनन्तरम् ।
चतुर्दशाक्षरीकालो ज्ञातस्तेनाट्टतालकः ॥

वेङ्कटमखी

अट्टताली—देशीतालः

लौ द्रौ भवेदट्टताली ॥ ०० ।

मदनः

अठः—ध्रुवालङ्कारः

अठतालेन संयुक्तमठतालं प्रचक्षते ।
अठताले द्रुतौ द्विद्व्यक्षरकालावुभौ स्मृतौ ॥
पञ्च पञ्चाक्षरमितौ लघू द्वौ तदनन्तरम् ।
चतुर्दशाक्षरीकालो ज्ञातस्तेनाठतालकः ॥
स रिई गअ स रि गअ मा मा ।
रि गअ मअ री ग मअ पा पा ॥

वेङ्कटमखी

अठतालः

अटतालः, अट्टतालः, अड्डतालः, अडतालः, अष्टतालः इति बहुभी रूपैर्दृश्यतेऽयं शब्दः ।

अठतालः—गीतालङ्कारः

शङ्खः कीलश्च विजयश्चारो निःशङ्क एव च ।
मकरन्दः परो ज्ञेयः अठतालश्च षड्विधः ॥

सं. सारः

अठाणा—मेलरागः

(आ) स रि म प ध नि स.
(अव) स नि ध प म ग रि स.
हरिकाम्भोजीमेलजन्यः

मेललक्षणे

(आ) स रि म प धा नि स.
(अव) स नि ध प म प गा रि स.

श्रीरागमेलजोऽयं रागः । अठाणायां धैवते तु श्रुतियुक्तत्वमिष्यते ।

परमेश्वरः

अडन्तरम्—स्थलस्थध्याडनृत्तम्

अडादस्य पदद्वन्द्वं संयोज्यं निपतेद्भुवि ।
अडन्तरमिति प्रोक्तं कोहलेन महात्मना ॥

वेदः

अडालहुरुमयी—स्थललागनृत्तम्

अडालाद्या हुरुमयी वामपादेन भूतले ।
यदा तिष्ठेन्निगदिता गणने तण्डुना तदा ॥

वेदः

अड्डतालः—प्रबन्धः

अड्डतालाभिधस्ताल उद्ग्राहध्रुवयोरिह ।
आभोगे नामनेतुः स्यादड्डताल इतीरितः ॥

हरिपालः

अड्डदिण्डम्—देशीनृत्तम्

दाण्टपादस्य संलग्नं जानुमूर्ध्नि पदं परम् ।
तिर्यक् प्रसारणे लग्नाद्वलनद्वितयं भवेत् ।
अड्डदिण्डमिति प्रोक्तं नाम ध्याडविशारदैः ॥

वेदः

अड्डस्खलितिका—पादपाटः

अर्धस्खलितिकाया क्षणमूह्यम् ।

अड्डाणरागध्यानम्

अठाणेति नामान्तरम् ।

कुटजस्रजा विराजन् कुन्तीकृतकेतके स्फुरन्मकरः ।
अड्डाणो घनवर्णो रमते रतिसङ्गरे नितराम् ॥

अयं मेघकर्णाटयोर्मित्रम् ।

सोमनाथः

अड्डितम्—मण्डलम्

उद्घट्टितो दक्षिणोऽङ्घ्रिर्विद्धां चारीमतः परम् ।
समोत्सरितमत्तल्लीं मत्तल्लीं तदन्तरम् ॥
अतिक्रान्ताभिधां चारीम् कुर्याद्वामोऽड्डितां तथा ।
अध्यर्धिकां च पादोऽन्यः कुर्याच्चापगतिं ततः ॥
समोत्सरितमत्तल्लीं मत्तल्लीं तदनन्तरम् ।
अतिक्रान्ताभिधां चारीं ऊरूद्वृत्तां तथैव च ॥
विद्युद्भ्रान्तां तथा चैव भ्रमरीं कुरुते क्रमात् ।
वामस्तु शकटास्याख्यां दक्षिणश्चरणः पुनः ॥
द्विर्द्विश्चापगतिं कुर्याच्चारीं वाड्डितां तथा ।
अध्यर्धिकां च पादोऽन्यः कुर्याच्चापगतिं ततः ॥
समोत्सरितमत्तल्लीं मत्तल्लीं भ्रमरीमपि ।
वामोऽथ स्यन्दितां कुर्यादथ पादस्तु दक्षिणः ॥
तलेनास्फोटयेद्भूमिं यदि तद्ज्ञैस्तदड्डितम् ।

वेमः

अड्डितमार्गः

अड्डिता ध्रुवा (ध्रुवाध्यायोक्ता) शृङ्गारविषयका तत्रोचितेति कृत्वा अड्डितमार्गः ।

अभिनवगुप्तः

ध्रुवाध्याये ध्रुवा पूर्वं योक्ता स्यादाङ्किताभिधा।
शृङ्गारहास्यरसयोरित्थं मार्गो विधीयते ॥

नान्यः

अङ्कितमार्गः—मृदङ्गे मार्गः

तत्तांकिकमृदङ्गप्रहारयुक्तोऽङ्कितमार्गः। यथा—मटकटथिधधट-घेघोघहमंथिधं घनधिधि इत्यङ्किता मार्गः।

भरतः

अङ्किता—चारी

स्वभावावस्थितस्याङ्घ्रेरेकस्याग्रे च पृष्ठतः।
सङ्गच्छते क्रमादन्यः पादोऽग्रतलसञ्चरः।
यत्र सैषाङ्किता चारी कीर्तिता नृत्तकोविदैः ॥

वेमः

अङ्किता—ध्रुवा

शृङ्गाररससंभूता तद्भूतगुणशालिनी।
सापेक्षभावा हृद्या या सा भवेदङ्किता ध्रुवा ॥
अङ्किता तु ध्रुवा कार्या दिव्यपार्थिवयोपिताम्।

वेमः

आद्यमन्त्यं चतुर्थं च पञ्चमं च तथा गुरु।
यस्यां ह्रस्वानि शेषाणि सा ज्ञेया त्वाङ्किता बुधैः ॥

भरतः

अतिक्रान्तम्—करणम्

यत्र चारीमतिक्रान्तां प्रयोगानुगतौ करौ।
कुर्वीत तदतिक्रान्तमुद्धतस्य परिक्रमे।
हस्तौ गरुडपक्षाख्यौ भट्टतण्डुरिहाब्रवीत् ॥

ज्यायनः

अतिक्रान्तम्—नृत्तकरणम्

स्थानं विषमसूच्याख्यं शिरः स्यादवधूतकम्।
हस्तौ तलमुखौ रौद्रदृष्टिश्चार्यपि सैव हि ॥

अत्र रौद्री चारी रौद्रीगतिः। यथा—

अत्युत्कटा च साटोपा रौद्री भ्रुकुटिभीषणा।
अतिक्रान्तोऽर्धजानुभ्यां कृत्ता भीतिकरी मता ॥

नन्दी

अतिक्रान्तम्—मण्डलम्

जनितां शकटास्यां च कुरुतेऽङ्घ्रिस्तु दक्षिणः।
वामोऽलातां दक्षिणस्तु पार्श्वक्रान्तामथेतरः ॥
सूचीं कुर्याद्दक्षिणोऽङ्घ्रिः पार्श्वकान्तस्तथैव च।
वामः पादस्तथा सूचीं भ्रमरीं च तथापरः ॥

ऊरूद्वृत्तामथो वामस्त्वलातामथ दक्षिणः।
वामपादश्च कर्तव्यौ छिन्नाख्यकरणाश्रयौ ॥
ततश्च बाह्यभ्रमरीं पादेनाङ्गेन कल्पयेत्।
वामः कुर्यादतिक्रान्तां दण्डपादां तु दक्षिणः।
यत्रैतन्मण्डलं प्रोक्तमतिकान्ताभिधं बुधैः ॥

वेमः

अतिक्रान्ता—चारी

एकस्य गुल्फपर्यन्तमन्यमुद्धृत्य कुञ्चितम्।
किञ्चित्प्रसार्य चोत्क्षिप्य चतुस्तालप्रमाणतः ॥
पात्स्वभावादथ च पातयेदग्रतो यदि।
अतिक्रान्ताभिधां चारीमामनन्ति मनीषिणः ॥

वेमः

अतिकीर्णः— आविद्धधातुः

लघुर्यत्रातिकीर्णोऽसौ।

शार्ङ्गः

लगौ यत्र चतुर्वारमन्ते चैव लघुस्तथा।
सोऽतिकीर्णो भवेद्धातुर्नवलघ्वात्मकोऽथवा ॥

कुम्भः

अतिचित्रतमः—तालप्राणः

मार्गशब्दे द्रष्टव्यम्

अतिचौथी—श्रुतिः

ऋषभस्य द्वितीया श्रुतिः। हनुमन्मते ऋषभो द्विश्रुतिः। हनुमन्मतेऽष्टादशैव श्रुतयः।

अतिजगतीच्छन्दोवृत्तानि

शतमष्टौ सहस्राणि द्व्यधिका नवतिः पुनः। ८१९२

भरतः

अतिधृतिच्छन्दोवृत्तानि

अतिधृत्यां सहस्राणि चतुर्विंशतिरेव च।
तथा शतसहस्राणि पञ्चवृत्तशतद्वयम्।
अष्टाशीतिश्च वृत्तानि वृत्तज्ञैः कथितानि तु ॥ ५२४२८८

भरतः

अतिनादिनी—श्रुतिः

मन्द्रधैवतद्वितीया श्रुतिः।

मण्डली

अतिपातः—आविद्धधातुः

अतिपातो लगाभ्यां द्विः।

शार्ङ्गः

द्विर्लघ्वाङ्गो यत्र धातुस्तमतिपात इतीरितम्।
चतुर्भिर्लघुभिः कैश्चिदतिपातः प्रकीर्त्यते ॥

कुम्भः

अतिबलम्—गर्भसन्ध्यङ्गम्

बुधैरतिवलं प्रोक्तं कपटे नातिवञ्चनम्।

सिंगः

अतिबलम्—वीथ्यङ्गम्

स्पर्धयान्योन्यसामर्थ्यव्यक्तिस्त्वतिवलं भवेत्।

यथा—मा भूच्चिन्तेत्यादिश्लोकः। अत्र नटसूत्रधारयोः परस्परस्पर्धया स्वप्रयोगसामर्थ्यप्रकाशनादतिवलम्।

सिंगः

अतिभाषा, आर्यभाषा—पाठ्यभाषा

अतिभाषा तु देवानामार्यभाषा तु भूभुजाम्।
संस्कारपाठ्यसंयुक्ता सम्यङ्न्याय्यप्रतिष्ठिता ॥

भरतः

अतिशक्करी—छन्दो वृत्तानि

द्वात्रिंशत्तु सहस्राणि सप्त चैव शतानि च।
अष्टौ षष्टिश्च वृत्तानि ह्याश्रयन्त्यतिशक्करीम् ॥ ३२७६८

भरतः

अतिशयः—लक्षणम्

उत्तमार्थाद्विशिष्टो यः स चाप्यतिशयः स्मृतः।

भरतः

उक्तादप्यर्थाद्विशेषो यथा—यावन्त्येव पदानीति श्लोके ईर्ष्यात्मा यः प्रेमण्युत्तमेऽर्थस्ततोऽपि विशेष उक्तः। न चेयमतिशयोक्तिः। संभाव्यमानत्वात्। अन्यत्र पठ्यते।

बहून्गुणान्कीर्तयित्वा सामान्यजनसंभवान्।
विश्लेषः कीर्त्यते यत्र ज्ञेयः सोऽतिशयो बुधैः ॥

अभिनवः

बहून् गुणान्कीर्तयित्वा सामान्यजनसंभवान्।
विशेषः कीर्त्यते यस्तु ज्ञेयः सोतिशयो बुधैः ॥

भरतः

यथा—विलक्षकुरुपतौ धृतराष्ट्रं प्रति एतत्ते हृदयमित्यादि भीष्मवचनमतिशयः।

अतिसूक्ष्मा—श्रुतिः

तारपञ्चमस्य तृतीया श्रुतिः।

पार्श्वः

अतिहसितम्—हास्यरसभेदः

हास्यशब्दे द्रष्टव्यम्।

अत्यग्निष्टोमः—तानः

षाडवः षड्जलोपः

ध प म ग रि नि.

कुम्भः

अत्यष्टिच्छन्दोवृत्तानि

एकत्रिंशत्सहस्राणि वृत्तानां च द्विसप्ततिः।
तथा शतसहस्रं च छन्दस्यत्यष्टिसंज्ञिते ॥ १३१०७२

भरतः

अथर्वणी—श्रुतिः

षड्जस्य द्वितीया श्रुतिः हनुमन्मते। हनुमन्मते अष्टादश एव श्रुतयः।

अद्भुतम्—करणम्

आस्थानकुट्टनयुतचरणोऽङ्घ्रिप्लुतः।
स पुनः शीघ्रमारब्धः करौ तदनुसारिणौ।
यत्र तुल्यं भवेन्नाम्ना करणं चाद्भुतं तु तत् ॥

हरिपालः

अद्भुतः—रसः

अथाद्भुतो नाम विस्मयस्थायिभावात्मकः। तस्य दिव्यजनदर्शनेप्सितमनोरथावाप्त्युपवनदेवकुलादिगमनसभाविमानमायेन्द्रजालसंभावनादयो विभावाः। नयनविस्तारानिमेषप्रेक्षणरोमाञ्चाश्रुस्वेदहर्षसाधुवाददानप्रबन्धहाहाकारबाहुवदनचेलाङ्गुलिभ्रमणादयोऽनुभावाः। स्तम्भाश्रुस्वेदगद्गदरोमाञ्चावेगसंभ्रमप्रहर्षचपलतोन्मादधृतिजडताप्रलयादयो भावाः।

भरतः

मायेन्द्रजालेति।

वंचनं मन्त्रशक्त्या यत्सा मायेत्यभिधीयते।
इन्द्रजालो वञ्चनं स्यात्कुहकौषधशक्तितः ॥

विप्रदासः

माया रूपपरिवर्तनादिका। इन्द्रजालं मन्त्रद्रव्यवस्तुयुक्त्यादिना असंभवद्वस्तुप्रदर्शनम्।

अभिनवः

दिव्यश्चानन्दजश्चेति द्विधा ज्ञेयोऽद्भुतो रसः।
दिव्यदर्शनजो दिव्यो हर्षाच्चानन्दजो मतः ॥

विप्रदासः

अर्थवैचित्र्य इत्यस्य धातोरद्भुतनिर्वहः।
विचित्रा यस्य भवति चित्तवृत्तिस्ततोऽद्भुतः ॥

शारदातनयः

अद्भुतप्राप्तिः—निर्वहणसन्ध्यङ्गम्

उपपन्नेतरप्राप्तिरद्भुतप्राप्तिरुच्यते।

सर्वेश्वरः

अद्भुता—दृष्टिः

या चाकुञ्चितपक्ष्माग्रा साश्चर्योद्वृत्तितारका ।
सौम्या विकसितान्ता च साद्भुता दृष्टिरद्भुते ॥

भरतः

समाकुञ्चितपक्ष्माग्रा मनागुद्वृत्ततारका ।
सौम्या विकसितप्रान्ता साद्भुता दृष्टिरद्भुते ॥

सोमेश्वरः

सौम्या निर्मलशुक्लांशा सुव्यक्तामलतारका ।
ईषत्कुञ्चितपक्ष्माग्रा दृष्टिरुक्ताद्भुताभिधा ॥

विप्रदासः

अद्यकालवीणायां स्वरस्थापनम्

मेलशब्दे द्रष्टव्यम् ।

अधःक्षिप्ताः—चरणाङ्गुल्यः

मुहुः पातादधःक्षिप्ता विब्बोके किलिकिञ्चिते ।

विप्रदासः

अधममददृष्टि

सनिमेषानिमेषा च किञ्चिद्दर्शिततारका ।
अधोभागचरीदृष्टिरधमे तु मदे स्मृता ॥

भरतः

अधरः (ओष्ठः)

विवर्तितः कम्पितश्च विसृष्टो विनिगूहितः ।
सन्दष्टकसमुद्गश्चोद्वृत्तायतविकासिताः ।
रेचितश्चेति दशधा बुधैरोष्ठ उदीरितः ॥

कुम्भः

मुकुलः कूणितोद्वृत्तौ रेचितः कम्पितायतौ ।
सन्दंशश्च (सन्दष्टश्च) विकासी च प्रसारितनिगूहितौ ।
इत्योष्ठो दशधा प्रोक्तो नामतो लक्ष्म लक्ष्यते ॥

सोमेश्वरः

विवर्तितो विसृष्टश्च कम्पितो विनिगूहितः ।
सन्दष्टकस्समुद्गाख्योऽधरः पोढेति दर्शितः ।
रेचितोद्वृत्तायताश्च विकासीत्यपरे विदुः ॥

अशोकः

अधरमध्यद्विरुत्तरः—धातुः

मन्द्राद्यन्तो भवेत्तारोऽधरमध्यद्विरुत्तरे ।

शार्ङ्गः

अधरमध्यद्विरुत्तरः—वीणायां धातुः

मन्द्रद्वयमध्ये तारस्वरः ।

अधरादिद्विरुत्तरः—वीणायां धातुः

पूर्वं तारः । परं द्वे मन्द्रहनने ।

अधरादिद्विरुत्तरः—धातुः

सकृत्तारोऽथ मन्द्रो द्विरधरादिद्विरुत्तरे ।

शार्ङ्गः

अधराद्युत्तरान्तः—वीणायां धातुः

आदौ तारः । अन्ते मन्द्रः ।

अधराद्युत्तरान्तकः—धातुः

यस्त्वादितारो मन्द्रान्तः सोऽधराद्युत्तरान्तकः ।

शार्ङ्गः

अधिकाक्षरा—प्राकृते मालावृत्तम्

द्वौ चतुर्मात्रिकौ, जो वा नलौ वा, द्वौ चतुर्मात्रिकौ, पञ्चमात्रिक एकः ।

विरहाङ्कः

अधिबलम्—गर्भसन्ध्यङ्गम्

कपटेनातिसन्धानं ब्रुवतेऽधिबलं बुधाः ।

भरतः

परस्परवचनप्रवृत्तयोः यस्यैवाधिकं कर्म सहायबुद्ध्यादीनवलम्बयति स एव तं अतिसन्धातुं वञ्चयितुं समर्थ इति तदिदं कर्म अधिबलम् । यथा—सागरिकावेषं धारयन्ती वासवदत्ता विदूषकबुद्धिदौर्बल्यात् राजानमतिसन्धत्ते किं पद्मस्येत्यादिश्लोकान्तमधिबलम् ।

अभिनवगुप्तः

कपटस्यान्यथाभावमधिबलमाहुः । यथा—रत्नावल्यामातान्त्रतामित्यादि राजवचनं वासवदत्तां प्रति वञ्चनं विफलमासीत् । एके तु सोपालंभवाक्यमधिबलमिच्छन्ति । यथा—वेण्यां पञ्चमेऽङ्के धृतराष्ट्रमुद्दिश्य कृष्टेति-भीमवाक्यम् ।

रामचन्द्रः

कपटस्यान्यथाकरणमधिबलम् ।

सागरः

अतिसन्धानमाचार्याः नाटकेऽतिबलं विदुः ।

सर्वेश्वरः

अधिबलम्—वीथ्यङ्गम्

परवचनमात्मनश्चोत्तरोत्तरसमुद्भवं द्वयोर्यत्तु ।
अन्योन्यार्थविशेषकमधिबलमिति तद्बुधैर्ज्ञेयम् ॥

भरतः

परस्य वचनमात्मनश्च वचनं परस्परमर्थविशेषलाभो यत्र भवतीत्युत्तरोत्तरस्याधिकाधिकस्यार्थस्य समुद्भवो यत्र तदधिबलम् । यत्रोक्तिप्रत्युक्तिक्रमे क्रियमाणे परस्परप्रज्ञानोपजीवन-

बलात्स्वपक्षसुघटितादधिबलसंबन्धादधिबलम्। यथा—नागानन्दे रागस्यास्पदमित्यारभ्य मया परार्थं प्रतिपाल्यते इत्यन्तं प्रथमाङ्के।

अभिनवः

उत्तरोत्तरसंभूतमात्मनश्च परस्य च।
विद्यादधिवलं वाक्यमेकवस्तु विशेषणम्॥

सागरः

अधिष्ठानम्—शब्दगुणः
तस्य सप्तविधं प्राहुरधिष्ठानं पुरातनाः।

कुम्भः

अधीरा—नायिका
अधीरा दयिता श्लिष्टा रतिचेष्टां न बुद्ध्यति।
मोदते मुह्यति मुहुः स्वेदरोमाञ्चमन्थरम्॥
अपराधे सति मुहुर्हुंहुमित्येव भाषते।
सखीसमक्षं कुरुते केशाकर्षणताडनम्॥

शारदातनयः

अधोमुखम्—शिरः
लज्जादुःखप्रणामेषु स्यादन्वर्थमधोमुखम्।

शार्ङ्गः

अधःकृतमुखं यत्स्यात्तदन्वर्थमधोमुखम्।
दुःखे प्रणामे चिन्तायां लज्जायामपि युज्यते॥

विप्रदासः

अधोगतमवाचीनस्थिताननमधोमुखम्।
अभिवन्दनमन्दाक्षविषादप्रमुखेषु तत्॥

ज्यायनः

अधोमुखः—बाहुः
भूतलाभिमुखं गच्छन् भवेद्बाहुरधोमुखः।

वेमः

अध्यर्धम्—मण्डलन्
दक्षिणश्चरणो यत्र जनितां स्पन्दितां ततः।
बद्धां समोत्सारितकमत्तल्लीं तदनन्तरम्॥
मत्तल्लिकामतिक्रान्तां तदाङ्घ्रिभ्रमणे करः।
जनितां स्पन्दितां नैव बद्धां चारीं तथैव च॥
समोत्सरितमत्तल्लीं मत्तल्लीं च ततः परम्।
अतिक्रान्ताभिधां चारीं क्रमादध्यर्धिकामपि॥
दक्षिणस्य कटीभ्यां च विधायाशाचतुष्टये।
मण्डलभ्रमणं कुर्यादध्यर्धं परिकीर्तितम्॥

वेमः

तदा चाध्यर्धविषयमध्यर्धं मण्डलं भवेत्।

कुम्भः

अध्यर्धिका—चारी
यत्र दक्षिणपादस्य पार्ष्णिदेशे विधीयते।
वामः पादो दक्षिणश्चाप्यपसृत्य स्वपार्श्वयोः॥
सार्धतालप्रमाणेन स्थापितस्त्र्यश्रभावतः।
एवमङ्गान्तरेणापि यदि साध्यर्धिका भवेत्॥

वेमः

अध्यवसायः—नाट्यालङ्कारः
कीचकाङ्के—एतस्मिन्नेवेतिवचनं इत्यादि भीमवाक्यम्।

सागरः

अध्यात्मम्—गीतगुणः

अध्यात्मसङ्गतम्—रञ्जनगुणः
गूढार्थैः परमार्थैश्च संसारसुखदूषकैः।
पदैर्नियोजितं गीतं साध्यात्मं योगिवल्लभम्॥

नोमेश्वरः

अध्यापिका—श्रुतिः
तारधैवतस्य तृतीया श्रुतिः मण्डलीमते।

अनङ्गः—देशीतालः
अनङ्गो लपसो ज्ञेयः (। ऽ ॥ऽऽ) (?)

मदनः

लघुप्लुतौ सकारश्च स्यादनङ्गाभिधे पुनः। (। ऽ ॥ ऽ)
री री गा मा पा धा नी सा.

जग

अनङ्गमण्डनः—देशीतालः
लचतुष्कं द्रुचतुष्कं गुरुश्चानङ्गमण्डने।
अष्टौ मात्राः ॥॥ ० ० ० ० ऽ

तालप्रस्तारः

अनङ्गाङ्गमोटनम्—चालकः
यदा मण्डलतो हस्तौ लुठित्वा स्कन्धदेशयोः।
वद्धयत्र शिरः क्षेत्रे नयनानन्ददायकम्।
लोडितौ तदनङ्गाङ्गमोटनं कीर्तितं तदा॥

अशोकः

अनङ्गुष्ठयुताः—पादाङ्गुल्यः
अनङ्गुष्ठयुताः प्रोक्तास्त्यक्ताङ्गुष्ठा मिथः श्रिताः।
पादपारोहणे पूगदग्धादिग्रहणे स्मृताः॥

ज्यायनः

अनङ्गोद्दीपनम्—चालकः
विलोड्योरःस्थले हस्तौ क्रमादादत्तमण्डलौ।
विलासेनांसपर्यन्ते गत्वाभ्यन्तरमागतौ॥

उद्वेष्टितक्रियापूर्वं यत्राधोवदनो यदा ।
विद्वद्भिस्तत्समादिष्टमनङ्गोद्दीपनं तदा ॥

अशोकः

**अनलमुखीवर्तना**

नाममात्रप्रसिद्धा ।

कल्लिनाथः

**अनलसः**

वैमनस्यं श्रमो वापि व्यापारे नैव जायते ।
यस्य रागश्च वर्धेत स नरो ह्यलसेतरः ॥

भाट्टविवेकः

**अनवरतत्यागी**—देशीतालः

अथानवरतत्यागिताले दीप्तौ शरास्त्रयः ।
चापौ पुङ्खास्त्रयश्चापौ त्रयः काण्डा प्लुतौ द्रुतः ॥
ऽऽ॥।ऽऽ॥।ऽऽ॥।ऽऽ०

गोपतिप्पः

**अनामिका**—श्रुतिः

मन्द्रमध्यमद्वितीया श्रुतिः ।

नण्डली

**अनालम्बनम्**—वीणावादने दोषः

अनवस्थितसंस्थानमनालम्बनमीरितम् ।

कुम्भः

**अनिबद्धगीतम्**

आलप्त्याद्यनिबद्धं स्यात्स्वरमात्रेण तद्भवेत् ।

जगदेकः

**अनिर्युक्तप्रबन्धः**

अङ्गमात्रेण विहिता अनिर्युक्ता इतीरिताः ।

पार्श्वदेवः

**अनिलावलिः**—मेलरागः खरहरप्रियामेलजन्यः

(आ) स रि ग म नि ध नि स.
(अव) स नि प म रि स.

मञ्जः

**अनीकिनी**—चतुष्पदागीतम्

आदिमध्यान्तकलितैरनुस्वारकृताक्षरैः ।
सन्निपातैश्चानियतैः शेषैः पादैरनीकिनी ॥

वेमः

मध्याद्यन्तैः सन्निपातैरनुस्वारकृताक्षरैः ।
शेषैरनियता पादैर्विज्ञेया सा त्वनीकिनी ॥

भरतः

**अनुकम्पा**

अनुकम्पा तु सा ज्ञेया दुःखितान्प्रति देहिनः ।
उपकारपरत्वं यत्कुरुते चित्तविक्रियाम् ॥

भावविवेकः

**अनुक्तसिद्धिः**—लक्षणम्

प्रस्तावेनैव शेषोऽर्थः कृत्स्नो यत्र प्रतीयते ।
वचनेन विनानुक्तसिद्धिः सा परिकीर्तिता ॥

भरतः

यथा—तापसवत्सराजे परमतो जानाति देवी स्वयं इति वासवदत्तां प्रति मन्त्रिवाक्यम् ।

**अनुगतम्**—वाद्यम्

किञ्चिद्गीतानुहरणाद्वाद्यं त्वनुगतं मतम् ।
यथा विरतिरन्यत्र स्थितिः स्थानान्तरेष्वपि ।
विलम्बिते गीतलये वैदग्ध्याद्द्रुतवादनम् ॥

शार्ङ्गः

**अनुगतम्**—गीतवाद्यमेलनप्रकारः

विलम्बितलये गीते सति द्रुतलयान्वितम् ।
स्याद्वादनं तथा गीतिविश्रामादन्यतो गतिः ॥
किञ्चिद्गीतानुगमने सति वाद्यस्य लक्ष्यते ।
तद्गीतानुगवाद्येषु भवेदनुगतं त्विदम् ॥

कुम्भः

**अनुगतम्**—मृदङ्गवाद्ये अक्षरानुसरणं वादनम्

समपाण्यवपाणियुतं स्फुटप्रहारकरणानुगं चैव ।
गेयस्य च वाद्यस्य च भवेदवघातो यत्तदनुगतम् ॥

भरतः

**अनुगतिः**—शिल्पकाङ्गम्

अकामोपनतेनैव साधोरित्यादिनोच्यते ।
यथा वामेन वानीर इत्याद्यनुगतिर्मता ॥

शारदातनयः

प्रस्थितस्य हर्षादनुयानमनुगमनम् । यथा—मायाशकुन्ते इयं दर्भश्रेणीत्यादि नलवाक्यम् ।

सागरः

वामेनेति । कुन्दमालायां सीतामुद्दिश्य वाल्मीकेर्वचनम् । मायाशकुन्तो नलविजयनाटके कश्चनाङ्कः ।

**अनुघर्षणः**—तालप्राणः

मार्गशब्दे द्रष्टव्यः ।

अनुचर्चरः—देशीतालः
दलौ दलौ दत्रयं भो नजौ पश्चानुचर्चरे ।
१८।। मात्राः ।

तालप्रस्तारः

अनुचारिका
सर्वावस्थाप्रचारेषु अनुगच्छति या नृपम् ।
विज्ञेयं नाम तस्यास्तु नृपतेरनुचारिका ।।

भरतः

अनुडिण्डिमः—देशीतालः
सदौ लौ दचतुष्कं च लो गौ गश्चानुडिण्डिमः ।
१२।। मात्राः ।

तालप्रस्तारः

अनुत्पाद्येतिवृत्तम्—कथाशरीरम्
यथावगतवर्तमानातीतमहाराजादिवृत्तवर्णनं विषयतामस्या आचष्टे। यथा—हर्षवर्धनराज्यवर्धनादिवर्णनं हर्षचरिते ।

भोजः

अनुतुटी—तालप्राणः
मार्गशब्दे द्रष्टव्या

अनुत्सेकम्—दर्शनम्
यद्विनम्रपुटापाङ्गं तदनुत्सेकमुच्यते ।

शारदातनयः

अनुद्दिष्टसंहारः—सन्धिः
प्रशान्तजातिनाटके पञ्चमः सन्धिः ।

शारदातनयः

अनुनयः—लक्षणम्
उभयोः प्रीतिजननो विरुद्धाभिनिवेशयोः ।
अर्थस्य साधकश्चैव विज्ञेयोऽनुनयो बुधैः ।।

भरतः

अनुनीतिः—लक्षणम्
अपूर्वक्रोधजनितमपराधं प्रमृज्य यत् ।
सेवार्थं मधुरं वाक्यं सानुनीतिः प्रकीर्तिता ।।

भरतः

अपूर्वस्य सातिशयस्य क्रोधस्य जननाय कोपाधत्तम् । यथा—प्रसीदेति ब्रूयामित्यत्र (रत्नावली) ।

अभिनवः

अनुपस्कृतम्—दर्शनम्
प्रौढरागारुणापाङ्गं यत्स्यात्तदनुपस्कृतम् ।

शारदातनयः

अनुबन्धः—धातुः
सजातीयविजातीयभेदसंमिश्रणोद्भवः ।
अनुबन्धाभिधो धातुः शार्ङ्गदेवेन कीर्तितः ।।

शार्ङ्गः

अनुबन्धः—व्यञ्जनधातुः
आविद्धस्यानुबन्धेन व्याख्यातोऽस्यानुबन्धकः ।

कुम्भः

नन्वेकलक्ष्मभेदोऽयं गण्यते किं पृथक् पृथक् ।
मैवं तद्धातुभेदानां बाहुल्यं यत्र दृश्यते ।
विशिष्टे धातुना तेन सोऽनुबन्धाभिधां व्रजेत् ।।

शार्ङ्गदेवः

"तत्तद्धातुभेदानां पृथक्त्वे सत्येव पूर्वपूर्ववदित्यतिदेशस्य मिश्रणमात्रविषयत्वेन चतुर्णामपि भिन्नलक्षणत्वात्पृथग्गणनमुपपद्यते" इति कल्लिनाथः ।

अनुबन्धः—वीणायां धातुः
विस्तारभेदः ।
सजातीयविजातीयधातुभेदविमिश्रणात् ।
धातुभेदोऽनुबन्धाख्यः कुम्भभूपेन कीर्तितः ।।

कुम्भः

अनुबन्धः—करणधातुः
अस्यानुबन्धो विज्ञेयो विस्तरस्यानुबन्धवत् ।

कुम्भः

"विस्तरस्येति। यथायोगं रिभितादिमिश्रणोद्भव इत्यतिदेशार्थः" इति कल्लिनाथः ।।
करणस्यानुबन्धस्तु स्याद्विस्तारानुबन्धवत् ।

शार्ङ्गः

अनुबन्धः—आविद्धधातुः
अस्यानुबन्धो विज्ञेयः करणस्यानुबन्धवत् ।

कुम्भः

अत्र क्षेपादीनां मिश्रणादनुबन्धः ।
द्वाभ्यां त्रिभिश्चतुर्भिश्च नवभिर्लघुभिः क्रमात् ।
क्षेपादयोऽत्र चत्वारो भवतीत्यपरेऽब्रुवन् ।।

शार्ङ्गः

अनुबन्धः—स्वराङ्गम्
अनुबन्धो नाम पदान्तरेषु विच्छेदोऽनुच्छ्वासनं वा ।

नान्यः

अनुबन्धा—ध्रुवा
यतिं लयं वाद्यगतिं पदवर्णमथाक्षरम् ।
विभावांश्चानुभावांश्च भावांश्च व्यभिचारिणः ।।

गीते रसे च नियतमनुबध्नाति या क्रमात् ।
सा ध्रुवा चानुबन्धाख्या नाट्यविद्भिर्निरूपिता ॥

वेमः

**अनुभावः**

अनुभावो नाम लोके कारणादुत्पन्नस्य स्थायिभावस्य भूयशो विकारः कटाक्षादिः कार्यलक्षणः।

अनुभावो विकारस्य भावसंचूननात्मकः ।

सोऽपि विकारत्वाद्विभावादनुभूयमान एव भावपोषक इति वेदितव्यम् । विभावनिष्पन्नाननुभावयति । स्वाद्यतां नयतीत्यनुभावः इदमेवानुभावस्यानुभावत्वं यदयमनुभूयमानो भावकानां भावेपु स्वाद्यतालक्षणमुत्कर्षं निदधाति। अत्र मुनिः—यदयमनुभावयति नानार्थान्विभावनिष्पन्नान् वागङ्गसत्वकृतोऽभिनयान् । अत्र श्लोकः—

वागङ्गाभिनयेनैव यस्मात्त्वर्थो विभाव्यते ।
शाखाङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः ॥

यथा—"स्तिमितविकसितानामुल्लसद्भ्रूलतानोमित्यादि। एवं च विभावानुभावयोस्साक्षाद्भावकोऽनुभावकर्मतया भावोत्कर्षहेतुत्वं साधर्म्यमित्युक्तं भवति ।

अयं तु विशेषोऽनुभावस्य । यदयं लोककार्यत्वेनापि य आत्मनीनकार्ये कारणत्वापन्नो अनुभावनाव्यापारेणानुभावशब्दवाच्यः स्थायिभावान्भावयतां सामाजिकानां भावसंसूचनाश्रुरोमाञ्चादिविकारलक्षणकार्यरूपोऽपि सद्भावं पोषयति । लक्षयन्ति हि प्राकृता अपि रसिकानां सन्ततप्रसादानन्दजलबिन्दुदन्तुरपुटानि लोचनानि समुन्मितस्फटिकनिकुरुम्बकरम्बितकपालान्यपि मुखान्यवलोकयन्तो नूनमेषां चेतसि कोऽपि चमत्कारकोरकितो विकारः प्रादुरस्ति। न चेत्कोयं नामैषामीदृशी शृङ्गारविक्रियेति। विभावानुभावव्यमिचारिलक्षणा निखिललोकयात्रा । तस्माद्रसं रिरंसयिषुभिः प्रतिरसं विभावानुभावौ यथायथमादरादधिगन्तव्यौ । उक्तं च—

विभावः काननं तेषामुत्पत्तेर्जीवनस्य वा ।
बोधकस्त्वनुभावः स्याद्विज्ञेयौ तौ प्रयत्नतः ॥
हर्षादीर्ष्यादिसंभूतो बाष्पः स्याद्बहुहेतुकः ।
न विभावं विना शक्यो विज्ञातुं किं कुतोऽप्यसौ ॥
चित्तवृत्यात्मको भावः परोक्षः प्राणिनामिह ।
अनुभावं विना वक्तुं विज्ञातुं वा क्षमोऽत्र कः ॥

रसविवेकः

**अनुभावः**

अथानुभाव इति कस्मादुच्यते । यदयमनुभाव इति वागङ्गसत्वकृतमभिनयम् । अत्र श्लोकः—

वागङ्गसत्वाभिनयैर्यस्मादर्थो विभाष्यते ।
वागङ्गोपाङ्गसंयुक्तस्त्वनुभाव इति स्मृतः ॥

भरतः

यच्चाह भगवानत्रानुभावो भावबोधकः ।
यतोऽनुभावयन्त्येते विभावजनितां रतिम् ।
विस्मृतां बोधयन्त्येवमनुभावाः प्रकीर्तिताः ।
रसतां गच्छति स्थाय्यौ कार्यं यदुपलभ्यते ।
अनुभावः स विज्ञेयो भावसंस्थानसूचकः ।
तत्र नाट्यविदां तावद्गतिरेषा प्रवर्तते ।
विभावपरिपुष्टे तु रत्यादौ स्थायिनि स्थिते ।
समुद्रकाल्यकल्लोलस्थानीया व्यभिचारिणः ।
चेतोविकारा निर्वेदप्रमुखास्तेऽपि कीर्तिताः ।
साक्षाद्दुरधिगमत्वाद्विकारत्वेन चेतसः ।
तत्सूचकास्तु ये वागारम्भविक्षेपकादयः ।
कटाक्षप्रमुखास्ते स्युः निर्वेदादेरनु स्फुटम् ।
तदानुभावयन्त्येते निर्वेदाद्यमतो मताः ।
अनुभावा इदं चाभिधानमेषां प्रगल्भते ।
निरूपका रसस्यैकेऽन्यथा प्राहुस्तदुच्यते ।
कैशिकीप्रमुखा रत्यादिकं स्थायिनमञ्जसा ।
विकाराद्यैरनुमिता दृष्टेरनुभवास्पदम् ।
निर्वेदाद्याः समानीता भावयन्त्यनुभावताम् ।
नातीव क्रियतेऽत्रापि निबन्धो नाममालके ।
यतो विप्रतिपत्तिस्थं स्थीयतामिदमेव हि ।
भ्रूलीला दृग्विकाराश्च मुखरागोष्ठकम्पने ।
हस्तपादविकाराश्च कराद्यभिनयः स्मितम् ।
लीलादिहाववर्गश्चानुभावा मुनिसम्मताः ।

कुम्भः

**अनुमन्द्रः**—नादभेदः

नादोऽतिसूक्ष्मनामा नाभौ वदते(ती)ति शार्ङ्गदेवेन ।
सूचित इहानुमन्द्रो वीणार्होऽयं तदुक्तोऽत्र ॥

सोमनाथः

**अनुमन्द्रा**—श्रुतिः

मन्द्रषड्जद्वितीया श्रुतिः ।

मण्डली

**अनुमानम्**—गर्भसन्ध्यङ्गम्

रूपानुगमनमनुमानम् । रूप्यत इति रूपं वस्तु । यथा—

तस्यानुमानयति काञ्चनकान्तिगौरः ।
कायश्च सूयतनयत्व-मधृष्यता च ॥

सागरः

अनुमाननिश्चयो लिङ्गात्। लिङ्गाद्धेतोः नान्तरीयकस्य लिङ्गिनो निश्चयोऽनुमानम् । निश्चयरूपत्वादेव चोहरूपायाः युक्तेर्भिद्यते।

यथा—स्वप्नवासवदत्ते शेफालिकामण्टपशिलातलमवलोक्य वत्सराजवचनं पादाक्रान्तानीति। अत्र काचिद्रहस्यं निवसत्येवेति निश्चयः।

रामचन्द्रः

अभ्यूहश्चेष्टिताकारैरनुमानमुदाहृतम्।

सर्वेश्वरः

अर्थस्याभ्यूहनं लिङ्गादनुमानं प्रचक्षते।

सिंगः

लिङ्गाल्लिङ्गिपरिज्ञानमनुमानं मतं यथा।

अमृतानन्दी

रूपानुरूपगमनमनुमानम्

भरतः

रूपानुगमनं लिङ्गादनुमानमिति भरतपाठान्तरम्।

रूप्यमानेन प्रत्यक्षाद्युपलभ्यमानेन रूपस्य व्यापकस्याविनाभाविनो गमनं ज्ञानमनुमानम्। निश्चयात्मकत्वादूहः। उपायायुक्तेरन्यत्वात्। यथा—रत्नावल्यां पालीयमित्यादि राजवाक्यम्। अत्र घ्राणायाघ्राय गन्धमिति गन्धात्कुसुमानि तेभ्यः पादपाः तेभ्योऽपि मार्गमनुमापितम्। इति राज्ञा विदूषकस्योक्तिः।

अभिनवः

**अनुमानम्**—देशीलास्याङ्गम्

नृत्तं प्रस्तुतयोर्गीतवाद्ययोः सदृशं द्रुतम्।
कृतैकभ्रूलताक्षेपा वितर्कयति नर्तकी।
डोलायितमना यस्मिन्ननुमानमिदं मतम्॥

ज्यायनः

**अनुरणनम्**—फूत्कारगुणः

नादानुरणनं नाम घण्टाध्वनितसोदरम्।

कुम्भः

**अनुरागः**

कामस्तु सामान्यरूपो विशेषरूपो वा सुखमेवाभिधीयते तं चानुराग इत्याचक्षते। तमभिलाषादिभेदाच्चतुःषष्टिप्रकारं व्याहरन्ति। यथा—अभिलाषः, आकाङ्क्षा, अपेक्षा, उत्कण्ठा, ईप्सा, लिप्सा, इच्छा, वाञ्छा, तृष्णा, अभिष्वङ्गः, सक्तिः, मोहः, आकूतं, कुतूहलं, विस्मयः, रागः, वेगः, अध्यवसायः, व्यवसायः, कामता, वासना, स्मरणं, संकल्पः, लालना, स्पृहा, लौल्यं, गन्धः, श्रद्धा, रुचिः, दोहदं, आशा, आशीः, आशंसा, मनोरथः, आस्था, अभिनिवेशः, अनुबन्धः, आग्रहः, विमर्शः, मनीषा, अभिप्रायः, पक्षपातः, लोभः, आसङ्गः, भावः, रासः, रतिः, प्रीतिः, दाक्षिण्यं, अनुग्रहः, वात्सल्यं, अनुक्रोशः, विश्वासः, विस्रंभः, वशीकारः, प्रणयः, प्राप्तिः, पर्याप्तिः, अभिमानाप्तिः, स्नेहः, प्रेम, आह्लादः, निर्वृतिः, इति। सोऽयमनुरागः चतुःषष्टिप्रकारोऽपि प्रतिप्रकारमष्टधा संभवति। यथा— नित्यानुरागः, नैमित्तिकानुरागः, सामान्यानुरागः, विशेषानुरागः, प्रकाशप्रच्छन्नकृत्रिमाकृत्रिमानुरागाश्च। तेषु कालादिकारणविशेषानपेक्षो नित्यः। तद्विपरीतो नैमित्तिकः। जातिविषयः सामान्यः। व्यक्तिविषयो विशेषः। स्वाङ्गनादिगोचरः प्रकाशः। पराङ्गनादिविषयः प्रच्छन्नः। प्रयोजननिरपेक्षोऽकृत्रिमः। तद्विपरीतः प्रयत्ननिर्वर्त्यः कृत्रिमः। तत्र नित्योऽपि चतुर्विंशतिधा भिद्यते। नैमित्तिकोऽपि कालसमयवेलोपाधिसाधनसमावेशदेशादिभेदाच्चतुर्विंशतिधा भवति। सामान्यानुरागोऽपि द्रव्यगुणकर्मसंक्षेपविक्षेपसमस्तव्यस्तशुद्धसंकीर्णसाधर्म्यवैधर्म्यमहाल्पविषयकदेश - कालधर्मधर्मिसमयसंबन्धप्राकृतवैकृतवयोवैदग्ध्यसौभाग्यकृतश्चतुर्विंशतिः।

भोजः

**अनुलोमविलोमा**—मुड्डपचारी

चारीत्रिकोणचारीचेदनुलोमविलोमगा।
स्वस्थाने स्थापितपदा ततस्तत्रापि कुट्टिता।
तदा निगदिता सद्भिरनुलोमविलोमगा॥

अशोकः

**अनुल्बणम्**—दर्शनम्

अविकारि विकारस्य हेतौ यत्तदनुल्बणम्।

शारदातनयः

**अनुविद्धः**—वाद्यालङ्कारः

शुद्धानुविद्धं यद्वाद्यं सर्वातोद्येषु दृश्यते।
परस्परानुवेधेन सोऽनुविद्ध इति स्मृतः॥

भरतः

**अनुवृत्तम्**—दर्शनम्

कात्स्न्र्येन दृश्यग्रहणादनुवृत्तं चिरस्थिते।

विप्रदासः

अनुवृत्तं तदुक्तं यद्भूयो भूयो निरीक्षणम्।

हरिपालः

**अनुवृत्तम्**—दृष्टिः

रूपनिर्वर्णनायुक्तमनुवृत्तमिति स्मृतम्।

भरतः

**अनुवृत्तिः**—नाट्यालङ्कारः

आक्षेपेन चलितस्यानुगमनम्। यथा—वेण्यां सहदेवेनेत्यादि वाक्यम्।

सागरः

**अनुवृत्तिः**—भाणिकाङ्गम्

निदर्शनोपन्यासः अनुवृत्तिः। यथा—शाकुन्तले षष्ठेऽङ्के साक्षात्प्रियामिति।

सागरः

**अनुवृत्तिः**—लक्षणम्

प्रश्रयेणार्थसंयुक्तं यत्परस्यानुवर्तनम्।
स्नेहाद्दाक्षिण्ययोगाद्वा सानुवृत्तिस्तु संज्ञिता ॥

भरतः

अर्थानुवृत्तिरिति लक्षणोद्देशे पठिता। कैश्चित् अर्थः अनुवृत्तिः इति द्वे लक्षणे पठिते।

अभिनवः

**अनुशयः**

प्रमादादपराद्धेषु कर्मस्वहमहो वृथा।
इति निन्दात्मिकावृत्तिर्मनसोऽनुशयः स्मृतः ॥

भावविवेकः

**अनुश्रवणिका**—पाटवाद्यम्

पाटाक्षरं वा पाटो वा श्रूयते यत्र भूरिशः।
अनुश्रवणिकावाद्यमेतदाहुर्मनीषिणः ॥

वेमः

**अनुष्टुप्छन्दोवृत्तानि**

षट्पञ्चाशच्छते द्वे च वृत्तानामप्यनुष्टुभि। २५६

भरतः

**अनुसन्धिः**—अर्थप्रकृतिः

प्रधानार्थानुयायित्वादनुसन्धिः प्रकीर्त्यते।
एकोऽनेकोऽपि वा सन्धिः पताकायां तु यो भवेत् ॥

भरतः

**अनुसर्पणम्**—प्रतिमुखसन्ध्यङ्गम्

पूर्वमुपलब्धस्य पुनरन्तरितस्येतिवृत्तवशादभिलपितस्यार्थस्येहान्वेषणं अनुसर्पणम्। यथा—पार्थविजये युधिष्ठिरं प्रति द्रौपदीवचनम्। दिवसपरिवर्तनगणनया किणीभूतहृदयस्य दुःशासनकेशग्रहवृत्तान्तो विस्मृत इत्याह। अत्र पूर्वदृष्टं कालहरणाद्विस्मृतं नष्टमिति तमनुसारयति।

रामचन्द्रः

**अनुसृतः**—वाद्यप्रकारः

मुरजः पणवो वापि पटहो दर्दरोऽथवा।
अनुवादी यदा वाद्ये भवेदनुसृतस्तु सः ॥

अत्र नेपालादर्शे पाठान्तरम्

मुरजं पणवो वापि पणवं दर्दरोऽथवा।
अनुयाति यदा वाद्ये भवेदनुसृतस्तु सः ॥

भरतः

मुरजः पणवश्चैव वाद्यं दर्दरसंश्रयम्।
दर्दरः पणवश्चैव वाद्यं च मुरजाश्रयम् ॥

सादृश्येनानुकुर्वीते तदानुसरणादयम्।
अलङ्कारोऽनुसृत इत्ययं ज्ञेयः प्रयोक्तृभिः ॥

नान्यः

**अनुस्मृतिः**—विरहावस्था

मुहुर्मुहुर्निश्वसितैर्मनोरथविचिन्तनैः।
प्रद्वेषाच्चान्यकार्याणामनुस्मृतिरुदाहृता ॥
नैवासने न शयने धृतिमुपलभते स्वकर्मणि विहस्ता।
तच्चिन्तोपगतत्वात्तृतीयमेवं प्रयुञ्जीत ॥

भरतः

**अनुस्वनितम्**—व्यञ्जनधातुः

तलस्थानेऽधस्तन्त्रीणामनुस्वनितमुच्यते।

भरतः

तथानुस्वनितं भवेत्। तलं कृत्वावरोहेण घाते

कुम्भः

तलेन मन्द्रतन्त्रीणामाहतेः स्वरितं तु यत्।
तदनुस्वनितं प्राहुः वीणावाद्यप्रयोगिनः ॥

नान्यः

**अनूपसिंहः**

अयं हृदयप्रकाशः, अनूपसिंहविलास इत्यादिग्रन्थानां कर्ता। कालः क्री. श. १६०० स्यात्।

**अनूराधाभिनयः**

मुष्टिसूचीहस्ताभ्यां कर्तव्यः।

महाराष्ट्र

**अनूराधाहस्तः**

(छत्रदण्डाकृतिरनूराधा)

पूर्वोक्तौ मुष्टिहस्तौ तु तर्जन्योर्ध्वं प्रसारितौ।
मुष्टिसूचिरिति प्रोक्तो ह्यनूराधानिरूपणे ॥

शृङ्गार

**अन्तरः**—वाद्यप्रबन्धः

प्रस्तुतस्यानुसारेण गीतवाद्यस्य सन्धितः।
मानेन वाद्यते यस्तु स भवेदन्तराभिधः ॥

सोमेश्वरः

निबद्धो वादितो गीतवाद्यसंधौ मतोऽन्तरः।

शार्ङ्गः

**अन्तरक्रीडा**—देशीतालः

विधातव्यान्तरक्रीडा विरामान्तं द्रुतत्रयम् ० ०
प प नी

जग

**अन्तरपाटः**—वाद्यप्रबन्धः

अन्तरं वादयित्वा चेदनिबद्धस्य वादनम् ।
क्रियतेऽन्तरपाटः स्यात्तदा निश्शङ्कसम्मतः ॥

शार्ङ्गः

निबद्धं वादयेदादौ वाद्यतेऽथ यदृच्छया ।
वादनं पुनराद्यस्य सोऽन्तरापाट उच्यते ॥

सोमराजः

अन्तरं वादयित्वादावनिबन्धश्च वाद्यते ।
वाद्यमन्तरपाटोऽसौ कथितो वाद्यकोविदैः ॥

वेमः

**अन्तरभाषिका**—रागजातिः

भाषाविभाषयोरन्तरुत्पन्नान्तरभाषिका

कुम्भः

**अन्तरवाद्यानि**

अनुबन्धः, विप्रहारितं, सिद्धिः, ग्रहणं, परिच्छिन्नमिति । तत्रानुबन्धसंज्ञमन्तरवाद्यम् । यथा धोणाधोङ्कये इति पाठ्यविरामे । विप्रहारितं यथा—धं द्रां कोखोणा इति । सिद्धिरपि—

ऐश्वर्ये विस्मृते श्रान्ते वस्त्राभरणसंयमे ।
सिद्धिर्वादयितव्या तु नानाकरणसंश्रया ॥

सा च सिद्धिर्यथा—समार्गकरणाश्रया कार्या । विचित्रकरणा पञ्चकला । अवस्थान्तरे पुनरेवमेव कृता भवत्यपि । साध्यविरामे वाद्यम् । परिषत्साधनकृते विरामे च वस्त्राभरणानां निपाते प्रकुर्यादभ्यञ्जने काले । अथ परिच्छिन्नम् । सार्वभाण्डिकं ध्रुवाया ग्रहोपशमने गम्भीरधीरप्रहारमुद्धतं यथा रसं च षट्कलम् । तत्रोत्तमानां वितस्तमार्गाश्रितं द्रं द्रं क्ले घे के इति । उत्तमस्त्रीणामङ्कितमार्गाश्रयम् । प्रासादिकी प्रावेशिक्याक्षेपिक्यवकृष्टासु टें कखा किटिकिटिता इति । तत्र प्रासादिकीप्रावेशिक्योः समपाणौ विभक्तकरणं द्रुतायासुपरिपाणिर्विचित्रकरणं स्थितावकृष्टायामर्धसन्निपातकृतमिति । प्रासादिक्यामन्तरायां च एवमेतत्प्रयोक्तव्यम् । परिवर्ते गीतमेव भाण्डं विना प्रयोजयेत् । सन्निपातावसानेषु भाण्डवाद्यग्रहो भवेत् । अथोद्घात्यम् ।

संभ्रमावेगहर्षार्थे विस्मयोत्साहशोकजे ।
ग्रहे गानस्य यद्वाद्यमुद्घात्यं संप्रकीर्तितम् ॥

अङ्कितावस्थितावकृष्टासु ध्रुवासु मोक्षो विधातव्यः । एते ग्रहा मोक्षाश्च नैष्क्रामिकी प्रावेशिक्याक्षेपिक्यन्तासु ध्रुवासु भवन्ति ॥

भरतः

**अन्तरा**—चारी

संयुताभ्यां च हस्ताभ्यां सोत्प्लुतिभ्रमणं यदा ।
वामे सत्रिपताकाभ्यामुक्ता सा भ्रमिरन्तरा ॥

नागमल्लः

**अन्तरा**—ध्रुवा

विषण्णे मूर्च्छिते भ्रान्ते वस्त्राभरणसंयमे ।
दोषप्रच्छादने या च गीयते सान्तरा ध्रुवा ॥

भरतः

**अन्तरालगम्**—उत्प्लुतिकरणम्

कृत्वालगं निपत्योर्व्यामुत्तानितमुरो दधेत् ।
स्थितश्चेत्पृष्ठतो जानुपर्यन्तन्यस्तमस्तकः ।
तदान्तरालगं नाम करणं भणितं बुधैः ॥

वेमः

**अन्तर्जानुभ्रमरी**—तिरिपनृत्ताङ्गम्

चतुरश्रे वामहस्तो वामपार्श्वे प्रसारितः ।
दक्षिणं हृदये न्यस्य शिखरं वामभागतः ॥
गारुडे वामहस्तस्तु पुरतश्च प्रसारितः ।
दक्षभागे दक्षिणश्च पताकः संप्रसारितः ॥
वामाङ्घ्रिप्रपदं पृष्ठे दक्षजानोश्च लापितम् ।
स्तनयोः शिखरद्वन्द्वं दक्षिणावर्ततो भ्रमेत् ।
अन्तर्जानुभ्रमिः प्रोक्ता ग्राह्या नृत्यविशारदैः ॥

वेदः

**अन्तर्भेदी**—श्रुतिः

तारनिषादस्य द्वितीया श्रुतिः ।

पार्श्वः

**अन्तर्भ्रमरी**—तिरिपनृत्ताङ्गम्

चतुरश्रे दक्षकरः शिखरो हृदये यदि ।
वामः पताकः प्रसृतः पार्श्वे सैव पुरो भवेत् ॥
दक्षिणः प्रसृतः पार्श्वे संहतस्थानके स्थितिः ।
उत्प्लुत्योऽन्तरभ्रमरीं कुर्यान्नटविचक्षणः ॥

वेदः

**अन्तर्भ्रमरी** — भ्रमरी

अस्या एव विपर्यासादन्तर्भ्रमरिका भवेत् ।

कुम्भः

अस्या इति बाह्यभ्रमरी विवक्षिता ।

**अन्तश्छाया**—करणम्

पादश्चेद्दण्डपादायाः स्वस्वगात्रस्य पृष्ठतः ।
इतरस्कन्धदेशाच्चेन्निर्गतान्येन पाणिना ।
आकर्षितः पुनः पाणिपार्श्वे मुष्टिकसंज्ञकः ।
प्रसारितस्तदा प्रोक्तमन्तश्छायामिधं बुधैः ॥

देवेन्द्रः

अन्तशीर्षका—चतुष्पदागीतम्
अर्थो यस्यामुपक्षिप्तो यस्स एव समाप्यते ।
शीर्षकेन च संयुक्ता सा विज्ञेयान्तशीर्षका ॥
वेमः

अन्ताहरणम्—गीताङ्गम्
स्थितलक्षणोपेतं गीतान्तस्याहरणम् । यथा—पृथिवी कपाल-जलधिं सरोजं ज्ञाननिमित्तम् ।
नान्यः

अन्तावहरणा—चतुष्पदागीतम्
यस्यामाद्यः सन्निपातोऽनुस्वारोऽन्ते विधीयते ।
एषा ह्यन्तावहरणा भणिता गीतवेदिभिः ॥
वेमः

स्यात्त्वन्त्यः सन्निपातश्च सानुस्वारोऽन्त्य इष्यते ।
समाद्यन्तावहरणा सानुस्वारकृता तथा ॥
भरतः

अन्दुकाः—पादभूषणम्
आयताश्च सुचक्राश्च कटकाकारनिर्मिताः ।
अन्दुका इति विख्याता योषितां पादभूषणम् ।
सोमेश्वरः

अन्धाली—भाषाङ्गरागः
शुद्धपञ्चमभाषाया दाक्षिणात्या तदुद्भवा ।
पञ्चमांशग्रहन्यासा तारगा निविवर्जिता ।
अन्धाली सरिपा......दिनादौ गीयते शुचौ ॥
भट्टमाधवः

अन्धाली—रागः
पञ्चमांशग्रहन्यासा सरिपाढ्या गवर्जिता ।
अन्धाली स्यादपप्राज्या समन्द्रा शुद्धपञ्चमा ॥
मोक्षः

गहीना मध्यमांशा च षड्जमन्द्रा च षाडवा ।
निधाल्पा मध्यमन्द्रा च धन्या सांधालिका मता ॥
सोमराजः

अन्धाली भाषया ज्ञेया पञ्चमैः परिपूरिता ।
मद

अतः परं स्यादन्धाली जाता मालवपञ्चमात् ।
गान्धारं च परित्यक्ता मध्यमांशा सषाडवा ॥
षड्जमन्द्रा गताल्पत्वं निषादे धैवते पुनः ।
मध्यमे मन्द्रतां प्राप्ता तथैव न्यासपञ्चमा ॥
हरि

पञ्चमांशन्यासयुक्ता स्वल्पगान्धारशोभिता ।
कम्पिता च निजस्थाने षड्जमन्द्रविराजिता ॥
सुसंपूर्णा सुतिरिपा नादबाहुल्यसंयुता ।
आन्ध्रदेशोद्भवा रम्या सान्धालीति प्रकीर्तिता ॥
सोमेश्वरः

न्यासांशग्रहपञ्चमयुक्ता षड्जे च मन्द्रतापन्ना ।
गान्धारसप्तमाल्पा पूर्णा तारर्षभान्धाली ॥
नान्यः

रितारा षड्जमन्द्रा च संपूर्णा च निगाल्पिका ।
अन्धाली पञ्चमन्यासा ग्रहांशपरिकीर्तिता ॥
मतङ्गः

यथाभिहितविशेषभेदितं गूर्जरिकाया इवैतस्याप्यालापकं रूपकमवगन्तव्यम् ।

विभाषान्धालिका प्रोक्ता जाता मालवपञ्चमात् ।
बृहतीदक्षिणाहीना मध्यमांशकषाडवा ॥
षड्जमन्द्रा च निगपवर्जिता मध्यमन्द्रभाक् ।
पञ्चमन्याससंयुक्ता श्रीरागे विनियुज्यते ॥
जगदेकः

अन्या—नायिकाभेदः
सैवान्या भवेत्कर्तव्यतिक्रमे ।
व्यतिक्रमे तु कन्यायाः साप्यन्या नाकुलाङ्गना ।
सैवेति । स्वीयैवेत्यर्थः ।
शारदातनयः

अन्वयः—भक्तिः
परस्परस्य ग्रथनं पदानामन्वयः स्मृतः ।
स जायेत त्रिधा शक्तो वैभक्त उभयात्मकः ॥
तत्राख्यातसुब्विभक्तिभ्यां कर्तृकर्मणोरभिधाने शक्तः । संबन्ध-विभक्त्या वैभक्तः । उभयात्मकः शक्तिर्विभक्तिमयः ।
साहित्यमीमांसा

अपकुञ्चिता—देशी चारी
आकुञ्चिताङ्घ्र्योः क्रमशः पश्चाद्गत्यापकुञ्चिता ।
वेमः

अपक्षेपा—देशी चारी
ऊरुमेकस्य पादस्य स्पृष्ट्वान्यो बाह्यपार्श्वतः ।
तं मिश्रयन्नितम्बं स्वं यत्रापक्षेपिता स्मृता ॥
वेमः

अपक्रान्तम्—करणम्

यत्र वद्धां विधायापक्रान्तां चारीं समाचरेत् ।
प्रयोगानुगुणौ हस्तौ तदपक्रान्तमीरितम् ॥

ज्यायनः

अपक्रान्ता—चारी

वद्धां चारीं विधायादौ चरणं कुञ्चितं ततः ।
उत्क्षिप्याधः क्षिपेत्पार्श्वेऽपक्रान्ता साभिधीयते ॥
यद्वोरुवलनं कृत्वा तदैव भ्रमरीमपि ।
उद्धृत्य कुञ्चितं पादं पूर्ववत्पातयेद्यदि ।
भूमौ सा चाप्यपक्रान्तसंज्ञा चारी निगद्यते ॥

वेमः

अपन्यासः

अवान्तरसमाप्तिं यो रागस्य वितनोति सः ।
अपन्यासः स स्मृतः

तुलजः

अपराजितः—अङ्गहारः

दण्डपादव्यंसितप्रसर्पितकनिकुट्टार्धनिकुट्टाक्षिप्तोरोमण्डलकरिहस्तकटिच्छिन्नानां नवानां करणानां क्रमात्प्रयोगेऽपराजिताङ्गहारः ।

शार्ङ्गः

अपरान्तकम्—सप्तगीतिभेदः

अथ वस्तूनि षट् सप्त पञ्च वाप्यपरान्तके ।
स्याच्छाखाध्यर्धमात्राणि तेष्वेवं पाणिकल्पना ॥
अष्टमी विंशिका चैव द्वे शम्ये परिकीर्तिते ।
द्वादशाष्टादशौ तालावेकविंशस्तथैव च ॥
उपोहनं यथामार्गमादावाद्यस्य वस्तुनः ।
कला द्वादश कर्तव्याः चतस्र इतरादिपु ॥
वृत्तिमार्गे प्रयुञ्जीत द्वे वा दक्षिणमार्गके ।
नवाप्युपोहनानि स्युः मध्ये स्रोतोगता यतिः ॥
तत्रोपवर्तनं कार्यं गते वस्तुचतुष्टये ।
पूर्वातीतनिवृत्तैस्तु पदैस्तदुपपातयेत् ॥
पूर्वतुल्यं तु गीत्या स्यादुत्तरे तद्यथास्थिते ।
तस्यार्धेऽर्धसमाप्तिं च न्यासं चाह विशाखिलः ॥
एवमेव शिरोऽन्ते स्यात्प्रतिशाखा ततः परम् ।
शाखावत्प्रतिशाखा च भवेदन्त्यपदा तु सा ॥
तालिकाख्यस्तयोरन्त्यः कलाषट्को निवृत्तिमान् ।
अस्याङ्गेषु यथायोगं योक्तव्ये विवधैकके ॥

दत्तिलः

पूर्वमिति । पूर्वार्धं मद्रकस्य । पूर्वतुल्यं पूर्वपादेन समम् । उत्तरे तालवतीतनिवृत्तौ । यथास्थिते इति द्वावुत्तरावन्वर्थतां भजन्तौ । तस्येति । उपपातस्येत्यर्थः । वस्तु, पाणि, उपोहन, उपवर्तन, निवृत्त–शिरःशाखा–प्रतिशाखा – तालिका – निवृत्तयः, विवध, एकक, एतानि तालाङ्गानि ।

विशाखिलः । आचार्यः । अष्टमीति । त्र्यश्रतालस्य त्रिप्रभृतिक्रमेण षट्कृत्वा द्वैगुण्येन प्रागेव प्रतिपादितम् । पातक्रमस्तु आनिविप्रा आनिविश—आनिविता आनिविप्र आनिविश इति ।

अपवादः—अवमर्शसन्ध्यङ्गम्

अपवादः (परीवादः) स्वपरदोषोद्घट्टनम् । यथा—पुष्पदूषितके हतः पुत्र इत्यादि ब्राह्मणवाक्यस्वदोषोद्घट्टनम् ।

रामचन्द्रः

दोषप्रख्यपनं यत्तु सोऽपवादः

भरतः

यथा—रत्नावल्यां राज्ञोक्तम्—श्वासोत्कम्पिनीत्यादि । अत्र देवीगुणानां सातिशयकोपनत्वेनापवदनं कृतम् ।

अभिनवगुप्तः

स्वदोषस्थापनमपवादः । यथा—जानकीराघवे रावणवाक्ये सीता केवलं स्त्री तस्मादवज्ञा, कपर्दिगम्बरः । एते दोषा मम व्यसनं घोरतरं करोति इत्यात्मन्यपवादः ।

सागरः

दोषप्रख्यापवादः स्यान्निर्दोषस्येतरस्य वा ।

सर्वेश्वरः

अपवारितम्—नाट्यधर्मी

रहस्यं कथ्यतेऽन्यस्य परिवृत्यापवारितम् ।

रसिकरसायनम्

अपविद्धम्—करणम्

आवर्त्य शुकतुण्डाख्यमूरुपृष्ठे निपातयेत् ।
वामहस्तश्च वक्षस्थोऽप्यपविद्धं तु तद्भवेत् ॥

भरतः

चतुरस्रकरः स्थित्वा हस्तं व्यावर्त्य दक्षिणम् ।
निष्क्रामयन्भजेच्चारीमाक्षिप्तामथ दक्षिणम् ।
शुकतुण्डं करं तस्यैवोरौ तु परिपातयेत् ॥
यत्रापविद्धं तद्वामे वक्षःस्थे खटकामुखे ।
तत्क्षेपासूययोर्योज्यं उक्तं सोढलसूनुना ॥

शार्ङ्गः

चतुरस्रतया स्थित्वा सव्यमावर्तितं करम् ।
आक्षिप्तया विनिष्कास्य शुकतुण्डकरं पुनः ॥

स्वस्योरोः पृष्ठतो न्यस्येत्ततस्तु खटकामुखम् ।
वक्षःस्थलस्थितं वामं वर्तनाचातुरीवशात् ॥
कुर्याद्यत्रापविद्धं तदसूयाकोपयोः स्मृतम् ।

ज्यायनः

**अपविद्धम्** — चालकः

नाभौ कण्ठप्रदेशे च करौ चेद्वामदक्षिणौ ।
लुठन्तौ मण्डलाकारमपविद्धं तदीरितम् ॥

वेमः

**अपविद्धः**—अङ्गहारः

यदा अपविद्धसूचीविद्धाख्यं करणद्वयं कृत्वोद्वेष्टितेन करणेन बद्धया चार्या त्रिकं वलितं कृत्वा, ऊरूद्वृत्तोरोमण्डलकटीच्छिन्न-करणानि प्रयुक्तानि तदापविद्धाङ्गहारः ।

शार्ङ्गः

**अपविद्धः**—बाहुस्तथा भूता

उरसो मण्डलाकारभ्रान्त्या यो निःसृतो भुजः ।
सोऽपविद्धो गदाखड्गयुद्धादिषु नियुज्यते ॥

अशोकः

**अपवेष्टितम्**—हस्तप्राणः

अधस्ताद्गमनं यत्तु हस्तानामपवेष्टितम् ।

शृङ्गारः

**अपसर्पितः**—अङ्गहारः

अपक्रान्तकरणं, व्यंसितस्य केवलकरक्रिया, करिहस्तं, अर्धसूची, विक्षिप्तं, कटीछिन्नं, ऊरूद्वृत्तं, आक्षिप्तं, करिहस्तकं, कटीछिन्नं, एतानि करणानि यदा प्रयुज्यन्ते तदा स अपसर्पितः ।

शार्ङ्गः

**अपसृतम्**—पार्श्वम्

अपसृतं तन्निवृत्या स्यात्पार्श्वस्य निवर्तने ।

अशोकः

परिस्रुत्यापसारे च कुर्यादपसृतं बुधः ।

सोमेश्वरः

**अपस्मारः**—चित्ताभिनयः

धातुवैषम्यदोषेण भूतावेशादिना कृतः ।
चित्तक्षोभस्त्वपस्मारः ॥
शिरःपार्श्वे सूचिहस्तः चक्राकारं तु चालितः ।
आलोलितं शिरश्चैव भूतावेशे विधीयते ॥
मुखस्थाने मयूरस्तु पैत्यभावनिरूपणे ।

विनायकः

**अपस्मारः**—व्यभिचारिभावः

देवयक्षनागब्रह्मराक्षसभूतप्रेतपिशाचग्रहणानुस्मरणोच्छिष्टशून्यागारसेवनाशुचिकालान्तरापरिपतनव्याध्यादयो विभावाः । स्फुरितनिश्वसितोत्कम्पितधावनपतनस्वेदस्तम्भनवदनफेनजिह्वा-परिलेहनादयोऽनुभावाः ।

भरतः

भूतप्रेतपिशाचानामपस्मारोऽधिरोहणम् ।
मन्त्रतन्त्रक्रियालोपैः सोऽपि सम्पद्यते नृणाम् ॥
भ्रूपादकम्पस्वेदास्यलालाफेनोद्गमादयः ।

सर्वेश्वरः

**अपस्यन्दिता**—चारी

निषण्णोरुर्दक्षिणोऽङ्घ्रिर्वामस्तिर्यक् प्रसारितः ।
पञ्चतालान्तरं यत्र सैषापस्यन्दिता भवेत् ॥

वेमः

**अपहसितम्**—हास्यरसभेदः

हास्यशब्दे द्रष्टव्यम् ।

**अपूर्णा**—श्रुतिः

धैवतस्य तृतीया श्रुतिः ।

पा.सोमः

**अप्पलाचार्यः**

तालचिन्तामणिकारः । श्रीमुष्णवासी । शतद्वयवर्षात्पूर्वं स्यादिति ज्ञायते ।

**अप्रतिपत्तिः**—शिल्पकाङ्गम्

प्रतिपत्तिमूढता अप्रतिपत्तिः । यथा—कोसलाङ्के प्रियसखीत्यादि कौसल्यावचनम् ।

सागरः

कोसलाङ्कः । सागरनन्दिकृतजानकीराघवे कश्चनाङ्क इत्यूह्यते ।

**अप्रदेशी**—मेलरागः (ऋषभप्रियामेलजन्यः)

(आ) स ग म प ध नि ध स.
(अव) स नि ध म ग स.

**अप्रमेयः**—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि म प ध स.
(अव) स नि ध म ग म रि स.

**अप्रमेया**—द्वादशाक्षरवृत्तम्

ययययाः ।

भरतः

अप्सराः—प्राकृते मात्रावृत्तम्
द्वौपञ्चमात्रौ ज ग।

विरहाङ्कः

अभङ्गः—देशीतालः
अभङ्गे लप्लुतौ ज्ञेयौ । ऽ

श्रीकण्ठः

अभङ्गताले विज्ञेयौ क्रमेणैव लघुप्लुतौ । ऽ

वेमः

अभङ्गताले कर्तव्यं लघोरग्रे त्रिमात्रिकम् । ऽ

नन्दी

अभयम्—हस्तः
अभयन्तु समोन्नतम्।

उमा

अभिकृतिच्छन्दोवृत्तानि
तथा शतसहस्राणि पञ्चत्रिंशच्च संख्यया।
तिस्रः कोट्यः सहस्राणि चतुष्पञ्चाशदेव च।
शतानि चत्वारि तथा द्वात्रिंशत्प्रविभागतः।
वृत्तान्यभिकृतौ चैव च्छन्दोज्ञैः कथितानि वै।। ३५३५४४३२

भरतः

अभितप्ता—दृष्टिः
मनागलसतारा च चलितैश्च पुटैर्युतः।
निर्वेदे चाभिघाते च कार्यादिभिरुपप्लुता।।

सोमेश्वरः

पुटौ प्रचलितौ यस्यास्तारे वीक्षितुमक्षमे।
या सव्यथेव सा दृष्टिरभितप्तेति गीयते।
विनियोगोऽभिघाते स्यात्तापनिर्वेदयोरपि।।

विप्रदासः

अभितप्ता दृष्टिः
मन्दायमानतारायाः पुटैः प्रचुरितैस्तथा।
सन्तापोपप्लुता दृष्टिरभितप्ता च सव्यथा।।

भरतः

अभिनन्दः—देशीतालः
ताले स्यादभिनन्दाख्ये लद्वयं दद्वयं गुरुः। ।।००ऽ

वेमः

मा पा ग री रि सा

जय

अभिनन्दः—प्रबन्धः
यः पाटैस्तेन्नकैर्युक्तः प्रयुक्तो गीतकोविदैः।
अभिनन्दोऽभिनन्देन तालेनैष विभूषितः।।

जग० मल्लः

अभिनन्दनः—देशीतालः
अभिनन्दस्य नामान्तरम्।

अभिनयः
अभिशब्देनाभिमुख्यं नशब्देन निषेधः यशब्देन यदर्थं लक्ष्यते। तेन स्वपार्श्वोन्मुखदेशागमनेन आभिमुख्यं अभिमुखत्वम्। पार्श्वक्षेपे तु रेचनपूर्वं अधोमुखोत्तानपरिवर्तनेन च यच्छब्दार्थममभिनयेत्।

भट्टतोतः

अभिनयः—देशीलास्याङ्गम्
भावसंसूचकैरङ्गैर्नर्तकी यत्र नृत्यति।
यथावत्करणैरुक्तोऽभिनयो नयकोविदैः।।

कुम्भः

अभिनयः
रत्यादिकानभिव्यक्तिं नयन्तो वासनामयान्।
रसावसाना व्यापाराः कथ्यन्तेऽभिनया इति।।
आङ्गिका वाचिकाश्चैव आहार्याः सात्विका इति।
चतुर्विधास्ते करणैश्चतुर्भिरुपपादनात्।।
अङ्गैः शिरःप्रभृतिभिर्निर्वृत्ता आङ्गिका मताः।
वाग्भिर्विरचिता गीतप्रबन्धाद्यास्तु वाचिकाः।।
आहार्यं भूषणादिः स्यादाहार्यास्तत्प्रदर्शिताः।
सत्वं मनोभाविताः स्युस्तेन ये सात्विकास्तु ते।।
यद्यप्यलङ्कार्यशेषा अलङ्कारास्तथाप्यमी।
प्राधान्येन विभावादीनानयन्ति यदा तदा।।
विवक्षितप्रधानत्वाद्ध्वनन्त्यभिनयाभिधाः।
ते च गात्रेषु हाराद्याः शब्देषु यमकादयः।।
स्तम्भाद्या आङ्गिकत्वेऽपि सात्विकत्वं यदा भवेत्।
तथोपपादयिष्यामो व्यक्तं भावनिरूपणे।।
अङ्गैरलङ्कृतैरेव भावितैरेव भाषितैः।
विभावादिरभिव्यक्तो रसाभिव्यञ्जको यतः।।
तस्मादाहार्याभिनया न भण्यन्ते पृथक्तया।
नृत्यभावादुपाङ्गेषु गणनाच्च न ते पृथक्।।
तस्मात्कायमनोवाग्भिर्निर्मितास्त्रिविधा इमे।
चत्वारो ज्ञावयोऽमीषां त्रयाणामपि कीर्तिताः।।

/

कैशिक्यारभटी वृत्तिः सात्त्वती भारतीति च ।
वर्धन्तेऽभिनया आश्रित्यैतासामेव वृत्तिता ॥
अकुर्वतां क्रियां काञ्चिच्छोभामालोपयोगिनाम् ।
केशानां वृत्तिरिव या वृत्तिः सा कैशिकी मता ॥
हारः शत्रुसमूहोऽत्र सोद्योगात्पुरुषा भटाः ।
तेषां वृत्तिसमां वृत्तिं विदुरारभटीं बुधाः ॥
सत्संवेदनमस्त्यस्मिन्निति सत्त्वं मनोऽस्य या ।
वृत्तिः सा सात्त्वती यस्यां साम्मुख्यात्सात्र सात्त्वती ॥
भारत्यप्यर्हिता यत्र सा वृत्तिर्भारती स्मृता ।
ऋग्वेदाद्भारती जाता यजुर्वेदात्तु सात्त्वती ॥
आथर्वणादारभटी सामवेदात्तु कैशिकी ।
वाचिकाभिनयाः सर्वे भारत्यां सुप्रतिष्ठिताः ॥
आङ्गिकाभिनयाः सर्वे तिसृष्वन्यासु वृत्तिषु ।
आङ्गिकाभिनयेष्वेव पर्यवस्यन्ति सात्त्विकाः ॥
तस्मान्मुख्यावभिनयौ ज्ञेयावाङ्गिकवाचिकौ ।
अर्थप्रतीत्युपायत्वाद्वाचिकेऽपि न मुख्यता ॥
वाचिकोपकृतस्तस्मादाङ्गिको मुख्य उच्यते ।
आङ्गिकोऽपि पुनस्त्रेधा शाखानृत्ताङ्कुरैर्भवेत् ॥
करप्रधानो व्यापारः तेषु शाखेति कीर्त्यते ।
स्थानकाद्यैरुपक्रान्तं हस्तकाद्यैः प्रवर्तितम् ॥
करणैरङ्गहारैश्च निष्पन्नं नृत्तमुच्यते ।
भूतवाक्यार्थमाश्रित्य चित्तवृत्त्यर्पणक्षमाः ॥
दृष्टिप्रधाना व्यापाराः कथ्यन्तेऽङ्कुरसंज्ञया ।
सूच्याः स्युरङ्कुरा एव भाविवाक्यार्थसूचनात् ॥
आरभट्यां स्थिता शाखा सात्त्वत्यामङ्कुरः स्थितः ।
कैशिक्यां वर्तते नृत्तं त्रयोऽप्येते तिसृष्वपि ॥
वर्तने तत्वतो भेदो भावकैरेव भाव्यते ।
देशकालवयोवस्थावेषभाषणशक्तितः ।
आङ्गिकोऽभिनयो वृत्तित्रयवाचिकसंश्रितः ॥

विप्रदासः

### अभिनयप्रकाशः

कर्ता न ज्ञायते । बहवः श्लोका अस्माद्ग्रन्थादुद्धृता अभिनयलक्षणे दृश्यन्ते । अभिनयलक्षणं तञ्जापुरकोशागारे वर्तते ।

### अभिनयभूषणम्

शृङ्गारशेखरकृतम् । तञ्जानगरकोशागारे वर्तते । कालः क्री. श. १३५०

### अभिनवगुप्तः

नाट्यशास्त्रव्याख्याता । कालः क्रै. श. १००० काश्मीरदेशस्थः । वितस्तानदीतीरे प्रवरपुरे एकस्मिन्मठे अभिनवभारत्यनेन व्यरचि । गीर्वाणभाषायां व्याख्याग्रन्थेषु महाभाष्यं विना अस्य व्याख्या परां काष्ठां लभते । अस्यां व्याख्यायामनुपयुक्तं न किञ्चिदुक्तम् । अबोधितं संशयितं वा न परित्यक्तम् । उद्भटलोल्लटशङ्कुकप्रभृतिमतानि सम्यक् शोधयित्वा व्याख्याता स्वमतं सम्यक् स्थापयामास । तदेव मम्मटादिभिः प्रमाणीकृतम् । अस्य कीर्तिः प्रत्यभिज्ञाशास्त्रविशदीकरणेन सर्वत्र विदिता ।

### अभिप्रायः—लक्षणम्

अभूतपूर्वो यो ह्यर्थः सादृश्यात्परिकल्पितः ।
लोकस्य हृदयग्राहि सोऽभिप्राय इति स्मृतः ॥

भरतः

अभूतपूर्व इत्यसत्पदार्थः । केवलकल्पितः । केचित्स्वाद्यवस्तुन्यभिमान इत्याहुः । तद्वैचित्र्यरहितत्वादुपेक्ष्यम् । यथा—तापसवत्सराजे सोऽयमसूत्रः पटः क्रियते इति यौगन्धरायणोद्योगं विमृश्य साङ्कृत्यायन्योक्तम् । सोऽभिप्रायः ।

अभिनवः

### अभिप्रायः

यदर्थं स्वामिमुख्येन पदार्था ह्युपकुर्वते ।
सोऽभिप्रायस्तदुत्कर्षः प्रायः शब्देन कथ्यते ॥

शारदातनयः

### अभिप्लुतार्थम्—काव्यदोषः

अभिप्लुतार्थं विज्ञेयं यत्पादेन समस्यते ।

यथा—स राजा नीतिकुशलः सरः कुसुमशोभितम् ।
सर्वप्रिया वसन्तश्रीः ग्रीष्मे मालतिकागमः ॥

अत्र प्रतिपादमर्थस्य परिसमाप्तत्वादेकवाक्यत्वेन निमज्जनाभावादभिप्लुतत्वम् ।

भरतः

### अभिमानम्

अभिमानमिति प्राहुः स्वपौरुषगुणाश्रयाम् ।
प्रतीतिं सुखमाक्रान्तां महतीनां समुद्भवाम् ॥

भावविवेकः

### अभिमानः—नाट्यालङ्कारः

आरब्धत्यागः । यथा—वेण्यां मात इति दुर्योधनः । (५-३)

सागरः

### अभिमानः—लक्षणम्

धार्यमाणस्तु बहुभिः वचनैः कार्ययुक्तिभिः ।
न यः पर्यवतिष्ठेत सोऽभिमानस्तु संज्ञितः ॥

भरतः

यथा—ममैव शीतांशोरमृतच्छटेति श्लोके तादृशी अर्थस्य अर्थघटना कृता यस्यां कार्ययुक्तिभिः फलयोजनाभिः धार्यमाणो हृदये स्थाप्यमानो नावतिष्ठते इत्युदाहरणम्। एतदेव साहृदय-नाम्नाप्यन्यैरुक्तम्।

अभिनवः

अनिर्णयोऽभिमानः स्यादभिधेयस्य हेतुभिः।

सर्वेश्वरः

अभिरुद्गता—मूर्छना

षड्जग्रामे सप्तमी मूर्छना।

(आ) रि ग म प ध नि स

(अव) स नि ध प म ग रि

प. मण्डली

अभिरोदितीत्यभिरुतस्योद्गता चाभिरुद्गता।

मूर्छना रिषभेणायं चरणश्चात्र दैवतम्॥

नान्यः

अभिलषितार्थचिन्तामणिः

सोमेश्वरकृतः। अयं ग्रन्थः पञ्चप्रकरणात्मकः शताध्याय-परिमितो राजकुमाराणां बोधनाय प्रवृत्तो राजविद्याविषयकः। तस्मिन्सङ्गीतभागश्चतुर्थप्रकरणे षोडशशतोत्तरसहस्रग्रन्थपरिमितो वर्तते। तत्र भरतस्य चौक्षग्रामरागाः वैरस्यजनका एवेति निराकृताः। ग्रन्थस्तु नाट्यसङ्गीतशास्त्रेपूत्कृष्टः। प्रवन्धानां च स्वोपज्ञोदाहरणानि सम्यक् दत्तानि। वहुभिर्ग्रन्थकारैरसौ प्रामाणि-कत्वेन गृह्यते। मानसोल्लास इत्यस्य ग्रन्थस्य नामान्तरमस्ति। कालः क्री-श. ११४०

अभिलापः—विरहावस्था

व्यवसायात्समारब्धः सङ्कल्पेच्छासमुद्भवः।

समागमोपायकृतः सोऽभिलाषः प्रकीर्तितः॥

व्यवसायादिति। काम्यजनज्ञानं तस्मात्।

निर्याति विशति च मुहुः करोति चाकारमेव मदनस्य।

तिष्ठति च दर्शनपथे प्रथमस्थाने स्थिता कामे॥

भरतः

अभिलाषि—दर्शनम्

अभिलाषि भवेत्तद्यद्याचमानमिवेक्षणम्।

वेमः

अभिसारिका—नायिका

हित्वा लज्जां तु या श्लिष्टा मदेन मदनेन च।

अभिसारयते कान्तं सा भवेदभिसारिका॥

भरतः

मदो मद्यकृतः। चकारात् द्वयं वदन् मदनस्यैव प्राधान्यमाह। अभिसरः सहायः। तस्य व्यापारेण प्रियतममतिक्रामति।

अभिनवः

अभूताहरणम्—गर्भसन्ध्यङ्गम्

अभूताहरणं सद्भिः कथ्यते छद्मचेष्टितम्।

सर्वेश्वरः

कपटापाश्रयं वाक्यमभूताहरणं विदुः।

भरतः

यथा—रत्नावल्यां वासवदत्तया चित्रफलको दृष्टः। तदनर्थ-कारीति मत्वा विदूषकः कपटेन आह। आत्मानमालिखितुं कष्टमिति आर्यपुत्रेणैवेदं चित्रं लिखितं विज्ञानमपि दर्शितमिति अत्र कपटम्।

अभिनवः

एतदेवासत्याहरणमित्युक्तं कैश्चित्। यथा—मालविकाग्निमित्रे राजप्रसादपरीक्षार्थं। विदूषकेन केतकीकण्टकक्षतस्य हस्तयाः सर्पदंशता प्रकाशितेति।

रामचन्द्रः

अभ्यन्तरावहरणा—चतुष्पदागीतम्

द्वितीयः सन्निपातः स्याद्यस्यां मध्येऽक्षराणि च।

इत्यभ्यन्तरावहरणा सानुस्वारा निरूप्यते॥

वेमः

अभ्यस्तः—हस्तपाटः

करवर्तनया घातादभ्यस्तो जायते यथा।

धणगिणगिधणगिधणगिणगिततिथिगित्त॥

अभ्यासः

बहुत्वशब्दे द्रष्टव्यम्।

अभ्युच्चयः—वर्णालङ्कारः

एकान्तरैः स्वरैर्यत्र स्यादारोहक्रमात्स्वतः।

अभ्युच्चयमलङ्कारं मेनिरे तं पुराविदः॥

स ग प नि

प. मण्डली

अभ्युच्चये स्वरोच्चारश्चैकं त्यक्त्वान्तरान्तरा।

स ग प नि

जगद्धरः

अभ्युच्चयः—वर्णालङ्कारः (अवरोही)

(अव) नि प ग स.

पः मण्डली

अभ्युदयः—तानः

मध्यमग्रामे रिवर्जितषाडवः।

म ग स नि ध प.

कुम्भः

अग्रागमः—तानः

गान्धारग्रामे नारदीयतानः।

नि ग म प ध?

नान्यः

अमङ्गलहस्तः

हस्तेन हस्तं कुञ्चयित्वामङ्गलकरो भवेत्।
अमङ्गलः पुरोभागे शापार्थे विनियुज्यते।
दुःखवाक्यस्य श्रवणेऽमङ्गलकरो भवेत्॥

विनायकः

(अङ्गुलीनामन्तः अङ्गुलीप्रवेश्यपर्वसन्धीः स्फोटयित्वा तासामधोनयनम्।)

अमन्दमुकुन्दमकरन्दः—सूडप्रबन्धः

नष्टो रागस्तृतीयाख्यस्तालो मध्यलयः क्वचित्।
पदानां शोभयालापगुम्भनं गानहेतुकम्॥
अन्ते पाटाः स्वरास्तेनास्तदन्ते पद्यगुम्भनम्।
एषोऽमन्दमुकुन्दाद्यमकरन्दाभिधानवान्।
प्रबन्धः प्रीतये गीतः श्रीपतेः कृष्णभूभुजा॥

कुम्भः

अमरः—गीतालङ्कारः (प्रतिमठ्यभेदः)

गुरुरेको भवेद्यत्र सन्निपातः स कथ्यते।
अमरः प्रतिमठ्योऽसौ विद्वद्भिस्तेन गीयते॥

संगीतसारः सं. 1

अमराली—श्रुतिः

तारषड्जस्य तृतीया श्रुतिः।

पार्श्वः

अमरावली—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म ध स.
(अव) स नि ध प म ग रि स.

अमर्षः—चित्ताभिनयः

अधिक्षेपावमानाद्यैः क्रोधोऽमर्ष इतीरितः।
पार्श्वभागे पताकस्तु विसृष्टो नीचभावने।
फालस्थले पताकस्तु चलितश्चावमानके॥

विनायकः

अमर्षः—व्यभिचारिभावः

विद्यैश्वर्यबलाधिकैरधिक्षिप्तस्यावमानितस्य वा समुत्पद्यते। शिरःकम्पनप्रस्वेदनाधोमुखचिन्तनध्यानाध्यवसायोपायसहायान्वेषणादयोऽनुभावाः।

भरतः

अमर्षो विहितः सद्भिर्दोषेष्वभिनिवेशनम्।
अधिक्षेपप्रमादाद्वा रोपाद्वा जायते च सः॥

अत्र स्वेदाङ्गचलनताडनग्रहणादयोऽनुभावाः।

सर्वेश्वरः

अमलम्—हस्तः

तदेवोर्ध्वीकृतं हस्तममलं परिकीर्तितम्।

उमा

अमात्यः

कुलीना बुद्धिसंपन्नाः श्रुतिनीतिविशारदाः।
स्वदेश्याश्चानुरक्ताश्च शुचयो धार्मिकास्तथा।
अमात्या मन्त्रिणश्चैव गुणैरेतैर्भवन्ति हि॥

भरतः

अमृतवाहिनी—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि म प ध नि स.
(अव) स नि ध म ग रि स.

अमृता—श्रुतिः

धैवतस्य तृतीया श्रुतिः।

जग

अम्बरम्—रागः

ग्रहांशन्यासषड्जः स्यादङ्गं हिन्दोलकस्य च।
समन्द्रश्च नितारश्च रागः पूर्णोऽयमम्बरः॥

अम्बरीकल्याणीरागध्यानम्

युवतिभुजाञ्चलहस्तां स्वभुजादेशनिवासतत्कराग्राम्।
रासक्रीडालोलां मनसि ध्यायामि चाम्बरीकल्याणीम्॥

रागसागरः

अम्बिकावीणा—वीणा

पाल्कुरिकि सोमनाथेन स्मृता—अस्या लक्षणं न विद्यते।

अयगतिः—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स ग म प म ध नि स.
(अव) स नि ध प म ग म रि स.

अरगन्ती—रागः

धांशा धबहुला चैव तारनिर्मुक्तमध्यमा।
स्फुरितोद्गमकैः पूर्णा पापन्यासारगन्तिका॥

नान्यः

मध्यमतारविमुक्ता धैवतबहुला च सस्फुरैर्गमकैः।
सप्तस्वरारगन्ती पापन्यासेन रञ्जनी भवति॥

कश्यपः

**अरण्यपत्रः**—तानः

षड्जग्रामे नारदीयतानः ।

नि स ग म प (?)

नान्यः

**अरालः**—हस्तः

तर्जन्यादिपु अङ्गुलीपु प्राच्याः प्राच्याः परा परा ।
दूरस्थोद्घा मनाग्वक्रा धनुर्वक्रा तु तर्जनी ॥
अङ्गुष्ठः कुञ्चितो यत्र तमरालं प्रचक्षते ।
आशीर्वादादिषु प्रोक्तः स पुंसां हृदयस्थितः ॥
अथ स्त्रीणां केशबन्धे केशानां च विकीर्णने ।
द्विस्त्रिः कार्योऽन्यपार्श्वात्तु स्वपार्श्वे वर्तुलभ्रमः ॥
आव्रजञ्जनसंघे स्यादाह्वाने पतदङ्गुलिः ।
विवाहे त्वङ्गुलाग्रस्थस्वस्तिकाकारयोजितम् ॥
प्रदक्षिणं करद्वन्द्वं स्याद्भ्रमत्केवलः पुनः ।
प्रदक्षिणं भ्रमन्कार्ये देवतानां प्रदक्षिणे ॥
कस्त्वं कोऽहं क संबन्ध इत्यसंबद्धभाषणे ।
बहिः पुनः पुनः क्षिप्ताङ्गुलिर्भालस्थितः पुनः ।
भालस्वेदापनयने त्रिपताकोदितेषु च ॥

शार्ङ्गः

**अरालखटकामुखौ**—नृत्तहस्तौ

पताकौ स्वस्तिकीकृत्य व्यावृत्तपरिवर्तितौ ।
अलपद्मावथैवाथ पद्मकोशौ करावुभौ ॥
क्रमादूर्ध्वमुखौ कृत्वा व्यावृत्तपरिवर्तितौ ।
अथारालं करं वाममुत्तानं रचयेत्ततः ॥
यथान्यं खटकावक्त्रं चतुरश्रमधोमुखम् ।
कुर्यादेवं तथा हस्तावरालखटकामुखौ ॥
अथवा स्वस्तिकाकारावरालखटकामुखौ ।
विधायादावरालौ चेद्रेचितौ खटकामुखौ ॥
तथा वा भवतो हस्तावरालखटकामुखौ ।
वितर्के सविवादानां वणिजामेप युज्यते ॥
वक्षोग्रस्थः पुरो वक्रः खटकास्याभिधः करः ।
उन्नताग्रः परोऽरालः तिर्यक्किञ्चित्प्रसारितः ॥
पार्श्वव्यत्यासतो यद्वा निजे पार्श्वे करौ यदा ।
तालान्तरौ स्थितौ स्यातां तदैतावपरे जगुः ॥

अशोकः

**अरालवर्तना**

कर्मणा वेष्टिताख्येन रचयित्वा यदा करः ।
अरालो वर्तितः पश्चाद्यत्नोद्वेष्टितकर्मणा ।
प्रत्यपादि तदा धीरैररालकरवर्तना ॥

अशोकः

तर्जन्याद्यङ्गुलीनां यदन्तरावेष्टनं क्रमात् ।
आवेष्टितक्रियापूर्वं सा प्रोक्तारालवर्तना ॥

कल्लिनाथः

**अरुणम्**—दर्शनम्

व्याघूर्णमानमरुणं मुहुरामीलदन्तरा ।

शारदातनयः

**अरुणः**— मुखरागः

ईषद्रक्तोऽरुणो ज्ञेयः कोपे चामर्पशोकयोः ।
माने चापि प्रयोगोऽस्य दर्शितो वेमभूभुजा ॥

वेमः

**अरुणकान्तः**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म प म ध नि स.

(अव) स नि ध प म ध म ध ग रि स.

**अरुणचन्द्रिका**—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स ग म प नि स.

(अव) स नि प ध प म ग स.

**अरुणज्वलितम्**—मेलरागः (धर्मवतीमेलजन्यः)

(आ) स रि ग म ध नि स.

(अव) स नि ध प म ग रि स.

**अरुद्राम्बरी**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग म प ध नि स.

(अव) स नि प म रि स.

**अरोचकम्**—दर्शनम्

अपाङ्गकूणनं यत्र तदरोचकमुच्यते ।

शारदातनयः

**अर्कवर्धिनी**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म प स.

(अव) स नि ध प म ग स.

**अर्गलम्**—करणम्

वामपादकनिष्ठायाः क्षेत्रगो दक्षिणः पुनः ।
सार्धतालद्वयं स्रस्तजङ्घः पादः प्रसारितः ॥
तस्यैवानुगतस्तद्वद्बाहुः सन्नलपल्लवः ।
करे वामेतरे यत्र तदर्गलमितीरितम् ॥
एतदङ्गदमुख्यानां प्लवगानां परिक्रमे ।
पादे नूपुरपादावत्प्रयुक्तः प्रसृतस्ततः ॥

प्रसार्य पुरतः कार्यावुभौ पादानुगौ करौ ।
इत्यत्र करणे प्रोक्तं व्याख्याने भट्टतण्डुना ॥

ज्यायनः

"महावीरपरिक्रमे" इति लक्ष्मणः ।

**अर्धकारी—देशीतालः**

प्लुतेनैकेनार्धकारी। ३ मात्राः ।

तालप्रस्तारः

**अर्घ्यहस्तः**

उत्तानितौ चक्रतलौ श्लिष्टौ हस्तौ वरानने ।
बहिरङ्गुष्ठसंयुक्तावर्घ्यहस्तं प्रकीर्त्यते ॥

**अर्जुनः**

सप्ततालप्रदीपिकाकारः । अयं प्रबन्धाध्यायेषु प्रमाणीकृतः ।

**अर्जुनः—देशीतालः**

अर्जुनाख्ये तु ताले तु द्रुतो लघु द्रुतः शरः :
द्रुतत्रयं लघुश्चैको द्रुतश्च लविरामवान् ॥
०। ०। ०००। ०।

दामोदरः

**अर्जुनः—मेलरागः**

गौरीमेलसमुद्भूत आरोहे मनिवर्जितः ।
गधहीनावरोहः स्याद्गादिरर्जुनसंज्ञकः ॥
द्वितीयप्रहरोत्तरगेयः ।

अहोबिलः

**अर्जुनतालः—तालः**

अर्जुनाख्ये क्रमात्ताले द्रुतो लघुर्द्रुतः शरः ।
द्रुतत्रयं लघुश्चैको द्रुतश्च सविरामवान् ॥
०।०।०००।०

वेदः

**अर्जुनतालोडुपम्—देशीनृत्तम्**

अर्जुनाख्ये क्रमे ताले द्रुतो लघुर्द्रुतः शरः ।
द्रुतत्रयं लघुश्चैको द्रुतश्च सविरामवान् ।
अर्जुनाख्यस्य तालस्य कथितं चोडुपं बुधैः ॥
०।०।०००।०

वेद

**अर्जुनबाणः—काडनृत्ताङ्गम्**

पिण्डः स्याद्द्वादशयुतं बिन्दूनां शतमुत्तमम् ।
सप्तमालो त्र्यस्रतालः सव्यहस्तेऽष्टधा भवेत् ॥
चतुर्वारं वामहस्ते दक्षपादे द्विवारतः ।
वामाङ्घ्रावेकवारं स्यादधस्तादूर्ध्वमाचरेत् ॥
योजना पिण्डबिन्दौ च दक्षहस्तो द्रुते द्रुतः ।
द्रुतद्वये च सरलो वामहस्ते ततः परम् ॥
द्रुतद्वये द्रुतः प्रोक्तो दचतुष्के लघुर्भवेत् ।
दक्षपादे दचतुष्के द्रुतः स्याद्दाष्टके लघुः ॥
वामपादे दाष्टके च द्रुतोऽत्र षोडशो लघुः ।
अर्जुनाद्यो बाणनामा प्रसिद्धः काड ईरितः ।
नृत्ते वाद्ये च ताले च ऋजुः स्यात्संप्रदायतः ॥

वेदः

**अर्जुनभ्रमरी—चारी**

एकोऽङ्घ्रिश्च.........भूगतः.........पृष्ठदेहगः ।
उ...... रणं भवेत् वामाङ्गेनैव...... अर्जुनभ्रमरी ॥

नागमल्लः

**अर्जुनमतम्**

मुड्डुम्बिनरसिंहाचार्यकृतम् । प्राचीनमतसंग्राहकोऽयं ग्रन्थः । अस्य कर्ता क्रि. श. १९२५ समीपे मृतः ।

**अर्थप्रकृतयः**

ताः पञ्चविधाः—बीजं, बिन्दुः, पताका, प्रकरी, कार्यं चेति। अथैतासु (आरम्भविधिपु) कथाशरीरोपादानकारणभूताः पञ्चार्थप्रकृतयो भवन्ति। चतसृषु हि विधासु तत्वं परिसमाप्यते—कर्ता कर्म करुणं क्रियेति। ताश्च प्रकृतिपञ्चकोपलक्षणेन प्रतिपाद्यन्ते ।

भोजः

बीजं बिन्दुः पताका च प्रकरी कार्यमेव च ।
अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि ॥

भरतः

**अर्थप्रतिपत्तिविधिः**

नादादिहेतुको यः स्यादक्षराणां समुच्चयः ।
आनुपूर्वीसमुल्लेखः स शब्दव्यपदेशभाक् ॥
साध्यसाधनसंयोगः सामानाधिकरण्यकाः ।
पदार्थप्रतिपत्तेश्च विधिः पञ्चविधः स्मृतः ॥
अधिष्ठानं स्वभावश्च गुणः कार्यान्वयस्तथा ।
तादात्म्यं चेति शब्दस्य तद्गुणाः पञ्च कीर्तिताः ॥

कुम्भः

**अर्थविशेषणम्—नाट्यालङ्कारः**

अर्थस्य विरूपतया प्रतिपन्नस्य पुनः पुनः शिरःकम्पहुङ्कारैर्विशेषणम्। यथा—केकयीभरताङ्के—कैकेयी जननीति हनुमद्वाक्यम् ।

सागरः

**अर्थव्यक्तिः**—काव्यगुणः

सुप्रसिद्धाभिधाना तु लोककर्मव्यवस्थिता ।
या क्रिया क्रियते काव्ये सार्थव्यक्तिः प्रकीर्त्यते ॥

भरतः

पाठान्तरम्

यस्यार्थानुप्रवेशेन मनसा परिकल्प्यते ।
अनन्तरप्रयोगस्य साऽर्थव्यक्तिरुदाहृता ॥

प्रसिद्धमभिधानं अभिधाव्यापारो यस्यां काव्यक्रियायां सा अर्थव्यक्तिः शब्दगुणः । यश्चार्थो वर्ण्यते किरातादिनिदर्शनं स तथैव लोके प्रसिद्ध इत्यर्थस्य गुणोऽर्थव्यक्तिः ।

अभिनवगुप्तः

यत्रार्थस्वरूपस्य पूर्णं दर्शनं तत्रार्थव्यक्तिः ।

साहित्यमीमांसा

अर्थव्यक्तिः पदोद्देशात्समस्तार्थावबोधिनी ।

सर्वेश्वरः

अर्थव्यक्तिं तु विद्वांसः प्राहुः संपूर्णवाक्यताम् ।

प्रकाशवर्षः

**अर्थहीनम्**—काव्यदोषः

अर्थहीनं त्वसंबद्धं सावशेषार्थमेव च ।

भरतः

**अर्थान्तरम्**—काव्यदोषः

अवर्ण्यं वर्ण्यते यत्र तदर्थान्तरमिष्यते ।

भरतः

**अर्थापत्तिः**—लक्षणम्

अर्थान्तरस्य कथने यत्रान्योऽर्थः प्रतीयते ।
वाक्यमाधुर्यसंपन्ना सार्थापत्तिरुदाहृता ॥

भरतः

यथा—धूर्तविटे आदष्टेत्यादिश्लोकः । जन्मान्तरेष्वपि विरागो न प्रभवतीति अर्थान्तरं प्रतीयते ।

**अर्थोपक्षेपकः**

नीरसं लौकिकापेतमशास्त्रीयं च यद्भवेत् ।
तद्वस्तु सूचनीयं स्यादत्र विष्कम्भकादिभिः ॥

सर्वेश्वरः

नीरसोऽनुचितस्तत्र संसूच्यो वस्तुविस्तरः ।
अर्थोपक्षेपकैः सूच्यं पञ्चभिः प्रतिपादयेत् ॥
विष्कम्भचूलिकाङ्कास्याङ्कावतारप्रवेशकाः ।
सूच्यार्थसूचनोपाया एते पञ्च प्रकीर्तिताः ॥

अतः प्रवेशकप्रायः प्रथमाङ्के निषिद्ध्यते ।
आदौ विष्कम्भकं कुर्यादिति भोजेन दर्शितम् ॥

शारदातनयः

**अर्धकर्तरी**—वादनम् (उभयहस्तव्यापारः)

दक्षिणः कर्तरीं कुर्याद्वामहस्तस्तु तन्त्रिकाम् ।
यत्र सारणया हन्ति प्राहुस्तामर्धकर्तरीम् ॥

शार्ङ्गः

**अर्धकर्तरी**—वीणायामुभयहस्तव्यापारः

कर्तरीं कुरुते हस्तो दक्षिणो यत्र तन्त्रिकाम् ।
हन्ति सारणया वामः प्राहुतामर्धकर्तरीम् ॥

कुम्भः

**अर्धकर्तरी**—हौडुक्किकहस्तपाटः

विरलानामिकामध्या तर्जन्यङ्गुलिताडनात् ।
अर्धकर्तरिका संज्ञः पाटः सञ्जायते यदा ॥
गिटाखुं खुंम्रेह घेटम्रेह धैझे हंझे हंगित्थोटें.

वेमः

**अर्धकुञ्चितम्**—जानु

नमनात्तु नितम्बस्य प्रोक्तं जान्वर्धकुञ्चितम् ।

अशोकः

लवनेत्वर्धकुञ्चितम् ।

सोमेश्वरः

**अर्धखञ्जा**—चतुष्पदागीतम्

त्र्यश्रात्वर्धेन भिन्नाचेदर्धखञ्जेति कथ्यते ।

वेमः

गुर्वक्षरप्रायपदा लयत्रयसमन्विता ।
अर्धखञ्जेति विज्ञेया तालैर्द्वादशभिर्युता ॥

नेपालादर्श एवायं भरतश्लोको वर्तते ।

भरतः

**अर्धचतुरश्रः**—भङ्गतालः

लद्वयं दद्वयं अष्टावर्त्तौ भवेत्तदा ।

॥०० ॥०० ॥०० ॥०० ॥०० ॥०० ॥०० ॥००

नान्यः

**अर्धचतुरश्रौ**—नृत्तहस्तौ

दक्षिणे खटकास्यः स्याद्वामः स्याद्रेचितो यदा ।
तदर्धचतुरश्राख्यौ स्यातामित्याह माधवः ॥

विप्रदासः

**अर्धचन्द्रः**—वादनम् (उभयहस्तव्यापारः)

स्पर्शोऽङ्गुष्ठकनिष्ठाभ्यामर्धचन्द्रोऽभिधीयते ।

शार्ङ्गः

**अर्धचन्द्रः**—वीणायामुभयहस्तव्यापारः

कनिष्ठाङ्गुष्ठौ स्पृशतो यत्र तन्त्री सहैव तु ।
अर्धचन्द्रं तदा प्राह पूर्णचन्द्रनिभाननः ॥

कुम्भः

**अर्धचन्द्रः**—हस्तः

एकतोऽङ्गुलिसंघाते यत्राङ्गुष्ठे स्थितेऽन्यतः ।
चन्द्रलेखाकृतिर्भाति सोऽर्धचन्द्रोभिधीयते ॥
उपर्युत्तानितोऽर्धेन्दावूर्ध्वगो बालपादपे ;
पराङ्मुखस्तु खेदे स्यात्कपोलफलकं दधत् ।
प्रयोक्तव्यः कृशे मध्ये वलान्निर्वासनादिषु ॥

शार्ङ्गः

**अर्धचन्द्रस्वस्तिकहस्तः**

कटिस्थले त्वर्धचन्द्रौ निक्षिप्तौ स्वस्तिको मतः ।
कटिपार्श्वे चार्धचन्द्रः कटिभागनिरूपणे ॥

विनायकः

**अर्धनर्कुटा**—चतुष्पदागीतम्

अर्धेन भिन्ना विज्ञेया चतुरश्रार्धनर्कुटा ।

वेमः

**अर्धनिकुट्टकम्**—करणम्

स्यान्निकुट्टकमेवार्धेनाङ्गेनार्धनिकुट्टकम् ।
अञ्चिताविति शब्देन क्रियावैशिष्ट्यमीरितम् ॥
मुनिनैवालपद्मस्य स्मरता पूर्वलक्षणम् ।
स्वदेहाभिमुखं पृष्ठभागेनाकर्षणं मतम् ॥
षण्मुखप्रमुखैः प्रोक्तमञ्चितं तन्नसङ्गतम् ।
अप्ररूढनिजश्लाघारूपवाक्ये तदिष्यते ॥

ज्यायनः

अञ्चितौ बाहुशिरसि (?) हस्तस्त्वभिमुखाङ्गुलिः ।
निकुञ्चितार्धयोगेन भवेदर्धनिकुट्टकम् ॥

भरतः

तदेवार्धनिकुट्टकं स्यादेकेनाङ्गेन चेत्कृतम् ।
अप्ररूढवचः प्रोक्ते तत्रैवार्थे नियुज्यते ॥

शार्ङ्गदेवः

**अर्धनिकुट्टकः**—अङ्गहारः

नूपुरविवृत्तनिकुट्टार्धनिकुट्टार्धरेचितरेचकनिकुट्टकललितवैशाखरेचितचतुरदण्डरेचितकवृश्चिककुट्टितनिकुट्टकपार्श्वसंभ्रान्तोद्वृत्तोरोमण्डलकरिहस्तकटीछिन्नानां सप्तदशकरणानां प्रयोगे अर्धनिकुट्टकः ।

शार्ङ्गः

**अर्धपताकः**— हस्तः

त्रिपताककनिष्ठा चेत्तु नता सोऽर्धपताककः ।
क्रकचे क्षुरिकायां च ध्वजगोपुरशृङ्गयोः ।
युज्यतेऽर्धपताकोऽयं तत्तत्कर्मप्रयोजकैः ॥

गौरीमतम्

त्रिपताके कनिष्ठा चेद्वक्रितार्धपताकिका ।
पताकार्धः पुरो भागे बध्वा पल्लवदर्शने ॥
तिर्यग्बध्द्वा तु यो हस्तः फलकस्य प्रदर्शने ।
तर्जन्योर्द्धौ पुरो भागे बध्वा तीरनिरूपणे ॥
ऊर्ध्वभागे पुरोभागे चलनं चोभयार्थकम् ।
पृष्ठभागे पुरोभागे चलनं ककुभे तथा ॥
पुरोभागे चोर्ध्वमुखे बध्वा तु छुरिकार्थके ।
पार्श्वस्थले तु तिर्यक् च चलितौ सन्धिभावने ॥
वामभागे चानुकूल्ये ऊर्ध्वाग्रे संयुतौ यदि ।
चलितौ क्रीडमानार्थे चैकमत्स्यनिरूपणे ॥
शिरःस्थले तु यो हस्तः ध्वजार्थे गोपुरार्थके ।
शृङ्गार्थेऽपि नियोक्तव्यो भरतागमवेदिभिः ॥

विनायकः

**अर्धपाणिः**—हस्तपाटः

एकहस्ताग्रघातेन त्वर्धपाणिरुदाहृतः ।
धगिड धगिड दरगिड दरगिड ।

वेमः

**अर्धपुराटिका**—पादपाटः

भूमिस्थितेनोद्वृत्तेन पादेनैकेन यत्तदा ।
उद्वृत्तस्वादधस्याङ्घ्रेः क्रियते चेन्निकुट्टनम् ।
तदा नृत्तविशेषज्ञैः कथितार्धपुराटिका ॥

वेमः

**अर्धप्रवृत्ता**—चतुष्पदागीतम्

स्थितं प्रवृद्धमथवा द्वयं वाऽर्धे निवेशितम् ।
यस्यामर्धप्रवृत्ता सा कथिता वेमभूभुजा ॥

वेमः

**अर्धमण्डलवर्तना**

सविलासं यदा स्यातामुरः पार्श्वार्धमण्डलौ ।
वर्तितौ स्वोत्करीत्यैव त्वर्धमण्डलवर्तना ॥

अशोकः

**अर्धमण्डलिका**—देशीचारी

तलसङ्घृष्टभूभागौ चरणौ मन्दमाहतौ ।
भ्रमन्तौ यत्र गच्छेतां पश्चाद्भागे यथाक्रमम् ।
अर्धमण्डलिकामाहुश्चारीमेतां विपश्चितः ॥

वेमः

**अर्धमण्डली**—गतिः

मण्डली मण्डलाकारा तच्चार्धा चार्धमण्डली ।

देवणः

**अर्धमत्तल्ली**—करणम्

स्खलन्नपसृतौ पादौ हंसपक्षो धृतभ्रमः ।
वामः सव्योऽर्धचन्द्रस्तु यत्र कर्त्यां विधीयते ॥
अर्धमत्तल्लितवङ्घैः ज्ञेयं तत्तरुणे मदे ।
पक्षवञ्चितकं कत्यामत्र कीर्तिधरोऽब्रवीत् ।
हस्तं नितम्बमत्रैव परे आहुर्मनीषिणः ॥

ज्यायनः

**अर्धमागधी**—गीतिः

अथार्धमागध्यपि लक्ष्यतेऽत्र विलम्बितेनैव फलेन युक्तम् ।
गायेत्कलायां पदमादिमायां पदान्तरेणाथ युतं तदर्धम् ॥
गायेत्पुनर्मध्यलयेन युक्तं कलां द्वितीयामधिकृत्य सम्यक् ।
कलां तृतीयामधिकृत्य पश्चादर्धे तृतीयस्य पदस्य गायेत् ।
पदान्तरं च द्रुतमानयुक्तं सैवार्धमागध्यभिधावती स्यात् ॥

रघुनाथः

अत्रार्धमिति पदसंवन्ध्यर्धपादत्वेनार्धमागधी। न च पादाद्य-निवृत्तिनिवृत्तावर्धः, प्रवृत्तिनिवृत्तिगः हेतुर्मन्तव्यः। यतः साम-वेदगीतप्रधाने आवृत्तिष्वर्ध आद्रियते। य उ वृत्यात्मा जातवेदसम् ।

मतङ्गः

**अर्धमागधी**—चतुष्पदागीतम्

द्रुतमध्यलयोपेता लघुगुर्वक्षरान्विता ।
तदर्धतालकलिता मागध्येवार्धमागधी ॥

वेमः

**अर्धमायूरी**—पुष्करवाद्ये स्वरोत्पत्तिक्रमः

वामके पुष्करे षड्जर्षभौ च दक्षिणे तथा ।
ऊर्ध्वके धैवतश्चैवमर्धमायूर्युदाहृता ॥

भरतः

**अर्धमायूरी**—मार्जना

जायते पुष्करे वामे षड्जश्चेदृषभः पुनः ।
वामे तले पुष्करे स्याद्धैवतस्तूर्ध्वपुष्करे ।
तदा ज्ञेयार्धमायूरी मार्जना मार्गवेदिभिः ॥

वेमः

**अर्धमुकुला**—दृष्टिः

अर्धसंफुल्लतारा च युक्तार्धमुकुलैः पुटैः ।
गन्धस्पर्शरसाह्लादे योज्यार्धमुकुला बुधैः ॥

सोमेश्वरः

अर्धव्याकोचतारा च ह्लादार्धमुकुलैः पुटैः ।
स्मितार्धमुकुला दृष्टिः किञ्चिल्ललिततारका ॥

शारदातनयः

**अर्धमुक्ता**—वंशगतिः

रन्ध्राष्टकेऽर्धपिहिते वंशः संपूर्यते यदा ।
अर्धमुक्ता गतिर्ज्ञेया द्रुतशब्दविधायिनी ॥

कुम्भः

**अर्धमुक्ता**—वंशेऽङ्गुलिगतिः

अर्धमुक्तेन चाप्यस्या अर्धमुक्ता तु जायते ।
अस्या अङ्गुल्याः ।

विशाखिलः

**अर्धरेचितम्**—करणम्

मण्डलस्थानके स्थित्वा वक्षस्थं खटकामुखम् ।
सूच्यास्यनृत्तहस्तेनापसृत्या गच्छतायुतम् ॥
पार्श्वं च सन्नतं वामं बिभ्रत्पादं निकुट्टयेत् ।
यत्रार्धरेचितं तत्स्यादसमञ्जसचेष्टिते ॥

ज्यायनः

अपविद्धः करः सूच्या पादश्चैव निकुट्टितः ।
सन्नतं यत्र पार्श्वं च तद्भवेदर्धरेचितम् ॥

भरतः

मण्डले स्थानके स्थित्वा वक्षस्थः खटकामुखः ।
सूचीमुखं चापसार्धं यदा तस्यान्तिके कृतः ॥
अङ्घ्रिरुद्घट्टितः पार्श्वं सन्नतं चापसारणे ।
तदर्धरेचितं योज्यमसमञ्जसचेष्टने ॥

शार्ङ्गदेवः

**अर्धरेचितौ**—नृत्तहस्तौ

चतुरश्रस्तयोरेकश्चेत्तदात्वर्धरेचितौ ।

अशोकः

दक्षिणो रेचिताकार वामः स्यात्खटकामुखः ।
यत्रैतौ नृत्यतत्वज्ञैः कथितावर्धरेचितौ ॥

विप्रदासः

एकतो रेचितस्त्वेवं चतुरस्रोऽन्यतः स्थितः ।
त्रिपताकौ करौ नृत्ये भवेतामर्धरेचितौ ॥

सोमेश्वरः

अर्धवीणा

सैवार्धवीणा कथिता या तुम्बरहिता यदि ।
मन्द्रतन्त्रीविहीना च कम्बुः स्यादुन्नता पुनः॥
ककुभादिलक्ष्म तद्ज्ञाः तुम्बुरीगतमूचिरे ।
एषार्धवीणा प्रायेण गानसाहाय्यकारिणी ॥

नारायणः

अर्धसञ्चः—हस्तपाटः

उदग्रे पटहादौ तु तर्जन्यङ्गुष्ठताडनात् ।
ततः करतलोछासादर्धसञ्चो भवेद्यथा ॥
खें खें दरिखें दरिखें खेटखे खेट ।

वेमः

अर्धसमः—हस्तपाटः

विषमस्य विपर्यासात्पाटस्त्वर्धसमो यथा ।
दद्गिरि गिरिकिट दगिदं धों गिं धों गिदं ।

वेमः

अर्धसामुद्रः—गीताङ्गम्

अर्धसामुद्रो द्वैगेयकविधानेन षोडशगणो भवति ।

नान्यः

अर्धसावित्रः—तानः

षड्जग्रामे नारदीयतानः ।
म प ध स रि ?

नान्यः

अर्धसावित्री—तानः

मध्यमग्रामे षड्जहीनषाडवः।
रि नि ध प म ग

कुम्भः

अर्धसूची—करणम्

अर्धाङ्गेन कृते सूचीत्यर्धसूचि निगद्यते ।

ज्यायनः

अर्धस्खलितिका—पादपाटः

अर्धस्खलितिका तिर्यगेकाङ्घ्रेः स्खलनाद्भवेत् ।

वेमः

इयं व्यवहारे अड्डुस्खलितिकेत्युक्ता ।

अर्धस्वस्तिकम्—करणम्

चरणौ स्वस्तिकौ हस्तः करिणो यत्र दक्षिणः ।
अपरो वक्षसः स्थाने तदर्धस्वस्तिकं विदुः ॥
सव्यं कीर्तिधराचार्यभट्टतण्डुपुरोगमाः ।
कटिहस्तं पठन्त्यत्र व्याख्यानं तस्य कथ्यते ॥
अर्धचन्द्राभिधः कट्यां पक्षप्रद्योतकोऽथवा ।
पक्षवञ्चितको वापि यथाशोभं विधीयते ॥

ज्यायनः

कुम्भस्तु

"करिहस्तो दक्षिणः स्यादितरः खटकामुखः"
इत्यपरहस्तं निर्दिशति ।

अर्धस्वस्तिकम्—नृत्तकरणम्

चरणौ स्वस्तिकौ हस्तः करिणो यत्र दक्षिणः ।
अपरो वक्षसि स्थाने तदर्धस्वस्तिकं विदुः ॥
अर्धचन्द्राभिधः कट्यां पक्षप्रद्योतकस्तदा ।
पक्षवञ्चितको वापि यथाशोभं विधीयताम् ॥

नन्दी

अस्मिन्करणे मौलिरेचितकचालको प्रयुज्यते ।

अर्धार्धपाणिः—हस्तपाटः

करार्धयोस्ताडनेनार्धार्धपाणिर्भवेद्यथा ।
खुधां खुधां ।

वेमः

अर्धावकीर्णः—वाद्यालङ्कारः

द्रुतं लयं समारभ्य पणवो दर्दरोऽपि वा ।
अवपाणौ यदास्यातां तदा त्वर्धावकीर्णकः ॥

भरतः

अर्धावकीर्णः—वाद्यप्रकारः

द्रुतं लयं समारभ्य पणवो दर्दरोऽपि वा ।
अवपाणौ पुनर्याति तदा त्वर्धावकीर्णकः ॥

भरतः

अत्र नेपालादर्शे आकीर्ण इति पठितम् ।

अर्पणम्—स्वराङ्गम्

अर्पणं नाम लीलायमानमधुरवर्णनास्वरेण पूरयदिव रसं यत्पठ्यते तदर्पणम् ।

नान्यः

**अलक्षितत्यागशौण्डः—देशीतालः**

अलक्षितत्यागशौण्डे लौ विन्दुलौ चतुर्द्रुती ।
लौ दो लौ वेदविन्दुभ्यः परं ह्रस्वौ द्रुतं लघू ॥
।।० ।।०००० ।।० ।।०००० ।।० ।।

गोपतिप्पः

**अलगम्—उत्प्लुतिकरणम्**

अवाङ्मुखः समुत्प्लुत्य विवृत्य गगने पुरः ।
निपत्य चोत्कटे स्थाने स्थितश्चेदलगं भवेत् ॥

वेमः

**अलगम्—पादमणिः**

यस्मिन् समस्थितस्याङ्घ्रेर्जानुक्षेत्रेऽपरः पुनः ।
चरणः कुञ्चितोत्क्षिप्तं तथा वलितजानुकम् ॥
स्वस्तिकं विच्युतिं चैव कुर्वन्नुर्वीतलं मुहुः ।
विदिक्षु ताडयेदेतदलगं परिकीर्तितम् ॥

वेमः

**अलगभ्रमरी—भ्रमरी**

वैष्णवं स्थानमास्थाय भुवि वामाङ्घ्रिणा स्थितः ।
प्रसार्य पादं पुरतः भ्रामयेद्भूमिमस्पृशन् ॥
ऊर्ध्वकायतिरश्चीनो नमनोन्नमनैर्मुहुः ।
अलगभ्रमरीमेनामामनन्ति मनीषिणः ॥

वेमः

**अलगमदिण्डः—धावनलागनृत्तम्**

जोडस्योर्ध्वपदद्वन्द्वं वलनेन पतेद्भुवि ।
स एवालगमो दिण्डः कथितो भरतेन च ॥

वेदः

**अलगाञ्चितम्—उत्प्लुतिकरणम्**

कृत्वालगं यदा वेगादञ्चितं रचयेन्नटः ।
तदालगाञ्चितं ज्ञेयं सद्भिरन्वर्थनामकम् ॥

अशोकः

**अलगोत्प्लवनम्**

उत्प्लुत्य पार्श्वयुगलं कटिदेशे तु विन्यसेत् ।
बध्वा कराभ्यां शिखरावलगोत्प्लवनं भवेत् ॥

नाट्यदर्पणम्

**अलम्भः—पाटवाद्यम्**

स्यादलम्भः कोणघातात्कुण्डलीस्पर्शवर्जितः ।

वेमः

**अलम्भः—हौडुक्किकहस्तपाटः**

अलम्भः कुण्डलीहस्तो यत्रालम्भो भवेदसौ ।
खुखुंदः खुखुंदः हझें हझें हझें गिरें गिघोटें ।

वेमः

**अलङ्कारः—नेपथ्यभेदः**

अलङ्कारस्तु विज्ञेयो माल्याभरणवाससाम् ।
नानाविधः समायोगोऽप्यङ्गोपाङ्गविधिः स्मृतः ॥

भरतः

**अलङ्कारः**

तत्रालङ्कारशब्देन किमुच्यते । अलङ्कारशब्देन मण्डनमुच्यते । यथा—कटककेयूरादिनालङ्कारेण नारी पुरुषो वा मण्डितः शोभामावहेत् । तथा एतैरलङ्कारैः प्रसन्नादिभिरलङ्कृता वर्णाश्रया गीतिः गातुः श्रोतॄणां सुखावहो भवति । व्युत्पत्तिस्तु डुकृञ् करणे इति धातुः । अलंशब्दपूर्वः अलंकृतमलङ्कारः । घञन्तोऽयमलङ्कारशब्दः ।

मतङ्गः

**अलङ्कारः—देशीतालः**

अलङ्कारे प्लुतद्वन्द्वान्मध्ये स्याद्द्रुत तत्समुः (?) ऽ०ऽ

लक्ष्मणः

**अलङ्कारः**

विशिष्टानां स्वराणां यः सन्दर्भो रक्तिवर्धनः ।
वर्णश्चित्रप्रयोगस्तमलङ्कारं प्रचक्षते ॥

पण्डितमण्डली

अलङ्करोति यो रागं मूर्छनाजातिवर्णकैः ।
स्वरैः शुद्धैश्च विकृतैः षाडवौडवभूषितैः ॥
नानाचित्रकलायोगे सोऽलङ्कारोऽभिधीयते ।
अलङ्कारः स्वरूपं स्याद्विशिष्टे वर्णगुम्भने ॥

लक्ष्मीनारायणः

**अलङ्कारविधिः**

अलङ्कारप्रकारेण मूर्छना प्रथमस्वरः ।
मन्द्रो ज्ञेयः स परः स्याद्विगुणस्तारसंज्ञिकः ॥
पूर्वः पूर्वोऽथवा मन्द्रो भवेत्तारः परः परः ।
ज्ञेयो मन्द्रसमानार्थः प्रसन्नश्च मृदुस्तथा ॥
तारो दीप्तिसमानार्थो मन्द्रो बिन्दुशिरालिपौ ।
ऊर्ध्वरेखाङ्कितशिरा तारश्चिः कथितः पुतः ॥

पण्डितमण्डली

अलङ्काराः—त्रिपुष्करे

उत्कर्षहेतुरन्योन्याश्रयरूपा अलङ्क्रिया।
य आतोद्यान्तराणां हि परस्परसमन्वयः॥

तमलङ्कार इत्येवमूचे स भरतो यथा।
चित्रः समो विभक्तश्च चतुर्थश्छिन्न एव च॥

छिन्नविद्धः प्रविद्धश्च वायसंश्रय एव च।
तदा चानुसृतो ज्ञेयोऽलङ्कारः प्रतिविद्युतः॥

दुर्गोऽवकीर्णोऽप्यर्धविकीर्णश्चापि तथा परः।
परिक्षिप्त एकरूपस्तथैव नियमान्वितः॥

साचीकृतः समलेखश्चित्रलेखस्तथैव च।
सर्वसमवायकृतो दृढ इत्येकविंशतिः॥

नान्यः

अलङ्कारिका—श्रुतिः

मध्यमस्य चतुर्थी श्रुतिः। मण्डलीमते तारमध्यमस्यैव।

अलङ्कारिणी—श्रुतिः

मध्यमस्य तृतीया श्रुतिः।

पाल्कुरिकिसोमः

अस्य मते मध्यमः त्रिश्रुतिरेव।

अलङ्घनम्

बहुत्वशब्दे द्रष्टव्यम्।

अलपद्मवर्तना

अलपद्मकरे यत्र व्यावृत्तिक्रियया यदा।
वर्तितः सालपद्माख्या वर्तना गदिता बुधैः॥

अशोक.

अभ्यन्तरे कनिष्ठाया वर्तन्तेऽङ्गुलयः क्रमात्।
व्यावृत्तिक्रियया यत्र सालपद्मस्य वर्तना॥

कल्लिनाथः

अलपद्मौ—नृत्तहस्तौ

कर्मणोद्वेष्टिताख्येन वक्षःस्थावलपल्लवौ।
अंसान्तिकं ततो गत्वा प्रसृतावलपद्मकौ॥

अशोकः

अलपल्लवः—हस्तः

व्यावर्तिताख्यं करणं कृत्वैव समवस्थिताः।
यस्याङ्गुल्यः करतले पार्श्वगाः सोऽलपल्लवः॥

अलपद्मः स एव स्यादङ्गुलीनां च केचन।
अस्य व्यावर्तितस्थाने परिवर्तितमूचिरे॥

कस्य त्वमिति नास्तीति वाक्ययोः प्रतिषेधने।
तुच्छाद्युक्तानृतत्वोक्तिष्वेव स्त्रीभिः प्रयुज्यते॥

शार्ङ्गः

अलब्धलक्षणपदार्थाः

गतयो विंशतिः। नन्दिन्यो विंशतिः। चार्यो द्वाविंशतिः शाल्यः एकोनविंशतिः। स्वराः विंशतिः। यथा—

गतयः—यथा

| | | |
|---|---|---|
| तारगतिः | रूपगतिः | मन्दगतिः |
| मन्द्रगतिः | देवगतिः | अश्वगतिः |
| कीचकगतिः | चित्रगतिः | गजगतिः |
| मन्द्रतारगतिः | भूगतिः | मतङ्गगतिः |
| वेणुगतिः | मूर्तिगतिः | कोहलगतिः |
| गात्रगतिः | अचलगतिः | स्वरगतिः |
| धवलगतिः | द्रुतगतिः | |

नन्दिन्यः—यथा

| | | |
|---|---|---|
| नन्दिनी | कुमुदनन्दिनी | विषमनन्दिनी |
| परमनन्दिनी | वन्ध्यानन्दिनी | आभोगनन्दिनी |
| रीतिनन्दिनी | विद्यानन्दिनी | लोकनन्दिनी |
| निरुक्तनन्दिनी | मेघनन्दिनी | कूटनन्दिनी |
| आवर्तनन्दिनी | पत्रिकानन्दिनी | साकारनन्दिनी |
| मान्यनन्दिनी | प्रयोगनन्दिनी | प्रतिभानन्दिनी |
| चतुरङ्गनन्दिनी | रीतिगाननन्दिनी | |

चार्यः—यथा

| | | |
|---|---|---|
| चारी | देशचारी | चित्रचारी |
| भूचारी | बहुचारी | अङ्गचारी |
| बिन्दुचारी | क्रीडाचारी | करणचारी |
| स्तम्भचारी | अतिमन्दचारी | कूर्मचारी |
| अनुतारचारी | सुप्तचारी | अष्टदिक्चारी |
| अनुबन्धचारी | विनम्रचारी | एकस्वरचारी |
| अनुचारी | दैशिकीचारी | |
| खेचारी | कन्दुकचारी | |

शाल्यः—यथा

| | | |
|---|---|---|
| शाली | गौडशाली | एकशाली |
| पत्रिकाशाली | विमुक्तशाली | करणशाली |
| आभोगशाली | रागशाली | मनोहरशाली |
| तरङ्गशाली | चतुरङ्गशाली | गात्रशाली |
| आकाशशाली | विचित्रशाली | रसशाली |
| मुक्ताशाली | पूरिताशाली | |
| कोदण्डशाली | वीणाशाली | |

स्वराः—यथा

| | | |
|---|---|---|
| अन्यबन्धस्वरः | स्वरान्तरस्वरः | एकमात्रास्वरः |
| प्रमोदस्वरः | द्विमात्रस्वरः | मनोहरस्वरः |
| विज्ञानस्वरः | विकृतस्वरः | क्रमस्वरः |
| पूर्णस्वरः | आत्मानन्दस्वरः | मान्यस्वरः |
| प्रत्येकस्वरः | कर्मस्वरः | वर्तिनीस्वरः |
| प्रतिष्ठास्वरः | सर्ववर्तिनीस्वरः | दत्तिलस्वरः |
| विवर्तिनीस्वरः | पञ्चस्वरः | |

सङ्गीतचूडामणिसारः

**अलम्बुपप्रियः—तानः**

गान्धारग्रामे नारदीयतानः।
नि स रि ग म प?

नान्यः

**अलसम्—दर्शनम्**

अलसं तु भवेदिष्टाद्व्रीडयाभिनिवर्तितम्।

वेमः

**अलातम्—मण्डलम्**

कुरुते दक्षिणः सूचीं वामोऽपक्रान्तचारिकाम्।
पार्श्वक्रान्तां दक्षिणस्तु वामोऽलातां तथैव च ॥
षड्वारं सप्तवारं वा कृत्वा चारीः क्रमादिमाः।
मण्डलभ्रमणं पश्चात्कुर्याद्दाशाचतुष्टये ॥
दक्षिणोऽङ्घ्रिरपक्रान्तां वामोऽतिक्रान्तचारिकाम्।
भ्रमरीं च क्रमात्कृत्वा ललितं चरणक्रमम्।
करोति यत्र तत्प्रोक्तमलातं मण्डलं बुधैः ॥

वेमः

कुर्याद्वामाङ्घ्रिणा सूचीं भ्रमरीं दक्षिणाङ्घ्रिणा।
भुजङ्गत्रासितां चारीमलातामपराङ्घ्रिणा ॥
षड्वारमथवा सप्तकृत्वः कृत्वा क्रमादिमाः।
क्षिप्रं भ्रान्त्वा चतुर्दिक्षु समन्तान्मण्डलाकृति ॥
अपक्रान्तां दक्षिणेन वामेन त्वङ्घ्रिणा यदा।
अतिकान्ता भ्रमरिके विधत्ते ललितैः क्रमैः।
तदलातं मण्डलं स्यात्सदा शङ्करशंकरम्।

अशोकः

**अलातम्—करणम्**

दक्षिणेनाङ्घ्रिणालातां कुर्वंस्तेनैव पाणिना।
नितम्बं चतुरस्रं च विधाय क्रमशः करम् ॥
वामेन चरणेनोर्ध्वजानुचारीं प्रकल्पयेत्।
वामाङ्गेनापि कुर्वीत भूयोऽलातादिकक्रमम् ॥
यस्मिन्निदमलाताख्यं ललिते नृत्त इष्यते।
हित्वा नितम्बमत्राह डोलं कीर्तिधरः करम् ॥

ज्यायनः

**अलातकः—अङ्गहारः**

स्वस्तिकव्यंसितव्यंसितालातोर्ध्वजानुनिकुञ्चितार्धसूचीविक्षिप्तोद्वृत्तकाक्षिप्तकरिहस्तकटीछिन्नानां करणानां क्रमात्प्रयोगेऽलातकः।

**अलातचक्रम्—चालकः**

पराङ्मुखः पाणिरेको बहिरन्तश्च चक्रवत्।
विलुठेत्पाणिरन्यश्चालातचक्रविडम्बनम्।
कुरुते चेत्तदालातचक्रं तज्ज्ञैरुदाहृतम् ॥

वेमः

**अलाता—चारी**

पश्चात्प्रसार्य चरणं वलनाभ्यन्तरीकृतम्।
अन्योरुदेशाभिमुखं तलं तस्य विधाय च।
पार्ष्णिना चेद्भुवि न्यस्येदलाता परिकीर्तिता ॥

वेमः

**अलाता—देशीचारी**

पश्चात्प्रसारितः पादः पादेनान्येन सत्वरम्।
लङ्घितो यत्र तां चारीमलातां मन्वते बुधाः ॥

वेमः

**अलावणी**

अङ्गुलद्वयविस्तारः ककुभो वक्त्र उन्मुखः।
मेषान्त्वनिर्मिता तन्त्री सूक्ष्मा श्लक्ष्णा समा दृढा ॥
अष्टादशाङ्गुलानाह तुम्बं वेदाङ्गुलाननम्।
दन्तनाभिसमायुक्ता दोरीबन्धनवर्जिता ॥
पात्रिका कर्पराहीना भवेदालावणी शुभा।
निष्कलस्य प्रकारेण वाद्यालावणिका सदा ॥
विन्दुनादसमोपेता तुम्बे निक्षिप्य वक्षसि।
मध्यमानामिकाभ्यां च वाद्या दक्षिणपाणिना ॥
मन्द्रे मध्ये च तारे च त्रिस्थाने विन्दुरिष्यते।
तुम्बिमूलं समुत्पीड्य वामाङ्गुष्ठेन धारयेत् ॥
इतराभिस्तु सर्वाभिः स्वरव्यक्तिर्विधीयते।
त्रिस्वरो दक्षिणः पाणिर्वामहस्तश्चतुःस्वरः।
एवं सप्तकमेकं स्यादलावण्यां प्रतिष्ठितम् ॥

सोमेश्वरः

**अलावणी—वीणा**

सम्यगालावणीरूपं सलक्षणमुदीर्यते।
दण्डो मलयजेन स्याद्वेणुना खदिरेण वा ॥

एकाङ्गुलमितं त्वस्याः सुषिरं कार्यमन्तरा ।
षडङ्गुलः परीणाहो दैर्घ्यं स्यान्नवमुष्टिकम् ॥
अत ऊर्ध्वं भवेद्दैर्घ्यमा चतुर्दशमुष्टिकम् ।
ककुभस्तत्प्रमाणः स्याल्लोहपत्रविवर्जितः ॥
दण्डानुरूपतः श्लक्ष्णा विधेयो नामितुङ्गकम् ।
कौशेयैः पट्टसूत्रैर्वा तन्त्रीयुग्मं प्रकल्पयेत् ॥
ऊर्ध्वं तुम्बस्य भागे द्विर्वध्नीयात्तारतन्त्रिकाम् ।
एकवारं ततो मन्दतन्त्रीमासञ्जयेद्दृढम् ॥
जीवद्वयं द्वयोस्तन्त्र्योः ककुभे स्थापयेत्तथा ।
कांस्येन वा सुवर्णेन भूषयेत्पार्श्वयुग्मकम् ॥
वादनं ब्रह्मवीणावत्सव्येतरकरोद्भवम् ।
वामो विरहितः कार्यः करो वेणुशलाकया ॥
अनामिका तर्जनिका कनिष्ठादिर्विकल्प्यते ।
भेदोऽनेकविधस्तत्र सारणादेर्विचक्षणैः ॥

हरिपालः

अलिवर्धनी—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स रि ग म नि स.

(अव) स नि ध प म ग रि स.

अल्पम्

अनुद्रुतद्रुतयो नाम तालप्रस्तारे प्रत्येकमल्पमित्युच्यते । मात्रयाल्पमित्यर्थः ।

अल्पत्वम्—जातिलक्षणम्

अल्पत्वं च द्विधा प्रोक्तमनभ्यासाच्च लङ्घनात् ।
पूर्वोक्ताभ्यासराहित्य अनभ्यासः प्रकीर्तितः ।
पूर्वोक्तालङ्घनाभावो लङ्घनं परिकीर्तितम् ॥

तुलजः

अल्लराजः

रसरत्नप्रदीपकारः । हम्मीरसुतः । क्री. श. १३०० कालिकः ।

अवकीर्णः—वाद्यप्रकारः

समवृत्तस्तु मुरजः छाद्यते पणवैर्यदि ।
नानाविचित्रकरणैरवकीर्णः स उच्यते ॥

भरतः

समवृत्तौ तु मुरजाः छाद्यन्ते पणवैर्यदि ।
नानाविचित्रकरणैरवकीर्णः स उच्यते ॥

भरतः

समवृत्तौ वाद्यमानं पणवः कुरुते यदा ।
मृदङ्गवाद्यमाच्छादमवकीर्णं तु तद्विदः ॥

नान्यः

अवकीर्णा—अवनद्धे जातिः

पात्राणामधमानां समं च विषमं गतिप्रचारे तु ।
द्विगुणत्रिगुणा स्यादियमेव तदावकीर्णाख्या ॥

नान्यः

अवकीर्णं यद्द्विगुणैस्त्रिगुणैर्वा कारणं मृदङ्गेषु ।
पणवेषु दर्दरेष्वप्यवकीर्णा नाम सा जातिः ॥

भरतः

अवकीर्णा—पुष्करवाद्ये जातिः

अवकीर्णं यद्द्विगुणैः त्रिगुणैर्वाकरणं मृदङ्गानाम् ।
पणवेषु दर्दरेष्वप्यवकीर्णा नाम सा जातिः ॥

अभिनवगुप्तपाठः

थं घं धं घे नां द्रां द्रामिति यात्वक्षरैः समायुक्तां ।
अवकीर्णा बृहद्दशा वामेषु च पुष्करे वाद्या ॥

नेपालपाठः—भरतः

अवकृष्टा—ध्रुवा

अवकृष्टाक्षरा ज्ञेयावकृष्टा करुणाश्रया ।
अवकृष्टा ध्रुवावद्धे निरुद्धे पतिते तथा ।
व्याधिते सादिवारा च प्रयोज्या करुणाश्रया ॥

वेमः

अवक्षिप्ताः, अधःक्षिप्ताः—पादाङ्गुल्यः

मुहुः पातादधःक्षिप्ता विब्बोके किलिकिञ्चिते ।

विप्रदासः

मुहुर्मुहुरधःक्षेपादवक्षिप्ताः प्रकीर्तिताः ।
पार्श्वाकर्षे च संयोज्याः विब्बोके किलिकिञ्चिते ॥

सोमेश्वरः

पृष्ठतः सरणे स्त्रीणां ।

ज्यायनः

अवघटः—हस्तपाटः

अयमवघड इत्यप्युच्यते ।

एकैकः पाणिरित्थं चेत्पर्यायेण लगेत्पुटे ।
तदावघटनामासौ करपाटः प्रकीर्तितः ॥

सोमेश्वरः

अवघट्टनम्

किन्नर्यां दक्षिणहस्तव्यापारः । तत्र द्रष्टव्यम् ।

अवघडः—हस्तपाटः

आदौ तलेन सन्ताड्य साङ्गुष्ठाङ्गुलिसंहतः ।
प्रत्येकं ताडयेत्पश्चाद्यत्र सोऽवघडः स्मृतः ॥

वेमः

धरकिट धरकिड गिरिकिट तकधों।
अवघडस्त्वष्टमात्राभिः षोडशैर्वा युतो भवेत्।

पार्श्वदेवः

अवघटशब्दे द्रष्टव्यम्।

**अवघडचक्रम्—नृत्तबन्धः**

यत्राष्टानां नर्तकीनां मण्डलं मान्यभूषणम्।
चतस्रः कोणगा नार्यः कुर्युर्विनिमयं मिथः॥
बन्धोऽवघडचक्राख्यो भवेत्।

वेमः

**अवतरणम्—पूर्वरङ्गाङ्गम्**

प्रत्याहारशब्दे द्रष्टव्यम्।

**अवत्सकः—वाद्यप्रबन्धः**

उद्ग्राहः स्यात्ततः खण्डं शुद्धकूटादिनिर्मितम्।
तद्वर्णसरबद्धं वा प्रयुज्य द्विरिदं द्वयम्॥
ततः प्राक्खण्डसहितं तादृक्कूटमयं दलम्।
वाद्यते छण्डणोऽन्ते च यत्र सोऽवत्सको भवेत्।
प्रयोज्य नर्तने दीप्ते शार्ङ्गदेवेन कीर्तितः॥

शार्ङ्गः

आदावुद्ग्राहखण्डः स्यादथ शुद्धादिभिः कृतम्।
बद्धं वर्णसरेणाथ खण्डमेकं प्रयोजयेत्॥
पुनः खण्डद्वयमिदं द्विवारं संप्रयुज्य च।
ततो द्वितीयबन्धेन युक्तं खण्डद्वितीयकम्॥
शुद्धकूटादिभिः पाटैर्घटितं च प्रयुज्यते।
अवसाने चण्डणश्च यत्र स स्यादवत्सकः।
प्रायेण नर्तने दीप्ते प्रयोज्योऽयं विचक्षणैः॥

वेमः

**अवधूतम्—शिरः**

अधो यत्सकृदाक्षिप्तमवधूतं तु तच्छिरः।
स्थित्यर्थे स्थाननिर्देशे आलापाह्वानयोरपि।
उपविष्टाल्पनिद्रायां लज्जायां च प्रयुज्यते॥

विप्रदासः

यदधः सकृदानीतमवधूतं तदुच्यते।
स्थित्यार्थदेशनिर्देशे संज्ञावाहनयोरपि।
आलापे च प्रयोक्तव्यमिदमाहुर्मनीषिणः॥

शार्ङ्गः

**अवनतः—पादाङ्गुष्ठः**

नामितोऽवनतोऽधस्ताद्भ्रिया दूत्यादिलेखनः।

ज्यायनः

**अवनद्धवाद्यानि**

एवमानद्धवाद्यादौ मुरजाख्यं प्रकीर्तितम्।
सांप्रतं शेषवाद्यानां किञ्चिल्लक्षणमुच्यते॥
चर्मानद्धमुखा ढक्का प्रयाणे भूपतेर्हिता।
निःसाणो नृपतेर्वाद्यं राज्यकार्येषु वाद्यते॥
वज्राकृतिस्तु त्रिवलिः द्विमुखा नृत्यवाद्यगा।
पटहा मार्गदेश्याख्या भूपादवगृहादिषु॥
आवजो लोकभाषायां खण्डावजपषानुजाः।
मताः पट्टावजश्चेति स्वस्वभाषानुसारिणः॥
तथैवं म्लेच्छवाद्यानि डोलतब्बमुखानि तु।
डपा च टामकी चैव डक्कुण्डिः पादचारिणाम्।
तथा डमरुकः खुक्का दुद्दली कुण्डली घटः॥

सुधाकलशः

**अवनद्धवाद्ये हस्तदेवताः**

अङ्गुष्ठे दैवतं ब्रह्मा तर्जन्यामधिपः शिवः।
मध्यमायाः प्रभुर्विष्णुः सर्वदेवा त्वनामिका॥
ऋषिस्थानं कनिष्ठायाः सूर्यः करतलाधिपः।
पाणिपृष्ठे स्थितश्चन्द्रः शक्रो दक्षिणहस्तपः।
वरुणो वामहस्तेशः सर्वदेवौ कराविति॥

सुधाकलशः

**अवनद्धविधिः—गतिप्रचारे स्वस्थावस्थायाम्**

नायकानां तु स्वस्थगतिप्रचारं वक्ष्यामः। तत्र धं द्रां द्रां द्रां इति देवतानाम्। घें तां कें तां प्रायं कुणकिटिप्रायं न्यञ्जकप्रायं मध्यमानाम्।

एवं स्वस्थावस्थागतिप्रचारे विधीयते वाद्यम्।
द्विकलाश्च तथैककलाश्चतुष्कलाश्चैव पादविन्यासाः।
तत्र तु साम्यं कार्यं भाण्डेन समं च गानेन॥

भरतः

**अवनद्धविधिः—गतिप्रचारे**

पुनश्चावस्थाकृतं वाद्यं वक्ष्यामि। त्वरितगमने धं धं घे घे टं इत्येवं वाद्यं प्रयोक्तव्यम्।

रथविषमादिगतमङ्गुलीप्रचलनकृतं विहितम्।
पुनरन्यावस्थायां वाद्यविधानं प्रवक्ष्यामि॥
त्वरितगमनेषु भावा ये पूर्वोक्ता गतिप्रचारेषु।
ध्रें ध्रें घें घें तत्र तु वाद्यं प्रयोक्तव्यम्॥
नौरथविमाननेपथ्यानिलाकाशजेङ्गुलीचलनात्।
कार्यं हि तत्तुष्केष्वन्योन्यसमाश्रितं वाद्यम्॥

दुःखार्दितव्याधितेष्टजनवियोगविभवनाशवधवन्धाः ।
व्रतनियमोपवासादियुक्तेष्वालिप्तमार्गवन्धो विधातव्यः ॥

दैत्यदानवयक्षराक्षसपन्नगादीनां, धं द्रां धं द्रां धकुतां घघटां प्रायम्। खञ्जविकलपङ्गुवामनादीनां तघटाघे प्रायम्। चेटकुसत्त्वादीनां धों कटकुकुणेत्यादिकम्। यतिपाशुपतशाक्यादीनां धहु धहु धे धे प्रायम्। औपस्थायिकनिर्मुण्डवर्पवरादीनां घेटां धों टां भां टां ण्णाणाप्रायम्। वृद्धश्रोत्रियकञ्चुकिस्थूलादीनां खो द्रो धो खो खो इति प्रायम्। गजवाजिखरोष्ट्ररथविमानयानेषु धं किटिप्रायम्।

सर्वत्रोत्तममध्यमाधमेषु पुरुषेष्वित्थम्। रसभावानभिसमीक्ष्य वाद्यं प्रयोक्तव्यम्। एवं तावत्पुरुषवाद्यम्। स्त्रीणां पुनरभिव्याख्यास्यामः। तत्रोत्तमस्त्रीणां धकिट मधिकिट दोहो कक्कु खकु धो धकिटि इति प्रायम्। राज्ञीनां महोत्तमानां च धं किट मधिधि धोण्ण कखुखु प्रायम्। धं किं तिकिधिघटमटमथिथे इति ब्राह्मणीनाम्! वेश्याशिल्पकारीणां मध्यमस्त्रीणां तु किटिणां धं कथिथ घटमथि दुन किटि किटि प्रायम्। नीचयोपितां घटमथिकुण कुणकिण कूखिखि प्रायम्। अवस्थान्तरितानां तु त एव पौरुषा वाद्यविशेषा भवन्ति। सामान्यतोऽभिनये भयशोकक्रोधादयो हि भावा आसां समुत्पद्यन्ते। आसामपि रसभावाभिनयापेक्षं मार्गाश्रितं वाद्यं भवति।

भरतः

मतान्तरे—

सांप्रतं त्वस्य वाद्यस्य नाट्यनृत्तविकल्पनात्।
कथ्यते विनियोगस्तु गतिगीतिसमाश्रयः ॥
दशरूपे ध्रुवास्वेवं सप्तगीतविधावपि।
छन्दकासारिते चैव गतिप्रचरणे तथा ॥
तत्त्वं चौद्यं च यत्प्रोक्तं तथा चानुगताभिधम्।
ओघ इत्यपि यत्प्रोक्तं तत्त्रयं विनियोजयेत् ॥

सप्तगीतविधाविति। मद्रकादिसप्तसु गीतिषु। छन्दकासारिते मार्गासारिते अङ्गे।

गीतकाद्यैः स्वतन्त्रेण वाद्यमात्रं विधीयते।
तत्त्वादीनि त्रयं तस्मात्प्रधानं विनियोजयेत् ॥

भरतस्तु गत्या वाद्यानुसारिण्या (४ अध्याये) इत्याह।

राज्ञां गतिप्रचारे च तत्वं चौधं विनिर्दिशेत्।
ध्रुवासु चैवानुगतमोघो गीतिक्रियासु च ॥

गीतीति। मद्रकादिसप्तगीतयः।

अधमप्रकृतीनां तु पात्राणां छन्दतो भवेत्।
विचित्रमिच्छानुगुणं वाद्यं तत्वादिमिश्रितम् ॥
मध्ये तु गत्यपेक्षित्वाद्गुरुत्वादन्यवर्णवत्।
विनियोज्यं सदा वाद्यं प्रयोगकुशलैरिह ॥

प्रावेशिक्यां ध्रुवायां तु तत्वमोघो विनिर्दिशेत्!
नैष्कामिक्यां प्रसादिक्यामोघो द्रुतलयो भवेत्।
ध्रुवासु नियमेनैव तत्त्वं वाद्यं विधीयते ॥
भावादीनामभिनये वाद्यं नैव प्रयोजयेत्।
अङ्गहारादिसंपत्तौ वाद्यमिष्टं सदा बुधैः ॥

नृत्ताङ्गबोधनमात्रं वाद्यम्।

## अवनद्धविधिः—तालयोगे

एवं नाट्ये च नृत्ते च पञ्चातोद्यकमीरितम्।

पञ्चातोद्यकमिति। पुष्करत्रयपणवदर्दुराः।

वाद्यमस्माभिरधुना तालयोगस्य कथ्यते ॥
चच्चत्पुटेन तालेन तथा चाचपुटेन च।
षट्पितापुत्रकेनेह संपक्केष्टादिनापि च ॥
अपि भङ्गोपभङ्गाभ्यां तज्ज्ञैः पात्रानुरूपतः।
संयोज्यं वाद्यमेतत्तु कलावस्थानरूपकम् ॥
द्विकलाश्च तथैकैककला पादविन्यासाः।
साम्यं यत्तत्कार्यं भाण्डानां गीतियोगे च।

चच्चत्पुटेन तालेन देवानाम्। राज्ञामपि स्वस्थगतिप्रचारे विप्राणां च मध्यानां षट्पितापुत्रकेण संयोज्यम्।

स्थितलययोगात्खञ्जकनाम्नः चच्चत्पुटस्य भङ्गेन।

दानवदैत्यराक्षसयक्षग्रहगोचरस्तु वाद्यविधिः वैतस्तिकमार्गगतः। खञ्जविकलवामनपङ्ग्वादीनां चच्चत्पुटभङ्गेन च। खञ्जकनाम्ना प्रयोक्तव्यम्। पाशुपतशाक्यनिर्मुण्डानां मध्यमलयेन योज्यम्। चच्चत्पुटभङ्गजात्या। विदूषकौपस्थायिकवर्षवरमुख्यानां मध्यलयनियतं चच्चत्पुटभङ्गं विनियोजयेत्। स्थूलश्रोत्रियगतौ द्रुतलयसमन्वितं कार्यम्। औपस्थायिकाः—चिकित्सकाधोरणादयः।

उत्तमदिव्यस्त्रीणां मध्यमलययोगित्वाद्यम्।

ध्रुवासु चैव सर्वासु वृत्तापेक्षं विनिर्दिशेत् ॥
वाद्यं प्रयोगकुशलः पदानि रचयेत्तथा।
यथा यथा च वृत्तानां विरामविधिरिष्यते ॥
तथैव वाद्यं कर्तव्यं तथा चाङ्गविचेष्टितम्।
यथा गुर्वक्षरं चैव तथाल्पाक्षरमेव च ॥
मुखे चोपोहने कार्यं प्रकृष्टं वर्णतस्तथा।
स्थितशुद्धप्रहारं तु मध्येऽक्षरसमं भवेत् ॥
कुर्यात्तु गीतके वाद्यं द्रुतं चोपरिपाणिकम्।
समं रक्तं विचित्रं च तथा शुद्धप्रहारजम् ॥
नृत्ताङ्गग्राहि च तथा वाद्यं कार्यं च ताण्डवे।
सनृत्तेषु प्रयोगेषु तत्वं चानुगतं तथा ॥

अनृत्तेषु प्रयोगेषु तत्वमोघं च वादयेत्।
स्थितं मध्यं द्रुतं वापि यथागानं तु गीयते ॥
तथा नृत्ताङ्गहारेषु तेन चैव क्रमेण तु।

वाद्यं स्यादित्यध्याहारः।

यो विधिर्गानवाद्यानां पाटाक्षरसमन्वितः।
स तु नृत्ताङ्गहारेषु कर्तव्यो नाट्ययोक्तृभिः ॥

नान्यः

अवनद्धाङ्गविभागः

लेपश्च मार्जना चात्र संस्कारः पुष्कराश्रयः।
पाणयश्च प्रहाराश्च पाणिसंस्कार इष्यते।
अन्ये स्वराणां वर्णानां संस्कारः परिकीर्तितः ॥

नान्यः

अत्रेति। अवनद्धाङ्गेषु द्विलेपनपट्करणत्रियत्यादिष्वित्यर्थः।

अवनद्धानि

चर्मलोहनिबद्धं स्यादवनद्धमनेकधा।
तत्रादौ पटहः प्रोक्तो हुडुक्कामुरजस्ततः ॥
करटापटवाद्यं च भेरी त्रिवलिदर्दरौ।
डक्कुली डमरुर्डक्का ढक्का डमस एव च ॥
निस्साणस्ताम्रकी रुञ्जा कडुवालश्च सेलुका।
उच्यते च प्रसिद्धानां लक्षणं कियतामपि ॥

सोमराजः

अवनद्धे दशाङ्गम्

यथाङ्गैर्दशभिर्युक्ता जायन्ते स्वरजातयः।
तथैता अपि जानीयाद्दशाङ्गा एव नित्यशः ॥
अक्षराणि च मार्गाश्च करणानि गतानि च।
संयोगाश्च प्रहाराश्च पाणयो यतयस्तथा ॥
पाण्योः प्रकाराः पञ्चापि मार्जनाश्च प्रकीर्तिताः।
एभिर्दशभिरङ्गैस्तु जायन्ते वाद्यजातयः ॥

नान्यः

स्वरजातय इति गीतखण्डेऽष्टादशजातीनां दशकं जातिलक्षणमित्युक्तम्। अक्षराणीति षोडशाक्षरम्। मार्गा इति चतुर्मार्गम्। करणानीति पट्करणम्। गतानीति त्रिगतम्। संयोगा इति त्रिसंयोगः। प्रहारा इति त्रिप्रहारम्। पाणय इति पञ्चपाणिकम्। यतय इति त्रियति। प्रकारा इति पञ्चप्रकारम्। मार्जनमिति त्रिमार्जनम्। इत्यङ्गानि दश। तत्तच्छब्देषु लक्षणान्युक्तानि।

अवपातः —आरभट्यङ्गम्

भयहर्षविद्रवसंभ्रमाणां क्षिप्रप्रवेशनिर्याणमवपातं विदुर्बुधाः। यथा—भार्गवेण युद्धाय रामे आहूयमाने वृद्धस्य दशरथस्य मुहुः प्रविशतो निर्गच्छतश्च ससंभ्रमं सभयं सविद्रवं चेष्टितमासीत्। सर्वथा विक्लवस्य चेष्टितमवपातः।

सागरः

भयहर्षसमुत्थानं विद्रवविनिपातसंभ्रमाचरणम्।
क्षिप्रप्रवेशनिर्गममवपातमिमं विजानीयात् ॥

भरतः

भयातिशयेन हर्षातिशयेन च क्षिप्रमेव प्रवेशनिर्गमौ यत्र पात्राणाम्। तथा—विद्रवो वाक्यादिकृतो विनिपातोऽवस्कन्दः। ताभ्यां कृतं संभ्रमाचरणम्। आवेगप्रधाना चेष्टा यत्र सोऽवपातः। अवपतन्त्यस्मिन् पात्राणीति। यथा—कृत्यारावणे षष्ठेऽङ्के प्रविश्य खड्गहस्तः सप्रहारः पुरुष इत्यतः प्रभृति यावदसौ निष्क्रान्तः।

अभिनवः

अवभृतः—तानः

मध्यमग्रामे गनिहीनौडुवः।

स प ध म रि

कुम्भः

अवमृष्टम्—व्यञ्जनधातुः

अथावमृष्टकम्।

हन्ति त्रिस्थानकं तन्त्री त्रयमेकस्वरं पृथक्।
कनिष्ठया दक्षिणयाङ्गुष्ठाभ्यामप्यधः सरन्।
वादकस्य करौ यत्र ब्रूते भूनायकेश्वरः ॥

कुम्भः

तन्त्रीत्रयमेकस्वरमधोमुखं यद्धन्यतः कृत्वा।
स्थानत्रये कनिष्ठाङ्गुष्ठद्वितयेन तदवमृष्टम् ॥

नान्यः

अवमृष्टम्—धातुः

कनिष्ठया दक्षिणयाङ्गुष्ठाभ्यामप्यधः सरन्।
हन्ति त्रिस्थानकं तन्त्रीत्रयमेकस्वरं पृथक्।
यत्रावमृष्टमाचष्ट तद्यज्ञपुरमण्डनः ॥

शार्ङ्गः

अवयतिः—वाद्यप्रबन्धः

यस्यां विरतिरन्ते च तालस्य व्यापकाक्षरैः।
सपाटैर्बद्धखण्डा या साख्यातावयतिर्बुधैः ॥

शार्ङ्गः

यस्यां विरामस्तालस्य पर्यन्ते परिदृश्यते।
यत्र खण्डनिबद्धं च स पाटैर्व्यापकाक्षरैः।
एषा त्ववयतिः प्रोक्ता विदुषा वेमभूभुजा ॥

वेमः

**अवरा—श्रुतिः**

मध्यमस्य चतुर्थी श्रुतिः।

सुधा

**अवरोहिणः—अलङ्काराः**

अलङ्काराः समादिष्टा द्वादशारोहवर्णकाः।
एत एवावरोहेण भवेयुरवरोहिणः॥

पण्डितमण्डली

**अवरोही—वर्णः**

अवरोहः स्वराणां यस्तादृशां तत्समुद्भवः।
रागक्रियावरोही स्याद्वर्णो वर्णविदादृतः॥

तादृशां मूर्छनाक्रमवर्तिनाम्।

पण्डितमण्डली

**अवलगितम्—आमुखाङ्गम्**

एषामन्यतमं श्लिष्टं योजयित्वाथ युक्तिभिः।
पात्रग्रन्थैरसंबाधं प्रकुर्यादामुखं बुधः॥

भरतः

**अवलगितम्—वीथ्यङ्गम्**

यत्रान्यस्मिन्समावेश्य कार्यमन्यत्प्रसाध्यते।
तच्चावलगितं नाम विज्ञेयं नाट्ययोक्तृभिः॥

भरतः

यत्रोत्तरे दीयमानेऽन्यानुसन्धानपूर्वकेऽप्यन्यत्कार्यं सिद्धयति तदन्यकार्यावलगनादवलगितम्। यथा—रत्नावल्यां कृच्छ्रेणोरुयुगमित्यादि राजवचनं सागरिकागतमास्थावन्धजीवितं मुख्यं कार्यं साधयति।

अभिनवः

रूपकेषु यस्य पात्रस्य सूचना नास्ति तत्रावलगितरेव न कर्तव्या। यथा—शैवाचार्य इवानेन कुशिष्येणैव भैरव इति सूत्रधारवचनेन भैरवस्य प्रवेशं पारिपार्श्वकस्याधिक्षेपेण तदविधेयताख्यापनेन कृतवान्कविः।

सागरः

द्विधावलगितं प्रोक्तमर्थावलगनात्मकम्।
अन्यप्रसङ्गादन्यस्य संसिद्धिः प्रकृतस्य वा॥

सिंगः

यत्रैकस्मिन्कार्ये किञ्चिद्विलक्षणान्यकार्यस्य समावेश इत्येको भेदः। अन्यस्मिन्कार्ये प्रस्तुते क्रियमाणे कार्यान्तरसिद्धिः द्वितीयो भेदः। यथा—उत्तरचरिते सीताया गर्भदोहदजन्यवनगमनरूपकार्यस्य समावेशः।

नाट्यप्रदीपे सुन्दरः

**अवलम्बकम्—मात्रावृत्तम्**

चतुर्मात्रिक एको र।

विरहाङ्कः

**अवलेखः—वादनम् (दक्षिणहस्तव्यापारः)**

अवलेखो मध्यमया स्यात्तन्त्रीताडनं बहिः।
अङ्गुल्यान्येऽन्ययाप्याहुः संलेखं चावलेखकम्॥

सर्वाभिस्तिसृभिर्द्वाभ्यामथवेति च ते जगुः।
अन्तर्बहिर्मुखौ घातौ तयोस्ते ब्रुवते क्रमात्॥

शार्ङ्गः

**अवलेखः—वीणायां दक्षिणहस्तव्यापारः**

मध्यमा बहिराहन्ति केवला तन्त्रिका यदा।
तदावलेख इत्युक्तो वैणिकग्रामभूभृता॥

वैणिकग्रामभूभृत् कुम्भः।

आहुः संलेखावलेखवन्याङ्गुल्यापि केचन।

**अवलोकितम्—दर्शनम्**

अधस्ताद्दर्शनं यत्तदवलोकितमुच्यते।

त्रिप्रदासः

**अवलोकितः—वर्णालङ्कारः (सञ्चारी)**

स्वरं द्वितीयं संत्यज्य यत्रारोहावरोहयोः।
चतुस्स्वरः कलाः प्राज्ञैर्गीयते सोऽवलोकितः॥

सगमा मरिसा रिमपा पगरी गपधा धमगा मधनी निपमा।

मोक्षदेवः

चतुस्स्वराः कला यत्र स्यादारोहावरोहयोः।
स द्वितीयपरित्यागादवलोकित ईरितः॥

जगद्धरः

**अवसानावहरणा—चतुष्पदागीतम्**

अवसानावहरणा भवेन्नित्यं मिताक्षरा।
सानुस्वारं द्रुता सेयमन्तावहरणा भवेत्॥

वेमः

**अवस्कन्धबन्धः—श्रव्यकाव्यम्**

य इह द्विचारिका वाग्गाम्यगिरा गीयते गभीरोक्तः।
सोऽवस्कन्धकबन्धोऽभिधीयते भीमफुल्यादिः॥

भोजः

**अवस्थाः**

कार्यस्य दैवपौरुषोभयप्राधान्यादवस्थाः। संस्थाः, समवस्थाः त्रयोवस्था जायन्ते। अवस्थादीनां च तिसृणामपि आरम्भप्रार्थनादीनि पञ्च पञ्च पर्वाणि भवन्ति। तत्र दैवप्राधान्ये अवस्थाः। तासामारम्भादयः पञ्च पर्वाणि।

आरम्भः प्रसवोद्भेदकिञ्चिच्छेषसमाश्रयः ।
निर्दिष्टाः सूरिभिस्ते तु तेषां लक्षणमुच्यते ॥

भोजः

संसाध्ये फलयोगे तु व्यापारः करणस्य यः ।
तस्यानुपूर्व्या विज्ञेयाः पञ्चावस्थाः प्रयोक्तृभिः ॥
प्रारम्भश्च प्रयत्नश्च तथा प्राप्तेश्च संभवः ।
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः ॥

भरतः

अवस्थानवराटिका—रागः

मनिधेषु भवेन्मन्द्रः षड्जांशन्याससंज्ञिता ।
परिपूर्णा स्वरैः सर्वैरवस्थानवराटिका ॥

जगदेकः

मण्डिता मनिधैर्मन्द्रैरवस्थानवराटिका ।

अवस्थानवराटी—उपाङ्गरागः

अवस्थानवराट्युक्ता निधमैर्मन्द्रगामिभिः ।

भट्टमाधवः

अनन्तरमवस्थानवराटी संभवेत्तथा ।
धैवते मन्द्ररूपा च तथा मध्यनिषादयोः ।
षड्जन्यासांशसहिता संपूर्णा सप्तभिः स्वरैः ॥
अवस्थानवराटी स्यान्मनिधैर्मन्द्रभूषित्ता ।
षड्जांशन्याससंयुक्ता गीयते शुचिहास्ययोः ॥

अवस्पन्दितम्—वीथ्यङ्गम्

आक्षिप्तेऽर्थे तु कस्मिंश्चिच्छुभाशुभसमुत्थिते ।
कौशलादुच्यतेऽन्योऽर्थः तदवस्पन्दितं भवेत् ॥

भरतः

शुभाशुभं दैवम् । तेनाबुद्धिपूर्वकं क्वचिदर्थे आक्षिप्तेऽपि कौशलात्तत्प्रच्छादनेच्छया यत्रोत्तरोऽन्योऽर्थ उच्यते तदवस्पन्दितम् । चक्षुःस्पन्दनादिवदन्तर्गतसूचनीयसंभवात् । यथा—वेण्यां "सत्पक्षा मधुरगिर" इति सूत्रधारवचने दैववशादयमर्थ आयातः । सत्पक्षे अमधुरा गीर्येषां ते तथा प्रकर्षेण साधिताः आधिसहिताः यैर्दिशः कृताः धृतराष्ट्रात्मजाः पतन्तीति उक्ते सूत्रधारस्तु "ननु शरत्समयवर्णनया हंसा नभस्थलं धार्तराष्ट्रा" इति व्यपदिशामीत्युक्तवान् । अत्रावस्पन्दितम् ।

अभिनवः

रभसेनोदितं वाक्यं शुभं वा त्वशुभं तथा ।
अन्यद्वा क्रियते बुद्धया तदवस्पन्दितं भवेत् ॥

यथा—निभृतस्थायी भीमो दुर्योधनेन पृष्टः कस्त्वमिति भीम आह "भीमोऽहं भयानकोऽह"मिति ।

सागरः

पूर्वोक्तस्यान्यथोक्तिः स्याद्यत्रावस्पन्दितं हि तत् ।

सिंगः

रसोक्तस्यान्यथा व्याख्या यत्रावस्पन्दितं तु तत् ।

नाट्यप्रदीपे सुन्दरः

स्वेच्छोक्तस्यान्यथाख्यानमवस्पन्दितम् । स्वेछया वर्णाभिप्रायमात्रेणोक्तस्यान्यथाकथनरूपं यत्तदवस्पन्दितम् । चक्षुस्पन्दनादिवत् । यथा—छलितरामे सीतालवसंभाषणम् ।

रामचन्द्रः

अवहित्थम्—करणम्

कुर्वीत जनितां चारीं करावभिमुखाङ्गुली ।
यत्रालपल्लवारालौ वक्षस्तलललाटयोः ॥
व्यावृत्तोद्वेष्टितौ कार्यौ कराभ्यामवहित्थकम् ।
एतद्गोपनवाक्यार्थे विद्वद्भिर्विनियुज्यते ॥
अवहित्थकरं चात्र भट्टतण्डुरवोचत ॥

ज्यायनः

इदं परेऽवहित्थाख्यकरयोगाद्बभाषिरे ।
चिन्तादौर्बल्यविषयं नृत्तविद्याविशारदाः ॥

अशोकः

अवहित्थम्—देशीस्थानम्

इदमेव विष्कम्भिताख्यं देशीस्थानम् ।

अवहित्थम्—स्थानकम्

एतदेवावहित्थाख्यं स्थानमङ्घ्र्योर्विपर्ययात् ।
केचिद्विपश्चितोऽप्याहुर्व्यत्यासं कटिहस्तयोः ॥
अत्राधिदेवता दुर्गा तद्गोपे विस्मयेऽपि च ।
चिन्तालज्जावितर्केषु संलापेऽपि स्वभावजे ॥
स्वाङ्गावलोकने स्त्रीणां निजसौभाग्यगर्वतः ।
वीक्षणे वरमार्गस्य लीलालावण्ययोरपि ॥
विलासस्याप्यथाकारगोपनस्यापि सूचकम् ।

अशोकः

परस्यागमोत्कण्ठावीक्षादाविदमिष्यते ।

ज्यायनः

अवहित्थम्—व्यभिचारिभावः

आकारप्रच्छादनात्मकमवहित्थम् । तस्य लज्जाभयापजयगौरवजैह्म्यादयो विभावाः । अन्यथाकथनावलोकितकथाभङ्गकृतकधैर्यादयोऽनुभावाः ।

भरतः

काले मनस्संवरणमवहित्थं विदुर्बुधाः ।
लज्जादिविक्रियाहेतुः तत्समुत्पत्तिकर्मणः ॥

तत्र साचीनवक्त्रत्वक्कतकरवविहस्तता अनुभावाः।

सर्वेश्वरः

अवहित्थः—हस्तः

वक्षस्तलादधो नीतौ शुकतुण्डौ स्वसंमुखौ।
यत्रायमवहित्थाख्यो हस्तो नाट्यविदां मतः॥
नासाक्षेत्रादधो नीतौ भवेन्निश्वासदर्शने।
असावौत्सुक्यदौर्बल्यशरीरकृशतादिषु।
यथोचितं प्रयोगज्ञैः प्रयोज्यो नाट्यकर्मणि॥

वेमः

वक्षसोऽभिमुखौ सन्तौ शुकतुण्डावधोमुखौ।
कृत्वा नीतावधो यत्र सोऽवहित्थोऽभिधीयते।
दौर्बल्यौत्सुक्यनिश्वासगात्रकार्श्येष्वसौ भवेत्॥

शार्ङ्गः

अवहित्थवर्तना

करावेचमुभौ यत्र सावहित्थाख्यवर्तना।

अशोकः

एवमिति शुकतुण्डवर्तना विवक्षिता।

अवहित्था—चित्ताभिनयः

अवहित्थाकारगुप्तिर्धैर्यप्राभवनीतिभिः
हृदि स्थाने पताकस्तु तस्मिन्संपुटहस्तकः॥
धैर्यगोपन इत्याहुर्भरतागमवेदिनः।
शिरोभागे कपित्थश्च पुरोभागे तु सम्पुटः।
लज्जाया गोपने प्राहुर्भरतागमवेदिनः।
हंसास्यस्तु पुरोभागे तिर्यक्प्रचलितो यदि।
पुरो भागे संपुटश्च बद्धश्चेन्नीतिगोपने॥

विनायकः

अवहित्था—शिल्पकाङ्गम्

अवहित्था तदेव स्याद्यत्पाणिर्न निवारितः।
इत्यादिप्रणयक्रोधाच्छादनं तद्विभाव्यते॥

शारदातनयः

तदेव स्यादिति मालतीमाधवे पञ्चमाङ्के।

प्रवृद्धस्य संवरणमवहित्थम्। यथा—वृक्षवाटिकायां वृक्षवाटिकेति पुष्पभूपितनाटकेऽङ्कस्य नाम।

सागरः

अवहित्थहस्तः

अलपद्मौ वक्षसि स्यावबहित्थकरो मतः।
पुरो भागे त्वयं हस्तो लीलाकन्दुकधारणे॥

सौन्दर्ये कुचयोश्चैव शृङ्गारनटने तथा।
अवहित्थकरस्सोऽयं दर्शनीयो बुधोत्तमैः॥

विनायकः

अवाग्बन्धः—हस्तः

दक्षिणं तन्मुखं चोर्ध्वमवाग्बन्धं तदिष्यते।

उमातिलकः

अविक्रियम्—दर्शनम्

अनिश्चलं यच्छस्त्रास्त्रघातेऽपि तदविक्रियम्।

शारदातनयः

अविचालिता—ध्रुवावृत्तम्

यदि तु खलु षष्ठमन्त्ये गुरु भवति पादयोगे।
इति निगदिता अभिधृतौ सततमविचालिता सा॥
ससिकिरणलंबहारा।

भरतः

इयं विशालेति च कथ्यते।

तालोऽयं शशिलेखायाः तत्र षष्ठो लघुर्यदि।
षडेव हि द्रुता ज्ञेयाः विशाला त्र्यश्रभङ्गजा॥
नायिकासु प्रयोक्तव्या शृङ्गाररससंभवा।
मालवकैशिके रागे विशाला तु ध्रुवा सदा॥

नान्यः

अव्यवस्थितः—वंशे फूत्कारदोषः

न्यूनाधिकस्वरो यस्तु कथितः सोऽव्यवस्थितः।

कुम्भः

अव्याजम्—दर्शनम्

अव्याजं तदिति प्राहुर्यदृच्छलविलोकनम्।

शारदातनयः

अशोकमल्लः

अनेन कृतस्य ग्रन्थस्य नाम न ज्ञायते। परं त्वेकः परिच्छेदः नृत्याध्याय इति व्यवह्रियमाणभाग एव लब्धः। सोऽप्यतीव विरलः। अतिप्रौढश्च। अशोकमल्लेन अभिनवगुप्तकीर्तिधरसिंगणाः स्मृताः। अयं वीरसिंहस्य सुतः। ग्रन्थपरामर्शात् सङ्गीतरत्नाकरकारादपर इत्यूह्यते।

अशोका—ध्रुवावृत्तम् (एकादशाक्षरम्)

यदि भवति षष्ठमपि चान्त्ये गुरुचरणयोगविनियुक्ते।
स्थितलयकृता तु जगतीयमिह हि खलु तां पुनरशोकाम्॥
मध्यमोत्तमपात्राणामशोकाभिधया ध्रुवा।
युग्मायुग्मोपभङ्गोऽयं कक्कुभेन प्रयुज्यते॥

नान्यः

रविकिरणजालहयसोहो ।

युग्मायुग्मेति मिश्रजात्युपभङ्गः । इयं ध्रुवा विगतशोकेति भरतः । लक्षणश्लोको लेखकदोषदुष्टः ।

**अश्वः**

धैवतमश्वपर्यायशब्दैरुच्यते ।

**अश्वः—स्वरजातिः**

त्रिषष्टिस्सानुतारैस्तु स्वरैरश्वः प्रकीर्तितः ।

औमापतम्

सानुतारैः—संख्यात्रयेणेति यावत् ।

**अश्वक्रान्तम्—स्थानकम्**

अञ्चितं दक्षिणं पादं यदा सूचीसमाह्वयम् ।
समस्थितस्य पादस्य पार्ष्णिभागे विनिक्षिपेत् ॥
यद्वा...स्यमेवात्मपार्श्वे तालेन सम्मिते ।
यत्राश्वक्रान्तमेतत्स्यादेतेनाश्वाधिरोहणात् ॥
पादोऽत्रानियतः प्रोक्तः कैश्चित्संशयितात्मभिः ।
अञ्चितोऽत्राथवा सूचीमतो दक्षिण एव नः ॥
यतोऽश्वारोहणारम्भे मङ्गलस्याभिवृद्धये ।
दक्षिणेनाङ्घ्रिणा पादकटकाक्रमणं परम् ॥
अधिदैवतमेतस्य स्मृता देवी सरस्वती ।
पुष्पस्तवकसङ्ग्राहे विटपस्यावलम्बने ॥
नीचानां विभ्रमे चैतन्नराणां विनियोज्यते ॥

ज्यायनः

एकस्याङ्घ्रेस्समस्यान्यः पार्ष्णिदेशमुपागतः ।
सूचीपादोऽथवा स्वीयपार्श्वे तालान्तरे स्थितः ॥
समो यत्र तदाचष्टाश्वक्रान्तं वीरसिंहजः ।
तदश्वारोहणारम्भे ललिते विभ्रमे तथा ॥
द्रुमशाखावलम्बे च संलापेऽपि निसर्गजे ।
स्खलितेऽपि स्खलद्वासोधारणे गोप्यगोपने ।
पुष्पगुच्छग्रहेऽप्येतत्सरस्वत्यस्य देवता ॥

अशोकः

**अश्वक्रान्तः—तानः**

पञ्चमलोपः षाडवः.

नि ध म ग रि स.

कुम्भः

**अश्वक्रान्ता—प्राकृते मालावृत्तम्**

पञ्च भगणा गुरुः

विरहाङ्कः

**अश्वक्रान्ता—मूर्छना**

षड्जग्रामे षष्ठी मूर्छना ।
(आ) ग म प ध नि स रि
(अव) रि स नि ध प म ग

पण्डितमण्डली

**अश्वप्रतिग्रहः—तानः**

षड्जग्रामे निगहीनौडुवः ।
रि स ध प म

कुम्भः

मध्यमग्रामे रिवर्जितषाडवः ।
ध प म ग स नि

कुम्भः

**अश्वमेधः—तानः**

षाडवः—षड्जलोपः ।
रि नि ध प म ग

कुम्भः

**अश्वललितम्—त्रयोविंशत्यक्षरवृत्तम् ।**

नजभजभजभलगाः ।

भरतः

**अश्विनीहस्तः**

अश्विन्यां ताम्रचूडोऽयमिति प्रकृतिरूपकः ।

शृङ्गारशेखरः

**अश्वोत्प्लवनम्**

अधोमुखं च शिखरं कटीहस्तं सहेदिह ।
पुरः पादं समुत्प्लुत्य पश्चात्पादं नियोजयेत् ।
करावत्र पताकाख्यौ कृत्वाश्वोत्प्लवनं भवेत् ॥

नाट्यदर्पणे

**अश्रु—चित्राभिनयः**

साची च समदृष्टिश्च नेत्रान्ते बाणहस्तकः ।
नेत्रमध्ये मयूरं च पताकेनाश्रुमार्जनम् ॥
अश्रुभावे दर्शयन्ति भरतागमकोविदाः ।

विनायकः

**अश्रु—सात्विकभावः**

आनन्दामर्षाभ्यां धूमाञ्जनजृम्भणाद्भयाच्छोकात् ।
अनिमेषप्रेक्षणतः शीताद्रोगाद्भवेदास्रम् ॥
वाष्पाम्बुप्लुतनेत्रत्वान्नेत्रसम्मार्जनेन च ।
मुहुरश्रुकणापातैरास्रं त्वभिनयेद् बुधः ॥

भरतः

वाष्पोऽज्जृम्भाभयक्रोधशीतैरनिमिषेक्षणैः ।
जायते रोगशोकाभ्यां धूमाञ्जनविजृम्भणैः ॥

शारदातनयः

अश्विन्यभिनयः

ताम्रचूडहस्तेन कर्तव्यः ।

महाराष्ट्रे

अष्टतालिका—देशीतालः

अनुद्रुतद्वयं दश्च लघुः स्यादष्टतालिका ।

दामोदरः

अष्टवन्धविहारकम्—चालकः

सव्यापसव्यपार्श्वाभ्यां पुरोभागेषु तु क्रमात् ।
अष्टासु दिक्षु लुठितौ रचितस्वस्तिकौ करौ ।
यत्रैनं चालकं प्राहुरष्टवन्धविहारकम् ॥

वेमः

अष्टमीचन्द्रकः—शृङ्गाराङ्गम्

आस्पृहयन्ति व्रतमष्टमीचन्द्रकः । स च चैत्रचतुर्थीतोऽष्टम-चतुर्थ्यामुदीयमानः (चन्द्रः कामिनीभिरर्च्यते) ।

भोजः

अष्टवज्रम्—अङ्गुलिभूषणम्

अष्टकोणनिविष्टैश्च पविभिः परिशोभितम् ।
मध्ये रत्नसमायुक्तमष्टवज्रमुदीरितम् ।

सोमेश्वरः

अष्टाकपालः—तानः

मध्यमग्रामे गनिहीनौडुवः.
प ध म रि स.

कुम्भः

अष्टादशजातिकम्—त्रिपुष्करे

शुद्धा दुष्करकरणा विषमा विष्कम्भितैकरूपा च ।
पार्ष्णिसमा पर्यस्ता समविषमकृता चावकीर्णा च ॥
पर्यवसानोच्चितिका संयुक्ता संप्लुता महारंभा ।
विगतक्रमा विगलिता वञ्चितिका एकवाद्या च ॥

भरतः

अष्टिच्छन्दोवृत्तानि

पञ्चषष्टिसहस्राणि सहस्रार्धं तु संख्यया ।
षड्विंशच्चैव वृत्तानि तथाष्ट्यां गदितानि तु ॥ ६५५२६

भरतः

असंपूर्णा—श्रुतिः

मध्यमस्य तृतीया श्रुतिः ।

सुधाकलशः

असंबाधा—चतुर्दशाक्षरवृत्तम्

मतनसगगाः ।

भरतः

असंभ्रान्तम्—दर्शनम्

गृह्यते येन सूक्ष्मार्थस्तदसंभ्रान्तमुच्यते ।

शारदातनयः

असत्प्रलापः—वीथ्यङ्गम्

मूर्खजनसन्निकर्षे हितमपि यत्र प्रभाषते विद्वान् ।
न च गृह्यतेऽस्य वचनं विज्ञेयोऽसत्प्रलापोऽसौ ॥

भरतः

मूर्खेति । यदुत्तरं मूर्खं प्रति वस्तुतो हितमपि शब्दच्छलाद्यथा-प्रियं तादृशं च मूर्खैः प्रियांशेन गृह्यते न तु हितांशेन । तथा-भूतभङ्गीद्वयाश्रयणं सिद्धत्वात्करोति । एवं हि तात्कालिकः कोपोऽपि रक्षितो भवति । व्यसनिना राजपुत्रेण किं सुखमिति पृष्टे तेनोत्तरं दीयते । सर्वदा योऽक्षविजयी इत्यादि । असतः असाधुभूतस्य वस्तुनः प्रलपनमस्मिन्निति असत्प्रलापः ।

अभिनवः

यथा—तत्वाविवेचकं प्रति रामाभ्युदये द्वितीयेऽङ्के मारीचवचनं परमार्थतो रावणेन नावगतम् । मूर्खं प्रति भीमटविरचिते मनो-रमावत्सराजे रुमण्वान् यौगन्धरायणप्रमुखान्कौशाम्बी मम हस्त इत्याह । इदं परमार्थतः पाञ्चालोच्छेदपरं यौगन्धरायणेनावगतम् । वासवदत्तासंभ्रमकाभ्यां मौर्ख्यान्नावगतम् । अन्ये तु बालो-त्कण्ठितादीनामसंबद्धकथाप्रायमसत्प्रलापमिच्छन्ति । यथा—एकं त्रीणि नवाष्टेति कुमारस्वामिस्तुतिः ।

रामचन्द्रः

असावरी—मेलरागः

गौरीमेलसमुत्पन्नारोहणे गनिवर्जिता ।
मध्यमोद्ग्राहधांशाद्यासावरी न्यासपञ्चमा ॥
अपराह्णगेया ।

अहोबिलः

असावेरितोडि—मेलरागः

(आ) स रि ० ० ० म ० प ध ० नि स.
(अव) सं ० नि ध ० पं ० म ० ० ग रि स.

मेललक्षणे

असावेरी—मेलरागः (रत्नाङ्गीमेलजन्यः)

(आ) स रि म प ध — स.
(अव) स नि ध प म ग रि — स.

असावेरीरागध्यानम्

कुचाभोगाहारां गलितवसनां सद्विलसनां
भुजादेशप्राञ्चत्कचभरधरां कन्दुकधराम्।
नमद्गात्रामेव प्रकटितमुखीं गौरसुनखी-
मसावेरीं ध्याये मम मनसि रक्ताम्बरयुताम्॥

रागसागरः

असिधाराधरा—कला

आद्यन्ते विधृतां च यत्र हि नटी युग्मेन धारामसौ
भीमामेकपदाम्बुजेन हि समाश्रित्याथ चान्याङ्घ्रिणा।
एकेनापि करेण चक्रयुगलं त्वावर्त्य तेनापरे-
णोच्चैर्गोलकखेलनं प्रकुरुते प्रोक्तासिधाराधरा॥

नागमल्लः

असुरशीला—स्त्री

अधर्मशाठ्याभिरता स्थिरक्रोधातिनिष्ठुरा।
मद्यमांसप्रिया नित्यं कोपना चातिमानिनी॥
चपला चातिलुब्धा च परुषा कलहप्रिया।
ईर्ष्याशीलाऽथ निस्नेहा शीलमासुरमाश्रिता॥

भरतः

असूया—व्यभिचारिभावः

नानापराधद्वेषपरैश्वर्यसौभाग्यमेधाविद्यालीलादिभिः विभावैरुत्पद्यते। तस्याश्च परिषदि दोषप्रख्यापनगुणोपघातेर्ष्याचक्षुःप्रदानाधोमुखभ्रुकुटीक्रियावज्ञानकुत्सनादिभिरभिनयैः प्रयोक्तव्या।

भरतः

परोत्कर्षाक्षमासूया गर्वदौर्जन्यमन्युजा।

मन्युजा यथा—

अज्ञानेन पराङ्मुखीं परिभवादाश्लिष्य मां दुःखितां
किं लब्धं शठ दुर्नयेन नयता सौभाग्यमेतां दशाम्।
पश्यैतद्दयितारतिव्यतिकरोन्मृष्टाङ्गरागारुणं
वक्षस्ते मलतैलपङ्कशबलैर्वेणीपदैरङ्कितम्॥

मल्लराजः

असूया

अन्यत्वादेव यत्संपदसहत्वं सुतेष्वपि।
सुहृत्स्वपि च तत्प्राहुरसूयां निन्दितां बुधाः॥

भावविवेकः

असूया—चित्ताभिनयः

परसौभाग्यसम्पत्तिविद्याशौर्यादिहेतुभिः।
गुणेषु दोषारोपस्स्यादसूया तत्र विक्रिया॥

सूचीहस्तः पुरो भागे परशब्दनिरूपणे।
अधोमुखौ पुरोभागे पताकौ द्वौ स्थितौ यदि॥
सम्पत्यर्थे दर्शयन्ति भरतागमवेदिनः।
श्मश्रुस्थाने पताकस्य चलनाच्चौर्यभावने।
हृदिस्थाने तु मुकुलो गुणभावनिरूपणे॥
पार्श्वभागे पताकं तु विसृजेच्चापि निन्दने।

विनायकः

अस्तम्—शृङ्गाराङ्गम्

सवितुरस्ताचलोपगमनमस्तम्।

भोजः

अहङ्कारः—नाट्यालङ्कारः

कार्ये क्षमत्वम्। यथा—कीचकाङ्के—"बाढं व्याहृता द्रौपदी प्रियेति" इति कीचकवाक्यम्।

सागरः

अहङ्कृतिः

अहं तु शक्तः कार्येस्मिन्नामी शक्तास्तु जन्तवः।
इत्थमस्पृष्टकार्यात्मगुणदोषस्त्वहंकृतिः॥

भावविवेकः

अहोबिलः

सङ्गीतपारिजातकारः। १६०० काले स्यात्।

## आ

आ—आवापः

आवापादिध्रुवादीनामष्टानामादिवर्णतः।
ग्रहणं क्रियते चात्र बुद्ध्या मनसि धार्यताम्॥

संगीतसागरः

आकम्पितम्—शिरः

ऊर्ध्वाधोद्भिः प्रयुक्तं यन्मन्दमाकम्पितं तु तत्।
प्रश्ने ग्रन्थार्थनिर्देशे स्वाभिप्रायस्य वर्णने।
उपदेशे तथाह्वाने संज्ञायां च प्रयुज्यते॥

विप्रदासः

आकम्पितं तदेव स्यादुद्भिः प्रयुक्तं शनैर्यदि।
एतत्पौरस्त्यनिर्देशे प्रश्ने संज्ञोपदेशयोः।
आवाहने स्वचित्तस्थकथने च प्रयुज्यते॥

शार्ङ्गः

आकर्षः

किन्नर्यां वामहस्तव्यपारः। तत्र द्रष्टव्यम्।

आकारः—गीताङ्गम्

आकाररूपो यथा—पशुपतिपाणिकायां षोडशभिर्गणैर्भवति। यथा—ओं ○○○○○○ पशु ○ पत ○ ये ○○○ श्रां ○○○○○ ○ शा ○○○○○○○○○○○ ओं ओं ○○○○○○○ भूत ○ पत ○ ये ○○ आ ○○○○○○○ एवमन्येऽपि सर्वत्रलोपे अकार आकार ऊकाराः ओं च। तथा द्रुतविलंबितमध्यमन्द्रत्वकम्पित-बिन्दुरेणुप्रभृतिप्रयोगा बहवः प्रौढगायनकृता भवन्ति।

नान्यः

आकारः—शृङ्गारचेष्टा

आकृत्या सूच्यते यत्तु स आकारो मुनेर्मतः।

कुम्भः

आकाशभ्रमरी

उत्प्लुत्य पादौ विरलौ कृत्वा पादौ प्रसार्य च।
भ्रामयेत्सकलं गात्रमाकाशभ्रमरी भवेत्॥

नाट्यदर्पणे

आकाशवीणा

रूपमाकाशवीणायाः परस्तादभिधीयते।
उद्दण्डिकास्तम्बयुग्मं दृढमेव निवेशयेत्॥
स्नायुतन्त्र्यः प्रभागेऽस्यां बन्धनीयाः प्रयत्नतः।
तन्त्रीचरमनागाग्रसंबद्धां वेणुनिर्मिताम्॥
वितस्तिमात्रामङ्गुष्ठप्रमाणां तु शलाकिकाम्।
भ्रमन्निवेशके तुम्बे स्थापयित्वा महत्तरे॥
तन्त्रीं निपीडयेद्गाढं पादाङ्गुष्ठस्य संधिना।
हस्तेन दक्षिणेनैव गृहीत्वान्येन तुम्बकम्॥
अस्याः पिनाकिवीणायां स भवेद्वादनक्रमः।
पौष्कलाख्यस्य...भेदास्संत्यपरे पुनः।
सरूपमेषा द्रष्टव्या नैतस्मिन्निगमे बुधैः॥

हरिपालः

आकाशिकी—कला

या कोदण्डगुणेऽधिरोप्य चरणौ चावल्य पश्चान्मुखं
कृत्वा पार्ष्णियुगं कराम्बुजयुगेनोल्लास्य गृह्णाति च।
धारायामथ खड्गयोरपि गतिं येत्थं विधत्ते नटी
यत्र क्ष्माशिवनागमल्लपतिना सोक्ता कलाकाशिकी॥

नागमल्लः

आकाशिक्यश्चार्यः

एताः षोडश।

भूस्थेनैकेन पादेन चान्येनाकाशगामिना।
उत्प्लुत्या च क्रियन्ते या आकाशिक्य इमाः स्मृताः॥

आकीर्णः— वाद्यप्रकारः

अवकीर्णस्य पाठान्तरम्।

आकुञ्चितम्—देशीस्थानम्

सर्वमाकुञ्चितं गात्रमाविद्धे यत्र जानुनी।
तदाकुञ्चितमाख्यातं शीतार्ताभिनये तु तत्॥

वेमः

आकुञ्चितम्—शयनकर्म

सर्वैराकुञ्चितैरङ्गैः शय्याविद्धे तु जानुनी।
स्थानमाकुञ्चितं नाम शीतार्तानां प्रयोजयेत्॥

भरतः

आकुञ्चितम्—स्थानकम्

सर्वमाकुञ्चितं गात्रमाविद्धे यत्र जानुनी।
तदाकुञ्चितमाख्यातं शीतार्ताभिनये तु तत्॥

वेमः

आकुञ्चितः—मणिबन्धः

अन्तर्निम्नस्समाख्यातो धीरैराकुञ्चिताभिधः।
प्रायः प्रयुज्यते धीरैरेष वस्त्वपसारणे॥

अशोक

अन्तरा निम्नतां नीतो बुधैराकुञ्चितस्स्मृतः।
मणिबन्धः प्रयोज्योऽयं जनसङ्घापसारणे॥

वेमः

आकुञ्चितो बहिर्वक्रः सोऽपसारे नियुज्यते।

सोमेश्वरः

आकृतिछन्दोवृत्तानि

चत्वारिंशत्तथैकं च सहस्राणां शतानि तु।
तथा चेह सहस्राणि नवतिश्चतुरुत्तरा।
शतत्रयं समाख्यातं ह्याकृत्यां चतुरुत्तरम्॥ ४१९४३०४

भरतः

आकेकरा—दृष्टिः

आकुञ्चितपुटप्रान्ता सङ्गतार्धनिमेषिणी।
मुहुर्व्यावृत्ततारा च लोके साकेकरा स्मृता॥

सोमेश्वरः

ईषद्वक्रपुटापाङ्गा तिर्यगर्धनिमेषिणी।
यस्याः कनीनिके हृदये विपरीतविवर्तिनी॥
सा दृष्टिराकेकरा स्याद्विच्छेदप्रेक्षिते भवेत्।
सापराधे प्रियास्नेहविच्छेदेन यदीक्षणम्।
तद्विच्छेदप्रेक्षितं स्याद्दूरालोकेऽप्यसौ मता॥

विप्रदासः

आकुञ्चितपुटापाङ्गसङ्गतार्थनिमेषिणी ।
मुहुर्व्यावृत्ततारा च दृष्टिराकेकरा स्मृता ॥

भरतः

आक्रन्दः—नाट्यालङ्कारः

शोकसमुत्थं मुक्तधैर्यं आम्रेडितमयमवनीपातपूर्वकमाक्रन्दनम् । यथा—शक्त्यङ्के वत्से तिष्ठेति रामवाक्यम् ।

सागरः

आक्रन्दः—लक्षणम्

आत्मभावमुपन्यस्य परसादृश्ययुक्तिभिः ।
तीव्रार्थभाषणं यत्स्यादाक्रन्दः स तु कीर्तितः ॥

भरतः

तीव्रः साक्षादवाच्यो योऽर्थः, तस्य परं प्रति सादृश्ययोजनप्रकारैः आत्माभिप्रायं प्रमुखे दत्वा तत्समंततः भाषणं स्फुटकथनं तन्निजभावाविष्करणप्रधानत्वादाक्रन्दो नाम लक्षणम् । यथा—ममैव किं पान्थ त्वरसे इत्यत्रोत्तरेणार्धेन ग्रामीणो रम्यतमो भोजनशयनादिसंभोग इति वक्त्या मोहप्रायोऽवाच्य आत्माभिप्रायः । तदरोचकत्वं तदुभयं प्रमुखे निधाय निशाकरवृत्तान्तसादृश्येन तीव्रः स्वात्मानुराग आविष्कृतः । अन्ये पठन्ति—

रूपकैरुपमाभिर्वा तुल्यार्थाभिः प्रयोजितैः ।
अप्रत्यक्षार्थसंस्पर्शः तुल्यतर्कः प्रकीर्तितः ॥

प्रथमार्धेन परसादृश्यमुक्तम् । अप्रत्यक्षस्यात्यभावस्य संस्पर्शनाद् ज्ञापनेत्यर्थः ।

अभिनवगुप्तः

आक्रान्ता—श्रुतिः

षड्जस्य प्रथमा श्रुतिः ।

अनूपः

आक्रीडिता—भङ्गतालः

लद्वयं गद्वयं ॥ ऽ ऽ

नान्यः, अभिनवश्च

आक्षिप्तम्—करणम्

आक्षिप्तायां यदा चार्यां पादाक्षेपो धृतं भवेत् ।
तथैव चतुरः पाणिराक्षेप्यः खटकोऽथवा ॥
यत्र पार्श्वं नतं किञ्चित्तदाक्षिप्तं प्रचक्षते ।
विहितो विनियोगोऽस्य विदूषकपरिक्रमे ॥

ज्यायनः

आक्षिप्तः—वर्णालङ्कारः (अवरोही)

नी प पा ग गा स.

पण्डितमण्डली

आक्षिप्तः—वर्णालङ्कारः

एकान्तरं स्वरयुगं तादृशं युगलं परम् ।
पूर्वान्तिमाद्यमारोहेत्क्रमादाक्षिप्तसंज्ञके ॥

यथा—स ग ग प प नि.

पण्डितमण्डली

आक्षिप्तकः—अङ्गहारः

नूपुरविक्षिप्तालाताक्षिप्तकोरोमण्डलनितम्बकरिहस्तकटीछिन्नानामष्टानां क्रमात्प्रयोगे आक्षिप्तकाङ्गहारः ।

शार्ङ्गः

आक्षिप्तकः—वर्णालङ्कारः (सञ्चारी)

आक्षेप इत्यपि वदन्ति ।

त्रिस्वरा स्यात्कला यत्र पूर्वं पूर्वं परित्यजेत् ।
एकैकमूर्ध्व.......................

मोक्षदेवः

आक्षिप्तरेचितम्—करणम्

चतुरस्राख्ययोरेको व्यावृत्तकरणाश्रितः ।
ऊर्ध्वे पार्श्वद्वये क्षिप्त्वा हंसपक्षो धृतभ्रमः ॥
अधस्तलकरो नेयो वक्षोदेशमथापरः ।
रेचितो वाहतः क्षेप्यस्तद्वशाच्चरणोऽञ्चितः ॥
एकोऽपरस्तु सूच्याख्यो यस्मिन्नाक्षिप्तरेचितम् ।
त्यागोपदानयोरर्थे तद्ज्ञेयं बहुशः कृते ॥

ज्यायनः

आक्षिप्तरेचितः—अङ्गहारः

स्वस्तिकरेचितपृष्ठस्वस्तिकदिक्स्वस्तिककटिछिन्नघूर्णितभ्रमरवृश्चिकरेचितपार्श्वनिकुट्टकोरोमण्डलसन्नतसिंहाकर्षितनागापसर्पितवक्षःस्वस्तिकदण्डपक्षललाटतिलकतलविलासितनिशुम्भितविद्युद्भ्रान्तगजक्रीडितनितम्बविष्णुक्रान्तोरूद्वृत्ताक्षिप्तकोरोमण्डलनितम्बकरिहस्तकटिछिन्नाक्षिप्तरेचितानां करणानां प्रयोगे आक्षिप्तरेचितः । नितम्बोरुमण्डलयोरावृत्तिं केचिद्वदन्ति । केचित् वक्षःस्वस्तिककटिछिन्ने अत्र नाङ्गीकुर्वन्ति । आवृत्तिपक्षे सप्तविंशतिकरणानि । अनावृत्तौ, द्वयोः करणयोरप्रवेशे वा पञ्चविंशतिकरणानि ।

आक्षिप्ता—चारी

तालत्रयप्रमाणेन पादमुद्धृत्य कुञ्चितम् ।
जङ्घास्वस्तिकतां नीत्वा पार्ष्णिना वामतो भुवि ।
पातयेद्यदि तां चारीमाक्षिप्तां संप्रचक्षते ॥

वेमः

**आक्षिप्तिः**—गर्भसन्ध्यङ्गम्

गर्भस्योद्भेदनं यत्साक्षिप्तिरित्यभिधीयते ।

भरतः

हृदयान्तस्थितस्य पुनः प्रतिष्ठापितस्यापि यतः कुतश्चिन्निमित्ता-दुद्भेदनं अनपह्नवनीया या स्फुटतापत्तिः सा आक्षिप्तिः । अभिप्रायस्य हि तत्राक्षेपो बहिः कर्षणम् । यथा—सागरिके शीतांशुर्मुखमित्यादि राज्ञोक्तं रत्नावल्याम् ।

अभिनवः

**आक्षिप्तिका**—ध्रुवा

प्रवेशो यत्र पात्राणां सूच्यते नाटके यदि ।
उत्तमाधममध्यानां सा ज्ञेयाक्षिप्तिका ध्रुवा ॥
उत्तमास्तत्र राजानो व्याक्षेप्याश्चारणादिभिः ।
मध्यमा मध्यमैर्वान्या अधमाश्चाधमैरपि ॥

नान्यः

क्रममुल्लङ्घ्य विधिज्ञैः क्रियते या द्रुतलयेन नाट्यविधौ ।
आक्षेपिकी ध्रुवा सा द्रुता स्थिता वापि विज्ञेया ॥

भरतः

स्थितेति विलम्बितलया ।

**आक्षिप्तिका**—रागवर्धनाङ्गम्

रागवर्धनशब्दे द्रष्टव्यम् ।

**आक्षिप्तिका**—भङ्गतालः

अष्टौ गुरवः षोडश लघवः द्वाविंशदद्रुताः ।

ऽऽऽऽऽऽऽऽ ।।।।।।।।।।।।।।।। ००००००००००००००० ०००००००

नान्यः

**आक्षेपः**—गर्भसन्ध्यङ्गम्

आक्षेपो बीजप्रकाशनम् । आप्त्याशावस्थानिबद्धस्य बीजस्य मुखकार्योपायस्य प्रकाशनं प्रकर्षेणाविर्भावनं आक्षेपः । यथा—वेण्यां—दत्त्वा द्रोणेनेत्यादि । अथवा—बीजस्य हृदयभूमिनिगूढत्वादभिप्रायस्य बहिः कर्षणमाक्षेपः । केचिदेतदङ्गं न मन्यन्ते ।

रामचन्द्रः

**आक्षेपः**—वर्णालङ्कारः (सञ्चारी)

आद्यस्वराणां त्रितयं कलाद्या स्वरेषु सप्तस्वपि च क्रमेण ।
द्वितीयमारभ्य भवेत्तृतीया तृतीयमारभ्य ततस्तृतीया ॥
चतुर्थमारभ्य ततश्चतुर्थी स्यात्पञ्चमाद्या किल पञ्चमी सा ।
षष्ठं समारभ्य तदादिमान्ता षष्ठीकलेयं गदिता मुनीन्द्रैः ।
ताभिस्त्वरा यत्र कलाप्पडेवाक्षेपाभिधानं तमुदीरयन्ति ॥
स रि ग रि ग म ग म प म प ध प ध नि ध नि ध नि स.

रघुनाथः

**आक्षेपकम्**—नृत्तहस्तप्राणः

एतौ वक्षस्स्थलगतौ धीरैराक्षेपकौ मतौ ।
एतौ रेचितहस्तौ ।

शृङ्गारः

**आक्षेपिकी**—ध्रुवा

प्रस्तुतरसोल्लङ्घनेन रसान्तरोद्भावनमाक्षेपः । तत्प्रयोजना आक्षेपिकी । यथा—उदात्तराघवे प्रस्तुतशृङ्गारोल्लङ्घनेन अरेरे तापस इत्यादि रावणस्य नेपथ्यवाक्याकर्णनेन वीररसाक्षेपः ।

गुणचन्द्रः

प्रक्रान्तं लीयमुल्लङ्घ्य गीयते यद्द्रुते लये ।
प्रस्तुतार्थसमाक्षेपाद्ज्ञेया साक्षेपिकी ध्रुवा ॥

वेमः

**आख्यानम्**—नाट्यालङ्कारः

आख्यानमितिहासः तस्य कार्यार्थं कीर्तनम् । यथा—कीचकभीमाङ्के धन्या सा सीतेत्यादि द्रौपदीवाक्यम् ।

सागरः

**आख्यानम्**—लक्षणम्

पृष्टैरपृष्टैरथवा निर्णयः क्रियते तु यः ।
आख्यानमिति तद्ज्ञेयं लक्षणं नाटकाश्रयम् ॥

भरतः

प्रश्नपूर्वका यत्र बहवो निर्णीयन्ते । यथा-बाले नाथ विमुञ्चेत्यादावुक्तिप्रत्युक्तौ प्रश्नसदृशैर्वा शक्याशक्यवस्त्वभिधानैर्यत्र निर्णयः । यथा—रामोऽसौ भुवनेषु इत्यादौ यदि प्रसिद्धः कथं मया न ज्ञायते इत्याशङ्क्याख्यातम् । अस्मद्भाग्यविपर्ययाद्यदि परं देवो न जानाति किं इत्यादिना । नाटकाश्रयमित्यनेन भूयो लक्ष्यमाणस्येत्याह । अन्ये पठन्ति

वाक्यैः सातिशयैर्युक्ता वाक्यार्थस्य प्रसाधकैः ।
लोकप्रसिद्धैर्बहुभिः प्रसिद्धिरिति कीर्तिता ॥

अभिनवः

**आख्यानकम्**—श्रव्यकाव्यम्

आख्यानकसंज्ञान्तर्लभते यद्यभिनयन् पठन् गायन् ।
ग्रन्थिक एकः कथयति गोविन्दवदवहिते सदसि ॥

भोजः

**आख्यायिका**—श्रव्यकाव्यम्

कन्यापहारसङ्गरसमागमाभ्युदयभूषितं यस्याम् ।
नायकचरितं ब्रूते नायक एवास्य वानुचरः ॥
वक्त्रापरवक्त्रवती सोच्छ्वासा संस्कृतेन गद्येन ।
साख्यायिकेति कथिता माधविकाहर्षचरितादि ॥

भोजः

माधविकेति हरिचन्द्रस्य गद्यकाव्यमित्यूह्यते ।

**आगतोपचारः**—संगीते शृङ्गाराङ्गम्

प्राप्तस्याभ्युत्थानादिप्रतिपत्तिरागतोपचारः ।

भोजः

**आगमप्रिया**—मेलरागः (शुभपन्तुवरालीमेलजन्यः)

(आ) स रि ग म प म ध नि स.

(अव) स नि प ध नि प म ग रि ग स.

**आङ्किकः**

मुखद्वये दक्षिणे वामे च सयवोङ्को लक्षणमस्तीति आङ्किकः।

अभिनव.

**अङ्किकभेदाः**

सूचको भावजश्चेति द्वन्द्वो लाक्षणिको मतः ।
एवमाङ्किकभेदास्तु प्रोक्ताः पूर्वं चतुर्विधाः ॥

शृङ्गारः

**आङ्गिकाभिनयः**

चारीभिर्बहुरूपाभिर्हस्तैश्च शिरसां क्रमैः ।
मण्डनैरङ्गहारैश्च करणैर्भ्रमरीक्रमैः ॥
स्थानकैस्ताण्डवैश्चापि गतिभिश्शब्दनात्मकैः ।
एतेषां नाट्यरचनैराङ्गिकाभिनयस्स्मृतः ॥

शृङ्गारः

**आचलितम्**—मालावृत्तम्

विषमं—षण्मात्रागण एकः भ ग ग.
समं —अष्टमात्रागण एकः भ ग ग.

विरहाङ्कः

**आचारा**—श्रुतिः

गान्धारस्य प्रथमा श्रुतिः ।

अनूपः

**आच्छुरितः**—अङ्गहारः

नूपुरभ्रमरव्यंसितालातकनितम्बसूचीकरिहस्तकटीछिन्नानाम-ष्टानां करणानां प्रयोगे आच्छुरितः ।

शार्ङ्गः

**आच्छुरितकम्**—अङ्गुलीलेखनम्

अङ्गुलीपञ्चकेनाशु सशब्दमतुलेखनम् ।
कुचादौ कामसूत्रज्ञास्तदाच्छुरितकं विदुः ॥

अनूपसिंहः

**आडिकामोदा**—रागः

वङ्गाली किल भिन्नषड्जजनिता भाषा तदङ्गं बुधै-
र्गुर्वादिशसमस्वरा निगदिता धांशावसानग्रहा ।
नित्यं मध्यममन्द्रभूषिततनुर्गान्धारतारास्पदा
कामोदा भुवि भूपकर्णसुखकर्याडीति चिह्नाङ्किता ॥

मोक्षदेवः

**अडीकामोदिका**—रागः

भिन्नषड्जाच्च वाङ्गाली आडीकामोदिका ततः ।
समन्द्रा तारगान्धारा ग्रहांशन्यासधैवता ।
समस्वरा च गीतज्ञैर्गुर्वाज्ञायां प्रगीयते ॥

हम्मीरः

**आतङ्कः**—शिल्पकाङ्गम्

क्रूराक्रमकृतत्रासः सुकुमारस्य वस्तुनः ।
यस्स आतङ्क इत्युक्तो राहोश्चन्द्रकलादिवत् ॥

शारदातनयः

राहोरिति । मालतीमाधवे ।

**आतोद्यम्**

मृदङ्गो मुरजश्चैव तथा पणवदर्दरौ ।
पटहश्चेति तद्विद्यैः पञ्चातोद्यकमुच्यते ॥

नान्यः

**आतोद्यम्**—वाद्यम्

तोद्यते, आतुद्यते, हन्यते, वाद्यते, इति चतुर्णां वपुः । केवलमस्य तोदननिष्पन्नैः स्वरैस्ततसुषिरयोरुपकारित्वम्। वर्णानु-साम्ययोगेन तु अवनद्धघनयोः । शरीरं तु संवदनशक्तिक्रोडीकृतं समुल्लसितशक्तिकर्तृकमिति। तत्तत्स्थानाभिघातजातस्वरद्वारलब्धो-पयोगमपि तदा तोद्यमुच्यते । तदा तुदति अभिहन्ति वादयति चेत्यकृतककर्मशक्तिमुद्रितस्वातन्त्र्यमवभाति ।

अभिनवः

**आत्मपञ्चमः**—मेलरागः (दिवामणिमेलजन्यः)

(आ) स रि ग म ध नि स.

(अव) स नि ध म ग स.

**आदानम्**—विमर्शसन्ध्यङ्गम्

बीजकार्योपगमनमादानमिति संज्ञितम् ।

भरतः

बीजफलस्य समीपताभवनमित्यर्थः । यथा—व्यक्तं लमोपी-त्यादि दुष्यन्तवचनम् ।

अभिनवः

फलसामीप्यमादानम्। मुख्यफलस्य दर्शनमादानम्। यथा—नागानन्दे नागानामित्यादि गरुडवाक्यम्। नागरक्षालक्षणस्य मुख्यफलस्य सूचकम्।

रामचन्द्रः

शक्त्या शक्तिमतः प्रोक्त आदानं कार्यसङ्ग्रहः।

सर्वेश्वरः

आदिकामोदा—भाषाङ्गरागः

आदिकामोदिका पूर्णा वङ्गाल्यङ्गं त्रिधैवता।
मन्द्रमातारगा गेया हेमन्तप्रहरेऽग्रिमे ॥

भट्टमाथवः

आदिकामोदा—भाषाङ्गरागः वीणायां वादनक्रमः

धैवतं तु ग्रहं कृत्वा आन्दोल्य तदधस्तनम्।
तस्मादातारगान्धारमारुह्याप्यवरुह्य च ॥
स्पृष्ट्वा च मध्यमं मन्द्रं स्थायिनि न्यस्यते यदा।
आदिकामोदिका नाम रागः सञ्जायते तदा ॥
एतस्या मध्यमस्थायी लक्ष्यमार्गे प्रकीर्तितः।

वेमः

आदिकामोदा—रागः

अनन्तरं च वङ्गालीभिन्नपड्जसमुद्भवा।
तदङ्गमादिकामोदा ग्रहांशन्यासधैवता ॥
समस्वरा च संपूर्णा कथ्यते यां मनीषिभिः।
भाषायामिन्नपड्जस्य माङ्गाली परिकीर्तिता।
तदङ्गमादिकामोदा भवेदानन्दकारिणी ॥
धैवतेन स्वरेणैषा ग्रहांशन्यासभूषिता।
समस्वरसमायुक्ता संपूर्णा सप्तभिस्स्वरैः ॥
गुर्वाज्ञादिकृतावस्था विनियोगः प्रदर्शितः ॥

जगदेकः

आदिकामोदा—रागः (वंशे वादनक्रमः)

धैवतं ग्रहमासाद्य तस्माच्च चतुरः स्वरान्।
तृतीयायान्समारुह्य ततः पञ्चस्वरं पुनः ॥
कम्पयित्वा विलम्ब्यापि वादयित्वा चतुर्थकम्।
आसाद्य पञ्चमं तस्मान्न्यान्त्यमवरुह्य च ॥
ततस्थायिस्वरार्धं च स्थायिनः प्राक्तनं तथा।
आसाद्य स्थायिनं स्पृष्ट्वा द्वितीयं कम्पयेत्स्वरम्।
तृतीयं स्फुरितं कृत्वा स्थायिनि न्यस्यते यदा ॥
आदिकामोदिकायाः स्यात्त्वस्थानं प्रथमं तदा।
वंशेऽस्या द्वितीयस्तु स्थायित्वेनोपलक्षितः ॥

वेमः

आदिकूर्मावतारः—चालकः

हस्तौ प्रथमता(त आ)वर्त्यमूर्ध्नस्सव्यापसव्ययोः।
कृत्वा च मण्डलांवृत्तिमूर्ध्वाधः पार्श्वयोर्द्वयोः ॥
तदनु स्वस्तिकीकृत्य वर्तनास्वस्तिकं तथा।
कृत्वाऽथ पार्श्वद्वितये मण्डलाकारघूर्णनम् ॥
विधाय तद्वत्पुरतो मण्डलभ्रमणं वहु।
क्रियते चेदादिकूर्मावतारसख्यस्तु चालकः ॥

वेमः

आदिघट्टः—देशीतालः

लपौ पश्चादिघट्टके।
७ मात्राः

तालप्रस्तारः

आदितालः देशीतालः

आदिताले लघुस्मृतम् प ध नि स रि स.

जगदेकः

लघुना त्वादितालः स्यात्

श्रीकण्ठः

लघ्वेवमादितालोऽसौ लोकैरास इति स्मृतः

वेमः

आदित्यवंशः

मानमादित्यवंशस्य स्याच्चतुस्त्रिंशताङ्गुलैः।
मुखरन्ध्रस्य ताराख्यरन्ध्रस्य च विदां वरैः ॥
मध्यस्थानमपि ज्ञेयं द्विगुणैः षड्भिरङ्गुलैः।
विशिष्टमङ्गुलं ज्ञेयं पादोनैः पञ्चभिर्यवैः ॥
प्रत्येकमत्र रन्ध्राणामष्टानां मानकल्पनम्।
लिक्षात्रयं तथा षट्कं यूकानां यवयुग्मकम् ॥
द्वादशैवाङ्गुलान्येवं मानमन्तरसप्तके ॥

कुम्भः

आदित्यानामयनम्—तानः

मध्यमग्रामे षड्जहीनषाडवः।
नि ध प म ग रि.

कुम्भः

आतिदेशपम्—मेलरागः (संलवरालीमेलजन्यः)

(आ) स रि ग म प नि स
(अव) स नि ध प म ग रि स.

आदिपञ्चमः—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स रि प ध नि स.
(अव) स नि ध नि प म ग रि स.

**आदिभैरवी**—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स ग रि ग म प ध स.
(अव) स ध प म प गा रि स.

**आदिमट्टः**—देशीतालः
आदिमट्टाख्यताले तु लद्वयं द्वौ विरामकौ।
नन्दी

**आधिकारिकं**—इतिवृत्तं
यत्कार्यं हि फलप्राप्त्या समर्थ्यं परिकल्प्यते।
तदाधिकारिकं ज्ञेयमन्यत्प्रासङ्गिकं विदुः॥
भरतः

**आधिकारिकं वस्तु**
यत्कार्यं हि फलप्राप्तौ समर्थं परिकल्प्यते।
तदाधिकारिकं ज्ञेयमन्यत्स्यादानुषङ्गिकम्॥
कारणात्फलयोगस्य वृत्तं स्यादाधिकारिकम्।
भोजः

**आधूतम्**—शिरः
आधूतं तु सकृत्तिर्यगूर्ध्वं नीतं शिरो मतम्।
गर्वेण स्वाङ्गवीक्षायां पार्श्वस्थोर्ध्वनिरीक्षणे॥
शक्तोऽस्मीत्यभिमाने च प्रयोगस्तस्य कीर्तितः।
शार्ङ्गः

तिर्यगूर्ध्वं सकृन्नीतमाधूतं कथ्यते शिरः।
पार्श्वस्थस्योर्ध्ववीक्षायां शक्तोऽस्मीति निरूपणे॥
गर्वेण भुजवीक्षायामङ्गीकारेऽपि युज्यते।
विप्रदासः

इहैवोद्वाहितं ज्ञेयमन्तर्भूतं विपश्चिता।
कुम्भः

**आनन्दः**—देशीतालः
विज्ञेयौ लपौ लौ गौ लगौ च गुरुरन्तिमः।
। ऽ ॥ ऽऽ । ऽऽ.
वेमः

मगणश्च गुरुर्लश्च द्रुतश्चानन्दतालके।
९॥ मात्राः।
तालप्रस्तारः

**आनन्दः**—निर्वहणसन्ध्यङ्गम्
समागमस्तथाऽर्थानामानन्दः परिकीर्तितः॥
भरतः

अर्चितस्य तथेति प्रकारशतैः प्रार्थितस्य सम्यगपुनर्वियोगवत् यदागमनं तदानन्दहेतुत्वादानन्दः। यथा—रत्नावल्यां को देव्योः प्रसाद इत्यादिराजवचनम्।
अभिनवः

**आनन्दभैरवरागध्यानम्**
केकिपिञ्छधरं नागस्कन्धहस्तं जटायुतं।
आनन्दभैरवं ध्याये विल्वमूलनिवासिनम्॥
रागसागरः

**आनन्दभैरवी**—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स ग रि ग म प स.
(अव) स नि ध प म ग रि स.

**आनन्दभैरवी**—मेलरागः
भैरवीस्वरसंभूता निप[illegible]ग्रहसंयुता।
गान्धारे नैन्य(?) युक्ताया ज्ञेया सानन्दभैरवी।
सर्वदागेया॥
अहोबिलः

आनन्दभैरवीरागे त्यजेदारोहणे पुनः।
ऋषभं धैवतं चापि तस्मादौडुवपूर्णकः॥
भैरवीमेकजो रागः
परमेश्वरः

**आनन्दलीला**—मेलरागः (गाङ्गेयभूषणीमेलजन्यः)
(आ) स रि ग म प नि स.
(अव) स नि ध प म ग रि स.

**आनन्दवर्धनः**—देशीतालः
मगणो न गणश्चैव लगौ द्रुतचतुष्टयम्।
लदौ दलौ लघुद्वन्द्वं प्लुतश्चानन्दवर्धने॥
२२ मात्राः।
तालप्रस्तारः

**आनन्दसञ्जीवनम्**
मदनपालकृतग्रन्थः। कालः, क्रै. प. १३५०। कुम्भकर्णेन नृत्तरत्नकोशे, सङ्गीतशिरोमणौ पण्डितमण्डल्या चायं ग्रन्थ उदाहृतः।

**आनन्दि**—दर्शनम्
सुखेनोन्मीलदामीलत्।
वेमः

**आनन्दितः**—प्राकृते मात्रावृत्तम्
चतुर्मात्रा त्रयः लः गः
विरहाङ्कः

**आनन्दिनी**—प्रबन्धाङ्गम्

आनन्दिनी पञ्चभिरङ्ञ्चिताङ्गैः,

रघुनाथः

इयं राजनीतिरिति भीष्मोक्तपञ्चाङ्गयुक्तत्वादन्यैरुच्यते । भीष्मस्तु राजधर्मेषु

"राजनीतिं पञ्चाङ्गयुक्तामीति वदति ।

**आनुकारिकः**

अनुकृत्य परान् शुद्धगीतवाचिकनर्तनान् ।
संभाषणादिभिर्वाग्भिः वाक्यं स्यादानुकारिकः ॥

शृङ्गारभूषणः

**आन्तरी**—ध्रुवा

अन्तरं छिद्रं तत्र भवा आन्तरी । अनुकर्तुर्यदा अनाशङ्कित एव धनविघातादिना विघात उद्भूतप्रयोगश्रमाद्वा मूर्छाभ्रमादि-संभावनावस्त्राभरणादेर्वा प्रच्युतिः तदा तत्संवरणावकाशदित्स-येयं गीयते । अस्यां च प्राक्तनं भावि वा रसस्य स्वरूपमनुवर्त्यम् । छिद्राछादनमात्रप्रयोजनत्वादस्य न सार्थकपठनासनमुपयोगीति शुष्काक्षराण्येवास्यां निबद्ध्यते ।

गुणचन्द्रः

प्रयोगगतदोषाणां प्रछादनपटीयसी ।
विछेदे वान्तरालस्य तत्सन्धानविधायिनी ॥
मध्ये मध्ये प्रयोज्या या सा विज्ञेयान्तरा ध्रुवा ।
भ्रियते सा विषण्णे च विस्मृते मूर्छिते तथा ॥
क्रुद्धे सुते च भावेष्वप्येवमादिषु...।

वेमः

**आन्दोलिकाहस्तः**

गजास्ययोः कुम्भहस्तौ मिलित्वाभिमुखं यथा ।
उत्तानौ च तथान्योन्यांगुष्टलग्नौ भवेदयम् ॥
आन्दोलिका स्यात्पौलस्त्यो देवता परिकीर्तिता ।
विनियोगस्तु तत्रैव कथितश्शम्भुना पुरा ।

गौरीमतम्

**आन्दोलितः**—बाहुः

बाहुरान्दोलितोऽन्वर्थः सविलासगतादिषु ।

अशोकः

**आन्दोलितः**—श्वासः

मन्दान्दोलितो भवेत् । पर्वतारोहणे स स्यात् ।

अशोकः

**आन्दोलिता**—कटी

शनैस्तिर्यक् प्रचलिता तदैवान्दोलिता कटी ।
विनियोगस्तु, कुब्जे वामनखञ्जयोः ।
गमनाभिनये कार्या बुधैरान्दोलिता कटी ॥

सोमेश्वरः

**आन्दोलिता**—देशीचारी

आन्दोलिता कुञ्चिताङ्घ्रेः पश्चादान्दोलनाद्भवेत् ।

वेमः

**आन्ध्री**—जातिः

आन्ध्री निरूप्यतेऽथास्यां षड्जमध्यमधैवतैः ।
हीना स्वरा इहांशाः स्युः षाडवष्षड्जवर्जितः ॥
न्यासो गान्धार एव स्यादान्ध्रजातिरुदाहृता ॥

हरिपालः

तत्र सूत्रम् ।

गान्धार्यार्षभिकाभ्यामान्ध्री सञ्जायते जातिः ।

भरतः

अथोच्यते लक्षणमेतदान्ध्र्या अंशानिषादर्षभपञ्चमाश्च ।
गान्धारकश्चाथ रिगौ निषादः सधैवतः सङ्गतिमाप्नुवन्ति ।
अन्यासमारोहणमंशतः स्यात्क्रमाद्भवेत्पाडवता सलोपात् ।
स्यान्मध्यमग्रामिकमूर्छनाद्या सौवीरिकाख्या किल [ मध्यमादिः ।
चच्चपुटस्तत्र चतुष्कलः स्याद्द्यष्टौ कलास्तत्र भवन्ति [ सम्यक् ।
अङ्के तुरीये खलु नाटकस्य गाने ध्रुवायां विनियोजनं स्यात् ॥
गान्धारको न्यास इहोदितोंशा भवन्त्यपन्यासतया प्रतीताः ॥

रघुनाथः

**आपराह्णिकम्**—संगीत शृङ्गाराङ्गम्

अपराह्णकरणीयमापराह्णिकम् ॥

भोजः

**आप्यायनी**—मूर्छना

जीमूतग्रामे प्रथमा मूर्छना ।
ग्रामे जीमूतसंज्ञे च यदा षड्जः प्रमूर्छेति ।
आप्यायनीति विज्ञेया मूर्छना योगिनां प्रिया ॥

वादिमत्तः

**आभरणम्**

चतुर्विधं तु विज्ञेयं नाट्ये ह्याभरणं बुधैः ।
आवेध्यं बन्धनीयं च क्षेप्यमारोप्यमेव च ।

भरतः

आभीरिका—मेलरागः

धकोमला नितीव्राद्या षड्जपूर्वकमूर्छना।
धगयोः कम्पसंयुक्ता सतांशाभीरिका मता ॥
आरोहणे ऽवरोहेऽपि क्वचिन्मध्यमवर्जिता।
तृतीयप्रहरोत्तरगेया

अहोबिलः

आभीरिकारागध्यानम्

या...कङ्कणविभूषितबाहुवल्ली-
रुन्निद्रचम्पकमनोहरगात्रयष्टिः।
श्रीखण्डशैलशिखरे गजमौक्तिकौघैः
आभीरिका विदधती स्रजमिन्दुशुभ्राम् ॥

इयं षाडवा। इयमेव षाहारीत्युच्यते।

संगीत सरणिः

आभीरी—रागः

शुद्धपञ्चमसंभूता रामकस्फुरणान्विता।
आभीरो रामहीना स्याद्बहुला पञ्चमेन च ॥

मोक्षः

अथाभीरीति संख्याता मालापञ्चमसंभवा।
औडुवो ऋषभेणापि गान्धारेण विवर्जिता ॥

हरिः

पञ्चमस्याद्यगान्धारर्षभाभ्यां च विवर्जिता।
वाजपेयिकहृष्याख्यतानमूर्छासमन्वितः ॥
स्फुरितस्फारगमकाऽभीरिका बहुसप्तमा ॥

नान्यः

रिगरहिता पञ्चमकाद्या...ललितैश्च सस्फुरितैर्गमकैः।
पञ्चमजाताऽभीरी भवतिगुणैर्गीतिलक्षणोपेतैः ॥

कश्यपः

मालापञ्चमभाषेयमाभीरी परिकीर्तिता।
रिगाभ्यां च विहीना च औडुवा परिकीर्तिता ॥
पञ्चमांशग्रहन्यासा कलहे विनियुज्यते।

जगदेकः

आभीरीनाटः—मेलरागः

आभीरीमेलसंभूतोऽवरोहे धस्वरोज्झितः।
अथ न्यासविशेषाद्य आभीरीनाटकः स्मृतः ॥
सस्वरादिग्रहन्यासो यस्मिन्नंशौ गनी स्वरौ।
सायं गेयः ॥

अहोबिलः

आभीरु—मेलरागः सुवर्णाङ्गीमेलजन्यः

(आ) स रि ग रि म प नि स.
(अव) स ध प म ग स.

आभुग्नम्—वक्षः

अधः पतदिवस्कन्धद्वितयं दधदानतम्।
मध्ये मध्ये श्लथीभावं भजत्पृष्ठे समुन्नतम् ॥
आभुग्नं संभ्रमे भीते विषादगतयोश्शुचि।
मूर्छाहृच्छल्यमन्दाक्षशीतस्पर्शनवृष्टिषु ॥

जायनः

वक्षःप्रशिथिलं निम्नमाभुग्नं संप्रचक्षते।
शीतहृच्छल्ययोश्शोके मूर्छायां गर्वलज्जयोः।
भये व्याधौ विषादे च संभ्रमे च प्रयुज्यते ॥

विप्रदासः

आभेरी—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग रि ग म नि स.
(अव) स नि ध प म ग रि स.

आभोगः

गीयते नायकस्यैव यस्मिन्बिरुदनामनी।
आभोगस्स भवेन्नाम्ना गीतस्यान्ते स गीयते ॥

हरिपालः

आभोगः—प्रबन्धाङ्गम्

अयं प्रबन्धस्यान्त्ये वर्तते। आभोगस्त्वादौ नियमेनेति सङ्गीतसर्वस्वकारः। तन्मते कविनाम आलाप एव। तेनैश्च कविप्रबन्धनेतृणामालापे नाम विन्यसेत्। अर्थवदालापस्यात्र ग्रहणं। आलापाभोगयोरन्यतममाश्रित्य कविप्रबन्धनेतृणां नाम विन्यसेत् इत्याधुनिकाः।

कृष्णदासः

आभोगी—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग म ध स.
(अव) स ध म ग रि स.

आमुखम्

नटी विदूषको वापि पारिपार्श्वक एव वा।
सूत्रधारेण सहिताः संलापं यत्तु कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः वीथ्यङ्गैरन्यथापि वा।
आमुखं तत्तु विज्ञेयं बुधैः प्रस्तावनापि वा ॥

भरतः

आमुखं लक्षयति। वा शब्देन व्यस्तानां नटीप्रभृतीनां सूत्रधारेण सङ्गतमाह अपिशब्देनात्मना समस्तानां। द्वितीयो वाशब्दः समस्तव्यस्ततां विकल्पयति। एवशब्दः सूत्रधारस्यावश्यंभावं दर्शयति चित्रैरिति। भाविरूपकार्थानुकूलविषयानुसारिभिः स्वं काव्यं नटव्यापारं। वीथ्यङ्गैरितिश्लिष्टवक्रोक्तिप्रत्युक्तिप्रायैरित्यर्थः. यथा—पीताम्बरगुरुशक्त्याहरत्युपां प्रसभमनिरुद्धः इत्यादि। अन्ययेति स्पष्टोक्तिप्रत्युक्तिभिरामुखमिति। मुखचन्द्रैर्निवर्तते यतः। आङ्मर्यादायां। यदिवा अत्रामुखं शरम्भसमीपन्मुखं वा प्रस्ताव्यते अनयेति। बाहुलकेन तच्छीलसंज्ञयोः। तत्र कदाचित्कार्याभिमुखं नीयते। पूर्वरङ्गविधिः तदभिमुखं वा कार्यरंमः तन्नीयते। सा द्विवेति पूर्वरङ्गाध्याये दर्शितमस्माभिः। एवं च यदा स्थापकोऽपि सूत्रधारतुल्यगुणाकारो रामादिन्नदेव तदेदं कविकृतमामुखं भवति।

अभिनवः

**आमुखम्**

आमुखमेतदुत्पाद्यवस्तुसूचना स्वरूपालापः। स च सन्धेर्मुखस्यादितः कार्यः। नटी विदूषको वापीत्यादि भरतः। अन्यस्तु अन्यापदेशेन कथानुकथाभ्यां एककः सानुगो वा सूत्रधारः कुर्यादामुखमिति। अन्तर्नेपथ्यमात्रोक्ति श्रुतिस्मरणदर्शनैः। स्वैरङ्गश्चापि वीथ्यङ्गैः प्रकुर्यादामुखं बुधः॥

सागरः

**आमुखाङ्गानि**

उद्घात्यकः कथोद्धातः प्रयोगातिशयस्तथा।
प्रवृत्तकावलगिते पञ्चाङ्गान्यामुखस्य तु॥

भरतः

**आमोदः**—प्रबन्धः

स्वरैः पाटैस्तालतेन्नैरामोदः कथितो बुधैः।

जगदेकः

**आम्रपञ्चमः**—ग्रामरागः

आन्ध्रीजात्युद्भवो ग्रामे मध्यमे मन्द्रवर्जितः,
म्हांशन्यासगान्धारो रसे वीरे तथाद्भुते॥
रागो निषादगान्धारतारः स्यादाम्रपञ्चमः।

भट्टमाधवः

**आम्रपञ्चमः**—रागः

गन्धारांशो रिपत्यक्तः गान्धारांशग्रहान्वितः।
सनितारश्च पूर्णश्च मन्द्रेण परिवर्जितः॥
आम्रपञ्चमनामायं रागो विस्मयहास्ययोः।

जगदेकः

गान्धारांशग्रहन्यासो मध्यमेन्द्रिसमुद्भवः,
निगतारो मन्द्रहीनो रागः स्यादाम्रपञ्चमः॥

आन्ध्रीजातिसमुत्पन्नो मध्यमग्रामगोचरः।
गान्धारांशग्रहन्यासो रागः स्यादाम्रपञ्चमः॥

नारायणः

अयममरपञ्चम इत्यप्युच्यते॥
अंशन्याससग्रहगतगान्धारो निगमध्यमतारः।
आन्ध्रीजातोमन्द्रव्यक्तस्स्यादाम्रपञ्चमः पूर्णः॥

नान्यः

तारणांशग्रहन्यासो नितारोमन्द्रवर्जितः।
मध्यतारतरः पूर्णः रागस्स्यादाम्रपञ्चमः॥

मतङ्गः

अथाम्रपञ्चमो रागो जातो गान्धारपञ्चमात्।
गान्धारांशग्रहन्यासः तारषड्जनिषादयोः॥
मन्द्रस्थानेन संत्यक्तस्सम्पूर्णस्सप्तभिस्स्वरैः।

**आम्रेडितयमकम्**—अलङ्कारः

पादस्यान्त्यं पदं यत्र द्विर्द्विरेकमीहोच्यते।
ज्ञेयमाम्रेडितं नाम यमकं—
यथा—विजृम्भितं निश्वसितं मुहुर्मुहुः।

भरतः

**आम्लानम्**—दर्शनम्

शून्यालोकनमावृत्तं स्यादाम्लानं यत्क्लीनिकम्।

शारदातनयः

**आयतम्**—स्थानकम्

स्त्रीभिरेवेति तदयोज्यं पूर्वरङ्गेऽवदन्परे।
नरः स्त्रियोऽथवा कुर्युरिदमेव प्रवेशने॥
येनाऽभिनेयं स्थानं हि प्रविष्टेष्विति केचन।
आयतानन्तरं योज्या रङ्गावतरणादयः॥
यथोचितं तदा ज्ञेयाः प्रचारा हस्तपादजाः।
भट्टाभिनवगुप्तस्य मयैतन्मतमीरितम्॥

अशोकः

तालान्तरे स्याच्चरणो वामं त्र्यश्रोऽथ दक्षिणः।
समः स्यादुन्नतं वक्षः प्रसन्नं मुखपङ्कजम्॥
कटिस्समुन्नता हस्तो दक्षिणः स्यान्नितम्बकः।
वामः करो लताहस्तो यत्र तत्स्थानमायतम्॥
देवतात्र रमा कार्यं पुष्पाञ्जलिविसर्जने।
चारीषु विहितास्वेनां विदध्यान्नर्तकः स्थितिम्॥
रङ्गावतरणे कार्यं स्त्रीभिरेवेति केचन॥

आभाषणमनेन स्यात्सखीप्रियतमादिभिः ।
मालावलम्बने स्त्रीणां प्रतिषेधे च तर्जने ॥
ईर्ष्याहर्षो वे कार्यमङ्गुलस्फोटने तथा ।
मौने विसर्जनाह्वानयोस्स्याद्गाम्भीर्यगर्वयोः ॥

विप्रदासः

## आयतः—अधरः

नतैस्सहोत्तरोष्ठेनायतस्स्यात्सोद्भुते रसे ।

अशोकः

स्मिते प्रयोज्यो लज्जायामपीत्येके विदुर्बुधाः

विप्रदासः

## आयतमण्डलम्—देशीमण्डलम्

वितस्त्यन्तरितौ पादौ त्यक्त्वा तु चतुरस्रकम् ।
तिर्यक्कुञ्चितजानुभ्यां स्थितिरायतमण्डलम् ॥

नाट्यदर्पणे

## आयता—श्रुतिजातिः

सा कुमुद्वती, क्रोधा, प्रसारणी, सन्दीपिनी, रोहिणी इति पञ्चसु श्रुतिषु वर्तते ।

## आयतौ—अधरौ

औष्ठौ यत्र तु संलग्नौ सृक्कदेशे प्रसारितौ ।
आयतौ तौ तु विज्ञेयौ विनियोगस्तथास्मिते ॥

सोमेश्वरः

## आयुक्ता

भाण्डागारे नियुक्ता च आयुधागार एव च ।
औषधीफलमूलेषु बीजेषु व्यापृता तथा ॥
गन्धाभरणवस्त्रेषु आख्यानकथनेषु च ।
बह्वर्थेषु नियुक्ता या आयुक्ता सा प्रकीर्तिता ।

भरतः

## आरभटी—वृत्तिः

आरभटप्रायगुणा तथैव बहुकपटवञ्चनोपेता ।
दंभानृतवचनवती त्वारभटी नाम विज्ञेया ॥
पुस्तावपातप्लुतलङ्घितानि छेद्यानि मायाकृतमिन्द्रजालम् ।
चित्राणि युद्धानि च यत्र नित्यं तां तादृशीमारभटीं वदन्ति॥
षाड्गुण्यसमारब्धा हठातिसन्धानविद्रवोपेता ॥
लाभालाभार्थकृता विज्ञेया वृत्तिरारभटी ॥

भरतः

उद्धतरसा आरभटी । दीप्तरसा रौद्ररसा उद्धताः । आरभटानां ये गुणाः क्रोधावेगाद्याः ते प्रायेण बाहुल्येन यत्र बहुभिः कपटैः यद्वञ्चनं तेनोपेता । कपटयोगोऽत एव दम्भप्राधान्यमसत्यवचनसंभवश्च ।

अभिनवः

समुद्धतप्रायगुणा वीररौद्राद्भुतात्मिका ।
कपटानृतदम्भेषु वञ्चनास्कन्दयोः स्थिता ॥

युद्धनियुद्धेन्द्रजालमायाच्छेदनप्लुतादिभिरारभटी ज्ञेया । कपटे यथा लावाणकदाहे वासवदत्तामरणम् । अनृते यथा—द्रोणवधे ; प्लुते मारुतेस्समुद्रलङ्घनं । लङ्कास्कन्दनमास्कन्दः अथवा—अङ्गदेन मन्दोदरीकेशाकर्षणम् । युद्धं रामरावणयोः । नियुद्धं वालिसुग्रीवयोः ॥

सागरः

आरभट्यनृतद्वन्द्वछद्मदीप्तरसान्विता ।

आरेण पतोदकेन तुल्या भटा उद्धताः पुरुषाः आरभटाः ते सन्त्यस्यामित्यारभटी । अनृतं असत्यं । द्वन्द्वयुद्धमनेकप्रकारं । छद्म वञ्चनाहेतुः प्रयोगः । अनेनेन्द्रजालपुस्तप्रयोगजेद्यभेद्यादिग्रहः । दीप्ता रसाः रौद्रादयः । औद्धत्यावेगादिहेतवः । अत्रानृतादिभिर्विचित्रैनपथ्यकिलिञ्जहस्तिप्रयोगमायाशिरोदर्शनादिकम् । भयहर्षातिशयाकुलितपात्रप्रवेशः । पूर्वनायकावस्थायाः परित्यागेन नायकावस्थान्तरप्रहोऽवस्कन्दाग्न्यादिकृतविद्रवादिकं विविधस्थायिव्यभिचारिभावयुक्तं प्रसङ्गागतकार्यादिकं बाहुयुद्धशस्त्रप्रहारादिकं च सङ्गृह्यते ॥

रामचन्द्रः

भोजेनारभटीवृत्तिरर्थशृङ्गारस्याङ्गत्वेनोक्ता । यथा—आरभटीवृत्तिः ऊडूमागधी प्रवृत्तिः । गौडीया रीतिः । सर्वा नायिकाः । धीरोद्धतो नायक इति । तत्रारभटी वृत्तिः । अर्थार्जनानुरूपस्वरूपाङ्गत्वात्तदाह आविद्धगतिरारभटी इति । पुस्तावपातेत्यादि । सङ्क्षिप्तकः; अवपातः, वस्तूत्थापनं, संफेट इति तदङ्गानि । आविद्धगतिरारभटीत्यनेनार्थशृङ्गारे धीरोद्धतव्यापारं नियमयति । पुस्तावपाताभ्यां स्वसैन्यदुर्गादिरक्षामुपलक्षयति । विचित्राणां हि शिलामृद्विदलदारुचर्मायोमयानां सन्नाहास्त्रशस्त्रादीनां पुस्त इति नाम । परिखा-अवभृत-धावतिकादीनां अवपात इति नाम । प्लुतलङ्घिताभ्यां परदुर्गोपरोधेषु तदभियोगचेष्टामाचष्टे प्लुतैर्हि पाकारादयोऽपि लङ्घ्यन्ते । लङ्घनैश्च प्राकारादीनि छेद्यानि । चित्राणि युद्धानीत्यनेन दुर्गलम्भोपायं प्रतिपादयति । प्राकारभङ्गसुरङ्गादीनि छेद्यानि । कूटयुद्धचतुर्विंशतिः चित्रयुद्धानि । मायाकृतमिन्द्रजालं इत्याभ्यां स्वैसन्यप्रोत्साहनपरबलस्थम्भनादिभिः कार्यसिद्धयेऽवस्कन्दकानि सूचयति । संक्षिप्तकेन मायादिभिः परत्र सन्धानादनयाससिद्धिं कार्यशरीरस्य ब्रूते । अवपातेनाकस्मिकेषु भयाद्युपनिपातेषु तदपसर्पणोपसर्पणाप्रकारं प्रकटयति । वस्तूत्थापनेन स्वास्थ्यास्वास्थ्ययोर्विरुद्धकार्योपनिपाते

मन्त्रचिन्तामाद्रियते। संफेटेन युद्धकाले अवश्योच्छेद्यारिनिग्रहं प्रतिपादयति। तल्लक्षणानां तथाविधार्थयोगात्। तथाहि—मायेन्द्रजालशिल्पनैपथ्यादिभिः कार्यवस्तुसंक्षेपः संक्षिप्तकः। भयादिभिः विद्रवादिकर्मसु प्रवेशनिर्गमावपातः अविद्रवः सविद्रवो वा सर्वरसभागसमासो वस्तूत्थापनम्। नानाशस्त्रयुद्धनियुद्धादिभिः ससंरंभसंप्रहारः संफेटः।

भोजः

पुस्तावपातप्लुतलङ्घनानि छेद्यानि मायाकृतमिन्द्रजालम्।
चित्राणि युद्धानि च यत्र वृत्तिं तां तादृशीमारभटीं वदन्ति।

भरतः

**आरभट्यङ्गानि**

संक्षिप्तकावपातौ वस्तूत्थापनमथापि संफेटः।
एते ह्यस्या भेदा लक्षणमेषां प्रवक्ष्यामि॥

भरतः

**आरभी—शङ्कराभरणमेलरागः**

अथारभ्यां समारोहे मेपञ्चस्वरवर्जनम्।
(गन्योः लोपः)

परमेश्वरः

**आरभी—मेलरागः (धीरशङ्कराभरणमेलजन्यः)**

(आ) स रि म प ध स.
(अव) स नि ध प म ग रि स.

**आरम्भः—अवस्था**

औत्सुक्यमात्रबन्धस्तु यद्बीजस्य निबद्ध्यते।
महतः फलयोगस्य सखल्वारम्भ इष्यते॥

भरतः

**आरम्भः—पूर्वरङ्गाङ्गम्**

परिगीतक्रियारम्भ आरम्भ इति कीर्तितः।
आतोद्यरञ्जनार्थं तु भवेदाश्रावणाविधिः॥
वाद्यवृत्तिविभागार्थं वक्त्रपाणिर्विधीयते।
तन्त्र्योजस्करणार्थं तु भवेच्च परिघट्टना॥
तथा पाणिविभागार्थं भवेत्संघोटनाविधिः।
तन्त्रीभाण्डसमायोगान्मार्गासारितमिष्यते॥
कलापातविभागार्थं भवेदासारितक्रिया।
कीर्तनाद्देवतानां च ज्ञेयो गीतविधिस्तथा॥

भरतः

इह दृष्टार्थान्येव तावदेतान्यङ्गानि। तथाहि—पूर्वं रञ्जकवर्गढौकनं ततो गेयमेव तद्गीतस्योपरञ्जकस्य प्राधान्यात्। तस्य च विम्बभूतं शारीरम्। शारीरस्वराणां मूलभूतत्वात् तदनुसन्धानाय आलापाख्यारम्भः। ततोऽपि मानरूपतालप्रधानसर्वातोद्यगर्भतानुसन्धानं आसमन्ताच्छ्रावयतीत्याश्रावणा। ततोऽपि प्रतिविम्बभूतवैणवस्वरस्वरूपानुसन्धानाय दक्षिणादिवृत्तिविभागानुसन्धानात्मना वक्त्रपाणिः। वक्त्रे प्रारम्भे हस्ताङ्गुलीव्यापारः। ततस्तु वृत्तिविभागगतशुष्कप्रयोगासन्धानात् ज्यापरिघट्टना। घट्टचलन इति पाठात् पश्चाद्वीणावाद्योपजीवकत्वादवनद्धस्यानुसन्धानसंवाद्यादिना प्रहारपञ्चकयोगेन क्रियते इति संघोटना। घुट परिवर्तने यतः पुष्कराध्यायेऽभिवक्ष्यते। "पूर्वं शरीराद्उद्भूता ततो गच्छति दारवीम्। ततः पुष्करजं चेति"। ततोऽपि प्रकृतिमेव यन्मानानुहार्यानुहर्तृरूपस्य वैणवपौष्करशब्दस्य परस्परसम्मेलनं कार्यमिति मार्गासारितं। मार्गेप्रकृत्यादिलक्षणादिगोचरे विकाररूपस्य पुष्करवाद्यस्यासमन्तात्सारणं गमनं यत्रेति। पश्चान्मेयमानस्वरूपे तु संहिते गेयवस्तुगततालस्वरूपोपक्षेपः कलानामावापादीनां पातानां शम्यादीनां चानुसन्धितत्यासारितविधिः। एवं तावदन्तर्यवनिकाङ्गानां दृष्टार्थं एव प्रयोगः। तान्यन्तरेण प्रयोगस्यैवासंपत्तेः। एवं दृष्टार्थे प्रयोगे पूर्वं कृते पश्चाददृष्टाङ्गानुसारेणैव बहिर्गीतविधिः। तदनुसारेण च विशेषधातुवाद्ये विधिः॥

अभिनवः

**आरम्भः—सन्ध्यङ्गम्**

मातृगुप्तमते मुखसन्ध्यङ्गम्
प्रार्थनाविपर्यौत्सुक्यं आरम्भः।

आरम्भः—समुद्योगः॥ यथा—मायामदालसनाटके तालकेतुराक्षसवधमिच्छतः कुवलयाश्वस्य राज्ञः गालवतपोवनगमनम्।

सागरनन्दी

**आरम्भविधिः**

प्रमाणं, प्रमेयं, विमर्शः निर्णयः, प्रवृत्तिः—इत्येताः पञ्चारम्भविधयः। ताश्च प्रत्येकं पञ्चप्रकारत्वा पञ्चविंशतिर्भवन्ति। तत्र युक्तिः, उक्तिः दृष्टं निदर्शनं, अर्थापत्तिः इति प्रमाणं पञ्चधा वर्तते। विमर्शोऽपि, कर्मणामारंभोपायः, पुरुषद्रव्यसंपत्, देशकालविभागः, विनिपातप्रतीकारः, कार्यसिद्धि इति पञ्चधा भवति। निर्णयः पञ्चविधः, अनुलब्धस्य ज्ञानं, उपलब्धस्य निश्चयबलाधानं, द्वैधस्य संशयोच्छेदनं, एकदेशदृष्टस्य शेषोपलब्धिः, विपर्ययचिकित्सा इति। प्रवृत्तिः पञ्चविधा, अलब्धलाभार्था, लब्धपरिरक्षार्था रक्षिताभिवृद्ध्यर्था, वर्धितोपयोगार्था, उपयोगपर्याप्तार्था इति॥

भोजः

**आरात्रिकम्—शिरः**

स्कन्धौ तु किञ्चिदाश्लिष्य भ्रान्तमारात्रिकं मतम्।
विस्मये दृश्यते तच्च पराभिप्रायवेदने॥

शार्ङ्गः

**आरुद्रदेशिकः**—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि म प नि ध स.
(अव) स नि ध नि प ध म ग रि ग स.

**आरेचितकम्**—नृत्तहस्तप्राणः
एतावंसावधिभ्रान्तौ उक्तावारेचितौ जनैः ॥
शृङ्गार

**आरोप्यम्**—आभरणम्
आरोप्यं हेमसूत्रादि हाराश्च विविधाश्रयाः ।
भरतः

**आरोही**—वर्णः
यत्र स्वराणामारोहो मूर्छनाक्रमवर्तिनाम् ।
क्रमाद्यस्तद्भवं गानमारोही वर्ण उच्यते ॥
पण्डितमण्डली

**आर्द्रता**
यद्यदस्य प्रियो वेत्ति तस्य तस्याशुकारिताम् ।
योग्यतामार्द्रतां प्राहुः मनःकालुष्यनाशिनीम् ॥
भावविवेकः

**आर्द्राभिनयः**
रेखाहस्तेन कर्तव्यः ।
महाराष्ट्र

**आर्द्राहस्तः**
अङ्गुष्ठः कुञ्चितो भूयान्मध्यमानामिका तथा ।
कुञ्चिता च कनिष्ठा च तर्जनी प्रसृता यदि ॥
रेखाभिधः करस्सोयमार्द्रायां संप्रयुज्यते ॥
शृङ्गार

**आर्षभी**—जातिः
आर्षभी शुद्धा गीयते । निषादपञ्चमाल्पत्वम् । रिषभधैवतनिषादा ग्रहाः । स्वयमेवांशाः । त एवापन्यासाः । पञ्चस्वरपरस्तारो निषादः । ऋषभो न्यासः । न्यासपरस्तत्परो वा मन्द्रः षड्जधैवतपञ्चमाः । ऋषभगान्धारयोस्तु सङ्गतिः । षड्जहीने षाडवषड्जपञ्चमहीनमौडुवितम् । पूर्णावस्थायां षड्जगान्धारपञ्चमानामल्पत्वम् । औडुविते गान्धारमध्यमयोरल्पत्वम् । शेषाणां च बहुत्वम् । दशविधत्वं चास्या दशांशाः शुद्धविकृताः पूर्णात्रयः । पञ्चम्यादिमूर्छना । चच्चत्पुटस्तालः । एककलेन चित्रेण मागधी । द्विकलेन वार्तिकेन संभाविता । चतुष्कलेन दक्षिणेन पृथुला । वीररौद्राद्भुता रसाः । प्रथमप्रेक्षणके नैष्क्रामिकी ध्रुवा गाने विनियोगः । धैवतादिर्मूर्छना ॥
मतङ्गः

स्यान्मूर्छना तत्र हि शुद्धषड्जा चच्चत्पुटः स्याद्द्विकलोऽत्र [तालः ।
अष्टौ कलाः पूर्ववदेव चास्या ध्रुवादिके यो विनियोग उक्तः ॥
निषादगान्धारकयोर्बहुत्वमल्पत्वमस्यामितरस्वराणाम् ।
रागौ तु देशीमधुकर्यभिख्यावस्यास्तु गाने स्फुटतो भजेताम् ॥
तयोर्द्वयोरस्याद्दृषभो यतोंऽशस्ततस्तृतीयस्तु रतोचितैव ॥
रघुनाथः

**आर्षभीकपालम्**
ऋषभो ग्रहस्तथांशोऽपन्यासः स्याच्च यत्र खलु नियमात् ।
मध्यम एव न्यासः निधगौ च स्वरावल्पौ ॥
अपि यत्र षड्ज एव स्वरो वात्यल्पतामनभ्यासात् ।
तदिदमष्टमकपालं ज्ञेयं विद्वद्भिरार्षभ्याम् ॥
षड्जग्रामे आर्षभी सकपालपाणिका मध्यमेन देश्यां मधुकर्या गीयते ॥
नान्यः

अथार्षभीजातिकपाललक्ष्म वक्ष्यामि तत्रर्षभ एव चांशः ।
भवेदपन्यासतया स एव स्यान्मध्यमो न्यासतया प्रतीतः ॥
निषादगान्धारकपञ्चमास्तु सधैवताः स्वल्पतया च वेद्याः ।]
अल्पस्तु षड्जो नितरां तथाष्टौ कलास्तु शेषं पुनरार्षभीवत् ॥
रघुनाथः

**आर्षभीकपालगानम्**
यस्मिन्नंशो ग्रहोपन्यासस्तु ऋषभ ईरितः ।
न्यासस्तु मध्यमः प्रोक्तः स्वल्पा गनिपधा मताः ।
सोऽत्यल्पोऽष्टकलं तत्स्यात्कपालं चार्षभीगतम् ॥
कुम्भः

**आर्षभीध्यानम्**
निस्सीमवाङ्मनसयोरतिदूरवर्ति
यस्या महत्वमवधीरयितुं प्रवृत्तः ।
पद्मासनोऽपि परिहास्यदशां प्रयाति
तामार्षभीं शुकनिभामनिशं नमामि ॥
जगदेकः

**आलतिः**
तालपदहीनाऽऽलतिर्भवेत् ।
सोमेश्वरः

आलतिः आलप्तिशब्दस्य विकृतिरिति केचन मन्यन्ते ।

**आलप्तिनृत्यम्**—देशीनृत्यम्
रङ्गप्रवेशे सञ्जाते पार्श्वयोश्चतुरः करान् ।
अग्रतः षोडशः पञ्च नर्तक्यो गायकैस्सह ॥

आलग्नौ क्रियमाणायां नर्तकी वामपाणिना।
धृत्वा चेलाञ्चलं दक्षे पताकं दधती करे।
कलासैह विभावाभ्यां युतं भ्रमणमाचरेत्॥

कुम्भः

आलम्पाकक्षेत्रवीरः—देशीतालः

आलम्पाकक्षेत्रवीरे चतुः स्युर्गपलाद्रुतः ।
ऽऽ। ऽऽ। ऽऽ। ऽऽ।०

गोपतिप्पः

आलस्यम्—चित्ताभिनयः

पुरोभागे पताकन्तु चालयेच्च पुनः पुनः।
आलस्यभावे युज्येत भरतार्णववेदिनः॥

विनायकः

आलस्यम्—व्यभिचारिभावः

खेदव्याधिगर्भस्वभावश्रमसौहित्यादिभिर्विभावैरुत्पद्यते स्त्रीनीचानाम्। अनुभावास्तु सर्वकर्मानभिलापशयनासननिद्रातन्द्रिसेवनादयः॥

भरतः

तदाहारत्यागैरारब्धत्यागैरभिनेयम्।

सागरः

स्त्रीनीचानां अनुद्यमरूपमालस्यम्।

रामचन्द्रः

आलस्यं नाम गर्भादिजैंह्मथस्तम्भासनादिमत्।

भङ्गराजः

शयनासनरागेण वर्ण्योऽसावितरेषु तु।

शारदातनयः

इतरेष्विति। स्त्रीनीचानामितरेषु।

नरसिंहः

आलस्यम्—शिल्पकाङ्गम्

अङ्गानि चन्दनाम्भोभिः सिञ्चेत्यादिवचो यथा।
वैवश्यं यन्मनोज्ञानां तदालस्यमुदाहृतम्॥

शारदातनयः

मार्गादिखेदजन्यः श्रम आलस्यम्। यथा—कुन्दमालायां प्रथमेऽङ्के वच्चलक्खणेति सीतावाक्यम्।

सागरः

आलापः

रागालपनमालप्तिर्भूरिभङ्गीमनोहरा।
प्रयोगाद्वा तथालापः संज्ञा साक्षरवर्जिता॥

कुम्भः

अलापचारी—पुष्पाञ्जलिभागः

अनिबद्धालपनतो नृत्तं तालानुवर्ति चेत्।
आलापचारी विज्ञेया सर्वेषां चित्तरञ्जनम्॥

नन्दी

आलापचाली—वाद्यप्रबन्धः

गजरस्य नामान्तरम्।

आलापा—मूर्छना

गान्धारग्रामे प्रथमा
(आ) ग म प ध नि स रि
(अव) रि स नि ध प म ग

नान्यः

गान्धारग्रामे प्रथमा मूर्छना।
आलपस्यातिरौद्रत्वाद्गान्धारस्वरमूर्छना।
आलापा मूर्छना तस्या रुद्रश्चात्राधिदैवतम्॥
सुबलाशब्दे द्रष्टव्या।

सागरः

आलापिनी—वीणा

इयमेवालावणीत्युच्यते।
अथालापविदग्धेनालापिनी लक्ष्यते स्फुटा।
सार्धहस्तो भवेद्दण्डो वैणवः खादिरोऽथवा॥
सुवृत्तस्सरलश्श्लक्ष्णो ग्रन्थिव्रणभिदोज्झितः।
स्वदैर्घ्यं मानतः श्लक्ष्णं सुषिरं दधदन्तरा॥
द्वित्र्यङ्गुलिपरिणाहो मध्ये कूर्मवदुन्नतम्।
यवद्वयमितं पिण्डे दैर्घ्ये त्र्यङ्गुलसंमितम्॥
विस्तारेऽङ्गुलमात्रं तु ककुभं दधदुन्मुखम्।
कालामलकतुल्येन दण्डेनाधोविभूषितम्॥
दण्डवक्त्रप्रवेशेन सुश्लक्ष्णेन समेन च।
चतुरङ्गुलदैर्घ्येण शङ्कुना च विराजितम्॥
पत्रिकारहितं तस्मिन् दण्डस्याग्रान्निबध्यते।
षडङ्गुलानि संत्यज्य तुम्बमष्टादशाङ्गुलम्॥
परिणाहे वक्त्रदेशे चतुरङ्गुलसंमितम्।
तदन्तरा भवेन्नाभिर्दन्तिदन्तविनिर्मिता॥
हेमादिरचिता वा स्यात् समा तालफलाकृतिः।
नागपाशेन बध्नीयात्तुम्बादूर्ध्वं तु दोरकम्॥
तत्र मेषान्त्रजां तन्त्रीं पट्टसूत्रमयीमथ।
कार्पाससूत्रजां वास्मिन् नागपाशे निवेशिताम्॥

आकृष्यककुभस्याधः कीलके साधु वेष्टयेत्।
दशमुष्टिमितं दण्डमस्याः केचिद्बभाषिरे ॥
रक्तचन्दनजो दण्डः सर्ववीणासु चेष्यते।
अत्यल्पो भेदकं प्राहुरस्यामेतत्त्रयं विदुः ॥
खर्परं नाळिकेरस्य पत्रिका वेणुदारिका।
त्रीण्येतानि न वध्यन्ते बुधैरस्यां कदाचन ॥
उपवक्षस्थलं तुम्बमध्ये वक्त्रं निधाय च।
वासाङ्गुष्ठे नतस्याथ मूलमुत्पीड्य यत्नतः ॥
धृत्वा तां मध्यमाङ्गुल्या दक्षस्यानामयाथवा।
बिन्दुहस्तेन वा बिन्दुधातुवद्वादयेत्सुधीः ॥
मंद्रे मध्ये तथा तारे स्वरव्यक्तिर्यथा भवेत्।
तस्या दक्षिणहस्तस्य तर्जन्याद्यङ्गुलित्रयात् ॥
त्रयस्स्वरास्युः षड्जाद्या मध्यमाद्यास्स्वराः पुनः।
चत्वारो वामहस्तस्य तर्जन्यादिचतुष्टयात् ॥
इह केचित्स्वरव्यक्तिमन्यथा मन्वते बुधाः।
षड्जः स्यान्मुक्तया तन्त्र्या तर्जन्या ऋषभस्स्वरः ॥
गांधारमध्यमा सूते ततो दक्षिणपाणितः।
मध्यमो मुक्तया तन्त्र्या पञ्चमस्तर्जनीभवः ॥
दैवतः स्यान्मध्यमया निषादस्तु कनिष्ठया।
वामहस्तस्थया केचिद्चुरुक्तप्रकारतः ॥
वामहस्तस्य तर्जन्या द्व्यङ्गुलीभिः स्वरोदयम्।
स्युरारोहावरोहाभ्यां सप्तकद्वितये स्वराः ॥
गृहीत्वालापिनीं वीणां चारैरेतैः प्रयुक्तितः।
आलपेद्विविधं रागकदम्बं चित्रधातुकम् ॥
नाङ्गुलीनियमो ज्ञेयो रागालपनकर्मणि।
उक्तस्तत्र मतङ्गाद्यैः स्वराणां नियमो यतः ॥
गायेद्गीतं निबद्धं च यतिताललयान्वितम्।
केचिदत्र स्वरोत्पत्तिं वदन्त्यविदितक्रमाम् ॥
करद्वन्द्वाङ्गुलीचारप्रचारणवशानुगाम्।
लोकदुष्टतया तच्च तन्मतं नाद्रियामहे ॥

कुम्भः

(अस्या आलावणीति नामान्तरम्।)

आलापिनीगतं लक्ष्म वक्ष्ये लक्ष्यविदां मतम्।
नवमुष्टिमितो दैर्घ्यैर्वैणवस्सुपिरोन्तरः ॥
अङ्गुलद्वन्द्वपरिधिः प्रागवद्ग्रन्थ्यादिवर्जितः।
श्लक्ष्णस्समस्तु वृत्तश्च दण्डः स्यात्ककुभं दधत् ॥
अङ्गुलद्वयविस्तारमङ्गुलार्धायतं तथा।
तदर्धपिण्डसंयुक्तमुन्मुखं पत्रिकोज्वलम् ॥
एकदण्डमधो भागे शङ्कुना च विराजितम्।
चतुरङ्गुलदैर्घ्येण वहिर्मध्योन्नतेन च ॥
तस्य तुम्बं परीणाहेऽष्टादशाङ्गुलसम्मितम्।
चतुरङ्गुलवक्त्रं च दन्तनाभिसमन्वितम् ॥
अग्राद्धस्तात्पादोने मुष्टियुग्मे निबध्यते।
अत्र मेपान्त्रतन्त्री स्यात्सूक्ष्मा श्लक्ष्णा समा दृढा ॥
कर्परं नारिकेलोत्थं दोरको दोरिका तथा।
त्रीण्येतानि न विद्यन्ते यत्र सालापिनी मता ॥
पट्टसूत्रमयीं तन्त्रीं यद्वा कार्पाससूत्रजाम्।
रक्तचन्दनजान्सर्वान् वीणादण्डान्परे जगुः ॥
दशमुष्ट्यधिकं मानं क्वचिल्लक्ष्येषु दृश्यते।
तुम्बं वक्षसि निक्षिप्य वामाङ्गुष्ठेन तस्य च ॥
मूलमुत्पीड्य धृत्वा तमेवं मध्यमया सुधीः।
दक्षिणस्यानामया वा वादयेद्बिन्दुधातुवत् ॥
विन्दुहस्तेन वा मन्द्रे मध्ये तारे च वादयेत्।
त्रयः स्युर्दक्षिणात्पाणेः चत्वारो वामतः स्वराः ॥
इत्युक्तं कैश्चिदाचार्यैरपरेत्वन्यथा जगुः।
मध्यमो मुक्तया तन्त्र्या तर्जन्याद्यङ्गुलित्रयात् ॥
वामस्यानामिकावर्ज्याः त्रयः स्युः पञ्चमादयः।
मुक्ततन्त्र्यपृथक्कु षड्जः स्यादृषभस्तर्जनीभवः ॥
गान्धारो मध्यमाङ्गुल्या दक्षिणेनाथ वादनम्।
अरोहेणावरोहेण सप्तकद्वितये भवेत् ॥
एभिः स्वरैर्विरचितं विचित्रं रागमालपेत्।
गायेद्गीतं निबद्धं च प्रवीणो वीणयानया।
इदमालापिनी लक्ष्म प्राह शाकम्भरीश्वरः ॥

हम्मीरः

आलापिनी—श्रुतिः
पञ्चमस्य चतुर्थी श्रुतिः।

आलावणी—वीणा
कनिष्ठिका परिध्यर्धमध्यछिद्रेण संयुतः।
दशमुष्टिमितो दण्डः खादिरो वैणवोऽथवा ॥
अधः करभवानूर्ध्वे छत्नावल्यभिशोभितः।
नवाङ्गुलादधश्छिद्रोपरि चन्द्रार्धसन्निभाम् ॥
निवेश्य तुम्बिकां तत्रालाबुखण्डां निवेशयेत्।
द्वादशाङ्गुलविस्तारं दृढपर्वमनोहरम् ॥

तुम्बिकावेधमध्येन दण्डछिद्रेण निर्मिताम् ।
आलावुमध्यगां दोरीं कृत्वा स्वल्पां च काष्ठिकाम् ॥
तथा संवेष्ट्य तन्मध्ये काष्ठिकां भ्रामयेत्ततः ।
यथा तन्त्रिश्चलालावुवन्धश्च करभोपरि ॥
पञ्चाङ्गुलानि सन्त्यज्यालावूं स्वल्पां च वन्धयेत् ।
केशान्तनिर्मिता पट्टमयी सूत्रकृतापि वा ॥
समा श्लक्ष्णा दृढा तत्र देया तन्त्रीविचक्षणैः ।
तारे मन्द्रे च घोरे च त्रिस्थाने विन्दुरिष्यते ॥
विन्दुनादसमोपेतं तुम्बं निक्षिप्य वक्षसि ।
मध्यमानामिकाभ्यां च वाद्या दक्षिणपाणिना ॥
तुम्ब्या मुलं समुपेत्य वामाङ्गुष्ठेन धारयेत् ।
तदवस्थाभिस्तु सर्वाभिः स्वरव्यक्तिर्विधीयते ॥
विस्वरो दक्षिणः पाणिः वामस्तत्र चतुःस्वरः ।
आलावण्यां स्थिता ज्ञेयाः सप्त षड्जादयः स्वराः ।
इयमालावणी प्रोक्ता मनःश्रवणरञ्जनी ॥

नारायणः

आलावण्येव आलापिनीति देशभाषायां प्रसिद्धा ।

**आलिङ्गनः**—हस्तः

पताकौ स्वस्तिकीभूय स्वल्पस्पृष्टभुजौ भवेत् ।
आलिङ्गनाभिधो हस्तः स चालिङ्गनकर्मणि ॥

विप्रदासः

**आलिप्तमार्गः**—पुष्करवाद्ये मार्गः

वामोर्ध्वकप्रहारयुक्त आलिप्तमार्गः । यथा—घड गुदु गट मखे दोधिं घदु धिदु घेंधि दुघमघ दुघघदो इत्यालिप्तमार्गः ।

भरतः

**आलिप्तिका**—मृदङ्गवादनमार्गः

कनिष्ठाङ्गुलिसंयोगे सर्वाङ्गुलिविवर्तनात् ।
आलिप्तिका समाख्याता नन्दिने चन्द्रमौलिना ॥

नारायणः

**आलीढम्**—स्थानकम्

निषण्णो यत्र वामोरुः गगने पूर्वमानतः ।
रोपेतरोग्रे चरणः पञ्चतालावधिस्थितः ॥
त्र्यश्रौ द्वावपि पादौ तदालीढं रुद्रदैवतम् ।
संघर्षास्फोटनादौ स्यान्मल्लानां रौद्रवीरयोः ॥
उत्तरोत्तरजल्पेऽपि स्यादीर्ष्याक्रोधसंभवे ।
सन्धानमपि शस्त्राणामालीढस्थानके भवेत् ॥
अस्मिन्सन्धाय शस्त्राणि प्रत्यालीढं समाश्रयेत् ।

विप्रदासः

कुम्भः

किञ्चित्कुञ्चितजानुवामकमृजुन्यस्तं विदध्यात्पुरः
पश्चात्तु द्विकरान्तरायततिरश्चीनं पदं दक्षिणम् ।
तिर्यग्वक्त्रमृजुस्थितस्थिरवपुः स्थानं तदालीढकं
प्रत्यालीढमपीदृगेव कथितं व्यत्यस्तपादस्थिति ॥

कोदण्डमण्डने

**आलीढः**—अङ्गहारः

व्यंसितनिकुट्टकरणयोः, वामाञ्चितजनूपुरकरणस्य, दक्षिण-जालातविक्षिप्तकरणयोश्च, उरोमण्डलकरिहस्तकटीछिन्नानां करणानां च क्रमात्प्रयोगे आलीढः ।

**आलीढमण्डलम्**—देशीमण्डलम्

दक्षिणाङ्घ्रेश्च पुरतो वितस्तित्रितयान्तरम् ।
विन्यसेद्वामपादं च शिखरो वामपाणिना ॥
खटकामुखहस्तश्च दक्षिणेन कृतो यदि ।
आलीढमण्डलमिति विख्यातं भरतादिभिः ॥

नाट्यदर्पणे

**आलेभी**—भाषारागः

आलेभी टक्कभाषैव षड्जन्यासग्रहांशिका ।
षड्जग्रामेण संवद्धा संपूर्णा रिगसंगता ॥

कुम्भः

**आलोकितम्**—दर्शनम्

सहसा दर्शनं यत्स्यात्तदालोकितमुच्यते ।

भरतः

आलोकितं भवेच्छीघ्रं व्याकोच(श)पुटवीक्षणम् ।

हरिपालः

**आवन्ती**—प्रवृत्तिः

आवन्तिका वैदिशिकाः सौराष्ट्रा मालवास्तथा ।
सैन्धवास्त्वथ सौवीरा आनर्ता आर्बुदेयकाः ॥
दाशार्णास्त्रैपुराश्चैव तथा वै मार्तिकावताः ।
कुर्वन्त्यावन्तिकीमेते प्रवृत्तिं नित्यमेव तु ॥

भरतः

आर्बुदेयकाः=अर्बुदपर्वतप्रान्तवासिनः ।
मार्तिकावताः=मृत्तिकावतीपुरवास्तव्याः ।

**आवरी**—श्रुतिः

ऋषभस्य प्रथमा श्रुतिः ।
अस्य शब्दस्य स्वरूप एव सन्देहः । पाकुरिकिसोमः

आवर्तम्—करणम्

चाषगत्या प्रयोगेण यत्र पादक्रिया भवेत् ।
डोलाप्रयोगतः किञ्चित् कृतोद्वेष्टापवेष्टनौ ॥
करौ स्यातां तदावर्तं सन्त्रासादुपसर्पणे ।
रेचनं हस्तपादस्य भट्टतण्डुरिहाब्रवीत् ॥
केचिदाहुस्स्थितावर्तामलातामपरे विदुः ।
ब्रूते कीर्तिधराचार्यो भ्रमरीमेव लक्ष्यवित् ॥

ज्यायनः

सन्तोषादपसर्पणे इति लक्ष्मणः ॥

आवर्तम्—मण्डलम्

जनितां दक्षिणो वामः स्थितावर्तामतः परम् ।
ऊरूद्वृत्ताख्यां चारीं च जनिताभिधाम् ॥
समोत्सरितमत्तल्लीं विदधाति यथाक्रमम् ।
दक्षिणश्शकटास्याख्यामूरूद्वृत्तमपि क्रमात् ॥
वामस्ततश्चाषगतिं द्विवारं दक्षिणः पुनः ।
स्पन्दितां वामपादस्तु शकटास्यामथापरः ॥
द्विवारं भ्रमरीं वामः चारीं चाषगतिं यदा ।
विदधाति तदा तज्ज्ञैरावर्तं मण्डलं स्मृतम् ॥

वेमः

आवर्तः—वर्णालङ्कारः

१. सरिगरि, सरिसरि, सरिगम, २. रिगमग, रिगरिग, रिगमप, ३. गमपम, गमगम, गमपध, ४. मपधप, मपमप, मपधनि, ५. पधनिध, पधपध, पधनिस ।

प्रतापसिंहः

आवर्तकः—वर्णालङ्कारः (सञ्चारी)

[1]मन्द्रं [2]युग्ममथो मन्द्रं गायेद्विर्द्विस्सकृत्पुनः ।
द्वितीयाद्यौ कलायां यदावर्तक इति स्मृतः ॥

ससरिरि ससरिस रिरिगग रिरिगरि गगमम गगमग ममपप ममपम पपधध पपधप धधनिनि धधनिध ।

जगद्धरः

[1] मन्द्रं प्रथमस्वरः [2] युग्मं द्वितीयः

आवर्तितम्

किन्नर्यां वामहस्तव्यापारः । तत्र द्रष्टव्यम् ।

आवर्तिता—जङ्घा

मुहुर्मुहुश्चरणयोर्व्यत्यासो दक्षवामयोः ।
आवर्तिता भवेज्जङ्घा विदूषकगतौ च सा ॥

विप्रदासः

दक्षिणे वामतः पादे वामे दक्षिणतो मुहुः ।
कृते योज्यावर्तिताख्या विदूषकपरिक्रमे ॥

अशोकः

आवापः—क्रिया (तालाङ्गम्)

क्रियाशब्दे द्रष्टव्यम् ।

आवापः—तालक्रिया

कनिष्ठाद्यङ्गुलीनां तु क्रमेणाकुञ्चनं हि यत् ।
उत्तानस्यैव हस्तस्य स आवापो निगद्यते ॥

वेमः

आवाह्यद्वन्द्वः

उपवीतं समाश्रित्य द्वादशाङ्गविधानतः ।
यश्चाङ्गिकसमायुक्तः सोऽयमावाह्य ईरितः ॥

शृङ्गार

आविद्धः—धातुः

भूरिर्गुरुहीनो वाऽऽविद्धः ।

शार्ङ्गः

आविद्धः—बाहुः

अन्तराले समाक्षिप्तो बाहुराविद्ध उच्यते ।

वेमः

आविद्धः—वीणायां धातुः

आविद्धः स्याद्भूरिगुरुर्गुरुहीनोऽथ वा भवेत् ।

कुम्भः

पञ्चविधोऽयं, क्षेपः, प्लुतः, अतिपातः, अतिकीर्णः, अनुबन्धः इति ।

आविद्धकरणम्—नृत्तकरणम्

समस्थानं समं शिरः डोलाहस्तस्समा च दृक् ।
चरिचापगतिः प्रोक्ता आविद्धकरणे भवेत् ॥

नन्दी

आविद्धप्रयोगः

यत्वाविद्धाङ्गहारं तु छेद्यभेद्याहवात्मकम् ।
मायेन्द्रजालबहुलं पुस्तनैपथ्यसंयुतम् ॥
पुरुषैर्बहुभिर्युक्तमल्पस्त्रीकं तथैव च ।
सात्त्वत्यारभटीप्रायं नाट्यमाविद्धमेव तत् ॥
डिमस्समवकारश्च व्यायोगेहामृगौ ततः ।
एतान्याविद्धसंज्ञानि विज्ञेयानि प्रयोक्तृभिः ॥
एषां प्रयोगः कर्तव्यो देवदानवराक्षसैः ।
उद्धता ये च पुरुषाः शौर्यवीर्यबलान्विताः ॥

भरतः

आविद्धवक्रौ—नृत्तहस्तौ

अंसाभ्यां कूर्पराभ्यां च भुजाभ्यां च क्रमाद्यथा।
कुटिलाभ्यां विलासेन पताकौ वर्तितौ यदा॥
अवाङ्मुखतलौ ज्ञेयौ बुधैराविद्धवक्रकौ।

ज्यायनः

अंसकूर्परहस्ताग्रविलाससहितौ करौ।
अरालौ वा पताकौ वा न्यावृत्य भवतो यदा॥
अधस्तलौ तदा प्राहुर्हस्तावाविद्धवक्रकौ।
विक्षेपे वलने चैव प्रयोज्यौ निपुणैरिमौ॥

विप्रदासः

अंसकूर्परहस्ताग्रेतिस्थाने अंसकूर्परबाह्वग्रेति स्यात्।

आविद्धवर्तना

अविद्धवक्रयोर्यत्र बाहू व्यावर्तितौ क्रमात्।
आविद्धौ चेत्तदा सोक्ता धीरैराविद्धवर्तना॥

अशोकः

अविद्धवक्रयोः पाण्योर्वर्तते चेद्भुजौ क्रमात्।
आविद्धावन्तराक्षिप्तौ सा स्यादाविद्धवर्तना॥

कल्लिनाथः

आविद्धस्वस्तिका—गतिः

आविद्धस्वस्तिकान्वर्था।

देवणः

आवृत्तिकारिका—देशीतालः

नगणो भगणश्चैव जगणस्सगणस्तथा।
नगणश्च गुरुश्चेति भवेदावृत्तिकारिका॥ २० मात्राः

तालप्रस्तारः

आवृत्तिलक्ष्म—देशीतालः

सगणो जगणश्चैव नगणो भगणस्तथा।
सगणश्च गुरुश्चेति भवत्यावृत्तिलक्ष्मणि॥

तालप्रस्तारः

आवेगः—चित्राभिनयः

हृदि स्थाने तु मुकुलं पुरोभागे तु कर्तरी।
चालयित्वा तु चावेगे दर्शनीया बुधोत्तमैः॥

विनायकः

आवेगः—व्यभिचारिभावः

उत्पातवातवर्षाग्निकुञ्जरोद्भ्रमणप्रियाप्रियश्रवणव्यसनाभिघातादिभिः समुत्पद्यते। तत्रोत्पातकृतो विद्युदुल्कानिर्घातप्रपतनचन्द्रसूर्योपरागकेतुदर्शनकृतः। तमभिनयेत्सर्वाङ्गस्रस्तता-वैमनस्यमुखवैवर्ण्यविषादविस्मयादिभिः। वातकृतं तु अवकुण्ठनाक्षिपरिमार्जनवस्त्रसङ्ग्रहणत्वरितगमनादिभिः, वर्षकृतं तु सर्वाङ्गसंपिण्डनप्रधावनछन्नाश्रयमार्गणादिभिः, अग्निकृतं तु धूमाकुलनेत्रताङ्गसङ्कोचनविधूननातिक्रान्तापक्रान्तादिभिः, कुञ्जरोद्भ्रमणं तु त्वरितापसर्पणचञ्चलगमनभयस्तम्भवेपथुपश्चादवलोकनविस्मयादिभिः, प्रियश्रवणकृतं तु अभ्युत्थानालिङ्गनवस्त्राभरणप्रदानाश्रुपुलकितादिभिः, अप्रियश्रवणकृतं भूमिपतनविषमविवर्तनपरिधावनविलापनाक्रन्दनादिभिः, प्रकृतिव्यसनकृतं सहसापसर्पणशस्त्रचर्मवर्मधारणगजतुरगरथारोहणसम्प्रधारणादिभिरभिनयेत्। एवं सम्भ्रमात्मकावेगोऽष्टविधः। उत्तममध्यानां स्थैर्येण नीचानां चापसर्पणैरभिनेतव्यः।

इत्येतोऽष्टविधो ज्ञेय आवेगः संभ्रमात्मकः।
स्थैर्येणोत्तममध्यानां नीचानां चापसर्पणैः॥

अत्रार्ये—

अप्रियनिवेदनाद्वा सहसाह्यवधीरितस्य वचनस्य।
शत्रुक्षेपत्रासादावेगो नाम संभवति॥
अप्रियनिवेदनाद्यो विषादभावाहतयो अनुभावोस्य।
सहसारिदर्शनोद्वेत्प्रहरणं परिदेवनं कार्यम्॥

भरतः

आदिशब्देन छत्रकम्बलादीनां ग्रहणं।

आवेगस्सहसा जातस्संभ्रमो हि निगद्यते।
राजानिलाहितस्निग्धवृष्टिवह्निभ्य एव च॥
उत्पातादथवा नाशादुत्पत्तिस्तस्य दृश्यते।
शस्त्रनागाभियोगा हि दृश्यन्ते राजविड्वरे॥
पातादौ पांसुसंपाते दुःखसन्तत्यमित्रजे।
वह्निजे धूपसंपातस्त्रस्ततोत्पातजे भवेत्।
करिजे स्तुभयस्तम्भकम्पापसरणादयः॥

सर्वेश्वरः

आवेगः संभ्रमोऽतर्क्याद्विकर्तागमनोगिराम्।

संभ्रमः संक्षेपः। अतर्क्यमचिन्तितोपनतमिष्टमनिष्टं च। तत्रेष्टं देवतागुरुमान्यवल्लभसंपच्छ्रवणदृष्ट्यादि। अनिष्टमग्निभूकंपाद्युत्पातवातवर्षकुञ्जरचौरसर्पामनोज्ञश्रवणदर्शनादि। तत्राभ्युत्थानपुलकालिङ्गनवस्त्रादिप्रदानादयः प्रियाः। सर्वांगस्रस्ततामुखवैवर्ण्यपिण्डीभावप्रधावनाकुलनेत्रतात्वरितापसरणपश्चादवलोकनशास्त्रादिग्रहणोर्वीपतनकंपस्वेदस्तम्भादयोऽप्रियाश्च मानसाः। स्तुतिचाटुकाराशंसावाक्यादयः प्रियाः क्रन्दनपरिदेवनासंबद्धवचनादयश्चाप्रिया वाचिका विकाराः। यथायोगं प्रियाप्रियातर्क्यवस्तुजावेगस्यानुभावाः। सर्वेऽप्येते विकारा उत्तमस्य स्थैर्यानुविद्धा नीचस्य तु चपलानुविद्धा इति॥

रामचन्द्रः

**आवेगः**

अतः परतरं नान्यन्ममास्तीति त्वरान्विता।
एकाग्रा मानसी वृत्तिरावेग इति कीर्तितः॥

भावविवेकः

**आवेध्यम्—आभरणम्**

आवेध्यं कुण्डलादीह यत् स्याच्छ्रवणभूषणम्।

भरतः

**आवेष्टितम्—हस्तकरणम्**

तर्जन्याद्या यदाऽङ्गुल्यः कुर्वन्त्यावेष्टनं क्रमात्।
तलसम्मुखमावक्ष एति हस्तोऽपि पार्श्वतः।
आवेष्टितं तदा प्रोक्तं करणं नृत्तकोविदैः॥

अशोक.

**आशंसनम्—नाट्यालङ्कारः**

आशंसनमाशंसा। यथा—मालतीमाधवे श्मशानाङ्के, तत्पश्येय-मित्यादि माधववाक्यम्।

सागरः

**आशंसनम्— शिल्पकाङ्गम्**

दंपत्योर्योग्यसंपर्कप्रार्थनाशंसनं भवेत्।
यथा कुलेन कान्त्या च वचसेत्यादि कथ्यते॥

शारदातनयः

ईप्सितस्य दुर्लभस्याशंसनं आशंसा। यथा—श्मशानाङ्के, संभूयैवेत्यादि। मालतीमाधवे. ५, ९.

सागरः

**आशा**

विरोधो न स्फुटो मह्यं कालेनैतद्भवेदिति।
अनुपेक्षाक्षमत्वं यत्पुंसामाशां वदन्ति ताम्॥

भावविवेकः

**आशापुरी—रागः**

आशापुरी चिपास्यात्तु धैवतांगाप्युपाङ्गिका।

**आशावरी—रागः (सङ्कीर्णः)**

मल्लारी सैन्धवी तोडी योगादाशावरी भवेत्।

नारायणः

**आशीः—लक्षणम्**

यथा शास्त्रार्थसंपन्नां मनोरथसमुद्भवाम्।
अप्रार्थनीयामन्यां वा विदुस्तामाशिषं बुधाः॥

भरतः

यथा—पादाग्रस्थितया इत्यादौ (रत्नावल्यां) सर्वं वचनं नचाशीरलङ्कारः। स्तुत्या एव वर्णनीयत्वात्। अन्ये पठन्ति।

यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम्।
परापेक्षाव्युदासार्थं तन्निदर्शनमुच्यते॥

प्रसिद्धानां देवतानां परापेक्षा साध्याकाङ्क्षा। तस्माद्व्युदासः तत्संपत्त्या अत एव दृष्टान्तादस्य भेदः।

अभिनवः

यदाऽऽशास्त्यर्थसंपन्नं मनोरथसमुद्भवम्।
अप्रार्थनीयमन्यद्वा विदुस्तामाशिषं बुधाः॥

भरतः

यथा—मालतीमाधवे विधाता भद्रमित्यादिकामन्दकीवाक्यम्।

भोजः

**आशीः—नाट्यालङ्कारः**

इष्टावधारणमाशीः। यथा—सीते श्रेयसा वर्धस्वेत्यादिवाक्यम्।

सागरः

**आश्रयः—नाट्यालङ्कारः**

गुणवद्ग्रहणम्। यथा—विभीषणनिर्भर्त्सनाङ्के। राममेवाश्र-यिष्यामीति विभीषणवाक्यम्।

सागरः

**आश्रितरञ्जनी—मेलरागः (सुचित्रमेलजन्यः)**

(आ) स ग म प नि स.
(अव) स नि ध प म ग रि स.

**आश्लेषाभिनयः**

चक्रहस्तेन कर्तव्यः।

महाराष्ट्रे

**आश्लेषः—रसगतिः**

रसस्य वर्तमानस्य स्वसामग्रीसमेन च।
अन्येन सङ्गतिः स्याच्चेदयमाश्लेष उच्यते॥

शारदातनयः

**आश्लेषाहस्तः—चक्राकृतिराश्लेषा**

हस्तौ सन्धिषु संश्लिष्टौ तत्रैवाङ्गुष्ठकनिष्ठिके।
प्रसारिते द्वन्द्वभावाच्चक्रहस्तोऽयमिष्यते॥

शृङ्गार

**आश्वमेधिकः—तानः**

मध्यमग्रामे नारदीयतानः।

नि स ग म प ध?

नान्यः

आश्वासः—शिल्पकाङ्गम्

यथार्घ्यमर्घ्यमित्यादौ जामदग्न्यव्यतिक्रमः।
शोकप्रणोदनं वाक्यं यत्स आश्वास ईरितः॥

शारदातनयः

शोकापनोदनमाश्वासनम्। यथा—कोसलाङ्के सुमित्रावचनम्—अज्जे समस्सस इति।

सागरः

आश्वासबन्धः—श्रव्यंकाव्यम्

यस्सर्गबन्धतुल्यो निबध्यते प्राकृतेन शुद्धेन।
आश्वासकबन्धोऽसौ विज्ञेयस्सेतुबन्धादिः॥

भोजः

सेतुबन्धः प्रवरसेनकृतः। आदिशब्देन हरिविजयरावणविजयादयो गृह्यन्ते।

आसनदाननियमः

देवानां नृपतीनां च दद्यात्सिंहासनं द्विजाः।
पुरोधसाममात्यानां भवेद्वेत्रासनं तथा।
मुण्डासनं तु दातव्यं सेनानीयुवराजयोः।
काष्ठासनं ब्राह्मणानां कुमाराणां कुथासनम्॥
सिंहासनं तु राज्ञीनां देवीनांमुण्डमासनम्।
पुरोधोऽमात्यपत्नीनां दद्याद्वेत्रासनं तथा।
भोगिनीनां तथाचैव वस्त्रं चर्म कुथापि वा।
ब्राह्मणीतापसीनां च पट्टासनमथापि च।
वेश्यानामपि कर्तव्यमासनं हि मसूरकम्।
शेषाणां प्रमदानां च भवेद्भूम्यासनं द्विजाः।
लिङ्गिनामासनविधिः कार्यो व्रतसमाश्रयः।
ब्रसीमुण्डासनाप्रायं वेत्रासनमथापि वा।
होमे यज्ञक्रियायां च पित्र्यर्थे च प्रयोजयेत्।
समे समासनं दद्यान्मध्यमे मध्यमासनम्।
अतिरिक्तेऽतिरिक्तं च हीने भूम्यासनं भवेत्।
उपाध्यायस्य नृपतेर्गुरूणां चाग्रतो बुधैः।
भूम्यासनं तथा कार्यमथवा काष्ठमासनम्।
नौनागरथयानेषु भूमिकाष्ठासनेषु च।
सहासनं न दुष्येत गुरूपाध्यायपार्थिवैः।

भरतः

आसारणम्—

किन्नर्यां वामहस्तव्यापारः। तत्र द्रष्टव्यम्।

आसारितम्—गीतम्

चतुर्विधमिदं—कनिष्ठासारितं, लयान्तरं, मध्यमासारितं, ज्येष्ठासारितं—इति। बालासारितमिति कनिष्ठासारितस्य नामान्तरम्।

तालमानकलातानमूर्छनास्थानकर्मसु।
सर्वतः सार्यते यस्मात् तस्मादासारितं स्मृतम्॥

नान्यः

आसारितानां सामान्यलक्षणम्

आसारितानि सर्वाणि पिण्डीबन्धचतुष्टयम्।
षट्छम्यमष्टतालं त्रिसन्निपातं त्रिवस्तुकं चैव॥
सप्तदशयुग्मयुक्तं विद्यादासारितं सर्वम्।

युग्मं चच्चत्पुटः।

मुखं प्रतिमुखं चैव देहं संहरणं तथा।
अङ्गान्येतानि चत्वारि सर्वेष्वासारितेषु च॥

देहं—शरीरशब्दे द्रष्टव्यम्।

युग्मायुग्मप्रभेदेन तालस्तु बहुधा भवेत्।
प्रस्तारः पुनरेतस्य गुरुलघ्वक्षरान्वितः॥
स्थापनां तस्य वक्ष्यामि युग्मतालादिभेदकाम्।
छेदश्चच्चत्पुटस्यादौ कृत्वा सगुरुलाघवम्।
पञ्चपाणिं ततः कुर्याद्द्विरभ्यस्तं यथाक्रमम्॥

एकश्चच्चत्पुटः। द्वावुत्तराविलर्थः।

यथाक्षरस्य पूर्वस्य यथावद्विनिवेशयेत्।
शम्यातालं पुनश्चैव शम्यातालमथापि च॥
यथाक्षरं सन्निपातं पञ्चपाण्यौ तु योजयेत्।
तालं शम्या च तालं च शम्यातालस्ततः परम्॥
एष एव द्वितीयेऽपि पञ्चपाणिविधिः स्मृतः।
प्लुतछेदस्तु तस्येष्टः सन्निपाते प्रयोक्तृभिः।
एवं यथाक्षरं ज्ञेयं कनिष्ठासारितं बुधैः।
भवेद्वस्तुत्रयं चात्र सर्वेष्वासारितेषु च।
मुखं प्रतिमुखं चैव देहं संहरणं तथा।
अङ्गान्येतानि चत्वारि सर्वेष्वासारितेषु च।
वैदिक्यमिह संज्ञायां ध्रुवायास्त्वमिसंज्ञिताः॥
मुखस्य चोद्गीथसंज्ञा प्रस्तारः प्रतिमुखस्य च।
शरीरस्य प्रतीहारः संहारो निधनाभिधः।
शीर्षस्योपद्रवाभिख्या सामगीतिष्वयं क्रमः॥

मुखमुद्गीथसमानं—साम्नि प्रस्तारो गीते प्रतिमुखं भवति। गीते देहं प्रतीहारस्थानमाक्रमति। निधनं गीते संहारं भवति।

मुखस्योपोहनं तस्य युग्मः प्रतिमुखं भवेत्।
ओजश्शरीरसंहारौ ह्ययमङ्गविधिक्रमः।

नान्यः

उपोहने युग्मतालः। प्रतिमुखे च। मध्यमासारितेऽष्टौ कलाः। ज्येष्ठे षोडशकलाः। उपोहनानामाद्यन्तयोः द्वे द्वे गुरुणी भवतः।

कनिष्ठायामष्टौ लघवो मध्यभागे। मध्यमासारिते षोडशलघवः। लयान्तरे मध्ये द्वादश। ज्येष्ठे मध्ये विंशतिः। एतेषु चतुर्मात्राः कलाः। अन्त्ययोरेकैकं गुर्वक्षरं कर्तव्यम्। आसारितानि त्रयोदशेति केचित्। यथा—कनिष्ठं, लयान्तरं, मध्यमं, ज्येष्ठं, वृत्तिदक्षिणचित्रमार्गेषु प्रत्येकं द्वादश भवन्ति, ध्रुवासारितं त्रयोदश इति ॥

आसावरी—रागः

आसारी रागिणीत्युक्ता धग्रहा चापि धैवते।
न्यासः स्यादथवा प्रोक्ता करुणारसनिर्भरा ॥

अथवा,

ककुभायास्समुत्पन्ना धान्ता मांशग्रहा मता।
पञ्चमेनैव रहिता षाडवेति निगद्यते ॥

दामोदरः

आसावरीरागध्यानम्

श्रीरागभार्या। असावेरीतिनामान्तरम् ॥

श्रीखण्डशैलशिखरे शिखिपिञ्छवस्त्रा
मातङ्गमौक्तिकमनोहरहारवल्ली।
आकृष्य चन्दनतरोरुरगं वहन्ती
सासावरी वलयमुत्पलनीलकान्तिः ॥

दामोदरः

आस्कन्दितम्—मण्डलम्

दक्षिणो भ्रमरीं चारीं कुर्याद्वामोऽङ्घ्रिरड्डिताम्।
भ्रमरीं च तदन्यस्तु शकटास्यामतः परम् ॥
ऊरूद्वृत्तां च वामस्तु चारीमर्ध्यर्धिकाभिधाम्।
भ्रमरीं च ततः पादो दक्षिणस्पन्दिताभिधाम् ॥
वामाङ्घ्रिश्शकटास्यां तु विधायात्मतलेन चेत्।
स्फुटमास्फोटयेद्भूमिं तदास्कन्दितमुच्यते ॥

वेमः

आहार्यः—अभिनयः

आहार्यः स तु विज्ञेयः किरीटादिविभूषणैः
शोभामाहृत्य जनितो नटेऽनुकृतिः.........

कुम्भः

आहार्याभिनयः

नानावस्थाः प्रकृतयः पूर्वं नैपथ्यसाधिताः।
अङ्गादिभिरभिव्यक्तिमुपगच्छन्त्ययत्नतः ॥
आहार्याभिनयो नाम ज्ञेयो नेपथ्यजो विधिः।
चतुर्विधं तु नेपथ्यं पुस्तोऽलङ्कार एव च।
तथाङ्गरचना चैव ज्ञेयं सञ्जीवमेव च।

भरतः

अर्धोरुकादिकच्छैश्च शिरोवेष्टादिभूषणैः।
निजाहार्य इति प्रोक्तो भरताम्नायवेदिभिः ॥

शृङ्गा

आहिरी—मेलरागः

तोडीमेलजोऽयं रागः ॥

आहिर्यां तु समारोहे रिषभं वर्जयेत्पुनः।
गान्धारधैवतौ तत्र श्रुतियुक्ताविती्रितौ ॥

परमेश्वरः

आहिरीरागध्यानम्

कुसुमशयने शयन् वीणारसोल्लसिताननां
स्फटिकचषके मध्वाधारां निमीलितलोचनाम्।
वरयुवतिहस्ताग्राब्द्वालचालनभासितां
मम हृदि सदाध्याये सौभाग्यरूपघनाहरीम् ॥

रागसागरः

आहीरी—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स म ग म प ध नि स.
(अव) स नि ध प म ग रिं स.

आह्वानप्रकारः

देवानामपि ये देवा महात्मानो महर्षयः।
भगवन्निति ते वाच्याः यास्तेषां योषितस्तथा ॥
आर्येति ब्राह्मणं ब्रूयात् महाराजेति पार्थिवम्।
उपाध्यायेति चाचार्यं वृद्धं तातेति चैव हि ॥
नाम्ना राजेति वा वाच्या ब्राह्मणैस्तु नराधिपाः।
तत् क्षाम्यं हि महीपालैर्यस्मात्पूज्या द्विजाः स्मृताः ॥

भरतः

इङ्गितम्—शृङ्गारचेष्टा

हृदयावेगतः कोऽपि विशेषश्चेष्टितस्य यः।
तदिङ्गितमिति प्रोक्तं मुनिना हावावेदिना ॥

कुम्भः

इच्छा

इदं मे स्यादिदं मेऽस्यादिति भेदविकल्पिता।
मानसी साध्यविषया वृत्तिरिच्छेति कथ्यते ॥

भावविवेकः

इडा—तानः

षड्जग्रामे सपहीनौडुवः।
नि ध म ग रि.

कुम्भः

इडावान्—देशीताल:
यतिलमद्वितीयाभ्यां इडावान्संप्रकीर्तितः।
०।००।
दामोदरः

इतिवृत्तम्
इतिवृत्तं तु नाट्यस्य शरीरं परिकीर्तितम्।
पञ्चभिस्सन्धिभिस्तस्य विभागस्संप्रकल्पितः॥
कुम्भः

इतिवृत्तम्
इतिवृत्तं द्विधाचै व बुधस्तु परिकल्पयेत्।
आधिकारिकमेवं स्यात् प्रासङ्गिकमथापरम्॥
यत्कार्यं विफलप्राप्त्या समर्थं परिकल्प्यते।
तथाधिकारिकं ज्ञेयमन्यत्प्रासङ्गिकं विदुः॥
भरतः

इतिहासः
इतिरेवमर्थे प्रत्यक्षनिर्देशं द्योतयति हः इहशब्द आगमः। आसनमासः। एवं प्रकाराः प्रत्यक्षपरिदृश्यमाना आगमिकार्थाः कर्मफलसम्बन्धस्वभावा यत्रासते स इतिहासः॥
अभिनवगुप्तः

इतिहासाश्रयम्—कथाशरीरम्
वृत्तदेवादिचरितसंश्रितता—इतिहासाश्रयम्।
यथा—कुमारसंभवः, हयग्रीववधादयः। ते ऐतिहासिकं चरितमावेदयन्ति।
भोजः

इन्दुमुखी—चतुर्दशाक्षरवृत्तम्
वसन्ततिलकमेव रुद्रस्वामिना सैतवमते इन्दुमुखीत्युक्तम्॥

इन्दुशेखरः—देशीताल:
नगणो द्त्रयं मश्च सगणश्चेन्दुशेखरे।
१४॥ मात्राः।
तालप्रस्तारः

इन्द्रकुण्डली—देशीताल:
इन्द्रकुण्डलितालेतु सलपामलपोलगौ।
पमपाः पौलपौ पस्तः प्लुतौ तौ तगणस्तथा॥
लपौ तः प्लुतलघुगाः नगणो गुरुरेव च।
चत्वारो लघवः शब्दाः प्रान्ते गेयं विपश्चिता॥
ऽऽँऽऽऽऽऽ। ऽँ। ऽऽऽऽऽऽऽऽऽँ। ऽँऽऽँ॥ ऽऽऽँ॥ ऽ। ऽ॥ ऽ। ऽँ॥ ऽऽँ। ऽ। ऽ॥॥
दामोदरः

इन्द्रकोदण्डः—देशीताल:
इन्द्रकोदण्डके तदा।
दलगा गलदास्तत्रद्यन्तान्तसविरामदौ
लक्ष्मणः

इन्द्रक्री—उपाङ्गराग:
इन्द्रक्री षड्जरहिता रिन्यासा धैवतग्रहा।
भट्टमाधवः

इन्द्रक्री—क्रियाङ्गराग:
धैवतांशग्रहेन्द्रक्री रिंन्यासा षड्जवर्जिता।
रसे नियुक्ता मुनिभिः सबीभत्से भयानके॥
कुम्भः

इन्द्रघण्टिकः—देशीताल:
सगणो द्रुतयुग्मं लो गप्लुतौ चेन्द्रघण्टिके।
११ मात्राः।
तालप्रस्तारः

इन्द्रनीलः—वर्णालङ्कारः
यथा—सरिगम, गरि, सरिगरि, सरिगम, रिगमप, मग, रिगमप, रिगमप, गमपध, पम, गमपम, गमपध, मपधनि, धप, मपधप, मपधनि, पधनिस, निध, पधनिध, पधनिस।
प्रतापसिंहः

इन्द्रवज्रा—एकादशाक्षरच्छन्दः
नवमं सप्तमं षष्ठं तृतीयं च भवेल्लघु।
एकादशाक्षरे पाद इन्द्रवज्रेति सा स्मृता॥
ततजगगाः। (उ-म्) त्वं दुर्निरीक्ष्या दुरतिप्रसादा।
भरतः

इन्द्रवज्रा—एकादशाक्षरवृत्तम्
तत ज ज गाः।
भरतः

इन्द्रशिखण्डि—देशीताल:
प्लुतो गुरुः प्लुतो गुरु प्लुतो गुरुः प्लुतो लघु नसौ लघुः प्लुतः क्रमाचेन्द्रशिखण्डतालके। ३० मात्राः
तालप्रस्तारः

इन्द्रोत्सवः—सङ्गीतशृङ्गाराङ्गम्
शक्रमह इन्द्रोत्सवः।
भोजः

इभविलसितम्—षोडशाक्षरवृत्तम्
ऋषभगजविलसितमेवेदम्।

इषुः—तानः
पड्जग्रामे सपर्हानौडुवः
ग रि नि ध म.

कुम्भः

ईडावान्—देशीतालः
यतिलग्नद्वितीयाभ्यामीडावान्संप्रकीर्तितः ।
यतिलग्ने द्रुतौ लश्च दोलो प्रोक्तो द्वितीयकः ॥

वेदः

ईडावानुडुपम्—देशीनृत्तम्
यतिलग्नद्वितीयाभ्यामीडावान्संप्रकीर्तितः ।
यतिलग्ने द्रुतो लश्च दोलो प्रोक्तो द्वितीयकः ।
तालेनानेन गदितो ईडावानुडुपं बुधैः ॥

वेदः

ईशमनोहरी—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि ग म प म प ध नि स.
(अव) स नि प म ग म रि स.

ईश्वरी—श्रुतिः
तारषड्जस्य प्रथमा श्रुतिः ॥

पार्श्वः

ईहामृगः—रूपकम्
कैशिकीवृत्तिहीनः, अङ्कचतुष्टययुतः, दिव्यावलाकारणप्रवृत्त-युद्धः, प्रसिद्धपुरुषः, विप्रत्ययकारकः, षण्णायकः षड्रसः, वस्तुशृङ्गारयुक्तः, नायकसङ्ग्रामयुक्तः, ॥ अस्योदाहरणं कुन्द-शेखरविजयः, ऊर्वशीमदनं च ॥

सागरनन्दी

लक्षणे अवलाकारणेत्यत्र दिव्यावलात्कारप्रवृत्तेति शुद्धः पाठः स्यात् ।

ईहामृगस्येतिवृत्तं प्रख्यातोत्पाद्यमिश्रितम् ।
मुखप्रतिमुखोपेतं तथा निर्वहणान्वितम् ॥
धीरोद्धतश्च प्रख्यातो दिव्यो मर्त्योऽथ नायकः ।
बलाद्दिव्याङ्गनाहेतुप्रवृत्तोद्दामसङ्गरः ।
गणशः षट्चतुःपञ्चनायकप्रतिनायकः ॥
यथा समरसंरंभतुल्यवृत्तिरसाश्रयः ।
वृत्तित्रययुतो हीनः कैशिक्या सहितोऽपि वा ॥
भयबीभत्सरहिताः षडेवात्र रसाः स्मृताः ।
अङ्काश्चत्वार एवात्र सविष्कंभप्रवेशकाः ॥
व्याजान्निवर्तितोद्दामसंरभारंभिसङ्गरः ।
वधः प्राप्तस्य नो कुर्यान्नेतुः कापि यशस्विनः ॥
उक्ता व्यायोगधर्मा ये ते स्युरीहामृगेऽपि च ।
व्यायोगस्य विशेषोऽयमस्त्रीहेतुकसङ्गरः ॥
ईहामृगश्च कथितो यथा कुसुमशेखरः ।

शारदातनयः

विप्रत्ययकारकेति । विगतानि प्रत्ययकारणानि विश्वासहेतवो यत्र । तेनैक एवाङ्कः । नायकास्तु द्वादश समवकारातिदेशेन व्यायोगे तल्लाभात् । व्याजादिति । फलायनादिभिः । ईहा चेष्टा मृगस्येव स्त्रीमात्रार्था यत्र स ईहामृगः ।

अभिनवगुप्तः

उकथः—तानः
नि—लोपः षाडवः
म ग रि स ध प.

कुम्भः

उग्रकरः—अङ्गहारः
हस्तौ तु नागबन्धाख्यावुग्रा दृष्टिरुदीरिता ।
पादाग्राभ्यां च सरणं चादौ चोग्रकरस्य तु ॥
हस्तौ सिंहमुखाभिख्यौ उर्ध्वाधश्च प्रचालितौ ।
अनुवृत्तदृशाभूयाल्लोलनाख्यपदौ तदा ॥
एतादृशक्रमं कुर्यात्तृतीये चोग्रभावजे ॥

नन्दीश्वरः

उग्रता—चित्ताभिनयः
अपराधावमानाभ्यां चौर्याभिग्रहणादिभिः ।
असत्प्रलापनाद्यैश्च कृतं चण्डत्वमुग्रता ॥
त्रिपताकं मुखस्थाने बध्वा तु मुखदर्शने ।
नयने त्वर्धमुकुलो बद्धश्चेदुग्रभावने ॥
किञ्चित्सूच्याख्यहस्तस्तु अङ्गप्रत्यङ्गचालितः ।
स्वेदभावे दर्शयन्ति भरतागमवेदिनः ॥

विनायकः

उग्रता—व्यभिचारिभावः
चौर्याभिग्रहणनृपापराधासत्प्रलापादयो विभावाः ।
वधबन्धनताडननिर्भत्सनादयोऽनुभावाः ।

भरतः

चण्डतैव हि सर्वेषामुग्रता विदुषां मता ।
दुष्टापवाददौर्मुख्यचौर्यात्सञ्जायते परम् ॥
अत्र स्वेदशिरःकम्पतर्जनीताडनादयः ।

सर्वेश्वरः

उग्रा—श्रुतिः
निषादस्य प्रथमा श्रुतिः ॥
ऋषभस्य तृतीया श्रुतिः ।

उचितभ्रमरी —भ्रमरी

समपादस्थितस्तिर्यक् शरीरं भ्रमयेद्यदि ।
उचितभ्रमरीमेनां आचख्युर्नृत्तवेदिनः ॥
वैशाखस्थानके यद्वा स्थितिस्तिर्यक् भ्रमन् करौ ।
दण्डपक्षौ विधायोर्वीं मुहुर्वामेन पाणिना ॥
आस्पृशन् कुरुते गात्रभ्रमणं मण्डलाकृति ।
यत्र सा चापि नृत्तज्ञैरुचितभ्रमरी स्मृता ॥

वेमः

उच्चः—पाठ्यालङ्कारः

उच्चोनाम शिरःस्थानगतस्तारस्वरः। स च दूरस्थाभाषण-विस्मयोत्तरोत्तरसञ्जल्पदूराह्वानत्रासनाबाधादिषु ।

भरतः

उच्चयः—करणधातुः

चतुर्लान्तगुरु(रु)च्चयः ।

शार्ङ्गः

चत्वारो लघवः स्युश्च प्रहाराः पश्चिमो गुरुः ।
यत्र तन्त्र्यां स विज्ञेयस्तद्ज्ञैरुच्चयसंज्ञकः ॥

नान्यः

उच्चाटनः—तानः

षड्जग्रामे रिपहीनौडुवः
स नि ध म ग.

कुम्भः

उच्चितिका—अवनद्धे जातिः

उद्वृत्तोच्छ्वसिता यस्यां हतिस्सान्त्वेन नासिका ।
हास्ये रसे तु सा ज्ञेया जातिरुच्चितिका बुधैः ॥

नान्यः

उच्चितिका—पुष्करवाद्ये जातिः

घें टां दों हं णुणणं चैभिर्योत्यक्षरैस्तु संबद्धा ।
हास्यार्थे उच्चितिका जातिर्वाद्ये तु बोद्धव्या ॥

भरतः

घें टां दोहां णुणहां एभिर्यात्वक्षरैस्तु संबद्धा ।
साम्यार्थे उच्चितिका जातिर्वाद्ये तु बोद्धव्या ॥

अभिनवगुप्तपाठः

नेपालपाठे साम्यार्थे इत्यत्र हास्यार्थे इति पाठभेदः ॥

उच्चैःश्रवहस्तः

पुरो भागे पताकस्तु तस्योपरि कपित्थकः ।
उच्चैःश्रवाख्यहस्तोऽयं कथितो भावकोविदैः ॥
पुरो भागे त्वयं हस्त उच्चैःश्रवर्निरूपणे ।

विनायकः

उच्छितिकम्—बाहुभूषणम्

उच्छ्रितौ—स्कन्धौ

उच्छ्रितौ हर्षमूर्छयोः ।

कुम्भः

विनियोगस्तूच्छ्रितयोर्गदितो हर्षगर्वयोः ।

चित्रदासः

मदात्समुन्नतः स्कन्ध उच्छ्रितः परिकीर्तितः ॥

सोमेश्वरः

उच्छ्वासः—शिल्पकाङ्गम्

आश्वासनं विह्वलस्य यत्स उच्छ्वास ईरितः ।
प्रीतिर्नाम सदस्यानामित्यादिवचनं यथा ॥

शारदा

मुग्धस्योत्थानमुच्छ्वासः—यथा विक्रमोर्वशीये अये समुच्छ्वासितमित्यादि (४) ॥

सागरः

उच्छ्वासः—श्वासः

आघ्राणे कुसुमादीनामुच्छ्वासः परिकीर्तितः ।

अशोकः

उडुवर्णी—वाद्यप्रबन्धः

निर्जैर्या तद्धिथोंटेभिर्व्यापकैरक्षरैस्तथा ।
पाटै र्वा रचिता किञ्चिद्विलम्बितलयाश्रया ॥
देकारालङ्कृताद्यन्ता वदन्त्युडुवर्णाममूम् ॥

शार्ङ्गः

वर्णैश्च तद्धि थों टेभिरथवा व्यापकाक्षरैः ।
यद्वा पाटैः कृता किञ्चिद्विलम्बितलयान्विता ॥
आद्यन्तकृतदेंकारा बुधैरुडुवर्णी स्मृता ॥

वेमः

उडवः—वाद्यप्रबन्धः

उडवस्सलयात्तालाद्विताळाच्च लयोज्यतात् ।

शार्ङ्गः

उडुपशृङ्खला—देशीनृत्तम्

उडुपानि द्वादश। लावणं, मित्रं, नेत्रं, जारुमानं, तुलं, वेनकतुलं, चुल्लकं, पसरं, बक्रं, हुलं, होय्ल्लु, कट्टणं-इति ।

वेदः

उडुपानि—देशीनृत्तानि ।

द्वादशविधानीमानि।

नेरिः करणनेरिश्च चिन्नमिलं तदाभवेत् ।
तलं च जारमानं च मूरूपिलमुरू तथा ।

हुलं च लावणी ज्ञेया कर्तरी तुल्लकं तथा।
प्रसरं च द्वादश स्युरुडुपानि यथाक्रमम्।

उडुपशब्दस्य रूपान्तरमुरुवुः। रूपशब्दस्य तद्भवौ द्वावपि।

दामोदरः

## उडुवः—पाटवाद्यम्

दक्षिणेन सकोणेन पाणिनालुलितेन च।
तलेन वामहस्तस्य ताडनाच्चोडुवो भवेत्॥

वेमः

## उडुवः—वाद्यप्रबन्धः

ताला लयान्विता यत्र वितालश्च लयोज्झितः।
वाद्यते स तु वाद्यज्ञैरुडुवः परिकीर्तितः॥

वेमः

## उढ्रमागधी—प्रवृत्तिः

अङ्गा वङ्गाः कलिङ्गाश्च वत्साश्चैवोढ्रमागधाः।
पौण्ड्रनेपालकाश्चैव अन्तर्गिरवहिर्गिराः॥
तथा प्लवङ्गमा ज्ञेया मलदामल्लवर्तकाः।
ब्रह्मोत्तरप्रभृतयो भार्गवा मार्गवास्तथा॥
प्राग्ज्योतिषाः पुलिन्दाश्च वैदेहास्ताम्रलिप्तकाः।
प्राङ्गाः प्रावृतयश्चैव युञ्जन्तीवोढ्रमागधीम्।

भरतः

## उत्कटम्—देशीस्थानम्

स्फीतावश्लिष्टभूभागे ताभ्यां पार्ष्ण्योस्समागमः।
जानुनी चोर्ध्वविश्लिष्टे पादौ स्पृष्टमहीतलौ॥
यत्रैतदुत्कटं स्थानं भवेत्सन्ध्याजपादिषु।

वेमः

देवादितर्पणे सन्ध्याजपहोमादिषु स्मृतम्।

ज्यायनः

## उत्कण्ठा

अलब्धविषये रागे वेदनामहती तु या।
संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधाः॥

भावविवेकः

## उत्कण्ठा—शिल्पकाङ्गम्

उत्कण्ठा माधवस्यापि तत्पश्येयमितीर्यते।
(मालतीमाधवे—५. २६)

शारदातनयः

## उत्कण्ठितम्—दर्शनम्

रागारुणस्फुरद्बाष्पापाङ्गमुत्कण्ठितं विदुः।

शारदातनयः

प्रेम्णा रक्तं स्फुरद्बाष्पापाङ्गमुत्कण्ठितं स्मृतम्।

वेमः

## उत्कीर्तनम्—नाट्यालङ्कारः

कर्तव्यकार्योपक्षेपः। यथा—वेण्यां प्रथमेऽङ्के आ आमन्त्रयितव्या, इति भीमवाक्यम्।

सागरः

## उत्कृतिच्छन्दोवृत्तानि

षट्कोट्यस्तु सहस्राणां शतानि ह्येकसप्ततिः।
अष्टौ चैव सहस्राणि शतान्यष्टौ तथैव च॥
चतुष्षष्टिस्तु वृत्तानि ह्युत्कृतावपि संख्यया॥ ६७१०८८६४

भरतः

## उत्क्षिप्तम्—गर्भसन्ध्यङ्गम्

बीजोद्भेदनमुत्क्षिप्तम्। यथा—बालचरिते—

राज्यं जनकराजेन्द्र सुताप्राप्तिपणीकृतम्।
सुग्रीवस्य कपेर्दत्तं रामेण हतवालिना॥

अत्र गर्भबीजस्य सिद्धेरुद्भेदनं कृतम्।

सागरः

इदमङ्गं संक्षिप्तिः आक्षेपः, आक्षिप्तिः—इत्यादिनामभिः पठ्यते।

## उत्क्षिप्तम्—शिरः

ऊर्ध्ववक्त्रं शिरो ज्ञेयमुत्क्षिप्तं तत्प्रयुज्यते।
दर्शने तुङ्गवस्तूनां चन्द्रादिव्योमगामिनाम्॥

शार्ङ्गः

ऊर्ध्वीकृतमुखं ज्ञेयमुत्क्षिप्तं नाम मस्तकम्।
बलाग्रहे मृगादाने चामरस्यापि धारणे॥
एतदेवाल्पमुत्क्षिप्तं ज्ञेयमुद्वाहिताख्यया॥
उच्चस्थवस्तुवीक्षायां चन्द्रतारादिदर्शने।
दिव्यास्त्राणां प्रयोगे च विचारेऽर्थस्य चेष्यते॥

विप्रदासः

## उत्क्षिप्तः—पादाङ्गुष्ठः

उन्मुखीकृतमुत्क्षिप्तं प्राहुर्नखमुखादिषु।

ज्यायनः

नखमुखा=चारी॥

## उत्क्षिप्ता—चरणाङ्गुल्यः

नवोढा लज्जिते तूर्ध्वक्षेपादुत्क्षिप्तिका मुहुः।

कुम्भः

उत्क्षिप्ता:—पादाङ्गुल्य:
वारं वारं समुत्क्षेपादुत्क्षिप्ता गदिता बुधैः।
अङ्गुल्यो विनियुज्यन्ते नवोढायास्त्रपाभरे ॥
सोमेश्वरः

उत्क्षिप्ता—तन्त्रीसारणा
स्पृशन् स्पृशन् समुत्सृज्य तन्त्रीमुत्प्लुत्य सारणाम्।
यद्याति सोदितोत्क्षिप्ता,
पार्श्वदेवः

उत्पत्य यां परित्यज्य स्पृष्ट्वा स्पष्टां तु तन्त्रिकाम्।
याति तन्त्र्यन्तरं या तु सोत्क्षिप्ता सारणा भवेत्।
कुम्भः

उत्क्षिप्ता—भ्रूः
पृथग्वा युगपद्वापि प्रोन्नता भ्रूर्भवेद्यदि।
उत्क्षिप्ता सा समाख्याता ॥
वितर्कामर्षहेलासु निकटश्रवणेऽपि च।
एकोत्क्षिप्ता प्रयोक्तव्या भ्रूलता नाट्यकोविदैः ॥
ऊर्ध्वस्थवीक्षणे हर्षे विस्मये दूरदर्शने।
उत्क्षिप्ते द्वे प्रयोक्तव्ये प्रयोगनिपुणे भ्रुवौ ॥
सोमेश्वरः

युगपद्दोषपर्यायाद्या चोर्ध्वं समुदञ्चिता।
उत्क्षिप्ता सा भवेत्तत्र प्रेमकोपे विवर्तिते ॥
हेलायामपि लीलायां दर्शने श्रवणे तथा।
भ्रुवं समुत्क्षिपेदेकं यथासूयाजुगुप्सयोः ॥
रोषे हर्षे विस्मये च भ्रुवौ द्वे च समुत्क्षिपेत् ॥
वेमः

उत्क्षेपः—पादपाठः
पादस्यान्यस्य जान्वन्तं पुरतः पृष्ठतस्तदा।
आकुञ्चितस्य पादस्योत्क्षेपादुत्क्षेप उच्यते ॥
वेमः

उत्क्षेपः—भ्रुवः कर्म:
भ्रुवोरुद्गतिरुत्क्षेपः सममेकैकशोपिऽ।
भरतः

उत्तमगायकः
एवं विधैस्तु गमकैः प्रयोगैर्हृदयोत्थितैः।
युक्तं गायति यो गीतं संप्रयोगविधान्वितः ॥
ध्वनिं विधाय यो गीतं श्लक्ष्णं गायति गायनः।
गायकेपूत्तमो ज्ञेयः सवर्णोद्धरणान्वितः ॥
श्वासं निरुन्ध्य सुचिरं नादं गायति विस्तृतम्।
उत्तमो गायकः ख्यातो गेये निर्जवनान्वितः ॥
सोमेश्वरः

उत्तमगीतम्
निरन्तररसोदारं नानाभावविभूषितम्।
श्राव्यं हृद्यमनुद्वेगमुत्तमं गीतमुच्यते ॥
सोमेश्वरः

उत्तरम्—सप्तगीतभेदः
अथादावुत्तरस्य स्यान्मुखं प्रतिमुखं तदा।
उल्लोप्यकवदन्तश्च भवेदनियमस्तु सः ॥
द्विकले पञ्चपाणौ तु शाखाङ्कुरस्तु पूर्ववत्।
तयोर्मध्ये प्रयोक्तव्यं पञ्चपाणौ तु शीर्षकम् ॥
पराणि द्वादशाङ्गानि स्युः कार्याण्यपराणि षट्।
रोविन्दकवदत्रान्यत्पादाकारविवर्जितम् ॥
दत्तिलः

तयोरिति। शाखाप्रतिशाखयोः।

उत्तरगान्धारी—मूर्छना
गान्धारग्रामस्य चतुर्थी मूर्छना
गान्धार्यास्तूत्तरं यस्माद्वषष्टेयं मूर्छना ततः।
धैवतोत्तरगान्धारा वासवश्चात्र दैवतम् ॥
(आ) ध नि स रि ग म प.
(अव) प म ग रि स नि ध.
नान्यः

उत्तरगूर्जरी—मेलरागः
औत्तरा गूर्जरी ज्ञेया शुद्धगा पूर्ववत्सदा।
प्रथमप्रहरोत्तरगेया ॥
अहोबिलः

पूर्ववत्—दक्षिणगूर्जरीवत् ॥

उत्तरफल्गुनीहस्तः
उत्तरा घण्टाकृतिः
उत्तरायां च शिखरः किञ्चिच्चलितरूपकः ॥
शृङ्गा

उत्तरफल्गुन्यभिनयः
शिखरहस्तस्य स्वल्पकम्पनेन कर्तव्यः।
महाराष्ट्र

उत्तरभाद्राभिनयः
स्वस्तिकीकृतसूचीहस्तेन कर्तव्यः।
महाराष्ट्र

**उत्तरभाद्राहस्तः**

सूचिः पार्श्वे द्विधा स्वस्तिकाकृतिः ।

सूक्ष्म

**उत्तरमन्द्रा—मूर्छना**

इयं षड्जग्रामे प्रथमा मूर्छना ॥
(आ) स रि ग म प ध नि.
(अव) नि ध प म ग रि स.

पण्डितमण्डली

षड्जेतूत्तरमन्द्रा स्यान्मन्द्रश्चात्रोत्तरस्वरः ।
तस्मादुत्तरमन्द्रेयं यक्षश्चात्राधिदैवतम् ॥

नान्यः

**उत्तरा—मूर्छना**

सुभद्रग्रामे प्रथमा मूर्छना ।
सुभद्रं ग्राममासाद्य यदाद्यो याति मूर्छनाम् ।
स्वरः स्यादुत्तरा नाम मूर्छना सा कविप्रिया ॥

वादिमत्तः

नारदशिक्षायामुत्तरमन्द्रेति नामान्तरमस्या दृश्यते ।

**उत्तरादिद्विरधरः—धातुः**

उत्तरादिद्विरधरे मन्द्रतारो द्विरिष्यते ।

शार्ङ्गः

**उत्तरादिद्विरधरः—वीणायां धातुः**

पूर्वं एको मन्द्रः । ततो द्विस्तारः ।

**उत्तराद्यधरान्तः—वीणायां धातुः**

आदौ मन्द्रः : (उत्तरः) अन्ते तारः (अधरः)

**उत्तरायता—मूर्छना**

विधेयाशब्दे द्रष्टव्यम् ।
उत्तरोत्तरतश्चास्यामायतो हि स्वरो यतः ।
तेनेयं मूर्छना प्रोक्ता धैवते चोत्तरायता ॥

नान्यः

इयं षड्जग्रामे तृतीया मूर्छना ।
(आ) ध नि स रि ग म प.
(अव) प म ग रि स नि ध.

पण्डितमण्डली

**उत्तरी—मेलरागः (वाचस्पतिमेलजन्यः)**

(आ) स ग म प ध नि स.
(अव) स नि ध म ग स.

**उत्तानभ्रमरी—भ्रमरी**

उत्प्लुत्य दक्षिणस्योरुं सशब्दं ताडयेन्मुहुः ।
तलेन वामपादस्य यत्र कायं प्रदक्षिणम् ॥
भ्रामयेत्सा बुधैर्देश्या उत्तानभ्रमरीति सा ।

ज्यायनः

**उत्तानवञ्चितौ—नृत्तहस्तौ**

न्यञ्चितौ कूर्परांसौ तु तिर्यग्भागविनिस्सृतौ ।
त्रिपताकौ करौ नृत्ते स्यातामुत्तानवञ्चितौ ॥

सोमेश्वरः

अंसफालकपोलानां मध्येऽन्यतमदेशगौ ।
अन्योन्याभिमुखावीषत्तिर्यञ्चौ कूर्परांसयोः ॥
मनाक्कलितयोरूर्ध्वतलौ स्थित्वा क्षणं करौ ।
त्रिपताकौ प्रचलितौ प्रोक्तावुत्तानवञ्चितौ ॥

अशोकः

**उत्तानितम्—हस्तः**

उत्तानितमधोवामहस्तमङ्गुष्ठजृम्भितम् ।

**उत्तेजनम्—नाट्यालङ्कारः**

स्वकार्यसिद्धये परस्मिन् शत्रुवधायानक्षरेण प्रेरणावाक्यम् । यथा—कीचकभीमाङ्के, सोऽपि कीचक इति द्रौपदीवाक्यम् ।

सागरः

**उत्थापकः—सात्वत्यङ्गम्**

अहमप्युत्थास्यामि त्वं तावद्दर्शयात्मनश्शक्तिम् ।
इति सङ्कल्पसमुत्थः तद्ज्ञैरुत्थापको ज्ञेयः ॥

भरतः

उत्थापयति यो मानसः परिस्पन्दः स तावदुत्थापकः ।

तत्सूचको व्यापारक्रम उपचारस्तथोक्तः । यथा—वेणीसंहारे स्पृष्टा येन शिरोरुहेषु इत्यादिभीमवाक्यम् ।

अभिनवः

सङ्घर्षादाश्रयाद्वापि प्राज्ञैरुत्थापको मतः ।
अरे रे प्रहरस्व पश्यामस्ते शक्तिमित्यादि ॥

सागरः

**उत्थापनम्—पूर्वरङ्गाङ्गम्**

कीर्तनाद्देवतानां च ज्ञेयो गीतविधिस्तथा ।
अतः परं प्रवक्ष्यामि ह्युत्थापनविधिक्रियाम् ॥
यस्मादुत्थापयन्त्यादौ प्रयोगं नान्दिपाठकाः ।
पूर्वमेव तु रङ्गेऽस्मिंस्तस्मादुत्थापनं स्मृतम् ॥

भरतः

अपसारितायामेव यवनिकायां उत्थापनाङ्गमध्ये ह्यस्यैककलः पाठ्यसहितः प्रयोगः वैचित्र्यार्थं भविष्यति । रङ्गे यः पूर्वप्रयोगः कृतः प्रत्याहारादिस्तं यस्मादुत्थापयन्ति फलस्वरूपनिरूपकपाठ्यतदभिनयादिना स्फुटीकुर्वन्ति तस्मादित्यर्थः । पाठ्यावकाशदानार्थमेव चावेदं देवताविनीतिफलविशेषाभिधानम् । अन्यथा—देवतापरितोषायैतत्प्रयोज्यमिति सामान्येन वक्तव्यं स्यात् । विशेषोपदेशस्य प्रयोगे विफलत्वात् ।। आसारितक्रियापर्यन्तं नवाङ्गान्युक्तानि । "विघाट्य वै यवनिकां" इत्यादिना यद्गीतकं इत्याद्यङ्गदशकं दर्शितम् । तत्क्रमेण लक्षयति कीर्तनादित्यादि । कीर्तनं स्तुतिः । तस्मात्पाठ्याद्धेतोः । ततः परं शुष्काक्षरनिर्वृत्तं च शब्देन निर्गीतिकानामन्यतमं वर्धमानं वा । तत्र प्रत्याहारादीनि चेदत्र प्रयोज्यानि तत्पूर्वरङ्ग इत्यनुवादोऽयं स्यात् । क्रमस्य सिद्धत्वात् । नान्दिपाठका इति तदुपलक्षितपूर्वक्रमद्वारेणैव पुराणकवयो लिखन्तिस्म—नान्द्यन्ते सूत्रधार इति ।

अभिनवः

उत्पलमालिका—दशाक्षरच्छन्दः सा वर्तते

दशाक्षरकृते पादे त्रीण्यादौ त्रीणि नैधने ।
यस्या गुरूणि सा ज्ञेया पङ्क्तिरुत्पलमालिका ।
(कुवलयमालेति नामान्तरम्)(उ-म) सुश्लिष्टा कुवलयमालेयम् ।

भरतः

उत्पलिनी—रागः

संपूर्णा धैवतांशा च ग्रहणन्यासमध्यमा ।
निमन्द्रा च सतारा च नाम्ना चोत्पलिनी मता ।।
मध्यमांशो यतस्तस्मात् शृङ्गारे विनियुज्यते ।

जगदेकः

उत्पली—रागः

अथोत्पलीसंज्ञकस्तु रागः पूर्णोऽशधैवतः ।
मध्यग्रहन्यासयुतस्तारः पञ्चमषड्जयोः ।।
निषादमन्द्रश्च तथा कथितो रागवेदिभिः ।

हरिः

उत्पाद्येतिवृत्तम्—कथाशरीरम्

कविमनीषाप्रकल्पितचतुर्वर्गावबोधहेतुर्दिव्यादिचरितं कविवृत्ते । यथा—चन्द्रापीडपुण्डरीकादिचरितं कादम्बर्याम् ।

भोजः

उत्प्रेक्षा

ईदृशान्वययोग्यास्तु पदार्था इति तत्पराः ।
उत्प्रेक्षेति च सैवोक्ता प्रायेणैवेदमीदृशी ।।

भावविवेकः

उत्प्लुतभ्रमरी

स्थित्वा समाभ्यां पादाभ्यामुत्प्लुतं भ्रामयेद्यदि ।
सप्ताङ्गमन्तरे यस्य उत्प्लुतभ्रमरीत्वसौ ।।

नाट्यदर्पणे

उत्प्लुतिकरणसमुद्धारकः—देशीतालः

ततश्चोत्प्लुतिकरणसमुद्धारकसंज्ञिते ।
अष्टकृत्वो गलाविष्टौ ततो विन्दुश्शरस्स्मृतः ।

ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ऽ । ० ।

गोपतिप्पः

उत्फुल्लम्—दर्शनम्

स्फुरद्विश्लिष्टपक्ष्माग्रतारमुत्फुल्लमुच्यते ।

शारदातनयः

उत्फुल्लः—हस्तपाटः

अलपद्मनखाघातादुत्फुल्लो जायते यथा ।
कहूँ कहूँ

वेमः

अलपद्मः । अभिनयहस्तः ।।

उत्फुल्लकम्—मालावृत्तम्

पञ्चचतुर्मात्रिकः, द्वौ गुरू,

विरहाङ्कः

उत्फुल्लकम्—मालावृत्तम्

विषमं—चतुर्मात्रिकात्रयः ।
समं—चतुर्मात्रिकात्रयः गः ।

विरहाङ्कः

उत्फुल्लकरणम्—करणम्

अलपद्मः कटीपार्श्वे कृत्वान्यः कर्णपार्श्वगः ।
पादस्सूचीमुखक्षिप्त उत्फुल्लकरणं तदा ।।

देवणः

उत्सङ्गः—हस्तः

अन्योन्यस्कन्धदेशस्थावरालौ स्वस्तिकीकृतौ ।
स्वसंमुखौ च विततावुत्सङ्गो गीयते करः ।।
देहदक्षिणभागस्थं स्वस्तिकं केचिदूचिरे ।
अधस्तलत्वमप्यन्येऽन्योन्यकक्षानुवेशिनीः ।।
अङ्गुलीकरयोःपृष्ठद्वयं पार्श्वमुखं विदुः ।
करावरालयोस्स्थाने सर्पशीर्षावितीरिते ।।
अतिप्रयत्नसाध्येऽर्थे शीतालिङ्गनयोरपि ।
प्रसादनानङ्गीकारे लज्जादौ चैव योषिताम् ।।

शार्ङ्ग

**उत्सङ्गः**—हस्तः

अधस्तलत्वमप्याहुरन्ये त्वत्र विचक्षणाः ।
बहुयत्नप्रसाध्येऽर्थे तुषाराश्लेषयोरपि ॥
अलङ्कारानुपादाने लज्जदावपि सुभ्रुवाम् ॥

अशोकः

अग्रश्लिष्टौ सर्पशिराख्यौ नाभेरधश्च विन्यस्तौ ।
उत्सङ्गनामहस्तस्तपस्समाधौ च योगकरणे स्यात् ॥

नरसिंहः

परस्परस्कन्धदेशनिहितौ स्वस्तिकीकृतौ ।
स्वसम्मुखावरालौ चेदुत्सङ्गस्सोऽभिधीयते ॥
पुत्राद्यालिङ्गने शीते वेषानङ्गीकृतौ तथा ।
गोपने कुचयोश्चायं स्त्रीभिः कार्यो यथोचितम् ॥
एतं दक्षिणपार्श्वस्थं स्वस्तिकं मेनिरे परे ।
स्यादङ्कं प्रतिनीतोऽसौ बालस्याङ्काधिरोपणे ।
अधस्तलं स्वस्तिकं तत्तूत्सङ्गं केचिदूचिरे ॥
परोक्षवल्लभस्पर्शे स्त्रीभिरेष प्रयुज्यते ।
निवारणे प्रयोज्योऽसौ पुरो गच्छन्पुरस्तलः ।
अन्योन्यकक्षनिक्षिप्ततलमेनं विदुः परे ॥
एष क्रोधामर्षकृते कामोऽगाधनिरूपणे ॥

वेमः

**उत्सवः**—देशीतालः

उत्सवाख्ये पुनस्ताले लघुन्यस्मात्पुरः प्लुतः ॥ ऽ

सुधा

**उत्सारितः**—बाहुः

अन्यपार्श्वान्निजं पार्श्वं व्रजन्नुत्सारितो भुजः ॥
विनियोगं वदन्त्यस्य जनतोत्सारणे बुधाः ॥

अशोकः

स्वस्वपार्श्वान्तरात्पार्श्वं गच्छन्नुत्सारितो मतः ।

ज्यायनः

**उत्साहः**—गीतालङ्कारः (ध्रुवभेदः)

उत्साहः स्याद्रसे हास्ये ताले कन्दुकसंज्ञके ।
वंशाभिवृद्धिकृत्पादः त्रयोदशमिताक्षरः ॥
लघुद्वयं विरामान्तं ताले कन्दुकसंज्ञके ।

संगीतसारः

**उत्साहः**—स्थायिभावः

उत्साहो नाम उत्तमप्रकृतिः । स चाविषादशक्तिधैर्यशौर्यादिभिर्विभावैरुत्पद्यते । तस्य स्थैर्यत्यागवैशारद्यादयोऽनुभावा ।

असंमोहादिभिर्व्यक्तो व्यवसायनयात्मकः ।
उत्साहस्त्वभिनेयः स्यादप्रमादोत्थितादिभिः ॥

भरतः

**उत्साही**—

सिद्धैरपि मुहुः कार्यैः तृप्तिर्यस्य न जायते ।
अवाप्यापि पदं शाक्रमुत्साही स नरः स्मृतः ॥

भावविवेकः

**उत्स्यन्दिता**—चारी

कनिष्ठाङ्गुलिभागेन शनैर्बाह्यप्रसारितः ।
अन्तरङ्गुष्ठभागेन पदः प्रत्यागतो भवेत् ॥
रेचकस्यानुसारेण यत्नेषोत्स्यन्दिता मता ।
रेचितौ नृत्तहस्तावप्यग्रपादानुसारतः ॥
ददन्ति केचिदाचार्यो नृत्तलक्षणवेदिनः ॥

वेमः

अत्र त्वाचार्या इति कीर्तिधरादयः ॥

**उदकक्ष्वेडिका**—सङ्गीतशृङ्गाराङ्गम्

उदकपूरणी क्ष्वेला वंशनाडी यस्यां क्रीडायां सा उदकक्ष्वेडिका ।

भोजः

**उदञ्चितम्**—दर्शनम्

दर्शनं यदपाङ्गाभ्यामूर्ध्वतस्स्यादुदञ्चितम् ।

वेमः

**उदयचन्द्रिका**—मेलरागः

शङ्कराभरण मेलजरागः ॥

तदुदयचन्द्रिकायामवरोहे वृषभवर्जमभ्यादिकं स्यात् ।
अवरोहे रिलोपः, धश्शुद्धः ॥

परमेश्वरः

मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग रि ग म प ध नि स.
(अव) स ध प म रि स.

मज्ञ

**उदयरविचन्द्रिका**—मेलरागः (चलनाटमेलजन्यः)

(आ) स रि ग म ध नि स
(अव) स नि ध म ग रि स

मज्ञ

**उदयवत्सः**—तालः

अस्य लक्षणभागः पतितः

सङ्गीतसर्वस्वम्

**उदरम्**—

क्षामं खल्लं (ल्वं) तथा पूर्णं रिक्तपूर्णमिति क्रमात् ॥
चतुर्धोदरमाख्यतम्

अशोकः

रिक्तपूर्णस्य रिक्तपूरमिति नामान्तरमाह सोमेश्वरः

**उदस्तत्रासा**—श्रुतिः

पञ्चमस्य द्वितीया श्रुतिः

पाल्कुरिकि सोमः

**उदात्ता**— नायिका.

उदात्ता केशवासोङ्गमाल्यभूषासु सादरा ।
शय्याशोभनसंस्कारपरिवर्हे समेधिनी ।
स्थिरस्नेहा कृतज्ञा च तदात्माश्रितवत्सला ।
मानयन्ती च मानार्हान् नित्योत्सवरतापि च ।
बन्धुसंवाधमुदिता गुणज्ञाप्रियवादिनी ।
एवमादिगुणैर्युक्तामुदात्तां परिचक्षते ।

शारदातनयः

**उदारत्वम्**—काव्यगुणः

दिव्यभावपरीतं यच्छृङ्गाराद्भुतयोजितम् ।
अनेकभावसंयुक्तमुदारत्वं प्रकीर्तितम् ॥

भरतः

अनेकार्थविशेषैर्यत्सूक्तैस्सौष्ठवसंयुतैः ।
उपेतमतिचित्रार्थैरुदात्तं तच्च कीर्त्यते ।

पाठान्तरम्

यत्र मानुषोचितमपि दिव्यतया करुणादियुक्तमपि शृङ्गारेण विस्मयस्थानमप्यद्भुतेन युक्तं वर्ण्यते तद्गतैर्विभावानुभावादिभिः तदुदीर्यते । तत्रौदार्यमर्थगुणः । एतदेवाग्राम्यत्वमित्यन्यैरुक्तम् । यत्राद्भुतेन यत्कृतोऽर्थोऽनेकभावसंयुक्तमिति शब्दगुणस्यलक्षणम्॥

अभिनवः

उत्कर्षवान्गुणः कश्चिदुक्ते यस्मिन् प्रतीयते ।
तदुदाराह्वयं तेन सनाथा काव्यपद्धतिः ॥

दण्डी

वदन्ति वन्धवैकट्यमौदार्यं कविपुंगवाः॥

प्रकाशवर्षः

वैकट्यमिति पदानां नरीनृत्यमानत्वम् ।
तदुदारत्वमासाद्य यन्मनो नापसर्पति ॥

सर्वेश्वरः

**उदाहरणम्**—लक्षणम्

यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।
साध्यते निपुणैरर्थस्तदुदाहरणं स्मृतम् ॥

भरतः

परेषां दुर्भेद्यपरमार्थेन तुल्यार्थप्रयुक्तेन वाक्येन निगूढाशयः कस्मैचिन्निपुणैर्यत्र प्रकाश्यते तदुदाहरणम् । यथा—देवीचन्द्रगुप्ते प्रावेशिकी ध्रुवा कुमारचन्द्रगुप्तस्य संशयाकुलमनसः प्रवेशावसरसूचकमर्थमुद्योतयति । ध्रुवा तु—एषो सितकर इत्यादि ॥

अभिनवः

**उदाहरणम्**—गर्भसन्ध्यङ्गम्

यत्सातिशयवद्वाक्यं तदुदाहरणम् ।

भरतः

लोकप्रसिद्धवस्त्वपेक्षया यत्सातिशयमुच्यते उत्कर्षमाहरतीति उदाहरणम् । यथा—रत्नावल्यां मनः प्रकृत्यैव, वाणाः पञ्च इति द्वौ श्लोकौ, उदाहरणम् ॥

अभिनवगुप्तः

अत्र मनः प्रकृत्यै वेतिस्थले इतरधन्वीभ्यो मन्मथस्य युगपत्सर्वैः शरैः स्वभावचपलदुर्लक्ष्मनोवेधेन समुत्कर्ष उदाहृतिः ।

रामचन्द्रः

यदर्थोत्कर्षवद्वाक्यं तदुदाहरणं स्मृतम् ।

सर्वेश्वरः

**उदीक्षणः**—देशीतालः

उदीक्षणे लद्वयं च गुरुरेकः क्रमादिमे ॥ ऽ

कुम्भः

**उद्गता**—मात्रावृत्तम्

चतुर्मात्रिक एकः, द्वौ पञ्चमात्रिकौ, चतुर्मात्रकागणेषु संख्यानियमो नास्ति ।

विरहाङ्कः

**उद्गता**—मूर्छना

सुभद्रग्रामे द्वितीया मूर्छना ।

ऋषभस्य च मूर्छायामुद्गता नाम जायते ।
वृद्धिकाले विशेषेण सा गेया गीतपण्डितैः ॥

वादिमत्तः

**उद्गीतः**—वर्णालङ्कारः (आरोही)

मूर्च्छनायां कलायुग्मं कुर्यात्त्रिस्वरात्मकम् ॥
तयोराद्यं त्रिवारं चेत्तदोद्गीतः प्रकीर्तितः ॥

लक्ष्मण

(अवरोही)

धा प म म ग गा रि स स स

पण्डितमण्डली

उद्गीतः—वर्णालङ्कारः

आद्यस्त्रिस्वररूपिण्यस्त्रिरावृत्तः स्वरो यदा।
कलयोस्स्याद्द्वयो स्तज्ज्ञैस्तदोद्गीतः प्रकीर्त्यते॥
स स स रि ग म म म म प ध

पण्डितमण्डली

उद्गीतकम्—मात्रावृत्तम्

विषमं – चतुर्मात्रिकाश्चत्वारः (र)।
समं – एकश्चतुर्मात्रिको द्वौ पञ्चमात्रिकौ स ल ग।

विरहाङ्कः

उद्गीतिः—छन्दः

कलयोरन्तोभययोः स्यादुद्गीतिः कृते विपर्यासे।

अत्र – गीतिलक्षणं इत्यर्थः।

कुम्भः

उद्ग्राहः—

आदावुद्ग्राह्यते गीतं येनोद्ग्राहस्सकीर्तितः।

जगन्नाथमल्लः

उद्ग्राहः—वाद्यप्रबन्धः

आद्यं वाद्यप्रबन्धानां शुद्धकूटादिनिर्मितः।
यः खण्डो वाद्यते प्राहुरुद्ग्राहं तं महत्तमाः॥
उद्ग्राहोपशमादीनां यद्यप्यन्याङ्गतोदिता।
यावत्पूरणमावृत्तेस्तथाऽपि स्यात्प्रबन्धता॥
द्विरावृत्तिरनावृत्तिर्वा स्यादङ्गतया स्थितौ।

शार्ङ्गः

यः खण्डशुद्धकूटादिपाटोत्करविनिर्मितः।
आदौ वाद्यप्रबन्धानां वाद्यते च मुहुर्मुहुः॥
स उद्ग्राह इति प्रोक्तो विदुषा वेमभूभुजा।
यद्यप्युद्ग्राहकादीनामन्याङ्गत्वमुदीरितम्॥
तथाप्येषां प्रबन्धत्वं वाद्यज्ञैः परिकीर्तितम्।

वेमः

उदाहरणं रत्नाकरे द्रष्टव्यम्।
प्रबन्धपूरणं यावदावृत्तिबहुलं ततः।
अङ्गत्वं स्यादनावृत्या द्विरावृत्याथवा भवेत्॥
प्रबन्धपूरणपर्यन्तमावृत्योद्ग्राहप्रबन्धो भवेत्।

वेमः

अयमर्थः उद्ग्राह्याद्यवयवेषु यत्रैक एव प्रबन्धत्वेनोच्यते तत्रेतरावयवस्थाने तमेव प्रयुज्यावयवित्वेन प्रबन्धः पूरणीय इति।

कल्लिनाथः

अत्रावृत्तिकृतत्वादनेकावयवत्वाङ्गीकारे एकधातुकत्वदोषो न प्रसज्यते॥

उद्घट्टः—मार्गतालः

विज्ञेय उद्घट्ट तालो गुरूणां त्रितयेन च ऽऽऽ

सुधा

उद्घट्टितम्—करणम्

यदोद्घट्टितपादस्स्यात्तत्पार्श्वे सन्नतं करौ।
तालिकाकरणोद्युक्तौ तदुद्घट्टितकं मतम्॥

अशोकः

उत्सवानन्दनृत्तेऽस्य प्रयोगः परिकीर्तितः।

ज्यायनः

अत्राहुरपरे पाण्योरन्योन्यतलताडनम्।

वेमः

उद्घट्टितम्—नृत्तकरणम्

परिवृत्ते स्थितिं कुर्यादुत्क्षिप्तं शिर ईरितम्।
उद्वृत्तौ तत्र हस्तौस्तद्दृष्टि तत्र तु शङ्किता॥
तलोद्वृत्ताभिधा चारी भवेदुद्घट्टितं हि तत्॥

नन्दी

परिवृत्तं स्थानम्। यथा—

समागमो भवेद्यत्र मिथःपार्ष्णिकनिष्ठयोः।
परिवृत्तं परिज्ञेयं स्थानकं स्थानवेदिभिः॥
पादयोरङ्गुलिस्पृष्टभागेन चलनं पुनः।
क्रियते त्वरितं यत्र तलोद्वृत्तेति तां विदुः॥

उद्घट्टितः—अङ्गहारः

निकुट्टकोरोमण्डलकनितम्बकरिहस्तकटीछिन्नानां पञ्चानां करणानां प्रयोगे उद्घट्टिताङ्गहारः

उद्घट्टितः—पादः

स्थित्वा पादतलाग्रेण स्थितौ पार्ष्णिर्निपात्यते।
असकृद्वा सकृद्वापि तदोद्घट्टित ईरितः॥

अशोकः

उद्घट्टिते च करणे नद्यस्यानुकृतावपि।

वेमः

उद्धट्टितः—वर्णालङ्कारः (सञ्चारी)

स्वरद्वयं समारुह्य पञ्चमाच्चतुरःस्वरान् ।
निवर्तते तथैकैकत्यागादुद्धट्टितस्तु सः
स रि प म ग रि, रि ग ध प म ग, ग म नि ध प म

मोक्षदेवः

उद्घात्यकम्

पदान्यनवगतार्थानि । प्रश्नेनावगतार्थैः पदैः प्रतिपादयति ।

सागरः

उद्घात्यकम्—वीथ्यङ्गम्

पदानि त्वगतार्थानि तदर्थगतये नराः ।
योजयन्ति पदैरन्यैस्तदुद्घात्यकमुच्यते ॥

भरतः

यथा – वेण्यां – सत्पक्षा मधुरगिर इत्यादि ।

भोजः

सूत्रधारोऽप्रतीतमर्थं प्रतिपादयितुकामः प्रश्नेन प्रतिपादितवान् ।

कैर्गुणैर्नाटकं श्लाघ्यं ये हरन्ति सतां मनः ।
क्व तेषां दृष्टमुत्थानं देवदत्तकृताविति ॥

सागरः

अत्र देवदत्तस्थाने कालिदास इति त्रिलोचनः पठति ॥

अन्ये त्वाहुः–अप्रतीतं विस्मृतं वा यत्प्रतिपाद्यते तदुद्घात्यकमिति ।

उद्दली

आन्तरं जाठरं चर्म नाम्ना स्यादियमुद्दली ।

सोमेश्वरः

उद्दिष्टार्थोपसंहारः

ललितजातिनाटके पञ्चमः सन्धिः ॥

शारदातनयः

उद्दीपनविभावाः

तेषु तटस्थाः ।
चन्द्रोदयो घनध्वानकोकिलारणितं मधुः ।
वनानि वाप्यः केयूरं केचिद् भृङ्गरवादयः ॥
केलीगृहाणि कृतकस्रक्चन्दनविलेपने ।
दुग्धशीतावलम्ब्यादि दूतीसंलापनादयः ।
अनुभावाननुभवन्त्यनेकान्कामविह्वलाः ।

कुम्भः

उद्धतम्—ध्रुवावृत्तम्

तृतीयं पञ्चमं चैव नवमैकादशे तथा ।
द्वादशं षोडशं चैव चतुर्दशमथापि च ॥
अस्मिन्नष्टिकृतेपादे गुरूण्येतानि सर्वशः ।
छन्दोज्ञैर्ज्ञेयमेतत्तु नर्कुटं ह्युद्धतं यथा ॥

एतत्तूद्धतं, उद्धतमिव प्रठथते । यथा—
वनषंडक जहदिको सिको वायसाहदो
वनषंडकं जहाति कौशिको वायसाहतं

भरतः

उद्धता—ध्रुवा

वीररौद्रप्रधाना च स्फुटवर्णनिबन्धना ।
उद्धतप्रायसञ्चारा सा भवेदुद्धता ध्रुवा ॥

वेमः

आश्चर्यदर्शने रोपे विषादे संभ्रमे तथा ।
उत्पाते विभ्रमे चैव प्रत्यक्षावेदने तथा ॥
वीरे भयानके रौद्रे कार्या द्रुतलया ध्रुवा ॥

वेमः

उद्धता—नायिका

सौन्दर्यैश्वर्यसौभाग्यविद्याभङ्गैरलङ्कृता ।
विद्याभिजनसंपन्ना वन्धूनप्यवमन्यते ।
गर्वावमानभरिता माया छद्मपरायणा ।
आत्मकुक्षिंभरा घोरा सोद्धता परिकीर्तिता ।

शारदातनयः

उद्धता—सप्ताक्षरवृत्तम्

रसगाः ॥

भरतः

उद्धर्षिणी—चतुर्दशाक्षरवृत्तम्

सैतवमते वसन्ततिलकस्य नामान्तरम् ॥

उद्धुतम्—शिरः

धुतमेवोद्धुतं किञ्चिदुत्तानितमुखं भवेत् ।
कन्दुकोल्लोलनाङ्कोलासंञ्चारातिप्रलोचने ॥

ज्यायनः

उद्धुरम्—दर्शनम्

उद्धुरं विषयग्राहबद्धस्पृहमुदाहृतम् ।

शारदातनयः

उद्भटः

मध्यदेशीयोऽयं काश्मीरेष्वासीदिति राजतरङ्गिण्या ज्ञायते । नाट्यशास्त्रव्याख्यान कर्ता अऽयं भामहालङ्कारमपि व्याख्यातवान् । काव्यालङ्कारसङ्ग्रहाख्यग्रन्थकर्तायं ८०० आसीत् ।

उद्भटः—वर्णालङ्कारः

त्रिस्वराः सद्विरुक्तान्ता त्यक्त्वा द्विरपरा ततः ।
कला तु यत्र क्रियते स बुधैरुद्भटः स्मृतः ॥

यथा – सरिगग रिगमम्म इत्यादि। अवरोहः मगरिरिरि-गरिसस्स व्युत्क्रमः। उभावपि उद्घटावेव ॥

संगीतसरणिः

**उद्घित्**—तानः

नि – लोपः षाडवः

स ध प म ग रि

कुम्भः

**उद्भेदः**—अवस्था

ईषत्प्राप्तिर्यदा काचित्फलस्य परिकल्प्यते।

भावमात्रेण तं प्राहुरुद्भेदमिह सूरयः ॥

भोजः

**उद्भेदः**—मुखसन्ध्यङ्गम्

बीजार्थस्य प्ररोहो यः स उद्भेदः।

भरतः

स्वल्पप्ररोह उद्भेदः। आमुखानन्तरमुक्तस्य बीजस्य स्वल्पप्ररोहः किञ्चित्फलानुष्ठानानुकूल्यप्रदर्शनं धान्यस्योच्छूनतेवोद्भेदः। उच्छूनतैव प्राचीनावस्था। न पुनरुद्घाटनरूपं प्रतिमुखसन्धौ संभवति। यथा—भूयःपरिभवेति भीमवाक्यं वेण्याम्। अन्ये तु गूढभेदनमुद्भेदनमामनन्ति।

यथा—रत्नावल्यां — अस्तापास्तेति वाक्यम्।

रामचन्द्रः

उद्भेदो गूढनिर्भेदो

सर्वेश्वरः

**उद्भेदः**

गर्भसन्धौ द्वितीयमङ्गम्

कार्यसिद्धिदर्शनम्।

सागरनन्दी

**उद्वर्तितं**—दर्शनम्

उद्वर्तितं तद्विज्ञेयं भ्रुवोरूर्ध्वप्रकम्पनम्।

शारदातनयः

**उद्वर्त्तितम्**—नृत्तहस्तप्राणः

व्यावर्तपरिवर्तयोरेककालरेचितत्वमुद्वर्तितम्।

शृङ्गारः

**उद्वर्तितः**—ऊरुः

मुहुरन्तर्बहिःक्षेपात्पार्ष्णेरग्रतलस्य च।

उद्वर्तितस्ताण्डवेऽसौ व्यायामेऽभिनये तथा ॥

अशोकः

**उद्वाहि**—वदनम्

उत्क्षिप्तमास्यमुद्वाहि लीलानादरयानयोः।

अशोकः

स्त्रीणामपि च लीलासु योगे गर्वोष्वनादरे।

वेमः

**उद्वाहितम्**—देशीस्थानम्

कूर्पराधिष्ठितक्षोणिस्कन्धविन्यस्तहस्तकम्।

उद्वाहितं भवेत्स्थानं लीलया शयनं प्रभोः ॥

वेमः

**उद्वाहितम्**—वक्षः

सरलोत्क्षिप्तमाकम्पि स्यादुद्वाहितसंज्ञिकम्।

उत्तुङ्गालोकने दीर्घहासे जृम्भासु चेष्यते ॥

विप्रदासः

यन्निष्कम्पमृदूत्क्षिप्तं तदुद्वाहितमीरितम्।

अशोकः

इदं सोमेश्वर उत्प्रसारितमिति वदति ॥

**उद्वाहितम्**—शयनस्थितिः

अंसोपरि शिरः कृत्वा कूर्परक्षोभमेव च।

उद्वाहितं तु विज्ञेयं लीलायां वचने प्रभोः ॥

भरतः

**उद्वाहितम्**—शिरः

सकृदूर्ध्वं शिरो नीतमुद्वाहितमुदीरितम्।

शक्तोऽहमिह कार्येऽस्मीत्यभिमाने प्रयुज्यते ॥

शार्ङ्गः

**उद्वाहितम्**—स्थानकम्

कूर्पराधिष्ठितक्षोणिस्कन्धविन्यस्तहस्तकम्।

उद्वाहितं भवेत्स्थानं लीलया शयने प्रभोः ॥

वेमः

**उद्वाहितः**—वर्णालङ्कारः (सञ्चारी)

गत्वा त्रीनवरुह्यैकमेवमुद्वाहितस्तु सः।

मोक्षदेवः

क्रमेणोद्वाहिते गायेत्सोपान्त्यं हि स्वरत्रयम्।

सरिगरि, रिगमग, गमपम, मपधप, पधनिध, धनिसनि.

जगद्धरः

**उद्वाहितः**—वर्णालङ्कारः (अवरोही)

धा प प प म धा प प म गा रि रि रि स.

पण्डितमण्डली

उद्वाहितः—वर्णालङ्कारः

प्लुतीकृत्य यदोच्चेत मध्यसंस्थः परस्तदा ।
स एवोद्वाहितो ज्ञेयः त्रिवर्णात्युत्प्लुतत्वतः ॥

जगद्धरः

विरावृत्तो द्वितीयश्चेत्स्वरस्स्यात्कलयोर्द्वयोः ।
उद्वाहितमलङ्कारं तदा प्रोचुर्विपश्चितः ॥
स रि रि रि ग म प प प ध.

पण्डितमण्डली

उद्वाहिता—कटी

समकालं शनैः पार्श्वकट्योरुद्वाहनाद्भवेत् ।
उद्वाहिता पृथुश्रोण्या गमनेऽपि परस्य वा ॥

ज्यायनः

उद्वाहिता—जङ्घा

ऊर्ध्वगोद्वाहिता सा स्यादाविष्टगमनादिषु ।

विप्रदासः

उद्वाहिता चोर्ध्वदेशयुक् । आविद्धगमनादौ स्यात् ॥

कुम्भः

उद्वीक्षणः—देशीतालः

उद्वीक्षणे लघुद्वन्द्वं गुरुरेकस्ततः परम् । ॥ ऽ

नन्दी

अयमेवोर्दीक्षणः.

उद्वृत्तः—अधरः (उद्वृत्तौ ओष्ठौ)

अधरः पीडितो यस्तु नासासंलग्न उत्तरः ।
उद्वृत्तः प्रतिहासेऽसौ सावज्ञायां च कथ्यते ॥

सोमेश्वरः

उद्वृत्तम्—करणम्

अपसार्य क्षिप्तपादं चार्या चोद्वृत्तया सह ।
यस्मिन्नशेषभागं च तदुद्वृत्तमुदाहृतम् ॥
भट्टतण्डुरिहाक्षिप्तां चारीं पादक्रियां जगौ ॥

ज्यायनः

तज्झंझामारुते वह्निशिखायां विनियुज्यते ॥

लक्ष्मणः

उद्वृत्तम्—दर्शनम्

विवृतोर्ध्वपुटान्तस्थतारमुद्वृत्तमुच्यते ।

शारदातनयः

उद्वृत्तः—अधरः

उद्वृत्तो वदनोत्क्षेपात्सोऽवज्ञ परिहासयोः ।

अशोकः

यदा मुकुलिताबोष्ठौ नासिकोपान्तगामिनौ ।
तदोद्वृत्तस्स्मृतस्तद्ज्ञैरवज्ञापरिहासयोः ॥

ज्यायनः

उद्वृत्तकः—अङ्गहारः

नूपुरभुजगाञ्चितगृध्रावलीनकविक्षिप्ताविक्षिप्तोद्वृत्तार्धसूचीनितम्बलतावृश्चिककटीछिन्नानां करणानां क्रमात्प्रयोगे उद्वृत्तकः.

शार्ङ्गः

उद्वृत्ता—चारी

आविद्धा चरणस्यैव पार्ष्णिमन्योरुदेशतः ।
निधायोत्प्लुत्य तदनु विधायभ्रमरीमपि ॥
ततो निपातयेद्भूमावेवमङ्गान्तरेण च ।
क्रियते यदि सा तद्ज्ञैरुद्वृत्ता चार्युदाहृता ॥

वेमः

उद्वृत्तौ—नृत्तहस्तौ

चतुरश्रौ विधायादावथोद्वेष्टितकर्मणा ।
हंसपक्षावुरोदेशे कृतावेकस्तयोः करः ॥
व्यावृत्तिक्रिययोर्ध्वं तु गत्वोत्तानो व्रजेदधः ।
अथान्यः परिवृत्याधोमुखोवक्षे व्रजेद्यदि ॥
तदोद्वृत्तौ करौ स्यातां तालवृन्तनिदर्शने ।
एतावेव परे प्राहुः तालवृन्ताभिधौ करौ ॥
व्यावृत्तपरिवृत्तौ चेद्धंसपक्षौ पुरोमुखौ । ।
तदोद्वृत्तौ जगुः केचिद् जयशब्दनिरूपणे ॥

अशोकः

केचिदिति सोमेश्वरादयः ॥

उद्वृत्तौ—हस्तौ

चतुरस्रीकृतपाण्योः कृतयोर्हंसपक्षयोः ।
उत्तानोऽधो व्रजत्येको वक्षोऽन्यो यात्यधोमुखः ॥
यदा स्यातां तदोद्वृत्तौ तालवृन्तनिरूपणे ।
तावेव तालवृन्ताख्याववदन्नृत्तकोविदाः ॥
प्राङ्मुखौ हंसपक्षाख्यौ व्यावृत्तपरिवर्तितौ ।
जयशब्दे प्रयोक्तव्यावुद्वृत्तौ मेनिरे परे ॥

शार्ङ्गः

उद्वेगः—गर्भसन्ध्यङ्गम्

भयं नृपारिदस्यूत्थमुद्वेगः परिकीर्तितः ।

भरतः

अरिशब्दान्नायिकादि। यथा—रत्नावल्यां—राजा कथं देवी वासवदत्ता वयस्य किमेतत्—इति। राजवाक्यं श्रुत्वा नन्वस्माकं जीवितसंशय इति विदूषकवाक्यमुद्वेगः॥

अभिनवः

नृपतिजनितभयमुद्वेगः। संपात्यङ्के किं दृष्ट्वेत्यायङ्गदवचनम्।

सागरः

उद्वेगो भीः—चौरनृपारिनायिकादिभ्यो भयमुद्वेगः।

यथा—चित्रोत्पलावलंबितके पञ्चमेऽङ्के राजगृहभङ्गेन नायिकासखीस्थविरादीनां विद्रुतानां चोरभयम्।

रामचन्द्रः

उद्वेगः—विरहावस्था

आसने शयने चापि न तुष्यति न तिष्ठति।
नित्यमेवोत्सुका च स्यादुद्वेगस्थानभाश्रिता॥
चिन्तानिश्वासखेदेन हृद्दाहाभिनयेन च।
कुर्यात्तदेवमत्यन्तमुद्वेगाभिनयेन च॥

भरतः

उद्वेगः—शिल्पकाङ्गम्

उद्वेगो हा हतोऽस्मीति कपिञ्जलवचो यथा।

शारदातनयः

कादम्बर्यां

वन्धुजनवियोगजनित उद्वेगः।
यथा—मात इति वेणीसंहारे ५, ३

सागरः

उद्वेष्टनम्—पादपाटः

पश्चादुद्वेष्टनादङ्घ्रेरुद्वेष्टनमुदीरितम्।

वेमः

उद्वेष्टितम्—हस्तप्राणः

हस्तानामूर्ध्वभागे यद्गमनं चास्ति नर्तने।
तदुद्वेष्टितमित्याहुर्भरताम्नायवेदिनः॥

शृङ्गार

उद्वेष्टितम्—हस्तकरणम्

अङ्गुल्योऽनुक्रमेणैव निर्गच्छन्ति तलाद्बहिः।
वक्षस्तोऽपि करस्तद्वत्तदुद्वेष्टितमीरितम्॥

कुम्भः

उद्वेष्टितः—बाहुः

भवेदुद्वेष्टितस्तिर्यङ् मणिबन्धविवर्तितः।
मणिबन्धाद्विनिष्क्रम्य पुनर्व्यावृत्तिमाश्रितः।
बाहुरुद्वेष्टितो नाम प्रायो गवादनादरे॥

ज्यायनः

विप्रदासः

उद्यमः—नाट्यालङ्कारः

दुष्करोऽध्यवसायः। यथा—कुम्भाङ्के—पश्यामि शोकविवश इत्यादिरावणवाक्यम्।

सागरः

उन्नतम्—जानु

कुचदेशागतं जानून्नतमुच्चाधिरोहणे।

अशोकः

गजाश्वपर्वतारोहेषून्नतं जानु योजयेत्।

सोमेश्वरः

उन्नतम्—पार्श्वम्

नितम्बां समुजव्यक्तमुन्नतैरुन्नतं मतम्।
तद्वैतत्क्रियते तज्ज्ञैरपसर्पणकर्मणि॥

विप्रदासः

कटीपार्श्वभुजस्कन्धे दधत्युन्नतिमुन्नतम्।
अभ्यधायि बुधैरस्य विनियोगो ऽपसर्पणे॥

ज्यायनः

उन्नतम्—शिरः

उन्नतं सकृदुन्नीते पश्चादास्यमुदीरितम्।

ज्यायनः

उन्नतः

बुद्धिं नीचपथेनात्मवृत्तिं वर्तयितुं रहः।
यस्य जातु न जायेत सोऽयमुन्नतसंज्ञितः॥

भावविवेकः

उन्नता—ग्रीवा

उन्नताभ्युन्नतमुखी ग्रैवेयोर्ध्वादिदर्शने

भरतः

ऊर्ध्वीकृतोन्नता ग्रीवा सा स्यादूर्ध्वनिरीक्षणे।

वेमः

ऊर्ध्वगा तून्नता ग्रीवा भवेदूर्ध्वावलोकने।
नियोज्या सा बुधैस्तद्वत्कण्ठालङ्कारदर्शने॥

अशोकः

उन्नता—रसना

व्यात्तास्यस्योन्नवा जिह्वा जृम्भास्यान्तस्थवीक्षणे।

कुम्भः

प्रोन्नता कथिता जिह्वा नासिकाभिमुखी बुधैः ।
श्रमे शोपे भये चैव सा प्रयोज्या प्रयोक्तृभिः ॥

सोमेश्वरः

उन्मत्तग—करणम्

आविद्धावञ्चितं पादं करौ च क्रमरेचितौ ।
यत्र कुर्यात्तदुन्मत्तं गर्वसौभाग्यजे मतम् ॥

ज्यायनः

सौभाग्यसंभ्रमे गर्वे कलहे च नियुज्यते ॥

लक्ष्मणः

उन्मना:

अधोगतमनः पुंसो तर्पणोन्नीयते यदा ।
नीयते विपयेभ्यश्च तदासावुन्मना भवेत् ॥

भावविवेकः

उन्माथम्—लक्षणम्

असाधुकारिणं किञ्चित्पश्यतस्साधुमानिनः ।
सोत्प्रासवचनं यत्स्यात्तदुन्माथं प्रचक्षते ॥

यथा—रत्नावल्यां तृतीयेऽङ्के वसन्तकं प्रति काञ्चनमाला-वाक्यम्—"साहु रे" इत्यादि ।

भोजः

उन्मादः—चिन्ताभिनयः

उन्मादश्चित्तविभ्रान्तिर्वियोगादिष्टनाशतः ।
हृदये मुकुलं बध्वा पुरोभागे तु कर्तरी ॥
चालिता तु वियोगाख्ये ह्युन्मादे परिवर्तते ।
हृदये मुकुलं बध्वा शिखरं पार्श्वभागके ॥
पुरोभागे कर्तरी स्याच्चलिता चेष्टनाशने ।
नेत्रस्थाने मयूरास्यचालनाद्रोदने भवेत् ।

विनायकः

उन्मादः—विरहावस्था

तत्संश्रितां कथां युङ्क्ते सर्वावस्थागतापि हि ।
पुंसः प्रद्वेष्टि चाप्यन्यानुन्मादः सम्प्रकीर्तितः ।
तिष्ठत्यनिमिपदृष्टिर्दीर्घं निश्वसिति गच्छति ध्यानम् ।
रोदिति विहारकाले नाट्यमिदं स्यात्तथोन्मादे ॥

भरतः

उन्मादः—व्यभिचारिभावः

इष्टजनवियोगविभवनाशाभिघातवातपित्तश्लेष्मप्रकोपादयो विभावाः । अपनिमित्तहसितरुदितोत्क्रुष्टासंबद्धप्रलापशयितोप-विष्टोत्थितप्रधावितनृत्तगीतपठितभस्मपांसुरुवधूलनतृणनिर्माल्य-कुचेलचीरघटकपालशरावाभरणधारणोपभोगैरनेकैश्चानवस्थितैश्चेष्टानुकरणादिभिस्तमभिनयेत् ।

भरतः

इष्टवियोगादिभिरुत्पद्यते । तमचेतनमुधाभ्रमणैरभिनयेत् ।

सागरः

अनिरूपितकारित्वमुन्मादस्संप्रकीर्तितः ।
ज्ञानादन्यस्य तात्पर्यशोकादिभ्यस्स जायते ॥
तस्मिन्नस्थानरुदितगीतहासस्मितादयः ।

सर्वेश्वरः

उन्मृष्टम्—धातुः

धातोऽतिमधुरध्वानस्तर्जन्योन्मृष्टमुच्यते ॥

शार्ङ्गः

उन्मृष्टम्—व्यञ्जनधातुः

यस्तु स्याद्वामतर्जन्या प्रहारो मधुरस्वरः ।
तदुन्मृष्टमिति ज्ञेयं वीणावाद्यप्रयोक्तृभिः ॥

नान्यः

उन्मेषः—पुटकर्म

विश्लेषः पुटयोर्यस्तु स उन्मेषः प्रकीर्तितः

भरतः

उन्मेपितौ—पुटौ

उन्मेपितावलग्नौ स्तः क्रोधाभिनयने बुधैः ।

अशोकः

एतावुभौ विनिर्देश्यौ क्रोधभावसमाश्रयौ ।

वेमः

एतौ, निमेपितोन्मेपितौ ॥

उपकट्टुडाः

कट्टुडशब्दो द्रष्टव्यः—देशकट्टुडाः प्रविस्तारा इत्युच्यन्ते । उपकट्टुडाः—

कङ्काली दण्डलास्यं च मराली चित्रविक्रमः ।
आनन्दवैनको देहपापांतिर्भीतकर्मठः ।
विलम्बं मदिराराजं जटामुक्तं च मस्तकम् ।
जोगिणी विजयी भिक्षुः सप्तभिर्जोगिणः परम् ।
शवरी मल्लिकामोदो मयूरश्चालिवल्लिका ।
चकोरः शूर्पकः शूली सप्तभिः परिकीर्तिताः ॥

संग्रहकारः

उपकथा—श्रव्यकाव्यम्

यत्राश्रित्य कथान्तरमतिप्रसिद्धं निबद्ध्यते कविभिः ।
चरितं विचित्रमन्यत्सोपकथा चित्रलेखादि ॥

भोजः

**उपकुम्भकः**—देशीतालः

मदौ नयौ प्लुतश्चैव ताले स्युरुपकुम्भके। ११ मात्राः

तालप्रस्तारः

**उपक्रमः**—संगीतशृङ्गाराङ्गम्

विस्रब्धायाः संप्रयोगार्थमभियोगातिशय उपक्रमः।

भोजः

**उपक्षेपः**—मुखसन्ध्यङ्गम्

काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः।

भरतः

काव्यार्थ इति वृत्तशरीरलक्षणो अभिधेयः। प्रधानरसलक्षणं च प्रयोजनसंक्षेपेण उपक्षिप्यते।

अभिनवगुप्तः

यथा—लाक्षागृहानलेति वेणीसंहारे।

बीजस्योक्तिरुपक्षेपः विस्तारिणः काव्यार्थस्य मूलभूतो भागो बीजमिव। तस्यावापमात्रमुपक्षेपः। उदाहरणं। द्वीपादन्यस्मादिति रत्नावल्यान्॥

रामचन्द्रः

बीजन्यासविधिस्तद्ज्ञै रुपक्षेप इति स्मृतः।
शब्दार्थभेदसंयोगवशात्सोऽपि द्विधा भवेत्॥

सर्वेश्वरः

**उपगीतवाचिकः**

गीतं गायकलोकानां वाहयत्स्वशरीरके।
करोति गीताभिनयमुपगीताख्यवाचिकः॥

शृङ्गा

गायके गायति नटस्य नर्तनं—इतिद्रमिडभाषा व्याख्या॥

**उपगूहनम्**—निर्वहणसन्ध्यङ्गम्

अद्भुतस्य तु संप्राप्तिरुपग्रहणमिष्यते।

भरतः

यथा—विदूषकस्य ह्री ह्री भो भो इत्यादिवाक्यम्।

अभिनवः

**उपदिष्टम्**—लक्षणम्

परिगृह्य तु शास्त्रार्थं यद्वाक्यमभिधीयते।
विद्वन्मनोहरं स्वान्तमुपदिष्टं तदुच्यते॥

भरतः

यथा—शून्ये वासमित्यादिविटवाक्यं धूर्तविटे, अथवा धर्मः प्रागेवेत्यादिरविमारके।

**उपधिः**—सन्ध्यन्तरम्

उपधिश्छलनम्। यथा—वेण्यां चार्वाकस्य वञ्चनम्।

सागरः

**उपन्यासः**—प्रतिमुखसन्ध्यङ्गम्

उपपत्तिकृतो योर्थ उपन्यास इति स्मृतः॥

भरतः

केचिदुपन्यासः प्रसादनमित्याहुः। यथा—रत्नावल्यां—अतिमुखरा एषा गर्भदासी इति विदूषकवाक्यम्। अत्र मौखर्यात्मकोपपत्तिरुपन्यस्ता।

अभिनवगुप्तः

कञ्चिदर्थं विधातुं योपपत्तिर्युक्तिः स उपन्यासः।

यथा—कृत्यारावणे वरमात्मन इति सीतावाक्यम्।

रामचन्द्रः

उपन्यासः प्रसादोक्तिरुपायेनोच्यते यथा।

अमृतानन्दी

**उपन्यासः**—भाणिकाङ्गम्

प्रसङ्गतः कार्यनिवेदनमुपन्यासः।

यथा—पुष्पभूषितके वृक्षवाटिकाङ्के नन्दयन्तीवाक्यम्। एषोऽपर आर्यपुत्रहृदयसदृशः कर्णिकारपादप इति।

सागरः

**उपपत्तिः**—नाट्यालङ्कारः

धृतस्यास्त्रस्य निष्फलत्वात्त्यागः।

यथा—वेण्यां मया पृथ्वीराज्ये इत्यादि कर्णवाक्यम्।

सागरः

**उपपत्तिः**—लक्षणम्

प्राप्तानां यत्र दोषाणां क्रियते शमनं पुनः।
सा ज्ञेया ह्युपपत्तिस्तु लक्षणं नाटकाश्रयम्॥

भरतः

प्राप्तानामिति। वीप्सागर्भो निर्देशः। दोषाणामित्युपपत्त्ययोगदृष्टत्वेन वस्तुभूतानामित्यर्थः। तिष्ठेत्कोपवशादित्युदाहरणम्। अन्ये त्वधीयते।

परिगृह्य तु शास्त्रार्थं यद्वाक्यमभिधीयते।
विद्वन्मनोहरं स्वान्तमुपरिष्टं तदुच्यते॥

भरतः

शास्त्रार्थशब्दः प्रमाणोपलक्षणम्। स्वन्तमिति शोभनोऽन्तः निश्चयो यत्र॥

अभिनवः

भरतग्रन्थस्य मातृकान्तरे उपपत्तियुक्तिरिति एकलक्षणत्वेन पठितम्। अभिनवगुप्तास्तु युक्तिमन्यां वदन्ति।

**उपपातः—गीताङ्गम्**

उपान्ते पतनमुपपातः। प्रवेणीवद्यमपि द्वादशगणो भवति।

नान्यः

**उपमा—अलङ्कारः**

यत्किञ्चित्काव्यबन्धेषु सादृश्येनोपमीयते।
उपमानाय सा ज्ञेया गुणाकृतिसमाश्रया॥
प्रशंसा चैव निन्दा च कल्पिता सदृशी यथा।
किञ्चिच सदृशी ज्ञेया ह्युपमा पञ्चधा पुनः।

भरतः

**उपरागः**

तदुद्भवश्चोपरागी रागो रञ्जनकृत्तमः॥

कुम्भः

तदिति। ग्रामरागेभ्यः।

**उपरागजाः—रागाः**

आभ्यस्तिसृभ्यो जायन्ते यास्तास्युरुपजायते।

कुम्भः

तिसृभ्यः। मुख्यस्वराख्यदेशाख्याभ्यो भाषाभ्यः॥

**उपरिवादनम्—वीणावादनप्राणः**

अधस्तादुपरिष्ठाच्च यत्र पातः करस्य च।
रेफकर्तरिनिष्कोटैस्तलेनोपरि वादनम्॥

पार्श्वदेवः

रेफः कर्तरिका निष्कोटितश्च तलहस्तकः।
ऊर्ध्वाधोगामिनो यत्र तत्स्यादुपरि वाद्यकम्॥

कुम्भः

**उपरिवाद्यकम्—वाद्यम्**

ऊर्ध्वाधोगौ क्रमाद्धस्तौ रेफकर्तरिकाह्वयौ।
निष्कोटिते तले हस्ते द्वावप्युपरिवाद्यके॥

शार्ङ्गः

**उपलम्भः—प्रबन्धः**

विलम्भकलक्षणं द्रष्टव्यम्।

**उपलोलकः—वर्णालङ्कारः (सञ्चारी)**

स्वरद्वयं क्रमाद् द्विः स्यात्कलायां तु द्वितीयकः।
वीप्सान्यास्वपि गाने स्यादुपलोलो भवेदयम्॥

सरिसरिगरिगरिरिगरिगमगसगगमगमपमपममपमपधपधप
पधपधनिधनिधधनिधनि॥

जगद्धरः

**उपवर्तनम्—गीताङ्गम्**

पदानां विवर्तनम्। यथा—चत्वारिंशद्वर्णैर्भवति।

नान्यः

**उपशब्दवाचिकः**

ढक्काप्राणवहीत्यादिशब्दजालानुरञ्जितम्।
नाट्यं तनोति नृपतिसभ्यनेत्रानुरञ्जितम्।
कीर्तितो नाट्यचतुरैरुपगीताख्यवाचिकः॥

शृङ्गा

**उपशमः—वाद्यप्रबन्धः**

खण्डं शुद्धादिभिः पाटैर्बद्धं वर्णसरेण वा।
अल्पं कोमलनादं च सुकुमाराक्षरान्वितम्॥
अभ्यस्तं कोमले नृत्ते भवेदुपशमाभिधम्॥

शार्ङ्गः

कृत्वैकवारमुद्ग्राहं नातिदीर्घो न चाल्पकः।
वादकोद्घोषगम्भीरध्वनिमुच्चतरं दधत्॥
त्रिखण्डोऽभ्यस्यते कूटैर्बद्धश्चोपशमाभिधः।

श्रीकण्ठः

शुद्धादिपाटरचितः कृतो वर्णसरेण वा।
सुकुमाराक्षरोपेतः कोमलध्वनिबन्धुरः॥
स्वल्पो योऽभ्यस्यते खण्डः कोमले नृत्तकर्मणि।
स स्यादुपशमः श्रीमद्वीरनारायणोदितः॥

वेमः

उदाहरणं रत्नाकरे द्रष्टव्यम्।

**उपसंहारः—निर्वहणसन्ध्यङ्गम्**

(काव्यसंहार एवोपसंहारः)
सम्यक् समाप्तिः काव्यानां उपसंहार उच्यते।

सर्वेश्वरः

**उपसृतम्—करणम्**

अङ्घ्रिराक्षिप्तया युक्तो वामो यद्यपरं व्रजेत्।
व्यावृत्तिपरिवृत्तिभ्यामरालत्वमुपागतः॥
तथैवानुगतो हस्तो दक्षिणं पार्श्वमानतम्।
तदोपसृतमाख्यातं विनयेनोपसर्पणे॥

अग्रतश्चरणौ कार्यौ क्रमाड्डोलौ करौ ततः।
इत्यङ्गीकुरुतो भट्टतण्डुकीर्तिधराविह ॥

ज्यायनः

**उपहसितम्**—हास्यरसभेदः
हास्यशब्दे द्रष्टव्यम्।

**उपांशुः**—तानः
मध्यमग्रामे रिवर्जितषाडवः।
स नि ध प म ग.

कुम्भः

**उपाख्यानम्**—श्रव्यकाव्यम्
नलसावित्रीषोडशराजोपाख्यानवत्प्रबन्धान्तः।
अन्यप्रबोधनार्थं यदुपाख्यातं तदुपाख्यानम् ॥

भोजः

**उपाङ्गरागः**
अङ्गाश्रयसमुत्पन्नान्युपाङ्गानि च मेनिरे।

भरतः

**उपाङ्गाः**
अङ्गच्छायानुसारित्वात्तेषामुपाङ्गत्वम्।

तुलजः

**उपाङ्गानि**—(त्रयोदश)
दृष्टिस्तारापुटौ भ्रूश्च नासिका नासिकानिलः।
कपोलावधरौ दन्ता रसना चिबुकं मुखम् ॥
मुखराग इति प्राहुरुपाङ्गानि त्रयोदश।
शिरसोऽङ्गान्तरेष्वेवमुपाङ्गानि प्रचक्ष्महे ॥

विप्रदासः

**उपेन्द्रमतिः**—मेलरागः (खरहरप्रियामेलजन्यः)
(आ) स ग म प ध स.
(अव) स नि ध म रि ग रि स.

**उपेन्द्रवज्रा**—एकादशाक्षरच्छन्दः
एभिरेवतु संयुक्ता लघुभिस्त्रैष्टुभी यदा।
उपेन्द्रवज्रा विज्ञेया लघ्वादाविह केवलम्।
ज त ज ग गाः

(उ-दा)स्मितेन कान्त्या सुकुमारभावात्।
इन्द्रवज्रायाः प्रथमाक्षरं लघुचेदुपेन्द्रवज्रा भवति ॥

भरतः

**उपोहनम्**—गीताङ्गम्
उपोह्यते स्वरो यस्माद्येन गीतं प्रवर्तते।
तस्मादुपोहनं ज्ञेयं स्थायिस्वरसमाश्रयम् ॥
अथवोपोह्यते यस्मात्प्रयोगस्तवनादिकः।
तस्मादुपोहनं चैतद्गानं भाण्डसमाश्रयम् ॥

वेमः

**उव्वरादित्यः**—देशीतालः
उव्वरादित्यतालेऽन्तविन्दूगावन्तरे पयोः।

गोपतिपः

ऽ̇ ऽ ० ऽ̇ ऽ̇

**उभयपाणिः**—हस्तपाटः
अङ्गुल्यस्संहताश्चेदङ्गुष्ठश्च प्रसारितः।
पृथग्लगन्ति करयोः स स्यादुभयपाणिकः ॥

सोमेश्वरः

**उभया**—तन्त्रीसारणा
निष्कले सकलेऽथवा।
भवेत्कुत्रचिदुत्क्षिप्ता संस्पृष्टा कुत्रचिद्भवेत्।
इति क्रियाद्वयीयोगात्सारणा सोभयात्मका ॥

पार्श्वदेवः

**उभयी**—वीणासारणा
क्वचिदुत्क्षिप्तिकारूपा क्वचित्स्यात्सन्निविष्टिका।
एवं क्रियाद्वयं यातु संस्पर्शे सोभयी मता।

कुम्भः

**उमातिलकः**—देशीतालः
उमातिलकसंज्ञेतु द्रुतद्वन्द्वं लघुर्गुरुः। ० ० । ऽ

श्रीकण्ठः

**उमातिलकः**—पञ्चभङ्गिप्रबन्धभेदः
प्रत्यङ्गपञ्चकेऽमुष्मिन प्रस्तारे गोचरे सति।
विरुदादिर्यदाप्रान्ते चतुस्तालसमन्वितः ॥
युक्तो रागैश्चतुर्भिश्च स्यादुमातिलकस्तदा।

जगन्नाथमल्लः

बिरुदान्तः त्रिभिस्तालैरागैस्सर्वाङ्गकः स्फुटम्।
पार्वतीतिलकप्रीत्यै पार्वतीवल्लभस्य च ॥

श्रीकण्ठः

**उमापतिः**
औमापतकारः ॥ अयं शैवाचार्यः चिदम्बरवास्तव्य इति श्रूयते। कश्चिदुमापतिशिवाचार्य इति द्रविडसंस्कृतभाषापण्डितः

क्रै. प. १३५० काले आसीदिति श्रुतम्। अयमेवोमापतिः प्रकृतः॥ औमपतग्रन्थकर्ता आधुनिक इति निस्सन्देहः यतः रघुनाथभूपेनेक्तं "उमापतेराधुनिकस्य तन्त्रं विलोक्य नन्दीशमतानुसरि" इति। कल्लिनाथस्तु रत्नाकरव्याख्यायामनिर्दिष्टरागाणां लक्षणं औमापत्याद्गृहीत्वा तत्र निवेशितवान्।

**उमापतिवंशः**

यवद्वयाधिकं ज्ञेयं त्रयोदशभिरङ्गुलैः।
उमापतेर्दण्डमानं मुखताराख्यरन्ध्रयोः॥
मध्यं द्व्यङ्गुलकं लक्ष्म शेषं त्रैपुरुषं मतम्।

कुम्भः

**उमाभरणं**—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि ग म प ध नि स.
(अव) स नि प म रि ग म रि स.

**उरगमञ्जरी**—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स ग म प नि स.
(अव) स नि ध प म रि ग म रि स.

मञ्ज

**उरःपार्श्वार्धमण्डलौ**—नृत्तहस्तौ

पार्श्वप्रसारितस्त्वेको वक्षस्युत्तानितोऽपरः।
व्यावृत्योरस्थलायातः स्वपार्श्वमलपल्लवः॥
एवं यदा तदैवान्यः क्रिययावेष्टिताख्यया।
संप्राप्यारालतां याति वक्षस्येवं परः करः॥
अभ्यासात्कथितावेवमुरःपार्श्वार्धमण्डलौ।

अशोकः

**उरभ्रसंपातः**—चालकः

आदौ स्वस्तिकतां प्राप्य पुनस्तिर्यग्विनिर्गतौ।
हस्तौ वेगात्समागत्य स्यातामन्योन्यसम्मुखौ॥
यस्मिन्नुरभ्रसंपातः चालकस्स निगद्यते।

वेमः

अयमेवोरभ्रसंबाध इत्यशोकः॥

**उरःस्थवर्तना**

उरःस्थवर्तनां विद्यादुरोमण्डलिनोः क्रियाम्।

अशोकः

उरोवर्तनिकां विद्यादुरोमण्डलिनोः क्रियाम्॥

कल्लिनाथः

**उरोऽङ्गणम्**—देशीलास्याङ्गम्

लये द्रुते विलम्बे वा स्तनयोरंसयोरपि।
पुरः पश्चादधश्चोर्ध्वं क्रमात्काललयान्वितम्॥
नर्तक्याश्चालनं नृत्ते ललितं स्यादुरोऽङ्गणम्।

वेमः

इदमेव नटाः प्राहुः सुङ्गशब्देन कोविदाः।
मनाक् सुललितं तिर्यक् चालनं यत्कुचांसयोः॥
विलम्बेनाविलम्बेन तदूचुः केऽप्युरोऽङ्कणम्।
यत्र पात्रं द्रुतं गात्रं कम्पयेत्तालकालतः॥
मनाङ्मनोहरं केचिदूचुरेतदुरोङ्कणम्।
इदमेव रचे नाम्नाचक्षन्ते साम्प्रदायिकाः॥

अशोकः

**उरोमण्डलम्**—करणम्

चारीं बद्धां विधायास्यां स्वस्तिकस्यापसारणम्।
स्थितावर्तावदादध्यादुरोमण्डलिनौ करौ॥
यत्र तत्करणं प्रोक्तमुरोमण्डलसंज्ञिकम्॥

ज्यायनः

**उरोमण्डलिनौ**—नृत्तहस्तौ

उद्वेष्टितं विधायापवेष्टितं चैकदा करौ।
रूपार्श्वे वक्षसो जातौ क्रमान्मण्डलवद्भ्रमात्॥
व्युत्क्रमाच्चेदुरः प्राप्तावुरोमण्डलिनौ तदा।
एतयोर्भ्रमणं वक्षस्स्थयोः केचनमन्वते॥
उरोवर्तनिकात्वेन प्रसिद्धौ नृत्तधीमताम्।
पताकौ हंसपक्षौ वा ज्ञेयौ मण्डलिषु त्रिषु॥

अशोकः

त्रिष्विति॥ उरःपार्श्वोर्ध्वमण्डलिनः॥

**उरोवर्तना**

इयमुरःस्थवर्तनिकैव। लक्षणं तत्र द्रष्टव्यम्॥

**उलथा**—लागनृत्तम्

अनालम्ब्य भुवं हस्तौ जोडं कृत्वोत्प्लुतो नटः।
आलोकयन् पदद्वन्द्वं शिरस्तात्पृष्ठतः पतेत्।
उलथा स तु विज्ञेयो निर्मितो वायुसूनुना।

वेदः

**उल्बणौ**—नृत्तहस्तौ

वक्षसः स्कन्धयोरूर्ध्वं प्रसार्य स्कन्धसम्मुखौ।
विलोलाङ्गुलिकावेतौ कथितावुल्बणौ करौ॥

अशोकः

एतौ—अलपद्मौ ॥

स्कन्धाभिमुखमाविद्धौ चलितौ चाङ्गुलीदलैः ।
अलपद्मोल्वणावाहुः घातवर्तनिकां परे ॥

ज्यायनः

उल्लालः—पादपाटः

अङ्घ्रेरुल्लालनाद्धयोम्नि क्रमादुल्लाल उच्यते ।

वेमः

उल्लासः—देशीलास्याङ्गम्

नर्तक्यास्त्वरया तालाद्द्विगुणत्रिगुणैस्तदा ।
भावाभिव्यञ्जकैरसूक्ष्मैर्ललितैश्शृथवन्धिभिः ॥
अङ्गैरुल्लसनैर्युक्तमुल्लासं संप्रचक्षते ।

वेमः

उल्लासि—दर्शनम्

यत्रोल्लसत्यभिप्रायस्तदुल्लासीति कथ्यते ।

शारदातनयः

उल्लासितः—वर्णालङ्कारः (सञ्चारी)

मन्द्रः स्याद् द्विस्ततो गाने तृतीयाद्यौ तृतीयकम् ।
सकृत्तदेवमन्यास्युरुल्लासित इहोदितः ॥
ससगसग रिरिमरिमा गगपगपा ममधमधा पपनिपनी ।

जगद्धरः

उल्लासितः—श्वासः

यो नासया शनैः पीतश्चिरादुल्लासितश्च सः ।
हृद्यगन्धे च सन्दिग्धे नियुक्तः पूर्वसूरिभिः ॥

अशोकः

उल्लेखः—नाट्यालङ्कारः

कर्तव्योपदेशनम् । यथा—उन्मत्तचन्द्रगुप्ते (देवीचन्द्रगुप्ते) लोको लोचनेत्यादिवाक्यम् ।

सागरः

उल्लेखः—वादनम् (दक्षिणहस्तव्यापारः)

अन्तर्मध्यमया घातमुल्लेखं संप्रचक्षिरे ॥

शार्ङ्गः

तन्त्रिकामन्तरा हन्ति मध्यमा केवला यदि ।
प्रज्ञोल्लेखविशेषज्ञस्तदोल्लेखमिहाभ्यधात् ॥

कुम्भः

उल्लोकितम्—दर्शनम्

ऊर्ध्वं यत्प्रेक्षितं प्राहुस्तदुल्लोकितसंज्ञकम् ।

विप्रदासः

उर्ध्वमुल्लोकितं ज्ञेयं

भरतः

उल्लोच्यकम्—नृत्तरूपकम्

उल्लोच्यकं स्यादेकाङ्कमवमर्शैर्विनाकृतम् ।
निष्प्रवृत्तिविधानं च शिल्पकाङ्गविभूषितम् ॥
हास्यशृङ्गारकरुणयुक्तमुज्ज्वलवेषवत् ।
बहुपुस्तं च चतुरोज्ज्वलनायकनायिकम् ॥
यथा देवीमहादेवं यथा चोदात्तकुञ्जरम् ।
यस्मिन्नुल्लोच्यकं नाम त्र्यङ्गं गीतं प्रवर्तते ॥
तल्लक्षणं च गान्धर्वनिर्णये स्पष्टमीरितम् ।

शारदातनयः

अस्योल्लाप्यकमिति नामान्तरम् ।

गीतमयं त्र्यङ्कं । अस्य लक्षणम् । उदारनायकमुज्वलवेषात्मकं बहुपुस्तप्रधानं दिव्यचरितं शिल्पकाङ्गविभूषितं, हास्यकरुणशृङ्गारभूषितं, यथा देवीमहादेवं ॥

सागरनन्दी

अत्र शिल्पकाङ्गनि सप्तविंशतिरुक्तानि । त्र्यङ्कमिति स्थाने त्र्यङ्गमिति स्यात् । गान्धर्वनिर्णय इति शारदातनयकृतस्य शारदीयाख्यस्य ग्रन्थस्य नामान्तरमित्यूह्यते । अमृतानन्दी, उल्लाप्यलक्षणे तदेकाङ्कभूषितमिति वक्ति ॥

उल्लोप्यकम्—सप्तगीतभेदः

आदावुल्लोप्यकस्याथ मात्राभिः पञ्चभिर्युता ।
चतुर्थदशमे शम्ये तालौ तु द्वादशाष्टमौ ॥
सन्निपातोऽवसाने च प्रस्तारोऽयं चतुष्कले ।
गात्रेयं द्विकलेऽपि स्याद्युक्ता पातैर्यथास्थितैः ॥
कलाद्वादशकं चात्र वैहायसिकसंज्ञितम् ।
द्विकलैककलोन्मिश्रो युग्मपातैस्तु सप्तभिः ॥
कृत्वा प्रवेशनिष्क्रामौ शम्या तालं तृतीयकम् ।
कुर्यादुत्तमनिष्कामसन्निपातश्च पूर्ववत् ॥
शम्यादिसन्निपातान्तः प्रागुक्तैककलोद्भवे ।
शाखेयं प्रतिशाखा च भवेदन्यपदा तु सा ॥
अस्य संहननं च स्यादुत्तरे तद्यथास्थिते ।
अन्ताहरणसंज्ञस्तु त्र्यंशोन्तस्त्रिविधः स्मृतः ॥
त्रिविधो युगयुङ्मिश्राः त्र्यंशोङ्गैरेभिरिष्यते ।
स्थितमङ्गं प्रवृत्तं च माहाजनिकमेव च ॥
तत्र स्याद्द्विकले चाङ्गे स्थितं त्र्यश्रस्य षट्कलम् ।
निःशम्या तु कला तत्र चतुर्थ्यन्यद्यथोचितम् ॥

युक्तमेककलेनात्र प्रवृत्तं पञ्चपाणिना ।
स्थितवत्तु निवृत्यन्तं माहाजनिकमिष्यते ॥
तत्र स्याद्द्विकले योगे स्थितं चच्चत्पुटाश्रयम् ।
निश्शब्दा पञ्चमी तत्र कलाशेषं यथोदितम् ।
निष्काम एकः शम्ये द्वे तालदिर्युग्म एव च ।
आहार्यस्सन्निपातश्च प्रवृत्तमिह कीर्तितम् ॥
इदमेव निवृत्यन्तं परं च स्थितवत्तु तत् ।
इति युग्मौजमिश्रत्वादुभयोर्मिश्रतोच्यते ॥
आहुर्युग्मप्रवृत्ताख्यमुद्घट्टाख्यं कलात्रयम् ।
उपवर्तनसंज्ञं तत्प्रवृत्तं कैश्चिदिष्यते ।
अथाङ्गविधिरस्यादौ विवधो मुखसंज्ञितः ॥
विवधो वा प्रवृत्तं वा नव प्रतिमुखं भवेत् ।
वैहायसिकमङ्गं स्यादेकाद्यैः षट्पदैर्युतम् ॥
विवधास्स्युरतोन्यानि समस्तान्येककानि वा ।
एवमङ्गैरुपाङ्गैश्च विंशत्यंशमिदं परम् ॥
षडङ्गमवरं ज्ञेयं तच्च तालसमाप्तिकम् ।

दत्तिलः

### उल्लोलम्—दर्शनम्

ऊर्ध्वीकृतोल्लसत्तारमुल्लोलमिति कथ्यते ।

शारदातनयः

### उल्लोलः—होडुक्किकहस्तपाटः

आलोलेन तलस्पृष्टाङ्गुष्ठकेन तु पाणिना ।
दक्षिणेन च वामेन करेणोल्लसितेन च ॥
उल्लोलसञ्ज्ञितो हस्तपाटस्सञ्जायते स्फुटम् ।
दक्षिणेन व्यवहिताङ्गुष्ठेनैनं परे जगुः ॥
यथा—झें झें झें झें धें धा झें ।

वेमः

### उशानी—मेलरागः

श्रीरागमेलजोऽयं रागः ।
उशानिरागे गान्धारे वक्रवर्जो विशिष्यते ।
आरोहे गस्य वक्रा गतिः ।
अवरोहे लोप इति स्यात् ॥

परमेश्वरः

### उपाणीरागध्यानम्

हुसेन्या नामान्तरं स्यात् ॥
कषायवस्त्रधारिणीं विपाणनादलोलुपां
चषप्रपूर्णासवप्रयुक्तहस्तपङ्कजाम् ।
झषाङ्कवैरिपूजनां वृषामिनन्द्यवैभवां
उषाणिकां विचिन्तयामि घोषिणीं सुभाषिणीम् ॥

रागसागरः

### उष्ट्रशीला—स्त्री

लम्बोष्ठी स्वेदबहुला किञ्चिद्विकटगामिनी ।
कृशोदरी पुष्पफललवणाम्लकटुप्रिया ।
उद्बद्धकटिपार्श्वा च खरनिष्ठुरभाषिणी ।
अभ्युन्नतकटिग्रीवा भवेदुष्ट्रीवनप्रिया ।

भरतः

### उष्णिक्छन्दोवृत्तानि

शतं विंशतिरष्टौ च वृत्तान्युष्णिह्यथोच्यते । १२८

भरतः

### ऊरुः

स्तब्धस्ततः कम्पितश्च वलितोद्वर्तितावपि ।
निवर्तितस्तथेत्यूरोः पञ्चधा लक्षणं मतम् ॥

अशोकः

### ऊरुद्वयताडितम्—पादमणिः

यस्मिन्नङ्गुलिपृष्ठेन स्थित्योत्प्लुत्य ततः क्रमात् ।
तलाभ्यां ताडयेदूरू तदूरुद्वयताडितम् ॥

वेमः

### ऊरुवेणी—देशीचारी

ऊरू स्वस्तिकसंयुक्तौ यत्राङ्घ्रिर्घर्षणं भुवि ।
कुरुतो निजपार्श्वाभ्यामूरुवेणी भवेदसौ ॥

वेमः

### ऊरूद्वृत्तम्—करणम्

ऊरूद्वृत्तां दधच्चारीमरालखटकामुखौ ।
यत्र व्यावर्तितौ हस्तौ निक्षिपेच्चोरुपृष्ठयोः ॥
ऊरूद्वृत्तं भवेत्प्रेमकोपेर्ष्याप्रार्थनासु तत् ।
अत्र हस्तः पताकस्स्यादिति कैश्चिधरं मतम् ॥

ज्यायनः

ईर्ष्यया प्रणयाहवे ।

लक्ष्मणः

### ऊरूद्वृत्तम्—चारी

तलसञ्चरपादस्य पार्ष्णिरङ्घ्रेः परस्य चेत् ।
पाण्युन्मुखी स्याज्जङ्घा च जानुकं किञ्चिदञ्चितम् ॥
अन्याङ्घ्रिजङ्घाभिमुखं वलितोद्वर्तितोरुका ।
ऊरोरुद्वर्तनादेतामूरूद्वृत्तां प्रचक्षते ॥

यद्वान्या पादपार्ष्णिस्तु तलसञ्चारसंज्ञिता ।
अङ्घ्रेः पार्ष्ण्युन्मुखी सञ्चार्यूरूद्वृत्तेति कथ्यते ॥

वेमः

ऊर्णनाभः—हस्तः

पद्मकोशस्य यत्र स्युरङ्गुल्यः पञ्च कुञ्चिताः ।
ऊर्णनाभस्स चौर्येण ग्रहे केशग्रहादिषु ॥
शिरःकण्डूयने कार्यश्चिबुकक्षेत्रगौ तु तौ ।
कार्यौ सस्वस्तिकौ सिंहव्याघ्रादिनखरायुधे ॥

शार्ङ्गः

ऊर्ध्वकोष्ठा—पुष्करवाद्ये जातिः

वञ्चितिकाशब्दं पश्यत ।

ऊर्ध्वजानु—करणम्

ऊर्ध्वजानुं दधच्चारीं पक्षवञ्चितमुन्मुखम् ।
अलपद्ममरालं वा निजस्योपरि जानुनः ॥
स्तनक्षेत्रे यथा यस्मिन्नपरं खटकामुखम् ।
वक्षस्तलस्थितं कुर्यादूर्ध्वजानु तदीरितम् ॥

ज्यायनः

ऊर्ध्वजानु—चारी

एकं कुञ्चितमुद्यम्य चरणं जानु तस्य तु ।
स्तनक्षेत्रसमं न्यस्य पादमूर्ध्वीकृतोऽपरः ॥
यत्र तामुत्पतेच्चारीमूर्ध्वजानुसमाह्वयाम् ।

वेमः

ऊर्ध्वमण्डलिनौ—नृत्तहस्तौ

व्यावृत्त्या वक्षसोऽरालवर्तनात्पार्श्वमागतौ ।
ततो मण्डलवद्भ्रान्तौ प्रसारितकरौ भुजौ ॥
पताकौ चेन्मनागूर्ध्वमण्डलौ नृत्तकोविदैः ।
चक्रवर्तनिकेत्यन्यत्प्रथितं नाम लोकतः ॥
प्राह कीर्तिधराचार्यः करयोरनयोरिति ।

ज्यायनः

व्यावृत्तिक्रियया वक्षस्स्थलात्प्राप्य ललाटकम् ।
तत्पार्श्वमागतौ हस्तौ विततौ मण्डलभ्रमात् ॥
ऊर्ध्वमण्डलिनौ प्रोक्तावथ लक्ष्मापरे जगुः ।
ललाटप्राप्तिमर्यादमथैतौ नृत्तकोविदाः ॥
चक्रवर्तनिकेत्याहुर्लोकशास्त्रानुसारतः ।

अशोकः

अरालौ तु यदा हस्तौ शीर्षस्योपरि संस्थितौ ।
ऊर्ध्वमण्डलिनौ ज्ञेयौ व्यावृत्तपरिवर्तितौ ॥

सोमेश्वरः

अरालौ हंसपक्षौ वा ललाटं प्राप्य वक्षसः ।

विप्रदासः

ऊर्ध्ववर्तना

वर्तितावूर्ध्वदेशे चेदुद्वृत्ताभिधहस्तकौ ।
तदोर्ध्ववर्तनाप्रोक्ता कोहलेन मनीषिणा ॥

अशोकः

ऊर्ध्वहस्तः—बाहुः

ऊर्ध्वं व्रजंश्छिरोदेशादूर्ध्वगस्तुङ्गवीक्षणे ।

कुम्भः

अस्य "ऊर्ध्वास्य" इत्यपि संज्ञान्तरं दृश्यते

ऊर्ध्वहस्तः—हस्तपाटः

गाढं दक्षिणहस्तस्य तलेनाहन्यते यदि ।
पटहस्य पुटद्वन्द्वमूर्ध्वहस्तो भवेद्यथा ॥

दिरिकिटगिडदां दां दां

वेमः

ऊर्ध्वालगम्—उत्प्लुतिकरणम्

करणस्यालगस्यान्ते पादावूर्ध्वीकृतौ समौ ।
यत्र तन्नृत्तचतुरैरूर्ध्वालगमुदीरितम् ॥

वेमः

ऊर्मिः—वर्णालङ्कारः (सञ्चारी)

तुर्यस्वरं प्लुतीकृत्य गीत्वाद्यं तुर्यमप्यथ ।
यत्रैकैकपरित्यागाद्गानमूर्मौ परास्वपि ॥

प्लुतीकृत्य—त्रिरुच्चार्येत्यर्थः ॥

जगद्धरः

परास्वपि—अन्यासु कलास्वपीत्यर्थः ॥

आद्या पूर्वं स्वरं तुर्यं त्रिरुच्चार्याद्यमेत्य च ।
तुर्यं गच्छेत्कलैकैकत्यागादूर्मिः कलाः पराः ॥

मामामासमा पापापारिपा धाधाधागधा नीतीनीमनी ॥

मोक्षदेवः

ऋक्—गीतम्

मन्त्रपदस्तोभैरिह सप्तभिरपि सामलक्षणैर्युक्ता ।
वर्णैरारोग्यादिभिरभिसंपन्ना तथैव च विदार्यो ॥

आरभ्यानुष्टुभमपि चाक्षरवृद्धेस्तथा जगत्यन्तैः ।
अपि लौकिकैः पदैरथवेदस्थैर्गदिता च या सततम् ॥
अष्टाधिकचत्वारिंशन्नियतायतकलाभिरपि यां च ।
ब्रूते मिथिलानाथस्तामृचमेतैस्तु लक्षणनिपातैः ॥

नान्यः

सप्तभिरिति । प्रस्तारादिभिः ।

आद्यः प्रस्तार उद्गीतः प्रतीहारस्ततः परम् ।
उपद्रवोऽथ निधनं हिंकारैंकारकौ तथा ॥
इति सप्त समाचष्ट सामाङ्गानि पितामहः ।
कलापूरकता प्रोक्ता हिंकारैंकारयोरिह ॥

वेमः

वृत्तैर्जगत्यवधिकैरारभ्यानुष्टुभं क्रमात् ।
लौकिकैर्वैदिकैस्यापि पदैर्गेया ऋगुच्यते ॥
अस्यामेकाक्षरश्चाष्टा चत्वारिंशत्कलाः स्मृताः
अस्यामणुष्ठुभादीनां छन्दसामनुसारतः ।
आसां कलानां विज्ञेयः प्रयोगनियमो बुधैः ॥
कलापूर्तिमन्त्रपदैस्तथा स्तोभाक्षरैरपि ।

वेमः

**ऋगादिः**

ऋचो वै ब्रह्मणा गीता ब्रह्मणोऽभिहितास्किल ।
दक्षेण पाणिकाश्चापि गाथा वै कश्यपेन च ।
मात्राभिश्च कपालानि सामान्युक्तानि नन्दिना ।
गीतकानि तु सप्तैव नारदेनोदितानि वै ।
षष्ठाष्टगुणपर्यन्तं द्वात्रिंशच्चतुरादितः ।
ऋग्गाथा च ब्रह्मगाथा कपालं तु त्रयोदश ।
षण्णवतिपादं साम तदर्धेनापि च क्वचित् ।

नान्यदेवः

**ऋज्वी—गतिः**

पुरतः पृष्ठतश्चापि पार्श्वयोश्च भवन्ति ताः ।
अन्वर्था च ऋजुः ।

देवणः

ताः—गतयः ॥

**ऋज्वी—रसना**

ऋज्वी साव्यक्तवक्त्रे या रसना स्यात्प्रसारिता ।
एषाश्रमेश्वापदानां पिपासायामपि स्मृता ॥

अशोकः

**ऋतुमूलहस्तः**

सव्येन शिखरं बध्वा वामहस्तेन यामिनीम् ।
शिखरोपरि यामिन्यां ऋतुमूलाभिधस्स्मृतः ॥
ऋतुमूलपार्श्वभागे तूपरत्यां नियोजयेत् ।

विनायकः

**ऋद्धिः—श्रुतिः**

मध्यमस्य तृतीया श्रुतिः ॥

अनूपः

**ऋषभः**

नाभेस्समुत्थितो वायुः कण्ठशीर्षसमाहतः ।
ऋषभं नदते यस्मादृषभो हि प्रकीर्तितः ॥

जगदेकः

नाभिमूलाद्यदा वर्ण उद्गतः कुरुते ध्वनिम् ।
ऋषभस्येव निर्याति हेलया ऋषभस्वरः ॥

पुरुषोत्तमः

उद्गीथायास्समुत्पन्नो ऋषभो रञ्जितस्वरः ।
शुकपिञ्जरवर्णोऽयं ऋषभो वह्निदैवतः ॥

ब्रह्मणा कथितः पूर्वं । वीररौद्राद्भुतेषु प्रवृत्तः । शिरसः उत्थितः । सनन्दो ऋषिः । प्रतिष्ठाच्छन्दः । सरस्वत्यधिदेवता । कुलीरे विश्रामन्तः । कुलीरः, कर्कटः ।

ऋषभस्त्रिश्रुतिस्तालुमूले तस्यापि संभवात् ।
मज्जाधातवग्निजो नाद ऋषभस्त्रिश्रुतिः स्मृतः ॥

ऋषभस्य शाकद्वीपः ।

तिस्रो धमन्यो वर्धन्यो मज्जाया नाभिमाश्रिताः ।
तस्माद्धात्वाश्रितत्वेन ऋषभस्त्रिश्रुतिर्भवेत् ॥

जगदेकः

ऋषभो वृषभपर्यायशब्दैरुच्यते ।

**ऋषभः—स्वरहस्तः**

मृगमौलिश्चापविद्धो ऋषभस्वर ईरितः ।

शृङ्गा

**ऋषभगजविलसितम्**

षोडशाक्षरवृत्तम् । भरनननगाः ॥

भरतः

गजविलसितं, इभललितं, मत्तगजविलसितमित्यादीनि नामान्तराणि ॥

**ऋषभचेष्टितम्**

सप्तदशाक्षरवृत्तम् । हरिणीवृत्तस्य नामान्तरम् ॥

**ऋषभप्रिया**—मेलकर्ता रागः
सं रि ग ० ० म प ध नि० स.

**ऋषभललितम्**—सप्तदशाक्षरवृत्तम्
हरिणीवृत्तस्य नामान्तरम् ॥

**ऋषभस्वरमन्त्रः**

दक्षिणो हृदयाय नमः । वार्तिक शिरसेस्वाहा । चित्रशिखायै वषट् । चित्रः कवचायहुम् । चित्रतरः नेत्रत्रयाय वौषट् । चित्र तमः अस्त्राय फट् । सनन्दन ऋषिः प्रतिष्ठाच्छन्दः सरस्वती देवता । ऐं ह्रीं सौं रिं नमः ॥

जगदेकः

**ऋषभाभिनयः**

हंसास्याभिधहस्तेन दक्षिणेन करेण तु ।
कटिस्थेनार्धचन्द्रेण समेन शिरसा तथा ।
ब्राह्माख्यस्थानकेनापि धीमान ऋषभमादिशेत् ।

दामोदरः

**ऋषिका**—मूर्छना
सुभद्रग्रामे पञ्चमी मूर्छना ॥
ऋषिका नाम विज्ञेया मूर्छना नृपवल्लभा ।
मूर्छत्वात्पञ्चमस्यैव सुभद्राख्ये तु सा भवेत् ॥

वादिमत्तः

इयं हृष्यकेति पठ्यते नारदशिक्षायाम् ।

**एकजानुनतम्**—देशीस्थानम्
पदमेकं स्वभावस्थमपरं चरणं पुनः ।
चतुरङ्गुलमाने चेत्किञ्चिदञ्चितजानुकम् ।
तिष्ठेत्तत्स्थानकं प्रोक्तमेकजानुनताभिधम् ॥

वेमः

**एकजानुप्लुतम्**—नृत्तकरणम्
एकजान्ववधूतं कं दृष्टिरुल्लोकिता यदा ।
शुकतुण्डारालहस्तौ तथा चार्यूर्ध्वजानुका ।
एकजानुप्लुताख्यं तदेवमङ्गान्तरे यदा ॥

नन्दी

अत्र एकजानु, स्थानकं, कं शिरः, ऊर्ध्वजानु, चारी.

**एकतन्त्री**—वीणा
इयं ब्रह्मवीणेत्यपि कथ्यते ।

श्रुतयोऽथ स्वरा मूर्छास्ताना नानाविधास्तथा ।
एकतन्त्रीकवीणायां सर्वमेतत्प्रतिष्ठितम् ॥

(स्वराः, श्रुतयः, मूर्छनाः, तानाश्च नैकत्रान्यवीणासु विभाव्यन्ते विहायैकतन्त्रीकाम्)

समुदायोऽस्ति नान्यत्र मतङ्गोऽप्याह तद्यथा ।
एकतन्त्र्यां स्वयमेवास्ति सरस्वतीति ॥

नान्यः

लक्ष्यते स्वरवीणाथ तत्स्वरूपपुरःसरा ।
अङ्गुष्ठपर्व दैर्घ्यं स्यादङ्गुलं कस्यचिन्मते ॥
मध्यमाङ्गुलिमध्यस्य मितं मानेन वा भवेत् ।
षड्भिस्तु निस्तुषैस्तुल्यैः सार्धैस्तिर्यग्यवोदरैः ॥
मितमत्राङ्गुलं यद्वा वाद्यभाण्डमितो भवेत् ।
वितस्तिस्तैर्द्वादशभिर्द्वे वितस्ती करो भवेत् ॥
मानेनानेन निर्माणमत्र सर्वत्र कल्पयेत् ।
खादिरस्सरलो वृत्तो ग्रन्थिव्रणमिदोज्झितः ॥
तथैव कांस्यजो वापि रक्तचन्दनजोऽथवा ।
वितस्तिपरिधिः श्लक्ष्णः पञ्चवितस्तिमिता यतिः ॥
स्वल्पदैर्घ्यस्य मानेन सुषिरं दधदन्तरा ।
सार्धाङ्गुलपरीणाहमूर्धाऽधो दधते तथा ॥
दण्डस्स्यादस्य पिण्डस्तु सपादाङ्गुलसम्मितः ।
उत्सेधेन त्र्यङ्गुलेन प्रस्थाकारेण भास्वता ॥
परिधौ दण्डतुल्येन त्रिभिस्त्रेताग्निवत्स्थितैः ।
कनिष्ठाङ्गुल्यममितैः सुषिरैस्तद्द्वयेन वा ॥
तर्जन्यङ्गुलिमानेन मध्यदेशेन भास्वता ।
स्वर्णादिपरिक्लृप्तेन विदध्यादूर्ध्वमाननम् ॥
खादिरं शाकजं वान्यद्दधानं ककुभं वरम् ।
अष्टाङ्गुलायतं तद्वद्विस्तारे त्र्यङ्गुलं श्रुतम् ॥
अङ्गुल्याधिकपार्श्वं च मध्ये कूर्मवदुन्नते ।
स्थितेन पत्रिकाधारगर्तेन च समन्वितम् ॥
गर्तमध्यस्थरन्ध्रेण त्रिकोणेन समन्वितम् ।
स्थौल्यात् रन्ध्रप्रमाणेन धातुभी रचितेन च ॥
गर्तरन्ध्रनिविष्टेन शङ्कुना कीलितं दृढम् ।
दधानं पत्रिकां श्लक्ष्णां मिश्रलोहमयीं समाम् ॥
अङ्गुलद्वयविस्तीर्णामायतौ चतुरङ्गुलाम् ।
अधस्ताद्दण्डयुगलं दधानं वर्तुलं समम् ॥
दण्डरन्ध्रमितः स्थौल्ये दैर्घ्ये चाष्टाङ्गुलं तथा ।
अस्याधरस्थितं शंकुं दण्डवक्त्रे निवेशयेत् ॥
यथाश्लिष्यति वीणाया दण्डेन ककुभो दृढम् ।
एवं विधस्य दण्डस्योर्ध्वादिशेत्त्वधस्तने (?) ॥

अङ्गुलैस्सप्तदशभिः कुर्याद्रन्ध्रद्वयं समम् ।
तदक्षसदृशं तत्रैकस्मिन्द्विगुणितामृजुम् ॥
तन्त्रीं प्रक्षिप्य यत्नेन तन्त्रीप्रान्तान्तरं पुनः ।
क्षिप्त्वा रन्ध्रेऽन्यत्र च तामाकर्षेद् द्विगुणां दृढम् ॥
पुनरित्थं प्रकुर्वीत यावत्तन्त्री दृढा भवेत् ।
षष्ट्यङ्गुलपरीणाहं वर्तुलं च पचेलिमम ॥
छेदने वक्त्रदेशेन द्वादशाङ्गुलविस्तृतम् ।
पिण्डितोऽङ्गुलमानेन सुदृढं स्निग्धमूर्तिमत् ॥
वृत्तिस्थानगता तस्य नाभिश्छिद्रसमन्विता ।
अङ्गुलत्रितयायामाधोमुखक्षितया तथा ॥
रन्ध्रवद्दण्डपृष्ठस्थपुष्ट्या मध्यरंध्रया ।
युक्तं नाभ्यादधच्छान्तनालिकेरजकर्परम् ॥
मध्यरन्ध्रयुतं नाभिरन्ध्रसंलग्नपृष्ठकम् ।
तुम्बं स्यादस्य रन्ध्रे तु तन्त्रीप्रान्तो निवेश्यते ॥
कर्परस्थितरन्ध्रेण तन्त्रीभिः काश्य यत्नतः ।
वेष्टयेत्कीलके तस्मिन् तत्कीलं भ्रामयेन्मुहुः ॥
तावद्यावद्दृढो बंधस्तुम्बस्यैपः प्रजायते ।
धीरैस्तुम्बुकमुत्तानमित्थं तत्र निबध्यते ॥
दण्डे तुम्बोर्ध्वदेशे च दोरकं श्लक्ष्णसूत्रजम् ।
अन्वितं नागपाशेन द्विगुणेन नवं दृढम् ॥
श्लक्ष्णां स्नायुमयीं तन्त्रीं बद्धप्रान्तां दृढां घनाम् ।
आवेष्ट्य नागपाशेऽस्मिन्नाकर्षेत्पत्रिकोपरि ॥
तामावेष्ट्य ततः शङ्कौ ककुभे पत्रिका दृढम् ।
निबध्नीयात्ततो जीवां समां वेणुमयीं मृदुम् ॥
तन्त्रीपत्रिकयोरन्तरङ्गुलं द्वितयायताम् ।
यतसंमितांविस्तारां नादजीवनहेतवे ॥
संदिग्धश्लेपतो नादकलनाद्वा कलां विदुः ।
सुवृत्तास्ते गुणा श्लक्ष्णा दोरिका पक्ववेणुजा ॥
द्वादशाङ्गुलिर्दीर्घा च कनिष्ठनखविस्तरा ।
मन्द्रस्थानस्वरज्ञानकारणं सुचलामृजु ॥
दण्डे तत्र निबध्नीयात्तुम्बकादङ्गुलत्रये ।
एवं लक्षणलक्ष्येयं वीणा स्यादेकतन्त्रिका ॥

कुम्भः

संकलं निष्कलं चेति द्विविधं वाद्यमीरितम् ।
एकतन्त्र्याः स्वयं भेदः कथितः इंभुना पुरा ॥
जीवा लग्ना प्रकर्तव्या यथा नादोऽभिजायते ।
स्थूलो ध्वनिर्भवेद्यत्र वाद्ये तत्सकलं भवेत् ॥
कलाहीना प्रकर्तव्या विन्दोरुत्पातहेतवे ।
तर्जनीमूलसंलग्ना तन्त्री चै निष्कलं भवेत् ॥

सोमेश्वरः

(अङ्गुष्ठपर्वमात्रं यत्तदंवाङ्गुलमीरितम् ।
वितस्तिर्द्वादशैतानि तद्द्वयं हस्त उच्यते ॥)
सुवृत्तः खादिरो दण्डो द्वादशाङ्गुलवेष्टनः ।
रन्ध्रत्रयसमायुक्तः श्लक्ष्णी दृष्टिमनोहरः ॥
षड्वितस्तिसमायामो गर्भे रन्ध्रसमन्वितः ।
सार्धाङ्गुलं तु तद्रन्ध्रं सुवृत्तं द्विमुखं भवेत् ॥
वरदारुसमुद्भूतः कार्यस्त्र्यङ्गुलविस्तरः ।
अष्टाङ्गुलायतो रम्यः पार्श्वे तु चतुरङ्गुलः ॥
कूर्मपृष्ठोन्नतो मध्ये पत्रिकाधारगर्तकः ।
तन्मध्ये योनिवद्रन्ध्रमधो भागे द्विदण्डकः ॥
किञ्चित्समुन्नतो मध्ये निम्नस्तत्पार्श्वयोरपि ।
दण्डाधाधारसंयुक्तः सुवृत्तश्चतुरङ्गुलः ॥
रन्ध्रप्रमाणस्थौल्येन शङ्कुना च समन्वितः ।
एवं विधः स्यात्ककुभः खादिरोऽयं मनोहरः ॥
सुपक्वं च सुवृत्तं च नानाश्रं नाभिसंयुतम् ।
वृत्तस्थानं तु नाभिः स्यात्त्र्यङ्गुला सा भवेद्वरा ॥
परिणाहो भवेत्तस्य द्विगुणस्त्रिंशदङ्गुलः ।
छेदयित्वा मुखं कार्यं द्वादशाङ्गुलविस्तृतम् ॥
वीणादण्डाग्रभागे स्यादधस्सप्तदशाङ्गुले ।
तुम्बकस्य च बन्धार्थमक्षिवत्सुषिरद्वयम् ॥
अधोभागे तु दण्डस्य ककुभं विनिवेशयेत् ।
ककुभे पत्रिकाः स्थाप्य मिश्रलोहमयी शुभा ॥
विस्तारे द्व्यङ्गुला सा स्याद्दैर्घ्ये च चतुरङ्गुला ।
कूर्मपृष्ठसमाकारा मध्ये निम्ना च किञ्चन ॥
रन्ध्रद्वयस्यान्यतमे तन्त्रीद्विगुणितां न्यसेत् ।
न्यसेदेकगुणां तद्वदन्यरन्ध्रे विचक्षणः ॥
आकृष्य द्विगुणां तन्त्रीं प्रोतां निष्कासयेत्ततः ।
तां च द्विगुणमावर्त्य तुम्बनाभौ निवेशयेत् ॥
कर्परं नारिकेलस्य सुमुखं पृष्ठरन्ध्रकम् ।
विन्यस्य तन्त्रीं तद्रन्ध्रे कीलके परिवेष्टयेत् ॥
कीलकं भ्रामयेत्तावत् यावच्च सुदृढं भवेत् ।
एवं तुम्बकबन्धोऽयमाख्यातस्सोमभूभुजा ॥
तुम्बकस्य तथा चोर्ध्वं साधुसूत्रविनिर्मितम् ।
बन्धनं वेष्टयेद्दण्डे नागपाशेन भूपितम् ॥

तस्मिन् द्विगुणिते पाशे तत्र तन्त्रीं निवेशयेत् ।
समां स्नायुमयीं श्लक्ष्णां सुदीर्घां सुदृढां घनाम् ॥
तया सम्पीड्य पत्रीश्च ककुभं परिवेष्टयेत् ।
तन्त्रीपत्रिकयोर्मध्ये जीवां तन्त्रीं विनिक्षिपेत् ॥
तन्त्री स्याद्द्व्यङ्गुला दैर्घ्ये यवगोधूमविस्तृता ।
तया सम्पद्यते नादः तेन जीवेति सा स्मृता ॥
किञ्चिल्लगति नो वेति पत्रिकां तत्र तन्त्रिकाम् ।
लग्ना सैव कला ज्ञेया वीणावादनवेदिभिः ॥
पक्ववंशसमुद्भूता द्वादशाङ्गुलमायता ।
कनिष्ठा नखविस्तारा श्लक्ष्णा वृत्ता मनोहरा ॥
तुम्बकाच्च तथाधस्ताद‌ङ्गुलत्रयमानतः ।
वेष्टयेद्दोरिकां सूक्ष्मां त्रिगुणां मन्द्रसूचिकाम् ॥
प्रधानरन्ध्रे निक्षिप्य वाद्या यत्नेन वैणिकैः ।
वीणामधोमुखीं कृत्वा ग्राह्या वादनहेतवे ॥
एतल्लक्षणयुक्तेयमेकतन्त्री वरा शुभा ।
दर्शनात्स्पर्शनाद्वापि ब्रह्महत्यां व्यपोहति ॥

सोमेश्वरः

श्लक्ष्णः सुवृत्तस्सरलो ग्रन्थिव्रणभिदोज्झितः ।
स्याद्वितस्तिपरीणाहो दण्डः खदिरदारुजः ॥
त्रिहस्तायामवांस्तावद‌ूर्ध्वंधर्धाङ्गुलसम्मितः ।
अन्तस्सुषिरमूर्ध्वाधः पवने च दृध्वत्तथा ॥
कनिष्ठाङ्गुलिविस्तारे गर्भरन्ध्रे द्वयोऽथवा ।
यद्वा त्रेताग्निसंस्थानरन्ध्रे त्रितयसंयुतम् ॥
तर्जनीपरिमाण स्यात्तत्र रन्ध्रद्वयं ततः ।
एकरन्ध्रमधः..............लारनम् ।
कर्तव्यस्तत्र ककुभः खदिरो वाथदारुजः ।
तिर्यगष्टाङ्गुलायामात्तथा त्र्यङ्गुलदैर्घ्यवान् ॥
कमठोऽन्तमध्य....................।
गर्तमध्ये योनिरूपरन्ध्रेण च समन्वितः ॥
अवस्थितेनात्र रन्ध्रे रन्ध्रस्थौल्येन शङ्कुना ।
पत्रिकामङ्गुलायामाम्मिश्रलोहमयीं नवाम् ॥
चतुरङ्गुलदैर्घ्यां च.................।
श्लक्ष्णेन त्र्यङ्गुलः स्थूलोत्तरार्धेन च शङ्कुना ।
उत्तरार्धश्च मध्यश्च दधता कमठोन्नतः ॥
दण्डानने संप्रविष्टाधोभागेन चान्वितः ।
द्विदण्डिकश्च ककुभः श्लाघ्य एवं विधो भवेत् ॥

अथ दण्डस्य चोर्ध्वाग्रादधस्सप्रदशाङ्गुलात् ।
भागे तुम्बद्वयं धार्यं तत्र द्वन्द्वोपमं ततः ॥
विधाय रन्ध्रयुगलं तयोरेकत्र निक्षिपेत् ।
तन्त्रीं द्विगुणितामन्यत्रैकमेव निवेशयेत् ॥
ततश्च द्विगुणां तन्त्रीं कृष्ट्वा निस्सारयेद्दृढम् ।
एवं तां त्रिगुणां तन्त्रीं नाभौ तुम्बस्य निक्षिपेत् ।
अष्टाङ्गुलपरीणाहं स्निग्धं पक्वं च वर्तुलम् ॥
द्वादशाङ्गुलविस्तारं वदनं तुम्बमिष्यते ।
तस्य नाभिर्भवेद्वृत्तसंस्थानाधोमुखी तथा ॥
दन्तसंश्लिष्टपृष्ठा च सरन्ध्रा त्र्यङ्गुलायता ।
दण्डतुम्बकयोर्मध्ये कर्परं नारिकेलजम् ॥
.................मध्ये रन्ध्रेण चान्वितम् ।
कृत्वा तद्रन्ध्रमध्येऽथ तन्त्री प्रान्तौ निवेशयेत् ॥
दण्डान्तस्थे कीलके तौ संवेष्ट्य.........।
एवं निबध्यते तुम्बमुत्थानीकृत्य वोविदैः ॥
दण्डेऽथ तुम्बकादूर्ध्वं बलवत्सूत्रनिर्मितः ।
दोरकं नागपाशेन द्विगुणेन समन्वितम् ॥
वेष्टयित्वा ततस्तस्मिन् नागपाशे सुशोभने ।
गण्डप्रान्तं घनां तन्त्रीं पट्टसूत्रमयीं दृढाम् ॥
कृष्ट्वा ततः पत्रिकां च निपीड्य ककुभं तया ।
तन्त्र्या संवेष्ट्य सुदृढं निबध्नीयाद्विचक्षणः ॥
ततस्तनुतरां वेणुमयीं च यवविस्तराम् ।
तन्त्रीपत्रकयोर्मध्ये जीवां तु द्व्यङ्गुलायताम् ॥
नादस्य सिद्धये कुर्याद्यतो नादस्तु जायते ।
जीवेति सा निगदिता नादं जीवयतीति सा ॥
तन्त्रिका पत्रिकायां तु किञ्चित्स्पृशति वा नवा ।
इति या क्षिप्यते तत्र सा कलेति प्रकीर्तिता ॥
दृष्टा स्पृष्टा च वीणेयं भवेत्स्वर्गापवर्गदा ।
एक तन्त्री पुनात्येषा महापातकिनोऽपि च ॥
सर्वदेवमयी सर्वसौभाग्यफलदायीनी ।

नेमः

## एकतन्त्रीवादनक्रमः

वादनस्य प्रकारोऽस्याः साम्प्रतं गद्यते मया ।
एतस्या दोरिकादेशसधस्तुम्बमधोमुखम् ॥
ऊर्ध्वतन्त्री यथा तद्वद्वामे स्कन्धे निधाय च ।
पार्ष्ण्यां दक्षिणपादस्य ककुभं धारयेद्दृढम् ॥

वामहस्तकनिष्ठायामथ विन्यस्य तन्तिकाम् ।
आवेष्टितानामिकां च काञ्चित्कुञ्चितमध्यमाम् ॥
अङ्गुलीपार्श्वसंलग्नां तर्जन्यग्रनिपीडिताम् ।
उरःस्थलासन्नतन्त्रीं मध्यदेशे निवेशयेत् ।
एवं वाममधश्चोर्ध्वं सारयेन्नादसिद्धये ॥
हस्तं तु दक्षिणं जीवाप्रदेशाद्द्वादशङ्गुलम् ।
सन्त्यज्य तन्त्र्यां विन्यस्य चोर्ध्वाधस्सारयेत्क्रमात् ॥
ऊर्ध्वं वक्षस्तलादेनां न नयेद्दक्षिणं करम् ।
अन्यस्योपरि वाद्यात्तु स्यादयं सारणाविधिः ॥

वेमः

दोरिकायास्तलोद्देशं वामस्कन्धे विधाय च ।
पार्ष्णिना दक्षिणेनाथ ककुभं धारयेद्दृढम् ॥
वामहस्तकनिष्ठायास्तुम्बस्योपरि सारणम् ।
वेष्टयित्वानामिकया समाकुञ्च्य च मध्यमाम् ॥
तत्पार्श्वमग्रसंलग्नां तर्जन्यग्रेण सारयेत् ।
इति वामकरन्यासः सारणाधारणे स्मृतः ॥
वक्षःस्थलसमुद्देशे सारणास्थापनं भवेत् ।
अत ऊर्ध्वं ततो गच्छेत्क्रियाभेदमवाप्य सः ॥
वामहस्तादधः कार्यो नितरां दक्षिणः करः ।
त्यक्त्वा वितस्ति जीवायाः स्थानं तस्य विनिर्दिशेत् ॥
क्रियाभेदमपेक्षासावधश्चोर्ध्वं च गच्छति ।
विहायोपरि वाद्यं तु वामादूर्ध्वं न गच्छति ॥
वामहस्तक्रियाभेदः सारणेति निगद्यते ।

सोमेश्वरः

**एकतन्त्र्या अङ्गदेवताः**

दण्डश्शम्भुरुमा तन्त्री ककुभश्च जनार्दनः ।
पत्रिका कमला तुम्बं ब्रह्मा नाभिस्सरस्वती ॥
दोरको वासुकिः प्रोक्तो जीवायां तु सुधाकरः ।
दोरिकायां स्थितस्सूर्यस्तस्मादेषा हि पावनी ॥

सोमेश्वरः

**एकतालः—ध्रुवालङ्कारः**

एकतालेन युक्तत्वादेकतालः प्रकीर्तितः ।
एकद्रुतेनैकताल एकतालस्य लक्षणम् ॥
लक्ष्ये त्विदानीमेतादृगेकतालो न रक्तिदः ।
इत्येकतालस्थानेऽस्मिन्नादितालो निवेशितः ॥
आदिताले त्वेकलघुः चतुरक्षरसम्मितः ।

वेङ्कटमखी

**एकताली—गीतालङ्कारः**

एकताली त्रिधा प्रोक्ता गीतवाद्यविशारदैः ।
रामा च चन्द्रिका तद्वद्विपुलेत्यथ लक्षणम् ॥

संगीतसारः

**एकताली—भङ्गतालः**

द्रुतेन लघुना वापि गुरुणैकेन वा भवेत् ।
एकैकैरेव पतनैरेकताली त्रिधा भवेत् ॥

नान्यः

**एकताली—देशीतालः**

एकेनैव द्रुतेनस्यादेकतालीति संज्ञया ।
स रि ग म प ध नि

जगन्नाथः

**एकताली—प्रबन्धः**

वारद्वितयमावर्त्य गेयावुद्ग्राहकध्रुवौ ।
आभोगं च सकृत्कृत्वा ध्रुवे न्यासो विधीयते ॥
प्रासप्राया यतिप्राया ध्रुवप्राया गतिर्भवेत् ।
एकतालेन गेयास्यादेकतालीति कीर्तिता ॥

हरिपालः

लक्षणं लम्भकस्यैव किं तु तालो द्रुतो भवेत् ।
एकतालीति नाम्नैषा कथिता सोमभूभुजा ॥
आलापनिर्मितैः कैश्चिदस्या उद्ग्राह उच्यते ।

जगदेकमल्लः

**एकपदकुट्टिता—मुडुपचारी**

स्वपार्श्वे कुट्टितः पूर्वं स्थापितोऽङ्गुलिपृष्ठतः ।
कुट्टितश्च पुनस्स्थाने तदैकपदकुट्टिता ॥

अशोकः

**एकपाठ्यम्**

पाठ्यमेकं तु विज्ञेयं संस्कृतं प्राकृतं यथा ।
कमलामलरेणुतरङ्गलोलसलिलादिवाक्यसंपन्नम् ।
प्राकृतबन्धेप्येवं संस्कृतमपि योगमुपयाति ॥

भरतः

**एकपादम्—देशीस्थानम्**

एकस्स्वभाविकोऽङ्घ्रिस्स्यादपरश्चरणः पुनः ।
तदूरुबाह्यपार्श्वेद्वाङ्घ्रमेण समाश्रितः ॥
एकपादाभिधं स्थानं कथितं नृत्तकोविदैः ।

वेमः

**एकपादः**—नारदीयतानः

नि रि ग म प ध (अथवा)

नि रि ग म प ध नि

मध्यमग्रामे प्रथमतानः।

नान्यः

**एकपादभ्रमरी**

भ्रामयेदेकमेकेन पादं पादेन सत्वरम्।
सा त्वेकपादभ्रमरी भवेदिति विनिश्चिता॥

नाट्यदर्पणे

**एकपादाञ्चितम्**—उत्प्लुतिकरणम्

एकपादस्थितः कुर्यादेकपादाञ्चितं तदा।

ज्यायनः

**एकपार्श्वगतम्**—देशीस्थानम्

प्रकृतिस्थस्य पादस्य पुरस्तिर्यङ्महीतले।
बाह्यपार्श्वेन निहितश्चरणोऽन्यो यथा मनाक्॥
तदा स्थानं तदादिष्टमेकपार्श्वगतं भवेत्।

वेम.

**एकरागमेला**

शुद्धमेलामध्यमेलाख्यवीणयोरेकरागमेलेत्यवान्तरभेदः।

मध्ये तारे तथैकैकरागे स्यात्स्वरमेलनम्।
एषैकरागमेलोक्ता वीणावादनतत्परैः॥

श्रीकण्ठः

अस्यां वीणायां सार्यो रागानुसारेण तदा तदा निवेश्याः। यदि रागान्तरं गीयते तदा सार्यः स्थानान्तरे निवेश्याः। मनुचरिताख्यान्ध्रग्रन्थे वरूथिन्या नायिकाया विरहावस्थावर्णने भाषायामिदमुक्तम्। हे सुन्दरि त्वया वीणायां कृतं मेलनं रागस्य। तदुपरि विरहावस्थया त्वया वीणैवोपेक्षिता। सा (वीणा) तु मेलनकृतं रागमेव वाताहत्यालपति। अयं तु कालः देशाक्षिरागस्यागतः। देशाक्ष्या मेलनं कुरु इति। अत्र प्रत्येकं एकैकरागस्य मेलनं भिन्नभिन्नमिति व्यक्तं भवति। तस्या वीणा एकरागमेलेत्यूह्यम्। सारीणां श्रुतिस्वरस्थानेषु निवेश्यत्वात्ता चलचार्य इति गम्यते। आधुनिकवीणायां सार्यस्स्थिरा एव।

**एकरूपः**—वाद्यालङ्कारः

सर्वातोद्यानि यत्रैकं करणं भावयन्ति तु।
समवृत्तपदान्येवमेकरूप उदाहृतः॥

भरतः

एकस्यैव प्रयोगस्य निर्वाहादेकरूपतः।
आतोद्यैः सकलैरेवमेकरूप इति स्मृतः॥

नान्यः

**एकरूपा**—पुष्करवाद्ये जातिः

वामोर्ध्वगप्रवृत्ता चोधे क्षिप्तावकृष्टलययुक्ता।
सा करुणरसप्राया जातिः स्यादेकरूपा तु॥ अभिनवगुप्तपाठः
घत्तिदमधिटोङ्क एभिर्वाद्याक्षरैस्ससमायुक्ता।
स्यादेकाख्या जातिः शृङ्गारे साधमङ्गीणाम्॥ नेपालपाठः
गोमुख्याङ्कितालिप्ता वितस्तावाश्रिता यदा।
यत्र वाद्यं तदैकैके एकरूपाहि सा यथा॥ प्राचीनपाठः

भरतः

**एकवाक्यम्**

एकया क्रियया सर्ववस्तूनामर्थनिश्चयः।
एकवाक्यमिति ज्ञेयं भिन्नवाक्यमतोऽन्यथा॥

सङ्गीतसर्वस्वम्

**एकवाद्या**—अवनद्धे जातिः

धो धो धे धे धो धमेमिधात्वक्षरैश्च संयुक्ता।
सा ह्येकवाद्यजातिर्नृत्तगतौ विधानतः कार्या॥

भरतः

यथाक्षरसमं युक्तामेकमेव भवेत्पुनः।
अन्येनान्येन संयुक्ता ह्यैकवाद्या च सा भवेत्॥
एकाक्षरस्य वैचित्र्यवादनातोद्ययोगतः।
एकवाद्येति तां देवः श्रीमान्नान्योऽनुमन्यते॥

नान्यः

**एकवीरवंशः**

अङ्गुलैः स्याद्द्वादशभिर्यवद्वितयसंयुतैः।
एकवीरे दण्डमानं मुखताराख्यरन्ध्रयोः॥
अन्तरं चापि विज्ञेयं एकाङ्गुलकसम्मितम्।
लक्ष्मीमापतिवंशस्य लक्षणेनोदितं परम्॥
इत्युक्तमेकवीरेण लक्ष्म वंशैकवीरगम्।

कुम्भः

**एकशाल्मली**—संगीतशृङ्गाराङ्गम्

समारूढप्रौढविस्रंभानुरागोद्दीपनापदेश्यमहिम्नीश्च क्रीडाः प्रवर्तयेत्। तास्वेकमेव कुसुमनिर्भरं शाल्मलीवृक्षमाश्रित्य मुनिमीलितकारिमिः खेलनाक्रीडा।

भोजः

**एकस्वरः**—वर्णालङ्कारः

यत्रैकाघातउचिराः स्वरास्सर्वे क्रमादमी।
भवन्ति स यथोद्देशमेकस्वर इहोच्यते॥

यथा—सरिगमपधनि। क्रमेणारोहणादारोही एकस्वरः। व्युत्क्रमेणावरोहेऽयमेवावरोही एकस्वरश्च भवति। एकधातुरुचिरा इत्यादितालस्यैकलघुत्वाभिप्रायेण। अस्यादितालानुगतत्वेनानुपूर्वविशिष्टत्वादलङ्कारत्वम् ॥

संगीतसरणिः

**एकाक्षरा**—श्रुतिः

ऋषभस्य तृतीया श्रुतिः। मण्डलीमते तारर्षभस्यैव। तारपञ्चमस्य प्रथमा श्रुतिः ॥

पार्श्वः

ऋषभे तृतीया श्रुतिः।

पाल्कुरिकि सोमः

**एकाक्षरी**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग म प ध नि स.

(अव) स नि प म रि ग म रि स.

मञ्जः

**एकाग्रणीः**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म प ध नि स.

(अव) स नि ध नि प म ग रि स.

मञ्जः

**एकाङ्घ्रिलोहडी**—उत्प्लुतिकरणम्

एकपादे स्थितस्स्थाने लोहडीं कुरुते यदा।

एकाङ्घ्रिलोहडी सा तु तदा नृत्तविदां मता ॥

वेमः

**एकान्दोली**—मेलरागः (षड्विधमार्गिणीमेलजन्यः)

(आ) स रि म प नि स.

(अव) स नि ध प म ग म रि स.

मञ्जः

**एकार्थम्**—काव्यदोषः

अविशेषाभिधानं यत्तदेकार्थमिति स्मृतम्।

भरतः

**एकार्थीभावः**—भक्तिः

ततश्चैकत्वसंपत्तिमेकार्थीभावनं विदुः।

ततश्चेति। व्यपेक्षावतां समर्थानां अन्वितानां पदानामित्यर्थः। तद्विभागस्तु—

नीरक्षीरादिवत्क्वापि क्वचित्पांसूदकादिवत्।

तिलतंडुलवत्क्वापि बहुधा दृश्यतेऽन्वयः ॥

तद्यथाक्रमं पदवाक्यविषयमेतत् ॥

साहित्यमीमांसा

**एकावसाना**—चतुष्पदागीतम्

वर्णाधिनं भवेद्यस्यामेकपादे समापनम्।

एकावसाना सा ज्ञेया गीतज्ञैस्तु चतुष्पदा ॥

वेमः

**एकाश्रया**—कला

एकं धृत्वा धरण्यां चरणमथ परेणाङ्घ्रिणोरूद्धृतेन
प्रायो हस्तेन चैकेन खलु वितनुते चण्डचक्रभ्रमिं च।
पात्रं कांस्यस्थनिम्नं शिरसि च दधती साम्बु यत्रान्यहस्ता
क्षिप्त्वा गृह्णाति गोलान क्षिपति दिवि पुनः पाणिनैका-
[श्रयेति ॥

नागमल्लः

**एकोच्चौ**—स्कन्धौ

एकोच्चयोः प्रयोगस्स्यान्मुष्टिकुन्तप्रहारयोः।

विप्रदासः

मुष्टिप्रहारे कुन्तहुडुक्कावादने तथा।

सोमेश्वरः

सोमेश्वरः—एकान्त इत्याह ॥

**एडका**—पादभूषणम्

ईदृग्रूपसमायुक्ता नानारत्नैर्विनिर्मिताः।

ध्वनिहीनास्सुशोभाढ्या एडकाः परिकीर्तिताः ॥

सोमेश्वरः

**एलकाक्रीडितम्**—मण्डलम्

सूचीविद्धाश्रितैः पादैः धरणीतलसंयुतैः।

एलकाक्रीडिताभिश्च चारीभिस्तदनन्तरम् ॥

पूर्णाभिर्भ्रमरीभिश्च सूचीविद्धाङ्घ्रिभिस्तथा।

ततश्चाक्षिप्तचारीभिः क्रमादाशाचतुष्टये ॥

मण्डलभ्रमणेन स्यादेलकाक्रीडिताह्वयम् ॥

वेमः

**एलकाक्रीडितम्**—करणम्

एलकाक्रीडिता चारी तदा गात्रं च सन्नतम्।

वलितं च करस्त्वेको डोलोऽन्यः खटकामुकः ॥

एलकाक्रीडितं तत्स्यादधमस्योपसर्पणे।

वेमः

**एलकाक्रीडिता**—चारी

यत्र किञ्चित्समुत्पत्य चरणौ तलसञ्चरौ।

पर्यायात्पततस्सेयमेलकाक्रीडिता भवेत् ॥

वेमः

एलाः — प्रबन्धः

एलानां वक्ष्यमाणानां सर्वासां प्रकृतिर्यथा ।
उद्ग्राहे पादनियमः प्रयोगः पल्लवाभिधः ॥
पदं च ध्रुवमाभोगो नेतुर्गातुश्च नामतः ।
तत्तत्स्थानेष्वनुप्रास इति सामान्यलक्षणम् ॥

जगन्नाथमल्लः

नादानन्दा ततो हंसी भद्रा चित्रोपचित्रका ।
कमला ललिता लीला ज्योत्स्ना रम्भा तथापरा ॥
मार्गावती च मुग्धा च विद्युन्माला तथैव च ।
कुन्दप्रभा शशिलेखा चूतमञ्जरिकापि च ॥
मधुकरी चेति ज्ञेया एला अष्टादशैव तु ।

नान्यः

एला चतुर्विधा, नादावती, हंसावती, नन्दावती, भद्रावतीति शुद्धा जातयः ।

आद्यास्तिस्रस्तु प्रोक्ता गणविकारतः ।
वासवी सङ्गता त्रेता चतुरा बाणसंज्ञका ॥
एकद्वित्रिचतुःपञ्चगणानां विकृतौ क्रमात् ।

वासवी तु रामा, मनोरमा, उन्नता, शान्तिः नागरा, इति प्रथमादिगणविकृतेरन्तरभेदाः ॥ तथैव सङ्गतायाः रमणीया, विषमा, समा, लक्ष्मी, कामुकी, मदनोत्सवा, नन्दिनी, गौरी, सौम्या, रतिदेहा, इति दश भेदाः ॥ त्रेतयाश्च कोमला, विजया, मध्या, जयमङ्गला, उत्कलिका, वीरश्रीः रत्नमाला, रतिमङ्गला, तनुमध्या, रतिप्रभा, इति दश भेदाः ॥ चतुरायास्तु, उत्सवप्रिया, महानन्दा, लहरी, जया, कुसुमावतीति पञ्चभेदाः ॥ बाणायाः एक एव भेदः । एवमाहत्य एकत्रिंशदेलाभेदाःस्युः ॥ नादावती, हंसावती, नन्दावती, एतासां प्रत्येकं एकत्रिंशद्भेदैराहत्य त्रिणवतिभेदास्युः ॥ एलास्तु पुनः गणैला, (त्रिणवतिभेदभिन्ना) मात्रैला चतुर्भेदा, वर्णैला द्वादशभेदा, देशैला सप्तभेदा, इति । मात्रैलायाः रतिलेखा, कामलेखा, बाणलेखा, चन्द्रलेखेति तत्तन्मात्रागणभेदैः भेदाः स्युः वर्णैलायास्तु वर्णसंख्यानियमेन भेदाः स्युः । यथा—मधुकरी, सुस्वरा, करिणी, सुरसा, प्रभञ्जनी, मदनवती, शशिनी, प्रभावती, मालती, ललिता, भोगवती, कुसुमवतीति द्वादश । देशैला देशभेदेन तालभेदेन च प्रधानतया सप्त भवन्ति । यथाह मोक्षदेवः—

कर्णाटलाटगौडान्ध्रद्राविडानां तु भाषया ।
देशास्यैला सुमठ्यादितालेनोक्तेन केनचित् ॥ इति

नान्यदेवमोक्षदेवयोरेलाविभागः ॥

कुलशीलवयोविद्यात्यागशौर्यादिभिर्गुणैः ।
वर्ण्यते नायको यत्र तामेलां कवयो विदुः ॥
उद्ग्राहस्तथानुग्राहस्संबोधो ध्रुवकं तथा ।
आभोगः पञ्चपादास्स्युरेलायाः कश्यपोदिताः ॥

प्रस्ताव उद्गीतं च प्रतीहार उपद्रवः ।
निधनं चेति पञ्चाहुर्बुधास्सा तु सुगीतके ॥
प्रस्तावस्सामगीतेषु एलासूद्ग्राह उच्यते ।
इतराणि यथासंख्यमनुद्ग्राहिषु संख्यया ॥
प्रयोगगमकप्रौढा एलाङ्गं यस्तु पूरयेत् ।
आभोगः पञ्चमः पादः सर्वास्वेलासु सर्वदा ॥
अन्येष्वपि च गीतेषु स तु न्यूनस्स्वर्णकः ।
उद्ग्राहध्रुवकौ स्यातां सर्वत्र विनिवर्तिनौ ॥
एलाकरणभञ्जीषु प्रायशो न तथाविधौ ।
आद्यं पदद्वयं कार्यं सप्रासं गीतकोविदैः ।
आद्यं पदद्वयं त्यक्त्वा सर्वास्वेलासु गीयते ॥
उद्ग्राहः प्रासबहुलः अनुद्ग्राहस्तथैव च ।
संबोधो निरनुप्रासः संबोधनपदान्वितः ॥
ध्रुवस्तु वर्णनामाङ्कः आभोगाधिक उच्यते ॥
आभोगः कविनामाङ्को न्यून आशीः पुरस्सरः ।
एला तु त्रिविधा प्रोक्ता नादतालकलान्विता ॥
नादो माधुर्यगमकः प्रौढत्रिस्थानशोभितः ।
अलङ्काराः प्रयुज्यन्ते प्रतिपाताः पदे पदे ॥
श्रुतिशोभासमायुक्ता तामेलां कवयो विदुः ।

एला अष्टादशैव तु ।

एला गणद्वयेन द्वे द्विद्विवृध्या तथापरा ।
षड्विंशतागणै...जातिरष्टादशी स्मृता ॥

नान्यः

ऐन्द्रम्—करणम्

नन्द्यावर्ताह्वयं स्थानं नागबन्धाह्वयौ करौ ।
रेचिता वा कटीदेशे असकृत्पातयेत्ततः ॥
अङ्गुलीपृष्ठसंचारीत्वन्यः कुट्टनसंयुतः ।
यत्रैतत्सकलं दृश्यं कान्तमैन्द्रं तु तद्विदुः ॥

हरिपालः

ऐन्द्रवर्धनः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म प ध नि प स.
(अव) स ध म ग रि स.

मयः

ऐरावतः—मेलरागः

कल्याणमेलसंभूतो धहीनः पञ्चसंगतः ।
ऐरावतो गपूर्वोक्तो न्यासषड्जविभूषितः ॥

द्वितीयप्रहरोत्तरगेयः ।

अहोबिलः

ओघः—करणम्

यदा विलम्बितलयं प्रयुङ्क्ते मुख्यवैणिकः ।
तदैवातिद्रुतलयं करचातुर्थयोगतः ।
वैपञ्चिकाद्याः कुर्युश्चेदोघमाचक्षते तदा ॥

शार्ङ्गः

ओघः—गीतवाद्यमेलनप्रकार

वैचित्र्यात्तस्य वाद्यस्य गीतानुगमने सति ।
भागशस्समुदायानुकारित्वमुपदिश्यते ।
निरन्तरं पाणिघातैः तदोघ इति वर्ण्यते ॥

कुम्भः

आविद्धकरणवहुलं ह्युपर्युपरि पाणिकं द्रुतलयं च ।
अनपेक्षितगीतार्थं वाद्यन्त्वोघे विधातव्यम् ॥

भरतः

ओघः—पुष्करवाद्ये गतिः

सर्वभाण्डविधेयो द्रुतपाणिलयो नद्योघवदोघः। यथा—धं किटि मत्थकि टिकिटिघे घघ घ देदेण घाण खोणो खो। घद्दु गुदु घद्दु गुदु पद्घे रेणिण एतं तथौघे च ॥

भरतः

ओघः—मृदङ्गवाद्ये अक्षरानुसरणं वादनम्

नैककरणाश्रयगतं ह्युपर्युपरिपाणिकं द्रुतलयं च ।
आविद्धकरणवहुलं योज्यं वाद्यं बुधैरोघे ॥

भरतः

ओघः—वाद्यम्

गीतस्यान्तेऽनुकर्तापि भागशश्चातुरीवशात् ।
निरन्तरैः पाणिघातैस्समुदायानुकारितम् ॥
वादको दर्शयेद्वाद्ये यत्रौघं तं प्रचक्षते ।

शार्ङ्गः

ओघः—वीणाकरणम्

मत्तकोकिलवीणायां विलम्बितलयो यदा ।
वाद्यते करचातुर्यात्तदैवातिद्रुतं लयम् ।
वाद्यते चेद्विपञ्च्यादावोघः स्यात्करणं ततः ॥

कुम्भः

प्रधानवीणायां मत्तकोकिलायां यदा विलम्बितलये वाद्यते तदुपस्कारभूतेषु विपञ्चीनकुलादुषु अतिद्रुतलयो गृहीतश्चेदोघ इति करणं स्यात्। भरतः

"आविद्धकरणयोगादुपर्युपरि पाणिवैश्चौघः।" इत्याह ॥

अविद्धकरणलक्षणे द्रुतलयत्वं सूचितम्। उपर्युपरि पाणिके मृदङ्गादिवाद्येषु द्रुतगत्या पुरोगमनं सूचितम् ॥

ओजः—काव्यगुणः

समासवद्भिर्बहुभिः विचित्रैश्च पदैर्युतम् ।
सानुरागैरुदारैश्च तदोजः परिकीर्त्यते ॥

भरतः

अवगीतोऽपि हीनोऽपि स्यादुदात्तावभासकः ।
यत्र शब्दार्थसंपत्त्या तदोजः परिकीर्तितम् ॥ पाठान्तरम्

बहुभिरेकसमासंज्ञायुक्तैरथ च विचित्रैर्यमकैः पदैर्यदुक्तं यो बन्धः तदोजः। यथा—सानुरागैर्यत्र वर्णो वर्णान्तरमपेक्षते तत्र सानुरागत्वम्। तदेव गाढत्वमुच्यते। निबिडावयवतैव समासेन संक्षेपेण युक्तानि पदानि यत्रार्थभूयानीति संक्षेपो नामर्थगुण ओजः। ओजस्वी किमतोऽपि भूयस्त्वमाक्षिपति। तथा एकमपि वस्तु उदारैर्बहुभिः पदैः उपनिबद्धयतं विस्तरात्मकत्वमपि। ओजो अर्थगुणः ॥

अभिनवः

गाढबन्धत्वमोजः ।

वामनः

ओजस्समासभूयस्त्वमेतद्गद्यस्य जीवितम् ।
पद्येऽप्यदाक्षिणात्यानां इदमेकं परायणम् ।
अन्येत्वनाकुलं हृद्यं इच्छन्त्योजो गिरां यदा ॥

दण्डी

ओजस्समासबहुलसन्दर्भसुमनोहरम् ।

सर्वेश्वरः

ओजः—सन्ध्यन्तरम्

ओजस्तु वागुपन्यासो निजशक्तिप्रकाशकः ।

सिंग.

यथा—देवीचन्द्रगुप्ते, सद्वंशां प्रथुवर्ष्मेत्यादि चन्द्रगुप्तवाक्यं. विदूषकं प्रति एतदोजसाभिहितम् ॥

भोजः

ओजस्वी—उपाङ्गरागः

तस्याः त्रिगेत्रकृते रङ्गेसोजस्वीमन्द्रमध्यमा ।

भट्टमाधव.

ओजस्वी—क्रियाङ्गरागः

सग्रहान्तमन्द्रमध्या ऋषभेण विवर्जिता ।
स्यात्स्व.भावकृतेरङ्गमोजस्वी कम्प्रपञ्चमा ॥

कुम्भः

**ओजस्वी**—(प्रबन्धे)नादः

निबिडाक्षरबन्धत्वात्तिषु स्थानेषु दीयते ।
एवंभावस्तदोजः स्यादोजस्वी तद्युतो रवः ।।

कुम्भः

**ओता**—भ्रमरी

कृतोत्प्लुतिर्वामपादतलेन,तु मुहुर्मुहुः ।
ताडयन् दक्षिणस्योरु यत्र भ्राम्येत्प्रदक्षिणः ।
ओता भ्रमरिका सेयं नृत्तविद्भिरुदाहृता ।।

वेमः

**ओता**— वाद्यप्रबन्धः

यत्र पाटाक्षरैस्तालो विना पाटं यथाक्षरम् ।
वाद्यते वाद्यचतुरैरोता सा तु निगद्यते ।।

सोमराजः

आदौ यत्रोद्ग्राहखण्डं द्विवारं सम्प्रयुज्यते ।
ततश्च खण्डमन्यद्विर्भूरिटेङ्कारबन्धुरम् ।।
वारे द्वितीये तत्खण्डं मानादधिकमुच्यते ।
ततः खण्डं तृतीयं तु शुद्धैः कूटैर्विमिश्रितैः ।।
व्यस्तैरपि समस्तैश्च पाटैस्तु परिकल्पितम् ।
किञ्चिद्दीर्घं प्रयोक्तव्यं ततो टेङ्कारसंयुतम् ।।
खण्डं सकृत्प्रयोक्तव्यं ततो दीर्घतरं परम् ।
प्रयोक्तव्यं प्रयोगज्ञैः खण्डं वर्णसरात्मकम् ।।
ततः परं शुद्धकूटं मिश्रपाटविनिर्मितम् ।
खण्डं पुनश्च क्रियते त्ववसाने च छण्डनम् ।।
एतेषां कथ्यते कैश्चिदेंकारान्ता तु सा स्मृता ।
चच्चत्पुटस्त्वेककलः सर्वखण्डेष्विहेष्यते ।।
छण्डणे तु विधातव्यस्तालो निस्सारुसंज्ञितः ।
प्रायो विलम्बितं मानमत्र स्यादुद्धतो ध्वनिः ।
नृत्तमप्युज्वलं कार्यमियमस्या उदाहृतिः ।।

वेमः

उदाहृतिः रत्नाकरादवगन्तव्या ।

स्वेच्छाकल्पितदेंकारमध्यगव्यापकाक्षरम् ।
विलम्बितलयोपेतं द्विरुद्ग्राहमनोहरम् ।।
देंकाराकृतिमुक्तिं च प्राहुरोतामिहापरे ।
लक्षणेनामुना युक्तां केचिदुद्दवर्णीं विदुः ।।

सोमराजः

द्विरुद्ग्राहस्ततं खण्डं यस्यां द्विर्भूरिदोंकृति ।
तत्किञ्चिदधिकं वारे द्वितीयेऽथ तृतीयकम् ।।
कियद्दीर्घं शुद्धकूटखण्डेः पाटैर्विमिश्रितैः ।
व्यस्तैस्समस्तै रचितं ततो दोंकृतिमत्पुनः ।।
सकृत्तच्च प्रयोक्तव्यमथ वर्णसरात्मकम् ।
दीर्घं खण्डं ततोऽल्पं च प्राच्यं शुद्धादिनिर्मितम् ।।
ओता सोक्ता छण्डणान्ता कैश्चिद्देंकृतिमुक्तिका ।
एषैककलयुग्मे स्यान्निस्सारौ छण्डणो भवेत् ।।
उद्धतो ध्वनिरत्र स्यात्प्रायो मानं विलम्बितम् ।
दीप्तं नृत्तं च तामाहुः केचित्केदार इत्यपि ।।
इमामाहवनीं प्राहुरेकेऽन्ये त्वन्यथा जगुः ।
पाटैर्बहुलदोंकारैस्तालैश्च निखिलैः कृता ।।
बहुधा स्थापना यस्यां आहुराहवनीं बुधाः ।
आदौ दोंकारखण्डं चेद्दोंकारादिस्तदोच्यते ।।

शार्ङ्गः

**ओयारः**—देशीलास्याङ्गम्

नर्तक्या यत्र सर्वाङ्गशोभनैर्गतिविभ्रमैः ।
प्रक्रान्तनृत्तावयवा द्विगुणत्रिगुणाः क्रमात् ।।
तालयुक्त्या प्रयुज्यन्ते स ओयार उदीरितः ।
यद्वा मूर्ध्नोन्नतिः किञ्चित्तिर्यगोय्यार उच्यते ।।

वेमः

## ओरा

चतसृणां पात्रपङ्क्तीनां ऋज्वी गतिः ओरेति कथ्यते ।

## ओरिका

स्वरभेदसूचनाय स्थानेऽपि तन्त्र्यपकर्षणम् । अयमपि चमत्कारः ।

**ओवी**—प्रबन्धः

सानुप्रासास्त्रयः खण्डाः देशभाषाविनिर्मिताः ।
आद्या पदावसाना चेद्गीयते येन केनचित् ।।
तालेनेष्टेन रागेण तदोवीति प्रकीर्तितम् ।
अत्र त्रयाणां खण्डानामेकाद्या वृत्तयोगतः ।।
भवन्ति बह्वो भेदाश्छन्दश्च न नियन्त्रितम् ।
छन्दसा येन केन स्युरोव्यो जनमनोहराः ।
तेन्नकैरेव गातव्या एताः शृङ्गारमञ्जुलाः ।।

पण्डितमण्डली

**ओवी**—प्रबन्धः

पश्चादोवीप्रबन्धोऽथ भवेत्तालो यथेप्सितम् ।
देशीभाषामिरेवायं प्रान्तप्रासा प्रबद्ध्यते ।।
ओवीपदाश्रिता गेया भवेदेवं तु लक्षणैः ।।

हरिपालः

प्रशान्ताश्च त्रयः पादाः तालस्तत्र तृतीयकः ।
ओवीशब्देन सा चान्ते कार्या स्याद्दोविका बुधैः ॥
संभोगे विप्रलम्भे वा शृङ्गारे रचितैः पदैः ।
हृदिस्थं प्रियमुद्दिश्य नेया स्यादिह चोविका ॥
इष्टतालेन गातव्यं सानुप्रासं पदद्वयम् ।
इयमप्योविका प्रोक्ता प्रान्ते ओवीसदंदिति ॥

सोमेश्वरः

**ओवेणकम्**— सप्तगीतभेदः

अथ नानापदौ पादौ तुल्यगीत्यादिलक्षणौ ।
पृथगोवेणकस्य स्यादपरान्तकवस्तुवत् ॥
द्विकलो मापघातास्यः पञ्चपाणिरतः परम् ।
असमानत्वनियत्वे तस्य प्राधान्यकारणे ॥
द्वितीया चाष्टमी चैव द्वे शम्ये परिकीर्तिते ।
चतुर्थपष्ठनवमास्तालाः शेषं यथोदितम् ॥
अपरान्तकवच्चात्र विक्षेपमुपवर्तनम् ।
वज्रं संपिष्टकं वा स्यादुभयत्रापि वा पुनः ॥
उपवर्तनवत्सन्धिस्तत्स्थः स्याच्चतुरश्रकः ।
युग्मप्रवृत्तवत्कार्यं सन्धिवद्वज्रसंज्ञितम् ॥
संपिष्टकाख्यमन्ते स्याद्वैहायसिकसम्मतम ।
निष्काम एकत्रिशम्यास्त्रितालोऽन्यद्यथोत्तरम् ॥
प्रवेण्यामुपपातश्च द्विकले स्युरिहोत्तरे ।
उपपाते द्वितीयस्तु तालः कैश्चिदुदाहृतः ॥
अन्ताहरणमप्यत्र भवेदन्तसमन्वितम् ।
एवं तु द्वादशाङ्गानि सप्त वास्योपपादयेत् ॥
संपिष्टकप्रवेण्यौ च तथा चैवोपवर्तनम् ।
उपपातं च सप्ताङ्गे न प्रयुञ्जीत गीतवित् ॥
प्रवृत्तं चावगाढं च प्रवेण्योरिह तु क्रमात् ।
प्रायः शेषेषु विवध एककं चोपवर्तने ॥

दत्तिलः

अत्र संपिष्टकादिद्वादशाङ्गानि तत्तत्स्थानेषु निरुक्तानि ।

**औडुवम्**

उडवो नक्षत्राणि गच्छन्ति यस्मिन्नाकाशे तदाकाशमौडुवम् । तेन पञ्च संख्या लक्ष्यते । पञ्चमं हि महाभूतम् । तस्था संख्या च विद्यते ।

मतङ्गः

औडुवं औडवमिति च रूपे दृश्येते ।

**औडवरागगानफलम्**

व्याधिनाशे शत्रुनाशे भयशोकविनाशने ।
औडवास्तु प्रगातव्या गृहशान्त्यर्थकर्मणि ॥

नारायणः

**औडुविता**—मूर्छना

मूर्छनाभेदे द्रष्टव्यम् ।

**औत्सुक्यम्**—चिन्ताभिनयः

कालाक्षमत्वमौत्सुक्यमभिलाषादिहेतुजम् ।
मुखस्थाने तु मुकुलं पताकौ द्वौ ह्यधोमुखौ ॥
चलितौ पार्श्वभागे तु विसृष्टौ तु ततः परम् ।
कर्तरी च पुरोभागे चलावौत्सुक्यदर्शने ॥

विनायकः

**औत्सुक्यम्**—व्यभिचारिभावः

इष्टजनवियोगानुस्मरणोद्यानदर्शनादयो विभावाः । दीर्घनिश्वसिताधोमुखविचिन्तर्नानिद्रातन्द्रिशयनाभिलाषादयोऽनुभावाः ।

भरतः

कालाक्षमत्वमौत्सुक्यं कथ्यते कांवपुङ्गवैः ।
हृद्यवस्तुस्पृहायोगरक्त्यास्थामिस्समुद्भवः ।
तत्रोच्छ्वासत्वरात्रासहृत्तापस्वेदविभ्रमाः ॥

सर्वेश्वरः

**औदार्यम्**

औदार्यं नाम तत्पुंसामलोभितमिति स्मृतम् ।
औदार्यं प्रश्रयः प्रोक्तः सर्वावस्था गतो बुधैः ॥
दानमभ्युपपत्तिश्च तथा च प्रियभाषणम् ।
विकस्वरमुखत्वं यत्तदौदार्यमितीरितम् ॥

भावविवेकः

**औदुम्बरी**—वीणा

वीणागाथिनाविति वेदवाक्ये औदुम्बरीवीणैव गृहीता इति वेदव्याख्यातारः ।

**औपच्छन्दसिकम्**—मालावृत्तम्

विषमं—एकषण्मात्रागणः, र, य.
समं—अष्टमात्रागण एकः, र, य.

विरहाङ्कः

**औपाधिकः**—तानः

मध्यमग्रामे नारदीयतानः ।

म प ध नि स रि

नान्यः

**औमापतम्**

उमापतिकृतं चत्वारिंशदध्यायात्मकम् । स्वरमूर्छनाजातितन्मण्डलप्रबन्धरागवाद्यविषयेष्ववान्तरभेदा बहवोऽस्मिन्नुक्ताः कस्यापि लक्षणं नोक्तम् । नाम्नैवोद्दिष्टम् । भरतमतङ्गकोहलप्रस्थानादत्रोक्तं भिन्नमिति स्पष्टम् ।

कंसारिः—मेलरागः (हनुमत्तो)
(आ) स ग रि ग म प नि स.
(अव) स नि ध प म ग रि स.

ककुभः—मेलरागः
पञ्चमोद्ग्राहसंपन्ने धर्हीने ककुभे पुनः।
तीव्रगान्धाररराहित्यमारोहे चावदन्बुधाः ॥
प्रातःकालगेयः।

अहोबिलः

ककुभः—रागः
धैवतांशग्रहो न्यासपदे ह्यन्वितपञ्चमः।
अल्पीकृतनिषादश्च सप्तस्वरविभूषितः ॥
पञ्चमीधैवतीमध्या जातिद्वयसमुद्भवः।
........ ........................ ॥
करुणे चैव वीभत्से रसे चैव भयानके।
यमकालमहाकालदेवताभिरधिष्ठितः ॥

नान्यः

धैवतीपञ्चमीमध्यासंभूतो धैवतांशकः।
ककुभः पञ्चमन्यासः संपूर्णस्वर इष्यते ॥

कश्यपः

षड्जग्रामसमुद्भूतः ककुभः कीर्त्यतेऽधुना।
धैवतांशग्रहो न्यासे पञ्चमः पूरितस्स्वरैः।
प्रसन्नमध्यालङ्कारः सारोही ककुभो भवेत् ॥

हरि

ककुभो धैवतांशस्स्यात्पञ्चमन्याससंयुतः।
पञ्चमीधैवतीमध्याः तिस्रोऽमूर्जनयन्त्यमुम् ॥

मोक्षः

ककुभकैशिकः—रागः
पञ्चमिकाधैवत्योः कैशिक्याश्चैव धैवतैकांशः।
न्यासीकृतपञ्चमकः कृशतरभूतर्पभस्वरः ॥
भयानके स वीभत्से करुणाश्रुतिसंश्रितः।
भवेत्कालमहाकालदेवः ककुभकैशिकः ॥

नान्यः

धैवतांशः पञ्चमी च कैशिकी धैवती तथा।
कारणं पञ्चमन्यासः र्येल्पः ककुभकैशिकः ॥

कश्यपः

ककुभा—मूर्छना शकुन्तिमा
शकुन्तानां रवं श्रुत्वा यस्माद्गायन्ति किन्नराः।
ऋषभे ककुभा? तस्मात्पक्षिराजोऽत्र दैवतम् ॥

नान्यः

ककुभा—मूर्छना
गान्धारग्रामे सप्तमी।
(आ) रि ग म प ध नि स.
(अव) स नि ध प म ग रि.

नान्यः

ककुभा—रागः
धैवतांशग्रहन्यासा संपूर्णा ककुभा मता।
तृतीयमूर्छनोत्पन्ना शृङ्गाररसमण्डिता ॥

दामोदरः

ककुभारागध्यानम्
सुपोषिताङ्गी रसमण्डिताङ्गी चिन्नानना चम्पकदामयुक्ता।
कटाक्षिणी स्यात्परभावचिन्ना दानेन युक्ता ककुभा मनोज्ञा ॥

दामोदरः

मालवकौशिकभार्या।

कक्षमूलहस्तः
सर्पशीर्षः कक्षभागे तिर्यग्बद्धस्तु कक्षकः।
सर्पशीर्षः कक्षभागे कक्षमूलप्रदर्शने ॥

विनायकः

कक्षवर्तना
पार्श्वमण्डलिनोस्स्वस्वपार्श्वयोर्भ्रमणं यदा।
युगपत्क्रमतो वा स्यात्कक्षवर्तनिका तदा ॥

अशोकः

कङ्कः—तानः
षड्जग्रामे सपहीनौडुवः।
नि ध म ग रि.

कुम्भः

कङ्कणः—मेलरागः
शङ्कराभरणे मेले रागः कङ्कणसंज्ञकः।
पहीनो गादिराख्यातो वहुमध्यमसङ्गतः ॥
द्वितीयप्रहरोत्तरगेयः।

अहोबिलः

कङ्कालम्—वाद्यम्
स्फुरितैर्मूर्छनासंज्ञैः कर्तरीवितयेन च।
युक्तं कैरः क्रमादेभिः कङ्कालं कथितं वुधैः ॥

शार्ङ्गः

**कङ्कालः**—वीणावादनप्राणः

कर्तरीत्रयसंयुक्तः स्फुरिते मूर्छनायुतम् ।
कङ्कालनामकं वाद्यं प्राहुर्वैणिककोविदाः ॥

पार्श्वदेवः

कङ्कालं तद्भवेद्वाद्यं यत्र स्फुरति संभ्रमः ।
मूर्छितैः मूर्छनं भूयः कर्तरीत्रिकसंयुतम् ॥

कुम्भः

**कथोद्घातः**—आमुखाङ्गम्

सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा ।
गृहीत्वा प्रविशेत्पात्रं कथोद्घातः स कीर्तितः ॥

भरतः

**कच्छोली**—रागः

अत ऊर्ध्वं तु कच्छोली षड्जांशन्यासमध्यमा ।
कूटतानयुता सेयं हीनगान्धारधैवता ।
उदीर्यते बुधैरस्या मूर्छना शुद्धमध्यमा ॥
न्यासग्रहांशमध्या गधहीना बहुलतारपंभा च ।
...तक्षणनामा पबहुला कुम्भिनीमूर्छा ॥
शृङ्गाररससंबद्धा मकरध्वजदैवता ।
कच्छोलिका निगदिता विभाषा गीतकोविदैः ॥

नान्यः

गान्धारधैवतोन्मुक्ता ग्रहांशन्यासमध्यमा ।
रिमन्द्रतारबहुला कच्छोली परिकीर्तिता ॥

याष्टिकः

**कच्छपी**—वीणा

अपरा कच्छपी वीणा सैव रूपवती क्वचित् ।
अष्टादशाङ्गुलं दैर्घ्ये शिरस्तस्याः प्रकीर्तितम् ॥
चतुर्दशाङ्गुलं सार्धं प्रशस्तं च भवेच्छिरः ।
गलं पञ्चाङ्गुलं प्राहुः प्राशस्त्ये तत्र तद्विदः ॥
कच्छपस्येव तत्पृष्ठं क्रमतश्चोन्नतानतम् ।
दशिका द्व्यङ्गुला सार्धा शिरोमध्यस्थिता मता ॥
किञ्चिन्निम्ना सुवलिता पञ्चरन्ध्रसमन्विता ।
क्रोडमित्तिश्शिरो गर्भे निर्मितव्याजिनोपमा ॥
गलान्ते कर्णिका च स्याद्दशाङ्गुलमिता मता ।
सार्धचन्द्राकृतिस्सा तु वलिता पृष्ठदेशतः ॥
दण्डात् षडङ्गुलोच्चा स्याद्दण्डोऽङ्गुलिदशद्वयः ।
एकाङ्गुलाधिको मूले क्रमात्स्थूलोऽग्रतः कृशः ॥
विधाय रन्ध्रं तद्गर्भे पिधानं तत्र दापयेत् ।
त्रयोदशाङ्गुलिमितो दण्डपुच्छस्तु दीर्घतः ॥
तत्र सप्ताङ्गुलं दैर्घ्यमुन्नतं च षडङ्गुलम् ।
सारीगृहमिति प्रोक्तं त्रिश्रेणीकलितं च तत् ॥
तत्पश्चात्पुच्छ इत्युक्तः स षडङ्गुलदैर्घ्यभाक् ।
मत्स्यपुच्छाकृतिर्वक्रो नानासुभरणान्वितः ॥
मोटिन्यः पञ्च कर्तव्यास्ताश्च स्युः सारिकाभिधाः ।
तासां बिलत्रयं कार्यं दक्षिणे वामतो द्वयम् ।
दण्डान्तेऽकलिकान्यस्य तन्त्रीणां तत्र संस्थितिः ॥
शिरो गर्भः पिधातव्या चर्मणा कोमलेन च ।
पित्तलेनातिशुभ्रेण तस्योपरि निवेशयेत् ॥
अङ्गुल्योच्चां मकरिकां पञ्चरेखान्वितां पुनः ।
दशरन्ध्रेषु पञ्चाधः पट्टसूत्रविनिर्मिताः ॥
क्षिपेत्प्रतिदशास्तासु वध्नीयात्तन्त्रिकाकृतिः ।
छागवालोद्भवां मन्द्रे मध्ये चैवाथ पट्टजाम् ॥
तन्त्रीद्वयीं समगुणां सह तां तारके न्यसेत् ।
तारात्परं न्यसेत्तन्त्रीं सूक्ष्मां तां मध्यमां विदुः ॥
एता यथाक्रमं स्थाप्या क्रोडान्मकरिकोपरि ।
एवंविधायां कच्छप्यां विविधाः करसारणाः ॥
ताः परस्परया ज्ञेयाः तद्ज्ञानासुपदेशतः ।
एषा मनोहरा वीणा दार्वस्याः खदिरादिकम् ॥

नारायणः

**कच्छोली**—रागः

षड्जांशा मध्यमन्यासा कूटतानसमाश्रया ।
गान्धारधैवतत्यक्ता शुद्धमध्या तु मूर्छना ॥
कच्छोली नाम विख्याता वीरे सा विनियुज्यते ।

जगदेकः

**कञ्चिनी**—श्रुतिः

धैवतस्य द्वितीया श्रुतिः । हनुमन्मतेऽष्टादशैव श्रुतयः । अत्रमते धैवतो द्विश्रुतिः ।

**कञ्चुकमोक्षः**—शृङ्गाराङ्गम्

कूर्पसकविभूषादित्यागः कञ्चुकमोक्षः ।

भोजः

**कञ्जमालिनी**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि स ग म प म ध नि स.
(अव) स नि ध म ग रि स.

**कटकम्**—हस्तः

अधोविसृष्टविन्यस्तसर्वाङ्गुलिमनोहरम् ।
किञ्चिदुन्नतमध्यं च कटकं समुदाहृतम् ॥

पतिःमाउ

**कटाक्षः**

यद्गतागतविश्रान्तिवैचित्र्येण विवर्तनम्
तारकायाः कलाभिज्ञाः तं कटाक्ष प्रचक्षते ॥

अशोकः

**कटाक्षः**—अनुभावः

अपाङ्गदृग्विलासः कटाक्षः ।

कुम्भः

**कटिः**

कम्पितोद्वाहिता छिन्ना विवृत्ता रेचितापि च ।
कटिः पञ्चविधा ज्ञेया वीरसिंहसुतोदिता ॥

अशोकः

**कटिच्छिन्नम्**—करणम्

पर्यायशः कटिच्छिन्ना बाहू शिरसि पल्लवौ ।
पुनः पुनश्च करणं कटिच्छिन्नं तु तद्भवेत् ॥

भरतः

पार्श्वेन भ्रमरीं कृत्वा मण्डलस्थानके स्थितः ।
कृत्वा छिन्नां कटीमेकां बाह्वोः शिरसि पल्लवम् ॥
करमङ्गान्तरेणैवं यत्र त्रिचतुराः कृताः ।
आवृत्तयः कटीच्छिन्नं तद्विस्मयनिरूपणे ॥

शार्ङ्गदेवः

पार्श्वाभ्यां भ्रमरीं कृत्वा मण्डलस्थानकं भजन् ।
दधच्छिन्नाकटिं चाध अलपद्मपताकयोः ॥
स्कन्धे च विदधन् हस्तं कुर्यादङ्गान्तरेण च ।
त्रिश्चतुर्वा क्रिया यत्रैतत्कटिच्छिन्नमिष्यते ।
विस्मयात्मनि वाक्यार्थे विद्भिरेतद्विधीयते ॥

ज्यायनः

सन्तोषविस्मयाख्याने ।

लक्ष्मणः

**कटिच्छिन्नभ्रमरी**—तिरिपनृत्ताङ्गम्

मण्डले दक्षपार्श्वे स्यादलपद्मः प्रसारितः ।
दक्षिणाङ्घ्रिः पार्श्वलग्नः स्थापिताङ्गुलिपञ्चकः ॥
वामोर्णनाभिपार्श्वस्य लताहस्तकवत्कृतम् ।
उत्थाप्य मण्डलस्थाने वामसण्डी तु पृष्ठतः ॥
आकटिं दक्षिणाङ्गं च नामितं भ्रामयेद्यदा ।
वामावर्तनतः सा स्यात्कटिच्छिन्नभ्रमिस्तदा ॥

वेदः

**कटिभ्रान्तम्**—करणम्

विधाय दक्षिणं सूची वामपादं प्रसारितम् ।
पादं पार्श्वे क्षिपन्पृष्ठे परावृत्तेन कर्मणा ॥
कटिमारेचयेद्यद्वा बाह्यतो भ्रमरीं दधन् ।
हस्तौ प्रयोगतः कुर्याद्यथावृत्तपरिवर्तितौ ॥
यत्रान्ते चतुरस्रं च कटिभ्रान्तं पतन्ति तत् ।
परिक्रमगतीनां तत्तारेषु यतिपूरणे ॥

ज्यायनः

**कटिरेचकः**

सर्वतो भ्रमणात्कट्याः कथितः कटिरेचकः ।

अशोकः

**कटीरपटः**

सान्द्रं कौसुंभवस्त्रं च हैरण्यद्रवलिप्तकम् ।
चतुस्तालं तु विस्तीर्णं रुद्रतालायतं तथा ।
द्व्यङ्गुलं कुञ्चितं मध्ये कटीरपटलक्षणम् ॥

नन्दी

**कटीसमम्**—करणम्

कृत्वाक्षिप्तामतिक्रान्तां चारीं चाथ करावुभौ ।
स्वस्तिकीकृत्य नाभौ तु दक्षिणं खटकामुखम् ॥
अर्धचन्द्रपरं कट्य(ट्यां) कुर्यात्पार्श्वे तु सन्नतम् ।
एकमुद्वाहितन्त्वन्यदेवमङ्गान्तरैरपि ॥
आवृत्तिर्वैष्णवं स्थानं यत्र तत्स्यात्कटीसमम् ।
सूत्रधारेण तद्योज्यं जर्जरस्याभिमन्त्रणे ॥

अशोकः

**कटुवा**—वाद्यविशेषः

एकविंशाङ्गुलायामा सप्ताङ्गुलमिता मुखे ।
बीजदारुमयी कार्या समाङ्गी मुखमध्ययोः ॥
संहतं त्र्यङ्गुलापीने वलये वल्लिनिर्मिते ।
नवाङ्गुलान्तरे वृत्ते सप्तरन्ध्रसमन्विते ॥
कवलेन पिनद्धास्ये स्थूलतन्त्रीसुयन्त्रिते ।
मञ्जनालिप्तकोणाभ्यां कटुवां वादयेत्सुधीः ॥
क्रेङ्कारस्तत्र मुख्यः स्याद्देवतास्तोभहेतवे ।
अन्ये पाटाः प्रयोक्तव्याः पटहे ये प्रकीर्तिताः ॥

सोमेश्वरः

कट्टडः—जातिनृत्तम्

कट्टडः, कट्टणः, कट्टरः—एते पर्यायाः। नानाजातीनां वेषभाषाविशेषेण यन्नृत्तं तत् कट्टड इत्युच्यते। शब्दस्तु द्रविडान्ध्रकर्णाटकेरलादिभाषासु प्रसिद्धः।

कट्टडाः—मार्गे

आदौ मुखवरिस्तस्मिन्द्वये धन्नालकस्तथा।
त्रये तु वीरभद्रश्च चत्वारो योगिनी तथा॥
पञ्चमं कुरुवञ्जी च षष्ठी स्यात् सिंहघातकः।
सप्तमः कुलुवरिश्च वरसरिश्च तथाष्टमः॥
नवमं भैरवं प्रोक्तं दशमं दण्डघट्टनम्।
एकादशः कोलवानिः संकीर्णो द्वादशस्तथा॥

नवमदशमेकादशाः देशभाषया जक्किणी, कलापा, कोल्लसि इत्युच्यन्ते।

संग्रहकारः

कट्टणा—नृत्ते वेषधारिणी

कट्टणा वेषभाषाभ्यां कृत्वा नृत्यति यत्र या।
कट्टणः स च विज्ञेयः क्लृप्तगीतोपशोभितः

नन्दी

कट्टमितम्

केशादिग्रहजे हर्षे दुःखिवद्भषनं तु यत्।
स्यात्तत्कट्टमितं।

शार्ङ्गः

कट्टरम्—देशीनृत्तम्

पाटैरालापचारी स्यात्तत्कट्टरमथोच्यते।
सप्तखण्डात्मकं सप्ततालैर्भ्रान्तिलयान्वितम्॥
सचक्कारं पिल्लमूरूमानाभ्यां च विराजितम्।
कईमूरूकलासाभ्यां मध्ये मध्ये सुशोभितम्॥
रुद्रखण्डैर्बाणखण्डैरेकविंशतिखण्डकैः।
युतं साभोगमन्ते च केषांचिन्मतमीरितम्॥

वेदः

इदं सामान्यकट्टरम्।

कट्टरशृङ्खला—देशीनृत्तम्

षष्टिश्च त्रिशतानीति कट्टराणि भवन्ति हि।
कतिचिद्ब्रूमहे यानि नृत्यन्ते नटकोविदैः॥
दशावतारनाम्ना वै कट्टराणि भवन्ति हि।
दशसंख्याः प्रयुक्तानि पुराणविधिना ब्रुवे॥
मत्स्यकूर्मवराहाश्च नृसिंहो वामनस्ततः।
रामो रामश्च रामश्च बौद्धः कल्की भवन्त्यमी॥
दशावतारविज्ञैश्च विप्रैरान्ध्रैः कृतश्रमैः।
नृत्यन्ते सह पेरण्या दृग्भिदा कोविदैर्ध्रुवम्॥
बङ्गाली कट्टरं कामं कट्टरं च परस्परी।
योगिनी मतवाली च कोलकट्टरमेव च॥
गोपालशुकमातङ्गी लास्यानि कट्टराणि च।
दरवेशकट्टरं पाशकट्टरं पारसी तदा॥
खौलवोर्वीकट्टरे च सुल्तानीरासकट्टरे।
रुञ्जी मोहनमाले च पेरणीकट्टरं तथा॥
फिरङ्गीकट्टरं पश्चात्सिंघणाख्यं च कट्टरम्।
मालवी गारुडी मुण्डी कट्टराणि ततः पुनः॥
सवलं गुज्जरी राधाजम्मीकट्टरमेव च।
चटकीकट्टरं मिल्लीकट्टरं वीरकट्टरम्॥
मोहिनीकट्टरं भस्मासुरनर्तनकट्टरम्।
शिलिन्ध्रीकट्टरं पश्चाद्रावणस्य च कट्टरम्॥
भीमकट्टरमेवं च पञ्चाशत्कट्टराणि वै।
एतन्मध्ये प्रसिद्धानां लक्षणं व्याहरामहे॥

वेदः

नृत्तरत्नाकरे कट्टरान्तराणि सूचितानि वर्तन्ते।

कठारिसालुवः—देशीतालः

कठारिसालुवे बिन्द्वोर्मध्येऽन्तस्य त्रिदौ प्लुतौ।
० ऽ ० ० ० ऽ ०

गोपतिपः

कठोरम्—दर्शनम्

कठोरं स्याद्यत्तु दृढं सबाष्पं चाप्यबाष्पवत्।

वेमः

कडाडम्—शारीरभेदः

त्रिषु स्थानेषु मधुरं कडाडं परिकीर्तितम्।

पार्श्वदेवः

कणवाहिनी—मेलरागः (रत्नाङ्गीमेलजन्यः)

(आ) स रि ग प ध नि—स.
(अव) स नि ध म ग—स.

कण्ठरेचकः

तिर्यग्भ्रान्तिरथो यः स्यात्कण्ठस्य विधुतभ्रमः।
स कण्ठरेचकः प्रोक्तः कण्ठरेचककोविदैः॥

अशोकः

## कण्ठशुद्ध्यौषधानि

गेयस्य कण्ठसाध्यत्वात्तद्विशुद्ध्यर्थमौषधम् ।
प्रोच्यते गायकप्रीत्यै सर्वभूतानुकम्पिना ॥
अपथ्यवर्जनाद्दोषा न स्युः प्रायो नृणां यतः ।
अतस्तद्वर्जनं पूर्वमुच्यतेऽन्यत्ततोऽपि च ॥
गायनो वर्जयेत् क्षारं चान्नं पर्युषितं तथा ।
आरनालं यवान्नं च वटुकं चापि यद्भवेत् ॥
गुरुप्रायमिहान्यच्चन्माहिषक्षीरमादितः ।
श्लेष्मकारि च यत्प्रायस्तदश्नीयान्न कर्हिचित् ॥
प्रत्यूषे मधुना साकं चूर्णमाहौषधं लिहत् ।
रात्रौ सलवणं चापि भक्षयेत् त्रिफलां सुधीः ॥
हृद्यकण्ठकरं रात्रौ खादिरं चूर्णमीरितम् ।
नागवल्लीदलैः साकं साकं खादिरकैर्दलैः ॥
मुस्तापौनर्नवैः पत्रैः क्रमुकैः मिश्रतीकृता ।
भक्षिता कुरुते कण्ठं किन्नरीगणगर्वहम् ॥
तित्तिरास्तैलसंभ्रष्टा भक्षिता गायकं नरम् ।
कुर्वन्त्यभ्यासतो नूनं वंशवीणादिवादिनम् ॥
क्षीरवृक्षसटी भार्ङ्गी गुडूची वर्वरैस्तथा ।
कुशकाशैः श्रुतं तोयं कण्ठमाधुर्यकारणम् ॥
अपामार्गशिरीषाम्लवेतसैर्बिल्वसंयुतैः ।
श्रितं पयः प्रकुरुते कण्ठं श्रुतिमनोहरम् ॥
वासा ब्राह्मी वचा पथ्यः क्वाथः समधुपिप्पलिः ।
सेवितः पुरुषं कुर्यात्सप्ताहान्मञ्जुलध्वनिम् ॥
सर्पिर्मधुकसंसिद्धं प्रत्यहं यः पिबेन्नरः ।
तस्य कण्ठो भवेन्नूनं किन्नरीगणगर्वनुत् ॥
गुडूच्यपामार्गविडङ्गशङ्खीवचाभयाशुण्ठिशतावरीभिः ।
लीढं घृतं गव्यमहो विधत्ते मेधाविनं किन्नरसंनिभं च ॥

कुम्भः

## कण्डावली—मेलरागः (कान्तामणिमेलजन्यः)

(आ) स ग रि ग म प ध नि स·
(अव) स ध प म ग रि स.

## कतरदिण्डः—देशीनृत्तम्

सूलं बध्वा वामपादः कुट्टितो भूतले पुनः ।
कृत्वोत्प्लुतिं तिर्यगूर्ध्वं स्वस्तिकं पादयोस्ततः ।
तेनैव निपतेद् भूमौ दिण्डः कतरपूर्वकः ॥

वेदः

## कलम्—देशीनृत्तम् (उडुपाङ्गम्)

कर्तरीशब्दसंभवोऽयं कलशब्दः ।

मण्डलं प्रथमं कृत्वा दक्षपार्श्वे पताककः ।
शिखरो हृदि वामः स्याद्गारुडं वामपार्श्वके ॥
प्रसारितपताकोऽग्रे मण्डले पुरतः स्थितः ।
प्रसारितपताकः स्याच्छिखरस्तु हृदि स्थितः ॥
पृष्ठेऽङ्गवलने सव्यः प्रसारितपताककः ।
तत्रापि मण्डलं कार्यं वामे गारुडमाचरेत् ॥
हृदये शिखरो दक्षो वामोऽग्रे स्यात्पताककः ।
हृदये शिखरद्वन्द्वं सम्मुखं स्वस्तिके स्थितिः ॥
विपर्यासात्पुरो हस्तः प्रसारितपताककः ।
स्वस्तिकं वलितं यत्र विपर्यासेन कर्तरी ॥
आदिताललयेनैवं चतुर्दिक्षु प्रकल्पयेत् ।
तिरिपभ्रमरी चान्ते कर्तर्युडुपमीरितम् ॥

वेदः

## कथा—श्रव्यकाव्यम्

या नियमितगतिभाषा दिव्यादिव्योभयेतिवृत्तवती ।
कादम्बरीव लीलावतीव वा सा कथा कथिता ॥

भोजः

लीलावती प्राकृतकाव्यम् । लीलावतीशालिवाहनयोर्विवाहोऽत्र वस्तु ।

## कथाशरीराश्रयः

कथाशरीरसंविधानभेदाः पञ्च । यथा—(१) इतिहासाश्रयम्, (२) कथाश्रयम्, (३) उत्पाद्येतिवृत्तम्, (४) अनुत्पाद्येतिवृत्तम्, (५) प्रतिसंस्कार्येतिवृत्तम्, इति ।

भोजः

## कथाश्रयम्—कथाशरीरम्

बृहत्कथादिप्रतिपन्नप्रख्यातोदात्तनायकचरितविषयतामपि महाकाव्यादेः प्रबन्धस्याभिधत्ते। यथा—वत्सेश्वरचरितम् उदयनोदयः।

भोजः

## कथोद्घातः—आमुखाङ्गम्

सूत्रधारस्य वाक्यं वा यत्र वाक्यार्थमेव वा ।
गृहीत्वा प्रविशेद्वाक्यं कथोद्घातस्स कीर्तितः ॥

भरतः

वाक्यमिति। द्वीपादन्यस्मादित्यादि (रत्नावली)। वाक्यार्थं यथा—प्रतिमानिरुद्धे पीताम्बरगुरुशक्त्येत्यादि। केवलमत्र वीथ्यङ्गनिबद्धम्। कथा—काव्यार्थरूपा। ऊर्ध्वमेव हन्यते गम्यते तत्रेति कथोद्घातः।

अभिनवगुप्तः

**कदम्बयुद्धम्**—शृङ्गाराङ्गम्

वर्षासु कदम्बनीपहरिद्रादिकुसुमैः प्रहारभूतैः द्विधा बलं विभज्य कामिनां क्रीडाः कदम्बयुद्धम् ।

भोजः

**कद्रू**—प्राकृते मात्रावृत्तम्

चतुर्मात्रिक एकः अथवा पञ्चमात्रिकः चतुर्मात्रिकः पञ्चमात्रिकः ।

विरहाङ्कः

**कनकप्रभः**—देशीतालः

कनकप्रभसंज्ञे तु नद्वयं दद्वयं गुरु ॥ ० ० ऽ

श्रीकण्ठः

**कनकमण्डनं**—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स ध प म प ग रि स.

**कनकलता**—ध्रुवावृत्तम्

इयमाक्षेपिक्यां प्रयुज्यते ।

आद्ये ह्यथ निधने त्रीणि पादेऽथ यदि गुरूणि स्युः ।
ज्ञेया खलु बृहती नित्यं नाम्ना कनकलताक्षिप्तिका ॥
भूमिं णवजलधाराहिं सिंचंतो भुवणतलं जादि ।
(भूमिं नवजलधाराभिः सिंचन्भुवनतलं याति ।)

भरतः

इयं कनकमालेति नान्येनोक्तम् ।

ध्रुवापादाक्षराणां तु गुरोः स्थाने लघुं न्यसेत् ।
लघोर्द्रुतं गुरुं चान्ते भङ्गश्चच्चत्पुटस्य तु ॥
वीरेषु कनकमाला युद्धयोगपरिक्रमे ।
टक्करागेण गातव्या ध्रुवा द्रुतलये सदा ॥

नान्यः

**कनकवराली**—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि म प नि स.
(अव) स नि ध नि प म ग रि स.

**कनकवसन्तः**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि म प नि स.
(अव) स नि प म ग रि म ग स.

**कनकाङ्गी**—मेलकर्ता (रागः)

स रि ग ० ० म ० प ध नि ० ० स.

**कनकाम्बरी**—मेलरागः (कनकाङ्गीमेलजन्यः)

(आ) स रि ग म प ध स.
(अव) स नि ध प म ग रि स.

**कनिष्ठासारितम्**—गीतम्

अस्य लक्षणं आसारितसामान्यलक्षणे उक्तम् । यथा—तस्मिन् चच्चत्पुटस्तालः । पातस्तु शताशतेति । ततो द्वावृत्तरौ । इति लयस्ताला यथाक्षराणि । तेषामन्ते प्लुतः सन्निपातयुक्तः कर्तव्यः ।

**कन्दः**—देशीतालः

कन्दो रो द्रौ गतौ तथा　ऽ। ऽ ० ० ऽ ऽ ऽ।

मदनः

**कन्दः**—प्रबन्धः

कर्णाटादिपदैः पाटैर्नद्धः कन्द उदीरितः ।
अस्मिन्वीररसे गेयमाभोगोऽन्यपदैस्तथा ।
न्यासः पाटैश्च कर्तव्यः सदा श्रुतिमनोरमैः ॥
अष्टौ यगणाः स्कन्धे नौ जजो युजि तु जो नलघौ द्यौ ।
यद्वा लक्षणतो भेदः स्यादेकोनविंशतोऽपि किल कन्दानाम् ॥

सोमराजः

**कन्दरप्रियः**—मेलरागः (हाटिकाम्बरीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध प नि प म रि स.

**कन्दर्पः**—रागः

कन्दर्पस्स तु विज्ञेयो निगाल्पो हि समस्वरः ।
अंशोद्ग्राहध्रुवैकपञ्चमरवो न्यासस्थगान्धारको-
पन्यासस्त्वृषभोऽथपञ्चमरवः पूर्णस्स्वरैस्सप्तभिः ।
गान्धारोत्तरपञ्चमीतनुभवः शृङ्गारसंदीपकः
कन्दर्पः कुसुमेषु दैवतयुतो रागोत्तमः कीर्तितः ॥

नान्यः

ग्रहांशपञ्चमो ह्यल्पर्षभपञ्चमकस्वरः ।
गान्धारपञ्चमीजातः कन्दर्पोऽन्यस्तगध्वनिः ॥

कश्यपः

**कन्दर्पः**—देशीतालः

कन्दर्पे तु द्रुतद्वन्द्वमेकं लघु गुरुद्वयम् ।　० ० । ऽ ऽ

वेमः

द्रुतद्वयं यकारश्च कन्दर्पः परिकीर्तितः ।.
स री ग मा सा री.

जग

कन्दर्प एव परिक्रम इति केचित् ।

कन्दर्पः—गीतालङ्कारः (ध्रुवभेदः)

त्रयोविंशतिवर्णाङ्घ्रिध्रुवः कन्दर्पसंज्ञितः।
वीरे वा करुणे वा स्यात्खण्डताले विधीयते।
द्रुतमेकं भवेद्यत्र तालोऽयं खण्डसंज्ञितः॥

संगीतसारः

कन्दर्पवलशातनः—तानः

मध्यमग्रामे रिधहीनौडुवः।
स नि प म ग.

कुम्भः

कन्दुकः—देशीतालः

लाघेन सगणेनोक्तः। कन्दुकोऽपि च ।।।।ऽ

कुम्भः

(अन्यादर्शे विन्यासे।ऽ।ऽ इत्यस्ति)

लघुद्वयं सकारेण कन्दुकः परिकीर्तितः
धा पा मा गा रि रि सा

जग

कन्दुकः—प्रबन्धः

प्रबन्धः कन्दुको नाम स्यात्पाटविरुदैः पदैः।

जगदेकमल्लः

कन्नडगौलः—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग रि ग म प ध नि स
(अव) स नि ध प म ग रि स

मज

कन्नडगौलारागध्यानम्

अस्य कानडगौलेति नामान्तरं दृश्यते॥
वामहस्ततलभाजिकपोलां चिन्तया च परिगुम्भितशीलाम्।
दूतिकां प्रति विलापनलोलां भावयामि हृदि कन्नडगौलाम्

रागसागरः

कन्नडा—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स ग म ध नि स
(अव) स ध प म ग म म रि स

मज

—मेलरागः (शङ्कराभरणमेलजोऽयं रागः)

कन्नडायां वृषं त्यक्त्वा स्वारोहे वक्रपञ्चमम्।

परमेश्वरः

कन्या

रत्नावलीदर्शितवत्सराजरूोक्ता यथा सागरिका प्रसिद्धा।
या माधवस्यापि च माधवी सा अन्या च कन्या मदयन्तिका च॥
नागानन्दे च जीमूतवाहनस्यापि नायिका।
यथा मलयवत्येवमन्या कन्यापि वीक्ष्यताम्॥

नीलकण्ठः

कन्याहस्तः

मृगशीर्षाभिधौ हस्तौ परस्परमुखीकृतौ।
कन्याराशिविवेकार्थं युज्यते नयवेदिभिः॥

शृङ्गार

कपटम्—लक्षणम्

छलयुक्त्या त्वन्येषामभिसन्धानाभिभावकं कपटम्।
द्वित्रिप्रयोगयुक्तौ विज्ञेयं कपटसङ्घातः॥

भरतः

व्याजप्रयोगेणाभिसन्धानं वञ्चना। अभिभावकं तिरस्कारकं छलोक्त्या कथितस्यार्थस्यान्यथाग्रहणं अपलापो वा कपटम्। तस्य सङ्घातो लक्षणम्। कपटो वस्तुक्रमात्, दैवात्, शत्रोर्वा समुद्भूतः॥

अन्ये पठन्ति—

यत्र सङ्कीर्तयन्दोषं गुणमर्थेन योजयेत्।
गुणातिपाताद्दोषं वा गर्हणं नाम तद्भवेत्॥

भरतः

तत्त्रिविधमपि वागुपचारसामान्यात् छलमत्र स्वीकृतम्।

अभिनवः

पाठान्तरम्—

छलयुक्त्या यदान्येषां मत्या नायकभावनम्।
द्वित्रिप्रयोगयुक्तेन ज्ञेयं कपटसंज्ञितम्॥

भरतः

कपटः—वाद्यालङ्कारः

रावणस्य कुलपतिवेषेण रामवञ्चनाय सीतापहारः।

सागरः

कपर्दिनी—मूर्छना

जीमूतग्रामे पञ्चमी मूर्छना

यदा पञ्चस्वरो मूर्छां याति जीमूतसंज्ञके।
ग्रामे कपर्दिनी नाम मूर्छना जायते तदा॥

वादिमत्तः

कपर्दिनी — शिशुसन्तोषकरी मूर्च्छना।

पण्डितमण्डली

**कपालगानम्—**

पुराकल्पे च कल्पान्ते भुजगेन्द्रेण शम्भुना।
मथ्यमाने जटाजूटे पीडितोऽभून्निशाकरः।
तस्मात्प्रस्यन्दमानेनामृतेन प्लाविता सती।
प्रतिकल्पमनेकेषां ब्रह्मणा ग्रथिता जले।
कपालसन्ततिर्गातुं प्रवृत्ता जीविता सती।
तद्गानमुदितस्तत्र तस्माद्दिग्गजमण्डलम्।
चलत्कुलाचलं भ्रश्यद्भूतलं पतदम्बरम्।
स्खलद्ब्रह्माण्डपिण्डं च प्रणश्यत्फणिपुङ्गवम्।
उद्वेलत्सप्तकूपारं ननर्त वृषभध्वजः।
नृत्यान्ते तत्र शुश्राव गद्यपद्याद्यलङ्कृतैः।
सर्वभाषामयैः स्तोत्रैर्दिव्यैर्देवमनोहरैः।
स्तुवन्तीं तां कपालानां मालामानन्दनिर्भरः।
तुष्टः प्रोवाच तां यो मां स्तोत्रेणानेन भक्तितः।
स्तोष्यति प्रणयात्तस्मै भुक्तिं मुक्तिं च शाश्वतीम्।
प्रदास्यामि प्रसन्नोऽहमुमया सहितोऽन्वहम्।
कपालगानं तदिदं प्रसिद्धं वेदसम्मितम्।
आदौ ब्रह्मकपालं तु पैतामहमतः परम्।
हैरण्यगर्भमपि च द्रौहिणं तदनन्तरम्।
वैरिञ्चं पञ्चमं प्रोक्तं षष्ठं स्वायम्भुवं तथा।
चातुराननमत्रान्यच्छातानन्दं तथाष्टमम्।
एतत्प्रणीतगानानि गायतीह सदाशिवः॥

कुम्भः

**मतान्तरे—**

कण्ठालम्बी भुजङ्गानां सोष्मफूत्कारवायुभिः।
प्रदीप्तात्फालनेत्राग्नेर्ज्वालाभिस्तापितादिवधोः।
प्रस्रवत्सौधधाराभिः शनैरुज्जीवितैः पुनः।
कण्ठस्थविष्णुविध्यग्निसूर्येन्द्रादिकपालकैः।
नृत्यन्तं शङ्करं प्रेक्ष्य यद्गीतं सामसन्निभम्।
कपालगानमाहुस्तत्कश्यपप्रमुखा द्विजाः।
तदेवोद्ध्रियते राज्ञा धर्मोद्धरणहेतुना।
एतत्स्वरपदैर्युक्तं यो गायति शिवाग्रतः।
स सप्तजन्मजं पापं दहत्यग्निरिवेन्धनम्।

भैरवरूपेत्यादि प्रथमं गानम्। शुद्धस्फटिकेत्यादि द्वितीयम्। अन्तकशूलेत्यादि तृतीयम्। इन्द्रगानं पञ्चमम्। कामगानं षष्ठं निर्मलतेज इत्यादि। प्रलयदिवाकरेत्यादि वरुणगानमष्टमम्॥

शुद्धजातिभुवां लक्ष्म कपालानां ब्रवीम्यथ।
यद्यया जन्यते जात्या कपालं तत्र चेष्यते।
रागस्तज्जातिवर्णोपा राजराजस्य सम्मतिः॥

कुम्भः

**कपालघूर्णनम्—**उत्प्लुतिकरणम्

लोभडीमलगं यद्वा विधाय धरणीतलम्।
स्पृष्ट्वैव शिरसा यत्र परिवृत्तिं करोति चेत्॥
कपालघूर्णनं नाम करणं तत्प्रचक्षते॥

वेमः

'कपालचूर्णमित्युक्तं यदन्यैस्तन्न शोभनम्'।

ज्यायनः

**कपालोत्पत्तिः—**

भिक्षाटवेषेण पिनाकिना प्राग्गीतासु पाङ्जीप्रमुखासु तासु।
तत्तादृशो यद्रसपादवश्याद् द्रवीभवत् तन्मुकुटीसुधांशोः॥
निष्यन्दमानामृतजातजीवतद्भूषणब्रह्मकपालकानि।
यस्मादगायन्ननुसृत्य गीतिं तां शांभवीं तेन कपालसंज्ञाम्॥
एतानि गीतानि परं भजन्तीत्युदीरयन्त्यत्र मतङ्गमुख्याः।

रघुनाथः

संप्रति जातिशरीरान्तर्भूततया कपालपाणिकयोः।
मुनिवचनालोचनया यमेव तल्लक्षणं निबध्नीमः॥
रागोत्पत्तिनिदानं शुद्धा विकृताश्च जातयोऽत्र यथा।
अनयोरपि कारणता प्रतिपत्तव्या तथा तद्ज्ञैः॥
सप्तस्वेव कपालं जातिषु शुद्धासु दर्शितं मुनिना।
शुद्धविकृतासु चाष्टादशसु पुनः पाणिका ज्ञेया॥

अत्र च यद्यपि कपालं त्रयोदशकलत्वं मुनिना। तथाप्येतद्गन्धर्वप्रयोगे परस्परगीयमानस्वरपदक्रमैरष्टनवद्वादशतलकला एव लिख्यन्ते।

यथातथैव लोकेऽप्रसिद्धत्वात्, अदृष्टफलहेतुत्वाच्च॥

नान्यः

**कपालोत्प्लवनम्—**

पार्ष्णिमेकैकपादस्य कटौ पर्यायतो न्यसेत्।
अर्धचन्द्रकरौ मध्ये न्यस्य यत्स्यात्कपालकम्॥

नाट्यदर्पणे

**कपित्थः—**हस्तः

अङ्गुष्ठाग्रेण लग्नाग्रा तर्जनी शिखरस्य चेत्।
कपित्थस्स्यात्तदा कार्यो धारणे कुन्तवज्रयोः॥
चक्रचापगदादेश्च शराकर्षादिकर्मणि।
अन्योन्यकार्यविषयौ कपित्थशिखरौ क्वचित्॥

शार्ङ्गः

कपिलासिका— वीणा.

आद्या वीणा तु या प्रोक्ता सैव स्यात्कपिलासिका ।
दशमुष्टिमितो वैकादशमुष्टिमितोऽपि वा ॥
आद्याया दण्ड आख्यातः पादोनद्व्यङ्गुलं पुनः ।
सुषिरं तत्र कर्तव्यं वेष्टनेऽष्टाङ्गुलं पुनः ॥
तस्यैवोभयतो देयं रौप्यसंवरकद्वयम् ।
तद्रन्ध्रे ककुभः स्थाप्यः पादोनद्व्यङ्गुलोन्नतः ॥
तद्दक्षिणे लोहकलं तद्वद्वा लोहतन्त्रिका ।
श्रुतिस्मृतिकरी कार्या अन्यस्या लोहपत्रिका ॥
ककुभोपरि तत्पृष्ठे बद्धव्या लोहतन्त्रिका ।
नवाङ्गुलान्तरं तत्र ककुभात्तुम्बकं न्यसेत् ॥
अष्टादशाङ्गुलमुखं चक्रत्वे चारुगर्भकम् ।
सकुम्भमुन्नतानम्रं कान्तिमद्व्यङ्गुलं द्वयम् ॥
एकमन्यदपि स्थाप्यं वाममूर्धादधः पुनः ।
तस्माद्बहिर्गते दण्डे बद्धस्तस्य दृढं पुनः ॥
तस्मादधोऽपि वर्धन्यो दातव्यापि दृढं पुनः ।
कांस्यैश्च पित्तलैर्वापि दातव्या नखरी बुधैः ॥
एवं विनिर्मिता वीणा वैणिकैः कपिलासिका ।
ककुभोऽपि हि तत्पृष्ठे बद्धव्यो लोहतोलकैः ॥

नारायणः

आद्या वीणा — सङ्गीतसरणौ वीणानां नामनिर्देशे एतदुक्तम् ।
आद्या वीणा तु या ख्याता सैव स्यात्कपिलासिका ।
[रौद्री] वीणा किन्नरी च विपञ्ची परिवादिनी ।

कपिशीला— स्त्री.

संहताल्पतनुर्दंष्ट्रा पिङ्गरोमा छलप्रिया ।
प्रगल्भा चपला तीक्ष्णा वृक्षारामवनप्रिया ।
स्वल्पमप्युपकारं तु कृतं या बहुमन्यते ।
प्रसह्यरतिशीला च कपिसत्त्वं समाश्रिता ॥

भरतः

कपोतः— हस्तः

कपोतोऽसौ करौ यत्र श्लिष्टमूलाग्रपार्श्वकौ ।
अस्य कूर्मक इत्यन्यां संज्ञां हस्तविदो विदुः ॥
प्रणामे गुरुसंभाषे विनयाङ्गीकृतौ त्वयम् ।
प्राङ्मुखः सशिरः कम्पः स्त्रीकापुरुषयोर्भवेत् ॥

शार्ङ्गः

करावश्लिष्टतलकौ श्लिष्टमूलाग्रपार्श्वगौ ।
कपोताकृतितो हस्तः कपोतः कीर्तितो बुधैः ॥

कुम्भः

कूर्मकं कथयन्त्येनमपरे कूर्मकाकृतिम् ।

ज्यायनः

प्रणामे विनये कार्यौ गुरुसम्भाषणेऽपि च ।
प्राङ्मुखः कम्पितो वक्षः स्थितश्शीते स्त्रियामपि ॥
कातरे स्यादथैयत्ता पारिच्छेदे तु विच्युतः ।
सखेदवचसीदानीं इत्यर्थेऽस्य च सूचने ॥
आज्ञाप्रतिज्ञयोर्नाथे प्रसादेऽत्यहितेऽपि च ।
पक्षपाते पराधीने भक्षणे प्रतिपादने ॥
सेवायामपि योज्यौऽसौ लोकयुक्त्यनुसारतः ।
विच्युतश्लिष्टपार्श्वोऽसौ भिक्षायां करपात्रिणाम् ॥
इतराण्यपि कर्माणि बुधैरूह्यानि युक्तितः ॥

अशोकः

अन्योन्यश्लिष्टमूलाग्रपार्श्वगौ सर्पशीर्पकौ ।
यत्र सोयं कपोतः स्यात्कूर्मकश्चेत्यसौ मतः ॥
वक्षःप्रदेशनिहितः प्रणामेऽसौ प्रयुज्यते ।
गुरुसम्भाषणे चैष हृदि शश्वन्नतोन्नतः ॥
विनयाङ्गीकृतावेपा पार्श्वे किञ्चिन्नतो भवेत् ।
स्त्रीणां कापुरुषाणां च हीने गीते च सम्मतः ॥
विमुक्ताङ्गुलिना योगः कर्तव्यः खिन्नभाषिते ।
तथैव प्रसृतः किञ्चिदेतावदिति भाषणे ॥

वेमः

कपोलौ—

समौ क्षामौ कम्पितौ च फुल्लाख्यौ कुञ्चितावपि ।
पूर्णौ कपोलौ पोढेति तल्लक्ष्माद्यधुना ब्रुवे ॥

अशोकः

कफिलः— फूत्कारदोषः

कफिलस्तु कफोद्रेकपरिभूतान्मुखाद्ध्वनिः ।
विरसस्फुटितश्रोतृचित्तोद्वेगः ॥

वेमः

कफिलः कफतो वक्त्राद्विस्वरस्फरणे स्मृतः ।
विद्युद्विध्वस्तवृक्षोत्थ ऋक्षस्वानानुकारकृत् ।

कुम्भः

कमठध्वजः— मेलरागः (श्यामलाङ्गीमेलजन्यः)

(आ) स रि ग म प ध नि स
(अव) प ध प म ग रि ग स

मञ्ज

कमलः—गीतालङ्कारः (मठयभेदः)

लघुद्वयं गुरुश्चैकस्तालोऽयं दर्पणः स्मृतः ।
अस्मिंस्ताले रसश्शान्तः कमलो मठथको भवेत् ॥
संगीत सारः

—गीतालङ्कारः—(ध्रुवभेदः)

वर्णैश्च सप्तदशभिरङ्घ्रिः शृङ्गारके रसे ।
कमलो मलयाख्ये वै आयुर्वृद्धिकरः परः ॥
मलयाख्यो भवेत्तालो गुरुर्लघुरतो गुरुः ।

कमलः—तालः

शरःकूपद्वयं लौ द्वौ द्रुतौ द्वौ नगणस्तथा ।
कमले मण्ढके ज्ञेयः सर्वशास्त्रेषु सम्मतः। । ०० ॥ ०० ॥।
वेदः

—देशीतालः

कमले तोदमध्यगः ० SS । ०
कुम्भः

कमले मंगणो लो दः SSS । ०
लक्ष्मणः

कमलदलाक्षी—ध्रुवावृत्तम् (एकादशाक्षरम्)

अष्टौ द्रुता लघू मध्ये गुरुरन्ते व्यवस्थितः ।
कमलदलाक्षी ज्ञेया भङ्गश्चचत्पुटस्य तु ॥
राज्ञां प्रवेशे कर्तव्या व्यवहारावलोकने ।
मालवकैशिकरागेण गातव्येयं ध्रुवा सदा ॥
नान्यः

अस्या रुचिरमुखीति नामान्तरम् ।
यदि खलु मध्येत्वथ गुरुणी पुनरपि चान्त्यं गुरुचरणे ।
भवति हि नियं रुचिरमुखी कमलदलाक्षीति हि कथिता ॥
अभिरुहमाणो उदयगिरिमारोहन्नुदयगिरिम् ।
भरतः

अत्रैकादशाक्षरो गुरुः। अक्षरदशके, मध्ये इति पञ्चमषष्ठाक्षरौ गुरू भवतः ।

कमलमण्ठकः—देशीतालः

शरः कूपद्वयं लौ द्वौ द्रुतौ द्वौ नगणस्तथा ।
कमलो मण्ठको ज्ञेयः सर्वशास्त्रेषु सम्मतः ॥
। ०० ॥ ०० ॥ ।
दामोदरः

कमलामनोहरी—मेलरागः (वकुलाभरणमेलजन्यः)

(आ) स ग म प नि स
(अव) स नि ध प म ग स
मञ्ज

कमलमुखी—ध्रुवावृत्तम् (पञ्चाक्षरा)

यदि च गुरुः पदनिधने भवति हि सा कमलमुखी ।
(उदा) विमलघणो (छाया) विमलघनः ॥
भरतः

उत्तमेषु प्रयोक्तव्या ध्रुवा पद्ममुखी सदा ।
चच्चत्पुटेन तालेन रागे पञ्चमसंज्ञके ॥
नान्यः

कमलमोहनं—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म प नि ध स
(अव) स ध प म ग रि स
मञ्ज

कमलविलासः—देशीतालः

। SSSSS ॥ । ॥ । ॥ । ॥ ०००००००००००
हम्मीरः

कमलाननः—देशीतालः

॥ SSS ऽंऽंऽं ॥० ०ं
हम्मीरः

कमलामनोहरी—मेलरागः मध्यमावतीमेलः

(आ) स ००० ग म ० प ०० नि ० स
(अव) स ० नि ० ध प ० म ग ००० स
मेललक्षणे

कमलिकावसन्तः—मेलरागः (साल्वगमेलजन्यः)

(आ) स रि ग रि म प ध नि स
(अव) स नि ध म ग रि स
मञ्ज

कमाची—मेलरागः

(आ) स ०००० म ० प ० धनि ० स
(अव) सनि ० ध ० प ० मग ० रि ० स
मेललक्षणे

कम्पः—शिल्पकाङ्गम्

तद्दृश्यते परिवारप्रार्थनाभिः क्रियास्विति ।
मनसश्चलनं कम्पोऽकाण्डेनाकामतो यथा ॥
शारदातनयः

कम्पः—सात्विकभावः

शीतभयहर्षरोषस्पर्शजरासंभवः कम्पः ।
वेपनात्स्फुरणात्कम्पाद्वेपथुं सम्प्रदर्शयेत् ॥
भरतः

वेपथूरोषत्रासजराप्रियामिनवसङ्गमैर्जायते।
तमङ्गानां हरणैर्निदर्शयेत् वेपथुरेव कम्पः॥

सागरः

**कम्पनम्**

किन्नर्यां वामहस्तव्यापारः। तत्र द्रष्टव्यम्।

**कम्परायस्थापकः—देशीतालः**

कम्परायस्थापके त्रिः पपगास्सामजौ द्रुतम्।
ऽ̇ऽ̇ऽ ऽ̇ऽ̇ऽ ऽ̇ऽ̇ऽ ऽ̇ऽ̇०

गोपतिप्पः

**कम्पातालः—देशीतालः**

कम्पाताले विरामान्तं द्रुतद्वन्द्वं लघुस्ततः।
० ० ।

सोमराजः

**कम्पितम्—वक्षः**

ऊर्ध्वक्षेपैरविरतैः कम्पितं स्यात्प्रकम्पितम्।
एतद्धिहसिते श्वासे हिक्कायां रोदने श्रमे॥
कासे च साध्वसे नाटये देश्ये चैतत्प्रकम्पितम्॥

वेमः

इदं सोमेश्वरः व्याकम्पितमित्याह॥

**—शिरः**

भूरिशश्शीघ्रमूर्ध्वाधःकम्पनात्कम्पितं शिरः।
क्रोधेऽभ्युपगमे ज्ञाने विचारे व्याध्यमर्षयोः॥
शीघ्रप्रश्ने तर्जने च प्रयोज्यं कम्पितं शिरः।

विप्रदासः

वितर्करोषविज्ञानप्रतिज्ञातर्जनादिषु॥

ज्यायनः

बहुशो द्रुतमूर्ध्वाधःकम्पनात्कम्पितं शिरः।
ज्ञानेऽभ्युपगमे रोषे वितर्के तर्जने तथा॥
त्वरितप्रश्नवाक्ये च प्रयोक्तव्यमिदं शिरः।

शार्ङ्गः

**—अधरः**

कम्पितः कम्पनाद्भीरुड्व्यथाशीतजपादिषु।

कुम्भः

**—ऊरुः**

नतोन्नतौ मुहुस्स्यातां ऊर्वौयस्य स कम्पितः।
अधमानां गतौ प्रोक्तो विनियोगोऽस्य सूरिभिः॥

अशोकः

पतितोत्पतितौ पार्ष्णी यस्यासौ कम्पितो मतः।
गमने कान्दिशीकानां नीचानां च परिक्रमे॥

वेमः

नतोन्नतौ मुहुः पार्श्वौ यस्यासौ कम्पितो मतः॥

विप्रदासः

**कम्पितः—कपोलः**

स्फुरितः कम्पितः कोपे प्रमोदे च विधीयते।

ज्यायनः

स्फुरितौ कम्पितौ स्यातां कपोलौ रोषहर्षयोः।

वेमः

सुवेपितौ कम्पितौ च रोमहर्षेषु निर्दिशेत्।

विप्रदासः

**—श्वासः**

बुधैरुक्तः कम्पितः सुरतेऽनिलः।

अशोकः

**—कटी**

यातायातैस्तिरश्चीनैः वेगितः कम्पिता मता।
नीचवामनकुब्जानां गतानुकरणेष्वियम्॥

ज्यायनः

**कम्पिता—जङ्घा**

कम्पं स्याद्धूननं त्रासे गर्धरीणां च वादने॥

ज्यायनः

रेचिता कम्पिता ज्ञेया कम्पिता शीतवेपथौ॥

सोमेश्वरः

**कम्पिता—वंशे गतिः**

वंशस्याधरपर्यन्तनिहितस्य प्रकम्पनात्।
गतिः स्यात्कम्पिता वर्णालङ्कारोत्पत्तिकारिणी॥

वेमः

कम्पिता कम्पनादुक्ता वंशस्याधरगस्य तु।
वर्णालङ्कारनिष्पत्त्यै प्रयोगोऽस्याः प्रदर्शितः॥

कुम्भः

**—वंशेऽङ्गुलिगतिः**

यत्र प्रपूरणे वंशमधरस्थं प्रकम्पयेत्।
कम्पिता सा गतिः प्रोक्ता वर्णालङ्कारगामिनी॥

विशाखिलः

**कम्पिता—वीणासारणा**

कम्रिकायाः कम्पनेन स्वरस्थानेषु कम्पिता।

कुम्भः

## कम्बलम्

अथोच्यते कम्बलगानलक्ष्म चण्डीशितुःकुण्डलिकाप्रजातः।
यत्कुण्डलीकम्बलनामधेयो जगौ ततःकम्बलनामताख्याम्॥

रघुनाथः

यत्र ग्रहांशश्च तथाऽपन्यासः पञ्चमस्वरः।
ऋषभो यत्र बहुलः षड्जश्च न्याससंश्रयः॥
मध्यधैवतगान्धाराः स्वल्पं यत्र च संश्रिताः॥

प्रथमकम्बलस्य पञ्चमो ग्रहः। मध्यमधैवतगान्धारस्याल्पत्वम्। द्वितीयस्य निषादगान्धारर्षभाणामल्पत्वम्।धैवतषड्जयोर्बहुत्वम्। तृतीयस्य सरिसधानामल्पत्वम्। चतुर्थस्य मध्यमनिषादयोर्बहुत्वम्। निषादर्षभगान्धार (ल्पाः) षष्ठस्य मध्यमोऽपन्यासः॥ धैवतोंऽशः। शेषा अल्पाः॥

नान्यः

## कम्बलगानम्

कम्बलाख्येन नागेन प्रीतये पार्वतीपतेः।
गीतं स्वरपदैर्युक्तं प्रदेशे कुण्डलस्य च।
स्थितेन पञ्चमीजातिमुपजीव्य लयान्वितम्।
तद्गानं कम्बलं नाम प्रसिद्धं मार्गवर्त्मनि।
पञ्चमांशग्रहं षड्जन्यासं बहुलमीश्वरम्।
अल्पमध्यमगान्धारधमपन्यासपञ्चमम्।
स्वराणां बहुभिर्भेदैरल्पताबहुतावशात्।
अन्वितं कम्बलं ज्ञानमीरितं मार्गवेदिभिः।
कर्णोपान्तनिविष्टेन कम्बलेनेदमीरितम्।
श्रुत्वा कम्बलनागाय वरं प्रादान्महेश्वरः।
नन्द्यादिभ्योऽधिको मे स इत्याह भगवान् शिवः॥

कुम्भः

## कम्बलगानफलम्

अनेन गानेन पुरा पुरारिर्ददावभीष्टं किल कम्बलाय।
अद्यापि तद्गानकृतां जनानामभीष्टदः स्यात्स शिवः प्रहृष्टः॥

रघुनाथः

## कम्बललक्षणम्

अत्र ग्रहोंशोऽपि च पञ्चमोऽपन्यासो बहुः स्यादृषभस्वरश्च।
न्यासस्तु षड्जो मधगास्तदाल्पे तत्पञ्चमीजातिसमुद्भवश्च॥
अत्र स्वरालपत्वबहुत्वयोगाद् भवन्ति भेदा बहवस्तथापि॥

रघुनाथः

## कम्बली— श्रुतिः

गान्धारस्य प्रथमा श्रुतिः।
हनुमन्मतेऽष्टादशैव श्रुतयः॥

## कम्बलोत्पत्तिः

जातेराश्रित्य पञ्चम्याः फणीन्द्रः किल कम्बलः।
सप्तगा यत्पुरैतानि चन्द्रभूपामणेः पुरः॥
गीतैरेतैस्स तु प्रीतः त्र्यम्बकः कम्बलायताम्।
अदान्मदालसां दृष्ट्वा पूर्वदेहानतिक्रमात्॥
ततः प्रभृति लोकेऽस्मिन् कम्बलीग्रमूनि च।
तन्नाम्नैव प्रसिद्धानि गीयन्ते गीतवेदिभिः॥

नान्यः

## कम्बुजः— गीतालङ्कारः (रासकभेदः)

राजविनोदताले स्याद्गुरुद्वन्द्वमथ प्लुतः।
रासकः कम्बुजस्तेन गीयते गायकोत्तमैः॥

संगीतसारः

अयं शब्दः कञ्चुक इत्यन्यत्र पठितः॥

## कम्भरीतिः— रागः

षाडवा ककुभोद्भूता धांशन्याससवर्जिता।
मध्यमेन निषादेन विहितान्दोलनक्रमा॥
शृङ्गारे विप्रलम्भाख्ये गातव्या कम्भरीतिका॥

जगदेकः

## कम्भावतीरागध्यानम्

कम्भावती स्यात्सुखदा रसज्ञा सौन्दर्यलावण्यविभूषिताङ्गी।
गानप्रिया कोकिलतुल्यनादा प्रियंवदा कौशिकरागिणीयम्॥

दामोदरः

वासो वसाना शरदिन्दुशुभ्रं विरिञ्चिदेवी परिकीर्तनीया।
कुन्दावनिन्या चतुराननस्य कम्भावती लब्धसमृद्धसेवा॥

संगीतसरणिः

## कम्भावतीवेलावली— उपाङ्गरागः

त्यक्तसान्दोलितविमा ज्ञेया कम्भावती शुचौ।
शुचौ - शृङ्गारे॥

भट्टमाधवः

## कम्माच्— (कमास्) मेलरागः (हरिकाम्भोजी मेलजन्यः)

(आ) स म ग म प ध नि स·
(अव) स नि ध प म ग मा ग रि ग स.

## कम्रा— तालवाद्यम्.

वेणूद्भवं खादिरकाष्ठजं वा गुलद्वयं विस्तरतो हि दैर्घ्ये।
स्यादङ्गुलैर्द्वादशभिस्समेतं पर्यन्तयोर्न्यूनतमं मनाक् स्यात्।
मध्यस्यपिण्डस्तिल कम्रिकाणां चतुष्टयं श्लक्ष्णतमं यथास्यात्।

तद्वादयेत्पाणियुगे प्रतिष्ठं धृत्वा युगं कम्रिकयोस्तथा च।
साङ्गुष्ठमध्याङ्गुलिमूलदेशे धृत्वैकिकां तस्य युगस्य चान्त्यां।
प्रान्तं तयोः किञ्चिदविश्लथां तां कुर्याद् बुधो वादनमेतयोश्च
तत्कम्रिकावादनमेतदहुः कम्पेन कार्यं मणिबन्धनस्य।
पाटाः प्रदिष्टाः पुनरत्र मुख्याः किरीटिकाः सन्त्यपरेऽपि पाटाः।
अनामिका दक्षिणहस्तसंस्थां कृत्वाऽन्तराले किल कम्रिकाणां।
अङ्गुष्ठघृष्टेस्तलघातनेन वास्य वाद्यं परमेकमाहुः॥

कुम्भः

कयीमूरू— देशीनृत्तम्.

मानाद्द्विगुणतो प्रोक्ता कैमूरू लयसंयुता।

वेदः

मानादिति पिल्लमूरूप्रयोगोक्तमानादित्यर्थः।

करचारणा— पाटवाद्यम्.

केवलैः करपाटैस्तु जायते करचारणा। वेमः
केवलैर्हस्तपाटानां नटानां तु चतुश्चतुः।
मात्राभिश्च कृता सैषा स्मर्यते करचारणा॥

पार्श्वदेवः

करटा— आतोद्यम्.

आयामे करटा तु स्यादङ्गुलान्येकविंशतिः।
पिण्डे चाङ्गुलतुर्यांशा वाद्या कोणद्वयेन तु॥
चतुर्दशाङ्गुलं त्वस्यास्त्रितन्त्रीकं मुखद्वयम्।
कुर्वीत चर्मणानद्धे कुण्डल्यौ सूत्रवेष्टिते॥
कुण्डलीकवलप्रान्ते रन्ध्राणि स्युश्चतुर्दश।
शिबिकान्यासयोगेन वध्रैरेतानि बन्धयेत्॥
पर्यन्तावद्धकच्छान्ता कटौ स्कन्धेऽथवा वहेत्।
करटेति भवन्त्यस्यां पाटवर्णाः पुनः पुनः॥

सोमराजः

करटा— अवनद्धम्.

चत्वारिंशाङ्गुलावेष्टा सैकविंशाङ्गुलायता।
द्वादशाङ्गुलवक्त्रा च वीजवृक्षोद्भवा समा॥
वलयेन च कर्तव्यो लोहजे सूत्रवेष्टिते।
तयोर्वेष्टनमुद्दिष्टं त्रिचत्वारिंशदङ्गुलम्॥
करटास्तु विधातव्यास्तिस्रस्त्र्यंशसमावृताः।
वलये कवलच्छन्ने मुखयोरुभयोर्न्यसेत्॥
रन्ध्राणि तत्र कुर्वीत समभागैश्चतुर्दश।
वध्रिके तत्र संयोज्ये रन्ध्रेष्वेकान्तरेषु च॥
सम्मुखे तेन वध्नीयान्मध्ये मत्स्याकृतिर्यथा।
कच्छयावेष्टयेत्प्रान्तं शेषं स्कन्धकटौ न्यसेत्॥
करटा सा विनिर्दिष्टा कुडुपद्वयवादिनी।
ककारश्च रकारश्च टकारो रेफमस्तकः॥
उत्सवे च विवाहे च यात्रायां नृपमन्दिरे।
इत्यादि सर्वकार्येषु करटा विनियुज्यते॥

सोमेश्वरः

करणम्— चर्मविशेषः

करणं नाम षण्मासमृतवत्सस्य चर्म च।
षण्मासिक्यां मृतो वत्सस्तच्चर्मकरणं स्मृतम्॥

नारायणः

करणम्—

करणं नाम तत्प्रोक्तं याचेष्टा पादयोर्द्वयोः।
व्यायाम एष संक्षिप्तस्सनृत्तकरणात्पृथक्॥

वेमः

करणम्—

वीणायां हस्तव्यापारः। करणं षड्विधं, रूपं, कृतप्रतिकृतं, प्रतिभेदः रूपशेषः, प्रतिशुष्का, ओघश्चेति॥

करणं वीणयां धातुः। तस्य पञ्च भेदाः। यथा रिभितः, उच्चयः, नीरटितः, ह्रादः, अनुबन्धः, इति॥

करणम्— मुखसन्ध्यङ्गम्

प्रकृतार्थसमारंभः करणम्।

भरतः

प्राकृतार्थः समारंभः कारणम्। यथा वेण्यां - गच्छाम इति भीमवाक्यम्।

सागरनन्दी

करणम्—प्रस्तुतक्रिया।

अवसरानुगुणस्यार्थस्य प्रारंभः करणम्।
अन्ये तु विपदां शमनं करणमाहुः।
शमनं च आशीर्वादवचनेन अन्यथा वा॥

रामचन्द्रः

उद्दिष्टार्थस्य सिद्ध्यर्थं प्रारंभं करणं यथा॥

अमृतानन्दी

करणम्— रागवर्धनाङ्गम्

रागवर्धनशब्दे द्रष्टव्यम्।

करणधातुः—

भूरिभिर्लघुजैर्घातैरल्पैर्गुरुमयैस्तथा।
धातोः करणसंज्ञस्य क्रियाः कुम्भनृपोदिताः॥

कुम्भः

**करणनेरिः— देशीनृत्तम्**

सिंहाकर्षं चावहित्थं निवेशं चैलकादिके।
क्रीडितं च तुरीयं स्यान्नतितं पञ्चमं तथा।
घट्टं चोपसृतं प्रोक्तं तलसंघट्टितं ततः।
उद्वृत्तं चाष्टमं प्रोक्तं विष्णुक्रान्तं च लोलितम्।
मदस्खलितसंभ्रान्ते विष्कम्भोद्घट्टिते ततः।
प्रान्ते तलविलासं च प्रोक्तं पञ्चदशाभिधम्।
रासतालेन मानेन मध्यमेन मनोरमः।

वेदः

एतदन्यथोक्तं देवेन्द्रेण। यथा—

करणैः पञ्चदशभिर्युक्तः करणनेरिकः।
सिंहाकर्षितमादौ स्यात्ततस्तलविलासितम्।
वृश्चिकं च ततः प्रोक्तमन्यद्वृश्चिककुट्टितम्।
लतावृश्चिकसंज्ञं स्याद्दण्डरेचितकं ततः।
दण्डपक्षं चोर्ध्वजानु तलसंस्फोटिताभिधम्।
विद्युद्भ्रान्तं दण्डपादं ललाटतिलकाभिधम्।
एतानि द्वादशोक्तानि पूर्वेषां मततो यथा।
जानुवेष्टनसंज्ञं च कराङ्घ्रिस्वस्तिकं तथा।
अन्तश्च्छायाभिधं प्राहुस्त्रीणि पद्धतिकोविदाः।

देवेन्द्रः

**करणभूषणम्**

नन्दिकेश्वररचितमिति भरतार्णवोदाहरणादनुमीयते।
भरतार्णवे तु लब्धभागे करणानां लक्षणं न दृश्यते।
ज्यायसेनापतिना नन्दिमतं करणलक्षणेषु बहुधादत्तम्।
तस्मात्तत्करणभूषणमिति ज्ञातुमवकाशोऽस्ति।

**करणभ्रमरी—तिरिपनृत्ताङ्गम्**

मण्डलस्थानके स्थित्वा पताकः प्रसृतो यदा।
वामः पार्श्वे दक्षिणश्च शिखरो हृदि संस्थितः।
गारुडं वामतः कृत्वा त्यक्त्वा तत्पुरतो यथा।
वामाङ्घ्रिं वामपार्श्वे च वृश्चिकं चरणं चलेत्।
दक्षिणं शिखरं मौलावधोमुखमथाचरेत्।
वामाङ्गं वामपार्श्वे चेन्नामितं च भ्रमिस्ततः।
दक्षिणावर्ततस्त्रिःस्यात्करणभ्रमरी भवेत्॥

वेदः

**करणयतिः—देशीतालः**

ताले करणयत्याख्ये ज्ञेयं विन्दुचतुष्टयम्।
००००

जगदेकः

**करधारणी—कला**

तथैवमाधाय च तेषु हस्तौ तथागताभ्यां चलचङ्क्रमाभ्याम्।
पद्भ्यामथो मूर्ध्नि करोति यत्र प्रागुक्तपात्रं करधारणीति॥

नागमल्लः

**करभौ**

करभौ मलिनौ स्वच्छावरुणौ कुञ्चितावृजू।
इत्थमन्वर्थनामानौ कथितौ पञ्चधा बुधैः॥

कुम्भः

**करभ्रमरिका—उत्प्लुतिकरणम्**

यत्र वामेन हस्तेन समवष्टभ्य भूतलम्।
गगनोन्मुखपादस्सन् अपसव्येन सत्वरम्॥
शरीरं भ्रामयेदेषा करभ्रमरिका तदा।

वेमः

**कररेचकः**

त्वरया परितो भ्रान्तिर्यदा स्याद्धंसपक्षयोः।
पर्यायेण तदा धीरैरादिष्टः पाणिरेचकः॥

अशोकः

अथवास्यादसौ पाणेर्विरलः प्रसृताङ्गुलेः।
अङ्गुष्ठैरङ्गुलीमिश्च विरलः प्रसृतैर्भ्रमः।
तिरश्चीनोऽथवा हंसपक्षयोः करयोस्तु सः॥
परितो रेचितो यद्वा पर्यायेण विनिर्मितः।
कथितो विप्रदासेन विदुषां कररेचकः।

विप्रदासः

**कररेचितरत्नम्—चालकः**

प्रसार्य पार्श्वयोः पार्श्वे प्रसृतौ पुरतस्ततः।
तत्रैव स्वस्तिकीकृत्य पर्यायात्पार्श्वयोर्द्वयोः॥
ततश्च वालव्यजनचालकस्य क्रियान्वितौ।
वर्तनास्वस्तिकं कृत्वा ततो भूतलसम्मुखौ॥
मण्डलाकारमुद्वृत्य ततश्च पतितावथ।
करौ कृत्वा तयोरेकं भ्रमयेदंसदेशतः॥
लीलया चालयेदन्यं पार्श्वतो रथचक्रवत्।
ततश्च करमेकैकमुत्सार्य सरलात्मना॥
प्रसारितोद्वेष्टितकनमनैरंसदेशतः।
मुहुर्मुहुश्चालयित्वा ततस्तौ मण्डलोर्ध्वगौ॥
तत्र निस्सृत्य पर्यायादन्योन्याभिमुखौ करौ।
मस्तकात्कटिपर्यन्तं वामदक्षिणपार्श्वयोः॥
पतितोत्पतितौ कृत्वा ततस्तौ स्वस्तिकीकृतौ।

कमनीयेषु देशेषु केषुचिन्नयनप्रियम् ॥
चालयेच्चारुविलुठत्सरलाङ्गुलिपल्लवौ ।
अन्तर्बहिर्घूर्णयित्वा ततस्सव्यापसव्ययोः ॥
लोलयित्वा पराचीनौ कूर्परस्वस्तिकीकृतौ ।
ततस्तयोर्विच्युतयोरेकैकं चालयेत्क्रमात् ॥
वामदक्षिणयोः पश्चात्त्रिकपर्यन्तगामिनम् ।
ततस्स्वस्तिकतां नीत्वा विलुठन्तौ करावुभौ ॥
ऊर्ध्वाऽधोवदनौ त्र्यस्रं ततो यत्र निवर्तयेत् ।
करेरेचितरत्नाख्यश्चालकोऽयं पुरारिणा ॥
पुरा प्रयुक्तस्त्रिपुरविजयप्रीतचेतसा ।
प्रीणन्त्येतत्प्रयोगेण ब्रह्मविष्ण्वादिदेवताः ॥
यतस्तस्मादयं तज्ज्ञैः प्रशस्यो नृत्तकर्मणि ।

वेमः

अस्य संवादः - अशोकस्य ग्रन्थे संगीतरत्नाकर-
व्याख्यायां कल्लिनाथकृतायां च बाहुप्रकरणे वर्तते ॥

**करस्पर्शः—उत्प्लुतिकरणम्**

अलगं विधाय करणं हस्तेनाश्रित्य नर्तकीभूमिम् ।
परिवर्तेन पदेदं स्पर्शनमुक्तं कराद्यं तत् ॥

कुम्भः

**कराङ्गुल्यः**

वियुक्तास्संहता वक्राः पतिता वलितास्तथा ।
प्रसृताश्च तथा कुञ्चन्मूलास्सप्तविधा मताः ॥

अशोकः

**कराङ्घ्रिस्वस्तिकम्—करणम्**

ऊर्ध्वजान्वाख्यया चार्या पाद ऊर्ध्वप्रसारितः ।
मुख्यपार्श्वात्करोऽप्यस्यालपद्मस्स्वस्तिकीकृतः ।
अङ्घ्रिणान्ते ततः प्रोक्तं कराङ्घ्रिस्वस्तिकं बुधैः ।

देवेन्द्रः

**करालमण्ठः—तालः**

यगणस्सगणो यत्र करालो मण्ठको भवेत् ।
। SS ।। S

वेदः

**कराली—मेलरागः (झलवरालीमेलजन्यः)**

(आ) स ग रि ग म प ध नि स
(अव) स नि ध प म ग रि स

मञ्ज

**कराली—श्रुतिः**

तारधैवतस्य तृतीया श्रुतिः ॥

पार्श्वः

**करिहस्तम्—करणम्**

वक्षस्स्थः खटको वामः कर्णे सोद्वेष्टनः परः ।
त्रिपताकः करः पादः तत्तद्दिक्कसमञ्चितः ॥
यत्र निष्कामणीयस्स्यात्करिहस्तं तदीरितम् ।

ज्यायनः

**करिहस्तः—नृत्तहस्तः**

ऐलितोत्थो लताहस्त ऐलावत्पार्श्वयोर्यदि ।
अन्यः कर्णस्थितो यत्र खटकास्योऽथवा करः ॥
त्रिपताकस्तदा प्राहुः करिहस्तमिमं बुधाः ।
इहैकवचने मानं मुनेर्वचनमेव हि ॥

अशोकः

सजातीयतया अनारम्भोऽस्य चतुरश्रवद्विजातीयारम्भोऽपि नृत्ताभ्यासस्य व्यपदेशादरालखटकामुखवदतो न द्विवचनम् । एकैकस्य पृथक्प्रयोगे करिहस्तत्वाभावादित्येकवचनमेव । तदाकारत्वाच्चेदं नामेत्यभिनवगुप्तः ॥

**—नृत्तहस्तः**

ननु द्विवचनान्तत्वमत्र कस्मान्न जायते ।
हस्तद्वयप्रवर्त्यत्वादर्धरेचितहस्तवत् ॥
अत्राभिधीयते तत्र भवेद्द्विवचनान्तता ।
यत्रैकशब्दाभिधेयौ सजातीयावुभौ करौ ॥
यथोक्तौ पल्लवौ यद्वा भिन्नशब्दनिरूपितौ ।
विजातीयावुभौ यद्वदरालखटकामुखौ ॥
लोके निष्पन्नेकशेषद्वन्द्वे पदविधौ तथा ।
दृष्टं द्विवचनान्तं च घटौ घटपटाविति ॥
एक एव लताहस्तो हस्तिहस्तसमाकृतिः ।
उच्यते करिहस्तेन न स्याद्द्विवचनं ततः ॥
नैतद्युक्तिसहं यद्वदरालखटकामुखौ ।
विजातीयाविमौ तद्वत्पताकखटकामुखौ ॥
अथ तच्छब्दवाच्यत्वमत्र वास्तीति चेन्मतम् ।
पताकयोः पल्लवता स्यादतच्छब्दयोः कथम् ॥
अथ तच्छब्दवाच्यत्वं सजातीयेन कारणम् ।
अथ शब्दौ विजातीयौ दण्डपक्षौ विलोकय ॥
तदाकृतित्वं संज्ञाया हेतुस्तच्चैकसाधितम् ।
इति चेदस्य हस्तस्य नियमो निष्फलो भवेत् ॥
न चात्र करिहस्तोऽयं मुखे करिकरस्थितः ।
किन्तु कारणहस्तस्य तुल्याकारे प्रयुज्यते ॥
तत्तेन कथ्यते तुल्यं यद्दृष्टौ यत्स्मृतिर्भवेत् ।
एकेन करिकर्णस्य हस्तस्यान्येन तु स्मृतिः ॥
तस्मादुभाभ्यां नियतव्यापाराभ्यां प्रकाशते ।

करिहस्ताकृतिस्तेन करिहस्तावुभौ करौ ॥
कृतैकशेषादेकस्माद्युक्ताद्विवचनान्ततः ।
तस्माद्रत्नाकरादीनामुक्तिर्युक्तिसहा नहि ॥
मुनिनैवैकवचनमुक्तमित्यत्र नोत्तरम् ।

विप्रदासः

उन्नतो डोलितश्चैव पार्श्वयोश्चेल्लताकरः ।
कर्णस्थस्त्रिपताकोऽन्यः खटकामुख एव वा ॥
तदा करिकराकारत्वेनोक्तः करिहस्तकः ।
नन्वत्र नृत्तहस्तानां लक्ष्म साधारणे कथम् ॥
हस्तकद्वयनिष्पाद्ये मुनिनैकत्वमास्थितम् ।
तथा कीर्तिधराचार्यैः करिहस्ताविती‌रितम् ॥
तथैव मुनिनात्रैव हस्तकेत्वर्धरेचिते ।
विजातीयकरद्वन्द्वोत्पादितैकप्रधानकौ ॥
उक्तं द्विवचनान्तत्वं तथैवात्रोपपद्यते ।
नैवम्महात्मनामेष स्वभावो यत्र कुत्रचित् ॥
निरूपयन्ति यत्किञ्चिन्मनः किञ्चिन्नपुंसकम् ।
स्थाल्या सारोपितं यच्च तल्लीलायितचेष्टितम् ॥
अतो द्विवचनेनात्र करद्वन्द्वैकहेतुतः ।
यस्मिन्करौ स्मृतौ हेतौ प्राधान्येन लताकरे ॥
लीलायिते तन्मुनिनैकत्वमत्रोपदर्शितम् ।
भट्टाभिनवगुप्तैश्च तदाशयवशानुगैः ॥
एकैकस्यां करस्यात्र प्रथक्त्वेन प्रयोगतः ।
करिहस्तत्वमुचितमुदितं तन्मते यथा ॥
करिकर्णाकृतेरस्त्वेकः परः करिकराकृतेः ॥
करस्तनयोर्योगे द्वित्वोक्तिः न.........? ।
इतिकर्तव्यतात्वेनाविचार्यान्यकरस्य तु ॥
गौणत्वं भणितं तत्तैर्जाघटीति यतोऽत्र च ॥
समप्रधानभावो हि दृष्टः प्रकरणाग्रतः ।
कटकत्रिपताकान्यकरः कश्चित्करः परः ॥
करिहस्ताकृतिस्तस्माद्द्वन्द्वत्वाद्द्विदितं कथम् ।
अत्राकृतिप्रधानत्वे कचिनैकत्वमास्थितम् ॥
क्रियाप्राधान्यतोऽन्येषु युक्तं द्विवचनं स्थितम् ॥

कुम्भः

**करिहस्ता---देशीचारी.**

संहते स्थानके स्थित्वा चरणौ यत्र भूतले ।
पार्श्वाभ्यां कर्षतस्सैषा करिहस्तेति कथ्यते ॥

वेमः

**करुणः---रसः**

शोकः स्थायी भयेद्भावो यत्रासौ करुणो रसः ।
वियोगो बन्धुभिर्व्याधिरूपघातोऽथ बन्धनम् ।
ह्रीनाशो व्यसनप्राप्तिर्देशभ्रंशादयस्तथा ॥
विभावाः स्युः श्रुता यद्वा साक्षादेव विलोकिताः ।
प्रलयस्त्रस्तगात्रत्वं विलापः परिदेवनम् ।
अश्रुपातो मुखे शोषो वैराग्यं स्वरभेदनम् ।
श्वासोच्छ्वासौ देहपाताघातोरस्ताडनादयः ।
एतैरभिनयैरेनमनुभावैर्नटो रसम् ।
रोदनं यद्भवेच्छोच्यगुणस्तवपुरस्सरम् ।
सविलापः स्मृतो देवाद्युपालम्भेन रोदनम् ।
परिदेवनमित्युक्तं तदिदं शब्दकोविदैः ॥
निर्वेदो ग्लानिरौत्सुक्यावेगमोहश्रमा भयम् ।
विषादोन्माददैन्यानि व्याधिरित्येवमादयः ।
सञ्चारिणः स्युः करुणमेतैर्भावैस्तु पोषयन् ।
त्रिविधोऽयं मानसिकवाचिकाङ्गिकभेदतः ।
वाच्यार्थाननुसन्धाननिश्वासोच्छ्वासदीर्घता ।
उपेक्षा केशवस्त्राङ्गसंस्कारादिषु दीनता ।
अनुभूतानभिज्ञत्वमनवस्थितचेतना ।
आकाशवीक्षणं चेति मानसः करुणो रसः ।
हाकारो रोदनं क्रोशः प्रलापो दीनभाषणम् ।
दूराह्वानमथाक्रन्दो याचिकः करुणः स्मृतः ।
विवर्तेन शरीरस्य बाहुपादविधूननम् ।
शिरोरस्ताडनं शीर्षधूननं पतने मुहुः ।
धावनं हस्तविक्षेपः करुणस्त्वाङ्गिको भवेत् ।
आद्यः स्यादुत्तमं मध्यनीचयोर्द्वावनन्तरौ ।
धर्मापघातजो वित्तनाशजो बन्धुनाशजः ।
त्रिविधः करुणो ज्ञेय आद्य उत्तमपूरुषे ॥

विप्रदासः

शापक्लेशोपघाताद्यैर्जायते करुणो रसः ।
अश्रुविश्वासवैवर्ण्यस्रस्ताङ्गत्वस्मृतिक्षयैः ।
परिदेवितशोषाद्यैरभिनेयस्ससूरिभिः ।
स्वरभेदाश्रुनिर्वेदविषादावेगमृत्यवः ।
मोहापस्मारजडता चिन्तौत्सुक्यं च वेपथुः ।
दैन्यं वैवर्ण्यमालस्यं व्याधिर्ग्लानिस्तथा श्रमः ।
स्तम्भाद्याश्च चरा भावाः स्थायी शोकोऽस्य च स्मृतः ॥
ब्रह्मसंवित्समास्वादः करुणो यस्सुखात्मकः ।

सागरः

विप्रलम्भरसोऽस्यैवेति वचनाच्च, 'एकोरसः करुण एव निमित्तभेदाद्भिन्नः' इत्यादि करुणप्रभोर्वचनाच्च करुणस्यैव साम्राज्यमिति तत्त्वविदः । ननु शृङ्गारो नायको रसः । 'शृङ्गारमेव रसनाद्रसमामनन्ति ' इति च, शृङ्गारस्यैव प्राधान्यं श्रूयते । कथं करुण-

स्यैव साम्राज्यमिति - उच्यते। सत्यं रसराजः श्रृङ्गारः तथापि करुणे माधुर्याधिक्यमस्तीति तथोच्यते । तथाहि - काव्यस्य शब्दार्थौ शरीरम्। रस आत्मा। रसस्योत्कर्षहेतवो माधुर्यौजः प्रसादाख्यास्त्रयो गुणाः। तत्र माधुर्यं श्रृङ्गारकरुणशान्तेषु। तत्र माधुर्यंन्नामाह्लादहेतुत्वम्। तत्रैव चेतसो द्रवत्वहेतुः ललितत्वं सम्पादयति। माधुर्याद्विप्रलम्भे विप्रलम्भादपि करुणे रसातिशयः। अत्र रसविदां चमत्कृतिरेव प्रमाणम्।

रसविवेकः

करुः क्लेश इति ख्यातः क्लेशं न सहते यतः।
यस्य धीः करुणा सा स्यात्प्रत्यये करुणो भवेत्।
पराश्रितानां क्लेशानामसहिष्णुतयोच्यते।
मनसो यादृशो भावः स वै करुण उच्यते।

शारदातनयः

करुणम्—रञ्जनगुणः

प्रेमोद्दीपपदप्रायं श्रृङ्गाररसभूषितम्।
करुणाकाकुसंयुक्तं करुणं विरहप्रियम्॥

सोमेश्वरः

## करुणविप्रलम्भः

प्रथमानुरागादीनां विप्रलम्भभेदानां त्रयाणामप्यनन्तरं रागवर्धनतमः करुणविप्रलम्भोऽभिधीयते। कः पुनरयं करुणो नाम। यस्मिन्मिथ्याभिनिवेश इव गुर्वायासकारकेऽपि मूर्खाणां, सर्वाङ्गपरित्याग इवालौकिकेऽपि ब्रह्मविदां, रजः कर्दमक्रीडाविनोद इव वेषदूषकेऽपि पौरपौगण्डानां महाहवमहीविहार इव बीभत्सभीषणेऽपि शूरसाहसिकानां प्रियसुहृन्नर्मनिर्भत्सन इव इतिग्राम्येऽपि पारिहासिकानां कुपितकामिनीपार्ष्णिप्रहार इव सुकुमारेऽपि रागिणां तिमिराभिसारिकावेष इव मलीमसेऽपि चौर्यरतरुचीनां विलासिनीकिलिकिञ्चितप्रपञ्च इव दीनदर्शनेऽपि नागरिकाणां अतीवानुरज्यते मनःप्रेम सामयिकानाम्।

उच्यते— प्ररूढस्नेहयोरन्यतरविनाशेऽन्यस्य दुःखाभिनिवेशो हृदयदारुणः स कथं शोकाद्भिद्यते इति चेत्। हेतुफलविषयस्वरूपभेदात्। तथाहि - रत्येकहेतुः करणः प्रीतिदयाद्यनेकहेतुरशोकः। पुनस्सङ्गमफलः करुणः। अपुनस्सङ्गमफलः शोकः। स्त्रीपुंसविषयः करुणः अस्त्रीपुंसविषयः शोकः। सप्रत्याशरूपः करुणः निष्प्रत्याशरूपः शोकः इत्यन्य एव शोकः अन्यश्च करुणः। स प्रायेण दैवाश्रयः पौरुषाश्रयः देशाश्रयः कालाश्रयः स्वरूपाश्रयः परिमाणाश्रयः प्रमाणाश्रयः अनुरागाश्रयः संभोगाश्रयः विप्रलम्भाश्रयः नायकाश्रयः नायिकाश्रय इति द्वादशधा। तेषु दैवाश्रयः स्त्रीपुरुषसहायगुरुनिमित्त इति चतुर्धा। पौरुषाश्रयः स्त्रीपुरुषयोर्विपये स्त्रीपुरुषाभ्यां कृत इति चतुर्धा। देशाश्रयो दिव्यमानुष इति ; कालाश्रयस्तु इहान्योभयजन्मसङ्गम इत्यादि।

अथास्यैव (करुणस्य) विभावानुभावव्यभिचारिसंयोगः प्रयोगतोऽभिधीयते। अनुभावा उदाहरिष्यन्ते। ते च मुखप्रतिमुखगर्भविमर्शनिर्वहणेषु प्रत्येकं षोडश — इत्येवमशीतिर्यथाक्रमः प्रतिपाद्यन्ते। यथा—

तत्र व्यसनाभिघातः, अङ्गाभिभवः, चेष्टासंमीलनं, मोहसमावेशः, चेतनाप्रत्यागमः, मूर्छाविच्छेदः, शोकप्रत्यग्रता, शोकावेगः, दुःखनिर्यातनं, दुःखावसादः, दुःखसन्दीपनं, दुःखव्याहारः, दुःखातिवाहनं, वाष्पमोक्षः, अवस्थानुभवः, अवस्थान्तरावेशः, इति मुखे षोडशानुभावाः। परिदेवनं, अनुशोचनं, गुणसंस्मरणं, स्वभाग्यगर्हणं, विलापः, प्रलापः, प्रविलापः, आत्मनिन्दा, हृदयोपालम्भः, जीवितजुगुप्सा, दैवाधिकारः, शोकोन्मादः, दुःखसंभेदः, सहायापेक्षणं, सहायानुनीतिरिति षोडश प्रतिमुखेऽनुभावाः। सुहृत्परिवेदनं, सुहृत्प्रलापः, परिजनानुशोचनं परिजनाक्रन्दः, गुरूपरोधनं, गुरुजनविलापः, सहायाक्रन्दनं, सहायाभ्युपपत्तिः, सहायाभाषणं, सहायप्रश्नः, साहसाग्रहः, मरणाभिनिवेशः, सहायाभ्यर्थनं. सहायशिक्षा, मरणोपक्रमः, मरणाध्यवसायः, इति गर्भे षोडशानुभावाः। समाश्वासनं, उद्धर्षणं, प्रतिबोधनं, उत्साहनं, अनुकम्पनं, विस्रंभणं, प्रलोभनं, उपपत्तिदर्शनं, प्रश्वासनं, प्रत्यायनं, आप्यायनं, तन्मतव्यापेक्षः, भयोपदर्शनं, उपालम्भनं, प्रतिक्षेपः, इति विमर्शे षोडशानुभावाः। मरणाध्यवसायः विद्रवः शोकतिरस्कारः शोकलाघवं शोकविनोदः तपस्योद्वेगः दैव त्रिकालदृष्टदर्शनं तदुपदेशः सहायस्वीकरणं तदध्यवसायः प्रत्यूहप्रशमनं प्रत्याशानुबन्धः समयप्रतीक्षा संविधानकप्रकारः प्रत्युज्जीवनं पुनः समागमः — इति निर्वहणे षोडशानुभावाः।

भोजः

लक्षणोदाहरणानि श्रृङ्गारप्रकाशे द्रष्टव्यानि।

करुणम्—शीतगुणः

प्रेमोद्दीपपदप्रायं श्रृङ्गाररसभूषितम्।
करुणाकाकुसंयुक्तं करुणं विरहप्रियम्॥

सोमेश्वरः

करुणा—दृष्टिः

मन्युमन्थरतारा च पतितोर्ध्वपुटा तथा।
घोणाप्रदायिनी दृष्टिः करुणा करुणे रसे॥

सोमेश्वर

या स्रस्तोर्ध्वपुटा साश्रा नासिकाग्रानुगामिनी ।
शोकमन्थरतारा सा करुणा करुणे मता ॥

अशोकः

एषा, दयावती, आलापिनी, सदयन्तिका, इति तिसृषु श्रुतिषु वर्तते ॥

**करुणालयः**—देशीतालः

करुणालयविख्याते ताले लो दो गुरुप्लुतौ । ० ऽ ऽ̐

लक्ष्मणः

**कर्कटः**—हस्तः

करयोरखिलाङ्गुल्योऽन्योऽन्यमन्तरनिर्गताः ।
दृश्यन्तेऽन्तर्वहिर्वा चेत्तदा स्यात्कर्कटः करः ॥

अशोकः

एष सुप्तोत्थजृम्भायामङ्गानां च प्रसारणे ।
अग्रे पार्श्वेऽथवोर्ध्वे वा पराङ्मुखतलः करः ॥
बहिःस्थिताङ्गुलिस्स्यादनङ्गादङ्गमोटने ।
स्थूलोदरेऽप्यसावेवोदरसंस्थित इष्यते ।
हन्तुं विभ्रदसौ पृष्ठेऽङ्गुलीनां खेदसूचने ॥
अथान्तस्थाङ्गुलिः कार्यः चिन्तायां चिबुके स्थितः ।
ईषद्वक्रीकृतान्योन्याभिमुखाङ्गुलिरेष तु ॥
शङ्खस्य धारणे योज्यो मुखेऽधः स्नानकर्मणि ।
द्वित्रिर्वा मूर्ध्नि संयोज्यो गृहे तु स्यादधस्तलः ॥
हृदयक्षेत्रगः कार्यः किञ्चित्कुञ्चितकूर्परः ।
अन्तःपुरो वामभागस्थितः कार्योऽथ कार्मुके ॥
पार्श्वस्थितः प्रयोक्तव्यः पराङ्मुखतलाङ्गुलिः ।

अशोकः

अन्योन्यस्यान्तरैर्यत्राङ्गुल्यो निस्सृत्य हस्तयोः ।
अन्तर्बहिश्च दृश्यन्ते कर्कटस्सोभिधीयते ॥
अन्तः स्थिताङ्गुलिः कार्यश्चिन्तायामथ जृम्भणे ।
ऊर्ध्वे पार्श्वेऽग्रतो वा स्यात्पराङ्मुखतलाङ्गुलिः ॥
अङ्गानां मोटने चाथ बृहद्देहे स्वसंमुखः ।
जठरक्षेत्रगः पृष्ठे त्वङ्गुलीनां हन्तुं दधत् ॥
खेदे च संकुचत्किञ्चिदन्योन्याभिमुखाङ्गुलिः ।
शङ्खस्य धारणे सोऽयं जृम्भादौ बहिरङ्गुलिः ॥

शार्ङ्गः

भरतार्णवसंप्रोक्तं शुकतुण्डाभिधे करे ।
सर्वाङ्गुल्यः कुञ्चितास्स्युः कर्कटे स्यात्तु कर्कटः ॥

शृङ्गारः

**कर्णपूर्णहस्तः**—

उभयोः करयोर्मूले कपित्थाख्यकरौ यदि ।
कर्णपूर्णाभिधानोऽयं निश्चितो भावकोविदैः ॥
पुरोभागेत्वयं हस्तो रमाभारतीभावने ।
कर्णस्थानेत्वयं हस्तः कर्णार्थे विनियुज्यते ॥

विनायकः

**कर्णयुग्मप्रकीर्णकम्**—चालकः

विलोलितौ तिरश्चीनौ कर्णाभ्यर्णे करावुभौ ।
उरःप्रदेशपर्यन्तं स्वस्वपार्श्वे समागतौ ॥
यत्रैतदुक्तं नृत्तज्ञैः कर्णयुग्मप्रकीर्णकम् ।

वेमः

**कर्णलग्नकौ**—स्कन्धौ

आलिङ्गनेऽतिशिशिरे प्रयोगः कर्णलग्नयोः ।
संलग्न इत्याह सोमेश्वरः ॥

विप्रदासः

**कर्णवलयम्**—कर्णभूषणम्

**कर्णाटः**—रागः

कर्णाटस्तद्वदाख्यातो रिन्यासग्रहणांशकः ।

नारायणः

—रागाङ्गरागः

कर्णाटो भिन्नषड्जाङ्गो मन्यासो धग्रहश्शुचौ ।
हेमन्तप्रथमे यामे गातव्यः पञ्चमोचितः ॥

मद्गमाधवः

**कर्णाटकजोगी**—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स रि ग म प ध स
(अव) स नि ध प म रि स

मज

**कर्णाटकदम्बः**—मेलरागः (गमनश्रममेलजन्यः)

(आ) स रि म प ध स
(अव) स नि ध प म ग रि स

मज

**कर्णाटकसारङ्गः**—मेलरागः (मायामाल्वगौलमेलजन्यः)

(आ) स रि ग म ग प नि ध म प ध नि स
(अव) स ध म प म ग रि स

मज

कर्णाटगौडः—रागः

ज्ञेयः कर्णाटगौडस्तु षड्जन्यासग्रहांशकः ।

हम्मीरः

कर्णाटगौडो रागाङ्गो रिपवर्जश्च नित्रयः ।

मद

—प्र. रागः

सन्यासांशग्रहो गौडः कर्णाटपदलाञ्छितः ।
गानं स्याद्वीरशृङ्गारे स्वस्थाने ताडितस्वरः ॥

मोक्षदेवः

—रागः

स्वस्थाने ताडितः पूर्णः षड्जांशन्याससंयुतः ।
प्रोक्तः कर्णाटगौडोऽयं प्रतापपृथिवीभुजा ॥

जगदेकः

—रागः ( वंशे वादनक्रमः )

तारषड्जं ग्रहं कृत्वा द्वतीकुर्यादधस्तनम् ।
तमेव पुनरान्दोल्य द्वितीयस्वरमेत्य च ॥
तृतीयं स्फुरितं कृत्वा वादयित्वा ग्रहस्वरम् ।
तत्पूर्वौ च स्वरौ कृत्वा ग्रहे न्यासः क्रियेत चेत् ॥
तदा कर्णाटगौडस्य स्वस्थानं प्रथमं भवेत् ।
स्थायिस्वरस्तृतीयस्तु तस्य वंशेषु दृश्यते ।

वेमः

—मेलरागः कर्ता.

शुद्धास्समगपा यत्र शुद्धो रिः पतसध्यमः ।
निःकैशिकी च कर्णाटगौडमेलोऽयमुच्यते ॥
निपादनीतयं यत्न संपूर्णो वा रिधोज्झितः ।
दिनान्ते गीयते नित्यं कर्णाटोऽयं सुखावहः ॥

श्रीकण्ठः

—रागः

अथ कर्णाटगौडाख्यो रागस्स्वस्थानताडितः ।
पूर्णष्षड्जांशकन्यासो रागविद्भिरुदीरितः ॥

हरिः

कर्णाटगौडी—रागः

केचित्कर्णाटगौडं तं पवर्जं षाडवं त्रिनिम् ।

मद

कर्णाटगौलः—उपाङ्गरागः

कर्णाटगौडो विज्ञेयो ग्रहांशन्यासससप्तमः ।
स्वस्थानेष्वाहतः पूर्णो गेयः स्यात्करुणे रसे ॥

भट्टमाधवः

—वीणायां वादनक्रमः

मध्यषड्जं ग्रहं कृत्वाऽवरोहेन्मध्यमावधीन् ।
पञ्चस्वरान्मध्यमात्तु तृतीयं च स्वरं व्रजेत् ॥
तस्मात्स्वरांश्च चतुरः समारुह्य ग्रहं स्पृशेत् ।
ततो विलम्ब्य तत्पूर्वं ग्रहे च न्यस्यते यदा ॥
कर्णाटगौडसंज्ञस्तु रागः सञ्जायते तदा ।
लक्ष्ये कर्णाटगौडस्य लक्ष्यते पञ्चमो ग्रहः ॥

वेमः

—रागः ( षाडवः )

निषादांशग्रहन्यासो युक्तपञ्चमवर्जितः ।
एष कर्णाटगौडस्तु कर्णाटवदुदाहृतः ॥

नारायणः

कर्णाटवदिति कर्णाटोक्तगानकालमूर्त्यन्वित इत्यर्थः ।
अयं कर्णाटवङ्गाल इति गीतप्रकाश सङ्गीतसारयोर्दृश्यते ॥
तत्स्वरूपंच ।

गान्धारांशग्रहन्यासः षड्जपञ्चमवर्जितः ।
एष कर्णाटवङ्गालः शृङ्गारे टक्कवंशजः ॥
टक्करागो नाटकर्णाटयोर्योगे नपुंसक इति मम्मटाचार्यः ॥

नारायणः

—मेलरागः

अथ कर्णाटगौलः स्याद्रितीव्रतरसंयुतः ।
तीव्रगान्धारसंयुक्तो गमन्यासांशशोभितः ॥
षड्जादिमूर्छनोपेतः पापन्यासावरोहकः ।
आरोहे धैवतेनापि क्वचिद्वर्ज्यः सतां मतः ॥

अहोबिलः

तृतीयप्रहरोत्तरगेयः ॥

कर्णाटवङ्गालः—रागः

पूर्णः कर्णाटवङ्गालो द्विगुः पान्तोपरागजः ॥

मद

अङ्गं कर्णाटवङ्गालो वेगरञ्ज्याः पवर्जितम् ।
गांशं सान्तं च शृङ्गारे वक्ति हम्मीरभूपतिः ॥

हम्मीरः

—प्र. रागः

वैरञ्जिका टक्कभवा तदङ्गं ।
कर्णाटवङ्गाल इति प्रसिद्धः ।
गांशस्तु सान्तः परिगीयतेऽसौ ।
वीरेऽथवा मुख्यरसे पहीनः ॥

मोक्षदेवः

—रागः

अथ कर्णाटवङ्गालो याख्याता वेगरञ्जिका।
गांशस्सान्तः पहीनस्तु प्रोक्ता वल्लविकेत्यपि॥

सोमराजः

कर्णाटवङ्गालः—रागः

टक्करागस्य भाषाया यष्टिके मेघरञ्जिका।
सैव कर्णाटवङ्गालो गांशोऽसौ धपवर्जितः॥

जग. म.

कचित्पल्लविकाख्याता शृङ्गारे परिगीयते॥

जगदेकः

—भाषाङ्गरागः

टक्काङ्गवेगरञ्ज्यङ्गं गान्धारांशग्रहो विपः।
सान्तः कर्णाटवङ्गालो गेयो वर्षासु सर्वदा॥
विपः – पञ्चमहीनः॥

भट्टमाधवः

—रागः

करुणे कम्पितस्थाने संपूर्णस्तारशोभितः।
दुर्बलो मध्यमश्चात्र तथा गान्धारमन्द्रगः॥
निषादषड्जबहुलो रिषभः पीडितोऽत्र हि।
नाम्ना कर्णाटवङ्गालः कथितस्सोमभूभुजा॥

सोमेश्वरः

अथ कर्णाटवङ्गालो गान्धारांशोऽन्तषड्जकः।
पञ्चमेन परित्यक्तो रागोऽयं कथितो बुधैः॥

हरिः

कर्णाटरागध्यानम्.

कृपाणपाणिस्तुरगाधिरूढो मयूरकण्ठोपमकण्ठकान्तिः।
स्फुरत्सितोर्णापधरः प्रयाति कर्णाटरागो हरिणान् विहन्तुम्॥

संगीतसरणिः

राजीवनेत्रः पृथुलातपत्रः पद्मं वहन् दक्षिणहस्तकेन।
स्तुत्यो नृपः किन्नरचारणाद्यैः कर्णाटरागः करवालपाणिः॥

श्रीकण्ठः

कर्णाटवराटिका——रागः

धांशा धैवततारा षड्जन्यासग्रहा च संपूर्णा।
मध्यममन्द्रा कविभिः कर्णाटवराटिकाभिहिता॥

नान्यः

षड्जन्यासग्रहा धांशा धतारा मन्द्रमध्यमा।
समस्वराऽय संपूर्णा सा कर्णाटवराटिका॥

मतङ्गः

कर्णाटवराटी—रागः

षड्जादिः स्वरसंपूर्णा पञ्चमेन च दुर्बला।
सा कर्णाटवराटी स्यादीषत्सप्रतिपादका॥

सोमेश्वरः

षड्जन्यासग्रहा धांशा तारा स्यात् मन्द्रमध्यमा।
विभाषा रागराजस्य कर्णाटीयं वराटिका॥

सोमराजः

कर्णाटी——उपाङ्गरागः

कर्णाटरागस्योपाङ्गं कर्णाटी त्यक्तपञ्चमा।
गातव्या सा रसे तद्ज्ञैः शृङ्गारे कम्पितस्वरा॥

भट्टमाधवः

—भाषारागः

धान्ता षड्जग्रहन्यासा तारगा मन्द्रमध्यमा।
समशेषस्वरापूर्णा कर्णाटी कर्णरक्तिदा।
इमां भाषां समाचष्ट मतङ्गादिविदां गणः।
रागाङ्गमाह निःशङ्को ग्रामरागानुसारतः।
कृष्णवस्त्रा नीलवर्णा गजेन्द्रवरवाहना॥

कुम्भः

—रागः

त्रिनिषादाथ संपूर्णा निषादो विकृतो भवेत्।
मार्गी च मूर्छना ज्ञेया कर्णाटीयं सुखप्रदा॥

दामोदरः

कर्णाटीदेवगान्धारी—मेलरागः

(आ) स ० ० ग ० म ० प ० ० नि ० स
(अव) स ० नि ० ध प ० म ० ग ० ० स

मेललक्षणे

कर्णाटीरागध्यानम्

शीर्णालकालिं स्मितमञ्जुचेलां कर्णाग्रताटङ्कयुगां कृशाङ्गीम्।
सुवर्णचर्णाङ्कितपर्णहस्तां कर्णाटिकां मे मनसा स्मरामि॥

रागसागरः

कर्णिकरञ्जिनी—मेलरागः (नटभैरवी मेलजन्यः)

(आ) स रि ग म प म ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

कर्णिकाधरी—मेलरागः (नटभैरवी मेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**कर्णिकाभूषणी**—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि ग ध नि स.

(अव) स नि ध प म ग रि स.

मञ्ज

**कर्तनाः**—दन्ताः

दन्तानि पीडनाद्दन्ताः कर्तनास्तान्प्रयोजयेत्।
इक्षुत्वगपसारे च नलकास्थिविमोक्षणे ॥

सोमेश्वरः

**कर्तरि लोहडी**—उत्प्लुतिकरणम्.

इयमेव स्वस्तिकाङ्घ्रिकृता कर्तरिलोहडी ॥
(इयमिति लोहडी)

वेमः

**कर्तरी**—

किन्नर्यां दक्षिणहस्तव्यापारः। तत्र द्रष्टव्यम्।

—मृदङ्गे हस्तपाटः

अङ्गुष्ठपार्श्वेनाक्रम्य तर्जनीमूलमादरात्।
प्रसारितास्समाः सर्वा किञ्चिद्विरलिता द्रुताः।
करशाखालगन्त्यन्तर्वर्जयित्वा तलं यदा।
तदा कर्तरिसंज्ञोऽसौ हस्तपाटोऽभिधीयते ॥

सोमेश्वरः

—वादनम्. (उभयहस्तव्यापारः)

अङ्गुलीभिश्चतसृभिः क्रमेण करयोर्द्वयोः।
बहिस्तन्त्रीहतिस्तूर्णं कर्तरी कीर्तिता बुधैः ॥

शार्ङ्गः

**कर्तरी**—वीणायामुभयहस्तव्यापारः

चतस्रोऽङ्गुल्यो यत्र क्रमेण करयोर्द्वयोः।
घ्नन्ति तन्त्रीहतं वाद्ये कर्तरी कीर्तिता तदा ॥

कुम्भः

—हस्तपाटः

वामहस्ताङ्गुलीनां च चालनात्कर्तरी यथा।
तिरिडिरि डिरिकिटधो दिगि धति रिटिरिटि।
रिकधो धिगटी तिरिटिरि किटझं झं ॥

वेमः

**कर्तरीमुखः**—हस्तः

आश्लिष्टमध्यमा पृष्ठे संस्थिता तर्जनी यदा।
त्रिपताकस्य हस्तस्य तदा स्यात्कर्तरीमुखः ॥
मध्यमां तर्जनीस्थाने पुनस्तत्रैव तर्जनीम्।
दधानोऽधो गतोऽथाग्रस्थोत्ताने लेख्यवाचने ॥

शार्ङ्गः

**कर्तरीमुखवर्तना.**

त्रिपताकोक्तरीत्यैव कर्तरीमुखवर्तना।

अशोकः

**कर्तरीविकृतिः**—हस्तः

वामदक्षिणहस्ताभ्यां कर्तर्यौ तिर्यगाकृती।
मिलिते कर्तरी विकृतिरित्याहुर्नाट्यवेदिनः ॥
पुरोभागेत्वयं हस्तः समरतां नियोजयेत्।

विनायकः

**कर्तरीस्वस्तिकः**—हस्तः

कर्तरीस्वस्तिकाकारः कर्तरीस्वस्तिको भवेत्।
पार्श्वभागे त्वसौ हस्तः वृक्षाणां च निरूपणे ॥
शाखासु चादृशि करे विनियोज्यो बुधोत्तमैः।

विनायकः

**कर्तर्यञ्चितम्**—उत्प्लुतिकरणम्

चरणौ स्वस्तिकीकृत्य क्रियते यत्र चाञ्चितम्।
कर्तर्यञ्चितकं तत्तु कथितं नृत्तवेदिभिः ॥

वेमः

**कर्तर्युत्प्लवनम्**

उत्प्लुत्य प्रपदैस्सम्यक् पादस्यैकस्य पृष्ठतः।
कर्तरी विन्यसेदेषा स्यादुत्प्लवनकर्तरी ॥

नाट्यदर्पणे

**कर्पकः**—देशीतालः

लघुद्वन्द्वं च सगणः कर्पके परिकीर्तितः।

नन्दी

**कलम्**—धातुः

एकस्वरं यदानानास्थानकं तन्त्रिकाद्वयम्।
अङ्गुष्ठाभ्यामेककाले निहन्ति स्यात्कलं तदा ॥

शार्ङ्गः

—वीणावादने गुणः

कपोतकूजितकलं फलमुक्तं कलाविदा।

कुम्भः

—व्यञ्जनधातुः

तन्त्रिकाद्वितयं नानास्थानमेकस्वरं यदा।
हन्यते युगपद्द्वाभ्यामङ्गुष्ठाभ्यां कलं तदा ॥

कुम्भः

कलकण्ठी—मेलरागः ( गायनप्रियमेलजन्यः )
( आ ) स रि ग म प नि ध नि स.
( अव ) स नि ध म ग रि स.

मञ्ज

कलगडः—मेलरागः ( गायनप्रियमेलजन्यः )
( आ ) स रि म ग रि ग म प ध नि स.
( अव ) स नि प ध नि ध प म ग रि स.

मञ्ज

कलचारिका—
स्वल्पचिन्दस्य नामान्तरम्।

कलध्वनिः—देशीतालः
सलपैः स्यात्कलध्वनिः ॥ ऽ । ऽ́

श्रीकण्ठः

कलध्वनिर्लघुद्वन्द्वं गुरुर्लघुरथ प्लुतः।

हम्मीरः

कलध्वनिः सलप्लुतः ॥ ऽ । ऽ́

मदनः

कलनूपुरम्—पादमणिः
त्रिताडिते वा मञ्जीरशिञ्जिते वा ( स्थिते यदि )।
द्वितीयश्चरणस्तिष्ठन्नङ्गुलीपृष्ठभागतः ॥
कुर्यात्त्वकीयं व्यापारं तद्भवेत्कलनूपुरम्।

वेमः

अन्यत्रापि भवेदेतदौचित्यात्तालवाद्ययोः।

ज्यायनः

कलपञ्चमः—मेलरागः ( मायामालवगौलमेलजन्यः )
( आ ) स ध म ग रि ग म प ध नि स.
( अव ) स ध प म ग रि स.

मञ्ज

कलमहस्तः
अधोमुखः कपोतश्च कलमो नाम हस्तकः।
अधोमुखन्त्वयं बध्वा जन्मस्थलनिरूपणे ॥

विनायकः

कलरवा—श्रुतिः
पञ्चमस्य तृतीया श्रुतिः ॥

जग

कलविङ्कविनोदः—चालकः
उद्यतौ मस्तकादूर्ध्वमाकाशलुडितौ करौ।
क्रिया समभिहारेण पार्श्वयोर्द्रुतमानतौ ॥
क्रियां यदा कुर्वते च पतनोत्पतनात्मकम्।
कलविङ्कविनोदाख्यश्चालको जायते तदा ॥

वेमः

कलशः—हस्तः
पताके मुष्टिका बद्धा कलशे शिखरान्विता।

नागमल्लः

कलशवर्तना ॥
नाममात्रप्रसिद्धा। कल्लिनाथः

कलहंसः—मेलरागः ( यागप्रियामेलजन्यः )
( आ ) स रि ग म प ध स.
( अव ) स नि ध प म ग रि स.

मञ्ज.

कलहंसः—प्रबन्धः
गद्येन कलहंसः स्यात्स्वराः पूर्वं ततः परम्।
कलितो भजयैः प्राज्ञैः कलहंसो निगद्यते ॥

श्रीकण्ठः

—प्रबन्धः
एकं पादं पुरो गीत्वा गीयन्ते च स्वरास्ततः।
झंपादितालसंयुक्तः स भवेत्कलहंसकः ॥

मतङ्गः

पादे न भजयैर्युक्तः कर्तव्यस्त्वमनीषया।
पश्चात्स्वराः प्रयोक्तव्याः प्रबन्धे कलहंसके ॥
'भुवनधारण महाबलविष्णो', ।
ईदृग्लक्ष्यपदं पूर्वं गीत्वा गायेत्ततः स्वरान्।
झंपातालेन मेधावी प्रबन्धे कलहंसके।

सोमेश्वरः

—प्रबन्धः
विहाय प्रथमं पादं स्वरा गेया विशेषतः।
छन्दसा कलहंसेन झंपातालेन च स्फुटम् ॥
पादान्तैरस्तथाभोगः स्वरैर्न्यासस्य गीयते।
कलहंसो भवेदेवं,

हरिपालः

अस्य भेदास्तु सङ्गीतसुधायामुक्ताः।
चतुर्दण्डीप्रकाशिकायां तु कलहंसछन्दोलक्षणं
हंसाख्यवृत्तेनभ्रान्त्या नाम उक्तम्।

कलहान्तरिता—नायिका.
ईर्ष्याकलहनिष्क्रान्तो यस्या नागच्छति प्रियः।
सामर्षवशसंप्राप्ता कलहान्तरिता भवेत् ॥ भरतः

कला—तालप्राणः

जातिभेदेन तालानां पादभेदोऽप्यनेकधा।
चतुरश्रश्चतुष्पादः त्र्यश्रः पादत्रयं भवेत्॥
कलाशब्दः क्रियायाश्च काले लघुनि वर्तते।
तत्र चैककलश्चाद्यौ कला वक्रे प्रगीयते॥
तेषु वक्रप्रमाणेन तालोऽथैककलादिकः।
वक्रं गुरुः – पारिभाषिकगुरुरित्यर्थः॥

अयं भावः। एकैकपादे गुरुरेकश्चेदेका कला। गुरुरिति यथाक्षरः पारिभाषिकशब्दः। न तु यश्छन्दश्शास्त्रे वर्तते मात्रभेदेन एकगुरुश्चेदेका कला. द्वेगुरू चेद्द्विकलः, यदि चत्वारो गुरवस्स चतुष्कलः। अयं सम्प्रदायो मार्गताल एव। यथाक्षर इत्यक्षराणामनतिक्रमः। अव्ययीभावः। यथाक्षरमस्यां ते इति मत्वर्थीये। चच्चत्पुटस्य चत्वारः। चत्वारो गुरवः।

चच्चत्पुटे स्वपादेषु द्विकले द्विकलो मतः।
चतुष्कलः स्वपादेषु कलानां तु चतुष्टयम्॥
पादभागैश्चतुर्भिस्तैर्मात्रा स्यान्मद्रकादिषु।

एककलचच्चत्पुडे चत्वारः पादभागा एका मात्रेति कथ्यते। चतुष्पादो द्विकलोऽपि चतुष्पादश्चतुष्कलो वा मात्रैव। अत्र मात्राशब्दः पारिभाषिकं। चतुरश्रजातौ चतुष्कलचच्चत्पुटतालस्य षोडशगुरवो भवन्ति। सैका मात्रा। लोके द्वे मात्रे गुरुः। अत्र पारिभाषिकमात्रे द्वे पारिभाषिकगुरुर्भवतः। स्वाभाविकगुरवो द्वात्रिंशत्तुल्या भवन्ति। एष पारिभाषिकगुरुरूपचच्चत्पुटः एककलश्चेत्स एव द्विगुणितः द्विकलः। तस्मिन्पारिभाषिकगुरू द्वौ। मात्राश्चतस्रः। चतुष्षष्टिस्वभावगुरवः। सोऽपि द्विगुणितः द्विगुणितचतुष्कलैकद्विकल इति नाम्ना च वर्तते। तस्य स्वभावगुरवोऽष्टाविंशत्युत्तरशतम्। पारिभाषिका। मात्रा अष्टौ। अयं चतुरश्रस्य परमावधिः। अष्टाविंशत्युत्तरशतरूपश्चच्चत्पुटोऽर्धार्धरूपेण विभाजितश्चेदेककल आगच्छति। वर्धमानकरणं वर्धमानयोगः। हीनकरणं ह्रासयोगः। अपि च

गुरूण्येककले ताले यावन्त्येवं लघुक्रमात्।
यावन्त्यश्च कला भेगाः तावन्ति परमावधि॥

अयमर्थः। – चतुरश्रजातौ चच्चत्पुटैककलस्य चत्वारो गुरवः। अष्टौ लघवः। षोडश द्रुताः। द्वात्रिंशदनुद्रुताः। चतुष्षष्टि चतुर्भागाः। साष्टाविंशतिशतं कलाकालाः। एष परमावधि निर्णयः।

—अत्राशङ्का

कलानिरूपणे तेषां त्रिकला नोच्यते कथम्। उच्यते।
तथापि चतुरश्रस्य त्रिकलस्य चतुष्कलात्।
त्र्यश्राद्भेदस्य सिद्ध्यर्थं त्रिकला तेषु नोदिता।

चच्चत्पुटस्य त्रिकले द्वादश गुरवो भवन्ति। चाचपुटस्य चतुष्कलेऽपि द्वादश कलाः। तयोः संशयः स्यात्।

—क्षिप्तैककला

प्रत्येकं चतुरश्रादेः चतुर्भागाश्च तत्कलाः।
एकं त्यक्त्वा त्रिभागा स्यात् क्षिप्तैकसंज्ञका बुधैः॥

अयं भावः– तालकलाः समाहृत्य चतुर्थभागं निरस्य यदि त्रिभागो गृह्यते सा क्षिप्तैककला। एककले चत्वारो गुरवः। द्विकलेऽष्टौ। चतुष्कले षोडश। आहृत्याष्टाविंशद्गुरवः। चतुर्थभागे गुरवस्सप्त। क्षिप्तैककलचच्चत्पुटे एकविंशतिगुरवो भवन्ति। तथैव चाचपुटे पञ्चदश गुरवः। एको लघुः एको द्रुतः। अनेन क्रमेण षट्पितापुत्रक संपक्वेष्टाकोद्घट्टतालेष्वपि द्विकलादिवर्धमानयोगो लभ्यते। स्वयमूह्यम्।

अच्युतरायः

वर्धमानादिनिरूपणावसरे तल्लक्षणं पुनर्वक्ष्यते।
चाचपुटादितालानां शिष्टानां चायमेव क्रमो वेदितव्यः॥

कला—वीणाङ्गम्।

नादं सञ्जीवयत्येषा यतो जीवा ततः स्मृता।
तामेव च कलां प्राहुस्तन्त्रीपत्रिकयोः कलम्।

कुम्भः

एकतन्त्री शब्दं पश्यत।

तन्त्रिका पत्रिकायां तु क्वचिल्लगतिका न वा।
लग्ना सैव कला ज्ञेया वीणाप्रावीण्यशालिभिः॥
वीणालक्षणे द्रष्टव्यम्।

पार्श्वदेवः

—श्रुतिः

पञ्चमस्य द्वितीया श्रुतिः॥

जग

कलाः

अङ्गप्रत्यङ्गकोपाङ्गनृत्येष्वेवं विधाः कलाः।
कथ्यन्ते नागमल्लेन शास्त्र आलोड्य भारतम्॥
चक्रभ्रमणिका पूर्वं गोलकक्षेपणं ततः।
कांस्यपात्रस्य शिरसि साम्भसस्थितिरेव च॥
अष्टादशविलासानां सचक्रमधिरोहणम्॥
चापस्यारोहणं तद्वत्खड्गधाराधिरोहणम्।
खड्गाग्रस्याथ धरथं ललाटे नासिकाग्रतः॥
चिबुके चैव चतुरं झकगोलक संयुतम्।
गुलिकामुखगुम्भश्च वक्षः पूगीविदारणम्॥

नेत्रसूचीग्रहश्चैव द्वादशीति कलाः किल ।
अनुषङ्गेण चैवासामन्ये भेदाश्चतुर्दश ॥

नागमल्लः

**कलाकरणः—देशीतालः**

ऽऽ ॥ ऽ । ऽऽ ॥ ० ० ० ० ऽ ऽ ॥ ० ० ० ०

हम्मीरः

**कलाङ्कुरः**

एतदीयग्रन्थः – कलाङ्कुरनिबन्धः । तस्माच्छ्लोकाः सङ्गीतनारायणे उदाहृताः । अयं षोडशशतके उद्देशे स्यात् ।

**कलानिधिः**

कलाः षोडश । यस्मिन् वंशे मुखताररन्ध्रयोरन्तरालं षोडशाङ्गुलमानं स कलानिधिः ।

**—मेलरागः**

(आ) स ० रि ० ग म ० प ध ० ० नि स.
(अव) स नि ० ० ध प ० म ० ग रि ० स.

**कलापः—गीतालङ्कारः (मठ्यभेदः)**

रङ्गताले च विज्ञेयो लघुश्चैको गुरुद्वयम् ।
कलापो मठ्यकस्तेन रसे रौद्राभिधानके ॥

संगीतसारः

**—देशीतालः**

कलापे सगणः पश्च ऽ ऽ । ऽ
(अत्र विन्यासे सगणस्थाने तगणो विद्यते)

कुम्भः

**—श्रोणीभूषणम् — पञ्चविंशल्लतायुतम् ।**

**—हस्तः**

कलापस्स च विज्ञेयो संयुतश्च किरीटके ।

नागमल्लः

सभाधीशमुखं हस्तं कृत्वोर्ध्वविरलाङ्गुलिः ।
अस्य पृष्ठे द्वितीयोऽपि तदङ्गुल्यन्तराङ्गुलिः ।
उभयोः करयोः प्रान्ते तथाङ्गुष्ठौ बहिर्गतौ ।
कलापहस्तकं प्राहुः केचिच्छेपकरं त्वमुम् ॥
अभिनेये फणीशेमुं तथा भूमीश्वरे जगुः ।

कुम्भः

**कलापमण्ठकः—देशीतालः**

कलापमण्ठको ज्ञेयो न गणस्स विरामवान् ।
। । ।

दामोदरः

**कलापी—अङ्गुलिभूषणम्**

**कलाभरणं—मेलरागः (हरिकाम्भोजीमेलजन्यः)**

(आ) स रि ग म प ध नि स.
(अव) स ध प ग रि स.

मञ्ज

**कलामूर्तिः—मेलरागः (भवप्रिया मेलजन्यः)**

(आ) स ग रि ग म प स.
(अव) स नि ध प म ग रि स.

मञ्ज

**कलावती—मेलरागः (चक्रवाक मेलजन्यः)**

(आ) स रि ग म प ध नि प स.
(अव) स नि ध नि प म ग रि स.

मञ्ज

**कलासः**

मेघपङ्क्तौ यथा विद्युच्चकास्ति सचमत्कृतिः ।
तथा यत्र पताकादीन् प्लुतमानकृतान् करान् ॥
तिर्यगूर्ध्वमधोधश्चेदारादातन्वती नटी ।
विभाति विद्युदाद्यस्तु कलासस्स तदोदितः ॥
विद्युत्कलासः खङ्गाद्यः कलासो मृगपूर्वकः ।
बकाद्यः प्लवपूर्वश्च हंसाद्यश्चेति षण्मता ॥
तत्राद्यौ प्लुतमानेन गुरुमानात्ततोऽग्रिमौ ।
पञ्चमो लघुमानेन षष्ठस्स्याद्द्रुतमानतः ॥
तत्राद्यः षड्विधः खण्डकला स याच्चतुर्विधः ।
तृतीयस्त्वेकधा तुर्यपञ्चमौ स्तश्चतुर्विधौ ॥
त्रिधान्तिमः कलासः स्यादेवं द्वाविंशतिर्मताः ।

अशोकः

**कलासः—देशीनृत्ताङ्गम्**

विविधैः पाटशब्दैश्चालङ्कृतं यतिमिश्रितम् ।
मध्ये पिल्लमुरुयुक्तं ग्रहश्चापि मनोहरम् ।
कलासरूपकं प्रोक्तं सङ्गीतज्ञैः पुरातनैः ।

वेदः

**कलासा—देशीलास्याङ्गम्**

गीतान्ते स्थापनं चापि लयतालसमं बुधैः ।
कलासा कथितस्सोयं नृत्तस्यापि समाप्तिकृत् ॥

देवणः

**कलिकक्कम्**—भङ्गताल:

दचतुष्कं गद्वयं पुनस्तथा।

० ० ० ० ऽ ऽ ० ० ० ० ऽ ऽ

नान्यः

**कलिङ्गः**—देशीताल:

कलिङ्गे स्याद्विरामान्तं विन्दुत्रयमतः परम्।

लक्ष्मणः

**कलिङ्गमण्ठः**—देशीताल:

कलिङ्गमण्ठो विज्ञेयो द्रुतो लघुद्वयं भवेत्।

० ॥

दामोदरः

**कलुपम्**—दर्शनम्

वर्णाऽविभागो निद्रादेर्यस्य तत्कलुषं विदुः।

शारदातनयः

**कलोपनता**—मूर्छना

मध्यमग्रामे तृतीया।

(आ) रि ग म प ध नि स।

(अव) स नि ध प म ग रि।

पण्डितमन्डली

कालोपनतेत्यपि रूपान्तरं पठति।

नान्यः

**कल्पतरुः**—मेलराग:

दहीने कल्पतर्वाख्ये तीव्रतीव्रतरौ गरी।

रिषभोद्ग्राहसंयुक्ते षड्जन्याससमन्विते॥

सायं गेयः॥

अहोविलः

**कल्पनृत्तम्**—देशीनृत्तम्

कञ्चित्करणमाश्रित्य स्थानकं वा यथेप्सितम्।

एवं न्यासविधिं कुर्यात्प्रायो नृत्यविचक्षणः।

प्रायशो गीतनृत्ये तु कल्प्यतालौ बुधैर्मतौ।

यतो विनाभ्यां नाभाति नृत्यं सर्वाङ्गसुन्दरम्।

यो गीताद्यपरस्यादौ तदन्तस्पर्शरञ्जकः।

अपरस्य पदास्यादौ स कल्प इति कथ्यते॥

वेदः

**कल्पभूरुहः**—देशीताल:

अनुद्रुतमुखान्यष्टावङ्गान्यन्ते तु निध्वनिः।

कल्पभूरुहे॥

लक्ष्मणः

**कल्पवल्ली**—नृत्तरूपकम्

कल्पवल्ली भवेद्या स्याच्छृङ्गाररसभावयुक्।

उदात्तनायकोपेता पीठमर्दोपनायका॥

अस्या वासकसज्जा स्यान्नायिका वाभिसारिका।

द्विपदो खण्डगेयाढ्या रथ्या रासकताल्युक्।

लयतालयुता लास्यदशकेन समन्विता।

ईदृशी कल्पवल्लीस्याद्यथा मणिकर्वाल्लिका॥

शारदातनयः

**कल्पवृक्षहस्तः**

अधोमुखं तु मुकुलं हंसास्यं हृदये तथा।

बध्वा तूर्ध्वं प्रचलितः कल्पवृक्षाख्यहस्तकः॥

पुरोभागे त्वयं हस्तस्त्वभिलाषार्थसूचने॥

विनायकः

**कल्पितोपमा**—अलङ्कार:

(उदा–) क्षरन्तो दानसलिलं लीलामन्थरगामिनः।

मतङ्गजा विराजन्ते जङ्गमा इव पर्वताः॥

भरतः

**कल्याणः**—देशीताल:

ताले कल्याणसंज्ञे तु तृतीयोर्ध्वद्रुतो भवेत्।

० ० ०́

दामोदरः

—मेलकर्ता

यत्र शुद्धौ सपौ स्यातां गनी च सपतौ सपौ।

साधारणोऽपि गान्धारो मेलः कल्याणसंभवः॥

त्रिषड्जो गीयते सायं पूर्णः कल्याणसंज्ञकः।

रित्रयेणाथवा युक्तः प्रोक्तःसङ्गीतवेदिभिः॥

श्रीकण्ठ

—मेलराग:

मस्तु तीव्रतरो यस्मिन्गनी तीव्राविती रितौ।

गान्धारोद्ग्राहकल्याणे नारोहे तिष्ठतो मनी॥

तृतीय प्रहरोत्तरे गेयः।

अहोविलः

**कल्याणकरः**—गान्धारग्रामे नारदीयतानः

रि ग म प नि

नान्यः

**कल्याणकरशुक्लः**

सर्वसङ्गीतसारकर्ता।

**कल्याणकेसरी—मेलरागः ( मेचकल्याणीमेलजन्यः )**

(आ) स रि ग प ध स.
(अव) स ध म प म ग रि स.

मञ्ज

**कल्याणतरङ्गिणी—मेलरागः[खरहरप्रियमेलजन्यः]**

(आ) स म ग म प म ग म नि ध स.
(अव) स नि ध नि प ध म प ग म रि ग रि म ग स

मञ्ज

**कल्याणनाटः—रागः**

कल्याणनाटो विज्ञेयस्संपूर्णो रिन्नयो मतः।
षड्जत्रयेपि कैश्चित्तु संप्रदिष्टो मनीषिभिः॥

दामोदरः

**—मेलरागः**

कल्याणमेलसंभूतोऽवरोहे गधवर्जितः।
षड्जादिमूर्छनोपेतो रागः कल्याणनाटकः॥
सायं गेयः॥

अहोबिलः

**कल्याणपुरनायकः—देशीतालाः**

ततश्च कल्याणपुरनायके गौ चतुर्द्रुती।
चापयोरन्तरे विन्दुश्चतुर्द्रुत्यथ कार्मुके॥
ऽऽ००००ऽ०ऽ००००ऽऽ.

गोपतिप्पः

**कल्याणमण्ठः—तालः**

भाश्चतुर्लघुनिश्शब्दं भवेत्कल्याणमण्ठके।
ऽ॥iiii

वेदः

**कल्याणमण्ठकः—देशीतालः**

भश्चतुर्लघु निःशब्दं भवेत्कल्याणसंज्ञके।
ऽ॥iiii

दामोदरः

**कल्याणरागध्यानम्**

करे कृपाणं तिलकं ललाटे धत्ते प्रतिष्टस्समरे प्रचण्डः।
आरक्तवर्णस्तपनीयभूपः कल्याणरागो मुनिना प्रदिष्टः॥

श्रीकण्ठः

**कल्याणवराटी—मेलरागः**

कल्याणोपपदा या सा वराटी गादिमूर्छना।
कल्याणमेलसंभूता मपांशन्यासका स्मृता॥
तृतीयप्रहरोत्तरगेया॥

अहोबिलः

**कल्याणवसन्तः—मेलरागः ( कीरवाणी मेलजन्यः )**

(आ) स म ग म प ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**कल्याणहस्तः**

अङ्गुल्यः कुञ्चितास्सर्वाः पद्मकोशोपरिस्थिताः।
कल्याणाभिधहस्तोऽयं कीर्तितो भरतादिभिः।
पुरोभागे त्वयं हस्तो मधुपर्केनिरूपणे॥

विनायकः

**कल्याणी—मेलकर्ता**

वर्हीचतुर्वृषहराजविरुद्धमध्यपञ्चाच्युताब्धहरकुञ्जरमेवमेव।
कल्याणिराग इति रम्यमनेकभङ्ग्या
संपूर्णमेव परिनन्दति याज्ञवल्क्यः॥

सपौ शुद्धौ। रिधौ चतुःश्रुतिकौ। साधारणो गान्धारः। कलिर्निषादः। कल्याणीति कान्तं शब्दस्वरूपमन्यैः पठितम्॥

परमेश्वरः

**—मेलरागः ( मेचकल्याणीमेलजन्यः )**

(आ) स रि ग म प ध नि स.
(अव) स नि ध प म गा प रि स.

मञ्ज

**कल्याणीरागध्यानम्**

कणाद्वीणाहस्तां कनककुसुमावृतगलां
हरिद्रामुद्राङ्काननरुचिरजलजां धृतवराम्।
शुकीशारीहंसीमुखमुखरसन्तोपितगलां
सुकल्याणां ध्याये मम मनसि नित्यं क्रतुमतीम्॥

रागसागरः

**कल्लिनाथः**

सङ्गीतरत्नाकरव्याख्याता। कर्णाटक देवरायस्थान कविः॥

कालः १४२०

**कल्लोलः—मेलरागः ( हरिकाम्बरीमेलजन्यः )**

(आ) स म ग म प ध नि स.
(अव) स नि ध म ग रि स.

मञ्ज

**कल्लोलध्वनिः—मेलरागः ( सूर्यकान्तमेलजन्यः )**

(आ) स रि म ग म प ध प नि ध नि स.
(अव) स नि ध प म नि ध म ग रि स.

कवचहस्तः

प्रसारितार्धचन्द्राभ्यां बाहू सम्यक् पिधाय च ।
व्यत्ययेन भवेद्धस्तः कुवचो देवता रविः ।
दंशने न्यासभेदे च स्त्रीस्तनाच्छादने तथा ।
विनीतभटसेवायां विनियोगोऽस्य कथ्यते ।

गौरीमतम्

कवलम्

बाह्यं शरीरजं चर्म कवलं परिकीर्तितम् ।

सोमेश्वरः

कविकाव्यप्रशंसा—पूर्वरङ्गाङ्गम्

गोत्रं नाम च बध्नीयात्पूजावाक्यं सभासदाम् ।
वाञ्छाकलापस्तु कवेरभीष्टार्थप्रकाशनम् ॥
स्वाभिधेयगतत्वेन तद्द्विधा परिपठ्यते ।
स्वगतं तु स्वगोत्रादि स्वस्य कीर्तिप्रकाशनम् ।
अभिधेयगतं तत्तत्काव्यनाम्ना प्रकाशनम् ॥

शारदातनयः

कवितम्—वाद्यप्रबन्धः

नातिदीर्घं द्विरावं स्यात्खण्डं शुद्धादिनिर्मितम् ।
यद्वा वर्णसरेणाऽथ तादृक्खण्डं सकृद्भवेत् ॥
इत्युद्ग्राहध्रुवौ कृत्वा स्वोद्ग्राहन्त्यदलेऽत्र वा ।
स्वोद्ग्राहे यत्र मुक्तिस्तत्कवितं कवयो विदुः ॥
अस्य नामान्तरं प्राहुरन्येऽवच्छेद इत्यपि ।
भवेदिहद्रुतं मानं वर्णा प्रायः स्युरुद्धताः ॥
बाहुल्यं नर्तनं दीप्तं निःशङ्केनेति कीर्तितम् ॥

शार्ङ्ग

शुद्धैः कूटैस्समस्तैश्च व्यस्तैः पाटैर्विनिर्मितम् ।
यद्वा वर्णसरेणाथ भवेदुद्ग्राहखण्डकम् ॥
ध्रुवखण्डं तादृगेव ततो यत्र विधीयते ।
उद्ग्राहस्यान्त्यखण्डे वा मुक्तिरुद्ग्राहकेऽथवा ॥
तद्भवेत्कवितं तद्ज्ञैरवच्छेद इतीर्यते ।
अत्र ज्ञेयं द्रुतं मानं बहुशो दीप्तनर्तनम् ॥
आडम्बरश्च वर्णानां प्रायेण परिकीर्तितः ।

वेमः

उद्ग्राहद्वितयं यत्र वारमेकं यथा ध्रुवः ।
पुनर्ग्राहेण मोक्षश्चेदवच्छेदस्स कीर्तितः ॥

सोमेश्वरः

द्वावुद्ग्राहौ ध्रुवश्चैक उद्ग्राहे चैव मोक्षणम् ।
अवच्छेदोऽयमुदितः कवित्वमिति सोऽपरे ॥

सोमराजः

कविप्रस्थानमार्गाः

सुकुमारः, स विचित्रः मध्यमश्चोभयात्मकः ।

कुन्तकः

कविसमयाः

समयो नातिलङ्घ्यः स्यात्कविभिस्सकलैरपि ।
सतोऽप्युपेक्षणं ज्ञेयं असतश्च परिग्रहः ।
बाहुल्यान्नियमः क्वापि यतश्चैवोपवर्णनम् ।
चतुर्धा समयो वाच्यः यथाशोकतरोः फलम् ।
फलपुष्पे चन्दनस्य नालिकेरस्य फुल्लकम् ।
समुद्रे पङ्कजं वर्ण्यं हंसास्सर्वसरस्स्वपि ।
गिरिषु स्वर्णरत्नानि ज्योत्स्नापानं चकोरकैः ।
यशोहासगतं शौक्ल्यं कार्ष्ण्यं चेतरपापयोः ।
प्रतापस्य च तीव्रत्वं स्वादुत्वं वचसामपि ।
स्वभावस्य च सौरभ्यं रौहित्यं रागकोपयोः ।
नीलश्यामलकृष्णानामैक्यं ज्ञेयं प्रयोगतः ।
नियम्य जातिपुष्पस्य वर्षास्वेवोपवर्णनम् ।
कौमुदीशुक्लपक्षेषु वसन्ते कोकिलध्वनिः ।
..................... मलये चन्दनद्रुमः ।
सदृशेन पदार्थेन तत्कार्यस्योपपादनम् ।
इत्याद्युन्नेयमन्यत्र प्रसिद्धं सन्निबन्धनम् ।

सङ्गीतमीमांसा

कषायवर्णः

नीलरक्तसमायोगात्कषायो नाम जायते ।

भरतः

कांस्यपात्रधारणं—कला

भूमौ लुठन्ती दधती च कांस्यपात्रं शिरोऽग्रे सजलं हि यत्र ।
नटी समं भ्रामयते कराङ्घ्रिपद्मौ तु चक्राण्यथ सा तरङ्गी ॥

नागमल्लः

कांस्यवडः—तालवाद्यम्

अत्युच्चपृष्ठो वदने विशालः स्यात्पद्मिनीपत्रसमानकान्तिः ।
विन्यस्य रन्ध्रस्य च सूत्रदोरं विधृत्य तस्मिन्नखिलोत्सवेषु ॥
प्रवाद्यते कांस्यवडो विचित्रं दण्डेन पाटैर्विविधैरुपेतः ।

कुम्भः

कालकपादः—तालाक्षरम्

तालाक्षरशब्दे द्रष्टव्यम् ॥

काकली—श्रुतिः

तारधैवतस्य द्वितीया श्रुतिः ।

पार्श्वः

काकिता—फूत्कारदोषः

काकी—वंशे फूत्कारदोषः

काकी काकस्वराकारतारन्यूनस्वरो भवेत्।

कुम्भः

काकी तारररक्तिविवर्जितः,

वेमः

काकुः

शारीर्यामथ वीणायां त्रिभ्यस्स्थानेभ्य एव तु।
उरसः शिरसः कण्ठात्स्वरः काकुः प्रवर्तते।
आभाषणं च दूरस्थे शिरसा संप्रयोजयेत्।
नातिदूरे च कण्ठेन ह्युरसा चैव पार्श्वतः।
उरसोदात्तं वाक्यं शिरसा दीपयेद्बुधः।
कण्ठेन शमनं कुर्यात्पाठ्ययोगेषु सर्वदा।

काकुर्द्विविधा-साकाङ्क्षं निराकाङ्क्षं चेति। अनियुक्तार्थकं वाक्यं साकाङ्क्षमिति संज्ञितम्।

नियुक्तार्थं तु यद्वाक्यं निराकांक्षं तदुच्यते।

तत्र साकाङ्क्षं नाम तारादिमन्द्रान्तमनियुक्तार्थं अनिर्यातितवर्णालङ्कारं, कण्ठोरस्स्थानगतम्। निराकाङ्क्षं नाम निर्युक्तार्थं निर्यातितवर्णालङ्कारं शिरस्स्थानगतं मन्द्रादितारान्तं।

भरतः

—लक्षणम्

वाक्ये विधीयमानोऽर्थो येनान्यत्वं प्रपद्यते।
भिन्नकण्ठध्वनिर्धीरैः स काकुरिति कथ्यते॥

भोजः

यथा – वेण्यां — स्वस्था भवन्त्विति भीमवाक्यम्।

काङ्गूलः—हस्तः

काङ्गूलेऽनामिका वक्रा भवेदूर्ध्वा कनीयसी।
ऊर्ध्वास्त्रेताग्निसंस्थानास्तर्जन्यङ्गुष्ठमध्यमाः॥
फलेऽल्पे च मिते ग्रासे स्याद्बिडालपदादिषु।
चिबुकग्रहणे चैव बालकानां विधीयते॥

शार्ङ्गः

काञ्ची—कटिभूषणम्

चतुरङ्गुलविस्तारं जघनाभोगवेष्टितम्।
सौवर्णरत्नखचितं सूक्ष्मैर्लम्बनैर्युतम्।
काञ्चीदामेति विख्यातं कटिभूषणमुत्तमम्।

सोमेश्वरः

—श्रोणीभूषणम्

एकयष्टियुता। यष्टिः लता।

काञ्चीयमकम्—अलङ्कारः

पादस्यादौ तथान्ते च यत्र स्यातां पदे समे।
तत्काञ्चीयमकं नाम —

(उ-दा.) यामं चन्द्रवतीनां द्रवतीनां —

भरतः

काञ्चुकीयाः

ये विप्रास्सत्यसंपन्नाः कामदोषविवर्जिताः।
ज्ञानविज्ञानकुशलाः काञ्चुकीयास्तु ते स्मृताः॥

भरतः

काण्डज्वलनम्—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स रि म प नि स.
(अव) स नि ध प म ग रि स.

ज्ञम

काण्डद्रुमः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स ग म ध म नि स.
(अव) स नि म ग रि स.

मज

काण्डबन्धः—श्रव्यकाव्यम्

यत्रेतिहासमखिलं यथास्थितं चैकमेव भाषन्ते।
ऋषयस्स काण्डबन्धो रामायणसन्निभो भवति॥

भोजः

कातरम्—दर्शनम्

सहायान्वेषणपरं यत्तत्कातरमुच्यते।

शारदातनयः

कातरा—देशीचारी

नन्द्यावर्तस्थितौ पादौ पश्चाच्चेदपसर्पतः।
सा चारी कातरा प्रोक्ता देशीनृत्तविचक्षणैः॥

वेमः

कातर्यम्

कातर्यं गतधैर्यता —

भावविवेकः

**कादम्बिनी**—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि ग म प ध नि स.

(अव) स नि ध म रि ग म ग स.

मञ्ज

**कानडा**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म प म ध नि स.

(अव) स नि ध नि प म प गा रि स.

मञ्ज

**कानडादर्बार**—मेलरागः

आ – स ० रि ग ० म ० ० ० ध नि ० स.

अव – स ० नि ध ० प ० म ० ग रि ० स.

मेललक्षणे

**कानडारागध्यानम्**

कटितटकचबन्धां कालिमाङ्गीं कुरङ्गीं
वदननिहितहस्तां चारुभूषाविशेषाम्।
वटविटपिसमीपावासलोलां सलीलां
मदनरणपरोढां कानडां चिन्तयामि ॥

रागसागरः

**कानडी**—मेलरागः (मेलकर्ताऽयं रागः)

तीव्रगान्धारसम्पन्ना मध्यमोद्ग्रहधान्तिमा।
सांशस्वरेण संयुक्ता कानडी सा विराजते ॥
तृतीयप्रहरोत्तरगेया।

अहोबिलः

**कानवसन्तः**—मेलरागः (खरहरप्रियामेलजन्यः)

आ – स रि ग म प ध नि स.

अव – सं नि ध प म ग रि स.

मञ्ज

**कान्तः**—(प्रबन्धे) नादः

त्रिस्थानगतिसंपूर्णः श्रोतृपीयूषपेशलः।
नादः कान्त इति ज्ञेयः कान्तवर्णजनप्रियः॥

कुम्भः

**कान्ता**—दृष्टिः

सहर्षा च प्रसन्ना च सकामापाङ्गसङ्गता।
कान्ता दृष्टिस्तु संभोगशृङ्गारे विनियुज्यते॥

सोमेश्वरः

यादृश्यमापिबन्तीव भृशं स्वस्था विकासिनी।
सभ्रूक्षेपकटाक्षा सा कान्ताऽनङ्गविवर्धनी ॥

अशोक

**कान्ता**—श्रुतिः

षड्जस्य तृतीया श्रुतिः।

**कान्तामणिः**—मेलकर्ता (रागः)

स रि ग ० ० म प ध नि ० स.

मञ्ज

**कान्तारः**—गीतालङ्कारः निसारुकभेदः

लघुद्वयं विरामान्तं ताले कन्दुकनामनि।
द्रुतलयेन गातव्यः कान्तारो भवति स्फुटम् ॥

संगीतसारः

**कान्तारप्रिया**—मेलरागः (नटभैरवी मेलजन्यः)

आ – स रि ग म प नि स.

अव – स नि ध म रि ग म रि स.

मञ्ज

**कान्तिः**—काव्यगुणः

यन्मनः श्रोत्रविषयमाह्लादयति हीन्दुवत्।
लीलाद्यर्थोपपन्नां वा तां कान्तिं कवयो विदुः ॥

भरतः

यन्मनोविषयमाह्लादयति यथा शृङ्गारविभावरूपं। लीलादिचेष्टालङ्कारसुन्दरं काव्यार्थरूपं तत्कान्तिगुणयुक्तम्। तदेव दीप्तरसत्वमुक्तमन्यैः। विभावादीनां दीप्तत्वमिति यावत्। सुखोच्चारणमाकान्तिः सन्धिसन्तानसम्पदा।

सर्वेश्वरः

औज्वल्यं कान्तिः। बन्धस्यौज्वल्यम्।

वामनः

मा गर्वमुद्वह कपोलतले इत्यस्मिञ्छलोक्ते नायिकायाः सपत्न्यामीर्ष्यानुबन्धेन प्रतिपादितस्य प्रियतमानुरागलक्षणस्य शृङ्गारस्यौज्वल्यं कान्तिः ॥

साहित्यमीमांसा

**कापिः**—मेलरागः (खरहरप्रियामेलजन्यः)

आ – स रि ग म प ध नि स.

अव – स नि ध प म रि ग म रि स.

मञ्ज

कापिरागध्यानम्

हेलाया निजनायकाङ्कनिवासिनीं सुविलासिनीं
गौरवर्णविभसितां वहुभूपितां शुकतोपिताम् ।
नीलवस्त्रधरां सुधामयमन्दिरां विजितेन्दिरां
संस्मरामि हृदयांवुजे मम कापिकां स्मरदीपिकाम् ॥

रागसागरः

कापी—मेलरागः ( श्रीरागजोऽयं रागः )

कापिरागे छागगजौ श्रुतियुक्तौ विशेपदः ।
गनी त्रिश्रुतिकौ ॥

परमेश्वरः

कावुलः—ध्वनिभेदः

वाहुल्यान्मन्द्रसंस्पर्शैः माधुर्यगुणसंयुतः ।
कावुलस्स परिज्ञेयो गीतध्वनिविशारदैः ॥

पार्श्वदेवः

कामः—देशीतालः

दद्वयं च गुरुः कामे ० ० ऽ

श्रीकण्ठः

कामकट्टरम्—देशीनृत्तम

वामे करे इक्षुकोदण्डं दक्षिणे पुष्पसायकम् ।
धृत्वा सालङ्कृतः कामो रत्या सह मनोहरः ।
प्रविश्य रङ्गभूमिं च वङ्गालीपात्रवत्तदा ।
संपाद्य विधिमादौ च ततश्शर्तविमोचनम् ।
शङ्करोपरिकुर्याच्च प्रान्तेऽन्तर्धानमाचरेत् ।
कामकट्टरमेतच्च सर्वकामफलप्रदम् ।

वेदः

वङ्गालीपात्रवदिति वङ्गालीकट्टरोक्तलक्षणं सूच्यते ।

कामक्रिया—मेलरागः ( कामवर्धिनीमेलजन्यः )

आ – स रि ग म प ध नि स .
अव – स नि ध प म ध म ग रि स .

मञ्ज

कामगणाः

अष्टौ मध्याभवा भेदाः प्रोक्तास्ते मान्मथा गणाः ।
तत्रये लघुपूर्वा स्युः तेषु प्रागधिकं लघुः ॥

मोक्षदेवः

कामदः—गीतालङ्कारः ( ध्रुवभेदः )

एकविंशतिवर्णा हि पादे शृङ्गारको रसः ।
कामदोऽभीष्टदः पुंसां ताले तुरगलीलके ॥
द्रुतद्वन्द्वं विरामान्तं ताले तुरगलीलके ।

संगीतसारः

कामदः—तानः

मध्यमग्रामे गनिहीनौडुवः ।
रि स प ध म .

कुम्भः

कामदत्ता—द्वादशाक्षरवृत्तम्

ननरयाः ॥

भरतः

कामरञ्जनी—मेलरागः ( शुभपन्तुवरालीमेलजन्यः )

आ – स रि ग रि म प ध नि स .
अव – स नि ध म ग रि ग स ,

मञ्ज

कामवर्धिनी—मेलकर्ता (रागः)

स रि ग ० ० ० म प ० ध ० नि स .

मञ्ज

कामसंभवः—देशीतालः

कामसंभवताले तु प्लुतो विन्दुरुदीरितः ऽं ०

लक्ष्मण

कामाङ्गा—श्रुतिः

ऋषभस्य द्वितीया श्रुतिः ॥

सुधा

कामाद्भुताभिनवमृगाङ्कलेखा—सूडप्रवन्धः

आदितालेन तालेन पद्यं पाठाः स्वरास्तथा ।
तेनास्तदन्ता आलापः शृङ्गारः प्रेमनिर्भरः ।
रागो मरुत्कृतिर्यत्र स प्रवन्धो निगद्यते ।
कामाद्भुताभिनवतो मृगाङ्कलेखा प्रवन्धः ॥

कुम्भः

कामिनी—ध्रुवावृत्तम् ( सप्ताक्षरम् )

गुरुणा लघुना चैव समं नीता च या ध्रुवा ।
छन्दस्युष्णिहि वृत्तज्ञैर्विज्ञेया कामिनी यथा ॥
वेप्खिअ ऊण आहदं — पेक्ष्य आगतम् ।
( रजगाः )

भरतः

कामिनीहासः—सूडप्रवन्धः

विजयानन्दतालेन गौडीरागे विरच्यते ।
पद्यं पाटाः स्वरास्तेन लीलानायकसंभवाः ।
शृङ्गारः कैशिकीरीतौ कामतृप्तिपुरःसरा ।
कामिनीहासनामायं प्रवन्धः श्रीपतिप्रियः ॥

कुम्भः

कामोदः—मेलरागः (कल्याणमेलजः)

कामोदो गीयते पूर्णो निशादौ सत्रयान्वितः ।
ईषद्भेदो बुधैः प्रोक्तः कल्याणाख्यहमीरयोः ॥

श्रीकण्ठः

—रागः

षड्जधैवतिकोद्भूतः षड्जग्रह ..........।
गतारमन्द्रः कामोदो धांशस्सान्तस्समस्वरः ॥

हम्मीरः

—रागाङ्गरागः

कामोदाह्वा क्रौञ्चगामी गौरं नीलाम्बरं स्मृतम् ।

कुम्भः

तारषड्जग्रहस्तारमन्द्रगान्धाररञ्जितः ।
षड्जन्यासो धैवतांशो जातो वेसरषाडवात् ।
गातव्यः पश्चिमे यामे कामोदः पूर्णतान्वितः ॥

भट्टमाधवः

कामोदः—(प्रथमः) ग्रामरागः

सांशन्यासग्रहः षड्जे षाड्जीजातः समस्वरः ।
मन्द्रगान्धारसंभूतः कामोदो गीयते सदा ।
तारषड्जग्रहस्तारमन्द्रगान्धारशोभितः ॥

—(द्वितीयः) ग्रामरागः

षड्जमध्यमिकाजातः षड्जग्रामे समस्वरः ।
षड्जप्रान्तो धैवतान्तः कामोदोऽन्यस्तु गीयते ॥

भट्टमाधवः

—रागः

कामोदः करुणे हास्ये नितारो बहुकम्पनः ।
षड्जो जातिग्रहांशेषु यामाद्धन्यासमन्तकः ॥

नारायणः

यामात् । प्रहरादूर्ध्वं गानकाल इत्यर्थः ।

नारदमते मूर्तिलक्षणम् ।

भर्त्रा समं पाथसि हेमवर्णा पयो विहारेण सरोरुहाणि ।
विचिन्वती सौरभमोदमाना कामोदरागा कथिता विदग्धैः॥

पञ्चमसारसंहिता

—रागः

सद्दशरचितशेषः तारगान्धारसार-
स्स्वरधरकरपूर्णो धैवतीन्यासमन्द्रः ।
धरवविरचितांशो धग्रहन्यासकाम्यः
कथित इह कामोदो दत्तविद्वत्प्रमोदः ॥

नान्यः

गान्धारतारसंपूर्णसाल्पमन्द्रस्समस्वरः ।
कामोदो धैवतन्यासग्रहांशः किल गीयते ॥

मतङ्गः

कामोदनाटः—मेलरागः

अथ कामोदनाटेऽस्मिन् तीव्रगान्धारसंयुते ।
धैवतोद्ग्राहसंपन्नेऽवरोहे गधवर्जिते ।
सन्यासो मध्यमांशः स्यात्सर्वत्र बहुकम्पनम् ॥
सायं गेयः ॥

अहोबिलः

कामोदरागध्यानम्

पीताम्बरः फुल्लसरोजनेत्रो नितम्बिनीमण्डलमध्यवर्ती ।
युवा मनोज्ञः स्मितभासुरास्यः कामोदरागो नितरां विभाति ॥

श्रीकण्ठः

अक्षमालां करे धृत्वा.................।

जपन् जह्नुसुतातीरे कामोदः परिकीर्तितः ॥

अयं कामोदीत्यपि कथिता ।

भर्त्रा समं पाथसि हेमवर्णा
पयोविहारेण सरोरुहाणि ।
विचिन्वती सौरभमादधाना
कामोदरागी कथिता विदग्धैः ।

संगीतसरणिः

कामोदासिंहली—रागः

कमोदोपाङ्गमाख्याता कामोदासिंहलीबुधैः ।
कामोदालक्षणोपेता समन्द्रा कम्पधैवता ॥

हम्मीरः

—रागः

धांशन्यासग्रहा तद्वत् कामोदा भाषया मता ।

मद

म......येव कामोदा धांशन्यासग्रहान्विता ।
समस्वरा तु संपूर्णा गुर्वाज्ञादिषु युज्यते ॥

सोमराजः

धैवतादिग्रहन्यासा संपूर्णास्थानकम्पिता ।
गान्धारतारमन्द्रा च कामोदा परिकीर्तिता ॥

सोमेश्वरः

कामोदिका—रागः

बङ्गालस्यैव भेदोयं शेशे कामोदिका समा ।

हरि

**कामोदी**—रागः

धांशन्यासग्रहापूर्णा पौरवी मूर्छना मता ।
मल्हारनिकटे ज्ञेया कामोदी सर्वसम्मता ॥

दामोदरः

—मेलरागः (मल्हारमेलजः)

पूर्णा धत्रयसंयुक्ता मल्हारनिकटस्तथा ।
गेया प्रत्यूषकाले सा कामोदी कामदीपिनी ॥

श्रीकण्ठः

**कामोदीरागध्यानम्**

पीताम्बरा काकलिनादिनीयं सुकेशपाशा विपिने रुदन्ती ।
विलोकयन्ती भयमुद्वहन्ती कामोदिका नाधमनुस्मरन्ती ॥

श्रीकण्ठः

पीतं वसाना वसनं सुकेशी वने रुदन्ती पिकनाददीना ।
विलोकयन्ती विदिशोऽतिभीता कामोदिका कान्तमनुस्मरन्ती॥
दीपकभार्या । दामोदरः

**काम्भोजी**—भाषाङ्गरागः

धान्तग्रहांशा सनिपैश्च भूरिः काम्बोजिकेयं ककुभप्रसूता ।
भाषाङ्गकं याष्टिकसंमतस्य काम्बोजिका तुल्यवरा च पूर्णा ॥
इमां त्रिषड्जां विधरं निभूरिं हिन्दोलजामाहुरतद्विदोऽन्ये
शुचौ नियुक्तां करुणे रसे च संचारिवर्णं प्रगुणं वदन्ति ॥

कुम्भः

—मेलकर्ता

काम्भोजिराग इति वर्हिणविष्णुवेनु-
साधारणाजशुभमध्यपिकाच्युताङ्ख्या ।
तत्रावरोह उदितेऽप्यपि कैश्यदन्ती
तद्गण्यते जगति षाडवपूर्णजातिः ॥

समपाः शुद्धाः । रिधौ चतुःश्रुती । गस्साधारणः । निःकैशिकी ॥

परमेश्वरः

—रागः

अनन्तरं तु काम्भोजी हिन्दोलकसमुद्भवा ।
षड्जन्यासांशका प्राप्ता बहुत्वं च निषादके ।
औडुवा धैवतेनापि रिषभेण विवर्जिता ॥

हरि

पञ्चमेन निषादेन तारे मन्द्रे च सोत्कटा ।
धैवतर्षभहीना च काम्भोजी गदिता मता ॥

सोमेश्वरः

काम्भोजी तु भवेद्भाषा हिन्दोलकसमुद्भवा ।
निभूयसी रिधत्यक्ता सांशन्याससमन्विता ॥
औडुवेयं परिज्ञेया शृङ्गारे विनियुज्यते ।

जगदेकः

षड्जांशकग्रहन्यासा निसगैर्बहुला तथा ।
कम्पितागमकाकीर्णा काम्भोजी परिकीर्तिता ॥

नान्यः

बहुलनिषादोपेता घनगमकाधरिगुणा च परिहीना ।
हिन्दोलिके तु भाषा काम्भोजी भवति लक्षणेन सदा ॥

कश्यपः

—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि ग म प ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

**काम्भोजीरागध्यानम्**

करतलधृतवामगण्डभागां
चरणतलेन भुवं सदा लिखन्तीम् ।
अविरलसविलासगानलोलां
मनसि ध्यायामि सन्ततं काम्भोजीम् ॥

रागसागरः

**काम्भोधी**—मेलरागः

काम्भोधी तीव्रगान्धारा गान्धारादिकमूर्छना ।
आरोहे मनिहीना स्यान्मधांशस्वरभूषिता ।
यदा गान्धारहीना स्यान्मूर्छना चोत्तरायता ॥
द्वितीयप्रहरोत्तरगेया । अहोबिलः

**कारण्डवन्वर्णः**—

अङ्गवर्तने उपयोगः। सितनीलसमायोगे कारण्डव इति स्मृतः।

भरतः

**कारवसिंहला**—मेलरागः (खरहरप्रियामेलजन्यः)
(आ) स ग रि ग म प ध नि प ध प स.
(अव) स नि प ध म प ग रि स.

मञ्ज

**कारिका**—

अल्पाभिधानेनार्थो यः समासेनोच्यते बुधैः ।
सूत्रतस्सा तु विज्ञेया कारिकार्थप्रदर्शिनी ॥

भरतः

कारिका – ज्ञप्तिसाधकत्वात् तदर्थिनी कारिका । सूत्रमपि

कारिका। तत्सूत्रमपेक्ष्य या अनुपश्चात्पठिता श्लोकरूपा सापि कारिका।

क्रियतेऽनेन ज्ञप्तिरिति कारिकालक्षणमिति यावत्। तदर्थ-प्रकाशकत्वात् श्लोकोप्युपचारात्कारिका।

अभिनवः

**कारिकातालः**—

द्रुतत्रयं लघुश्चैकः कारिकाह्वयतालके।
२।। मात्राः।

तालप्रस्तारः

**कारीरी**—तानः

षड्जग्रामे रिपहीनौडुवः।
ध म ग स नि

कुम्भः

**कारुणिकः**—अङ्गहारः

पादश्चङ्क्रमणाभिख्यो करौ तु मुकुटाभिधौ।
करुणासहितौ ह्यादौ नृतिः कारुणिकस्य तु।।
हस्तौ तलमुखाभिख्यौ पादावञ्चितनामकौ।
प्रलोकितदृशा भूयात्सूत्रनृत्तं विभावयेत्।।
इति क्रमयुते नृत्ते द्वितीयः क्रमणो (करुणो) मतः।
आदौ तु चलितौ पादौ स्थितवापसरणे भवेत्।।
कलशाभिधहस्तौ तु चलितौ च पुनः पुनः।
आलोकितदृशाभूयात्तृतीयः करुणेऽयते।।
पादयोः पार्श्वभागाभ्यां नटनं तु करौ तदा।
उद्वृत्तनाम्ना कथितौ साचीदृष्टिस्तदा भवेत्।
एवं नटनसंयुक्तं तुर्यकारुणिकस्य तु।।

नन्दीश्वरः

**कार्मारवी**—जातिः

कार्मारव्यामनंशास्तु षड्जगान्धारमध्यमाः।
पूर्णता पञ्चमो न्यासो गान्धारगमनं बहु।।

दत्तिलः

कार्मारवी निषादी सार्षभिकापञ्चमीभ्यः कुर्यात्।
अंशानिषादधैवतपञ्चमरिषभा भवन्ति यत्रामी।
अपि चैतेऽपन्यासा न्यासस्थाने च पञ्चमो यस्याम्।।

नान्यः

कार्मारवी लक्षणमुच्यतेऽस्यामंशा निषादर्षभपञ्चमाश्च।
सधैवतश्चान्तरमार्गयोगादस्यामनंशा बहवो भवन्ति।।
गान्धारकोऽत्यन्तबहुर्मिथः स्यादंशस्वराणामिह सङ्गतिश्च।
चच्चत्पुटस्तत्र चतुष्कलः स्याद्ध्रुष्टौ कला नाटकपञ्चमाङ्के।।
गाने ध्रुवाया विनियोजनं स्यात्सा मध्यमग्रामगशुद्धमध्या।।
षड्जादिमा मूर्छनिका चतुर्थीन्यासः पुनः पञ्चम एव तस्याम्।
अंशास्त्वपन्यासतयोपदिष्टाः संपूर्णतानः नित्यमुपैति सेयम्।।

रघुनाथः

—पुष्करवाद्ये स्वरयोजनक्रमः

ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे।
पञ्चमश्चोर्ध्वके कार्यः कार्मारव्याः स्वरास्त्वमी।।

भरतः

—मार्जना

ऋषभो जायते वामे पुष्करे दक्षिणे पुनः।
षड्जः स्यात्पञ्चमस्तूर्ध्वपुष्करे जायते यदा।
तदा कार्मारवी ज्ञेया मार्जनेयं मनीषिभिः।।

वेमः

**कार्यम्**—अर्थप्रकृतिः

यदाधिकारिकं वस्तु सम्यक् प्राज्ञैः प्रयुज्यते।
यदर्थश्च समारंभः तत्कार्यमिति कीर्तितम्।।

भरतः

कथाशरीरव्यापिन्यां नायकसहायादिक्रियायां उपलभ्यमान-प्रधानसंबन्धि प्रारम्भफलविशेषः कार्यमित्युच्यते। धर्मार्थका-मानामन्यतमं हि पुरुषार्थं कार्यमित्यामनन्ति। यथा नीतो विक्रमबाहुरिति रत्नावल्यां।

अभिनवः

—लक्षणम्

यत्रापसारयन्दोषं गुणमर्थेन योजयेत्।
गुणाभिवादं दोषाद्वा कार्यं तल्लक्षणं विदुः।।

भरतः

दोषमपसार्य गुणं यदात्वेऽर्थनीये नियोजयति। गुणाभिवादं वा अपसार्य दोषानर्थे योजयति। आश्रित्य तेनार्थं योजयतीत्यर्थः। एतत्कैश्चिद्ग्रहनमित्युक्तम्।

अभिनवः

**कार्यदृष्टिः**—निर्वहणसन्ध्यङ्गम्

एकत्वं कार्यदृष्टिस्तु समस्तस्यापि वस्तुनः।

सर्वेश्वरः

**कार्यमतिः**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग प ध स.
(अव) स नि ध प ध म ग रि स.

मञ्ज

कार्यान्वयः—शब्दगुणः

स सिद्धमाद्ध्यसंबन्धः कार्यान्वय इतीरितः ।

कुम्भः

कालः—तालप्राणः

उपर्युपरि विन्यस्य पद्मपत्रशतं सकृत् ।
यः कालः सूचिसंभेदात् क्षणस्सपरिकीर्तितः ॥
लवः क्षणैरष्टभिः स्यात्काष्ठा ह्यष्टलवात्मिका ।
अष्टौ काष्ठाः निमेषः स्यात् निमेषैरष्टभिः कला ॥
कलाभ्यां च चतुर्भागः चतुर्भागावनुद्रुतम् ।
अनुद्रुताभ्यां विन्दुः स्याद्विन्दुभ्यां च लघुर्भवेत् ।
लघुद्वन्द्वं गुरुश्चैकः त्रिलघु प्लुत उच्यते ॥

अच्युतरायः

निराकारस्य तालस्य कालादिः प्राण एव न ।
कालादिर्वायुभिन्नश्च न प्राणो भक्तुमर्हति ॥
कालादिर्वायुभिन्नोऽपि तालस्य प्राण इष्यते ।
राज्ञो भृत्य इव प्राणो गौणोऽयं न विरुद्ध्यते ॥

अच्युतरायः

कालज्ञा—श्रुतिः

तारमध्यमस्य तृतीया श्रुतिः ।

पार्श्वः

कालावस्थानुभवः—संगीतशृङ्गाराङ्गम्

मध्याह्लादिकृतदुःखोपलब्धिः कालावस्थानुभवः ।

भोजः

कालिन्दी—रागः

रिपहीना च कालिन्दी धन्यासा स्वल्पसप्तमा ।
गांशा स्याद्भिन्नषड्जोत्था कालिङ्गैर्गीयते जनैः ॥

मोक्षः

भिन्नषड्जसमुद्भूता भवेदन्तरभाषिका ।
कालिन्दी धैवतन्यासा निषादाल्पा समस्वरा ।
गान्धारांशा रिपत्यक्ता विस्मये विनियुज्यते ॥

जगदेकः

कालिन्दिका स्तोकनिषादनादा न्यासस्वरा धैवतधारिणी च ।
गान्धारकांशा च समस्वरा च मुक्तर्षभेणापि च पञ्चमेन ॥

नान्यः

कालिन्दी धैवतन्यासा गान्धारांशा समस्वरा ।
पञ्चमर्षभहीना च निषादेन च दुर्बला ॥

मतङ्गः

अनन्तरं स्यात्कालिन्दी भिन्नषड्जसमुद्भवा ।
समस्वरा निषादाल्पा धैवतन्यासरूपिणी ।
पञ्चमर्षभसंत्यक्ता गान्धारांशविभूषिता ॥

हरि

काली—श्रुतिः

तारमध्यमस्य चतुर्थी श्रुतिः ।

पार्श्वः

कालोपनता—मूर्छना

कलोपनतायाः नामान्तरम् ।

कालरूपनतायां तु मरुद्भीरिषभे स्वरे ।
स्यात्कालोपनता मूर्छा मरुच्चात्राधिदैवतम् ॥

नान्यः

काव्यम्—गीतवाङ्मयभेदः

लयान्तरप्रयोगेण रागैश्चापि विवेचितम् ।
नानारसं सुनिर्वाह्यकथं काव्यमिति स्मृतम् ॥

भरतः

—नृत्तरूपकम्

आक्षिप्तिकाथवर्णौ मात्राध्रुवकेऽथ भग्नतालश्च ।
वर्धनिका चलतिका यत्र स्युस्तदिह काव्यमिति ॥

भोजः

आक्षिप्तिकादितालभेदेन ध्रुवाभेदाः लयताला इति कथ्यन्ते ॥

काव्यं सहास्यशृङ्गारं सर्ववृत्तिसमन्वितम् ।
सभग्नतालद्विपदीखण्डमात्रापरिष्कृतम् ॥
गर्भावमर्शसन्धिभ्यां हीनमेकाङ्कमेव च ।
क्वचिल्लास्ययुतं वा स्याद्विटचेटसमन्वितम् ॥
कुलाङ्गनावेशयुतं ललितोदात्तनायकम् ।
एवं प्रकल्पयेत्काव्यं तद्गौडविजयो यथा ॥
विप्रामात्यवणिक्पुत्रनायिकानायकोज्ज्वलम् ।
मुदितप्रमदा भाषा चेष्टितैरान्तरान्तरा ॥
ग्रथितं विटचेष्टादिवेषभाषाभिरेव च ।
एवं वा कल्पयेत्काव्यं यथा सुग्रीवकेलनम् ॥

शारदातनयः

खण्डमानमात्राद्विपदी भग्नताल तालकादिविभूषितं चतुर्वृत्तियुतं शृङ्गारहास्यप्रधानं गर्भावमर्शसन्धिशून्यं एकाङ्कम् । यथा – उत्खण्डितमाधवम् ।

सागरः

काव्यमारभटीहीनमेकाङ्कं हास्यसङ्कुलम् ।
गर्भावमर्शसन्धिभ्यां हीनं शृङ्गारभूषितम् ॥
खण्डमात्राद्विपदिकाभग्नतालैरलङ्कृता ।
उदात्तोक्तिसमायुक्तं बहुताललयान्वितम् ।
निदर्शनं तु काव्यस्य विज्ञेयो माधवोदयः ॥

अमृतानन्दी

खण्डमात्राद्विपदिकेति गीतिप्रभेदावुक्तौ ।

काव्यगुणाः

श्लेषः प्रसादस्समता समाधि-
माधुर्यमोजः पदसौकुमार्यम्।
अर्थस्य च व्यक्तिरुदारता च
कान्तिश्च काव्यस्य गुणा दशैते ॥

भरतः

मम्मटादयो गुणत्रयमेवाङ्गीचक्रुः। भोजविद्यानाथादयश्चतुर्विंशतिगुणानूचुः। वामनः दशगुणान्विवृणोति। प्रकाशवर्षो द्वाविंशतिं गुणान्सलक्षणान् रसार्णवे उक्तवान्।

काव्यचित्तं—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स ग रि ग म प ध नि स.
(अव) स नि प म रि स.

मञ्ज

काव्यजीवितम्

रीतिरात्मा काव्यस्येति वामनः।
प्रचीनानां मते गुणालङ्कारावेव काव्यप्राणाः। आनन्दवर्धनो ध्वनिं काव्यजीवितमाह। तेन रसादयो व्यज्यन्ते। कुन्तकस्तु, 'शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि। बन्धे व्यवस्थिते काव्यं तद्विदाह्लादकारिणि' इति वक्रोक्त्याः प्राधान्यं न्यरूपयत्। औचित्यं काव्यप्राण इति क्षेमेन्द्रः। रस एव प्राधान्यमिति भरतादयः। तदनुसारिणो भोजादयः। साहित्यमीमांसाकारस्तु 'साहित्यं सपरिष्कारं कविना परिकल्पितम्। भावयन् रसिको लोके सुखमत्यन्तमश्नुते। वृत्त्यादीनां समष्टिः स्यात्साहित्यं तत्परिकृतिः। शब्दार्थयोः परिष्कारः कवित्वस्य प्रसाधकः। सामाजिकः स्याद्रसिकः प्रसिद्धं लोकतस्सुखम्।' इति काव्यनिर्माणास्वादनाङ्गानि विवृणोति।

काव्यदोषाः

गूढार्थमर्थान्तरमर्थहीनं भिन्नार्थमेकार्थमभिप्लुतार्थम्।
न्यायादपेतं विषमं विसन्धि शब्दच्युतं वै दश काव्यदोषाः॥

भरतः

काव्यशास्त्रम्—श्रव्यकाव्यम्

यत्रार्थश्शास्त्राणां काव्ये विनिवेश्यते महाकविभिः।
तद्वद्धि काव्यमुद्राराक्षसवत्काव्यशास्त्रं स्यात् ॥

भोजः

काव्यसंहारः—निर्वहणसन्ध्यङ्गम्

वरप्रदानसंप्राप्तिः काव्यसंहार इष्यते।

भरतः

यथा – यातो विक्रमबाहुरित्यादियौगन्धरायणवाक्यं रत्नावल्याम्।

अभिनवः

ईप्सितं दातुमभिलाषः काव्यसंहारः। तज्जनितो भूयः किं ते प्रियमुपकरोमि। स च गृहीतार्थप्रतीच्छति प्रतीच्छति च संपादयितुर्भूयसीमिच्छां दर्शयितुं निबद्ध्यते। तत्र सर्वस्मिन्नेवेप्सिते संपन्ने प्रस्तुतं काव्यमेव संह्रियते इति काव्यसंहारः।

रामचन्द्रः

काश्यपः

काश्यपसंहिताकारः। अत्र ग्रन्थे देशीरागलक्षणानि सन्ति।

काश्यपसंहिता

काश्यपमुनिकृता। अत्र देशीरागाः लक्षिताः। वृद्धकाश्यपेन स्वराः पञ्चदशेत्युक्तमिति अभिनवेन कुम्भकर्णेन चोक्तम्।

कासीलकः—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स रि ग म प ध नि स.
(अव) स नि ध म ग स.

मञ्ज

काहलः—ध्वनिभेदः

काबुलशब्दं पश्यत।

काहला—सुषिरवाद्यम्

धुत्तूरपुष्पवदना रन्ध्रदण्डा सुदीर्घिका।
कार्या ताम्रमयी रौप्यसुवर्णघटिताथवा।
काहलानाम सा प्रोक्ता वुक्का दीर्घतरा भवेत् ॥

सोमेश्वरः

ताम्ररौप्यस्वर्णकांस्यादीनामन्यतमेन या।
विधीयतेऽन्तस्सुषिरहस्तत्रितयदैर्घ्यभाक् ॥
धत्तूरकुसुमाकारमुखेन समलङ्कृता।
हाहूवर्णोत्करा वीरविरुदोच्चारकारिणी।
काहला वाद्यते लोके कोलाहलविधायिनी ॥

कुम्भः

कांस्यतालः

कांस्यतालौ समाकारौ नलिनीदलसन्निभौ।
त्रयोदशाङ्गुलमितौ विस्तारः स्यात्तयोः पृथक् ॥
तले तयोर्विधातव्यं द्व्यङ्गुलं मण्डलद्वयम्।
अन्तर्मध्येऽङ्गुलमिता निम्नता स्यात्तयोर्द्वयोः ॥
तयोर्गुञ्जाफलनिभं मध्ये रन्ध्रं विधाय च।
तत्र रज्जू विनिक्षिप्य पृथग्ग्रन्थिं तु कल्पयेत् ॥

करांभ्यां रज्जुमालम्ब्य कृत्वा चान्योन्यसम्मुखौ ।
कांस्यतालौ घर्षणेन वादयेद्वादकाग्रणीः ॥
तयोर्झनकटाः पाटा मुख्याः पाटान्तराण्यपि ।
जायन्ते नारदश्चात्र देवता परिकीर्तितः ॥

वेमः

## किङ्किणी

कैलासे तु सुवर्णं च रजतं देवमण्डले ।
कांस्यं च मर्त्यलोके तु नटस्सन्धारयन्सदा ॥
शतमेकं वामपादे दक्षिणे च शतं तथा ।
नीलसूत्रेण बध्नीयान्नाट्यशास्त्रेषु निश्चितम् ॥
वामे हंसाल्यकं बध्वा दक्षिणे खटकामुखम् ।
हस्तेन किङ्किणीसूत्रं प्रथमं दक्षिणे पदे ।
पश्चाद्वामे तु पादे च पृष्ठभागे तु बन्धयेत् ॥

विनायकः

## किञ्चिच्छेपा—अवस्था

नियतां तु फलप्राप्तिं यदा भावेन पश्यति ।
किञ्चिच्छेपां समाप्तिं तां स गुणां परिचक्षते ॥

भोजः

## किट्टम्—वीणावादने दोषः

प्रबला स्याद्गतिर्यत्र तद्वाद्यं किट्टमुच्यते ।

कुम्भः

## किञ्चित्सादृश्योपमा—अलङ्कारः

संपूर्णचन्द्रवदना नीलोत्पलदलेक्षणा ।
मत्तमातङ्गगमना संप्राप्तेयं सखी मम ॥

भरतः

## किञ्चित्सूची—हस्तः

तर्जन्यामन्त्यरेखायामङ्गुष्ठस्सन्निवेशितः ।
किञ्चित्सूचीहस्तकोऽयं कीर्तितो भरतादिभिः ॥
किञ्चित्सूचीपुरोभागे चलितोऽप्यङ्कुरार्थके ।
मल्लिकाकोरके चापि पुलकाङ्कुरभावने ॥
ओष्ठस्थले तु यो हस्तः चलितो दन्तपङ्क्तिषु ।
किञ्चित्सूच्याख्यहस्तस्य क्षेत्रस्थाननिरूपणम् ॥

विनायकः

## कित्तुः—देशीलास्याङ्गम्

स्तनयोरंसयोः कट्योः स्पन्दनं नेत्रनन्दनम् ।
तालेन यत्र नर्तक्या कृतं कित्तुस्स नामतः ॥

व्यायनाशोकौ 'किन्तु' इतीदं पठतः ।

## किन्नरप्रियः—तानः

गान्धारग्रामे नारदीयतानः ।

म प नि रि ग.

नान्यः

## किन्नरावली—मेलरागः ( शूलिनीमेलजन्यः )

( आ ) स रि ग म ध नि स.
( अव ) स नि ध म ग रि स.

मञ्ज

## किन्नरी—वीणा

अनयोर्घटनायोगाद्भवेद्वीणा तु किन्नरी ।

अनयोरिति कपिलासिकारुद्रवीणयोः । घटनायोगादित्यनेन तन्त्रीककुभादिकं कपिलासिकावत्, अपरं रुद्रवीणावदित्यवबोद्धव्यम् । नारायणः

## किन्नरी—वीणा

किन्नरी द्विविधा प्रोक्ता द्वितुंबा च त्रितुम्बिका ।
द्वितुंबिका भवेल्लघ्वी त्रितुंबा बृहती भवेत् ॥
पञ्चाङ्गुलाधिकं दैर्घ्यं वितस्तित्रयसंमितम् ।
पञ्चाङ्गुलः परीणाहो वेणुदण्डे सरंध्रके ॥
पञ्चाङ्गुलाग्रतः कार्यस्सार्धत्र्यङ्गुलविस्तृतः ।
शाकदारुमयोदग्रः ककुभः कीलकान्वितः ॥
अर्धाङ्गुलेन हीना स्यात्ककुभा पत्रिकायसी ।
दैर्घ्या विस्तारतश्चैव कूर्मपृष्ठौ परावरा ॥
गृध्रपक्षास्थिनलिका दण्डपृष्ठे नियोजिताम् ।
चतुर्दशमिताः कार्यास्सार्धत्र्यङ्गुलविस्तृताः ॥
वासोमसीविमिश्रैषा मदनेन विधारिता ।
अङ्गुलाद्व्यङ्गुलं यावत् क्रमशः किञ्चिदुच्छ्रितः ॥
आरभ्य त्र्यङ्गुलात्किञ्चिद्यावच्च चतुरङ्गुलम् ।
अग्रादङ्गुलमुत्सृज्य सुषिरं तत्र कल्पयेत् ॥
ततो द्व्यङ्गुलमुत्सृज्य मेढकन्नरपुंखवत् ।
कर्तव्यमङ्गुलोत्सेधं तन्त्रीसारणकारणम् ॥
अयोमयं तत्र तन्त्रीं गजकेशसमां दृढाम् ।
वेष्टयित्वा चले शङ्कौ तां च रंध्रे विनिक्षिपेत् ॥
तच्छिद्रोऽसौ भवेत्कण्ठे द्वितीयः स्थिरकीलकाम् ।
धलां रन्ध्रादधस्तच्च प्रथमश्शङ्कुरिष्यते ॥
पुरतो मेढकात्किञ्चित् स्थिरशङ्कु निवेशयेत् ।

भ्रामयित्वा चलं शङ्कुं तन्तुं कुर्यात्तथा दृढम् ।।
आयसं कीलकं लग्नं चलशङ्कोर्गलस्थले ।
स्थापयेत्स्थिरशङ्कौ तु स्थायिमानप्रमाणतः ।।
स्वराः स्थानेषु संस्थाप्य सारिकास्ताश्चतुर्दश ।
दण्डस्य ककुभस्याधस्सन्धौ तुम्बं निवेशयेत् ।।
तृतीयं तुम्बयोः सार्योर्मध्ये तुम्बं द्वितीयकम् ।
प्रथमं लघुतुम्बं स्याद्द्वितीयं पृथुतुम्बकम् ।।
प्रथिता किन्नरी लघ्वी तुम्बकद्वयभूषिता ।
कथ्यते सांप्रतं रम्या किन्नरी महती मया ।।

सोमेश्वरः

किन्नरीवादनक्रमः

वाममध्यातर्जनीभ्यां सारिकोपरितन्त्रिकाम् ।
समध्यया प्रदेशिन्या दक्षहस्तस्य तामथ ।।
सानामया पार्श्वतन्त्रीयुगलं वादयेन्मृदु ।
कर्मणो दक्षहस्तस्य स्थानमाहुर्मनीषिणः ।।
सारीककुभयोर्मध्ये प्रोच्यन्ते हस्तजाः क्रियाः ।
आसारणं च कर्षश्च तथा कम्पनताडने ।।
खण्डनावर्तिताख्ये च विपर्यस्तं च सप्तमम् ।
इति वामकरस्येमे व्यापाराः सप्त कीर्तिताः ।।
घट्टनं प्रथमं चावघट्टनं तु द्वितीयकम् ।
निरन्तरालविच्छर्दौऽकर्तरी पञ्चमी स्मृता ।।
इति दक्षिणहस्तस्य प्रचाराः पञ्चधोदिताः ।
आसारणं तदा ज्ञेयं यदा गच्छति मध्यमा ।।
निष्पीड्य तन्त्रिकामूर्ध्वं आकर्षोऽस्य विपर्ययात् ।
तर्जनी मध्यमे चैकस्वरां संपीड्य तन्त्रिकाम् ।।
कम्पते चेत्तदाख्यातं कम्पनं पूर्वसूरिभिः ।
तिर्यगस्यास्ताडनया ताडनं परिकीर्तितम् ।।
खण्डनं ताडनादेकस्थाने मध्यमया भवेत् ।
मध्यमातन्त्रिकामेकस्वरस्थाने निपीड्य चेत् ।।
ऊर्ध्वस्वरं सानुनादं गत्वोत्क्षिप्त्वानु तर्जनी ।
पूर्वस्थानादधो गच्छेद्यदैकावर्तितं तदा ।।
मध्यमा तर्जनीकर्म तर्जनी मध्यमागतम् ।
अन्योन्यव्यत्यये कर्म विपर्यस्तं तदोदितम् ।।

इति वामकरव्यापारः ।

यद्यन्तस्तर्जनीं हन्ति तन्त्रिकाघट्टनं तदा ।
तत्त्रिधा कथितं पर्वघट्टनं पार्श्वघट्टनम् ।।
नखाग्रघट्टनं चेति नाम्नैव व्यक्तिलक्षणम् ।
तन्त्रीपृष्ठेनचेद्धन्ति तदा स्यादवघट्टनम् ।।

एतच्चतुर्विधं कर्म कार्यं मध्यमयापि च ।
प्रदेशिनी मध्यमा वा कुर्वती तन्त्रिकाहतिम् ।।
तथा प्रकुरुते वातान्तरं न श्रूयते यथा ।
निरन्तरालमेवं स्याच्छ्रोतृचित्तहरं परम् ।।
इति चेत्तर्जनीबाह्ये तन्त्रिकां मध्यमा तथा ।
अन्तर्घातं प्रकुरुते प्रदेशिन्यनुवर्तिनी ।।
यत्रैवमेतयोर्भूरि क्रिया विच्छर्दकस्तु सः ।
विच्छर्दवत्स्थितिमतीं तर्जनीमनुसृत्य चेत् ।।
मध्यमा बहिराहन्ति तर्जनी कर्तरी तदा ।

इति दक्षिणहस्तव्यापारः ।

कुम्भः

किन्नर्यां सारिकान्तरमानम्

गृध्रवक्षोस्थिजा यद्वा तत्पादास्थिसमुद्भवाः ।
कांस्यमय्योऽथवा लोह्यो नलिकास्सारिकाभिधाः ।।
सार्धाङ्गुलास्ताः परिधौ दण्डपृष्ठे निवेशयेत् ।
मदनेनेष्टकाचूर्णमिश्रेण श्लेषणं दृढम् ।।
यन्मेढाकशिरोमध्याः तदिदानीं निरूप्यते ।
प्रथमं प्रथितं प्राज्ञैः सार्धाङ्गुलचतुष्टयम् ।।
द्वितीयमन्तरं ज्ञेयं सयवैरङ्गुलैस्त्रिभिः ।
तृतीयं तु तृतीयांशाभ्यधिकैस्त्रिभिरङ्गुलैः ।।
चतुर्थं त्र्यङ्गुलं प्रोक्तं पञ्चमं सारिकान्तरम् ।
यवाधिकाभ्यां सार्धाभ्यां अङ्गुलाभ्यां मतं सताम् ।।
अङ्गुलं स यवद्वन्द्वं नवमं दशमं पुनः ।
यवोनमङ्गुलद्वन्द्वमन्तरत्रितयं पुनः ।
इतः परं तु प्रत्येकं सपादाङ्गुलसम्मितम् ।।

हम्मीरः

तत्र रत्नाकरादीनां दृष्ट्वा सारीप्रकल्पनम् ।
सुखबोधाय शिष्याणां दर्शयत्यवनीपतिः ।।
सारीमस्तकमध्यानां यदिहान्तरमिष्यते ।
मेरुमूर्ध्न उपक्रम्य यथावत्प्रतिपाद्यते ।।
तत्राद्यमन्तरं पञ्चाङ्गुलं सयवमीरितम् ।
तद्द्वितीयं च चतुरङ्गुलकं तत्तृतीयकम् ।।
तुर्यं चैव यवन्यूनं पञ्चमं त्र्यङ्गुलं तथा ।
यवाधिकं ततः षष्ठं यवोनं त्र्यङ्गुलं पुनः ।।
सयवं द्व्यङ्गुलं ज्ञेयमन्तरालं तु सप्तमम् ।

वसुसंख्यं पुनर्ज्ञेयं सार्धद्व्यङ्गुलमन्तरम् ॥
नवमं तु यवार्धोनं दशमं पुनरन्तरम् ।
सार्धाङ्गुलमितं ज्ञेयं यवोनं द्व्यङ्गुलं ततः ॥
एकादशं द्वादशं तु तत्तृतीयांशवर्जितम् ।
त्रयोदशं ततो ज्ञेयं तत्तृतीयांशसङ्गुलम् ।
अङ्गुलं मानसाख्यातमन्तरे च चतुर्दशे ॥

इति बृहत्किन्नरीसारिकामानम् । मध्यमकिन्नर्यां तु —

सारीणामन्तरस्याथ परिमाणमिहोच्यते ।
सार्धाङ्गुलचतुष्कं तु तत्र प्रथममन्तरम् ॥
सयवत्र्यङ्गुलं ज्ञेयं द्वैतीयकमिहान्तरम् ।
तृतीयमन्तरं त्र्यंशाभ्यधिकैरङ्गुलैस्त्रिभिः ॥
पूर्णत्र्यङ्गुलकं तुर्यं पञ्चमं पुनरन्तरम् ।
सार्धद्व्यङ्गुलकं ज्ञेयं यवैकोनाधिकं पुनः ।
षष्टं यवद्वयं न्यूनं द्व्यङ्गुलं सप्तमं तथा ॥
(अष्टमं यवोनं द्व्यङ्गुलम् । नवमं द्व्यङ्गुलम्)
यवोनमङ्गुलद्वन्द्वमन्तरं दशमं भवेत् ।
सपादाङ्गुलमानानि त्रीण्यन्यान्यन्तराणि च ॥
स्यादेकाङ्गुलमानेन चतुर्दशमिहान्तरम् ।
सारीणामर्धकं चैव यवमानमिह स्मृतम् ॥
अत्रापि त्र्यङ्गुलं वीणादण्डस्य परिशिष्यते ।
लक्ष्मशेषं विजानीयाद् बृहतीकिन्नरीगतम् ॥

कुम्भः

किरणभास्करः—मेलरागः ( खरहरप्रियमेलजन्यः )

( आ ) स रि ग म नि स .
(अव) स नि ध प म ध म ग रि स .

मञ्जः

किरणावली—रागः

न्यासांशकग्रहणसप्तमरावरम्या
गान्धारमध्यबहुला धरिवर्जिता च ।
मार्गीयुता...............यत्र
ताना वदन्ति किरणावलिकां सताराम् ॥

नान्यः

निषादांशग्रहन्यासा सतारा धरिवर्जिता ।
गान्धारमध्यबहुला विज्ञेया किरणावली ॥

गतञ्जः

—मेलरागः ( कीरवाणीमेलजन्यः )

( आ ) स रि म प ध नि स ·
( अव ) स नि ध प म ग रि स .

मञ्जः

किरिकिट्टकम्—तालवाद्यम्
शुक्तिशब्दे द्रष्टव्यम् ।

किरीटः—हस्तः

कलाप एव शीर्षस्थः किरीट इति कथ्यते ।
एवं किरीटाभिनये ब्रूते निधिकरात्मजः ॥

निधिकरः विप्रदासस्य पिता ।

विप्रदासः

शकतुण्डावुभौ कुर्यात्सम्मुखे नैव मेलनम् ।
कनिष्ठाग्रे कनिष्ठाग्रमङ्गुष्ठाग्रे तथैव च ।
लगयित्वोच्चकैः कुर्यात्करौ स तु किरीटकः ।
अधिदेवोऽस्य मार्ताण्डः भानुदेवे नियुज्यते ।

गौरीमतम्

किलकिञ्चितम्

हर्षाद्रोदनहासादि प्रोच्यते किलकिञ्चितम् ।

शार्ङ्गः

स्मितरुदितहर्षरोषश्रमभयदुःखाभिलाषाणाम् ।
यत्सङ्करणं स्त्रीणां तदिदं किलिकिञ्चितं ज्ञेयम् ॥

भावविवेकः

—अनुभावः

स्मितरुदितहसितादीनां हर्षादसकृदेकीकरणं किलिकिञ्चितम् ।
यथा पाणिपल्लवविधूननमित्यादि ।

भोजः

स्मितहसितरुदितबहुदुःखगर्वश्रमाभिलाषाणाम् ।
सङ्कटकरणं हर्षादसकृत्किलिकिञ्चितं ज्ञेयम् ॥

भरतः

यत्र किल शुष्करुदितहसितक्रोधभयव्यामिश्ररूपमिष्टजनदर्शनाविर्भूतहर्षवशात्क्रियते तत्किलकिञ्चितम् ।

सागरः

कीकराजः

सङ्गीतसारोद्धारकर्ता ।

**कीरवाणी**—मेलकर्ता ( रागः )

स ० रि ग ० म ० प ध ० ० नि स.

मञ्ज

**कीर्तिः** – देशीतालः

कीर्तिताले तु विज्ञेयाः क्रमाल्लपगलप्लुताः॥ । ऽ ऽ । ऽ

वेमः

लगौपगौलपौ चैव कीर्तिता कीर्तितालके ॥ । ऽ ऽ ऽ । ऽ

जगदेकः

लगौपगौ लपौ गश्च कीर्तिताले प्रकीर्तितः॥ ।ऽ ऽ ऽ । ऽ ऽ

संगीत मकरन्दे

लपौ गौललपाश्चैव कीर्तिताले प्रकीर्तिताः॥ ।ऽ ऽ ऽ ॥ ऽ

नन्दी

**कीर्तिधारीयम्**

कीर्तिधरकृतो ग्रन्थः। अयं कीर्तिधरः नाट्यशास्त्रव्याख्याता। अस्य मतं प्रमाणत्वेन उक्तमभिनवगुप्तेन षष्ठाध्यायव्याख्याने तथा एकोनत्रिंशाध्याये च । विक्रमशके ९०० भरतरससूत्र व्याख्यानं।

अयमेव लोल्लटाभिमतं तृतीयाविभक्त्यर्थं परामृश्य षष्ठीविभक्त्यर्थं स्वीकृतवान्। करणलक्षणे अस्य नामे स्मृतं बहुधा जायसेनापतिना।

**कीर्तिप्रबोधः**—देशीतालः

ऽ ऽ॥ ० ० ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ॥ ० ० ० ०

हम्मीरः

**कीलकः** – देशीतालः

द्रुतो लघुद्रुतद्वन्द्वं लघुद्वन्द्वं च कीलके॥ ०।००॥

कीलको मध्यतालस्य भेदः।

दामोदरः

**कीलकमण्ठः**—तालः

द्रुतो लघुर्द्रुतद्वन्द्वं लघुद्वन्द्वं च कीलके॥ ०।००॥

वेदः

**कीलकहस्तः**

कनिष्ठे कुञ्चिते श्लिष्टे मृगशीर्षे तु कीलकः।
सम्मुखे कीलकश्चैव नर्मालापे च स्नेहके।
औत्सुक्ये चापि मोहे च कीलकाख्यकरो भवेत्॥

विनायकः

**कीलः** गीतालङ्कारः ( अटतालभेदः )

द्रुतद्वयं विरामान्तं लघुनैं न संयुतम्।
झम्पातालो भवेत्तेन कीलो गीतो बुधैः स्मृतः॥

संगीतसारः

**कीला** कर्णभूषणम्

ऊर्ध्वछिद्रे कृता उत्तरकर्णिकेति प्रसिद्धा।

अभिनवः

**कुकुण्डलीतालः** – तालः

भो भौ यो भो यलौ जोल घवोप्यशब्दाः
स्युर्वेदसंख्या कथिता कुकुण्डली।

।।।।।।ऽऽ॥।।।ऽऽऽऽऽऽऽ॥ऽ॥ऽ॥।ऽऽ-ऽ॥।ऽऽ॥ऽ।

वेदः

**कुकुदः**—मेलरागः ( मायामालवगौलमेलजन्यः )

( आ ) स रि ग प नि ध स.
( अव ) स नि ध प म ग रि स.

मञ्ज

**कुकुदश्री**—मेलजन्यः ( कामवर्धिनीमेलजन्यः )

( आ ) स रि ग म प ध नि स.
( अव ) स नि प म रि म ग स.

मञ्ज

**कुङ्कुमाम्बरी**—मेलरागः ( मायामालवगौलमेलजन्यः )

( आ ) स नि ध नि स रि ग म प नि ध स.
( अव ) ध प म ग रि स नि ध नि स.

मञ्ज

**कुचुम्बिनी**—पादमणिः

तलाभ्यामस्पृशन् भूमिं पार्श्वोद्वृत्तं द्रुतं यदा।
विधीयेत तदा तज्ज्ञैस्समाख्याता कुचुम्बिनी॥

ज्यायनः

—पाटवाद्यम्

उदर्ल्यां स्वस्तिकाकारहस्तद्वितयताडनात्।
खुकारभूरि यद्वाद्यं सा विज्ञेया कुचुम्बिनी॥

वेमः

कालकाख्येन हस्तेन कुकारप्रचुरेण यत्।
मात्राभिष्षोडशैर्वापि द्वात्रिंशद्भिः कुचुम्बिनी॥
द्विविधा सा च विज्ञेया शुद्धा मिश्रेति सूरिभिः।
शुद्धा षोडशमात्राभिरन्याभिरितरा युता॥
कुकुंत कुंत कुंकुन्त कुंत कुकुकुकु।

पार्श्वदेवः

अभिनये कालकाख्यहस्तो नास्ति। मुकुलहस्त इति पाठ एव समञ्जसः।

कुञ्जहस्तः

मयूराभिधहस्ते तु मध्यमा कुञ्चिता तले।
नाम्ना श्लिष्टमयूराख्यो भ्रमार्थे संप्रयुज्यते ॥

श्लक्ष्मा

कुञ्चितम्—करणम्

वामपार्श्वेऽलपद्मस्स्यादुत्तानो दक्षिणः करः।
यदा तत्कुञ्चितं पादे सव्येऽग्रतलसञ्चरे।
आनन्दनिर्भरसुरानन्दाभिनयने मतः ॥

कुम्भः

—दर्शनम्

सङ्कोचेऽभङ्गभागस्य यत्र तत्कुञ्चितं मतम्।

वेमः

अभङ्गभागसङ्कोचो यत्र तत्कुञ्चितं भवेत्।

शारदातनयः

—हस्तप्राणः

कुञ्चनादङ्गुलीनां च कुञ्चितं समुदीरितम्।

श्लक्ष्मा

—जानु

श्लिष्टोरुजङ्घं जानूक्तं कुञ्चितं सद्भिरासने।

अशोकः

कुञ्चितः—कपोलः

कुञ्चितः कृतसङ्कोचः शीतत्रासज्वरादिषु।

ज्यायनः

सङ्कोचितौ कुञ्चितौ च रोमाञ्चज्वरभीतिषु।

वेमः

—पादः

उत्क्षिप्तपाणिमाकुञ्च्य मध्यं सर्वास्तथाङ्गुलीः।
आकुञ्च्यवर्तमानो यः कुञ्चितश्चरणो ह्यसौ।
अतिक्रान्तस्याक्रमणे ग्रहे तुङ्गस्य च स्मृतः ॥

विप्रदासः

ग्रहणे तुङ्गवस्तूनामुदात्तगमने तथा।
व्यवर्तितोद्वर्तितादिकरणेष्वप्यसौ भवेत् ॥

वेमः

—बाहुः

सूचीं कुर्वन् कूर्परस्तु वक्रितः कुञ्चितो भवेत्।
पानभोजनयोरेष प्रहारे खड्गधारणे ॥

अशोकः

कुञ्चितः कम्पितो बाहुः नामितस्तीक्ष्णकूर्परः।
शस्त्रादिधारणे योज्य प्रहारे पानभोजने ॥

सोमेश्वरः

कुञ्चितदाण्डः—स्थललागनृत्तम्

कुञ्चिते चेदुत्प्लुतिः स्यात्पुरो वामः प्रसारितः।
दक्षिणश्चरणो यत्र वामजान्वन्तिके स्थितः ॥
एकेन वलनेनाथ दक्षिणेन पदा भुवि।
निपतेत्कुञ्चितो दाण्डः तण्डुना प्रतिपादितः ॥

वेदः

कुञ्चितभ्रमरी

निकुञ्च्य जानु भ्रमयेत्कुञ्चितभ्रमरी भवेत्।

नाट्यदर्पणे

—भ्रमरी

भुजङ्गत्रासितां कृत्वा स्थितस्य चरणस्य तु।
नमनोन्नमनोपेतं मुहुर्यत्राप्रदक्षिणम्।
शरीरं भ्रमयेत्सा तु कुञ्चितभ्रमरी मता ॥

कुञ्चिताः—चरणाङ्गुल्यः

सङ्कोचात्कुञ्चिता शीतमूर्छात्रासग्रहादिषु।

विप्रदासः

—पादाङ्गुल्यः

सङ्कोचिता यदाङ्गुल्यः कथिताः कुञ्चितास्तदा।
त्रासे ग्रहे च शीतार्तौ नियुज्यन्ते च मूर्छिते ॥

कुञ्चिता—ग्रीवा

निकुञ्चिताकृतिर्ग्रीवा कुञ्चितेत्यभिधीयते।
आत्मनो गोपने मूर्धभारे चैष नियुज्यते ॥

वेमः

ऊर्ध्वे संकुचिते मूर्ध्नि कुञ्चिता गलरक्षणे।

ज्यायनः

—दृष्टिः

अनिकुञ्चितपक्ष्माग्रा पुटैराकुञ्चितैस्तथा।
सन्ना पतिततारा च कुञ्चिता दृष्टिरिष्यते ॥

शारदातनयः

सन्नेति। निश्चेष्टं तारकाभ्रूसंपुटानां सार उच्यते।

ईषत्कुञ्चितपक्ष्माग्रभ्रूपुटा वक्रतारका।
तिर्यङ्निविष्टा या दृष्टिः कुञ्चिता साभिधीयते ॥

विप्रदासः

कुञ्चिता दृष्टिरीर्ष्यायामनिष्टेऽक्षिव्यथासु च ।
तेजोविशेषनिष्प्रेक्षे वस्तुन्यपि च युज्यते ॥

वेमः

**कुञ्चिता**—भ्रूः

मृदुभङ्गा तु येका भ्रूः यद्वा सार्धद्वितीयया ।
भ्रुवा सा कुञ्चिता प्रोक्ता विलासे किलिकिञ्चिते ।
मोट्टायिते कुट्टमिते नियुक्ता सा प्रयोक्तृभिः ॥

अशोकः

**कुञ्चितौ**—पुटौ

कुञ्चितौ तु परिज्ञेयौ पुटौ किञ्चिच्च कुञ्चितौ ।
एतौ स्यातामनिष्टस्य दर्शने स्पर्शगन्धयोः ॥

वेमः

**कुटिकारः**—गायकभेदः

परगीतानुकारं यो ध्वनिचेष्टादिसंयुतम् ।
सम्यक् प्रकुरुते दक्षः कुटिकारः स कथ्यते ॥

सोमेश्वरः

**कुटिलम्**—दर्शनम्

प्रकटभ्रुकुटी दृष्टिर्यत्र तत्कुटिलं विदुः ।

शारदातनयः

**कुटिलः**—वर्णालङ्कारः

यत्राद्यं च स्वरयुगं ततः स्वरयुगं पुनः ।
गीयते स द्विरुक्तान्तं कुटिलः स प्रकीर्तितः ॥

यथा – सरिग्ग रिरिग्गम्म इति क्रमारोहात् गगरिस्स इत्यवरोहादारोह्यवरोही च कुटिलौ । झम्पतालानुगत्वादलंकारत्वम् ।

संगीतसरणिः

**कुटिला**—भङ्गतालः

गचतुष्कं लचतुष्कं द्रुतचतुष्कं एको गुरुः ।

ऽ ऽ ऽ ऽ । । । । ० ० ० ० ऽ

नान्यतुम्बुरू
अभिनवस्य

**कुट्टनम्**—पादचारः

पार्ष्णिना च पदाग्रेण समस्तेन तलेन च ।
यत्ताडनं भूतलं तु कुट्टनं तदुदीरितम् ॥

नाट्यदर्पणे

—चिबुकम्

कुट्टनं द्विजसंघृष्टी रुग्भीशीतज्वरादिषु ।

ज्यायनः

**कुट्टनम्**—दन्तः

कुट्टनं दन्तसङ्घर्षः शीते भीरुग्ज्वरास्त्रिदम् ।

अशोकः

**कुट्टमितम्**—अनुभावः

केशस्तनादिग्रहणे हर्षादप्रतिमे सुखे ।
दुःखाविष्करणं तन्व्या यत्तत्कुट्टमितं मतम् ॥

पद्मश्रीः

प्रियस्य रतिसंभोगे गाढपरिपीडनेषु उद्दामहर्षावेशेन किं पीड्यसि न सहे इति सुखे दुःखाविष्करणं कुट्टमितम् ।

सागरः

भोजस्तु सरस्वतीकण्ठाभरणे एतद्विपरीतं कुट्टमितमाह ।
यथा
केशस्तनाधरादीनां ग्रहाद्दुःखेऽपि यत्पुनः ।
सुखाविष्करणं तन्व्या तत्तु कुट्टमितं मतम् ॥

कुम्भः

केशस्तनाधरादिग्रहणाद् दुःखेऽपि सुखबुद्धिचेष्टा कुट्टमितं इति शृङ्गारप्रकाशे भोजः ।

**कुडुपम्**—पादमणिः

एकस्समस्थितः पादस्तथान्यः पार्श्वयोः क्रमात् ।
दधत्पार्श्वोन्मुखं पार्ष्णिं ताडयेद्यदि भूतलम् ।
तदा कुडुपमाख्यातं देशीनृत्तविशारदैः ॥

वेमः

**कुडुपः**—

पटहादिवादने दण्डोऽथ वा कोणः ।

**कुडुपचारणा**—पाटवाद्यम्

वादनं कुडुपोद्भूतैः पाटैः कुडुपचारणा ।
कोणः कुडुप इत्युक्तो दण्डो वादनकर्मणि ॥

वेमः

नानापाटाक्षरोद्भूतैः शब्दैः कुडुपताडितैः ।
त्रिवृत्याश्चैव गारुग्या कृता कुडुपचारणी ॥

पार्श्वदेवः

**कुडायी**—मेलरागः

कुडायी तीव्रगोपेता चारोहे मनिवर्जिता ।
गान्धारोद्ग्राहसंयुक्ता पञ्चमांशेन शोभिता ॥
धयोरन्यतरेणैव यत्रावरोहणं मतम् ।
गान्धारेण विना सा चाप्यवरोहे क्वचिन्मता ॥

प्रथमप्रहरोत्तरगेया ।

अहोबिलः

**कुडायी**--रागः

त्रिगान्धारा कुडायी स्यात् देशाख्या सायुता ह्युपा ।

मद

देशाख्यसदृशा गेया कुडायी सर्वसम्मता ।

दामोदरः

**कुडुक्कतालः** देशीतालः

स्यातां कुडुक्कताले तु द्वौ द्रौ लौ द्वौ यथाक्रमात् ० ० ॥
सा सा गी ग (जग)

वेमः

**कुण्डनाची**—देशीतालः

दोलदच लविरामश्च दो लघू लविरामकः ।
शरो द्रुतो लघुश्चैको लविरामो द्रुतो मतः ।
शरो विरामसहितः कुण्डनाची प्रशस्यते ॥

० । । ० । । । ० । । ०

वेदः

**कुण्डनाचीतालोडुपम्**—देशीनृत्तम्

स्यात्कुण्डनाची तालस्योडुपं नृत्ये प्रसिद्धकम् ।

वेदः

**कुण्डपायनः**—तानः

मध्यमग्रामे षड्जहीनषाडवः ।

म ग रि नि ध प .

कौण्डपायन इत्यपि नामान्तरं दृश्यते ।

कुम्भः

**कुण्डलम्**—कर्णभूषणम्

अधरपाल्यां धृतम् ।

सोपानक्रमविन्यस्तवज्रपङ्क्तिविराजितम् ।
षडष्टनेमिभिः कान्तं कुण्डलं तत्प्रचक्षते ॥

सोमेश्वरः

**कुण्डलहस्तः**

तर्जन्यङ्गुष्टयोरग्रे वलयाकारवेष्टिते ।
मुष्टिहस्ताख्ययोरेवं कुण्डलाख्यकरः स्मृतः ॥

देवता शक्तिराख्याता विष्णुतेजोमयी सदा ।
विनियोगः कुण्डलेषु विश्रुतः परमेष्ठिना ॥

गौरीमतम्

**कुण्डलिचारः**—चालकः

विलोड्यते यत्र करो वामदक्षिणयोर्यदि ।
गतागते दधद्दिक्षु तिर्यग्व्यावर्तितः पुनः ।
सद्भिरेतत्समादिष्टं तदा कुण्डलिचारकम् ॥

अशोकः

अयं चालकः वेमभूपालेन वैकुण्ठविलास इति उक्तः समानलक्षणेन ।

**कुण्डली**—देशीनृत्तम्

चतुर्विधं तच्च लास्यं कुण्डलीदण्डरासकम् ।
प्रेरणं प्रेक्षणं चेति कुण्डली तेषु शस्यते ॥
शृङ्गाररसभूयस्त्वान्माधुर्यात्सौकुमार्यतः ।
आह्लादकत्वात्सर्वेषामादृतत्वात्सुरैरपि ॥
कुण्डलीं प्रथमं देव्यै महेश्वर उपादिशत् ।
गौरी चाशिक्षयद्दिव्यकामिनीं कुण्डलीं मुदा ॥
तन्नाम्ना तदिदं नृत्यं कुण्डलीं विबुधा विदुः ।
तन्नृत्यं शिक्षितवती शर्वाणी बालकन्यकाम् ॥
सा च गोपाङ्गनानां च गोप्यस्सौराष्ट्रसुन्दरीः ।
ताभ्यः परम्परायातं देशानन्यानुपागमत् ॥
मतङ्गभरताचार्यकोहलाद्यैश्च लक्षितम् ।
यन्नृत्तं ग्रन्थसन्दर्भे विप्रकीर्णं विविच्यते ॥
तदहं सम्प्रवक्ष्यामि कुण्डलीमणिदर्पणे ।
गीतवाद्यमितस्तालश्रुतिभिर्व्यक्तनर्तनम् ॥
मार्गजं देशजं मिश्रमिति तत्त्रिविधं भवेत् ।
मार्गोक्तचारीकरणस्थानकैर्मण्डलादिभिः ॥
अङ्गहारैश्च निष्पन्नं मार्गजं परिकीर्तितम् ।
देशीसमुदितैः पादपाटाङ्गैश्चारिकादिभिः ॥
लास्याङ्गस्थानकैर्नृत्तं देशसंभवमुच्यते ।
एतयोर्मिश्रसञ्जातमन्तर्भूतं तयोरिह ॥
तत्रादौ वाद्यसूडः स्याद्गीतसूडस्ततः परम् ।
नवतालश्च झङ्कारो रिगोणीगण्डकस्तथा ॥
पल्लवश्च चमत्कारः प्रहारश्चेति सप्तभिः ।
प्रबन्धैर्वाद्यसूडः स्याद्गीतसूडुरथोच्यते ॥
ध्रुवो मठयो प्रतिमठो लम्बको रासकस्तथा ।
अटताल्येकताली च गीतसूडश्च सप्तभिः ॥
सूडुद्वयं च मिश्राख्यं कुण्डल्यां समुदीरितम् ।
यथारुचि तयोरन्ते तत्तज्जातीयमश्रितम् ॥

वादनीयं प्रगातव्याः प्रवन्धाश्चित्तहारिणः।
एतेषु नर्तनीयाः स्युः पादपाटाङ्गताहवः॥
चारिकाकरणस्थानमण्डलभ्रमरीकराः।
अङ्गहाराः शिरोभेदाः लास्याङ्गानि च दृष्टयः।
क्रमलक्षणमेतेषां सोद्देशं प्रतिपाद्यते॥

कुण्डलीमणिदर्पणम्

**कुण्डलीभूषणम्**

अस्य कर्ता न ज्ञायते। ग्रन्थः प्रौढो लघुश्च। इतः परं न ज्ञातम्।

**कुण्डलीमणिदर्पणः**

लघुरयं ग्रन्थः। कुण्डलीनृत्तं पुष्पाञ्जलिं चाधिकृत्य प्रवृत्तो यम्। वर्षशतद्वयात्पूर्वं स्यादिति तालकोशवयसा ज्ञायते।

**कुतपः—**

संफेटकगायनवादकसमूहः। कुः नाट्यभूमिः। तं तपति। उज्वलयतीति कृत्वा। कुतं शब्दं पातीत्यन्ये। प्रत्याहारशब्दे द्रष्टव्यम्।

अभिनवः

**कुतुकी**—देशीतालः

चतुर्द्वन्द्वी तु लद्वयोस्ताले स्यात्कुतुकी।
।०।०।०।०

कुम्भः

**कुतूहलम्**—शृङ्गारचेष्टा

अनुरागकाल एव प्रियतमोपसर्पणं कुतूहलम्। यथा—
परावत इवानङ्गमोहिते कूजति प्रिये।
पश्य कौतुकिनी जाया समीपमुपसर्पति॥

कुम्भः

इष्टे वस्तुन्यविज्ञाते स्वरूपेण न्यधावहम्।
तदीप्सया पुनः पुंसां व्याकुलत्वं कुतूहलम्॥

भावविवेकः

**कुद्दालकः**—देशीतालः

मगणः प्लुतलौ यत्र सोऽयं कुद्दालकाह्वयः।
१० मात्राः।

तालप्रस्तारः

**कुन्तः**—दशतालप्रमाणमायुधम्

**कुन्तलः**—गीतालङ्कारः (ध्रुवभेदः)

पादैष्षोडशभिर्वर्णैः कुन्तले लघुशेखरः।
इष्टार्थदस्सौख्यदः स्यादद्भुताख्यरसान्वितः॥
लघुर्गुरुर्भवेद्यत्र —

संगीतसारः

—मेलजन्यः (कान्तामणिमेलजन्यः)

(आ) स रि ग म प ध नि ध स.
(अव) स नि ध प म ग म रि स.

मज

**कुन्तलवराटी**—उपाङ्गरागः

मन्द्रषड्जवती भूरिनिषादस्वरशालिनी।
कौन्तली गीयते नित्यं रतौ कम्पितधैवता॥
रतौ शृङ्गारे।

मद्दमाधवः

—रागः

निषादबहुला पूर्णा षड्जमन्द्रा च ताडिता।
शृङ्गारे विनियोगः स्यात् सा कुन्तलवराटिका॥

जगदेकः

**कुन्तली वराटी**—प्रथमरागः

वराटी कुन्तलीचिह्ना ललिता भूरिसप्तमा।
षड्जन्यासग्रहांशा स्यान्मन्द्रषड्जविराजिता॥

मोक्ष

—रागः

अथ कुन्तलपूर्वो या वराटी सा तु कथ्यते।
निषादबहुला पूर्णा षड्जमन्द्रा तथोदिता॥

हरिः

**कुन्तलवराली**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स म प ध नि ध स.
(अव) स नि ध प म स.

मज

**कुन्तलसारः**—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) नि स रि ग म प ध नि.
(अव) ध प म ग रि स नि ध नि स.

मज

**कुन्दः**—गीतालङ्कारः (प्रतिमठ्यभेदः)

द्रुतमेकं भवेद्यत्र स तालः खण्डसंज्ञकः।
द्रुतलयेन गातव्यः कुन्दश्च प्रतिमठ्यकः।

संगीतसारः

कुन्दः—देशीतालः

कुन्दाद्विन्दुलयं पश्चाद्लौ मो दौ लघुर्भवेत् ।
० ० ० ० । S S S ० ० ।

लक्ष्मणः

—वर्णालङ्कारः

त्रयः स्वराः कला यत्र तदीयाद्यं स्वरं पुनः ।
गीत्वान्याः क्रियते तादृक् तद्ज्ञैः कन्दः स कथ्यते ॥

यथा—स रि ग रि ग म इति क्रमारोहणात् ग रि स म ग रि इति व्युत्क्रमावरोहणाच्च आरोह्यवरोही च कन्दः । त्रिपुटतालानुगत्वेनालङ्कारत्वम् ।

कुन्दः कन्द इति पाठान्तरम् ।

संगीतसरणिः

कुन्दचतुर्थी—संगीतशृङ्गाराङ्गम्

यस्यां यवसंस्तरेपु अबलालोकिनी निशा सा कुन्दचतुर्थी ।

भोजः

कुन्दमालिका—मेलरागः ( खरहरप्रियामेलजन्यः )

( आ ) स रि ग प ध नि स.
( अव ) स नि ध प म ग रि स.

मञ्ज

कुब्जभ्रमरी—भ्रमरी.

मण्डलस्थानके स्थित्वा शरीरं कुब्जतां नयेत् ।
स्थितस्याङ्घ्रेः पुरो न्यस्येत्पादमुद्यम्य कुञ्चितम् ।
यत्र सा कथिता कुब्जभ्रमरी वेमभूभुजा ॥

वेमः

कुब्जविराजः—मेलरागः ( वाचस्पतिमेलजन्यः )

( आ ) स रि ग म प ध नि स.
( अव ) स ध प म रि स.

मञ्ज

कुमारद्युतिः—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

( आ ) स ग म नि ध नि स.
( अव ) स नि ध प रि स.

मञ्ज

कुमारलीला—मेलरागः ( नटभैरवीमेलजन्यः )

( आ ) स म प ध नि प नि स.
( अव ) स नि ध म ग रि स.

मञ्ज

कुमाररञ्जनी- मेलरागः ( नटभैरवीमेलजन्यः )

( आ ) स रि ग म प ध नि स.
( अव ) स ध प ग रि स.

मञ्ज

कुमारी

अप्राप्तरतिसंभोगा असंभ्रान्ता अनुद्भटाः ।
निभृता यास्सलज्जाश्च ताः कुमार्य इति स्मृताः ॥

भरतः

कुमुदः—देशीतालः

लघुर्द्रुतौ लगौ स्यातां ताले कुमुदसंहिते । । ० ० । S

अयमेव कुमुन्द इति नन्दी । वेमः

—देशीतालः

लौ दौ लगौ च कुमुदोऽथवा लौदौ द्रुतौ गुरु—
। । ० ० । S S अथवा । । ० ० ० ० S

कुम्भः

—मेलरागः

नाटमेलसमुद्भूतो रागः कुमुदसंज्ञकः ।
आरोहणे मवर्ज्योक्तो गान्धारोद्ग्राहशोभितः ॥

सायं गेयः । अहोबिलः

कुमुदकम्—मालावृत्तम्

चतुर्मात्रिक एकः पञ्चमात्रिकौ द्वौ भ ग ।

विरहाङ्कः

कुमुदक्रिया—रागः

अंशग्रहगान्धारा सपधपरित्यक्ता ।
कुमुदकृतिरिति हि कथिता ।
मिथिलानाथेन ललितगमकाद्या ॥

नान्यः

निषादतारगान्धारग्रहांशा सध्पवर्जिता ।
कुमुदकृतिर्विज्ञेया गमकैर्ललितैश्च संयुक्ता ॥

याष्टिकः

कुमुदप्रभा—द्वादशाक्षरवृत्तम्

रयनयाः अथवा—नयरयाः ।

भरतः

वृत्तमिदं कुमुदनिभा कुमुदवती इत्यपि वदन्ति ।

कुमुदप्रभा—मेलरागः ( कामवर्धिनीमेलजन्यः )

( आ ) स रि ग ध नि स.

( अव ) स प म ग रि स.

मञ्ज

कुमुदवती—ध्रुवावृत्तम् ( पञ्चदशाक्षरम् )

आद्यचतुर्थे पञ्चमषष्ठे नवमदश-
मन्त्यतमं चेद्यत्र तु दीर्घं भवति पुनः।
सा खलु बोध्या पञ्चदशाख्ये कुमुदवती
भूतलतन्वीवृत्तविधाने त्वमिविहिता ॥

वायदि वादो चंडपवाही गगणतले। (वाति वातो चण्डप्रवाही गगनतले। )

भम स भ साः ॥

कुमुद्वतीषु हीनेषु प्रयोज्या तु कुमुद्वती।
चतुरश्रद्वयं चाचपुटोऽन्ते पञ्चमेन तु ॥

पञ्चमेन। पञ्चमरागेण ॥

नान्यः

कुमुदिनी—ध्रुवावृत्तम् ( दशाक्षरम् )

दीर्घाणि ह्यथ निधनगतं त्रीणि स्युर्यदि चरणविधौ।
ज्ञेया सा कुसुमसमुदिता पङ्क्तिश्चेद्भवति कुमुदिनी ॥
आदौ लघुत्रयं दद्याद् गुरुरन्ते व्यवस्थितः।
चच्चत्पुटः कुमुदिनी शेषाष्षट् च द्रुता मताः ॥
उत्तमानां प्रवेशेषु शृङ्गाररससंभवे।
प्रयोजयेत्कुमुदिनीं रागे मालवकैशिके ॥

सोसन्तो पियरहिय जणम्। ( शोषयन्प्रियरहितजनम् )

नान्यः

—मात्रावृत्तम्

चतुर्मात्रिकास्त्रयः जः चतुर्मात्रिक एकः गुरुः।

विरहाङ्कः

कुमुदक्री—क्रियाङ्गरागः

न लक्षितेऽप्रसिद्धत्वात्कुमुदक्री शिवक्रिये।

कुम्भः

कुमुद्वती—श्रुतिः

षड्जे द्वितीया श्रुतिः।

कुम्भः—देशीतालः

पञ्चलादौ त्रयो लादौ दोलौ निश्शब्दलत्रयम्।
कुम्भताले द्रुताग्रस्थो निश्शब्द उभयत्रलम् ॥

२० मात्राः। तालप्रस्तारः

कामबाणद्रुता यत्र करजाख्यस्ततः परम्।
दविरामो लघुश्चैको विन्दुश्चार्धद्रुतो भवेत् ॥
दविरामो लघुद्वन्द्वं द्रुतो लघुविरामवान्।
कम्भताल इति प्रोक्तस्तालविद्याविशारदैः ॥
० ० ० ० ० ‿ ०̍ । ० ‿ ० ०̍ ॥ ऽ̍ ।

दामोदरः

कुम्भतालः—चित्रतालः

दषट्कं च लघुद्वन्द्वं द्रुतद्वन्द्वं लघुत्रयम्।
द्रुतो लघुश्च कथ्यन्ते कुम्भताले मनीषिभिः ॥
० ० ० ० ० ० ॥ ० ० । । । ० ।

मात्राः १० विषमयतिः द्विकला।

ताललक्षणे

कुम्भभ्रमरी—भ्रमरी

उत्कटस्थानमास्थाय पादाग्रेण महीं स्पृशन्।
कुलालचक्रविन्यस्तकुम्भभ्रमणविभ्रमात्।
शरीरं भ्रामयेद्यत्र सा कुम्भभ्रमरी भवेत् ॥

वेमः

कुम्भसंभवः—देशीतालः

गुरुणा कुम्भसंभवः। ऽ लक्ष्मणः

कुम्भहस्तः

पद्मकोशाभिधौ हस्तौ स्पृष्टाङ्गुष्ठकनिष्ठिकौ ॥
कुम्भराशौ प्रयुज्येत भरतार्णववेदिभिः ॥

शृङ्गार

कुरङ्गः—मेलरागः

रिस्तु तीव्रतरः प्रोक्तो मस्तु तीव्रतरो भवेत्।
अतितीव्रतमो गः स्यान्निस्तीव्रः स्यात्कुरङ्गके ॥

सायं गेयः। अहोबिलः

कुरङ्गनाटरागध्यानम्

भल्लायुधतिरोधानधारिणं पादचारिणम्।
कुरङ्गनाटरागाख्यं भजामि हृदि सन्ततम् ॥

रागसागरः

कुरञ्जी—मेलरागः ( शङ्कराभरणमेलजोऽयं रागः )

कुरञ्ज्यामवरोहे तु धैवतं वर्जयेत्पुनः।
सर्वत्र श्रुतिराहित्यं स्थायिभेदेऽपि सम्मतः ॥

परमेश्वरः

कुरञ्जी—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

(आ) स ग रि ग म प ध.

(अव) स म ग रि स नि स.

मज

—रागध्यानम्

गौराङ्गीं चन्द्रवदनां सखीं प्रति सुभाषिणीम्।
चलदायतनेत्रां तां कुरञ्जीं संस्मराम्यहम् ॥

कुरङ्गीति नामान्तरम्।

रागसागरः

कुरुञ्जीकट्टरम्—देशीनृत्तम्

सुवर्णपेटिकां वामहस्ते धृत्वा मनोरमाम्।
कपर्दं तत्र निक्षिप्य प्रश्नवाक्यप्रदर्शनम् ॥
यष्टिकं दक्षहस्ते च जटाभारं च मस्तके।
अलङ्कृता सा कुर्वञ्जी रङ्गमध्ये प्रविश्य च ॥
सचतुष्काराणि खण्डानि सदासंख्यानि गायति।
साभोगानि सतालानि पदभावयुतानि च।
पूर्वकट्टरवत्सर्वं कुरुञ्जी कथिता बुधैः ॥

पूर्वकट्टरमिति वङ्गालीकट्टरम्।

वेदः

कुरुदेश्यम्—मेलरागः ( मेचकल्याणीमेलजन्यः )

(आ) स रि ग म ध नि स.

(अव) स नि ध म ग रि स.

मज

कुलकम्—मात्रावृत्तम्

पञ्च गाथाः। विरहाङ्कः

—गीतच्छेदः

तत्रावान्तरवाक्यानां प्रबन्धार्थसमन्वयात्।
सति वाक्यैकवाक्यत्वे कुलकं कथितं बुधैः ॥

वेमः

कुलः—देशीतालः

द्रुतो लघुद्रुतौ लश्च द्लौ द्रुतद्वयं तथा।
कुलताल इति प्रोक्तस्तालज्ञैः पूर्वसूरिभिः ॥

०।०।०।००।०००।००००।

दामोदरः

—तालः

दलौ दलौ दलौ द्रुतौ लदौ द्रुतौ द्रुतो लघुर्यदाभवेत्स कुलताल ईरितः। ०।०।०।००।०००।००००।

वेदः

कुलीरिका—देशीचारी

नन्द्यावर्ताभिधे स्थाने स्थितौ तिर्यक् प्रसर्पितौ।
चरणौ यत्र तां चारीं कथयन्ति कुलीरिकाम् ॥

वेमः

कुवलप्रिया—मेलरागः ( मेचकल्याणीमेलजन्यः )

(आ) स रि म प नि स.

(अव) स नि प म ग रि स.

मज

कुवलयमाला—दशाक्षरच्छन्दः

उत्पलमालिकाया नामान्तरम्।

—दशाक्षरवृत्तम्

मनयगाः। भरतः

उत्पलमालेति नामान्तरम् ॥

कुविन्दः—देशीतालः

नो द्वौ गपौ कुविन्दः स्यात् ।००ऽऽ́

कुम्भः

कुशली—देशीतालः

कुशली स्यात्प्लुतैकेन। ऽ́ लक्ष्मणः

कुसुमजा—मेलरागः ( नटभैरवीमेलजन्यः )

(आ) स ग म प नि ध स.

(अव) स ध प म रि स.

मज

कुसुममारुतम्—मेलरागः ( सूर्यकान्तमेलजन्यः )

(आ) स म प ध नि स.

(अव) स नि ध प म ग रि ग म स.

मज

कुसुमरञ्जनी—मेलरागः ( झलवरालीमेलजन्यः )

(आ) स रि म प ध नि स.

(अव) स नि ध नि प म ग रि स.

मज

कुसुमवती—ध्रुवावृत्तम्

सुकुमारेति नामान्तरमस्या अस्ति। सुकुमारा शब्दे द्रष्टव्यम्।

कुसुमवाद्यम्

मतान्तरे—

द्वादशाङ्गुलविस्तीर्णं ग्रन्थिरन्ध्रादिवर्जितम्।
रक्तचन्दनजं दारु सुषिरद्वयशोभितम् ॥

रागप्रसृत्यै कुसुमं चाग्रे निक्षिप्य वादयेत् ।
दण्डेऽधिदेवता वाणी कुसुमे कुसुमायुधः ।
सुषिरे देवता स्कन्दः मुखवीणा त्रिदेवता ॥

चिकः

**कुसुमावली**—मेलरागः ( जलार्णवमेलजन्यः )

( आ ) स रि ग म प ध स.
( अव ) स नि ध प म ग रि स.

मज

**कुहरः**—वादनम् ( उभयहस्तव्यापारः )

करस्य किञ्चित्साङ्गुष्ठसकलाङ्गुलिकुञ्चने ।
कनिष्ठाङ्गुष्ठसंस्पर्शस्तन्त्र्याः स्यात्कुहरः करः ॥

शार्ङ्गः

—वीणायामुभयहस्तव्यापारः

साङ्गुष्ठाङ्गुलयो यत्र किञ्चिदाकुञ्चितीकृताः ।
कनिष्ठाङ्गुष्ठसंस्पर्शात् तन्त्र्याः कुहर उच्यते ॥

कुम्भः

**कूचिमारपुरुषाभिनयः**

उरस्थले अरालहस्तधारणेन कर्तव्यः ।

महाराष्ट्रे

**कूचिमारहस्तः**

अरालो वक्षसि स्थायी कूचिमारे विशिष्यते ।

शृङ्गारः

**कूटकारः**—गायकभेदः

कुटिकार एव कूटकारः ।

**कूटतानः**

कूटतानाः क्रमत्यागात् व्युत्क्रमोच्चारितस्वराः ।
तानशब्दे द्रष्टव्यम् । पण्डितमण्डली

**कूणितौ**—ओष्ठौ

मुकुलौ तिर्यगावृत्तौ कूणितौ गदितौ बुधैः ।
अमर्षे रोदने स्त्रीणां विनियुक्तिस्तयोर्मता ॥

सोमेश्वरः

**कूरेशः**—मेलरागः ( मेचकल्याणीमेलजन्यः )

( आ ) स रि ग म प नि स.
( अव ) स नि ध प म रि स.

मज

**कूर्पासलक्षणम्**

अहो मार्गस्य नृत्तस्य मध्ये दृष्टोर्ध्वताण्डवम् ।
कालीलज्जान्विता जाता तस्यां गीर्वाणसंसदि ॥
स्त्रीभिः कथमिदं नाट्यं कर्तुं संसदि शक्यते ।
इति सञ्चिन्त्य भरतः कूर्पासं पञ्चधाकरोत् ॥
जघनान्तं चोरुमध्यं जान्वन्तं मध्यजानुकम् ।
आगुल्फं सपुरोवस्त्रं किङ्किणीजालसंयुतम् ॥
पट्टसूत्रेण संबध्वा धार्यं स्त्रीभिश्च संसदि ।
अर्धोरुजघनान्तं च पुरुषाणां प्रशस्यते ॥
प्रायः स्त्रीभिर्धार्यमेतत्पुंवेषे नृत्तकर्मणि ।
शुद्धदेश्याख्यनाट्ये च बहुचार्यां तथैव च ।
सङ्कीर्णे मार्गसंकीर्णे शस्तमागुल्फगं क्रमात् ॥

नन्दी

**कूर्मतालः**—चिल्तालः

लोदो लोदौ लघुर्दाश्च लश्च कूर्माभिधेयकः ।
। ० । ० ० । ० ० ० ।
मात्राः ६ एककला विषमयतिः ।

ताललक्षणे

**कूर्मबन्धः**—नृत्तबन्धः

आद्यपङ्क्तेरादिपदस्थिता यत्र च नर्तकी ।
तद्द्वितीयं द्वितीयायाः तृतीयं च चतुर्थकम् ॥
ततस्तृतीयपङ्क्तेश्च चतुर्थं च तृतीयकम् ।
तुरीयाया द्वितीयं च प्रथमं च पदक्रमात् ॥
व्रजेदन्या तु पूर्वस्याः पङ्क्तेस्तुर्यं पदं श्रिता ।
क्रमेण शेषस्थानेषु तथा विनिमयाद् भ्रमेत् ।
कूर्मबन्धं समाचष्टे कोमटीश्वरनन्दनः ॥

वेमः

**कूर्महस्तः**

शुकतुण्डे चोन्मुखेऽस्मिन् शुकतुण्डमथोमुखम् ।
निधाय चोभयोरङ्गुष्ठे कनिष्ठे प्रसारयेत् ।
कूर्महस्तः कूर्मरूपी देवोऽत्र विनियोगभाक् ॥

गौरीमतम्

कुञ्चिताग्राङ्गुलिश्चक्रे त्यक्ताङ्गुष्ठकनिष्ठकः ।
कूर्महस्तस्स विज्ञेयः कूर्मार्थे विनियुज्यते ।
पुरोभागे त्वयं हस्तः कूर्मार्थे विनियुज्यते ॥

विनायकः

**कूर्मा**—वीणा

कच्छप्या नामान्तरम् ।

कूर्मा—वीणाजातिः

वक्रा, कूर्मा, अलाबुः – इति त्रयो जातयः।

कूर्मादिध्रुवा—

शृणु देवि त्वया पृष्टं ध्रुवालक्षणमुत्तमम्।
ध्रुवाविज्ञानमात्रेण फलमिष्टमवाप्नुयात्॥
ध्रुवाः षोडश पाताले कम्बलाश्वतरोदिताः।
कूर्मरूपं जलबिन्दुः वायुभेदं विलम्बितम्॥
रक्तकायं महाश्वेतं हेमवर्णसुभाषितम्।
जयरूपं महाकालं पञ्चमं सोमभूषणम्॥
रक्तवक्त्रं जगन्नाथं गरलं षोडश ध्रुवाः।
त्रयस्त्रिंशाक्षरारंभं द्व्यूनपञ्चाशदन्तिमम्॥
कूर्मरूपादिवृद्धिः स्यात्स्वरनामं च कथ्यते।
अयुतं मोहनं मध्यं जनमोहं च षड्जकम्॥

अन्तश्चक्षुश्च सर्वज्ञः ऋषभोऽष्टस्वरः स्मृतः।
शृङ्गारहास्यकरुणवीररौद्रभयानकाः।
क्रोधो बीभत्समित्येते स्वराणां क्रमशो रसाः॥

उमापतिः

कूर्मालगम्—उत्प्लुतिकरणम्

अलगं चरणं कृत्वा यदि कूर्मासनं भजेत्।
तदा कूर्मालगं नाम करणं तद्विदां मतम्॥

वेमः

कूर्मासनम्—देशीस्थानम्

जान्वभ्यन्तरगुल्फाभ्यां पृष्ठतोऽङ्घ्रिः स्पृशेन्महीम्।
अन्यः कुञ्चितपादश्चेत्पुरः कूर्मासनं तदा॥

ज्यायनः

कृतकृत्यः

शब्दस्कन्धो नयो धर्म आत्मा विद्या च पञ्चमः।
कृतकृत्यस्य विज्ञानं कृती तद्वान्नरः स्मृतः॥

भावविवेकः

कृतप्रतिकृतम्—करणम्

एतत्कृतप्रतिकृतं पश्चात्प्रत्यङ्गवादने।

शार्ङ्गः

—अवनद्धे करणम्

यत्रैकं करणं स्यात्तु पुष्करत्रयगोचरम्।
अन्यैस्तस्यानुकरणं पणवाद्यैरनन्तरम्॥
वादितेषु मृदङ्गेषु पणवेन यतश्च तत्।
यदनुक्रियते तत्तु कृतप्रतिकृतं भवेत्॥

नान्यः

कृतप्रतिकृतम्—वीणाकरणम्

रूपं विधाय तदनु यत्र तदङ्गेन वाद्यते।
प्रत्यङ्गं नकुलाद्याख्यं कृतप्रतिकृतं तु तत्॥

कुम्भः

अत्र कालसाम्यानियमात्कृतप्रतिकृतिः। रूपकरणे यौगपद्य-सावश्यकम्।

कृतिः—निर्वहणसन्ध्यङ्गम्

लब्धस्य परिपालनं क्षेमः कृतिः।

यथा – अय्यवुत्तेति वासवदत्तावाक्येन लब्धाया रत्नावल्याः स्थिरीकरणं। अन्ये पुनरन्य स्थाने प्राप्तस्य प्रातिकूल्यशमनं द्युतिमाहुः। अपरे तु क्रोधादेः प्राप्तस्य शमनं द्युतिमामनन्ति। यथा – वेण्यामन्ते भीमेन द्रौपद्याः क्रोधोपशमः।

रामचन्द्रः

कृतिर्लब्धार्थ संरक्षा।

सर्वेश्वरः

द्युतिशब्दे द्रष्टव्यम्।

कृतिश्छन्दोवृत्तानि

कृतिः शतसहस्राणि दशप्रोक्तानि संख्यया।
चत्वारिंशत्तथाष्टौ च सहस्राणि शतानि च।
पञ्चषट्सप्ततिश्चैव वृत्तानां परिमाणतः॥ १०४८५७६.

भरतः

कृतिप्रतिकृतम्—पुष्करे करणम्

यत्रैकं करणं त्रिपुष्कर इत्युद्भावयति यथा
दं खु खुणक्रमस्थिमदां नेठोटकितोटमत्थिमाणक्रं।
गुरुखेकिहुले दोहजं दो प्रो धो धो ण खे वाद्यम्॥

भरतः

कृतोद्धता—ध्रुवावृत्तम् ( दशाक्षरम् )

त्रीण्यादौ तु गुरूणि यदा स्युः षष्ठं चान्त्यमुपान्त्यतमं च।
सा ज्ञेया खलु पादविधाने पङ्क्तिरसा तु कृतोद्धतनाम्ना॥
( म स स ग गाः ) विज्जुज्जा य खणंतरदीर्घं।

भरतः

चतुर्थः पञ्चमश्चैव सप्तमोऽष्टम एव च।
द्रुताः षड्गुरवश्शेषः द्रुतेयं चतुरश्रजः॥
मध्यमाधमभूतानां युद्धवार्तानिवेदने।
वीररौद्राद्भुतो गेया चित्रपञ्चमभाषयोः॥

नान्यः

द्रुतेयं। इयं ध्रुवा द्रुतजातिगता॥

कृतोद्धता—ध्रुवावृत्तम्

त्रीण्यादौ तु गुरूणि यदा स्युः षष्ठं चान्त्यमुपान्त्यतमं च ।
सा ज्ञेया खलु पादविधाने पङ्क्तिस्सा तु कृतोद्धतनाम्ना॥
उप्पादे दिव हत्थिसमूहम । ( उत्पातेनेव हस्तिसमूहम । )

भरतः

कृत्तिकाभिनयः

उभयहस्तयोः त्रिपताकहस्तेन कर्तव्यः ।

महाराष्ट्रे

कृत्तिकाहस्तः

चलितस्त्रिपताकस्स्यात्कृत्तिकाया निरूपणे ।

भरत

कृशः कृशता—वंशे फूत्कारदोषः

कृशः कार्श्यात्प्रकीर्तितः ।

कुम्भः

कृष्णदत्तः

अस्य ग्रन्थस्य नाम न ज्ञातः । परं तु तन्मतमेव सङ्गीतसरणौ (नारायणकृते) गीतप्रकाशे च प्रमाणत्वेनोदाहृतं। तस्मादयं कृष्णदत्तः षोडशशतकात्प्राचीन इत्यूह्यते । अयमौड्रीयो वङ्गो वा स्यात् ।

कृष्णावतरणम्—करणम्

चारीं दिगन्तरालाख्यां पार्श्वगेणाङ्घ्रिणा व्रजन् ।
शकटास्याख्यया चार्या धुतेन शिरसा ततः ॥
शोभते वीरदृष्ट्या यत्किञ्चिदुत्प्लुतिपूर्वकम् ।
कृष्णावतरणं तत्स्याल्लक्ष्मणार्येण भाषितम् ॥

लक्ष्मणः

टीका– मङ्गलारम्भमिति तलपुष्पपुटं मङ्गलान्तं गङ्गावतरणं च महेश्वरस्य ताण्डवविधानानां करणानां भरतमुनिना लक्षितम् । कृष्णावतरणकरणेन गङ्गावतरणानन्तरोक्तेन मङ्गलतोद्देशो विध्वस्तो भवति । कृष्णावतरणमिति कृष्णरायस्य वीरावतारो द्योत्यते । स तु महाताण्डवक्रियास्वसङ्गतमेव । प्रेक्षकाणां शुभावहो पुष्पाञ्जलिनारम्भः अमृतप्रायसलिलाया अवतारेण मङ्गलान्तोऽपि समुचितः ।

कृष्या—क्रिया ( तालाङ्गम् )

क्रियाशब्दे द्रष्टव्यम् ।

केतुहस्तः

मुष्टिलाभाङ्कितो हस्तः पुंखितोरस्समाश्रितः ।
केतोरर्थे मल्लयुद्धे युज्यते नाट्यवेदिभिः ॥

भरतार्णव

केदारः—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

( आ ) स म ग म प नि स.
( अव ) स नि प म ग रि स.

मल्ल

—मेलरागः ( शङ्कराभरणमेलजोऽयं रागः )

केदाररागे धैवं तु वर्जयेदेव सर्वतः ।
धैवं धैवतः । सर्वतः । आरोहावरोहयोः ।

परमेश्वरः

—मेलकर्ता

यदा समपगाश्शुद्धाः निश्शुद्धा षड्जमध्यमौ ।
पताग्रौ रागकेदारमेलः प्रोक्तस्तथा बुधैः ॥
निषादत्रयसंयुक्तः केदारो वा रिपोज्झितः ।
धीरैः प्रगीयते सायं काकलीस्वरभूषितः ॥

श्रीकण्ठः

केदारगौडः—रागः

केदारे रिपहीनस्स्यात् गौडो निविः सुरागजः ।
रागजः – रागाङ्गभवः ॥

मद

केदारगौलः—मेलरागः ( काम्भोजीमेलजोऽयं रागः )

केदारगौलस्सङ्गत्या भेदाद्यदुकुलोपमः ।
यदुकुलः । यदुकुलकाम्भोजी ।
सङ्गत्या । स्वरयोः संगमेन ॥

परमेश्वरः

—मेलरागः

अथ केदारगोलः स्यात्तीव्रगान्धारसंयुतः ।
रजनीमूर्छनायुक्तो रिपयोगेन मण्डितः ।
तथैव मपयोगेन पञ्चमांशेन शोभितः ॥
तृतीयप्रहरोत्तरगेयः ॥

अहोबिलः

**केदारगौलः**—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

( आ ) स रि म प नि स.

( अव ) स नि ध प म ग रि स.

मञ्ज

**केदारनाटः**—मेलरागः

अथ केदारनाटेऽस्मिन्नारोहे रिधवर्जिते।
सादिमे च गनी तीव्राववरोहे धगोज्झिते॥

सायं गेयः॥ अहोबिलः

**केदारगौलरागध्यानम्**

सखीपदाग्रे स्वपदाग्रयोजिनीं तथा कराग्राणि विपर्ययाणि।
ईषत्तिरश्चीनकृताङ्गरेखां केदारगौलां मनसा स्मरामि॥

रागसागरः

**केदाररागध्यानम्**

गङ्गाधरः सुन्दरचन्द्रमौलिः भुजङ्गमोद्भासुरयज्ञसूत्रः।
ध्याने निविष्टो धृतयोगपीठः केदाररागो जटिलो विभाति॥

श्रीकण्ठः

**केदारिकारागध्यानम्**

जयं दधाना सितचन्द्रमौलिर्नागोत्तरीया धृतयोगपट्टा।
गङ्गाधरध्याननिमग्नचित्ता केदारिका दीपकरागिणीयम्॥

दामोदरः

**केदारी**—रागः

केदारी रिधहीना स्यादौडवा परिकीर्तिता।
निषया मूर्छना मार्गी काकलीस्वरमण्डिता॥

दामोदरः

—मेलरागः

गनी तीव्रौ तु केदार्यां रिधौ न स्तोऽथ गादिमा।

तृतीयप्रहरोत्तरगेयः॥ अहोबिलः

**केदारीरागध्यानम्**

शिवालयपुरोभागवासिनीं रुचिरांबराम्।
शुकपुस्तकपाणिं तां ध्याये केदारिकां सदा॥

रागसागरः

**केयूरम्**

कूर्परस्योर्ध्वतः भूषणम्।

**केशबन्धवर्तना**

केशबन्धाभिधौ हस्तौ निर्गतौ केशदेशतः।
विचित्रवर्तनायोगादेकधातः क्रमाहतौ।
वर्तितौ तत्र यत्रासौ केशबन्धाख्यवर्तना॥

अशोकः

**केशबन्धौ**—नृत्तहस्तौ

उत्तानितौ मुखाध्वेन विचित्रौ स्कन्धदेशतः।
निष्क्रान्तौ पूर्ववच्चैतौ केशबन्धावुदाहृतौ॥

ज्यायनः

पूर्ववदिति पल्लवहस्तलक्षणं परामृश्यते।

पताकौ त्रिपताकौ वा केशदेशाद्विनिर्गतौ।
अस्पृशन्तौ करौ पार्श्वौ पार्श्वदेशसमुत्थितौ॥
उत्तानोधोमुखश्शश्वत् निक्षिप्योपशिरस्थितौ।
पृथगुत्तानितौ चेत्तौ केशबन्धौ तथोदितौ॥

अशोकः

**केसरावती**—मेलरागः ( सूर्यकान्तमेलजन्यः )

( आ ) स रि ग म प ध नि स.

( अव ) स ध प ग रि स.

मञ्ज

**केसरावलोकः**- मेलरागः ( हेमवतीमेलजन्यः )

( आ ) स रि म प ध स.

( अव ) स नि ध प म ग रि स.

मञ्ज

**केसरी**—मेलरागः

आ – स ० रि ० ग म ० प ० ध ० ० स.

अव– स नि ० ध ० प ० म ग ० रि ० स.

मेललक्षणे

**कैकुटी**—वाद्यम्

शुकवक्त्रः स्फुरितको घोषः स्यादर्धकर्तरी।
क्रमादेते करा यत्र तामाहुः कैकुटीं बुधाः॥

शार्ङ्ग

—वीणावादनप्राणः

कैकुटी सा तु विज्ञेया यत्र ते क्रमतः कराः।
शुकवक्त्रः स्फुरितको घोषः स्यादर्धकर्तरी॥

कुम्भः

सुखेन स्फुरितेनापि निर्घोषेण च पाणिना।
संयुक्तं चार्धकर्तर्या कैकुटीवादनं विदुः॥

पार्श्वदेवः

**कैमुरिः**—पुष्पाञ्जलिभागः

कलामातनुते वर्णैर्विज्ञेया सा कलासिका।
आदौ तालध्वनिर्धातुरिछा या कैमुरिस्स्मृता॥

नन्दी

कैरश्रीः—मेलरागः ( नीतिमतीमेलजन्यः )

(आ) स रि ग म प ध नि स.
(अव) स नि प म ग रि स.

मज

कैलासवीणा

इयमेव कपिलासिकेत्यूह्यम् । तल्लक्षणमुक्तमन्यत्र । इयं सकलनाम्नि वाद्ये गणिता भवति ।

कैवाडः—प्रबन्धः

पाटैर्बहुविधैर्भव्यैस्तालेन च समन्वितः ।
वर्ण्यनामसमोपेतः कैवाडः परिकीर्तितः ॥

सोमेश्वरः

कैवारम्— नृत्ते बन्धः

(चतसृणां पङ्क्तीनां) चक्राकारप्रचारस्तु कैवारमिति कथ्यते ।

कैवारः – कैवाडः—प्रबन्धः

स तालैर्हस्तपाटैश्च गेयः कैवाडको बुधैः ।
सार्थैर्निरर्थकैर्वाऽपि सोऽयं पाटो द्विधा मतः ॥
पाटैरशुद्धैश्च मिश्रैश्च शुद्धमिश्राविति द्विधा ।
आभोगोऽन्यपदैः कार्यः कैवाड इति कीर्तितः ॥

हरिपालः

कैशिकः—रागः

षड्जाख्यस्वरसंशकग्रहपदं धत्ते भवेन्मध्यमो
न्यासस्थानगतस्सवो वृषभकोपन्यासवान्कैशिकः ।
शृङ्गारस्सकलस्वरैरुपचितो गान्धारकाख्यस्वर-
स्स स्यात् सप्तमकस्वरेण यदि च प्रव्यक्तयुक्तस्वनी ॥

नान्यः

षड्जांशो मध्यमन्यासः कैशिकीजातिसंभवः ।
तथा कार्मारवीजातस्संपूर्ण इति कैशिकः ॥

मतङ्गः

अन्तरस्वरसंयुक्ता काकली यत्र दृश्यते ।
कश्यपः कैशिकीं प्राह मध्यमग्रामसंभवाम् ॥

नारदः

—रागः

कार्मारवीकैशिकाभ्यां सृष्टस्स्याच्छुद्धकैशिकः ।
षड्जतारग्रहांशोऽयं पञ्चमान्तस्सकाकलिः ॥
वर्णस्वरो ह्यलंकारः प्रसन्नान्तो भवेदिह ।
संपूर्णो मूर्छिते षड्जे स्यादेवं शुद्धकैशिकः ॥ हरिः

कैशिकः—न्यायप्रविचारः

कैशिकं प्रविचारस्तु बुधैर्भारतवत्स्मृतः ।
शस्त्रपातस्तु कर्तव्यो मस्तकेऽत्र मनीषिभिः ॥
शस्त्राणि शक्तिकुलिशकुन्तादीनि विचक्षणः ।
एषु न्यायप्रचारेषु प्रयुञ्जीत ससौष्ठवम् ॥
न सौष्ठवं विना न्यायाः शोभां पुष्णाति भूयसीम् ।
संज्ञयैवास्त्रशस्त्राणां मोक्षः कार्यो न वास्तवः ॥

वेमः

कैशिकमध्यमः—रागः

कैशिकीषड्जमध्याभ्यां सृष्टः कैशिकमध्यमः ।
षड्जांशो मध्यमो न्यासो युक्तत्रिश्रुतिपञ्चमः ॥
षड्जस्तारग्रहांशोऽपि न्यासो भूयोऽपि मध्यमः ।
अल्पो निषादे गान्धारे पञ्चमर्षभवर्जितः ॥
निषादे काकलीयुक्तष्षाडवस्तदनन्तरम् ।
अलङ्कारप्रसन्नान्त इति कैशिकमध्यमः ॥

हरिः

कैशिकी—रागः

कथ्यते कैशिकी पूर्वं शुद्धपञ्चमसंभवा ।
संपूर्णा मध्यमे मन्द्रा तारसप्तस्वरा क्रमात् ।
पञ्चमांशग्रहन्यासा तथर्षभसमन्विता ॥

हरिः

अंशो न्यासः पञ्चमश्चेद् ग्रहस्थोऽ
पन्यासस्थो मध्यमो मन्द्रता चेत् ।
संपूर्णा स्यात् कैशिकी कैशिकोत्था
तद्बाहुल्यात्पञ्चमस्यर्षभस्य ॥

नान्यः

सप्तस्वरानुरम्या कैशिकजनिता तु कैशिकी कथिता ।
पञ्चमबहुला भापन्यासेन च भवति लक्षणतः ॥

कश्यपः

—रागः ( वंशे वादनक्रमः )

स्थायिनं पञ्चमं कृत्वा तृतीयं च द्वितीयकम् ।
क्रमादुक्त्वा तृतीयं च स्पृष्ट्वा प्राञ्चं तु वादयेत् ॥
पुनस्तृतीयं स्पृष्ट्वा च द्वितीयं तु विलम्ब्य च ।
कम्पिते चेद्ग्रहे न्यासः कैशिकी जायते तदा ।
स्वस्थानमाद्यवंशेऽस्याः तृतीयो लक्ष्यते ग्रहः ॥

वेमः

**कैशिकी**—वृत्तिः

याश्लक्ष्णनैपथ्यविशेषयुक्ता स्त्रीसंयुता या बहुगीतनृत्ता।
कामोपभोगप्रभवोपचारा तां कैशिकीवृत्तिमुदाहरन्ति॥

भोजः

**कैशिकी**—वृत्तिः

भोजदेवेन शृङ्गाररसो धर्मार्थकाममोक्षोपयोगित्वेन चतुर्धा विभक्तः। तेषां नायकनायिकावृत्तिरीतिप्रवृत्तय उक्ताः। तत्र धर्मशृङ्गाराङ्गं भारतीवृत्तिः। अर्थशृङ्गारस्यारभटी। कामशृङ्गारस्य कैशिकी। मोक्षशृङ्गारस्य सात्वतीति। तासां वृत्तीनां प्रत्येकं भेदाश्चत्वार उक्ताः। वृत्तीनां व्याख्योदाहरणानि धर्मादिपुरुषार्थानुसारधर्माश्रयेणोक्तानि। तथाहि कामशृङ्गारस्य धीरललितो नायकः कैशिकी वृत्तिः। दाक्षिणात्या प्रवृत्तिः। वैदर्भी रीतिः। सर्वा नायिकाः शृङ्गारप्राया कैशिकी। कैशिकी तु शृङ्गारप्रायेत्यनेनोत्तमं युवप्रकृतीः प्रतिपादयति। श्लक्ष्णनैपथ्यविशेषचित्रेत्यनेन संभोगयोग्या नाभिगामिका वैहारिकादिविशेषानुपदिशति स्त्रीसंयुतेत्यनेनायतनसंप्रयोगस्य प्राधान्यं गमयति। गीतनृत्तेति गोष्ठीसमवायसमापानप्रदोषसङ्गीतकादीन् निर्दिशति। कामोपचारप्रभवोपयोग्येत्यनेन समस्तसांप्रयोगिकाधिकरणोक्तचातुष्षष्टिकप्रयोगाननुबध्नाति। अङ्गेषु नर्मणा रहः परिहासविस्रंभादिभिः शृङ्गारावस्थामवस्थापयति। नर्मस्पन्दे प्रथमानुरागे दूतीसंप्रेषणाभिसरणानि संस्थाप्य प्रेमातिरेकादनुभावव्यभिचारिसाक्षिकानां पुष्टिमभिधत्ते। नर्मगर्भेण दक्षिणे नायके शठधृष्टचेष्टितं व्याचष्टे। तल्लक्षणानां तथाविधार्थविशेषयोगात्। तथाहि – आस्थापितशृङ्गारं वचोविचेष्टितं परिहासं नर्म। प्रथमसङ्गमे भयावसाने संभोगवेषवाक्यादिकर्म नर्मस्पन्दः। आविर्भूतामिलापान्नर्मस्फोटः। तस्य कार्यहेतोः स्वरूपविज्ञानादिप्रच्छादनं नर्मगर्भः।

भोजः

या श्लक्ष्णनैपथ्यविशेषचित्रा स्त्रीसंयुता या बहुनृत्तगीता।
कामोपभोगप्रभवोपचारा तां कैशिकीं वृत्तिमुदाहरन्ति॥
बहुवाद्यनृत्तगीता शृङ्गाराभिनयचित्रनैपथ्या।
माल्यालङ्कारयुता प्रशस्तवेषा च कान्ता च॥
चित्रपदवाक्यबन्धैरलङ्कृता हसितरुदितरोषाद्यैः।
स्त्रीपुरुषकामयुक्ता विज्ञेया कैशिकीवृत्तिः॥

भरतः

श्लक्ष्णः। सुकुमारः। श्लिष्यति हृदये इति कृत्वा। नैपथ्यविशेषो वस्त्रमाल्यादिः। तेन चित्रा। बहुविपुलं। गीतं नृत्तं च यस्यां। कामोपभोगो रतिः। ततः प्रभवो यः स शृङ्गारः। तद्बहुल उपचारो व्यवहारो यस्यां सा तथोक्ता। अभिनवः

कैशिकी हास्यशृङ्गारनाट्यनर्मभिदात्मिका।

अतिशायिनः केशाः सन्त्यासामिति कैशिकाः स्त्रियः। स्तनकेशवतीत्वं हि स्त्रीणां लक्षणम्। तत्प्रधानत्वात्तासामियं कैशिकी। हास्यशृङ्गाराभ्यां स्त्रीबाहुल्याद्विचित्रप्रकारनैपथ्यकामव्यवहाराणां सद्भावमाह। अग्राम्येष्टजनावर्जनरूपो वाग्वेषचेष्टाभिः परिहासो नर्म। अत्र शृङ्गाररसेन रत्याख्यो मानसो हास्येन नर्मभेदैश्च वाचिको नाट्येन कायिकश्च व्यापारः संगृहीत इति व्यापारत्रयसङ्करात्त्रिकेयम्।

रामचन्द्रः

शृङ्गाराभिनयोद्भासिपाठ्यमाल्यविभूषणा।
नृत्तवादित्रगीताढ्या कामसंभोगलक्षणा॥
सुकुमारकाव्यबन्धामुज्ज्वलवस्त्राभरणवेषां च।
कामोपचारबहुलां भाषन्ते कैशिकीं कवयः॥

सागरः

**कैशिकी**—भाषारागः

शुद्धपञ्चमसंभूता मापन्यासा मपोत्कटा।
पञ्चमांशग्रहन्यासा तारता तारमध्यमा।
कैशिकी गीयते भाषां मन्द्रमध्यमकम्पिता॥

भट्टमाधवः

—भाषाङ्गरागः

या पञ्चमे मतङ्गेन भाषा कैशिकिकोदिता।
सैव भाषाङ्गमित्याह कालजिद्रागराजिवित्।
डोलारूढा सुगौराङ्गी गीतगानरता सदा॥

कुम्भः

कालजित् इति – कालसेनो ग्रन्थकारः।

भिन्नषड्जस्य भाषाया ललिता तत्समुद्भवा।
भाषाङ्गं कैशिकी ज्ञेया गातव्या प्रहरेऽग्रिमे।
समस्वरारितारा च मन्द्रमानोत्सवे भवेत्॥

भट्टमाधवः

—रागः

कैशिकी सगमैस्तारैस्संपूर्णा शुद्धपञ्चमात्।
मृदुत्वं मध्यगेनाभ्यां बहुमध्यमपञ्चमौ॥

मोक्षदेवः

कैशिकी षड्जभूयिष्ठा रागाङ्गा पञ्चमोज्झिता।

मद

—जातिः

अंशो निषादो यदि धैवतो वा न्यासस्तदा पञ्चम एव नान्यः।
यदा निषादस्त्वथ धैवतोंऽशो न्यासौ च तावेव मतान्तरे तु।
निषादगान्धारकमध्यमाश्च न्यासा भवन्तीत्यवधारणीयम्॥

विनार्षभं षाडवतौडुवत्वं स्याद्धैवतस्याप्यृषभस्य लोपात् ।
अत्रर्षभोऽल्पो बहुलो निषादः सपञ्चमः संहृतिरंशयोः स्यात् ॥
सपञ्चमेंऽशे यदि षाडवत्वे नैवर्षभस्यात्र यतो न लोपः ।
अंशो यदा धैवतकस्तदा स्यान्नैवौडुवत्वं रिधयोरलोपात् ॥
स्यात् षट्पितापुत्रक एव तालः त्रेधा किलैकत्रिचतुष्कलात्मा ।
यदा भवेदेककलः स चित्रमार्गस्तथा मागधिका च गीतिः ॥
भवेद्यदायं द्विकला तु गीतिः संवादिता वार्तिक एव मार्गः ।
चतुष्कलश्चेत्स तु दक्षिणः स्यान्मार्गस्तदानीं पृथुला च गीतिः ॥
स्यात् पञ्चमाङ्के किल नाटकस्य गाने ध्रुवाया विनियोजनं स्यात् ।
स्यान्मध्यमग्रामभवा तु गीतिः स्यान्मूर्छना तत्र च हारिणाश्वा ॥

रघुनाथः

तत्र सूत्रम् ।

धैवत्यार्षभिकाभ्यां योगात्सा कैशिकी जातिः । इति ॥

अंशाः पञ्चमगान्धाररिषभाख्यस्वरास्त्रयः ।
अपन्यासास्त्रयश्चैव षड्जपञ्चमसप्तमाः ॥
गान्धार एको न्यासस्तु दुर्बलौ धैवतर्षभौ ।
नित्यपूर्णतया नात्र विद्येते षाडवौडवे ॥

नान्यः

कैशिक्यां रिषभोऽनंशो विन्यासौ द्विश्रुती स्मृतौ ।
रिषभो धैवतश्चैव ह्येयावस्यां यथाक्रमम् ॥
पञ्चमोऽपि भवेन्न्यासो निषादेंऽशेऽथ धैवते ।
ऋषभः स्यादपन्यासः कैश्चिदुक्तोंऽशवत्तथा ।
पञ्चमो बलवानस्यां स्यान्निषादस्तथैव च ॥

दत्तिलः

## कैशिक्यङ्गानि

नर्म च नर्मस्फुंजो नर्मस्फोटोऽथ नर्मगर्भश्च ।
कैशिक्याश्चत्वारो भेदा ह्येते समाख्याताः ॥

भरतः

कैशिक्याश्चत्वार्यङ्गानि । नर्माख्यं नर्मोपपदानि च । तत्र नर्मणः शृङ्गाररस्थापकत्वं । हासप्रधानता च तदेति सामान्यलक्षणम् ।

**कोकिलः**—तानः

षड्जग्रामे नारदीयतानः । स ग म प नि .

नान्यः

—वर्णालङ्कारः

(१) सरिग, सरिगम, (२) रिगम, रिगमप, (३) गमप, गमपध, (४) मपध, मपधनि, (५) पधनि, पधनिस.

प्रतापसिंहः

**कोकिलः**—स्वरजातिः

स्वरैस्त्रिचत्वारिंशद्भिः सानुतारैस्तु कोकिलः ।

सोमापतम्

सानुतारैः । तारानुताराभ्यात् । द्व्यधिकेति यावत् ।

—मेलरागः

कल्याणमेलसंभूतो रागः कोकिलसंज्ञकः ।
सर्वदा मनिहीनः स्याद्गान्धाराधिकमूर्छनः ॥

सायं गेयः ।

अहोबिलः

पञ्चमः कोकिलपर्यायशब्दैरुच्यते ।

**कोकिलपञ्चमः**—मेलरागः ( झल्वरालीमेलजन्यः )

( आ ) स रि ग प ध नि स .
(अव) स नि ध प म ग रि स .

मञ्ज

**कोकिलप्रियः**—देशीतालः

क्रमेण गलपाः प्रोक्तास्तालेऽस्मिन् कोकिलप्रिये ऽ । ऽ́

वेमः

—मेलकर्ता ( रागः )

स रि ० ग ० म ० ० प ० ध ० नि स .

मञ्ज

**कोकिलरवः**—मेलरागः ( कोकिलप्रियमेलजन्यः )

( आ ) स रि ग म प ध स .
(अव ) स नि ध प म ग रि स .

मञ्ज

**कोकिलवराली**—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

(आ) स रि म प ध स .
(अव) स नि ध म प म ग रि ग स .

मञ्ज

**कोकिलवर्धनी**—मेलरागः ( मायामाल्वगौलमेलजन्यः )

( आ ) स म ग प ध नि स .
(अव) स नि ध म ग रि स .

मञ्ज

**कोकिलारणितः**—देशीतालः

कोकिलारणिते विन्दुयुग्मात्संकीर्णलो भवेत् ० ० ।

लक्ष्मणः

**कोणः**

कोणः कुणप इत्यपि ।
वीणादिवादनो दण्डः प्रवीणैरुपवर्ण्यते ॥

कुम्भः

कोणा—गतिः

कोणात्कोणं गता परा । देवणः

कोणाहतः—हस्तपाटः

मुहुः कनिष्ठिकाङ्गुष्ठाङ्गुल्यौ संयोज्य चाङ्गुली ।
अपराश्चलयेद्यत्र स स्यात्कोणाहतो यथा ॥

वेमः

खुं खुं धरि खुं खुं धरि करकिट करकिट ।
यत्र चलयेदिति लीनां विवर्तनं सूचयति ।

कोण्डिनाचीतालः—चित्रतालः

द्रौलोर्धविन्दू विन्दुश्च लदलाश्चार्धविन्दुकौ ।
लोऽर्धविन्दू दलौ द्रौलः कोण्डिनाचीति कथ्यते ॥
० ० । ‿ ‿ ० । ० । ‿ ‿ । ‿ ० । ० । ० ० ।

तालक्षणे

कोदुम्भकः—मात्रावृत्तम्

भ, (अथवा) गग, रः, पञ्चमात्रिक एकः द्वौ सगणौ, ज, ग. विरहाङ्कः

कोपः

हन्म्येनं छेदयिष्यामीत्येवं बुद्धिप्रवर्तिनी ।
मानसो विक्रिया कोपो वाच्यावाच्यविलोचनी ॥

भावविवेकः

—नृत्तम्

एकत्रिपञ्चसप्ताख्या विषमा गीतयः किल ।
स्थानचार्यादिभेदेन कोपा इत्यवदन्नटाः ॥
एकांघ्र्यादिप्रभेदेन समतापि परे जगुः ।
केचिदत्रैव वर्णैर्हि कोपत्वे च समादधुः ॥

देवेन्द्रः

कोपुः—अभिनयः

कायैरङ्गैरुपगतं नर्तनं कोपुरुच्यते ।
कायैश्शिर आद्यैः ॥

कोमलम्—दर्शनम्

कोमलं तु यदव्याजस्निग्धं मुग्धावलोकनम् ।

शारदातनयः

कोमलम्

यावती यस्य पुष्टिः स्यादुचितां वृद्धिमेयुषः ।
अव्याहता हि सततं तावती कोमलं मतम् ॥

भावविवेकः

कोमलता—फूत्कारगुणः

सौकर्यं कोमलता, कुम्भः

कोमलिका—देशीलास्याङ्गम्

अङ्गानां यत्र तन्वङ्गयाः सौकुमार्यतरङ्गितैः ।
नर्तनावलनाद्यैस्तु ललितैश्चेष्टितैर्युता ।
नृत्तक्रिया नवीना तु तज्ज्ञैः कोमलिका स्मृता ॥

वेमः

कोलाहलः—रागाङ्गरागः

शुकयाना रक्तवस्त्रा गौरवर्णेति कश्चन ।

कुम्भः

टक्काख्यग्रामरागस्य गीतज्ञा अङ्गमूचिते ।
कोलाहलं स्वरे तारे संपूर्णे तु प्रकल्पितः ।
वर्षासु टक्कवद्गेयः रौद्रे वीरेऽद्भुते स्मृतः ॥

भट्टमाधवः

—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म प नि ध नि स.
(अव) स नि प ध म ग रि स.

मज

—प्रथमरागः

कोलाहलो मध्यममन्द्रहीनस्सांशस्तदन्तग्रह ऐष रम्यः ।
निषादतारोभवकारणं च रागोऽस्य टक्को मुनिभिः प्रदिष्टः ॥

मोक्षः

—रागः

कोलाहलो नितारस्स्यात् मन्द्रमध्यमवर्जितः ।
षड्जांशष्टक्करागोऽस्य कारणं जगदुर्बुधाः ॥

हम्मीरः

अंशे न्यासे ग्रहे षड्जो रागात्कोलाहलो मतः ।
रागात् – रागाङ्गः ॥

मद

कोलाहला—रागः

कोलाहला पहीना स्यात्सधमन्द्रा मजायसी ।
विचित्रा सर्वगमकैः सरिगमधनिस्वरैः ॥

मोक्षः

—भाषारागः

षड्जग्रहांशमन्यासा मध्यमस्वरभूयसी ।
षाडवेयं मतङ्गस्य मते पञ्चमलोपतः ॥

औडुवा निपलोपेन याष्टिकस्य मते सतः ।
मन्द्रधैवतषड्जाख्या कलहे विनियुज्यते ।
कोलाहला टक्कभाषा षड्जग्रामसमाश्रया ॥

कुम्भः

**कोलाहला**—रागः ( षाडवः )

षड्जन्यासग्रहा कोलाहला टक्ककुलोद्भवा ।
मध्यमांशा पहीना च कलहे गमकोत्कटा ॥

कोलाहला, कोलाहल इति रूपद्वयं दृश्यते ।

नारायणः

दृश्यते नैव कुत्रापि रागाणां लिङ्गनिर्णय इति वचनादुभयं सम्मतमिति ज्ञेयम् ॥

—रागः

चलन्मध्यमरावा च षाडवा गमकान्विता ।
पञ्चमेन परित्यक्ता सा हि कोलाहला मता ॥

नान्यः

सरिगमधनिभिर्मधुरैर्विचित्रितामध्यमोज्ज्वला सहिता ।
कोलाहला तु षाडवगमकयुता पञ्चमेन संत्यक्ता ॥

कश्यपः

मध्यमांशा च तन्न्यासा पञ्चमर्षभवर्जिता ।
नाम्ना कोलाहला ज्ञेया कथिता सोमभूभुजा ॥

सोमेश्वरः

**कोल्लहासः**—मेलरागः

मोज्झितः कोल्लहासः स्याद्गान्धारादिकमूर्छनः ।
अवरोहे धवर्जः स्यात् षाडवः परिकीर्तितः ॥

प्रातर्गेयः ॥ अहोबिलः

अयमपि भूपालीमेलजन्यः स्या

—रागः

अंशन्यासपदस्थितर्षभसुखोपन्यस्त......
तारस्सप्तम एव मन्द्रभवने यत्र स्वरः पञ्चमः ।
मूर्छा यत्र सदा कलोपनतिका............
......तत मध्यमायुत इह स्यात्कोल्लहासः पुनः ॥

नान्यः

अंशन्यासर्षभस्तारः सप्तमो मन्द्रमध्यमः ।
अपन्यासस्तु गान्धारः कथितः कोल्लहासकः ॥

कश्यपः

**कोशः**—श्रव्यकाव्यम्

कोश इव यस्सुभाषितरत्नसमूहात्मकस्समुद्ध्रियते ।
महतः काव्याम्भोधेः स कोश इव सप्तशतिकादि ॥

भोजः

**कोषावती**—श्रुतिः

मन्द्रमध्यमतृतीया श्रुतिः । मण्डली

**कोसलः**—मेलरागः ( कोसलप्रियामेलजन्यः )

( आ ) स रि म प ध स .
( अव ) स नि ध प म ग रि स .

मज

**कोसलप्रिया**—मेलकर्ता ( रागः )

स रि ग ० म प ध ० नि स .

मज

**कोसला**—रागः

ऋषभांशग्रहयुक्ता निन्यासा दीर्घमन्द्रषड्जा च ।
धपहीना च विशाला मूर्छा कल्याणकस्तानः ॥
वीररौद्राद्भुतरसे रुद्रेन्द्रब्रह्मदैवता ।
सर्वदा गीतिकुशलैः कोसला परिकीर्तिता ॥

नान्यः

ऋषभांशग्रहन्यासा सनिषादा धवर्जिता ।
दीर्घमन्द्रा च षड्जे तु कोसला सर्वदा स्मृता ॥

मतङ्गः

**कोहलः**

अयं नाट्यशास्त्रकर्ता । भरतेनैव स्वशास्त्रे उत्तरतन्त्रे कोहलः कथयिष्यतीत्युक्तम् । तस्मादयं मुनेः साक्षाच्छिष्य इत्युक्तम् । कोहलीयग्रन्थस्य भागा एव त्रुटिताः कचित्कचिद्दृश्यन्ते । अनेनोपरूपकाणि विंशतिरुक्तानि । न तु तेषां लक्षणानीति वेमभूपेनोक्तम् ॥

**कोहलमतम्**

कश्चिल्लघुग्रन्थः पुष्पाञ्जलिलक्षणप्रतिपादकोऽनेन नाम्ना दृश्यते ।

**कोहलरहस्यम्**

अयं ग्रन्थः कोहलकृत इति दृश्यते ।

रघुः

कोहलमतस्यानुवादस्स्यात्

**कोहलीयम्**

अयं ग्रन्थः त्रुटित एव कचित्कचिल्लभ्यते ।
कोहलकृत इति ज्ञायते ।

**कौचटम्**—देशीनृत्तम्

एकवारं मुखेहस्तद्वयेऽपि स्याद्विवारकम् ।
गणेशशब्दसञ्चारः तथैवाङ्गान्तरे भवेत् ।
कौचटं तद्भवेत्तद्वदन्यान्यपि च कल्पयेत् ॥ वेदः

**कौण्डपायनः**—तानः

कुण्डपायनशब्दे द्रष्टव्यम् ।

**कौतम्**—पुष्पाञ्जलिभागः

पाटाक्षरैरेकताले यत्स्यात्पादचतुष्टये ।
तत्कौतमिति विज्ञेयं तद्विम्बे कूटमानकम् ॥

नन्दी

**कौन्तली**—रागः

स्युर्वराट्या उपाङ्गानि सन्यासांशग्रहानि षट् ।
समन्द्रा कौन्तली तत्र......निगपधारतौ ॥

हम्मीरः

उपाङ्गा कौन्तली ज्ञेया ग्रहांशन्यास षड्जभृत् ।

मद

**कौमारी**—मेलरागः

गौरीमेलसमुद्भूता धैवतोद्ग्राहशोभिता ।
धन्यासांशापि कौमारी प्रायशः कम्पितस्वरा ॥

प्रथमप्रहरोत्तरगेया । अहोबिलः

—श्रुतिः

तारषड्जस्य द्वितीया श्रुतिः ।

पार्श्वः

**कौमुदी**—प्राकृते मात्रावृत्तम्

पञ्चमात्रिकौ द्वौ ललगाः।
५ + ५ + ललग।

विरहांकः

**कौमुदीप्रचारः**—संगीतशृङ्गाराङ्गम्

आश्विनपौर्णमासीविलासः ।

भोजः

**कौमोदः**—मेचकल्याणीमेलजन्यः )

( आ ) स रि ग म नि स .
( अव ) स नि म ग रि स .

मज

**कौर्परी**—कला

चतुर्विलासेऽथ कूर्परं यान्यस्यैकमन्येषु च तेषु चान्यम् ।
पश्चात्प्रदेशेन मुखाग्रतोऽङ्गीकृत्वेति गृह्णात्युत पाणिभ्याम्॥
साम्भस्तु तन्मूर्ध्नि ददाति चक्राण्युद्भ्रामयन्त्येव च हस्तपादैः।
यत्नाद्भुतायद्भुतकारिणी सा राज्ञा प्रदिष्टा भुवि कौर्परीयम्॥
नागमल्लः

**कौशलम्**—देशीलास्याङ्गम्

तालारम्भेऽवसाने च कौशलं सन्धिनैपुणम् ।

देवणः

**कौशिकी**—रागः

पञ्चमांशा सुसंपूर्णा तारगान्धारशोभिता ।
षड्जमन्द्रा मध्यर्षभा कौशिकीनामतो हि सा ॥

**कौशिकलता**—मेलरागः ( खरहरप्रियामेलजन्यः )

( आ ) स ग म ध म ध प नि ध नि स .
( अव ) स नि ध म ग स रि स .

मज

**क्रमः**—गर्भसन्ध्यङ्गम्

भविष्यतत्वोपलब्धिः क्रमः ।

सागरनन्दी

भावज्ञानं क्रमो यद्वा चिन्त्यमानार्थसङ्गतिः ।

सिंगः

क्रमस्संचिन्त्यमानाप्तिर्ज्ञानं भावस्य वा यथा ।

अमृतानन्दी

क्रमो भावस्य निर्णयः । भावस्य पराभिप्रायस्य अथवा भाव्यमानस्यार्थस्य ऊहप्रतिभादिवशान्निर्णयः । यथावस्थितरूपनिश्चयः क्रमः । यथा – देवीचन्द्रगुप्ते ध्रुवदेवीं दृष्ट्वा सा 'लज्जाकोपनिषादभीत्यरतिभिः क्षेत्रीकृता ताम्यती'ति ध्रुवदेव्यभिप्रायस्य चन्द्रगुप्तेन निश्चयः ।

रामचन्द्रः

—वर्णालङ्कारः ( सञ्चारी )

आद्यस्वराद्यास्त्रिस्त्रस्युः कला द्वित्रिचतुस्स्वराः ।
द्वितीयाद्याः पराश्चैवं यत्रायं क्रमसंज्ञितः ॥

सरि सरिगा सरिगमा रिगरिगमा रिगमपा गम गमपा गमपधा मप मपधा मपधनी —

मोक्षदेवः

—गर्भसन्ध्यङ्गम्

मनसाऽचिन्त्यमानस्य प्राप्तिरेव क्रमो मतः ।

सर्वेश्वरः

भावतत्वोपलब्धिस्तु क्रम इत्यभिधीयते ।

भरतः

भावस्य भाव्यमानस्य वस्तुनो भावनातिशये सति ऊहं प्रतिभावनादिवलात् स्यात् या परमार्थोपलब्धिः स क्रमः । बुद्धिर्हि तत्र न क्रमते न प्रतिहन्यते । यथा – रत्नावल्यां ह्रियेत्यादिश्लोको राज्ञः ।

अभिनवः

क्रमताडितम्—पादमणिः

यस्मिन्नङ्गुलिपृष्ठेन तिष्ठन्तौ चरणौ क्रमात् ।
तलाभ्यां भुवि कुर्याते सशब्दं ताडनं मुहुः ।
यत्र तन्नृत्ततत्त्वज्ञैः कथ्यते क्रमताडितम् ॥

वेमः

क्रमपादनिकुट्टिता—मुडुपचारी

एवं व्यङ्घ्रिकृता सैव क्रमपादनिकुट्टिता ।
सेति पादस्थितिनिकुट्टिता ॥

अशोकः

क्रमरेचितः—वर्णालङ्कारः

आदावन्ते मूर्छनायाः स्वरश्चाद्यो द्वितीयकः ।
मध्ये यदि भवेदेका कलेयं प्रथमा मता ॥
यदि मध्यप्रथमयोः तत्तृतीयचतुर्थकौ ।
सा द्वितीयकला यत्र पञ्चमायास्त्रयः स्वराः ॥
मध्ये स्थितः प्रथमयोः चिरयोः सा कलान्तिमा ।
इत्थं कलात्रयोपेतं क्रमरेचितमूचिरे ॥

सा रि सा सं गमसं पधनिसं इति

पण्डितमण्डली

षड्जाख्यं स्थायिनं कृत्वा एकद्वित्रिक्रमेण तान् ।
स्वरानुच्चारयेत्तत्र त्यक्त्वा मध्योदितस्वरान् ।
त्रिरावृत्तिकरत्वेन स भवेत्क्रमरेचितः ॥

जगद्धरः

क्रमसंहृतिः—देशीतालः

नजौ सद्वितयं यश्च प्लुतश्च क्रमसंहृतौ ।
२३ मात्राः ।

तालप्रस्तारः

क्रान्तम्—करणम्

कृत्वा चारीमपक्रान्तां पात्यमानं निकुञ्चितम् ।
पृष्ठतः स्थापयित्वाङ्घ्रिं पुरतस्तं प्रसारयेत् ॥
व्यावर्तितेन निष्क्रान्तमाक्षिप्तपरिवर्तितम् ।
करं वक्षसि तद्दिक्कं विदध्यात्खटकामुखम् ।
यद्वङ्क्रान्तरमप्येवं तदा क्रान्तमुदीरितम् ॥

ज्यायनः

उद्धतस्य परिक्रमे विनियोगः ।

कुम्भः

—मण्डलम्

कुरुते दक्षिणस्सूचीमपक्रान्तां तु वामतः ।
ततः पादौ सव्यवामौ पार्श्वक्रान्तमतःपरम् ॥
मण्डलभ्रमणं कृत्वा वामः पादस्तु सूचिकाम् ।
दक्षिणाङ्घ्रिरपक्रान्तां चारीं तु कुरुते यदि ।
तन्मण्डलं बुधैः क्रान्तं स्वगतौ परिकीर्तितम् ॥

वेमः

क्रिया—तालप्राणः

क्रिया मार्गदेशीभेदेन द्विधा मार्गक्रिया निःशब्दा सशब्देति द्विधा भिद्यते । निःशब्दाऽपि आवापनिष्क्रामविक्षेपप्रवेशकभेदैश्चतुर्धोक्ता । सशब्दा तु ध्रुवशम्यातालसन्निपातभेदैः चतुर्धा भिन्ना ।

मार्गदेशीक्रिया द्वेधा तत्राद्यस्य क्रिया द्विधा ।
निश्शब्दा शब्दयुक्ता च निश्शब्दा तु कलोच्यते ॥
स्यादावापोऽथ निष्क्रामो विक्षेपोऽथ प्रवेशकः ।
निश्शब्दोऽत्र चतुर्धोक्तः सशब्दापि चतुर्विधा ।
ध्रुवश्शम्या तथा तालः सन्निपात इतीरितः ॥

अच्युतरायः

अत्र कलासंज्ञा पाक्षिकी ।

सर्वपातानुगामित्वात्तत्र स्यात्प्रथमं ध्रुवः ।
शम्या दक्षिणहस्तस्य प्रयोगस्तदनन्तरम् ॥
तदनन्तरतस्तालः पातो वामकरोद्भवः ।
तथोभयकरोत्पाद्यः सन्निपातस्ततो भवेत् ॥
उत्तानस्य करस्य स्यादावापोऽङ्गुलिकुञ्चनात् ।
निष्क्रामोऽधस्तलस्य स्यादङ्गुलीनां प्रसारणात् ॥
विक्षेपः पार्श्वतः क्षेपात्पाणेरुत्तानितस्य तु ।
प्रसारिताङ्गुलीकस्य निर्दिष्टः पृथिवीभुजा ॥
पाणेरधस्तलस्य स्यात्प्रवेशोऽङ्गुलिकुञ्चनात् ।
तयोरेकतरस्यात्र छोटिकाशब्दपूर्वकम् ॥
पाणेस्संपातनादुक्तो ध्रुवो विश्लेषवर्जितः ।
गातुः पापस्य शमनाच्छम्या दक्षिणपाणिना ॥
वामपाणितलाघातादुक्ता प्रत्यर्थिघातिना ।
प्रतिष्ठार्थतया धातोरदृष्टस्थापकत्वतः ॥
तद्विपर्ययतस्तालस्तालवित्कीर्तिनोदितः ।
सन्निपातो मिथस्सम्यक्पाणिद्वयनिपातनात् ॥

कुम्भः

तद्विपर्ययेति । शम्यायाव्यत्यस्त इत्यर्थः । वामपाणिना दक्षिणतलाघातः तालः ।

छोटिकेति देशभाषासु छिटिकेत्युक्तम् ।

अथ देशीक्रियाः ।

ध्रुवका सर्पिणी कृष्या पद्मिनी च विसर्जिता ।
विक्षिप्ता च पताका च मात्रा स्यात्पतिताष्टमी ॥

एताः क्रमाद्दक्षिणमार्गेऽष्टौ मात्रिकाः ।

सशब्दा ध्रुवका ज्ञेया सर्पिणी वामगामिनी ।
कृष्या दक्षिणतः पातः पद्मिनी स्यादधोगता ॥
विसर्जिता बहिर्याता विक्षिप्ता कुञ्चितात्मिका ।
पताका चोर्ध्वगमना पतिता करपातना ॥
पताकाकारहस्तस्य चाङ्गुलीनां तलस्य च ।
घातशब्देन युक्ता या ध्रुवका सैव कथ्यते ॥

अत्राष्टासु क्रियासु पताकहस्तो योज्यते ।

ध्रुवके एका मात्रिका । चित्रमार्गे ध्रुवका पतिता च क्रिया वार्तिके तु ध्रुवका सर्पिणी पताका पतिता च । दक्षिणमार्गेऽष्टौ च क्रियाः । ध्रुवकादयः क्रियाः देशीमार्ग एव वर्तन्ते ।

अच्युतः

क्रियाङ्गरागः

क्रियाङ्गानि च कथ्यन्ते दीपकादिक्रियायुजैः ।
श्रोतृचित्तोत्साहकरगुणयोगाच्च कोविदैः ॥

कुम्भः

क्रियाङ्गाः

कर्णोत्साह सशोकादि प्रबला या क्रिया ततः ।
जायन्ते च ततो नाम क्रियाङ्गास्ते न कारणात् ॥

तुलजः

क्रियापरः—गायकभेदः

यथाशास्त्रप्रयोगेण मार्गं देशीयमेव च ।
यो गायति विना दोषैः कथ्यते सः क्रियापरः ॥

सोमेश्वरः

क्रियापरिभाषा

आ – आवापः श – शम्या.
नि – निष्कामः ता – तालः
प्र – प्रवेशः सं – सन्निपातः
वि – विक्षेपः

क्रियाभरणम्—मेलरागः ( मेचकल्याणीमेलजन्यः )

( आ ) स रि ग म प नि ध स .
( अव ) स नि ध म ग रि स .

मञ्जः

क्रियाभेदनम्—नर्म

क्रियया भेदनं भर्तुः क्रियाभेदनमुच्यते ।

सर्वेश्वरः

क्रियाविरामः—मेलरागः ( सूर्यकान्तमेलजन्यः )

( आ ) स रि ग रि म प ध नि स .
( अव ) स नि ध प म ध म ग रि स .

मञ्जः

क्रियाशुद्धम्—नर्म

नेत्रवक्त्रभ्रुवां चेष्टाविशेषैर्लोकहासकृत् ।
यत्तदस्माद्विधैस्सर्वैः क्रियाशुद्धं निगद्यते ॥

सर्वेश्वरः

क्रीडनकः—प्राकृते मात्रावृत्तम्

चतुर्मात्रिकास्त्रयः. रो वा नगौ वा, लः गः

विरहाङ्कः

क्रीडातालः—देशीतालः

क्रीडाताले समाख्यातौ विरामान्तौ द्रुतावुभौ ऽ ऽ

वेमः

क्रीडापर्वतविहारः—संगीतशृङ्गाराङ्गम्

संभोगविशेषार्थमाक्रीडशैलसेवा ।

भोजः

क्रीडामतिः—मेलरागः ( शुभपन्तुवरालीमेलजन्यः )

( आ ) स रि ग म प ध नि स .
( अव ) स ध प ग रि स .

मञ्ज

क्रीडितम्—शृङ्गारचेष्टा

बाल्यकौमारयौवनसाधारणो विहारविशेषः क्रीडितम् । यथा 'मन्दाकिनी सैकतवेदिकाभिः'(कुमा. १-२९) । क्रीडितमेव प्रियतमविषयं केलिः ।

भोजः

बाल्य एव कुमारीणां यौवनोपरिखेलनम् ।
शृङ्गारशास्त्रतत्त्वज्ञैः क्रीडितं तदुदाहृतम् ॥

कुम्भः

क्रुद्धा—दृष्टिः

स्थितोद्वृत्तपुटा रूक्षा संस्तब्धोद्वृत्ततारका ।
कुटिला भ्रुकुटीदृष्टिः क्रुद्धा क्रोधेऽभिधीयते ॥

सोमेश्वरः

क्रोधः—सन्ध्यन्तरम्

क्रोधस्तु चेतसो दीप्तिरपराधादिदर्शनात् ।

सिंगः

क्रोधः कोपः । यथा – वेण्यां प्रथमेऽङ्के 'शैलूषापसद' इति भीमवाक्यम् ।

सागरः

योसौ पुरुषार्थसिद्धिहेतुः क्रोधः स्थायीभावः सोऽयं न सन्ध्यन्तरं भवति। यथा – श्रीविशाखदेवकृते अभिसारिकावञ्चितके संभावितपुत्रवधार्थं पद्मावत्यै क्रुद्धो वत्सराजोऽभ्यधात्।

प्रदुष्टोग्रग्राहां सरितमवगाढः क्षमवशा-
दुपालीनश्शाखां फलकुसुमलोभाद्विपतरोः।
फणालीरत्नार्थी च्युतपरिचयां क्रौर्यनिरतां
विषज्वालागर्भां चिरमुरगकन्यामनुसृतः॥

भोजः

क्रोधः—स्थायिभावः

आधर्षणाक्रुष्टकलहविवादप्रतिकूलादयोऽस्य विभावाः। विकृष्टनासापुटोद्वृत्तनयनसन्दष्टोष्ठपुटगण्डविस्फुरणादयो ऽनुभावाः।

रिपुजो गुरुजश्चैव प्रणयिप्रभवस्तथा।
भृत्यजः कृतकश्चेति क्रोधः पञ्चविधः स्मृतः॥
भ्रुकुटीकुटिलोत्कटमुखसन्दष्टोष्ठः स्पृशन् करेण करम्।
क्षुद्रः स्वभुजप्रेक्षी शत्रौ निर्यन्त्रणं रुष्येत्॥
किञ्चिदवाङ्मुखदृष्टिः साश्रः स्वेदापमार्जनपरश्च।
अव्यक्तोल्बणचेष्टो गुरौ विनययन्त्रितो रुष्येत्॥
अल्पतरप्रविचारो विकिरन्नश्रूण्यपाङ्गविक्षेपैः।
सभ्रुकुटीस्फुरितोष्ठः प्रणयोपरतां प्रियां रुष्येत्॥
अथ परिजने तु रोषस्तर्जननिर्भर्त्सनाक्षिविस्तारैः।
विप्रेक्षणैश्च विविधैरभिनेयः क्रूरतारहितः॥
कारणमवेक्षमाणः प्रायेणायासलिङ्गसंयुक्तः।
वीररसान्तरचारी कार्यः कृतको भवति कोपः॥

भरतः

क्रोधा—श्रुतिः

गान्धारस्य द्वितीया श्रुतिः।

क्रौञ्चः

मध्यमः क्रौञ्चपर्यायशब्दैरुच्यते।

क्रौञ्चपदः—प्रबन्धः

पदैः स्वरैः स्वरन्यासः प्रतितालेन गीयते।
बुधैः क्रौञ्चपदः क्रौञ्चपदाख्यच्छन्दसाकृतिः॥

श्रीकण्ठः

क्रौञ्चपदी—पञ्चविंशत्यक्षरवृत्तम्

भ म स भ न न न न गाः॥

भरतः

क्रौञ्चा—ध्रुवावृत्तम्

पञ्चत्वादौ यत्र तु दीर्घं नवममपि च गुरुसमयकृतं।
दीर्घं चान्त्यं अष्टममन्तं लघुविरचितमिह चरणविधौ॥
वृत्ते ज्ञेयं जगतिरपीयं बहुविविधनिचयनिचितविहिते
क्रौञ्चं नाम्ना छन्दसि चौक्ता द्विजगणमुनिगण परिपठिता॥

पासादाणं कारयमाणो सितपटनिवसणमिव विपुलम्।
प्रासादानां क्रियमाणं सितनिवसनमिव विपुलम्)

भरतः

क्लान्तम्—देशीस्थानम्

चिबुकं कर्कटे हस्ते न्यस्तमंसस्थितं शिरः।
शून्यो यत्रेन्द्रियग्रामः स्फुरद्बाष्पे विलोकने॥
तत्क्लान्तं स्थानमाख्यातमेतत्तु विनियुज्यते।
निगृहीते निर्जिते च चिन्तायां ध्यानशोकयोः॥

वेमः

—स्थानकम्

यत्रेन्द्रियाणि सर्वाणि गुप्तशोककृतं स्मृतम्।
रणरङ्गपराभूते शोकव्याकुलितादिषु।
क्लान्तमित्यभिधा यस्य कथयन्त्यपरे पुनः॥

ज्यायनः

क्वाडभृङ्खला—देशीनृत्तम्

रामबाणार्जुनशरौ हारबन्धश्च चक्रकः।
मूरुगण्डः सर्वगण्डः षड्धा ते तालधारिणाम्॥
विदिताश्चतुरस्त्वन्ये नागवृक्षकबन्धकौ।
गोमूत्रिका च पातालसूचीति गदिता बुधैः।
एतेषां लक्षणान्येवमूहनीयानि पण्डितैः।
दशस्वेतेष्वाद्यषट्कलक्षणं लक्ष्यतेऽधुना॥

वेदः

क्षणम्—हस्तः

पाणिद्वन्द्वं समाश्लिष्य ऋजुपार्श्वद्वयेऽपि च।
यत्तु प्रहर्तुमुद्योगः तत्क्षणं परिकीर्तितम्॥

उमा

क्षमा—लक्षणम्

दुर्जनोदाहृतै रूक्षैः सतां मध्येऽभिताडितः।
अक्रोधः क्रोधजननैः वाक्यैर्यः सा क्षमा भवेत्॥

भरतः

दुर्जनोक्तैर्वचनैः क्रोधजननैः सभायां ताडितोऽपि यः पुरुषः क्रोधहीनः स एव क्षमावान्। तद्वर्णनोचितः कविव्यापारः क्षमेत्यर्थः। अनेन च यथोचित्यमिन्नवृत्तिसञ्चयः सर्वो विभावादुयुचितो निर्वर्त्यमानः काव्यलक्षणत्वेन सूचितः।

भरतपाठान्तरम्—

सिद्धान्बहून्प्रधानार्थान् त्यक्त्वा यत्र प्रयुज्यते।

विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥

सिद्धानिति लोकप्रसिद्धान्प्रधानभूतान्, अशक्यापनयान् त्यक्त्वा अनादृत्य क्रोधाद्यद्वचनविशेषेण युक्तं तद्विशेषणम् ॥

अभिनवः

प्रतिक्रियासमर्थस्य पात्रौचित्यवशेन यः।
अपकारेऽप्युपशमः सा क्षमेति प्रकीर्तिता ॥

यथोत्तरचरिते – 'ईदृशो मां प्रती' त्यादि लवस्य वाक्यम्।

भोजः

**क्षान्तिः—श्रुतिः**

मध्यमस्य तृतीया श्रुतिः।

**क्षामम्—उदरम्**

तनुक्षामं स्मृतं हास्यजृम्भानिश्वासरोदने।

ज्यायनः

**क्षामः—कपोलः**

गण्डाववनतौ क्षामौ तौ ज्ञेयौ दुःखलज्जयोः।

विप्रदासः

**क्षितिः—श्रुतिः**

पञ्चमस्य प्रथमा श्रुतिः

**क्षिप्ता—जङ्घा**

पादविक्षेपणात्क्षिप्तं व्यायामोद्धतनृत्तयोः।

ज्यायनः

क्षिप्तमित्यूरुकर्म।

क्षिप्ताभवद्बहिः क्षेपा व्यायामे स्याच्च ताण्डवे ॥

वेमः

**क्षीरार्णवः—मेलरागः (मेचकल्याणीमेलजन्यः)**

(आ) स रि ग म प ध स.
(अव) स नि ध प म ग रि स.

मल्ल

**क्षुद्रकथा—श्रव्यकाव्यम्**

क्षुद्रकथा मन्थुल्ली येह महाराष्ट्रभाषया भवति।
गोरोचनेन कार्या सानङ्गवतीव वा कविभिः ॥

भोजः

महाराष्ट्रभाषा। शुद्धप्राकृतभाषा। गोरोचनः प्राकृतभाषाकविः ॥

**क्षुद्रघण्टा—तालः**

क्षुद्रघण्टा कांस्यमयी पुटद्वितयसंयुता।
अन्तर्गोलयुता पृष्ठे सरन्ध्रकशिखान्विता ॥
सैव घर्घरिकेत्युक्ता प्रसिद्धा मञ्जुलस्वना।
ता रज्जुगुम्भिता पादे कार्याः पेरणिनर्तने ॥

वेमः

कृशानुनिर्दग्धविशुद्धकांस्यसंभूतराजत्पुटयुग्मकम्राः।
कनिष्ठिकापर्वसमीकृतार्धप्रमाणदेहास्सघनास्समाश्च।
कर्कन्धुकावीजसमानपिण्डाः श्लक्ष्णा मनोज्ञाः परिवर्तुलाश्च।
मण्डूकवक्त्राकृतिवक्त्रदेशा गर्भे दधानाः किल लोहगोलाम्।
शिखासु रन्ध्रद्वितयोपनीतबन्धार्थरज्जूपचितोर्ध्वदेशा।
स्युः क्षुद्रघण्ठाः किल घर्घराह्वास्तास्ताः पुनर्घर्घरिकाभिधानाः ॥

कुम्भः

**क्षेत्रराजः**

अयं संगीतग्रन्थकारः। चालकलक्षणे कल्लिनाथेन वर्णालङ्कारलक्षणे कुम्भकर्णेन च स्मृतः, नान्यादिभिरपि।

अयमभिनवगुप्तनान्यदेवयोः प्रचीन इति ताभ्यामुदाहृतत्वात् ज्ञायते। देवणभट्टोऽपीमं स्मरति। क्षेत्रराजीयग्रन्थो नाद्यापि लब्धः। प्रायोऽयमष्टमशतके स्यात्।

**क्षेत्राञ्चितम्—उत्प्लुतिकरणम्**

उत्कटस्थानके स्थित्वा विधायाञ्चितमाशु च।
पुनरप्युत्कटे तिष्ठेत्क्षेत्राञ्चितमुशन्ति तत् ॥

वेमः

**क्षेपः—आविद्धधातुः**

क्षेपो लघुगुरुभ्यां स्यात्। शार्ङ्गः

लगुरुभ्यां भवेत्क्षेपो गलघुभ्यामितीतरे।
द्वाभ्यामथ लघुभ्यां स्यादयमित्यपरे जगुः ॥

कुम्भः

**क्षोभः—लक्षणम्**

परदोषैर्विचित्रार्थैर्यत्रात्मा परिकीर्त्यते।
अदृष्टोऽन्योऽपि वा कश्चित् स तु क्षोभ इति स्मृतः ॥

भरतः

यथा रत्नावल्यां – सागरिकैवेति मत्वा वासवदत्तामुपलालयतो राज्ञः सा स्वावकुण्ठनमपनीय वैलक्ष्यमुत्पादितवती। अन्ये तु आत्मन्यभूततद्भावभावनम् इति। परे तु 'अन्यगते हेतावन्यस्मिन् कार्यकल्पनम्' इति च ॥

**—नाट्यालङ्कारः**

अनिष्टदर्शनात्तारतम्यम्। यथा – रत्नावल्यां 'उत्क्षिप्यतामयं पाश' इति राजवाक्यम्। सागरः

क्षोभिणी—श्रुतिः

निषादस्य द्वितीया श्रुतिः।

पुलिन्दीरागध्यानम्

गुञ्जापुञ्जोल्लसद्भूषफल्लवाद्यकृताम्बरा।
कण्डालवीणां दधती पुलिन्दीन्दीवरद्युतिः॥

इयमौडवा सर्वकाले गेया। संगीतसरणिः

खगेश्वरः—देशीतालः

खगेश्वरे गपौ लश्च ऽ ऽ। लक्ष्मणः

खचरः—देशीतालः

विरामलो मिश्ररूपः खचरे षड्लघूत्तरे।।।।।।i
लक्ष्मणः

खञ्जकः—प्राकृते मात्रावृत्तम्

विषमः — चतुर्मात्र एकः रः
समः — चतुर्मात्र एकः द्वौ लघू रः
विरहाङ्कः

खञ्जरीटगतिः—गतिः

समपादं समारुह्य यागतिर्द्रुतमानतः।
खञ्जरीटखगस्येव खञ्जरीटगतिर्मता॥
देवेन्द्रः

खञ्जिका—गतिः

खञ्जिका गतिरेव स्यात्खञ्जवद्गमनं तथा।
देवणः

खटकामुखः—हस्तः

अनामिका कनीयस्यावुत्क्षिप्ते कुटिलीकृते।
विरले चेत्कपित्थस्य तदा स्यात्खटकामुखः॥
उत्तानस्तुरगादेस्स्याद्वल्गा चामरधारणे।
कुसुमापचये मुक्तस्रग्दामधरणे तथा॥
शरमन्थाकर्षणे च संमुखे दर्पणग्रहे।
कस्तूरिकादिवस्तूनां पेषणेऽधस्तलौ करौ।
ताम्बूलवीटिकावृन्तछेदनादौ च स स्मृतः॥
शार्ङ्गः

खटकामुखवर्तना

सव्यापसव्यतो नाभिदेशे या खटकाख्ययोः।
भ्रान्तिरामणिबन्धं सा खटकामुखवर्तना॥
अशोकः

खटकावर्धमानः—हस्तः

परस्परस्याभिमुखौ द्वौ हस्तौ खटकामुखौ।
मणिबन्धस्वस्तिकौ वा खटकावर्धमानकः॥
प्रणामकरणे पुष्पग्रथने सत्यभाषणे।
सूर्योदयादावुत्तानः स्यादयं प्रथमे मते।
ताम्बूलग्रहणे यूनोर्द्वितीयस्तिर्यगाननः॥
विप्रदासः

नेपथ्यरचनायां च पुष्पायां ग्रथनेऽपि च।
सोमेश्वरः

खटकावर्धमानकः—हस्तः

खटकामुखयोः पाण्योः स्वस्तिकं मणिबन्धने।
अन्योन्याभिमुखत्वे वा खटकावर्धमानकः॥
ताम्बूलग्रहणादौ स्यात्कामिना प्रथमे मते।
पुष्पाणां ग्रथने सत्यभाषणादौ मतान्तरे॥
शार्ङ्गः

खट्वाहस्तः

चतुरे चतुरं न्यस्य तर्जन्यङ्गुष्ठमोक्षतः।
खट्वाहस्तः पुरोभागे खट्वादिषु नियुज्यते॥
विनायकः

खडहडकम्—मात्रावृत्तम्

भ्रमरावली गाथा च। विरहाङ्कः

खड्गकलासः—प्रथमः

वामं करं कटौ न्यस्य परं खड्गकृतं करम्।
कृत्वा स कम्पं चेदर्धचन्द्रमास्ते तदादिगः॥

—द्वितीयः

कृत्वा कपोतमूर्ध्वं चेदधोमुष्टिं करं ततः।
यत्र तिर्यक्पताकाख्यं करं कुर्यात्तदाभिधा।
द्वितीया खड्गपूर्वस्य कलासस्य निरूपितः॥

—तृतीयः

विधाय त्रिपताकौ द्वौ यस्य यश्चरणः पुनः।
घातयन्निव तत्रैतं योजयेत्सतृतीयकः॥
अशोकः

—चतुर्थः

स्वस्तिकं कर्कटं चैव मुष्टिकं च पताककम्।
चतुरः क्रमतः कुर्यात्करान्यत्र तु नर्तकी॥
धृतौ मोहे तदाघाते पाते स स्याच्चतुर्थकः।

घातस्तत्र चतुर्धा स्यादूर्ध्वाधः पार्श्वयोर्द्वयोः।
खड्गपूर्वकलासस्य भेदा एते चतुर्विधाः ॥
कुम्भः

—खड्गकलासः

चकितेव निरीक्षन्ती पश्चाद्वामेतरं मुहुः।
प्रचारं धृतखड्गे च तन्वती विविधं द्रुतम् ॥
प्लुतमानादसंबाधं विदधाति करानपि ।
तत्रार्धचन्द्रप्रभृतीन् स खड्गाद्यः कलासकः ॥
कुम्भः

खड्गनारायणः देशीतालः

दद्वयाज्जगणो वक्रः खड्गनारायणो मतः ।
०० ।ऽ।ऽ
कुम्भः

खड्गवर्तना

कुञ्चितो मुष्टिरेकोऽन्योऽञ्चितस्स्यात्खटकामुखः।
इमौ कीर्तिधरः प्राह खड्गवर्तनिकाख्यया॥
अशोकः

खण्डः

खण्डस्त्रिभिस्स्यात्करणैर्व्यायामो मध्यमस्त्वसौ ।
वेमः

खण्डकः—वाद्यप्रबन्धः

खण्डः स्यात्खण्डमध्येऽपि खण्डशो वादने सति ।
शार्ङ्गः

वाद्यखण्डस्य मध्येऽपि खण्डशो यत्र वादनम् ।
स खण्डक इति प्रोक्तो वाद्यलक्षणवेदिभिः ॥
वेमः

खण्डकङ्कालः—देशीतालः

द्रुतौ द्वौ द्वौ गुरू खण्डे ० ० ऽ ऽ
सोमराजः

ज्ञातव्यं खण्डकङ्काले द्रुतद्वन्द्वं गुरुद्वयम् ० ० ऽ ऽ
सुधा

खण्डकङ्कालताले स्याद् द्रुतद्वन्द्वं गुरुद्वयम् ० ० ऽ ऽ
वेमः

खण्डकथा—श्रव्यकाव्यम्

ग्रन्थान्तरप्रसिद्धं यस्यामितिवृत्तमुच्यते विबुधैः।
मध्यादुपान्ततो वा सा खण्डकथा यथेन्दुमती॥
भोजः

खण्डकर्तरी—हौडुक्किकहस्तपाठः

विरलाङ्गुलिघातेन दक्षिणेन करस्य तु ।
अङ्गुष्ठघातैरपि च वामहस्तेन पीडनात् ।
खण्डकर्तरिकासंज्ञो हस्तपाटः प्रकीर्तितः ॥
वेमः

विरलाङ्गुलिना घाताद्दक्षिणेन करेण च ।
वामेनाङ्गुष्ठघातैश्च पीडनात्खण्डकर्तरी ॥
दां कुखुरां कुखुदां कुकुग धोण्ढ दें झें दों गिधों टे।
शार्ङ्गदेवः

खण्डचालिः—वाद्यप्रबन्धः

अस्य नामान्तरमोता॥

खण्डच्छेदः—वाद्यप्रबन्धः

खण्डच्छेदो भवेत्खण्डच्छेदसंज्ञः प्रबन्धयोः ।
मेलनादथवा छेदैः व्यक्तैरुक्तः परैः स्मृतः ॥
वेमः

खण्डछेदो भवेत्क्लृप्तः यस्या स्रोतोवहाख्यया ।
सोमराजः

खण्डछेदसमायोगात्खण्डछेदप्रबन्धयोः ।
छेदैर्व्यक्तैस्समायुक्तं खण्डछेदं परे जगुः ॥
शार्ङ्गः

खण्डडिण्डिमः—देशीतालः

दलौ दलौ दलौ दलौ नलप्लुतप्लुताः।
गुरुप्लुतौ गुरुप्लुतौ गुरुश्च खण्डडिण्डिमे ।
३ मात्राः ॥
तालप्रस्तारः

खण्डधारा—भङ्गतालः

द्रुतद्वयं विरामान्तं ततो लघुचतुष्टयम्।
द्विधैवं परिसंस्थाप्या खण्डधारा भवेत्तदा ॥
० ०̍ । । । । ० ०̍ । । । ।
नान्यः

खण्डनम्—दन्तः

मुहुर्दशनसंश्लेषविश्लेषः खण्डनं मतम्।
संलापेऽध्ययने तत्स्याज्जपभक्षणयोरपि ॥
अशोकः

छेदनात्खण्डनाः प्रोक्ता दन्ता योज्या विशारदैः ।
वीटिकाछेदने चैव मध्ये चार्द्रकभक्षणे ॥
सोमेश्वरः

—चिबुकम्

असकृत्खण्डनं दन्तसंपेटो जपभक्षयोः ।
संलापेऽध्ययने चैतद्विजानन्ति विचक्षणाः ॥
ज्यायनः

खण्डनम्

किन्नर्यां वामहस्तव्यापारः। तत्र द्रष्टव्यम्।

खण्डपाटः—वाद्यप्रबन्धः

खण्डपाटो भवेद्वाद्ये कृतैः पाटैस्तु खण्डशः।

वेमः

पाटस्य खण्डनाद्वाद्ये खण्डपाटोऽभिधीयते।

शार्ङ्ग

खण्डमुकुलहस्तः

पूर्वोक्तमुकुले हस्ते तर्जनी संप्रसारिता।
नाम्नायं खण्डमुकुलो मूषिकार्थे तु युज्जितः॥

भृङ्गारशेखरः

खण्डयतिः—वाद्यप्रबन्धः

कृत्वा खण्डं पाठवद्धं यतिवद्वादनं भवेत्।
एवमावृत्तिकरणादाहुः खण्डयतिं बुधाः॥

शार्ङ्ग

खण्डपाटैः प्रकर्तव्यो यतिभिश्चात्र खण्डकैः।
एवं निरन्तरं वाद्यं तत्खण्डयति कथ्यते॥

सोमेश्वरः

पाटवन्धं यदा खण्डं यतियुक्तं पुनः पुनः।
वाद्यते यत्र वाद्यज्ञैः सा खण्डयतिरुच्यते॥

वेमः

खण्डवर्णः—देशीतालः

खण्डवर्णे प्लुतौ गश्च द्रुतो गश्च गुरुर्लगौ।
ऽ̇ ऽ̇ ऽ ० ऽ ऽ । ऽ　　नन्दी

खण्डसूचितम्—देशीस्थानम्

एकोङ्घ्रिः कुञ्चितस्सम्यगन्यस्तिर्यक् प्रसारितः।
चरणो यत्र कथितं स्थानकं खण्डसूचितम्॥

वेमः

खण्डसूचीभ्रमरी—तिरिपनृत्ताङ्गम्

खण्डसूच्यां तिर्यगूर्ध्वं पताकः प्रसृतो यदा।
वामो दक्षिणहस्तस्तु पार्श्वदेशे प्रसारितः॥
तावेव शिखरौ स्वान्ते कृत्वा वामपदं ततः।
दक्षिणे जानुमूलान्तः दक्षिणावर्ततो भ्रमिः।
त्रिवारं च भवेदन्ते खण्डसूची भ्रमिर्भवेत्॥

वेदः

खण्डहुल्लः—वाद्यप्रबन्धः

श्रोतोगताख्यया यस्या खण्डहुल्लोऽभिधीयते।

शार्ङ्गः

खण्डिका—भङ्गतालः

लघुद्वयं द्रुचतुष्कं विरामः पुनस्तथैव।
॥ ० ० ० ०̇ ॥ ० ० ० ०̇

नान्यः

—रागः

खण्डिका त्वथ गान्धारग्रहांशन्याससंयुता।
समस्वरा तारहीना सन्त्यक्तर्षभपञ्चमा।
षड्जमन्द्रा तथा चेयं रागज्ञैरभिधीयते॥

हरि

खण्डिता—नायिका

व्यासङ्गादुचिते यस्या वासके नागतः प्रियः।
तदनागमदुःखार्ता खण्डिता सा प्रकीर्तिता॥

भरतः

व्यासङ्गादिति। अन्यनारीविषयादित्यर्थः।

खण्डहुल्लकः—वाद्यप्रबन्धः

यद्वाद्यं वाद्यते यत्र यस्या स्रोतोवहाख्यया।
स खण्डहुल्लकः प्रोक्तो वाद्यलक्षणपण्डितैः॥

वेमः

खनटनतिः—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग म ध म प ध नि स.
(अव) स नि ध प ग रि स.

मज

खभेदनृत्तम्—देशीनृत्तम्

चतुरश्रकराकारौ चतुरश्रे च पल्लवौ।
करवर्तनिकापादकुट्टनं च शिरो दृशः॥
कुतकालश्च तिरिपः करमोक्षो यथोचितम्।
सम्प्रदायाततत्तधा झम्पातालेन नर्तनम्।
करोति हि खभेदाख्यं कथितं पूर्वसूरिभिः॥

वेदः

खम्भारी—रागः

षड्जांशधैवतन्यासा पञ्चमेन च दुर्बला।
धैवतर्षभकम्पाढ्या खम्भारी नामतो हि सा॥

सोमेश्वरः

खम्भावती—मेलरागः

खम्भावती पहीना स्यात् कोमलीकृतधैवता ।
गान्धारमूर्छनायुक्ता रिणात्यक्तावरोहिका ॥

तृतीयप्रहरोत्तरगेया । अहोबिलः)

—रागः

धैवतांशग्रहन्यासा षाडवा त्यक्तपञ्चमा ।
खम्भावती च विज्ञेया मूर्छना पौरवी मता ॥
दामोदरः

खम्भावती बुधैः प्रोक्ता न्यासांशग्रहधैवता ।
आन्दोलिता मनिभ्यां च पञ्चमेन विवर्जिता ॥
मोक्षः

खम्भावुत्थी—रागः ( खम्भावती )

खम्भावुत्थी लक्ष्यतेऽथ......ककुभोद्भवा ।
धैवतांशन्यासवती पञ्चमेन विवर्जिता ।
मध्यमे च निपादे च सेयमान्दोलिता भवेत् ।
हरि

खरराजितम्—मेलरागः ( नटभैरवीमेलजन्यः )

( आ ) स रि म प नि स .
( अव ) स नि ध प म प ध प ग रि स .
मञ्ज

खरलिः—मृदङ्गस्य पुटे लेपविशेषः

विभूतिर्गैरिकं भक्तं कन्दुकेन च संयुतम् ।
यद्वा चिपिटकं देयं जीवनीसहमिश्रितम् ।
सर्वमेकत्र संपिष्टं लेपः खरलिरुच्यते ॥

लेपस्तु दक्षिणपुटे देयः, वामे च पूरिका ।

यदुक्तम् —

वामे च पूरिकां दत्त्वा लेपं दद्याच्च दक्षिणे । इति जीवनी - हरीतकी । नारायणः

खरशीला—स्त्री

स्थूलजिह्वोष्ठदशना रूक्षत्वक्कटुभाषिणी ।
रतियुद्धप्रिया धृष्टा नखदन्तक्षतप्रिया ॥
सपत्नीद्वेषिणी दक्षा चपला शीघ्रगामिनी ।
सरोगा बह्वपत्या च खरसत्त्वा प्रकीर्तिता ॥ भरतः

खरहरप्रिया—मेलकर्ता

स ० रि ग ० म ० प ० ध नि ० स ।
मञ्ज

खर्जूरकम्

स्त्रीणां बाहुभूषणम् ।

खलकः—वाद्यप्रबन्धः

हस्तेन विततांङ्गुष्ठविरलाङ्गुलिना क्रमात् ।
पताकेन हस्तैर्जातैः पाटैः स्यात्खलकाभिधः ॥
शार्ङ्गः

—हस्तपाटः

प्रसारिताङ्गुष्ठकस्य शुकतुण्डस्य तु क्रमात् ।
विरलाभिश्चाङ्गुलीभिर्जायते खलको यथा ॥
दगिगिड दगिगिडों वेमः

शुकतुण्डः । अभिनयहस्तः ।

—वाद्यप्रबन्धः

विरलाङ्गुलिसङ्घेन विततांङ्गुष्ठकेन च ।
पताकाख्येन हस्तेन रचितैः पाटसञ्चयैः ।
खलकाख्यः प्रबन्धस्तु कथितो वाद्यवेदिभिः ॥
वेमः

खल्वम्—उदरम् ( खल्लमिति च )

निम्नं स्यादुदरं खल्लं क्षुधार्ते श्रमकर्शिते ।
आतुरे भृङ्गरीटयादिजठराकारधारणे ॥
विप्रदासः

नतं खल्वं मतं श्रान्ते क्षुधि रोगे तपस्यपि ।
उयायनः

खल्लं स्यात्प्रेतभेतालचण्डिकाभिनयेषु च ।
सोमेश्वरः

खशितः—वादनम् ( वामहस्तव्यापारः )

मुहुः सारणया तन्त्रीघर्षणं खशितो मतः ।
शार्ङ्गः

खसिका—रागः

मग्रहन्याससंयुक्ता सांशा तारेण वर्जिता ।
समस्वरा रिपत्यक्ता समन्द्रा खसिका भवेत् ।
गान्धारादिर्यतस्तस्मात् संकीर्णे करुणे रसे ॥
जगदेकः

**खसितः**—वीणायां वामहस्तव्यापारः

श्वसित इति केषुचिद्ग्रन्थेषु पाठः।

मुहुः प्रधर्षणे तन्त्र्याः खसितः कम्रिकाकृते।

कुम्भः

**खानिः**

वंशे गर्भस्थरन्ध्रम्।

**खानिप्रमाणम्**

खानिरन्ध्रं फूत्काररन्ध्रम्।

स्वरभङ्गभयादत्र खानिरन्ध्रो यथाविधि।
कर्तव्यो मानहीनत्वे मिलितो न स्वरान्तरैः॥
यतः कनीयसीमध्यपर्वमूलेन सम्मिता।
खानिः स्यात्सर्ववंशेषु राजराजस्य सम्मता॥

कुम्भः

**खुत्ता**—पादपाटः

चरणाग्रेण धरणीघातः खुत्तेति कथ्यते। वेमः

**खुराघातः**—देशीतालः

खुराघातश्चतुर्द्रुतः। विरामान्तो भवेत् ० ० ० ०́

लक्ष्मणः

**खेचराङ्गी**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि म ग म ध नि स.
(अव) स ध नि प म ग रि स.

मञ्ज

**खेटकम्**—मात्रावृत्तम्

र ज ग विरहाङ्कः

**खेदः**—अवमर्शसन्ध्यङ्गम्

मनश्चेष्टाविनिष्पन्नः श्रमः खेद उदाहृतः।

भरतः

मानसः कायीयश्चेत्युभयोऽपि यावत्। आद्यो यथा – रत्नावल्यां – तस्याः समुद्रपतनादिवृत्तान्ताद्देवीविलापपर्यन्तं मानसः खेदः। शारीरस्तु विक्रमोर्वश्यां 'अहो श्रान्तोऽस्मी'ति वाक्ये पुरूरवसः खेदः।

अभिनवः

**खेलनः**—देशीतालः

खेलनाख्ये द्रुतौ लघुः ० ०। लक्ष्मणः

**खोजः**—वाद्यप्रबन्धः

उपर्युपरि पाटैस्तु क्रियते यत्र लाघवम्।
खोजो नाम स विज्ञेयो निबिडः पाटवर्णकैः॥

सोमेश्वरः

खोज्ज इति भाषायाम्।

स्निग्धं समं घनं श्लिष्टं पाटवर्णैः प्रकल्पितम्।
यद्वाद्यं वाद्यते तद्वैर्लाघवात्करयोर्द्वयोः।
स खोज इति विख्यातो वाद्यविद्याविशारदैः॥

वेमः

समाश्लिष्टघनश्लक्ष्णपाटवर्णविनिर्मितः।
हस्तलाघवसंपन्नः खोजः सञ्जल्पितो बुधैः॥

शार्ङ्गः

**ख्याता**—श्रुतिः

मध्यमस्य तृतीया श्रुतिः।
मण्डलिमते तारमध्यमस्यैव।

**गः**

ताले छन्दसि च गुरुः।

—स्वरः

ग – गान्धारस्वरः।

**गङ्गातरङ्गः**—देशीतालः

गङ्गातरङ्गे प्रत्येकमष्टौ पञ्चत्रिबिन्दवः।
लध्वन्ताः स्युस्ततोऽन्ते लौ........॥
० ० ० ० ० ० ० ०। ० ० ० ० ०। ० ० ०। । ।

लक्ष्मणः

**गङ्गातरङ्गिणी**—मेलरागः (गाङ्गेयभूषणीमेलजन्यः)

(आ) स रि ग म प नि ध नि स.
(अव) स नि ध प म ध म ग रि स.

मञ्ज

**गङ्गारामः**

सङ्गीतरत्नाकरस्य हिन्दीभाषायां व्याख्याता।
रेवादेशराजस्य विश्वनाथस्य आस्थानकविः।

**गङ्गावतरणम्**—करणम्

अञ्चितं पादमत्यर्थमुत्क्षिप्योर्ध्वतलं ततः।
तस्योपरिकरौ कार्यौ त्रिपताकावधस्तलौ॥
शिरश्च क्रमशो यत्र पादार्थमवरोपयेत्।
गङ्गावतरणं विष्णोः पादाद्गङ्गावतारणे॥

ज्यायनः

उद्वाहितं शिरः कार्यं गङ्गावतरणं तदा ।
विष्णुपादादिगङ्गावतारे तद्विनियुज्यते ॥
अत्रान्ये चरणाक्षेपविक्षेपानुविधायिनौ ।
त्रिपताको करौ प्राहुर्मस्तकं चापि तादृशम् ॥
वेमः

## गजः

निषादो गजपर्यायशब्दरुच्यते ।

—देशीतालः

गजतालेऽद्रिधलो मतः ।।।।
मदनः
चतुर्भिर्लघुभिर्गजः ।।।।

—हस्तः

मध्यमानामिके कुर्यात्कुञ्चिते स गजाह्वयः ।
गजे नाट्यविशेषेषु हस्तोऽयं विनियुज्यते ॥
गौरीमतम्

## गजक्रीडितम् – करणम्

कर्णान्तोपरि हस्तस्य त्रिपताको यदाञ्चितः ।
डोला पादा च चारी स्यादेवमङ्गान्तरे तदा ।
गजक्रीडितमाख्यातं गजो येनाभिनीयते ॥
ज्यायनः

## गजक्रान्तः—तानः

प – लोपः – षाडवः ।
ग रि स नि ध म .
कुम्भः

## गजच्छायः—तानः

मध्यमग्रामे रिधहीनौडुवः ।
प म ग स नि .
कुम्भः

## गजदन्तः—हस्तः

सर्पशीर्षौ करौ मध्यं स्कन्धकूर्परयोर्मिथः ।
दधाते चेत्तदा प्रोक्तो गजदन्ताभिधः करः ॥
अशोकः

पार्श्वभागे च संलग्नौ समाकुञ्चितकूर्परौ ।
सर्पशीर्षकरौ यत्र सभवेद्गजदन्तकः ॥
सोमेश्वरः

अथवा यत्र चान्योन्यस्कन्धकूर्परमध्यमम् ।
दधाते सर्पशिरसौ गजदन्तो भवेदसौ ॥
वेदः

स्कन्धस्थौ सर्पशीर्षा चेदितरेतरसम्मुखौ ।
भारस्योद्वहने स्तम्भग्रहणे च गतागते ।
अधः शैलशिलोत्पाटे करः कार्यो विचक्षणैः ॥
अशोकः

प्रथमं निषधं तं च करबद्धो समेतयोः ।
विवाहस्थाननयने तथा शैलशिलादिनः ।
वृक्षादीनां चालने च कर्तव्यस्स्याद्गतागतः ॥
कुम्भः

कटीक्षेत्रगतौ कुञ्चत्कूर्परौ सर्पशीर्षकौ ।
गजदन्त इति प्राह विप्रदासो विदां वरः ।
प्रथमं निषधं केचिद्गजदन्तं प्रचक्षते ॥
विप्रदासः

यानावतरणे स्त्रीणां शिशूनां ग्रहणे तथा ।
शिलोत्पाटे च कर्तव्यः करोऽयं गजदन्तकः ॥
सोमेश्वरः

स्कन्धकूर्परयोर्मध्यमन्योन्यस्य यदा करौ ।
दधाते सर्पशिरसौ गजदन्तस्तदोदितः ॥
आकुञ्चत्कूर्परौ स्कन्धदेशस्थौ सर्पशीर्षकौ ।
अन्योन्याभिमुखौ लक्ष्म गजदन्ते जगुः परे ॥
एष शैलशिलोत्पाटे गतागतयुतः करः ।
विवाहस्थाननयने स्याद्वधूवरयोरयम् ।
स्तम्भग्रहेऽतिभारे च श्रीसोढलसुतोदितः ॥
शार्ङ्गः

## गजरः—वाद्यप्रबन्धः

कृत्वैकवारमुद्ग्राहं नातिदीर्घो न चाल्पकः ।
वादकोद्घोषगम्भीरध्वनिमुच्चतरं दधत् ॥
त्रिः खण्डोऽभ्यस्यते कूटैर्बद्धो वर्णसरेण वा ।
मुहुर्विधायोपशमं छण्डणो यत्र रज्यते ॥
गजरो सावुद्दवणं स्यादस्यादौ पुनः पुनः ।
एकताल्यामुद्दवणं तस्यां निस्सारुकेऽथवा ॥
भवेदुपशमोऽन्यत्र नास्य तालो नियम्यते ।
गजरावयवाः सर्वे वाद्यन्ते ते निरन्तराः ॥
शार्ङ्गः

शुद्धकूटादिभिर्बद्धः सुकुमाराक्षरान्वितः ।
अल्पकोमलता वाद्यो भवेन्मुहुस्ततः परम् ॥
कूटादिबद्धः खण्डः स्याच्छण्डणो यत्र रज्यते ।
गजराख्यो भवेदन्ये प्राहुरालपचालिकाम् ॥
श्रीकण्ठः

उद्ग्राहं सकृदुक्त्वाऽथ नात्यल्पं नातिविस्तृतम् ।
वादकारब्धगम्भीरोद्घोषसंवादितध्वनिम् ॥
कूटैः पाटैश्च सम्बन्धबद्धवर्णसरेण वा ।
खण्डमेकं त्रिरभ्यस्येत्ततश्चोपशमं मुहुः ॥
विधाय च्छण्डणो यत्र रज्यते गजरस्त्वसौ ।
तदुद्ग्राहेरुत्तुवणं कार्यमस्य चादौ पुनः पुनः ॥

एतद्द्वेदेकताल्यां ताले निस्सारुकेऽथवा।
नैव तालस्य नियमो भवेदुपशमे पुनः।
निरन्तराणि वाद्यन्ते खण्डानि गजरस्य तु॥

वेमः

उदाहरणं रत्नाकरे द्रष्टव्यम्।

**गजलीलः**—देशीतालः

गजलीले विरामान्तं लचतुष्टयमीरितम्।
।।।ऽ

वेमः

—नृत्तबन्धः

यत्र प्राच्यं पङ्क्तियुग्मं पश्चिमं च परस्परम्।
चतुष्कवृत्या संप्राप्य मध्यकोणे विनिष्पतेत्।
स बन्धो गजलीलाख्यः कथितो वेमभूभुजा॥

वेमः

**गजलीलम्**—वाद्यम्

बहुधा मूर्छना हस्ताः स्फुरिताः कर्तरी ततः।
खसितो यत्र तत्प्राहुर्गजलीलं कलाविदः॥

शार्ङ्गः

—वीणावादनप्राणः

कर्तर्या श्वसितेनापि मूर्छितः स्फुरितैः करैः।
विरच्यते तु यद्वाद्यं गजलीलं तदीरितम्॥

पार्श्वदेवः

भूरिभिर्मूर्छना युक्तं कर्तरी स्फुरिताकुलम्।
खसितश्चैव तद्वाद्यं गजलीलमुदाहृतम्॥

कुम्भः

**गजलीला**—गतिः

गतिर्मन्दविलासेन मत्तकुञ्जरवद्भवेत्।
नटस्य नटतस्सैव गजलीला तदा मता॥

देवेन्द्रः

पार्श्वयोस्तु पताकाभ्यां कराभ्यां विजयं ततः।
समपादाहतिर्मन्दं गजलीलेति विश्रुता॥

नाट्यदर्पणे

—प्रबन्धः

गजलीलाख्यतालेन गजलीला निगद्यते।
छन्दोहीनेतरल्लक्ष्म हयलीलागतं मतम्॥

श्रीकण्ठः

**गजवक्त्रः**—देशीतालः

गजवक्त्रस्तु चत्वारो लघवो निर्ध्वनिः स्मृतः।
।।।ऽ

लक्ष्मणः

**गजवर्धनं**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स ग म ध नि स.
(अव) स ध प म ग रि स.

मञ्ज

**गजविलसितम्**—षोडशाक्षरवृत्तम्

ऋषभगजविलसितमेवेदम्।

**गजसारिः**—(धेनुकामेलजन्यः)

(आ) स रि ग म प नि ध स.
(अव) स प म ग रि स.

मञ्ज

**गजासुरः**—देशीतालः

एकद्वित्रिचतुः पञ्चषड्द्रुतान्तर्लघुर्यदि।
भवेद्गजासुरो नाम तालोऽयं परिभाषितः॥

०।००।०००।००००।००००००। ००००००॥

लक्ष्मणः

**गजेन्द्रगतिः**—देशीतालः

लचतुष्कं विरामान्तं गजेन्द्रो गजगामिनि।
।।।ऽ

सोमराजः

**गणनायकः**—देशीतालः

नगौ दौलो बिन्दुयुग्मं प्लुतश्च गणनायके।

११ मात्राः

तालप्रस्तारः

**गण्डः**—देशीतालः

लदौ लगौ गण्डताले।

७ मात्राः

तालप्रस्तारः

—वीथ्यङ्गम्

ननु च बहुवक्ष्यमाणस्याशुभार्थो बहुवचनाक्षेपकृतं गण्डमित्यनेनोच्यते। तच्च पताकास्थानकस्यापि आगामिवस्तु सूचनात्मकत्वात्ततोऽस्य को भेदः। उच्यते – पताकास्थानकेन धर्मादिर्नाटकशरीरभूतस्य साध्यस्य वस्तुनः साधनभूतानां उपक्षेपः क्रियते। अत एव तद्विघ्नभूतानामिति विशेषः। अत एव गण्ड इव गण्डः। यथा हि गण्डः प्रथममुद्भिद्यमानः व्यापको गण्डो ज्ञेयः। तदिह बहुवचनसंबन्धानां अन्ते यत्पदं चासंबन्धं संबन्धमिवाभाति। तद्गण्डं नाम वीथ्यां स्यात्।

भोजः

अन्यदन्यच्च वदतोर्द्वयोर्वाक्यसमागमे।
जायतेऽनिष्टमिष्टं वा स गण्ड इति कीर्तितः॥

यथा राघवाभ्युदये – किन्ते स्यादिति चिन्तया इति रामेणोक्ते सीता विरहस्तवेत्याह। रामस्तु शान्तमित्याह।

सागरः

अन्याभिप्रायेणाकस्मात्प्रत्युक्तं प्रतिवचनतयाऽनुच्चारितमपि प्रतिवचनरूपतया प्रक्रान्तेन यत्संबन्धं वचनं तत् दृष्टार्थगर्भत्वाद् दुष्टशोणितगर्भगण्ड इव गण्डः। यथा – बालिकावञ्चितके – कः कंसमास्कन्दति इति कंसेनोक्ते नेपथ्ये योऽन्यतः। प्रसूतो अन्येन च वर्धितो मधुप्रभवः। कृष्णस्य परपुष्टो मारयति न कोऽपि धारयति। इति रङ्गमध्यप्रविष्टपात्रपठितेन वचसा अनिष्टार्थसूचकं संयुज्यमानं गण्डः।

रामचन्द्रः

संरंभसंभ्रमयुतं विवादयुक्तं तथापवादकृतम्।
बहुवचनाक्षेपकृतं गण्डं प्रवदन्ति तत्त्वज्ञाः॥

भरतः

संरंभणाकृतिविशेषेण यः संभ्रम आवेगः तद्युक्तं यद्विरुद्धवस्तु यदनेन कृतं पूर्वोक्तवस्त्वपवदनमेव तद्वचनं दृष्टार्थगर्भत्वाद्गण्ड इव गण्डः। ईषदसमाप्तं वचनं बहुवचनं तत्कृतेनाक्षेपेण कृतं स्वयं प्रतिवचनतां पूर्ववचनस्य गतमित्यर्थः। तथा च कोहलः - वचसां संवद्धानामन्ते यत्स्यात्पदे त्वसंवन्धः। संवद्धमिवाभाति हि तद्गण्डो नाम वीथ्यङ्गम्। अनेनेषदसमाप्तिरेव दर्शिता। यथा – वेण्यां दुर्योधनेन भानुमतीं प्रति करभोरुमोघयुग्ममित्युक्ते, कञ्चुकी भग्नमीनेत्याह। तत्रोरुयुग्ममिति पूर्वविश्रान्तमपि भग्नमित्यत्रसंवन्धयोग्यं जातम्।

अभिनवः

उक्तमन्यार्थमन्येन वचोऽन्यार्थं प्रकल्पयेत्।
अन्यथेति हि गण्डोऽयं बहुधा परिकीर्तितः॥

यथा –

जातोन्यत्र च योऽन्यत्र वर्धितो मधुसंभवः।
परपुष्टस्सकृष्णो यं मारयत्यनिवारितः।
इत्युत्कण्डितया प्रोक्तं कं सेनागतमन्यथा॥

द्व्यर्थगण्डशब्दोऽप्यत्र द्रष्टव्यः। सागरः

गण्डभेरुण्डः—देशीतालः

गण्डभेरुण्डतालोयं गजाभ्यामुपरिस्थलः।
ऽ।ऽ।। लक्ष्मणः

—हस्तः

कपित्थहस्तयोर्मेलात्स्वस्तिकेनैव संभवेत्।
गण्डभेरुण्डनामायं नारसिंहोऽधिदेवता।
गण्डभेरुण्डसंज्ञाके विनियोगस्तु तत्र च॥

गौरीमतम्

गणेशः

सङ्गीतकल्पद्रुमकारः।

गण्डसूचि—करणम्

पादसूचीकरः क्षेत्रे वक्षस्थः खटकामुखः।
कपोलान्ते करोऽन्यः स्यादपघ्नातपाञ्चितः॥
यत्र पार्श्वे नतं तज्ज्ञैर्गण्डसूचि तदिष्यते।
विनियोगोऽस्य मन्तव्यः कर्णगण्डस्य मण्डने॥
सूचीपादं परे प्राहुः कपोलप्रान्तगामिनम्।
नृत्तहस्तोदितं सूचीमुखमन्ये प्रचक्षते॥
तमसंयुतहस्तोक्तं अपरे त्वनुमन्यते।
त्रिपताकाभिधं हस्तं भट्टतण्डुरभाषत॥

ज्यायनः

गतागतम्—स्थानकम्

गन्तुं चरणमुत्क्षिप्य मध्ये गीतादिहेतुना।
हस्ताद्यभिनये यस्मिन् नर्तकी प्रवितन्वती॥
गतिस्थितिनिरुद्धाय तिष्ठेत स्याद्गतागतम्।
संभ्रमप्रभृतावस्य विनियोगः प्रकीर्तितः॥

ज्यायनः

तत्रैकं पादमुद्धृत्य गतिके गमनोन्मुखे।
उदास्ते स्थानकं तत्तु गतागतमुदाहृतम्॥
न ययौ च न तस्थौ चेत्यादिवागर्थदर्शने।
संभ्रमादौ च तस्यास्य प्रयोगः परिकीर्तितः॥

वेमः

गतिचरः—देशीतालः

ताले गतिचरे प्रोक्तौ खण्डमिश्रौ लघू क्रमात्।
ऽ।।ऽ।। लक्ष्मणः

गतिमण्डलः—अङ्गहारः

मण्डलस्वस्तिकनिवेशोन्मत्तोद्वृत्तिमत्तल्ल्याक्षिप्तोरोमण्डलकटिछिन्नानामष्टानां करणानां क्रमात्प्रयोगे गतिमण्डलाङ्गहारः

शार्ङ्गः

गतिस्थम्—देशीलास्याङ्गम्

मार्गदेशीगतं यद्वा समग्रं लक्षणान्वितम्।
वाद्यतालयुतं नृत्तं गतिस्थं प्रणिगद्यते॥

ज्यायनः

गदा—देशीतालः

गौलतश्च गदाभिधे। ऽऽऽ। मदनः

**गद्यम्**—प्रबन्धः

तद्गद्यं यदपद्यं स्यात्सुश्लिष्टपदबन्धनम् ।
षोढा निरूप्यते तच्च वृत्तगन्ध्यथ चूर्णकम् ॥
तथैवोत्कलिकाखण्डं ललितं चित्रमित्यपि ।
पद्यगन्धानुसारं स्याद्यद्गद्यं वृत्तगन्धि तत् ॥
पदैर्व्यस्तैस्समस्तैश्च यद्गन्धश्चूर्णकं हि तत् ।
शब्दाडम्बरयुक्तं च तत्स्यादुत्कलिकाभिधम् ॥
यदा त्रिभङ्गसंयुक्तं तद्गद्यं चण्डमुच्यते ।
यत्पञ्चषैः पदैर्बद्धं समस्तैर्ललितं हि तत् ॥
चित्रादिबहुभङ्गीभिः गद्यं चित्रं निगद्यते ।
एतेषां गानसमये भवेत्तालो यथोचितः ॥
द्रष्टव्या गानवैचित्री स्वराणामपि नैपुणी ।
आभोगसमये गातुर्नाम नेतुश्च गीयते ॥

हरिपालः

इदं गद्यमधिकृत्य विशेषांशाः जगदेकमल्लरघुनाथभूपवेङ्कटमखिप्रभृतिभिर्विस्तरेणोक्ताः । ते तत्रैव द्रष्टव्याः ।

**गनाम्बरी**—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

(आ) स रि ग म प ध नि स .
(अव) स नि ध प म रि स .

मज

**गन्धतरङ्गिणी**—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

(आ) स ग रि ग म प ध नि स .
(अव) स ध नि प म रि स .

मज

**गन्धमादनः**—देशीतालः

प्लुतौ सदौ दलगपाः ताले स्युर्गन्धमादने ।

तालप्रस्तारः

—मेलरागः ( गमनश्रममेलजन्यः )

(आ) स रि म प ध स .
(अव) स नि ध प म ध म ग रि स .

मज

**गन्धर्वः**—मेलरागः ( रघुप्रियामेलजन्यः )

(आ) प ध नि स रि ग रि स नि प प .
(अव) म प ध नि स नि प प .

मज

**गन्धर्वः**—देशीतालः

गन्धर्वो मरभासुरः ।
ऽ ऽ ऽ ऽ । ऽ ऽ । ।

लक्ष्मणः

**गन्धर्वशीला**—स्त्री.

क्रीडापराचारुनेत्रा नखदन्तैस्सुपुष्पितैः ।
स्रग्वी च स्थिरभापी च मन्दापत्या रतिप्रिया ॥
नृत्ते गीते च नाट्ये च रता हृष्टा मृजावती ।
गन्धर्वशीला विज्ञेया स्निग्धत्वक्केशलोचना ॥

भरतः

**गन्धर्वानुमतः**—तानः

गान्धारग्रामे नारदीयतानः ।
प नि स रि ग .

नान्यः

**गन्धर्वामोदः**—रागः

गान्धारन्यासो मध्यापन्यासः षड्जकन्यासः ।
धैवतनिषादरहितः करुणे वैवस्वताधिपतिः ॥
आलापमूर्छना युक्तः तुम्बुरुप्रियतानवान् ।
गन्धर्वामोदनो नाम रागः प्रोक्तो मनीषिभिः ॥

नान्यः

गान्धारांशष्षड्जन्यासत्यक्तनैषादधैवतः ।
मध्यापन्याससंयुक्तो गन्धर्वामोदनस्स्मृतः ॥

बृहत्कश्यपः

**गन्धविक्षेपः**—मेलरागः ( खरहरप्रियामेलजन्यः )

(आ) स रि ग म प ध नि स .
(अव) स ध प ग रि स .

मज

**गमकः**

श्रोतुश्चित्तस्य सुखदो गमकः स्वरकम्पनम् ।
गमकः स्थायवर्णाद्याः नानालङ्कृत्यलंकृताः ॥

कुम्भः

**गमनक्रिया**—मेलरागः ( गमनश्रममेलजन्यः )

(आ) स रि ग म प नि स .
(अव) स नि प म ग स .

मज

**गमनतरङ्गिणी**—मेलरागः ( नटभैरवीमेलजन्यः )

(आ) स रि म ग रि म नि ध नि प ध नि स .
(अव) स नि ध प ग रि स .

मज

**गमननिर्मला**—मेलरागः ( गमनश्रममेलजन्यः )

(आ) स रि ग म प ध नि स .
(अव) स नि प म रि स .

मज

**गमनभास्करः**—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

(आ) स रि ग म प ध प नि स .
(अव) स ध प म ग स .

मञ्ज

**गमनललिता**—मेलरागः ( मायामालवगौलमेलजन्यः )

(आ) स रि स ग म प ध नि ध स .
(अव) स ध म ग रि स .

मञ्ज

**गमनश्रमः**—मेलकर्ता रागः

स रि ग ० ० ० म प ध ० ० नि ० स .

मञ्ज

**गम्भीरम्**—वीणावादने गुणः

गम्भीरं जलदध्वानानुसाराद्गदितं बुधैः ।

कुम्भः

**गम्भीरनाटः**—मेलरागः ( चलनाटमेलजन्यः )

(आ) स ग प नि स .
(अव) स नि प म ग स .

मञ्ज

**गम्भीरमण्ठः**—तालः

गुरुः प्लुतो भवेद्यत्र गम्भीरो मण्ठकस्त्वयम् ।
ऽ ऽ́

वेदः

**गम्भीरमण्ठकः**—देशीतालः

गुरुः प्लुतो भवेद्यत्र गम्भीरो मण्ठको भवेत् ।
ऽ ऽ́

दामोदरः

**गम्भीरवसन्तः**—मेलरागः ( रिनुमत्रोडीमेलजन्यः )

(आ) स म ग म रि ग म प नि ध नि प ध नि स .
(अव) स ध प म रि स .

मञ्ज

**गम्भीरा** -श्रुतिः

मन्द्रपञ्चमतृतीया श्रुतिः ।

मण्डली

—दृष्टिः

अव्यक्तविकृतिर्दृष्टिः गम्भीरेति प्रकीर्तिता ।

शारदातनयः

**गरलारी(रिः)**—मेलरागः ( मेचकल्याणीमेलजन्यः )

(आ) स रि ग म ध नि स .
(अव) स नि ध प ग रि स .

मञ्ज

**गरिगद्यम्**—मेलरागः ( षण्मुखप्रियामेलजन्यः )

(आ) नि स ग म प ध नि .
(अव) ध प म ग रि स नि .

मञ्ज

**गरुडध्वनिः**—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

(आ) स रि ग म प ध नि स .
(अव) स ध प ग रि स .

मञ्ज

**गरुडपक्षकौ**—नृत्तहस्तौ

पताकौ त्रिपताकौ वा तिर्यगूर्ध्वकृतौ करौ ।
प्रागग्रौ च कटीक्षेत्रे स्थितौ न्यक्कृतकूर्परौ ।
हस्तौ गरुडपक्षौ तौ गरुडेशगणोदितौ ॥

कुम्भः

तिर्यक्प्रसारितौ हस्तौ त्रिपताकावधोमुखौ ।
तार्क्ष्यपक्षौ समाख्यातौ किञ्चित्कुञ्चितकूर्परौ ॥

सोमेश्वरः

**गरुडप्लुतम्**—करणम्

वृश्चिकं चरणौ हस्तौ लताख्यौ रेचितः पुरः ।
वक्षस्समुन्नतं यत्र तदुक्तं गरुडप्लुतम् ॥
आहुरन्वर्थमेवास्य विनियोगं विचक्षणाः ।
पताकौ मणिबन्धान्ते मुहुरञ्चितकुञ्चितौ ।
अत्र रक्षानुकूल्येन कथितौ भट्टतण्डुना ॥

ज्यायनः

**गरुडभ्रमरी**

तिर्यक्प्रसार्यैकपादं पश्चाज्जानु भुवि क्षिपेत् ।
सम्यक् प्रसार्य बाहू द्वौ भ्रामयेद्गारुडी भवेत् ॥

नाट्यदर्पणे

**गरुडवर्धनी**—मेलरागः ( शुभपन्तुवरालीमेलजन्यः )

(आ) स रिं ग म नि ध म प ध नि स .
(अव) स ध प म रि स .

मञ्ज

**गरुडहस्तः**

तिर्यक् तलस्थितावर्धचन्द्रादङ्गुष्ठयोगतः ।
गरुडो गरुडार्थे च युज्यते भरतादिभिः ॥

प्रकारान्तरे ।

पुरोभागे तूर्ध्वभागे हंसास्यौ संयुतौ यदि ।
पार्श्वभागे कुञ्चितौ तु कूर्परौ गरुडार्थकः ।
पार्श्वभागे स्थितौ हस्तौ गरुडार्थे नियुज्यते ॥

विनायकः

**गर्गेश्वरी**—मेलरागः ( मेचकल्याणीमेलजन्यः )

(आ) स रि प ध नि स.

(अव) स नि ध म ध म प ग रि स.

मज्ञ

**गर्भः**—सन्धिः

उद्भेदः कार्यबीजस्य प्राप्तिरप्राप्तिरेव वा ।
पुनश्चान्वेषणं यत्र स गर्भ इति संज्ञितः ।।

भरतः

यत्र क्रियाफलस्योद्भेदे लाभनाशान्वेषणादयो जायन्ते स गर्भः।

भोजः

**गर्भलीला**—मेलरागः ( षड्विधमार्गिणीमेलजन्यः )

(आ) स म ग म प नि ध नि स.

(अव) स नि ध प म ग म ग रि स.

मज्ञ

**गर्भशार्दूलः**—मेलरागः ( कामवर्धिनीमेलजन्यः )

(आ) स रि ग म नि स.

(अव) स नि प ध प म ग रि स.

मज्ञ

**गर्वः**—व्यभिचारिभावः

ऐश्वर्यकुलरूपयौवनविद्याबलधनलाभादयो विभावाः। असूयावज्ञाधर्षणानुत्तरदानासंभाषणाङ्गावलोकनविभ्रमापहसनवाक्पारुष्यगुरुव्यतिक्रमणाधिक्षेपवचनविच्छेदादयोऽनुभावाः ।

भरतः

—चित्राभिनयः

ऐश्वर्यरूपतारुण्यकुलविद्याबलैरपि ।
इष्टलाभादिनान्येषामवज्ञा गर्व ईरितः ।।
अलपल्लवः पुरोभागे चलितो रूपदर्शने ।
किञ्चित्सूची श्मश्रुभागे चला यौवनदर्शने ।।
अधोमुखौ पताकौ द्वौ चलितौ भाग्यदर्शने ।
वामदक्षिणपार्श्वे तु शिखरश्चलितो यदि ।।
सत्कुलार्थे दर्शयन्ति तत्तद्भावानुसारतः ।
तिर्यग्बध्वा च चतुरं तस्मिन् हंसास्यचालनम् ।।
मुखस्थाने तु हंसास्यः विद्याभावनिरूपणे ।
पार्श्वोभयोर्मुष्टिहस्तौ चलितौ बलदर्शने ।।

विनायकः

**गर्वः**

सैव स्वविषया दूरीकुर्वाणा गुणिनः परान् ।
श्लाघाभिमानैर्लज्यभावनी गर्व उच्यते ।।

सा – बहुमतिः ।

**गर्वः**—नाट्यालङ्कारः

वैशारद्यवचनम् ।

यथा – योऽयं शस्त्रं बिभर्तीति अश्वत्थामाङ्के वचनम् ।

सागरः

**गर्वभङ्गः**—देशीतालः

ताले स्याद्गर्वभङ्गाख्ये विरामान्तं द्रुतत्रयम् ० ० ०̊

लक्ष्मणः

**गर्हणम्**—लक्षणम्

यत्र सङ्कीर्तयन्दोषं गुणमर्थेन दर्शयेत् ।
गुणातिपाताद्दोषान्वा गर्हणं नाम तद्भवेत् ।।

भरतः

गुणातिपाते दोषो यथा – नृपाः प्रभुत्वादित्यादि वीणावासवदत्ते विष्णुत्रातवाक्यम् । दोषा यत्र गुणीभवन्ति – पूर्वेत्यादि लामकायनवचने तापसवत्सरजे ।

**गलबन्धम्**—हस्तः

पश्चात्कण्ठं समाश्लिष्य पाणिभ्यां द्विगुणाकृतिः ।
गलबन्धमिति प्रोक्तं बाह्यसन्धिरधोमुखम् ।।

उमा

**गवामयनः**—तानः

मध्यमग्रामे षड्जहीनषाडवः ।

ध प म ग रि नि.

कुम्भः

**गवाम्बोधिः**—मेलकर्ता रागः

स रि ग म प ध नि.

मज्ञ

**गह्वरा**—श्रुतिः

षड्जस्य चतुर्थी श्रुतिः ।

पल्कुरिकिसोम.

**गाङ्गेयभूषणी**—मेलकर्ता

स ० ० रि ग म ० प ध ० ० नि स.

मज्ञ

**गाढबन्धः**—हस्तपाटः

वामो दक्षिणवक्त्रेचेद्दक्षिणो वाममण्डले ।
यथा तूर्यस्य गतिना गाढबन्धः प्रकीर्तितः ।।

सोमेश्वरः

नागबन्ध इत्यपि नामास्य वदन्ति ।

**गातृगुणाः**

शारीरं च ध्वनिर्मेधा प्रौढिर्गमककौशलम् ।
तालज्ञता निर्भयता गातुः सप्त महागुणाः ॥

सोमेश्वरः

**गात्रवर्णः**—वर्णालङ्कारः

गात्रवर्णे स्वराणां स्यात् त्रिचतुः कीर्तनं क्रमात् १
भेदद्वयमिदं केचिन्नैष्कर्ष्यं जगदुर्बुधाः ॥

जगद्धरः

भेदद्वयमिमि स्वराणां त्रिः चतुरभ्यासः । नैष्कर्ष्यमिति निष्कर्षालङ्कारभावः ।

**गात्रवर्तना**

अल्पपञ्चहस्तोऽन्तर्गात्रं व्यावर्तितो यदि ।
पराङ्मुखोपविद्धस्स्यात्तदोक्ता गात्रवर्तना ॥

अशोकः

**गाथः**—मात्रावृत्तम्

र, स, ग, ग. विरहाङ्कः

**गाथा**

गाथायां तु कलाः प्रोक्ता नियताश्चतुरक्षरैः ।
संख्या कला मात्रा चाष्टाविंशत्यभ्यधिकं शतम् ॥
मात्रावृत्तैस्तथा स्तोभाक्षरैस्तासां तु पूरणम् ।
अत्रैककानि वर्णाश्चाऽलङ्कारा गीतयस्तथा ॥
सामाङ्गान्यप्यनेकानि कर्तव्यानि विचक्षणैः ।
भवेद्विवधसञ्ज्ञानां गीताङ्गानामिहाल्पतः ॥

वेमः

अत्र विवधैककशब्दौ विदारीशेपवाचकौ । सामाङ्गानीति । प्रस्तारादयः सप्त ।

**प्रबन्धः**

अथो गाथापुराणादिकाव्यसंवन्धिनी कथा ।
सा च पञ्चपदी वापि पट्पदी त्रिपदी भवेत् ॥
आर्या पदत्रिमात्रा स्याद्भाषा प्राकृतसंज्ञिता ।
तालो रागश्च यः कश्चित् गाथेति परिकीर्तिता ॥

हरिपालः

आदौ द्वादश मात्रास्स्युर्दशाष्टौ च ततः परम् ।
ततश्च द्वे दशार्यायाः तुर्ये पञ्चदशाधिकः ॥
आर्या लक्षणसंयुक्ता गाथा प्राकृतभाषया ।
गीयते पूर्ववद्रम्या छन्दोलक्षणवेदिभिः ॥

सोमेश्वरः

**गाथः**—प्राकृतगाथा

अष्टमषोडशौ गौ चतुर्दशो लः षष्ठो जो वा नलौ वा शिष्टाश्चतुर्मात्रिकाः । त्रिंशदक्षरमारभ्य पञ्चपञ्चाशत्पर्यन्ता ।

विरहाङ्कः

**गानक्रमः**

नारदमतङ्गादीनां काले यः क्रमोऽवलम्बितः स ग्रन्थेषु न वर्णितस्स्यात् केवलमालापकरणरूपकशब्दैः स्वराणां सन्निवेशोऽस्ति। कुडुमियामलै शिलालिखिते शुद्धरागाणां सप्तानामप्यालापस्थाय्यारोहणावरोहणापन्यासन्यासक्रमाणां सरिगाद्यक्षरैः स्वरक्रमो लिखितः, नास्मिन् गीतं वा प्रबन्धो वाङ्गत्वेन दृश्यते। आधुनिकैस्तु कश्चिद्रागक्रमोऽनुसृतः। सोऽधुनातनैः केनचिद्भेदेनावलम्ब्यते । स क्रमस्तु कर्णाटक्रम इत्युच्यते । भारतोत्तरदेशे यथेष्टं गीयन्ते रागाः । यवनानां मतस्यापि साङ्कर्यं भारतीयगानक्रमे सङ्क्रान्तमिति कैश्चिदूह्यते । औत्तरीयगानस्य बीजभूतं प्रतिरागस्य देवताध्यानम् । तस्माद्रसश्च भावश्च ग्राह्यः । वर्ज्यस्वरविषयः, आलापक्रमः, रागस्य वृद्धिकरणे मूर्छनातानानां नियमश्च गायकस्येच्छामात्रमिति लक्षणग्रन्थैरनुमीयते ।

कर्णाटकक्रमस्त्वधो लिख्यते— गानक्रम एवालापक्रम इति वेङ्कटमख्याह । आधुनिकैर्गानस्य प्रारम्भ एव रागस्वरूपं वेदयितुं यः स्वरक्रमं आलम्बितस्स आलाप इत्युच्यते । गानाङ्गानि—

(१) आक्षिप्तिका । आयित्तमिति देशभाषासूच्यते । रागैः प्रथममाक्षिप्यते साऽऽक्षिप्तिका ।

पीतत्वेन यथाक्षिप्तं स्वनिर्वाहाय भोजनम् ।
रागेणापि तथाक्षिप्तेत्यादावाक्षिप्तिका मता ॥

(२) द्वितीयाङ्गम्— रागवर्धनी । तत् भाषायां 'एडुपु' इत्युच्यते । करणमिति प्राचीनग्रन्थेपूक्तम् । प्रबन्धावयवेषु य उद्ग्राहस्थानं भजते स एव रागवर्धनीशब्देन उच्येतेति स्यात् । एडुपुः, ग्रहः, उद्ग्राहः, एते पर्यायवाचका इति भाति । रागवर्धन्यनन्तरं विदारी भवति । विदारी विश्रमस्थानम् । विराम इति यावत् । भरतेन अपन्यास इत्युक्तम् । रागवर्धनी विदारी च द्वे अङ्गे यथेष्टं द्विस्त्रिश्चतुः पञ्चकृत्वो वा अभ्यस्येते । यथा— द्वितीया रागवर्धनी विदारी च । तृतीया रागवर्धनी विदारी च । विदारी मुक्तायीति भाषयोच्यते । ततः स्थायीत्यङ्गं सङ्गच्छेते । स्थायिशब्दः स्वरतानानां प्रथमाक्षरवाचकः । कस्माच्चित्स्वरात्कस्यचित्स्वरस्यावधिमारुह्य पुनः कस्यचित्स्वरपर्यन्तमवरोहणमेकं तानं भवति । ततः तदधस्तनस्वरात्पूर्वस्वराधस्तनस्वरपर्यन्तं कस्मिंश्चित्स्वरे अधः क्रमेण न्यस्यते चेदवरोहणं

भवति । कूटतानलक्षणमन्यत्रोक्तम् । एवं स्थायिस्वराद्बहूनां तानानां तननं विस्तारणं वर्तनीत्युक्तम् । भाषायां मकरिणीत्युच्यते । अन्त्ये कस्मिंश्चिन्नियतस्वरे न्यासः (रागस्य वर्जनम्) क्रियते सः न्यास इत्युक्तं भरतेन । भाषायां तु मुक्तायीति ।

चतुदण्डीग्रन्थगानसरणौ अयमालाप इत्युच्यते । स्थायिस्वरभेदेन बहूनां तानानां सञ्चारणं ठायमित्युच्यते । अयं पूर्वः क्रमः । अनन्तरं गीतिर्वा गीतं वा गीयते । ततः परं प्रबन्धो गीयते । तस्मिंस्तु प्रबन्धावयवानां त्रीणि चत्वारि पञ्च षड्वा अङ्गानि विस्तार्यन्ते । प्रबन्धसमाप्तौ आभोग इत्यङ्गे कविनाम प्रभोर्नाम चोक्त्वा प्रशस्यते । एवमालापठायगीतप्रबन्धानां चतुर्णामङ्गानां समवायेन गानक्रमः कर्णाटकसङ्गीते सम्प्रदायत्वेनाङ्गीकृतः ।

अग्रे रघुनाथेन दत्ते रागाणां लक्षणे एकस्य लक्षणं, चतुर्दण्डीलक्ष्यग्रन्थाद्भैरवरागस्य लक्षणं. तुलजभूपेन निरुक्तं श्रीरागलक्षणं चोदाहरणदिशा प्रदर्शयामः । अवशिष्टं तत्तद्ग्रन्थेषु द्रष्टव्यम् ।

**गानमूर्तिः**—मेलकर्ता रागः

स रि ग ० ० म ० प ध ० ० नि स.

मज

**गानललिता**—मेलरागः ( गानमूर्तिमेलजन्यः )

(आ) स ग म प ध नि – स.
(अव) स नि ध प म ग रि – स .

मज

**गानाङ्गी**—मेलरागः ( नटभैरवीमेलजन्यः )

(आ) स रि म ग म प ध नि स .
(अव) स ध नि ध म प म ग रि स .

मज

**गान्धर्वम्**

गान्धर्वं तत्र विज्ञेयं स्वरतालपदात्मकम् ।
पुरा प्रणष्टं देवेभ्यो वाचं गोरूपधारिणीम् ।
अधारयदिति प्रोक्तं गान्धर्वमिह सूरिभिः ॥

कुम्भः

पदस्थः स्वरसङ्घातस्तालेन सुमितस्तथा ।
प्रयुक्तश्चावधानेन गान्धर्वमभिधीयते ॥

दत्तिलः

अवधानमिति । सम्यक् बुद्ध्यादियोजनम् ।

यत्तु तन्त्रीगतं प्रोक्तं नानातोद्यसमाश्रयम् ।
गान्धर्वमिति तद्ज्ञेयं स्वरतालपदात्मकम् ॥
अत्यर्थमिष्ट देवानां तेषां प्रीतिकरं पुनः ।
गन्धर्वाणां च वै यस्मात्तस्माद्गान्धर्वमुच्यते ।
अस्य योनिर्भवेद्गानं वीणा वंशस्तथैव च ॥

भरतः

गानमिति । केवलं खण्डथं गानम् । भरतमते ध्रुवागानमेव ।

गान्धर्वं तत्र विज्ञेयं स्वरतालपदात्मकम् ।
पुरः प्रणष्टान्देवेभ्यो वाचं गोरूपधारिणीम् ।
अधारयदिति प्रोक्तं गान्धर्वं पूर्वसूरिभिः ॥
अत्यर्थमिष्टं देवानामत एव प्रकीर्तितम् ।
वंशवीणाशरीरेभ्यः प्रभवस्तस्य सम्मतः ॥

कुम्भः

—करणम्

यत्रैकपार्श्वं स्थानं स्यात्पताकाख्यौ करौ तदा ।
उत्प्लुत्योत्प्लुत्य पादाभ्यामङ्गुलीपृष्ठदर्शनम् ।
उपरि भ्रमितौ हस्तौ क्रमाद्गान्धर्वमीरितम् ॥

हरिपालः

**गान्धर्वः**—गायकः

गान्धर्वो मार्गदेशीवित् स्वरादेर्मार्गकोविदः ।

कुम्भः

**गान्धर्ववेदसंग्रहः**—गान्धर्वशास्त्रसङ्क्षेपः

दत्तिलकृतः । अत्र पञ्चाशदुत्तरशतद्वयश्लोकाः वर्तन्ते ।
अत्र भरतो गुरव इत्युक्तः । विशाखिलकोहलनारदाः स्मृताः ।

**गान्धर्वस्य त्रैविध्यम्**

गान्धर्वं त्रिविधं विद्यात्स्वरतालपदात्मकम् ।
स्वराश्च श्रुतयो ग्रामौ मूर्छनास्तानसंयुताः ॥
शुष्कसाधारणं वर्णा अलङ्कारास्सधातवः ।
आवापस्त्वथ निष्क्रामो विक्षेपश्च प्रवेशनम् ।
शम्या तालः परीवर्तः सन्निपातस्सवस्तुकः ॥
मात्रा विदार्यङ्गुलयो गीतिः प्रकरणं यतिः ।
गीतयोऽवयवा मार्गाः पातभागास्सपाणयः ।
इत्येकविंशको ज्ञेयो विधिस्तालगतो बुधैः ॥

पदगतस्तु –

व्यञ्जनानि स्वरा वर्णाः सन्धयोऽथ विभक्तयः ।
नामाख्यातोपसर्गाश्च निपातास्तद्धिताः कृतः ॥
वृत्तानि जातयश्चैव भवेत्पदगतो विधिः ।
गान्धर्वसङ्ग्रहो ह्येष विस्तरं च निबोधत ॥

भरतः

**गान्धर्वी**—वीणा

गन्धर्ववीणेति नामान्तरम् । नकुलादीनां लक्षणे द्रष्टव्यम् ।

## गान्धर्वोत्पत्तिः

गान्धर्वं नारदादिभ्यः प्रोक्तमादौ स्वयम्भुवा ।
विधिवन्नारदेनाथ पृथिव्यामवधारितम् ॥

दत्तिलः

## गान्धारः

नाभेस्समुद्गतो वायुः गलं श्रोत्रं च चालयन् ।
सशब्दं येन निर्याति गान्धारस्तेन कथ्यते ॥

पुरुषोत्तमः

नाभेः समुद्गतो वायुरुरःकण्ठसमाहतः ।
गान्धर्वसुखहेतुत्वाद्गान्धारः परिकीर्तितः ।
गोशब्दोपपदाद्धारेः कर्मण्यप्यथवा मतः ॥

कुम्भः

गान्धारस्त्वेकवदनो गौरवर्णः चतुःकरः ।
वीणाफलाब्जघण्टाभृत्करः स्यान्मेषवाहनः ॥
शङ्करो दैवतं क्रौञ्चो द्वीपं सुपर्वजं कुलं ।
विष्णुर्गाता रसो वीरः..............॥

सुधाकलशः

त्रिष्टुप्छन्दः, करुणो रसः, छागो रौति, देवकुलसंभवः सुवर्णवर्णः, वैश्यजातिः, कुशद्वीपभवः, स्वर्लोके वासः, गौडदेशगः, कुजो वासराधीशः, यजुर्वेदी, माध्यन्दिनी शाखा, पञ्चविंशतिवर्षदेशीयः, तिस्रः कलाः, ईश्वरसत्कारे प्रयोगः, उच्चध्वनिः, नादो गन्धं गन्धवहमित्यन्वेति यत्स्फुटं । तेन गान्धार एवासौ स्वरो गान्धार उच्यते । गान्धारो द्विश्रुतिः ॥

पण्डितमण्डली

गावः प्रगीते तुष्यन्ति गान्धारस्तेन हेतुना ।
श्रुत्वा चैवोपतिष्ठन्ति सौरभेया न संशयः ॥

नारदः

### —स्वरहस्तः

करोऽप्यजमुखश्चापि गान्धारः स्वरनिर्णये ।

शृङ्गार

### —रागः

रिनिधैवततारस्स्यात् मन्द्रशून्यः पसोज्झितः ।
ग्रहांशन्यासगान्धारो गान्धारः परिकीर्तितः ॥

सोमराजः

## गान्धारगतिः—भाषाङ्गरागः

गान्धारगतिका धांशग्रहान्ता तारगापि च ।
स्तम्भतीर्थिकिकामेतामेवाहुः कश्यपादयः ॥

कुम्भः

## गान्धारगतिः—रागः

अनन्तरं च गान्धारगतिर्न्यासग्रहांशकात् ।
गान्धारेण तथा मन्द्रशून्या त्यक्ता तथैव च ॥
पञ्चमेन तु षड्जेन तारा सेयं तु धैवते ।
ऋषभे च निषादे च गीतविद्भिरुदाहृता ॥

हरिः

## गान्धारगतिका—रागः

ग्रहांशन्यासगान्धारा मन्द्रशून्या पसोज्झिता ।
रिनिधेष्वपि ताराख्या गान्धारगतिकोच्यते ।
गान्धारादिर्यतस्तस्मात् गातव्या करुणे रसे ॥

जगदेकः

## गान्धारग्रामः

ग्रामशब्दे द्रष्टव्यम् ।

गान्धारो मध्यमस्याद्यां ऋषभान्तां च संश्रयेत् ।
निषादः प्रथमां षाड्जीं धैवतान्त्यां श्रुतिं श्रयेत् ॥
धैवतः पञ्चमस्यान्त्यां ग्रामे गान्धारसंज्ञके ।
गान्धारो धैवताख्यश्च निषादश्च चतुःश्रुतिः ।
यदा भवन्ति गान्धारग्रामो ज्ञेयस्तदा बुधैः ॥

पण्डितमण्डली

## गान्धारपञ्चमः—रागः

गान्धारांशस्तदन्तश्च रागो गान्धारपञ्चमः ।
गान्धारी रक्तगान्धारी ताभ्यामेतस्य संभवः ॥

मोक्षः

गान्धारो निधनेंऽशके यदिश...
षड्जोर्वलधैवतर्षभ...तानस्यतरो यदि ।
मूर्छाचेद्धरिणाश्वकार...ससे गान्धारिकायाः पुनः,
तद्गान्धारकपञ्चमः प्रथुरतिप्रीतिप्रदो जायते ॥

नान्यः

गान्धारांशस्तदन्तश्च धैवतर्षभदुर्बलः ।
गान्धारीजातिसंभूतो ज्ञेयो गान्धारपञ्चमः ॥

कश्यपः

## गान्धारपञ्चमी—जातिः

चच्चत्पुटस्तत्र चतुष्कलस्य द्व्यष्टौ कला मूर्छनिका द्वितीया ।
सा मध्यमग्रामसमुद्भवा तु गान्धारपूर्वा खलु हारिणाश्वा ॥
अङ्के तुरीये खलु नाटकस्य गाने ध्रुवाया विनियोजनं स्यात् ।
गान्धारको न्यास इहोदितोऽपन्यासौ तथैवर्षभपञ्चमौ च ॥

रघुनाथः

गान्धारपञ्चमीभ्यां जायेत गान्धरपञ्चमीजातिः। इति सूत्रम्। पञ्चम एकोंऽशः स्यात्कार्योऽथ गान्धारश्च न्यासः पञ्चमगान्धारयोश्च सञ्चारः। रिपावपन्यासौ।

पूर्णत्वादेवास्य विधाते धैवतषाडवौडवाः।
अथवापन्यासभिदा द्विविधाममिदधति जातिविदः।

नान्यः

ज्ञेयो गान्धारपञ्चम्यां पञ्चमोंऽशः प्रयोक्तृभिः।
स रिषभस्त्यादपन्यासो न्यासो गान्धार इष्यते॥
गान्धार्यामथ पञ्चम्यां यत्सञ्चारादिकीर्तितम्।
तदस्यामपि विज्ञेयं किन्तु पूर्णस्वरा सदा॥

दत्तिलः

पञ्चमोंऽशोत्र गान्धारो न्यासः स्यादृषभोऽपि वा।
गान्धारी पञ्चमीव स्याद्विदार्यादिकमत्र च।
पूर्णस्वरा सदा चेयं प्रोक्ता गान्धारपञ्चमी॥

हरिपालः

## गान्धारचौली—मेलरागः ( मायामालवगौलमेलजन्यः )

( आ ) स म ग प ध नि स.
( अव ) स नि ध ग रि स.

मञ्ज

## गान्धाररागध्यानम्

जटां दधानः कृतभूतिभूषः काषायवासाः तनुदेहयष्टिः।
सयोगपट्टः कृतनेत्रमुद्रो गान्धाररागः कथितस्तपस्वी॥

संगीतसरणिः

## गान्धारललिता—रागः

ऋषभांशग्रहसारा निन्यासा तारषड्जसंयुक्ता।
धैवतयुक्तममन्द्रा भाषा गान्धारललिताथ॥

नान्यः

ऋषभांशग्रहा न्याससप्तमा मन्द्रमध्यमा।
हीना च तारषड्जा च गान्धारललिता मता॥

याष्टिकः

## गान्धारषाडवः—रागः

न्यासांशकग्रहणधैवतधारि भूरिकम्पान्वितर्षभकधैवतसुस्वरश्च।
गान्धारभूः...दोषनिषादमन्द्रस्तारापदस्वर...सरिहीननादः॥
शुद्धगान्धारिकामूर्छा विनतामिस्व्यतानवान्।
बीभत्सरसमाश्रित्य ज्ञेयो गान्धारषाडबः॥

नान्यः

धैवतांशग्रहन्यासो गभूरिध्वनिकम्पितः।
निमन्द्रस्वनहीनश्च ज्ञेयो गान्धारषाडबः॥

कश्यपः

## गान्धारसिद्धिः—रागः

गान्धारपञ्चमस्याङ्गं विबुधैरंशपञ्चमः।
ग्रहणन्यासगान्धारो गीयते न्यासकम्पितः।
रागो गान्धारसिद्धिस्तु निषादस्वरमन्द्रकः॥

सोमराजः

## गान्धारसिन्धुः—भाषाङ्गरागः

न लक्षितात्र गान्धारसिन्धुर्लक्ष्येष्वदर्शनात्।

कुम्भः

## गान्धारस्वरमन्त्रः

चतुरश्रो हृदयाय नमः। त्र्यश्रः शिरसे स्वाहा। मिश्रः शिखायै वषट्। खण्डः कवचाय हुम्। सङ्करो नेत्रत्रयाय वौषट्। चतुरश्रमिश्रखण्डसंकरा अस्त्रायफट्। सनत्कुमारऋषिः अत्युकछन्दः दुर्गा देवता गं ह्रीं श्रीं गं नमः।

जगदेवः

## गान्धाराभिनयः

शुकतुण्डेन हस्तेन दृष्ट्या करुणया तथा।
अधोमुखेन शिरसा स्वस्थाख्यस्थानकेन च।
चार्याप्युचितया धीमान्गान्धारस्वरमादिशेत्॥

दामोदरः

## गान्धारी—प्राकृते मालावृत्तम्

चतुर्मात्रिक एकः अथवा पञ्चमात्रिक एकः।
चतुर्मात्रिक एकः अथवा पञ्चमात्रिक एकः जः।
अथवानलौ पञ्चमात्रिक एकः।

विरहाङ्कः

## —जातिः

गान्धारषड्जमध्यमपञ्चमनिषादा ग्रहा अंशाश्च। पञ्चस्वरपरस्तारः। न्यासपरस्तत्परो वा मन्द्रः। ऋषभहीनं षाडवम्। रिधहीनमौडुवितम्। पूर्णावस्थायां रिषभधैवतयोरल्पत्वम्। शेषाणां बहुत्वम्। स्वरजातित्वाद्गान्धारो न्यासः। षड्जमध्यमावपन्यासौ। धैवतर्षभयोः सङ्गतिः। अस्या दशविधलक्षणम्। मूर्छना धैवतादिः। चञ्चत्पुटस्तालः। एकद्वित्रिचतुष्कलैः चित्रवार्तिकदक्षिणेषु मागधीसंभाविताप्रथुलागीतयः। करुणो रसः। तृतीयप्रेक्षणिके ध्रुवागाने प्रयोगः।

मतङ्गः

समगपनि स्वरा अंशाश्च। सपावपन्यासौ। गान्धारो न्यासः। रिलोपे षाडवम्। रिधलोपे औडुवितम्। रिधौ लङ्घनीयौ। मध्यमग्रामिका देशी गान्धारपञ्चमा वेलावल्यादिषु गीयते।

नान्यः

अत्र मतङ्गोक्तषड्जमध्यमापन्यासत्वं लेखकदोषेण स्यात्। अभिनवगुप्तोऽपि षड्जपञ्चमावपन्यासाविति अभिनवभारत्यामाह।

गान्धार्यां द्वावनंशौ तु ज्ञेयावृषभधैवतौ।
क्रमान्वित्यमपन्यासौ विज्ञेयौ षड्जपञ्चमौ।
धैवतादृषभं गच्छेदेवं स्यात्सर्वमेव तु॥

दत्तिलः

आरोहणं धादृषभान्तमस्यां लोपाद्भवेत् षाडवतर्षभस्य।
स्यादौडुवं तद्रिधयोस्तु लोपान्न पञ्चमेंशे किल षाडवः स्यात्॥
नैवौडवं षड्जनिषादकौ वा अंशौ यदा मध्यमपञ्चमौ च।
स्यान्मूर्छना पौरविकात्र तालः चच्चत्पुटः पूर्ववदेव तालः॥
गान्धारपूर्वोऽपि च पञ्चमश्च देशी च वेलावलिका च रागाः।
गान्धारकांशेत्वसमानभावा तस्यास्तु गाने स्फुटतां प्रयाति॥

रघुनाथः

## गान्धारीकपालम्

गान्धारिका जातिकपाललक्ष्म वक्ष्यामि गान्धारक एव चांशः।
न्यासोऽप्यपन्यास इह ग्रहश्च स एव षड्जर्षभगाः तथात्वे॥
स्याद्वैवतः स्याद्बहुलस्तथैव स्यादौडुवत्वं रिपयोर्धिलोपात्।
अष्टौ कलास्तत्र भवन्ति शिष्टं गान्धारिकायामिव सर्वमूह्यम्॥

रघुनाथः

अपि यत्र मध्यमः स्यान्न्यासोऽपन्यासको ग्रहश्चैव।
अंशो धैवत एवं यस्मिन्नल्पे स्वराः सरिगाः॥
रिपहीनौडवकृतं मध्यमजातिस्वरैः समारब्धम्।
विद्यादष्टकलं कपालमिह शुद्धगान्धार्याः॥

मध्यमग्रामे गान्धारी सकपालपाणिका गान्धारपञ्चमेन देश्यां वेलावल्यां गीयते।

नान्यः

## गान्धारीकपालगानम्

यस्मिन्नंशो ग्रहो न्यासोऽपन्यासो मध्यमस्वरः।
बहुधा धैवतेऽल्पत्वं सरिगाणामथौडुवम्॥
पञ्चमर्षभयोर्लोपात्कलाष्टकविभूषितम्।
तद्गान्धारीकपालं स्यादिति भूमीन्द्रभाषितम्॥

चलत्तरङ्गेत्याद्यष्टकलम्।

कुम्भः

## गान्धारीध्यानम्

स्वर्णाभिरामरुचिमुज्वलरूपवेषां
वीणाविनोदकुतुकां मृदुमीलिताक्षीम्।
देवीं दयार्द्रहृदयां प्रणतिं गतेषु
गान्धारमाश्रितवतीमनिशं नमामि॥

जगदेकः

## गान्धरीरागध्यानम्

शिवालयसमीपस्थां वीणावाद्यकरद्वयीम्।
स्वर्णमाणिक्यमकुटां ध्याये गान्धारिकां सदा॥

रागसागरः

## गान्धारोदीच्यवती—जातिः

गान्धारोदीच्यवायां तु द्वावंशौ षड्जमध्यमौ।
रिलोपात्षाडवं ज्ञेयं पूर्णत्वेंशोऽन्तरात्मना॥
अलानिधपगान्धाराः षाडवत्वे प्रकीर्तिताः।
रिधयोः सङ्गतिर्ज्ञेया धैवतादिश्च मूर्छना॥
तालश्चच्चत्पुटो ज्ञेयः कलाः षोडश कीर्तिताः।
विनियोगो ध्रुवागाने चतुर्थप्रेक्षणे मतः॥

शार्ङ्गदेवः

षड्जस्तथा धैवतकस्वरौ द्वावस्यामपन्यासतया प्रतीतौ।

रघुनाथः

षाड्जी गान्धारी मध्यमा तथा धैवती च खलु जातिः।
गान्धारोदीच्यवतीं जातिं निर्वर्णयन्त्येताः॥
स्वरौ मध्यमषड्जाख्यौ अंशौ यत्र प्रकीर्तितौ।
न्यासः स्यान्मध्यमो यस्यां षाडवं चर्षभं विना॥
नास्त्येवौडुवितं यस्यां विकल्पाद्यत्र पूर्णता।
मन्द्रस्थाने च गान्धारबाहुल्यं दृश्यते तथा॥

नान्यः

## गाम्भीरी—भाषाङ्गरागः

षड्जग्रामाभिरामा नरहरिदयिता सग्रहांशा मतारा
सान्ता सान्तप्रयोज्या परिपगमपयुक् षड्जतो मूर्छनाढ्या।
भाषाङ्गं दत्तिलेक्तेरियमुत गदितोपाङ्गकं कोहलाद्यै-
र्गाम्भीरी भूमिभर्त्रा पुनरियमुदिता भूषितारोहिवर्णैः॥

कुम्भः

## गाम्भीर्यम्

यस्य प्रभावादाकारे हर्षक्रोधभयादयः।
सन्तोऽपि नोपलभ्यन्ते गाम्भीर्यं तदुदाहृतम्॥
कर्मणामतिलोकानां पौरुषोत्कर्षशंसिनाम्।
गाम्भीर्यमाहुरितरैरपरिच्छेद्यवैभवम्॥

भावविवेकः

## गायकः

गायत्यन्यानपेक्षो यः सुगीतं लक्षणान्वितम्।

सोमेश्वरः

## गायकभेदः

एकश्चेद्गायकः स स्याद् द्वौ चेद्यमलकौ स्मृतौ ।
मिलित्वा बहुभिर्यस्तु गीतं गायति गायकः ॥
स वृन्दगायकस्तेषां पूर्वः पूर्वो भवेद्वरः ।
शिक्षको भावकश्चैव रञ्जको रसिकस्तथा ।
अपरः कुठिकाराख्यः पञ्चमो गदितो बुधैः ॥

सोमेश्वरः

## गायत्रीवृत्तानि

वृत्तानि च चतुष्षष्टि गायत्र्यां कीर्तितानि तु ।

भरतः

## गायनप्रियः—मेलकर्ता रागः

स रि ० ० म ० प ध नि ० ० स.

मज

## गायि (य?) गोवालः—देशीतालः

रगणो द्वावर्धमात्रौ गायिगोवालनामनि ।
ऽ।ऽ ० ०

कुम्भः

## गारुगिः—देशीतालः

विरामान्तं द्रुतानां च चतुष्कं गारुगौ स्मृतम् ।
० ० ० ०ं

सुधा

## गारुडम्—देशीस्थानम्

आकुञ्चितो वामपादः पुरस्ताद्विनिवेशितः ।
पश्चाद्दक्षिणपादस्तु विन्यस्तो भुवि जानुना ।
यत्र तद्गारुडं स्थानं वदन्ति स्थानवेदिनः ॥

वेमः

## गारुडहस्तः

अर्धचन्द्रोत्थानितयोर्यदङ्गुष्ठे निकुञ्चिते ।
अन्योन्यमेलनाद्धस्तो गारुडः परिकीर्तितः ।
गरुडोऽस्याधिदेवस्तु गृध्रे च गरुडे तथा ॥

गौरीमतम्

## गिरा—ध्रुवावृत्तम्

त्रिलघुराजितो
यदि च पञ्चमः ।
भवति पादतः
प्रकथिता गिरा ॥

यथा –

सुणिअ कुंजरो – श्रुत्वा कुञ्जरः ।
मध्यमोत्तमपात्राणां गिरा वीरे रसे भवेत् ।
टक्के चतुरश्रः स्यात्पादाक्षरविनिर्मितः ॥

नान्यः

## गीतम्

स्वराणां च पदानां च तालानां च समन्वयः ।
गीतमित्युच्यते ....................॥

सोमेश्वरः

## गीतगुणाः

इच्छन्ति सममाचार्याः व्यक्तं वाञ्छन्ति पण्डिताः ।
काङ्क्षन्ति मधुरं कान्ताः विकृष्टमितरे जनाः ॥
शूरास्सोत्साहमिच्छन्ति करुणं विरहातुराः ।
विटास्तु परिहासाढ्यं योगिनोऽध्यात्मसङ्गतम् ॥
सोत्सवा मङ्गलं गीतं स्तोत्रं भक्तिसमन्विताः ।
वादिनो विषमप्रायं प्रौढक्रमसमन्वितम् ॥

सोमेश्वरः

## गीतनृत्तानुगम्

वाद्यशब्दं पश्यत ।

गीतपात्रानुगं वाद्यं तद्भवेद्गीतनृत्तगम् ।

सोमेश्वरः

## गीतपर्यायाः

गीतं गानं च गीतिश्च गेयं गान्धर्वमित्यपि ।

जगन्नाथमल्लः

## गीतप्रकाशः

एवन्नामानः ग्रन्थाः त्रयो वर्तन्ते । एको विप्रदासकृतः ।

अन्यः केनचिदोढ्रदेशीयेन कृतः । तृतीयः कृष्णदासेनौढ्रदेशीयेन रचितः । अन्त्यः पञ्चपरिच्छेदात्मकः । ध्रुवादिगीतविषये बहून् पक्षान्निरूप्य स्वपक्षं सिद्धान्तयति । गीतलक्षणे समीचीनोऽयं ग्रन्थः । स्वनिबद्धोदाहरणानि गीतकानां वर्तन्ते । कालः १६००.

## गीतरत्नावलिः

ज्यायसेनापतिना कृता । तेनैवोक्तं नृत्तरत्नावलौ पञ्चमाध्यायान्ते ।

'एतासामपि विज्ञेयः प्रस्तारः कूटतानवत् ।
स चास्माभिः स्फुटंगीतरत्नावल्यां प्रपञ्चितः'

इत्युक्तम् । कालः प. १२४५

## गीतवाद्यता—देशीलास्याङ्गम्

नृत्येदनुगुणं यत्र नर्तकी गीतवाद्ययोः ।
अक्षराणां लयस्यापि समता गीतवाद्यता ॥ अशोकः

सुगीतवर्णकाकुभ्यां सदृशस्य लयेन च ।
वाद्यस्यानुगुणे नृत्येद्यत्र सा गीतवाद्यता ॥

ज्यायनः

गीतवाद्यमेलनप्रकारः

स त्रिविधः औधः अनुगतं तत्त्वमिति ।

वाद्यं गीतानुगं यत्स्यात् त्रिप्रकारं तदिष्यते ।
ओघश्चानुगतं तत्वमिति तल्लक्षणं यथा ॥

कुम्भः

गीतविधिः—पूर्वरङ्गाङ्गम्

अत्र गीतविधिः पूर्वैर्बहुशो भरतादिभिः ।
मद्रकादिषु गीतेषु सप्तस्वेष विधिः स्मृतः ॥

शारदातनयः

गीतविभागः—गीतिच्छेदः

निर्युक्तं पदनिर्युक्तमनिर्युक्तमिति क्रमात् ।
पुनरेतानि गीतानि प्रत्येकं त्रिविधानि च ॥
सर्वैरङ्गैश्च संयुक्तं निर्युक्तं परिकीर्तितम् ।
पदनिर्युक्तमित्युक्तोऽपोहनं प्रत्युपोहनम् ॥
संबन्धं च स्तुतिपदैः छन्दोभिश्च यथेप्सितैः ।
अनिर्युक्तं तु विज्ञेयं वस्तुमात्रप्रकल्पितम् ॥

वेमः

गीतानुगम्

वाद्यशब्दं पश्यत ।

—वाद्यम्

गीतेन सङ्गतं यत्तु तद्गीतानुगमुच्यते ।

सोमेश्वरः

गीतिः

सलयतालपदा स्वरराजिता विविधवर्णविभूषणभूषिता ।
गमकपेशलगानगुणान्विता मुनिवरैरिह गीतिरुदाहृता ॥

कुम्भः

—छन्दः

द्वितीयस्या आर्याया अभ्यासे जायते दले प्रथमे ।
सा तन्नाम्ना गीतिस्तथैव च दले चरमे ॥

कुम्भः

गीतिः

त्रिषष्ठ्यलङ्कारयुता चतुर्भिः स्थाय्यादिभिस्सम्मिलिता च वर्णैः ।
विलम्बितेनापि च मध्यमेन द्रुतेन शोभां दधती लयेन ॥

गानक्रियागीतिरिहोपदिष्टा चतुर्विधा सा गदिता मुनीन्द्रैः ।
स्यान्मागधीनामवती किलाद्या तथार्धमागध्यभिधा द्वितीया ।
संभाविताख्यानवती तृतीया भवेच्चतुर्थी पृथुलाभिधाना ॥

रघुनाथः

गीर्वाणपदम्—मेलरागः ( रसिकप्रियमेलजन्यः )

( आ ) स रि ग म प ध स .
( अव ) स नि ध प म ग रि स .

मञ्ज

गीर्वाणप्रिया—मेलरागः ( धीरशङ्कराभरण मेलजन्यः )

( आ ) स रि ग म ध स .
( अव ) स नि ध म ग रि स .

मञ्ज

गीर्वाणमण्ठकः—तालः

गीर्वाणमण्ठके तु स्याज्जगणो दीपको गुरुः ।
। ऽ । ऽं ऽ

वेदः

—देशीतालः

गीर्वाणमण्ठके च स्यात् जगणो दीपको गुरुः ।
। ऽ । ऽं ऽ

दामोदरः

गीर्वाणी—मेलरागः ( गवाम्भोधिमेलजन्यः )

( आ ) स रि ग रि म ग म ध नि प नि ध स .
( अव ) स नि ध प म ग रि स .

मञ्ज

गुणकरी—रागः

रिधहीना गुणकरी औडुवा परिकीर्तिता ।
निग्रहांशा तु निन्यासा कैश्चित् खण्डलया मता ।
रजनी मूर्छना चात्र मालवाश्रयणी तु सा ॥

दामोदरः

—मेलरागः

रिधकोमलसंयुक्ता गनिवर्जा गुणक्रिया ।
धैवतोद्ग्राहसंयुक्ता क्वचिद्गान्धारसंयुता ॥

प्रथमप्रहरोत्तरगेया ।

अहोबिलः

गुणकरीरागध्यानम्

शोकाभिभूतनयनारुणदीनदृष्टि-
र्नम्रानना धरणिधूसरगात्रयष्टिः ।

आमुक्तचारुकबरी प्रियदूरवर्ति-
न्युक्ता तदा गुणकरी करुणे कृशाङ्गी ॥
मालवकौशिकभार्या ।

दामोदरः

**गुणकीर्तनम्**—लक्षणम्

लोके गुणातिरिक्तानां गुणानां यत्र नामभिः ।
एको हि शब्द्यते तत्तु विज्ञेयं गुणकीर्तनम् ॥

भरतः

यथा वीणावासवदत्ते ( ४ अङ्के ) राजमन्त्रिसंवादः ।

**गुणकीर्तनम्**—करणम्

कीर्त्यमानैर्गुणैर्यत्र विविधार्थसमुद्भवैः ।
दोषा न परिकथ्यन्ते तद्ज्ञेयं गुणकीर्तनम् ॥

भरतः

'पृथुरसि गुणै' रित्यत्र विविधा ये हि पृथू रामप्रकृतयो वा समुद्भवैर्गुणैः कीर्त्यमानैः तद्वता दोषा न परिकल्प्यन्ते ।

यथा – नलोसीति द्यूतव्यसनिता न कथ्यते। दोषोऽत्र न प्रधानम् ।

अभिनवः

लोके गुणातिरिक्तानां गुणानां यत्र नामभिः ।
एको हि शब्द्यते तत्तु विज्ञेयं गुणकीर्तनम् ॥
यथा – 'भग्नं येन धनु' रित्यादि ।

सागरः

बहूनामभिधेयानां वर्णनं गुणकीर्तनम् ।

सर्वेश्वरः

—विरहावस्था

अङ्गप्रत्यङ्गलीलाभिः वाक्चेष्टाहसितेक्षितैः ।
नास्त्यन्यस्सदृशस्तेनेत्येतत्स्याद् गुणकीर्तनम् ॥
गुणकीर्तनोत्सुकसनैरश्रुस्वेदापमार्जनैश्चापि ।
दूत्यविरहविस्रंभैरभिनययोगश्चतुर्थे तु ॥

भरतः

## गुणनिका

भट्टलोल्लटकृता नाट्यशास्त्रव्याख्या गुणनिकेत्युच्यते । पुनः पुनरभ्यासो गुणनिका । संज्ञायां कन् ।

**गुणमञ्जरी**—कला

तथैकपादं च धनुर्गुणस्थं कृत्वाचरेद्गोलकचक्रलीलाम् ।
असिं ललाटे दधती च यत्र राज्ञेयमुक्ता गुणमञ्जरीति ॥

नागमल्लः

**गुणातिपातः**—लक्षणम्

गुणाभिधानैर्विविधैर्विपरीतार्थयोजितैः ।
गुणातिपातो मधुरैर्निष्ठुरार्थैर्भवेद्यथा ॥

भरतः

यथा – धूर्तविटे विटोक्तं 'जात्यन्धां सुरते' ष्वित्यादि ।

अत्र कुलस्त्रीसमुचिताह्विनयलज्जादयो गुणा विपरीतार्थयोजिताः ।

**गुणानुवादः**—नाट्यालङ्कारः

दोषपरेण दर्पादवधीरितस्य व्याहारः गुणस्य प्रतिपादनम् ।
यथा – रावणाङ्के विभीषणवाक्यं 'भ्रष्टः पदा' दित्यादि ।

सागरः

—लक्षणम्

गुणानुवादो हीनानामुत्तमै रुपमाकृतः ।

भरतः

गुणानुवाद इति परिमितस्यापाग्रतोत्कृष्टगुणेन योपमा तत्कृतो गुणानामुत्सेकः । यथा – 'पालिता द्यौरिवेन्द्रेण त्वया राजन्वसुन्धरा' इति । अन्ये पठन्ति –

गुणाभिधानैर्विविधैर्विविधार्थप्रयोजितैः ।
गुणातिपातो मधुरैर्निष्ठुरैर्वा भवेदिह ॥

अभिनवः

अन्ये तु

गुणानुवादस्स ज्ञेयो यत्राभेदोपचारतः ।
गौणीं वृत्तिमुपाश्रित्य वस्तुनो रूपमुच्यते ॥
यथा – शाकुन्तले 'अनाघ्रात' मिति श्लोकस्य गुणानुवादः ।

**गुणाश्रयः**—देशीतालः

प्लै दौ गो गुणाश्रये ।
७ मात्राः ।

तालप्रस्तारः

**गुणीभूतव्यङ्ग्यभेदाः**

अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।
सन्दिग्धतुल्यप्राधान्ये काकाक्षिप्तमसुन्दरम् ।
व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टाभिधाः स्मृताः ॥

शारदातनयः

## गुण्डकिरीरागध्यानम्

रतोत्सुका कान्तपथप्रतीक्षामापादयन्ती मृदुपुष्पतल्पे ।
इतस्ततः प्रेरितदृष्टिरार्ता श्यामाङ्गिका गुण्डकरी प्रदिष्टा ॥

संगीतसरणिः

**गुण्डकृतिः—क्रियाङ्गरागः**

देशीहिन्दोलरागोत्था मतारा मपभूयसी।
षड्जन्यासांशसंपन्ना समन्द्रा रिधवर्जिता।
गेया गुण्डकृतिस्तज्ज्ञैः रसे शृङ्गारसंज्ञके॥

भट्टमाधवः

**गुण्डक्रिया—रागः**

गौण्डक्री संज्ञितो रागो देशीहिन्दोलसंभवः।
धैवतर्षभसंत्यक्तः षड्जन्यासांशसंयुतः॥
गान्धारतारशेषस्तु क्रमादान्दोलितस्वरैः।
षड्जमन्द्रसमायुक्त एवं गौण्डकृतिर्भवेत्॥

हरिः

षड्जांशा रिपभान्ता च धैवतेन च वर्जिता।
प्रकम्पिता निजस्थाने नाम्ना गुण्डकृतिर्मता॥

सोमेश्वरः

न्यासांशकग्रहणषड्जधरा पमन्द्रा
मध्याख्यपञ्चमरवप्रचुरा मता सा।
त्यक्ता च धैवतरवेण हि गीतविद्भिः
सङ्कीर्तिता जगति गौण्डकृतिर्मनोज्ञा॥

नान्यः

षड्जांशकग्रहन्यासर्षभधैवतवर्जिता।
मपोत्कटा मतारा पमन्द्रा गौण्डकृतिर्मता॥

मतङ्गः

देशीहिन्दोलरागाङ्गं षड्जांशन्याससंयुता।
रिसंत्यक्ता गतारा च शेषैरान्दोलिता स्वरैः।
समन्द्रा हास्यशृङ्गारे गेया गुण्डकृतिर्भवेत्॥

जगदेकः

गेया गुण्डकृतिर्देशीहिन्दोलाङ्गं रिधोज्झिता।
षड्जांशग्रहणन्यासा गतारा मन्द्रपञ्चमा।
आन्दोलिता स्वरैश्शेषैरेषा शृङ्गारहास्ययोः॥

सोमराजः

**—मेलरागः (मायामालवगौलमेलजन्यः)**

(आ) स रि ग रि म प नि ध नि स.
(अव) स नि ध प म ग रि ग स.

मञ्ज

**गुण्डक्रियारागध्यानम्**

श्रीचन्दनोद्यानविलासभासुरां
पीताम्बरालङ्कृतसन्नितम्बिनीम्।
वीणाप्रवालाञ्चितवामभागां
गुण्डक्रियां तां मनसा स्मरामि॥

रागसागरः

**गुण्डक्री—रागः**

गुण्डक्री रिधहीना स्यात् सत्रया च क्रियाङ्गका।

मद

**—रागः (वंशे वादनक्रमः)**

तारस्थं स्थायिनं नीत्वा षड्जं तस्माद्द्वितीयकम्।
तृतीयं च स्वरं प्राप्य ग्रहार्धं द्रुतमुच्चरेत्॥
ग्रहात्पूर्वं स्वरं स्पृष्ट्वा ग्रहन्यासं विधाय च।
ईषद्विरम्य तत्पूर्वं स्वरं स्पृष्ट्वा तृतीयकम्॥
लघू कुर्यात्ततः पूर्वौ स्पृष्ट्वा पश्चात् ग्रहात्परौ।
स्वरौ प्रापय्य लघुतां द्वितीयं प्रोच्य च द्रुतम्॥
स्थायिन्यासाद् गुण्डकृतेः स्वस्थानं प्रथमं भवेत्।
द्वितीयोऽस्यामपि स्थायिस्वरो वंशेषु लक्ष्यते॥

वेमः

**गुम्मकाम्भोजी—मेलरागः (मायामालवगौलमेलजन्यः)**

(आ) स रि ग प ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

**गुम्मकाम्भोजीरागध्यानम्**

अस्य कूर्मकाम्भोजीति नामान्तरं दृश्यते।

कूर्मासनां मन्मथवृक्षमूलनिवासिनीं हंसमुखाग्रहस्ताम्।
काषायचेलां स्फटिकाक्षमालां श्रीकूर्मकाम्भोजिमहंभजामि॥

रागसागरः

**गुरुः**

छन्दश्शास्त्रे लघ्वोरुच्चारणकालो गुरुः। तालशास्त्रे तु चच्चत्पुट-चाचपुटाद्येककले एकैकपादो गुरुः। तस्यैककलयथाक्षरमिति नामान्तरमन्वर्थोऽस्ति॥

**—देशीतालः**

सद्वयं गुरोर्द्वन्द्वं गुरुताले गुरोर्मतम् ० ० ऽ ० ० ऽ

श्रीकण्ठः

गुरुगुञ्जितः—हस्तपाटः

मुहुर्मुहुर्दक्षिणस्थानामिकाङ्गुष्ठचालनात् ।
वामस्य पाणेरुल्लासाज्जायते गुरुगुञ्जितः ॥
रकर रररकरर करधर गिडघे रगिड दधिगिघोटें

वेमः

गुरुजाना—रागः

पञ्चमांशग्रहन्यासा रिषभेण विवर्जिता ।
षाडवा कम्पिता स्थाने गुरुजानापि गीयते ॥

सोमेश्वरः

गुरुञ्जीगुरुञ्जौ—रागः

सांशन्यासग्रहोपेता संपूर्णा धरिभूयसी ।
समन्द्रा च पतारा च गुरुञ्जी स्वल्पपञ्चमा ।
षड्जादिभिर्यतस्तस्मात् रसे वीरे नियुज्यते ॥

जगदेकः

ललिताङ्गं गुरुञ्जो स्यादृषभेण समन्विता ।
पञ्चमेन विहानेयं प्रमोदे विनियुज्यते ॥

जगदेकः

अनन्तरं गुरुञ्जी स्यात् षड्जन्यासग्रहांशकः ।
धैवतर्षभभूयिष्ठा संपूर्णा मन्द्रधैवता ।
कथ्यते पञ्चमे तारा रागज्ञैरल्पपञ्चमा ॥

हरिः

अनन्तरं गुरुञ्जाख्यो रागो ललितसंभवः ।
ऋषभांशग्रहन्यासो हीनपञ्चमको भवेत् ॥

हरिः

—हस्तः

गुरुञ्ज्यां चतुराभिधः । शृङ्गारः

गुरुत्वम्

लघुभिर्गुरुभिर्वापि गुणैर्योऽतिशयो नृणाम् ।
सर्वस्मादपि जन्तोर्यत्तद्गुरुत्वं प्रचक्षते ॥

भावविवेकः

गुरुपर्यायाः

वक्रो दीर्घो द्विमात्रः स्यात्पूज्यो गश्च कलाभिधः ।
केयूरो नूपुरो हारस्ताटङ्कः कङ्कणो गुरुः ॥

श्रीकण्ठः

गुरुप्रकाशः—मेलरागः ( नटभैरवीमेलजन्यः )

(आ) स रि ग म ध नि स .
(अव) स नि ध प म रि स .

मज

गुरुमल्लकः—देशीतालः

विन्दुषट्कं गुरुलघुप्लुतश्च गुरुमल्लके ।
९ मात्राः ।

तालप्रस्तारः

गुरुलघुसञ्चयः—पुष्करवाद्ये गुरुलघ्वोः मध्यलयप्रवृत्तिः

यथा धिमधिधिमधिदिकल्ला तकटा धिघटा दिधिपट घघट-मथि धूं धू घटमथि घघादुगुडुकदु गुद्धघटधं इति ।

भरतः

गुरुसञ्चयः—पुष्करवाद्ये अक्षरलययोः प्रयोगः

गुरुस्थितलयप्रवृत्तः गुरुसञ्चयः ।

यथा – घेता कें ता तं ता धं धं धां धां कीतां कीतततां घंता-कं तिवलां इति गुरूणि स्युः ।

भरतः

गुरुहस्तः

लाङ्गूलतर्जनी वक्रा श्लिष्टलाङ्गूल इष्यते ।
बृहस्पतेरर्थभावे कथ्यते नाट्यकोविदैः ॥

शृङ्गारः

गुर्जरी—मेलकर्ता ( मालवगौलः )

ग्रहांशन्यासरिः पूर्णा प्रातर्गेया तु गूर्जरी ।
बहुली मिश्रिता नित्यं षड्जहीना कचिद्भवेत् ॥

श्रीकण्ठः

—रागः

रिषभांशन्यासयुक्ता हीनगान्धारधैवता ।
निषादे कम्पिता पूर्णा गुर्जरी नाम रागतः ॥

सोमेश्वरः

गुर्जरी रिग्रहांशान्ता जाता पञ्चमषाडवात् ।
कचिन्मांशापि घस्रादौ गेया शृङ्गारवर्धनी ॥

नारायणः

षाडवः – षड्जस्वरः । सङ्गीतसारे दक्षिणगूर्जरी सौराष्ट्र-गूर्जरीति भेदद्वयमुक्तम् । रत्नमालायां 'दशधा गुर्जरी प्रोक्ता' इत्युक्तम् ।

ग्रहांशन्यासऋषभा संपूर्णा गुर्जरी मता ।
पौरवी मूर्छना यस्यां बह्वल्पसममिश्रिता ॥

दामोदरः

रिग्रहांशधमन्यासा जाता पञ्चमषाडवात् ।
ममध्यान्ता रितारा च रिधाभ्यामतिभूयसी ।
गुर्जरी ताडिता पूर्णा शृङ्गारे विनियुज्यते ॥

हम्मीरः

गुल्फः

गुल्फावङ्गुष्ठसंश्लिष्टावन्तर्यातौ वहिर्गतौ ।
मिथो युक्तौ वियुक्तौ च पञ्चधा स्थानकादिषु ॥

विप्रदासः

गुल्मः—नृत्तम्

भाणे प्रयुक्तम् ।

गुल्मस्संभूय यन्नृत्यंगुल्मवन्धो विलम्वे स्यात् ।
विलम्ब इति विलम्बितलयः ।

शारदातनयः

गुह्यद्युतिः—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

( आ ) स रि ग म ध नि ध प ध प स.
( अव ) स नि ध प म ग रि स.

मञ्ज

गूढा—श्रुतिः

षड्जस्य तृतीया श्रुतिः । मण्डलीमते तारषड्जस्यैव ।

अनूपः

गूढार्थम्—काव्यदोषः

पर्यायशब्दाभिहितं गूढार्थमिति संज्ञितम् ।

भरतः

गूर्जरिका—रागः

अंशन्यासग्रहपो निषादतारा च मन्द्रगान्धारा ।
रिषभविहीनान्दोलितगमका च गूर्जरी पञ्चप्राया ॥

नान्यः

रितारा मन्द्रगा न्यासग्रहांशीकृतपञ्चमा ।
रिहीना. . . . . . . . . . .समुद्भूतगूर्जरिका ॥

मतङ्गः

गूर्जरी—उपाङ्गरागः

मेषगा पीतवस्त्रा च गौराङ्गी कैश्चिदिष्यते ।

कुम्भः

—रागः

कथ्यते गूर्जरीरागो जातः पञ्चमषाडवात् ।
ऋषभांशग्रहयुतो न्यासवान्मध्यमस्वरे ॥
षड्जमध्यर्षभे तारो वहुत्वं धैवतर्षभे ।
संप्राप्तो गुर्जरीराग इति सम्यक् निरूपितः ॥

हरिः

गूर्जरी—रागः

पञ्चमांशग्रहन्यासा रितारा मन्द्रमध्यमा ।
अपन्यासस्तु गान्धारः सकलस्वरपूरिता ॥
विस्फुटस्वरनादा च मध्यमर्षभधैवतैः ।
कोकिलप्रियतानेन गूर्जरी जायते सदा ॥

नान्यः

मध्यमधैवतऋषभैः वलवद्भिर्योजिता तु संपूर्णा ।
गापन्यासेन युता गूर्जरिका भवति रम्यतरा ॥

कश्यपः

रिग्रहांशश्च पन्यासः जातः पञ्चमषाडवात् ।
ममन्द्रः पनितारश्च रिधाभ्यामपि भूयसी ।
गूर्जरी ताडिता पूर्णा शृङ्गारे विनियुज्यते ॥

जगदेकः

मन्यासा रिग्रहांशा च जाता पञ्चमषाडवात् ।
तारा पञ्चममध्या च गूर्जरी रिसयोर्वहुः ॥

सोमराजः

—प्रथमरागः

स्याद्रिग्रहांशा रिधभूरिपूर्णा मन्यासका पञ्चमषाडवोत्था ।
तारो धरी मुख्यरसे ममन्द्रा सन्ताडिता गूर्जरिका स्वरैश्च ॥

मोक्षदेवः

—रागः

रिषभः स्यात् ग्रहेंऽशे च मान्ता गूर्जरिका रजा ।
रजा – रागाङ्गः ।

मद

—रागः ( वंशे वादनक्रमः )

ऋषभं स्थायिनं कृत्वा तत्पूर्वं तु प्रकम्पयेत् ।
अर्धीकृत्य तमेवाथ ग्रहं तस्माद् द्वितीयकम् ॥
तृतीयं तदधस्त्यं च पुनश्च स्थायिनं व्रजेत् ।
ग्रहात्पूर्वं प्रकम्प्याथ वादयित्वार्धमस्य च ॥
स्थायिस्वरे यदा न्यासो गूर्जर्यास्तु तदा भवेत् ।
स्वस्थानमाद्यं वंशेषु तृतीयोऽस्यां भवेद्ग्रहः ॥

वेमः

—रागाङ्गरागः ( वीणायां वादनक्रमः )

स्थायिनं ऋषभं कृत्वा तदधस्थं द्वयं ततः ।
गत्वा स्थायिन एवाथावरोहेत्त्रीन्स्वरानथ ॥
पञ्चारुह्य कृते न्यासे रिषभे गूर्जरी भवेत् ।
गान्धारोऽपि ग्रहः कैश्चिदिष्यतेऽस्याः स्वरागमः ॥

कुम्भः

विधाय स्थायिनं मध्यमृषभं तदधःस्थितौ ।
स्वरौ द्वावेत्य तदनु प्रारभ्य स्थायिनं स्वरम् ॥
आरुह्य त्रीन्स्वरान्पश्चावरोहे तान्स्वरान् पुनः ।
न्यस्यते स्थायिना सेयं गूर्जरीति निगद्यते ।
एतस्या लक्ष्यमार्गे तु गान्धारोऽपि ग्रहो भवेत् ॥

वेमः

## गूर्जरीरागध्यानम्

इन्दीवरश्यामतनुस्सुकेशी पाटीरपत्रात्वलिचारुतल्पा ।
श्रुतिस्वरव्यूहविभागरम्या तन्त्रीमुखान्मञ्जुलगूर्जरीयम् ॥

श्रीकण्ठः

श्वेतकवचावृताङ्गीं कन्दुकहस्तां सखीजनेन खेलन्तीम् ।
शम्बरडिंभकलोलां मानसदेशे च गूर्जरीं हि भजे ॥

रागसागरः

## गूर्जरी—रागाङ्गरागः

गूर्जरी मध्यमन्यासा जाता पञ्चमषाडवात् ।
ऋषभांशग्रहा मन्द्रमध्यमा ताडितस्वरा ।
पनितारा धभूयिष्ठा संपूर्णा सार्वकालिका ॥

भट्टमाधवः

## गृहप्रत्यागमः—संगीतशृङ्गाराङ्गम्

क्रीडान्ते गृहागमनम् ।

भोजः

## गृध्रावलीनम्—करणम्

अङ्गुष्ठेन महीं चुम्बन् किञ्चिदञ्चितजानुकः ।
पृष्ठतः प्रसृतः पादः पार्श्वगौ च लताकरौ ॥
यत्र गृध्रावलीनं तत्पृथुमक्षिनिरूपणे ।
तार्क्ष्यपक्षाविह प्रोक्तावुचितौ भट्टतण्डुना ॥

ज्यायनः

योज्यं गृध्रावलीनं तद्वीरपक्ष्याहवे बुधैः ।

लक्ष्मणः

## गेयरूपकाणि

अथ देशीनृत्तकाव्यप्रभेदा डोम्बिकादयः ।
कथ्यन्ते डोम्बिका भाणः प्रस्थानं षिङ्गडोऽपि च ॥
भाणिका प्रेरणं चाथ रामाक्रीडं तथैव च ।
रागकाव्यं च भाण्डी सः रासकं चेत्यमी दश ।
कोहलेनोक्तमेवात्र तेषां लक्षणमुच्यते ॥

वेमः

## गेरञ्जी—भाषाङ्गरागः

षड्जांशग्रहणन्यासा मृदुधा दीप्तपञ्चमा ।
स्वल्पपा धरिभूयिष्ठा पूर्णा गेरञ्जिका मता ।

कुम्भः

## गोत्वारिः—मेलरागः (लताङ्गीमेलजन्यः)

(आ) स रि म प ध स ·
(अव) स नि ध प म ग रि स .

मञ्ज

## गोत्रस्खलितम्—सन्ध्यन्तरम्

तद्गोत्रस्खलितं यत्तु नामव्यत्ययभाषणम् ।

सिङ्गः

नामान्तरग्रहणं गोत्रस्खलितम् । यथा – रम्भानलकूबरे
नलः – प्रसीद मेनेहमुपारतोस्मि
रम्भा - प्रसाद्यतां साहमपैमि रम्भा ।
नल – अहोविधिर्मे पदसन्निधिस्ते
करोति गोत्रस्खलिताभिशङ्काम् ॥
इत्यत्र मेनानामग्रहणम् ।

सागरः

## गोदोहनः—तानः

मध्यमग्रामे गहीनषाडवः ।

म रि स नि ध प .

कुम्भः

## गोधारी—मेलारग: (झल्वरालीमेलजन्यः)

(आ) स रि ग रि म ग म प ध नि स .
(अव) स नि ध प म ग रि स .

मञ्ज

## गोपतिः—देशीतालः

गोपतिः पादभागौ द्वौ लद्रुतौ त्र्यश्रलघू लपौ ।
। ० ० । ० । । ऽ

लक्ष्मणः

## गोपतिप्पः

तालदीपिकाकर्ता । कालः क्रै. प. १४५०.

## गोपराजकुमारः—देशीतालः

गोपराजकुमाराख्ये विन्दुर्विद्युद्धनुश्शरः ।
विन्दुत्रयं शरश्चापो विद्युल्लो गः प्लुतो द्रुतः ।
० ऽ ऽ । ० ० ० । ऽ ऽ । ऽ ऽ ०

गोपतिप्पः

गोपिकाम्भोजीरागध्यानम्

दधिघटविनिहितहस्तां नवनीताकर्षणप्रशस्तान्यकराम् ।
बालकलालनलोलां मनसि ध्यायामि गोपिकाम्भोजीम् ॥

रागसागरः

गोपिकाम्भोधी—मेलरागः

धैवतोद्ग्राहसंयुक्ता गोपिकाम्भोधिका पुनः ।
यत्रारोहे विवर्ज्यत्वं पांशाभ्यां च सुशोभिता ॥

द्वितीयप्रहरोत्तरगेया ।

अहोबिलः

गोपिकावसन्तः—मेलरागः ( नटभैरवीमेलजन्यः )

( आ ) स ग म प ध नि स .
( अव ) स नि ध प म ग स .

मज्ञ

गोमती—मेलरागः ( रघुप्रियामेलजन्यः )

( आ ) नि स रि ग म प ध नि .
( अव ) स म ग रि स नि स .

मज्ञ

गोमण्डलम्—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

( आ ) स रि ग रि म प नि ध प स .
( अव ) स नि ध प म ग रि स .

मज्ञ

गोमुखीमार्गः—पुष्करवाद्ये वाक्करणक्रमः

सुद्धं सिद्धं मत्थिक्कट घे घे मत्थिद्धि घखु सुणं घे घो टडि इति गोमुखीमार्गः ।

भरतः

गोमुखी गोमुखान्तर्वक्त्रमगूढं तत्र बीभत्सयोगः । इत्यक्षरसङ्गतिरपि गोमुखीत्युक्ता । सर्वेषु पुष्करेषु यतिहननं बाहुल्येन चालिङ्गके । वैणे धपस्थाने स गोमुखीमार्गः ।

अभिनवः

गोमुखी—मृदङ्गवादनमार्गः

गोमुखी प्राग्रहस्तस्य चालनेन प्रकीर्तिता ।

नारायणः

गोमूत्रिकम्—मेलरागः ( हनुमत्तोडीमेलजन्यः )

( आ ) स रि ग म प नि ध स .
( अव ) स नि ध प म ग रि स .

मज्ञ

गोलकमुक्ष्वनी—कला

एका नटी द्वित्रिचतुस्सुगोलान्करात्करेणाशु निरन्तरं खे ।
उत्क्षिप्य गृह्णाति च यत्र भूयो भूयो हि सा गोलकमुक्ष्वनीति ॥

नागमल्लः

गोल्ली—रागः

धान्तग्रहांशसंयुक्ता रितारा गनिवर्जिता ।
सरिभ्यां बहुला गोल्ली धादिर्बीभत्सभाग् भवेत् ॥

जगदेकः

गोल्लीसंज्ञस्तु रागस्स्यात् ग्रहांशन्यासधैवतः ।
तारर्षभश्च गान्धारनिषादाभ्यां विवर्जितः ।
षड्जर्षभाभ्यां बहुलः कथितो रागवेदिभिः ॥

हरिः

धैवतवरमणीयैरंशन्यासग्रहैश्च संयुक्ता ।
ताररिषड्जसमेता गोल्ली गान्धारसप्तमापेता ॥

नान्यः

रिषड्ज...... तारतरां च गनिवर्जिताम् ।
मन्द्रेण रहितां गोल्लीं न्यासांशग्रहधैवताम् ॥

मतङ्गः

गोवर्धनी—मेलरागः ( शुभपन्तुवरालीमेलजन्यः )

( आ ) स रि ग प ध स .
( अव ) स नि ध प म ग रि स .

मज्ञ

गोविडम्बिनी—मेलरागः ( नटभैरवीमेलजन्यः )

( आ ) स ग म प ध नि स .
( अव ) स ध प ग रि स .

मज्ञ

गोविन्दप्रियः—अङ्गहारः

कटिभ्रान्तमर्गलं च पार्श्वजानु तथैव च ।
हरिणप्लुतकं कार्यं ततः प्रेङ्खोलितं पुनः ॥
अवहित्थं चापसृतं छिन्नं च कटिपूर्वकम् ।
करणं नवमं छिन्नं नवीनभरतोक्तितः ।
गोविन्दप्रियसंज्ञोऽयं कार्यो गोविन्दपूजने ॥

कुम्भः

**गोशीला**—स्त्री

पृथुपीनोन्नतश्रोणी तनुजङ्घा सुहृत्प्रिया ।
संक्षिप्तपाणिपादा च दृढारम्भा प्रजाहिता ॥
पितृदेवार्चनरता सत्यशौचगुरुप्रिया ।
स्थिरा परिक्लेशसहा गवां सत्त्वं समाश्रिता ॥

भरतः

**गोष्ठी**—शुष्कवाद्यम्

यद्वाद्यं शुष्कमित्युक्तं तद्गोष्ठीत्यभिसंज्ञितम् ।

कुम्भः

—नृत्तरूपकम्

अथोत्पाद्यकथैकाङ्का गोष्ठी शृङ्गारमन्थरा ।
रूपसौन्दर्यलावण्योपेता षट्पञ्चनायिका ॥
प्राकृतैर्नवभिः पुंभिः दशभिर्वाप्यलङ्कृता ।
गर्भावमर्शसन्धिभ्यां शून्या नोदात्तनायका ॥
अत्र स्यात्कैशिकीवृत्तिः मृद्वी नान्यरसाश्रया ।
न कुञ्जरघटाघातं युद्धं तत्रोपवर्णयेत् ॥
गोपीशतैर्विहरतो गोष्ठे बालस्य चेष्टितं यत्तु ।
यमलार्जुनादिदानवनिधनकृतं तत्तु गोष्ठी स्यात् ॥

शारदातनयः

एकाङ्का कथिता गोष्ठी कैशिकीवृत्तिसंयुता ।
संभोगनवषट्पञ्चसप्तभिर्योषिदन्विता ॥
प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलङ्कृता ।
गर्भावमर्शसन्धिभ्यां हीना प्राकृतसम्मता ।
वाद्याद्यैरन्विता नैव कर्तुं विचक्षणैः ॥

यथा सत्यभामा ।

शुभङ्करः

**गोष्ठीविहारः**—संगीतशृङ्गाराङ्गम्

समानलीलाविद्यावित्तवयोऽनुरूपालपैरासनबन्धो गोष्ठी । तस्यां विहरणं गोष्ठीविहारः ।

भोजः

**गोसवः**—तानः

रि—लोपः । षाडवः । प म ग स नि ध ।

कुम्भः

**गोस्तनीहस्तः**

सर्वासामङ्गुलीनां तु श्लिष्टे मध्यमतर्जनी ।
कनिष्ठानामिके श्लिष्टे गोस्तनीहस्त उच्यते ।
अधोमुखी गोस्तनी तु गोस्तनेषु नियुज्यते ॥

विनायकः

**गौडः**—रागः

निषादांशग्रहन्यासो गौडः पञ्चमवर्जितः ।
स्यादङ्गं टक्करागस्य प्रायः शृङ्गारवीरयोः ॥

सोमराजः

गौडस्स्यात् षड्जरागाङ्गं सन्यासांशग्रहस्थितः ।
वर्ज्यश्च पञ्चमेनैष रसे वीरे नियुज्यते ।
जातेश्चाङ्गं निषादिन्या वदन्ति न तु मे मतम् ॥

जगदेकः

**गौडः**—रागः ( षाडवः )

निषादांशग्रहन्यासो गौडः स्यात्पञ्चमोज्झितः ।
वीरशृङ्गारयोर्गेयो दिनान्ते विरलर्षभः ॥

नारायणः

—रागः

लक्ष्मैतद्गौडरागस्य प्रतिष्ठा रिषभोऽत्र न ।
स्वस्थाने ताडितश्चायं गीयते गीतवेदिभिः ॥

एतदिति श्रीरागः परामृश्यते ।

सोमेश्वरः

न्यासोंऽशस्स्यात् षड्जः पञ्चमहीनस्तथर्षभग्रहणः ।
स्फुरिताख्यगमकनिविडो गौडस्स्यात् टक्करागरवसदृशः ॥

नान्यः

टक्करागेण सदृशः पञ्चमेन विवर्जितः ।
षड्जांशन्यास संपन्नो गौडस्स्याद्दपकम्पनम् ॥

मतङ्गः

ततो गौडाभिधो रागष्टक्करागसमुद्भवः ।
न्यासांशग्रहवानेष निषादे पञ्चमोज्झितः ॥

हरिः

—रागाङ्गरागः

टक्कस्याङ्गं भवेद्गौडः पञ्चमस्वरवर्जितः ।
निषादांशग्रहन्यासो वर्षासु करुणे मतः ॥

भट्टमाधवः

**गौडकैशिकः**—रागः

शुद्धकैशिकवज्जातो गौडकैशिकसंज्ञकः ।
किन्त्वसौ भिद्यते गीत्वा विन्यासोऽप्यस्य भेदकृत् ॥
कैशिकीं षड्जमध्यां च ये वदन्त्यस्य कारणम् ।
कैशिक्यामंशयोरेव निधयोः पञ्चमान्तकृत् ॥
षड्जमध्यामथ न्यासापन्यासास्तन्मते कथम् ।
अतः कार्मारवीजातिः कैशिकी चास्य कारणम् ॥

एतन्मतमेव नान्यदेवेनाङ्गीकृतम् , न तु मतङ्गेन ।

ग्रहविनिहितषड्जोऽप्यंशकोऽप्यत्र षड्जः
सकलरसनिवासौ.........सर्वस्वरौघः।
जनहृदयहरोऽयं न्यस्तगान्धारधारो
यदि भवति स चैको मध्यमो न्याससंस्थः॥

कार्मारवीषड्जमध्याजातिद्वयसमाश्रितः।
सौवीरांशुद्धमध्याख्या मूर्छनाद्वयमाश्रितः॥

अग्निष्टोमिकतानाढ्यः शृङ्गारे स्मरदैवतः।
कथितः क्षिप्रगौडेशतेजसा गौडकैशिकः॥ नान्यः

षड्जांशः पञ्चमन्यासः संपूर्णो गौडकैशिकः।
कार्मारवीषड्जमध्याजातिद्वयसमुद्भवः॥
कश्यपः

कैशिकीषड्जमध्याभ्यामुत्पन्नो गाडकैशिकः।
षड्जग्रहांशसंयुक्तः काकलीकलितस्त्वथ॥

पञ्चमेन युतस्तारे पञ्चमे पूर्ण एव च।
षड्जादिमूर्छनो वर्ण आरोह्यत्र तु शस्यते।
अलङ्कारः प्रसन्नान्तः स्यादेवं गौडकैशिकः॥
हरिः

## गौडकैशिकमध्यमः—रागः

षड्जमध्यमया सृष्टो गौडकैशिकमध्यमः।
षड्जग्रहांशो मन्यासः संपूर्णः काकलीयुतः।
भयानके च वीरेऽयं गीयते गीतकोवि॰.
मोक्षदेवः

षड्जग्रामसुसंबद्धो गौडकैशिकमध्यमः।
षड्जमध्यमया सृष्टः षड्जमध्यग्रहांशकः॥

मध्यमन्यासरुचिरो निषादे काकलीयुतः।
संपूर्णस्तु भवेदेवं गौडकैशिकमध्यमः॥
हरिः

लघुपञ्चमकनिषादः पूर्णष्षड्जांशमध्यमन्यासः।
गौडादिः किल कैशिकमध्यः स्यात् षड्जमध्यमाजातः॥
नान्यः

षड्जांशो मध्यमन्यासः षड्जमध्यमयोर्द्भवः।
संपूर्णस्वरकः प्रोक्तो गौडकैशिकमध्यमः॥
कश्यपः

षड्जांशो मध्यमन्यासः स्वल्पसप्तमपञ्चमः।
षड्जमध्यासमुद्भूतो गौडकैशिकमध्यमः॥
मतङ्गः

## गौडक्रिया—प्रथमरागः

देशाख्यहिन्दोलभवा गतारा न्यासांशषड्जा मपभूरितारा।
हीना रिधाभ्यां क्रियते पमन्द्रा मुख्ये रसे गौडकृतिः प्रगेया॥
मोक्षः

—रागः

षड्जांशग्रहणन्यासां मतारां मपभूयसीम्।
रिधलुक्तां पमन्द्रां च तज्ज्ञा गौण्डकृतिं जुगुः॥
हम्मीरः

## गौडपञ्चमः—रागः

षड्जग्रामेण संबद्धः कथ्यते गौडपञ्चमः।
धैवतो षड्जमध्याभ्यामुत्पन्नश्चांशके ग्रहे॥

धैवतो मध्यमन्यासः काकल्यन्तरसंयुतः।
कार्यौ निषादगान्धारौ पञ्चमो न भवेद्यदि।
षाडवस्त्वादयं प्रोक्तो गौडपञ्चमनामकः॥
हरिः

बीभत्सोऽथ भयानको यदि रसः स्यादंशको धैवतः
स्वल्पौ सप्तमपञ्चमौ यदि पुनश्चान्तस्थितो मध्यमः।
गान्धारो यदि जायते च बलवान् तत्षड्जमध्याभिधा-
धैवत्योरिह गौडपञ्चम इति ख्यातस्स रागो भवेत्॥
नान्यः

गौडपञ्चमनिष्पत्तिर्धैवतीषड्जमध्ययोः।
धैवतांशो मध्यमान्तो हीनपञ्चमसप्तमः॥
कश्यपः

धैवतीषड्जमध्याभ्यां जातोऽसौ गौडपञ्चमः।
धैवतान्तग्रहो मान्तो............वर्जितः।
काकलीकलितो विद्धिबीभत्से स भयानके॥
मोक्षः

## गौडमल्हारः—मेलरागः (मल्हारमेलजन्यः)

उभयोर्गौडमल्हारमल्हाराभिधयोर्मतः।
किञ्चिद्विभेदो भेदज्ञैरन्योन्यं रसपुञ्जयोः॥
श्रीकण्ठः

## गौडवः—रागः

गौडवः पञ्चमत्यागी त्रिनिषादश्च रागजः।
मद

## गौडी—मेलरागः (मालवगौलमेलजन्यः)

सत्रया धगरिक्ता स्याद्गौडी सर्वाङ्गमञ्जुला।
गायकैर्गीयते सायं गम्भीरगुणगुम्भिता॥
श्रीकण्ठः

गौडी—रागः

निषादबहुला गौडी सहिता सप्तभिस्स्वरैः ।
षड्जांशकग्रहन्यासा तारमन्द्रा च कथ्यते ॥

नान्यः

सप्तस्वरा च गौडी निषादबललक्षिता सदा भवति ।
न्यासांशग्रहषड्जा तारा मन्द्रा च जायते सा तु ॥

कश्यपः

ग्रहांशन्यासषड्जा स्याद्गौडी मालवकैशिकात् ।
वीरशृङ्गारयोर्गेया सकम्पान्दोलितस्वरा ॥

नारायणः

—उपाङ्गरागः

धैवतर्षभनिर्मुक्ता ग्रहांशन्यासषड्जका ।
हिन्दोलरागाश्रयणाद्वसन्तोपाङ्गतां गता ॥
गौडी समन्द्रा विज्ञेया प्रियसङ्गमभाषिणी ।
केचित्पञ्चममेतस्याः स्वरं स्वगमकं विदुः ॥

भट्टमाधवः

—(द्वितीयः) उपाङ्गरागः

सांशन्यासग्रहा मन्द्रतारषड्जा निभूयसी ।
उपाङ्गं गीयते गौडी रसे वीरे तथा शुचौ ।
रागजां वर्णयन्त्यस्या जनीर्मालवकैशिकात् ॥

भट्टमाधवः

—रागः

गौडीहिन्दोलभाषा स्यात् निषादेन गरीयसी ।
न्यासांशग्रहषड्जा च षाडवा ऋषभोज्झिता ।
तारमन्द्रा रसे वीरे गायकैः परिगीयते ॥

जगदेकः

केरलभाषाव्याख्यायां गौडीस्थाने डोलीति पठितम् ।
षड्जांशग्रहणन्यासा निषादबहुला बुधैः ।
गीयते तारमन्द्रा च गौडी रिषभवर्जिता ॥

सोमराजः

—भाषाङ्गरागः

या मतङ्गेन गदिता गौडी मालवकैशिके ।
तामिहाचष्ट भाषाङ्गं राजा रागरहस्यवित् ॥
कश्चिदाचष्ट तामेवोपाङ्गमङ्गमुपेयुषी ।
त्रिषड्जां मन्द्रतारस्थषड्जां सप्तमभूयसीम् ॥
हिन्दोलरागाश्रयणाद्वसन्तोपाङ्गतां गताम् ।
केचिद्गमकसंयुक्तपञ्चमात्तामिहाभ्यधुः ॥

रसे वीरे शुचौ काले प्रियसम्भाषणे तथा ।
शृङ्गारेऽस्या अपि प्राह विनियोगं नराधिपः ॥
भाषानिरूपणे चास्या आलापेऽपि प्रदर्शितः ।
पीतवस्त्रा च गौराङ्गी गजेन्द्रवरवाहना ॥

कुम्भः

—रागः

गौडोऽयं टक्करागस्य निन्यासांशग्रहान्वितः ।
विहीनः पञ्चमेनैव रसे वीरे नियुज्यते ॥

हम्मीरः

गौडीरागध्यानम्

शुचिर्हारचन्दनपङ्केरुहसहितं मान्मथं पुरस्कृत्य ।
गौरतनुर्बहुविधिना गौडी परिपूजयत्येषा ॥

संगीतमरागं

मधूकवनवासिनीं शुकसमूहमालापिनीं
जपारुणसमांबरां युवतिपूजिताङ्घ्रिद्वयाम् ।
मरालपतिवाहनां विधुसुधाप्रभाङ्गीं मुदा
भजामि मधुपालिकां मनसि मे सदा गौडिकाम् ॥

रागसागरः

रसालनव्याङ्कुरकर्णपूरा कादम्बिनी श्यामलमञ्जुदेहा ।
पीयूषनिष्यन्दिमृदुस्वनाढ्या गौडी नियुक्ताधिककौतुकेन ॥

श्रीकण्ठः

गौडोपाङ्गरागाः

शार्ङ्गदेवादयः केचित्कांश्चिदेषु स्वबुद्धितः ।
षड्जग्रहांशकानूचुने तथा लक्ष्यवर्त्मनि ॥

कुम्भः

गौण्डः—मेलरागः

तीव्रगान्धारसंयुक्तारोहणे वर्जितो गनी ।
षड्जोद्ग्राहेण सम्पन्नो गौण्ड आम्रेडितस्वरैः ॥
सदा गेयः ।

अहोबिलः

गौण्डकृतिः—क्रियाङ्गरागः (वीणायां वादनक्रमः)

मध्यमं स्थायिनं कृत्वाधस्तात्तुर्यं स्वरं व्रजेत् ।
तस्मात्स्वरांस्त्रीनारुह्य तृतीयं च पुनः स्पृशेत् ॥
आचतुर्थस्वरं चाथ समेत्य ह्यवरोहतः ।
तस्मात्तृतीयमारोहक्रमात्प्राप्य प्रकम्पयेत् ॥

यदा स्यात्स्थायिनि न्यासः तदा गौण्डकृतिर्भवेत्।
एतस्याः पञ्चमं लक्ष्ये ग्रहं लक्ष्यविदो विदुः ॥

वेमः

**गौदानिकः**—तानः

मध्यमग्रामे नारदीयतानः।

स रि म प ध नि.

नान्यः

**गौरवर्णः**

रक्तपीतसमायोगाद्गौरवर्ण इति स्मृतः।

**गौरवी**—रागः ( सङ्कीर्णः )

देशाख्यायाश्चाथ धन्यासिकायाः
स्यादंशाभ्यां गौरवीयं प्रदिष्टा।

नारायणः

**गौरिक्रिया**—मेलरागः ( नीतिमतीमेलजन्यः )

(आ) स ग म प ध नि स.
(अव) स नि ध नि प म ग स.

मञ्ज

**गौरी**—वीणा

अस्या लक्षणं न कुत्रापि लभ्यते। पाल्कुरिकि – सोमनाथेन स्मृता।

—मेलरागः ( मायामालवगौलमेलजन्यः )

(आ) स रि म प नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

—मेलरागः

रागोऽयं स्वतन्त्रमेलः।

रिस्वरादिस्वरारम्भरिकोमलधकोमला।
गतीव्रा सा नितीव्रा च गौरी न्यंशस्वरा मता ॥
आरोहे गधहीना सा निकम्पनमनोहरा।
आरोहे यदि गान्धारो मध्यमावधि मूर्छना ॥

इयं तृतीयप्रहरोत्तरगेया।

अहोविलः

—रागः

ग्रहांशन्यासषड्जा स्यात्रिपवर्ज्या सुखप्रदा।
मूर्छना प्रथमा ज्ञेया गौरी सर्वाङ्गसुन्दरी ॥

दामोदरः

—रागः ( सङ्कीर्णः )

श्रीरागात्स्याद्गौडरागाच्च गौरी।

नारायणः

—रागः

अतःपरं भवेद्गौरी हिन्दोलस्याङ्गमीरिता।
निषादे बहुतां याता षड्जन्यासग्रहांशका ॥
षाडवर्षभसन्त्यक्ता धैवतेन विवर्जिता।
तारमन्द्रा क्रमादेषां दृश्यते स्वरसप्तके ॥

हरिः

— देशीतालः

पञ्चभिर्लघुभिर्गौरी ।।।।।

श्रीकण्ठः

नलै गौरी मता बुधैः ।।।।।

मदनः

**गौरीतालः**—चित्रतालः

गौर्यां त्रिगाश्च बिन्दुश्च गुरुद्वन्द्वं द्रुतद्वयम्।

मात्राः ११ मिश्रजातिः द्विकलविषमयतिः।

ऽऽऽ०ऽऽ००

ताललक्षणे

**गौरीमनोहरी**—मेलकर्ता रागः

स ० रि ग ० म ० प ० ध ० नि स.

मञ्ज

**गौरीरागध्यानम्**

निवेशयन्ती श्रवणावतंसमाम्राङ्कुरं कोकिलनादरम्यम्।
श्यामा मधुस्यन्दितसूक्ष्मनादा गौरीयमुक्ता किल कोहलेन ॥

मालवकौशिकरागभार्या।

दामोदरः

**गौरीवसन्तः**—मेलरागः (खरहरप्रियमेलजन्यः)

(आ) स रि म प ध नि स.
(अव) स नि ध प म रि ग रि स.

मञ्ज

**गौरीसूनुः**

सङ्गीतसारार्णवकारः। नेपालीयः। जगज्ज्योतिर्मल्लदुहितुः रुक्मिणीदेव्याः पौत्रस्य पूर्णसिंहस्य महाराजस्याश्रितः। क्रै. प. १७०० काले स्यात्।

**गौर्यामतम्**

अयं ग्रन्थः पार्वती कृत इत्यूह्यते। प्रबन्धलक्षणेषु पार्वतीमत-

मसकृदुद्धृतम् । तेषु स्थलेषु गौरी, शैलकन्या, गिरिजेति पर्यायपदान्युक्तानि। भरतार्थचन्द्रिका गौरीकृतेति, 'भरतार्थचन्द्रिकायां भूधरराजन्यदुहितृरचितायां' मिति भरतार्णवोक्तेः स्मर्यते। दुर्गाशक्तिः, दुर्गाशक्तिः दुर्गा इति नामभिः कस्यचिन्मतमुदाहृतं सर्वत्र। दुर्गाशक्तिरिति हम्मीरकुम्भकर्णादयः। दुर्गाशक्तिरिति देवणभट्टादयः। दुर्गामतज्ञैरिह पञ्चधोक्ता इति रघुनाथादयः। दुर्गाशक्तिः पुमानिति केनचिदुक्तम्। दुर्गा तु पार्वत्येव वा न वेति संशयः। यदि दुर्गाशक्तिः स्त्री दुर्गा पार्वती वा नाम न वेत्यपरः संशयः।

गौलः—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि म प नि स.

(अव) स नि प म ग म रि ग म रि स.

मञ्ज

—मेलरागः

गौलस्तु गधवर्ज्यः स्याद्गौरीमेलसमुद्भवः।
तृतीयप्रहरोत्तरगेयः।

अहोबिलः

—मेलकर्ता

वर्ह्यादि धेनुसमभीश्वरमेपशुद्ध-
मध्ये पिको हरनिषादमयेति गौले।
सन्त्यज्य मेपमवरोहति वैणिकैस्तु
तत्षाडवौडुवगणे परिगण्यगीतम्॥

सरिमपाः शुद्धाः। साधारणो गः। काकलिर्निषादः। मेषो गः।

परमेश्वरः

गौलपन्तु:—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि म प नि स.

(अव) स नि ध प म ध म ग रि स.

मञ्ज

गौलपन्तुरागध्यानम्

सुस्तनीसहितकेलिकारतां मस्तकोपरिविलासदर्शिनीम्।
हस्तकीलितसुवर्णकन्तुकां संस्मरामि हृदि गौलपन्तुकाम्॥

अत्र कन्तुकशब्दः कन्दुकार्थे वर्तते।

रागसागरः

गौलमलारः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म म ग म प ध नि स.

(अव) स नि ध प म ग रि स.

मञ्ज

गौलीरागध्यानम्

शुकपञ्जराग्रहस्तां विकटासनसंस्थितां सुवर्णाङ्गीम्।
मकुटालङ्कृतशिरसं प्रकटितपुरुषां च गौलिकां ध्याये॥

रागसागरः

गौलीरुतः—तालः

सगणो विन्दुयुगलं लगौ दौ जगणस्तथा।
यगणश्चेति विज्ञेयं ताले गौलीरुताह्वये॥

१८ मात्राः।

तालप्रस्तारः

ग्रथनम्—निर्वहणसन्ध्यङ्गम्

उपक्षेपस्तु कार्याणां ग्रथनं परिकीर्तितम्।

भरतः

यथा—'देव क्षम्यतां' इत्यादि यौगन्धरायणवाक्यं रत्नावलीलाभरूपकार्यस्योपक्षेपाद् ग्रथनम्।

अभिनवः

ग्रथनं कार्यदर्शनम्। कार्यं मुख्यफलम्। ग्रथ्यते संबद्ध्यते व्यापारेण मुख्यफलमनेनेति ग्रथनम्। यथा—वेण्यां पाञ्चाली न खलु मयीत्यादिभीमवाक्यम्। द्रौपदीकेशसंयमनकार्यस्य व्यापारेण ग्रथनम्।

रामचन्द्रः

—शिल्पकाङ्गम्

अन्योन्यनिर्णयोत्पन्नपरिचयपल्लवितभ्रमाभिरामोऽर्थविशेषो ग्रथनम्। यथा—'अलसवलितै' त्यादि मालतीमाधवे वकुलवीधिकाङ्के।

सागरः

ग्रन्थिः—देशीतालः

ग्रन्थिताले समुद्दिष्टा लघू विन्दू लघू गुरू॥ ० ० ।। ऽ ऽ

वेमः

ग्रहः—तालप्राणः

भट्टलोल्लटस्तु—

आद्यन्तयोरनियमो विषमश्च प्रकीर्तितः।
मात्राधिक्यं च तस्यैव केचित्काापि प्रचक्षते॥

इत्याह। अपि च तेनैव विषमग्रहस्य बहवो भेदा उक्ताः।

ग्रहशब्दो घञन्तो वा कर्मसाधक एव वा।
आद्ये नृत्तादिसंबन्धो ग्रह इत्यभिधीयते।
अन्ते नृत्तादिकं चैव ग्रह इत्यभिधीयते॥

घञन्तश्चेद् ग्रहणमेव ग्रहः। तालस्य नृत्तगीतवाद्यैः सम्बन्धीति। कर्मसाधनं चेद् गृह्यते स्वसंबन्धितया नृत्तादिर्कर्माति व्युत्पत्त्या नृत्तगीतवाद्यानि त्रीण्यपि ग्रह एव। समोऽतीतोऽनागत इति ताले ग्रहस्त्रिधा।

गीतादिसमकालस्तु समपाणिस्समग्रहः।

पाणिरिति हस्तघातस्समतालः। गीतनृत्तवाद्यैः आदिमध्यावसानेषु न्यूनाधिक्यवर्जितं योज्यते चेद् घञ्प्रत्ययार्थे समग्रहः। कर्मसाधनार्थे नृत्तगीतवाद्यान्येव तालेन सह वर्तन्त इति।

अतीतस्तु —

आदौ पाणिरतीतः स्याद्गीतादौ च प्रवर्तते।

अतीत इत्यतिक्रान्तः। तालानन्तरं गीतादयो यत्र योज्यन्ते स तालोऽतीतग्रहः।

अनागतः प्राक्प्रवृत्तौ ग्रहस्सोपरिपाणिकः।

उपरिपाणिक इति प्रथमं नृत्तगीतादि ततः पाणिस्तालः। गीतादेः प्रयोगप्रवर्तनमध्ये तालस्य संयोजनम्। कर्मसाधनपक्षे नृत्ताद्यारंभे तालस्याभावात् नृत्तादिरनागतग्रहः।

सङ्गीतार्णवे विषमग्रहमन्यमुक्त्वा ग्रहस्य पञ्च भेदा उक्ताः। विषमग्रहः किञ्चिदतीतः किञ्चिदनागतः। एतन्मे अर्धभागायार्धप्रसवार्येति न्यायमनुवर्तते। भट्टलोल्लटशङ्कुकप्रभृतयो विषमग्रहं चतुर्थभेदमाहुः।

यथा —

आद्यन्तयोरनियमो विषमश्च प्रकीर्तितः।
मात्राधिक्यं च तस्यैव केचित्कापि प्रचक्षते॥

केचित्कापीति रङ्गराजो भरतव्याख्याने।

लोल्लटस्तु —

गीतस्याद्यन्तयोस्ताले न्यूनोऽन्यूनो भवेद्द्वयम्।
समादिरधिकोऽन्त्यश्चान्त्ये न्यूनसमाधिकः॥
अधिकादिर्न्यूनमिति न्यूनादिश्चरमाधिकः।
इत्यादिबहुभेदास्तु कथिता विषमग्रहे।
लयाः क्रमात्समादौ स्युर्मध्यद्रुतविलम्बिताः॥

अयं भावः - यथा वार्तिकमार्गे मध्यो लयः। एकस्याः कलायाः चतस्रः क्रियाः। चतुष्क्रियापर्यन्तं प्रवृत्तः कलाकाले गीतकालश्च समान एव। गीतकालस्तालकालमनुसृत्यैव प्रवर्तते। चित्रमार्गे द्रुतलयः चित्रमार्गकलाकालस्याल्पत्वात्तालः पश्चाद्वर्तते। तस्मात्ताले गीताद्यनुसरणार्थं द्रुतो भवति। एवं चित्रे द्रुतलयेऽतीतग्रहः स्यात्। दक्षिणे तु विलम्बितः। अष्टक्रियापर्यन्तमेका कला। ताले गीतकालमतिक्रम्य वर्तते। गीतस्य पश्चाद्भावेन तालस्य विलम्बत्वाद्विलम्बितः।

अच्युतः

**ग्रहः**

गीतमुद्ग्राह्यते येन स स्वरो ग्रह उच्यते।

कुम्भः

येनादौ गीयते गीतं स्वरेण स भवेद् ग्रहः।

तुलजः

—रागे उपयुज्यमानः

ग्रहस्तु स्वर इत्युक्तो यो गीतादौ समर्पितः।

कृष्णदासः

जात्यादिप्रयोगो गृह्यते येनासौ स ग्रहः।

मतङ्गः

गृह्यते प्रयोगश्चानेनेति ग्रहः।

ज्ञान्यः

तत्र ग्रहस्तु गीतादिस्वरः। आदिस्वरः प्रथमालापस्वरः।

दत्तिलः

—जातिलक्षणम्

अंशवद्ग्रहः। किन्तु न त्रिषष्टिभेदभिन्नः। अष्टादशजातिषु अंशास्त्रिषष्टिरित्युच्यते। ननु ग्रहांशयोः को भेदः। उच्यते। अंशो वाद्येव। ग्रहस्तु वाद्यादिभेदभिन्नः। यद्वा ग्रहो ह्यप्रधानभूतः। अंशो रागजनकत्वाद्व्यापकत्वाच्च प्रधान एव। अपि च संवाद्यनुवादिविधिना च ग्रहांशयोर्भेदः।

भरतस्तु —

यत्प्रवृत्तो भवेद्गेयः सोंऽशो ग्रहविकल्पकः।

कासु च जातिषु नन्दयन्त्यादिषु ग्रहांशयोर्विवादित्वेन ग्रहस्याप्रधानत्वं संभवति।

मतङ्गमतम्

**ग्रहणम्**—दन्तः

तृणादेर्धारणाद्दन्तैर्ग्रहणं परिकीर्तितम्।
लेहनं जिह्वयालेहं तल्लौल्याभिनये मतम्।
इत्याह ग्रहणस्थाने भरतो मुनिसत्तमः॥

अशोकः

तृणादेर्धारणं दन्तैरङ्गुल्यादे...........।

कुम्भः

**ग्रहसमम्**—वीणावंशावनद्धानामेककालग्रहणम्

ततावनद्धवंशानामेकश्रुतिः कृतो यदा।
ग्रहो गानेन सहितस्तत्तु ग्रहसमं भवेत्॥

भरतः

समग्रहादिना हस्तव्यापारस्योपयोगतः।
स्वरग्रहेण वाद्यस्य साम्यं ग्रहसमं भवेत्॥

नान्यः

ग्रामः

यत्र स्वराणां संवादो मूर्छादिर्यत्र आश्रयः ।
स ग्राम उच्यते तद्ज्ञैः स च त्रेधा विभज्यते ॥
षड्जमध्यमगान्धारैः प्रधानैर्व्यपदेशनात् ।
प्रधानं षड्ज आद्यत्वात् संवाद्याधिक्यतस्तथा ॥
मध्यमस्याविनाशित्वादमात्याधिक्यतोऽप्यसौ ।
षड्जमध्यमवंश्यत्वाद्गान्धारोऽपि प्रधानता ॥

पण्डितमण्डली

व्यवस्थितश्रुतियुता यत्र संवादिनः स्वराः ।
मूर्छनाद्याश्रयो नाम स ग्राम इति संज्ञितः ॥

कुम्भः

षड्जमध्यमगान्धारास्त्रयो ग्रामाः प्रकीर्तिताः ।
भूर्लोकाज्जायते षड्जो भुवर्लोकाच्च मध्यमः ।
स्वर्गान्नान्यत्र गान्धारो नारदस्य मतं यथा ॥

नारदः

समूहवाचिनौ ग्रामौ स्वरश्रुत्यादिसंयुतौ ।
यथा कुटुम्बिनः सर्वे एकीभूत्वा वसन्ति हि ॥
सर्वलोकेषु स ग्रामो यत्र नित्यं व्यवस्थितः ।
षड्जमध्यमसंज्ञौ तु द्वौ ग्रामौ विश्रुतौ किल ।
गान्धारं नारदो ब्रूते सं तु मर्त्यैर्न गीयते ॥

ग्रामप्रयोजनं च यथा –

स्वरश्रुतिमूर्छनातानजातिरागाणां व्यवस्थापनत्वं नाम प्रयोजनम् । ननु कथं षड्जमध्यमस्वराभ्यां ग्रामव्यपदेशः । उच्यते – असाधारणत्वेन ताभ्यां ग्रामव्यपदेशः । असाधारणत्वं च देवकुलसमुत्पन्नत्वेन । ननु कथं द्वावेव ग्रामौ । उच्यते – इह हि द्विस्वरप्रयोगमूलप्रयोगवशात् द्वौ ग्रामावुपन्यस्तौ जातिभिः श्रुतिभिश्चैव स्वरा ग्रामत्वमागताः ।

मतङ्गः

एतेषां श्रुत्युत्कर्षात् प्राधान्यपुरुषवत् । त्रयस्यैव स्वरगणितस्य चत्वैर्मुनयो ग्रामत्वसंज्ञां वदन्ति ।

द्वौ ग्रामौ भरतेनोक्तौ ग्रामौ गान्धारपूर्वकः ।
अतितारातिमन्द्रत्वाद्वैस्वर्यान्नोपदर्शितः ॥

अभिनवगुप्तः

अथ स्वरसमूहात्मग्रामलक्षणमुच्यते ।
ग्रामवद्ग्राम इत्येवमुपचारो विवक्षितः ॥
केवलस्वरवृन्दस्य ग्रामत्वे कथिते सति ।
गामानयेत्यादिवाक्येष्वतिव्याप्तिर्भवेदतः ॥
मूर्छनाशुद्धकूटाख्यतानाद्याश्रय इत्यपि ।
देयं स्वरसमूहस्य विशेषणमिति स्थितिः ॥

षड्जग्रामः पञ्चमे स्वचतुर्थश्रुतिसंस्थिते ।
स्वोपान्त्यश्रुतिसंस्थेऽस्मिन्मध्यमग्राम इष्यते ॥
रिमयोः श्रुतिमेकैकां गान्धारश्चेत्समाश्रितः ।
पः श्रुतिं धो निषादस्तु ध श्रुतिं स श्रुतिं श्रितः ॥
गान्धारग्राममाचष्टे तदा तं नारदो मुनिः ।
अस्माभिर्मध्यमग्रामोऽप्यसत्प्राय इतीर्यते ॥
तथा हि मध्यमग्रामे त्रिश्रुतिः पञ्चमः खलु ।
वरालीमध्यमो जातः स पुनर्लक्ष्यमार्गतः ॥
मध्यमादिप्रभृतिषु मध्यमग्रामजन्मसु ।
रागेषु दृश्यते नैव वरालीमध्यमस्ततः ।
अयुक्तो मध्यमग्रामो लक्ष्यमार्गविरोधतः ॥

वेङ्कटमखी

अस्य मतं हनुमन्मतमेव । स्वराणां भरतोक्तश्रुतिसंख्यायाः नियमो न भवतीति । तन्नियमस्तु जातिरागेष्वेव दृश्यते । आञ्जनेयस्तु एकादिषट्पर्यन्तश्रुतित्वमेवाह । तस्य मते ग्रामविभागो नास्ति, यतः संवादित्वस्यैवानुपलंभात् । देशीरागेषु स्वराणां श्रुतिसंख्यानियमो नास्ति । वेङ्कटमखिनः वरालीमध्यमसप्तमश्रुतित्वं विद्यते । तेनैव स्थलान्तरे गान्धारग्रामस्य मर्त्यलोकप्रयुक्तत्वमुपपादितम् । वीणायां द्वादशस्वरस्थापनेन श्रुतीनां मेलनेन ग्रामविभागो न स्पष्टो भवति । एकतन्त्रीकिन्नर्यादिषु पूर्णत्वेन मत्तकोकिलास्वरमण्डलयोश्च श्रुतीनां वैशद्यं भवति ग्रामयोश्चेदं प्राचीनमतम् ।

षड्जग्रामे सरिगमपधनिस्वराणां क्रमात् ४. ३. २, ४, ४, ३, २ इति श्रुतिभागो भवति । अत्र सरिगस्वराणां त्रयाणां पधनिस्वराः संवादिनः । संवादित्वेनैव ग्रामत्वं सिध्यति । तथैव मध्यमग्रामे मपधनिसरिगाणां ४, ३, ४, २. ४, ३, २, इति श्रुतिसंख्या प्रयुज्यते । तत्र मपयोः सरिस्वरयोः संवादित्वमस्ति । तस्मान्मध्यमस्वरेणारम्भात् मध्यमग्रामः ।

गान्धारग्रामे तु गमपधनिसारिस्वराः क्रमात् . ४, ३, ४, ३, ४, ३, २ भवति । अत्र गान्धारनिषादावतितारस्वरत्वात्संवादिनावपि षड्जमध्यमौ संवादिनावपि अतिमन्द्रत्वात् गान्धारग्रामो भरतेन न गृहीतः – इति अधुनातनपरिष्कारः ।

यत्र सभ्यः स्वरग्रामं हेलया गायति स्फुटम् ।
स ग्रामश्रुति विज्ञेयः तस्य भेदास्त्रयस्स्मृताः ॥

नन्द्यावर्तोऽथ जीमूतः सुभद्रस्तु तृतीयकः ।
तेषां तु लक्षणं स्पष्टं कथयिष्ये पृथक् पृथक् ॥

षड्जर्षभगान्धारास्त्रयाणां जन्महेतवः ।
नन्द्यावर्तो भवेत् षड्जाज्जीमूतश्चार्षभात्तथा ॥

गान्धाराच्च सुभद्राख्यो विज्ञातव्यास्त्रयः क्रमात् ।
षड्जमादौ समुच्चार्य ततो धैवतपञ्चमौ ॥

वृद्ध्यर्थं योजयेत्तत्र निषादेन शमं नयेत् ।
नन्द्यावर्तो भवेदेवं ग्रामो गीतविदां प्रियः ॥

चतुस्स्वरसमायोगादेकमात्रस्वरेण च ।
यत्रादावृषभस्थानं मध्यात्ताभ्यां विवर्द्धितम् ॥

प्रशान्तिं पञ्चमेनापि जीमूतोऽयं प्रकीर्तितः ।
गान्धारमादितः कृत्वा वृद्धिं नेयं ततः परम् ॥

ऋषभेनाथ षड्जेन धैवतेन शमं नयेत् ।
सुभद्रोऽयं भवेद्ग्रामो देवानामपि वल्लभः ॥

दादिमत्तगजाङ्कुशे

नन्द्यावर्तस्तु जीमूतः सुभद्र इति च क्रमात् ।
त्रीन् ग्रामान्कचन प्रोचुः लक्षयन्ति तु तद्यथा ॥

स्वरं षड्जं समुच्चार्य गेयाद्धैवतपञ्चमौ ।
ताभ्यां षड्जं वर्जयित्वा निषादे विरतिं श्रयेत् ॥

यदा तदा भवेद्ग्रामो नन्द्यावर्ताभिधः किल ।
एकमात्रेण षड्जेन सहादावृषभग्रहः ॥

पोषो निषादमध्याभ्यां पञ्चमेन शमो भवेत् ।
यत्रासौ कीर्तितस्तज्ज्ञैः ग्रामो जीमूतसंज्ञकः ॥

गान्धारेण ग्रहः पोषः षड्जर्षभकृतो भवेत् ।
न्यासश्च धैवतेनायं सुभद्रो ग्राम इष्यते ॥

क्रमेण सरिगास्त्वेषां त्रयाणां जन्मकारणम् ।
ग्रामाणामीदृशं लक्ष्म प्रायो न बहुसम्मतम् ।
रागलक्षण्यसंस्पर्शात् न चास्माकमिहादरः ॥

पण्डितमण्डली

## ग्रामनिर्णयः

त्रिषु ग्रामेषु गान्धारग्रामः स्वर्गे प्रकीर्तितः ।
महातले तु द्वौ ग्रामौ स्यात् षड्जग्राम आदिमः ॥

द्वितीयो मध्यमग्रामो नत्वेतल्लक्ष्म लक्षितम् ।
लक्ष्ये तु दृश्यते कापीत्यस्यासत्प्रायता गता ॥

अतोऽत्र मध्यमग्रामजन्यरागेषु पञ्चमः ।
क्षेपान्त्यश्रुतिसंस्थस्सन्नैष लक्ष्येषु दृश्यते ॥

ततः स्युरखिला रागाः षड्जग्रामसमुद्भवाः ।
तदुक्तं वयकारेण स्वरमेलकलानिधौ ॥

देशीरागाश्च सकलाः षड्जग्रामसमुद्भवाः ।
ग्रहांशतारमन्द्रादिषाडवौडवपूर्णताः ॥

देशीत्वात्सर्वरागेषु भवन्ति न भवन्ति च ।
प्रकाशयत्येवमेव चतुर्दण्डीप्रकाशिका ॥

ग्रामेष्वेतेषु गान्धारग्रामो नास्ति महीतले ।
स्वर्गलोके परमिति सर्वेषामेव सम्मतम् ॥

अस्माभिर्मध्यमग्रामोऽप्यसत्प्राय इतीर्यते ।
तथाहि मध्यमग्रामे त्रिश्रुतिः पञ्चमः खलु ॥

वरालीमध्यमो जातः स पुनर्लक्ष्यमार्गतः ।
मध्यमादिप्रभृतिषु मध्यमग्रामजन्मसु ॥

रागेषु दृश्यते नैव वरालीमध्यमस्ततः ।
अयुक्तो मध्यमग्रामो लक्ष्यमार्गविरोधतः ॥

एक एव ततः षड्जग्राम इत्यवधार्यताम् ।
तदुक्तं विठलीयेऽपि ग्रामैकत्वसमर्थनम् ॥

षड्जग्रामः पञ्चमे तु सप्तदश्यां श्रुतौ स्थिते ।
स्वरेऽस्मिन् पञ्चमे किन्तु षोडशीं श्रुतिमाश्रिते ॥

तथैव मध्यमग्रामः सोऽत्र रागो न दृश्यते ।
षड्जग्रामाश्रितान् रागान् सर्वे गायन्ति गायकाः ।
तस्मान्मुख्यतमः षड्जग्राम एव न मध्यमः ॥

तुलजः

## ग्रामरागः

तत्र ग्रामसमुद्भूतः पञ्चगीतिसमाश्रयात् ।
शुद्धादिभेदसंभिन्नो ग्रामराग इतीरितः ॥

कुम्भः

## ग्रीवा

सुन्दरी च तिरश्चीना तथा च परिवर्तिनी ।
प्रकम्पिता तु भावज्ञैर्ग्रीवा ज्ञेया चतुर्विधा ॥

नन्दी

ग्रीवा नवविधा तत्र समा त्र्यश्रा नतोन्नता ।
अञ्चिता कुञ्चिता चैव निवृत्ता वलिता तथा ।
रेचिता चेति तासां तु क्रमाल्लक्षणमुच्यते ॥

वेमः

यत्किञ्चिदस्ति तत्कर्म तदस्यामखिलं स्वयम् ।

ज्यायनः

## ग्रीष्मावली—मेलरागः ( चक्रवाकमेलजन्यः )

( आ ) स रि ग म प स .
( अव ) स नि ध म ग रि स . मञ्ज

**ग्लाना**—दृष्टिः

श्लथपक्ष्मपुटभ्रूभृङ्गमलिना मन्थरतारका।
अल्पसञ्चारिणी दृष्टिः ग्लानौ ग्लाना निरूपिता॥

अशोकः

एषा ग्लानावपस्मारे ग्लानावपि नियुज्यते।

विप्रदासः

**ग्लानिः**

भास्वरजातिनाटके तृतीयस्सन्धिः।

शारदातनयः

—व्यभिचारिभावः

वान्तविरक्तव्याधितपोनियमोपवासमनस्तापातिशयसदनमद्यसेवनातिव्यायामाध्वगमक्षुत्पिपसानिद्राछेदादिभिर्विभावैरुत्पद्यते तस्याः क्षामवाक्यनयनकपोलोदरमन्दपदोत्क्षेपणवेपनानुत्साहतनुगात्रवैवर्ण्यस्वरभेदादिभिरनुभावैरभिनयः प्रयोक्तव्यः।

भरतः

वाङ्मनःकायकर्माणि ग्लानिर्ग्लपयतीति यत्।

शारदातनयः

ग्लपयतीति। 'विगृह्य ग्लै म्लै हर्षक्षये' इत्यस्माद्धातोरात्वे कर्तरि स्त्रियां क्तिन्निति क्तिन्प्रत्यये क्तिनो निष्ठावद्भावेन निष्ठानत्वे ग्लानिशब्दो निष्पन्नः।

नरसिंहः

ग्लानिर्विरेकवमनजागरातिरताध्वभिः।
उपवासमनस्तापक्षुत्पिपासादिभिर्भवेत्॥
कम्पानुत्साहवैवर्ण्यस्वेदमन्दपदक्रमैः।
क्षामवाक्याक्षिसंहारकार्याङ्गश्लथनादिभिः।
ग्लानिजास्त्वनुभावास्ते कथिताह्येवमादयः॥

शारदातनयः

—चित्ताभिनयः

हृदि स्थाने तु मुकुलः पुरोभागे तु कर्तरी।
चालयेत्सूचिहस्तं तु चलितं तु मनोरुजि॥
पार्श्वभागे मुष्टिहस्तः चलितस्तु जरार्धके।
मुखस्थाने तु शिखरः तृष्णार्थस्य निरूपणे॥
सर्वाङ्गचलनं कृत्वा पुरोभागे तु कर्तरी।
चालयेद्रोगभावे तु करटीकाविचक्षणः॥
चतुरश्च पताकश्च पुरोभागे तु चालितः।
सूचीहस्तं चालयित्वा व्यायामार्थनिरूपणे॥
त्रिपताकः पुरोभागे चलितस्तु रतिश्रमे।
कण्ठस्थाने पताकन्तु चालयेत्तन्निवारणे॥

विनायकः

**घटा**—देशीतालः

द्रौ द्रौ दौ लौ गपौ घटा। ०० ।। ऽऽ

कुम्भः

**घटितम्**—विणावादनेगुणः

परिवर्ते द्रुते पाणेर्वाद्यं स्याद्घटितामिधम्।

कुम्भः

**घट्टितः**—पादः

पार्ष्ण्या सन्ताडयते भूमिः यत्रासौ घट्टिता मतः।
अधस्तात्सारणे कार्यः चरणोऽसौ मनीषिभिः॥

वेमः

अश्वादिप्रेरणे भेदे दढन्वापादने तथा।

सोमेश्वरः

**घट्टनम्**

किन्नर्यां दक्षिणहस्तव्यापारः। तत्र द्रष्टव्यम्।

**घट्टिता**—मृदङ्गवादनमार्गः

घट्टिता करमूलस्य। करमूलस्य चालनेन पुटं यदि घट्टितं सा क्रिया घट्टिता।

नारायणः

**घट्टितोत्सेधः**—पादः

क्रमाद्यो घट्टयन्नग्रपार्ष्णिभ्यामसकृद्ध्रुवम्।
स पादो घट्टितोत्सेधस्ताण्डवे सद्भिरीरितः॥

अशोकः

घर्घरीवादनादिषु।

ज्यायनः

**घण्टकः**

नाट्यशास्त्रव्याख्याता। एषोऽभिनवगुप्तेनासकृत्स्मृतः।

**घण्टा**—मेलरागः

(आ) स रि ग ० ० म ० प ० ० ० नि स.
(अव) स ० नि ० ध प ० म ० ० ग रि स.

मेललक्षणे

**घण्टातालः**

घण्टाकांस्यमयी ज्ञेया तद्ज्ञैरष्टाङ्गुलोच्छ्रया।
विशाला वदने मूलभागेष्वल्पत्वमागता॥
अस्याः पिण्डप्रमाणं तु स्यादर्धाङ्गुलसम्मितम्।
अस्या मूले विधातव्यो दण्डोऽष्टाङ्गुलसम्मितः॥

निदध्यादन्तराले तु दण्डमूलावलम्बितम् ।
दैर्घ्ये षडङ्गुलमितं पिण्डे सार्धाङ्गुलान्वितम् ॥
अधो मुखं सुवृत्तं च लोलकं लोहनिर्मितम् ।
ततो दण्डं तु घण्टायाः धृत्वा सव्येन पाणिना ।
स्फुटं तु टठणोत्कारबहुलं वादयेत्सुधीः ॥

वेमः

घण्टारवः—मेलरागः ( रत्नाङ्गीमेलजन्यः )

( आ ) स नि स ग रि ग म प नि – स.
( अव ) स नि ध प म ग रि – स.

मञ्ज

—मेलरागः ( कर्णाटगौडमेलजन्यः )

धैवतांशग्रहन्यासो भवेद्गान्धारवर्जितः ।
घण्टारवोऽयं विख्यातस्सर्वदा गीयते बुधैः ॥

श्रीकण्ठः

—रागः

घण्टारवो धैवतीजः प्रतापे सर्वदापि च ।

नारायणः

—रागः

अथ घण्टारवाह्वानो भिन्नषड्जसमुद्भवः ।
गान्धारे मन्द्रसंयुक्तो न्यासवान्मध्यमस्वरे ।
धैवतग्रहसंबद्धस्तारभूतो निषादके ॥

हरिः

मन्द्रगो मध्यमन्यासः संपूर्णो धैवतग्रहः ।
घण्टारवो नितारः स्याद्भिन्नषड्जगतस्तथा ।
गुर्वाज्ञया रसे वीरे विनियोगोऽस्य दर्शितः ॥

जगदेकः

—रागाङ्गरागः

भिन्नषड्जसमुद्भूतो मन्यासो धैवतग्रहः ।
तारनिर्मन्द्रगान्धारः पूर्णो घण्टारवो मतः ।
हेमन्तप्रथमे यामे रसे वीरे च गीयते ॥

भट्टमाधवः

घण्टारवरागध्यानम्

करे दधानः किल शङ्खमेकं
वामे च घण्टां कलनादरम्याम् ।
पीताम्बरश्चारुकुटीप्रदेशे
घण्टारवोऽयं हरिभक्तिमुख्यः ॥

श्रीकण्ठः

घण्टारवीरागध्यानम्

लम्बालकां दीर्घकचां शुभाङ्गीं
व्यत्यस्तपादाब्जयुगप्रदर्शिनीम् ।
सखीयुगेन प्रतिभाषयन्तीं
ध्यायामि घण्डारविकां मनोहराम् ॥

रागसागरः

घण्टारागः—मेलरागः

घण्टारागो गपूर्वः स्यादन्तः कोमलधैवतः ।
मेलकर्तायं तृतीयप्रहरगेयः ।

अहोबिलः

घत्ता—पाटवाद्यम्

निबद्धमर्थं प्रथमं झेंकाराधं च वादयेत् ।
अनिबद्धं ततश्चार्धं कराभ्यां वादयेद्धि या ।
पुनर्निबद्धखण्डस्य वाद्याद् घत्ता निगद्यते ॥

वेमः

—देशीतालः

द्वौ लौ द्रौ द्वौ लगो घत्ता ।।००।ऽ

कुम्भः

घत्ताताले लघुद्वन्द्वं द्रुतद्वन्द्वं लगौ तथा ।
।।००।ऽ

वेमः

घनः—ध्वनिभेदः

अकृशो निबिडो यस्तु घनोऽसौ ध्वनिरीरितः ।

सोमेश्वरः

घनकेशिनी—मेलरागः ( खरहरप्रियामेलजन्यः )

( आ ) स रि ग म प नि स.
( आ ) स नि ध प म रि स.

मञ्ज

घनता—वंशे फूत्कारगुणः

त्रिषु स्थानेषु गमकैरुपेतो घन उच्यते ।

कुम्भः

स्थूलता श्लक्ष्णता यत्र श्रावकत्वं च दृश्यते ।
घनं तमाह महितो नान्यो मान्यो मनीषिभिः ॥

नान्यः

घनतालः

गदगा गदगा सोदौ लौ गौ ताले घनाह्वये ।
१७ मात्राः ।

तालप्रस्तारः

घनत्वम्—फूत्कारगुणः

त्रिपु स्थानेषु गमकैरुपेतो घन उच्यते।

कुम्भः

घनपङ्क्तिः—ध्रुवावृत्तम्

लघुनी चादौ चरणे यस्या। गदिता नाम्ना घनपङ्क्तिस्सा॥
जलधाराहिं—(छाया) जलधाराभिः।

भरतः

घनरवः—पाटवाद्यम्

उभाभ्यामथ चैकेन विविधैः पाटकल्पनैः।
निरन्तरलसन्नादो भवेद् घनरवाभिधः॥

सोमेश्वरः

एकहस्तेन वाद्याभ्यां कृतैः पाटैर्निरन्तरैः।
ध्वनिर्मान्यो भवेद्यत्र सोयं घनरवः स्मृतः॥

वेमः

घनश्यामः

हस्तमुक्तावलीसारसमुद्धृतिकाकारः । नेपालदेशीयः।
जगज्ज्योतिर्मल्लदौहित्रस्यानन्तराजस्यास्थानकविः।

कालः क्रै. प. १६८०.

घनश्यामला—मेलरागः (वकुलाभरणमेलजन्यः)

(आ) स रि ग म नि ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

घनसुप्रभातम्—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि म प ध स.
(अव) स ध प ध नि ध प म ग रि स.

मञ्ज

घना—श्रुतिः

ऋषभस्य द्वितीया श्रुतिः।

जग

घनाघनः—देशीतालः

घनाघनाह्वये ताले सद्वयं नद्वयं प्लुतः।

१७ मात्राः।

तालप्रस्तारः

घनान्दोलिका—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

घर्षणः—तालप्राणः

मार्गशब्दे द्रष्टव्यम्।

घातः—वीणायां दक्षिणहस्तव्यापारः

तन्त्रिकां हन्ति यद्यत्र मध्यमाक्रान्ततर्जनी।
वैरिणां खातदक्षेण तदा घात इतीरितः॥

कुम्भः

—वादनं दक्षिणहस्तव्यापारः

घातस्त्वान्मध्यमाक्रान्ततर्जन्या तन्त्रिकाहृतिः।

शार्ङ्गः

घातवर्तना

उल्बणौ वर्तितौ स्वोक्तरीत्योक्ता घातवर्तना।
उद्वेष्टितेन निष्पन्नौ स्यातां चेदलपल्लवौ॥

अशोकः

वक्षसःस्कन्धयोरूर्ध्वप्रसारितयुतावुभौ।
स्कन्धाभिमुखमाविद्धौ वलितौ चाङ्गुलीदले।
अलपद्मोल्वणौ प्राहुर्घातवर्तनिकां परे॥

कल्लिनाथः

घूर्जरी—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग प ध स.
(अव) स ध प म ग रि स.

मञ्ज

घूर्णितम्—करणम्

ऊर्ध्वाधःपार्श्वतः क्षेत्रे व्यावर्त्य परिवर्तयन्।
अधोमुखं चतुर्दिक्कं भ्रामयन्दक्षिणं करम्॥
जङ्घास्वस्तिकमादाय तद्दिक्कं चरणं दधन्।
अपक्रान्तासमायुक्तं वामं डोलामिधं करम्॥
यत्र कुर्वीत तद्धीरैर्घूर्णितं परिकीर्तितम्।
उत्प्लुत्य स्वस्तिकं कुर्यादत्र कैर्तिधरे मते॥

ज्यायनः

घोण्टाणी—मेलरागः (सिंहेन्द्रमध्यममेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध म ग रि स.

मञ्ज

घोरतरा—श्रुतिः

मन्द्रषड्जचतुर्थी श्रुतिः।

मण्डली

**घोरा**—श्रुतिः

मन्द्रषड्जतृतीया श्रुतिः।

मण्डली

**घोषः**—वादनम् ( उभयहस्तव्यापारः )

तन्त्रीलग्नाङ्गुष्ठपार्श्वा कर्तरीवञ्च हन्यते।
कनिष्ठासारणाभ्यां वा यत्रासौ घोष उच्यते॥

शार्ङ्गः

—वीणायामुभयहस्तव्यापारः

कनिष्ठाकन्निकाभ्यां वा यत्र तन्त्री प्रहन्यते।
कर्तरीवाङ्गुष्ठया पार्श्वलग्ना घोषकस्तदा॥

कुम्भः

**घोषा**

इयमेकतन्त्र्याः वीणाया नामान्तरम्।

श्रीकण्ठः

**घ्राणिनी**—श्रुतिः

पञ्चमस्य प्रथमा श्रुतिः। हनुमन्मतेऽष्टादशैव श्रुतयः। पञ्चमोऽत्र त्रिश्रुतिः।

**घ्रिङ्कारध्वनिः**—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

(आ) स रि ग म प नि स.
(अव) स नि ध प म रि स.

मञ्ज

**च**

**चकितम्**—दर्शनम्

निमीलोन्मीलनाभ्यां स्याच्चकितं कथितं बुधैः।

वेमः

मीलनोन्मीलनावृत्तिः यत्र तच्चकितं विदुः।

शारदातनयः

—शृङ्गारचेष्टा

त्रासेन लज्जया वापि निजवल्लभसन्निधौ।
संभ्रमातिशयो यस्तच्चकितं सूत्रकृन्मते॥

कुम्भः

**चकोरध्वनिः**—मेलरागः ( हेमवतीमेलजन्यः )

(आ) स रि ग म प ध नि स.
(अव) स नि म ग रि स.

मञ्ज

**चक्रः**—देशीतालः

चक्रताले क्रमाद्ज्ञेयं द्रुचतुष्कं लघुर्भवेत्।
प्रतीपत्रह्मतालः स्यात् विद्वद्भिः परिकीर्तितः॥

० ० ० ० । ० ० ० । ० ० । ० ।

दामोदरः

**चक्रकुट्टनिका**—मुडुपचारी

यथाङ्घ्रिं कुट्टितं पार्श्वाद्भ्रामयित्वा निवेशयेत्।
ततः स्थाने कुट्टयेच्च चक्रकुट्टनिका तदा॥

अशोकः

**चक्रकुट्टिता**—मुडुपचारी

कुट्टयित्वा तु विन्यस्य भ्रामितो लुठितो यदि।
कुट्टितोऽङ्घ्रिः पुरस्स्थाने तदोक्ता चक्रकुट्टिता॥

अशोकः

**चक्रतालः**—देशीतालः

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ० ० ० ० ० ०

अस्य तालस्य लक्षणश्लोका न सन्ति।

हम्मीरः

—तालः

स्याद्ब्रह्मताले विपरीतरीत्या चक्राभिधः स्यात्।

। ० ० ० । ० ० । ० ।

वेदः

**चक्रतालोडुपम्**—देशीनृत्तम्

प्रतीपो ब्रह्मतालस्तु चक्रतालः प्रकीर्तितः।
तालेनानेन विहितं चक्रतालोडुपं भवेत्॥

० ० ० । । ० ० । ० ।

अस्य रूपामिनयो ब्रह्मताले प्रोक्तः।

वेदः

**चक्रतुल्यम्**—मेलरागः ( मेचकल्याणीमेलजन्यः )

(आ) स रि म प नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**चक्रधरः**—मेलरागः

नाटमेलसमुद्भूतो रागश्चक्रधरः स्मृतः।
पञ्चमेन विहीनः स्यात् षड्जोद्ग्राहेण शोभितः॥

सायं गेयः।

अहोबिलः

**चक्रप्रदीप्तः**—मेलरागः ( खरहरप्रियामेलजन्यः )

(आ) स रि ग प म ध नि स.
(अव) स नि ध म ग स.

मञ्ज

**चक्रबन्धः**—काडनृत्तम्

पिण्डः स्याच्चतुर्दशभिर्बिन्दुभिरथ ऊर्ध्वतः।
दक्षहस्ते ब्रह्मतालो ईडावान्वामहस्तके ॥
दक्षाङ्घ्रौ सिंहलीलश्च वामाङ्घ्रौ यतिशेखरः।
सकृद्रूपं ब्रह्मतालं स्यादीडावान्द्विवारतः ॥
सिंहलीले द्विवारं स्यादेकधा यतिशेखरः।
अधश्चोर्ध्वं पिण्डबिन्दौ स्यात्समाङ्गेन योजनम् ॥
एवं प्रथमखण्डः स्याद्द्वितीयमधुना ब्रुवे।
इडावान्दक्षहस्ते च दक्षाङ्घ्रौ ब्रह्मतालकः ॥
वामाङ्घ्रौ सिंहलीलश्च तत्पाणौ यतिशेखरः।
पूर्ववद्योजनं पिण्डं तृतीयं खण्डमुच्यते ॥
यतिशेखरतालस्तु दक्षपाणावलङ्कृतः।
ईडावान्दक्षपादे च वामाङ्घ्रौ ब्रह्मतालतः ॥
वामहस्ते सिंहलीलः चतुर्थं रूपमुच्यते।
दक्षपाणौ सिंहलीलो दक्षाङ्घ्रौ यतिशेखरः ॥
ईडावान्वामपादे च तत्पाणौ ब्रह्मतालकः।
एवं चतुर्धा तालानां पिण्डे भवति योजनम्।
चक्रबन्धेति विज्ञेयो काडस्तालविचक्षणैः ॥

वेदः

**चक्रभ्रमणिका**—कला

सुखोपविष्टा कुरुते यत्र चक्रभ्रमिं नटी।
कराभ्यां पादयुग्मेन पृथिवीधृतपार्ष्णिना ॥
नाम्ना सा प्रभुणा प्रोक्ता सुखचक्रभ्रमावती।
कृत्वेमामादितः कुर्युर्यत्नचादन्याश्चसंशयम् ॥

नागमल्लः

**चक्रभ्रमरी**

भुवि पादं मुहुः कर्षन् त्रिपताकौ करौ वहन्।
चक्रवद्भ्रामयेद्यत्र सा चक्रभ्रमरी भवेत् ॥

नाट्यदर्पणः

—तिरिपनृत्ताङ्गम्

चतुरश्रेऽप्यधः सञ्चे पताकौ पार्श्वयोस्तथा।
प्रसृतौ वामहस्तश्च भ्रूसंलग्नस्ततः परः ॥
दक्षजङ्घोर्ध्वदेशे च वामं चेत्स्थापितं पदम्।
स्वस्तिकीकृत्य भूमेश्च चतुरङ्गुलमन्तरम् ॥
स्तनयोः शिखरद्वन्द्वं स्थाप्य दक्षिणतो भ्रमेत्।
बारं वारं तदा चक्रभ्रमरी गदिता बुधैः ॥

वेदः

—भ्रमरी

स्थानके खण्डसूच्याख्ये वामस्याग्रतलेन तु।
महीतलमवष्टभ्य दक्षिणं चरणं पुनः।
चक्रवद्भ्रमयेद्यत्र सा चक्रभ्रमरी भवेत् ॥

वेमः

**चक्रमण्डलम्**—करणम्

स्खलिता प्रथमं चारी डोलालम्बितबाहुकः।
पूर्वकायो नतो यत्र चक्रवद्भ्रमणं भवेत्।
अभ्यन्तरापवेधेन तद्विद्याच्चक्रमण्डलम् ॥

ज्यायनः

तच्चक्रमण्डलं प्रोक्तं स्वर्वेश्यानां परिक्रमे।

लक्ष्मणः

**चक्ररेचितम्** करणम्

एतौ डमरुकौ हस्तौ पुरस्तात्पृष्ठतो यदि।
पौनःपुन्येन तावेव स्यात्क्रमाविद्धरेचितौ ॥
अञ्चितौ चरणौ..............तलमञ्चरौ।
एतत्प्राह हरिक्ष्मापः करणं चक्ररेचितम ॥

हरिपालः

**चक्रवर्तितालः**—देशीतालः

चक्रवर्तिनि तालेऽस्मिन् गलौ दौलः प्रकीर्तितः।
ऽ । । ० ० ।

लक्ष्मणः

**चक्रवालः**—प्रबन्धः

गृहीतमुक्तैस्तु पदैराश्रित्य यमकक्रमम्।
स्याच्चक्रवालोऽभीष्टेन तालेनावृत्तियोगतः ॥
गेयो गद्यैश्च पद्यैश्च ततश्च भवति द्विधा।
आभोगोऽत्र पदैरन्त्यैर्न्यासस्तालश्च मानतः ॥

सोमराजः

**चक्रवालयमकम्**—अलङ्कारः

पूर्वस्यान्तेन पादस्य परस्यादिर्यदा समः।
चक्रवच्चक्रवालं तत्
(उदा–) शैलास्तथा शत्रुभिराहता हताः।
हताश्च भूयस्त्वनुपुंखगैः खगैः।
खगैश्च सर्वैर्युधिसञ्चिताञ्चिता-
ञ्चिताधिरूढा निहतास्तलैस्तलैः ॥

भरतः

**चक्रहस्तः**

विपर्यस्तौ तलौ कृत्वा सच्छिद्राङ्गुलिकौ क्रमात्।

कनिष्ठाङ्गुष्ठयोः स्पर्शे चक्रहस्त इति स्मृतः ।
देवोऽस्य विष्णुः कथितस्तस्मिंस्तु विनियुज्यते ॥

गौरीमतम्

यत्रार्धचन्द्रौ तिर्यञ्चावन्योन्यतलसंस्पृशौ ।
चक्रहस्तः स विज्ञेयश्चक्रार्थे विनियुज्यते ।
अंसभागेत्वयं हस्तो विष्णुचक्रनिरूपणे ॥

विनायकः

चक्राकारः वर्णालङ्कारः

(१) रिरिरिरि स रिरिरि । (४) पपपप म पपप
(२) गगगग रि गगग । (५) धधधध प धधध
(३) मममम ग ममम । (६) निनिनिनि ध निनिनि
(७) ससस्स नि ससस

प्रतापसिंहः

चक्रोद्धरिः—मेलरागः ( नटभैरवीमेलजन्यः )

(आ) स रि म ग म प ध नि स.
(अव) स ध प म ग रि स.

मञ्ज

चङ्क्रमणम्—पादचारः

पादयोर्बाह्यपार्श्वाभ्यां उत्क्षिप्योत्क्षिप्य यत्नतः ।
गतिर्भवेच्चङ्क्रमणं वर्तितं नाट्यकोविदैः ॥

नाट्यदर्पणे

चच्चत्पुटः—मार्गतालः

चच्चत्पुटः स विज्ञेयो यत्र स्यात्तगणात्प्लुतः । ऽ ऽ । ऽ̒

चच्चरी—देशीतालः

चच्चरी लघुकान्तकैः विरामान्तैर्द्रुतद्वन्द्वैरष्टभिः परिकीर्तिता ।
० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ० ०

कुम्भः

लघुरादौ विरामान्तर्द्रुतद्वन्द्वानि षट् तथा ।
चच्चरीति समाख्याता तत्परैः.......... ॥
। ० ० ० ० ० ० ० ० ० ० ० ० ०

हम्मीरः

चञ्चलगतिः—ध्रुवावृत्तम् ( सप्ताक्षरम् )

आद्यमथ पञ्चमं दीर्घमथ नैधनम् ।
यत्र यदि नामचेच्चञ्चलगतिस्तु सा ॥
भजगाः । निम्मलकरो सर्सा=निर्मलकरश्शशी ।

भरतः

चञ्चुकाम्भोजी—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

(आ) स ग रि ग म प म ध नि ध प नि ध नि स.
(अव) प नि प नि म ग रि स.

मञ्ज

चञ्चुमल्हारीरागध्यानम्

अहिभुक्पत्रिकवसनां सुमममूलाब्जप्रकाशधम्मिल्लाम् ।
गुञ्जापुञ्जसुभूषां मनसि ध्यायामि चञ्चुमल्लारीम् ॥

अत्र चञ्चुशब्देन भाषायां किरात्युच्यते । चञ्चुमल्लारीति किरातस्त्रीभिर्गेयो मल्हारीरागः ।

रागसागरः

चटुलम्—दर्शनम्

चटुलं तद्यदत्यन्तदुष्प्रेक्षं रूक्षभावतः ।

शारदातनयः

चटुला—भङ्गतालः

द्रुतद्वयं गुरुः द्रुतद्वयं गुरुः द्रुतद्वयं गुरुः द्रुतद्वयं गुरुः ।
० ० ऽ ० ० ऽ ० ० ऽ ० ० ऽ

तुम्बुरुः

चटुलाचली—मेलरागः ( मेचकल्याणीमेलजन्यः )

(आ) स रि ग रि ग म प नि ध नि स.
(अव) स नि ध प म रि ग रि स.

मञ्ज

चण्डः—देशीतालः

दत्रयं लद्वयं ताले चण्डसंज्ञे प्रकीर्तितम् । ० ० ० ॥

कुम्भः

द्रुतत्रयं लघुद्वन्द्वं चण्डतालं बभाषिरे । ० ० ० ॥

हम्मीरः

चण्डनिस्सारुकः—देशीतालः

अयं क्रीडाताल इति कैश्चिदुच्यते ।

चण्डपुटः—देशीतालः

गप्लुतौ गप्लुतौ दौ च लप्लुतौ दौ च लप्लुतौ ।
मप्लुतौ चेति विज्ञेयास्ताले चण्डपुटाह्वये ॥

२९ मात्राः ।

तालप्रस्तारः

चण्डीतालः

चण्डीताले लदौ गुरुः । ३½ मात्राः ।

तालप्रस्तारः

चतुरम्—करणम्

अलपद्मः करो वामो वक्षःस्थश्चतुरः पुनः ।
भवेदुद्धट्टितः पादो यत्र तच्चतुरं विदुः ।
विदूषकेण संसूच्ये विस्मयाभिनयादिके ॥

ज्यायनः

**चतुरः**—हस्तः

अस्याङ्गुष्ठो मध्यमाया मध्यपर्वोदरं श्रितः ।
ऊर्ध्वा कनीयसी यत्र चतुरं तं करं विदुः ॥

अन्ये पताकाङ्गुष्ठस्य मध्यमामूलसंस्थितिम् ।
ईषच्च पृष्ठतो यातां कनिष्ठां चतुरे जगुः ॥

नये वदनदेशस्थो युतौ द्वौ मणिबन्धयोः ।
विनयेऽथ विचारे स्यात्पार्श्वगोऽथ हृदि स्थितः ॥

ऊहापोहे च लीलायामुद्वेष्टितयुतः करः ।
कैतवेऽक्षप्रेरणे च भवेदूर्ध्वतलस्समे ॥

अङ्गुष्ठमध्यमान्योन्यमर्दनेन तु मार्दवे ।
चातुर्यवचने त्वेतौ संयुतौ चतुरोदितौ ॥

शार्ङ्गः

**चतुरचतुर्भुजराजराजिचन्द्रोद्योतः**—मूडप्रबन्धः

तालो वर्णयती रागाः क्रमादष्टादश स्मृताः ।
मध्यमादिश्च ललितो वसन्तो घूर्जरी तथा ॥
धन्नासी भैरवो गौण्डकृतिर्देशाख्यिकापि च ।
मालवश्रीश्च केदारमालवीयादिगौडकौ ॥
स्थानगौडश्च श्रीरागो मल्हारिश्च वराटिका ।
मेघरागश्च नट्टा च धारणी नियता इमे ॥
यावद्रागं पदानि स्युः प्रान्ते पाटस्वराणि तु ।
कचित्कचिद्गतालापभूषितानि यथारुचि ॥
विप्रलम्भाख्यशृङ्गारो रसो नायकवर्णनम् ।
नायिकायाश्च तत्र स्यात्सप्रबन्धवरः स्मृतः ॥
चतुरचतुर्भुजपदाद्राजराजिपदात्पुरः ।
चन्द्रोद्योताख्यगीतोऽयं कालसेनेन निर्मितः ॥

कुम्भः

**चतुरा**—भ्रूः

स्तोकस्पन्दालसा या भ्रूरायता स्याद्द्वितीयया ।
चतुरा सा भवेत्सौम्यसंस्पर्शे ललितेऽपि च ।
शृङ्गाराभिनयेऽप्येवं ज्ञेया अभिनयाः परे ॥

अशोकः

या किञ्चिदायता स्निग्धमन्थरा च भ्रुवोस्स्थितिः ।
चतुरं तन्मनोज्ञेऽर्थे शृङ्गारे हावभावयोः ॥

विप्रदासः

अपाङ्गोन्नतिसंयुक्ता चतुरा परिकीर्तिता ।
शृङ्गारे ललिते सौम्यदर्शने चतुरा भवेत् ॥

सोमेश्वरः

**चतुरङ्गः**—प्रबन्धः

विरुदं तेन्नकश्चैतत् द्वयं शरभलीलकं ।
नेष्यते गीतविद्भिस्तैः तेनासौ चतुरङ्गकः ॥

पण्डितमण्डली

**चतुराङ्गिणी**—मेलरागः ( चित्ताम्बरीमेलजन्यः )

( आ ) स म ग म प नि स .
( अव ) स नि ध नि प ग म ग रि स .

मत

**चतुरम्भा**—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

( आ ) स रि ग म ध प ध नि स .
( अव ) स नि ध प ध म ग रि ग स .

मत

**चतुरश्रम्**

पृथक्कटीनाभिचरौ करौ वक्षस्समुन्नतम् ।
वैष्णवं स्थानकं यत्र चतुरश्रं तदुच्यते ॥

कुम्भः

**—देशीस्थानम्**

नन्द्यावर्तस्य पदयोर्मध्यमष्टादशाङ्गुलम् ।
यत्र तच्चतुरश्राख्यं स्थानकं चतुरैः स्मृतम् ॥

वेमः

**चतुरश्रझम्पा**—ध्रुवतालः

लघुरेकोऽनुद्रुतं च द्रुतमेकं च यत्र वै ।
चतुरश्रः सप्तमात्रा झम्पातालः स उच्यते ॥

भरतकल्पः

**चतुरश्रध्रुवः**—तालः

लघुरेको द्रुतस्त्वेकः लघुद्वन्द्वं चतुर्दश ।
मात्रा यत्र प्रयुज्यन्ते चतुरश्रध्रुवः स्मृतः ॥

भरतकल्पः

**चतुरश्रत्रिपुटः**—ध्रुवतालः

लघुरेको द्रुतद्वन्द्वं मात्राश्चाष्टौ च यत्र सः ।
त्रिपुटः चतुरश्रः स्यादिति प्राहुर्मनीषिणः ॥

भरतकल्पः

**चतुरश्रपताकहस्तः**

करद्वये पताकौ तु चलितौ चाप्यधोमुखौ ।
चतुरश्रपताकस्तु भावशास्त्रविनिश्चितः ।
अधोमुखस्तु चलितः पादद्वन्द्वनिरूपणे ॥

विनायकः

**चतुरश्रभ्रमरकः**—नृत्तबन्धः

यत्र मध्ये तु चत्वारि पात्रमष्टौ च मण्डले ।
चरन्ति पङ्क्तिरूपेण चारुविभ्रमशोभिताः ।
चतुरश्रभ्रमरको बन्धोऽयं परिकीर्तितः ॥

वेमः

**चतुरश्रमट्ठयः**—ध्रुवतालः

आद्यन्तयोर्लघू मध्ये द्रुतं च चतुरश्रकः ।
मात्रा दश जगुर्यत्र स मट्ठ्यः परिकीर्तितः ॥

भरतकल्पः

**चतुरश्ररूपकः**—ध्रुवतालः

द्रुतं त्वेकं लघुश्चैको मात्राषट्कं च यत्र सः ।
रूपकश्चतुरश्रः स्यादित्याहुस्तालवेदिनः ॥

भरतकल्पः

**चतुरश्रवर्णः**—देशीतालः

वर्णतालस्तत्र गलौ दगौ च चतुरश्रके । ऽ । ० ऽ

अयं श्लोको वर्णतालभेदानन्तरं पठितव्यः ।

वेमः

**चतुरश्रा**—मङ्गतालः

द्वौ लघू गुरुर्द्वौ लघू गुरुः द्वौ लघू गुरुत्रयम् ।

॥ऽ॥ऽ॥ऽऽऽ

नान्यः

**चतुरश्राड्डः**—ध्रुवतालः

लघुद्वन्द्वं द्रुतद्वन्द्वं मात्रा द्वादश यत्र सः ।
चतुरश्रोऽड्डतालः स्यादिति तालविदो विदुः ॥

भरतकल्पः

**चतुरश्रैकतालः**—ध्रुवतालः

लघुरेकश्चतुर्मात्रश्चतुरश्रस्तथैव च ।
यत्रैकतालः स प्रोक्तो भरतज्ञैर्मनीषिभिः ॥

भरतकल्पः

**चतुरश्रौ**—नृत्तहस्तः

अष्टाङ्गुलान्तरौ यौ तु वक्षसः खटकामुखौ ।
समांसकूर्परौ हस्तौ चतुरश्रौ पराङ्मुखौ ॥

सोमेश्वरः

चतुरश्रत्वमङ्गस्य नृत्ते जीवितमुच्यते ।
तदाकारतया पूर्वं चतुरश्रावुदाहृतौ ॥
प्रायेण नृत्तहस्तानां प्रभवत्वाच्च सूरिभिः ।
बिंबसूत्रसमस्कन्धकूर्परौ खटकामुखौ ॥
पराङ्मुखौ यदास्यातामुरसोऽष्टाङ्गुलान्तरौ ।
चतुरश्रौ तदा ज्ञेयौ सौष्ठवेनापि संयुतौ ।
आकर्षणे स्रगादीनां विष्णोरभिनये पुनः ॥

ज्यायनः

चतुरश्रौ तदा हारमौलाद्याकर्षणे करौ ।

अशोकः

पराङ्मुखस्थाने प्राङ्मुखाविति विप्रदास आह ।
सम्मुखाविति भोजः ।

**चतुरसभाविलासः**

अयं ग्रन्थः परमेश्वरकृत इति अच्युतरायकृततालाब्धिग्रन्था-दवगम्यते । तत्र बहवः श्लोकाः चतुरसभाविलासादुदाहृताः ।

**चतुरस्रवर्तना**

चतुरस्रौ यदा हस्तौ चलितौ सांसकूर्परौ ।
उद्वेष्टितक्रियापूर्वौ पश्चाद्वक्षःसमाश्रितौ ।
तदा धीरैः समादिष्टा चतुरस्राख्यवर्तना ॥

अशोकः

**चतुरस्रा**—गतिः

चतुरस्रा चतुर्मुखा ।

वेवणः

**चतुरस्रौ**—हस्तः

पुरोमुखौ समस्कन्धकूर्परौ खटकामुखौ ।
स्थितौ वक्षःपुरोदेशे वक्षसोऽष्टाङ्गुलान्तरे ।
चतुरस्राविति प्रोक्तौ स्रगाद्याकर्षणे करौ ॥

शार्ङ्गः

**चतुर्थकः**—देशीतालः

लघुद्वन्द्वं द्रुतश्चैकः क्रमेण स्याच्चतुर्थकं । ।।०

वेमः

**चतुर्थप्रहारगेया रागाः**

श्रीरागो मालवाख्यश्च गौडी द्रवणसंज्ञकः ।
नटः कल्याणिसंज्ञश्च सालङ्गनटकं तथा ॥
सर्वे नाटाश्च केदारी कर्णाटाभीरिका तथा ।
चण्डहंसी पहाडी च तृतीयप्रहरात्परम् ॥

दामोदरः

रात्रौ पूर्वयामगेया रागाः ।

**चतुर्दण्डीप्रकाशिका**

वेङ्कटमखिकृता । कालः क्री. श. १६२० – ५०.

चतुर्दण्डी

स्थाय्यारोह्यवरोही च सञ्चारीति क्रमा इमाः।
चतुर्दण्डी च सा प्रोक्ता नारदादिमुनीश्वरैः॥

लक्ष्मीनारायणः

नास्मिन्नर्थे चतुर्दण्डीशब्दः प्रयुक्तो वेङ्कटमखिना। स तु आलाप-ठाय-गीत-प्रबन्धा इति गानस्य चतुर्ष्वङ्गेषु प्रयुक्तवान्। प्राचीनैस्तस्मिन्नर्थे प्रयुक्त एवेति स्वग्रन्थे चाह।

गीतप्रबन्धयोरेवं भेदो यदि न कल्प्यते।
कुतः सिध्येच्चतुर्दण्डी कुतो गोपालनायकः॥

इति वदन् गोपालनायकोऽपि चतुर्दण्डीशब्दं प्रयुक्तवानिति प्रोक्तवान्। चतुर्दण्डीलक्ष्यग्रन्थेऽप्यद्याप्यमुद्रिते सप्तत्रिंशद्रागाणां आलापठायगीतप्रबन्धरूपाणि प्रतिरागं दर्शितानि सन्ति॥

चतुर्दन्तहस्तः

मृगशीर्षौ स्वस्तिकौ चेच्चतुर्दन्तकरो भवेत्।
अधोमुखः पुरोभागे ऐरावतनिरूपणे॥

विनायकः

चतुर्दलारविन्दः—चालकः

मध्यदेशस्थिते तिर्यगेकस्मिन् लुठिते करे।
करोऽपरः पूर्वमूर्ध्वं लुठन् गत्वा विलासतः॥
मण्डलभ्रमणं कृत्वा क्रमादाशाचतुष्टये।
तत्तन्मुखतया चारु लुठनं क्रियते यदि।
चतुर्दलारविन्दाख्यश्चालकः परिकीर्तितः॥

वेमः

अयमेव चतुष्पत्राब्जमिति अशोकेन संज्ञितः।

चतुर्भागः—तालप्राणः

मार्गशब्दे द्रष्टव्यम्।

चतुर्भुजः—देशीतालः

चतुर्भुजश्चतुर्मद्भैर्विरामान्त्यद्रुतान्तरैः। ०।०।०।०।

लक्ष्मणः

चतुर्मार्गम्

मार्गाश्चत्वार एतेषामधुनाख्यामहे भिदा।
मार्गेणं मार्ग इत्येवमाकांक्षावस्तुगोचरान्।
आकांक्षानियतान्वर्णान् मार्गं मुनय ऊचिरे॥

नान्यः

—त्रिपुष्करे

आलिप्ताङ्कितगोमुखविस्तारश्चत्वारो मार्गाः।

भरतः

चतुर्मुखः—देशीतालः

चतुर्मुखे द्रुतद्वन्द्वं शीघ्रमेकं पुनस्तथा।
पश्चात्प्रलघुनिःशब्दाः…………………॥
००‿००‿०००‿ऽ।

लक्ष्मणः

चतुर्मुखाभिधे ताले सगणाच्च लघुर्गुरुः ॥ ऽ। ऽ

सुधा

चतुर्मुखे क्रमात्प्रोक्ता लगलाश्च प्लुतोऽन्तिमः। । ऽ। ऽ̐

वेमः

—प्रबन्धः

स्वरैश्चैव तथा पाटैस्तेन्नकैश्च तथार्धकम्।
क्रमेणैव चतुर्भागा गीयते स चतुर्मुखः॥
आद्यं स्वराङ्कवद्गेयं खण्डयुग्मं मनीषिभिः।
तृतीयं तेन्नकैर्गेयं चतुर्थं गमकैस्तथा॥

सोमेश्वरः

चतुर्मुखस्वरैः पाटैः पदैस्तेन्नैर्निबध्यते।
स्थाय्यादिभिस्तथा वर्णैराभोगोऽन्ते पदान्तरैः।
ग्रहेर्न्यासो विधातव्यो भवेदेवं चतुर्मुखः॥

हरिपालः

स्वरैः पाटैः पदैस्तेन्नैर्वर्णैश्छायादिभिः सह।
निवेशितैर्यथासंख्यं परिख्यातश्चतुर्मुखः॥

सोमराजः

स्वरैः पाटैः पदैस्तेन्नैः सहितो यः प्रबध्यते।
स्थाय्यादिभिश्चतुर्वर्णैः यथासंख्यानिवेशितैः॥
चतुर्मुखप्रबन्धोऽयं चतुरैरभिधीयते।
आभोगोऽन्यपदैरस्य ग्रहेण न्यास इष्यते॥

जगन्नाथमल्लः

यस्याद्यपादरचना स्थायिवर्णाश्रितैः स्वरैः।
आरोहिवर्णैश्चतुरा स्याद्द्वितीयकः॥ (?)
ततोऽवरोहिवर्णस्थैः पदैर्भागस्तृतीयकः।
तेन्नस्सञ्चारिवर्णस्थैश्चतुर्थः परिकल्प्यते।
ग्रहेण मुच्यते यश्च स प्रबन्धश्चतुर्मुखः॥

पण्डितमण्डली

—नृत्तबन्धः

करणात्सचतुष्काच्च द्वे द्वे वारौ परस्परम्।
द्वे द्वे शेषे च नर्तक्यो मण्डलाकारयोगतः॥
चरन्ति यत्र कोणस्थाः कुर्वन्ति भ्रमरीमपि।
प्रतियुग्मप्रचारेण युग्मान्तरमपि क्रमात्।
अनुगच्छति बन्धोऽयं चतुर्मुख उदाहृतः॥

वेमः

—वंशः

चतुर्मुखस्य वंशस्य मानं षडशूकिकाधिकैः ।
अङ्गुलैः पञ्चदशभिः मुखतालास्यरन्ध्रयोः ॥
अन्तरे मानमाख्यातमङ्गुलानां चतुष्टयम् ।
पृथक्सपादद्वियविमानं सप्तान्तरालगम् ॥
समासतो मध्यमानमङ्गुलद्वितयी तथा ।
यूकाः षट्त्रितयीशेषं पञ्चवक्त्रवर्दारितम् ॥

कुम्भः

**चतुर्मुखलोहडी**—उत्प्लुतिकरणम्

क्रियते लोहडी यत्र दिशासु चतसृष्वपि ।
कथिता नृत्तचतुरैः सा चतुर्मुखलोहडी ॥

वेमः

**चतुर्युगकला**—कला

चतुर्विलासेषु विधाय पार्ष्णिं यत्रैकपादस्य च पादमन्यम् ।
ऊर्ध्वं समुत्क्षिप्य च हस्तपूर्वं करोति चक्रभ्रमिमेव ताभ्याम् ॥
उक्ता मानप्रभुणा नाम्ना चतुर्युगकलामणिः ।
भूभुजां हर्षजननी कला कलिमलापहा ॥

नागमल्लः

**चतुश्चक्रिणी**—कला

मेदिन्यामुपविश्य पादयुगलेनैकेन हस्तेन च
प्रायोत्क्रामयते सुधांशुवदना चक्राणि चित्राण्यथ ।
क्षिप्त्वा चान्यकरेण यत्र च समादत्ते मुहुर्गोलकान्
चित्राण्येव च पालमित्थमुदिता नाम्ना चतुश्चक्रिणी ॥

नागमल्लः

**चतुष्कोणम्**—पादमणिः

समस्थितस्य पादस्य पृष्ठतः पुरतः क्रमात् ।
स्वस्तिकं तच्युतिं कुर्वन्नुर्वीं हन्याद्विदिक्षु चेत् ।
अन्योङ्घ्रिरङ्गुलीपृष्ठे चतष्कोणं मतं तदा ॥

ज्यायनः

**चतुष्कोणनिकुट्टिता**—मुद्रपचारी

यत्राङ्घ्रिः कुट्टितः पूर्वं पुरः पश्चान्निवेशितः ।
अङ्गभावात्पुनश्चापि पुरः पश्चात्तदान्यथा ।
स्थाने च कुट्टितस्सा स्याच्चतुष्कोणनिकुट्टिता ॥

अशोकः

**चतुष्पदा**—गीतम्

अथ लास्याश्रयीभूताः कथ्यन्ते तु चतुष्पदाः ।
चतुरश्रा तथा त्र्यश्रेत्येषा द्वेधा चतुष्पदा ॥
एकस्य वा द्वयोर्यद्वा बहूनां वाक्ययोजनात् ।
शृङ्गाररससंपन्ना त्रिविधा संप्रकीर्तिता ॥
सा पुनस्त्रिविधा ज्ञेया लयलयविभागतः ।
प्रवृत्ताख्या द्रुतलये स्थिताख्या सा विलम्बिते ॥
ज्ञेया स्थितप्रवृत्ताख्या लये मध्ये विचक्षणैः ।
अष्टादशप्रभेदा च विज्ञेयैषा चतुष्पदा ॥
बह्वक्षरा च पृथुला मागधी चार्धमागधी ।
समाक्षरपदा चैव ततश्च विषमाक्षरा ॥
अथाद्यन्तावहरणा अन्तावहरणा तथा ।
अभ्यन्तरावहरणा ततश्चैवार्धनर्कुटा ॥
अर्धखञ्जा च मिश्रा च ततश्चैवान्तशीर्षका ।
एकावसाना विज्ञेया तथा च नियताक्षरा ।
अर्धप्रवृत्तेत्येतेषां भेदानां लक्षणं ब्रुवे ॥

वेमः

—मात्रावृत्तम्

प्रथमपादे र र ग ग । द्वितीयपादे न न स । तृतीयचतुर्थयोः प्रत्येकं – पञ्चमात्रिक एकः र ।

विरहाङ्कः

**चतुष्पदी**—प्रबन्धः

चतुष्पद्यां तु वृत्तायां प्रासः कार्यो द्वयोर्द्वयोः ।
ध्रुवायामेवमेव स्यात्पादानुप्रासकल्पना ॥
सर्वेषामेव पादानां एकः प्रासो यदा भवेत् ।
तदा सर्वसमाख्येन समाख्याता चतुष्पदी ॥
आद्यद्वितीययोः प्रासः सा तृतीयचतुर्थयोः ।
यस्यामर्धं सदा प्रोक्ता चतुरा सा चतुष्पदी ॥
आद्यतृतीययोः प्रासः तथा तुर्यद्वितीययोः ।
यत्रान्तरसमा ज्ञेया सा छन्दसि चतुष्पदी ॥

जगन्नाथमल्लः

स्वरास्सतेन्नकास्तत्र तालस्वरपदाभिधः ।
आभोगोऽन्यपदैरेव तेन्नकैर्न्यासकल्पना ।
एकैकं यमकं कार्यमर्धयोरुभयोरपि ॥

हरिपालः

मात्राष्षोडश पादास्स्याद्यदि वाप्येकविंशतिः ।
चतुर्विंशतिसंख्या वा चतुष्पादा चतुष्पदी ॥

सोमेश्वरः

**चतुस्तालः**—देशीतालः

चतुस्ताले गुरुः पूर्वं ततो बिन्दुत्रयं भवेत् ।
धा नी स रि ग ऽ ० ० ०

जगदेकः

चतुस्ताले तु विज्ञेया गुरोरूर्ध्वं द्रुतास्त्रयः । ऽ ० ० ०

वेमः

**चतुस्स्वरः**—वर्णालङ्कारः

स चतुःस्वर इत्युक्तो यत्र स्वरचतुष्टयम् ।
दर्शितवान्यं सकृद्गीत्वा गीयन्ते सकलाः कलाः ॥

यथा – सरिगमसरिगमप, रिगमपरिगमपध इत्यादिक्रमेण। व्युत्क्रमेण पमगरिपमगरिस इत्यादि। अस्यापि रूपकतालानुगतत्वेनानुपूर्वीविशिष्टत्वादलङ्कारत्वम् ॥

संगीतसरणिः

**चतुस्स्वरकम्**—कण्ठभूषणम्

**चत्रवाकः**—मेलकर्ता रागः

स रि ० ० ग म ० प ० ध नि ० स .

मञ्ज

**चन्द्रः**—संगीतशृङ्गाराङ्गम्

छन्दोरुद्रमश्चन्द्रः ।

भोजः

**चन्द्रकलः**—देशीतालः

मपैश्चन्द्रकलो मतः । ऽ ऽ ऽ ऽऺ ऽऺ ऽऺ

मदनः

**चन्द्रकला**—पाटवाद्यम्

वृद्धिह्रासौ क्रमाद्यान्ति मात्राश्चन्द्रकला इव ।
यत्र चन्द्रकलासंज्ञस्तालश्चापि प्रयुज्यते ॥
यद्वाद्यं वाद्यचतुरैरुक्तं चन्द्रकलाभिधम् ।
यत्र प्रयोगभेदेन वृद्धिह्रासससमन्विताः ।
तत्र षोडश दृश्यन्ते तालश्चन्द्रकला त्वसौ ॥

वेमः

—देशीतालः

ततश्चन्द्रकलायां गत्यङ्गयोः त्रितयं लघु।
ऽ ऽ ऽ ऽऺ ऽऺ ऽऺ ।

गोपतिप्पः

मगणश्च त्रयो दीप्ता लघुश्चन्द्रकलाभिधे ।
ऽ ऽ ऽ ऽऺ ऽऺ ऽऺ ।

हम्मीरः

—पाटवाद्यम्

अन्ये चन्द्रकलां प्राहुः द्वात्रिंशन्मात्रिकामिताम् ।
द्विमात्रा षोडशकला वृद्धिह्रासयुतो विदुः ।
तादृक्चतुष्षष्टिकलाः प्राहुस्तां दक्षिणे पथि ॥

मोक्षदेवः

मात्रायुगलकाद्यत्र समारभ्य विवर्धिते ।
संख्या द्वात्रिंशतिं यावत्कलानां तु द्वयं द्वयम् ॥
अवरोहप्रकारेण कलापाते कृते तथा ।
चतुष्षष्टिकलं तु स्याद्वाद्यं दक्षिणवामतः ॥

एषा चन्द्रकला प्रोक्ता वृद्धिह्रासससमन्विता ।
एतां वादयितुं शक्तो यद्येको नन्दिकेश्वरः ॥

सोमराजः

—मेलरागः ( खरहरप्रियामेलजन्यः )

(आ) स रि ग म प म ध नि स .
(अव) स ध प म ग म स .

मञ्ज

**चन्द्रकान्ता**—प्राकृते मात्रावृत्तम्

चतुर्मात्रागण एकः पञ्चमात्र एकः चतुर्मात्रकः सः ।

विरहाङ्कः

**चन्द्रकौशिकः**—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

(आ) स रि ग म प म ध नि स .
(अव) स नि ध प म ग स .

मञ्ज

**चन्द्रज्योतिः**—मेलरागः ( पावनीमेलजन्यः )

(आ) स रि ग म प ध प नि स .
(अव) स नि प ध प म ग रि स .

मञ्ज

**चन्दनलता**—देशीतालः

ऽऺ ऽऺ ऽऺ ऽ ऽ । । ० ० ० ०̇ ० ० ०̇

हम्मीरः

**चन्द्रप्रकाशः**—प्रबन्धः

खण्डैः षोडशभिश्चन्द्रप्रकाशश्चन्द्रवर्णनात् ।
वर्जनानां कलैकैका प्रतिखण्डं मनीषिभिः ।
रागैः षोडशभिर्युक्तः षडङ्गो धीमतां मतः ॥

श्रीकण्ठः

**चन्द्रमञ्जरी**—मेलरागः ( शुभपन्तुवरालीमेलजन्यः )

(आ) स रि ग प नि ध स .
(अव) स नि ध प म ग रि स .

मञ्ज

**चन्द्रमण्डनम्**—मेलरागः ( खरहरप्रियामेलजन्यः )

(आ) स रि ग म प म ध नि स .
(अव) स नि प म ग म रि स .

मञ्ज

**चन्द्रमण्डलः**—देशीतालः

लघुमध्ये प्लुतौ स्यातां चन्द्रमण्डलसंज्ञके ।ऽऺ ऽऺ।

लक्ष्मणः

**चन्द्रमृगहस्तः**

पूर्वोक्तमृगशीर्षे तु तर्जन्यूर्ध्वं प्रसारिता ।
नाम्ना चन्द्रमृगो हस्तः शल्यार्थे संप्रयुज्यते ॥

शृङ्गारशेखरः

**चन्द्ररेखा**—मेलरागः (हेमवतीमेलजन्यः)

(आ) स रि ग म प ध स.
(अव) स नि ध म ग रि स.

मज

**चन्द्रलेखा**—द्वादशाक्षरवृत्तम्

ममयया ।

भरतः

**चन्द्रवंशतिलकः**—देशीतालः

स्युश्चन्द्रवंशतिलके ताले वारचतुष्टयम् ।
कोदण्डार्धेन्दुपर्यङ्कशरखान्यन्ततश्चद्रः ॥
ऽऽ।।०ऽऽ।।०ऽऽ॥०ऽऽ॥००

गोपनिप्पः

**चन्द्रशेखरः**—गीतालङ्कारः (ध्रुवभेदः)

कल्याणदो भवेद्वीरे ध्रुवकश्चन्द्रशेखरः ।
द्विदिग्वर्णपदं यत्र त्रिपुटे च विधीयते ।
द्रुतद्वन्द्वं लघुद्वन्द्वं ताले त्रिपुटसंज्ञके ॥

संगीतसारः

**चन्द्रशेखरकिङ्करः**—देशीतालः

ततस्ताले समुद्दिष्टे चन्द्रशेखरकिङ्करे ।
पलदाः पगदाः पुश्चप्लुतदाः गपदा गदौ ॥
ऽ।०ऽऽ०।ऽ०ऽऽ०ऽ००

गोपतिप्पः

**चन्द्रहस्तः**

अर्धचन्द्रकरस्सोयं चन्द्रार्थे संप्रयुज्यते ।

शृङ्गारः

**चन्द्रहासितम्**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म ध नि स.
(अव) स नि ध म ग रि स.

मज

**चन्द्रा**—मूर्छना

जीमूतग्रामे तृतीया मूर्छना ।

गान्धारो मूर्छनां याति ग्रामे जीमूतसंज्ञके ।
यदा तदा भवेचान्द्री मूर्छना कुमुदप्रिया ॥

वादिमत्तः

**चन्द्रानना**—श्रुतिः

मध्यमस्य प्रथमा श्रुतिः ।

सुधा

**चन्द्रिका**—गीतालङ्कारः (एकतालीभेदः)

गुरुद्वयं भवेद्यत्र ताले ललितसंज्ञकः ।
चन्द्रिका चैकताली स्यात्तेन सौभाग्यदायिनी ॥

संगीतसारः

—प्राकृते मात्रावृत्तम्

पञ्चमात्रिकौ द्वौ चतुर्मात्रिक एको गः

विरहाङ्कः

**चन्द्रिकागौलः**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि म प ध नि स.
(अव) स नि ध प म ग स.

मज

**चन्सुकाम्भोजीरागध्यानम्**

धनुश्शरविभासितप्रकटपार्श्वभागां सदा
सुवर्णपुटिकास्थितेल्लसितमूर्ध्निकां श्यामलाम्।
सतीं च चरमस्थले शिशुनिबद्धचेलाञ्चलां ।
स्मरामि करपालिकां मनसि चन्सुकाम्भोजिकाम् ॥

चन्सुः किरातस्त्री ।

रागसागरः

**चपलगतिः**—ध्रुवाक्षरम् (एकादशाक्षरम्)

चपलाशब्दे द्रष्टव्यम् ।

**चपलता**—व्यभिचारिभावः

रागद्वेषमात्सर्यामर्षेर्ष्याप्रतिकूलादिभिर्विभावैरुत्पद्यते । तां वाक्पारुष्यनिर्भर्त्सनवधबन्धसम्प्रहारताडनादिभिरभिनयेत् ।

अविमृश्यतु यः कार्यं पुरुषो वधताडनं समारभते ।
अविनिश्चितकारित्वात्स तु खलु चपलो विबोद्धव्यः ॥

भरतः

चापलं साहसं रागद्वेषादेः स्वैरितादिमत् । साहसमविमृश्यकारिता । आदिशब्दाज्जाड्यादेर्ग्रहः । स्वैरित्वं स्वच्छन्दाचारः ।

रामचन्द्रः

अनवस्थाक्रमाकारमान्द्यं चापलमेव हि ।
कथ्यते च तदुत्पत्तौ हेतुर्मर्कटचित्तता ॥
स तु सर्वत्र सन्तोषपरिणामादिसंभवः ।
तत्र जृम्भाशिरःकम्पनयनोन्मीलनादयः ।
तत्रानुभावाः पारुष्यस्वच्छन्दावरणादयः ॥

सर्वेश्वरः

चपला- ध्रुवावृत्तम् (एकादशाक्षरम्)

आदाविह खलु यदि गुरुणी नित्यं निधनमपि च गुरुचेत्।
शेषं वसु लघु परिगणितं त्रिष्टुभ्यथ भवति च चपला ॥

आदौ लघुः प्लुतश्चान्ते द्रुता अष्टौ सतां मता।
चच्चत्पुटस्य भङ्गेन चपलेयं प्रकीर्तिता ॥
वीरे रसे प्रयोक्तव्या मदे हर्षे च गर्विते।
टक्करागेण गातव्या त्रिष्टुब्जातावियं मता ॥

एदे खितिहरवरसरिसा।

एते क्षितिधरवरसदृशा। इयं चपलगतिरित्यप्युच्यते।

नान्यः

—ध्रुवावृत्तम्

प्रकृत्यां पञ्चमान्त्ये तु ह्यष्टमैकादशे गुरु।
द्वादशं चेति विज्ञेयं नामतश्चपला यथा।

कमलवणाइ विवोधिअमाणो गहगणपरिपडिदो ॥
कमलवनानि विबोधमानो ग्रहगणपरिपतितः।

भरतः

—श्रुतिः

पञ्चमस्य द्वितीया श्रुतिः।

चमत्कारः—शिल्पकाङ्गम्

चमत्कारो लोकप्रसिद्ध एव। उदाहरणं - क्षपणककापालिकाङ्के - हीं मादिके इत्यादि।

सागरः

चम्पकविधारी—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स म ग म प नि ध म प ध नि ध स.
(अव) स नि ध नि म ध म ग रि म ग रि ग स.

मञ्ज

चम्पा—देशीतालः

नगणो रगणो रश्च चम्पातालेऽभिधीयते।

१० मात्राः।

तालप्रस्तारः

चम्पालता—मेलरागः (झङ्कारध्वनिमेलजन्यः)

(आ) स ग म ध नि स.
(अव) स नि ध प म रि स.

मञ्ज

चम्पुरायस्थापकः—देशीतालः

चम्पुरायस्थापके तु चतुः प्लुतलगा मताः।
ऽ̇।ऽऽ̇।ऽऽ̇।ऽऽ̇।ऽ

गोपतिप्पः

चम्पूः—श्रव्यकाव्यम्

याख्यायिकेव सोच्छ्वासा दिव्यपद्यगद्यमयी।
सा दमयन्तीवासवदत्तादिरिहोच्यते चम्पूः ॥

भोजः

चरणाङ्गुल्यः

अधःक्षिप्ता तथोत्क्षिप्ताः कुञ्चिताश्च प्रसारिताः।
संलग्नाश्चेति चरणाङ्गुल्यः पञ्चधा मताः ॥

विप्रदासः

चरविभासितम्—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स ग म प ध नि स.
(अव) स ध प म ग रि स.

मञ्ज

चरावलिः—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग प ध स.
(अव) स नि ध प ग रि स.

मञ्ज

चर्चरिका—देशीतालः

रसत्रयं मण्डलान्तं विधूनं मिश्रलस्तथा।
ततश्चर्चरिकाह्वयं।

लक्ष्मणः

चर्चरी

यद्रासकक्रमेणैव नर्तक्यो विनिवेशिताः।
वर्णतालाञ्चिते वाद्ये वाद्यमानेऽथ वादके ॥
प्रविश्य युग्मशो रङ्गं गायन्त्यश्चर्चरीं मुहुः।
द्विपदीमथवा गानवस्तूचितपदोत्तगम् ॥
शृङ्गारवर्णनोपेतां वसन्तसमयोत्सवे।
कुर्वन्ति नर्तनं सैषा चर्चरीति निगद्यते ॥

वेमः

—देशीतालः

विरामान्तद्रुतद्वन्द्वान्यष्टावन्ते लघुस्तथा।
०ऽ̇०ऽ̇०ऽ̇०ऽ̇०ऽ̇०ऽ̇०ऽ̇०ऽ̇।

वेमः

ससारिरी गगागा ममामा पपापा धधा निनीनी ससासा।

जग

—भङ्गतालः

विरामान्तं द्रुतद्वन्द्वं लघून्यष्टौ च चर्चरी।

रङ्गनाथः

दचतुष्टयं गुरुः पुनस्तथा।

नान्दः

चर्चरीनृत्तम्—देशीनृत्तम्

तेति गिध इति शब्देन नर्तनं रासतालतः।

अथवा चर्चरीतालाच्चतुरावर्तनैर्नटैः।
क्रियते नर्तनं तस्याश्चर्चरीनर्तनं वरम् ॥

वेदः

**चर्चरीमुखः—देशीतालः**

सगणोऽष्टद्रुताभोगो द्वौ लगौ चर्चरीमुखे।
१८ मात्राः।

तालप्रस्तारः

**चर्मलक्षणम्**

अतः परं प्रवक्ष्यामि चर्मलक्षणमुत्तमम्।
न ज्वरोपहतं चर्म न च काकमुखाहतम् ॥
न दोषोपहितं छिन्नं न च धूमाग्निदूषितम्।
ताम्रपल्लवसङ्काशं हिमकुन्देन्दुपाण्डुरम्।
स्नाय्वामिषविहीनं चाछिन्नं चर्म प्रशस्यते ॥
विचित्यैवं सुवर्णानि चर्माण्याहृत्य बुद्धिमान्।
शीतोदके निशामेकां स्थापयित्वा समुद्धरेत् ॥
वध्रैस्सुललितैर्दान्तैः गोमयैरप्सु मार्जितैः।
चन्द्रकैस्तनुभिः पश्चान्मृदङ्गान्योजयेद् बुधः ॥

भरतः

**—(अवनद्धस्य)**

अधुना चर्मणां वक्ष्ये लक्षणं भरतोदितम्।
परिकर्म पुटादीनां वध्री वन्धादिकांस्तथा ॥
ज्वरकाकधूमदाहैः मददोषैरुपहतं चर्म।
तदनादेयं ...ममिदधते पुटविधौ मुनयः ॥
यत्ताम्रवर्णहिमकुन्दनिभं चर्म गोचर्म।
स्नाय्वामिष परिहीनं न छिन्नं जायते तस्मिन् ॥
संस्थाप्यैकां रजनीं शीतलसलिले समुद्धरेत्पश्चात्।
आमृद्य गोमयेन च वध्रीणां मार्जनं कुर्यात् ॥
अपिधाय चर्मणास्यं वध्राभिर्बन्धयेत्ततो मुरजम्।
चन्द्रकनिर्माणमुखे वध्रा देयास्त्रिवर्तिकाश्चैताः ॥
तिसृणामपि वध्रीणामन्योन्यं योजनाद्भवेत्त्रिवृतम्।
आलिङ्ग्यं चोर्ध्वगमप्येवं कुर्याच्च वन्दसंबद्धम् ॥
अक्षाणां त्रीणि शतान्यत्रालिङ्ग्ये तथोर्ध्वके कुर्यात्।
दशभिर्वध्रैरेव स्याद्बन्धविधिस्तु पुष्करद्वितये ॥
द्वे द्वे वध्रे हित्वा तृतीयवध्रं प्रवेशयेद्रन्ध्रात्।
एवं निर्माणविधिश्चान्येषामूहनीयं च तज्ज्ञैः ॥

नान्यः

**चर्या—प्रबन्धः**

प्रान्तप्रासा निबद्धा स्यात्प्रबन्धैः पद्धतीमुखैः।
द्वितीयप्रमुखैस्तालैर्गेयाध्यात्मोपयोगिनी।
योगिभिर्गीयते चर्या प्रकारैर्बहुभिस्त्वसौ ॥

हरिपालः

**चलम्—दर्शनम्**

चलं तदुच्यते यत्र सर्वतो वीक्षणं द्रुतम्।

वेमः

**चलः—मणिबन्धः**

क्रिया समभिहारेण वर्त्येते यत्र लक्षितौ।
निकुञ्चाकुञ्चिता वेनं चलमावाहने विदुः ॥

विप्रदासः

**चलनम्—तारा**

कम्पनं चलनं ज्ञेयम्..........।

अशोकः

भयानके रसे प्रोक्तं..........।

कुम्भः

**—पादचारः**

स्वस्थानस्थस्य पादस्य चलनाच्चलनं भवेत्।

नाटचदर्पणे

**चलनवराली—मेलरागः (नटभैरवीमेलजन्यः)**

(आ) स रि ग म ध नि ध स.
(अव) स ध म ग रि स.

मज्ञ

**चलनाटः—मेलकर्ता**

स ० ० रि ग म ० प ० ० ध नि स.

मज्ञ

**चलनी—मेलरागः (शूलिनीमेलजन्यः)**

(आ) स रि ग म प ध नि ध स.
(अव) स नि ध म ग रि स.

मज्ञ

**चलसंहतम्—चिबुकम्**

रक्ताधरं चलं स्त्रीणां चलने चलसंहतम्।

वेमः

संलग्नोष्ठं चलं कोपे योषितां चलसंहतम्।

विप्रदासः

**चलसंहता—हनुः**

चलिता लगितोष्ठा च हनुस्स्याच्चलसंहता।
स्त्रीभोगे कवले योज्या वृद्धताम्बूलचर्वणे ॥

सोमेश्वरः

चला श्लिष्टाधरा योषिदाहारे चलसंहता।

ज्यायनः

चलहस्तः

सूतिकाहस्ततर्जन्यौ लग्ने चेत्स्वस्तिकक्रमात् ।
चलहस्तोऽधिदेवोऽस्य यमो दैवे चले तथा ।
शृङ्खला यमपाशेषु विनियोग उदाहृतः ॥

गौरीमतम्

चलाचलिः—देशीलास्याङ्गम्

आभिमुख्येन रचिता युता द्रुतलयेन च ।
ससौष्ठवा चालिरेव तज्ज्ञैः प्रोक्ता चलाचलिः ॥

वेमः

चलितम्—चिबुकम्

चलितं श्लेपविश्लेपिक्षोभे वाक्स्तम्भकोपयोः ।

इदं वलितमिति क्वचिद्दृश्यते ।

कुम्भः

चलिता—वंशगतिः

सञ्चारिवर्णनिष्पत्त्यै वंशेऽधरनिवेशिते ।
अङ्गुलीचालनं यत्न चलिता सा प्रकीर्तिता ॥

वेमः

—वंशेऽङ्गुलिगतिः

अङ्गुल्याश्चलता यत्र स्वरसंपादने यथा ।
सञ्चारिवर्णसंयुक्ता चलिता नाम सा स्मृता ॥

विशाखिलः

चलौ—श्वासः

ओष्ठौ सशब्दावुच्छ्वासनिश्वासौ वक्त्रनिर्गतौ ।
स्यातां चलौ विधातव्यौ चिन्तास्वौत्सुक्यशोकयोः ॥

विप्रदासः

चल्लावणी—पाटवाद्यम्

उद्दल्यां चालनं यत्र सोक्ता चल्लावणी बुधैः ।

चेल्लावणीत्यपि दृश्यते ।

वेमः

थों तत्तकिटशब्देनोद्दली चालना स्फुटम् ।
वोल्लावणी समं शेपं सा मतेह चलावणी ॥

पार्श्वदेवः

चल्लिः—पाटवाद्यम्

स्कन्धस्य मणिबन्धस्य कोणस्यापि प्रचालनात् ।
सोल्लासं त्रिविधा चल्लिः कथिता वाद्यकोविदैः ॥

वेमः

चल्लिपाटः—पाटवाद्यम्

अर्धं वार्धद्वयं चल्ल्यास्तत्तद्वाद्यसमुद्भवैः ।
पाटैर्युक्तमयुक्तं वा चल्लिपाट इति स्मृतः ॥ वेमः

चपकः– हस्तः

कूर्परौ पार्श्वलग्नौ चेत्करे पुष्पपुटाभिधे ।
चपकाख्यो भवेद्धस्तः चषकेयं प्रयुज्यते ॥

विप्रदासः

चाक्षुष्यसात्त्विकः

चक्षुषोर्हस्तयोर्योगे यच्चेष्टाप्रतिपादनम् ।
चाक्षुष्यस्सात्त्विकस्सोयं धीरैश्च परिकीर्तितः ॥

शृङ्गारशेखरः

चाचपुटः—मार्गतालः

गुरुश्च लद्वयं वक्रताले चाचपुटाभिधे ऽ । । ऽ

सुधा

चाटुः—शृङ्गारचेष्टा

शर्मपूर्वा भवेदुक्तिस्सुप्रयुक्ता क्रियाथवा ।
तथा चेतोहरो भर्तुश्चाटुर्भावविदो विदुः ॥

यथा –

आपाणिग्रहणाद्देवि दासस्ते दशकन्धरः ।
अयं लाक्षारसेनाद्य पादौ पल्लवयिष्यति ॥

अत्र दशकन्धरेति नामपूर्वकोक्तिश्चाटुः ।

कुम्भा

चाणूरमल्लः—देशीतालः

चाणूरमल्लके ताले पौदोले ललदौ फ्लुतौ ।
ऽ̍ ऽ̍ ० । । ० ० ऽ̍ ऽ̍

चातुराननकपालगानम्

सप्तमं तु कपालेन चतुराननचञ्चुना ।
मालवश्रीतिरागः स्यात्तालः स्यात्पञ्चपाणिकः ॥

वृषपतिवाहनेति गानमुदाहृतम् ।

कुम्भः

चातुर्मास्यः—तानः

नि – लोपः षाडवः ।
ध प म ग रि स .

कुम्भः

चान्द्रम्—करणम्

यत्राङ्किता भवेच्चारी संयुक्तस्खलितौ यदि ।
हस्तौ मण्डलिनौ शीघ्रं रेचकौ चान्द्रसंज्ञके ॥

हरिपालः

चापघण्टारवः—मेलरागः ( नटभैरवीमेलजन्यः )

( आ ) स ग म प नि स .
( अव ) स नि स ध नि ध प म ग म प म रि ग रि स .

मञ्ज

**चापलम्**—चित्ताभिनयः

हृदि स्थाने तु मुकुलं मुखे हंसास्यहस्तकम् ।
आशाभावे दर्शयन्ति करटीकाविशारदाः ।
पुरोभागे कर्तरी तु चलितो द्वेपभावने ॥

विनायकः

रागद्वेषादिभिः चित्तचालनं चापलम्

**चामन्तिनी**—मेलरागः ( खरहरप्रियामेलजन्यः )

( आ ) स रि म प नि ध स .
( अव ) स नि ध प म रि ग रि स .

मञ्ज

**चारः**—गीतालङ्कारः ( ध्रुवभेदः )

चारोऽष्टादशवर्णाङ्घ्र्यर्थश्रोहर्षप्रदो ध्रुवः ।
फणिभाषायुतो वीररसे कन्दुकतालके ।
लघुद्वयं विरामान्तं ताले कन्दुकसंज्ञके ॥

संगीतसारः

—( अट्टतालभेदः )

उमातिलकताले तु द्रुतौ लघुगुरू स्मृतौ ।
चाराख्यस्त्वट्टतालः स्याद्विद्वद्भिस्तेन गीयते ॥

संगीतसारः

**चारि**

यो यस्मिन्नाप्रयोक्तव्यो नृत्ते युद्धे तथा जतौ ।

भरतः

**चारी**—पूर्वरङ्गाङ्गम्

शृङ्गारस्य प्रचरणाच्चारी संपरिकीर्तिता ।

भरतः

एकपादप्रचारो यः सा चारीत्यभिधीयते ।

शारदातनयः

**चारी**

ईङ् प्रत्यये तु चारी स्याच्चरेः करणभावयोः ।
ङ्कथिकारात्कतो ङीपि शब्दश्चारीति जायते ॥
या चाङ्घ्रिजङ्घाजानूरुकटीनां विविधा क्रिया ।
युगपद्रचिता सम्यक् सा चारीति निगद्यते ॥

वेमः

एप प्रोक्तस्तु विस्तीर्णव्यायाम इति कोविदैः ।
खण्डैस्त्रिभिर्यतश्चैतत्त्र्यश्रताले प्रयुज्यते ॥
चतुः खण्डं मण्डलं तु ताले स्याच्चतुरश्रके ।
अधिकैरपि वा खण्डैः मण्डलं तद्विदो विदुः ॥
तन्मण्डलं मिश्रताले प्रयोज्यं मानवेदिभिः ।

चार्यो नाटये च नृत्ते च गतौ युद्धनियुद्धयोः ।
यथाशोभं प्रयुज्यन्ते न हि चार्या विना क्वचित् ॥

वेमः

**चारीक्रमः**—चारीविधिः

हस्तः पादोऽथवा यत्र यं प्राधान्येनानुवर्तते ।
स भवेत्प्रथमं पश्चादन्यस्तदनुगो भवेत् ॥
तथान्यमुभयोर्यत्र तत्र स्यात्समकालता ।
पादे यतस्ततो हस्तो यत्र हस्तस्ततस्त्विकम् ॥
तस्मात्पादानुगान्याहुरङ्गोपाङ्गानि तद्विदः ।
नृत्ते चारी प्रधानत्वादेवं स्यादङ्गयोजना ।
नाटये तु हस्तमुख्यत्वात्तमेवाङ्गान्युपासते ॥

वेमः

अत्र पौर्वापर्यमेकक्षणस्पन्दनाभिप्रायेण द्रष्टव्यम् । न तु क्रियान्तव्यवधानेन ।

**चारीव्यायामः**

हस्तो वाभिनये गत्यां यश्च पादश्चिकीर्पितः ।
तच्छोभानुगुणा पूर्वा चारी तदुचितापरा ॥
एवमन्योन्यसंबद्धा चारी व्यायाम ईरितः ।
चार्यः परस्परं यस्मादायच्छन्ति विधानतः ॥
तस्मात्समष्टिचारीणां शोभातिशयसंभृता ।
व्यायामः स्यादस्य भेदाश्चत्वारः परिकीर्तिताः ॥
चारी च करणं खण्डो मण्डलं चेत्यनुक्रमात् ।
चारी भवेदेकपादनिष्ठा या गतिसन्ततिः ॥

वेमः

**चारुकेशी**—मेलकर्ता

स ० रि ० ग म ० प ध ० नि ० स .

मञ्ज

**चारुश्रवणिका**—पाटवाद्यम्

पाटस्वरैः प्रधानस्वैः दें – कारेण च संयुतम् ।
हस्तद्वयेन यद्वाद्यं युगपद्वा क्रमेण वा ॥
वाद्यते सा तु तथा चारुश्रवणिका बुधैः ।
द्विविधा सा पुनः प्रोक्ता शुद्धा चित्रेति सूरिभिः ।
शुद्धा शुद्धैर्भवेत्पाटैः चित्रा चित्रैर्निगद्यते ॥

वेमः

झेंकारसहितं हस्तपाटमूलाक्षरैर्युतम् ।
क्रमेण युगपद्वापि वाद्यं हस्तद्वयेन तु ॥
युक्ताष्टादशमात्राभिः त्र्यश्रभेदेन संयुता ।
चारुश्रवणिका सेयं प्राहुर्वाद्यविशारदाः ॥

पार्श्वदेवः

चालनिका—श्रुतिः

ऋषभस्य तृतीया श्रुतिः ।

जगदेकः

चालिः—देशीलास्याङ्गम्

तालसाम्यमनोहारि मृदुमध्यलयान्वितम् ।
त्र्यश्रताप्रचुरं नेत्रहारि विभ्रमनिर्भरम् ॥
यत्पादपाणिकटिभ्रूरुचालनं सचमत्कृति ।
नटधा यद्रचितं नृत्ते सा चालिरिति कथ्यते ॥

वेमः

चालिक्यनारायणः—देशीतालः

चालिक्यनारायणे तु त्रिवारलगपा मताः ।
। ऽऽ̇ । ऽऽ̇ । ऽऽ̇

गोपतिप्पः

चालितम्—नृत्तकरणम्

एकपादं स्थानकं स्यान्मस्तकं पार्श्वकम्पितम् ।
विलोकिता भवेद्दृष्टिः मृगशीर्षार्धचन्द्रकौ ।
सञ्चारिता भवेच्चारी करणे चालितामिधे ॥

नन्दी

सञ्चारिता गतिः ।

मुहुराकुञ्चितं पादमुत्क्षिप्यान्येन योजयेत् ।
तलेन चलता तिर्यग्यदा सञ्चारिता तदा ॥

चालिवडः—देशीलास्याङ्गम्

शैघ्र्यसांमुख्यवहुला सैव चालिवडो मतः ।

सेति चालिः ।

अशोकः

चालीनृत्तम्—देशीनृत्तम्

कोमलं सविलासं च मधुरं तालसाम्यतः ।
कठिनं नातितीव्रं न त्र्यश्रं च प्रचुरं तथा ॥
पादोरुकटिवाहूनां यौगपद्येन चालनम् ।
एकसंख्यां समारभ्य चतुष्षष्टिप्रपूर्तये ॥
आगत्य च पुरः पश्चाद्द्वात्रिंशैष्षोडशाष्टभिः ।
चतुर्भिर्द्वितयेनैकं विभज्य चरणानि च ।
कुर्यात्पुरस्तालयं चालीनृत्तमिदं विदुः ॥

आदिभरतम्

चापगतम्—मण्डलम्

सर्वाभिश्चापगतिभिः चारीभिर्मण्डलभ्रमात् ।
ज्ञेयं चापगतं तद्ज्ञैर्नियुद्धे तत्प्रयुज्यते ॥

वेमः

चापगतिः—चारी

चरणो दक्षिणस्त्वग्रे तालमात्रं प्रसारितः ।
तमेव तालद्वितयमात्रं पश्चात्प्रसार्य च ॥
ततः पादौ तु संश्लेष्य किञ्चिदुत्प्लुतिपूर्वकम् ।
उपसर्पापसर्पौ तु क्रियेतां क्रमशो यदि ।
चापस्येव गतिर्यस्या सैपा चापगतिर्भवेत् ॥

वेमः

चिक्कदेवराय:

भरतसारसङ्ग्रहकर्ता । महीसुराधीशः ।

कालः १७०० ।

चित्तद्युतिः—मेलरागः ( मेचकल्याणीमेलजन्यः )

( आ ) स रि म प ध नि स .
( अव ) स नि ध प म ग रि स .

मञ्ज

चित्तविलासितम्—अष्टाक्षरछन्दः

पञ्चमं सप्तमं चान्त्यं गुरुपादेऽष्टके तथा ।
छन्दोज्ञैर्ज्ञेयमेतत्तु वृत्तं चित्तविलासितम् ॥

नजगगाः । उदा – वरतनुपूर्णचन्द्रम् ।

भरतः

चित्तस्खलितम्—शृङ्गारचेष्टा

अन्यासक्तिवशाच्चेतो मूढत्वाद्यान्यथाकृतिः ।
चित्तस्खलितमित्याहुर्मुनयो भरतादयः ॥

कुम्भः

चित्तानन्दभरतम्

द्रमिडभाषाग्रन्थः । प्रतापरुद्रज्यायसेनापत्यादीनां नामान्यत्र दृश्यन्ते । सूडादिलक्षणं सम्यगुक्तम् । १६०० काले रचितं स्यादिति ज्ञायते । अस्य कर्ता न ज्ञायते । 'सेनावलय इति कस्यचिद्ग्रन्थकारस्य नाम अस्मिन् ग्रन्थ उपलभ्यते ।

चित्रम्—करणम्

पादेन भ्रमरीं कुर्वन् भ्रामयेच्चापि मध्यमम् ।
हस्तौ च भ्रामितौ स्यातां करणं चित्रसंज्ञकम् ॥

देवणः

—पादमणिः

पादं कुञ्चितमुद्यम्य स्वस्तिकाकारतो भुवि ।
विन्यस्य चाङ्गुलीपृष्ठैस्तेनान्तर्भ्रमरीमपि ।
कृत्वा चेदलगं कुर्यात्तच्चित्रमिति कथ्यते ॥

वेमः

—देशीनृत्तम् ( उडुपाङ्गम् )

चित्रं तत्स्याद्वर्धमानस्थानकेन गतिस्तथा ।
तिर्यङ्मुखा त्रिपताको मल्लिकामोदतालतः ॥
दक्षिणे च तथा वामे मकरौ हृदि चञ्चला ।
पूर्वमुक्ता गतिर्भ्रान्ते तिरिपभ्रमरी भवेत् ।
तत्कराणं चमत्काराच्चित्रमित्यभिधीयते ॥

वेदः

तिर्यङ्मुखा – देशीचारी । वर्धमानं – देशीस्थानकम् ।

—सन्ध्यन्तरम्

आलेख्याभिमतदर्शनोपायः । यथा — नागानन्दे जीमूतवाहनस्य चित्रलेखनम् ।

सागरः

चित्रः—देशीतालः

चित्रेऽनुः स्यात् (अनुद्रुत एक एव)

श्रीकण्ठः

—तालप्राणः

मार्गशब्दे द्रष्टव्यम् ।

—देशीतालः

मयौ सश्च चित्रताले प्रकीर्तिताः ।
१५ मात्राः ।

तालप्रस्तारः

—भङ्गतालः

लद्वयं गद्वयं लत्रयं गुरुः । ॥ऽऽ॥।ऽ

नान्यः

—वाद्यालङ्कारः

रिमितैर्जःकृतश्चित्रः नानाकरणभूषितः ।
प्रसन्नकरणश्चैव त्रिपाणिलयसंभवः ॥

भरतः

चित्रकरणम्—प्रबन्धः

स्वराश्च हस्तपाटाश्चाद्यन्ते च मुरजाक्षरैः ।
पदैर्धातुद्वये यत्र तच्चित्रकरणं मतम् ॥

जगन्नाथमल्लः

करणं तु पदाद्यंते यत्पाणिमुरजाक्षरैः ।
पाटैश्च स्वरसंबन्धस्तच्चित्रकरणं मतम् ॥

पण्डितमण्डली

चित्रकुण्डली—देशीनृत्तम्

आविरस्तु पुरस्तान्मे वस्तु स्तम्बेरमाननम् ।
उद्गायन्त्यलिनो वेदान्यद्गण्डामोदमोदिनः ॥

आम्रेडितं पुरा शास्त्रेष्वाचार्यैर्दत्तिलादिभिः ।
तच्चित्रकुण्डलीनृत्तमधुना वक्तुमुत्सहे ॥
अपत्यत्वं पुरा प्राप्ता हिमाद्रेर्भाग्यसंपदा ।
भवानी शिवपत्नीत्वं प्राप्तुं चापरदुर्लभम् ॥
तमीशमन्तर्ध्यायन्ती तत्त्वमूर्तिं सदाशिवम् ।
उत्तुङ्गे हिमवच्छृङ्गे तपसे प्रापसादरम् ॥
........................................ ।
तत्रानेकेषु कालेषु चरन्ती दुष्करं तपः ॥
ततो लास्यं विधास्यामि ह्युत्सृज्य च महत्तपः ।
नानारत्नमहस्तोमदर्शितेन्द्रशरासनम् ॥
अनर्घरत्नसोपानं स्फाटिकं मण्डपं गता ।
मरुद्वेगकणद्वेणुस्वनोपाङ्गश्रुतिश्रिता ॥
पुष्पामोदभ्रमद्भृङ्गमाला गीतिमनोहरा ।
मदनागमधौरेयमदकोकिलकाहला ॥
विधिवल्लास्यमाधत्त विश्वनाथदिदृक्षया ।
आलोक्य लास्यमानन्दमग्नस्स च महेश्वरः ॥
पितामहमुखा........ ....... ।
आलोकयन्ति लास्यं यस्तस्य भर्गस्य संसदि ॥
सन्निधास्याम्यहं तत्र सहितश्शैलकन्यया ।
देवीं कुण्डलिनीं प्राहुः श्रुतयः कुण्डलीति तत् ॥
अस्य लास्यस्य भविता नाम कामप्रदं नृणाम् ।
शृङ्गारो रस एवास्य कैशिकीवृत्तिरुत्तमा ॥
अङ्गानां च चतुष्षष्टिरस्य भावरसोत्कटा ।
अथास्मिन् समये देवि यादृक् प्रियदिदृक्षया ॥
तादृगेव सरस्वत्यै रसवृत्त्यङ्गरञ्जितम् ।
सौदामिन्यै ततः प्रादात्साथ पार्थाय धीमते ॥
पार्थो विराटतनयामुत्तरां तामशिक्षयत् ।
शिक्षयामास कृष्णोऽपि तदालोक्य स्वयोषितः ॥
मुखचालिस्ततो रूपं शब्दसूडक्रमस्ततः ।
गीतसूडक्रमः पिण्डीबन्धप्रहरणं भवेत् ॥
इत्याह पञ्चधा चित्रकुण्डल्याः पद्धतीर्हरः ।
........................................ ॥
विविधाभिः पताकाभिर्विराजितवियत्तलम् ।
सप्त···कदलीकाण्डमण्डितं रङ्गमण्डपम् ॥
सिंहासने सभानाथः सर्वाभरणभूषितः ।
........................................ ॥

उभयोः पार्श्वयोश्चैव द्वात्रिंशत् षोडशाथवा ।
अष्टौ वा चतुरो वापि ताल्या मार्दङ्गिका अपि ॥

द्वाभ्यां चतुर्भिर्वा……स्कन्धायुजधरैरपि ।
ततः कार्टिकं स्थाप्य द्वयं वाप्येकमेव वा ॥

चत्वारो वाप्युभौ वापि स्थाप्याः काहलवादिनः ।
द्वावेव शङ्खिनौ प्रोक्तौ चत्वारः कांस्यतालगाः ॥

सानुगो वांशिकस्त्वेको बहवो गायकाः स्मृताः ।
संभूय सकलातोद्यान्येतान्यभिसमं ततः ॥

समनादं वादयेयुरेकताल्या तदग्रतः ।
दशहस्तान्तरे तस्या धार्या यवनिका पुरः ॥

वादनानन्तरं तेषामुपाङ्गश्रुतिसंयुताः ।
गायकाषड्गुणविदः चिन्तयित्वा शिवं हरिम् ॥

मध्यमादिं समालप्य श्रुतिमात्रेण पुण्यदाम् ।
ततश्चाभिमतेष्वेव रागेषु विविधेषु च ॥

पञ्चस्वरैः पञ्चवर्गैर्गमकैस्तिरुपाद्यकैः ।
ठायक्रमैः षण्णवतिभेदत्रिस्थानकारकैः ॥

स्थाय्यादिभिरलङ्कारैश्चतुर्वर्णसमुद्भवैः ।
चतुर्विधान्स्वरालापान् कृत्वा रसमनोहरान् ॥

अथामृतगुणोदारं गायेरन् गीतमुत्तमम् ।
एकरूपाक्षरमितैर्विरामैर्बहुभिर्मुहुः ॥

अत्यन्तरुचिरैस्तालैश्छन्दोभिर्व्यञ्जनोज्वलैः ।
करपाटद्वयैश्शब्दालापनं यतिसंज्ञकम् ॥

उद्घाटयेयुस्तालज्ञाः सोपाङ्गश्रुतिभिस्ततः ।
कुलदेशवयोवर्णैरुत्तमाधममध्यमाः ॥

गतिशिक्षावती सम्यक् बहुप्रज्ञा जितश्रमा ।
मण्डलेषु स्थानकेषु कुशला करणेष्वपि ॥

ज्ञातरागोप्यरोगा च सदा मधुरभाषिणी ।
चारी पाठयेषु निपुणा सर्वभाषाविचक्षणा ॥

षट्त्रिंशद्दृष्टिभेदज्ञा तालभेदविशारदा ।
स्वभ्रूविवलनाक्षिप्तकामकार्मुकविभ्रमा ॥

चतुष्षष्ट्यङ्गसंयुक्ता साहित्यरससम्मदा ।
निर्गच्छेन्नर्तकी चित्रवर्णाद्यवनिकान्तरात् ॥

मेलयेन्मधुरश्रुत्या रागान्सङ्कीर्णयन्स्वरान् ।
गणाधिपं गिरां देवीं पार्वतीं परमेश्वरम् ॥

स्तुत्वाऽभिवादयेत्सर्वमातोद्यं चात्मशिक्षकम् ।
सभापतिं सभां श्लोकैराशीर्वादपुरस्सरैः ॥

तलपुष्पपुटारब्धे पूर्वं पुष्पपुटेन तु ।
हस्तेनाप्यर्चयेत्पुष्पैः प्रथमं रङ्गदेवताम् ॥

पूर्वं गानं ततो वाद्यं नृत्तं पश्चात्प्रयोजयेत् ।
तत्तद्भिः प्रमुखैः शब्दैरथतालविधिं विना ॥

क्रियया नर्तयेद्देवीं करवर्तनयोगया ।
कृत्वा समपदं तिष्ठेल्लताकरविराजिता ॥

झङ्कृत्या शब्दयत्या च स्थानकं वर्धमानकम् ।
विधाय स्थाने वशाखे यदि वाद्येन संस्थिता ॥

त्र्यश्रपक्षस्थितौ पादौ तालमात्रान्तराश्रितौ ।
कुर्वीत मण्डलीस्थाने सत्वोदग्रतरं वपुः ॥

रेखा च सौष्ठवं लडित्रकलीडालकोमलैः ।
गुणैरावर्त्य त्रिचतुर्व्यावृत्तिक्रियया समे ॥

अन्यदूर्ध्वमुखं हंसमुखं वाप्यलपल्लवम् ।
आहत्य सव्यपादेन कुञ्चितेनोर्ध्वजानुना ॥

आलीढप्रत्यालीढाभ्यां विलम्बप्रक्रियां नयेत् ।
आयताभ्यवहित्थाभ्यां तत्तदुक्तकरौ नयेत् ॥

कुर्यादुक्तकराभ्यां च मोटितं विनिवर्तितम् ।
स्थित्वैकपादस्थाने च वहिरन्तर्विवर्तयेत् ॥

प्रसृत्य पार्श्वयोरूर्ध्वाधोमुखौ तु पताककौ ।
करौ स्पृष्टामिमिव चाक्षिप्यान्ते मृगशीर्षकम् ॥

नन्द्यावर्ते ततः पश्चाच्चतुरास्पन्दितौ नयेत् ।
अवतार्यावतार्याधश्चोर्ध्वं च त्रिपताककम् ॥

अश्वक्रान्तस्वस्तिकाभ्यां स्थानकाभ्यां प्रयोजयेत् ।
अर्धेन्दुत्रिपताकौ च त्रिपताकार्धचन्द्रकौ ॥

एकपार्श्वगते कुर्यादेकजानुनयेदधः ।
पृष्ठोत्थानतले त्राक्षे गारुडे च मदालसे ॥

मुक्तजानौ जानुगते संहते शैवसंज्ञके ।
कूर्मासने नागबन्धे पार्ष्णिपार्श्वगतेऽपि च ॥

वृषासने पार्श्वविद्धे ततश्चैवोत्कटासने ।
खण्डसूच्यां वैष्णवे च देशीस्थाने च वैष्णवे ॥

अरालकर्तरीवक्त्रावलपद्मेन कर्तरीम् ।
शिखरेण च मुष्ट्यार्धचन्द्रं च मृगशीर्षकम् ॥

मृगशीर्षालपद्मौ च कर्णान्तत्रिपताककौ ।
पश्चात्प्रसृतचाञ्चल्यसर्पेनाप्यलपल्लवम् ॥

अधोमुखोर्ध्वप्रोड्डीनशुकतुण्डमृगशीर्षकम् ।
चतुरत्रिपताकौ च कटकावपवेष्टितौ ।
पार्श्वप्रसृतभृङ्गेन स्कन्धस्थमलपल्लवम् ॥

हंसास्यहंसपक्षौ च सन्दंशःशिखरौ तदा ।
अलिकस्थले च नेत्रे च सूचिहस्तेन कर्तरीम् ॥
स्वस्तिकं कटकावर्त्तं वैष्णवं च तथाक्रमम् ।
उचितक्षेत्रभेदेषु तत्तत्काले प्रयोजयेत् ॥
कर्तरी स्वस्तिकं नागवन्धं तिलकमेव च ।
वरदाभयसंज्ञं च पताकस्वस्तिकं तथा ॥
अन्यदन्यत्करद्वन्द्वमसंयुतकनामकम् ।
तत्तत्त्याज्यग्राह्यकरक्रियाभिस्तनुभिः स्फुटम् ॥
प्रायोगिकान् नृत्तहस्तान्क्रमशः क्रमशश्चरेत् ।
गत्या सर्वाङ्गशोभिन्या स्थित्वा स्थित्वा मुहुर्मुहुः ॥
चतुर्दिक्षु तु विक्षेपविवृत्तसमये तदा ।
लीलाविलासश्रृङ्गाररसपूर्णविघूर्णनैः ॥
तत्तच्छास्त्रप्रकारेण पाणिं प्रकटयेत्परम् ।
लम्बमध्यद्रुतैर्मानैर्वलनैः कोमलैरपि ॥
एवं विधैर्गुम्भनैस्तु नृत्यन्ती नर्तकी ततः ।
मौलिरेचितकं चाथ मणिबन्धगतागतम् ॥
निर्वर्त्य सा तालल्यैः सञ्चैश्चैव महाक्रमैः ।
पश्चादाचार्यविधिवत्पञ्चपैरेव गुम्भनैः ॥
अवसाने समुत्प्लुत्य मुखचालं प्रकल्पयेत् ।
वैचित्र्यगुम्फनामेनामादिमध्यावसानगाम् ॥
समारोहावरोहेषु रागालापेषु योज्य च ।
वंशगानं तथोपाङ्गगानं सा श्रृण्वती मुहुः ॥
समोन्नता नतैरङ्गैर्गायन्तीव समाश्रयेत् ।
मुग्धप्रबोधाय चैनामित्यूचुर्भरतादयः ॥
आर्जवं करणं तालमानं पश्चात्क्रियाह्वयः ।
ध्रुवाटाख्यः पादमणिः करयोर्वर्तनास्ततः ॥
चालकाश्चेति नवधा रूपांस्तु परिनर्तयेत् ।
मुखचाल्यां स्थानकानि चारीश्च विविधान्करान् ॥
अन्यदन्यत्समुद्धृत्य समदृष्टिविलोकनैः ।
निश्चलाङ्गैश्चित्रमार्गैः स्थित्वा स्थित्वा मुहुर्मुहुः ॥
ताले नृत्तपरावृत्तिसदृशं परिवर्त्य च ।
विलम्बैरङ्गविक्षेपैः भावैरार्जवमाचरेत् ॥
अन्तराक्षिप्तकाक्षिप्तगात्रावर्ताद्बहिः करम् ।
पादचङ्क्रमणेनात्तचालकं चान्तिमे प्लुतम् ॥
रागालप्तिसमायुक्तं नर्तनं वर्धयेत्सुधीः ।
एकस्थितौ चतुर्भिर्वा पञ्चभिः परिवृत्तिभिः ॥
विभज्य भागद्वितयं प्रत्येकं भ्रामयेत्करान् ।
आर्जवप्रोक्तनियमस्थानकेषु करेषु च ॥

प्रयोगवशगैर्हस्तैः स्थानैः स्थानैर्यथोचितम् ।
मध्ये मध्ये भ्रमर्यापि परावृत्तिप्रसारिभिः ॥
तत्क्षणे तत्क्षणे चित्रमार्गैः स्थित्वा मुहुर्मुहुः ।
पार्श्वावलोकनैर्नृत्येदादिमध्यावसानकम् ॥
तूर्णं कूर्मवदङ्गानि संक्षिप्त्वा......भ्रमेत् ।
पुरोवाङ्मुखपूर्वाङ्गप्रसृत्याञ्जलिकच्छकम् ॥
पश्चात्प्रसारितं पादं तदा गात्रं विवर्त्य च ।
पार्श्वात्प्रकृतिवक्षस्स्थहस्तमुत्तानपूर्वकम् ॥
पुरः प्रसारितपदं तदाङ्गं परिवर्त्य च ।
कर्कटभ्रमणं कुर्यात्कर्कटप्रसृतेन च ॥
कुञ्चितोर्ध्वपदाङ्गेन नतोन्नतयुतेन च ।
अधस्तलत्वमुत्तानतलत्वं त्रिपताककम् ॥
द्विः कुर्यादथ पार्श्वेऽन्ये विवृत्तोरुकटीतटम् ।
प्रसार्य पादं गृह्णीयादर्धरेचितकं करम् ॥
त्रैविक्रमं रेचितं स्यात्पार्श्वेऽधो वदने सति ।
पादः स्वस्तिकमास्थाय मध्यस्य परिवर्तनात् ॥
कर्तरी स्वस्तिकं कुर्याद्धुते मूर्ध्नि प्रयोगतः ।
गारुडे मध्यवलनाद्वैष्णवं करमुन्नयेत् ॥
दिशानया बहुविधाद्विद्यात्करणरूपकम् ।
स्थित्वा स्थित्वा चित्रकरेऽप्यसकृद्गुम्भनानि च ॥
तदा तदा तालमात्रलयसाम्यवशान्नयेत् ।
येन केनापि तालेन तालमानं प्रकल्पयेत् ॥
गत्वा श्रृङ्खलगत्यैव मण्डलस्थानमानतः ।
मुहुर्मुहुः स्फुरद्विद्युद्वल्लीमिव घनान्तरात् ॥
वामदक्षिणभागाभ्यां गुम्फनानि विभज्य च ।
तदा चित्ततमे मार्गे भ्रमयेत्तत्क्रियादिकम् ॥
विविधैर्भ्रमरीभेदैरञ्चिताद्युत्प्लुतिक्रमैः ।
पुरुषस्थानकैः षड्भिरासनस्थानकैरपि ॥
देशीस्थानैरपि मुहुः क्रमादक्रमतोऽपि वा ।
प्रणर्त्य च कलासेषु परावृत्तिं प्रकल्पयेत् ॥
ध्रुवाटः स इति ख्यातः शास्त्रज्ञैः कोहलादिभिः ।
उत्प्लुत्य गत्या स्थित्वा च भ्रमरीभिः पदे पदे ॥
अङ्गुलीपृष्ठभागेन सविलासं सविभ्रमम् ।
ऊरुद्वितयपूर्वं च कुर्यात्पादमणिक्रमम् ॥
सूचीलये संहते सा दार्दुरे गारुडे तथा ।
नागबन्धस्वस्तिकयोरालीढे चोत्कटासने ॥

स्थित्वा स्थित्वा चतुर्दिक्षु विवर्तसमये क्रमात् ।
नागबन्धं च तिलकं वैष्णवं वरदाभयम् ॥

चतुरश्रं च ललितं रेचितं चार्धरेचितम् ।
ऊर्ध्वमण्डलिसंज्ञं च स्वस्तिकं करिहस्तकम् ॥

पताकस्वस्तिकं वल्लीं दण्डपक्षं............।
हस्तौ प्रयोगवशगौ विवृत्याथ करौ पुनः ॥

उत्तारितावुत्तलस्थावाविद्धावपविद्धकौ ।
कृत्वा कटकवामस्थदक्षिणेन करेण च ॥

अवलम्बविवृत्या च परिवाहितकर्मणा ।
शिरसा नतगात्रेण व्यावृत्य च मुहुर्मुहुः ॥

बहिरन्तस्तथाङ्गान्तरेण पश्चात्करौ पुनः ।
संयोज्याभ्यन्तरं बाह्यं भ्रान्त्वा मण्डलकर्मसु ॥

मध्यावर्तं चम्पकस्रग्दामावर्तमिवाचरेत् ।
यत्र तं नवर्णि प्राहुराचार्याः कोहलादयः ॥

कृत्वा पुरः पार्श्वतोऽन्तर्बहिर्मकरवर्तनाम् ।
गत्या स्थित्या परावृत्त्योत्प्लुत्यादिभ्रमरैस्सह ॥

पद्मवर्तनिकां कुर्यात् यथारुचिरता ततः ।
अन्याभिर्वर्तनाभिस्तु वर्तनारूपकं भवेत् ॥

मणिबन्धावधिभ्राम्यत्पद्मकोशप्रकाशितैः ।
बाणासुरकरस्तोमैः निर्गतैरिव चालकैः ॥

विश्लिष्टवर्तितांघ्रिश्च नवरत्नमुखान्तिमैः ।
उत्प्लुत्याङ्घ्रिभ्रमणीवृत्त्या स्थित्वा गत्यानुगुण्यतः ॥

उत्तानेन परावृत्ता तथा तरहरेण च ।
वृश्चिकेनाथोमुखेन त्रिविक्रमविधौ तथा ॥

खण्डसूचिकनाम्ना च मण्डलेन यथारुचि ।
यत्करोति तदादिष्टं तज्ज्ञैश्चालकरूपकम् ॥

इति नवरूपकनृत्तानि ।

प्रत्येकं नवरूपाणां कलासावसरेष्वपि ।
कृत्वा भ्रमरिकां पश्चात्तत्तद्रूपैः कलासयेत् ॥

संहते चरणं चैकं कुञ्चिरवोद्धृत्य तत्क्षणे ।
वक्षस्स्थं कटकं कृत्वा भ्रमन्ती हंसपक्षकौ ॥

लुठन्त्यन्तर्बहिर्जङ्घावपुषा सरलीकृता ।
अपराङ्गपरावृत्त्या पार्श्वतो मुखकर्मणा ॥

पुरः पराङ्मुखत्वेन ह्युत्तानेन च वक्षसा ।
कुर्यात्पर्यायतः पादलुठनं गतिभिः क्रमात् ॥

कृत्वा कृत्वा खण्डसूचिस्थानकं च मुहुर्मुहुः ।
मध्ये मध्ये चक्रमणैः भ्रमरीभिर्यथारुचि ॥

स्थानके नृत्तहस्तैश्च कुर्यादन्वर्थरूपकम् ।
देशान्तरेषु बहुधा रूपकाणि भवन्त्यपि ॥

मुग्धप्रबोधाय मयायैतावत्परिकीर्तितम् ।
रूपकानन्तरं कुर्यात्सकलातोद्यवादनम् ॥

नवान्यबद्धं नवभिस्तालैर्यत्र प्रणर्त्यते ।
तमेव शब्दचूडादिं कथयन्ति मनीषिणः ॥

आदौ ध्रुवस्ततो मठधः प्रतिमण्ठं च रूपकम् ।
झंपा च त्रिपुटाप्यड्डताले रम्यैकतालिका ॥

इति ताला नव प्रोक्तास्तेषां लक्षणमुच्यते ।
विरामं लघुना रम्या ह्येकताले द्रुतं स्मृतम् ॥

ततो वाद्यप्रबन्धानां लक्षणं कथ्यतेऽधुना ।
प्रत्येकं तच्चतुर्भागमुद्ग्राहः प्रथमं स्मृतम् ॥

मेलापको द्वितीयः स्यात्तृतीयो ध्रुव इत्यपि ।
चतुर्थभागश्चाभोगो ध्रुवाभोगान्तरे पुनः ॥

अवखण्डोऽन्तरः प्रोक्तः तेषां देश्यभिधान्यधा ।
उद्ग्राहभागो लहरी मेलापः पदमीरितम् ॥

ध्रुवभागोऽन्तरः ख्यातः सोऽन्तरः स्यादवान्तरः ।
आभोगभागो मुक्तायी इति देशान्तरेरिता ॥

स्कन्धावजेन ह्युद्ग्राहो मेलापो मर्दलेन च ।
भुजस्कन्धावजेनाथ भुजेन च विमिश्रितः ॥

अन्तरः करटीशङ्खकाहलध्वनिसंयुतः ।
आभोगो मद्दलोपेतो नृत्तमेषामथोच्यते ॥

उद्ग्राहश्च द्विवारं स्यान्मेलापस्त्वेकवारकम् ।
ध्रुवभागे समाख्यातं द्विवारं नर्तनक्रमम् ॥

अन्तरे नर्तयेदर्धं एकांशेषार्धकं परा ।
आभोगस्त्वेकवारं स्यादन्त्ये शब्दस्तथापरे ॥

नर्तने शब्दसूडादौ गीतसूडादिरुच्यते ।
पूर्वोक्तनवतालैर्यो नवगीतैश्च संयुतः ॥

गीतं सूडादिमाचख्युस्तमेव भरतादयः ।
नामभिर्नवतालानां गीतानि कथितानि च ॥

तत्त्रिधा गीतसूडादिरुत्तमो मध्यमोऽधमः ।
गीतान्यप्युत्तमादीनां नव सप्तकपञ्चभिः ॥

नव गीतानि यत्राभिः नवतालैरनुक्रमात् ।
कथ्यते स भवेत्पूर्वं सूडादिं मध्यमं विदुः ॥

एतेषु सप्तगीतेषु झम्पां च त्रिपुटामृते ।
पराणि पञ्चगीतानि सूडादिरधमः स्मृता ॥

मट्टादीनां च गीतानां यथावन्नृत्तमाचरेत् ।
उद्ग्राहध्रुवकाभोगाः प्रत्येकं च मुहुर्मुहुः ॥

ध्रुवे कलासः कर्तव्यो वैचित्रीं नृत्तमुच्यते ।
मण्डलस्थानके स्थित्वा विलासरसमन्थरम् ॥

सहस्तदृष्टिविक्षेपचातुर्यं नृत्तमाचरेत् ।
एकं समं निधायाङ्घ्रिं निकुञ्च्योत्सारणात्परम् ॥

अङ्गं सलीलमावर्त्य नर्तकी नर्तयेन्मुहुः ।
क्रियाभिरार्जवैस्तत्तद्वर्णाभिश्चालकैरपि ॥

ध्रुवाटैर्वर्तनाभिश्च ततस्तरहरैरपि ।
सविलासमनायासं सरसं भावपोषकम् ॥

अन्यूनाधिकयोगेन प्रत्येकं नृत्तमानयेत् ।
गेयमप्यक्षरं तालं सन्धाय च पुनः पुनः ॥

मध्ये मध्येऽपि गेयस्य शीघ्रगुम्भनमाचरेत् ।
पादे पादमणिं हस्ते चालकं मुहुराश्रयेत् ॥

वर्तनां वर्तयेत्पाणौ पादं तरहरं तथा ।
चरणौ नर्तयेत्पादमणिं हस्तस्तु वर्तनाम् ॥

चालकं पाणिना कुर्यात्पदा तरहरं ततः ।
वाक्यानि गीतखण्डं च शब्दखण्डमनन्तरम् ॥

स्वरमर्थं स्वरस्यापि कणरे (?) नर्तनं ततः ।
लयचालकपादं च सन्धायालक्ष्यसन्धिकम् ॥

अस्मात्क्रमादक्रमतो यद्वा नृत्येत्प्रगल्भतः ।
ततः षण्मार्गभेदेन ध्यात्वा मात्रां प्रणर्तयेत् ॥

पादं चित्रतरेणापि मुखं चित्रतमेन च ।
अतिचित्रतमेनापि हस्तं युगपदाचरेत् ॥

आनुकूल्येन बहुशः कालक्षेपणहेतवे ।
स्वर्थवरादियुक्तासु नाटकीयकथासु यत् ॥

कन्दुकाक्षकुबेराक्षिमणिसम्पुटका अपि ।
अभिनेतव्यतां यातेष्वेषु गीतेषु तां नयेत् ॥

स्थित्या भ्रमर्या गत्या च नयेत्कन्दुकनर्तनम् ।
मन्द्रे पञ्चसु भेदेषु विलम्बो मध्यमो लयः ॥

नागबन्धासने स्थित्वा नर्तक्या वाभिमुख्यतः ।
विलम्बितेनाड्डुताललनाम्ना गीतेन संयुते ॥

गृहीयाच्च कुबेराक्षौ तौ विक्षिप्य सविभ्रमम् ।
मृगशीर्षेण सारीस्तु कर्तरीमुखपाणिना ॥

उत्क्षिप्य देहावर्तेन स्थापयेतां परस्परम् ।
नर्तयेतां कुबेराक्षिं पूर्वोक्तैर्नवगीतकैः ॥

त्रिपुटागीतमाश्रित्य गत्या स्थित्या सहोन्मुखम् ।
किञ्चिच्चञ्चलनेत्राभ्यां युक्ता संपुटकां नयेत् ॥

कथासु नाटकीयासु प्रसक्तेष्वायुधादिषु ।
आनुकूल्यात्प्रयोगाणां नवगीतैश्च नर्तयेत् ॥

अड्डुतालैकतालाभ्यां गीतैरन्यैश्च वा पुनः ।
पादपाटादिभिर्भेदैः पेरणीनृत्तमाचरेत् ॥

नृत्तेद्वसन्तगीतेन वसन्तनटनोत्सुकम् ।
इक्षुचापः पुष्पशरः कामः श्यामलविग्रहः ॥

वामपार्श्वोपगतया रत्या पर्यङ्किका तले ।
वैष्णवस्थानके स्थित्वा सम्यगाविर्भवेत्ततः ॥

वसन्तरागप्रभवैः अङ्गमावर्त्य तेनकैः ।
समुद्यत्तकलीदाललिकोमलनिर्भरः ॥

अवरुह्य कलासेन सद्यः पर्यङ्किकातलात् ।
उद्ग्रावोद्धारशब्देन नृत्येतामाभिमुख्यतः ॥

पञ्चभिस्तूर्णशृङ्गैश्च पुष्पैः कन्दुकदण्डकैः ।
अङ्गैर्मनोहरं नृत्तलीलाभावरसान्वितम् ॥

समाचरेतां पात्रे तु स्थित्वा द्वे द्वे समे परे ।
करौ निधाय कर्पूरचूर्णं पन्नगशीर्षके ॥

व्यावृत्यादाय विक्षिप्य शिखरेण कलासयेत् ।
पताकया शृङ्गपुष्पे निवेश्य दक्षवामयोः ॥

दक्षिणेनार्धचन्द्रेण समालम्ब्य स्रगञ्चलम् ।
वामः करो विधातव्यो लताख्यो माल्यनर्तने ॥

पुष्पकन्दुकमादाय दक्षिणे पद्मकोशके ।
वामो मृगशिरः कार्यः पुष्पकन्दुकनर्तने ॥

अङ्गुष्ठसदृशस्थौल्यं विंशत्यङ्गुलमात्रकम् ।
सरलं ग्रन्थिरहितं वर्णपञ्चकभूपितम् ॥

हेमपट्टनिबद्धाग्रं हैमं दण्डद्वयं परम् ।
द्वाभ्यां करसरोजाभ्यां दधानास्सावधानतः ॥

प्रारभ्य पात्रयुगलात्पात्रे द्वे द्वे विवर्धयेत् ।
भवेयुरष्टयुग्मानि यावद्यद्वा यथारुचि ॥

रध्यां गीतालम्बनं यत्समाश्रित्य समास्थिताः ।
मण्डले गारुडे नागबन्धे चैवोत्कटासने ॥

आर्यमिकेप्यथालीढप्रत्यालीढकयोरपि ।
विचित्रेषु स्थानकेषु स्थित्वा स्थित्वा मुहुर्मुहुः ॥

अन्योन्यमाभिमुख्येन परावृत्तिक्रमेण च ।
उत्तानेन समुत्प्लुत्या भ्रमर्याऽधोमुखेन च ॥

खण्डसूचिकनाम्ना मण्डलावर्तभ्रमेण च ।
तालैर्वाद्यैर्लयैरङ्गवलनैर्वर्तनैस्तथा ॥

दण्डरासकमानेयं मिथो दण्डाभिताडनम् ।
पवमानचलच्चारुपद्मपत्राम्बुबिन्दुवत् ॥

कम्पस्वभावतश्चञ्चत्प्रदीपकलिकाग्रवत् ।
पाणिपल्लवसञ्चारिपारदद्रवबिन्दुवत् ॥

कुर्यादङ्कुरितानङ्गनर्तनं शोककर्तनम् ।
गीताक्षराणि रम्याणि विभज्याङ्गैर्विभावतः ॥

उद्गिरन्तीव ललितैर्विक्षेपैः कोमलैर्लयैः ।
चाक्षुष्मत्यमिवाङ्गेषु गेयस्य दधती भजेत् ॥

विजृम्भितेषु परितः सर्वातोद्यस्वरेष्वथ ।
उद्ग्राहमपि मेलापं प्रत्येकं परिनृत्य च ॥

नागाश्लेषाञ्जवन्धाद्यैः पिण्डीबन्धैर्मुहुर्मुहुः ।
पल्लवं पदमाचर्य पुष्पाञ्जलिविसर्जनम् ॥

कुर्वीरन्सर्वपात्राणि रङ्गदैवस्य तुष्टये ।
एतत्तु कुण्डलीनृत्तं पापकोटिविनाशनम् ।
प्रेक्षकाणां प्रयोक्तॄणामानन्दसुखकारणम् ॥

इति कुण्डलिनर्तनं नृपा ये
भुवि पश्यन्त्यखिलक्रियाभिरम्यम् ।
सुचिरं त इहोपलभ्य लक्ष्मीं
समयेऽन्त्ये विभजन्ति शम्भुपादम् ॥

कुण्डलीनर्तनम्

चित्रचन्द्रिका—मेलरागः ( लताङ्गीमेलजन्यः )

( आ ) स ग रि म प नि ध स .
( अव ) स नि ध म ग रि स .

मद

चित्रतरः—तालप्राणः

मार्गशब्दे द्रष्टव्यम् ।

चित्रपदी—देशीतालः

ततश्चित्रपदी भवेत् ।

गुरुद्वन्द्वं लघुद्वन्द्वं द्रुतद्वन्द्वं प्लुतः क्रमात् ।
ऽऽ।।००ऽ̆

लक्ष्मणः

चित्रपादः—देशीतालः

चित्रपादे विधोर्द्वन्द्वं लघुद्वन्द्वं द्रुतद्वयम् । ‿‿।।००

लक्ष्मणः

चित्रपुटः—देशीतालः

लौ द्रौ चित्रपुटे लपुः । ।।००।ऽ̆

मदनः

चित्रमणिः—मेलरागः ( कोकिलप्रियमेलजन्यः )

( आ ) स रि म स ध नि स .
( अव ) स नि ध प म ग रि स .

मञ्ज

चित्रमण्ठः—तालः

द्रुतो गुरुश्चित्रमण्ठः । ०ऽ

वेदः

—देशीतालः

द्रुतो गुरुश्चित्रमण्ठः कथितो भरतादिभिः । ०ऽ

दामोदरः

चित्रमन्दरः—मेलरागः ( मायामालवगौलमेलजन्यः )

( आ ) स रि ग म नि स .
( अव ) स नि ध प म ग रि स .

मञ्ज

चित्रमालिका—मेलरागः ( गौरीमनोहरीमेलजन्यः )

( आ ) स रि ग म प ध नि स .
( अव ) स ध प म रि स .

मञ्ज

चित्तरञ्जिनी—मेलरागः ( झङ्कारध्वनिमेलजन्यः )

( आ ) स ग रि ग म प ध नि स .
( अव ) स नि ध प म ग रि स .

मञ्ज

चित्रलेखः—वाद्यालङ्कारः

चित्रं बहुविधं वाद्यं मृदङ्गपणवादिभिः ।
क्रियते यत्र संरम्भैश्चित्रलेखस्स उच्यते ॥

भरतः

अयमेव यदाछिन्नवर्णः स्याद्वादने विधिः ।
चित्रलेख इति ज्ञेयोऽलङ्कारस्सूरिभिस्तदा ॥

नान्यः

**चित्रलेखा—अष्टादशाक्षरवृत्तम्**

म त न य य याः ।

भरतः

**चित्रवर्ता—मूर्छना**

नन्द्यावर्तग्रामे पञ्चमी मूर्छना ।

पञ्चमस्य यदा तत्तु जायते च प्रमूर्छनम् ।
तदा चित्रवर्ता ज्ञेया चित्रसौख्यकरा श्रुतेः ॥

वादिमत्तगजाङ्कुशः

अस्याश्चित्रावतीति नामान्तरमप्यस्ति । इयं योषित्प्रिया ।

पण्डितमण्डली

**चित्रवराली—मेलरागः ( नटभैरवीमेलजन्यः )**

(आ) स रि ग रि म प ध नि स .
(अव) स नि म ग रि स .

मञ्ज

**चित्रवेलारागध्यानम्**

शय्यास्थितायाः घननायिकायाः
समीपताम्बूलकरण्डवाहिनीम् ।
तस्याः पदाग्रस्थितवामहस्तां
भजामि नित्यं वरचित्रवेलाम् ॥

रागसागरः

**चित्रवेलावली—भाषाङ्गरागः**

धान्तग्रहांशा मृदुगा च पूर्णा निगप्रदीप्ता विरतौ दिनस्य ।
प्रोक्ता सबीभत्सभयानकाख्ये वेलावली चित्रपदोपयुक्ता ॥

कुम्भः

**चित्रवेलाहुली—मेलरागः**

लक्षणं न दृश्यते ।

मेललक्षणे

**चित्रसौरभम्—मेलरागः ( नागनन्दिनीमेलजन्यः )**

(आ) स रि ग म प ध नि ध स .
(अव) स नि ध प म ग स .

मञ्ज

**चित्रस्वस्तिकम्—करणम्**

त्रिभङ्गीवलितं गात्रं कर्णक्षेत्रेऽलपल्लवौ ।
स्वस्तिकौ चरणौ चापि तच्चित्रस्वस्तिकं मतम् ॥

देवणः

**चित्रा—श्रुतिः**

ऋषभप्रथमा श्रुतिः ।

जग

**—वृत्तिः**

यत्र वाद्यं प्रधानं स्याद्गीतं च गुणतां व्रजेत् ।
तत्र चित्रा भवेद्वृत्तिरिति चित्रगिरां गिरः ॥

चित्रगिरां कुम्भकर्णादीनाम् ।

कुम्भः

चित्रा वाद्यप्रधानत्वं गीतस्य गुणतोच्यते ।

शार्ङ्गः

**—मूर्छना**

मनोहर्षप्रदा - इयं ।

नन्द्यावर्तग्रामे चतुर्थी मूर्छना ।

वादिमत्तगजाङ्कुशः

यदा सञ्जायते सम्यङ्मध्यमस्य प्रमूर्छनम् ।
तदा चित्रा........................ ॥

पण्डितमण्डली

**—प्राकृते मात्रावृत्तम्**

द्वौ लघू अथवा गुरुरेकः द्वौ चतुर्मात्रिकौ ।

अथवा जः अथवा नलः चतुर्मात्रः अथवा पञ्चमात्रिकः एकः चतुर्मात्रिकः एकः पञ्चमात्रिकः गः ।

विरहाङ्कः

**—तानः**

नि – लोपः षाडवः ।

रि स ध प म ग .

कुम्भः

**—ध्रुवावृत्तम् ( सप्ताक्षरम् )**

द्वितीयं सतृतीयं तदान्त्ये इह दीर्घम् ।
यदि त्रयं तु पादे भवेत्सा किल चित्रा ॥

इयं मुदितेत्यप्युच्यते । (उदा-) बलाकाकुलबद्धम् । यसगाः ॥

भरतः

**चित्ताभिनयः**

सन्दंशहस्तस्याङ्गुलीकम्पनात् कर्तव्यः ।

महाराष्ट्र

समा दृष्टिस्समं शीर्षं कर्तरीहस्तचालनम् ।
त्रिपताकः पुरोभागे क्रीडाभागनिरूपणे ॥
ऊर्ध्वाधोभागचलनं हंसास्यस्य तथैव च ।
पार्श्वभागे तु शिखरः स्तम्भितस्तम्भदर्शने ॥

दिनायकः

**चित्राम्बरी—मेलकर्ता**

स रि ग ० ० म प ० ध नि स .

मञ्ज

चित्रावती—मूर्छना

चित्रवती शब्दे द्रष्टव्यम् ।

चित्राहस्तः

( चित्रा मौक्तिकमेकम् )

सन्दंशो युज्यते चित्रतारार्थे चलिताकृतिः ।

शृङ्गारः

चित्रिणीहस्तः

निषादर्षभश्चापि चित्रिणी स्वर इष्यते ।
चित्रिण्यां तु प्रयुज्येत नाम्नार्धमृगशीर्षकः ॥

शृङ्गारः

चित्रिण्यभिनयः

अलपल्लवमृगशीर्षयोर्भुजांसधारणेन कर्तव्यः ।

महाराष्ट्रे

चिन्ता—विरहावस्थः

केनोपायेन संप्राप्तिः कथं वाऽसौ भवेन्मम ।
दूतीनिवेदितैर्भावैरिति चिन्तां निदर्शयेत् ॥
अर्केकरार्धविप्रेक्षितानि वलयरशनापरामर्शः ।
नीवीनाभ्योस्संस्पर्शनं च कार्यं द्वितिये तु ॥

भरतः

—व्यभिचारिभावः

श्वसितोच्छ्वसितसन्तापध्यानाधोमुखचिन्तनकार्श्यादयोऽनुभावाः । ऐश्वर्यभ्रंशेष्टद्रव्यापहारदारिद्र्यादयो विभावाः ।

भरतः

आधिश्चिन्ता प्रियानाप्तेः शून्यता श्वासकार्श्ययुक् ।

आधिः मानसी पीडा । शून्यता विकलेन्द्रियता । उपलक्षणत्वादेकाग्रदृष्टित्वस्मृत्यादयोऽनुभावाः ॥

रामचन्द्रः

यया चिन्तायतार्थेषु सा चिन्तेत्यभिधीयते ।

शारदातनयः

चिन्तानाम ऐश्वर्यभ्रंशेष्टद्रव्यापहारदारिद्र्यादिभिर्विभावैस्समुत्पद्यते । तामभिनयेत् निश्श्वसितसन्तापध्यानाधोमुखचिन्तनकार्श्यादिभिरनुभावैः ॥

अन्यार्ये—

ऐश्वर्यभ्रंशेष्टद्रव्यक्षयजा बहुप्रकारा तु ।
हृदयवितर्कोपगता चिन्ता नृणां समुद्भवति ॥
सोच्छ्वसितैर्निश्वसितैः सन्तापैश्चैव हृदयशून्यतया ।
अभिनेतव्या चिन्ता मृजाविहीनेतरधृत्या च ॥

भरतः

—चिन्ताभिनयः

हनुस्थले पताकस्तु चिन्ताभावनिरूपणे ।
पुरोभागे पताकस्तु चलितस्तापदर्शने ।
सूचीहस्तश्चालयित्वा दर्शितश्चाङ्गकम्पने ॥

विनायकः

चिन्दम्—देशीनृत्तम्

बन्दमिति क्वचित्पाठः ।

त्रिधा चिन्दं बुधैः प्रोक्तं विडचिन्दं तचिन्दकम् ।
स्वल्पचिन्दं तृतीयं च सैव स्यात्कलचारिका ॥

वेदः

चिह्नम्—हस्तप्राणः

प्रत्यक्षाणां परोक्षणां वस्तूनां नाट्यकर्मणि ।
स्थावरत्वं जङ्गमत्वमेषामपि तादृशाम् ॥
तदाकारप्रकटनं तन्मुखस्य निरूपणम् ।
तत्स्थानदर्शनं वापि ध्वजानां चापि दर्शनम् ॥
तदायुधप्रकटनं तद्गतेर्वा निदर्शनम् ।
तत्प्रतिमादर्शनं वा तच्चेष्टादर्शनं च वा ।
इत्यादिभेदैर्यन्नाट्यं चिह्नमित्यभिधीयते ॥

शृङ्गारः

चिबुकम्

चिबुकं सप्तधोद्दिष्टं जिह्वादन्तोष्ठकर्मभिः ।
कुट्टनं लेहनं छिन्नं खण्डनं चुकितं समम् ।
दष्टं च लक्षणं त्वेषां विनियोगश्च कथ्यते ॥

ज्यायनः

अङ्गुष्ठानुगतं तेषां क्रियया लक्षितं स्फुटम् ।
तथापि लक्ष्यते किञ्चिच्चिबुकं सुखबुद्धये ॥
व्यादीर्णं श्वसितं वक्रं संहतं चलसंहतम् ।
स्फुरितं चलितं लोलमेवं चिबुकमष्टधा ॥

कुम्भः

चिरविभासिनी—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

( आ ) स रि म प म नि ध नि स .
( अव ) स नि प ग रि स .

मञ्ज

चुकितम्—चिबुकम्

दन्तपङ्क्तयोस्स्थितिर्दूरे जृम्भायां चुकितं मतम् ।

ज्यायनः

—दन्तः

दूरेस्थितिर्दन्तपङ्क्तयोः चुकतं तच्च जृम्भणे।

चम्बितमित्याह विप्रदासः।

अशोकः

चुक्का

बुक्काशब्दपर्यायशब्दोऽयम्।

चुल्लकम्—देशीनृत्तम्

मङ्गले शिखरद्वन्द्वं हृदये स्थापयंस्ततः।
सूलं गृहीत्वा पश्चात्तु चरेच्चारीं कुलीरिकाम्॥
तत्र दक्षो हंसमुखोऽधोमुखो हंसपक्षकः।
अथवा रेचितौ हस्तौ चतुर्दिक्षु गतिर्भवेत्॥
तलसङ्घेन पश्चात्तु पादकुट्टनमाचरेत्।
तन्मुखं च ततश्शीर्षेऽलपद्मस्वस्तिकं चरेत्॥
सव्यावर्तेन तिरिपमेवमङ्गान्तरेण तु।
चतुरश्रे सम्मुखं च कर्तव्यौ च लताकरौ॥
हृदये शिखरद्वन्द्वमेकपादेन चेद् भुविः।
नम्रीभूत्वा च कुरुते चतुर्वलनसुन्दरान्॥
भ्रमरी च ततश्चान्ते तकारणं च कुट्टनम्।
भवतीत्यादितालेन चुल्लकोऽुपनर्तनम्॥

वेदः

चूतमञ्जरी—रागः

न्यासांशग्रहधैवतध्वनियुता मन्द्रा निषादस्वरे
त्यक्ता पञ्चमषड्जनिस्वनपदैः गान्धारतारध्वनिः।
स्वल्पस्वीकृतमध्यमा च बहुलध्वाना निषादस्वरै-
र्विद्वद्भिः परिकीर्तिता तिरिपयुक् चूतादिकां मञ्जरीम्॥

नान्यः

धैवतांशग्रहन्यासा षड्जपञ्चमवर्जिता।
मध्याल्पा तारगान्धारा निबला चूतमञ्जरी॥

मतङ्गः

चूडामणिः—शिरोभूषणम्

चूडामणिस्समकुटः शिरसो भूषणं स्मृतम्।

चूडामणिः शिरोमध्ये। मकुटो ललाटोर्ध्वे।

भरतः

चूर्णपदम्

तत्र चूर्णपदस्यादौ लक्षणं संगृणाम्यहम्।
अनिबद्धे पदं छन्दोहीनं चानियताक्षरम्।
अर्थापेक्षाक्षरोपेतं ज्ञेयं चूर्णपदं बुधैः॥ कुम्भः

चूलिका—अर्थोपक्षेपकः

अर्थोपक्षेपणं चूडा बहुधैस्सूतवन्दिभिः।

कोहलः

चूडा – चूलिका।

चूलिकायाः कचिद्बाह्ये कचिन्मध्ये निवेशनम्।
मध्ये च वेणीसंहारे दृश्यते चूलिका तथा॥
तदविच्छेदहेतोस्तु चूलिका भोजकल्पिता।
गर्भाङ्काङ्कमुखाभ्यामवहिष्काभ्यां स्वभावतस्त्वङ्कात्॥
इति वृत्ताविछेदस्य च हेतुतया चूलिका कथिता।
अङ्कमुखं गर्भाङ्कः कार्योऽस्मिन् चूलिकापि वा कुशलैः॥
माभूदिति वृत्तान्ताविच्छेदो विस्तरो वेति।
अङ्कादवाह्यावेवाङ्कमुखाङ्कावतारौ स्वतः॥
अन्तर्यवनिकासंस्थैः सूतमागधवन्दिभिः।
अर्थोपक्षेपणं यत्र क्रियते सा हि चूलिका।
एकैकानि शिरांसीति पक्षादौ सा च दृश्यते॥

शारदातनयः

चूलिका संज्ञाशब्दोऽयम्। नेपथ्ये स्थानस्थितानां कार्यवशाद्विहितानामालापानां यथा पटीमध्यगतैस्सूतमागधादिभिः।

अर्थोपक्षेपणं यत्र सा चूलिका। अत्र वन्दिनो नग्नाचार्योः।

यथा –

अश्वत्थामाङ्के सूतः। मुद्राराक्षसे तृतीयाङ्के वन्दी।

अश्वकुट्टस्तु आह –

अन्तः पटीनिविष्टैर्यत्क्रियतेऽर्थनिवेदनम्।
अन्तर्यवनिकासंस्थैश्चूलिकार्थप्रकाशनम्॥

सागरः

—मणिबन्धभूषणम्

रुचकस्योर्ध्वे अग्रबाहुस्थाने प्रसिद्धा चूलिका।

चेतोहिता—चतुर्दशाक्षरवृत्तम्

वसन्ततिलकवृत्तमेव रामकीर्तिमते चेतोहितेत्युच्यते।

चेष्टाभयकरम्—नर्म

चेष्टया विदधद्भीतिं चेष्टाभयकरं विदुः।

सर्वेश्वरः

चेष्टाव्यतिकरम्—नर्म

व्यापारेणैव यद्व्यक्तमभिलाषानिवेदनम्।
कुरुते तदिह प्राच्याश्चेष्टाव्यतिकरं विदुः॥

सर्वेश्वरः

**चेष्टास्पष्टीकरणम्—नर्म**

संभोगेच्छामतिप्रौढां चेष्टया प्रब्रवीति यत् ।
तदिह व्याहृतं चेष्टास्पष्टीकरणमञ्जसा ॥'

सर्वेश्वरः

**चैत्तीरागध्यानम्**

श्रुतिकृतरसालचञ्जरिररुणाम्बरगौरतनुरभीष्टवना ।
पिकरवगलचित्ता चित्तहरा कीर्तिता चैति ॥

सोमनाथः

**चैबुकी—कला**

धृत्वा पञ्चविलासकेषु चिबुकं वक्रभ्रमिं कुर्वती
हस्ताङ्घ्रिद्वयजां च पृष्टपदवीयान्तेन नीत्वा पदौ ।
आस्याग्रे पुनराकलय्य सजलं पात्रं च ताभ्यां शनै-
र्या मूर्ध्नि न्यसतीति यत्र निपुणं प्रोक्ता कला चैबुकी ॥

नागमल्लः

**चोक्षकैशिकः—रागः**

षड्जग्रहांशकधरो विलसन्निपाद-
न्यासस्फुटस्फुरितपञ्चमरञ्जितान्तः ।
सर्वस्वरैकवसतिर्धृतवीररौद्रोऽ-
पन्यासवेश्मनि भवेदृषभस्वरश्चेत् ॥

कैशिकीजातियुक्तायाः कार्मारव्यास्समुद्भवः ।
ततस्सञ्जायते रागस्स नाम्ना चोक्षकैशिकः ॥

नान्यः

**चोक्षपञ्चमः—रागः**

......शन्यासार्पितपञ्चमको द्विश्रुतिस्वरोऽव्यक्तः ।
मध्या पञ्चमिकाभ्यामुत्पन्नश्चोक्षपञ्चमो रागः ॥

नान्यः

पञ्चमांशः पञ्चमान्तो द्विश्रुतिस्वरवर्जितः ।
पञ्चमीमध्यमोद्भूतो विज्ञेयश्चोक्षपञ्चमः ॥

कश्यपः

**चोक्षषाडवः—रागः**

शुद्धषाडवरागाङ्गं परिपूर्णसमस्वरः ।
षड्जांशो मग्रहन्यासो गातव्यश्चोक्षषाडवः ॥

सोमराजः

**चोलमण्डलपालकः—देशीतालः**

पगला लगपा लोगः प्लुतोलः प्लुतलद्रुताः ।
ऽऽ ॥ ।ऽऽ । ऽऽ । ऽ । ०

गोपतिप्पः

**चोहाटी—रागः**

चोहाट्यथ ग्रहन्यासमध्या षड्जांशसंयुता ।
गान्धारमन्द्रा ... निषादाभ्यां समुत्थिता ।
तथा धैवततारा च कथितेयं समस्वरा ॥

हरिः

**चौती—श्रुतिः**

ऋषभस्य प्रथमा श्रुतिः ।
हनुमन्मते अष्टादशैव श्रुतयः ।

हनुमन्मते

छ

**छण्डणः—वाद्यप्रबन्धः**

कूटादिबद्धः खण्डस्स्याच्छण्डणो वाद्यमोक्षकः ।

शार्ङ्गः

कूटादिपाटघटितः खण्डो यश्च प्रयुज्यते ।
अन्ते वाद्यप्रबन्धानां स च्छण्डण इति स्मृतः ॥

**छण्डनम्—देशीलास्याङ्गम्**

गीतवाद्योचितं कृत्वा सुचिरं यत्र नर्तनम् ।
नृत्तावसानसमये श्रान्तैर्निष्पन्दसुन्दरैः ॥
अङ्गैश्च सौष्ठवैस्तिष्ठेच्चित्रन्यस्तेव नर्तकी ।
छण्डनं तत्समाख्यातं देशीनृत्तविशारदैः ॥

वेमः

**छत्रः**

अयं तालशास्त्रनिर्माता महर्षिरिति वेमभूपालेन सङ्गीतचिन्तामणावुक्तम् । कुम्भकर्णशार्ङ्गदेवावपि तालप्रकरणे छत्रं स्मरतः । अयं शठमहर्षिणा साकमेव स्मर्यते । यथा – शठछत्राविति ।

**छत्रकः—हस्तः**

ऊर्ध्वं सूचीमुखः कार्यस्तिष्ठन्नुपरि स्वस्तिकः ।
अधोमुखो नर्तकीभिश्छत्रको हस्त उच्यते ॥

नागमल्लः

**छत्रभ्रमरी—भ्रमरी**

स्थितैकेनाङ्घ्रिणा भूमौ दण्डवच्चोत्क्षिपेत्परम् ।
सव्यावर्तं भवेद्यत्र सा छत्रभ्रमरी मता ॥

कुम्भः

**छन्दः—प्रबन्धः**

लक्ष्यते छन्दनामाथ तालस्तत्र यथेप्सितः ।
उद्ग्राहे वा ध्रुवायां वा गेये विरुदनामनी ।
आभोगो न भवेदत्र छन्द एवं निरुच्यते ॥

हरिपालः

छन्दः

छादनादपयत्नादेरुक्ताचं छन्द ईप्सितम् ।

कुम्भः

—वाद्यम्

खसितस्फुरितौ यत्र क्रियते बहुधा करौ ।
तारं च स्पृश्यते स स्याच्छन्दो यतिमनोहरः ॥

शार्ङ्गः

—वीणावादनप्राणः

श्वसितेन समायुक्तो बहुधा स्फुरितः करः ।
संस्पृश्य तारं छन्दाख्यो यस्या च समलङ्कृतः ॥

पार्श्वदेवः

बहुधा यत्र वर्तेते श्वसितस्फुरितौ करौ ।
तारस्थानस्पृशौ स स्याच्छन्दो यतिविभूषणः ॥

कुम्भः

छन्दकम्—गीतिः

यत्र च्छन्दानुवर्त्यास्मिन्नङ्गानां न्यसनं मतम् ।
ततोऽस्य च्छन्दकं नाम विहितं पूर्वसूरिभिः ॥

कुम्भः

—गीतम्

छन्दकं सर्वगीतानामवसाने तु गीयते ।
चतुरश्रं त्र्यश्रमिति तच्छरीरं द्विधामतम् ॥
यैः कैश्चिदङ्गैर्नवभिर्बद्धं स्याच्चतुरश्रकम् ।
अङ्गैश्चतुर्भिर्यद्बद्धं त्र्यश्रं तदभिधीयते ॥
पादप्रमाणं कर्तव्यं मुखवच्छन्दके बुधैः ।
तद्वत्प्रतिमुखं कार्यं मुखतालेन वा बुधैः ।
गीतज्ञैश्छन्दकस्यान्ते शीर्षकं सम्प्रयुज्यते ॥

वेमः

छन्दोदरी—मेलरागः ( खरहरप्रियामेलजन्यः )

( आ ) स ग रि ग म प ध नि प स .
( अव ) स नि ध म ग रि स .

मज

छन्दोवती—श्रुतिः

षड्जे चतुर्थी श्रुतिः ।

छलम्—वीथ्यङ्गम्

अन्यार्थमेव वाक्यं छलमभिसन्धानहास्यरोषकरम् ।

भरतः

यद्वाक्यं प्रयोजनान्तरमुद्दिश्य वचनमुच्यमानं कस्यचिद्वचनं अन्यस्य हास्यं अपरस्य रोषं जनयति तच्छलम् । कस्स व ण होइ इति वचनं भर्तृप्रत्यायनं प्रयोजनमुद्दिश्य प्रयुक्तं । तस्य पत्न्या अपि संबन्धिनां छलं विदग्धजनस्य हास्यं सप्रत्यावचनं रोषं जनयति ।

अभिनवगुप्तः

छलनम्—अवमर्शसन्ध्यङ्गम्

छादनशब्दे द्रष्टव्यम् ।

अवमानादिकरणं कार्यान्तं छलनं विदुः ।

सिंगः

छलनं प्राहुरन्ये तु क्रियमाणावधीरणम् ।

सर्वेश्वरः

छलोक्तिः—लक्षणम्

काक्वा श्लेषेण वा यत्र पदं द्व्यर्थं प्रयुज्यते ।
प्रधानमतिसन्धातुं सा छलोक्तिः प्रकीर्तिता ॥

यथा — रत्नावल्यां – भवति शपामि ब्रह्मसूत्रेणेत्यादि विदूषकवाक्यम् ।

भोजः

छागहस्तः

मध्यमानामिकाङ्गुष्ठा संश्लिष्टास्तु पुरोमुखाः ।
कनिष्ठा तर्जन्यङ्गुल्यावधोभागे तु चालिते ॥
छागहस्त इति प्रोक्तो भरतागमवेदिभिः ।
पार्श्वभागे पुरोभागे बद्धश्चेच्छागदर्शने ॥

विनायकः

छादनम्—अवमर्शसन्ध्यङ्गम्

अपमानकृतं वाक्यं कार्यार्थं छादनं भवेत् ।

भरतः

वाक्यमिति तदर्थो लक्ष्यते । करोतिर्बहुमानार्थे वर्तते । तेन दुष्टोऽप्यर्थो अपमानेन बहुमतीकृतः । तदपमानकलङ्कापवरणात् छादनमिति । यथा – सकलदुःखावसानं मे भगवान् हुताशनः करिष्यतीति, सागरिकावाक्यम् ।

अभिनवः

छादनं – मन्युमार्जनम् ।

मन्युरपमानो येन मार्ज्यते तच्छादनम् । अन्ये तु कार्यार्थमसह्यस्याप्यर्थस्य सहनं छादनमामनन्ति ।

यथा – शुक्तिवासकुमारविरचिते अनङ्गशयनाहरिनन्दिप्रकरणे हरिनन्दिना ब्राह्मणरक्षार्थं चौर्यमात्मन्यारोपितम् । अन्ये तु अस्य स्थाने छलनमवमानरूपमाहुः ।

रामचन्द्रः

छाया—रागः

रिमन्द्रा तारसंयुक्ता ग्रहांशन्यासमध्यमा ।

अल्पशेषा धपन्यासा छाया स्यात् षड्जवर्जिता ।
मध्यमांशग्रहाद्यस्मात् शृङ्गारे परिगीयते ॥

जगदेकः

अथ छाया मध्यमांशग्रहन्याससमन्विता ।
तारमन्द्रर्षभा शेषैस्स्वरैरल्पीयसी तथा ।
षड्जेन वर्जिता सेयं रागविद्भिरुदीर्यते ॥

हरिः

छायाकौशिकः—मेलरागः ( मायामालवगौलमेलजन्यः )

( आ ) स नि स ग रि ग म प नि स .
(अव) स नि ध प म ग रि स .

मज

छायातरङ्गिणी—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

( आ ) स रि ग रि ग म प ध नि ध नि स .
(अव) स नि ध प म ग म रि ग रि स .

मज

छायातोडी—रागः

पूर्वं प्रोक्ता तु या तोडी लक्षणेन समन्विता ।
छायातोडी पुनस्सैव पञ्चमर्षभवर्जिता ॥

जगदेकः

—मेलरागः

छाततोडी तदैव स्याद्रिपाभ्यां रहिता यदा ।
प्रातर्गेया । इयं तोडीजातिः स्यात् ।

अहोबिलः

—रागः

रिपत्यक्ता च तोड्येव छायातोडीति कीर्तिता ।

हम्मीरः

छायातोडी रिपत्यक्ता सत्रया सदुपाङ्गिका ।

मदः

छायाप्रथमिका तोडी ततः परमुदीर्यते ।
पूर्वोक्ततोडिरागस्य लक्षणेन समन्विता ।
एतावान्भेद एतस्याः पञ्चमर्षभहीनता ॥

हरिः

—प्रथमरागः

छायातोडी बुधैः प्रोक्ता मध्यमांशग्रहान्विता ।
पञ्चमर्षभहीना च गीयते गीतकोविदैः ॥

मोक्षदेवः

—उपाङ्गरागः

ऋषभस्वरसंत्यक्ता तोड्येव पविवर्जिता ।
माधवाख्येन विदुषा छायातोडीति कथ्यते ॥

भट्टमाधवः

— रागः ( औडवः )

छायातोडी रिपत्यक्ता सञ्जाता षाडवान्वये ।
मृदुकम्पस्वरा मांशग्रहन्यासा दिवातनी ॥

नारायणः

छायानट्टा—प्रथमरागः

नाट्युपाङ्गं निगकम्पा मन्द्रपञ्चमभूषिता ।
छायानट्टा च शृङ्गारे सवीरे गीतकोविदैः ॥

मोक्षदेवः

—रागः

मध्यमेन निषादेनान्दोलिता त्यक्तपञ्चमा ।
खम्बावतीतदंशान्तो शृङ्गारे विनियुज्यते ॥

हम्मीरः

छायानट्टेत्युपाङ्गा स्यात् षड्जेनैव विभूषिता ।
एतेन अंशन्यासग्रहाः स एवेति उक्ताः ।

मदः

छायापूर्वाऽथ नट्टा स्यात् षड्जांशन्याससंयुता ।
गान्धारे च निषादे च कम्पिता मन्द्रपञ्चमा ।
परिपूर्णस्वरा चेयं कथिता रागवेदिभिः ॥

हरिः

षड्जांशन्याससंपन्ना धनिभ्यां कम्पिता तथा ।
पमन्द्रा परिपूर्णा च छायानट्टा निगद्यते ॥

जगदेकः

—रागः ( वंशे वादनक्रमः )

स्थायिनं द्विगुणं षड्जं विधायास्मात्तृतीयकम् ।
प्रोच्याधस्त्यं प्रकम्प्याथ विलम्ब्य स्थायिनं ततः ॥
तत्पूर्वं च लघूकृत्य द्विस्त्रिर्वा ताडयेदमुम् ।
ततो ग्रहं लघूकृत्य तदधस्त्यार्धमास्पृशेत् ॥
विलम्ब्य च द्रुतीकुर्यात्स्थायिनः पञ्चमं ततः ।
स्पृष्ट्वा तृतीयं तदनु पञ्चमस्वरमेत्य च ॥
दीर्घीकृत्य तमेवाथ प्रकम्प्याधस्तनं मतम् ।
ग्रहन्यासाद्भवेच्छायानट्टा स्वस्थानमादिमम् ॥
स्वरस्तृतीयो वंशेषु तस्याः स्थायितया स्मृतः ।
एषा सालगनट्टेति लक्ष्यज्ञैः परिगीयते ॥

अन्यः क्रमः—

पञ्चमं स्थायिनं कृत्वा ऋषभं वादयेत्ततः ।
प्रकम्प्य मध्यमं पश्चात्पञ्चमं स्थिरतां नयेत् ॥
अथ द्विवारं सम्प्रोच्य स्वरौ पञ्चममध्यमौ ।
गान्धारमृषभस्यार्धमपि स्पृष्ट्वा ततो व्रजेत् ॥

तस्यैवार्धान्तरमथ द्राघयित्वा रिमध्यमौ।
ग्रहस्वरे यदा न्यासः स्वस्थानं प्रथमं तदा।
भवेत्सालगनट्टाया इत्यन्ये प्राहुरन्यथा॥

वेमः

—उपाङ्गरागः ( वीणायां वादनक्रमः )

ग्रहं कृत्वा मन्द्रषड्जं मध्यषड्जं समेत्य च।
व्रजेत्ततश्चावरोहिक्रमेण स्थायिनं स्वरम्॥
आरोहेण ततः प्राप्य मध्यमं तं विलम्बयेत्।
स्वरं च धैवतं स्पृष्ट्वाऽवरोहेण ग्रहं व्रजेत्।
तदा सञ्जायते रागश्छायानट्टाभिधः स्वयम्॥

वेमः

—उपाङ्गरागः

नट्टोपाङ्गं भवेच्छाया नट्टा सा सांशषड्जका।
मन्द्रपञ्चमसंयुक्ता गातव्या गनिकम्पिता॥

भट्टमाधवः

छायानाटः—मेलरागः

छायानाटस्तु विज्ञेयः शङ्कराभरणस्वरैः।
आरोहणे निवर्ज्यः स्यादवरोहे गवर्जितः।
धैवतोद्ग्राहसंयुक्तो रिन्यासोऽनेकमध्यमः॥

सायं गेयः।

अहोबिलः

छायानाटः—रागः

धग्रहन्याससंयुक्ता गनिभ्यामपि कम्पिता।
पूर्णा मध्यममन्द्रा च छायानट्टा निगद्यते॥

सोमराजः

छायानाटी—रागः

धैवतांशा च तन्न्यासा नित्यं पञ्चमकम्पिता।
षड्जर्षभाभ्यां भूयिष्ठा तारगान्धारशोभिता॥
मन्द्रमध्यमसंयुक्ता रिषभेण च पीडिता।
छायानाटीति सा प्रोक्ता सोमभूपेन भूतले॥

सोमेश्वरः

छायारागमूर्तिध्यानम्

सूर्यप्रिया सूर्यमयूखदूना
आह्लादयन्ती पथिकान् स्वकान्त्या।
करे दधाना रणपद्ममालां
छाया गृहिस्थेह मनोज्ञरूपा॥

सायाह्ने गीयते। छायैव सौरीत्युच्यते। इयं षाडवा।

संगीतसरणिः

छायारौद्रं—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

( आ ) स रि प म प ध नि स.
( अव ) स ध नि प म ग रि स.

मज

छायावेलाकुली—रागः

छायावेलाकुली धांशा धादिर्न्यासस्तु मोपजा।

मदः

छायावेलाधुली—रागः

ततः परं तु छायान्या भवेद्वेलाधुली पुनः।
पूर्वप्रयुक्तया चासौ वेलाधुल्या समा भवेत्।
एतावद्भेदसहिता मन्द्रे मध्यमकल्पिता॥

हरिः

छायावेलावली—रागः

छायावेलावली तोडी वेलावत्कम्पमन्द्रमा।

हम्मीरः

पूर्वं वेलावली प्रोक्ता निजलक्षणलक्षिता।
छायावेलावली सैव मन्द्रमध्यमकम्पिता॥

जगः

—उपाङ्गरागः

मध्यकम्पितकश्छाया स्यात् या सा मध्यमस्वरः।
छायावेलावलीत्युक्ता वेलावल्येव लक्षणे॥

भट्टमाधवः

छायावेलावुली—रागः

एतल्लक्षणसंयुक्ता कम्पधैवतपञ्चमा।
छायावेलाउलीप्रोक्ता संपूर्णा सप्तभिः स्वरैः॥

एतच्छब्दः वेलाउलीं परामृशति।

सोमेश्वरः

छायाशोभितं—मेलरागः ( खरहरप्रियामेलजन्यः )

( आ ) स रि ग म प ध स.
( अव ) स नि ध प म ध म ग रि स.

मज

छिसकः—मात्रावृत्तम्

स स स स.

विरहाङ्कः

छिन्नम्—चिबुकम्

द्विजानां गाढसंश्लेषः छिन्नं व्याधौ भये मृतौ।
व्यायामे रोदने शीते तन्मतं नाट्यवेदिनाम्॥

ज्यायनः

—करणम्

वैशाखस्थानके यत्र छिन्ना स्यात्क्रमशः कटी।
अलपद्मस्तथा पार्श्वक्षेत्रे तस्याः करो भवेत्।
तत्तालभञ्जने छिन्नमङ्गस्य प्रतिसारणे॥

ज्यायनः

अत्र पार्ष्णिनमनोन्नमनाभ्यां कटीछेदः कार्य इत्यभिनवगुप्तपादाः।

वेमः

**छिन्नः**—दन्तः

छिन्नं तु दृढसंश्लेषो वेदने व्याधिशीतयोः।
वीटिकाछेदने भीतौ व्यायामादिष्वपि स्मृतम्॥

अशोकः

—वीणायां दक्षिणहस्तव्यापारः

तर्जनी पार्श्वसंलग्ना तन्त्रिकानामया यदा।
वहिराहन्यते प्राह तदा छिन्नमभिन्नधीः॥

कुम्भः

—वाद्यप्रकारः

वाद्यं द्रुतलयं यत्र सहसा विनिवर्तते।
सर्वातोद्येषु भिन्नेषु प्रकारश्छिन्न एव सः॥

भरतः

—वादनम् ( दक्षिणहस्तव्यापारः )

तर्जनीपार्श्वलग्नायास्तन्त्र्या बहिरनामया।
हननं छिन्नमाचष्टे श्रीमत्सोढलनन्दनः॥

शार्ङ्गः

**छिन्नकः**—भङ्गतालः

द्रुतद्वयं लघु चत्वारो गुरवः। ००।ऽऽऽऽ

नान्यः

**छिन्नविद्धः**—वाद्यालङ्कारः

अवपाणिर्मृदङ्गेषु पणवोपरि पाणिकः।
यदा भवति वाद्येषु छिन्नविद्धस्त्वसौ भवेत्॥

भरतः

अवपाणिप्रहारेण मृदङ्गेषु भवेच्च यत्।
पणवे ह्युपरिपाणिः सप्रहारसमाश्रयः॥
मृदङ्गच्छेदभेदाच्च पुनस्सालङ्क्रिया त्विह।
विछिन्नभिन्नाया ज्ञेयेत्याचष्ट मिथिलेश्वरः॥
छिन्नस्य छिन्नविद्धस्य वामवेधात्परस्परम्।
विज्ञेयो विद्ध इत्येवमलङ्कारस्तु सूरिभिः॥

नान्यः

**छिन्ना**—कटी

मध्यस्य वलनाच्छिन्ना श्रमे पृष्ठविलोकिते।

ज्यायनः

नते तिर्यङ्मुखे मध्यवलनाद्व्रजते कटी।
छिन्नाऽभिधा सा व्यायामपृष्ठतः प्रेक्षणादिभिः॥

विप्रदासः

**छेदः**...वाद्यप्रबन्धः

यत्र विछिद्य विछिद्य वाद्यं वाद्यविशारदैः।
विकृतं वाद्यते हस्ततलाघातैर्द्रुतैर्मुहुः।
स छेद इति संप्रोक्तः प्रबन्धोऽन्वर्थनामकः॥

वेमः

द्रुतैः करतलाघातैर्विकृतैर्यत्र वाद्यते।
वाद्यं विछिद्य विछिद्य छेदमिच्छन्ति तं बुधाः॥

शार्ङ्गः

**छेद्यकम्**—गतिछेदः

भिन्नवाक्ययतयार्थानां छेद्यकं संप्रचक्षते।

वेमः

**छेवाडी**—प्रथमरागः

हिन्दोलकस्य छेवाडी भङ्गातान्तसमुद्भवा।
षड्जांशर्षभहीना स्यात् शृङ्गारे मन्द्रधैवता॥

मोक्षदेवः

**छेवाडी**—रागः

छेवाडी रिषभत्यक्ता सत्वया भाषया मता।

मदः

अंशे ग्रहे षड्जकधा रिहीना
गान्धारमध्यध्वनिधैवताद्या।
विश्वप्रसन्नैर्गमकैः प्रकीर्णा
छेवाडिकाख्याभिहितेह भाषा॥

नान्यः

षट्स्वरजनितैर्गमकैश्छेवाडी रिषभवर्जिता शश्वत्।
धैवतशब्दविकीर्णा गापन्यासेन संयुता भवति॥

कश्यपः

—भाषारागः

हिन्दोलभाषा छेवाडी ग्रहांशन्यासषड्जका।
भारधा सगभैर्मन्द्रा गापन्यासा रिवर्जिता॥

भट्टमाधवः

**छोहारी**—रागः

मध्यमग्रहणन्यासा षड्जांशा निविवर्जिता।

गमन्द्रा च सतारा च छोहारी स्यात्समस्वरा ।
संग्रहा येन केनेयं शृङ्गारे विनियुज्यते ॥

जगदेकः

## ज

जंझूटी– मेलरागः

(आ) स ० रि ० ग ० ० प ० ध ० ० स.
(अव) स नि ० ध ० प ० म ग ० रि ० स.

मेललक्षणे

जंभेटी—भङ्गताल:

लत्रयं द्द्वयं विरामान्तं पुनस्तथैव । ।।।०० ं

नान्यः

जक्करी—देशीनृत्तम्

यवन्या भाषया युक्तं यत्र गीतं मुनिश्चलम् ।
कौलादिगजरायुक्तं महाङ्गेन धिभूपितम् ॥

विदध्यान्नर्तनं नानालयत्रयविचित्रितम् ।
कोमलाङ्गैर्यदा नृत्यं भ्रमर्यादिविराजितम् ॥

सशब्दादिक्रिया यत्र ध्रुवझम्पादिभेदतः ।
यत्र चेष्टाविरहितं तन्नृत्तं जक्करीमतम् ॥

पारसीकैः पण्डितैस्तु उद्ग्राहः स्वस्वभाषया ।
यद्गीतं जक्करीसंज्ञं यवनानामतिप्रियम् ॥

वेदः

जगज्झम्पा—देशीताल:

जगज्झम्पो गदाश्च विः । ऽ ० ० ०

मदनः

गुरोः परं विरामान्तं द्रुतयोर्युगलं भवेत् ।
जगज्झम्पामिवे ताले तालज्ञैः परिकीर्तितम् ॥ ऽ ० ० ं

वेमः

### जगज्ज्योतिर्मल्लः

नेपालमहाराजोऽयम् । १६२० काले आसीत् ।

विप्रदासीयसङ्गीतचन्द्रग्रन्थं दक्षिणदेशादानीय तस्य व्याख्यां नेपालभाषायां रचयामास । तस्य ग्रन्थस्य नाम भरतसारसङ्ग्रह इति ।

### जगतीच्छन्दोवृत्तानि

सहस्राण्यथ चत्वारि नवतिश्च षडुत्तरा ।
जगत्यां समवर्णानां वृत्तानामिह सर्वशः ॥

भरतः

### जगदेकमल्लः

सङ्गीतचूडामणिकारः । अयं विक्रमाङ्कदेव इति प्रथितनाम्नः त्रिभुवनमल्लस्य पौत्रः । सोमेश्वरस्य पुत्रः । पाश्चात्यचालुक्य-राजवंशीयः । प्रतापचक्रवर्तीति विरुद्वान् ।

कालः क्रै. प. ११३४ - ११४५

### जगद्धरः

सङ्गीतसर्वस्वकारः । अनेनैव मुद्राराक्षसव्याख्यापि कृता । अयं शुभंकरात्प्राचीनः, यतः शुभङ्करोऽमुं प्रशंसति । मुद्राराक्षस-व्याख्याने गौडेन्द्रगजपतिप्रस्तावोऽस्ति । तस्मादयं १५१० का-लीनो भवेत् । सं - स इति लाञ्छितः कश्चन ग्रन्थ उपलब्धः । अयं संगीतसरणिर्वा सङ्गीतसर्वस्वं वा इति विप्रतिपत्तौ, स-ङ्गीतसरणौ, सं. स. इति संज्ञितग्रन्थस्थविषयाणामभावात्, सङ्गीतसर्वस्वे अल्पभागस्यैवोपलंभात् उपरिभागे तस्योपलम्भः स्यादिति, सं. स. संज्ञितो ग्रन्थः संगीतसर्वस्वेन नष्टभाग इति मन्यामहे । सं. स. संज्ञिते कोशे सरस्वतीदासा इति ग्रन्थकर्तृ-विरुद उपलभ्यते । उदयवत्सनामापि दृश्यते ।

उदयवत्सः क इति न ज्ञायते । उपलब्धभागे गीततालादि-लक्षणे कल्लिनाथस्य रत्नाकरव्याख्याया अनुवादः श्लोकरू-पेणास्ति । तस्मात्कल्लिनाथादर्वाचीनः ।

जगन्मणिः—मेलरागः ( नटभैरवीमेलजन्यः )

(आ) स रि म ग म ध नि प ध नि स.
(अव) स प म ग रि स.

मञ्ज

जगन्मोहनम्—मेलरागः ( जलार्णवमेलजन्यः )

(आ) स रि म प ध स नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

जगन्मोहिनी—मेलरागः ( मायामालवगौलमेलजन्यः )

(आ) स ग म प नि स.
(अव) स नि प म ग स.

मञ्ज

जङ्गलः—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

(आ) नि ध नि स रि ग म प ध नि.
(अव) ध प म ग रि स नि ध नि स.

मञ्ज

### जङ्घा

नताक्षिप्तोद्वाहिताख्या वर्तिता परिकीर्तिता ।

परावृत्ता तिरश्चीना निस्सृता च बहिर्गता।
कम्पितेति च जङ्घा तु दशधा परिकीर्तिता॥

वेमः

निस्सृता च परावृत्ता तिरश्चीना च कम्पिता।
बहिष्क्रान्ता च विज्ञेया जङ्घा पञ्चविधा बुधैः॥

सोमेश्वरः

भ्रामितं निस्सृतं कम्पं तिरश्चीनं बहिर्गतम्।
इत्येतदपि जङ्घायाः कर्मोक्तं पञ्चधा परैः॥

ज्यायनः

जङ्घालम्—नृत्तकरणम्

स्थानकं खण्डसूच्याख्यमधोगतशिरस्तदा।
अत्रावलोकिता दृष्टिः पताकफणिहस्तकौ।
जङ्घालकरणं तत्स्याच्छारी लङ्घितजङ्घिका॥

नन्दी

लङ्घितजङ्घिका गतिः। यथा

खण्डसूच्यां न्यसेत्पादं नतमाकृष्य वेगतः।
तज्जङ्घालङ्घितेन्येन तथा लङ्घितजङ्घिका॥

जङ्घालङ्घनिका—देशीचारी

चरणं तु तिरश्चीनं किञ्चिदाकुञ्चितं पुरः।
उत्प्लुत्य पादेनैकेन लङ्घयेद्गगने यदि।
जङ्घालङ्घनिका चारी तदा तज्ज्ञैरुदीरिता॥

वेमः

जङ्घावर्ता—देशीचारी

अन्तर्भ्रमस्य पादस्य तलमङ्घ्रेः परस्य तु।
जानुनो मूर्ध्नि विन्यस्येत् तस्यैव भ्रमतो बहिः।
तलं न्यस्येज्जानुपार्श्वे जङ्घावर्ता भवेत्तदा॥

वेमः

जडम्—दर्शनम्

सञ्चारशून्यं दौर्बल्याद्यत्तज्जडमुदीरितम्।

शारदातनयः

जडता—व्यभिचारिभावः

सर्वकार्याप्रतिपत्तिः। इष्टानिष्टश्रवणदर्शनव्याध्यादिभिरुत्पद्यते। अकथनाभिभाषणतूष्णींभावनानिमेषनिरीक्षणपरवशत्वादयोऽनुभावाः।

भरतः

प्रतिपत्तेरभावेन स्तब्धता जडता मता।
सा समुत्पद्यते लोके दयितालोकनादिभिः।
अस्यामपि भवेत्सद्यस्तूर्वनिमेषनिरीक्षणम्॥

सर्वेश्वरः

—विरहावस्था

पृष्टा न किञ्चित्प्रब्रूते न शृणोति न पश्यति।
हाकष्टवाक्या तूष्णीका जडतायां गतस्मृतिः॥
अकाण्डे दत्तहुङ्कारा तथा प्रशिथिलाङ्गका।
श्वासग्रस्ताननना चैव जडताभिनये भवेत्॥

भरतः

जनकः—देशीतालः

जनकाभिधताले स्यान्नयसेभ्यः परं गुरुः।
री सा गा री गा मा पा मा ध नि स री ग री—
I I I I S S I I S S

जगः

परस्मिन् जनके बाणाः चत्वारः कार्मुकानि षट्।
I I I I S S S S S S

गोपतिप्पः

जनरञ्जनी—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म प ध प नि स.
(अव) स ध प म रि स.

मज

जनवराली—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स ग रि ग म ध नि ध स.
(अव) स नि ध प म ग म रि ग म रि स.

मज

जनानन्दिनी—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग रि ग म प नि ध प.
(अव) स नि ध प म रि ग म रि स.

मज

जनान्तिकम्—नाट्यधर्मी

त्रिपताककरेणान्यामपवार्यान्तरा कथाम्।
अनन्यामन्त्रणं यत्स्यात्तज्जनान्ते जनान्तिकम्॥

रसिकरसायने

जनान्दोलिका—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स ग रि ग म प नि ध नि प ध नि स.
(अव) स नि ध म ग रि ग म स.

मज

जनितम्—करणम्

जनितायाः करो यत्र लताख्यो दक्षिणो भवेत्।
जनितं तत्समस्तानां क्रियाणां जनकं यतः॥

ज्यायनः

जनिता यत्र चारी स्यादेकस्तु खटकामुखः।
वक्षस्यन्यो लताहस्तः तदुक्तं जनितं बुधैः।
एतत्क्रियाणां सर्वासामारम्भे विनियुज्यते ॥
वेमः

जनिता यत्र चारी स्यान्मुष्टिर्वक्षस्स्थलेऽपरः।
करो लताकरस्तत्स्यादारम्भे जनितं करे ॥
अशोकः

## जनिता—चारी

एकस्समस्थितः पादस्ततोऽन्यस्तलसञ्चरः।
खटकामुखहस्तस्स्याद्वामोऽन्यस्तु लताकरः।
यत्र सा जनिता चारी कथिता नृत्तकोविदैः ॥
वेमः

## जपोन्नतिः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स ग प ध नि प स.
(अव) स नि प ध म म ग रि स.
मञ्ज

## जयः—देशीतालः

जये जोलो द्रुतौ प्लुतः। ।ऽ।।००ऽ
श्रीकण्ठः

जयताले लघुगुरू लौद्वौदौ प्लुतस्तथा। ।ऽ।।००ऽ
वेमः

नि धा सा नि ध पा सा गा री सा.
जग

ग्लुः प्लुतं गुपद्वैश्च जयतालो जयप्रदः। ऽ। ऽऽऽऽऽ
मदनः

## जयघण्टा—तालवाद्यम्

जयघण्टा कांस्यमयी दैर्घ्ये हस्तेन सम्मिता।
पिण्डे त्वर्धाङ्गुलमिता वर्तुला मसृणा समा ॥
अस्याः पर्यन्तकलिते रन्ध्रयुग्मे निवेशिताम्।
दृढां द्विगुणितां रज्जुं धृत्वा वामेन पाणिना ॥
दक्षिणस्थेन कोणेन ताडयेज्जयघण्टिकाम्।
जायन्ते जयघण्टायां पाटा देङ्कारवन्धुराः ॥
वेमः

स्थितेन कोणेन तु डेङ्कृतीति
पाटाक्षरोल्लासितनिस्वनाढ्या।
तथैव पाटान्तरवर्णवर्णा
विचित्रवर्णामिह वादयेत्ताम्।
तालादिकेष्वत्र सुजातहेम-
पत्रोपलेपं विदधीत विद्वान् ॥
कुम्भः

## जयनारायणी—मेलरागः

(आ) स ० रि ० ग म ० प ध ० ० ० स.
(अव) स नि ० ० ध प ० म ग ० ० रि स
मेललक्षणे

## जयन्तम्—करणम्

करावर्धपताकाख्यौ पुरस्ताद्विनिवेशितौ।
डोलितश्चरणस्त्वेकस्त्वन्यो विषमसञ्चरः।
एवं यत्र भवेत्तद्धि जयन्तं करणं मतम् ॥
हरिपालः

## जयन्तः—गीतालङ्कारः ध्रुवभेदः

आदितालो जयन्तः स्याच्छृङ्गाररससंयुतः।
रुद्रसंख्याक्षरपदैरायुर्वृद्धिकरः परः।
एक एव लघुर्यस्मिन्नादितालस्स कथ्यते ॥
संगीतसारः

## जयन्ती—मेलरागः

जयन्त्यामपि पूर्णायां निषादो वक्र उच्यते।
वक्रो रागगतिः। भैरवीमेलजो रागः।
परमेश्वरः

## जयप्रियः—गीतालङ्कारः (मठ्यभेदः)

लघुर्गुरुर्लघुर्यत्र स तालो हंसकः स्मृतः।
तालश्चायं रसे वीरे कर्तव्यो जयमठ्यके ॥
संगीतसारः

## —देशीतालः

अथ ताले जयप्रिये। भगणो द्वयं प्रोक्तम्। ऽ।।००
कुम्भः

## जयप्रियमण्ठः—तालः

मण्ठके जयप्रिये ज्ञेयो जगणश्च प्रयोगतः। ।ऽ।
वेदः

## —देशीतालः-

जयप्रियाभिधो मण्ठो जगणेनेह कीर्तितः। ।ऽ।
कुम्भः

## जयमङ्गलः—गीतालङ्कारः (ध्रुवभेदः)

द्विघ्नद्वादशवर्णाङ्घ्रिस्ताले वै झम्पके भवेत्।
वीरशृङ्गाररसयोः जयकृज्जयमङ्गलः।
द्रुतद्वयं विरामान्तं लघुनैकेन झम्पकः ॥
संगीतसारः

## —देशीतालः

लघुद्वयं गुरुर्लौ च गुरुश्च जयमङ्गले। ।।ऽ।।ऽ
वेमः

जयमनोहरी—मेलरागः ( खरहरप्रियामेलजन्यः )

( आ ) स रि ग म ध स .

( अव ) स नि प म ग रि स .

मज

जयमल्लः—देशीतालः

जगणो लो द्रुतौ पश्च जयमल्ल इति श्रुते ।

९ मात्राः ।

तालप्रस्तारः

जयमाला—प्रबन्धः

जयमाला प्रगातव्या जयतालमनोहरा ।
जयादिपदसंबद्धा द्विधा सा भिन्नलक्षणा ॥
मेदिनी नन्दिनी प्रोक्ता ततो बृन्दावनी क्रमात् ।
मेदिनी जयतालेन तेनान्येन च नन्दिनी ॥
बृन्दावनी च विख्याता जयेनान्यद्वयेन च ।
गद्यपद्यप्रबन्धेन गातव्यो गीतकोविदैः ॥

श्रीकण्ठः

यस्योद्ग्राहादयो भङ्गैः पदैर्जयपदादिकैः ।
रच्यते जयमालाख्यप्रबन्धस्स पुनस्त्रिधा ॥
मेदिनी नन्दिनी बृन्दावनीत्येतासु मेदिनी ।
प्रगीता जयतालेन नन्दिन्यन्ये तु केचन ॥
बृन्दावनी जयेनान्यतालाभ्यामपि गीयते ।
एतत्त्रयमपि द्वेधा प्रत्येकं गद्यपद्यतः ।
पदैरन्यैरिहाभोगो भवतीत्यूचिरे परे ॥

पण्डितमण्डली

पदैर्जयादिकैर्गेया जयतालेन संयुता ।
जयमाला भवेदेवं देवतानन्ददायिका ॥

हरिपालः

इयं त्रिविधा, जयनन्दिब्रह्मातालैश्च । पुनः गद्यपद्यप्रभेदेन सा द्विधा ।

सोमेश्वरः

—देशीतालः

जयमाला द्लौ गपौ । ०।ऽऽ

श्रीकण्ठः

जयमोहनम्—मेलरागः ( गमनश्रममेलजन्यः )

( आ ) स ग म प ध स .

( अव ) स नि ध प म ग रि स .

मज

जयरामः—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

( आ ) स रि ग म प ध नि स .

( अव ) स नि ध प म ग स .

मज

जयश्रीः—प्रबन्धः

अयमेव विजयश्रीः ।

यस्योद्ग्राहादयो बद्धाः पदैस्तेनैः स्वरैस्तथा ।
विरुदैरपि गीयन्ते तालेन च जयश्रिया ॥
विजयश्रीप्रबन्धश्च न्यासस्तालद्विमानतः ।
आभोगः स्वपदैरन्यैः कर्तव्य इति केचन ॥

पण्डितमण्डली

—देशीतालः

जयश्रीनाम्नि ताले तु क्रमेण गलगा लगौ । ऽ।ऽ।ऽ

वेमः

—मेलरागः

कोमलाख्यौ रिधौ यत्र गनी च तीव्रसंज्ञितौ ।
मस्तीव्रतरसंज्ञः स्याज्जयश्रीनामके पुनः ।
आरोहणे रिधौ नस्तो निस्वरोद्ग्राहमण्डिते ॥

प्रथमप्रहरोत्तरगेया ।

अहोबिलः

जयसिंहः

अयं त्रिभुवनमल्ल इति प्रसिद्धश्चक्रवर्ती स्यात् । एतन्नामानो बहव आसन् । एतदीयग्रन्थो नाद्यापि लब्धः । हम्मीरेण शृङ्गारसारे अस्य नाम गृहीतम् । त्रिभुवनमल्ल एकादशशतके चक्रवर्त्यासीत् । पश्चिमचालुक्यचक्रवर्ती चायं कल्याणनगरसचिवसतिस्म ।

जया—ध्रुवावृत्तम्

चतुरक्षरा । प्रथमतृतीययोर्लघुः ।

अधमानां प्रयोक्तव्या काकुभेन जया सदा ।
अत्र चाचपुटस्तालः पाटाक्षरसमन्वितः ॥

(उदा) वणन्तरे (छाया) वनान्तरे—

नान्यः

काकुभेनेति कक्कुभरागस्य भाषास्वन्यतमेन रागेण ।

श्रुतिः

ऋषभस्य द्वितीया श्रुतिः ।

भूपः

जयानन्दः—देशीतालः

जयानन्दे सगौ मतौ । ।।ऽऽऽ

मदनः

जयाभरणं—मेलरागः ( सूर्यकान्तमेलजन्यः )

( आं ) स रि ग म प ध नि स .

( अव ) स ध नि प म रि ग म रि स .

मज

**जर्जरः**

इन्द्रध्वजरूपः वेणुनिर्मित अष्टोत्तरशताङ्गुलप्रमितः पञ्चपर्वा चतुर्ग्रन्थिस्तालप्रमाणः।

**जर्जरपूजा**

पञ्चपर्वयुतो वंशो जर्जरः परिकीर्तितः।
ऊर्ध्वपर्वणि शुक्लः स्यात्तदधो नीलवर्णकः॥
ततः पीतस्ततो रक्तश्चित्रवर्णस्ततः परम्।
सर्ववर्णपताकाभिस्सर्वतस्समलङ्कृतः॥

शुभङ्करः

**जर्जरस्तुतिः**

ब्रह्मणाभिहितश्शक्रः सुराधीशो ध्वजेन हि।
जर्जरानकरोद्विघ्नान् तेनोक्ता जर्जरस्तुतिः॥

जर्जर इति शक्रध्वजस्य पूर्वाचार्यदर्शितः संज्ञाशब्दः।

सागरः

**जलक्रीडा**—संगीतशृङ्गाराङ्गम्

नद्यादौ मज्जनविलासो जलक्रीडा।

भोजः

**जलशयनम्**—उत्प्लुतिकरणम्

विधाय दर्पसरणं तदन्ते जलशायिवत्।
शयितं भुवि यत्प्रोक्तं तद्वारिशयनं बुधैः॥

वेमः

**जलशेखरः**—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

( आ ) स रि ग म प ध नि स.
( अव ) स नि ध प म नि ध म ग रि म ग स.

मञ्ज

**जला**—ध्रुवावृत्तम्

आद्ये चतुर्थक-
मन्त्ये तथा गुरुः।
यस्यास्तु पादतो
ज्ञेया हि सा जला॥

( तरगणौ )

एसा हि वावुणा = एषा हि वायुना।

मध्यमाधमपात्राणां जला मालवपञ्चमे।
पञ्चवक्त्रश्च करुणे पादाक्षरविनिर्मितः॥

नान्यः

**जलार्णवः**—मेलकर्ता ( रागः )

स रि ग ० ० ० म प ध ० नि ० स.

मञ्ज

**जवः**—वर्णालङ्कारः

सरिगमपधनि, सनिधपमगरिस, सरिगमपधनि, धपमगरिस, सरिगमपध, पमगरिस, सरिगमप, मगरिस, सरिगमगरिस, सरिगरिस, सरिस, स.

प्रतापसिंहः

**जाजीवसन्तः**—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

( आ ) स रि ग म प ध नि स.
( अव ) स ध प म ग रि स.

मञ्ज

**जाड्यम्**

जाड्यमस्थिरचित्तत्वम्।

भावविवेकः

—चित्राभिनयः

हृदये मुकुलं बध्वा पुरोभागे त्वमङ्गलः।
कर्णस्थाने सूचिहस्त इष्टानिष्टश्रुतौ भवेत्॥
पुरोभागे कर्तरी तु चालिता विरहार्थके।
ऊर्ध्वाधोभागचलितो मयूरो वर्षदर्शने॥

विनायकः

**जातयः**

द्वाभ्यां त्रिभिश्चतुर्भिर्वा स्वरैर्जातिस्तु जायते।

फणिशशमार्जारवानरश्वशिवकोकिलाः द्विस्वरसम्मिताः शुद्धाः। अजसूकरवृषहरिणरुर्वश्वा षट्त्रिस्वरसम्मिताः विकृतजातयः। मयूरव्याघ्रमातङ्गमानुषपञ्चास्याः पञ्चचतुःस्वरमिश्राः सङ्करजातयः।

तेषां लक्षणं प्रत्येकं वक्ष्यते।

औमापतम्

**जातिः**—तालप्राणः

अनुगायामिते धर्मकारणं जातिरुच्यते।

व्याख्या –

अनुगतबुद्धेः कारणं धर्मो जातिः।

अयं मनुष्यः मनुष्येष्वयं विप्रः इत्यनुगतबुद्धिः। तथैव तालेऽपि चतुरश्रत्र्यश्रादिबुद्धिः।

चतुरश्रस्तथा त्र्यश्र इति तालो द्विधा मतः।
चच्चत्पुटश्चाचपुट इति नाम तयोः क्रमात्।
अन्येषां चैव सङ्कीर्णं गान्धर्वेऽभिदधुर्बुधाः॥

व्याख्या – अन्येषां षट्पितापुत्रकादीनां समुद्भवः सङ्कीर्णो न नाट्ये प्रयोज्याः। गान्धर्व एव प्रयुक्ताः।

अच्युतरायः

अस्मिन् विषये जैनमतचूडामणिमततालकलाविलासादिमतानामसामञ्जस्यं अच्युतरायानुक्तं खण्डितं च यद्यपेक्षा तत्र पश्यन्तु विपश्चितः।

ग्रन्थकर्ता

अनुगतबुद्धेः कारणं धर्मो जातिः। अयं मनुष्यः मनुष्येष्वयं विप्रः। तथैवायं तालः चतुरश्र इत्यादिबुद्धिः।

चतुरश्रस्तथा त्र्यश्र इति तालो द्विधा मतः।
चच्चत्पुटश्चाचपुट इति नाम तयोः क्रमात्॥
युग्मस्य ये त्रयो भेदाः षड्युग्मस्य प्रकीर्तिताः।
तेषामन्योन्यसंसर्गात्सङ्कीर्णा बहवो मताः॥

अयं भावः – युग्मस्य चच्चत्पुटचाचपुटयोः त्रयो भेदाः, एककलः, द्विकलः, चतुष्कल इति। चच्चत्पुटचतुष्कलस्य षोडश गुरवः। द्विगुणवर्धमाने चतुष्कले द्वात्रिंशत्। तस्य द्विगुणितस्य पुनश्चतुष्षष्टिः पुनर्द्विगुणितश्चतुष्कलोऽष्टाविंशत्युत्तरशतगुरुको भवति। अयं द्विगुणक्रमः। तथैव लघुश्चेदष्टौ लघवः एककलः। अष्टौ गुरवो द्विकलः। षोडशगुरवश्चतुष्कलः इति त्रयो भेदाः। आहत्य नव भेदाः। तथैव चाचपुटोऽपि नवभेदः स्यात्। तयोरन्योन्यसंबन्धात् बहवः सङ्कीर्णा जायन्ते। सङ्कीर्णजातेः पञ्च सप्त नव दशैकादश द्वादश वा कलाः। यथा –

चतुरश्रत्र्यश्रयोरर्धमिश्रणात् पञ्चगुरुः सङ्कीर्णः प्रभवति। चतुरश्रत्र्यश्रचतुरश्रार्धमिश्रणात् नवगुरुः सङ्कीर्णः। सप्तकेन सह त्र्यश्रमिश्रणाद् दशगुरुस्सङ्कीर्णः। एवमन्यत्र। केचित्तु चतुर्दशपञ्चदशषोडशसप्तदशगुरुका इति चतुर्धा सङ्कीर्णतालमाहुः। षट्पितापुत्रकादितालानां समुद्भूतं सङ्कीर्णत्वं न नाट्ये प्रयोज्यमिति केचिदाहुः। तन्मते सङ्कीर्णजातिर्गान्धर्व एव प्रयुक्ता। ननु चतुरश्रत्र्यश्रखण्डसङ्कीर्णमिश्रा इति जातयः पञ्च वर्तन्ते। न, मिश्रस्तु न जातिः।

तालजातिश्चतुर्धा स्यान्मिश्रस्तु न पृथग्भवेत्।

इति शार्ङ्गदेवः। तत्र शते पञ्चाशन्न्यायेन चतुरश्रस्य संग्रहे। त्र्यश्रोऽपि संगृहीतस्स्यात्ततोऽपि सम उच्यते। तदेतन्मतमप्यसत्।

मिश्रादिशब्दसामर्थ्यान्मिश्रः सङ्कीर्णखण्डयोः।
अन्तर्भावे तयोस्तस्मात्पृथक्त्वं नोपपद्यते॥

चूडामणिकारस्तु –

चतुरश्रादिशब्दानां योगरूढ्या प्रवर्तनात्।
चतुरश्रादिजातीनां न परस्परसङ्करः॥ इति।

जातिभ्रष्टाश्च ये तालाः मालातालाः प्रकीर्तिताः।
अव्यक्तसंहिताः पञ्चजातयः पूर्वचोदिताः।
एकादशादिभेदेन मालातालाः प्रकीर्तिताः॥

अयं भावः – अव्यक्तसंहिता इति। पूर्वोक्तनियमेन विना एकैकेनानुद्रुतेन सहवर्तते चेन्मालाजातिः।

अच्युतरायः

## जातिः

इदानीं सर्वपूर्वोक्तवाद्यवस्तु प्रजीवनात्।
जायमाना जातीरष्टादश ब्रूमस्सलक्षणाः॥
यदा ह्यष्टादशविधाः प्रोक्ता गीतिषु जातयः।
वाद्येष्वपि च विज्ञेयाः तथाष्टादश जातयः॥
रसभावप्रकृत्यादिविशेषप्रतिपत्तयः।
जायन्ते जातिभिर्व्यक्ताः ताः प्राह भरतो यथा॥

नान्यः

तत्र केयं जातिर्नाम। उच्यते – स्वरा एव विशिष्टाः सन्निवेशभाजो रक्तिमदृष्टाभ्युदयं च जनयन्तो जातिरित्युक्ताः। कोऽसौ सन्निवेश इति चेज्जातिलक्षणेन दशकेन भवति सन्निवेशः।

अभिनवगुप्तः

श्रुतिग्रहस्वरादिसमूहाज्जायन्ते जातयः। अतो जातय इत्युच्यन्ते। यस्माज्जायते रसप्रतीतिरारभ्यत इति जातयः। अथवा सकलस्य रागादेः जन्महेतुत्वाज्जातय इति। यद्वा जातय इव जातयः। यथा – नराणां ब्राह्मणत्वादयो जातयः। शुद्धाश्च विकृताश्चैवमत्रापि जातिलक्षणम्। जातिर्द्विधा शुद्धा विकृता च शुद्धा सप्तविधा। विकृता एकादशविधा।

मतङ्गः

षाड्जयार्षभी च गान्धारी मध्यमा पञ्चमी तथा।
धैवती च निषादी च सप्त शुद्धाः प्रकीर्तिताः॥

नान्यः

विकृतास्तु –

षड्जकैशिकी, आन्ध्री, गान्धारपञ्चमी, कैशिकी, षड्जोदीच्यवती, नन्दयन्ती, कार्मारवी, गान्धारोदीच्यवा, मध्यमोदीच्यवा, रक्तगान्धारी, षड्जमध्या इत्येकादशविधा।

पुष्करवाद्ये यतिलयपाणिप्रभृतिसंयुक्तं वादनं तस्यां जात्यामष्टादशभेदाः सन्ति। भरतग्रन्थे पाठभेदेन त्रीणि प्रत्येकं मतानि दृश्यन्ते। तेषां नामनिर्वचने च मिद्येते।

—गीताङ्गम्

अष्टादशविधा जातिः।

ग्रहांशादिदृढज्ञानं कुर्वन्त्येतास्तु जातयः।

कृष्णदासः

## जातिप्रयोजनम्

उक्ताः किलाष्टादशजातयस्ता ब्रह्मोदितैरेव पदैः प्रयुक्ताः ।
शशाङ्कमौलेः स्तवने पुनन्ति सद्योमहापातकिनोऽपि मर्त्यान् ॥
यथैव सामानि ऋचो यजूंषि नैवान्यथा कैश्चिदिह क्रियन्ते ।
सामप्रभूता अपि जातयोऽमूः इहान्यथाष्टादश नैव कार्याः ।
प्रयुज्यमानास्तु यथावदेताः श्रेयांसि भूयांसि दिशन्ति सद्यः ॥

रघुनाथः

## जातिभाषा—पाठ्यभाषा

द्विविधा जातिभाषा च प्रयोगे समुदाहृता ।
म्लेच्छशब्दोपचारा च भारतं वर्षमाश्रिता ॥

भरतः

## जातिभेदहेतुः

आभ्योऽष्टादशजातिभ्यः सप्तस्वराख्याश्चोक्ता द्विधा उक्ताः शुद्धा विकृताश्चेति । तत्र शुद्धाः अन्यूनस्वरांशग्रहन्यासापन्यासाश्च । एभ्यो लक्षणेभ्योऽन्यतमेन द्वाभ्यां बहुभिर्वा लक्षणैर्विकृतिमुपगता न्यासवर्जं विकृतसंज्ञा भवन्ति । तत्र न्यासविधौ शुद्धासु न्यासो नियमेन मन्द्रो भवति । विकृतासु च तारो वा मन्द्रो वा भवतीत्यनियमः । तत्र शुद्धानां जातीनां शुद्धत्वं विकृतत्वं च रूपद्वयमस्ति । एकादशसु विकृतासु च जातिषु विकृतत्वमेव रूपं भवति ।

मतङ्गः

## जातिलक्षणम्

ग्रहांशौ तारमन्द्रौ च न्यासापन्यास एव च ।
अल्पत्वं च बहुत्वं च षाडवौडुविते तथा ।
एवमेता बुधैर्ज्ञेया जातयो दशलक्षणाः ॥

भरतः

## जातिवक्त्रम्

वंशे फूत्काररन्ध्रम् ।

## जातिविकृतत्वम्

आर्षभीं धैवतीं त्यक्त्वा पञ्चभ्यः कैशिकी भवेत् ।

हम्मीरः

निषादिका पञ्चमिका गान्धारी चाथ मध्यमा ।
चतस्रो रक्तगान्धार्याः कारणं जातयस्तु ताः ।
योगाद्धैवतिकाषाड्जयोर्जायते कैशिकी तथा ॥

नान्यः

षाड्जीगान्धारिकायोगाज्जायते षड्जकैशिकी ।
षड्जिकामध्यमाभ्यां तु जायते षड्जमध्यमा ॥
गान्धारीपञ्चमाभ्यां तु जाता गान्धारपञ्चमी ।
गान्धार्यार्षभिकाभ्यां तु जातिरान्ध्री प्रजायते ॥
षाड्जी गान्धारिका तद्वत् धैवतीमिलितास्त्विमाः ।
षड्जोदीच्यवतीं जातिं कुर्युः कार्मारवीं पुनः ॥
उत्पादयन्ति नैषादीं पञ्चम्यार्षभिका युता ।
नन्दयन्ती तु गान्धारीपञ्चम्यार्षभिकान्विता ॥
गान्धारी धैवती षाड्जी मध्यमेति युतास्त्विमाः ।
गान्धारोदीच्यवां कुर्युर्मध्यमोदीच्यवां पुनः ॥
एता एव विना षाड्ज्यो पञ्चम्या सह कुर्वते ।
कुर्युस्तारात्तु गान्धारी नैषादी न च धैवती ॥

## जातीनां ग्रामविभागः

षड्जग्रामोद्भवास्सा तु षाड्जी चार्षभिका ततः ।
नैषादी धैवती षड्जोदीच्यवा षड्जकैशिकी ॥
षड्जमध्येति विज्ञेया मध्यमग्रामजाः पुनः ।
एकादशापि वक्ष्यामो गान्धारी मध्यमा तथा ॥
गान्धारोदीच्यवा रक्तगान्धारी पञ्चमी परा ।
मध्यमोदीच्यवा नन्दयन्ती गान्धारपञ्चमी ।
कार्मारवी तथा चन्ध्री कैशिकी चेति ताः स्मृताः ॥

नान्यः

## जानु

नतोन्नते सम्मतं च विवृतं कुञ्चितं समम् ।
ततोऽर्धकुञ्चितं चेति जानूक्तं सप्तधा बुधैः ॥

अशोकः

## जानुगतम्—देशीस्थानम्

पूर्वाङ्गमीषदानम्रं जानुनी भूतलस्थिते ।
यत्र जानुगतं तत्तु देवताराधने भवेत् ॥ ।
होमे च दीनयाञ्चायां कुपितानां प्रसादने ।
क्षुद्रसत्वत्रासने च गूढं मृगविलोकने ॥

वेमः

वृषभासनतो भेदो ज्ञेयः सौष्ठववर्जनात् ।

विप्रदासः

## जानुपृष्ठभ्रमरी—तिरिपनृत्ताङ्गम्

चतुरश्रपताकौ तु प्रसृतौ पार्श्वयोस्ततः ।
दक्षिणश्चरणो वामजानुपृष्ठे स्थितो भवेत् ॥
शिखरौ स्तनयोरूर्ध्वं दक्षिणावर्ततस्ततः ।
यथाशक्त्या विधातव्या जानुपृष्ठभ्रमिर्भवेत् ॥

वेदः

## जानुभ्रमरी—तिरिपनृत्ताङ्गम्

कृत्वा कांस्यमयं पात्रं विस्तीर्णं सुदृढं पुनः ।
कण्ठद्वयसमायुक्तं समभूमौ निधापयेत् ॥

मध्ये तस्य क्षिपेत्तैलं जानुं तस्योपरि न्यसेत्।
द्वितीयं चरणं पृष्ठे प्रसार्य करयोर्युगम्॥
भूमिमालम्व्य गृह्णीयाद्भ्रमरीं प्रथमं पुनः।
पुनरेकेन हस्तेन भूमिमालम्व्य च भ्रमेत्॥
करं तमपि संहृत्य भ्रमेन्निश्शङ्कचेतसा।
कुलालचक्रवत्प्रोक्ता भ्रमर्यो वेगयोगतः॥
दशोत्तरास्तु शतशः सा जानुभ्रमरी मता।
मतङ्गस्य मते शेषः साधनात्साधको भवेत्॥

वेमः

—भ्रमरी

जानुभ्यामवनिं गत्वा भ्राम्येद्यत्र च सर्वतः।
रज्जुयन्त्रविमुक्तस्वदारुकन्दुकविभ्रमात्।
सा जानुभ्रमरी प्रोक्ता धीमता वेमभूभुजा॥

वेमः

## जानुवेष्टनम्—करणम्

दण्डपादाङ्घ्रिणा हस्तो यदि संवेष्टितं भवेत्।
तदीयश्चेत्तदा प्रोक्तं जानुवेष्टनकं नटैः॥

देवेन्द्रः

## जारमानम्—देशीनृत्तम् (उड्डुपाङ्गम्)

उत्कटस्थानके तत्स्यात्खण्डसूच्यावनीं व्रजेत्।
आदितालेन वामोर्ध्वत्रिपताकोऽथ दक्षिणः॥
हस्तः पार्श्वगतस्तिर्यक् त्रिपताकस्तथाविदम्।
दक्षिणाङ्गे द्विवारं स्याच्चतुरश्रं ततः श्रयेत्॥
सव्यवामपताकौ च स्वे स्वे पार्श्वे प्रसारयेत्।
गृहीत्वा तिरिपं पश्चादेवमङ्गान्तरेण तु॥
भवत्येवं सम्मुखं च सव्यास्यो दक्षिणां गतः।
गृहीत्वा पूर्ववद्दक्षपादं वामस्तु संस्थितः॥
तेनैवाङ्गेन तिरिपस्ततो वाममुखो भवेत्।
गृह्णीयात्पूर्ववत्सर्वं वामपादोपरि स्थितः॥
दक्षभागस्तु तिरिपो दक्षिणावर्ततो भवेत्।
ततः सम्मुखमास्थाय समसूच्यां पताकयोः॥
प्रसारणं तु हृदये शिखरद्वयमाचरेत्।
एवं द्विवारं कृत्वा च दक्षपादं निवेशयेत्॥
उपरिष्टाद्वामजानोर्दक्षिणावर्ततो भ्रमेत्।
मण्डिभ्रमरीका सा स्यादेवमङ्गान्तरे भवेत्॥
ततो वामाङ्घ्रिसूचीं च वामपार्श्वे प्रसारयेत्।
अलपद्मद्वयं दक्षपार्श्वतश्च प्रसारयेत्॥
ततस्सव्यपदे सूचीं सव्यपार्श्वे प्रसारयेत्।
परिवृत्यालपद्मौ च वामपार्श्वे प्रसारयेत्॥
अलपद्मस्वस्तिकं तद्विधाय वामपार्श्वतः।
अलपद्मद्वयं दक्षपादसूच्या सहैव तु॥
भ्रामयन्मण्डलाकारमुल्वणौ वामपार्श्वतः।
कृत्वा दक्षिणसूच्याश्च वलनत्रयमाचरेत्॥
ततः पताकप्रसरं सव्यं कृत्वा तकारणम्।
हृदि वामं च शिखरं तदा स्याज्जारमानकम्॥

वेदः

## जाराङ्गी—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग प ध नि स.
(अव) स नि ध प ग रि स.

मज

## जारुः

अयमान्ध्रभाषाशब्दः।

तन्त्रीस्फोटने चमत्कारः। क्षिप्रापसर्पणम्।

## जालपु—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) प ध नि स रि ग म प ध.
(अव) प म ग रि स नि ध प ग म.

मज

## जिष्णुः—तानः

मध्यमग्रामे नारदीयतानः।

ग म प नि स.

नान्यः

## जिह्मा—दृष्टिः

गूढाधोनिपतत्तारा शनैस्तिर्यग्विलोकनैः।
आकुञ्चितपुटापाङ्गा दृष्टिर्जिह्माभिधा मता।
असूयालस्ययोः कार्या जडतायां च नर्तकैः॥

विप्रदासः

जडतालस्ययोरेषा स्यादसूयावहित्थयोः।

वेमः

## जीमूतः—रागः

न्यासांशकग्रहविधावृषभेण नित्यं
युक्तश्च पञ्चमनिषादरवेण युक्तः।
स्यात्कुन्तिमाविनत तानयुतोत्तराङ्गो
जीमूत इत्यभिहितोऽद्भुतवीरयोर्यः॥

नान्यः

ऋषभांशग्रहन्यासः तदपन्याससंयुतः ।
निषादपञ्चमोपेतो रागो जीमूत इष्यते ॥

याष्टिकः

—ग्रामः

ग्रामशब्दे द्रष्टव्यम् ।

जीवकः—तानः

षड्जग्रामे नारदीयतानः ।
ग म प नि स .

नान्यः

जीवनः—तानः

षड्जग्रामे नारदीयतानः ।
स रि म प ध .

नान्यः

जीवन्तिनी—मेलरागः ( दिवामणिमेलजन्यः )

( आ ) स म प ध नि स .
( अव ) स नि प म ग स .

मञ्ज

जीवस्वरः

अंशस्वरोऽप्यसावेव जीवस्वर इति स्मृतः ।

तुलजः

जीवा—वीणाङ्गम्

नादं सञ्जीवयत्येषा यतो जीवा ततः स्मृता ।

कुम्भः

वीणालक्षणे द्रष्टव्यम् ।

तथा जीवा विधातव्या लग्ना नादे यथा भवेत् ।
यत्तया जीव्यते नादः तेन जीवेति सा मता ॥

पार्श्वदेवः

जीविकावसन्तः—मेलरागः ( खरहरप्रियामेलजन्यः )

( आ ) स रि म प ध स .
( अव ) स नि प म रि स .

मञ्ज

जुगुप्सा—स्थायिभावः

जुगुप्सानाम स्त्रीनीचप्रकृतिका । सा चाहृद्यदर्शनश्रवणपरिकीर्तनादिभिरुत्पद्यते । तस्यास्सर्वाङ्गसङ्कोचनिष्टीवनमुखविकूणनहृल्लेखादयोऽनुभावाः ।

नासाप्रच्छादने नेत्र गात्रसङ्कोचनेन च ।
उद्वेजनैस्सहृल्लेखैर्जुगुप्सामभिनिर्दिशेत् ॥

भरतः

जुगुप्सिता—दृष्टिः

सङ्कोचितपुटा मध्या दृष्टिर्निःपीततारका ।
लक्ष्यावलोकनोद्विग्ना जुगुप्सायां जुगुप्सिता ॥

सोमेश्वरः

जुञ्जोटी—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

( आ ) स नि ध स रि ग म प ध नि .
( अव ) ध प म ग रि स नि ध प ध स .

मञ्ज

जुवाहुला—मेलरागः ( गायनप्रियमेलजन्यः )

( आ ) स रि म प नि ध नि स .
( अव ) स नि ध प म ग स .

मञ्ज

जेकनिकः—मेलरागः ( मायामालवगौलमेलजन्यः )

( आ ) स म ग म प ध नि स .
( अव ) स नि प म ग रि स .

मञ्ज

जैताश्रीः—रागध्यानम्

एषा माधुरवेषा विशेषपटुरकटुदेशभाषाभृत् ।
स्वेशे मदनावेशं करोत्यलेशेन जैताश्रीः ॥

सोमनाथः

जोगिभैरवी—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

( आ ) स रि गं म प नि ध नि स .
( अव ) स ध प म रि ग रि स .

मञ्ज

जोगी—मेलरागः ( मायामालवगौलमेलजन्यः )

( आ ) स रि म प ध स .
( अव ) स ध नि ध प म ग म ग रि स .

मञ्ज

जोडः—धानवलागनृत्तम्

देङ्कीपदद्वयं यत्र संयोज्योर्ध्वं पतेद्भुवि ।
तदा जोड इति ख्यातः कोहलेन मनीषिणा ॥

वेदः

जोडणी—वाद्यप्रबन्धः

यत्र प्रत्येकमुक्तानां पाटानां मेलनं भवेत् ।
स जोडणीति कथिता वाद्यविज्ञानशालिभिः ॥

वेमः

पाटानां पृथगुक्तानां मिश्रणाज्जोडणी मता।

शार्ङ्गः

—पाटवाद्यम्

एकोऽथवा द्वौ चत्वारो यद्वा चाष्टौ क्रमेण वा।
व्युत्क्रमेणाथवा खण्डाः खण्डतालविवर्जिताः।
प्रयुज्यन्ते यदा तज्ज्ञैः कथिता जोडणी तथा॥

वेमः

**जोम्वडी**—देशीतालः

जोम्वल्यां द्वौ विरङ्गमः। ० ๋०
(अस्य तालस्य नाम ग्रन्थान्तरे संवदनीयम्)

मदनः

**जोसीला**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि प ध नि स.
(अव) स ध प म ग रि स.

मज

**ज्यायसेनापतिः**

अयं काकतीयगणपतिमहाराजस्य गजसैन्याधिपतिः। अनेकानग्रहारान् शिवाय द्विजेभ्यश्च प्रादादिति तच्छिलाशासनेभ्यो गम्यते। कालः क्रै. प. १२४५। कवितायां वागस्यातिप्रौढा। अनेन नृत्तगीतवाद्यरत्नावलीनामकाः त्रयो ग्रन्था निर्मिताः। नृत्तगीतरत्नावल्यौ पण्डितमण्डल्या उदाहृते।

**ज्येष्ठः**—तानः

षड्जग्रामे नारदीयतानः।
नि रि ग म ध.

नान्यः

**ज्येष्ठाभिनयः**

पद्मकोशहस्तस्योत्तानकरणेन कर्तव्यः।

महाराष्ट्र

**ज्येष्ठासारितम्**—गीतम्

तस्मिन् त्रयः चतुष्कलषट्पितापुत्रकतालाः।
आदिमताले सप्तकलास्त्याज्याः। अन्त्ये प्लुतरूपसन्निपातः।

**ज्येष्ठाहस्तः**

(छत्रमण्डलाकृतिर्ज्येष्ठा)

पद्मकोशो ह्यधोगश्चेज्ज्येष्ठायां युज्यते बुधैः।
अधोग इत्युद्वेष्टिताधोमुखः।

शृङ्गारः

**ज्योतिष्टोमः**—तानः

षड्जग्रामे निगहीनौडुवः।
ध प म रि स.

कुम्भः

**ज्योतिष्मती**—मेलरागः (ज्योतिस्स्वरूपिणीमेलजन्यः)

(आ) स रि ग म प ध स.
(अव) स नि ध म प म ग रि स.

मज

**ज्योतिस्स्वरूपिणी**—मेलकर्ता

स रि ग ० ० म प ० ध नि स.

मज

**ज्योत्स्ना**—प्राकृते मात्रावृत्तम्

द्वौ पञ्चमात्रागणौ लगौ च।
५ + ५ + लग

विरहाङ्कः

—संगीतशृङ्गाराङ्गम्

चन्द्रातपो ज्योत्स्ना।

मोजः

**ज्वालकेसरी**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि म ध नि स.
(अव) स नि ध म ग रि स.

मज

**ज्ञानावतरणम्**—रूपकभेदः

ज्ञानावतरणं तत्र लक्ष्यते हरिभूभुजा।
चतुर्वर्गफला तत्र कथा दिव्याश्रया भवेत्॥
वृत्तयः पञ्च कर्तव्याः तावन्तः सन्धयस्तथा।
अङ्का दश पयोक्तव्याः...........॥

हरिपालः

**झङ्का**—देशीलास्याङ्गम्

पुरतः पार्श्वतो यद्वा किञ्चिदुद्धतिपूर्वकम्।
चलितं ललितं गात्रमाक्षिपन्ती विलासतः॥
सामाजिकानां हृदये व्याहरन्तीव नृत्यती।
यत्र सा कथिता झङ्का श्रीमता वेमभूभुजा॥

वेमः

**झङ्कारध्वनिः**—मेलकर्ता रागः

स ० रि ग ० म ० प ध नि ० ० स.

मज

**झङ्कारभ्रमरी**—मेलरागः (झङ्कारध्वनिमेलजन्यः)

(आ) स रि ग म प ध स.
(अव) स नि ध प म ग रि स.

मज

**झङ्कारवाणी**—मेलरागः ( नटभैरवीमेलजन्यः )

(आ) स ग रि ग म प नि स.
(अव) स नि ध प म रि स.

मञ्ज

**झङ्कृतिः**—देशीतालः

लपाभ्यां झङ्कृतिः प्रोक्ता। ।ऽ

कुम्भः

**झंझातालः**

एतौ पुनश्चेदधिकैर्भवेतां पुरोदितान्निम्नतलस्तदासौ।
झं झेति पाटाक्षरसंयुतत्वात् झं झादितालौ गदितौ पुराणैः॥

एतौ कांस्यतालौ।

कुम्भः

**झणालता**—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

(आ) स रि ग म प ध स.
(अव) स नि ध प ग रि स.

मञ्ज

**झर्डपणी**—पाटवाद्यम्

आदौ मध्येऽवसाने वा प्रयुज्यन्ते विचक्षणैः।
यत्र सर्वाणि वाद्यानि तामाख्यन्ति झर्डपणीम्॥

वेमः

**झम्पः**—देशीतालः

व्यन्तद्रुतौ लघुर्झम्पे। ०ॆ०।

मदनः

—ध्रुवालङ्कारः

झम्पातालेन संयुक्तो झंपालङ्कार उच्यते।
तत्र स्यान्नाट्यझंपायामादौ तावदनुद्रुतः॥
एकाक्षरमितः पश्चाद्द्रुतो व्यक्षरसम्मितः।
ततस्सप्ताक्षरीकालसम्मितो लघुशेखरः॥
वाग्गेयकारझम्पायां विरामान्तद्रुतो मतः।
त्र्यक्षरस्सपरं सप्ताक्षरोच्चारणसम्मितः॥
लघुशेखरनामैको झंपातालावुभाविमौ।
दशलघ्वक्षरोच्चारसम्मिताविति निर्णयः॥
अनयोरुभयोर्नाट्यझम्पा प्रामाणिकी स्मृता।
सरुग सरि सरि गमा, रिगमरिगरिगमपा॥

वेङ्कटमखी

**झम्पा**—ध्रुवतालः

झम्पा तालो द्विधा नाट्यवीणयोः परिदृश्यते।
तत्र स्यान्नाटयझंपायामादौ तावदनुद्रुतः॥
एकाक्षरमितः पश्चात् द्रुतो व्यक्षरसंमितः।
ततः सप्ताक्षरीकालसम्मितो लघुशेखरः॥
वाग्गेयकारझंपायां विरामान्तद्रुतो मतः।
त्र्यक्षरः सपरं सप्ताक्षरोच्चारणसम्मितः॥
लघुशेखरनामैको झंपातालावुभाविमौ।
दशलघ्वक्षरोच्चारसम्मिताविति निर्णयः॥

वेङ्कटमखी

**झम्पातालः**—देशीतालः

झम्पाताले लघुस्त्वेकः सविरामद्रुतद्वयम्। ।ॆ० ॆ०

सुधाकलशः

**झलवराली**—मेलकर्ता रागः

स रि ग ० ० ० म प ध ० ० नि स.

मञ्ज

**झल्लिका**—वीणावादने दोषः

कर्णास्फोटकरं वाद्यं झल्लिकेति निगद्यते।

कुम्भः

**झालकेसरी**—मेलरागः ( शुभपन्तुवरालीमेलजन्यः )

(आ) स रि म प ध नि स.
(अव) स ध प म रि स.

मञ्ज

**झालमञ्जरी**—मेलरागः ( खरहरप्रियामेलजन्यः )

(आ) स रि ग प ध नि स.
(अव) स नि प ध प म रि स रि स.

मञ्ज

**झोम्पटः**—ध्रुवालङ्कारः

झोम्पटाख्येन तालेन निबद्धो झोम्पटः स्मृतः।
तत्र झोम्पटताले द्विद्व्यक्षरौ द्वौ द्रुतौ ततः॥
लघुरेकः परिज्ञेयः चतुरक्षरसंम्मितः।
आहत्याष्टाक्षरमितो झोम्पटः स्याद्विमात्रकः॥

सरि. गम, पधनिस. सनिधप, मगरिस.

वेङ्कटमखी

—प्रबन्धः

अन्येऽपि भेदा विद्यन्ते झोम्पटस्य पुनस्त्रयः।
गद्यतः पद्यतश्चैव गद्यपद्यमयस्तथा॥
झोम्पटं पद्यजं चैव गद्यपद्यमयं तथा।
लघुशेखरताले स्युरन्येऽल्पगमकादयः॥
प्रतिमट्ठे तृतीये च मट्ठनिस्सारुके तथा।
चण्डनिस्सारुके चाथ पाटभेदतृतीयके।

एतेषु झोम्पटा गेया यत्प्रोक्ता लघुशेखरे।
कुडुकाख्येन तालेन झोम्पटो गीयते तदा॥
पदैरपि विना कार्या तथा भोगस्य कल्पना।
एवमष्टादश प्रोक्ता झोम्पटा गीतवेदिभिः।
सारङ्गप्रमुखास्संज्ञा विनियोगप्रभेदतः॥

अन्यमतेन विभागः।

नान्दिसंज्ञश्च रामश्च माधवः पुरुषोत्तमः।
नारायणष्षण्मुखश्च रौहिणेयस्सुधाकरः॥
साक्षेपश्चाथ रेवन्तो वासवः कुसुमाकरः।
बलभद्रो भृगुः कृष्णो कैरातेयस्तथापरः॥
विदूषको नारदश्च रुद्रः कमलसंभवः।
दामोदरो रूपकश्च कान्तयोगेश्वरा इति॥
तारजोऽतारजश्चेति झोम्पटे जातियुग्मकम्।
तारो ध्वनिस्समुद्दिष्टो गायकैस्स्थानकाख्यया॥
तेन तारेण संयुक्तो झोम्पटस्तारजस्स्मृतः।
तारजस्य परिज्ञेयं तत्र भेदचतुष्टयम्॥
तच्च दुष्करमेवोक्तं गीतविद्याविशारदैः।
अतारजस्य गीतज्ञैः भेदत्रितयमीरितम्॥
दुष्करं सुकरं चेति भिद्यते तदपि द्विधा।
प्रतापतिलकस्तत्र प्रथमः परिकीर्तितः॥
अन्यः प्रतापसङ्गस्स्यात्प्रतापोऽचलपूर्वकः।
प्रतापवर्धनश्चान्यत् चतस्रस्तारजे भिदा॥

जगदेकः

गणैकवृद्धयाष्टगणावसानः प्रयोगवान् प्रासविभूषितश्च।
स तालभेदाद्बहुधाप्रयुक्तो रसानुविद्धस्त्विह झोम्पटस्स्यात्॥

तस्य भेदाः। प्रायोगिकः, क्रमः, क्रमविलासः विचित्रः, विचित्रलीला इति पञ्चभेदाः।

नान्यः

वारद्वितयमुद्ग्राहः प्रथमं परिगीयते।
सकृद् द्वितीय उद्ग्राहो गीयते च ततो ध्रुवः॥
ध्रुवो वारद्वयं गेयः पश्चादाभोग इष्यते।
पुनर्गेयो ध्रुवः प्राज्ञैः गीतलक्षणवेदिभिः॥
मट्टकङ्कालतालाभ्यां प्रतितालेन वर्जितः।
अन्यस्तालः प्रयोक्तव्यो डोम्बटेर्लक्षणं त्विदम्॥
गारुडाख्येन तालेन द्वितीयेन तथैव च।
प्रतिमट्टाभिधानेन तृतीयेन तथैव च॥
अन्यो निस्सारुकेन स्यादेकतालिकया तथा।
षडमी झोम्पटास्सिद्धास्साम्प्रतं तालसंज्ञया॥ सोमेश्वरः

भाग एकोऽथ गातव्यो यथैव ध्वनिकुट्टनी।
उद्ग्राहस्स्यात्पदैरन्यैर्झोम्पटो गमकस्थितिः।
प्रासवृद्धियुतो गेयो झोम्पटो प्रभवेदिति॥

हरिपालः

—ध्रुवतालः

तत्र झोम्पटताले द्विद्व्यक्षरौ द्वौ द्रुतौ ततः।
लघुरेकः परिज्ञेयः चतुरक्षरसम्मितः।
आहत्याष्टाक्षरमितो झोम्पटः स्याद्द्विमात्रकः॥

वेङ्कटमखी

## ट

**टक्कैशिकः—रागः**

धैवतीमध्यमोद्भूतष्टक्कैशिकसंज्ञकः।
धैवतांशग्रहन्यासः काकल्यन्तरभूषितः॥

मोक्षदेवः

दैत्यावसाने शृङ्गारवीभत्सरससंश्रये।
स्वल्पसप्तमगान्धारो ग्रहांशार्पितधैवतः॥
अपन्यासो निगौ चैव विस्फुरदृषभस्वरः।
उत्तरायतमूर्छायां ताने सति सुवर्णके॥
मीनकेतुमहाकालदेवताभ्यामधिष्ठितः।
धैवतीमध्यमाजात्योर्जायते टक्कैशिकः॥

नान्यः

धैवतांशस्तदन्तश्च स्वल्पद्विश्रुतिकस्स्वरः।
मध्यमाधैवतीजात्योर्जायते टक्कैशिकः॥

कश्यपः

षड्जग्रामेण संबद्धो लक्ष्यते टक्कैशिकः।
षड्जमध्यमपूर्वाभ्यां ग्रामाभ्यामेव जायते॥
चतुःश्रुतिस्वरयुतो धैवतो ग्रहणेंऽशके।
न्यासे निषादगान्धारौ काकल्यन्तरसंयुतौ।
संपूर्णो लक्षितं चैव टक्कैशिकलक्षणम्॥

हरिः

**टक्करागः**

षड्जग्रामसमुद्भूतष्टक्करागो निरूप्यते।
षड्जो ग्रहेंऽशे न्यासे च निषादः पञ्चमो मतः॥
अल्पौ निषादगान्धारौ काकल्यन्तरसंयुतौ।
संपूर्णश्च भवेदेतत् टक्करागस्य लक्षणम्॥

हरिः

**—भाषारागः**

न्यासांशग्रहषड्जको........षाड्जिसंभवः।
स्वल्पस्त्रीकृतधैवतर्षभरवस्संवादिमध्यध्वनिः॥

वीरे रौद्ररसे च वा......तेवस्फुरज्जीवनो,
युक्तश्चोत्तरमन्द्रया............टक्करागः पुनः ॥

नान्यः

षड्जन्यासांशसंयुक्तो धैवतर्षभदुर्बलः ।
षड्जग्रामसमुद्भूतः टक्करागः प्रकीर्तितः ॥

कश्यपः

धैवतीषड्जमध्याभ्यां टक्करागस्समुत्थितः ।
षड्जांशन्याससंयुक्तः काकल्यन्तरभूषितः ।
वीररौद्राद्भुतरसौ गीयते स्वल्पपञ्चमः ॥

मोक्षः

न्यासोंऽशः पञ्चमस्त्वाद्वै अपन्यासश्च धैवतः ।
मध्यमोऽस्य स्वरस्स्वल्पो गान्धारस्सप्तमो यदि ॥
पञ्चमीषड्जमध्याभ्यां जातश्शृङ्गारहास्ययोः ।
जायते टक्करागाख्यः कन्दर्पगुणदैवतः ॥

नान्यः

स्यात् षड्जमध्यमाज्जातः पञ्चम्याश्च विनिर्गतः ।
टक्करागोऽल्पद्विश्रुतिः पञ्चमांशौ तु मध्यमः ॥

नारदः

**टक्कवेसरः**—रागः

षड्जन्यासांशसंयुक्तो धैवतीषाड्जिकोद्भवः ।
पञ्चमेन विहीनस्तु टक्करागस्तु वेसरः ॥

नान्यः

**टक्कसैन्धवः**—रागः

धैवतीषड्जिकाजात्योर्जायते टक्कसैन्धवः ।
षड्जांशन्याससंयुक्तो गेयः पञ्चमवर्जितः ॥

मोक्षः

**टक्कसैन्धवी**—रागः

षड्जान्ता मध्यमांशा च धैवतेन प्रदीपिता ।
गान्धारतारमन्द्रा च परिहीनाथवा भवेत् ।
सङ्ग्रामे विनियोज्येयं सैन्धवी टक्करागजा ॥

जगदेकः

**टक्का**—अवनद्धम्

अस्मादप्यधिका टक्का टेकारबहुला यतः ।

अस्मात् डमरुवाद्यात् ।

सोमेश्वरः

—मेलरागः ( धेनुकमेलजन्यः )

( आ ) स रि म ग म प ध नि स .
( अव ) नि ध प म ग रि ग स .

मञ्ज

**टङ्कमुखः**—देशीतालः

नजौ नभौ प्लुतश्चैव ताले टङ्कमुखाह्वये ।

१७ मात्राः ।

तालप्रस्तारः

**टङ्कारप्रिया**—मेलरागः ( गमनश्रयमेलजन्यः )

( आ ) स रि म ग म प ध नि स .
( अव ) स नि प म ग रि स .

मञ्ज

**टम्बकी**—अवनद्धम्

एवं विधा च या लघ्वी टम्बकी सा प्रकीर्तिता ।

एवं विधा निस्साणवदित्यर्थः ।

सोमेश्वरः

**टीपा**—वंशे वादनक्रमः

मुखसंयोगसाङ्कट्यवादिते मुखरन्ध्रके ।
टीपा पटीयसा चक्षुस्तं प्रकारं पुरातनाः ॥

कुम्भः

तारस्था मुखसंयोगसङ्कटे मुखरन्ध्रके ।
तं वादनप्रकारं च टीपामाचक्षते जनाः ॥

शार्ङ्गदेवः

**टीपिः**

टीपिरावृत्तिर्वर्णानां टिरिकीत्यभिसंज्ञिनाम् ।

कुम्भः

## ठ

**ठक्कः**—मेलरागः

रिधौ तु कोमलौ ज्ञेयावाभीरी मूर्छनायुते ।
आरोहे च धवर्ज्यं तं रागे ठक्काभिधानके ॥

तृतीयप्रहरोत्तरगेयः ।

अहोबिलः

**ठक्कसैन्धवः**—रागः

षड्जग्रामेण संबद्धो ठक्कसैन्धव उच्यते ।
षड्जग्रहांशकन्यासः पञ्चमाल्पस्सपूर्णकः ॥
काकलीस्वरसंयुक्तः स्याद्गान्धारनिषादयोः ।
निरूपितमिति स्पष्टं ठक्कसैन्धवलक्षणम् ॥

हरिः

**ठेवा**—देशीलास्याङ्गम्

यत्रोत्तरङ्गितौ शश्वदपाङ्गौ भावगर्भितौ ।
नर्तने मृगशावाक्ष्याः सा ठेवा कथिता बुधैः ॥

वेमः

### ड

**डमामा—अवनद्धवाद्यम्**

तम्बकीति नामान्तरम्।

**डमरी—देशीचारी**

जानुपर्यन्तमेकस्य पादमन्यन्तु कुञ्चितम्।
उत्क्षिप्यान्तर्बहिश्श्लिष्टं भ्रमणं डमरी भवेत्॥
जानुदघ्नं यमुत्क्षिप्य कुञ्चितं चरणं द्रुतम्।
यदान्तर्बहिरावृत्या भ्रामयेड्डमरी तदा॥

कुम्भोपि डमरीत्येव वक्ति।

ज्यायनः

**डमरुकम्**

वितस्तिमात्रः कर्तव्यः सोऽष्टाङ्गुलमुखद्वयः।
त्रिवलीवर्त्मना कक्षमध्ये डमरुको भवेत्॥
मुखयोश्चर्मणा नद्धो मण्डलीद्वयमण्डितः।
बद्धस्सूत्रगणैर्गाढं मध्ये चैव निपीडितः॥
अष्टाङ्गुलायतावन्यौ कार्यौ वर्दनगोलके।
मध्ये विधार्य हस्ताभ्यां वाद्यो डवडवाक्षरैः॥

सोमेश्वरः

करौ डमरुकाकारौ मस्तकावर्धरेचितौ।
पादौ समानसंयुक्तौ वलिता यत्र चेत्कटी।
एतड्डमरुकं नाम प्रोक्तं हरिमहीभुजा॥

हरिपालः

**डमरुकुट्टिता—मुडुपचारी**

पादश्चेत्कुट्टितः पूर्वं लुठितोऽङ्गुलिपृष्ठतः।
पश्चान्निकुट्टितः स्थाने तदा डमरुकुट्टिता॥

अशोकः

**डमरुद्वयकुट्टिता—मुडुपचारी**

पादयुग्मकृता सैव डमरुद्वयकुट्टिता।

सेति डमरुकुट्टिता।

अशोकः

**डमसः—अवनद्धम्**

सुपक्वं च घनं श्लक्ष्णमल्पवक्त्रं मनोहरम्।
चर्मणानद्धवदनं पाणिभ्यां वादयेद्दृढम्॥
वितस्तिद्वयदैर्घ्यः स्याद्द्वादशाङ्गुलवक्त्रकः।
षड्विंशति परीणाहो वल्लीवलयवेष्टितः॥
कवलानद्धवदनः सप्तरन्ध्रनियन्त्रितः।
सूत्ररज्वा दृढं बद्धो दक्षिणे कुडुपाहतः॥
वामे वामकराघातः स्कन्धकस्थानमञ्चितः।
डकारबहुलो वाद्यो डमसः परिकीर्तितः॥

सोमेश्वरः

**डालः—स्थलस्थध्याडनृत्तम्**

चतुस्तालान्तरौ पादौ पताकौ प्रसृतौ यदि।
पार्श्वयोरुद्धृतिं कृत्वा भ्रमयन्मस्तकोपरि॥
पार्श्वान्तरे दक्षिणेन पदा भूतलमाश्रयेत्।
यदा तदा डाल इति प्रथितः पूर्वसूरिभिः॥

वेदः

**—देशीलास्याङ्गम्**

किञ्चिचलत्करन्यस्तमुक्ताफलमनोहरम्।
नर्तने निभृतं गात्रचलनं डाल उच्यते॥

वेमः

**डिमः—रूपकम्**

षोडशनायकयुतः यथा—नरकोद्धरणम्। विख्यातवस्तुविषयः, यथा—वृत्रोद्धरणम्। दीप्तरसकाव्ययोनिः, प्रख्यातनायकः, मायाकुहकसम्पूर्णः, इन्द्रजालसमाकुलः, पिशाचसुरासुरयक्षरक्षोनागसङ्कुलः, उल्कापातावकीर्णः, कैशिकीवृत्तिहीनः, चतुरङ्कः, मुखप्रतिमुखगर्भनिर्वहणाख्यचतुस्सन्धिकः।

सागरनन्दी

शृङ्गारहास्यवर्ज्यं शेषैस्सर्वैं रसैस्समायुक्तः।
प्रख्यातवस्तुविषयः प्रख्यातोदात्तनायकश्चैव॥
रौद्रभयानकबीभत्सवीरकरुणाद्भुतोपेतः।
मायेन्द्रजालबहुलो बहुपुस्तोत्थानसंयुक्तः॥
निर्घातोल्कापातैरुपरागैश्चन्द्रसूर्ययोर्युक्तः।
युद्धनियुद्धनिबद्धः संफेटकृतश्च कर्तव्यः॥
सात्वत्यारभटीभ्यां वृत्तिभ्यामन्वितो डिमः कार्यः।
षोडशनायकबहुलः तद्ज्ञैर्नानाश्रयविशेषः॥

भोजः

अङ्गिरौद्ररसोपेतः बीभत्सादिनिरन्तरः।
सप्रवेशकविष्कम्भश्चतुरङ्को डिमः स्मृतः॥

इदं त्रिपुरदाहाख्ये लक्षणं ब्रह्मणोदितम्।
उदाहरणमेतस्य वृत्रोद्धरणमुच्यते।
तारकोद्धरणं तद्वत्तत्र तत्र विलोक्यताम्॥

शारदातनयः

रौद्रो रसोऽङ्गीकर्तव्यश्चत्वारोऽङ्कास्सविस्तराः।
दीर्घवृत्तिविचित्रार्थो निर्विमर्शो डिमो भवेत्॥

सर्वेश्वरः

डिमो डिम्बो विद्रव इति पर्यायाः । तद्योगादयं डिमः । अन्ये तु डयन्त इति डियः । उद्धतनायकाः । तेषामात्मनां वृत्तिर्यत्रेति । इको ह्रस्वोऽङ्यो गालवस्य इति ह्रस्वः । नानाश्रय इत्यनेन सर्वभावयुक्तत्वादिति वृत्तवैचित्र्यमाह । दिनचतुष्टयवृत्तमेवात्र प्रयोज्यम् । अङ्कावतार एव चात्र भवति । चूलिकाङ्कमुखयोः युद्धादिवर्णने समुपयोगोऽस्ति । वस्तुतः प्रवेशकादिनिषिद्धमेव ।

अभिनवगुप्तः

डिल्लायी—देशीलास्याङ्गम्

भावार्थहृदयं हेलामन्थरं मन्थसौष्टवम् ।
श्लथन्मधुरमङ्गं चेड्डिल्लायी कथिता मता ॥

वेमः

'मन्थं मधुरम्' । वेमो डिल्लायीत्याह ।

डेङ्की—प्रबन्धः

अस्याः पूर्वार्धमुद्ग्राहः स चावर्त्यत्र गीयते ।
समो वा विषमो वापि ग्रहेष्वेको भवेदिह ॥
ईषदेव द्वितीयार्धं पूर्ववद्गीयते बुधैः ।
ततो मेलापको गेयो मेलकोद्ग्रामयोरिति ।
डेङ्कीतालः प्रदर्श्यस्यादिति डेङ्की निरूपिता ॥

हरिपालः

डेङ्की चतुष्प्रकारा स्यात्तत्तन्मानं प्रचक्षते ।
मुक्तावली वृत्तमाला तृतीया वृत्तबन्धनी ॥
चतुर्थी युग्मिनी ज्ञेया तासां लक्षणमुच्यते ।
स्वेच्छया गृह्यते यत्र नादाक्षरसमन्विता ॥
तालशून्यस्ततस्तालो डेङ्कीका सा प्रकीर्तिता ।
इत्येतड्डेङ्किकालक्ष्म मतङ्गमुनिनोदितम् ।
तदसद्वृत्तवत्वेन लक्ष्यस्यादर्शनेन च ॥

जगदेकः

आदिमध्यावसानेषु ताल एकः प्रयुज्यते ।
द्रुतमध्यविलम्बेन मानेन तु विचक्षणैः ॥
उद्ग्राहेषु भवेद्यस्यास्समानं चरणद्वयम् ।
तृतीयश्च चतुर्थश्च गातव्यो भिन्नगीतकः ॥
वर्णनीयगुणोदारौ पादौ प्रासयुतौ ध्रुवौ ।
आभोगश्च ततः कार्यः स्वैरुच्चैरलंकृतः ॥
देवीनाम्ना समोपेतो नृपनाम्ना समन्वितः ।
रम्यं ललितमाभोगं प्रयुज्य तदनन्तरम् ॥
पुनर्ध्रुवं सकृद्गीत्वा ग्रहतालेन युज्यते ।
ग्रहे मेलापके मोक्षे कार्य एको यथारुचि ।
आदितालेऽथ कङ्कालः प्रतितालेऽथवा बुधैः ॥
ध्रुवे चैव तथाभोगे ताल एकः प्रयुज्यते ।
ग्रहतालं परित्यज्य योज्यस्तालो यथेच्छया ॥
एको रागो भवेदस्या तालद्वितयमेव हि ।
लक्ष्मेदं डेङ्किकायाश्च कथितं सोमभूभुजा ॥

सोमेश्वरः

डोचिली—तालः

बद्धापणदेशीतालस्य नामान्तरम् ।

डोचिलीतालो बुधैर्बद्धापणः स्मृतः ।
पृथक् लघुद्वयी तत्र सविरामा गता यथा ॥

कुम्भः

डोम्बकृतिः—भाषाङ्गरागः ( वीणायां वादनक्रमः )

मध्यषड्जं ग्रहं कृत्वा द्वीतीयस्वरमेत्य च ।
तृतीयं च द्वितीयं च विलम्ब्याथ ग्रहं स्पृशेत् ॥
ग्रहात्ततस्तृतीयं च तुरीयं च ततः परम् ।
तृतीयान्तं समेत्याथ स्थायिनि न्यस्यते यदा ॥
तदा डोम्बकृतिर्ज्ञेया भूपाली सैव सम्पदा ।
एतस्या मध्यमस्थापि लक्ष्यज्ञैः प्रायशः स्मृतः ॥

वेमः

—रागः

त्रवणाङ्गं डोम्बकृतिस्सांशा धान्ता रिपोज्झिता ।

हम्मीरः

डोम्बक्रिया—भाषाङ्गरागः

या भिन्नषड्जे त्रवणा तदङ्गं डोम्बक्रिया भूपतिनोपदिष्टा ।
सांशग्रहा धैवतविश्रमाढ्या विवर्जिता चर्षभपञ्चमाभ्याम् ॥
हेमन्तकाले प्रथमे दिनार्धे प्रगीयते वा करुणे रसे च ।
षड्जस्वरस्थानकृतावसाना तामेवरत्नाकरकृज्जगाद ॥

कुम्भः

—रागः

अतः परं भिन्नषड्जसमुद्भूता त्रावणी··· ।
तदङ्गं स्यात् डोम्बकृतिर्धैवतन्याससंयुता ॥
षड्जांशा पञ्चमेनापि ऋषभेण विवर्जिता ।
एवं डोम्बकृतिं प्राह विचारचतुराननः ॥

हरिः

धैवतांशग्रहन्यासां निजस्थाने प्रकम्पिताम् ।
पञ्चमर्षभहीनां च तज्ज्ञा डोम्बकृतिं विदुः ॥

सोमेश्वरः

धैवतांशग्रहन्यासां परिहीनां समस्वराम् ।
आगान्धारां तारमन्द्रां तज्ज्ञा डोम्बकृतिं विदुः ॥

त्रवणाया इवैतस्या ज्ञेयमालापरूपकम् ।
लक्षणाभिहितैर्भेदैः पृथक्भूता मनीषिभिः ॥

नान्यः

धैवतांशग्रहन्यासा त्रावण्यङ्गं समस्वरा ।
गतारमन्द्रा संत्यक्तरिपा डोम्बक्कृतिर्मता ॥

सोमराजः

भिन्नषड्जसमुद्भूता भाषा सा त्रवणाभिधा ।
अङ्गं डोम्बक्कृतिस्तस्या धैवतान्ता रिपोज्झिता ।
षड्जांशेन समायुक्ता दैन्ये तु विनियुज्यते ॥

जगदेकः

**डोम्बक्री**—भाषाङ्गरागः

षड्जग्रहो धैवतान्तो डोम्बक्री करुणे रसे ।
हेमन्तप्रहरे यामे गातव्या रिपवर्जिता ।
निग्रहांशनिषादान्तं डोम्बक्रीं मदनोऽभ्यदात् ॥

भट्टमाधवः

—रागः ( वंशे वादनक्रमः )

ग्रहं विधाय द्विगुणं षड्जं तत्प्राक्तनं स्वरम् ।
स्पृष्ट्वा कृत्वा तृतीयं तु पुनश्च स्थायिनं स्पृशेत् ॥
तत्परं च स्वरं प्रोच्य ततश्च स्फुरितौ स्वरौ ।
ग्रहतत्पूर्वकौ चोक्त्वा द्विस्त्रिवारं ततः परम् ॥
स्थायिस्वरे कम्पिते च यदा न्यासो विधीयते ।
तदा डोम्बकृतेः प्रोक्तं स्वस्थानं प्रथमं बुधैः ।
अस्याः स्थायी द्वितीयश्चेत् सा भूपाली निगद्यते ॥

वेमः

**डोम्बिका**

छन्नानुरागगर्भाभिरुक्तिभिर्यत्र भूपतेः ।
आवर्ज्यते मनस्सा तु मसृणाड्डोम्बिका मता ॥

अत्र मसृणशब्देन केवलं सुकुमारनृत्तं विवक्षितम् ।

वेमः

**डोम्बीः**—रागः

सादिमध्या निषादान्तो डोम्बीरपरियुक् चरा ।

अपरियुगिति रिषभपञ्चमस्वरशून्यत्वमुक्तम् ।

मदः

—नृत्तरूपकम्

भाणिकाया नामान्तरम् ।

**डोम्बुली**—देशीतालः

डोम्बुल्यां तु विरामान्ते लघुद्वन्द्वे उभे मते । ।ί।ί

वेमः

स सा रि गा . (जग)

**डोलम्**—चालकः

यत्र हस्तावुभौ न्यस्तावूर्ध्वाधोवदनक्रमात् ।
लीलया लुठतो डोलं चालकं तं बभाषिरे ॥

वेमः

**डोलः**—हस्तः

विरलाङ्गुली पताकौ चेल्लम्बमानौ श्लथांसकौ ।
तदा डोलाभिधो हस्तः विषादे मदमूर्छयोः ॥
व्याधौ च संभ्रमे गर्वगतावपि स युज्यते ।
धीरैः स्तब्धो डोलितो वा पार्श्वयोर्लोकयुक्तितः ॥

अशोकः

आस्कन्दाभ्यां श्लथौ स्यातां पताकौ पार्श्वलम्बितौ ।
यस्मिन्नेष भवेड्डोलो विषादे संभ्रमे मदे ।
अभिघातामयावेगमूर्छाशस्त्रक्षतादिषु ॥

ज्यायनः

विस्रस्तांसो लम्बमानः पार्श्वयोश्शिथिलाङ्गुलिः ।
पताको यत्र डोलोऽसौ विनियोगोऽस्य कथ्यते ॥
असकृद्भ्रमितः पश्चात् पुरतः संभ्रमे भवेत् ।
व्याधौ मदे विषादे च मूर्छादौ च यथोचितम् ।
हस्तोऽसौ विनियोक्तव्यो लोकज्ञैः नाट्यकर्मणि ॥

वेमः

**डोल्लकः**—देशीतालः

डोल्लकः प्रतिमट्ठस्य नामान्तरम् ।

**डोलापादम्**—करणम्

ऊर्ध्वजानुविधानेन पादमादाय कुञ्चितम् ।
डोलापादं भजन् डोलैः प्रयोगवशगौ करौ ।
यत्र कुर्वीत तत्वज्ञैर्डोलापादमुदीरितम् ॥

ज्यायनः

**डोलापादा**—चारी

कुञ्चितं पादमुत्क्षिप्तं डोलितं पार्श्वयोर्यदा ।
अञ्चितं पार्ष्णिना न्यस्येड्डोलापादा तदा भवेत् ॥

वेमः

**डोलाविहारः**—संगीतशृङ्गाराङ्गम्

आन्दोलनक्रीडा डोलाविहारः ।

सोमः

**डोलुवाद्यम्**

कुम्भकर्णस्य बोधार्थं रावणेन विनिर्मितम् ।
षोडशाङ्गुलविस्तीर्णं प्रादेशद्वयमायतम् ॥

डोलुवाद्यगतं चेति प्रमाणं परिकीर्तितम्।
डोकारो दैत्यदेवानां लुकारो रावणेश्वरः॥
द्वौ द्वौ राक्षसदेवानां डोलुवाद्यं प्रयुज्यते।
गदमूले भवेद्ब्रह्मा गदमध्ये हरिस्तथा।
गदाग्रे च भवेद्रुद्रो गदे तिष्ठन्ति देवताः॥

चिङ्कः

## ढ

**ढक्का**

द्वादशाङ्गुलदीर्घा स्यात्किञ्चिन्मध्यकृशा भवेत्।
अश्ववालान्वितेवक्त्रे हुडुक्कावत्परावधि॥
कुडुपेन वादनीया हस्तेनापि विचक्षणैः।
झकारस्तत्र मुख्यस्स्याद्धस्तपातेन जायते॥
घटश्चैव तटश्चैव ढगिश्च कुडुपोद्भवाः।
पाटवर्णा इमे सर्वे ढक्कायां परिकीर्तिताः॥

सोमेश्वरः

**ढङ्कामणिः**—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि ग म ध नि स.
(अव) स प म ग रि स.

मञ्ज

**ढकुली**—अवनद्धम्

दन्तजा शृङ्गजा वापि लोहवक्त्रद्वयान्विता।
पञ्चाङ्गुलायता श्लक्ष्णा मुखे च चतुरङ्गुला॥
मेषोदलिकया नद्धा पञ्चरन्ध्रसुयन्त्रिता।
मध्ये सूत्रेण संवेष्ट्य नातिगूढं न च श्लथम्॥
अनामिकामध्यसूत्रे निधाय वदने पुनः।
तर्जनीमध्यमाङ्गुल्यौ विवृते च क्रियागते॥
अङ्गुष्ठमन्यवक्त्रे तु वृत्यै काञ्चनिकां ततः।
वादयेच्चुञ्चुनादेन ढकुलीयं प्रकीर्तिता॥

सोमेश्वरः

**ढेङ्की**—धावनलागनृत्तम्

वामः पुरोऽपरः पार्श्वे पादौ तालद्वयान्तरे।
पताकौ प्रसृतौ तिर्यक् स्थित्वा स्थित्वा तु धावनम्॥
फुट्टनं वामपादस्योत्प्लुतिं कृत्वा पदद्वये।
विरलावूर्ध्वगौ पादौ दक्षिणेन पदा पतेत्।
भूमौ यदा तदा ढेङ्की कथिता पूर्वसूरिभिः॥

वेदः

—देशीतालः

ढेङ्कीकारगणेन स्यात्केषांचित् सैव योजना। ऽ।ऽ

जगदेकः

ढेङ्कीताले गुरुलघुगुरूणी स्युर्यथाक्रमम्।

वेमः

रगणेन तु ढेङ्किका। ऽ।ऽ

श्रीकण्ठः

## त

**तक्कावी**—मेलरागः (मेचकल्याणीमेलजन्यः)
(आ) स रि स ग म प नि ध नि स.
(अव) स नि ध प म ग स.

मञ्ज

**तच्चिन्दम्**—देशीनृत्तम्

......न्तच्चिदं भवेत्खण्डलयात्मकम्।
साभोगं मानसहितंताललयलयान्वितम्॥

वेदः

**तण्डुभट्टः**

अयमेव प्रायशः नन्दिकेश्वरः स्यात्। तण्डुभट्टनाम्ना बहवो मतभेदाः सन्ति। ज्यायसेनापतिना नृत्तरत्नावल्यामुक्ताः। भावप्रकाशकाराभिनवगुप्तौ तं स्मरतः। अस्य ग्रन्थो न लब्धः। नन्दिकेश्वरशब्दे द्रष्टव्यम्।

**ततम्**

ततं तन्त्रीगतं वाद्यम्।

भरतः

**तत्त्वम्**—मृदङ्गवाद्ये अक्षरानुसरणं वादनम्

अक्षरसदृशं वाद्यं स्फुटपदवर्णं तथैव नृत्तसमम्।
सुविभक्तकरणयुक्तं तत्त्वे वाद्यं विधातव्यम्॥

भरतः

—गीतवाद्यमेलनप्रकारः

तद्वाद्यं तत्त्वमित्युक्तं तद्वदनक्तीह गीतगम्।
विराममक्षरं गीतिं वर्णान् जात्यंशकादिकान्।
तालं लयं यतिं चैव गीतेनैकमिवागतम्॥

कुम्भः

लयतालकलायतिगीत्यंशकभावकं भवेत्तत्त्वम्।

लयेति।

द्रुतमध्यविलम्बितजा विज्ञेयास्तु त्रयो लयाः।

भरतः

तालेति। चच्चत्पुटादयः। कलेति। तेषामेककलाद्यभ्यासः। यतिः समा, ओघा, गोपुच्छादयः। अक्षरं विरामरूपो यो विच्छेदः। विदारी गीतविश्रामस्य कारणम्। ग्रहांशकारि दश-

विधवैचित्र्यम् । मागधी सम्भाविता पृथुलेति गीतस्य त्रैविध्यम् । एतेषां लयतालादीनां भावकं प्रापकं वाद्यं तत्त्वमुच्यते । शम्यातालादयस्तु वीणायां न प्रयोगगा इत्यूह्यम् ।

नान्यः

—वाद्यम्

लयं तालं विरामं च यतिं गीतिं तथाक्षरम् ।
वर्णग्रामविभागं च नानाजात्यंशकादिकम् ।
व्यञ्जद्गीतगतं गीतमिलितं तत्त्वमुच्यते ॥

शार्ङ्गः

—अवनद्धे त्रिगतम्

ताण्डवादौ विना गीतं छिद्रप्रच्छादनात्मकाः ।
राद्धादिभिर्भेदा वाद्ये स्युर्गीते तत्त्वादयस्त्वमी ॥

षोडशाक्षरसादृश्यं तत्त्वमित्यभिधीयते ।
ताद्रूप्याच्च संभाषाच्च सादृश्यं तत्त्वमिष्यते ॥

चित्रे वाद्यविधौ सम्यक्सादृश्यस्याप्यसंभवः ।
वर्णानुहारविस्तारे तत्त्वं तद्रूपितं त्विह ॥

नार्थप्रतीतिर्वर्णानां सादृश्यात्तु प्रतीयते ।
तस्मात्पदे गीयमाने सुविभक्ताक्षरात्मकम् ॥
वाद्यं तत्त्वमिति प्राह ।

नान्यः

तद्भवः—प्राकृतशब्दविशेषः

स्वरवर्णान्यतां वापि न्यूनतां वापि ये पदे ।
न्यस्ता गच्छन्ति संयुक्तास्तद्भवास्ते प्रकीर्तिताः ॥

कुम्भः

तद्योमणिः—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

( आ ) स रि ग रि म ग म ध नि स.
( अव ) स नि प म ग रि स .

मञ्ज

तनुकीर्तिः—मेलरागः ( तानरूपीमेलजन्यः )

( आ ) स रि ग प नि स .
( अव ) स नि ध प म ग रि स .

मञ्ज

तनुप्रतापः—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

( आ ) स ग म प ध नि स .
( अव ) स नि प म रि स .

मञ्ज

तनुमध्या—ध्रुवावृत्तम्

षडक्षरा –

आद्ये पुनरन्ते
यस्य गुरुणी चेद् ।
ज्ञेया तनुमध्या
गायत्र समुत्था ॥

यथा –

एसो गिरिराओ (छाया) एष गिरिराजः ।

भरतः

मध्यमाधमपात्राणां तनुमध्यां प्रयोजयेत् ।
हर्षपञ्चमभाषायां तालः पाटाक्षरेण तु ॥

नान्यः

—षडक्षरवृत्तम् ( तयगणौ )

भरतः

तनूनपात्—तानः

मध्यमग्रामे गहीनषाडवः ।

प म रि स नि ध.

कुम्भः

तन्त्रीषु स्वरस्थापनम्

( अयं क्रमो दक्षिणदेशेऽद्यतनकालोपयुक्तायां वीणायां प्रयुक्तः, संग्रहचूडामणिग्रन्थादुद्धृतः । तत्र श्रुतयः चतुर्विंशतिः । सार्यस्तु द्वादश । सार्यन्तरे पुनर्द्वादश । आहृत्य चतुर्विंशतिः सार्यः )

तीव्राद्याद्यादिश्रुतिभ्यश्च स्वरास्त्रिंशदिहोदिताः ।
ते च गान्धर्वगानैकयोग्या वेद्यास्त्वया शिवे ॥

नरगाने सलक्ष्याणि लक्षणानि ब्रुवेऽधुना ।
तीव्रादिका याः श्रुतयः क्षोभिण्यन्ताः प्रकीर्तिताः ॥

विहाय मार्जनीं तत्र क्षोभिणीं च श्रुतिं तथा ।
मिलनादेकैकस्य महाद्द्वादशकं भवेत् ॥

प्रथमा च द्वितीया च मिलिते प्रथमं महम् ।
तृतीया च चतुर्थी च द्वितीयं महमेव च ॥

इत्येवं द्वन्द्वमिलनान्महद्वादशकं विदुः ।
स्वरास्तत्र प्रकृतयो विकृता नव कीर्तिताः ॥

षोडशानां स्वराणां च नामानि शृणु पार्वति ।
सार्यां च प्रथमे जातः शुद्धे रिषभ इष्यते ॥

द्वितीयसोपानगतौ शुद्धगान्धार इत्ययम् ।
चतुःश्रुतीरिषभ इत्येतौ द्वौ परिकीर्तितौ ॥

तृतीयसोपानजातौ षट्छ्रुतीरिषभस्तथा ।
साधारणश्च गान्धार इति द्वौ कीर्तितावुभौ ॥
गान्धारोऽन्तरसंज्ञस्तु तुर्यं सोपानमास्थितः ।
सोपाने पञ्चमे जातः शुद्धमध्यम इष्यते ॥
षष्ठसोपानजनितः प्रतिमध्यमनामकः ।
सोपानात्सप्तमाज्जातः स्वरः पञ्चमनामभाक् ॥
श्रुतेराधारषड्जस्य पञ्चमस्सहकार्ययम् ।
सोपानादष्टमाज्जातः शुद्धो धैवत उच्यते ॥
सोपाने नवमे जातौ चतुश्श्रुतिकधैवतः ।
शुद्धो निषाद इति च द्वौ स्वरौ समुदीरितौ ॥
सोपानाद्दशमाज्जातौ निषादः कैशिकस्तथा ।
धैवतः षट्छ्रुतिश्चेति द्वौ स्वरौ परिकीर्तितौ ॥
एकादशेति सोपाने काकलिस्वरसंभवः ।
सोपाने द्वादशे चैव षड्जस्वर उदाहृतः ॥

संग्रहचूडामणिः

सुषुम्ननाडिसदृशे वीणादण्डे फणायिते ।
तन्त्रीसप्तकमेतासां मध्ये त्रिकमधोगतम् ॥
चतुष्कमूर्ध्वभागस्थं तासां संज्ञां विवृण्महे ।
आरभ्य पित्तलां तन्त्रीं मन्द्रमध्यमतारगाः ॥
अनुमन्द्रो विशेषः स्यान्नादकालविभेदने ।
मन्द्रस्तु मन्दरं ब्रूते मध्यमो मध्यमस्वरः ॥
तारस्तूच्चस्वरं ब्रूयादनुमन्द्रोऽतिमन्दरम् ।
अधोगतं त्रिकं तालं ज्ञानार्थमुपयुज्यते ॥
चतुर्विंशतिसंख्यास्तु सार्यस्तत्र स्वरान्तरे ।
एतेष्वष्टाष्टभेदेन स्थिस्थायिध्वनिभेदतः ॥
तत्र तन्त्रीचतुष्केऽपि स्थानं षण्णवतिः स्फुटम् ।
द्वात्रिंशस्थानमधिकं लीनं तत्रैव सारिषु ॥
षड्जो ऋषभगान्धारमध्यपञ्चमधैवताः ।
निषादश्चेत्यमी सप्त वीणालयगता स्वराः ॥
तन्त्रीनादस्तु षड्जः स्यात्स्थानेषु ऋषभादिगाः ।
ऋषभस्त्रिविधः प्रोक्तो द्विचतुष्षट्छ्रुतिक्रमात् ॥
गान्धारोऽपि त्रिधा शुद्धान्तरसाधारणक्रमात् ।
चतुश्श्रुत्यृषभे शुद्धः षट्छ्रुतावन्तरस्थितः ॥
साधारणाख्यगान्धारः पृथगात्मतया स्थितः ।
पृथगेव द्विधा शुद्धमध्यमप्रतिमध्यमौ ॥
पञ्चमोऽथ त्रिधा धैव द्विचतुष्षट्छ्रुतिक्रमात् ।
निषादस्त्रिविधः शुद्धकैश्यकाकल्यभेदतः ॥
चतुश्श्रुतौ धैवते तु निषादश्शुद्ध इष्यते ।
षट्छ्रुतौ धैवते कैश्यनिषादोऽन्यः पृथक्स्थितः ॥
तारषड्जस्वरश्चेति द्वादशामी विभेदतः ।
एते स्वराः क्रमेणैव द्वादशाधोमुखार्थिता ॥
सप्तस्वराणां भेदेन वीणायां षोडशस्वराः ।
प्रक्रमद्वयभेदेन द्वात्रिंशद्भेद उच्यते ॥
तन्त्रीचतुष्केऽपि षड्जपञ्चमावष्टभेदिनौ ।
मध्यमष्षोडशविधः चतुर्विंशतिभेदिनः ॥
निषादर्षभगान्धारधैवता इति वैणिकैः ।
अष्टाविंशोत्तरशतमाहृत्य भवति ।
तत्राप्रसिद्धस्थानानि कतिचिद्वर्जितानि च ॥

परमेश्वरः

## तन्वी—ध्रुवावृत्तम् ( सप्ताक्षरम् )

तृतीयं पञ्चमं चैव गुरुर्यत्र तु नैधनम् ।
सदा तूष्णिक्कृते पादे तन्वी सा नामतो यथा ॥

पिय कामुओ विय । प्रियकामुक इव ।

भरतः

## —श्रुतिः

ऋषभस्य द्वितीयश्रुतिः । मण्डलीमते तारर्षभस्यैव ।

## तपनम्—अङ्गविकारः

परितपनमित्यप्युच्यते । राहुलकादिभिर्लक्षितानि मौग्ध्यपरितपनादीनि श्रृङ्गारचेष्टारूपाणि अभिनवगुप्तेन न स्वीकृतानि भवन्ति । प्रियजने क्वापि गते प्रहारार्धमपि वागच्छति स्वयमेव परिकल्पितदौर्भाग्यन्वरगृहीतक्षणरुदितश्वसितस्वप्नद्वारावेक्षणशिरोव्यथादिविषयं तपनम् ।

सागरः

नागच्छति प्रियतमे प्रहरार्धमात्र-
मुद्वेगिनं विविधचेष्टितमङ्गनायाः ।
सख्याः पुरःश्वसनरोदनमात्मभाग्य-
निन्दादिकं कविवरास्तपनं वदन्ति ॥

पद्मश्रीः

## तप्तम्—दर्शनम्

निपतद्भ्रूपुटं शुष्यत्प्रभं तप्तमुदाहृतम् ।

शारदातनयः

## तमः—संगीतश्रृङ्गाराङ्गम्

निशागमान्धकारस्तमः ।

भोजः

तमोहिनी—मेलरागः ( नटभैरवीमेलजन्यः )

(आ) स रि ग म ध स.

(अव) स नि ध प म ग रि स.

मञ्ज

तम्बकी—अवनद्धवाद्यम्

निस्साणवत्तम्बकी स्यात्ततोऽल्पो गात्रनादयोः।
वाद्यते स द्वितीयोऽसौ डमामेति निगद्यते॥

डमामेति नामान्तरम्।

कुम्भः

तरङ्गकः—प्राकृते मात्रावृत्तम्

भ भ भ भ ग ग.

विरहाङ्कः

तरङ्गशीतलः—देशीतालः

तरङ्गशीतले ताले निशःब्दातः प्लुतो भवेत्। ऽ

तरङ्गशीकर इति पाठान्तरम्।

लक्ष्मणः

तरङ्गिणी—भाषाङ्गरागः

तरङ्गिणी भूमिभृतोपदिष्टा सतारधांशा मृदुगा च पूर्णा।
समस्वरा न्यासकृतर्षभा च तदर्षभादित्वमिह प्रयाता॥

कुम्भः

—मेलरागः ( चारुकेशीमेलजन्यः )

(आ) स रि म प ध नि स.

(अव) स नि ध प म ग रि स.

मञ्ज

—रागः

रिन्यासग्रहधांशा च भवेद्धरिपतारभाक्।
समस्वरा गमन्द्रा च संपूर्णा सप्तभिस्स्वरैः।
रसे रौद्रे नियुज्या स्यात् रिषभादिस्तरङ्गिणी॥

जगदेकः

अथो तरङ्गिणी न्यासग्रहर्षभवती भवेत्।
धैवतांशा तथा तारा धैवतर्षभपञ्चमाः।
समस्वरा च गान्धारमन्द्रा पूर्णा तथोदिता॥

हरिः

तरङ्गितम्—दर्शनम्

तरङ्ग इव यत्कान्तिर्जृम्भते तत्तरङ्गितम्।

वेमः

कल्लोल इव यत्कान्तिविच्छर्दिस्तत्तरङ्गितम्।

शारदातनयः

तरलम्—दर्शनम्

आलोलतारकं यत्तु तरलं तत्प्रकीर्तितम्।

वेमः

तरलं तदिति प्राहुर्लोलताराकनीनिकम्।

शारदातनयः

तरलरञ्जिनी—मेलरागः ( मायामालवगौलमेलजन्यः )

(आ) स रि ग म प ध नि स.

(अव) स नि ध म ध प म रि ग रि स.

मञ्ज

तरहरम्—देशीलास्याङ्गम्

आभुग्नं यत्र नर्तक्यास्तुङ्गयोस्तनकुम्भयोः।
सत्वरं कम्पनं नृत्ते प्रोक्तं तरहरं तु तत्॥

ज्यायनाशोकौ धरहरमित्यवोचताम्।

तर्कलतिका—मेलरागः ( मायामालवमेलजन्यः )

(आ) स रि म प ध स.

(अव) स ध प म रि स.

मञ्ज

तर्कः—शिल्पकाङ्गम्

वितर्कः कास्विदित्यादिदुष्यन्तवचनं यथा।

शारदातनयः

आत्मविचाराधीनोऽर्थाविग्रहस्तर्कः। यथा – नन्दयन्तीसंहारे भर्तेत्यादि समुद्रदत्तवचनम्।

सागरः

दुष्यन्तवचनं शाकुन्तले। नन्दयन्तीसंहारः पुष्पभूषितके षष्ठेऽङ्के।

तलम्

पतिताग्रं चोद्धृताग्रं भूमिलग्नमथोद्धृतम्।
कुञ्चन्मध्यं तिरश्चीनमिति षोढा तलं विदुः॥

विप्रदासः

अन्वर्थम्।

—देशीलास्याङ्गम्

पाटाद्याः प्रतिभासन्तो दुष्करासुकरा इव।
क्रमादङ्गसमायुक्ता यत्र तत्तलमुच्यते॥

ज्यायनः

—धातुः

दक्षिणाङ्गुष्ठतो हन्ति वामाङ्गुष्ठनिपीडिताम्।
तन्त्रीं यत्र तदाचष्ट तलः सोढलनन्दनः॥

शार्ङ्गः

—व्यञ्जनधातुः

तन्त्रीं वामकराङ्गुष्ठपीडितां दक्षिणेन चेत्।
अङ्गुष्ठेन निहन्येत्ततलमाहुर्मनीषिणः॥

कुम्भः

वामाङ्गुष्ठेन तन्त्रीं तु पीडयित्वा पुनश्च ताम्।
दक्षिणेन यदाहन्यात्ततलं परिकीर्तितम्॥

नान्यः

## तलकम्

नाभेरधः कटिभूषणम्।

—श्रोणीभूषणम्

कवाटद्वययोजितम्।

## तलताडितम्—पादमणिः

यस्मिन्पुरोमुखस्याङ्घ्रेस्तिष्ठतोङ्गुलिपृष्ठतः।
तत्पार्ष्णिबाह्यपार्श्वेन स्पृशन् तिर्यङ्मुखस्तथा॥
तिष्ठेदन्यस्तु चरणस्तलाभ्यां तदनुक्रमात्।
सशब्दताडनं भूमौ तावुभौ कुरुतो यदा।
इत्येवं पादपर्यायात्तदा स्यात्तलताडितम्॥

वेमः

## तलदर्शिनी—देशीचारी

संहतस्थानके स्थित्वा पादौ तिर्यक् पृथग्गतौ।
तिष्ठतो बाह्यपार्श्वाभ्यां यत्र सा तलदर्शिनी॥

वेमः

## तलपताकहस्तः

ऊर्ध्वौ कनिष्ठिकाङ्गुष्ठौ पताके किञ्चिदीरितौ।
नाम्ना तलपताकोऽयं गौधेये स्यात्तु पुङ्खितः॥

शृङ्गारशेखरः

## तलपाटः—वाद्यप्रबन्धः

तलपाटस्तु मलपोन्मिश्रपाटप्रबन्धजः।

शार्ङ्गः

तलपाटो भवेद्यस्तद्वाद्यते मलपान्वितः।

वेमः

## तलपुष्पपुटम्—करणम्

वामे पुष्पपुटः पार्श्वे पादोऽग्रतलसञ्चरः।
तथा च सन्नतं पार्श्वं तलपुष्पपुटं भवेत्॥

भरतः

चार्या द्व्यधिकया पादे विनिष्क्रामति दक्षिणे।
व्यावर्तनात्करयुगे दक्षिणं पार्श्वमागते॥
परिवर्तनतो वामपार्श्वं सततमाश्रिते।
तत्कुचक्षेत्रसंविष्टो यस्य पुष्पपुटः करः।
तलपुष्पपुटं तत्स्यात्पादेऽग्रतलसञ्चरे॥

शार्ङ्गः

समपादं लताहस्तावङ्गस्य चतुरस्रता।
साधारणमिदं नृत्तप्रयोगारम्भ इष्यते॥
करणेष्वरसि प्रायो वामस्स्यात्खटकामुखः।
चरणस्यानुवादी तु करो वामेतरो भवेत्॥
यदा वामकरस्यादौ प्रयोगस्स्यात्तदा पुनः।
वक्षः क्षेत्रे विधातव्यो लताहस्तस्तु दक्षिणः॥
चतुरस्रत्वहेतुत्वाद्वैष्णवं केचिदूचिरे।
करुणाभिनयेष्वेव हस्तो वा चरणोऽथवा॥
प्राधान्याद्दक्षिणः प्रोक्तो विशेषो यत्र नोच्यते।
तलपुष्पपुटं तत्स्यात् यत्राध्यर्धिकया परम्॥
निष्कामेद्दक्षिणं पार्श्वं व्यावृत्य समगौ करौ।
परिवृत्य ततो वामं सन्नतं पार्श्वमागतौ॥
वामस्तनसमक्षेत्रे स्यातां पुष्पपुटीकृतौ।
तलसञ्चरपादश्च कर्तव्यः प्रोक्तलक्षणः॥
तलमित्येकदेशेन ज्ञेयोऽत्र तलसञ्चरः।
तेन पुष्पपुटं युक्तं तलपुष्पपुटं विदुः॥
एवं सर्वत्र विज्ञेयाः करणेषु निरुक्तयः।
दीयते नर्तनारम्भे देवेभ्यः कुसुमाञ्जलिः।
अनेन करणेनेति पूर्वमस्य प्रकीर्तितम्॥

ज्यायनः

रङ्गे पुष्पाञ्जलिक्षेपे लक्षिते योषितामपि।

कुम्भकर्णः

## तलप्रहारः—हस्तपाटः

वामांसचालनाद्वामपुष्करे वामपाणिना।
निपीडनादपि तलप्रहारो जायते यथा॥

दे धां हें दिकिट किट झें रितदिधि तधि त्वः।

वेमः

## तलमुखवर्तना

यदा तलमुखौ हस्तौ वर्तितौ स्वोत्करीतितः।
सौष्ठवेन तदा धीरैरुक्ता तलमुखाह्वया॥

अशोकः

## तलमुखौ—नृत्तहस्तौ

चतुरश्रौ करौ हंसपक्षौ कृत्वैव पूर्ववत्।
अन्योन्याभिमुखौ त्र्यश्रौ समाप्तौ स्वस्वपार्श्वगौ।

कार्यौ तलमुखावेवं द्वंद्वं मर्दलवादने ॥

ज्यायनः

पूर्ववदिति उद्वृत्तहस्तौ परामृश्येते ।

तुल्यांसकूर्परौ तिर्यग्भूतौ सम्मुखतस्तलौ ।
उद्वृत्तीभूय पश्चाच्च त्र्यश्रीभूतौ स्वपार्श्वगौ ।
हंसपक्षौ तलमुखौ मधुरे मर्दलध्वनौ ॥

—हस्तः

भवेद्वृत्तौ स्थितौ त्र्यस्रौ हंसपक्षौ स्वपार्श्वयोः ।
जातौ मिथस्संमुखस्थतलौ तलमुखौ मतौ ।
बुधैरभिदधाते तौ मधुरे मर्दलध्वनौ ॥

शार्ङ्गः

तलविलासितम्—करणम्

पार्श्वकर्णसमक्षेत्रे भवेत्पादसमुत्थितः ।
ऊर्ध्वाङ्गुलितलोऽस्याग्रभाक्पताकाञ्चितस्थले ॥
यत्राङ्गान्तरमप्येवं तत्स्यात्तलविलासितम् ।
पादो धाराभिधानेन सूत्रधारादिगोचरः ॥
भट्टतण्डुमतेऽस्त्राङ्घ्रिः सगतौ युगपत्करौ ।
रेचितावस्य पार्श्वे स्तः करौ कैर्तिधरौ मतौ ॥

ज्यायनः

तलसंघट्टितम्—करणम्

डोलापादसमौ हस्तौ मिथस्संघट्टितौ तले ।
ततस्स्याद्वैष्णवं स्थानं कट्यां चेद्दक्षिणः करः ॥
रेचितोऽन्यस्त्रिके पार्श्वे तलसंघट्टितं तदा ।
अत्र कीर्तिधरो हस्तमूचे वक्षसि दक्षिणम् ॥

ज्यायनः

कृपायां विनियुज्यते ।

लक्ष्मणः

तलसंस्फोटितम्—करणम्

चार्यातिक्रान्तया यद्वा दण्डपादाख्यया धृतम् ।
उत्क्षिप्य पात्यमानेऽङ्घ्रौ सशब्दं तालिकां करौ ॥
कुरुतो यत्र तत्प्रोक्तं तलसंस्फोटितं बुधैः ।
हस्तिने हस्तनालेऽस्य विनियोगः प्रकीर्तितः ॥

ज्यायनः

गजरादिप्रबन्धानां देशजानां तु नर्तने ।

लक्ष्मणः

तलहस्तः—वादनम् (उभयहस्तव्यापारः)

तलेन दक्षिणो हस्तस्तन्त्रीं हन्तीतरः पुनः ।
प्रदेशिन्या स्पृशेद्यत्र तलहस्तो भवेदसौ ॥

शार्ङ्गः

—वीणायामुभयहस्तव्यापारः

तलेन दक्षिणो हन्ति तन्त्रिकां यत्र तां पुनः ।
वामः स्पृशति तर्जन्या तलहस्तस्तदा भवेत् ॥

कुम्भः

तलाहतिः—पादः

सशब्दं ताडनं भूमेः तलेन स्यात्तलाहतिः ।
ताण्डवे धावने कोपे घर्घरीणां च वादने ॥

ज्यायनः

तलोद्घट्टितकम्—पादमणिः

तलाग्राभ्यां स्थितौ पादौ पर्यायेण मुहुर्मुहुः ।
यत्र तालानुसारेण पार्ष्णिभ्यां पृथिवीतलम् ॥
ताडयन्तौ चतुर्दिक्षु विदधाते गतागतम् ।
तलोद्घट्टितकं प्राह तत्सङ्ग्रामधनञ्जयः ॥

वेमः

तलोद्वृत्ता—देशीचारी

अङ्गुलीपृष्ठभागेन प्रपदे यत्र सत्वरम् ।
पुरतस्सरतस्सैषा तलोद्वृत्तेति कथ्यते ॥

वेमः

तरमुरी—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग प ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

ता—तालः (तालपातस्य चिह्नम्)

ताडनम्

किन्नर्यां वामहस्तव्यापारः । तत्र द्रष्टव्यम् ।

ताडितः—पादः

पार्ष्णिना भुवमालम्ब्य तलस्याग्रेण ताडयन् ।
ताडितः कोपगर्वादौ घर्घराणां च वादने ॥

ज्यायनः

ताण्डवं—नृत्तम्

आसारितादिभिर्गीतैरुद्धतप्रायवर्तितैः ।
करणैरङ्गहारैश्च निवृत्तं विषमैरिह ।
ताण्डवं तण्डुना प्रोक्तं नृत्तं नृत्तविदो विदुः ॥

कुम्भः

ताण्डवप्रिया—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म प नि ध नि स नि स.
(अव) स नि प ध नि प म ग म रि ग रि म ग स.

मञ्ज

ताण्डिकाव्याप्तिः—वाद्यप्रबन्धः

व्यापकश्रुतिभूषणस्य नामान्तरम्।

तात्पर्यम्

प्रधानमुपकार्योऽर्थः पदार्था ह्युपकारकाः।
तत्परत्वात्पदार्थानां तात्पर्यं तदितीरितम्॥

शारदातनयः

—भक्तिः

वाक्यार्थं प्रति शेषत्वं यत्स्यादुच्चारणस्य तु।
तत्तात्पर्यं त्रिधा तत्स्याद्वाक्यार्थत्रिविधत्वतः॥

स चाभिधेयः प्रत्याय्यो ध्वनिरूप इति त्रिधा।
कारकादिविशिष्टो यः सोऽभिधेयः क्रियाधिकः॥

यथाभिधीयमानार्थादन्यथानुपपत्तितः।
प्रतीयमानो वाक्यार्थो यस्स प्रत्याय्य ईरितः।
ध्वनिर्द्विधा स चैकः स्यादर्थतश्शब्दतोऽपरः॥

कथितश्शाब्दो द्विविधः ध्वनिरुख्यमनुनादरूप एकः स्यात्।
प्रतिशब्दरूप एकः तयोर्विशेषो विविच्यते कविभिः॥

अर्थान्तरं प्रतीतानुस्यूतमेव व्यनक्ति यत्।
सोऽनुनाद ध्वनिरिति कथ्यते ध्वनिवेदिभिः॥

शब्दध्वनिर्द्विधाभूतः शब्ददेवावगम्यते।
ध्वनितात्पर्ययोः कैश्चित्पृथक्त्वं कथ्यते बुधैः॥

अप्रतिष्ठमविश्रान्तं स्वार्थे यत्परतामिदम्।
वाक्यलिङ्गाहते तत्र न्याय्या तत्परतास्य सा॥

यत्र तु स्वार्थविश्रान्तं प्रतिष्ठां तावदागताम्।
तत्प्रसर्पति तत्तस्मात्सर्वत्र ध्वनिता स्थितिः।
ध्वनितात्पर्ययोर्भेदो ब्राह्मणब्रह्मचारिवत्॥

"तात्पर्यमेव वचसि ध्वनिरेव काव्ये सौभाग्यमेव गुणसंपदि वल्लभस्य" इति॥

अतो ध्वन्याख्यतात्पर्यगम्यमानत्वतः स्वतः।
काव्ये रसालङ्कारादिर्वाक्यार्थो भवति ध्रुवम्॥

विवक्षितमभिप्रायः फलं भावः प्रयोजनम्।
तात्पर्यमिति पर्यायशब्दा वाक्यार्थगोचराः॥

शारदातनयः

तादात्म्यम्—शब्दार्थगुणः

शब्दस्यार्थस्वभावो यः तादात्म्यं तत्प्रकीर्तितम्।

कुम्भः

तानः

तनोति विस्तार इत्यस्मात् घञि तान इति स्मृतः।
रागा यैस्तन्यते प्रायः स्वरास्ते तानका मताः॥

पण्डितमण्डली

तानत्वसमर्थनम्

न चैतेषां मूर्छनात्वमेषु यत्स्वरलोपनम्।
नन्वेकस्मिन्स्वरे लुप्ते स्वरूपप्रच्युतिः कुतः॥

यदेकदेशविकृतमनन्याकारमीरितम्।
मैवं रक्तिप्रधानत्वादस्य स्वरविलोपने॥

तानरागान्यतापत्तेः रक्तियुक्तिर्दवीयसी।
तस्मात्सप्तस्वरैर्युक्ता मूर्छनोक्ता मनीषिभिः॥

षट्पञ्चस्वरकास्ताना भिद्यन्तेऽतः पृथक् ततः।
नन्वेवं मूर्छनाः शुद्धाः सान्तराः काकलीयुताः॥

तद्द्वयोपचिताश्चैव षाडवौडुवितीकृताः।
पृथक् चतुरशीति स्युरेवं षट्त्रिंशता युतम्॥

शतत्रयं भवेयुस्ते न चैवं मुनिसम्मतम्।
तानाश्चतुरशीतिः स्युरिति तद्वचनं यतः॥

विकृतस्वरलोपोऽतो नात्र चिह्निश्चिकीर्षितः।
प्रामाण्यान्मुनिवाक्यस्य शुद्ध एवात्र सम्मताः॥

कुम्भः

तानफलम्

यद्यज्ञनामकस्तानो यो योऽत्र परिकीर्तितः।
तं तं सम्यग्विदन् गाता तद्यज्ञफलमश्नुते॥

भरतादिपराप्तानां मुनीनां वचसामिह।
प्रामाण्यादागमत्वेन सुवचत्वादमुष्य तु॥

ननु यागादितः कालक्लेशवित्तादिसाध्यतः
यत्फलं तत्कथं तानगानमात्रेण साध्यते॥

तस्मादयुक्तमत्रोक्तं तत्तन्नामकृतूद्भवम्।
तानैरवाप्यते पुण्यमल्पहेतुसमार्पितैः॥

का गतिस्तर्हि वाक्यानां पराप्तानां त्वयोच्यते'
अर्थवादवदेवास्तु प्रवृत्त्युत्पादकत्वतः॥

उपयोगस्तदुक्तीनां नैतदत्रोपपद्यते।
यतोऽत्र कालक्लेशादिगौरवं लाघवं तथा॥

कारणानां क्वचिद्दृष्टं न प्रयोजकमादृते।
तथाहि द्वादशाहादिबहुकालादिसाध्यतः॥

नाम्नो नारायणस्योक्ता पापनिर्मुक्तिहेतुता।
क्लेशसाध्यादियागादेरश्वमेधादितः फलम्॥

नैवेदं वेद एवोक्तमविकल्पमबाधितम्।
अर्थवादविभागस्य विधिशेषत्वतो बुधैः ॥
निरणायि प्रमाणत्वं तद्वत्वेष्यविमानता।
उन्मत्तभाषणप्राया नार्थवादा अपि क्वचित् ॥
तत्तद्विधिसमारोपे बहुशस्तत्र साधितम्।
न चापि भिन्नहेतुत्वे फलभेदप्रकल्पना ॥
गानस्य यजनादेश्च स्वर्गसाधनतां प्रति।
कृषिसेवादिकाद्यस्मात्फलैक्यं जीवनं प्रति ॥
तानगानार्थोपदेष्टुरीशेऽपि परमाप्तता।
तदुक्तवाक्यजातस्य त्र्यय्यादेर्मानता ततः ॥
दृष्टार्थोदाहृतत्वेनादृष्टानां परमार्थता।
साधिताप्तोक्तवाक्यत्वात्कारीर्यादिनिदर्शनात् ॥
पराप्तत्वाविशेषेण भरतादिमहात्मनाम्।
तदुक्तवचसामस्यप्रमाणत्वं न हन्यते ॥
अथवा वेदमूलत्वाद्याज्ञवल्क्यादि वाक्यतः।
अबाधितं प्रमाणत्वं साधितं पूर्वमेव हि ॥
विधित्वेनापि गानस्य प्रामाण्यमुररीकृतम्।
तस्माददोऽप्रतिद्वन्द्वं भरतादिमुनीरितम्।
यद्यज्ञसङ्घो यस्तानः स तस्य फलदायकः ॥

कुम्भः

तानमार्गणी—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स रि ग स प ध प नि स.
(अव) स ध प म रि स.

मल्ल

तानरूपी—मेलकर्ता रागः

स रि ग ० ० म ० प ० ० ध नि स.

मल्ल

तानविषये मतभेदः

नारदमते एकविंशतिमूर्छनाः। एकोन पञ्चाशत्तानाः ॥
भरतमते तु चतुर्दश मूर्छनाः। चतुरशीति ताना उक्ताः ॥

एवं ग्रामत्रयेऽप्यूनपञ्चाशन्नारदोदिताः।
सामगाने प्रयुज्यन्ते ताना यज्ञोपयोगिनः।
गीतोपयोगिनस्ताना भरतेनोपदर्शिताः ॥

स्थलान्तरे।

स्तोत्रकर्तृप्रियं नाम केषाञ्चिदिह दृश्यते।
साहश्यात्कस्यचिन्नाम निरुक्तं तेन नोदितम् ॥

तत्र नारदेन स्तोत्रयज्ञोपयोगितया ग्रामत्रयेण एकोनपञ्चाशदेव षाडवौडुवयोः कथितास्तानाः। यदाह —

विंशतिर्मध्यमग्रामे षड्जग्रामे चतुर्दश।
तानाः पञ्चदश प्रोक्ता गान्धारग्राममाश्रिताः ॥

भरताचार्यस्य स्वशास्त्रे प्रयोगाङ्गता गीतोपयोगिनः षड्जमध्यमग्रामयोः अनुलोमषाडवौडवाभ्यां चतुरशीतिमथ तानानुक्तवान्।

नान्यदेवः

तानसंख्या

एकैकस्यां मूर्छनायां प्रस्तारविधिमाश्रिताः।
व्योमवेदखभूतानि तानास्स्युः क्रमसंयुताः ॥
षट्पञ्चाशन्मूर्छनास्थाः पूर्णकूटास्तु सक्रमाः।
एभिस्सन्ताडिता जाताः तत्संख्यां संगृणाम्यहम्।
भवेदक्षिद्विनागाश्विमिता ग्रामद्वये भवेत् ॥
५०४०

कुम्भः

शून्यवेदाश्विनासत्यवसुनेत्रमिताः स्फुटाः।
२८२२४०

पण्डितमण्डली

इति पूर्णकूटतानसंख्या।

| | | | |
|---|---|---|---|
| संपूर्णकूटतानाः | २८१८४८. | स्वरान्तरकूटतानाः | ५४४. |
| षाडवकूटतानाः | ३१६३२. | सामिककूटतानाः | ९४. |
| औडवकूटतानाः | ३८००. | गाधिककूटतानाः | १२. |

आहत्य ३१७९३०.

सरिपानां परित्यागान्निषादस्य च वर्जनात्।
षड्जग्रामेऽत्र ताना स्युरष्टाविंशति संख्यकाः ॥
यदा स्युर्मध्यमग्रामे सरिगैस्सप्तवर्जिताः।
एकश्च विंशतिस्तानाः तदा स्युर्मूर्छना क्रमात् ॥
एकोनपञ्चाशदिमे षाडवा ग्रामयोर्द्वयोः।
सपाभ्यां रहितास्सप्त निगाभ्यामपि वर्जिताः ॥
हीना रिपाभ्यां चैते स्युराडवा एकविंशतिः।
षड्जग्रामे मध्यमे तु रिधाभ्यां सप्त वर्जिताः ॥
ग्रामद्वयसमुत्पन्नाः षाडवौडवयोगतः।
सर्वे चतुरशीति स्युः शुद्धतानाः क्रमात्स्फुटम् ॥

पण्डितमण्डली

ताना—भाषारागः

पञ्चमांशान्तिमा ताना भिन्नताने रिवर्जिता।
ताना भाषैकिका भिन्नताने याष्टिकसंमतेः ॥ कुम्भः

—रागः

गान्धारमध्यमकनिषादमाद्य-
पन्यासधैवतवती करुणाश्रया च।
अंशग्रहस्फुरितषड्जनिषादसान्द्रां
ताना भवेद्रिपभपञ्चमवर्जिता च ॥

नान्यः

करुणे रसे च ताना धापन्यासेन भूषिता ध्वनिभिः ।
परिहीना सनिगमकैः..............,सदा भवति ॥

कश्यपः

तनोतेर्विस्तरार्थस्य तानास्तन्यन्त इत्यतः ।
विशिष्टस्वरलोपेन षाडवौडुवितीकृताः ॥
मूर्छना एव भणिताः शुद्धास्ताना महीभृता ।
अनेकथापि ते द्वेधा शुद्धकूटविभेदतः ॥
नियतानियतत्वेन क्रमस्यैषां विभिन्नधीः ।
यतस्तल्लक्ष्म शुद्धत्वे स्वराणां नियतक्रमः ।
कूटत्वे तु व्युत्क्रमोऽत्र स्वराणां मूर्छनाजुषाम् ॥

कुम्भः

## तानानि

तस्य भेदास्समाख्याताः सप्तसप्तगुणा बुधैः ।
जयं च विजयं चैव माङ्गल्यं रिपुमर्दनम् ॥
अप्रतीकं विशालं च वारुणं मित्रसंज्ञकम् ।
गारुडं दैविकं सौम्यं श्वेतं पीतं सुवर्णकम् ॥
चित्रं चित्रपदं कृष्णं सूक्ष्मं रक्तं स्वरूपकम् ।
अश्वक्रान्तं गजक्रान्तं भीमं भीमाकृतिं चलम् ॥
स्थिरं दीर्घं तदा ह्रस्वं ब्राह्मं राक्षसमेव च ।
आतुरं विभवं चैव संविद्रूपं च सात्विकम् ॥
मैकं........................शृणिसंज्ञकम् ।
आयुष्यं पूर्णगेहं च सुभगं ससुखावहम् ॥
पौण्डरीकमजाख्यं च सुराह्वं तारकामयम् ।
विधेयं याज्ञिकं पुण्यं वात्सल्यं सत्यमेव च ॥
सुवर्णान्तानि तानानि जयादीनि चतुर्दश ।
नन्द्यावर्ते भवन्तीह ग्रामे ज्ञेयानि तानि वै ॥
चित्रादीनि च तानानि शृणान्तानि विदुर्बुधाः ।
एकविंशतिसंख्यानि द्वितीयग्रामजानि च ॥
आयुष्यादीनि तानानि तथान्यानि चतुर्दश ।
तृतीयग्रामजातानि तेषां वक्ष्यामि लक्षणम् ॥

वादिमत्तगजाङ्कुशे

## तानि—दर्शनम्

यद्विशेषानभिज्ञत्वं दृष्टे वस्तुनि तानि तत् ।

शारदातनयः

## तानोत्था—रागः

षड्जर्षभपञ्चमहीना ।
सांशा रिपविहीना च तानोत्था मन्द्रवर्जिता ।
मध्यगान्धारबहुला धापन्यासा प्रकीर्तिता ॥

मतङ्गः

## तान्तम्—दर्शनम्

शुष्यद्भ्रूपुटपक्ष्माग्रं यत्तान्तं तत्समीरितम् ।

शारदातनयः

## तापनम्—प्रतिमुखसन्ध्यङ्गम्

अपायदर्शनं यत्तु तत्तापनं । तापनस्थाने शमनं पठितं । तस्यापनयनं यत्र शमनमिति । तस्य विधूतस्य ।

भरतः

अपायदर्शनं तापः । यथा – पार्थविजये गान्धार्याः चित्रसेनेन परिभवे युधिष्ठिरवाक्यम् । केचित्तु स्थाने अस्य अनुनयारत्योः ग्रहनिग्रहरूपं शमनं पठन्ति । यथा – तत्रैव आः क एष इति भीमवाक्यम् ।

रामचन्द्रः

## ताम्रचूडः—हस्तः

भ्रमरस्य तलस्य चेत्कनिष्ठोपकनिष्ठिके ।
ताम्रचूडस्तदा हस्तो बालाह्वानेऽथ भर्त्सने ॥
गीतादितालमाने च शैघ्र्यविश्वासनादिषु ।
सशब्दच्युतसंदंशः कार्योऽसौ छोटिकोच्यते ॥
प्रसारितकनिष्ठस्य मुष्टेर्यत्ताम्रचूडताम् ।
विनियोगं सहस्रादिसंख्यानिर्देशनेऽस्य च ।
केऽप्यूचुस्तं तु निश्शङ्को नैच्छल्लक्ष्येष्वदर्शनात् ॥

शार्ङ्गः

## तारः

अलङ्कारविधिशब्दे द्रष्टव्यम् ।

—गीतालङ्कारः ( प्रतिमठ्यभेदः )

विरामान्तं द्रुतद्वन्द्वं गुरुश्चैकस्ततः परम् ।
स रङ्गताले गातव्यस्तारश्च प्रतिमठ्यकः ॥

संगीतसारः

## तारकहस्तः

व्याघ्रहस्तौ स्वस्तिकौ तु ऊर्ध्वाधोमुखसंयुतौ ।
तारकाख्यकरः प्रोक्तः करटीकाविचक्षणैः ॥
पुरोभागे त्वयं हस्तः भूगोले तारके तथा ।
नखकान्तौ दर्शयन्ति तारकाभिधहस्तकम् ॥

विनायकः

## तारमन्द्रप्रसन्नः—वर्णालङ्कारः ( सञ्चारी )

क्रमादारोहणं कृत्वा सप्तानामष्टमं स्वरम् ।
गत्वा गच्छेत्पुनर्मन्द्रं तारमन्द्रप्रसन्नके ॥

स रि ग म प ध नि स सं .

जगद्धरः

**तारस्वरः**

उच्चैः स्वरेण यद्गानं स तारस्वर उच्यते ।

तुलजः

**तारा**

प्राकृतं भ्रमणं पातो वलनं चलनं तथा ।
प्रवेशनं समुद्वृत्तं निष्क्रमश्च निवर्तनम् ।
नवोक्तान्यात्मनिष्ठानि ताराकर्माणि कोविदैः ॥

अशोकः

**—प्राकृते मात्रावृत्तम्**

चतुर्मात्रागणौ द्वौ , लगलगाः च ।
४ + ४ + ल ग ल ग.

विरहाङ्कः

**—रागः ( षाडवः )**

तारा दिवागतौ युद्धे निषादांशा सवर्जिता ।

नारायणः

**—श्रुतिः**

गान्धारस्य द्वितीया श्रुतिः ।

सुधा

**ताराख्यप्रतिमण्ठः—तालः**

ताराख्यप्रतिमण्ठोऽसौ द्द्वयं लद्वयं भवेत् ।
० ० ॥

वेदः

**ताराभरणं—मेलरागः ( मायामालवगौलमेलजन्यः )**

( आ ) स रि ग म नि ध नि प ध स .
( अव ) स नि ध म ग स रि स .

मञ्ज

**ताररागध्यानम्**

अङ्गहारान् शिक्षयन्ती कुमारान्नृत्यमन्दिरे ।
आरामाराङ्गनाकारा नाट्याटोपविदाम्वरा ॥

इयमेव तारामणिः संपूर्णरागः ।

संगीतसरणिः

**तारावली—प्रवन्धाङ्गम्**

तारावलीत्वङ्गयुगेन युक्ता ।

रघुनाथः

**—भाषाङ्गरागः**

तारावली पग्रहांशावसाना तारषड्जिकाः ।
संपूर्णा मृदुगान्धारा शृङ्गारे ताडिता मता ॥

कुम्भः

**तार्क्षिकः—मेलरागः ( नटभैरवीमेलजन्यः )**

( आ ) स रि म प नि स .
( अव ) स नि ध प म ग रि स .

मञ्ज

**तार्क्ष्यपक्षविलासकः—चालकः**

युगपत्पार्श्वयोः कृत्वा वर्तनास्वस्तिकं ततः ।
सम्प्राप्य मण्डलावृत्या करौ स्वस्वकटीतटम् ।
रेचितौ यदि तत्रैष तार्क्ष्यपक्षविलासकः ॥

वेमः

एवमेवाशोकः तार्क्ष्यपक्षविनोदकमित्याह ।

**तार्क्ष्यपक्षौ—नृत्तहस्तौ**

व्याख्यातौ गरुडपक्षयोः ।

**तालः**

द्रुतलघ्वादिरूपाद्यक्रियामानोपलक्षितः ।
गीतादिकं परिच्छिन्दन् कालस्ताल इतीरितः ॥

कुम्भः

तालस्तलप्रतिष्ठायामिति धातोर्घञि स्मृतः ।
गीतं वाद्यं तथा नृत्यं यतस्ताले प्रतिष्ठितम् ॥

अत्र घञि प्राप्ते वृद्धिः । तलन्ति प्रतितिष्ठन्ति गीतवाद्यनृत्तानि । यद्वा तन्यन्ते प्रकाश्यन्ते नृत्तगीतवाद्यानि । येनेति तालः ।

तकारः शङ्करः प्रोक्तो लकारश्शक्तिरुच्यते ।
शिवशक्तिसमायोगात्तालनामाभिधीयते ॥

अच्युतः

संयोगे च वियोगे च तलयोरुभयोर्यदा ।
वर्तते व्याप्तिमान्कालः स तालः परिकीर्तितः ॥

अत्र तलशब्दात्तालः ।

**—कालरूपी**

ननु तालः कालरूपः कथमित्याशङ्क्याह ।

तालः कालस्वरूपश्चेत्कालः प्राणो न युज्यते ।
अपि न्यूनादिभेदेन कालः प्राणः प्रकीर्तितः ॥
तालः कालो न नित्योऽसौ खण्डः कालस्वरूपतः ।
चलनात्प्राणसंबन्धान्मिते जन्मादितोऽपि च ॥
नाप्यनित्यः स तालोऽयं प्रत्यभिज्ञाप्रमाणतः ।
अनादिकालरूपत्वं नाशकत्वाप्यभावतः ॥
सृष्ट्यादिलयपर्यन्तं वर्तमानस्त्वतीन्द्रियः ।
तालो नित्योऽविनाशादिप्रत्ययस्मृतिगोचरः ॥

लघुप्लुतादिरूपोऽयं स नित्य इति गीयते ।
उत्पत्तौ बाधकाभावान्नो धियो विषयान्तरम् ।
वीचीतरङ्गन्यायेन चोत्पत्तेर्ह्नासंभवः ॥

अच्युतः

—क्रिया ( तालाङ्गम् )

क्रियाशब्दे द्रष्टव्यम् ।

—तालक्रिया

तालः स्यात्तद्विपर्ययात् ।

तदितिम्शम्या ।

वेमः

—देशीलास्याङ्गम्

चाञ्चल्यमव्जपत्रोदरस्येव दृश्यते ।
वपुषश्चलनं तालः प्रोक्तो नृत्तविशारदैः ।

देवणः

—प्रबन्धाङ्गम्

तालः कालक्रियामानम् ।

हरिपालः

—मानम्

अन्तरालं यदत्र स्यात्प्रसृताङ्गुष्ठमध्ययोः ।
तदेव तालसंज्ञं स्यादिति नृत्यविदो विदुः ॥

कुम्भः

प्रसारिते तु यत्स्यातामन्तरालं तदग्रयोः ।
तालमत्र समाचष्टाशोकमल्लो नृपाग्रणीः ॥

अशोकः

—वाद्यप्रबन्धः

तालश्चतुष्षष्टिकलो युग्मे मार्गे च दक्षिणे ।

शार्ङ्गः

चच्चत्पुटश्चतुष्षष्टिकलो वर्त्मनि दक्षिणे ।
वाद्यते यत्र तालाख्यः प्रबन्धोऽयमुदाहृतः ॥

वेमः

## तालकलाब्धिः

कृष्णदेवरायसोदरेणाच्युतरायेण विरचितः । अत्र पूर्वाचार्यमतानि बहूनि तालविषये खण्डितानि । तालकलाविलास, सङ्गीतविद्याविनोद, जैनमत, सङ्गीतमार्ग, चतुरसभाविलास, चूडामणि ( संगीतचूडामणि ), आञ्जनेयमत, नृत्तचूडामणि, सङ्गीतमणिदर्पण, कात्यायनीय, सङ्गीतार्णव, रङ्गराजभरतभाष्य, कपर्दि, परमेश्वरादीनां मतानि खण्डितानि । टीकायुक्तोऽयं ग्रन्थः । तालप्रस्ताराध्यायारंभे 'सीतारामगुरुं नत्वा सोमाभट्टेन तन्यते ! ग्रन्थे तालकलावार्धौ' इत्यस्ति । तस्मादच्युतरायनाम्ना सोमाभट्टः इमं ग्रन्थं (तालकलाब्धिं) रचितवानित्यूह्यते । अष्टावधानसोमनार्यस्य नाट्यचूडामणिकर्तुः गुरुः सीतारामः । सोमाभट्टः सोमनार्य एवेति वा तत्सतीर्थ्यो वेति निश्चयः ।

## तालकलाविलासः

अस्य कर्ता परमेश्वर इति श्रूयते । अस्माद्ग्रन्थादुद्धृताः श्लोकाः अच्युतरायेणताललक्षणे उदाहृताः ।

## तालचिन्तामणिः

अप्पलाचार्यकृतः । स्वोपज्ञव्याख्यया ग्रन्थस्यादर्शो लभ्यते ।

## तालदीपिका

गोपतिप्पकृता । कालः क्रै. प. १४५०.

## तालप्रस्तारः

प्रस्तारः क्रमसंज्ञोऽथ विपरीतक्रमः परः ।
नष्टोद्दिष्टे द्विधा प्रोक्ते ततश्च पृथगेतयोः ॥
ततस्संख्या च पातालद्रुतमेरुस्स्मृतस्ततः ।
लघुगुर्वोः पृथङ्मेरुः प्लुतमेरुस्तथापरः ॥
ततस्संयोगमेरुश्च खण्डप्रस्तारकस्ततः ।
चतुर्णां हारिमेरूणां नष्टोद्दिष्टे पृथक् पृथक् ।
त्रयोविंशतिरित्युक्ताः प्रत्ययाः पृथिवीभुजा ॥

कुम्भः

मतमिदं प्राचीनम । अस्मिन्ननुद्रुतविरामयोः प्रवेशो नास्ति ।

## तालप्राणाः

कालो मार्गक्रियाङ्गानि ग्रहो जातिः कला लयः ।
यतिः प्रस्तारकश्चेति तालप्राणा दश स्मृताः ॥

अच्युतः

## तालरागार्णवमुरारिमङ्गलकुसुमः—सूडप्रबन्धः

यथाशोभालमिमन्ति यत्राष्टादशसङ्ख्यया ।
तालाः पदानि रागस्य पाटास्तेनाः क्रमस्थिताः ॥
वर्णसाम्यमलङ्कारो रसः शृङ्गारनामकः ।
देवादिवर्णनं छन्दो नानायतिमनोहरम् ॥
त्रिविधोऽपि लयो रीतिः कैशिकीवर्णनापि च ।
वाग्गेयकारसंज्ञा च क्रमाद्रागादि कीर्त्यते ॥

धारणी च तथा नट्टा मेघरागो वराटिका।
तथा मल्हारिश्रीरागौ स्थानमालवगौडकः ॥
केदारो मालवश्रीश्च देशाख्या गौण्डकृत्यपि।
वसन्तो मध्यमादिश्च ललितश्च क्रमादमी ॥
चच्चत्पुटश्चाचपुटः षट्पितापुत्रनामकः।
संपक्वेष्टाकउद्घट्ट आदितालस्तथैव च ॥
प्रतिमण्ठश्च मण्ठश्चाड्डतालो वर्णयत्यपि।
द्रुतमण्ठश्च निस्सारुर्झम्पा च द्रुतमण्ठकः ॥
रूपकः प्रतितालश्च तृतीयस्त्वेकतालिका।
पञ्चवक्त्रोद्भवा पाटा हस्तपाटा अलग्नका।
हौडुक्किका हस्तपाटाः चित्रपाटावपाटकौ ॥
हुडुक्कादवसंमण्डि डक्का भेरीसमुद्भवाः।
कंसारघर्घरीकम्रा मर्दलीसंभवास्तथा ॥
क्रमादष्टादशपदेष्वेते पाटाः प्रतिष्ठिताः।
द्वादशादिपदेष्वस्ति विशेषस्सो विधीयते ॥
डक्का कुडुक्का करटा प्रोद्भवा द्वादशेऽधिकाः।
त्रयोदशे सेल्लुकाजा निस्साणोत्थाश्चतुर्दशे ॥
घण्टोद्भवाः पञ्चदशे पदे सप्तदशेऽपि च।
किरिकिट्टभवा अष्टादशे पाटा अमी स्थिताः ॥
वीरदण्डयां वनिभवा अधिकारसंप्रकीर्तिताः।
रागाणां षाडवाद्याश्च रागसंभवतापि च ॥
वर्ण्या वाग्गेयकारेण तालरागार्णवस्य च।
प्रबन्धः पृथिवीभर्त्रा मुरारिप्रीतये कृतः ॥

कुम्भः

### तालक्षणम्

यच्चोदितं वर्णिषु कांस्यमग्र्यं घनं तदाद्यं किल मूर्तमाहुः।
तदीयनादेषु तदुद्भवत्वाद्घनाभिधा लाक्षणिकी प्रसिद्धा ॥
तत्कांस्यकं तालयुगं विदध्यात्समं सपादाङ्गुलयुग्मवक्त्रम्।
सवर्तुलं पिण्डित एतदत्र यवोन्मितं स्यादिति तालविज्ञाः ॥
पादोनगुञ्जोन्मितमध्यरन्ध्रे स त्र्यङ्गुलोत्सेधवशातिरम्यम्।
अत्युज्वलं विस्तृतनिम्नमध्यं कुमारिकायाः स्तनतुल्यरूपम् ॥
सुजातकार्तस्वरलापयुक्तं कौशेयनेत्रांशुकजांचलाम्रम्।
निवेशयेत्तत्र वरं च युग्मे ऋजूकृतं तद्विदधीत चास्मिन् ॥
ग्रन्थिं ततो निर्गमनाय रन्ध्रदेशादिहायं बुधसम्प्रदायः।
आवेष्टितेनाञ्चलदोरकेण प्रदेशिनीं सव्यकरेऽस्य सम्यक् ॥
आक्रम्य चाङ्गुष्ठतलेन सव्यां प्रदेशिनीमस्य च मध्यमाद्यम्।
प्रसारयेदङ्गुलिकात्रयं तदूर्ध्वास्यमत्र स्थिततालमेकम् ॥

सन्धार्य तिर्यङ्मुखमन्यतालं हस्तेन धार्यं किल दक्षिणेन।
तलप्रदेशान्तरलम्बमानाञ्चलावलिं सन्धरणीयमेतत् ॥
अङ्गुष्ठवत्तर्जनिकाग्रभागे तस्याग्रभागेन ततोऽन्यदीयम्।
सन्ताडयेन्मध्यमयास्य नादपरीक्षणं वीक्षणविद्विदध्यात्।
प्रायः प्रदिष्टा इह सर्ववाद्यसमुद्भवा वाद्यविदांवरेण ॥

कुम्भः

### तालसमम्—पुष्करवाद्ये तालवाद्ययोः समत्वापादनम्

यच्छरीरं भवेद्गानं कलातालप्रमाणजम्।
तत्प्रमाणं तु यद्वाद्यं तद्वै तालसमं भवेत् ॥

भरतः

### —अवनद्धे साम्यम्

चच्चत्पुटादिभागेन गुरुप्लुतकलात्मना।
साम्यं यदनुवाद्यं स्यात्तत्तालसममुच्यते ॥

नान्यः

### तालस्वरूपविचारः

तालः कालो न नित्योऽसौ खण्डकालः स्वरूपतः।
चलनात्प्राणसंबन्धान्मितेर्जन्मादितोऽपि च ॥

अत्र खण्डकाल इति लघुगुरुप्लुतादिरूपः। जन्मादिति ईश्वरस्य पञ्चमुखेभ्यो जनिताः तेभ्योऽन्ये ताला इति।

नाप्यनित्यः स तालोऽयं प्रत्यभिज्ञाप्रमाणतः।
अनादिकालरूपत्वं नाशकस्याप्यभावतः ॥

सृष्ट्यादिलयपर्यन्तं वर्तमानस्त्वतीन्द्रियः।
तालोऽनित्यो विनाशादिप्रत्ययस्फूर्तिगोचरः ॥

केचित्तु तालो हि नित्य एव। यतः तालस्य जनयितृपरिकर एव नष्टः। तालस्तु नाभिव्यक्तिगोचर इति।

लघुप्लुतादिरूपोऽयमनित्यमिति गीयते।
उत्पत्तौ बाधकाभावान्नोधियो विषयान्तरम् ॥

वीचीतरङ्गन्यायेन चोत्पत्तेर्ह्यप्तिसंभवः।
निराकारस्य तालस्य कालादिः प्राण एव न।
कालादिर्वायुभिन्नश्च न प्राणो भक्तुमर्हति ॥

उच्यते।

कालादिर्वायुभिन्नोऽपि तालस्य प्राण इष्यते।
राज्ञो भृत्य इव प्राणो गौणोऽयं न विरुद्ध्यते ॥

अच्युतरायः

## तालाक्षरम्

चूडामणिकारस्त्वाह –

प्रस्तारे तालसंबन्धिन्यक्षरं स्याच्चतुर्विधम् ।
संज्ञया तत्परिज्ञेयं द्रुतं लघु गुरुप्लुतम् ॥

तालकलाविलासे उक्तम् –

अनुद्रुतो द्रुतश्चैव लघुर्गुरु ततः परम् ।
प्लुतं चेति क्रमेणैव तालाङ्गानि च पञ्चधा ॥
हंसपादं काकपादं षष्ठाङ्गं केचिदूचिरे ।
चतुर्भिर्लघुभिर्युक्तं निश्शब्दे चिन्नतालके ॥
चतुर्वर्णैस्त्रिभिर्वर्णैः सप्तवर्णैश्च पञ्चभिः ।
नववर्णैः लघुभिन्नं चतुरश्रादिजातिमान् ॥

यथा चतुरश्रः चतुर्वर्णः । त्र्यश्रस्त्रिवर्णः । मिश्रः सप्तवर्णः । पञ्चवर्णः खण्डः । नववर्णसङ्कीर्णः । अत्र वर्ण इति लघुः । मार्गताले पञ्चवर्णो लघुः ।

आञ्जनेय आह —

लघुश्च द्विविधः प्रोक्तः स्वतन्त्राज्जातिभेदतः ।
चतुर्वर्णैस्त्रिभिर्वर्णैः तयोर्मितिरुदीरिता ॥

इयं मितिश्चतुर्वर्णत्रिवर्णात्मिका पाटाक्षरेष्वेव प्रयुक्ता ।

केचिदिति । तालकलाविलासचतुरसभाविलासग्रन्थकारादयः।

अथाङ्गकालयोरभेदत्वात्प्राणत्वहेतुमाह—

अङ्गस्य कालभेदो नास्तीति यद्यपि तद्भ्रमम् ।
अपि कालत्वमङ्गत्वं क्रमव्युत्क्रमभेदतः ॥

अनुद्रुतद्रुतलघुगुरुप्लुतानामङ्गानां काल एव मुख्यो भवति। तस्मात्कालान्न भिद्यन्ते ते इति चेत् परिहरत्यपीति । क्रमव्युत्क्रमभेदतः । क्रमस्तु प्राणः कालः । व्युत्क्रमस्तु कालोऽङ्गम् । द्वावनुद्रुतौ कालौ । एको द्रुतकालः । द्वौ लघुकालौ । एको गुरुकालः । अयं कालः प्राणः । ताले तु गुर्वनन्तरं लघुः प्लुतो वा प्लुतानन्तरं गुरुलघुद्रुतेष्वन्यतमो वा । व्युत्क्रमवर्तने कालोऽङ्गं भवति । अयं तालावयवः ।

अच्युतः

## तालार्णवः—प्रबन्धः

गद्ये वा पद्यबन्धे वारागेणैकेन धीमता ।
तालैश्च बहुभिर्युक्तस्तालार्णव इतीरितः ॥

सोमेश्वरः

गद्यरूपोऽथवा पद्यरूपोऽयं बहुतालयुक् ।
येन केनाऽपि रागेण युतस्तालार्णवो भवेत् ॥

हरिपालः

## तालिका—गीताङ्गम्

चतुर्विंशतिगणपरिमाणवस्तुका ।

नान्यः

## तालोड्डुपानि

ब्रह्मताल इडावांश्च चक्रतालश्च सारसः ।
अर्जुनो मकरन्दश्च महासन्निश्च सप्तमः ॥
सन्नितालस्त्र्यश्रवर्णस्तथा शरभलीलकः ।
कुण्डनाची यतिमुखः शेखरः परिकीर्तितः ॥
एभिर्द्वादशभिस्तालैरुड्डुपानि भवन्ति हि ।
तावन्त्येवेति विबुधा निगदन्ति पुरातनाः ॥
करणं स्थानकं तत्र चारी च करयोः स्थितिम् ।
चमत्कारेण गृह्णीयात्पदयोस्तलकुट्टनम् ॥

इति तालशृङ्खला ।

वेमः

## तिप्पराजः—देशीतालः

तिप्पराजाभिधे ताले मध्यस्थितविरामकम् ।
विन्दुत्रयं तथा पुंखत्रयं षड्वारवर्जितम् ॥

० ०̇ ० । i । ० ०̇ ० । i । ० ०̇ ० । i । ० ०̇ ० । i । ० ०̇ ० । i ।
० ०̇ ० । i ।

गोपतिप्पः

## तिम्मभूपालः—देशीतालः

तिम्मभूपालके त्रिः स्याद्गुर्वाद्यन्तप्लुतद्वयम् ।

ऽऽ̇ ऽ̇ऽऽऽ̇ ऽ̇ऽऽऽ̇ ऽ̇ऽ

गोपतिप्पः

## तिम्मभूपालसोदरः—देशीतालः

अनन्तरं मतास्ताले तिम्मभूपालसोदरे ।
वास्त्रयं स्युः पगलभूपः कोदण्डविद्युतौ ॥

ऽ̇ऽ । ऽऽ । ऽ̇ऽ । ऽऽ̇

गोपतिप्पः

## तिरश्चीनकुट्टिता—मुड्डपचारी

अङ्घ्रिर्निकुट्टितः पूर्वं स्वपार्श्वपरपार्श्वयोः ।
मध्ये निवेशितः पश्चात्तिर्यक् तत्रैव कुट्टितः ।
यत्र सा स्यात्तिरश्चीनकुट्टितान्वर्थनामभाक् ॥

अशोकः

## तिरश्चीना—ग्रीवा

पार्श्वयोरूर्ध्वयोगे च चलनात्सर्पयानवत् ।
सा ग्रीवा तु तिरश्चीनेत्युच्यते नाट्यकोविदैः ।
खड्गे श्रमे सर्पगत्यां तिरश्चीना प्रयुज्यते ॥

नन्दी

—जङ्घा

क्षितिश्लिष्टबहिःपार्श्वा तिरश्चीना मतासने।

अशोकः

तिरश्चीना तु पार्श्वगा। तिरश्चीना समाधौ स्यात्।

सोमेश्वरः

पार्श्वगामि तिरश्चीनमुक्तं पद्मासनादिषु।

ज्यायनः

तिरिपश्रृङ्खला—देशीनृत्तम्

जानुपृष्टभ्रमरिका प्रपदभ्रमरी तथा।
स्वस्तिकभ्रमरी चैव तदान्तर्भ्रमरी पुनः॥
खण्डसूचीभ्रमरिका मण्डिभ्रमरिका तथा।
चक्रभ्रमरिका चैव मण्डलभ्रमिरष्टमी॥
जानुभ्रमरिका पश्चात्कटिच्छिन्नभ्रमिर्भवेत्।
करणभ्रमरी प्रान्ते त्वन्तर्जानुभ्रमिस्तथा।
द्वादशैतास्तु पर्याया ग्राह्या नृत्यविशारदैः॥

वेदः

तिरिपभ्रमरी—भ्रमरी

अङ्घ्रिस्वस्तिकमादाय तिर्यग्भ्रमणतो भवेत्।

कुम्भः

कुञ्चितं पादमुत्क्षिप्य पार्श्वेनाक्षिप्य पृष्ठतः।
अन्याङ्घ्रेस्स्वस्तिकं कृत्वा शरीरं भ्रामयेद्यदा॥
तिर्यग्यद्दण्डपक्षाभ्यां यथा स्यात्स्वस्तिकच्युतिः।
तिरिपभ्रमरीत्येषा तदा तज्ज्ञैर्निगद्यते॥

ज्यायनः

तिर्यक्—बाहुः

पूर्वोपगमनाद्बाहुः तिर्यगाख्यो बुधैर्मतः।

अशोकः

तिर्यक्कुञ्चिता—देशीचारी

चरणं कुञ्चितं तिर्यक् यत्र च प्रक्षिपेन्मुहुः।
क्रमेण चारी सा तिर्यक्कुञ्चितेत्यभिधीयते॥

वेमः

तिर्यक्ताण्डवचालनम्—चालकः

तिर्यगूर्ध्वं प्रसृतयोः पाण्योरेककरो यदा।
नाभिप्रदेशे विलुठेदन्यः पार्श्वान्तरं व्रजेत्।
तदैनं चालकं प्राहुः तिर्यक्ताण्डवचालनम्॥

वेमः

तिर्यगञ्चितम्—उत्प्लुतिकरणम्

समपादात्कृते तिर्यगुत्प्लवे तिर्यगञ्चितम्। अशोकः

ज्यायनवेमाभ्यामिदं करणं न निबद्धं। कुम्भः निर्वक्ति इदं करणम्।

तिर्यग्गतस्वस्तिकाग्रम्—चालकः

द्विगुणं लुठितौ तिर्यक्करावन्योन्यसंमुखौ।
आगत्य स्वस्तिकीभूतौ पुरो वेगात्प्रसारितौ॥
तथा स्वस्तिकभङ्गेन तिर्यञ्चौ प्रसृतौ यदि।
तिर्यग्गतस्वस्तिकाग्रं प्रस्तुवन्ति विपश्चितः॥

वेमः

तिर्यङ्नतम्—शिरः

तिर्यङ्नतं यथार्थाख्यं चिन्तापीडादिषु स्मृतम्।

ज्यायनः

तिर्यङ्नतोन्नतम्—शिरः

तिर्यङ्नतोन्नतं तद्वत्सुभ्रुवां विभ्रमादिषु।

ज्यायनः

—शिरः

तिर्यङ्नतोन्नतिं प्राप्तं शिरस्तिर्यङ्नतोन्नतम्।
बिब्बोकादिषु कान्तानां तत्प्रयोगं प्रचक्षते॥

शार्ङ्गः

तिर्यङ्मुखा—देशीचारी

स्थानके वर्धमानाख्ये स्थित्वा पादौ प्रसर्पतः।
सव्यापसव्ययोस्तूर्णं यत्र तिर्यङ्मुखा तु सा॥

वेमः

तिर्यक्सरणम्—उत्प्लुतिकरणम्

यत्रैकेनैव पादेन तिर्यगुत्प्लुत्य भूतले।
निपत्यैकाङ्घ्रिणा तिष्ठेत्तत्तिर्यक्सरणं भवेत्॥

वेमः

तिलकः—गीतालङ्कारः (ध्रुवभेदः)

पञ्चविंशाक्षरः पादो यस्यासौ तिलकाह्वयः।
ताले चाचपुटे ज्ञेयो वीरे वाप्यद्भुतेऽपि वा।
ताले चाचपुटे ज्ञेयं गुरुर्लघुयुगं गुरुः॥

संगीतसारः

—गण्डभूषणम्

तिलकम्—मात्रावृत्तम्

चतुर्मात्र एकः पञ्चमात्र एकः ज ग ग.

विरहाङ्कः

तिलकवर्तना

नाममात्रप्रसिद्धा।

तिवटम्—देशीनृत्तम्

नवर्जिततवर्गेण गकारेण क्वचित्क्वचित्।

निर्मितं विन्दुना वर्ज्यमिति तादिम्रहोत्तमम् ॥
तालावृत्तानुगम्भीरैः तिवटं परिकीर्तितम् ।

यथा –

थै थै तिथा तिथि तेतें ततिगदा ।

वेदः

तीर्णमञ्जरी—मेलरागः ( मेचकल्याणीमेलजन्यः )

( आ ) स रि ग म नि स.
( अव ) स ध नि ध प म रि म ग रि स.

मञ्ज

तीव्रवर्धिनी—मेलरागः ( नटभैरवीमेलजन्यः )

( आ ) स ग प ध नि ध स.
( अव ) स नि ध म ग रि स.

मञ्ज

तीव्रवाहिनी—मेलरागः ( षड्विधमार्गिणीमेलजन्यः )

( आ ) स रि ग म प ध प नि स.
( अव ) स नि प ध प म ग रि स.

मञ्ज

तीव्रा—श्रुतिः

षड्जे प्रथमा श्रुतिः ।

तुच्छिका—रागः

न्यासांशग्रहधैवतगान्धारापेतपरिखप्राया ।
रिषभस्वरमध्यावधिकतारमन्द्रा च तुच्छिका भवति ॥

नान्यः

धैवतग्रहणन्यासा गहीना रिपभूयसी ।
रिषभं मध्यमं यावत् तारमन्द्रा च तुच्छिका ॥

मतङ्गः

यथाभिहितविशेषमस्यापि भिन्नपञ्चम्या इवालापकं रूपकं वेदितव्यम् ।

तुडुका—वाद्यप्रबन्धः

यत्पृथग्रचितः पाटैर्बन्धं वर्णसरेण वा ।
अभ्यस्तद्रुतमानेन खण्डं सा तुडुका मता ।
प्रायशो नर्तने दीप्ते नृत्तज्ञैस्सा प्रयुज्यते ॥

वेमः

यदेकदेशतो वाद्यमुद्ग्राहाभोगयोर्ध्रुवे ।
हस्तलाघवयोगेन तुडुका नाम सा स्मृता ॥

सोमराजः

उद्ग्राहध्रुवकाभोगाः पुनरुद्ग्राह उच्यते ।
तुडुक्क इति वाद्येपु कथितस्सोमभूभुजा ॥ सोमेश्वरः

शुद्धकूटादिभिर्बद्धः खण्डो वर्णसरेण वा ।
अभ्यस्तस्स्याद्रुते माने तुडुकादीप्तनर्तने ॥

द्रुताद्रुततरं मानमत्र लक्ष्येपु दृश्यते ।
उद्ग्राहध्रुवकाभोगे यत्रान्यतमखण्डकम् ॥

वादनीयं परे प्राहुरन्ये तु तुडुकां जगुः ।
उद्ग्राहध्रुवकाभोगोद्ग्राहाणां वादनं क्रमात् ॥

शार्ङ्गः

तुण्डकः—वाद्यप्रबन्धः

वाद्यैकदेशं वर्गान्तमयं वाद्यादिमध्ययोः ।
वादयेल्लघुहस्तत्वाद्यं तमाख्याति तुण्डकम् ॥

शार्ङ्गः

वाद्यस्य चादौ मध्ये च वर्गान्तो यत्र वाद्यते ।
वाद्यैकदेशो वाद्यज्ञैः लाघवात्करयोर्द्वयोः ।
तुण्डकाख्यः प्रबन्धोऽसौ पण्डितैः परिगीयते ॥

वेमः

तुण्डिकिनी—सुषिरवाद्यम्

तुम्बिकिनी, तित्तिरिः – इत्यपि दृश्यते ।

सैव हस्तद्वयायामा प्रोक्ता तुम्बिकिनी जनैः ।
तुंतुं तुरीतिवर्णाढ्या तित्तिरीति स्मृता बुधैः ।
तुण्डिकिन्योर्युगं वाद्यमिति वाद्यविदो विदुः ॥

सैव काहलैव ।

कुम्भः

तुम्बकिता—फूत्कारदोषः

तुम्बकी योऽनुरणनप्रायः प्रायेण दृश्यते ।

कुम्भः

तुम्बरी—वीणाभेदः

अष्टमुष्टिमितो दण्डस्तुम्बुर्याः खादिरो मतः ।
तस्यैकाङ्गुलकं रन्ध्रं वेष्टनं चतुरङ्गुलम् ॥
सार्धं चोभयतो देयं रौप्यसंवरकद्वयम् ।
सार्धाङ्गुलोच्चककुभं सारदारूद्भवं न्यसेत् ॥
तस्मात्षडङ्गुलादेकं तुम्बकं तत्र विन्यसेत् ।
षड्विंशत्यङ्गुलात्तस्मात्तुम्बमन्यं विनिक्षिपेत् ॥
नात्युन्नतं नातिह्रस्वमेवं तुम्बयुगं त्विह ।
तुम्बुर्यां मन्द्रतन्त्रीस्तु छागाद्यान्त्रसमुद्भवा ॥
अन्यद् द्वे पट्टसूत्रेण निर्मिते तु मनोहरे ।
एका तन्त्रीलये तत्र बद्धव्या ककुभे ततः ॥

तुम्बाद्बहिर्गते दण्डे तारमध्याख्यतन्त्रिके।
बद्धव्ये सुदृढीकृत्य यथा न चलतस्तु ते॥
ऊर्ध्वतुम्बादधोऽन्या तु बद्धव्या मन्द्रतन्त्रिका।
ककुभे कलिका देया यथानुरणनं भवेत्।
एषा च तुम्बरी प्रोक्ता सर्वगीतानुवादिनी॥

नारायणः

इयं तुम्बरी दक्षिणदेशप्रसिद्धात् तम्बुरेति वाद्यविशेषाद्भिन्नैव। तम्बुरावाद्यं केवलं चतुस्तन्त्रीयुतं श्रुतिवाद्यमेव। एकमेव तुम्बं बृहन्मानम्। कलिका जीवाश्शङ्कवः (चत्वारः) वीणायामिवात्र ज्ञेयाः। तम्बुरायाः श्रुतिमात्रप्रयोजनत्वात्सारीस्थापनं तत्र नास्ति।

तुम्बुरुः

नाटकगेयलक्षणकर्ता। कोऽयं कदा वासीदिति न ज्ञायते। नारदमहर्षेः समानस्कन्धः समानकालीनश्च स्यात्। तुम्बुरुनाटकादेकस्मिन्सङ्गीतसारे सङ्गीतदामोदरे च श्लोका उदाहृताः।

—घनवाद्यम

अधोमुखं ताम्रमयं विदध्यात्कुम्भं सुशोभं समलङ्कृतं च।
सुवर्णलिप्तं च ततोऽङ्गुलीषु निक्षिप्य मुद्रात्रितयं प्रविष्टम्।
कृतान्तरालं पुनरामिरत्र कुर्यादुधस्तुम्बुरुवादनं च॥

कुम्भः

तुम्बुरुप्रियः—रागः

गान्धारांशो मध्यन्यासो निधनश्च सप्तमध्वनिकः।
धैवतषड्जापेतो रागस्स्यात्तुम्बुरुप्रियः॥

नान्यः

गान्धारांशो निषादान्तो मध्यमन्याससंयुतः।
षड्जधैवतनिर्मुक्तो विज्ञेयस्तुम्बुरुप्रियः॥

कश्यपः

तुरगलीलः—नृत्तबन्धः

यत्र पङ्क्तिद्वयं कृत्वा पृथगष्टभिरष्टभिः।
मिथश्चतुष्ककोणेषु चालयेद्यदि नर्तकः।
अयं तुरगलीलाख्यो बन्धो ललितबन्धुरः॥

वेमः

तुरङ्गलीलः—देशीतालः

हयलीलं पश्यत।

तुरङ्गलीलताले स्याद्द्रुतद्वन्द्वं लघुस्ततः। ० ०।

नन्दी

तुरङ्गिणी—गतिः

उत्क्षिप्य दक्षिणं पादमुल्लङ्घ्य च मुहुर्मुहुः।
वामेन शिखरं धृत्वा दक्षिणेन पताकिकाम्।
तुरङ्गिणीगतिः प्रोक्ता नृत्यशास्त्रविशारदैः॥

नाट्यदर्पणः

तुरङ्गी—गतिः

अश्रमं च गतिश्शीघ्रं वचोव्यक्तिचमत्कृता।
तुरङ्गाणां गतिस्सैषा चमत्कारमनोरमा॥

देवेन्द्रः

तुरतुरी—सुषिरवाद्यम्

तुण्डकिनीत्यपि दृश्यते।

तुरुष्कगौडः—उपाङ्गरागः

मन्द्रो गतो गभूयिष्ठो ग्रहांशन्याससप्तमः।
तुरुष्कगौडः कथितः पञ्चमर्षभवर्जितः।
अयमान्दोलितः षड्जे केदारो गौड उच्यते॥

भट्टमाधवः

—प्रथमरागः

निग्रहांशो रिपत्यक्तो गबहुर्मन्द्रताडितः।
तुरुष्कगौडी वीरे स्यात् मालवीयस्स्मृतो जनैः॥

मोक्षदेवः

—रागः

ततस्तुरुष्कगौडस्स्यात्पञ्चमर्षभवर्जितः।
निषादांशश्च गान्धारबहुलो मन्द्रताडितः॥

हरिः

परिहीनो निषादांशो गान्धारबहुलस्तथा।
मन्द्रेण ताडितः प्रोक्तस्तुरुष्को गौड उच्यते॥

जगदेकः

गान्धारबहुलो मन्द्रताडितो रिपवर्जितः।
निषादांशग्रहन्यासः तौरुष्को गौड उच्यते॥

हम्मीरः

तुरुष्कतोडी—प्रथमरागः

मध्यांशा स्वल्पगान्धारा तोडी तौरुष्कतोडिका।
निषादर्षभबाहुल्या स्वरैस्सन्ताडिता मता॥

मोक्षदेवः

—उपाङ्गरागः

ताडिता स्वल्पगान्धारा निषादर्षभशालिनी।
तोड्येव कथ्यते तद्ज्ञैरिह तौरुष्कतोडिका॥
पञ्चमभूयसीति रघुनाथः।

भट्टमाधवः

—रागः

तुरुष्कतोडिका चोपा सत्रया गविवर्जिता।
उपेत्युपरागः।

तोड्येव ताडिता गाल्पतौरुष्की रिनिभूयसी ।

मध्यमांशा च पूर्णा च निषादर्षभभूयसी ।
ताडिता स्वल्पगान्धारा तुरुष्की तोडिका स्मृता ॥

जगदेकः

कथ्यते च तुरुष्काद्या तोडी मध्यांशसंयुता ।
स्वरैस्सप्तभिरापूर्णा निषादर्षभभूयसी ।
गान्धारे स्वल्पतां प्राप्ता भवेदियमितीरिता ॥

हरिः

मध्यमांशा च संपूर्णा निषादरिषभोत्कटा ।
गान्धारदुर्बला तोडी तुरुष्की ताडिता भवेत् ॥

सोमेश्वरः

### तुरुष्कतोडीरागध्यानम्

आयतनीलनिचोला करमालाजप्यमानपतिनामा ।
विरहातुरोच्यगौरी तुरुष्कतोडी महावेणी ॥

सोमनाथः

### तुलजामहाराजः

अयं तञ्जापुराधिपः । कालः १७२९ – १७३५. सङ्गीतसारोद्धारकर्ता । अनेन चतुर्दण्डिप्रकाशिका, विट्ठलीय, स्वरमेलकलानिधि, मतानि सम्यक् परिशीलितानि । रागाणां मेलकर्तृविषयं विचारयामास ।

### तुलाहस्तः

कलशाभिधहस्तौ तु स्पृष्टाङ्गुष्ठौ परस्परम् ।
तुलाराशौ चन्द्रसूर्यसङ्गमे युज्यते क्रमात् ॥

शृङ्गारः

### तुल्यतर्कः—लक्षणम्

रूपकैरुपमाभिर्वा तुल्यार्थाभिः प्रयोजितः ।
अप्रत्यक्षार्थसंस्पर्शस्तुल्यतर्कः प्रकीर्तितः ॥

भरतः

यथा – नवार्केभेत्यादि वीणावासवदत्ते राजवचनम् ।

### तुल्यहस्तः

अधोमुखपताकाख्यौ कृत्याङ्गुष्ठे तु मेलयेत् ।
तुल्यहस्तस्स भवति परब्रह्माधिदेवता ॥

समूहे परिपूर्णाब्धौ निधिष्वपि समे तथा ।
विनियोगस्समाख्यातः गम्भीरे वेदिकातले ॥

गौरीमतम्

### तुल्लम्—देशीनृत्तम् ( उड्डुपाङ्गम् )

हृदये शिखरद्वन्द्वं कुञ्चिते स्थानके ततः ।
चतुरश्रे स्थानके च पर्यायेण पताककौ ॥

प्रसारयेत्स्वस्वपार्श्वे कुञ्चितं च ततः श्रयेत् ।
पुरोऽधस्ताद्वामकरः स भवेदलपद्मकः ॥

प्रसारितो दक्षिणस्तु कुर्यादूर्ध्वमधोमुखम् ।
शिखरं तु ततः स्थानं चतुरश्रं समाश्रयेत् ॥

पर्यायेण पताकस्य प्रसारः पूर्ववद्भवेत् ।
कृत्वा तु स्वस्तिकं स्थानं स्वस्तिकावलपद्मकौ ॥

पुरस्तात्तु ततस्तिर्यक् कुञ्चिता चारिका भवेत् ।
सहैव दण्डपक्षेण हस्तकेन सुशोभना ॥

चतुर्वारं च तौ हस्तौ चतुर्वारं च चारिका ।
परिवर्तनतः कुर्यात्प्रत्यालीढं ततः श्रयेत् ॥

तत्र वामो लताहस्तो दक्षिणः पार्श्वगोर्ध्वगः ।
पताकः कुञ्चितां तिर्यक् चारीं वामे द्वयं चरेत् ॥

तत्रोर्ध्वगः पताकस्तु शनैर्हृदयमानयेत् ।
तत्रालीढं स्थानकं च पताको वाम ऊर्ध्वगः ॥

दक्षिणं तु लताहस्तं पुनः कुञ्चितमाचरेत् ।
हृदये शिखरद्वन्द्वं विधायैवं ततः पुनः ॥

अङ्गान्तरे विपर्यासात्सर्वं पूर्ववदाचरेत् ।
ततस्तिर्यक्कुञ्चिता च चारी पर्यायतो भवेत् ॥

हृदये चालपद्मस्य द्वयेन परिवर्तनैः ।
सहैव कुञ्चितां चारीं पुरतः पृष्ठतस्तथा ॥

पश्चात्सरलतश्चारीं स्वीकुर्यादपकुञ्चिताम् ।
पादयोः स्वस्तिकं कृत्वा ललितौ नृत्तहस्तकौ ॥

पुरोर्ध्वे च विधायादौ भ्रमरीं चारिकां चरेत् ।
अधः पार्श्वद्वये चैव कर्तव्यावलपद्मकौ ॥

हृदये शिखरद्वन्द्वं मण्डले स्थानके पुनः ।
पताकं दक्षिणे पार्श्वे संप्रसार्य च गारुडम् ॥

कृत्वा तु कुञ्चितस्थाने सहैव परिवर्तनैः ।
गृह्णीयात्कुञ्चितां चारीमेवमङ्गान्तरेण च ।
सहैवोत्प्लुतकं कुर्यात्पुरतः स्वस्तिकं भवेत् ॥

अलपद्माख्यकरयोश्चतुरश्रं भवेत्तदा ।
पार्श्वयोः संप्रसारः स्यात्करयोस्तु पताकयोः ॥

वामपादे दक्षपदं संस्थाप्य भ्रमरीं चरेत् ।
पुरो दक्षपदं स्थाप्य सह तेनालपद्मकम् ॥

अधः प्रसार्य वामोऽङ्घ्रिः स्थाप्यस्तेन सहैव तु।
वामोऽलपद्मः पुरतः प्रसार्याधः पताककः॥
हृदये वामशिखरं प्रसृतं च पताककम्।
दक्षिणे तुलमुद्दिष्टं आदितालेन सूरिभिः॥

वेदः

अत्र कुञ्चिता, तिर्यक्कुञ्चिता, अपकुञ्चिता, भ्रमरी, इति चतस्रश्चार्यः।

तुम्बुरुप्रियः—तानः

गान्धारग्रामे नारदीयतानः।

ग म प नि स रि.

नान्यः

तूकः—देशीलास्याङ्गम्

लयेन चलनं यत्र सलीलावतंसकौ।
दलद्धेलाप्रपञ्चेन हावप्रचुरतायुतौ।
यत्र कर्णौ प्रकुर्वाते तं तूकं मुनयोऽवदन्॥

कुम्भः

द्रुतमन्दादिभावेन चालनं हावपूर्वकम्।
लीलावतंसयुतयोः कर्णयोस्तूकमीरितम्॥

अशोकः

तूर्णम्—वीणावादनप्राणः

कर्तरीश्वसिताभ्यां यत्कुहरेण समन्वितम्।
निर्घोषरेफगमकैस्तूर्णं तत्करणं विदुः॥

पार्श्वदेवः

तूलिकाविचित्रम्—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

( आ ) स रि ग रि म प ध स.
( अव ) स नि ध प ध म नि ध म ग रि ग स.

मज्ज

तूहली—सुषिरवाद्यम्

हस्तैकमात्रवंशस्य यत्रान्ते विनिवेश्यते।
घटितं माहिषं शृङ्गं तूहली सा प्रकीर्तिता।
तारनादं प्रतिभटभयवादनमीरितम्॥

कुम्भः

तृतीयः—देशीतालः

तृतीये तु द्रुतादूर्ध्वं सविरामद्रुतद्वयः। । ०̆ ०̆

वेमः

द्रुतद्वयं विरामान्तं तृतीये। ० ० ०̆

श्रीकण्ठः

द्रुते द्रुते विरामः स्यात्तद्द्रुताभ्यां तृतीयकः।
तद्रैतथुथुगधिकथ डधिद्दिल्यडम्। ०̆। ०̆। ०̆।

सुधाकलशः

तृतीयकामोदः—रागः

अंशग्रहन्यासनिवासिषड्जो गान्धारमन्द्रस्समशेषनादः।
सर्वस्वरैस्स्वल्पकषाड्जिकायां जातः कमोदस्तु भवेत्तृतीयः॥

नान्यः

गान्धारमन्द्रपूर्णः षड्जन्यासग्रहांशकः।
सप्तभिश्च स्वरैस्स्वल्पः कामोदस्त्वपरो भवेत्॥

मतङ्गः

तृतीयप्रहरगेयाः—रागाः

वराटी तोडिका चैव कामोदी च कुडाद्रका।
गान्धारी नागशब्दी च तथा देशी विशेषतः।
शङ्कराभरणो ज्ञेयो द्वितीयप्रहरात्परम्॥

दामोदरः

तेजः

अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत्।
प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम्॥
समानानां वशीयत्वं कर्मणा मनसा गिरा।
यस्य सन्तः प्रशंसन्ति तदाहुस्तेज इत्यपि॥

भावविवेकः

तेजस्वि

अन्येभ्योऽपि च भूयिष्ठा यस्मिंस्तत्परमाणवः।
तेजस्वि तद्धवेद्वस्तु चक्षुषां प्रतिघातकम्॥

भावविवेकः

तेन्नः—प्रबन्धाङ्गम्

संस्कृतप्राकृताभ्यां च भाषयातिविचित्रया।
तेन्नतेन्नेति यश्शब्दः सोऽयं मङ्गलसूचकः॥

हरिपालः

तेनेति शब्दं किल तेन्नकः स्यात् श्रेयःप्रदो मङ्गलवाचकश्च।
कथं तु तेन्नस्त्विह मङ्गलार्थो विहाय चोङ्कारमथेतिशब्दम्॥
अत्रोच्यते तत्त्वमसीतिवाक्ये सूत्रेषु वा सत्यवतीसुतस्य।
तद्ब्रह्मवाक्येऽपि च तैत्तिरीये ब्रह्मैव लक्ष्यं किल तत्पदेन॥
हरो हरिश्चापि विरिञ्चनश्च सुरास्त्रिका तत्पदकीर्तनेन।
अतश्च गानेऽपि च तेन्नकारः तालप्रयोगेऽपि च तत्तकारः।
अतीवकल्याणविशेषवत्त्वो भवेदयं सर्वजनप्रसिद्धः॥

रघुनाथः

**तेन्नकरणम्**—प्रबन्धः

गीयते तेन्नकरणं स्वरैर्धात्वोस्सतेन्नकैः ।

हरिपालः

स्वरास्सतेन्नका यत्र दृश्यन्ते धातुयुग्मके ।
तदुक्तं तेन्नकरणं चालुक्यपृथिवी भुजा ॥

जगमल्लः

**तोटकम्**—गर्भसन्ध्यङ्गम्

संरंभवचनं चैव तोटकम् ।

भरतः

आवेगगर्भं यद्वचनं तत्तोटकम् । स चावेगो हर्षात्क्रोधादन्यतोऽपि वा भिनत्ति यतो हृदयं ततस्तोटकम् । यथा – रत्नावल्यां अद्यापीत्यादिविदूषकवचनम् ।

अभिनवः

—गर्भितं वचः

क्रोधहर्षादिसंभूतावेगगर्भितं वचनं तोटयति हृदयम् । यथा – रामाभ्युदये चतुर्थेऽङ्के तातेत्यादि मेघनादवचनम् ।

रामचन्द्रः

—द्वादशाक्षरवृत्तम्

स स स साः .

भरतः

—रूपकम्

दिव्यमानुषसंयुक्तो न यत्राङ्के विदूषकः ।
तोटकं नाम तद्ज्ञेयं गूढनायकलक्षणम् ॥

पञ्चाष्टनवसप्ताङ्कं दिव्यमानुषसंज्ञकम् ।
तोटकं नामतत्प्राहुर्भेदं नाटकवस्तुनः ॥

दिव्यया सह मानुषेण सङ्गम इति समासार्थः ।

यद्वा –

तोटः स्यादिह दिव्यमानुषमयः प्रस्युत्तमः कैशिकः ।
पञ्चाष्टाङ्कविनिर्मितः स्फुटकथः त्र्यङ्गोऽवमर्शेन च ।
सर्वोऽङ्कः खलु विप्रलम्भगहनो नानाकलासूद्भवः ।
ख्यातः स्फायति नायकः सुललितः क्रीडाप्रमोदादिभिः ॥

यथा विक्रमोर्वशी ।

शुभङ्करः

नवाङ्कं तोटकं दृष्टं मेनकानाहुपाह्वयम् ।
तोटकं मदलेखाख्यं यत्तस्तंभितलम्भकम् ॥

क्रमादष्टाङ्कसप्ताङ्कौ दृश्येते ह्यविदूषकौ ।
यद्विक्रमोर्वशीयाख्यं पञ्चाङ्कं तोटकं स्मृतम् ॥

शारदातनयः

प्रत्यङ्कं विदूषको वर्तत इत्यश्मकुट्टः ।

दिव्यमानुषसंयोगो यत्राङ्कैस्सविदूषकैः ।
तदेव तोटकं भेदो नाटकस्येति हर्षवाक् ।
तदव्यापकमित्यन्ये नाद्रियन्ते विपश्चितः ॥

विक्रमोर्वशीये विदूषको नास्ति । मेनकानाहुषतोटके प्रत्यङ्कं विदूषकः ।

**तोडकम्**—ध्रुवावृत्तम्

यदि चान्त्यतृतीयकषष्ठगतैः नवमेन च भूषितमेवम् ।
गुरुभिस्सततं त्विह यद्घटितं तोटकमेव हि नर्कुटकम् ॥

रमणी सहिदो रयणी विरमे । रमणी सहितो रजनी विरमे ॥

भरतः

**तोडिपुन्नागरागध्यानम्**

सतीकण्ठदेशस्थसव्यप्रकोष्ठं
द्वितीये च हस्ते तदीयोरुयुग्मम् ।
सदा नागबन्धप्रशस्ताङ्कपीठं
भजे सन्ततं तोडिपुन्नागरागम् ॥

रागसागरः

**तोडी**—प्रथमरागः

अंशावसाना ग्रहमध्यमा स्या-
द्गान्धारमन्द्रा च समानशेषा ।
शुद्धाङ्कितात्षाडवतस्सतारा
हर्षप्रदा मुख्यरसे च तोडी ॥

मोक्षः

—मेलकर्ता

आद्यादिमोक्षहरिगान्धरशुद्धमध्य-
विद्धधश्वकैशिकनिषादमिदं समानम् ।
गायन्ति नारदमुखा इह तोडिरागे
काचित्कपञ्चमयुतोऽपि स षाडवाख्यः ॥

सरिमधाः शुद्धाः । गोऽन्तरः । कैशिकनिषादः । पो लुप्तः ।

परमेश्वरः

—मेलरागः ( कर्णाटीगौडमेलजा )

तोडी मत्रयसंयुक्ता गातव्या दिवसोदये ।
मन्याहता पकम्पा च गायकस्वान्तरञ्जनी ॥

श्रीकण्ठः

षड्जपूर्वा तु तोडी स्याद्यत्रोक्तौ कोमलौ रिधौ ।
न्यासः स्याद्धैवतस्तस्यां गान्धारांशेन शोभिता ।
मेनारोहे तु पन्यासा पञ्चमेनोभयोरपि ॥

प्रथमप्रहरोत्तरगेया ।

अहोबिलः

पूर्वेति । श्रुतिद्वयपरित्यागात्पूर्वसंज्ञेत्यस्य परिभाषा ।

—मेलरागः ( हनुमत्तोडीमेलजन्यः )

( आ ) स रि ग म ध नि स .
( अव ) स नि ध म ग रि स .

मञ्ज

—रागः

अथ तोडी षाडवाङ्गा न्यासांशग्रहमध्यमा ।
संपूर्णा षड्जतारा च मध्यमे मन्द्ररूपिणी ॥

हरिः

मध्यमांशग्रहन्यासा संपूर्णा सप्तभिः स्वरैः ।
पञ्चमे कम्पिता नित्यं मन्द्रगान्धारभूषिता ॥
षड्जतारा निषादाख्या भूयिष्ठा रिषभेण तु ।
नाम्ना तोडीति विख्याता शुद्धषाडवसंभवा ॥

सोमेश्वरः

अंशन्यासग्रहधृतमध्यमकसतारमन्द्रगान्धारा ।
समशेषा संपूर्णा चान्दोलितगमका च तोडिका कथिता ॥

नान्यः

मध्यमांशग्रहन्यासा गतारा सदृशस्वरा ।
संपूर्णा मन्द्रगान्धारा तोडिका परिकीर्तिता ॥

याष्टिकः

मध्यमांशग्रहन्यासा तोडिका शुद्धषाडवात् ।
जाता मध्याह्नसमये गेया शृङ्गारवीरयोः ॥

नारायणः

अङ्गं षाडवरागस्य संपूर्णस्य समस्वरः ।
षड्जतारश्च मन्द्रश्च न्यासांशग्रहमध्यमः ।
तोडिनामप्रसिद्धोऽयं रागो हर्षे प्रयुज्यते ॥

जगदेकः

मध्यमांशग्रहन्यासा सौवीरी मूर्छना मता ।
संपूर्णा कथिता तज्ज्ञैः तोडी कैशिकसुन्दरी ।
ग्रहांशन्यासषड्जा च केचिदत्र प्रचक्षते ॥

दामोदरः

शुद्धषाडवरागाङ्गा संपूर्णा च समस्वरा ।
षड्जताराममन्द्रा च न्यासांशग्रहमध्यमा ।
कम्पिता पञ्चमेनैव तोडी हर्षे नियुज्यते ॥

हम्मीरः

ग्रहांशन्यासके षड्जस्तोडी रागाङ्गसंयुजि ।

मद

—रागाङ्गरागः

गमन्द्रा तारसा शुद्धा षाडवादादिमध्यमा ।
गातव्यस्सर्वदा तोडी संपूर्णा समकम्पिता ॥

भट्टमाधवः

—रागः ( वंशे वादनक्रमः )

मध्यमं तु ग्रहं कृत्वा कम्पयेत्तत्परं स्वरम् ।
चतुर्थं तु विलम्ब्याथ तृतीयं च स्वरं श्रयेत् ॥
द्रुताहतं विधायैनं पुनः प्रोच्य तमेव च ।
ग्रहे चेन्न्यस्यते तोड्याः स्वस्थानं प्रथमं भवेत् ॥
पूर्वस्वस्थानवत्कृत्वा रोहणं पञ्चमं स्वरम् ।
स्पृष्ट्वा स्थायिस्वरान्तं चेदवरोहो विधीयते ॥
तदा द्वितीयं स्वस्थानं तोड्याः प्रोक्तं तु पण्डितैः ।
षष्ठस्वरावधि प्राग्वत्कृत्वारोहं ततः परम् ॥
स्थायिस्वरावधि यदावरोहः क्रियते तदा ।
स्वस्थानं तु तृतीयं स्यात्तुर्ये स्वस्थानके पुनः ॥
अष्टमस्वरपर्यन्तं विधायारोहणं ततः ।
ग्रहस्वरावधिप्राग्वदवरोहो विधीयते ।
संप्रोक्तो लक्ष्यतत्त्वज्ञैर्मुद्रितः स्याद्ग्रहस्वरः ॥

वेमः

## तोडीरागध्यानम्

तुषारकन्दोज्वलदेहयष्टिः
काश्मीरकर्पूरविलिप्तदेहा ।
विनोदयन्ती हरिणं वनान्ते
वीणाधरा राजति तोडिकेयम् ॥

इयं मालवकैशिकभार्या ।

दामोदरः

मृणालकुन्देन्दुसमानगात्री
विलिप्तदेहा हरिचन्दनेन ।
विनोदयन्ती विपिने कुरङ्गं
तोडी विपञ्चीं दधती कराभ्याम् ॥

श्रीकण्ठः

कादम्बरीरसविपूरितकाचपात्रां
विन्यस्तवामकरशोभितचारुवक्त्राम् ।
सव्येन नायकपटाग्रदशां वहन्तीं
तोडीं सदा मनसि मे परिचिन्तयामि ॥

रागसागरः

## तोरणम्—चालकः

पुरस्तात्स्वस्तिकौ भूत्वा ततो विच्युतितां गतौ ।
पार्श्वयोर्लोडनं प्राप्य पुनस्स्वस्तिकबन्धनौ ॥
स्थित्वा शीर्षोपरिकरौ ततस्तौ वियुतौ पुरः ।
लोलितौ यत्र तत्प्रोक्तं चालकं तोरणाभिधम् ॥

अशोकः

तोराली—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग म प ध नि प स.

(अव) स नि ध प म ग रि स.

मज

त्यागसिंहासनाधीशः—देशीतालः

त्यागसिंहासनाधीशोऽन्तरित्रद्रुतौ प्लुतेऽन्तरे।

ऽऽ०००ऽऽ

गोपतिप्पः

त्रवणा—रागः

पञ्चमाढ्यर्षभहीना गतारा शुद्धपञ्चमात्।
गमकद्विगुणागोत्थैः त्रवणान्दोलितस्वरैः॥

मोक्षः

द्विगुणस्फुरिता पांशा धन्यासा वर्जितर्षभा।
वाजपेयिकतानाढ्या त्रवणा बहुपञ्चमा॥

नान्यः

पञ्चमबहुलैर्गमकैः रिषभवियुक्तैः रसस्फुरैर्द्विगुणैः।
पूर्ववदपरा त्रवणा पञ्चगजनिता तु जगति सदा॥

कश्यपः

सनिधैः स्फुरितैस्सांशा पञ्चमर्षभवर्जिता।
टक्करागोद्भवा सा तु त्रवणा रत्यां विचक्षणा॥

नान्यः

धैवतषड्जनिनादैर्बलवद्भिस्सस्फुरैर्गमकैः।
द्विगुणैर्युक्ता त्रवणा परिहीना सूरिभिः कथिता॥

कश्यपः

—प्रथमरागः

या भिन्नषड्जात्त्रवणा तदङ्गं जगाद तां त्रावणिकां मतङ्गः।
हीना रिपाभ्यामपि धैवतांशा कश्चित्प्रदिष्टः स्वयमेव मेघः॥

मोक्षः

—भाषाङ्गरागः

शुद्धपञ्चमभाषा या तज्जाता त्रवणाऽपरा।
अतारा प्रथमे यामे प्रार्थनायां च गीयते॥

भट्टमाधवः

त्रवणावङ्गाली—रागः

धांशा षड्जेन बहुला स्फुरितैर्गमकैर्युता।
परिहीना भिन्नषड्जे विभाषात्रवणा मता॥

नान्यः

त्रवणोद्भवा—रागः

स्फुरितैः षड्जगान्धारमध्यमै रिपवर्जिता।
मापन्यासा च सनिधतारा स्यात्त्रवणोद्भवा॥

नान्यः

सगमैर्बलवद्भिर्मापन्यासेन सनिधतारयुता।
त्रवणोद्भवा च परितः परिरहिता भवति लक्षणतः॥

कश्यपः

त्रस्ता—दृष्टिः

उद्वृत्तवर्त्मना दृष्टिः तथोत्कम्पिततारका।
प्रस्फुरत्फुल्लमध्या च त्रस्ता त्रासे प्रयुज्यते॥

सोमेश्वरः

ऊर्ध्वोद्भ्रान्तपुटद्वन्द्वा कम्पमानकनीनिका।
त्रस्ता दृष्टिरियं त्रासे वेपथौ च प्रकीर्तिता॥

वेमः

त्रावणिकारागध्यानम्

कदलीमूलासीना पीनकुचाधीननायका तन्वी।
कनकनिभा शुभहारा त्रावणिका वर्ण्यवेणीका॥

सोमनाथः

त्रावणी—रागः

तदनु त्रावणी नाम्ना भिन्नषड्जसमुद्भवा।
धैवतांशयुता सेयं वर्जितर्षभपञ्चमा।
अयं तु मेघनादस्स्याद्ग्रन्थेस्मि......समीरितः॥

हरिः

त्रासः—चित्राभिनयः

विद्युत्पिशाचगर्जाद्यैर्जनितस्त्रास इष्यते।
कर्तरी चोर्ध्वभागे तु चालिता विद्युदर्थके॥

पताकौ द्वौ चोर्ध्वभागे चालितौ भूतदर्शने।
सर्पशीर्षः पुरोभागे बद्धश्चेत्सर्पभावने॥

विनायकः

—व्यभिचारिभावः

विद्युदुल्काशनिनिपातनिर्घाताम्बुधरमहासत्त्वपशुरवादयो विभावाः। संक्षिप्ताङ्गोत्कम्पनवेपथुस्तम्भरोमाञ्चगद्गदप्रलापादयोऽनुभावाः।

भवति चात्र—

महाभैरवनादाद्ये (दे) स्त्रासात् (सः) समुपजायते।
त्रस्ताङ्गाक्षिनिमेषैश्च तस्य त्वभिनयो भवेत्॥

भरतः

त्रासो भयात्पृथगुद्वेगस्वरूपः। सत्वाशनिरवादिभिर्जायते। कम्पस्तम्भसर्वाङ्गपिण्डनगद्गदोक्तिभिरभिनेयः।

सागरः

तत्वज्ञैर्मनसः कम्पस्त्रास इत्यभिधीयते।
गजमेघाशनिस्थूणसंघट्टादुपजायते।
भवन्ति पतनोत्कम्पसंभ्रमालोकनादयः॥

सर्वेश्वरः

त्रिकली—देशीलास्याङ्गम्

विधुताद्यैश्शिरोभेदैस्तत्तद्भावोपबृंहितैः ।
मनोहरैर्युता ताललयच्छेदानुसारिभिः ॥
गतिः स्थितिर्वा नर्तक्याः प्रेक्षकानन्ददायिनी ।
त्रिकली कथ्यते तज्ज्ञैः नृत्तशोभाविधायिनी ॥

वेम:

त्रिकोणम्—पादमणिः

समस्थितस्य यस्याङ्घ्रेः पृष्ठतः पुरतस्तदा ।
सकृदग्रेऽङ्गलीपृष्ठैर्वसुधां ताडयेद्यदि ।
तदा त्रिकोणमाचष्ट रूपनारायणो नृपः ॥

वेम:

त्रिकोणचारी—मुडुपचारी

अङ्घ्रिर्निवेशितो यत्र स्थापितोऽङ्गुलिपृष्ठतः ।
निकुट्टितः पुरः पार्श्वे पृष्ठे वाथ निवेशितः ॥
अङ्घ्रिरङ्गुलिपृष्ठेन पुनस्स्थाने च कुट्टितः ।
सोक्ता त्रिकोणचारीति सद्भिरन्वर्थनामका ॥

अशोक:

त्रिगतम्—पुष्करवाद्ये गतिः

सा च त्रिविधा तत्वं, अनुगतं, ओघ इति ।

भरतः

—पूर्वरङ्गाङ्गम्

विदूषकस्सूत्रधारः तथा वै पारिपार्श्वकः ।
यत्र कुर्वन्ति सञ्जल्पं तच्चापि त्रिगतं मतम् ॥

भरतः

—वीथ्यङ्गम्

श्रुतिसारूप्याद्यस्मिन्बहवोऽर्था युक्तिभिर्नियुज्यते ।
यद्धास्यमहास्यं वा तत्त्रिगतं नाम विज्ञेयम् ॥

भरतः

शब्दसारूप्याद्बहव इति प्रश्नप्रतिवचनस्य स्वभावा यत्र नियुज्यन्ते युक्तिभिरिति काकादीनां तथैवोपपत्तिभिः । त्रिशब्दोऽनेकोपलक्षकः । अनेकमर्थं गतमिति त्रिगतं । वाक्ये मुख्यमुत्तरं अनेकप्रश्नसाधारणम् । इह तु य एव प्रश्नः तदेव प्रतिवचनमिति विशेषः ।

अभिनवः

स्फुटभान्यर्थकथनं त्रिगतम् । यथा – रत्नावल्यां द्वितीयेऽङ्के एषा पुनरित्यादि सुसंगतावचनम् ।

सागरः

यत्रानुदात्तवचनं त्रिधा विभक्तं भवेत्प्रयोगे तु ।
हास्यरससंप्रयुक्तं तत्त्रिगतं नाम विज्ञेयम् ॥

भरतः

यथा –
पुष्लसके रूपके तरलमित्यादि वाक्यम् ।

भोजः

—अवनद्धाङ्गम्

तत्त्वानुगतौघानि ।

अक्षरसदृशं वाद्यं स्फुटपदवर्णं तथैव वृत्तसमम् ।
सुविभक्तकरणयुक्तं तत्त्वे वाद्यं विधातव्यम् ॥
समपाण्यवपाणियुत स्फुटप्रहारकरणानुगं चैव ।
गेयस्य च वाद्यस्य च भवेदघाताय तदनुगतम् ॥
नैककरणाश्रयगतं ह्युपर्युपरिपाणिकं द्रुतलयं च ।
आविद्धकरणबहुलं योज्यं वाद्यं बुधैरोघे ॥

भरतः

त्रिगता—भङ्गतालः

गुरुद्वयं लचतुष्कं गुरुद्वयम् ।

S S I I I I S S

नान्यः

त्रिगुणनट्टा—रागः

नट्टा त्रिगुणपूर्वा स्यात्तद्वदेव मता बुधैः ।

मदः

तद्वदेवेति षड्जस्यांशग्रहन्यासत्वमुक्तम् ।

त्रिगुणा—रागः

त्रिगुणा षड्जभूयिष्ठा ह्युपाङ्गा षड्जसंभवा ।

मदः

त्रिगुणैव त्रवणेति गायकेषु प्रसिद्धा स्यात् ।

—पाटवाद्यम्

प्रत्येकं त्रिगुणीकृत्य त्रीणि खण्डानि यत्र च ।
वाद्यन्तेऽसौ बुधैरुक्ता त्रिगुणा सा पुनस्त्रिधा ।
त्रैविध्यादादिमध्यान्ता खण्डानां परिकीर्तिता ॥

वेम:

खण्डत्रयं भवेद्यस्यामेकैकं त्रिगुणं ततः ।
वाद्यते यत्र सा प्रोक्ता त्रिगुणा वाद्यवेदिभिः ॥
त्रैगुण्यादादिमध्यान्तखण्डानां त्रिविधा च सा ।
क्रमव्युत्क्रमतो द्वेधा द्वैगुण्यादत्र षड्विधा ॥
ताले च चतुरश्रादावथ क्वापि दलत्रयम् ।
मानेनैकेन खण्डस्य प्रयुज्याथ दलत्रयम् ॥

चतुरश्रत्र्यश्रमिश्रैस्तालैरेव क्रमाद्भवेत् ।
अथ चैककरे ताले द्विकले च चतुःकले ॥
त्रिभिर्दलैः क्रमादेवं त्रिगुणां जगदुर्बुधाः ।
चच्चत्पुटे भवेदेकं परं चाचपुटे तथा ॥
तृतीयं मिश्रताले च त्रिगुणां तां जगुः परे ।
प्रोक्तं कलाभिरष्टाभिः पदमस्याश्च सूरिभिः ॥
खण्डमेकं भवेत्पादैः चतुर्भिर्नियमस्त्विह ।
अस्या अन्येऽपि भेदाः स्युरूह्यास्तेऽप्यनया दिशा ॥

मोक्षदेवः

**त्रिणेत्रकृतिः**—उपाङ्गरागः

पञ्चमांशग्रहन्यासा स्वल्पगान्धाररञ्जिता ।
स्वतारमन्द्रषड्जा च त्रिणेत्रकी भवेत्तु सा ॥

भट्टमाधवः

—रागः

आषड्जं तारमन्द्राढ्यं पन्यासांशग्रहान्विता ।
समस्वराल्पगान्धारा त्रिणेत्राख्या कृतिर्भवेत् ।
पञ्चमादिर्यतस्तस्मादुत्सवादौ नियुज्यते ॥

जगदेकः

**त्रिणेत्रक्रिया**—रागः

त्रिणेत्रपूर्वाथ कृतिस्तारमन्द्राथ षड्जके ।
समस्वराल्पगान्धारा न्यासांशग्रहपञ्चमा ॥

हरिः

सग्रहपञ्चमकांशा मध्यन्यासा समस्वरा गाल्पा ।
ज्ञेया त्रिणेत्रकृतिरिति सावधि तारा च मन्द्रा च ॥

नान्यः

मन्यासा सग्रहा पांशा गान्धाराल्पा समस्वरा ।
आषड्जं तारमन्द्रा च त्रिणेत्राकृति रिष्यते ॥

मतङ्गः

**त्रितन्त्रिका**—वीणा

नकुलादीनां लक्षणे द्रष्टव्यम् ।

**त्रिताडितम्**—पादमणिः

अङ्गुलीपृष्ठभागेन पार्ष्णिनान्तस्थलेन च ।
सन्ताड्य धरणीभागमेकस्मिन्विरते सति ॥
अङ्घ्रिरन्यो निजं पार्श्वं व्रजंस्ताडयति क्षितिम् ।
वहुशो यत्र तत्प्रोक्तं नृत्तविद्भिस्त्रिताडितम् ॥

वेमः

**त्रिनृत्तम्**—पूर्वरङ्गाङ्गम्

त्रिसाम स्यांत्त्रिवृत्तं च विलयं च त्रिपाणि यत् ।
वागङ्गसत्वाभिनयैः त्रिनृत्तमभिधीयते ॥

शारदातनयः

**त्रिपताकः**—हस्तः

स एव त्रिपताकस्स्याद्वक्रितानामिकाङ्गुलिः ।
दध्यादिमङ्गलद्रव्यस्पर्शादौ स विधीयते ॥
पराङ्मुखस्स्यादाह्वाने लग्नद्व्यङ्गुलिकुञ्चनात् ।
बहिः क्षिप्ताङ्गुलिद्वन्द्वोऽधस्तलोऽनादरोज्झिते ॥
नमस्कारे त्वसौ कार्यः शिरस्थः पार्श्वतस्तलः ।
उत्तानिताङ्गुलिद्वन्द्वो वदनोन्नामने मतः ॥
सन्देहे दधदङ्गुल्यौ क्रमेणैव नतोन्नते ।
अधोमुखः शिरःप्रान्ते भ्रमन्नुष्णीषधारणे ॥
तादृगेव किरीटस्य धृतौ मूर्ध्नोर्ध्वदेशगः ।
अनिष्टे गन्धवाग्घोषे नासास्यश्रोत्रसंवृतिम् ॥
अङ्गुलीभ्यां क्रमात्कुर्वन्पक्षिस्रोतोनिलेषु तु ।
क्षुद्रेषूर्ध्वमधस्तिर्यक्क्रमाद्वच्छन्दधत्तथा ॥
अधोमुखचलाङ्गुल्यौ कटिक्षेत्रगतः करः ।
अस्रे तन्मार्जने च स्यादधोयान्तीमनामिकाम् ॥
नेत्रक्षेत्रगतां बिभ्रत्तिलके तु ललाटगाम् ।
अलकस्यापनयने दधत्तामलकान्विताम् ॥

शार्ङ्गः

**त्रिपताकम्**—करणम्

पादः कुट्टनसंयुक्तः त्रिपताकौ करावपि ।
कटिपादावधिस्यातां रेचितौ त्रिपताकिके ॥

हरिपालः

**त्रिपताकवर्तना**

सव्यापसव्यतो भ्रान्तौ त्रिपताकौ मुहुः करौ ।
मणिबन्धावधि प्रोक्ता त्रिपताकाख्यवर्तना ॥

अशोकः

**त्रिपाणिकम्**—पुष्करवाद्ये पाणिप्रयोगः

स च त्रिविधः, समपाणिः, अवपाणिः, उपरिपाणिश्चेति ।

भरतः

**त्रिपुटः**—ध्रुवालङ्कारः

त्रिपुटाख्येन तालेन निवद्धस्त्रिपुटः स्मृतः ।
त्रिपुटे द्वौ द्रुतावादौ पृथग्द्व्यक्षरसम्मितौ ॥
विरामान्तः द्रुतः पश्चादक्षरत्रयसम्मितः ।
आहत्य त्रिपुटस्तालो ज्ञेयस्सप्ताक्षरीमितः ॥

सरिग सरिगम, रिगम रिगमप,

वेङ्कटमखी

**त्रिपुटः—( तिविडः ) प्रबन्धः**

निरूप्यतेऽथ तिविडा रागैर्युक्ता यथोचितैः ।
त्रिपुटाख्येन तालेन गेये उद्ग्राहकध्रुवे ॥
आभोगे नायकस्यात्र गेये विरुदनामनी ।
त्रिपुटा कीर्तिताचैवं.................. ॥

हरिपालः

**—ध्रुवतालः**

त्रिपुटे द्वौ द्रुतावादौ पृथग्द्व्यक्षरसम्मितौ ।
विरामान्तद्रुतः पश्चादक्षरत्रयसंमितः ।
आहत्य त्रिपुटस्तालो ज्ञेयस्सप्ताक्षरीमितः ॥

वेङ्कटमखी

**त्रिपुण्ड्रः—हस्तः**

तिर्यग्बद्धास्तिस्रोऽङ्गुल्यः कनिष्ठाङ्गुष्ठसंयुते ।
त्रिपुण्ड्रनामको हस्तः कीर्तितोभरतादिभिः ॥
फालस्थले चोर्ध्वभागे चलितस्सोर्ध्वपुण्ड्रके ।
अधोभागे च चलितः भ्रान्तिभावनिरूपणे ॥

भ्रान्तिः परवञ्चना ।

फालस्थले तु तिर्यक्स्थो फालभागनिरूपणे ।
तत्रैव चलितो ह्येष विभूतेर्धारणे भवेत् ॥
पुरोमुखः पुरोभागे स्थितश्चेत्कुड्यबन्धने ।
त्रिपुण्ड्राख्यस्य हस्तस्य विनियोगो विनिश्चितः ॥

विनायकः

**त्रिपुरुषः—वंशः**

वंशे त्रिपुरुषे दण्डो यवद्वितयसंयुते ।
चतुर्दशाङ्गुलैर्मध्यं त्र्यङ्गुलं द्वियवाधिकम् ॥
मुखतालाख्यरन्ध्रस्थं स्थानमन्तरसप्तके ।
यवद्वयं समासेनाङ्गुलद्वितयसंयुतम् ॥
यवद्वयं विजानीयादन्तरालेषु सप्तसु ।
शेषं लक्षणमेतस्मिन् चतुर्मुखवदीरितम् ॥

कुम्भः

**त्रिपुरेश्वरी—मेलरागः ( कनकाङ्गीमेलजन्यः )**

( आ ) स रि ग म ध नि – स .
( अव ) स नि ध प म ध म ग रि – स .

मञ्जः

**त्रिपुष्करविधानम्—त्रिपुष्करे**

पौष्करस्य तु वाद्यस्य मृदङ्गपणवाश्रयम् ।
विधानं सम्प्रवक्ष्यामि दर्दरस्य तथैव च ॥
षोडशाक्षरसंपन्नम् ।
द्विलेपनं षट्करणं त्रियति त्रिलयं तथा ।
त्रिगतं त्रिप्रकारं च त्रिसंयोगं त्रिपाणिकम् ॥
दशार्धपाणिप्रहरं त्रिप्रकारं त्रिमार्जनम् ।
विंशत्यलङ्कारयुतं तथाष्टादशजातिकम् ।
एभिः प्रकारैस्सम्पन्नं वाद्यं पुष्करजं भवेत् ॥

भरतः

**त्रिपुष्करस्य प्राधान्यम्**

यावन्ति चर्मनद्धानि ह्यातोद्यानि द्विजोत्तमाः ।
तानि त्रिपुष्कराद्यानि ह्यवनद्धमिति स्मृतम् ॥
एतेषां तु पुनर्भेदाः शतसंख्याः प्रकीर्तिताः ।
किन्तु त्रिपुष्करस्यात्र लक्षणं प्रोच्यते मया ॥
शेषाणां कर्मबाहुल्यं यस्मादस्मिन्न दृश्यते ।
न स्वरा न प्रहाराश्च नाक्षराणि न मार्जनाः ॥
भेरीपटहझंझाभिः तथा दुन्दुभिडिण्डिमैः ।
शैथिल्यादायतत्वाच्च स्वरे गाम्भीर्यमिष्यते ।
प्रायशस्तानि कार्याणि कालं कार्यं समीक्ष्य तु ॥

भरतः

**त्रिप्रचारः—अवनद्धाङ्गम्**

समप्रचारो, विषमप्रचारः, समविषमप्रचारश्चेति ।

ये मार्गाः पूर्वमुक्तास्तु चत्वारो नियताक्षराः ।
तच्छेषभूतं विज्ञेयं प्रचारत्रितयं बुधैः ॥
समोऽथ विषमश्चैव तथाचैवोभयात्मकः ।
प्रचारस्त्रिविधश्चैवं भरतादिमतो यथा ॥
यत्प्रकृष्टं तु चरणं व्यापारः करयोर्द्वयोः ।
आतोद्यस्य विधौ सद्भिः स प्रचारोऽभिधीयते ॥
प्रचारत्रितयं चैतच्चतुर्मार्गाङ्गमुच्यते ।
वामोर्ध्वकयोर्वामः सव्यो वै दक्षिणोर्ध्वके चापि ॥
कार्यस्समप्रचारे ह्यालिप्ते वाद्यकरणे तु ।
वामोर्ध्वकसव्यानां प्रहतो वामः करस्तु कर्तव्यः ॥
सव्योर्ध्वकसंयोगात्प्रहतो विषमप्रचारे तु ।
स्वच्छन्दतः कराणां प्रहतं शेषेषु मार्गकरणेषु ।
अङ्कितगोमुखयोगे समविषमो हस्तसञ्चारः ॥

भरतः

अयं भावः ।

आलिप्ताङ्कितगोमुखमार्गेपूर्ध्वकपुष्करे वाममुखे वामहस्तः । दक्षिणे दक्षिणहस्तः । प्रहते प्रवर्तितश्चेत्स समप्रचारः । वामदक्षिणमुखयोः व्यत्यस्तकरप्रहारः विषमप्रचारः । यथेच्छं हस्तयोः प्रहारः समविषमः । स त्वङ्कितगोमुखयोरेव प्रयोज्यः । समस्त्वालिप्तमार्गे । विषमस्तु वितस्तामार्गे स्यात् ।

त्रिप्रहारम्—त्रिपुष्करे

निगृहीतः अर्धनिगृहीतः मुक्तः – इति ।

भरतः

त्रिभङ्गी—दर्शनम्

मूलमध्याग्रभागेषु त्रिभङ्गचा विषयग्रहः ।
तत्त्रिभङ्गीति कथितं...............॥

शारदातनयः

—देशीतालः

त्रिभङ्गिनाम्नि ताले तु लघुद्वन्द्वं गुरुद्वयम् । ।।ऽऽ

वेमः

—प्रबन्धः

त्रिभङ्गिः पञ्चधेति जगदेकमल्ल आह । तत्रैव द्रष्टव्यम् ।

भिन्नवृत्तैस्त्रिभिः पादैः स्वरपाटसमन्वितैः ।
तालत्रयनिबन्धश्चेत् त्रिभङ्गिरभिधीयते ।
एवं भिन्नैस्त्रिभिर्वृत्तैः स्वरपाटसमन्वितैः ।
कृत्वा पादत्रयं गेयः त्रिभङ्गिस्स्युस्त्रितालकाः ॥
अथवा भिन्नवृत्तस्थैः पादैरेवं त्रिभिर्युतः ।
रच्यते पूर्वमार्गेण तथाऽपि स्यात्त्रिभङ्गिकः ॥

सोमेश्वरः

त्रिभङ्गी—करणम्

त्रिभङ्गीनमितं गात्रं पादौ च स्वस्तिकीकृतौ ।
वक्षःस्थः खटको वामो दक्षिणश्चालपल्लवः ।
उत्तानश्शिरसि न्यस्तस्त्रिभङ्गीकरणं तदा ।

देवणः

—प्रबन्धः

वारत्रितयमावर्त्य स्वराः पाठाः पदानि वा ।
रागैस्त्रिभिस्त्रिभिस्तालैः गीयतेऽथ द्वितीयके ॥
अभङ्गाख्येन तालेन गेयाः पाटपदान्तराः ।
तृतीयस्तु त्रिभिर्वृत्तैः केवलैरेव गीयते ॥
त्रिभङ्गिनाम्ना वृत्तेन गीयते यस्य तुर्यकः ।
यो देवतात्रयस्तुत्या गीयते स तु पञ्चमः ॥
आभोगोऽन्यपदैरेव न्यासस्तावद्विमानकः ।
इति त्रिभङ्गिरुद्दिष्टो....................॥

हरिपालः

रागैस्त्रिभिस्त्रिभिस्तालैर्यत्र पाटपदस्वराः ।
यथोचितं निबद्धयन्ते त्रिभङ्गिः सोऽयमादिमः ॥
एकस्त्रिभङ्गितालेन गेयः पाटपदस्वरैः ।
एको वृत्तत्रयेणाथ वृत्तेनैकस्त्रिभङ्गिता ॥
एको देवत्रयः स्तुत्या त्रिभङ्गिरिति पञ्चधा ।
अन्यैः पदैरिहाभोगो न्यासस्तालस्य नामतः ॥

सोमराजः

त्रिभङ्गीवर्णसारकम्—चालकः

स्वपार्श्वतो विदिग्भागे पूर्वं धृत्वा करद्वयम् ।
तिर्यक् च मण्डलावृत्या लुठनं युगपद्यदि ।
कुरुते तदिदं प्राहुः त्रिभङ्गीवर्णसारकम् ॥

वेमः

त्रिभङ्गीवलितम्—करणम्

पादौ च स्वस्तिकीभूतौ त्रिभङ्गीवलितं वपुः ।
वक्षःस्थः खटको वामो दक्षिणश्च लताकरः ।
त्रिभङ्गिवलितं नाम तदन्वर्थमुदाहृतम् ॥

देवणः

त्रिभिन्नः—देशीतालः

ताले त्रिभिन्नसंज्ञे तु क्रमाल्लघुगुरुप्लुताः । ।ऽऽ̇

वेमः

त्रिभुवनरायरगण्डः—देशीतालः

ताले ततस्त्रिभुवनपूर्वे रायरगण्डके ।
बिन्द्वोर्मध्ये च षट्कृत्वो ललगास्समुदाहृताः ॥
०॥ऽ॥ऽ॥ऽ॥ऽ॥ऽ॥ऽ०.

गोपतिप्पः

त्रिमार्जनम्—त्रिपुष्करे

मायूरी । अर्धमायूरी । कार्मारवी इति ।

भरतः

—अवनद्धाङ्गम्

मायूरी ह्यर्धमायूरी तथा कार्मारवीति च ।
तिस्रस्तु मार्जना ज्ञेयाः पुष्करेषु स्वराश्रयाः ॥
गान्धारो वामके कार्यः षड्जो दक्षिणपुष्करे ।
ऊर्ध्वके पञ्चमश्चैव मायूर्यां तु स्वरा मताः ॥
वामके पुष्करे षड्जर्षभो दक्षिणे तथा ।
ऊर्ध्वके धैवतश्चैवमर्धमायूर्युदाहृता ॥
ऋषभः पुष्करे वामे षड्जो दक्षिणपुष्करे ।
पञ्चमश्चोर्ध्वके कार्यः कार्मारव्यास्स्वरास्त्वमी ॥
एतेषामनुवादी तु जातीनां यः स्वरो मतः ।
आलिङ्गमार्जनां प्राप्तो निषादस्स विधीयते ॥

मायूरी मध्यमग्रामे षड्जे त्वर्धा तथैव च।
कार्मारवी तु कर्तव्या साधारणसमाश्रया ॥
स्वराः स्थानस्थिता ये तु श्रुतिसाधारणाश्रयाः।
त एव मार्जनकृताः शेषास्सञ्चारिणो मताः ॥

भरतः

षड्जे त्वर्धेति। षड्जग्रामे त्वर्धमायूरीत्यर्थः। साधारणेति। श्रुतिस्वरसाधारणे। त एवेति। ते स्थायिस्वरा इत्यर्थः।

त्रिमूर्तिः—मेलरागः (षण्मुखप्रियामेलजन्यः)
(आ) स रि ग म ध नि स.
(अव) स नि ध म ग रि स.

मञ्जः

त्रियतिः—त्रिपुष्करे

समा, स्रोतोवहा, गोपुच्छा चेति।

भरतः

त्रिरधरः—धातुः
त्रिस्तारस्वरघातेन धातुस्त्रिरधरो भवेत्।

शार्ङ्गः

—वीणायां धातुः
तारस्वरे त्रिराघाताद्धातुस्त्रिरधरो भवेत्।

कुम्भः

त्रिरुत्तरः—धातुः
मन्द्रस्वरत्रिराघाताद्धातुमाहुस्त्रिरुत्तरम्।

शार्ङ्गः

—वीणायां धातुः
मन्द्रस्वरे त्रिराघाताद्धातुर्ज्ञेयस्त्रिरुत्तरः।

कुम्भः

त्रिलयम्—त्रिपुष्करे

द्रुतमध्यविलम्बितास्त्रयो लयाः।

भरतः

त्रिलोचनः

एतन्नामानौ द्वौ स्तः। एकः पार्थविजयनाटककर्ता। राजशेखरेण बहुमानितः। अन्यः नाट्यलोचननामकनाटकलक्षणग्रन्थकर्ता। तेन राजशेखरस्य बालराभाषणं सूचितम्। तस्माद् द्वावपि भिन्नाविति स्पष्टम्।

त्रिवणा—रागः
त्रिवणा सा च विज्ञेया ग्रहांशन्यासधैवता।
औडुवा रिपहीनेयं विद्वद्भिः परिकीर्तिता ॥ दामोदरः

त्रिवणा शब्दं त्रवणाशब्दस्य रूपान्तरं स्यात्।

त्रिवणारागध्यानम्

त्रवणेति नामान्तरम्।

चारुरम्भातरोर्मूले निषण्णा कनकप्रभा।
नताङ्गी हारललिता कान्तेन त्रिवणा मता ॥

दामोदरः

त्रिवणी—मेलरागः
गौरीमेलसमुत्पन्ना त्रिवणी मस्वरोज्झिता।
अवरोहणवेलायां षड्जोद्ग्राहा सरिस्वरा ॥

सायं गेया।

अहोबिलः

—वक्षोभूषणम्

त्रिवर्णः—देशीतालः

त्रिवर्णो लौ द्रुतौ लौ च। ।।००।।

मदनः

—वर्णालङ्कारः (अवरोही)
धा ध ध प म गा ग ग रि स.

पण्डितमण्डली

—वर्णालङ्कारः
अन्त्यस्वरस्त्रिरावृत्तो यदा संपद्यते तयोः।
तदा त्रिवर्णनामानमलङ्कारं प्रचक्षते ॥
स रि ग ग ग म प ध ध ध.

तयोः द्वयोः कलयोः।

पण्डितमण्डली

त्रिवली

विंशत्यङ्गुलदीर्घा स्यात्सप्ताङ्गुलमिता मुखे।
मुष्टिप्रविष्टमध्या सा त्रिवली लोहमण्डली ॥
कवलानद्धवदना सप्तरन्ध्रैस्सुयन्त्रिता।
मध्ये च वेष्टिता रज्वा सूत्रनिर्मितया दृढम् ॥
कच्छास्कन्धे निधायैषा सव्यदक्षिणपणिना।
दं दं दोमक्षरैः पाटैः वादनीया विचक्षणैः ॥
मधुपानप्रमत्तानां योषितां लास्यनर्तने।
वादनीया विशेषेण सलोदैं ध्वनिसंयुता ॥

सोमेश्वरः

—अवनद्धम्
हस्तप्रमाणा त्रिवली कार्या सप्ताङ्गुला मुखे।
लोहमण्डलिकोपेता मध्ये ग्राह्या च मुष्टिना ॥

कवलेनामृतमुखी सप्तछिद्रनियन्त्रिता ।
रज्वा च श्लक्ष्णया गाढतरं मध्ये च वेष्टिता ॥
त्रिकच्छया धृतास्कन्धलम्बिन्या हस्तमात्रया ।
तं दो दां दाक्ष्रैर्नित्यं करयुग्मेन विद्यते ॥

सोमराजः

त्रिशूलहस्तः

निकुञ्चयित्वा चाङ्गुष्ठं कनिष्ठां च त्रिशूलकः ।
पुरोमुखः पुरोभागे दर्शितश्चेत्त्रिशूलकः ।
त्रिसंख्यावोधने चैव त्रिशूलाख्यकरो भवेत् ॥

विनायकः

त्रिशूलिनी—मेलरागः ( शूलिनीमेलजन्यः )

( आ ) स ग म प नि स .
( अव ) स नि ध प म रि स .

मञ्जः

त्रिष्टुप्छन्दोवृत्तानि

त्रैष्टुभे द्वे सहस्रे च चत्वारिंशत्तथाष्ट च । २०४८

भरतः

त्रिसंयोगम्—पुष्करवाद्ये अक्षराणां संयोगः

स त्रिविधः, गुरुसंयोगः, लघुसंयोगः, गुरुलघुसंयोगः इति।

भरतः

—अवनद्धाङ्गम्

गुरुसञ्चयः लघुसञ्चयः गुरुलघुसञ्चयः इति । तत्र गुरुसञ्चयो विलम्बितवृत्तौ यथा – धें तां के तां धें द्रां प्रभृतयः केवलगुरूणां सञ्चये। लघुसञ्चयो द्रुतलयवृत्तौ यथा – घट मट घट मघट इत्यादयो लघुसञ्चये। गुरुलघुसञ्चयो मध्यलयप्रवृत्तौ, घटधिं मधिधिं मधितं किट प्रभृतयो गुरुलघुसञ्चये।

भरतः

त्रिसञ्चः—हस्तपाटः

त्रिकसञ्चलनाद्वामहस्ताङ्गुष्ठविवर्धनात् ।
स्कन्धस्य चलनेनापि त्रिसञ्चो जायते यथा ॥

खेदां खेटां खें खें ।

वेमः

त्रिसरः

वक्षोभूषणम् । मुक्तालतात्रयेण कल्पितम् ।

त्रिसाम—पूर्वरङ्गाङ्गम्

जालजं बृहत्साम, रथन्तरम् इति ।

भरतः

त्रिस्थानत्वम्—फूत्कारगुणः

त्रिस्थानव्याप्तिशक्तत्वं त्रिस्थानत्वमुदाहृतम् ।

कुम्भः

—वंशे फूत्कारगुणः

त्रिस्थानव्याप्तिशक्तित्वं त्रिस्थानत्वमुदाहृतम् ।

अयमेव गुणः त्रिस्थानशोभीत्यन्ये ।

कुम्भः

मन्द्रे मध्ये च तारे च त्रिस्थाने शोभनस्तु यः ।
त्रिस्थानशोभी स प्रोक्तः स्निग्धत्वादिगुणैर्युतः ॥

त्रिस्थाना—श्रुतिः

पञ्चमस्य तृतीया श्रुतिः । मण्डलीमते तारपञ्चमस्यैव ।

त्रिस्वरः—वर्णालङ्कारः

स्वरत्रयं द्विरुच्चार्य तत्पुरस्थं सकृत्तथा ।
यत्र स्वरकला एवं क्रियन्ते त्रिस्वरो हि सः ॥

यथा – सरिग सरिगम, रिगम रिगमप । व्युत्क्रमेण यथा– मगरि मगरिस इति । अस्य रूपकतालानुगतत्वेनानुपूर्वीविशिष्टत्वादलङ्कारत्वम् ।

संगीतसरणि.

त्रुटी—तालप्राणः

मार्गशब्दे द्रष्टव्यम् ।

त्रैलोक्यमोहनः—तानः

मध्यमग्रामे रिधहीनौडुवः ।

ग स नि प म .

कुम्भः

त्रोटितः—पादः

अवष्टभ्य भुवं पार्ष्ण्या यः पादाग्रेण हन्ति तम् ।
स त्रोटिताभिधो योज्यो गर्वे रोषेऽपि सूरिभिः ॥

अशोकः

त्राटित इत्यपि केचन ।

त्र्यम्बिनी—मेलरागः ( मायामालवगौलमेलजन्यः )

( आ ) स ग म ध नि स .
( अव ) स नि ध प म ग रि ग स .

मञ्जः

त्र्यश्रम्—दर्शनम्

उदञ्चितं तु यत्तिर्यक् त्र्यश्रमित्यभिधीयते ।

वेम

त्र्यश्रः

पादः पक्षस्थितस्सोऽत्र यः पार्श्वाभिमुखाङ्गुलिः।
स एव त्र्यश्रः किञ्चिच्चेत्पुरोदेशाभिमुख्यभाक्॥

कुम्भः

त्र्यश्रवर्णः—देशीतालः

त्र्यश्रे लघूद्रुतद्वन्द्वं लघुद्वयमपि क्रमात्। ॥००॥

वेमः

लघुर्द्रुतौ लघूवक्रत्र्यश्रवर्णे यथाक्रमम्। ।०॥ऽ

सुधा

त्र्यश्रवर्णतालोडुपम्—देशीनृत्तम्

त्र्यश्रो मिश्रो द्विधा वर्णः त्र्यश्रो लौ दौ लघुद्वयम्।
तालेनानेन विज्ञेयं त्र्यश्रवर्णोडुपं बुधैः॥ ॥००॥

वेदः

त्र्यश्रा—ग्रीवा

पार्श्वतोऽवनता त्र्यश्रा खेदे पार्श्वेक्षणादिषु।

वेमः

—भङ्गतालः

लत्रयं गत्रयं द्रुतषट्कम्।

।।।ऽऽऽ००००००

नान्यः

त्र्यस्रः—पादः

एकस्य समपादस्य मध्यं पादान्तरस्य चेत्।
पार्ष्णिस्पृशन्ती वर्तेत त्र्यश्रपादस्स उच्यते॥

शुद्धत्र्यस्रः पक्षस्थितः इति द्विधा।

तत्र शुद्धस्य लक्ष्मोक्तं वक्ष्यामोऽन्यस्य चाग्रतः।
स्थानकादिषु चैतस्य विनियोग उदीरितः॥

विप्रदासः

त्र्यस्रा—गतिः

त्र्यस्रा त्रिकोणसञ्चारा।

देवणः

द

दः—ताले

द्रुतसंज्ञा

दः—छन्दः

द्विमात्रागणः। यथा—का, कक.

दक्षिणः—देशीतालः

दक्षिणे स्याल्लघुद्वन्द्वं गुरुरेकस्ततः परम् ।।ऽ
सा सा नी धा

जग

दक्षिणगुर्जरी—रागः

अथ दक्षिणपूर्वातु गुर्जरी मध्यमस्वरे।
कम्पिता............................॥

हरिः

—मेलरागः

गूर्जरी मालवोत्पन्नाऽवरोहे मनिवर्जिता।
गश्लिष्टमध्यमोपेता धैवतश्लिष्टसस्वरा।
गान्धारमूर्छनोपेता दाक्षिणात्या प्रकीर्तिता॥

प्रथमप्रहरोत्तरगेया।

अहोबिलः

—उपाङ्गरागः

सन्ताडितस्वरा नूनं मध्यमस्वरकम्पिता।
दक्षिणा गूर्जरी ज्ञेया शृङ्गारे सा च गीयते॥

भट्टमाधवः

—रागः

घुरितगूर्जरी दाने रम्या दक्षिणदेशजा॥

जगदेकः

—रागध्यानम्

भामा सुकेशी मलयद्रुमाणां मृदूल्लसत्पल्लवतल्पमध्ये।
श्रुतिस्वराणां दधती विभागं तन्त्रीमुखाद्दक्षिणगूर्जरीयम्॥

दामोदरः

दक्षिणसुरत्राणविपाटः—देशीतालः

ततश्च दक्षिणसुरत्राणपर्वविपाठके।
प्लुतचापौ लयः पुल्लादाद्यन्ताश्चापपौ द्रुतः॥
ऽ́ऽ०।।।०ऽऽ́०

गोपतिप्पः

दक्षिणा—वृत्तिः

गीतप्रधानता वाद्यगुणता दक्षिणा मता।

शार्ङ्गः

—वृत्तिः

दक्षिणा वृत्तिरत्रेष्टा चित्रा लक्ष्मविपर्ययात्।

कुम्भः

यत्र गीतं प्रधानं स्याद्वाद्यं तद्गुणतामियात्।
दक्षिणेति तु सा प्रोक्ता वृत्तिस्तत्त्वावेदिभिः॥

नान्यः

**दक्षिणागूर्जरी**—रागः

दाक्षिणात्या गूर्जरी स्यात् रिषभर्धैरुपाङ्गिका ।

ऋधिः—ग्रहांशन्यासाः ।

**दक्षिणावर्तः**—नृत्तबन्धः

चतस्रः कोणगा मध्ये यत्रैकस्था तु मध्यमा ।
अभीष्टे च स्खलद्यत्र कैवारक्रमयोगतः ॥
मध्यास्थिता च कोणस्थाः कुर्वन्ति भ्रमरीर्मुहुः ।
तमाह दक्षिणावर्तं दक्षिणो वेमभूपतिः ॥

वेमः

**दण्डः**—सन्ध्यन्तरम्

दमनं दण्डः । यथा —रत्नावल्यां तृतीयेऽङ्के-एहि सागरिके इत्यादिचेटीवाक्यम् ।

सागरः

दण्डस्त्वविनयादीनां दृष्टया श्रुत्याथ तर्जनम् ।

सिंग:

**दण्डः**—वीणायां प्रधानशरीररूपः

तदधोभागे तुम्बः, तुम्बौ, तुम्बा वा वर्तन्ते । तदूर्ध्वभागे ककुभः, सार्यः, तन्त्र्यः, जीवा, दोरकः, एते वर्तन्ते । नासिः मेरुरिति कथ्यते । जीवा तन्त्रीणामधोनिक्षिप्ता वेणुशलाका नादस्य व्यक्तये कारणम् । दोरकः नागपाशः, पत्रिका ककुभस्योर्ध्वे लोहफलकम् ।

अत्र प्राचीनैः सारी निक्षेपभागो दण्डप्रप्रमिति व्यवह्रियते । तुम्बप्रदेशो दण्डस्य पुरोभागे इति चोक्तम् । आधुनिकैस्तद्विपर्यासेन व्यवह्रियते ।

**दण्डकम्**—चूडाभूषणम्

कनत्काञ्चनपट्टेन पिनद्धं वलयाकृति ।
मुक्ताजालं तदूर्ध्वे च कृतं तद्दण्डकं भवेत् ।
क्रमशो वर्धमानं तच्चूडामण्डनमुत्तमम् ॥

सोमेश्वरः

—वाद्यम्

स्खलितो मूर्छनाख्यश्च कर्तरीरेफसंयुतः ।
श्वसितो यत्र वाद्यज्ञाः दण्डकं तद्बभाषिरे ॥

शार्ङ्गः

**दण्डकः**—प्रबन्धः

दण्डको गणवृत्तादिभेदेन बहुधा भवेत् ।
पदैस्स्वरैर्विरचितो नानायतिविभूषितः ॥
यथोचितेन तालेन रागैरपि च गीयते ।
एवं दण्डक उद्दिष्टः, ।

हरिपालः

अयं तालैस्स्वरैर्युक्तो मध्ये पाठविराजितः ।
पुनःपदसमायुक्तो गातव्यो दण्डको बुधैः ॥

सोमेश्वरः

निर्युक्तसंज्ञः कथितस्त्रिधातु त्र्यङ्गोऽपि तालेन पदैः स्वरैश्च ।
निबद्ध एतै रुदितैर्विशेषै सोऽयं भवेद्भावनिकाख्यजातिः ॥

रघुनाथः

**दण्डकम्**—वीणावादनप्राणः

निक्षेपपरिवर्ताभ्यां कर्तर्या च सरेफया ।
मानेन श्वसितेनापि मण्डितं दण्डकं मतम् ॥

पार्श्वदेवः

स्खलितो मूर्छना चैव कर्तरी रेफसंज्ञकः ।
खसितश्चेति यत्र स्युः तद्वाद्यं दण्डकं विदुः ॥
विक्षेपपरिवर्ताभ्यामुपेतं केचिदूचिरे ।
मूर्छनास्खलिताभ्यां च दण्डकाख्यं विनाकृतम् ॥

कुम्भः

**दण्डपक्षम्**—करणम्

ऊर्ध्वजानुलताहस्तौ जानुन्येकस्तयोर्यदि ।
स्यादङ्गान्तरसप्येवं दण्डपक्षं तदीरितम् ॥

ज्यायनः

चारी यत्रोर्ध्वजानुः स्यात्करौ स्यातां लताकरौ ।
तत्रैकं निक्षिपेदूर्ध्वजानूपरि यदा पुनः ।
एवमङ्गान्तरेणापि दण्डपक्षमिदं तदा ॥

अशोकः

" तपस्यत्युग्रविषमे ...... मदर्शने " इति लक्ष्मणः ।

**दण्डपक्षौ**—नृत्तहस्तौ

वक्षः क्षेत्रे श्रयत्येको येन कालेन पार्श्वतः ।
व्यावृत्या हंसपक्षाख्यस्तेनैव परिवर्तितः ॥
प्रसारितभुजन्यस्तस्तिर्यक् पर्यायतः पुनः ।
एवमङ्गान्तरेणापि क्रिया स्याद्दण्डपक्षयोः ॥
उभयोर्यौगपद्येन प्राहुर्बाह्वोः प्रसारणम् ।
व्यावृत्तपरिवृत्तं च क्रमेणात्र क्रियाविदः ॥

ज्यायनः

**दण्डपादम्**—करणम्

यत्र नूपुरपादाख्या दण्डपादाभिधा तदा ।
चारी स्यादथ चेत्क्षिप्रं पाणिस्स्थाप्येत दण्डवत् ।
तत्तदा दण्डपादं स्यात्साटोपे तु परिक्रमे ॥

अशोकः

अत्रादौ जनिता भट्टतण्डुकीर्तिधरोदिता ।
एकस्यादूर्ध्वतः क्षिप्तः परो जङ्घामुपागतः ।
करोऽभवदिति प्राह भट्टतण्डुः प्रयोगवित् ॥

ज्यायनः

—मण्डलम्

जनितां दण्डपादां च चारीं कुर्यात्तु दक्षिणः।
सूचीं च भ्रमरीं वामः तथोद्वृत्तां तु दक्षिणः॥
वामोऽलातां दक्षिणस्तु पार्श्वक्रान्तां ततःपरम्।
भुजङ्गत्रासितां चापि वामोऽतिक्रान्तचारिकाम्॥
दक्षिणो दण्डपादां च वामः सूचीमतः परम्।
भ्रमरीमपि कुर्याच्चेद्दण्डपादं प्रचक्षते॥

वेमः

## दण्डपादा—चारी

पादं नूपुरपादायाः पार्ष्णिदेशपरस्य तु।
निधाय यदि वेगेन वक्षस्सम्मुखजानुकम्।
प्रसारयेत्पुरोदण्डपादा चारी भवेदसौ॥

वेमः

## दण्डपादिका—देशीचारी

मुक्त्वा स्वस्तिकमावर्त्य चरणं तिर्यगूर्ध्वतः।
प्रसार्यते चेत्तामाहुः पण्डिता दण्डपादिकाम्॥

वेमः

## दण्डप्रणामाञ्चितम्—उत्प्लुतिकरणम्

समपादाञ्चितस्यान्ते दण्डवत्प्रणतिर्भुवि।
क्रियते यत्र तद्दण्डप्रणामाञ्चितमुच्यते॥

ज्यायनः

## दण्डरेचितम्—करणम्

दण्डपादाभिधा चारी दण्डपक्षौ करावपि।
यत्र रेचनसंयुक्तौ तद्भवेद्दण्डरेचितम्।
नृत्ते प्रमोदयुक्तेऽस्य प्रयोगस्तूह्यतेऽथवा॥

ज्यायनः

## दण्डवर्तना

वर्तितौ दण्डपक्षौ चेत्तदा स्याद्दण्डवर्तना।

अशोकः

वक्षःक्षेत्रं श्रयत्येको येन कालेन पार्श्वतः।
व्यावृत्त्या हंसपक्षाख्यस्तेनैव परिवर्तितः॥
प्रसारितभुजोऽन्यस्तु तिर्यक्कार्योऽपरः पुनः।
एवमङ्गान्तरेणापि क्रिया स्याद्दण्डपक्षयोः।
दण्डवर्तनिकामेनां भरतण्डुरभाषत॥

कल्लिनाथः

## दण्डहस्तः—हस्तपाठः

ऊर्ध्वघातं पताकेन कृत्वैकमथ रेफतः।
ऊर्ध्वघातद्वयं कुर्याद्यत्रासौ दण्डहस्तकः॥
धातरिकिटदां खरिखरिदां।

वेमः

—हौडुक्किकहस्तपाटः

पुटं निपीड्य वामेन दक्षिणस्याङ्गुलीमुखैः।
निपीड्याङ्गुष्ठघातेन दण्डहस्तो भवेद्यथा॥
खुखुण खुखुण खेंद्रः खेंद्रः खेंद्रः खेंद्रः खेंद्रः टिरि टिरि टिरि टिरि

वेमः

—पाटवाद्यम्

करयोर्श्लितयेनाथ मृदुना दक्षिणेन च।
यद्वाद्यं क्रियते सोऽयं दण्डहस्तः प्रकीर्तितः॥

वेमः

दण्डहस्तजशब्देन मात्राभिर्द्वादशैर्युता।
द्वाभ्यां क्रमेण हस्ताभ्यां क्रियते दण्डहस्तकः॥

पार्श्वदेवः

## दण्डान्तहस्तः

अधोमुखस्वस्तिकौ चेत्सूच्यौ दण्डान्तहस्तकः।
पुरोभागे तु दण्डान्तं प्रजापतिनिरूपणे॥

विनायकः

## दण्डिका—वीणा

इयं द्वितन्त्री—

दक्षिणा तन्त्रिका ज्ञेया पञ्चमस्वरसंयुता।
वामतन्त्री समाख्याता षड्जस्वरसमन्विता॥
एकाङ्गुलप्रमाणेन जीवकाद्वयकं भवेत्।
नायिका दण्डिकामेनां तर्जन्या वादयेद्बुधः।
दण्डी खदिरनिर्वृत्ता विस्तृतिर्भानुमुष्टिभिः॥

भाषायां विस्तृतिः ओलवु परिणाहस्तु वलयमिति ककुभं गोड्डगन्सु इति पत्रिका करिवेल इति जीविका जीवगरो इति चोच्यते।

## दत्तकः—हस्तः

अंसदेशेऽपि शिखरो दत्तकार्थे नियुज्यते।

शृङ्गारः

## दत्तकाभिनयः

शिखरहस्तस्य भुजाग्रे धारणेन कर्तव्यः।

महाराष्ट्र

## दत्तिलः

गान्धर्वशास्त्रसङ्क्षेपकर्ता। क्रै. प. १००-वर्षे एकस्मिन् शिलाशासने अस्य नाम दृश्यते। तस्मिन् महानुभाव इति वक्तुमवकाशोऽस्ति। अन्योऽपि नृत्तलक्षणग्रन्थः दत्तिलकृत इति बहुग्रन्थेषूदाहरणाद्ज्ञायते।

## दत्तिलकोहलीयम्

अस्य कर्ता न ज्ञायते । ग्रन्थस्तु सङ्गीतरत्नाकरादुद्धृतानां श्लोकानां समूह एव । सप्तपरिच्छेदपरिच्छिन्नः । ग्रन्थो लाहूर-नगरे वर्तते ।

## दन्ताः

समं छिन्नं खण्डनं च चुम्बितं कुट्टनं तथा ।
दष्टनिष्कर्षणे तद्वद्ग्रहणं चेति सञ्जगुः ।
अष्टौ दशनकर्माणि लक्ष्मलक्ष्यविशारदाः ॥

अशोकः

समं निष्कर्षणं दष्टं चुम्बितं ग्रहणं तथा ।
कुट्टनं खण्डनं चेति दन्तानां कर्म सप्तकम् ॥

विप्रदासः

चर्वणछेदने स्यातां पीडनग्रहणे ततः ।
अन्त्यं निष्कर्षणं ज्ञेयं तत्कर्माणि च पञ्चधा ॥

ज्यायनः

दलनाः खण्डनाश्चैव कर्तनाधारणास्तथा ।
निकर्षणाश्च विज्ञेया दन्ताः पञ्चविधा बुधैः ॥

सोमेश्वरः

## दन्तिपक्षम्—हस्तः

शिरोदेशं समारभ्य पाणिभ्यां केशबन्धनम् ।
अन्योन्याभिमुखं यत्तु वरणं केशबन्धनम् ॥
पाणिभ्यामवटं प्राप्य दन्तिदन्तसमा स्थितिः ।
दन्तिपक्षमिति प्रोक्तमेतच्चित्रं महेश्वरि ॥

उमा

## दन्तिवसन्तः—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स रि म ध नि स.
(अव) स ध नि ध प म ग म रि स.

मज

## दन्ती—प्रबन्धः

असङ्गतपदद्वन्द्वं प्रासः प्राधान्यतो भवेत् ।
प्रान्ते दन्तिपदं चात्र विचित्रयतिकल्पना ॥

हरिपालः

## दमवती—श्रुतिः

धैवतस्य द्वितीया श्रुतिः ॥

अनूपः

## दम्भोलिः—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स रि ग प ध नि स.
(अव) स नि म ग रि स.

मज

## दयावती—श्रुतिः

ऋषभे प्रथमा श्रुतिः ।

## दयावीरः

शरीरं शोणितं मांसं परप्राणिहिताय यः ।
सद्यस्त्वद्वैरिणो दद्याद्दयावीरस्स उच्यते ॥
जीमूतवाहनो राजा शिबिस्सत्यवरस्तथा ।
एवमन्येऽपि विज्ञेया दयावीरा महीतले ॥
धैर्यं सत्वं क्षमा भक्तिरानन्दश्चाविकारिता ।
एतैरेवाभिनेतव्यो दयावीरः कुशीलवैः ॥

जगद्धरः

## दरबारू—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि म प ध नि स.
(अव) स नि ध प म प ध प ग रि स.

## दर्दरः

ददर्श शब्दं ददातिधातोरादान इत्यतः ।
विद्याद्दर्दरमप्येवं वाद्यभाण्डं विचक्षणः ॥
पूर्वदारण इत्यस्माद्धातोः कर्तरिरवेति ।
एडुकिप्रतिपद्येन दर्दरस्याथ संभवः ॥
दर्दरस्य पुराणेषु श्रूयते संभवो यतः ।
नश्यत्यमङ्गलं सुष्ठु श्रुत्वा दर्दरजं ध्वनिम् ॥

नान्यः

## दर्पः

प्रीतिनिर्वृतिनिघ्नानामरागविषयेऽपि यः । ।
प्रवृत्तिं कुरुते भावः पुंसां दर्पस्स उच्यते ॥

भावविवेकः

## दर्पकलीला—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि म प ध नि स.
(अव) स ध प ग म रि स.

मज

## दर्पणः—देशीतालः

द्रुतद्वन्द्वाद्गुरुश्चैकस्ताले स्याद्दर्पणाभिधे । ० ० ऽ

सुधा

द्रुतद्वयं गुरुश्चान्ते ताले दर्पणनामनि । ० ० ऽ

वेमः

धिद्दिद्दैं गणधड ।

सुधा

दर्पमञ्जरी—मेलरागः ( गमनश्रममेलजन्यः )

(आ) स ग रि ग म प नि स.
(अव) स नि ध प म ग स.

मञ्ज

दर्पसरणम्—उत्प्लुतिकरणम्

मार्गोक्ते वैष्णवस्थाने यः पादः पार्श्वतोमुखः ।
तद्दिश्यमङ्घ्रिं भ्रमयन् तिर्यङ्मण्डलवन्मुहुः ॥

अन्ते च पादमपरं त्र्यस्रीकृत्य यदा भजेत् ।
तदेव स्थानकं तद्ज्ञैस्तद्दर्पसरणं मतम् ॥

वेमः

दर्वार—मेलरागः

(आ) स ० रि ० ० म ० प ० ध नि ० स.
(अव) स ० नि ध ० प ० म ग ० रि ० स.

मेललक्षणे

दर्शः—तानः

षड्जग्रामे निगहीनौडुवः ।
ध प म रि स.

कुम्भः

दर्शनम्

समं साच्यनुवृत्तावलोकितानि विलोकितम् ।
उल्लोकितालोकिते च प्रविलोकितमित्यपि ।
एतान्यष्टौ दर्शनानि ब्रूते निधिकरात्मजः ॥

विप्रदासः

विकूणितं विहसितं न्यञ्चितं कुञ्चितं तथा ।
निष्पन्दमञ्चितं मुग्धं विकासि च ततः परम् ॥

अभिलाषि स्थिरं वक्रं प्रसन्नं मसृणं तथा ।
अलसं वलितं स्मेरमानन्दि मदमन्थरम् ॥

साकूतं विह्वलं चैव निभृतं चाथ सोत्सुकम् ।
सोत्कम्प्याक्षेपि विक्षेपि चोत्कण्ठितमुदञ्चितम् ॥

त्र्यस्रं विकृष्टं व्यासङ्गि ललितं च विसंस्थुलम् ।
ततो विस्फारितं चैव कठोरं च तरङ्गितम् ॥

ततं च तरलं चैव सस्पृहं चकितं चलम् ।
ततः प्रेङ्खोलितं चेति चत्वारिंशदुदीरिताः ॥

वेमः

विकूणितं विहसितं कुञ्चितं न्यञ्चिताञ्चिते ।
स्निग्धं मुग्धं च निष्पन्दं विस्तारि च विकासि च ॥

स्तिमितं मसृणं वक्रं मधुरं चाभिलाषितम् ।
स्थिरं प्रसन्नमलसं ललितं मदमन्थरम् ॥

स्मेरमानन्दसाकूतं विदग्धं विह्वलं तथा ।
निकुञ्चितं च निभृतमुत्कण्ठितमुदञ्चितम् ॥

सोत्सुकं सोत्कमुत्कम्पमुल्लासि च समन्मथम् ।
महद्व्याक्षेपि विक्षेपि त्रिभङ्गि त्र्यश्रमेव च ॥

विकृष्टं विनतं स्फीतं व्यासङ्गि च विसंस्थुलम् ।
विस्फारितं विलुलितं वलितं च तरङ्गितम् ॥

कठोरं कलुषं रूक्षं कातरं चकितं चलम् ।
कोमलं तरलं तानि प्रणयि प्रेमगर्भि च ॥

सोत्प्रासं सस्पृहं ह्लादि प्रेङ्खोलं लोलमेव च ।
एवमुक्ताश्चतुष्षष्टि विकारा दृष्टिसंश्रयाः ॥

उद्वर्तितमधोवृत्तं निवृत्तं च विवर्तितम् ।
स्तब्धमुत्फुल्लमुद्गोलमुद्धुरं विधुरं तथा ॥

विश्लिष्टं निष्ठुरं शुष्कं कुटिलं चटुलं तथा ।
एते प्रायेण कथिता रौद्रस्यैवोपयोगिनः ॥

स संभ्रमं जडं चैव सव्यग्रं सव्यथं तथा ।
तान्तमार्तं परिम्लानं तप्तं मलिनमेव च ॥

एते प्रायेण शोकस्य विकारा दृष्टिसंश्रयाः ।
मन्थरं वन्धुरं धीरमविक्रियमकृत्रिमम ॥

अनुल्बणमसंभ्रान्तमव्याजमनुपस्कृतम् ।
सहर्षं च सगर्वं च वीरस्यैते प्रकीर्तिताः ॥

अरोचकमनुत्सेकमाविद्धं चिद्धमेव च ।
विकृष्टं च विनिष्क्रान्तं विनिकीर्णं विलोभितम् ॥

एते प्रायेण कथिता वीभत्से च भयानके ।
एते शतं समाख्याता चत्वारश्च ततोऽधिकम् ॥

शारदातनयः

दलकम्—मस्तकभूषणम्

दलकं हेमरचितं व्याघ्रपुच्छविनिर्मितम् ।
मुक्तामाणिक्यरचितं पुरुषाणां विभूषणम् ॥

सोमेश्वरः

दलनाः—दन्ताः

मर्दनाद्दलना दन्ताः चणकादिषु भक्षणे ।
ताम्बूले ते समायोज्या अपूपादिषु स्वादने ॥

सोमेश्वरः

चर्वणमिति नामाह ज्यायनः ।

दशाननः—देशीतालः

दलगा दलदा गश्च दशानन इतीरिते ।
० । ऽ ० । ० ऽ

लक्ष्मणः

दशावतारकीर्तिधवलः—सूडप्रबन्धः

तदन्ते तस्य चाभोगाः गेया एकैकशोऽथवा ।
प्रत्येकं रचिता भोगाः वक्ष्यमाणप्रमाणतः ॥
पदान्यष्टौ दशापि स्युरत्र स्वेच्छानुरोधतः ।
नानायतिग्रहलयतालरागोपबृंहितः ॥
छायालयोपाधिवशाच्छुद्धसादृश्यतोऽपि च ।
अस्य सूडस्य मिश्रत्वमभाषिष्ट महीपतिः ॥
छन्दसा येन केनापि गद्यैः पद्यैर्विनिर्मितः ।
ध्रुवः प्रतिपदं गेयः स एव हि विपश्चिता ॥
पदान्ताभोगरुचिरस्ततः पाटस्वराङ्कितः ।
दशावतारकीर्त्याद्य धवलोऽयं प्रबन्धराट् ॥
रागोऽत्र मध्यमादिः स्यादादितालो विलम्बितः ।
लयः स्यान्मागधी गीतिः शृङ्गारोऽस्य रसः स्मृतः ।
कीर्तनं वासुदेवस्य विनियोगो नृपोत्सवे ॥

कुम्भः

दशावस्थाः

एवं विधैः कामलिङ्गैरप्राप्तसुरतोत्सवा ।
दशस्थानगतं कामं नानाभावैः प्रदर्शयेत् ॥
प्रथमे त्वभिलाषः स्याद्द्वितीये चिन्तनं भवेत् ।
अनुस्मृतिस्तृतीये तु चतुर्थे गुणकीर्तनम् ॥
उद्वेगः पञ्चमे प्रोक्तो विलापः षष्ठ उच्यते ।
उन्मादः सप्तमे ज्ञेयो भवेद्व्याधिस्तथाष्टमे ।
नवमे जडता चैव दशमे मरणं भवेत् ॥

भरतः

केचिद्द्वादशावस्था मन्यन्ते ।

दष्टम् चिबुकम्

दन्दष्टि दशनैर्दष्टं स्यादेतत्क्रोधकर्मसु ।

ज्यायनः

—दन्तः

अधरैर्दशनैर्दंशो दष्टं क्रोधे निरूपितम् ।

अशोकः

दाक्षायणी—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

( आ ) स रि ग म नि ध म प ध नि स.
( अव ) स ध प म ग रि स.

मञ्ज

दाक्षिणात्या—(द्वितीयः) भाषारागः

अन्यापि भिन्नषड्जोत्था दाक्षिणात्या रिभूयसी ।
मध्यषड्जा दीप्तषड्जा ग्रहांशन्यासपञ्चमा ॥
धांशन्यासग्रहा तारगान्धारा मध्यमध्यमा ।
षड्जगान्धारभूयिष्ठा बृहतीत्यपि कथ्यते ॥

भट्टमाधवः

—(प्रथमः) भाषारागः

शुद्धपञ्चमभाषायां दाक्षिणात्या प्रियस्मृता ।
पञ्चमांशग्रहन्यासा तारधैवतमध्यमा ।
अपन्यासर्षभा तारपञ्चमात्तारसप्तमा ॥

प्रियस्मृतेति । प्रिययोः परस्परस्मरणेन ।

भट्टमाधवः

—प्रवृत्तिः

दाक्षिणात्या तावद्बहुनृत्तगीतवाद्या कैशिकीप्राया चतुरमधुरललिताङ्गाभिनया च ।

महेन्द्रो मलयस्सह्यो मेकलः पालमञ्जरः ।
एतेषु संश्रिता देशास्ते ज्ञेया दक्षिणापथाः ॥
कोसलास्तोसलाश्चैव कलिङ्गा यवनाः खसाः ।
द्रमिडान्ध्रमहाराष्ट्राः वैण्णा वै वानवासजाः ॥
दक्षिणस्य समुद्रस्य तथा विन्ध्यस्य चान्तरे ।
ये देशास्तेषु युञ्जीत दाक्षिणात्यां तु नित्यशः ॥

भरतः

—भाषारागः

तथैव दाक्षिणात्या तु भिन्नषड्जे धमन्द्रिका ।
षड्जतारस्वरा धांशग्रहन्यासा विदोलिता ॥
नियोक्तव्यां च सन्तापे प्रियस्य स्मरणेऽपि च ।
विभाषेति पुनर्भाषामिमामाचष्ट याष्टिकः ॥

कुम्भः

दाक्षिणात्यगूर्जरी—रागः

दक्षिणा गूर्जरी कम्पमध्यमा ताडितेतरा ।

हम्मीरः

—प्रथमरागः

मध्यस्फुरणसंयुक्ता संपूर्णा ताडितस्वरा ।
ऋषभांशग्रहन्यासा दाक्षिणात्या च गूर्जरी ॥

मोक्षदेवः

दाक्षिण्यम्

दाक्षिण्यं नाम तत्प्राहुः स्वानुकूल्यप्रवृत्तिषु ।
प्राणानप्याददानस्य स्थातुं शक्तिर्न यद्भवेत् ॥

भावविवेकः

—लक्षणम्

दृष्टैः प्रसन्नवदनैः यत्परस्यानुवर्तनम् ।
क्रियते वाक्यचेष्टाभिस्तद्दाक्षिण्यमुदाहृतम् ॥ भरतः

दाडुकपञ्चमः—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स ग रि ग म प म नि ध प स.
(अव) स नि ध प म ग रि स.

मञ्ज

दा(धा)टीचलम्—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध प ग रि स.

मञ्ज

दा(धा)टीमञ्जरी—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म प ध स.
(अव) स नि प म रि स.

मञ्ज

दाडियमन्—मेलरागः

(आ) स रि ० ० ग ० ० प ० ध ० ० स.
(अव) स नि ० ध ० प म ० ग ० ० रि स.

मेललक्षणे

दाण्टध्वाडः—देशीनृत्तम्

रायबङ्गालध्वाडस्य दक्षिणश्चरणो यदा।
वामजानुतले लग्नस्तद्दाण्टमभिधीयते ॥

वेदः

दानम्—सन्ध्यन्तरम्

यथा – नागानन्दे – वध्यशिलायां–संरक्षता पन्नगमित्यादि जीमूतवाहनवाक्यम्।

सागरः

दानमात्मप्रतिनिधिभूषणादिसमर्पणम्।

सिंगः

दानमञ्जरी—मेलरागः (षड्विधमार्गिणीमेलजन्यः)

(आ) स ग म ध नि प ध ब नि स.
(अव) स नि ध म ग म रि स.

मञ्ज

दानवीरः

राज्यं प्रियामपि सुतं स्वशरीरकं वा
दत्त्वा प्रशान्तवदनो द्विजसत्तमाय।
क्षुद्भ्रान्तिलोचनविधावतिदुःखितोऽपि
प्रोक्तोऽयमेव मुनिना भुवि दानवीरः ॥

हरिश्चन्द्रो वलिः कर्णो दधीचिः पशुनन्दनः।
एत एव स्मृता लोके दानवीरा मनीषिभिः ॥

मुखप्रसादो हर्षश्च विनयस्सत्वशालिता।
धैर्यं चाभिनये कार्यं दानवीरस्य सूरिभिः ॥

जगद्धरः

दामोदरः

सङ्गीतदर्पणकारः। कालः १५५०
नाट्यनवीनसम्प्रदायप्रवर्तकः। महाराष्ट्रदेशीयः।

दिक्स्वस्तिकम्—करणम्

कुर्यादस्फुटिताङ्गेन दिक्मुखे चतसृष्वपि।
प्रत्येकं स्वस्तिकं यत्र तद्दिक्स्वस्तिकमुच्यते ॥
गीतस्य परिवर्तेषु विनियोगोऽस्य कीर्तितः।
स्वस्तिकान्तरमप्येतदुपजीव्य प्रवर्तते ॥

ज्यायनः

दिगनुवर्तनम्—नृत्तकरणम्

आद्ये स्थाने स्थितिर्हस्तौ काङ्गुलौ कुञ्चितं शिरः।
विषण्णाऽत्र भवेद्दृष्टिः चारी च रसगुम्भिता।
करणं कथितं प्राज्ञैर्नाम्ना दिगनुवर्तनम् ॥

नन्दी

अत्र दृष्टिः, विषण्णा। गतिः रसगुम्भिता। यथा, दिक्षु सविलासं पार्ष्णिभ्यां पश्चाच्चलनाभ्यां तिरिपभ्रमरीं कृत्वा पार्श्वयोर्गमनम्।

दिग्भ्रमरी—उत्प्लुतिकरणम्

क्रमादाशासु सर्वासु करावष्टब्धभूतलः।
भ्रामयञ्चासकृत्तिष्ठेद्यदि दिग्भ्रमरीति सा ॥

वेमः

दिग्वर्षः—चालकः

पुरस्तात्पार्श्वयोस्तिर्यगूर्ध्वं पश्चाच्च लोलितः।
करो यत्र तदुद्दिष्टं दिग्वर्षाभिधचालनम् ॥

अशोकः

दिनद्युतिः—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग म प नि स.
(अव) स नि ध प म ग म रि ग स.

मञ्ज

दिनपुष्पहस्तः

अलपद्मश्शिरःपार्श्वे तिर्यक्स्थो दिनपुष्पकः।
शिरसः पार्श्वभागे तु धम्मिल्ले दिनपुष्पकः।
नन्दिवर्धनपुष्पार्थे विनियोज्यो बुधोत्तमैः ॥

विनायकः

दिवमणिः—मेलकर्ता रागः

स रि ग ० ० ० म प ० ध नि स. मञ्ज

दिविचामन्तिनी—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग रि ग म प ध प स .
(अव) स नि ध प म रि स .

मञ्ज

दिव्यकुन्तला—मेलरागः (शुभपन्तुवरालीमेलजन्यः)

(आ) स रि ग म ध स .
(अव) स नि ध प म ग रि स .

मञ्ज

दिव्यगान्धारी—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि म प म ध नि स .
(अव) स ध नि प म ग रि स .

मञ्ज

दिव्यमौलिः—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग प नि स .
(अव) स ध प म ग रि ग स .

मञ्ज

दिव्यमङ्गला—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग म प ध नि स .
(अव) स ध प म ग रि स .

मञ्ज

दिव्यमतिः—मेलरागः (नवनीतमेलजन्यः)

((आ) स रि ग म प ध नि स .
(अव) स ध प म रि स .

मञ्ज

दिव्यसेना—मेलरागः (हेमवतीमेलजन्यः)

(आ) स रि ग म प ध नि स .
(अव) स नि ध म ग रि ग म ग स .

मञ्ज

दिलीपिकं—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग रि म ग म प नि ध नि प ध नि स .
(अव) स नि ध प म ग रि स .

मञ्ज

दीना—दृष्टिः

अर्धस्रस्तोत्तरपुटा मनाक् संरुद्धतारका ।
सबाष्पमन्दसञ्चारा दीना शोकेऽभिधीयते ॥

सोमेश्वरः

दीक्षा—तानः

मध्यमग्रामे गहीनषाडवः ।

रि स नि ध प म . कुम्भः

दीपः—रागाङ्गरागः

दीपरागसमुत्पन्नो भिन्नकैशिकमध्यमात् ।
सग्रहो मध्यमन्यासः परिपूर्णस्वरो भवेत् ॥
मन्द्रर्षभोऽत्र गान्धारपञ्चमस्तारमध्यमः ।
सर्वर्तुषु प्राक् प्रहरे गेयो वीरे तथाद्भुते ॥

भट्टमाधवः

—रागः

षड्जग्रहो मध्यमांशो गपान्तश्च मतारवान् ।
रिमन्द्रः परिपूर्णश्च भिन्नकैशिकमध्यमः ॥
धन्यासिकेवोद्धतारो दीप इत्यभिधीयते ।
रसे शान्ते तु कर्तव्यो विनियोगस्तु गायकैः ॥

जगदेकः

दीपकम्—रागः

दीपकं षड्जपूर्णाङ्गं रागाङ्गं च जगुर्बुधाः ।
अत्र अंशन्यासग्रहेषु षड्जः ।

मदः

ग्रहे तु गीयते यत्र षड्जो मध्ये तु मध्यमः ।
गान्धारमध्यमावंशे तारे भवति मध्यमः ॥
मन्द्रे तु रिषभः पूर्णः सोऽयं शान्तरसाश्रयः ।
धन्यासिकेवोद्धतारो दीपकः परिगीयते ॥

सोमराजः

—प्रथमरागः

मध्यमान्तगतभिन्नकैशिका-
दीपको भवति तारमध्यमः ।
दुर्बलाविह पगौ च सांशको
न्यासमध्यमगतो रिमन्द्रकः ॥

मोक्षः

—अलङ्कारः

नानाधिकरणार्थानां शब्दानां सम्प्रदीपकम् ।
एकवाक्येन संयुक्तं तद्दीपकमिहोच्यते ॥

(उदा) सरांसि हंसैः कुसुमैश्च वृक्षाः
मत्तैर्द्विरेफैश्च सरोरुहाणि ।
गोष्ठीभिरुद्यानवनानि चैव
तस्मिन्नशून्यानि सदा क्रियन्ते ॥

भरतः

—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स ग म प ध प स .
(अव) स नि ध नि प ग प म ग रि स . मञ्ज

**दीपकः**—मेलरागः

आरोहे मनिवर्ज्यः स्याद्दीपको मालवोत्थितः।
गान्धारोद्ग्राहसंयुक्तः सन्यासांशविभूषितः॥

द्वितीयप्रहरोत्तरगेयः।

अहोबिलः

—रागः

षड्जग्रहांशकन्यासः संपूर्णो दीपको मतः।
मूर्छना शुद्धमध्या स्याद्गातव्यो गायनैस्सदा॥

दामोदरः

—देशीतालः

द्रुतद्वन्द्वं लघुद्वन्द्वं गुरुद्वन्द्वं च दीपके। ०० ।। ऽऽ
स स सा री गा गा मा मा.

जग

**दीपकरागध्यानम्**

बालारतार्थं प्रविलीनदीपे
गृहेऽन्धकारे सुभगः प्रवृत्तः।
तस्याः शिरोभूषणरत्नदीपात्
लज्जां प्रकुर्वन् कृतवान्प्रदीपम्॥

दामोदरः

**दीपनम्**—स्वराङ्गम्

दीपनं नाम त्रिस्थानशोभि वर्धमानस्वरं च।

नान्यः

**दीपनी**—प्रबन्धाङ्गम्

चतुर्भिरङ्गैः खलु दीपनी स्यात्।

रघुनाथः

इयं सेनेति हस्त्यश्वरथभटात्मकत्वादुक्तमन्यैः।

**दीपिकावसन्तः**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग म प ध प नि स.
(अव) स ध प म रि स.

मज

**दीप्तः**—पाठ्यालङ्कारः

—(प्रबन्धे) नादः

यो रागव्यञ्जको नादस्तारस्थानस्थितोऽपि सन्।
दीप्तत्वाद्दीप्त इत्युक्तो रागतत्त्वविवेचकैः॥

कुम्भः

**दीप्ता**—ध्रुवावृत्तम् (सप्ताक्षरम्)

प्रथमं यत्र पादे लघुनी पञ्चमं च।
कथिता सा तु दीप्ता सततं चेदमुष्णिक्॥
सिसिरे वादिकाले (शिशिरे वाति काले) भरतः

—श्रुतिः

ऋषभस्य द्वितीया श्रुतिः। दीप्तिमतीति केचन पठन्ति।

—श्रुतिजातिः

एषा तीव्रा, रौद्री, वज्रिका, उग्रा, इति चतसृषु श्रुतिषु वर्तते।

**दीप्तिः**

विज्ञेया च तथा कान्तिः शोभैवापूर्वमन्थरा।
कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते॥

भावविवेकः

**दीर्घतरङ्गिणी**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग म ध नि स.
(अव) स नि ध प म ग म रि ग रि स.

मज

**दीर्घतारा**—श्रुतिः

मन्द्रधैवतप्रथमा श्रुतिः।

मण्डली

**दीर्घमङ्गली**—मेलरागः (सुवर्णाङ्गीमेलजन्यः)

(आ) स रि म प ध स.
(अव) स ध प म ग रि स.

मज

**दीर्घसूत्रकः**—

करिष्ये श्वः परश्वो वा भूयो निश्चित्य हेतुभिः।
इति नाध्यवसातुं यः शक्तोऽसौ दीर्घसूत्रकः॥

भावविवेकः

**दुन्दुभिः**—अवनद्धम्

सूतभूजातसञ्जातो महाकायो महारवः।
कांस्यभाजनगर्भोऽसौ वलयाभ्यां विवर्जितः॥
चर्मणा नद्धवदनो वर्धैर्बद्धस्समन्ततः।
सारङ्गशृङ्गदण्डेन वाद्यते दुन्दुभिर्दृढम्॥
मेघध्वनिसमो नादो जयमङ्गलकारिषु।
उत्सवे देवतागारे वादनीयो महाबलः॥

सोमेश्वरः

**दुर्गः**—वाद्यालङ्कारः

वाद्ये प्रचारविषमः सर्वमार्गप्रबोधनः।
अविभक्ताक्षरपदः स दुर्ग इति कीर्तितः॥

भरतः

सर्वमार्गविमिश्रत्वात्प्रचारात्विषमादपि ।
अविभागादक्षराणां परस्याप्रतिभानतः ॥
दुःखेन गम्यमानत्वाद्वाद्यस्यालङ्क्रियामिमाम् ।
दुर्गाभिधामभ्यधत्त मिथिलामण्डलेश्वरः ॥

नान्यः

## दुर्गामतम्

रागाणां विभागे मतमिदं ग्रन्थकारैः सूचितम् । दुर्गामतनामकः कोऽपि ग्रन्थो नोपलभ्यते ।

## दुर्मल्लिका—नृत्तरूपकम्

चतुरङ्का, गर्भसन्धिशून्या । यथा – विन्दुमती ।

अस्यां प्रथमाङ्कः विटविलासमयः । द्वितीयो विदूषकविलासमयः । तृतीयः पीठमर्दविलासः । चतुर्थो नागरनायकविलासः । प्रथमस्त्रिणालिकः । द्वितीयः पञ्चनालिकः । शेषौ दशनालिकौ ।

सागरः

अथ दुर्मल्लिका नाम प्रौढनागरनायिका ।
चतुरङ्का चतुस्सन्धिर्गर्भसन्धिविना कृता ॥
विटो विलसति स्वैरं प्रथमाङ्के त्रिनाडिका ।
विदूषको द्वितीयेऽङ्के विलसेत्पञ्चनाडिका ॥
पीठमर्दो विहरति तृतीये सप्तनाडिका ।
विटादित्रितयक्रीडा चतुर्थे दशनाडिका ॥
चौर्यरतप्रतिभेदं यूनोरनुरागवर्णनं वापि ।
यत्र ग्राम्यकथाभिः कुरुते किल दूतिका रहसि ॥
मन्त्रयति च तद्विषयं तज्ज्ञातित्वेन याचते च वसु ।
लब्ध्वापि लब्धुमिच्छति या सा दुर्मल्लिका नाम्ना ।
एनां दुर्मल्लिकामन्ये प्राहुर्मत्तल्लिकामिति ॥

शारदातनयः

शिष्टं मत्तल्लिकाशब्दे उक्तम् ।

## दुल्लीतोडी—रागः

मध्यमांशन्यासयुक्ता षड्जमन्द्रा समस्वरा ।
धैवतेन च भूयिष्ठा दुल्लीतोडीति सा मता ॥

सोमेश्वरः

## दुष्करकरणा

पुष्करकरणाशब्दे द्रष्टव्यम् ।

## —अवनद्धे जातिः

पुष्करकरणेति नामान्तरम् ।

स्वस्तिकहस्तविचारा सर्वमृदङ्गप्रहारसंयुक्ता ।
सा त्रिलयवाद्ययुक्ता दुष्करकरणा भवेज्जातिः ॥  भरतः

यस्यां करणानि स्युः करयोः स्वस्तिकविवर्धकादीनि ।
अधमस्त्रीणां ज्ञेया दुष्करकरणेति सा जातिः ॥

नान्यः

## दूतकृत्यानि

दूतसंप्रेषणं दूतसन्देशदानं दूतप्रणिधानं दूतानुगमः सखीनिग्रहणं मार्गोदीक्षणं गमागमचिन्ता चिरविमर्शः दूतागमनं आकारपरीक्षा दूतप्रतिभेदः दूतपरिप्रश्नः दूतव्याहारः दूतवाक्याकर्णनं दूतगमनवृत्तान्तः दूतप्रवृत्त्युपलम्भः, प्रियसन्देशः सुहृत्संमन्त्रणं अवस्थानुभवः सहायोत्साहनं प्रियदूतागमनं दूतप्रतिपत्तिः वार्ताभिधानं पौर्वापर्यनियोगः दूतवाक्यं उत्तराभ्युपपत्तिः दूतप्रतिवाक्यं दूतवाक्याक्षेपः दूताभिभर्त्सनं परिजनादिक्षोभः गुरुजनाशङ्का सहायावेगः इतिकर्तव्यता स्वयंप्रवृत्तिः नायकानयनं प्रियाभिगमः उपस्थापनं संभ्रमविकल्पः नायिकाप्रतिबोधनं सुहृत्परिहासः दूतपुरस्कारः इतिवृत्ताख्यानं अवस्थाज्ञानं अवधानं संविधानं शक्तिविवेचनं समागमोपायः समीहितसिद्धिः इत्यष्टचत्वारिंशद्दूतकर्माणि शृङ्गारप्रकाशोक्तानि । उदाहरणानि तत्र द्रष्टव्यानि ।

## दूतः

स्वयंदर्शनस्यालाभे दूतसंप्रेषणादयः । तेषु दूतसंप्रेषणं नायकयोः कर्म । तदज्ञातविशेषकर्मणोर्न घटत इति दूतविशेषाद्दूतकर्माणि च प्रागेवाभिधीयन्ते । तत्र जात्यादियोगाद् दूतविशेषाः चतुरशीतिः प्रायशो भवन्ति । यथा –

जातिः, गुणः, क्रिया, द्रव्यं, संबन्धः, अर्थः, प्रयोजनं, प्रयोगः, योग्यता, स्त्रीत्वं दूतभेदेषु हेतवः ।

तेषु जातेः –

देवो मनुष्यः किन्नरो वानरः शुकः शारिका पारावतो हंस इति ।

गुणतः –

पितृपैतामहं अदृष्टवैकृतं अविसंवादकं, अलोभशीलं, अपरिहार्यं, मन्त्रविस्रावी, धार्मिकं, भरसहिष्णुता इति ।

क्रियातः –

सहपांसुक्रीडितं, उपकारसंबद्धं, जन्मान्तरार्जितं, सहाध्यायिता, समानशीलव्यसनं, रहस्यमर्मवेदिप्रत्ययं, सहसंवृद्धं इति ।

द्रव्यतः –

मालाकार, ताम्बूलिक, गान्धिक, सौरिक, पीठमर्द, विट, विदूषक, पाषण्डिनो मित्राणि इति ।

सम्बन्धतः –

गुरुः, सखा, शिष्यः, आत्मा, ज्ञातिः, औरसः, कनीयानिति।

अर्थतः –

अनर्थप्रतिघातः, सहार्थताप्राप्तिः, प्रकरणं, आनृण्यं, कीर्तिः, प्रतीतिः इत्यमीषामास्थेयानि।

प्रयोजनतः –

दया, स्नेहः, कुतूहलं, अभिप्रायोपलम्भः पूर्वप्रार्थना, अन्यतरप्रार्थना, शीलसङ्घर्षः अमीषां स्थानानि।

प्रयोगतः –

प्रच्छन्नः, प्रकाशः, हीनः, उत्कृष्टः, उद्धतः, उदात्तः, धृष्टः, शठः—इति।

योग्यतायाः –

निसृष्टार्थः, परिमितार्थः, पत्रहारकः, मूकदूतः—इति।

स्त्रीत्वात् –

ईक्षणिका, भिक्षुकी, सखी, धात्रेयिका, विधवा, दासी, शिल्पकारिका, शिल्पिनीति।

भोजः

**दूतीविसर्जनम्**—सङ्गीतशृङ्गाराङ्गम्

प्रियजनाह्वानाय सख्यादिसम्प्रेषणं दूतीविसर्जनम्।

भोजः

**दूत्यम्**—सन्ध्यन्तरम्

दूत्यं तु सहकारित्वं दुर्घटे कार्यवस्तुनि।

यथा – मालविकायां वकुलावलिकया मालविकाग्निमित्रयोर्घटने सहकारित्वमङ्गीकृतम्।

सिंगः

पार्थविजये भगवान्वासुदेवो दुर्योधनस्य दूतो गतः। तत्कर्म दूत्यम्।

भोजः

दूतस्संदेशहरः।

सागरः

**दृढः**—वाद्यालङ्कारः

यस्तु मध्यलयोपेतः समः सुविहिताक्षरः।
गतिप्रचारे विहितः प्रकारो दृढ एव सः॥

भरतः

स्वप्राधान्याद्वर्तमानो यत्र मध्यलयो भवेत्।
सर्वेषु वाद्यभाण्डेषु दृढत्वाद् दृढ इत्यसौ॥

नान्यः

**दृप्ता**—दृष्टिः

स्थिरतारा समुत्फुल्ला प्रसादगुणशालिनी।
दृप्ता दृष्टिः प्रयोक्तव्या भाव उत्साहनामनि॥

सोमेश्वरः

सस्मिते तारके यस्य स्थिरा विकसितान्तरा।
सत्वमुद्गिरती दृप्ता दृष्टिरुत्साहसंभवा॥
अवज्ञागर्भिणी दृष्टिः दृप्तेति परिभाष्यते।
अनतिव्यक्तविकृतिः विषये सत्वभूयसि॥
येनापह्रियते दृष्टिर्विषयैरपहारिभिः।
तदेव स्थैर्यमित्युक्तं दृष्टेस्सर्वत्र कोविदैः॥

शारदातनयः

**दृष्टम्**—लक्षणम्

यथादेशं यथाकालं यथारूपं च वर्ण्यते।
यत्प्रत्यक्षं परोक्षं वा दृष्टं तद्वर्णतोऽपि वा॥

भरतः

दृष्टं प्रत्यक्षं यथा – मालविकाग्निमित्रे वामं सन्धीत्यादि।

दृष्टं परोक्षं यथा – पादताडितके उरिक्षप्तालकमित्यादि मदनसेनाया वर्णनम्।

**दृष्टान्तः**—लक्षणम्

विद्वान्पूर्वोपलब्धौ यत्समत्वमुपपादयेत्।
निदर्शनकृतस्तज्ज्ञैः स दृष्टान्त इति स्मृतः॥

भरतः

यथा – ममैव हालाहलमित्यादिश्लोके यदयमित्यादिकस्य हेतोः हालाहलकालकूटकवलनादिना येन साम्यं कृतं स दृष्टान्तः। न चेयमुपमा रूपकं वा।

अभिनवः

सर्वलोकमनोग्राहि यस्तु पक्षार्थसाधकः।
हेतोर्निदर्शनकृतः स दृष्टान्त इति स्मृतः॥

भरतः

धर्माविरुद्धतया सर्वलोकमनोग्राहि वचनं निदर्शनोपष्टंभं दृष्टान्तसंज्ञकं लक्षणम्। यथा – धूर्तविटे स्त्रीषु प्रसङ्गो न कर्तव्यः, इत्यत्र भावः – किं पश्यति भोः इत्युक्ते विट आह। भोः उपदेशमात्रं खल्वेतत्। तमहं न पश्यामि यः स्त्रीषु प्रसङ्गं न गच्छेदित्यादि।

अभिनवः

**दृष्टिः**

कान्ता भयानका चैव हास्या च करुणा तथा।
अद्भुता च तथा रौद्री वीरा बीभत्सया सह॥

एते रसाश्रयाश्चाष्टौ दृष्टयः परिकीर्तिताः ।
स्निग्धा हृष्टा च दीना च क्रुद्धा दृप्ता भयान्विता ॥
जुगुप्सिता विस्मिता च स्थायिभावाश्रया इमाः ।
शून्या च मलिना श्रान्ता सलज्जा ग्लानिसंयुता ॥
शङ्किता च विषण्णा च मुकुला कुञ्चितापि च ।
अभितप्ता च जिह्मा च ललितान्या वितर्किता ॥
तथार्धमुकुला भ्रान्ता विप्लुता केकरापि च ।
विकोशा त्रस्ता ससंयुक्ता मदिरा चेति दृष्टयः ।
षट्त्रिंशन्नामतः प्रोक्ताः तासां वक्ष्यामि लक्षणम् ॥

सोमेश्वरः

देनारञ्जनी—मेलरागः ( नटभैरवीमेलजन्यः )

( आ ) स रि ग म प ध नि स.
( अव ) स नि ध नि म प म ग रि स.

मञ्ज

देपः—रागः

अथ देपाभिधो रागो भिन्नकैशिकमध्यजः ।
षड्जग्रहसमाश्लिष्टन्यासवान्मध्यमस्वरे ॥
गान्धारे पञ्चमे चाल्प ऋषभे तारमध्यमः ।
ऋषभो मन्द्रपूर्णोऽसौ संपूर्णस्समुदाहृतौ ॥

हरिः

देवकिरिः—मेलरागः

अवरोहे धगौ न स्तौ मस्तु तीव्रतरो भवेत् ।
देवकिरौ गनी तीव्रौ यत्र स्यात् षड्जमूर्छना ॥
अपराह्णे गेयः ।

अहोबिलः

देवकिरीरागध्यानम्

कादम्बिनी श्यामतनुस्सुवृत्ता
तुङ्गस्तनी सुन्दरहारवल्ली ।
चित्राम्बरा मत्तचकोरनेत्रा
मदालसा देवकिरी प्रदिष्टा ॥

दामोदरः

देवकृतिः—क्रियाङ्गरागः

मेघाभा रक्तवस्त्रा च गरुडोपरि संस्थिता ।

कुम्भः

—रागः

षड्जन्यासग्रहांशेऽयं वीरे देवकृतिर्मता ।
असौ वृत्तिषु सर्वेषु गातव्या समयेषु च ॥

नारायणः

इयमेव शुद्धवसन्त इति कृष्णदत्तः ।

—रागः ( वंशे वादनक्रमः )

धैवतं स्थायिनं कृत्वा तत्प्राञ्चं स्थायिनं तदा ।
तस्मात्तृतीयं तुर्यं च प्रोच्याहत्य तुरीयकम् ॥
द्वितीयं कम्पयित्वाथ तृतीयाद्यां यथाक्रमम् ।
चतुस्त्रीं चावरुह्य ग्रहे न्यासः क्रियेत चेत् ॥
तदा देवकृतेस्तज्ज्ञैरुक्तं स्वस्थानमादिमम् ।
स्वरस्तृतीयो वंशे स्यात्स्थायित्वेनोपलक्षितः ॥

वेमः

—क्रियाङ्गरागः (वीणायां वादनक्रमः)

षड्जे ग्रहेऽधस्तनमेत्य षड्जं
पुनर्ग्रहं प्रोच्य ततस्तृतीयम् ।
तुर्यं च कृत्वा तनुकम्पितं च
सुपञ्चमं स्थायिन एव तुर्यम् ॥
तृतीयकं प्रोच्य पुनर्ग्रहं तथा
द्वितीयमान्दोल्य तृतीयकं स्पृशेत् ।
ततो यदि स्यान्न्यसनं ग्रहे तदा
रागो भवेद्देवकृतिर्वरिष्ठा ॥

कुम्भः

—क्रियाङ्गरागः

न्यासांशषड्जा संत्यक्तरिपा मन्द्रनिषादिनी ।
समस्वरवती व्याप्तमध्यमा धैवतग्रहा ।
धीरैर्देवकृतिर्वीरे रसे स्वैरं निगद्यते ॥

मल्लमाधवः

—रागः

समन्द्रा मध्यमव्याप्ता षड्जन्यासांशधग्रहा ।
समस्वरा निमन्द्रा च वीरे देवकृतिर्भवेत् ॥

जगदेकः

देवक्रिया—रागः

धग्रहसांशन्यासा मध्यमबहुला च परिरवत्यक्ता ।
समशेषस्वरसारा तारा प्रोक्ता तु देवकृतिः ॥

नान्यः

मध्यमव्याप्तिका षड्जन्यासधैवतकग्रहा ।
समस्वरा देवकृतिरमन्द्रा रिपवर्जिता ॥

मतङ्गः

—मेलरागः ( खरहरप्रियामेलजन्यः )

( आ ) स ग रि ग म प ध नि ध स.
( अव ) स नि ध प म ग रि ग स.

मञ्ज

—रागः

धैवतग्रहषड्जांशा न्यासयुक्ता समस्वरा।
निमन्द्रा रिपहीना च नाम्ना देवकृतिस्तथा॥

सोमराजः

निमन्द्रा मध्यमव्याप्ता रिपत्यक्ता समस्वरा।
सन्यासांशा धग्रहा च वीरे देवकृतिर्भवेत्॥

हम्मीरः

प्रथमरागः

निषादमन्द्रार्षभपञ्चमाभ्यां
समुज्झिता मध्यमभूरितारा।
न्यासांशषड्जा ग्रहधैवतेयं
समस्वरा देवकृतिः प्रगीता॥

मोक्षदेवः

देवक्रियारागध्यानम्

पद्मासने संस्थितसुन्दराङ्गीं
पद्माननां पुष्पितगुच्छहाराम्।
पत्युस्सदा ध्यायति सन्निधाने
देवक्रियां तां मनसा स्मरामि॥

रागसागरः

देवक्री—रागः

देवक्रियाः स्वराः प्रोक्ताः सारङ्गसदृशा बुधैः।

दामोदरः

देवक्री रिपहीना स्यात् भूरि सा सग्रहान्तयुक्।

मद

देवक्रीरागध्यानम्

भ्रमन्ती नन्दने श्यामा पुष्पप्रचयतत्परा।
ख्याता देवकिरी ह्येषा करार्पितसखीकरा॥

इयं सम्पूर्णा।

संगीतसरणिः

देवगान्धारः—मेलरागः ( श्रीरागमेलः )

संपूर्णो देवगान्धारः षड्जत्रयविभूषितः।
गायकैर्गीयमानोऽसौ शोभां धत्ते निरन्तरम्॥

श्रीकण्ठः

देवगान्धाररागध्यानम्

गन्धर्वविद्याधरकिन्नराणां
नितम्बिनीभिः परिवेष्टितोऽसौ।
नृत्योत्सवे प्रीतिमुपैति देव-
गान्धाररागो नितरां प्रसिद्धः॥

श्रीकण्ठः

देवगान्धारी—मेलरागः

तदा तु देवगान्धारी पूर्णश्चेद्भैरवो यदा।
गान्धारादिस्वरोद्ग्राहा सस्वरांशेन शोभिता।
सा यदा रिस्वरोद्ग्राहा तदारोहे गवर्जिता॥

द्वितीयप्रहरोत्तरगेया।

अहोबिलः

—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

(आ) स रि म प ध नि स.
(अव) स नि ध प म ग रि स रि ग रि स.

मञ

देवगान्धारीध्यानम्

तपस्विनीध्यानशिलादवर्पी गणसेविनी।
पद्मासनस्था गर्वाङ्गी देवगान्धारिका मता॥

संगीतसरणिः

देवगान्धारीरागध्यानम्

लतान्तमृदुनामिकागरुसुगन्धपात्रान्वितां
मृदङ्गकरवादनप्रकटवेणुनादोज्ज्वलाम्।
जलाशयसमीपगां सुरुचिरां मनोहारिणीं
स्मरामि हरिसन्निधौ मनसि देवगान्धारिकाम्॥

रागसागरः

देवगिरिः—मेलरागः ( कामवर्धिनीमेलजन्यः )

(आ) स रि म प ध स.
(अव) स नि ध प म स रि स.

मञ

देवगुप्तः—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

(आ) स रि ग म प ध नि स.
(अव) स ध प म ग स.

मञ

देवणभट्टः

सङ्गीतमुक्तावलिकारः। कश्चिद्देवणभट्टः धर्मशास्त्रग्रन्थकारो दृश्यते। स एवायं वा अन्यो वेति न निर्धारितम्।

कालः क्रै. प. १४५०.

देवभाषा—अतिभाषादयः

अतिभाषा तु देवानामार्यभाषा तु भूभुजाम्।
संस्कारपाठयसंयुक्ता सम्यङ्न्यायप्रतिष्ठिता॥

भरतः

देवमण्डनः—देशीतालः

सगौ दगौ गुरुद्वन्द्वं दौ लपौ देवमण्डने।
१७॥ मात्राः।

तालप्रस्तारः

**देवमनोहरी**—मेलरागः

(आ) स रि ० ० ० म ० प ० ध ० नि स.
(अव) स नि ० ध ० प म ० ० ० ० रि स.

मेललक्षणे

—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि म प नि ध नि स
(अव) स नि ध प म ग रि स.

मञ्ज

**देवमुखारी**—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध म प म रि ग म रि स.

मञ्ज

**देवरञ्जनी**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग प ध स.
(अव) स ध प म ग रि स.

मञ्ज

**देवरञ्जी**—मेलरागः

(आ) स ० ० ० ० म ० प ध ० ० नि स.
(अव) स नि ० ० ध प ० म ० ० ० ० स.

मेललक्षणे

**देवराष्ट्रम्**—मेलरागः (धातुवर्धिनीमेलजन्यः)

(आ) स रि ग म प नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**देवशाखा**—रागः

न्यासांशग्रहगान्धारा गान्धारपञ्चमोद्भवा।
रिवर्जिता निमन्द्रा च देवशाखा गकम्पिता॥

सोमराजः

**देवशीला**—नायिका

स्निग्धाङ्गोपाङ्गनयना स्थिरा मन्दनिमेषिणी।
अरोगा दीप्त्युपेता च सत्यार्जवदयान्विता॥
अल्पस्वेदा समरता स्वल्पभुक् सुरभिप्रिया।
गान्धर्ववाद्याभिरता देवशीलाङ्गना स्मृता॥

भरतः

**देवस्तम्भः**

शापाथर्वमन्त्रैः वैचित्र्यकारित्वं देवस्तम्भः।

शृङ्गारः

**देवाञ्जनी**—मेलरागः (सरसाङ्गीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध प म रि ग म रि स.

मञ्ज

**देवालः**—रागः

पञ्चमांशग्रहन्यासो षड्जगान्धारदुर्बलः।
देवालः स्वरसंपूर्णो निषादर्षभकम्पितः॥

सोमेश्वरः

निरूप्यतेऽथ देवालो मध्यमांशग्रहान्वितः।
मध्यमः कम्पितो मन्द्रे पञ्चमर्षभसंयुतः।
तथा तिरिपसंयुक्तो देवालः परिकीर्त्यते॥

हरिपालः

**देवाला**—भाषाङ्गरागः

लोके वर्त्मन्यवर्तित्वाद्देवाला न प्रकीर्तिता।
मयूरवाहना श्यामा नीलवस्त्रेति केचन॥

कुम्भः

**देवाश्रमः**—मेलरागः (गमनश्रममेलजन्यः)

(आ) स रि ग म ध नि स.
(अव) स नि ध म ग रि स.

मञ्ज

**देवी**

एभिरेव गुणैर्युक्ता बहुमानविवर्जिता।
गर्विता राजपुत्री च रतिसंभोगतत्परा॥
बाला नित्योज्वलगुणा प्रतिपक्षेष्वसूयिका।
यौवनादिगुणोन्मत्ता सा देवीत्यभिधीयते॥

भरतः

**देवेन्द्रभट्टः**

सङ्गीतमुक्तावलीकारः। गोपाचलीय (ग्वालीयर) वासी स्यात्। सङ्गीतमुक्तावल्याः प्रशंसा पण्डितमण्डल्या कृतेति हेतोः देवेन्द्रः तत्पूर्व इत्यवगम्यते। अयं देवणभट्टशार्ङ्गदेवादीनुदाहरति। तस्मादयं क्रै. प. १३८० वर्षात्पूर्वः। अयं महाकवे रुद्राचार्यस्य शिष्यः।

**देवोपहारकः**—चालकः

अरालाकृतिरेकस्तु पार्श्वयोरुभयोर्लुठन्।
सारल्यात्प्रसृतोऽन्यस्तु तस्य कूर्परमूलतः।
विलुठेद्यत्र संप्रोक्तः तदा देवोपहारकः॥

वेमः

देशकारा—रागः

उपाङ्ग देशकारा स्यात् त्रिधा षड्जैर्विभूपिता।

मदः

देशकारी—मेलरागः

देशकार्यां गनी तीव्रौ धांशो धादिकमूर्छना।

प्रातःकालीना।

अहोविलः

—रागः

देशकारी तु संपूर्णा ग्रहांशन्यासषड्जभाक्।
मूर्छना शुद्धमध्यस्था काकलीस्वरमण्डिता॥

दमोदरः

देशकारीरागध्यानम्

उत्तरीयाञ्चलन्यस्तमस्तप्रभावां (?)
शटिकापेटिकावीटिकाञ्चत्कराम्।
सन्निधौ वालिकाखेलनालोलुपां
चिन्तये श्यामलां देशकारीं सदा॥

रागसागरः

भर्त्रा समं केलिसुखं दधाना
सर्वाङ्गपूर्णा कमलायताक्षी।
पीनस्तनी रुक्मतनुः सुपूर्णा
चन्द्रानना सैव हि देशकारी॥

मेघरागभार्या।

दामोदरः

देशदेवालः—रागः

मध्यमांशग्रहोपेतः मध्यमेन च कम्पितः।
ऋषभे पञ्चमे मन्द्रः तथा.........भवेत्।
वङ्गालदेशदेवालः शेपे पूर्वोक्तलक्षणः॥

जगदेकः

देशभाषा

मानुषाणां च कर्तव्यं कारणार्थव्यपेक्षया।
न बर्वरकिरातान्तद्रमिलाद्यासु जातिपु॥
नाट्यप्रयोगे कर्तव्यं पाठ्यं भाषासमाश्रयम्।
सर्वास्वेव हि शुद्धासु जातिषु द्विजसत्तमाः॥
शौरसेनीं समाश्रित्य भाषां काव्येषु योजयेत्।
अथवा छन्दतः कार्या देशभाषाप्रयोक्तृभिः॥
शकाराभीरचण्डालशवरद्रमिलान्ध्रजाः।
हीना वनेचराणां च विभाषा नाटके स्मृता॥
मागधी च नरेन्द्राणामन्तःपुरसमाश्रया।
चेटानां राजपुत्राणां श्रेष्ठिनां चार्धमागधी॥
प्राच्या विदूषकादीनां धूर्तानामप्यवन्तिजा।
नायकानां सखीनां च शूरसेन्यविरोधिनी॥

भरतः

देशभाषाभेदाः

यौधनागरिकादीनां दक्षिणात्याथ दीव्यताम्।
वाह्लीकभाषोदीच्यानां खसानां च स्वदेशजा॥
शकारघोषकादीनां तत्स्वभावश्च यो गणः।
शकारभाषा योक्तव्या चाण्डली पुल्कसादिषु॥
अङ्गारकारकव्याधकाष्ठयन्त्रोपजीविनाम्।
योज्या शकारभाषा तु किञ्चिद्वानौकसी तथा॥
गजाश्वाविकोष्ट्रादिघोषस्थाननिवासिनाम्।
आभीरोक्तिश्शावरी वा द्रामिडी वनचारिषु॥
सुरङ्गा खनकादीनां सन्धिकाराश्वरक्षताम्।
व्यसने नायकानां चाप्यात्मरक्षासु मागधी॥
न बर्बरकिरातान्ध्रद्रमिडाद्यासु जातिपु।
नाट्यप्रयोगे कर्तव्यं काव्यं भाषासमाश्रितम्॥
गङ्गासागरमध्ये तु ये देशाः सम्प्रकीर्तिताः।
एकारबहुलां भाषां तेषु तद्ज्ञः प्रयोजयेत्॥
विन्ध्यसागरमध्ये तु ये देशाः श्रुतिमागताः।
नकारबहुलां तेषु भाषां तद्ज्ञः प्रयोजयेत्॥
सुराष्ट्रावन्तिदेशेषु वेत्रवत्युत्तरेषु च।
ये देशास्तेषु कुर्वीत चकारप्रायसंश्रयाम्॥
हिमवत्सिन्धुसौवीरान् ये जनास्समुपाश्रिताः।
उकारबहुलां तद्ज्ञः तेषु भाषां प्रयोजयेत्॥
चर्मण्वतीनदीतीरे ये चार्बुदसमाश्रयाः।
ओकारबहुलां नित्यं तेषु भाषां प्रयोजयेत्॥

भरतः

देशवालः—रागः (औडुवः)

न्यंशन्यासग्रहो देशवालः सान्दोलषड्जकः।
वीरशृङ्गारयोः सायं टक्कवंश्यो रिपोज्झितः॥

अयमेव देशकारीत्युच्यते। तस्या मूर्तिवर्णने 'सा देशकारी कथिता गुणज्ञैः' इति नारदेन पञ्चमसारसंहितायामुक्तम्। अयमेव केदार उच्यत इति गीतप्रकाशकारः। तथा सत्यस्य मूर्तिर्भिन्ना।

नारायणः

देशवालकेदारः—रागः

स एवान्दोलितः षड्जे देशवालो रिपोज्झितः।

स इति कर्णाटगौडः।

हम्मीरः

देशवालगौडः—रागः ( वंशे वादनक्रमः )

स्थायिनं द्विगुणं षड्जं कृत्वा तुर्यं तृतीयकम्।
स्थायिस्वरं तदर्धं च स्थायिपूर्वस्वरं तदा॥
पुनः स्थायिस्वरार्धं च क्रमादुक्त्वा ग्रहे यदा।
न्यासस्तदा देशवालगौडः स्वस्थानमादिमम्।
तस्यापि वंशविषये द्वितीयो दृश्यते ग्रहः॥

वेमः

—रागः

अनन्तरं देशवालगौडस्तु परिकीर्त्यते।
आन्दोलितस्वरे षड्जे षड्जीभूतांशसंयुतः।
औडुवः पञ्चमेनापि रिषभेण विवर्जितः॥

हरिः

षड्जेनान्दोलितस्सांशः पञ्चमर्षभवर्जितः।
देशवालाख्यगौडोऽयमौडुवः परिकीर्तितः॥

जगदेकः

—उपाङ्गरागः

यत्र ग्रहांशन्यासाः स पञ्चमर्षभवर्जितः।
षड्जेनान्दोलितो गेयो...वीरे रसे शुचौ।
गौडोऽयं देशवालः स्यात्पूर्वगौडोऽप्ययं मतः॥

भट्टमाधवः

—प्रथमरागः

षड्जांशन्याससंयुक्तो देशवालो रिपोज्झितः।
गेयो वीररसे विद्धि षड्जेनान्दोलितस्वरः।
एष प्रसिद्धिमगमत्पूर्वीयो गौड इत्यपि॥

मोक्षदेवः

देशा—रागः

स्यादङ्गं रेवगुप्तस्य गमन्द्रा त्यक्तपञ्चमा।
ग्रहांशन्यासर्षभा च देशा च सनिभूयसी॥

सोमराजः

देशाक्षी—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

( आ ) स रि म प ध नि स.
( अव ) स नि ध प म ग रि स.

मञ्ज

—मेलकर्ता

पजादिकौ समौ यत्र गान्धारस्त्रिश्रुतिर्भवेत्।
विशुद्धा समपानि स्युर्मेले देशाक्षिकोद्भवे॥

पूर्णा देशाक्षिकी ज्ञेया भूषिता गत्रयेण च।
वीरे रसे प्रयोज्या सा प्रातःकाले प्रगीयते॥

श्रीकण्ठः

देशाक्षीरागध्यानम्

जातीमालाबद्धधम्मिल्लां मन्दाराब्जभ्राजद्धस्ताम्।
बालाजालालोलालीलां नीरां ध्याये श्रीदेशाक्षीम्॥

रागसागरः

संपूर्णशीतांशुमनोज्ञवक्त्रा
प्रफुल्लराजीवविलोलनेत्रा।
प्राप्तप्रसन्ना सविलासबाहु-
र्देशाक्षिकेयं गदिता मुनीन्द्रैः॥

श्रीकण्ठः

देशाख्यः—मेलरागः

रितीव्रतरसंयुक्तो गतीव्रेणापि संयुतः।
धगवर्जोऽवरोहे स्याद्गान्धारस्वरमूर्छनः।
तीव्रो यत्र निषादः स्याद्देशाख्यः स विराजते॥

प्रातर्गेयः

अहोबिलः

—रागाङ्गरागः

गान्धारपञ्चमस्याङ्गं गान्धारांशग्रहान्तवान्।
देशाख्यो रिविनिर्मुक्तो गान्धारोल्लासितः शुचौ॥
करुणेऽपि च गातव्यः सर्वेष्वृतुषु सर्वदा।
अयं षड्जविमुक्तश्चेत्कोडाप्युपपदो भवेत्।
अयमेवोच्यते तद्ज्ञैः निरणस्तुल्यपञ्चमः॥

शुचिः। शृङ्गाररसः।

भट्टमाधवः

देशाख्या—रागः

गान्धारपञ्चमाज्जाता रिषभेण विवर्जिता।
ग्रहांशन्याससंबद्धा गान्धारा च समस्वरा॥
निषादमन्द्रगान्धारा स्फुरितेन विराजिता।
षाडवा यदि रागाङ्गमंशे पूर्णे च दृश्यते॥

जगदेक

देशाख्या षाडवा ज्ञेया गत्रयेण विभूषिता।
ऋषभेण वियुक्ता सा शार्ङ्गदेवेन कीर्तिता॥

दामोदरः

देशाख्या रिषभत्यक्ता त्रिगान्धारा च रागजा।

मदः

—प्रथमरागः

गान्धारपञ्चमभवं रिविहीनमङ्गं
गांशग्रहं स्फुरितगं जगदुस्तदन्त्यम्।
देशाख्यया सुविदितं करुणे निमन्द्रं
वंशेषु पूर्णमिदमेव समस्वरं स्यात्॥

मोक्षदेवः

—भाषारागः

देशाख्या देशनामतः।

कुम्भः

## देशाख्यरागध्यानम्

वीरे रसे व्यञ्जितरोमहर्ष-
निरोधसम्बन्धविलासबाहुः।
प्रांशुप्रचण्डाखिलचन्द्ररागा
देशाख्यनाम्नी कथिता मुनीन्द्रैः॥

हिन्दोलभार्या।

दामोदरः

आस्फोटनाविष्कृतरोमहर्षो
नियुद्धसन्नद्धविशालबाहुः।
प्रांशुः प्रचण्डद्युतिहैमगौरो
देशाख्यरागः स हि मल्लराजः॥

संगीतसरणिः

## देशाख्या—रागः (वंशे वादनक्रमः)

गान्धारे स्थायिनि प्रोच्य द्वितीयं च तृतीयकम्।
तुर्यं विलम्ब्य तत्प्रान्त्वं कृत्वा स्पृष्ट्वा द्वितीयकम्॥
दीर्घीकृत्य तृतीयं चोक्त्वा द्वितीयं ग्रहस्वरे।
न्यासो यदा स्यात्स्वस्थानं देशाख्यायास्तदादिमम्।
मुद्रितोऽस्या ग्रहे वंशे लक्ष्यते लक्ष्यवेदिभिः॥

शार्ङ्गदेवः

—रागाङ्गरागः (वीणायां वादनक्रमः)

मध्यगान्धारमास्थाय स्थायिनं तु ततः परम्।
तस्मात्तुरीयमासाद्य तस्मात् षष्ठस्वरावधि॥
आरुह्य चावरोहेच्च स्वरानेतान् यथाक्रमम्।
सम्प्राप्य स्थायिनोऽधस्त्यं तृतीयं च ग्रहे यदा॥
न्यासाद्विधीयते रागो देशाख्या नाम जायते।
देशाख्याया ग्रहो लक्ष्ये मध्यमोऽपि कचिद्भवेत्॥

वेमः

—रागः

न्यासांशग्रहसङ्गतगान्धारस्समरवेण युक्तश्च।
सप्तमकतारमन्द्रा गान्धारीयस्तु देशाख्यः॥

नान्यः

ग्रहांशन्यासगान्धारो रिहीनश्च समस्वरः।
नितारमन्द्रो देशाख्यो गान्धारीजातिसंभवः॥

मतङ्गः

ग्रहांशन्यासगान्धारा ग्रहस्थाने सकम्पना।
रिषभाढ्या नितारा च देशाख्या रागनामतः॥

सोमेश्वरः

अनन्तरं तु देशाख्या जाता गान्धारपञ्चमात्।
ऋषभेण परित्यक्ता समस्वरविभूषिता॥
ग्रहांशन्यासगान्धारा संपूर्णा वंशवादने।
निषादमन्द्रगान्धारा स्फुरिता षाडवा पुनः॥

हरिः

## देशानुरूपा—पुष्करवाद्ये जातिः

विगतक्रमाशब्दं पश्यत।

## देशाभीरी—रागः

आभीरी निरिधैर्दशांग्रा पतारा षड्जमध्यमा।
ककुभाच्च समुत्पन्ना विज्ञेया तारधैवता॥

मोक्षः

## देशावली—मेलरागः (श्यामलाङ्गीमेलजन्यः)

(आ) स रि ग म ध नि ध स.
(अव) स नि ध म ग रि स.

मल्लः

## देशिकापी—मेलरागः

(आ) स ० रि ग ० म ० प ० ध नि ० स.
(अव) स ० नि ० ० प ० म ० ग रि ० स.

मेललक्षणम्

## देशी

तदेव रुचिवैचित्र्याच्चित्तरञ्जनकृज्जनैः।
प्रयुक्तं स्वस्वदेशे यत्ततो देशीति कीर्तितम्॥

कुम्भः

—रागाङ्गरागः (वीणायां वादनक्रमः)

स्थायिनो ऋषभात्स्पृष्ट्वा परं तस्माद्विलम्ब्य च।
आन्दोल्य तुर्यं स्पृष्ट्वाथो स्वरौ तुर्यावधस्तनौ॥
ग्रहं ततः परौ तस्माद् द्वितीयं प्रोच्य चेद्ग्रहे।
न्यस्यते जायते देशी गग्रहापीयमीरिता॥

कुम्भः

—मेलरागः

(आ) स ० रि ० ० म ० ० ० ० नि स.
(अव) स ० नि ० ध प ० म ग ० रि ० स.

मेललक्षणम्

गनी त्याज्यावथारोहे रिधौ यत्र च कोमलौ ।
षड्जादिस्वरसंभूतिः देश्यामंशस्तु रिः स्मृतः ॥

सर्वदा गेया ।

अहोविलः

—राग:

ग्रहांशकन्यासधृतैकधैवतां...पञ्चमाल्पर्षभनादसुन्दराम् ।
गनादपर्यन्तगतारमन्द्रां दिशन्ति देशीमिह धैवतांशाम् ॥

नान्यः

देश्यामंशे ग्रहे न्यासे धैवतो नास्ति पञ्चमः ।
रिषभोऽल्पस्तारमन्द्रो आगान्धारमुदाहृतम् ॥

मतङ्गः

धैवतांशग्रहन्यासा पञ्चमेन तु वर्जिता ।
षड्जादिका भवेद्देशी षाडवा गीयते बुधैः ॥

सोमेश्वरः

रेवगुप्तसमुद्भूतो देशीरागोऽथ कीर्त्यते ।
गान्धारे मन्द्रतां यातः पञ्चमेन विवर्जितः ॥
षड्जमध्यनिषादेषु बहुत्वं समुपागता ।
ऋषभांशग्रहन्यासो देशीरागस्समीरितः ॥

हरिपालः

स्यादङ्गं रेवगुप्तस्य गमन्द्रा पञ्चमोज्झिता ।
ऋषभांशग्रहन्यासा तथा समनिभूयसी ।
देशीनामप्रयोक्तव्या रागोऽयं करुणे रसे ॥

जगदेकः

देशी पञ्चमहीना स्यादृषभत्रयसम्मता ।
कलोपनतिका ज्ञेया मूर्छना विकृतर्षभा ॥

दामोदरः

स्यादङ्गं रेवगुप्तस्य गमन्द्रा पञ्चमोज्झिता ।
ऋषभांशग्रहन्यासा देशी समनिभूयसी ॥

हम्मीरः

—प्राकृतादिभाषासु शब्दवर्गः

महाराष्ट्रादिदेशानां भाषामाश्रित्य वर्तते ।
यत्तद्देशीति विज्ञेयं सुज्ञेयमिह तद्विदाम् ॥

अन्यंत्र —

तदेव रुचिवैचित्र्याच्चित्तरञ्जनकृज्जनैः ।
प्रयुक्तं स्वस्वदेशे यत्ततो देशीति कीर्तितम् ॥

कुम्भः

अत्र देशीशब्देन सङ्गीतभेद उच्यते । तच्छब्दः मार्ग-परामर्शकः ।

अबलाबालगोपालैः क्षितिपालैर्निजेच्छया ।
गीयते सानुरागेण स्वदेशे देशिरुच्यते ॥

मतङ्गः

देशेषु देशेषु नरेश्वराणां
रुच्या जनानामपि वर्तते या ।
गीतं च वाद्यं च तथा च नृत्तं
देशीति नाम्ना परिकीर्तिता सा ॥

जग

—वंशे वादनक्रमः

स्थायिनं द्विगुणं षड्जं विधायाथ द्वितीयकम् ।
स्वरं द्रुतं वादयित्वा ततः स्थायिद्वितीयकौ ॥
स्वरावुभौ लघूकृत्य तत्पदं तु विलम्बयेत् ।
वादयित्वा द्विवारं च पञ्चमस्फुरितं ततः ॥
त्रीनधस्थान् स्वरान् प्रोच्य स्थायिन्यासो यथा भवेत् ।
तदा स्वस्थानमाद्यं तु देश्यां देशीविदो विदुः ॥

वेमः

## देशीकारम्—देशीलास्याङ्गम्

मनोहरं यदग्राम्यं तत्तद्देशानुसारतः ।
नानारीत्यन्वितं नृत्तं देशीकारमिदं जगुः ॥

अशोकः

## देशीतालः

लघ्वादिभिर्मितया क्रियाया यो विमीतये ।
कांस्यतालास्फालनजध्वनिनाऽऽविष्कृताकृतिः ।
सकालः कथ्यते देशीतालशब्देन देशिकैः ॥

गोपतिप्पः

## देशीतोडी—मेलरागः ( हनुमत्तोडीमेलजन्यः )

( आ ) स रि ग म प ध नि स.
(अव) स नि ध नि ध प म ग रि स.

मञ्ज

## देशीनृत्तानि

ब्रूमोऽधुना सम्प्रदायशास्त्रमेलनमुच्यते ।
अङ्गप्रत्यङ्गदृष्ट्यादिस्थानचारी प्रचारतः ॥
यान्युक्तानि पुरा तेषां करणानां क्वचित्क्वचित् ।
मेलने देशरीत्या च नानानृत्तव्यवस्थया ॥
विद्वत्कविकलानाथः तौर्यत्रितयतत्त्ववधीः ।
वक्ति व्यक्तं हि देवेन्द्रः सम्प्रदायं मनोरमम् ॥
तत्र पुष्पाञ्जलिः पूर्वं सुखचाली ततः परम् ।
रागवाक्यानुगं शब्दनृत्तं शुद्धगतिस्तथा ॥
रूपनृत्तं तदा ध्वाढः शब्दचालिरतः परम् ।
सूडादिशब्दनृत्तं च शब्दव्याजोपनर्तनम् ॥

ततः सूडादिगीतानां तदर्थाभिनयोचितम् ।
नृत्तं नानाविधं गीतप्रबन्धानां च नर्तनम् ॥
चिन्दुनृत्तं दरूनृत्तं कन्दराख्यमतः परम् ।
ततो ध्रुपदसंज्ञं च नृत्तमेषक्रमोऽत्र हि ॥

देवेन्द्रः

## देशीमालवा—रागः

पञ्चमसैन्धवमिश्रा षड्जस्वरजनितऋषभरवहीना ।
तारगमैस्संयुक्ता द्वादशधा भवति मालवा ललितैः ॥

कश्यपः

## देशीयगूर्जरी—रागः

देशाख्या गूर्जरी ख्याता शुद्धपञ्चमसंभवा ।
गापन्यासा च संपूर्णा प्राज्यमध्यमधैवता ॥

मोक्षः

## देशीयसौराष्ट्री—रागः

षड्जधैवतगान्धारतारा मध्यमपेशला ।
सपप्राज्या च सौराष्ट्री रिषभेण विवर्जिता ॥

मोक्षः

## देशीरागः

रागाङ्गाद्यास्तु चत्वारः प्रसिद्धा देशिसंज्ञकाः ।
रागाङ्गादिनिरुक्तिश्च मतङ्गेनैव दर्शिता ॥

तुलजः

देशी पञ्चमहीना च रागाङ्गा रिषभलया ।

मदः

## देशीरागाः

येषां श्रुतिस्वरग्रामजात्यादिनियमो न हि ।
नानादेशगतिच्छाया देशीरागास्तु ते स्मृताः ॥

आञ्जनेयः

येषां श्रुतीनां नियमः स्वराणां
न ग्रामजातिप्रमुखस्य चास्ति ।
भजन्ति नानाविधदेशजाताः
छायांश्च ये ते किल देशरागाः ॥

रघुनाथः

## देशीरागध्यानम्

गजपतिगतिरेणीलोचनेन्दीवराङ्गा
पृथुलतरनितम्बा लम्बवेणीभुजङ्गा ।
तनुतरतनुवल्ली पीतकौसुम्भवासा
इयमुदयंति देशीवाणिनी चारुहासा ॥

संगीतसरणिः

रुचिरागारनिवासां सुममालाञ्चत्करां सुगौराङ्गीम् ।
रुचिराम्बरावृतां तां देशीं ध्यायामि युवतिकरसङ्गीम् ॥

रागसागरः

निद्रालसं सा कपटेन कान्तं
विबोधयन्ती सुरतोत्सुकेव ।
गौरी मनोज्ञा शुकपुच्छवस्त्रा
ख्याता च देशीरसपूर्णचित्ता ॥
दीपकरागिणीयम् ।

दामोदरः

## देशीवंशवादनम्

मुद्रितात्पूर्वपूर्वस्माद्वंशात्स्यादुत्तरोत्तरः ।
स्वरार्धेनाधिको वंशो मुद्रितश्चेति तत्र च ॥
अल्पमानाश्च ये वंशाः तेषामुत्तरता सदा ।
उद्घृतायां कनीयस्यां दक्षहस्तस्य जायते ॥
स्वरार्धं च ततस्तस्यामुद्घृतायां भवेदिह ।
पूर्वस्यैव तु वंशस्य मुद्रितो वंश उत्तरः ॥
स्वरोदये पूर्वतुल्य इति वंशविदो विदुः ।
उद्घृताङ्गुलिवृद्धौ तु तस्मादप्युत्तरोत्तरे ॥
पुरातनैर्यथासङ्ख्यं मिलन्त्यत्र तु मुद्रिताः ।
सन्निधाने तथाचैव व्यवधानेऽपि सर्वशः ॥
एकस्वराणि रन्ध्राणि सकलानां मिलन्ति च ।
खानिर्वा स्वररन्ध्रं वा मानहीनं तु यद्भवेत् ॥
सजातीयेन रन्ध्रेण न तन्मिलति कर्हिचित् ।
केषाञ्चन मते तावदावंशादेकवीरतः ॥
चतुर्दशादिवंशानां यथैकैकस्वरोऽधिकः ।
उत्तरे चोत्तरे वंशे मुद्रिते पूर्वपूर्वतः ॥
वंशान्मुद्रितरन्ध्रांस्तु वाचोयुक्तिस्तथास्तु मा ।
धातवो वृत्तयश्चैव तत्वौघानुगतानि च ॥
आश्रावणादिनाद्यानि श्रुतयश्च स्वरास्तथा ।
ग्रामौ च मूर्छनाश्चैवेत्यादिकं यन्मयोदितम् ।
वीणाधिकरणे सर्वं तद्वंशेऽपि प्रतिष्ठितम् ॥

कुम्भः

## देशीशृङ्खला

चिन्दं दरू ध्रुवपदमित्यादिक्रमतः कृतम् ।
प्रोक्तं पिल्लमूरूमानकैमुरू च कलासकाः ॥
वैपोताख्यं बन्धनृत्यं कल्पनृत्यं च जक्किणी ।
द्रुपदं खण्डमानेन विविधं बहुरूपकम् ॥

साङ्गोपाङ्गं रसानां च निरूपणमिति क्रमात् ।
पेरणीपद्धतिस्तस्याश्चर्चरीरवभेदकम् ॥
लास्याङ्गानि त्रिधा चिन्दं दरू कट्टवसंज्ञकम् ।
एवं निगदिता तद्ज्ञैः देशिमार्गस्य शृङ्खला ॥

वेदः

## देशीस्थानानि

वक्ष्यामि देशीस्थानानां त्रयोविंशतिमप्यथं ।
समपादं संहताख्यं स्वस्तिकं वर्धमानकम् ॥
नन्द्यावर्तामिधं चैव चतुरस्रामिधं तथा ।
एकपादं पार्ष्णिविद्धं पृष्ठोत्तानतलं तदा ॥
एकजानुनतं स्थानं पार्ष्णिपार्श्वगतं ततः ।
एकपार्श्वगतं तद्वत् समसूच्यमिधं तथा ॥
ततो विषमसूचि स्यात्खण्डसूचि ततः परम् ।
परावृत्तमथ ब्राह्मं वैष्णवं शैवगारुडे ।
कूर्मासनं नागवन्धं वृषभासनमित्यपि ॥

विप्रदासः

कूर्मासननागवन्धे वर्जयित्वा एकविंशतिमाह सोमेश्वरः ।

## देशीहिन्दोलकः—रागः

षड्जांशस्ताडितः स्थाने नित्यं रिषभवर्जितः ।
गान्धारो लङ्घितोन्वेति मन्द्रधैवतकम्पितः ॥
आरोहक्रमयोगेन क्वचित् स्पृशति पञ्चमम् ।
देशीहिन्दोलको ह्येष पाडवः परिकीर्तितः ॥

सोमेश्वरः

## देशीहिन्दोलः—रागः

अयमेव वसन्ताख्यः संपूर्णो धमसंज्ञिकः (?) ।
देशीहिन्दोलनामोक्तः प्रतापपृथिवीभुजा ॥

जगदेकः

## देशीहिन्दोलः अथवा वसन्तः—प्रथमरागः

यन्मार्गहिन्दोलभवश्च वेदी-
हिन्दोलसंज्ञं परिपूर्णमङ्गम् ।
सांशं निमन्द्रं निरिसैस्सुशोभि
प्रकम्पितं पञ्चममध्यमाभ्याम् ॥

विलम्बितं मध्यमतो घनस्तमान्दोलयेन्मुख्यरसेऽथ वीरे ।
गेयं वसन्ते त्विदमेव देशीहिन्दोलसंज्ञं प्रवदन्ति तद्ज्ञाः॥

शृङ्गारे मुख्यवृत्तित्वाद्वसन्ते गीयते ततः ।
अयमेव वसन्ताख्यस्तेन सर्वत्र पप्रथे ॥

## देश्यम्—रूपकम्

केचिद्देश्यं प्रशंसन्ति देशभाषारुचित्वतः ।
मुखगर्भोपसंहारैरन्वितं सन्धिभिस्त्रिभिः ॥
मुखं तु नाटकस्येव कृता तस्य कृती कविः ।
सूत्रधारे गते पश्चाद्दिव्येन मिथुनात्मना ॥
वसन्ताद्युत्सवव्याजान्मलयाद्यथोमगामिना ।
पात्रेण वर्णनीया स्यात्प्रसङ्गात्समरादिकम् ॥
चरितं वर्तमानं वा धूर्तं वा विविधं महत् ।
वीरशृङ्गारयोरेकं तौ वा भावे निवेश्य च ॥
अपेक्षातोऽथवा पात्राण्यन्यान्यन्तः प्रवेशयेत् ।
पूरयेद्रूपकं देश्यं वाक्येन भरतस्य च ॥

कविकामधेनुः

## देश्यकल्याणी—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि ग म प ध प नि स.
(अव) स ध प म म रि स.

मञ्ज

## देश्यमुखारी—मेलरागः (माररञ्जनीमेलजन्यः)

(आ) स रि ग रि ग म नि ध नि स.
(अव) स नि ध म प ग रि स.

मञ्ज

## देश्यवनद्धानां मानम्

त्रिकुल्या चैव डमरुः (करटा) च समाकृतिः ।
ज्ञेया पिपीलिकाकारा देशीवाद्यसमाश्रयाः ॥
विज्ञेया दण्डमन्तश्च षोडशाङ्गुलमायतौ ।
वितस्तिपरिमाणे च मुखे द्वे अपि कीर्तिते ॥
दैर्घ्याद्वितालां विज्ञेया त्रिकुल्या वाद्यवेदिभिः ।
अङ्गुष्ठाङ्गुल..........द्वितालपरिमण्डले ॥
हुडुक्कः पटहो ढक्का भेरी दुन्दुभिरेव च ।
समाकारा अमी प्रायः पुष्करे परिकीर्तिताः ॥
हुडुक्कः स्याद्वितालस्तु मुखे च द्वादशाङ्गुलः ।
सार्धद्वितालदीर्घा च ढक्का ज्ञेया मनीषिभिः ॥
द्वितालवक्त्रौ च स्यातां तथा पटहदुन्दुभी ।
सार्धतालत्रया दीर्घैः मुखे चापि दशाङ्गुलैः ॥
चतुस्ताला भवेद्भेरी द्वितालां वदने तथा ।
ह्रासवृद्धी मानमात्रे कार्ये कार्यानुरोधतः ॥
हुडुक्केन समा ज्ञेया रुञ्जा चैकपुटा बुधैः ।
रुञ्जाकृतिर्भवेच्चैव झल्लरी तालमात्रिका ॥

देश्यां पणव एवायं ढक्केति परिकीर्त्यते ।
तल्लक्षणेन विज्ञेयं तस्य मानं मनीषिभिः ॥
बम्बरो डिण्डिमश्चैव स्यातामेतौ समाकृती ।
सार्धतालमितौ दीर्घौ तालमात्रमुखौ तथा ॥
उड्ली च तदा चान्या उड्लीपटहाभिधः ।
हरीतक्याकृती चैतौ त्रितालायामयोगिनौ ॥
सार्धाङ्गुलौ च तथा उड्ल्यौ षोडशाङ्गुलौ ।
सप्ताङ्गुलौ च वदने ज्ञेयौ च चतुरङ्गुली ॥
करटा जर्जरश्चैव ज्ञेयावेतौ समाकृती ।
द्वितालदीर्घौ वक्त्रे च सार्धतालमितौ च तौ ॥
निस्वानस्ताम्रकं चार्धहरीतक्याकृती त्विमौ ।
ध्वनिश्चैवाल्पगाम्भीर्यानुरोधात्चतुयोगिनौ ॥
यानि चान्यानि तद्विधैर्वाद्यभाण्डानि मानवैः ।
कृतानि तानि जानीयादेवंप्रायैस्तु लक्षणैः ॥

नान्यः

## दैन्यम्

दैन्यं नाम दौर्गत्यमनस्तापादिभिर्विभावैः समुत्पद्यते । तद्वा-वृत्तिशिरोगात्रगौरवमृजापरिवर्जनादिभिरनुभावैरभिनेतव्यम् ।

अत्रार्या —

वित्तौत्सुक्यसमुत्था दुःखाद्या भवति दीनता पुंसाम् ।
सर्वमृजानां परिमार्जनैश्च विविधैरभिनयोऽस्याः ॥

भरतः

आपदः स्वान्तनीचत्वं दैन्यं कार्ष्ण्यावकुण्ठनैः ।

आपदो दौर्गत्यन्यक्कारादेः मनःक्लैब्यं, वदनश्यामता, गात्रवरणं अनुभावाः ।

रामचन्द्रः

दैन्यं विरहदौर्गत्यमनस्तापपराभवैः ।

तमचेष्टागात्रसंस्कारवर्जनैरभिनयेत् ।

सागरः

—चित्राभिनयः

पुरोभागे पुष्पपुटः बद्धस्स्याद्दैन्यभावने ।

विनायकः

## दैशिकी—देशीलास्याङ्गम्

अस्या गतेस्समाप्तिश्च दैशिकी परिकीर्तिता ।

देवणः

अस्या इति ओयारदेशीलास्याङ्गपरामर्शः ।

## दोधकम्—एकादशाक्षरछन्दः

आद्यं चतुर्थमन्त्यं च सप्तमं दशमं तथा ।
गुरूणि त्रैष्टुभे पादे यत्र स्युर्दोधकं तु तत् ॥
भ भ भ ग ग .

उदा – मत्तविघूर्णितगात्रविलासम् ।

भरतः

## दोधकः—ध्रुवावृत्तम् ( दशाक्षरम् )

सममाद्यचतुर्थयुतं यत्र हि नैधनमेव गुरु ।
पादविधौ यदि पङ्क्तिकृतं तत्खलु दोधकवृत्तमिदम् ॥
लघुरेको द्रुतौ द्वौ तु त्रिगुणं तु निवेशयेत् ।
दोधको गुरुरन्ते स्याच्चच्चत्पुटसमाश्रितः ॥
उत्तमाधमपात्राणां युद्धे योगपरिक्रमे ।
टक्करागेण गातव्यो दोधको लयकोविदैः ॥

नान्यः

मेहरवं सुणिऊण गयो । ( मेघरवं श्रुत्वा गतः । )

त्रिगुणमिति–लघु च द्रुतौ च त्रिगुणम् , अन्ते गुरुः, इत्यत्र तालः ।

## दोलः—हस्तः

लम्बमानौ पताकौ तु श्लथांसौ शिथिलाङ्गुली ।
दोलो भवेदसौ व्याधौ विषादे मदमूर्छयोः ।
संभ्रमादौ यथायोगं स्तब्धो वा पार्श्वदोलितः ॥

शार्ङ्गः

## दोलिकः—वीणावादने दोषः

तद्दोलिकामिधं यत्र प्रचारः स्यात्स्वराधिकः ।

कुम्भः

## दोषहानम्—भक्तिः

निर्गुणत्वं सदोषत्वं रसालङ्कारशून्यता ।
एता निघ्नन्ति वाक्यस्य सुप्रयोगार्हतां ध्रुवम् ॥
दोषास्त्रिधा पदे वाक्ये वाक्यार्थे च यथाक्रमम् ।
तत्र तत्रैव भिन्नाः स्युस्तेऽपि षोडशधा पुनः ॥
भोजादिभिरलंकारा गुणा दोषाश्च दर्शिताः ।
अतो विरम्यते तेषां रूपं कथयितुं मया ॥

शारदातनयः

दोषगुणस्वरूपं शृङ्गारप्रकाशे नवमदशमयोरुक्तम् ।

## दोहकनृत्तम्—देशीनृत्तम्

यत्र सौराष्ट्रदेशीया नार्यो नृत्यन्ति सुन्दरम् ।
तत्तद्देशीयभूषाढ्या सिचयान्तावकुण्ठिताः ॥

मृद्वङ्गहारसुभगान् देशकाकुभिरञ्चितान् ।
रागेणेष्टेन गायन्त्यो दोहकान् रसनिर्भरान् ॥

चारीभिर्भ्रमरीभिश्च चरणैरुद्धतक्रियैः ।
ललितैः पदविन्यासैर्हस्तकैर्बहुभङ्गिभिः ।
यत्र तद्दोहकाख्यं स्यान्नर्तनं नर्तकप्रियम् ॥

कुम्भः

द्युतिः—अवमर्शसन्ध्यङ्गम्

वाक्यमाधर्षसंयुक्तं द्युतिस्तद्ज्ञैरुदाहृता ।

भरतः

आधर्षो न्यक्कारः । तेन संयुक्तम् । यथा – रत्नावल्यां आः दास्याः पुत्र इन्द्रजालिक इति विदूषकवाक्यम् ।

अभिनवः

तर्जनाधर्षणाधिक्षेपकृतं वाक्यं द्युतिः । दुरुक्तिपरिणामा आहूतिरत्राभिमता । यथा – वेण्यां जन्मेन्दोरित्यादिवाक्यम् ।

सागरनन्दी

तिरस्कारो द्युतिः ।

यथा – कृत्यारावणे मण्डोदरीं प्रति मा गास्तिष्ठेत्यङ्गदवाक्यम् । तर्जनोद्वेजने द्युतिं केचिदिच्छन्ति । अपरे तु तर्जनाधर्षणे द्युतिं मन्यन्ते । एवमन्यदपि साक्षात्पारम्पर्येण वा न्यक्कारपरं वाक्यं द्युतिरेव ।

रामचन्द्रः

शत्रुभिः क्रियमाणे द्वे तर्जनोद्वेजने द्युतिः ।

सर्वेश्वरः

—निर्वहणसन्ध्यङ्गम्

लब्धस्यार्थस्य शमनं द्युतिमाचक्षते पुनः ।

भरतः

ईर्ष्याक्लेशोपशमनं कृतिरित्यभिधीयते इति भरतपाठान्तरम् ।

सामर्थ्यात्प्रशमनीयस्य क्रोधादेरर्थस्य प्राप्तस्यापि यत्प्रशमनं सा द्युतिः । यथा – आर्य अमात्येत्यादिवासवदत्तावचनम् ।

अभिनवः

ईर्ष्याक्लेशोपशमनं द्युतिः । सागरः

—मेलरागः ( मेचकल्याणीमेलजन्यः )

( आ ) स रि ग प म ध नि प ध प स .
( अव ) स नि ध प म रि ग म ग स .

मज

द्युतिमाला—मेलरागः ( नटभैरवीमेलजन्यः )

( आ ) स रि म प नि ध स .
( अव ) स ध नि प म ग रि स .

मज

द्रवः—अवमर्शसन्ध्यङ्गम्

गुरुव्यतिक्रमो यस्तु सद्रवः ।

भरतः

द्रवणं चलनं मार्गादिति द्रवः । यथा – तापसवत्सराजे षष्ठेऽङ्के यौगन्धरायणवचनमतिक्रम्य वासवदत्तया मरणाध्यवसायः कृतः ।

अभिनवः

शङ्कादिभिः मनसः क्षोभो विद्रवः । स एव परिभवकृतो द्रवः । यथा – वेण्यां गुरूणामित्यादियुधिष्ठिरवाक्यम् ।

सागरः

पूज्यव्यतिक्रमो द्रवः । यथा – रत्नावल्यां भर्तारमविगणय्य सागरिकाविदूषकयोः वासवदत्तया बन्धनम् ।

रामचन्द्रः

द्राक्षापाकः

द्राक्षापाकस्स कथितः बहिरन्तस्फुरद्रसः ।

रसिकरसायनम्

द्राविडगुर्जरी—रागः

ततो द्राविडपूर्वेयं गुर्जरीमध्यकम्पिता ।
पूर्णस्वरा भवेदेषा मन्द्रतारा......र्षभे ॥

हरिः

द्राविडगूर्जरी—उपाङ्गरागः

तारमन्द्रर्षभा हर्षे पूर्णा द्राविडगूर्जरी ।
निषादस्तारमन्द्राभ्यां स्फुरतीत्यपरे जगुः ।
सामगे च समं गानादियं स्यात्सामगूर्जरी ॥

भट्टमाधवः

—रागः

ऋषभे मन्द्रताराभ्यां स्फुरिता द्राविडी भवेत् ।
गूर्जरी परिपूर्णेयं प्रहर्षे विनियुज्यते ॥

जगदेकः

**द्राविडीगूर्जरी**—प्रथमरागः

संपूर्णा द्राविडी ज्ञेया गूर्जरी हर्षदायिनी ।
एतस्यां तारमन्द्राभ्यां रिषभस्फुरणं भवेत् ॥

मोक्षः

—रागः

द्राविडीगूर्जरी चैव रिषभैरेव भूषिता ।

मदः

बहुवचनेन रिषभ एव अंशादिष्टमिति भाव्यम् ।

—गूर्जरी रागः

रिमन्द्रा धस्फुरिता......हर्षे द्राविडगूर्जरी ।

हम्मीरः

**द्राविडगौडः**—रागः

अथ द्राविडगौडस्तु षड्जगान्धारपञ्चमे ।
स्फुरितस्तु निषादेन न्यासांशसहितस्ततः ॥

हरिः

—उपाङ्गरागः ( वीणायां वादनक्रमः )

ग्रहं मन्द्रनिषादं तु कृत्वा प्रोच्यं द्वितीयकम् ।
तत्परं लङ्घयेत्तस्मात्त्रीनारुह्यावरुह्य च ॥

लङ्घितं तु प्रकम्प्याथ स्वरं तत्पूर्वमेत्य च ।
ग्रहे चेन्न्यस्यते रागो भवेद्द्राविडगौडकः ।
स एव सालगं प्रोक्तः स्थायी लक्ष्येऽस्य पञ्चमः ॥

वेमः

—रागः ( वंशे वादनक्रमः )

निषादं स्थायिनं कृत्वाऽऽरोहेण प्राप्य तुर्यकम् ।
एनं विलम्बितं कृत्वा चावरोहक्रमात्ततः ॥

स्थायिस्वरं यदा गच्छेत् तदा स्वस्थानमादिमम् ।
प्रोक्तं द्राविडगौडस्य वंशे स्थायी द्वितीयकः ॥

वेमः

अस्य रागस्य सालगगौड इति नामान्तरम् ।

—रागः

स्फुरितः पञ्चमे षड्जे गान्धारे तिरिपस्तथा ।
निन्यासांशसमायुक्तो द्राविडो गौड उच्यते ॥

जगदेकः

गान्धारतिरिपोपेतः प्रस्फुरत्षड्जपञ्चमः ।
ज्ञेयो द्राविडगौडोऽयं ग्रहांशन्याससप्तमः ॥

हम्मीरः

—प्रथमरागः

द्राविडो निग्रहांशस्तु स्फुरितौ षड्जपञ्चमौ ।
गान्धारतिर...........स्तोकेऽसौ मालिगो मतः ॥

मोक्षः

**द्राविडगौलः**—रागः

निषादांशग्रहन्यासः षड्जसङ्कुलपञ्चमः ।
गेयो द्राविडगौलोऽयं वीरश्रृङ्गारयोर्निशि ॥

गौडस्य द्वैविध्यं कोहलीये, तुरुष्कगौडो, द्राविडगौड इति । तुरुष्कगौडस्त्वौडवे वक्ष्यते ।

नारायणः

—उपाङ्गरागः

निषादांशग्रहन्यासः षड्जकम्पितपञ्चमः ।
तथा गान्धारतिरिपः प्रोक्तो द्राविडगौलकः ॥

भट्टमाधवः

तिरिपो गमकविशेषः ।

**द्राविडवराटिका**—रागः

ऋषभे स्फुरिता पूर्णा निमन्द्रेण विराजिता ।
षड्जांशन्याससंयुक्ता द्राविडीयं वराटिका ॥

जगदेकः

**द्राविडवराटी**—रागः

अथ द्राविडवराटीसंज्ञाया स्फुरितर्षभा ।
निषादमन्द्रा षड्जांशन्यासाऽसौ समुदाहृता ॥

हरिः

षड्जांशा षड्जतारा च षड्जन्यासविराजिता ।
स्वल्पपञ्चमसंयुक्ता निषादबहुला वरा ॥
रिषभेण च भूयिष्ठा मध्यगान्धारताडिता ।
एतल्लक्षणसंयुक्ता वराटी द्राविडी मता ॥

सोमेश्वरः

—उपाङ्गरागः

ऋषभज्ञातगमका भूरिमन्द्रनिषादिनी ।
वराटद्राविडी सद्भिः श्रृङ्गारादौ प्रगीयते ॥

भट्टमाधवः

**द्राविडी**—रागः

पांशा न्यासग्रहणा मान्तापन्यासतारगान्धारा ।
सरिहीना या द्राविडिका मन्द्रसनिधा च ॥

नान्यः

पञ्चमांशग्रहन्यासा गतारा सरिवर्जिता ।
सारापन्यासगान्धारा मन्द्रमा द्राविडी मता ॥

वृद्धशातातपः

—भाषाराग:

पञ्चमांशग्रहा धान्ता पूर्णा मध्यमभूयसी ।
मध्यमग्रामगा भाषा धनिसंगतिराजिता ॥
द्राविडी देशनाम्नेयं विख्याता याष्टिकोदिता ।
इमां विभाषामाचष्ट स्पष्टं कश्चिन्न तद्वरम् ॥

कुम्भः

—राग:

अङ्गं तु षड्जग्रामस्य सांशन्यासग्रहान्विता ।
धतारा मन्द्रपूर्णा च द्राविडी कथ्यते बुधैः ॥

सोमराजः

—राग:

उपाङ्गाद् द्राविडी केचित् त्रिधा षड्जेन भूषिता ।

मदः

द्राविडीवराटी—प्रथमराग:

षड्जांशन्याससंयुक्ता वराटी द्राविडी भवेत् ।
रिषभस्फुरणेनेयं राजते मन्द्रसप्तमा ॥

मोक्षः

—राग:

वराटी द्राविडी भूरिनिमन्द्रा स्फुरितर्षभा ।

हम्मीरः

द्रुतम्—वाद्यम्

कर्तरी खसितौ यत्र क्रमेण कुहरः करः ।
रेफभ्रमरघोषाश्च तद्द्रुतं ब्रुवते बुधाः ।

शार्ङ्गः

द्रुतकङ्कालः—देशीतालः

द्रौगौ स्याद् द्रुतकङ्काले । ० ० ऽ ऽ

मदनः

द्रुतगतिः—ध्रुवावृत्तम् ( सप्ताक्षरम् )

गुरुनिधनगतं
यदि भवति सदा ।
भवति हि चपला
द्रुतगतिरपि सा ॥

( उदा ) सुरुचिरणयणम् ।

भरतः

द्रुतचम्पा—देशीतालः

षड्द्रुता गः षड्द्रुता गो द्रुतचम्पेति कथ्यते ।
१० मात्राः ।

तालप्रस्तारः

द्रुतपदगतिः—ध्रुवावृत्तम्

यदि खलु समेषु भवति जगणोऽथ गुरुनिधनजम् । तदनु चरणे लघुर्भवति शेषमथ सततमुक्तिविहितपदे द्रुतपदगतिः ॥

पञ्चद्रुता लघुश्चैकः षड्भ्योऽपि यतिमान्लघुः ।
पुनरप्येवमेव स्याद्भेदश्चचत्पुटद्वयात् ॥
प्रियापरिवृतस्यैषा नायकस्य प्रवेशने ।
द्रुतपदा तु कर्तव्या रागे मालवकैशिके ॥

मधुकररुतेहि पकथित इवासु विकसितसुयंथमुहकमला ।

(मधुकररुतैः प्रकथित इवाशु विकसितसुगन्धमुखकमला) ।

नान्यः

द्रुतपर्यायाः

तत्र द्रुतस्य पर्याया गगनं व्यञ्जनं तथा ।
अर्धमात्रं विन्दुकं चेत्येते तज्ज्ञैरुदाहृताः ॥

वेमः

विन्दुकं व्यञ्जनं शून्यं द्रुतं खं चार्धमात्रकम् ।
सुवृत्तं वलयं व्योम द्रुते नामानि तु क्रमात् ॥

श्रीकण्ठः

द्रुतपादगतिः—ध्रुवावृत्तम् (एकादशाक्षरम्)

यदि खलु पञ्चमकाष्टमके पुनरपि चान्त्यमकं तु गुरु ।
चरणविधाविह वृत्तविधौ भवति हि सा द्रुतपादगतिः ॥

किरणसहस्सविहूसिदओ ।

किरणसहस्रविभूषितकः ।

भरतः

अष्टौ द्रुता गुरुश्चान्ते पञ्चमाष्टमकौ लघू ।
द्रुतपादगतिः प्रोक्ता भङ्गश्चचत्पुटस्य तु ॥
अनुद्धतेषु वीरेषु द्रुतपादगतिर्भवेत् ।
टक्करागेण गातव्या नृपतीनां प्रवेशने ॥

नान्यः

द्रुतशेखरः—देशीतालः

एकेन सविरामेण द्रुतेन द्रुतशेखरः ।

नन्दी

द्रुता—प्राकृते मालावृत्तम्

द्वौ चतुर्मात्रगणौ जः एकश्चतुर्मात्रगणः ।
जः एकश्चतुर्मात्रगणः ॥

विरहाङ्कः

द्रुतादेर्देवताः

द्रुते स्याद्देवता शिवः ।

लघौ तु देवता गौरी गुरौ गौरीशिवौ स्मृतौ ।
प्लुते तु देवता ज्ञेया ब्रह्मविष्णुमहेश्वराः ॥

वेमः

द्रुतादेर्लिपिः

लिपौ द्रुतो बिन्दुरूपः सरेखो मस्तके यदि ।
विसमान्तो लघुस्तत्र ऋजुरेखाकृतिर्मता ॥
सचेन्निर्यच्छिखायुक्तो विरामान्तः प्रकीर्तितः ।
वक्रो गुरुः स चेन्मात्राशिखः प्लुत इति स्मृतः ॥

वेमः

द्रौहिणकपालगानम्

चतुर्थं द्रौहिणं शुद्धपञ्चमामिधरागतः ।
तत्रापि पूर्ववत्तालवर्णौ ज्ञेयौ समासतः ॥ कुम्भः

पूर्ववदिति । हैरण्यगर्भे षट्पितापुत्रकतालः । भुजङ्गभोगादिगानम् ।

द्वन्द्वः—देशीतालः

द्वन्द्वः सतगणौ प्लुतः । ।।SSS।Sँ

कुम्भः

द्वन्द्वाङ्गिकभेदाः

आवाह्यद्वन्द्वः, अनुकारिकद्वन्द्वः, भाविकद्वन्द्व इति त्रिधा भेदः ।

शृङ्गारः

द्वन्द्वाभिनयः

आद्यवाचिकयोर्योगात् द्वन्द्वाङ्गिकमुदीरितम् ।
आद्य इत्याङ्गिकाभिनयः । शृङ्गारः

द्वन्द्वोत्पलं—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

( आ ) स ग म प नि स .
( अव ) स नि प ध प म ग रि स .

मञ्ज

द्वादशस्वरमूर्छना

द्वादशस्वरसम्पन्ना ज्ञातव्या मूर्छना बुधैः ।
जातिभाषादिसिद्ध्यर्थं तारमन्द्रादिसिद्धये ॥

इति नन्दिकेश्वरणोक्तम्

कोहलस्त्वाह—

योजनीयो बुधैर्नित्यं क्रमो लक्ष्यानुसारतः ।
संस्थाप्य मूर्छना जातिरागभाषादिसिद्धये ॥ इति

यद्यप्याचार्यैः सप्तस्वरमूर्छनाः प्रतिपादिताः । स्थानत्रितयप्राप्त्यर्थं द्वादशस्वरैरेव मूर्छनाः प्रयुक्ताः । अन्यथा चोक्षषाडवेरिता इति प्रयोगो न स्यात् । एवं च सति रागसिद्धिः स्यात्, षड्जजातौ रिगमधनिप्रयोगः तारमन्द्रको न स्यात् । अन्येषामपि रागाणां नाशङ्करः प्रयोगः स्यात् । तेन धनिसरिगमपधनिसरिगः इत्युत्तरमन्द्रा । निसरिगमपधनिसरिगम इति रजनी । सरिगमपधनिसरिगमप इत्युत्तरायता । एवं क्रमात् शुद्धषड्जा, मत्सरीकृता, अश्वक्रान्ता, अभिरुद्गता च जायन्ते । मध्यमग्रामे तु एवमेव निसरिगमपधनिसरिगम सौवीरी । सरिगमपधनिसरिगमप हरिणाश्वा । रिगमपधनिसरिगमपध कलोपनता । एवं शुद्धमध्या, मार्गी, पौरवी, हृष्यका, ऊह्याः ।

मतङ्गः

कुम्भस्तु—

अत्र या मूर्छनाः प्राह द्वादशस्वरसंभवाः ।
मतङ्गोऽस्य मतं नैव सुन्दरं प्रतिभाति मे ॥
अत्रैव कोहलाचार्यो नन्दिकेश्वर एव च ।
मतङ्गमनुसत्यैवोचतुस्तदिह वर्ण्यते ॥
द्वादशस्वरसम्पन्ना ज्ञातव्या मूर्छना बुधैः ।
जातिभाषादिसिद्ध्यर्थं तारमन्द्रादिसिद्धये ॥
त्रिस्थानप्राप्तिसिद्ध्यर्थं द्वादशस्वरमूर्छना ।
प्रयोक्तव्यान्यथा चोक्षषाडवो नैव सिद्ध्यति ॥
त्रिस्थानप्राप्तिपर्यन्तं यावद्रागो न मूर्छति ।
न तावत्तच्छरीरस्य लाभस्संजायते विदाम् ॥
न च सप्तस्वरैरेव त्रिस्थानव्याप्तिसंभवः ।
अत्र प्रतिसमाधत्ते खुम्माणकुलनन्दनः ॥
क्रमात्स्वराणामारोहावरोहौ मूर्छनेति यत् ।
लक्षणं तद्विहन्येत क्रमादारोहणादृते ॥
यदुक्तं जातिभाषादितारमन्द्रादिसिद्धये ।
द्वादशस्वरगुम्फेन मूर्छना स्यात्प्रयोजिका ॥
नन्दयन्त्यां तदव्याप्तेः तत्पञ्चदशसंभवात् ।
षाडवौडुवितस्यातिव्याप्तिलोप्यादिसंभवात् ॥
असंभवाद्गतार्थत्वात्तारमन्द्रावधी कृतौ ।
न तावत्क्रमतोच्चारे रक्तिः क्वापि जायते ॥
विसंवादिसमावेशाद्रक्तिभङ्गो यतः स्मृतः ।
ईषत्स्पर्शोल्लङ्घनाद्यैः क्रमभङ्गस्य शासनात् ॥
कूटतानोपयोगित्वं मुख्यमासां प्रयोजनम् ।
न रागजनिरेषाऽतश्चार्वी सप्तस्वरेरिता ॥

न पृथक्स्वरता तस्मादनंशत्वात्तयोः स्मृता।
काकल्यन्तरयोर्योगान्नवस्वरजाततः।
सप्तस्वरा भवेदत्र मूर्छना सा चतुर्विधा॥

कुम्भः

## द्वादशावस्थाः

केचन दशावस्था ऊचुः।
अथावस्था निरूप्यन्ते रसावस्थानसूचकाः।
बीजाङ्कुरः पल्लवश्च वृद्धिर्विस्तर एव वा।
अवस्थाभिर्विभाव्योऽसौ चक्षूरागादिभिः क्रमात्॥

बीजानि यथा—
कामलेखस्सखी दूतो नायको नायिकासखी।
ता अवस्थास्तथाः चक्षुःप्रीत्यादिमरणान्तकाः॥

कुम्भः

## द्वादशाहः—तानः

मध्यमग्रामे रिवर्जितषाडवः
स नि ध प म ग

कुम्भः

## द्विजक्रिया—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म प स
(अव) स प म ग म रि ग रि स

मञ्ज

## द्विजावन्ती—मेलरागः (हरिकाम्भोजी मेलजन्यः)

(आ) स रि ग म प म ध प नि ध नि स
(अव) स ध प ध नि ध प म ग म ग रि स

मञ्ज

## —मेलरागः

द्विजावन्त्यां शुद्धमध्यस्त्ववरोहे विवर्जितः।
मूर्छनाभेदमात्रेण रमणीयतरो भवेत्॥

काम्भोजीमेलजोयं रागः।

परमेश्वरः

## द्वितीयः— देशीतालः

द्वितीये तु द्रुतद्वन्द्वौ लघुश्चान्ते प्रकीर्तिताः।

वेमः

तधितद्रैं ०० । सुधाकलशः

द्वितीये द्वौ लघुः स्मृतः (श्रीकण्ठः) श्रीकण्ठः

## द्वितीयकामोदः—रागः

षड्जे षड्जीभवष्षड्जग्रहांशन्याससंयुतः।
समस्वरोऽन्यः कामोदो मन्द्रगान्धारसुन्दरः॥

हम्मीरः

## द्वितीयप्रहरगेया—रागाः

गूर्जरी कैशिकश्चैव सावेरी पटमञ्जरी।
रेवा गुणकरी चैव भैरवी राकरथैपि।
सोरठी च तथा गेया प्रथमप्रहरोत्तरम्॥

दामोदरः

## द्विपताकिनी—कला

धृत्वा विलासेषु चतुर्षु यत्र हस्तौ ततश्चेच्चरणाम्बुजाभ्याम्।
ऊर्ध्वं गताभ्यां कुरुतेऽथ चक्रभ्रमीकलोक्ता द्विपताकिनीति॥

नागमल्लः

## द्विपदगा—प्रबन्धः

अथ द्विपदगा प्रोक्ता प्रकृते दोहकाख्यया।
अत्र तालो यथेष्टस्स्यादाभोगोऽथ पदान्तरैः।
तालमानद्वयेनैव स्वरैर्न्यासो विधीयते॥

हरिपालः

द्विपदाख्यप्रबन्धो यः स चतुर्धा प्रकीर्तितः।
एकस्वरेण संयुक्तो गमकेनान्वितः परः॥
स्वरैश्च गमकैस्त्वन्यः चतुर्थस्तद्विवर्जितः।
संस्कृते ये द्विपदगाः प्राकृते दोहकाश्च ते॥
अभीष्टमात्रतालस्स्यादाभोगोऽन्यपदैः कृतः।
स्वरैर्न्यासो विधातव्यः तालमानद्वयेन वा॥

जगदेकः

द्विपदगस्य सारसादिभेदास्सप्त वर्तन्ते। सङ्गीतचूडामणौ स्पष्टं द्रष्टव्यम्।
लयो गणा गुरुश्चान्ते प्रथमेऽथ तृतीयके।
द्वितीये च तुरीये च द्वौ गणौ द्वे गुरू तथा॥
जगणो नात्र कर्तव्यो भागान्ते यमकं भवेत्।
इति द्विपदगं नाम तस्योदाहृतिरुच्यते॥
गातव्यस्स्वरसंयुक्त स्तालेन परिवर्जितः।
प्रबन्धो द्विपदाभिख्यो गीतविद्याविशारदैः॥

सोमेश्वरः

## द्विपदी—प्रबन्धः

शुद्धद्विपदिकापूर्वं पूर्णद्विपदिका ततः।
मानवी चन्द्रिका चाथ धृतिस्तारस्ततःपरम्।
गेयमष्टप्रकारोऽयं अस्या लक्ष्माथ कथ्यते॥

जगदेकः

अत्र भेदाः शुद्धद्विपदी, पूर्णद्विपदी, मानवी, चन्द्रिका, स्मृतिः, तारः, सञ्चारिणी, मनोहारिणीति गम्यन्ते।
करणाख्येन तालेन गातव्यो गमकान्तरे।
आभोगोऽनुपदैः कार्यो न्यासस्तालद्विमानतः।
द्विपदी च भवेदेवम्॥

हरिपालः

षट्कलो गण आद्यस्यात्ततः पञ्च चतुष्कलाः।
अन्ते गुरुर्द्वितीये जः षष्ठे च द्विपदी तु सा ॥
पादद्वयान्ते कर्तव्यः स्वरन्यासो यथोचितः।
येन केनापि तालेन गातव्या द्विपदी बुधैः ॥

सोमेश्वरः

**द्विपथकः**—प्राकृते मात्रावृत्तम्

चतुर्मात्रिकात्रयः, गुरुः, चतुर्मात्रिकौ द्वौ, द्वौ गुरू।

विरहाङ्कः

**द्विमुखप्रिया**—मेलरागः ( मेचकल्याणीमेलजन्यः )

(आ) स ग रि म प नि स
(अव) स नि ध म ग रि स

**द्विरधरः**—वीणायां धातुः

स तु द्विरधरो यत्र द्विः तारस्थानके हतिः ॥

कुम्भः

तारस्थाने द्विराघाताद्धातुर्द्विरधरो भवेत् ॥

शार्ङ्गः

**द्विरधराद्युत्तरान्तः**—वीणायां धातुः

तारस्वरं द्विराहत्य सकृन्मन्द्रः प्रहन्यते।

कुम्भः

**द्विराजिकम्**—कर्णभूषणम्

वलयद्वयविन्यस्तं मुक्ताफलविराजितम्।
मध्ये नीलेन संयुक्तं द्विराजिकमुदाहृतम् ॥

सोमेश्वरः

**द्विरुत्तराधरान्तः**—वीणायां धातुः

समवायजः। मन्द्रौ द्वौ। ततस्तारः।

द्विरुत्तराधरान्तो द्विर्मन्द्रस्तारान्तगो भवेत्।

शार्ङ्गः

**द्विरधरोत्तरान्तः**—धातुः

तारस्थानं द्विः प्रहृत्य विदध्यान्मन्द्रमन्ततः।
यदा तदा द्विरधरोत्तारान्तो धातुरुच्यते ॥

शार्ङ्गः

**द्विरुत्तरः**—वीणायां धातुः

धातुर्द्विरुत्तरः स स्याद्यत्र मन्द्रो द्विरुच्यते।

कुम्भः

मन्द्रस्वरद्विरुच्चाराद्धातुरत्र द्विरुत्तरः ॥

शार्ङ्गः

**द्विरेभः**—देशीतालः

द्विरेभः सरसीरुहः

लक्ष्मणः

**द्विलेपनम्**—(त्रिपुष्करे)

वामोर्ध्वकप्रलेपात्

भरतः

—अवनद्धाङ्गम्

आङ्गीके चोर्ध्वके च मृदा लेपनम्। तत्प्रयोजनं तु —

शैथिल्यादायतत्वाच्च वध्राकोटनयापि वा।
स्वराणां संभवः कार्यो मार्जनासु प्रयोक्तृभिः ॥

मृत्तिका तु —

लक्षणं मृत्तिकायास्तु गदतो मे निबोधत।
निःशर्करा निस्सिकता निस्तृणा निस्तुषा तथा ॥
न पिच्छिला न विषदा न क्षारा न कटुस्तथा।
नावदाता न कृष्णा च नाम्ला नैव च तिक्तिका।
मृत्तिका लेपने शस्ता तया कार्या तु मार्जना ॥
नदीकूलप्रदेशस्था श्यामा च मधुरा च या।
तोयापसरणश्लक्ष्णा तया कार्या तु मार्जना ॥
बधिरा ह्यवदाता तु कृष्णा कुर्वीत न स्थिरा।
सतुषा न स्वरकरी श्यामा स्वरकरी भवेत् ॥
यवगोधूमचूर्णं वा तत्र दद्यात्प्रलेपने।
एकस्तस्य तु दोषः स्यादेकस्वरकृतं भवेत् ॥

भरतः

आर्द्रेण वाससाऽऽलिप्य शैथिल्यं जनयेत्तदा।
आकोटनाच्च वध्राणां तीव्रतां च प्रयोगवित् ॥
भस्ममिश्रेण भक्तेन यवगोधूमयोस्तदा।
चूर्णेन बोधनं वा स्यादित्याह मिथिलेश्वरः ॥

नान्यः

**द्विशिखरः**—हस्तः

शिखराख्यौ मिथः श्लिष्टौ करौ द्विशिखरो भवेत्।
स्त्रीकर्तृकेऽङ्गुलिस्फोटे शयनार्थं प्रयुज्यते।
नास्तीति कथने प्रायः संयुक्तोऽसौ वियुज्यते ॥

विप्रदासः

**द्विसरः**—कण्ठभूषणम्

**द्विस्वरः**—वर्णालङ्कारः

द्विरुच्चार्य स्वरयुगमेकमुच्चार्य चापरम्।

स्वरमेवं क्रमाद्यत्र। यथा—सरिसरिगरिगरिगम। व्युत्क्रमेण मगरिगरिगरिसरिस। अस्य रूपकतालानुगतत्वेनानुपूर्वीविशिष्टत्वादलङ्कारत्वम्।

संगीतसरणिः

**द्विहीरकम्**—अङ्गुलीभूषणम्

वज्रद्वितयमध्यस्थं हरिन्माणिक्यनीलकम् ।
द्विहीरकमिति ख्यातमङ्गुलीयकमुत्तमम् ॥

सोमेश्वरः

**द्वेषः**

विक्रियासिद्धविषया तद्भावसुखावहा ।
तन्नाशे प्रीणती पुंसां मानसी द्वेष उच्यते ॥

भावविवेकः

**द्वैशङ्कारः**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म ध नि स.
(अव) स नि ध म ग रि स.

मज

**द्व्यर्थगण्डः**—वीथ्यङ्गम्

यत्राभिलषितं कांक्षन् गुप्त्या द्व्यर्थपरैः पदैः ।
निर्दिशेद्वाक्यकुशलो द्व्यर्थगण्डस्स कथ्यते ॥

यथा—

जातस्ते दारकः कंस स्वसुरानन्दवर्धनः ।
तं वक्तुमहमायातो नारदो भवतः क्षयम् ॥

सागरः

## ध

**ध**—धैवतस्वरः

**धटः**—प्रबन्धः

द्विपदीछन्दसा चार्धं अर्धं तेन्नकसंयुतम् ।
पूर्वापरोक्तयोरत्र न धटे नियमो भवेत् ॥

सोमेश्वरः

अर्धं गेयं द्विपद्यास्स्यात् तेनकैरपरार्धकम् ।
पदैरन्यैरथाभोगस्तेन्नकैर्न्यास इष्यते ।
येन केनापि तालेन गेय एवं धटो भवेत् ॥

हरिपालः

आद्यमर्धं द्विपद्यास्स्यादुत्तरार्धं तु तेन्नकैः ।
धटाभिधः प्रबन्धोऽत्र व्युत्क्रमोऽपि प्रदृश्यते ॥

जगदेवः

**धटसम्**—अवनद्धम्

सव्यास्यमुद्दलीनद्धं वामास्यं रज्जुयन्त्रितम् ।
हुडुक्काया यदा चैवं तदा तद्धटसं भवेत् ॥
मध्यमाङ्गुलसन्धावङ्गुष्ठायां च नियोज्य च ।
एवं दक्षिणहस्तेन मञ्जनाक्तेन घर्षयेत् ॥
वामाङ्गुष्ठेन सम्पीड्य चाङ्गुलीमिस्तु वादयेत् ।
गोङ्कारस्तत्र मुख्यः स्याद् घर्षणादुपपादितः ॥

सोमेश्वरः

**धनक्रुतातु**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग म प ध नि ध स.
(अव) स ध प म ग रि स.

मज

**धनञ्जयः**

दशरूपककर्ता । (क्री) 980 एतत्कृतं भरतोत्तरग्रन्थ-व्याख्यानं नोपलब्धम् ।

**धनञ्जयमण्ठः**—तालः

दलगाः पो मण्ठके तु धनञ्जये ।
० । ऽ ऽ́

वेदः

—**देशीतालः**

धनञ्जये मण्ठके तु क्रमाद्दलपगा मताः ।
० । ऽ ऽ́

दामोदरः

**धनश्रीः**—रागः

सत्रयाद्या हीनर्षभा षाडवाथ धनाशिरी ।
मूर्छना प्रथमा ज्ञेया रसे वीरे प्रयुज्यते ॥

दामोदरः

**धनाश्रीः**—मेलरागः

आरोहे रिधहीना स्यात् पूर्णा शुद्धस्वरैर्युता ।
गान्धारस्वरपूर्वा स्याद्धनाशीर्मध्यमान्तका ॥

अहोबिलः

गान्धारेत्यादि । गग्रहो मन्यासः । प्रातर्गेया इयं धलोपेन षाडवा । पूर्णा च स्यात् ।

**धनाश्रीरागध्यानम्**

दूर्वादलश्यामतनुर्मनोज्ञा
कान्तं लिखन्ती विरहेण दूना ।
श्वेते कपोले दधती दृगम्बु-
निष्पादनिभ्रातकुचा धनश्रीः ॥

श्रीरागभार्या ।

दामोदरः

**धनिष्ठाभिनयः**

मुकुलहस्तेन कर्तव्यः ।

महाराष्ट्रे

**धनिष्ठाहस्तः**

(धनिष्ठा मर्दलाकारा)
मुकुलस्तिर्यगाकारो धनिष्ठार्थे नियुज्यते ।

शृङ्गारः

धनुराकर्षणम्—नृत्तकरणम्

आलीढं स्थानकं पार्श्वाभिगमं शिर ईरितम् ।
दूरा दृष्टिस्तु खटकामुखोऽन्यश्शिखरो भवेत् ॥
अपकुञ्चितका चारी धनुराकर्षणे भवेत् ॥

नन्दी

अत्र शिरः पार्श्वाभिगमम् । यथा, पार्श्वाभिगममन्वर्थसंज्ञं पार्श्वावलोकने । अपकुञ्चिता गतिः । सातु –
चरणौ कुञ्चितौ किञ्चित्पृष्ठतो गच्छतः क्रमात् ।
यस्यामेषा समाख्याता नृत्तज्ञैरपकुञ्चिता ॥

—चालकः

स्वस्तिकीकृतयोः पाण्योर्बहिस्तिर्यक् प्रसर्पतोः ।
एको विच्युत्य सहसा कर्णाभ्यर्णगतो यदि ।
विलुठचालको ज्ञेयो धनुराकर्षणाभिधः ॥

वेमः

धनुर्वल्लीविनाशकम्—चालकः

नम्रं शिरः कटीपार्श्वे ऊर्ध्वाधोवदनौ करौ ।
तत्रैव मण्डलाकारभ्रमिताङ्गुलिपल्लवौ ।
एवं पर्यायतस्स्याचेद्धनुर्वल्लीविनामकम् ॥

वेमः

धनुर्हस्तः

चतुरश्रौ श्लिष्टमुखौ मिलिताङ्गुष्ठयोजनात् ।
चापराशौ नियुज्येत भरतान्वयवेदिभिः ॥

शृङ्गारः

धन्यकृती—क्रियाङ्गरागः

अङ्गं देवकृतेः प्रोक्तं धन्यकृती केनचिन्त्विह ।
लक्ष्येऽप्रसिद्धतस्तेन लक्षणं न समीरितम् ॥

कुम्भः

धन्यक्रिया—रागः

मापन्यासवती निषादबहुला या सग्रहांशा पुनः
तारा षड्जरवे च धैवतरवे मन्द्रा च मन्द्रापि च ।
गान्धारर्षभपञ्चमध्वनिकृतित्यागाद्भुतैकाश्रया
ज्ञेया धन्यकृतिः पितामहमहाप्रीतिप्रदा नित्यशः ॥
परिगध्वनिहीना च मापन्यासा सतारका ।
सान्ता धर्म द्रा निबला ज्ञेया धन्यकृतिस्सदा ॥

नान्यः

धन्यवैकुण्ठकुङ्कुमः—सूडप्रबन्धः

मालवीयः स्मृतो गौडो रागस्तालेऽड्डुतालकः ।
शृङ्गारो विप्रलम्भाख्यो रसो दैवादिवर्णनम् ।
पदसन्ततितस्तेनाः पाटाः स्वरसमुच्चयः ।
ततः पद्यानि यत्र स्युः लयमध्यममानतः ।
स प्रबन्धवरो ज्ञेयो धन्यवैकुण्ठकुङ्कुमः ॥

कुम्भः

धन्याशी—रागः

षड्जांशग्रहसंभृता धनिपरित्यक्ता समा सर्वतः ।
स्फारीभूतविवादमध्यमरवाचेद्राधिका नित्यशः ॥
तारस्थाननिविष्टमध्यमरवा गान्धारकः पञ्चमः ।
स्वल्पोपद्रव...कितं च रामकं सा स्यात्तु धन्यासि(शि)का ॥

नान्यः

षड्जग्रहांशा मध्यान्ता विधरिनिर्प
निमन्द्रमध्यताराच धन्यासी स्यात्............ ॥

मतङ्गः

—मेलरागः—( हनुमत्तोडीमेलजन्यः )
( (आ) स ग म प नि स .
(अव) स नि ध प म ग रि स .

मञ

धन्याश्री—रागः

साद्यतां च धरित्यक्ता धन्याश्रीः सांशयुक् चरा ।

मद

धन्यासिः—रागः

अङ्गं धन्यासिका प्रोक्ता शुद्धकैशिकमध्यमे ।
षड्जांशग्रहसन्यासा षाडवा रिषभोज्झिता ॥
गान्धारपञ्चमस्वल्पा रसे वीरे नियोज्यते ।

हम्मीरः

धन्यासी—रागः (वंशे वादनक्रमः)

तारषड्जं ग्रहं कृत्वा तस्यार्धं मृदु वादयेत् ।
तदेव सकृदाहत्य वादयित्वा ग्रहं ततः ॥
ततो द्वितीयं तुर्यं च प्रोच्य पश्चात्तृतीयकम् ।
सकृदाहत्य तदनु वादयेत्तत्परं द्रुतम् ॥
पञ्चमं तु विलम्ब्याथ स्वरौ तस्मादधस्तनौ ।
स्वल्पीकृत्य ततः स्थायिस्वरे न्यासो यदा भवेत् ॥
स्वस्थानमाद्यं धन्यास्यास्तदा तद्ज्ञैरुदाहृतम् ।
अस्याः स्थायी द्वितीयस्तु स्वरो वंशेषु दृश्यते ॥

वेमः

धन्यासिका— रागः

अङ्गं धन्यासिका प्रोक्ता शुद्धकैशिकमध्यमः ।
षड्जांशग्रहमन्यासः षाडवर्षभवर्जितः ॥
गान्धारपञ्चमस्वल्पः रसे वीरे नियुज्यते ।

जगदेकः

—प्रथमराग:

धन्यासिका कैशिकमध्यमस्य
शुद्धादिभूतस्य रिहीनमङ्गम्।
षड्जग्रहांशा गपदुर्बला स्यात्
धन्यासिका वीररसे प्रगेया॥

मोक्ष

धन्यासी—रागाङ्गराग: (वीणायां वादनक्रम:)

षड्जं कृत्वा ग्रहं प्रोच्य तृतीयं च चतुर्थकम्।
आपञ्चमं द्वितीयादीन्क्रमादारुह्य चेत्पुन:॥
क्रमेणैवावरोहेण त्यक्त्वा स्थायिद्वितीयकम्।
स्थायिन: प्रथमं गत्वा ग्रहं तस्मात्तृतीयकम्॥
तुर्यं तृतीयं चोच्चार्य धन्यासी स्याद्ग्रहान्तिमा।
वैणिकै: कैश्चिदेवास्या: पञ्चमोऽपि ग्रह: स्मृत:॥

कुम्भ:

धन्यासीराग:

अत: परन्तु धन्यासी शुद्धकैशिकमध्यजा।
षड्जांशग्रहसंयुक्ता षाडवा न्यासमध्यमा।
ऋषभेण परित्यक्ता स्वल्पगान्धारपञ्चमा॥

हरि:

—मेलराग: (श्रीरागमेल:)

धन्यासिका प्रभातेऽसौ षड्जत्रितयमण्डिता।
रिधहीना रसे वीरे गीयते गायकोत्तमै:॥

श्रीकण्ठ:

—रागाङ्गराग:

ग्रहांशषड्जा मन्यासा गपस्वल्पा रिवर्जिता।
धन्यासी गीयते वीरे जाता कैशिकमध्यमात्।
सर्वर्तुषु प्राक्प्रहरे रागाङ्गमिति कथ्यते॥

भट्टमाधव:

—राग:

शुद्धकैशिकमध्याङ्गं निमन्द्रा तारमध्यमा।
ग्रहांशषड्जा मन्यासा धन्यास्यल्पगपाध्वरी॥

सोमराज:

धन्यासीरागध्यानम्

धात्रीवराहाङ्कितचारुमण्डपे
घट्टाधिरूढां चरणाधिनाथाम्।
वीणाकुचाग्रस्तसुनीलदेहां
धन्यासिकां मे मनसा स्मरामि॥

रागसागर:

अस्य धन्याश्री:, धन्यासी, धनाशी, धनासी इत्यादिनामानि सन्ति।

नीलोत्पलश्यामलमूर्तिरेषा प्रियं लिखन्ती विरहेण युक्ता।
श्रीखण्डचर्चाविलसत्कुचा स्याद्धन्यासिका भाति मनोज्ञवेषा॥

श्रीकण्ठ:

धरणि:—यति:

यतिपर्यायत: प्रोक्तो धरण्यो देशकोविदै:।
आवृत्तयस्तु मार्गज्ञैस्तालानां परिभाषिता:॥
परिवर्तनसंज्ञाभिस्ता वाक्यविदगोचरा:।
धरण्य: पदमध्याऽन्ते भवेयुस्तालनिर्णयात्॥

कुम्भ:

धरणीवराह:—देशीताल:

वराहे धरणीपूर्वे गयोर्मध्ये प्लुतद्वयम्। ऽ ऽ̍ ऽ̍ ऽ

गोपतिप्प:

धरपल्लव:—मेलराग: (मेचकल्याणीमेलजन्य:)

(आ) स रि म ग म प नि स.
(अव) स नि ध प म ग म रि ग स.

मज्ञ

धर्मगोटाणी—मेलराग: (रामप्रियमेलजन्य:)

(आ) स रि ग रि ग म प ध नि ध प नि स.
(अव) स ध नि प म ग रि स.

मज्ञ

धर्मप्रकाशिनी—मेलराग: (नटभैरवीमेलजन्य:)

(आ) स रि म प नि स.
(अव) स ध म ग रि स.

मज्ञ

धर्ममठ्यक:—देशीताल:

मगणो लद्रुतो लौग: ताले स्याद्धर्ममठ्यके।
(११२ मात्रा:)

तालप्रस्तार:

धर्मवती—मेलकर्ता (राग:)

स रि ग ० ० ० म प ० ० ध ० नि स.

मज्ञ

धर्मिणी—मेलराग: (कामवर्धिनीमेलजन्य:)

(आ) स रि ग म ध नि स.
(अव) स नि प म ध म ग रि स.

मज्ञ

धवलः—प्रबन्धः

पदैश्चतुर्भिरष्टाभिष्षड्भिर्वा रचितो भवेत् ।
विवाहादिषु कार्येषु मङ्गलेष्वेव गीयते ।
एकतालो भवेदेवं धवलः परिकीर्तितः ॥

हरिपालः

धवलादिपदैः पादैराशीर्वादसमन्वितैः ।
छन्दसा येन केनापि कर्तव्यो धवलाभिधः ॥
आशीर्वादयुतैः पादैरीदृग्धवलपूर्वकैः ।
अनेन नियमेनायं गीयते धवलाभिधः ॥

सोमेश्वरः

धवलकेसरी—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि प म ग स.

मञ्ज

धवलवाहिनी—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग प नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

धवला—प्राकृते द्विपदी

विषमा — चतुर्मात्र एकः जः गः
समा — चतुर्मात्र एकः पञ्चमात्र एकः लः गः

विरहाङ्कः

धवलाङ्गी—मेलरागः (धवलाम्बरीमेलजन्यः)

(आ) स म ग म प ध नि ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

धवलाम्बरी—मेलकर्ता (रागः)

स रि ग ० ० ० म प ० ध नि ० स.

मञ्ज

धसकः—देशीलास्याङ्गम्

मध्ये मध्ये च नृत्तस्य विलासभरनिर्भरम् ।
अधस्ताद्यत्र नर्तक्या नमनात्कुचकुम्भयोः ॥
माद्यन्मधुकराक्रान्तकुसुमस्तबकानताम् ।
वल्लरीमनुकुर्वाणा तालवाद्यलयान्विता ।
शरीरयष्टिः प्लुविता धसकं तत्प्रचक्षते ॥

वेमः

धसा—श्रुतिः

षड्जस्य तृतीया श्रुतिः (हनुमन्मते)
हनुमन्मते अष्टादशैव श्रुतयः ।

धातवः—(अवनद्धे)

स्वरास्ते धातवः प्रोक्ता ये प्रहारविशेषजाः ।

कुम्भः

धातुः

अर्थस्य यत्र निर्वाहः पदबन्धेन दृश्यते ।
नाम्ना धातुरिति प्रोक्तः स सङ्गीतविशारदैः ॥

हरिपालः

धातुश्चतुर्धेति कथं नु संख्याहस्त्यन्तराख्योपि च धातुरन्यः ।
एवं च पञ्चेति निरूपणीये कथं चतुर्धेति विनिश्चयस्ते ॥
सत्यं च धात्वन्तरवर्णनं ते सर्वानुयायी खलु नैष धातुः ।
प्रवर्तते सालगसूडमात्रेत्वन्यत्र चत्वार इति प्रतीतम् ॥
धातुस्वरूपं कथयामि सम्यक् धातुस्त्वथो धारणपोषणार्थत् ।
औणादिके संप्रति कल्प्यमाने तुन् प्रत्यये धातुपदस्य सिद्धिः ॥

रघुनाथः

ये प्रहारविशेषोत्थाः स्वरास्ते धातवो मताः ।
पुष्णन्ति वीणावाद्यं ये रक्तिं दधति चातुलाम् ॥
कुर्वन्त्यदृष्टतुष्टिं च तान् धातूनधुना ब्रुवे ।
विस्तारकरणाविद्धव्यञ्जनाश्चेति धातवः ॥

शार्ङ्गदेवः

विस्तारः, आविद्धः, व्यञ्जनः, करणम्—एते चत्वारो धातवः ॥ धातवश्चतुस्त्रिंशत् । विस्तारे चतुर्दश । करणे पञ्च । व्यञ्जने दश । आविद्धे पञ्च—इति ।

धातुपञ्चमः—मेलरागः (धातुवर्धिनीमेलजन्यः)

(आ) स रि ग म प नि प स.
(अव) स नि ध प म रि ग म रि स.

मञ्ज

धातुवर्धनी—मेलकर्ता (रागः)

स रि ग ० म प ध नि ० स.

मञ्ज

धातुवाद्यम्—धातवस्तन्त्रीविशेषाङ्गुलीविशेषवैणस्वराः

रञ्जनया अदृष्टविशेषस्य क्रमेण चतुष्टयपृथक्कृता विस्तारव्यञ्जनाविद्धकरणसंज्ञा धातुवाद्यं सप्तभेदलक्षणम् ।

अभिनवगुप्तः

धारणाः—दन्ताः

ग्रहणाद्धारणाः प्रोक्ता दन्ता योज्या विशारदैः ।
भयादङ्गुलिदंशे च तृणादीनां च चर्वणे ॥

सोमेश्वरः

**धारा**—वीणावादनप्रकारः

धारा सानुपदं यस्यामुत्क्षेपपरिवर्तकौ ।
कर्तरीरेफसंज्ञौ च तथैवोल्लेखरेफकौ ।
मूर्छना स्खलितौ चेति कद्रूचुरिह (?) तद्विदः ॥

कुम्भः

दारेति नामान्तरम् ।
उत्क्षेपः परिवर्तश्च ताभ्यां स्याद्यत्र कर्तरी ।
रेफेण सहिता तद्वदुल्लेखो रेफसंयुतः ।
एवं समुदितं प्राहुः धाराख्यं वादनं बुधाः ॥

पार्श्वदेवः

—वाद्यम्

स्खलितो मूर्छना चाथ कर्तरीरेफसंयुतौ ।
उल्लेखरेफौ यत्रास्तां धारां ब्रूते हरप्रियः ॥

शार्ङ्गः

—भङ्गतालः

लघुः द्रुतद्वयं गः पुनस्तथैव ।
।००ऽ।००ऽ

नान्यः

**धालिकागौलं**—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स रि म प ध नि स.
(अव) स नि ध नि प ग म रि स.

मञ्ज

**धीः**—सन्ध्यन्तरम्

इष्टार्थसिद्धिपर्यन्ता चिन्ता धीरिति कथ्यते ।

सिंगः

परचित्तोपलक्षिका बुद्धिः धीः । यथा—मुद्राराक्षसे तृतीयेऽङ्के—एवमस्माश्विति चन्द्रगुप्तवाक्यम् ।

सागरः

धीस्थाने भोजदेवः ह्रियं पठति ।

**धीरम्**—दर्शनम्

स्फुरत्प्रभावगम्भीरं धीरमित्युच्यते बुधैः ।

शारदातनयः

**धीरकला**—मेलरागः ( खरहरप्रियामेलजन्यः )
(आः) स रि ग म प नि ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

**धीरललितः**—नायकः

यत्र तु धीरत्वं सन्निवेशसौकुमार्याद्विलासमसृणं स धीरललितः ।

यथा—अथ सललितयोषिदिति कुमारसंभवे ।

भोजः

**धीरशङ्कराभरणं**—मेलकर्ता (रागः)
स ० रि ० ग म ० प ० ध ० नि स.

मञ्ज

**धीरशान्तः**—नायकः

यत्र तु धीरत्वं अमीषामेव शास्त्रार्थावगमपरिणत्या तदतिसत्वोत्तरं भवति स धीरप्रशान्तः । यथा—जीमूतवाहनः ।

भोजः

**धीरा**—नायिका

मध्याप्रगल्भयोर्मानविधौ त्रैविध्यम् । धीराधीरा परुषा चेति ।
स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिये ।
धीरा गुप्तविकारा स्यादादराङ्गार्पणादिकृत् ॥

कुम्भः

धीरा रतिपरिश्रान्ता मूर्छितापि पुनः पुनः ।
प्रियं प्रोत्साहयति या रते च पुरुषायिते ॥
उपचारैः सविनयैरथवा क्रमभाषितैः
खेदयत्येव नेक्षेत सापराधं प्रियं क्रुधा ॥

शारदातनयः

**धीरादयो नायिकाः**

धीराधीरा धीरा तद्वद्धीरेति मध्यमा त्रेधा ।
प्रौढापि प्रागल्भ्याद्धैर्यविशेषैश्च मानवृत्तिगतैः ॥
धीरोदात्तगुणान्विता च रमणी धीरात्वधीरा भवत्
मानादौ मृदुरेव धीरललितप्रायैर्गुणैरन्विता ।
धीराधीरविलासिनी विलसिता धीरोद्धतोक्तैर्गुणैः
प्रायः कापि च धीरभाक् सञ्जायते सा क्रमात् ॥

नीलकण्ठः

**धीरादयः**—नायिकाः

मध्याभिधानधीरा वक्रोक्त्या वक्ति सस्मिता किञ्चित् ।
धीराधीरा दयिते सागसि वक्रोक्तिभिर्वदत्साश्रम् ॥
अधीरमध्या परुषैश्च वाक्यैः कृतागसं वल्लभमाह कोपात् ।
अथैवमुक्तास्सकलाश्च मध्या ज्येष्ठा कनिष्ठेति च
ता द्विधा स्युः ॥

नीलकण्ठः

**धीराधीरा**—नायिका

धीराधीरा तदुभयं व्यनक्ति रतिचेष्टितम् ।

शारदातनयः

**धीरोदात्तः**—नायकः

धैर्यं यत्र गुणसन्निवेशचारुत्वादुदात्तं स धीरोदात्तः । यथा – रामः ।

भोजः

**धीरोद्धतः**—नायकः

धैर्यं यत्र गुणानां हीनाधिकयोगादुपहतं स धीरोद्धतः ।
यथा – दृष्टिस्तृणीकृत इत्यादि वीरचरिते ।

भोजः

**धुतम्**—शिरः

पर्यायेण शनैस्तिर्यग्गतमुक्तं धुतं शिरः ।
शून्यस्थानस्थितस्यैव पार्श्वदेशावलोकने ॥
अनाश्वासे विस्मये च विषादेऽनीप्सने तथा ।
प्रतिषेधे च तस्योक्तः प्रयोगो भरतादिभिः ॥

शार्ङ्गः

क्रमेण चालितं तिर्यक् मन्दं मन्दं धुतं शिरः ।
प्रतिषेधेऽनीप्सितार्थे विषादे विस्मये तथा ॥
अनाश्वासे शून्यतायां कार्यं पार्श्वावलोकनम् ।
अस्यैव भेदो विज्ञेयः शिरः पार्श्वावलोकनम् ॥

विप्रदासः

क्रमेण तिर्यङ्नमितं शनैरुक्तं धुतं शिरः ।

कुम्भः

**धूननम्**—प्रतिमुखसन्ध्यङ्गम्

विधूतस्य नामान्तरम् । विधूतशब्दे द्रष्टव्यम् ।

**धूसी**—स्थलस्थध्वाडनृत्तम्

संहतस्थानके स्थित्वा शिखरद्वितयं हृदि ।
दक्षः पताकः प्रसृतः वामस्तु शिखरो हृदि ॥
दक्षिणाङ्घ्रिः पुरस्थः स्यात्सार्धतालान्तरे भुवि ।
कुञ्चितस्थानकेनाथ पादौ हस्तौ प्रसारितौ ॥
तिर्यगुत्प्लवनं कुर्यात्संहतस्थानके स्थितिः ।
धूसी ध्वाडस्तु गदितः सङ्गीतज्ञैः पुरातनैः ॥

वेदः

**धृतिः**—ध्रुवावृत्तम्

धृतिसंज्ञा च विज्ञेया लघुश्च गुरुकद्वयम् ।
यथा – उमेशः – इति एकः पादः । नृत्तगीतयोः प्रयोक्तव्या.

नान्यः

—व्यभिचारिभावः

शौर्यविज्ञानश्रुतिविभवशौचाचारगुरुभक्त्यधिकमनोरथार्थलाभक्रीडादयो विभावाः । अनुभावास्तु प्राप्तानां विषयाणामुपभोगादप्राप्तातीतोपहतविनष्टानामननुशोचनादयः ।

भरतः

देहपुष्टिरुपलक्षणं गता न तु शोचनादीनामनुभावादीनाम् ।

रामचन्द्रः

सुखदुःखेषु समत्वेनोत्पद्यते धृतिः । तामचलत्वादिभिरभिनयेत् ।

सागरः

—चित्ताभिनयः

ज्ञानविज्ञानगुर्वादिभक्तैर्नानार्थसिद्धितः ।
लज्जादिभिश्च चित्तस्य नैस्पृह्यं धृतिरुच्यते ॥
शिरसः पार्श्वभागे तु कपित्थो लज्जितार्थके ।
त्रिपताकः पुरोभागे गुरुभक्तौ विधीयते ॥
हृदिस्थाने तु मुकुलो व्योमस्थाने पताककः ।
मोक्षज्ञाने दर्शयन्ति भरतागमवेदिनः ॥
पुरोभागे तु चतुरः तिर्यग्बद्धस्थितो यदि ।
हंसास्यं तन्मुखे चैव चालयेच्छास्त्रबोधने ॥

विनायकः

**धृतिछन्दोवृत्तानि**

धृत्यामपि हि पिण्डेन वृत्तान्याकल्पितानि हि ।
तद्ज्ञैः शतसहस्रे द्वे शतमेकं तथैव च ॥
द्विषष्टिश्च सहस्राणि चत्वारिंशच्च योगतः ।
चत्वारि चैव वृत्तानि समसंख्याश्रयाणि तु ॥

भरतः

**धृतिवर्धनः**—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

( आ ) स ग म प ध स.
( अव ) स नि ध प म रि ग रि स.

मञ्ज

**धृष्टः**

लज्जाशङ्के तिरस्कृत्य कुर्याद्व्यवसितं तु यः ।
सावष्टम्भ इवान्येषु नरोऽसौ धृष्ट उच्यते ॥

भावविवेकः

धेनुकः—मेलकर्ता

स रि ० ग ० म ० प ध ० ० नि स.

मञ्ज

धेनुकहस्तः

तर्जनीमध्यमे चोभे कनिष्ठानामिकेप्युभे ।
स्वस्तिकेन लगेदित्थं धेनुहस्तोऽस्य देवता ।
सुरभिर्गोस्तमेष्वेवं चतुर्दिक्षु नियुज्यते ॥

गौरीमतम्

धेनुमुखः—देशीतालः

द्रुतो गुरुः प्लुतश्चापि ताले धेनुमुखाह्वये ।

३१ मात्राः ।

तालप्रस्तारः

धैर्यम्

चापलेनानुपहता सर्वार्थेष्वविकत्थना ।
स्वाभाविकी चित्तवृत्तिः धैर्यमित्यमिधीयते ॥

भावविवेकः

धैर्यवान्

वेदना यच शक्तोऽपि निहन्तुं बहुला अपि ।
वह्नेरिव शिखास्तोयैर्नरोऽसौ धैर्यवान्भवेत् ॥

भावविवेकः

धैर्योदरी—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग प नि स.
(अव) स ध प म रि ग रि स.

मञ्ज

धैवतम्—स्वरहस्तः

पताकः पुङ्खिताकारो रेचितत्वमुपाश्रितः ।
द्रुता दृष्टिश्च विज्ञेया धैवतार्थे प्रयुज्यते ॥

शृङ्गारः

धैवतः

धमिद्भिरेव बोद्धव्यत्वाद्धैवतोऽयमुदाहृतः ।

कुम्भः

गत्वानाभेरधो भागं वस्तिं प्राप्योर्ध्वगः पुनः ।
धावन्निव च यो याति कण्ठदेशं स धैवतः ॥

सङ्गीतसरणिः

धैवतो गौरवर्णः स्यादेकवक्त्रश्चतुर्भुजः ।
वीणाकलशखट्वाङ्गफलशोभितसत्करः ॥
शम्भुस्तु दैवतं श्वेतं द्वीपं स्याद्दपिजं कुलम् ।
रसो भयानकश्चास्यो यानं गाता तु तुम्बुरुः ॥

सुधाकलशः

उष्णिक् छन्दः करुणरसः, दर्दुरो वदति, ऋषिकुलीनः, चम्पकप्रभः, क्षत्रियः, श्वेतद्वीपभूः, सत्यलोकवासी, चोलदेशीयः, शुक्रवारजः, सामवेदी, कौमुदशाखी, चत्वारिंशद्वार्षिकः, षट्कलावान्, क्षात्रकर्मणि प्रयुक्तः, नीचस्वरः त्रिश्रुतिः.

पाण्डतमण्डली

धैवतस्वरमन्त्रः

गोपुच्छ हृदयाय नमः । स्रोतोवहः शिरसे स्वाहा । समा शिखायै वषट् समा कवचायहुम् । अतिसमः नेत्रत्रयाय वौषट् । हाहा ऋषिः प्रतिष्ठा छन्दः शची देवता । ऐं क्लीं सौं धं नमः ।

जगदेकः

धैवताभिनयः

काङ्गूलहस्तकौ कृत्वा दृष्ट्या वीभत्सया तथा ।
परावृत्तास्यमूर्ध्ना च प्रत्यालीढाभिधेन च ।
स्थानकेन विनिर्देश्यो धैवतो निपुणैर्नटैः ॥

दामोदरः

धैवती—जातिः

अत्रोच्यते धैवतिकाख्यजातेरंशौ हि तत्रर्षभधैवतौ द्वौ ।
आरोहणे किञ्च सपौ विलङ्घ्यौ तदौडुवं स्यात्सपयोश्च लोपात् ॥
नैष्क्रामिकाया भवति ध्रुवाया गाने पुनर्नाटकपूर्वकाङ्के ।
जातेरमुष्या विनियोग उक्तः कला भवन्त्यष्टगुरुस्वरूपाः ॥
जाताविह द्वादशसंभवन्ति गाने पुनस्सिंहलिका च देशी ।
सा शुद्धकैशिक्यपि ते त्रयोऽपि रागं परिस्फूर्तिमिहप्रयान्ति ॥

रघुनाथः

धैवत्या धैवतर्षभौ ग्रहांशौ च । शुद्धावस्थायां धैवत एव न्यासः । विकृतावस्थायां धैवतर्षभमध्यमा अपन्यासाः ।

धैवतो न्यासः । पञ्चमहीनं षाडवम् । पञ्चमषड्जहीनमौडुवितम् । षड्जपञ्चमस्वरौ बलौ कर्तव्यौ । क्वचिल्लङ्घनीयौ । पञ्चस्वरपरस्तारः । न्यासपरस्तत्परो वा मन्द्रः । पूर्णावस्थायां गान्धारमध्यमपञ्चमनिषादानामल्पत्वम् । एतेषामौडुविते ऽल्पत्वम् । शेषाणां च बहुत्वम् । अस्याः सप्तांशाः रिषभादिर्मूर्छना । तालः पञ्चपाणिः । एककलश्चित्रमार्गे मागधी गीतिः । द्विकलो वार्तिके संभाविता गीतिः । चतुष्कलो दक्षिणे पृथुला गीतिः । चेत्रे कलाश्चतस्रः । दक्षिणे कला द्वादश । वार्तिकेऽष्टचत्वारिंशत्कलाः । रसाः वीरबीभत्सभयानकाः । ध्रुवागाने प्रथमप्रेक्षणिके विनियोगः ।

मतङ्गः

—ध्यानम्

यस्या वपुर्नवसुधारसनिर्विशेषं
पीतं तदप्यतितरां नयनैर्महेशम्।
आपीयमानममितो विदधाति देहं
तां धैवतीमनुगुणामनिशं नमामि ॥

जगदेकः

## धैवतीकपालगानम्

यत्र स्यात्पञ्चमो न्यासो बहुमध्यमधैवतौ।
गान्धारर्षभकावल्पौ तरां तद्दैवतीभवम्।
षाड्ज्या इवाष्टकलिकं कपालं समुदीरितम् ॥

अग्निज्वालेत्यादीनि पदान्यष्टौ।

कुम्भः

## धैवतीकपालम्

षड्जस्वरग्रहांशः षड्जापन्यासविहितसुशरीरम्।
स्वल्पतररिषभगान्धारस्वररचितं भवेद्देतत्।
मध्यमधैवतबहुलं पूर्णं सङ्गतमपि च यत् षाड्ज्याः ॥

धैवत्या धैवतीसकपालपाणिका षड्जग्रामे चोक्षकैशिके तु देश्या सिंहलिकया गीयते इदं अष्टकलम् ॥

नान्यः

अथोच्यते धैवतिकाकपाललक्ष्माधुनांशः पुनरत्र षड्जः।
रिगाविहाल्पौ नितरां तथापन्यासौ बहू मध्यमधैवतौ च।
अष्टौकलाःशिष्टमिहात्र षाड्जीजाताविव स्यादखिलं प्रयोज्यम् ॥

रघुनाथः

## धौम्यः—मेलरागः ( धर्मवतीमेलजन्यः )

( आ ) स रि ग म प ध स.
( अव ) स नि ध प म ग रि स.

मज

—मेलरागः ( मानवतीमेलजन्यः )

( आ ) स रि ग प ध नि – स.
( अव ) स नि ध प म ग रि – स.

मज

## धौरेयणी—मेलरागः ( शुभपन्तुवरालीमेलजन्यः )

( आ ) स रि ग म नि स.
( अव ) स नि ध प म ग रि स.

मज

## धौलिका—मेलरागः ( कनकाङ्गीमेलजन्यः )

( आ ) स रि म प ध नि – स.
( अव ) स नि ध प म ग रि – स.

मज

## ध्रुवः—क्रिया ( तालाङ्गम् )

क्रियाशब्दे द्रष्टव्यम्।

—तालक्रिया

छोटिकाशब्दपूर्वस्तु हस्तपातो ध्रुवो मतः।
अत्र केचिद्दत्तिलाद्याः ध्रुवपातं न मन्यते।
तन्मते तु कलाः सप्त तामिस्तालमतिर्भवेत् ॥

वेमः

—ध्रुवः

सर्वपातस्थितत्वाच्च विश्लेषाभावतस्तथा।
करस्य ध्रुव इत्युक्तः।

सङ्गीतसर्वस्वम्

—तालः

ध्रुवतालः पुनर्द्वेधा नाट्यदण्डी ध्रुवस्तथा।
वीणावाद्यध्रुवश्चेति नाट्यदण्डी ध्रुवे लघुः ॥

चतुरक्षरवानादौ गुरुः पश्चाद्द्व्यक्षरः।
वीणावाद्यध्रुवे त्वादौ लघू द्वौ चतुरक्षरौ ॥

ततः षडक्षरोच्चारसम्मितो लघुशेखरः।
चतुर्दशाक्षरमिता वाद्यैतावुभौ ध्रुवौ ॥

ध्रुवयोरनयोस्तावत् नाट्यदण्डी ध्रुवः परम्।
प्रामाणिकः शास्त्रदृष्टः स एव भुवि वैणिकैः।
वीणायां वाद्यते रक्तिलाभात् धातलयान्वितः ॥

वेङ्कटमखी

## ध्रुवपदनृत्तम्—देशीनृत्तम्

गीयमाने ध्रुवपदे गीते भावमनोहरे।
नर्तनं तनुयात्पात्रं कान्ताह्यस्यादिदृष्टिजम् ॥

नानागतिलसद्भावमुखरागादिसंयुतम्।
सुकुमाराङ्गविन्यासं दन्तोद्योतितहावकम् ॥

खण्डमानेन रचितं मध्ये मध्ये च कम्पनम्।
यत्र नृत्यं भवेदेवं ध्रुपदाख्यं तदा भवेत् ॥

प्रायशो मध्यदेशीयभाषया यत्र धातवः।
उद्ग्राहध्रुवकाभोगास्त्रय एते भवन्ति ते ॥

उद्ग्राहरहितं केचित्परे त्वाभोगवर्जितम्।
उद्ग्राहाभोगरहितमन्वर्थमपरे जगुः।
स्यादक्षिभ्रूविकारादिश्शृङ्गाराकृतिसूचके ॥

वेदः

## ध्रुवातालाः

तत्र झोम्पठः—

ध्रुवो मठ्योरूपकश्च झम्पा त्रिपुट एव च ।
अठतालैकतालौ चेत्यष्टालङ्कृतयः स्मृताः ॥

वेङ्कटमखी

अत्र गीतालङ्काराः ध्रुवादितालसम्मिता उक्ताः ।

## ध्रुवादितालः

ध्रुवो मठ्यो रूपकश्च झंपा त्रिपुट एव च ।
अटतालश्चैकतालः सप्ततालाः प्रकीर्तिताः ॥

भरतकल्पलता

आद्यो ध्रुवस्ततो मण्ठः प्रतिमण्ठो निसारुकः ।
अटतालस्ततो रास एकतालश्च सप्तमः ॥
ध्रुवं षोडशविधं मण्ठकं षड्विधं स्मृतम् ।
चतुर्विधं प्रतिमण्ठं षड्विधं च निसारुकम् ॥
षड्विधं मण्ठतालंच रासकं च चतुर्विधम् ।
त्रिविधं चैकतालं च गीतभेदाः पृथक्पृथक् ॥

सङ्गीतसारः

## ध्रुवादितालजातिभेदाः

चतुरश्रत्र्यश्रमिश्रखण्डसङ्कीर्णजातयः ।
ध्रुवादयो जातिभेदैः प्रत्येकं पञ्च पञ्च च ।
तालाः स्वस्वाङ्गमात्राभिः जाता इति जगुर्बुधाः ॥

भरतकल्पलता

अयं भावः- ध्रुवादिसप्ततालाः प्रत्येकं चतुरश्रत्र्यश्रमिश्रखण्डसङ्कीर्णजातिभेदेन पञ्चधा भवन्ति । सप्तापि पञ्चत्रिंशद्भवन्ति । तत्र ताले लघोः चतुर्लघ्वक्षरकालो गृहीतः । यथा – सरिगम । अयं चतुरश्रलघुः। त्र्यश्रस्तु त्र्यक्षरोच्च । रणकालो लघुः। मिश्रे लघोः सप्तलघ्वक्षरकालः । खण्डलघोः पञ्चलघ्वक्षरकालः । सङ्कीर्णलघोः नवलघ्वक्षरकालः । भरतप्रोक्तमार्गतालेषु पञ्चलघ्वक्षरकालो लघुः । यथा – सरिगमप इति । द्रुतस्य द्विलघ्वक्षरकालो गृहीतः । अनुद्रुतस्य एकलघूच्चारणकालः । तालविधाने लघुः छन्दोविधानाद्भिन्नः ।

ध्रुवतालस्यैको लघुः एकं द्रुतं द्वौ लघू । तत्र चतुरश्रजातौ चतुर्मात्राग्रहणेन लघुद्वयस्य द्वादशमात्राः । द्रुतस्य द्वे मात्रे । आहत्य चतुर्दशाक्षरीयं मात्रा । त्र्यश्रजातौ मात्रा त्रिगुणनेन लघूनां नवमात्राः । द्रुतस्य द्वे मात्रे । आहत्यैकादश मात्राः । मिश्रजातौ लघोः सप्तमात्रागुणनेन लघूनां द्रुतस्य च त्रयोविंशतिमात्राः । खण्डध्रुवजातौ पञ्चसंख्यया गुणनेन लघूनां पञ्चदश मात्राः । द्रुतस्य द्वेमात्रे आहत्य सप्तदशमात्राः । सङ्कीर्णजातौ ध्रुवतालस्य नवाङ्कगुणने लघूनां सप्तविंशतिमात्राः । द्रुतस्य मात्राद्वयस्य हि तत्वे एकोनत्रिंशत् । तथैव चतुरश्रमध्ये लघुद्रुतलघुलक्षणे चतुरक्षरगुणने द्रुतमात्राद्वयसहितं दशमात्राः । त्र्यश्रमध्यस्य अष्टौ मात्राः । अनेन प्रकारेण मिश्रमध्यस्य षोडशमात्राः । खण्डमध्यस्य द्वादश । सङ्कीर्णमध्यस्य विंशतिः । रूपकस्य लक्षणं द्रुतं लघु । चतुरश्ररूपकस्य षण्मात्राः । त्र्यश्ररूपके पञ्च । मिश्ररूपके नव । खण्डरूपके सप्त । सङ्कीर्णरूपकस्यैकादश । झंपायाः एको लघुः । अद्रुतं द्रुतं लक्षणं भवति । अनुद्रुतस्यैका मात्रा । तत्क्रमेण चतुरश्रझंपायाः $4+1+2=$ इति सप्तमात्राः । त्र्यश्रझंपायाः षट् । मिश्रझंपायाः दश । खण्डझंपाया अष्टौ । सङ्कीर्णझंपाया द्वादश । त्रिपुटताले लघु द्वे द्रुते । चतुरश्रत्रिपुटे $4+2+2=$ अष्टौ मात्राः । त्र्यश्रत्रिपुटे सप्त । मिश्रत्रिपुटे एकादश । खण्डत्रिपुटस्य मात्रा नव । सङ्कीर्णत्रिपुटस्य त्रयोदश । अटताले लघुद्वयद्रुतद्वयलक्षणे चतुरश्रजोतः $4+4+2+2=$ द्वादशमात्राः । मट्टस्य त्र्यश्रे दशमात्राः । मिश्राट्टस्याष्टादश । खण्डाट्टस्य चतुर्दश । सङ्कीर्णाट्टस्य द्वाविंशतिः । एकतालस्य लघोरेकस्य चतुरश्रभेदे चतस्रो मात्राः । त्र्यश्रभेदे तिस्रः । मिश्रभेदे सप्तमात्राः । खण्डजातौ पञ्च । सङ्कीर्णे नव ।

लयतालास्तु, वलनिका, द्रुतमध्यविलम्बिताः. मल्लकः, छिन्नकः, खण्डकः, खण्डिका, वामध्रुवा, द्विपदी, छिन्ना, खण्डधारा, जम्भेटिका, अवकृष्टकः, कलिकः, खलीरिका (?), अर्धचतुरश्रः, अर्धार्धचतुरश्रः, अभ्रान्तपादहीनः, मन्दगतिः, पञ्चालिका, उत्फुल्लकः, कादम्बः, तोटकः, चर्चरीयः, नर्तकः, मिश्रकलिकः, अर्धकलिकः, आविद्धः, पण्डरः, मुखरिकः, चित्रः, उपचित्रः, रमणीयः, विलोलः, मल्लघटी, विष्कम्भः, लघुः, आक्षिप्तिका, गुञ्जितः, पारणः, रागवर्धनः, उद्वीक्षणः, उद्दीपनः, करण्टकः, अर्धकरण्टकः, इति बहवः

दोला, बाला, सुभद्रा, सङ्गता, एते चत्वारो विभङ्गाः

कुटिला, आक्षिप्तिका, त्र्यश्रा, चतुरश्रा, वर्तुला, संयुक्तिका, एते षडुपभङ्गाः

तालाः

हेला, विगता, संपकेष्टाकः, नर्कुटः, नर्कुटी, खञ्जकः, खञ्जिका, आक्रीडिता, विलम्बा, एते द्वादशभङ्गतालाः । भङ्गतालास्तु चच्चत्पुटः, चाचपुटश्च (एतौ मूलतालौ) । चच्चत्पुटचाचपुटाभ्यां भङ्गतालाः कलामात्रभेदादुत्पद्यन्ते ।

समुद्रः, तालिका, व्यापकं, प्रस्तारः, त्र्यश्रं, चतुरश्रकं, मिश्रं, पुटं, चूलिका, वक्त्रं, अपरवक्त्रं, माला, इत्यङ्गानि। मार्गतालो यथाक्षर इति नाम्ना च कथ्यते। मार्गतालेषु पञ्चसु षट्पितापुत्रकस्य पञ्चपाणिः उत्तर इति नामनी व्यवह्रियेते।

नान्यः

—तालः

नान्यस्तु तालस्याङ्गान्यष्टाविंशतिसंख्यकान्युक्तवान्। तेषामङ्गानां प्रयोगो सप्तगीतिगायने मार्गतालप्रयोग एव नान्यत्र। तानि यथा– विदारी, महाविदारी, एककं, विवधं, तृतीयं, चतुर्थकं, अवगाढं, आरोही, प्रवृत्तं, अवरोही, पादाः, सन्धिः, माषघातः, वज्रं, संपिष्टकं, उपवर्तनं, उपपातः, वेणी, प्रवेणी, स्थितं, प्रवृत्तं, माहाजनिकं, मुखं, प्रतिमुखं, वैहायसिकं, शाखा, प्रतिशाखिका। दत्तिलेन कलापातः, पादभागः, मात्रा, परिवर्तः, वस्तु, विदारी, अङ्गं, लयः, पाणिः, यतिः, प्रकरणं, विधिः, आसारितं, पाणिका, गीतिः, मार्गः, इति सप्तदशाङ्गानि तालस्योक्तानि।

तालः मार्गदेशीभेदेन द्विविधः। मार्गतालो भरतेन पञ्चभिर्भेदैरुक्तः। यथा—चच्चत्पुट, चाचपुट, संपक्वेष्टाक, षट्पितापुत्रक, उद्घट्ट मार्गतालभेदाः। तेषां गुरुलघुप्लुतेषु मात्राभङ्गेन भङ्गताला जायन्ते। भङ्गाः विभङ्गाः उपभङ्गाः; इति। भङ्गतालेष्वनन्तेष्वपि द्वात्रिंशदेव ऋषिभिर्गृहीताः। ते सप्तगीतिप्रयोगेष्वेवोपयुज्यन्त इति नार्वाचीनैर्निरुक्ताः। भङ्गताला एव लयताला इति कैश्चिद्व्यवह्रियन्ते। अर्जुनाञ्जनेयादिभिः ध्रुवादितालाः सप्त वाष्टौ वा विनियुज्यन्ते। त एवाधुनातनगायनैः प्रयुज्यन्ते। देशीतालाः मतङ्गादिभिः प्रवर्तिताः। नन्दी एकोत्तरशतमेव तालानां मितिं कृतवानिति हरिपालादिभिरुक्तम्। नारदनन्दिनोः देशीतालसमुद्राख्यग्रन्थे सप्तशतं तालाः उक्ताः। जगदेकादिभिः भिन्नक्रमैः ताला निरुक्ताः। अत्र गोपतिप्पभूपालेन तालदीपिकाख्यग्रन्थे लक्ष्मीनारायणेन सङ्गीतसूर्योदये च प्रत्येकनामभिः, स्वविरुद्लक्षणैः विंशत्युत्तरद्विशततालाः निरुक्ताः। देवेन्द्रानन्तवेदादिभिः स्वनृत्यशास्त्रेषु देशीतालानां बहवो भेदा निदर्शिताः।

तालः कालसाम्यमिति दत्तिलः। तालात्साम्यं भवेत्साम्यादिह सिद्धिश्चेति।

तालः नृत्तगीतवाद्येषु कालमानं, इति भरतमतम्। अत्र कालो लघ्वादिमितया क्रियया सम्मितः। क्रिया तु सशब्दनिश्शब्दरूपहस्तक्रिया।

संयोगे च वियोगे च तलयोरुभयोर्यदा।
वर्तते व्याप्तिमान् कालः स तालः परिकीर्तितः॥

इति मतान्तरमच्युतोदाहृतम्।

तालस्तलप्रतिष्ठायामिति धातोर्घञन्ततः।

घञिप्राप्ते वृद्धिः। तालन्ति प्रतितिष्ठन्ति गीतवाद्यनृत्तान्यत्रेति तालः। यद्वा तल्यन्ते प्रकाश्यन्ते नृत्तगीतवाद्यानि येनेति तालः।

अथवा

तकारः शङ्करः प्रोक्तो लकारः शक्तिरुच्यते।
शिवशक्ति समायोगात् तालनामाभिधीयते।
शिवशक्तिरुच्यते।

अच्युतः

ध्रुवः

ध्रुवो निश्चल एवायं समाख्यातो ध्रुवाख्यया।

हरिपालः

—ध्रुवालङ्कारः

ध्रुवतालेन संबद्धो ध्रुवालङ्कार उच्यते।
ध्रुवतालः पुनर्द्वेधा नाट्यदण्डीध्रुवस्तथा॥
वीणावाद्यध्रुवश्चेति नाट्यदण्डीध्रुवे लघुः।
चतुरक्षरवानादौ गुरुः प्रतिदशाक्षरः॥
वीणावाद्यध्रुवे स्यादौ लघू द्वौ चतुरक्षरौ।
ततष्षडक्षरोच्चारसम्मितो लघुशेखरः॥
चतुर्दशाक्षरमितावाह्त्यैतावुभौ ध्रुवौ।
ध्रुवयोरनयोस्तावन्नाट्यदण्डीध्रुवःपरम्॥
प्रामाणिकश्शास्त्रदृष्टः स एव भुवि वैणिकैः।
वीणायां वाद्यते रक्तिलाभाद्धातुलयान्वितः॥

सरिगमगरि सरिगरि सरिगम रिगमपमग रिगमग रिगमप

वेङ्कटमखी

ध्रुवकः—वाद्यप्रबन्धः

यश्चानेकेषु वाद्येषु स्यादावृत्तोऽन्तरान्तरा।
वाद्येषु ध्रुवभावाच्च ध्रुवकः परिकीर्तितः॥

वेमः

ध्रुवको भूरिवाद्येषु स्यादावृत्तोऽन्तरेऽन्तरे॥

शार्ङ्गः

ध्रुवका—(क्रिया) तालाङ्गम्

क्रियाशब्दे द्रष्टव्यम्।

ध्रुवा

ध्रुवासंज्ञानि यानि स्युः नारदप्रमुखैर्द्विजैः।
गीताङ्गानि तु सर्वाणि विनियुक्तान्यनेकशः॥
या ऋचः पाणिका गाथाः सप्तरूपाङ्ग एव च।

सप्तरूपप्रमाणं हि तद्ध्रुवेत्यभिसंज्ञितम् ।
ध्रुवमन्योन्यसंबद्धा यस्मात्तस्माद्ध्रुवा स्मृता ॥

भरतः

—प्रबन्धः

उत्तमप्रमुखैर्भेदैः त्रिधेयं परिकीर्तिता ।
पदान्युद्ग्राहके पञ्चाभोगे किल पदानि च ॥
स्वरैः पदैश्च गीयन्ते देशीरागैर्मनोहरैः ।
आभोगोऽस्य पदे नाम विरुदानि च पञ्चमे ॥
गीयन्ते यत्र सा धीरैरुत्तमत्वे प्रतिष्ठिता ।
पदैश्चतुर्भी रचिता मध्यमा कीर्तिता बुधैः ।
पदैस्त्रिभिर्विरचिता भवेदधमसंज्ञया ॥

हरिपालः

## ध्रुवादिषु कलाः

ध्रुवमार्गे कला ज्ञेया लघुगुर्वादिकल्पना ।
चित्रे मात्रे उभे कला ।
मालाध्रुवतस्तु कला वार्तिके दक्षिणे पुनः ।
अष्टौ मात्राः कला ज्ञेया ॥

वेमः

## ध्रुवाप्रयोगविधिः

वस्तु प्रयोगं प्रकृतिं रसं भावं ऋतुं वयः ।
देशं कालमवस्थां च ज्ञात्वा तत्तद्विधा ध्रुवा ॥
प्रयोक्तव्या प्रयोगज्ञैः प्रयोगः पुनरुच्यते ।
आदौ गीतमथो वाद्यं ततो नृत्तं च योजयेत् ॥
एतेषां मेलनं यत्तु स प्रयोग उदाहृतः ।
यानि वस्तूनि वाक्येषु वक्तव्यानीह नाटके ॥
तानि सर्वाणि गीतेन प्रयोज्यानि प्रयोक्तृभिः ।
ध्रुवायाश्शौरसेन्यादिभाषाणां नियमश्च यः ।
छन्दसां नियमस्तद्वदौपम्यार्थपरिग्रहः ॥

वेमः

## ध्रुवाभेदाः

शीर्षकी चोद्गता चैवाऽनुबन्धा च विलम्बिता ।
अड्डिता चापकृष्टा चेत्येते भेदाः प्रतिध्रुवम् ।
षडुक्ता मुनिना तेषां क्रमाल्लक्षणमुच्यते ॥

वेमः

ध्रुवा पञ्चविधा ज्ञेया प्रथमाक्षिप्तिका भवेत् । —
प्रावेशिकी द्वितीया च तथा प्रासादिकी पुनः ।
अन्तराख्या चतुर्थी स्यादन्या नैष्कामिकीति च ॥

नान्यः

## ध्रुवाभेदहेतवः

अथ जातिप्रमाणं च प्रकारौ नामकल्पना ।
स्थानं चेति ध्रुवाणां स्युः भेदकाः पञ्च हेतवः ॥
वृत्ताक्षरप्रमाणं तु जातिरित्यभिधीयते ।
षट्कलाष्टकले चैव प्रमाणे द्वे प्रकीर्तिते ॥
समार्धविषमाणां तु वृत्तानां तु विधीयते ।
नाट्यज्ञैः ...............प्रकार इति कथ्यते ॥
कुलाचाराश्रयं नाम यथा नृणां विधीयते ।
तथा स्थानाश्रयोपेता ध्रुवाणां नाम कल्पना ।
यद्वा वृत्तविशेषैश्च स्वेच्छया नाम कल्पयेत् ॥

वेमः

## ध्रुवायोगे विधिः

अनिबद्धपदा ज्ञेया विषमाक्षरयोजिता ।
छन्दो वृत्तपदैर्बद्धा निबद्धा कथिता ध्रुवा ॥
सतालास्त्वनुमन्तव्याः शेषास्तालविवर्जिताः ।
उत्तमाधमपात्राणां गुरुप्राया ध्रुवा भवेत् ॥
मध्यमानां समा प्रोक्ता लघुप्राया ध्रुवाः स्मृताः ।
एकाक्षरादिपङ्क्तिपर्यन्तमधुना क्रमात् ॥
एकाक्षरादिषडन्तं चतुर्भिस्ताल इष्यते ।
गायत्र्यादिजगत्यन्तं द्विपदस्ताल इष्यते ।
जगत्यादि तूत्कृत्यन्तं तालः प्रतिपदे भवेत् ॥

नान्यः

## ध्रुवालङ्काराः

आद्यो ध्रुवस्ततो मण्ठः (मठयः) प्रतिमठयो निसारकः ।
अठतालस्ततो रास एकतालश्च सप्तमः ॥
ध्रुवष्षोडशविधः मठयकष्षड्विधः स्मृतः ।
चतुर्विधः प्रतीमठयः षड्विधश्च निसारुकः ॥
षड्विधश्चाठतालश्च रासकश्च चतुर्विधः ।
त्रिविधश्चैकतालश्च गीतभेदाः पृथक् पृथक् ॥

संगीतसार

## ध्वजिनी—ध्रुवावृत्तम्

तृतीयपञ्चमान्त्यानि प्रथमं सचतुर्थकम् ।
षष्ठं च नैधनं चाथ गुरुणि ध्वजिनी यथा ॥
विलसंति अ कमलसंडे पुप्फसुगंधके कुसुमलुद्धा ।
(विलसन्ति च कमलषंडे पुष्पसुगंधे कुसुमलुब्धाः)

भरतः

ध्वजोन्नतम्—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म ध नि स.

(अव) स प म ग रि स.

मञ्ज

ध्वनिः

यत्रातिशायी व्यङ्ग्योऽर्थो वाच्यात्काव्ये ध्वनिर्भवेत्।
प्रधानभूतस्फोटाख्यव्यङ्ग्यस्य व्यञ्जकस्तु यः॥
शब्दस्तत्र ध्वनिरिति व्यवहारः कृतो बुधैः।
यस्माद्भावितवाच्यस्य व्यङ्ग्यस्य व्यञ्जनक्षमम्॥
शब्दार्थयुगलं तच्च ध्वनिरित्यभिधीयते।
ध्वनिः स्यादुत्तमं काव्यं सप्रबन्धस्सुदुर्लभः॥

शारदातनयः

मन्द्रादिस्थानभेदेन यो नादः स्फुरति स्फुटम्।
आरोहिक्रमतस्तज्ज्ञैः स एव ध्वनिरुच्यते॥

काबुलादिभेदा द्रष्टव्याः।

पार्श्वदेवः

—रागः

अथ ध्वनिः पञ्चमांशग्रहन्याससमन्वितः।
षड्जेन बहुलोऽल्पस्तु गान्धारेण तथर्षभे।
संपूर्णष्षड्जमन्द्रश्च सोऽयं राग उदीरितः॥

हरिः

पञ्चमांशग्रहन्यासा षड्जव्यापी पमाधिका।
रिगाल्पा च समन्द्रा च पूर्णे ध्वनिरसौ भवेत्॥

जगदेकः

—भाषाङ्गरागः

तारस्थानविवर्जिता ग्रहविरत्यंशोक्तषड्जस्वरा
मध्यस्थानगमध्यमा धपपरित्यक्ता वितारस्वरा।
भाषाङ्गं ध्वनिनामधेयमवनीभारव्रतासन्तत-
श्रीतामेन्द्रकुलावतंसमणिना प्रोक्तं मतङ्गोक्तितः॥

अत्र तामराजतनयः कालसेन नृपो ग्रन्थकर्ता।

कुम्भः

—श्रुतिः

मन्द्रपञ्चमप्रमा श्रुतिः।

पण्डितमण्डली

ध्वनिकुट्टनी—प्रबन्धः

डेङ्किकायां पदे तस्यां आदितालकृते यदि।
नान्तरा विरतिः क्वापि ततस्तालान्तरं ध्रुवे॥
कङ्कालमदृतालाभ्यां विना मेलापकेन च।
गीतभेदैर्विशेषज्ञैस्तदोक्ता ध्वनिकुट्टनी॥

जगदेकः

ध्वनिगुणभेदः

उच्चैस्तरो, ध्वनी रूक्षो विज्ञेयो वातजो बुधैः।
गम्भीरो घनशीलश्च ज्ञातव्यः पित्तजो ध्वनिः॥
स्निग्धश्च सुकुमारश्च मधुरः कफजो ध्वनिः।
त्रयाणां गुणसंयुक्तो विज्ञेयः सन्निपातजः॥

तुम्बुरुः

ध्वनिप्रचुरता—वंशे फूत्कारगुणः

ध्वनेः प्रचुरतालापपीवरत्वमुदाहृतम्।

कुम्भः

ध्वनिभेदाः

काबुलो बाम्बलश्चैव नाराटो मिश्रकस्तथा।
ध्वनिश्चतुर्विधः प्रोक्तो गीतविद्याविशारदैः॥

पार्श्वदेवः

ध्वाडशृङ्खला—देशीनृत्तम्

पुरोऽग्रे गिरिकन्याया महादेवेन दर्शिताः।
ध्वाडा द्वादशसंख्याकास्तन्नामान्यभिदध्महे॥
रायबङ्कालनिश्शङ्कौ दाण्डस्यैवाङ्कदिण्डकः।
डुल्लमयी कत्रदिण्डः पक्षिशार्दूलकस्ततः॥
राजपक्षी सालुवश्च ध्वाडास्सूलूयुता मताः।
अडालादन्तरौ घूर्सी मत्स्यपुटं चतुर्थकम्।
स्थलस्था गदिता तद्ज्ञैः भरतादिमुनीश्वरैः॥

वेदः

ध्वाडाः—देशीनृत्तानि

सूलूपूर्वोत्प्लुतिर्यत्र तेऽष्टौ ध्वाडाः प्रकीर्तिताः।
चत्वारोऽन्ये समुत्प्लुत्यैदुच्चस्थितिविनिर्मिताः।
एवं द्वादशधा ध्वाडाः शङ्करेण विनिर्मिताः॥

वेदः

न

नकुला—वीणा

द्वितन्त्रिका वीणा।

नकुलादिलक्षणे द्रष्टव्यम्।

—वीणा (नकुलाद्या वीणाः)

नकुलात्रितन्त्र्यौ स्यातां द्वित्रितन्त्रीकले क्रमात्।
दण्डाग्रतो तयोरुक्ता मुष्टिद्वंद्वमतःपरम्॥

तुम्बस्य बन्धनं कार्यमेकतन्त्रीवदेतयोः ।
राज्ञोपदेशतः कार्यं स्वरागप्रकाशनम् ॥

कार्यं कोणेन विदुषा केचिदत्र प्रचक्षते ।
त्रीणि तुम्बानि तिस्रश्च तन्त्र्यो मंद्रादिषु त्रिषु ॥

स्थानेषु युक्तिमाश्रित्य बन्धनीयाः प्रयत्नतः ।
शार्ङ्गी गान्धर्ववीणा च पद्मवीणा स्वरंगिका ॥

नादवेदी श्रुतिपतिरिति देशीविदो विदुः ।
षड्वीणा दण्डमानं तु क्रमादासां निरूप्यते ॥

दण्डमानं तु नकुले मुष्टयः स्युस्त्रयोदश ।
त्रितन्त्रिकायामुद्दिष्टमेकादशकमुष्टयः ॥

शार्ङ्ग्यादि त्रिषु वीणासु स्यात्तुम्बद्वितयं तथा ।
तन्त्रीत्रये दण्डमानं सार्धाःस्युर्द्वादशमुष्टयः ॥

स्वराङ्ग्यां तुम्बमेकं तु तन्त्रीणां त्रितयं तथा ।
दण्डमानमथास्यां तु सार्धाः स्युर्दशमुष्टयः ॥

दण्डमानं नादवेद्यां सपादा दशमुष्टयः ।
तिस्रस्तन्त्रीस्तुम्बके द्वे तथाश्रुतिपतिर्भवेत् ॥

दशमुष्टिमिता दण्डे त्रितन्त्र्येकक तुम्बिका ।
चित्रा स्यात्सप्ततन्त्रीभिर्नवभिः स्याद्विपञ्चिका ॥

न तत्र विस्तरः कार्यो नास्ति यल्लोकवर्त्मनि ।
कोणाङ्गुलीभ्यामनयोर्वादनं तद्विदो विदुः ॥

चित्राङ्गुली वादनीया कोणवाद्या विपञ्चिका ।
इति व्यवस्थामनयोर्वादने केचनाभ्यधुः ॥

कुम्भः

## नकुलादिलक्षणम्

तन्त्रीद्वयेन नकुलः स्यादन्वर्था त्रितन्त्रिका ।
तन्त्रीभिस्सप्तभिश्चित्रा विपञ्ची नवभिर्मता ॥

तन्त्रीणामेकविंशत्या कीर्तिता मत्तकोकिला ।
मुख्येयं सर्ववीणानां त्रिस्थानैस्सप्तभिः स्वरैः ॥

सम्पन्नत्वात्तदन्यास्तु तस्याः प्रत्यङ्गमीरिताः ।
अस्यां पट्करणानि स्युरष्टौ धातुभिदो मताः ॥

उभयेषां भिदः पञ्च तद्वदाविद्धधातुजाः ।
धातवो देशवृत्तिस्थास्त्रयस्त्रिंशतिरित्यमी ।

तदङ्गैरुदाहृतास्तेऽत्र नास्माभिरुपदर्शिताः ॥

तदङ्गैः भरतनान्यादिभिः ।

हम्मीरः

**नखकर्तरी**—वीणायां दक्षिणहस्तव्यापारः

चतुर्भिर्नखरैर्यत्र शीघ्रं दक्षिणहस्तधीः ।
क्रमादाहन्यते तन्त्री तदास्यान्नखकर्तरी ॥

कुम्भः

—वादनम् (दक्षिणहस्तव्यापारः)

क्रमाद्द्रुतनखैर्घातश्चतुर्भिर्नखकर्तरी ।

शार्ङ्ग

## नटभैरवी—मेलकर्ता (रागः)

स ० रि ग ० म ० प ध ० नि ० स .

मज्ञ

## नटमल्लारिरागध्यानम्

नटमल्लारिरनीलो नृत्यन्कुतुकेन नर्तयन् शिखिनः ।
कलितकदम्बो ललितो मिलितालिः सौरभात्कलितः ॥

सोमनाथः

**नटवर्धिनी**—मेलरागः ( नटभैरवीमेलजन्यः )

( आ ) स रि ग म ध नि स .
( अव ) स नि प म रि ग म रि स .

मज्ञ

## नटोरगी

शुभङ्करेण सङ्गीतदामोदरे नामास्य गृहीतम् । ग्रन्थो नोपलब्धः ।

**नट्टः**—मेलकर्ता

निगौ त्रिश्रुतिकौ यत्र पताद्यौ षड्जमध्यमौ ।
विशुद्धनट्टमेलोऽसौ शुद्धाषड्जम (रिषभ) पञ्चमः ॥

शुद्धनट्टस्स विज्ञेयो ग्रहांशन्यासषड्जकः ।
गमकैर्गीयते सायं यस्याद्या मूर्छना मता ॥

श्रीकण्ठः

—रागः

पञ्चमगान्धाराचधितारो मन्द्रश्च शेषमको (?) नट्टः ।
न्यासांशग्रहधैवतयुक्तः (पूर्णश्च) धैवतीजातः ॥

नान्यः

पूर्णो धैवतन्यासग्रहांशसद्दशस्वरः ।
नट्टस्तारश्च मन्द्रश्च कृतगान्धारपञ्चमः ॥

मतङ्गः

श्रीरागवत्तथा नट्टः किन्तु नैषोऽल्पपञ्चमः ।
धरितारो निमन्द्रश्च गमकैरुत्कटैर्युतः ॥
श्रीरागवदिति ।
श्रीरागो यथा जात्यादिषु षाड्जः तथेत्यर्थः ।
धरीत्यादिना विशेषमाह ।

नारायणः

**नट्टनारायणः— मेलरागः (केदारमेलजन्यः)**

नट्टनारायणो रागः षड्जत्रितयभूषितः ।
काकल्यन्तरसंयुक्तो गातव्यस्सर्वदा बुधैः ॥

श्रीकण्ठः

गान्धारिकापञ्चमिका समध्या, यज्जन्महेतुर्मपगस्वराढ्यः ।
आन्दोलितश्शेषरवश्च नट्ट, नारायणस्स्याद्धृतधैवतांशः ॥

नान्यः

भवेन्मध्यमगान्धारपञ्चमैर्बहुलो यदि ।
आन्दोलितस्वरो धांशो नट्टनारायणस्तदा ॥
स्वरत्रयस्य बाहुल्यादुक्तस्यात्रापि जायते ।
रूपकालापकावत्र प्रेङ्खकस्येव सर्वदा ॥

मतङ्गः

धैवतांशग्रहन्यासो नट्टनारायणो दिवा ।

नारायणः

**—मेलरागः**

वेलावलीसमुद्भूतो मांशो रिन्यासको नटः ।
अवरोहे गहीनः स्याद्गान्धारादिकमूर्छनः ।
सायं गेयः ।

अहोबिलः

**—रागाङ्गरागः**

ककुभादुत्थितो न्यासग्रहयोर्धैवतान्वितः ।
तारगान्धारभूयिष्ठो मन्द्रपञ्चमरञ्जितः ।
पूर्णश्च वर्षे करुणे नट्टनारायणो मतः ॥

भट्टमाधवः

**—रागः**

मध्यमे कैशिकीजातः षड्जन्यासांशकग्रहः ।
नट्टनारायणाभिख्यः शृङ्गारे चाखिलस्वरः ॥

हम्मीरः

त्रिषड्जो गधवर्जस्स्यात् रागो नट्टनारायणः ।

मद

**नट्टनारायणरागध्यानम्**

नव्याम्बुदश्यामतनुर्मनोज्ञः
प्रफुल्लपङ्केरुहलोचनश्रीः ।
चतुर्भुजः शङ्खगदारिपद्मैः
नारायणोऽसौ नितरां विभाति ॥

श्रीकण्ठः

स्त्रीकेसरी स्यात्पुरुषो नवीनः सङ्गीतशाले भ्रमिमादधानः ।
गायन् सतालं सलयं मनोज्ञः स्यान्नट्टनारायण एष रागः ॥
अयं संपूर्णः ।

संगीतसरणिः

**नट्टनारायणः—रागः**

नट्टनारायणाख्योऽथ रागः ककुभसंभवः ।
धैवतांशन्यासयुतो गान्धारस्वरतारकः ।
पञ्चमस्वरमन्द्रश्च पूर्णोऽयं समुदीरितः ॥

हरिः

**नट्टमल्लारिका—रागः (सङ्कीर्णः)**

जाता नट्टस्याथ मल्लारकस्य
स्यादंशाभ्यां नट्टमल्लारिका च ।

नारायणः

**नट्टारागध्यानम्**

विदेशस्थस्य कान्तस्य वृत्तान्तमतिविह्वला ।
नट्टा रहितवेषौघा पृच्छन्ती काकमादरात् ॥
इयं संपूर्णा । नाटीत्युच्यते ॥

संगीतसरणिः

अयं नट-नर्त, नाट-नाट्ट नामभिर्व्यवह्रियते ।
तुरङ्गमारूढविशालबाहुर्विशुद्धचामीकरचारुवर्णः ।
रणे प्रतापी रुधिरार्द्रदेहो विराजते शुद्धनटाख्यरागः ॥

श्रीकण्ठः

**नट्टा—रागः**

अथ नट्टा तु संपूर्णा षड्जन्यासग्रहांशका ।
तारमन्द्रौ तु गान्धारे पञ्चमे च समस्वरा ॥

हरिः

नट्टा नट्टपदख्याता सकम्पान्दोलितस्वरा ।
हासेऽद्भुते च शृङ्गारे गातव्या निशि मङ्गले ॥

नारायणः

**—भाषाङ्गरागः**

हिन्दोलपिञ्जरोत्पन्ना नट्टा गपधतारयुक् ।
निमन्द्रा सग्रहन्यासा संपूर्णा निग्रहाथवा ।
गातव्या पश्चिमे यामे रसयोः शुचिवीरयोः ॥
शुचिः—शृङ्गारः ।

भट्टमाधवः

—प्रथमरागः

हिन्दोलके पिञ्जरिका च भाषा
नट्टस्ततः स्यान्निधमन्द्रतारा ।
सांशग्रहा तारतरा गपाभ्यां
समस्वरा वीररसे शुचौ च ॥

मोक्षः

—रागः

हिन्दोलपिञ्जरी भाषा तज्जा नट्टा समस्वरा ।
गपधतारा निमन्द्रा सन्यासांशग्रहा तथा ॥

हम्मीरः

नडनेरिः—देशीनृत्तम्

द्रुतमानाद्दादिताल्लाङ्घ्र्यो भूयो विवर्तनम् ।
लोलितं भ्रमरं यत्र नडनेरिस्स उच्यते ॥

दामोदरः

संहतस्थानके सूलं गृहीत्वा शिखरं हृदि ।
कृत्वा ततत्सौष्ठवेन कुर्यात्तु तलदर्शिनी ॥

पताकौ पार्श्वयोः पश्चाच्छनकैश्च प्रसारयेत् ।
पुनः शनैः पताकौ च तावानीय शिरो हृदि ॥

कृत्वा ततो दक्षवामपर्यायेण द्विवारकम् ।
ततः पताकः प्रसरः कुर्याच्च तदनन्तरम् ॥

चतुर्दिक्षु प्रसरणं पताकस्य ततःपरम् ।
पर्यायेण पञ्चपदी सूलू ग्राह्या पुनस्ततः ॥

पर्यायेण भ्रमिद्वन्द्वात्मकस्तु कृतकालतः ।
वामदक्षिणयोः पश्चात्पार्श्वयोस्तिरिपं भवेत् ।
ततस्तु मलकं कृत्वा विधेयं तु तकारणम् ॥

वेदः

नतम्—देशीस्थानम्

तिर्यक् प्रसृतजङ्घाकं स्रस्तमुक्तकरद्वयम् ।
स्थानमेतन्नतं प्रोक्तं श्रमालस्यादिदर्शने ॥

वेमः

—शयनस्थितः

ईषत्प्रसारिते जङ्घे यत्र स्रस्तौ करावुभौ ।
आलस्यश्रमखेदेषु नतं स्थानं विधीयते ॥

भरतः

—पार्श्वम्

नतबाहुनितम्बांसं नतं स्यादुपसर्पणे ।

विप्रदासः

—जानु

भूमिप्राप्तं जानु नतं प्रोक्तं पातेऽभिवादने ।

अशोकः

आनतं भूगतं जानु भवेत्पादे नमस्कृतौ ।

वेमः

नता—जङ्घा

नम्रजानुस्तु या जङ्घा सा नता परिकीर्तिता ।
गतस्थानासनेष्वेषा वीरसिंहसुतोदिता ॥

अशोकः

—नासिका

मुहुर्विश्लिष्टसंश्लिष्टा पुटा नासा नतोच्यते ।
विच्छिन्नमन्दरुदिते सोच्छ्वासाभिनयेऽप्यसौ ॥

विप्रदासः

अत्यर्थसंश्लिष्टपुटाना सिका कथिता नता ।
उच्छिन्नरोदने सा स्याद्विनियोगः प्रकीर्तितः ॥

सोमेश्वरः

—ग्रीवा

मदाद्ग्रीवा नता ज्ञेया सा स्याद्भूषणबन्धने ।

वेमः

नम्रा ग्रीवा नता प्रोक्ता धीरैः कण्ठावलम्बने ।
हारादिबन्धने चैषा कामिनीभिर्नियुज्यते ॥

अशोकः

नतम्—देशीनृत्तम् (उडुपाङ्गम्)

नन्द्यावर्तं स्थानकं स्यान्मराला चारिका तथा ।
ललितो भ्रमरो हस्तो नत्रं स्यात्समतालतः ॥

वेदः

अत्र नन्द्यावर्तं देशीस्थानम् । मराला—देशीचारी । समतालस्य लक्षणम्—लौ दौ स्यातां विरामान्तौ ।

नदी —ध्रुवावृत्तम् (अष्टाक्षरम्)

प्राग्यदि निधनगतं स्यादथ गुरु सततम् ।
यत्र हि चरणविधौ सा खलु भवति नदी ॥
हंसकुलसमुदिदे । भनलगाः ।

भरतः

हर्षौत्सुक्ये नदी कार्या चेटीभिर्मदनोत्सवे ।
हिन्दोलकेन रागेण तालः पादाक्षरेण तु ॥

नान्यः

**नन्दः**—प्रबन्धः

सतालस्तेन्नकैर्गेयो युक्तो द्वित्रिचतुष्पदैः ।
नन्दाभिधः प्रबन्धोऽयं वीणावाद्यमनोहरः ॥

श्रीकण्ठः

**नन्दनं**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स रि म ग म प ध नि ध स.
(अव) स नि ध नि प म ग रि ग स.

मञ्ज

**नन्दः**—गीतालङ्कारः (निसारुकभेदः)

प्लुतमेकं भवेद्यत्र क्रीडातालः स कथ्यते ।
अनेन गीयते नन्दो नित्यं निस्सारुकोत्तमः ॥

संगीतसारः

—गीतालङ्कारः (रासकभेदः)

प्लुतश्च गुरुरेकश्च तालो विद्याधरः स्मृतः ।
यत्रासौ रासको नन्दो गीयतेऽभ्युदयः शुभः ॥

संगीतसारः

**नन्दनः**—प्रबन्धः

कथ्यते नन्दनाख्योऽथ विरुदैस्तेन्नकैर्युतः ।
नन्दनाख्येन तालेन नन्दनो गीयते बुधैः ॥

हरिपालः

—देशीतालः

लौद्रुतौ च प्लुतश्चान्ते ताले स्यान्नन्दनाभिधे ।।००ऽ
धधा पपा मा गारीसा

जग

क्रमाल्लप्लुतयोर्मध्ये विन्दुद्वन्द्वं तु नन्दने ।००ऽ

वेमः

—वर्णालङ्कारः

नन्दनो द्वि......गीत्वा स्वरचतुष्टयम् ।
त्रयमादियुगं गायेत्पुनरेवं चतुष्टयम् ॥

यथा—सरिगमसरिगम सरिसरिसरि सरिगम इत्यादि ।

व्युत्क्रमः—मगरिस मगमगमप मगरि इत्यादि । आरोही अवरोही च नन्दनः । मण्डतालानुगतत्वादलङ्कारत्वम् ।

संगीतसरणिः

—गीतालङ्कारः (ध्रुवभेदः)

नन्दद्वयेन्दुवर्णाङ्घ्रिर्नन्दनः सर्वसिद्धिदः ।
पूर्णश्रृङ्गारवीराभ्यां कन्दुके च विधीयते ।
लघुद्वयं विरामान्तं ताले कन्दुकसंज्ञके ॥
नन्दद्वयेन्दुवर्णः पादः एकोनविंशत्यक्षरसंमितः ।

संगीतसारः

**नन्दनावरी**—मेलरागः (खरहरप्रियामेलजन्यः)
(आ) स रि ग म प नि ध नि स.
(अव) स ध प म रि स.

मञ्ज

**नन्दयन्ती**—जातिः

अथोच्यते लक्ष्म तु नन्दयन्त्या अंशो भवेत्पञ्चम एव तस्याम् ।
ग्रहोऽत्र गान्धारक एव नांशो ग्रहांशयोरैक्यमपोद्यतेऽत्र ॥
प्राहुर्ग्रहं पञ्चममेव केचिन्मन्द्रर्षभस्यात्र बहुत्वमुक्तम् ।
स्थानान्तरे तस्य ततोऽल्पता च स्यात्षड्जलोपेन च षाडवत्वम् ।
स्यान्मध्यमग्रामिकहृष्यकाख्या सा मूर्छना पञ्चमपूर्विकाव ।
द्वात्रिंशदेवात्र कला भवन्ति चच्चत्पुटश्चाष्टकलोऽत्र तालः ॥
स्यान्नाटकस्य प्रथमे तथाङ्के गाने ध्रुवाया विनियोजनं स्यात् ।
गान्धारको न्यास इहोदितोऽपन्यासौ तथा मध्यमपञ्चमौ द्वौ ॥

रघुनाथः

नन्दयन्त्यामपन्यासौज्ञेयौ मध्यमपञ्चमौ ।
ग्रहो न्यासश्च गान्धारः पञ्चमोंऽशः प्रकीर्तितः ॥
अन्ध्रीवत्षाडवं ज्ञेयमनौडुवितमेव च ।
स्यान्मन्द्रर्षभसञ्चारो लङ्घनीयश्च स क्वचित् ॥

दत्तिलः

योनिस्तु नन्दयन्त्या आर्षभिः पञ्चमी स गान्धारी इति सूत्रम् ।
अंशः पञ्चम एको मध्यम एषो भवेदपन्यासः ।
गान्धारादिन्यासाः षड्जविहीनं च षाडवं विद्यात् ॥

नान्यः

**नन्दहोराली**—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स ग म ध नि स.
(अव) स नि ध म ग रि स.

मञ्ज

**नन्दा**—प्राकृते द्विपदी

विषमा—चतुर्मात्रिक एकः पञ्चमात्रिक एकः
चतुर्मात्रिक एकः ।
समा—द्वौ चतुर्मात्रिकौ ज ल ग ।

विरहाङ्कः

—श्रुतिः

धैवतस्य प्रथमा श्रुतिः ।

अनूपः

**नन्दासी**—रागः

सषड्जांशग्रहन्यासा धैवतर्षभवर्जिता ।
निषादमन्द्रा मतारा नन्दासी नामतो हि सा ॥

सोमेश्वरः

## नन्दिकाम्भोजी

खट्वाधिष्ठितनायकस्य पुरतो दूरस्थितां लज्जया
दीपस्तम्भनिवासभूनिवसितामीषत्तदालोकिनीम्।
नीलाङ्गीं भयसंयुतां सुवसनां लीलानवोढां सदा
ध्याये कान्तिकरापकर्षणवतीं श्रीनन्दिकाम्भोजिकाम्॥

रागसागरः

## नन्दिकेश्वरः

भरतार्णवकारः। अयमतिप्राचीनः। भरतमताद्भिन्नमेवास्य-मतम्। करणभूषणमिति नन्दिग्रन्थोऽन्यः श्रूयते। नन्दिकेश्वर-मतात्पूर्वरङ्गे नृत्तप्रक्रिया कीर्तिधराचार्येण भरतमतत्वेन उदाहृतेति अभिनवगुप्तेनोक्तम्। वस्तुतः सा प्रक्रिया नाटके न प्रयोज्या नृत्तारम्भ एव प्रयोज्येति संप्रदायः। अयं नन्दी मतङ्गात्प्राचीनः यतः नन्दिकेश्वरस्य द्वादशस्वरमूर्छना मतङ्गेन सम्यक् निरूपिता। भरतार्णवस्य प्राचीनता सद्भिः संदिह्यते। अयं ग्रन्थः क्री, ११५० काल एव रचित इति ज्ञायते।

**नन्दिनी—मेलरागः (नागनन्दिनीमेलजन्यः)**

(आ) स म ग म प ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**—प्राकृते मात्रावृत्तम्**

सः सः सः सः

विरहाङ्कः

**—मूर्छना**

गान्धारग्रामे षष्ठी।
(आ) स रि ग म प ध नि.
(अव) नि ध प म ग रि स.

नान्यः

मनो नन्दयते तेषां नन्दिनी षड्जसंश्रिता।
ऋषीणां स्नातकानां च विश्वेदेवाश्च दैवतम्॥

नान्यः

**नन्दी—देशीतालः**

नन्दिताले च विज्ञेयं लोद्रुतौ लोगुरुद्वयम् । ० ० । ऽ ऽ

सुधा

**—हस्तः**

कनिष्ठानामिकाङ्गुष्ठाः संश्लिष्टाश्च विशेषतः।
तर्जनीमध्यमे वक्रे नन्दिहस्त इतीरितः॥
पुरोभागस्थितौ तौ चेद्वृषभार्थनिरूपणे।
ईशानवाहनार्थेऽपि नन्दिहस्तो नियुज्यते॥

विनायकः

**—मूर्छना**

नान्दीति नामान्तरमप्यस्या दृश्यते।

नारदादिमते नन्द्यावर्तग्रामे प्रथमा मूर्छना। नारदादय इति नारदीयशिक्षाकारः, वादिमत्तगजाङ्कुशकारेणोच्यते।

नन्द्यावर्तोद्भवे ग्रामे मूर्छां याति यदादिजः।
स्वरो नन्दीति सा नाम मूर्छनां भरतोऽब्रवीत्॥

वादिमत्तः

**नन्द्यावर्तम्—देशीस्थानम्**

वर्धमानस्य पदयोरन्तरं चेत् षडङ्गुलम्।
द्वादशाङ्गुलमानं वा नन्द्यावर्तं तदुच्यते॥

वेमः

**—अङ्गुलिभूषणम्**

ऋज्वायतचतुष्कोणक्रमोन्नतनिवेशिभिः।
वज्रैः मध्यगमाणिक्यैर्नन्द्यावर्ताङ्गुलीयकम्॥

सोमेश्वरः

**नन्द्यावर्तः—ग्रामः**

ग्रामशब्दे द्रष्टव्यम्।

**नभावमध्यः—मेलरागः (धर्मवतीमेलजन्यः)**

(आ) स रि म प नि स.
(अव) स नि म ग रि स.

मञ्ज

**नभोमणिः—मेलरागः (नवनीतमेलजन्यः)**

(आ) स रि ग रि म प स.
(अव) स नि ध प म ग रि स.

मञ्ज

**नमनिका—देशीलास्याङ्गम्**

अङ्गानां यत्र पात्रस्य प्रयासव्यतिरेकतः।
नमनं स्यात्प्रयोगेषु दुष्करेष्वपि सा तदा।
मता नमनिका धीरैः सभ्यानन्दविवर्धनी॥

अशोकः

**नम्रः—बाहुः**

मनागवक्रीकृतो नम्रः स्तोत्रे माल्यादिधारणे।

अशोकः

**नयः—नाट्यालङ्कारः**

नीतिर्नयः। यथा— विनीतवेषेत्यादि दुष्यन्तवाक्यम्।

सागरः

**नरणू—रागः**

देशाख्या नरणू संज्ञा ह्युपाङ्गा धैवतैर्युता।

मदनः

**नरवासिनी—मेलरागः (मेचकल्याणीमेलजन्यः)**

(आ) स रि ग म प स.
(अव) स नि ध प म रि स.

मज

**नरस्तम्भः**

चोरभूतपिशाचादिदर्शनविरहोद्रेकातपाधिक्याशान्तचिन्ताविशेषादिजनिता चित्तभ्रान्तिर्नरस्तम्भः।

शृङ्गार

**नर्कुटः—भङ्गताल:**

गद्वयं लद्वयं गद्वयम्। पुनश्च गद्वयं लद्वयं गद्वयम्।
SS ।। SS SS ।। SS

नान्यतुम्बुरू

तुम्बुरुरस्मिन्ताले शम्यानिरन्तरेऽत्याह।

**नर्कुटकम्—प्राकृते मात्रावृत्तम्**

य र न ग चतुर्मात्रिकः एकः ग ग.

विरहाङ्कः

**नर्कुटी—भङ्गताल:**

नर्कुटवत्

नान्यः

**नर्तः—रागः**

नर्तरागो भवेत्पांशो द्विश्रुतिस्वरदुर्बलः।
पञ्चमी..................मध्यमापकीर्तितः।।

मोक्षः

मध्यमापञ्चमीजातो नर्ताख्यः कीर्त्यतेऽधुना।
पञ्चमांशग्रहन्यासे मध्यमः काकलीयुतः।।

मूर्छना पञ्चमाद्येषु स्वरेष्वत्र विधीयते।
प्रसन्नमध्यसंयुक्तस्तथा गान्धारपञ्चमौ।
संचारिवर्ण इत्येष नर्ताख्योऽयं निरूपितः।।

हरिः

**नर्तकी**

यौवनादिगुणोन्मत्ता नृत्तगीतविचक्षणा।
सदा प्रगल्भा च तथा त्यक्तालस्या जितश्रमा।।

समागतासु नारीषु रूपयौवनकान्तिषु।
न दृश्यते गुणैस्तुल्या नर्तकी सा प्रकीर्तिता।।

भरतः

**—श्रुतिः**

धैवतस्य द्वितीया श्रुतिः।

पाल्कुर्कि-सोमः

**नर्तननिर्णयः**

पण्डरीक विट्ठलेन विरचितः। क्री. १५८०

**नर्तनसम्प्रधायः**

क्रमोऽधुना सम्प्रदायशास्त्रमेलनमुच्यते।
अङ्गप्रत्यङ्गदृष्ट्यादिस्थानचारीप्रचारतः।।

यान्युक्तानि पुरा तेषां करणानां क्वचित्क्वचित्।
मेलनं देशरीत्या च नानाभङ्गीव्यवस्थया।।

विद्वत्कविकलानाथस्तौर्यत्रितयतत्त्वधीः।
वक्ति व्यक्तं हि देवेन्द्रः सम्प्रदायं मनोरमम्।।

तत्र पुष्पाञ्जलिः पूर्वं मुखचाली ततःपरम्।
रागवाक्यानुगशब्दनृत्तं शुद्धगतिस्तदा।।

रूपाणि च तथा ध्वाढः शब्दचालिरतःपरम्।
सूडादिशब्दनृत्तं च शब्दव्याजापनर्तनम्।।

ततः सूडादिगीतानां तदर्थाभिनयोचितम्।
नृत्तं नानाविधं गीतप्रबन्धानां च नर्तनम्।।

चिन्दुनृत्तं दरूनृत्तं कन्दराख्यमतः परम्।
ततो द्रुपदसंज्ञं च नृत्तमेष क्रमोऽत्रहि।।

देवेन्द्रः

**नर्तरागः—ग्रामरागः**

शृङ्गारहास्ययोर्गेयो नर्तरागो मनीषिभिः।
दुर्गेशक्तिरिमं प्राह धस्य त्रिश्रुतितावशात्।
षड्जग्रामेण संबन्धं धैवतीजातिहेतुतः।।

कुम्भः

**—रागः**

अंशस्थापितदुर्बलपञ्चमगान्धारसप्तमोपेतः।
मध्यमया सञ्जातो विज्ञेयो नर्तरागस्तु।।

नान्यः

पञ्चमांशो मध्यमान्तो मध्यमाजातिसंभवः।
नर्तरागस्तु विज्ञेयो दुर्बलद्विश्रुतिस्वरः।।

कश्यपः

**नर्तिका—(नाट) रागः**

ग्रहांशन्यासषड्जा स्यात् भाषा नागुलनर्तिका।

मद

**नर्म**—प्रतिमुखसन्ध्यङ्गम्

क्रीडार्थं विहितं यत्तु हास्यं नर्म ।

भरतः

क्रीडाविलोभनार्थं च इति भोजगृहीतं पाठान्तरम् । यथा—वेणीसंहारे भानुमत्याः हस्तात्पुष्पपतनं दृष्ट्वा राज्ञः परिहासवाक्यम् ।

भोजः

—कैशिक्यङ्गम्

आस्थापितशृङ्गारं विशुद्धकरणं निवृत्तवीररसम् ।
हास्यप्रवचनबहुलं नर्म त्रिविधं विजानीयात् ॥
ईर्ष्याक्रोधप्रायं सोपालंभकरणानुविद्धं च ।
आत्मोपक्षेपकृतं सविप्रलंभं स्मृतं नर्म ॥

भरतः

तत्र नर्मणः शृङ्गारस्थापकत्वम् । हासप्रधानतया हासः ईर्ष्यां सूचयितुं परं वोपालब्धुं परहृदयं वा आक्षेप्यमिति त्रिधा । आत्मनः परकीयस्य चित्तस्योपक्षेपः आत्मसमीपकरणम् । यथा—फलकमुद्दिश्य वासवदत्तावाक्यं सहासं नर्म ईर्ष्यासूचकम् । शीतांशुर्मुखमित्यादि प्रिये इत्यादि च वचः उपालम्भं सहासं च । सुसंगताया हासवाक्यमुपक्षेपपरम् ।

अभिनवः

परापवादैः परुषैरश्लीलैश्च विवर्जितम् ।
शुद्धमन्तर्गताकूतं नर्म स्याच्छद्मगर्भकम् ॥

यथा—

आवुद्धगीतरभसाः कर्णोत्तंसितपल्लवाः ।
कामोत्सवे विलासिन्यः क्रीडन्त्यद्य पुरे पुरे ॥

आकूतछद्मगर्भैर्हास्यप्रायैः वचनैः कान्तां हासयन् कोपं त्याजयामि इति । अन्ये पुनराहुः—

हासेच्छाभयभेदेन तन्नर्म त्रिविधं भवेत् ।
शृङ्गारोद्दीपनो यः स्यात्परिहासस्सविभ्रमः ॥
स्त्रीपुंसयोस्तु नर्मैतत् हास्यभेदव्यवस्थितम् ।
सन्ताड्य कुसुमैश्छन्नापीच्छयागत्य दर्शनम् ।
प्रियस्य नायिकायाति यत्तदिच्छाश्रयं भवेत् ॥

भयाश्रयमेव यथा—मेघगर्जनेन भीत्या नायकेन श्लिष्टा ।

सागरः

क्रीडाविवृद्धभणितिर्नर्म सर्वोपहासकृत् ।
एतदष्टादशविधं प्रोक्तं तत्तत्त्ववेदिभिः ॥
वचश्शुद्धं क्रियाशुद्धं रूपशुद्धं तथैव च ।
वाचानुरागकथनं वेपव्यतिकरं तथा ॥
चेष्टाव्यक्तिकरं चैव वागिच्छाप्रतिपादना ।
रूपेच्छाकरणं चेष्टास्पष्टीकरणमेव च ॥
वाग्भेदनं भेदरूपं क्रियाभेदनमेवच ।
वाग्भयं भयरूपी च चेष्टाभयकरं तथा ॥
वाग्भीत्यपरसंयोगी वेषभीत्यपराश्रयी ।
चेष्टा भयान्यसंयोगीत्येवमष्टादशात्मकम् ॥

सर्वेश्वरः

**नर्मगर्भः**—कैशिक्यङ्गम्

विज्ञानरूपशोभा धनादिभिर्नायको गुणैर्यत्र ।
प्रच्छन्नं व्यवहरते कार्यवशान्नर्मगर्भोऽसौ ॥
पूर्वस्थितौ विपद्येत नायको यत्र चापरस्तिष्ठेत् ।
तमपीह नर्मगर्भं विद्यान्नाट्यप्रयोगेषु ॥

भरतः

शृङ्गारोपयोगिभिः विज्ञानाद्यैः प्रच्छन्नं यत्र नायक आस्ते नवसमागमसिद्धये स नर्मगर्भः । नर्मोपयोगिनो विज्ञानाद्या गर्भीकृता इव प्रच्छन्नतया यत्रेति । यथा प्रच्छन्नरूपो नायकः सङ्केतस्थानं गच्छति ।

अभिनवः

यत्र प्रच्छाद्यात्मनो रूपं तत्कार्यनिष्पत्तये स्थीयते नर्मगर्भः ।
नरवाहनदत्तः प्रभावतीवेषमास्थाय मदनमञ्जुकां प्राप्तवान् ।

सागरः

**नर्मदा**—मेलरागः ( नाम्नारायणीमेलजन्यः )

(आ) स रि ग म ध नि स .
(अव) स नि ध प म ग रि स .

मञ्ज

**नर्मद्युतिः**—प्रतिमुखसन्ध्यङ्गम्

दोषप्रच्छादनार्थं तु हास्यं नर्मद्युतिः स्मृता ।
रतिर्नर्मकृता चैव द्युतिरित्यभिसंहिता ॥

इति पाठान्तरम् ।

भरतः

दोषो येनोक्तेन प्रच्छादयितुमिष्यते तस्यापि हास्यजनकत्वेन नर्म च सुतरां द्योतितं भवतीति नर्मद्युतिः । यथा—रत्नावल्यां द्वितीयेऽङ्के विदूषकः चतुर्वेदी ब्राह्मण इव ऋचः पठितुं प्रवृत्ता इत्यभिहिते राज्ञा नावधारितम् । ततो विदूषकः दुर्लभजनानुराग इति पठति । अत्र हि मौर्ख्यात्कोपं छादयितुं दुर्लभजनेत्यादिवाक्यं राज्ञो हास्यजननम् । तत्र नर्मवद् द्योतितं भवति ।

अभिनवः

अन्ये तु नर्मजां धृतिं नर्मद्युतिमाहुः ।

यथा—सागरिकायाः—

इदानीमपि न विरमसीति, वाक्यम् । इदमङ्गं कामप्रधानरूपकेषु प्रयोज्यम् ।

रामचन्द्रः

क्रोधस्थापनाह्वयार्थं यद्धास्यं नर्मद्युतिर्मता।

यथा – बालरामायणे—

जामदग्न्यं प्रति विश्वामित्रवाक्यम्

सिंग:

**नर्मस्फुञ्जः**—कैशिक्यङ्गम्

नर्मस्फञ्ज इति नामान्तरम्।

नवसङ्गमसंभोगो यत्र जायेत सुभ्रुवः।

नर्मस्फञ्जो ह्यसौ ज्ञेयस्त्ववसानभयानकः॥

यथा—

राजा सहासहदेव्या प्राप्तोऽन्तःपुरयोषिता।

द्वयोरप्यनयोः कष्टं प्राप्तं कृच्छ्रात्समापितम्॥

सागरः

अयं शब्दो नर्मस्पन्दः नर्मस्फञ्ज इति च पठ्यते।

नवसंगमसंभोगो रतिसमुदयवेषवाक्यसंयुक्तः।

ज्ञेयो नर्मस्फुञ्जो ह्यवसानभयात्मकश्चैव॥

भरतः

नवसङ्गममात्र एव संभोगो यत्र। कथं तस्य सङ्गमस्य संभोगत्वमित्याह। रतिसमुदयेति। रतेराख्योऽन्याख्यावन्धरूपायाः समदयः स्फुटत्वं यस्तादृशेन वेषेण वाक्येन वा योगो यत्र। अवसाने च भयम्। पूर्वनायिकाकृतम्। यथा – रत्नावल्यां राज्ञः सागरिकायाश्च नर्मणः स्फुञ्जो विघ्न इत्यर्थः।

अभिनवः

**नर्मस्फोटः**—कैशिक्यङ्गम्

गुप्तेन काचिद्व्यवहरन्ती नायिकया आगत्य प्राप्ता। अकिञ्चित्कुर्वाणेव तूष्णीं स्थिते नायके शङ्काभयपरा लज्जार्ता यत्र कन्या भवति स नर्मस्फोटः।

सागरः

विविधानां लवैर्लवैर्भूषितो बहुविशेषैः।

असमग्राक्षिप्तरसो नर्मस्फोटस्तु विज्ञेयः॥

भरतः

विविधा भावाः भयहासहर्षत्रासरोषाद्याः। लवैर्लवैरित्यत एव भयादीनां अंशेन भावात्। स्थापित्वानुपगमात् भयानकहास्यरौद्रादिरसतापत्तिर्न संभवति। शृङ्गारस्तु पूर्व एव। यस्य कृते इति सुसंगतोक्तो हास्यलवः। न हास्यो रसः। कस्यकृतेऽहमत्रागता इति सागरिकोक्तौ रौद्रलवः। न तु रौद्ररसः। नर्मण इति तदुपलक्षितस्य शृङ्गारस्य स्फोटो वैचित्र्यम्। चमत्कारोल्लासकृतस्फुटत्वं यत्रेति।

अभिनवः

**नलिनी**—मात्रावृत्तम्

चतुर्मात्रिक एकः द्वौ पञ्चमात्रिकौ ज एकश्चतुर्मात्रिकः।

विरहाङ्कः

**नलिनीपद्मकोशौ**—नृत्तहस्तौ

व्यावृत्तिक्रियया यत्र पद्मकोशौ करौ यदा।

आश्लिष्य स्वस्तिकीभूय मिथस्स्यातां पराङ्मुखौ॥

तदाख्यौ नलिनीपद्मकोशावथ परेऽन्यथा।

पद्मकोशाभिधौ हस्तावितरेतरसम्मुखौ॥

मणिबन्धसमायुक्तौ भूत्वा प्राप्तौ पृथग्यदा।

व्यावृत्तौ परिवृत्तौ च तदैताविति मेनिरे॥

व्यावृत्तिपरिवृत्तिभ्यां करौ चेत्पद्मकोशकौ।

जानुनोर्निकटं प्राप्ताविमौ केचित्तदा जगुः।

इमौ कीर्तिधरः प्राह पद्मवर्तनिकामपि॥

अशोकः

—ध्रुवावृत्तम् (अष्टाक्षरम्)

यदि खलु पञ्चगकं पुनरपि चान्त्यतमम्।

गुरुचरणे तु भवेद्भवति हि सा नलिनी॥

नजलगाः पुलिनतलंगणये—

भरतः

—ध्रुवावृत्तम्

लघुनी गुरुच, द्विगुणं यदिचोच्चरणे चरणे, कथिता नलिनी॥

पवणाहतका। पवनाहतकाः।

भरतः

**नवक्रीडः**—देशीतालः

विधातव्यं नवक्रीडे विरामान्तं द्रुतद्वयम्।

० ०̍

नन्दी

**नवग्रहम्**—अङ्गुलिभूषणम्

माणिक्येण सरद्धेण मौक्तिकेन सुशोभिना।

प्रवालेनातिरम्येण तथा मरकतेन च॥

पुष्परागेण वज्रेण नीलेन परिशोभिना।

गोमेधिकेन रत्नेन वैडूर्येण विनिर्मितम्॥

रत्नैर्नवग्रहस्थानैर्नवभिः परिकल्पितम्।

नवग्रहमिति ख्यातमङ्गुलीयकमुत्तमम्॥

सोमेश्वरः

**नवनन्दनः**—देशीतालः

गुरुद्वन्द्वं लगौ नश्च लद्रुतौ नवनन्दने।

सार्धाष्टमात्रा।

तालप्रस्तारः

नवनीतम्—मेलकर्ता

स रि ग ० ० ० म प ० ध नि ० स.

मञ्ज

नवपत्रिका—संगीतशृङ्गाराङ्गम्

प्रथमवर्षणप्ररूढनवतृणाङ्कुरासु स्थलीषु शाद्वलमभ्यर्च्य भुक्तपीतानां कृत्रिमविवाहादिक्रीडा नवपत्रिका।

भोजः

नवमनोहरी—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग म ध नि स.

(अव) स नि प म रि स.

मञ्ज

नवरत्नः—प्रबन्धः

नवरत्नप्रबन्धोऽसौ नवखण्डैश्च मण्डितः।
वर्णनं नवरत्नानां तावद्भिस्तालरागकैः।
षडङ्गान्यपि तत्र स्युः नेतृनाम्ना विराजितः॥

श्रीकण्ठः

नवरत्नमुखम्—चालकः

अत्र सङ्करसंसृष्टिरूपेण नव वा दश।
विश्लिष्टवर्तितादींस्तु चालकान् प्राक्प्रयुज्य च॥
ततो धम्मिल्लपर्यन्तं करावुद्यम्य लोलितौ।
तदनु स्वस्तिकीकृत्यापराङ्गवलितावपि॥
भूतलाभिमुखौ कुर्याद्धैतौ मण्डलभ्रमे।
क्रमेण युगपद्वा तत्कालीनक्रियोचितम्॥
आविद्धावपविद्धौ च विधाय लुठिताङ्गुली।
ततः करौ स्वस्वपार्श्वे स्यातामान्दोलिताञ्चितौ।
तं चालकं प्रशंसन्ति नवरत्नमुखाभिधम्॥

वेमः

नवरत्नविलासः—मेलरागः

(आ) स ० रि ० ० म ० प ० ० नि ० स.

(अव) स ० नि ध ० ० ० म ० ग रि ० स.

मेललक्षणम्

नवरसकन्नडः—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स ग म प ध स

(अव) स नि ध म ग रि स

मञ्ज

नवरोज्—मेलरागः

नवरोजौ श्रुतिं हित्वा गीयते वैणिकैः पुनः।
शङ्कराभरणमेलजौऽयं रागः।

परमेश्वरः

नवरोजुः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) प ध नि स रि ग म प प.

(अव) म ग रि स नि ध प प.

मञ्ज

नवलतिका—संगीत शृङ्गाराङ्गम्

यत्र कस्ते प्रिय इति पृच्छद्भिः पलाशादिनवलताभिः प्रियजनो हन्यते सा नवलतिका।

भोजः

नवरसः—मेलरागः (गवाम्भोधिमेलजन्यः)

(आ) स ग म प ध नि ध स.

(अव) स नि ध म ग स.

मञ्ज

नाकजयन्ती—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स ग रि ग म ध नि प स.

(अव) स नि प म ग रि स.

मञ्ज

नागकृतिः—क्रियाङ्गरागः

क्रियाङ्गद्वितयं भावकृतिर्नागकृतिस्तथा।
लक्ष्यमार्गाप्रसिद्धत्वान्न सम्यगिह लक्षितम्॥

कुम्भः

नागक्रिया—रागः

न्यासांशग्रहसप्तम..............गधरितारा च।
आन्दोलितादिगमका षड्जे मन्द्रा च नागकृतिः॥

नान्यः

सप्तमांशग्रहन्यासा समन्द्रान्दोलितस्वना।
धैवतर्षभगान्धारा ज्ञेया नागकृतिस्सदा॥

याष्टिकः

नागगान्धारः—रागः

गान्धारीपञ्चमीजातो नागगान्धार उच्यते।
गान्धारांशग्रहन्यासः षड्जाल्पः काकलीयुतः॥
सावरोही प्रसन्नान्तो धैवतस्तारमन्द्रयोः।
नागगान्धारलक्ष्मैवं निर्णीतं दत्तिलादिभिः॥

हरिः

नन्दयन्तीपञ्चमीभ्यां नागगान्धारसंज्ञकः।
पञ्चमांशोऽन्त्यगान्धारः पूर्णस्स्यात्सप्तभिस्स्वरैः॥

मोक्षः

नागगान्धारी—मेलरागः (गौरीमनोहरीमेलजन्यः)

(आ) स रि ग रि म प ध नि स.

(अव) स नि ध प म ग रि ग स.

मञ्ज

**नागचरः**—मेलरागः ( खरहरप्रियामेलजन्यः )
(आ) स म प ध नि ध नि स.
(अव) स नि ध नि म ग रि स.

मञ्ज

**नागध्वनिः**—रागः
अनन्तरं टक्करागसंभवा वेगरञ्जिका।
तदङ्गभूतो रागस्स्यात् नागध्वनिसमाह्वयः॥
षड्जन्यासांशसहितो हीनधैवतपञ्चमः।
नागध्वनिरिति प्रोक्तो नारदेन महर्षिणा॥

हरिः

षड्जांशः कम्पितः स्थाने पञ्चमर्षभवर्जितः।
गान्धारमध्यमाधिक्यो रागो नागध्वनिः स्मृतः॥

सोमेश्वरः

न्यासांशग्रहपञ्चमः समरवो मध्ये तथा पञ्चमे
गान्धारर्षभनिस्वने वलयुतः कार्मारवीसंभवः।
मन्द्रस्थानगविद्धपञ्चमरवः पूर्णस्स्वरैस्सप्तभिः
षड्जेच प्रवरध्वनिस्तु कथितो नागध्वनिर्धीवरैः॥

नान्यः

षड्जन्व्याप्तिः पञ्चमांशो ग्रहन्याससमाधिकः।
मन्दस्वरगध..श्च पूर्णो नागध्वनिर्भवेत्॥
एतैरभिहितैस्सम्यग्विशेषैरुपलक्षितः।
भिन्नतानवदस्यापि रूपकालापसम्पदः॥

मतङ्गः

—भाषाङ्गरागः
टक्काङ्गवेगरञ्ज्यङ्गं त्रिषड्जा धपवर्जिता।
नागध्वनी रसे वीरे गेया वर्षासु सर्वदा॥
त्रिषड्जा। न्यासांशग्रहेपु षड्जेत्यर्थः।

भट्टमाधवः

—रागः
वेगरञ्जी विभाषाया टक्करागसमुद्भवा।
नागध्वनिस्तदङ्गं स्यात् षड्जांशन्याससंयुता।
धपाभ्यां वर्जिता नित्यं रसे वीरे नियुज्यते॥

जगदेकः

—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )
(आ) स ग रि ग म ग म प ध नि ध प नि ध नि प ध नि स
(अव) स नि ध नि ध प म ध प म रि ग म ग रि ग स

वेमः

—रागः
नागध्वनिं टक्कभाषाङ्गं षड्जन्यासग्रहांशकम्।
धपत्यक्तं रसे वीरे श्रीहम्मीरस्समादिशत्॥

हम्मीरः

—रागः
नागध्वनिर्धपत्यक्ता सत्रया भाषया तता।

गङ्गः

**नागनन्दिनी**—मेलकर्ता (रागः)
स ० रि ० ग म ० प ० ० ध नि स.

मञ्ज

**नागपञ्चमः**—(शुभपन्तुवरालीमेलजन्यः)
(आ) स ग म प नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**नागपाशः**—वर्णालङ्कारः
नागपाशस्स यत्रैकं गीत्वा स्वरचतुष्टयम्।
अवरुह्य स्वरयुगं पुनर्गेयं चतुष्टयम्॥

यथा—स रि ग म प स रि ग म रि ग म प म रि ग म प इत्यादि। व्युत्क्रमेण तु म ग रि स स रि म ग रि स इत्यवरोहणाच्च उभावपि नागपाशौ।

संगीतसरणिः

**नागबन्धम्**—उत्प्लुतिकरणम्
स्यादर्पसरणस्यान्ते नागबन्धवदासनम्।
यत्र तन्नागबन्धाख्यं करणं तद्विदो विदुः॥

वेमः

**नागबन्धः**—नृत्तबन्धः
योऽस्मिंस्तृतीयपङ्क्तेस्तु द्वितीयं स्थानमाश्रिता।
नर्तकी तु द्वितीयस्याः प्रथमं स्थानमाश्रयेत्॥
ततः प्रथमपङ्क्तेस्तु क्रमात्स्थानचतुष्टयम्।
प्राप्य तुर्यं द्वितीयायाः तृतीयस्यास्तृतीयकम्॥
क्रमाद्व्रजेदेवमन्या चरेद्विनिमयेन च।
नागबन्धं समाचष्ट तं सङ्ग्रामधनञ्जयः॥

वेमः

—हस्तपाटः
गाढबन्धशब्दे द्रष्टव्यम्।
प्रत्येकं पततो हस्तौ वाद्यपुष्करयोर्यदा।
विपर्यासेन वा सोऽयं नागबन्ध इति स्मृतः॥

वेमः

ननगिड किटतकि किटतकि ननगिड ननगिड ननगिड किटतकि ननकिट किटतकि ननगिड किटतकि किटतकि ननकिट किटतकि। नागबन्धो भवेदष्टमात्राभिस्सहितस्तदा।

पार्श्वदेवः

**नागबन्धवर्तना**
नाममात्रप्रसिद्धा।

कल्लिनाथः

**नागबन्धहस्तः**

सर्पशीर्षौ स्वस्तिकौ चेन्नागबन्ध इति स्मृतः ।
पार्श्वभागे त्वयं हस्तो निकुञ्जादि निरूपणे ॥
सर्पाणां दम्पतीभावे सोऽयं हस्तो मुखस्थले ।
अथर्वणस्य मन्त्रेषु इन्द्रजालनिरूपणे ।
सर्वाङ्गेषु प्रचलितो गन्धादीनां विलेपने ॥

विनायकः

**नागबन्धा**—गतिः

इतस्ततः परावृत्त्या नागबन्धा च तादृशी ।

देवणः

**नागबन्धम्**—देशीस्थानम्

यत्र चोपविशेद्वामपादस्याकुञ्चितस्य तु ।
ऊरौ दक्षिणपादस्य जङ्घान्तु विनिवेशयेत् ।
स्थानकं नागबन्धाख्यं तदाहुर्नृत्तवेदिनः ॥

वेमः

**नागमालिनी**—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स रि ग म प ध स.
(अव) स ध नि ध प म ग म रि स.

मज

**नागयक्षकः**—तानः

प – लोपः — षाडवः
स नि ध म ग रि.

कुम्भः

**नागवराटी**—मेलरागः

अथ नागवराट्यां तु मस्तु तीव्रतरो भवेत् ।
कोमलो धैवतः प्रोक्तो गधावुद्ग्राहकौ स्मृतौ ॥

द्वितीयप्रहरोत्तरगेया ।

अहोबिलः

**नागवराली**—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) नि स रि ग म प ध.
(अव) प म ग रि स नि स.

मज

**नागवरालीरागध्यानम्**

वीणानागस्वरोद्भासहस्तां कवचधारिणीम् ।
किरीटराजितां नीलां ध्याये नागवरालिकाम् ॥

रागसागरः

**नागशीला**—स्त्री

तीक्ष्णवासाग्रदशना सुतनुस्ताम्रलोचना ।
नीलोत्पलसवर्णा च स्वप्नशीलातिकोपना ॥
तिर्यग्गतिश्छलारंभा बहुबिम्बातिमानिनी ।
गन्धमाल्यादिनिरता नागसत्वाङ्गना स्मृता ॥

भरतः

**नागसञ्जीविनी**—मेलरागः (कीरवाणीमेलजन्यः)

(आ) स रि ग म ध नि स
(अव) स नि ध प म ग रि स

मज

**नागस्वरः**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि म ध नि प स.
(अव) स ध नि ध प म ग रि स.

मज

**नागस्वराली**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स ग म प ध स.
(अव) स ध प म ग स.

मज

**नागहिन्दोलः**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग रि ग म ध म प ध नि स
(अव) स नि प ध प म ग रि ग म रि स

मज

**नागापसर्पितम्**—करणम्

रेचितौ तु करौ यत्र हंसपक्षौ धृतभ्रमौ ।
चरणौ स्वस्तिकीभूय विच्युतौ परिवाहितम् ॥
शिरश्चेत्तरुणे यत्स्यान्मदे नागापसर्पितम् ।
मत्तल्लियोगतः पादौ स्खलितावपसर्पितौ ।
उररीकुरुतो भट्टतण्डुकीर्तिधराविह ॥

ज्यायनः

**नागेन्द्रमल्लः**

नागेन्द्रसङ्गीतकर्ता । ज्योतीपुरसंस्थानाधिपतिः । प्रायशः वर्षशतत्रयपूर्वकालः स्यात् ।

**नागेन्द्रसङ्गीतम्**

नागेन्द्रमल्लकृतम् । विच्छिन्नोऽयं ग्रन्थः । अत्र नृत्तविषये बहवो नूतनसंप्रदाया दृश्यन्ते ।

**नाटः**—हस्तः

नाटाभिधानरागे तु सूचिरेवं प्रयुज्यते ।

शृङ्गारः

—मेलकर्ता

बर्हीशधेनुगिरिशाजसुमध्यपञ्च-
काकल्यमल्पहरिरेवमथावरोहे।
गान्धारवर्जमपि राजति नाटरागे
संपूर्णषाडवगणे गणितस्तु पूर्वैः॥

समपाः शुद्धाः। रिः षट्श्रुतिः। गस्साधारणः। अल्पधैवतः। काकलिनिः।

परमेश्वरः

—रागः

नाटो निशि शुचौ वीरे षड्जांशश्च मधोत्कटः।

नारायणः

—मेलरागः

रिस्तु तीव्रतरो यस्मिन्गान्धारस्तीव्रसंज्ञकः।
धस्तु तीव्रतरः प्रोक्तो निषादस्तीव्रनामकः।
अवरोहे धगौ न स्तो नाटे रिस्वरमूर्छना॥

सायं गेयः।

अहोबिलः

नाटकम्—रूपकभेदः

प्रख्यातवस्तुविषयं प्रख्यातोदात्तनायकं चैव।
राजर्षिवंशचरितं तथैव दिव्याश्रयोपेतम्॥

नानाविभूतिभिर्युतमृद्धिविलासादिभिर्गुणैश्चैव।
अङ्कप्रवेशकाढ्यं भवति हि तन्नाटकं नाम॥

नृपतीनां यच्चरितं नानारसभावचेष्टितं बहुधा।
सुखदुःखोत्पत्तिकृतं भवति हि तन्नाटकं नाम॥

प्रकरणनाटकविषये पञ्चाद्या दश पराभवन्त्यङ्काः।
काव्यश्लेषैर्बहुभिर्यथारसं नाट्यतत्त्वज्ञैः॥

न महाजनपरिवारं कर्तव्यं नाटकं प्रकरणं वा।
ये तत्र कार्यपुरुषाश्चत्वारः पञ्च वा ते स्युः॥

काव्यं गोपुच्छाग्रं कर्तव्यं कार्यबन्धमासाद्य।
ये चोदात्ता भावास्ते सर्वे पृष्ठतः कार्याः॥

सर्वेषां काव्यानां नानारसभावयुक्तियुक्तानाम्।
निर्वहणे कर्तव्यो नित्यं हि रसोद्भुतस्तज्ज्ञैः॥

भरतः

इतिहासकथोद्भूतमितरद्वा सदाश्रयम्।
चतुर्वर्गफलोपेतं चतुरोदात्तनायकम्॥
पञ्चावस्थाभिनिष्पन्नैः पञ्चभिस्सन्धिभिर्युतम्।
वृत्तिवृत्त्यङ्गसंपन्नं पञ्चार्थप्रकृतिक्षमम्॥

महारसं महाभोगमुदात्तवचनान्वितम्।
महापुरुषसंचारं साध्वाचारजनप्रियम्॥

सुश्लिष्टसन्धिसंयोगं सुप्रयोगं सुखाश्रयम्।
मृदुशब्दाभिधानं च गुणालङ्कारभूषितम्॥

सन्ध्यन्तरैकविंशत्या चतुष्षष्ट्यङ्गसंयुतम्।
लक्षणैश्च चतुष्षष्ट्या युक्तं कुर्वीत नाटकम्॥

भरतः

पञ्चावस्थाः। पञ्चसन्धयः वृत्तिवृत्त्यङ्गानि अर्थप्रकृतयः, नाट्यालङ्काराः षट्त्रिंशत्। एकविंशतिसन्ध्यन्तराणि, चतुष्षष्ट्यङ्गानि। तेषां लक्षणं तत्तत्स्थाने द्रष्टव्यम्। त्रिलोचनस्तु—"अथ किन्नाम नाटकं, देवादीनां पूर्ववृत्तानुचरितम्। यदाह—

देववृत्तानुकथनं तथा दिव्याश्रयोत्थितम्।
राजर्षिमान्यचरितं कल्पितं नाटकं विदुः॥" इत्याह।

देवतानां मनुष्याणां राज्ञां लोकमहात्मनाम्।
पूर्ववृत्तानुचरितं नाटकं नाम तद्भवेत्॥

भरतः

तन्नाटकं मिश्रं कर्तव्यम्। उत्तमाधममध्यमपात्राणां भाषाभिः मिश्रं कर्तव्यम्। नाटकादीन्येतानि भारतं वर्षमधिकृत्य कर्तव्यानि यत्रैव सुखदुःखयोः संभवः।

अङ्कमानोदाहरणम्—नागानन्दं पञ्चाङ्कम्। षडङ्कं दृश्यते लोके रामाभ्युदयनाटकम्। शाकुन्तलादि सप्ताङ्कं अष्टाङ्कं नलविक्रमम्। देवीपरिणयस्तत्र नवाङ्कं नाटकं स्मृतम्। बालरामायणं नाम दशाङ्कं नाटकं स्मृतम्। कुन्दमालानाटकं षष्ठाङ्कम्। चण्डकौशिकं पञ्चाङ्कं मारीचवञ्चनं च। वेणीसंहारं षडङ्कम्। नाटकलक्षणे पञ्चाङ्कान्न्यूनं दशाङ्कादधिकं नास्तीत्यङ्कनियमः। महानाटके षोडशाङ्काः। भासनाटकानि एकाङ्कद्व्यङ्कत्र्यङ्कानि सन्ति। यथा—कर्णभारदूतघटोत्कचोरुभङ्गपञ्चरात्रादिषु वैलक्षण्यं दृश्यते। महानाटकं तु केवलं नानानाटकेभ्यः पात्राणां वचनान्येकत्र संभृतानि। तानि कथासन्दर्भेण षोडशधा विभक्तानि। तन्महानाटकं नाटकलक्षणस्य लक्ष्यन्न भवति। भासस्य न्यूनाङ्कनाटकेषु भारतकथायुक्तानि पञ्चरात्रप्रभृतीनि चन्द्रककविना विरचितानीति केचन मन्यन्ते। चन्द्रकस्तु भारतकथां तत्र तत्र विभज्य बहूनि नाटकानि एकाद्यङ्कानि चकारेति काश्मीरदेशेतिहासाद् ज्ञायते। भासीयान्यनाटकेषु लक्षणपुष्टिरस्ति। यथा—स्वप्नवासवदत्तम्।

प्रख्यातराजर्षिवृत्तमिति नाटके नियमोऽस्ति। तत्कथं प्रबोधचन्द्रोदयादिषु युज्यते। तेषु गुणा दोषाश्च श्रद्धा मोहः विरक्तिः पुरुषः कामः धर्मः विद्या अविद्या चैतन्यं इत्यादयः पदार्थाः

पात्राणि भवन्ति। ते कथं राजर्पय इति सन्देहः। तादृशानि कथं नाटकानीति विद्वद्भिरुक्तम्। तज्जातीयं रूपकं नाटक एवान्तर्भाव्यम्। नाटकलक्षणस्य तेषु कुत्रचिदप्यभावान्नाटकन्तर्भावः अयुक्त इति बहवः।

गौणनाटकविभागे बहूनि नाटकानि सन्ति। यथा— अश्वघोषकृतं राजपुत्रीयम्। तस्मिन् बौद्धधर्मान् पात्ररूपेण परिकल्प्य बुद्धमहिमा वर्ण्यते। जयन्तभट्टकृतागमडम्बरे बौद्धक्षपणककापालिकनीलाम्बरचार्वाकमीमांसकतार्किकाचार्याः स्वस्वमताचारान्प्रशंसन्ति। तन्नाटकमिति जयन्त आह। प्रबोधचन्द्रोदय, मोहपराजय, सङ्कल्पसूर्योदय, पूर्णपुरुषार्थचन्द्रोदय, चैतन्यचन्द्रोदयादीनि बहूनि सन्ति। येषु धर्माः गुणाश्च पात्राणि सन्ति।

अनुमितिपरिणयः,सपिण्डीकरणविधिः–इत्यादिरूपकेषु केवलं शास्त्रचर्चा पात्रवाक्यैर्वर्णितास्ति। ऐतेषां नाटकत्वं केवलं गौणतया वक्तव्यम्।

सुबन्धुमते नाटकलक्षणम्—

सुबन्धुर्नाटकस्यापि लक्षणं प्राह पञ्चधा।
पूर्णं चैव प्रशान्तं च भास्वरं ललितं तथा॥

समग्रमिति विज्ञेया नाटके पञ्च जातयः।
उपक्षेपः परिकरः परिन्यासो विलोभनम्।
एतान्यङ्गानि कार्याणि सर्वनाटकजातिषु॥

(पूर्णादिपञ्चजातीनां लक्षणं प्रत्येकं तत्र तत्र लिखितम्)

शारदातनयः

मातृगुप्तमतम्—

यथारम्भः प्रयत्नश्च प्राप्तिसंभव एव च।
नियता च फलप्राप्तिः फलयोगश्च पञ्चमः॥

एताः पञ्चावस्थाः।

नाटके पञ्चसन्धयः। मखप्रतिमुखगर्भविमर्शनिर्वहणानि। भरतमतेप्येतानि तुल्यानि। तेषामङ्गानि भरतमते चतुष्षष्टिः। मातृगुप्तमते पञ्चदश। भरतेनानुक्तान्येवैतानि। मुखसन्धौ आरंभः हेतुचिन्तनं साध्योपगमनमिति त्रीण्यङ्गानि। प्रतिमुखे संपत्तिः प्रसरः चित्तसाधनसंबन्ध इति त्रीणि। गर्भे योग्यता सिद्धिदर्शनं मित्रसंपत् इति त्रीणि। विमर्शे नाशः सविघ्नता पुनर्बीजसंपत्तिः। निर्वहणेऽर्थसंपत्, सिद्धिः, निर्वाहः। मुखादिसन्धयः कार्यस्य, साधकः साधनं साध्यं सिद्धिः संभोगः इति पञ्चावस्थाः साध्यादिपञ्चकमिति नाम्ना व्यवह्रियन्ते।

## नाटकगेयलक्षणम्

तुम्बुरुकृतम्। एकः प्राकृतग्रन्थः आक्षिप्तिकादिलयताललक्षणो विद्यते। सोऽत्यल्पपरिमितः। तस्यान्ते "गान्धव्वरायतुम्बुरुणा नाडकगेयस्स लक्खणं एदं" इति विद्यमानत्वात् तुम्बुरु नाटकमेव नाटकगेयलक्षणमित्यूहितुमवकाशोऽस्ति। विक्रमोर्वश्यां मत्तावस्थायां पुरूरवसोक्तानामाक्षिप्तिकादिगीतानां लक्षणमात्रास्ति।

## नाटकप्रियः—मेलकर्ता (रागः)

स रि ० ग ० म ० प ० ध नि ० स

मञ्ज

## नाटकरत्नकोशः

सागरनन्दिकृतः। सङ्गीतराजस्यापि रत्नकोशरूपेण विभागाः सन्ति।

## नाटकीया

ग्रहमोक्षलयज्ञा च रसभावविभाविका।
परभावेङ्गितज्ञाच आचार्यानुगता तथा॥

चतुराभिनयज्ञाना चोहापोहविचक्षणा।
निपुणा भाण्डवाद्येषु नाटकीया प्रकीर्तिता॥

भरतः

## नाटकुरञ्जी—मेलरागः

काम्भोजीमेलजोऽयं रागः।

अथ नाटकुरञ्ज्याः स्यादारोहे मेषवर्जनम्।
पिकवक्रमथान्यत्र त्यजेदृषभपञ्चमौ॥

आरोहे गोवर्ज्यः। पञ्चमस्य वक्रा गतिः। अवरोहे रिपौ वर्ज्यौ।

परमेश्वरः

—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म ध नि प ध नि स.
(अव) स नि ध म ग स.

## नाटकुरञ्जीरागध्यानम्

नायकोङ्कगतवामकराग्रां
तस्य हस्तयुतनीलकचाग्राम्।
दक्षिणेन च करेण चपेटां
चिन्तयामि खलु नाटकुरञ्जीम्॥

रागसागरः

## नाटनारायणी—रागः

धांशन्याससमायुक्ता तारे गान्धारभूषिता।
पमन्द्रा परिपूर्णा च ककुभाच्च समुत्थिता।
करुणे विनियुक्तेयं नाटनारायणाभिधा॥

जगदेकः

**नाटरागध्यानम्**

घनाश्वरोहिणं कृपाणखेटधारिणं
धनुश्शराग्रहस्तमद्भुतप्रतापमुग्रशेखरम् ।
युधिप्रचारिणं कबन्धसंवृतं दयापरं
सदा भजामि नाटरागचन्द्रमौलिशेखरम् ॥

रागसागरः

**नाटा—रागः**

षड्जांशकग्रहन्यासा संपूर्णा च समस्वरा ।
तथा तारा च मन्द्रा च यावद्गान्धारपञ्चमौ ।
भाषाया मञ्जरी तस्य अङ्गं नाटामिधीयते ॥

जगदेवः

अस्य केरलभाषाव्याख्याने गान्धारपञ्चमौ प्रवेश्यावित्युक्तम् ।

**नाटिका—रागः**

ग्रहांशन्यासषड्जा स्यात्संपूर्णा नाटिका मता ।
प्रथमा मूर्छना ज्ञेया गमकैर्बहुभिर्युता ॥

दामोदरः

**—रूपकम्**

लक्ष्यते नाटिकाप्यत्र मिश्रवस्तुसमाश्रया ।
तत्र वस्तुप्रकरणान्नाटकान्नायको नृपः ॥

प्रख्यातो धीरललितः शृङ्गारोऽङ्गी सलक्षणः ।
देवी तत्र भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥

गम्भीरा मानिनी कृच्छ्रात् तद्वशान्नेतृसङ्गमः ।
प्राप्या तु तादृशी मुग्धा दिव्या चातिमनोहरा ॥

अन्तः पुरातिसंबन्धादासन्ना श्रुतिदर्शनैः ।
अनुरागो नवावस्थो नेतुस्तस्याप्यथोत्तरम् ॥

नेता तत्र प्रवर्तेत देवीत्रासेन शङ्कितः ।
कैशिक्यङ्गैश्चतुर्भिश्च युक्ताङ्कैरिव नाटिका ॥

अमृतानन्दी

सभेदा कैशिकी यत्र शृङ्गारद्वयमुज्वलम् ।
चतुरङ्कं सहासं च नाटकं नाटिकां विदुः ॥

स्त्रीप्राया चतुरङ्का ललिताभिनयात्मिका सुविहिताङ्गी ।
राजोपचारयुक्ता प्रसादनक्रोधसंयुता चापि ॥
नायकदूती देवी परिजनवती नाटिका ।

सभेदेति । नर्म नर्मगर्भे नर्मस्फोट नर्मस्फञ्जः । शृङ्गारद्वयं संभोगविप्रलम्भौ । सहासमिति । विदूषकयुतम् । अविमर्शहीनं सन्धिचतुष्कम् । अन्तःपुरे कथमपि निवेशितकन्यापरिणयविधियुक्ता धीरललिता देवी । तस्याः क्रोधः तस्या एव राज्ञः प्रसाधनं स्वाधीनभर्तृकाविषयः । कन्याविषये संभोगविप्रलम्भौ कार्यौ । येनास्या उत्कण्ठिता विरहिणी लास्यादयश्च दर्श्यन्ते । राजा च भार्याजितः । नायिकयैव भर्तुरभ्युदयिनः अन्तःपुरं किं ते करोमीत्यभिधाय संहारः कर्तव्यः । निदर्शनं प्रामेयी रत्नावली ।

सागरनन्दी

**नाटी—मेलरागः ( चलनाटमेलजन्यः )**

( आ ) स रि ग म प ध नि स॑ नि स .
( अव ) स नि प म रि स .

मञ्ज

**नाट्यम्—शिल्पकाङ्गम्**

विजित्य पृथिवीं सर्वामित्यादौ तद्विलोक्यते ।
नाट्यं स्वपौरुषोत्कर्षविशस्य प्रतिपादनम् ॥

शारदातनयः

उदाहरणस्य समानं वाक्यं कर्णभारनाटके कर्णोक्तिः लभ्यते । वैशारद्यनामकं शिल्पाङ्गमुक्तं सागरनन्दिना । तल्लक्षणं तु आत्मनः पौरुषप्रतिपादनं वैशारद्यम् । यथा—रामाभ्युदये क्षपानलेत्यादि वालिवचनम् ।

नागरः

नाट्यमनुकरणं ।

अवस्था या तु लोकस्य सुखदुःखसमुद्भवा ।
तस्यास्त्वभिनयः प्राज्ञैः नाट्यमित्यभिधीयते ॥

इति भरतोक्तम् । सागरनन्दी

नट चरिते इत्यस्मादुणादिः ।

योऽयं स्वभावो लोकस्य सुखदुःखसमन्वितः ।
सोऽङ्गाद्यभिनयोपेतो नाट्यमित्यभिधीयते ॥

भरतः

अयमिति । प्रत्यक्षकल्पानुव्यवसायविषयो लोकप्रसिद्धः सत्यासत्यादिविलक्षणत्वात् यच्छब्दवाच्यो लोकस्य सर्वस्य साधारणतया स्वत्वेन भाव्यमानश्चर्व्यमाणोऽर्थो नाट्यम् । स च सुखरूपेण विचित्रेण समनुगतो न तु तदेकात्मा । तथाहि—रतिहासोत्साहविस्मयानां सुखस्वभावत्वं । तत्र तु चिरकालव्यापिसुखानुसन्धिरूपत्वेन विषयौन्मुख्यप्राणतया विषयाशंसाबाहुल्येनापायभीरुत्वाद् दुःखांशानुवेधो रतेः । हास्यस्य सानुसन्धानस्य विद्युत्सदृशाल्पदुःखरूपसुखानुगतात् उत्साहस्य तात्कालिकदुःखायासरूपनिमज्जनानुसन्धिना यदि भावि बहुजनोपकारि चिरतरकालभावि सुखसमीचिकीर्षात्मना सुखरूपता, विस्मयस्य निरनुसन्धानतटितुल्यसुखरूपता, क्रोधभयशोकजुगुप्सानां तु

दुःखस्वरूपता। तत्र चिरकालदुःखानुसन्धिप्राणः विषयगतामभिलाषितानां भावनाकाङ्क्षाप्राणतया सुखदुःखानुवेधवान्क्रोधः। निरनुसन्धितात्कालिकदुःखप्राणतया तदपगमाकाङ्क्षोत्प्रेक्षितसुखानुसंभिन्नं भयम्। द्वैकालिकः स्वाभीष्टविषयनाशजः प्राक्तनसुखस्मरणानुविद्धः सर्वथैव दुःखरूपःशोकः। उत्पाद्यमानदुःखानुसन्धानजीवितविषयात्पलायनपरायणरूपान्निषिद्ध्यमान शङ्कितसुखानुविद्धा जुगुप्सा। समस्ततत्पूर्वदुःखसङ्घ्यंसंस्मरणप्राणितः संभावितततदुपरमवहुलसुखमयो निर्वेदः। एवं व्यभिचारिप्रभृतिष्वपि संविस्स्वभावा सुखादय इति च दर्शनेन तत्स्वभावात्' अन्ये त्वत्र तद्वेदनरूपत्वमेव तेषां मन्तव्यम्। एवं लौकिकाः ये सुखदुःखात्मानो भावाः तत्सदृशः तत्संस्कारानुविद्धो नाट्यलक्षणोऽर्थः समुदायरूपः तस्यैव भागानुसमयः आङ्गिकादयोऽभिनयाः प्रत्यक्षसाक्षात्कारकल्पलौकिक सम्यङ्मिथ्याज्ञानादिरूपस्यैव भावा. अङ्गादयो रत्यादिविलक्षणास्वादपर्यायप्रतीत्युगयोगिनः। अन्न एवाभिमुख्यनयनहेतुत्वात्, अन्यलोक शाखाप्रसिद्धेनाभिदश्शब्देन व्यपदेश्याः। तथा अङ्गानि शाखानृत्तगीतानि आदयः प्रधाना येषां ते अङ्गादयः। व्यभिचारिणो भावाः आदयो हेतुरूपाः विभावा अनुभावाः एते रसाभिमुख्यनयनहेतवः। तैरूपेतः उपसमीपं इतः संविद्दर्पणमभिसङ्क्रान्तः एवं भूतोऽर्थो नाट्यम्। नटनीयं नर्तनीयं नर्तनं तथा च गमनीयं यत्नेन स्वरूपतो हृदयेनानुप्रवेष्टव्यं तथा नाटकानां पारम्पर्यात्मकं वृत्तं नाट्यं धर्माम्नायरूपं च। तच्च सुखदुःखाभ्यां फलरूपाभ्यां सम्यगन्वितं तेषां पश्चाद्भावित्वात्तेन हेयोपादेयव्युत्पत्तिः फलम्।

अभिनवगुप्तः

तस्मात्स्वभावं सन्त्यज्य साङ्गोपाङ्गगतिक्रमैः।
प्रयुज्यते ज्ञायते च तस्माद्वै नाटकं स्मृतम्॥ भरत.

तस्मात्स्वभावं सन्त्यज्येति नट नताविति नमनं स्वभावत्यागेन प्रह्वीभावलक्षणं, नटशब्दो जनिदाच्युसुवेण (उणादि ४-११५) व्युत्पादितः गृहीतव्य इति दर्शयति।

साङ्गोपाङ्गा ये पदक्रमा गतिवैचित्र्याणि। एतच्च समस्तं नाट्याङ्गोपलक्षणम्। प्रयुज्यत इति नटैः ज्ञायते इति मामाजिकैः। तेनोभयोरप नमनमुक्तमिति संभावनाकृतमौचित्यम्।

अभिनवः

## नाट्यकालप्रमाणम्

याममात्रसमाप्यं यत्तन्नाट्यं रागवर्धनम्।
दीर्घं विरागजनकमतो नाट्यं विवर्जयेत्॥

शुभङ्करः

## नाट्यगुणाः

वयोऽनुरूपः प्रथमं तु वेषो वेषानुरूपश्च गतिप्रचारः।
गतिप्रचारानुगतं च पाठ्यं पाठ्यानुरूपोऽभिनयश्च कार्यः॥

भरतः

## नाट्यचूडामणिः

सोमनार्यकृतः। कालः १५४०.

अस्य ग्रन्थस्य स्वररागसुधारस इति नामान्तरमप्यस्ति। अत्र षण्णवति मेलरागाः प्रदर्शिताः।

## नाट्यटिप्पणी

प्रतापजगदेकमल्लकृता नाट्यशास्त्रव्याख्यारूपा।

## नाट्यदर्पणः

एतन्नामानौ द्वौ ग्रन्थौ वर्तेते। एको हेमचन्द्राचार्यशिष्येण रामचन्द्रेण कृतः। मुद्रितश्च।

अन्यो नाट्यदर्पणग्रन्थः केन कृत इति न ज्ञायते। ग्रन्थेऽस्मिन्नृत्तभाग एवोपलभ्यते। भरतानुसारी। प्रायशः द्वादशशतके निर्मितः स्यात्।

## नाट्यप्रक्रिया—(अर्वाचीना)

(अथानुक्रमणीं वक्ष्ये) तत्रादौ मुखचालिका।
यतिनृत्तं शब्दचाली उडुपानि ध्रुवाटकम्॥

नानाविधं लागनृत्तं सूडशब्दमतःपरम्।
नानाविधं शब्दनृत्तं विवर्तं काडसंज्ञिकम्॥

सूडद्वये गीतनृत्तं नानागीताश्रितं ततः।
विन्दुनृत्यं ततः कुर्यात्कोलचारीसमन्वितम्॥

देशीकट्टडनृत्यं च वैपोताख्यं ततःपरम्।
बन्धनृत्तं कल्पनृत्तं झल्लरी द्रौपदं ततः॥

खण्डमानेन विविधं बहुरूपमिति क्रमः।
पेरुणी गौण्डली चैव नृत्तमन्यद्यथोचितम्॥

दामोदरः

## नाट्यप्रयोगः

रङ्गस्थलप्रयोगादारम्भविधिर्भरतेनोक्तो यथा—

प्रयोगमिदानीं वक्ष्यामः — तत्रोपविष्टे प्राङ्मुखे रङ्गे कुतपविन्यासः कर्तव्यः। तत्रपूर्वोक्तयोः नेपथ्यगृहद्वारयोः मध्ये कुतपविन्यासः कार्यः। तत्र रङ्गाभिमुखो मौरजिकस्तस्य पाणविकदार्दरिकौ वामतः एप प्रथममवनद्धकुतपविन्यास उक्तः। तत्रोत्तराभिमुखो गायनः गायनस्य वामपार्श्वे वैणिकः वैणिकस्य दक्षिणेन वंशवादकौ। गातुरभिमुखं गायिका इति कुतपविन्यासः। तत्र प्रयोगः — अचलाकम्पितास्खलितासन्नोपविष्टेषु मार्दङ्गिकपाणविकदार्दरिकेषु शिथिलाञ्चितवध्रस्तनितेषु यथा ग्रासरागमार्जनालिप्तेषु मृदङ्गेपूरुद्वयनिपीडने निगृहीताधनिगृहीतमुक्त-

प्रकारकृतेषु दर्दरवादनविन्यस्तैर्देवतानामावाहनविसर्जनार्थं प्रथममेव तावत्त्रिसाम कर्तव्यम्। तत्र—

वामे चान्द्रमसं साम तत्प्रीणयति पन्नगान्।
दक्षिणे जालजं साम तद्दषीन् प्रीणयत्यथ ॥

उदीच्यामपि चाग्नेयं तद्ब्रह्मपरिकीर्तितम्।
त्रिसाम कीर्तितं सम्यक् त्रिसामत्वाद्बुधैरथ ॥

त्रिप्रकारं त्रिगुणितं तथाचैवाङ्कितात्रयम्।
त्रिकलं षट्कलं चैव त्रिसाम परिकीर्तितम् ॥

त्रिसामाक्षरपिण्डस्तु गुरुलघ्वक्षरान्वितः।
यकारश्च मकारश्च त्रिकैस्त्रिगुणितं भवेत् ॥

यथा—थिचादिं ग्ले झंटुं इति प्रथमम्।

विचाझं टुं दिंग्ले इति द्वितीयम्।
तिचाझं टुं झंटुं इति तृतीयम् ॥

तदन्ते पूर्वरङ्गविधानमनुप्राप्य छन्दस्समेनाक्षरसमेन वा वाद्येन बहिर्गीतविधानमनुवर्तितव्यम्।

आसारितप्रयोगे च तत्वानुगतप्रायं वाद्यं विधातव्यम्। यत्र त्रिसाम स प्रत्याहाराय च। असाववतीर्णकोटी तत्र वाद्यं प्रवर्तते। तत्रादौ तावद्वामोर्ध्वकप्रहारयुतं पश्चादालिङ्गकविमर्दनकां गोपुच्छां च विचित्रकरणयुतं मार्दङ्गिकसर्वभाण्डिकमपि वाद्यं पश्चात्प्रवर्तनीयम्। पूर्वं हि भाण्डवाद्येन सिद्धिरुत्पादनीया। स्त्रीबालमूर्खावकीर्णे च रङ्गे कुतूहलजननसमर्थवाद्यं उपपन्नं भवति। अपि च—

आचार्यास्सममिच्छन्ति पदच्छेदं तु पण्डिताः।
स्त्रियो मधुरमिच्छन्ति विक्रुष्टमितरे जनाः ॥

तस्य चान्ते ताण्डवप्रयोगमधिकृत्य नर्तक्या अवतरणकाले लघुवर्णसञ्चयमङ्किके अङ्गुलिप्रचलनप्रायं वाद्यं योज्यं। गीतकसन्निपाते च लास्यमनुवाद्यं तेन नृत्ताङ्गहारानुगतं करणवाद्यं प्रयोज्यं। आलिप्तमार्गेण जातिकरणान्वितं वाद्यमुत्थापने प्रयोक्तव्यम्। ततःपरं परिवर्तनं चतुर्मार्गिकं शुद्धजात्याश्रयं चतुर्थकारप्रवेशेषु वाद्यमङ्गुलिप्रचलनप्रायमिति। नान्दी शुष्कावकृष्टासु करणाश्रितं वाद्यं योज्यम्। रङ्गद्वारे प्ररोचनायां च जर्जरे त्रिगते चार्यां चाङ्कितमार्गाश्रितं सन्निपातग्रहं प्रयोक्तव्यम्।; महाचार्यां वितस्तिमार्गाश्रितं प्रदेशिनीग्रहं। एवं तावत्पूर्वरङ्गे भाण्डवाद्यमुक्तम्।

नायकानां तु स्वस्थगतिप्रचारं वक्ष्यामः। तत्र धंद्रां द्रां द्रां इति देवतानां घेंतां कें तां प्रायं राज्ञां कुटकिदिप्रायं विप्राणां व्यञ्जकप्रायं मध्यमानां—

एवं स्वस्थावस्थागतिप्रचारे विधीयते वाद्यम्।
द्विकलाश्च तथैककलाश्चतुष्कलाश्चैव पादविन्यासाः ॥

तत्र तु साम्यं कार्यं भाण्डेन समं च गानेन।

पुनश्चावस्थाकृतं वाद्यं वक्ष्यामि।

त्वरितगमने धंधं घेघे टं इत्येवं वाद्यं प्रयोक्तव्यम्।
रथविषमादिकगतमङ्गुली प्रचारणकृतं विहितम् ॥

पुनरन्यावस्थायां वाद्यविधानं प्रवक्ष्यामि।
त्वरितगमनेषु भावा ये पूर्वोक्ता गतिप्रचारेषु ॥

धंधं घेंघें प्रायं तत्र तु वाद्यं प्रयोक्तव्यम्।
नौरथविमाननेपथ्यानिलाकाशजेऽङ्गुलीचलनात्।
कार्यं हि तच्चतुष्केऽप्यन्योन्यसमाश्रितं वाद्यम् ॥ इति

दुःखार्दितव्याधितेष्टजनवियोगविभवनाशवधबन्धव्रतनियमोपवासादियुक्तेष्वालिप्तमार्गबन्धो विधातव्यः। दैत्यदानवयक्षराक्षसपन्नगादीनां धंद्रां धंद्रां घकुतां घघटप्रायं कुब्जविकलपङ्गुवामनादीनां घटघटप्रायं चेटकुसत्वादीनां धोकटकुक्कणेत्यादिकं यतिपाशुपतशाक्यादीनाम्। घद्दु घद्दु घेघे प्रायं औपस्थायिकनिर्मुण्डवर्षवरादीनां। घेटां धोंटां भां टां ण्णप्रायं वृद्धश्रोत्रियकञ्चुकिस्थूलादीनां। ख्रों ध्रो घो खो खो इति प्रायं। गजवाजिखरोष्ट्ररथविमानयानेषु थं किटिप्रायं। सर्वत्रोत्तममध्याधमेषु पुरुषेष्वित्थं रसभावानभिसमीक्ष्य वाद्यं प्रयोक्तव्यम्। एवं तावत्पुरुषवाद्यम्।

स्त्रीणां पुनरभिव्याख्यास्यामः। तत्रोत्तमस्त्रीणां दिव्यानां वंगति किपिधमेट।प्रधिघे इति प्रायम्। अथ राज्ञीनां कथि कथि मथि दोद्दकखू सुखू इति प्रायम्। धं किंत्ति किथिघटमटमत्थि इति ब्राह्मणीनाम्। अथ मध्यमस्त्रीणां वेश्याशिल्पकारीणां किटिण्णाणं धं कथिं गटमथि धुणकिटि किटिप्रायम्। मरटमथिकुणकेडखुखिखि प्रायं गीतं स्त्रीणाम्। एवं तावत्सामान्यतोऽभिहितं स्त्रीणाम्। अवस्थान्तरितानां तु त एव पौरुषा वाद्यविशेषा भवन्ति। सामान्यतोऽभिनये भयशोकक्रोधादयो हि भावा आसां समुत्पद्यन्ते। आसामपि रसभावाभिनयापेक्षं मार्गाश्रितं वाद्यं भवति।

अपि च—जातिमार्गप्रचारैस्तु करणैरक्षरैस्तथा।
वादयेद्यस्त्वसंकीर्णं स श्रेष्ठो वादको मतः ॥

भरतः

नाट्यभूषणम्—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म ध नि स.
(अव) स नि ध म प म ग रि स.

मध

नाट्यमङ्गला—मेलरागः ( नटभैरवीमेलजन्यः )
(आ) स रि ग म प ध नि स.
(अव) स नि प म रि ग रि स.

मञ्ज

नाट्यमनोहरी—मेलरागः ( हरिकाम्भोजीमेलजन्यः )
(आ) स ग म प ध नि स.
(अव) स नि प म ग स.

मञ्ज

नाट्यमातृकाः—(अथवा) वृत्तयः

सर्वेषामेव काव्यानां मातृका वृत्तयः स्मृताः ।
आभ्यो विनिसृतं ह्येतद्दशरूपं प्रयोगतः ।
यथा तथा वृत्तिभेदैः काव्यबन्धा भवन्ति हि ॥

भरतः

केचिदाहुः— वृत्तिप्रभवत्वं दशरूपकस्य सामान्यलक्षणम् । वृत्तीनां तदङ्गानां च अनभिनीयकार्येष्वसंभवादिति । एतच्चासत् आस्तां काव्यार्थः—सर्वो हि संसारो वृत्तिचतुष्केण व्याप्त इत्युक्तमस्माभिः । वृत्त्यङ्गानि सर्वकाव्येषु सन्त्येव । यद्यपि सर्वेषामभिनेयानभिनेयकाव्यानां वृत्तयश्चेष्टासातर इव ताभ्यो वाच्यरूपत्वे कविहृदये व्यवस्थिताभ्यः काव्यमुत्पद्यते । यथा—विचित्रसन्निवेशतालम्बनसुन्दरतमसंपूर्णस्वर समुदायरूपाद्ग्रामद्वयाद्विभागकल्पनया जात्यंशकानां पूर्णापूर्णादिस्वरभेदभाजां प्रसवः, तथा नाटकप्रकरणाभ्यां पूर्णवृत्तिवृत्त्यङ्गाभ्यां वृत्तिन्यूनानां च रूपकभेदानां परिकल्पनम् । यद्यपि कायवाङ्मनसां चेष्टा एव सह वैचित्र्येण वृत्तयः ताश्च जीवलोकव्यापिन्यो अनिदंप्रथमताप्रवृत्ताः प्रवाहेन वहन्ति । तथापि विशिष्टेन हृदयावेशेन युक्ता वृत्तयो नाट्योपकारिण्यः । आवेशश्च तारतम्यलक्षणो द्विधा लौकिको अन्यश्च । तत्र लौकिकावेशः सुखदुःखतारतम्यकृतो न रसागमास्वाद्यः । अलौकिकस्तु अनावेशोऽप्यावेशमयः कवेरिव सामाजिकस्य । वाचिकप्राधान्ये भारती वृत्तिः । भारतीशब्देन हि वागुच्यते । अक्षरसाम्यादपि पदन्यासानां अक्षरसाम्यादपि निर्वचनं दर्शयत् नटव्यापारयोगेऽपि भारत्येव वृत्तिः । मनोव्यापाराधिक्ये सात्वतीवृत्तिः । सत्वरूपं विद्यते येषां तत्वं तेषामयमिति । सत्वं च तत्र परछिद्रान्वेषणोपायं अप्रतितानवैचित्र्यो त्प्रेक्षणप्रकाशलाघवात्मकं रसभावपर्यवसितो हि सर्वः कार्यसन्दर्भः । रसभावाश्च चेतनेष्वेव । वाङ्मनःकायचेष्टांशेषु दहेकोऽपि कश्चिच्चेष्टांशोऽस्ति । कायचेष्टा अपि मानसीभिस्सूक्ष्माभिश्च वाचिकीभिश्चेष्टाभिः व्याप्यन्त एव । न सोऽसि प्रत्ययोलौके यश्शब्दानुगमादृते । इति न्यायान्मानस्यपि वाचिक्यपि चेष्टा अवश्यं सूक्ष्मकायपरिस्पन्दमन्दप्राणव्यापाररूपं नातिवर्तते । न च रसोपयोगिलालित्यभागशून्यः कोऽपि नाट्ये परिस्पन्दः इत्यन्योन्यं संवलिता वृत्तयः केवलं क्वचित्किञ्चिदधिकमिति प्राधान्येन व्यपदेशः परिवर्तते ।

अभिनवः

नाट्यरत्नाकरः

अस्य कर्ता न ज्ञायते । भरतकल्पलतामञ्जर्यां नाट्यरत्नाकर इति नाम स्मृतम् ।

राघवरायकृतमिति वक्तुमवकाशोऽस्ति । सङ्गीतसारे तथा स्मृतमस्ति ।

नाट्यरासकम्

वसन्तसमये यत्र देशीहिन्दोलगीतिभिः ।
नर्तकीभिर्नाट्यवस्तुपदार्थैरभिनीयते ।
तन्नाट्यलासकं प्रोक्तं देशीनृत्तविशारदैः ॥

वेमः

अभिनयो द्विधा वर्तते, पदार्थाभिनयो वाक्यार्थाभिनयश्चेति । अत्र प्रथमस्सूचितः । तत्तच्छब्दयोः विशेषौ निरूपितौ ।

नाट्यलोचनम्

एतन्नामकौ द्वौ ग्रन्थौ स्तः । एकोऽभिनवगुप्तकृतः । अन्यस्त्रिलोचनरचितः । त्रिलोचनकृतं नाट्यलोचनं लघ्वपि प्रामाणिकमेव । अत्र बालरामायणकृत्यारावणमातृगुप्तनाट्यशास्त्रादय उदाहृताः ।

नाट्यशालानिर्माणविधिः

तत्रादौ नाट्यनिलयनिर्माणं विधिवद्ब्रुवे ।
नाट्योपयुक्तवस्तूनामिदमादीयतोमतम् ॥

भुवमादौ परीक्षेत ततः कुर्याद्गृहं शुभम् ।
दृढा समा स्थिरा गौरी कृष्णा दोषैरदूषिता ॥

अनूषरा कीलकास्थिकेशाङ्गारतुषोज्झिता ।
कपालजन्तुवल्मीकहिंस्रकोलादिवर्जिता ॥

लाङ्गलेत समुत्कृष्टा शोधिता भूः प्रशस्यते ।
रेवतीहस्तचित्रासु विशाखास्व्युत्तरासु च ॥

सौम्यपुष्यानुराधासु तारास्वेतासु धीधनः ।
पुण्याहं वाचयित्वादौ प्रोक्ष्य शान्त्युदकेन ताम् ॥

भुवं कृत्वा समतलं सितं सूत्रं प्रसारयेत् ।
कार्पासं वाल्वजं वापि मौञ्जं पाट्टं दृढं नवम् ॥

आकृष्टं यद्दृढं पुंभिः छिद्यते न कदाचन ।
प्रसार्य मानं तत्सूत्रं त्र्युटयते मध्यतो यदि ॥

स्वामिनः स्यात्तदा मृत्युस्त्रिभागे त्र्युटयते यदा।
राष्ट्रक्षोभं तदा विद्यात्प्रयोक्ता नश्यते तदा॥

तुरीयोऽस्य यदा भागः त्र्युटयते चेदिदं क्रमात्।
भ्रश्यते स्यादपचयस्तदा कस्यापि वस्तुनः॥

अल्पं प्रशस्यते तस्माद्गृहनिर्माणकर्मणि।
विकृष्टं चतुरश्रं च त्र्यश्रं चेति गृहं त्रिधा॥

चतुरश्रं पुनर्भिन्नं दीर्घं सममिति द्विधा।
विकृष्टमुत्तमं प्रोक्तं चतुरश्रं तु मध्यमम्॥

उत्तमं चाधमं त्र्यश्रं गृहमेवं चतुर्विधम्।
विकृष्टं नितरां दीर्घमुत्तमं देवतागृहम्॥

चतुरश्रं तु यद्दीर्घं राजन्यानां तदिष्यते।
चतुरश्रं समं यत्र ब्राह्मणादिसुखावहम्॥

त्र्यश्रं यदवरं तत्र हीनवर्णाश्रयोचितम्।
चतुर्धैव गृहाः प्रोक्ताः भरतेन महात्मना॥

अष्टोत्तरशतं दीर्घं हस्तानां विस्तृतं पुनः।
तदर्धेनामराणां यन्नृषु तत्रोपयुज्यते॥

अथाद्यश्चतुरश्रस्य निर्माणक्रम उच्यते।
चतुष्षष्टिकरायामं द्वात्रिंशद्धस्तविस्तृतम्॥

यथा निष्पत्स्यते गेहं तथा सूत्रं प्रसारयेत्।
पूर्वपश्चिमयोर्दीर्घां दक्षिणोत्तरविस्तृताम्॥

भुवं संसाध्य विभवात्पश्चिमादि तथा क्रमात्।
यथा करैष्षोडशभिरष्टभिः पुनरष्टभिः॥

द्वात्रिंशद्भिश्च चत्वारो भागास्स्युस्तेषु पश्चिमे।
नेपथ्यस्य गृहं तस्य पुरतो रङ्गशीर्षभूः॥

तत्पुरस्ताद्रङ्गपीठं सभास्थानं तदग्रतः।
एवं भुवं विभज्याथो बलिं दद्यान्निशामुखे॥

दिग्देवताभ्यस्तल्लिङ्गैः मन्त्रैः पुष्पाक्षतादिभिः।
सितरक्ते नीलकृष्णे पीतधूम्रेऽरुणामले॥

अन्ने प्राच्यादिदिङ्नाथबल्यर्थं कल्पयेत्सुधीः।
अथ मूलेन रोहिण्यां श्रवणेनाप्युपोषितः॥

स्तम्भानां स्थापनं कुर्याल्लग्ने सद्ग्रहवीक्षिते।
कुम्भिकां स्थापयेदादौ तथा याश्शिल्पिनिर्मिताः॥

मानसूत्राद्बहिश्चान्तश्चार्धेन स्युस्स्थिरं स्थिताः।
आग्नेयादिषु कोणेषु स्तम्भाः स्युर्ब्राह्मणादयः॥

तन्मूलेषु क्षिपेत्स्वर्णताम्रे च/रजतायसे।
शुक्लरक्तैः पीतनीलैर्वस्त्रमाल्यानुलेपनैः॥

स्तम्भान्संपूज्य विप्रेभ्यः पायसं गौडमोदनम्।
घृताक्तं कृसरं दद्यात्तत उत्थापयेच्छनैः॥

अचलं चाप्रकम्पं च स्थापयेत्कुम्भिकोपरि।
चलने स्यादनावृष्टिः कम्पने परचक्रभीः॥

यथाऽचलो गिरिर्मेरुः हिमवांश्च महाबलः।
जयावहो नरेन्द्रस्य तथा त्वमचलो भव॥

प्रणवादिनमोऽन्तेन मन्त्रेणानेन पण्डितः।
उपतिष्ठेत तान् स्तम्भानुच्छ्रितान् दक्षिणां च गाः॥

दद्याद्द्विजेभ्यस्तम्भेषु स्थापितेषु चतुष्पथे।
ब्राह्मणक्षत्रियस्तम्भमध्ये सप्तापरान् शुभान्॥

स्तम्भान् संस्थापयेत्तद्वन्मध्यतो वैश्यशूद्रयोः।
एवमष्टादशस्तम्भाः पार्श्वयोर्दक्षसव्ययोः॥

साष्टहस्तान्तरालाः स्युर्भुवा स्वाक्रान्तया सह।
आग्नेयेशानयोर्मध्ये राजन्योरुभयोरपि॥

स्वार्धाक्रान्तभुवा सार्धं हस्तषोडशकान्तरौ।
द्वौ स्तम्भावनयोर्मध्ये साष्टहस्तान्तरौ सह॥

स्वार्धाक्रान्तभुवा स्थाप्यौ द्वावन्यौ बुद्धिशालिना।
एवं स्तम्भा भवेयुस्तदृष्टौ पश्चिमपूर्वयोः॥

नेपथ्यगृहपृष्ठस्थस्तम्भमानानुसारतः।
सप्त स्तम्भान् चतुःपङ्क्तया स्थापयेन्मन्दिरान्तरे॥

अष्टाविंशतिसंख्याकाः ते स्युरारोपिताः क्रमात्।
अष्टहस्तमितायामा हस्तविस्तारशालिनः॥

चतुःपञ्चाशदेवं तु स्तम्भाः संभूय शोभनाः।
पार्श्वपङ्क्तिद्वयं मध्यपङ्क्तिश्चातिमनोहरैः॥

कोष्ठाष्टकैर्भवेत्पूर्णं समन्तादष्टहस्तकैः।
मध्यपङ्क्तेः पार्श्वपङ्क्तेर्मध्ये पङ्क्तयष्टहस्तकैः॥

आयामे विस्तरे हस्तचतुष्कैरष्टकोष्ठकैः।
पूर्णे स्यातामुभे दीर्घचतुरश्रैस्सुनिर्मितैः॥

चत्वारिंशत्कोष्ठकाः स्युरेवं नाटयगृहे स्फुटम्।
शिरः काष्ठानि चित्राणि स्तम्भानां मूर्ध्नि विन्यसेत्॥

अथ तेषु चतुर्दिक्षु नानाचित्राङ्कितान्यलम्।
धरण्याख्यानि काष्ठानि प्रतिदध्युर्यथोचितम्॥

एतेषां मूर्धसु स्थाप्यास्तुलास्तक्षकसंस्कृताः।
तुलासु तिर्यक्काष्ठानि स्थापयन्ति दृढान्यथ॥

दारवीभिः पट्टिकाभिः संहताभिः परस्परम्।
काष्ठानामन्तरालानि छादयेयुर्यथाक्रमम्॥

एवमाच्छाद्य नीरन्ध्रं कृत्वातिश्लिष्टसन्धिकम् ।
आस्तीर्य निम्बपत्राणि इष्टकाभिर्मृदा तथा ॥

आपूर्य दृढमाताड्य कुर्यादतिसमं स्थलम् ।
अथवा विभजेद्भूमिं द्वात्रिंशत्कोष्ठमानतः ॥

द्वात्रिंशद्धस्तविस्तारं चतुष्षष्टिकरायतम् ।
आयामपरिणाहाभ्यां अष्टहस्तप्रमाणतः ॥

चतुरस्रा यथा स्युस्ते द्वात्रिंशत्कोष्ठकास्तथा ।
मध्यकोष्ठचतुष्कं यद्रङ्गपीठं तदिष्यते ॥

आयामपरिणाहाभ्यां द्व्यष्टहस्तं मनोहरम् ।
ब्राह्मणादीन्स्ततस्तम्भानाग्नेयादिषु रोपयेत् ॥

आग्नेयादिषु कोणेषु रङ्गपीठस्य पूर्ववत् ।
स्तम्भानारोपयेत्सौम्ये द्वौ स्तम्भौ वैश्यशूद्रयोः ॥

सम्मुखौ दक्षिणे तद्वद्विप्रराजन्यसंज्ञकौ ।
सद्व्यष्टहस्तान्तरालौ स्वार्धाक्रान्तभुवा सह ॥

स्थाप्यौ ततश्च स्तम्भाःस्युरष्टौ प्राक्प्रत्यगुत्तमाः ।
सह ब्राह्मणशूद्राभ्यां...दशपञ्च च ॥

साष्टहस्तान्तरालाः स्युः स्तम्भाः पश्चिमभागगाः ।
अष्टत्रिंशत्ततस्तम्भाः स्युरस्मिन्नाट्यमण्डपे ॥

अष्टहस्तपरीणाहं त्वष्टहस्तायतं नवम् ।
रङ्गशीर्षं ततः पश्चान्नेपथ्यस्य गृहं भवेत् ॥

तत्राष्टकोष्ठकं द्वारं प्राक् प्रत्यक् चास्य कारयेत् ।
कृत्वा सुधाकल्पयोग्यं भित्तिकर्म प्रवर्तयेत् ॥

पश्चिमे द्वारमेकं स्याद्भव्यं नेपथ्यवेश्मनः ।
अन्यद्रङ्गप्रवेशार्थं पूर्वभित्तौ तु तद्भवेत् ॥

एवं द्वारद्वयोपेतं द्व्यष्टहस्तसुविस्तृतम् ।
द्वात्रिंशद्भिः करैर्दीर्घं कोष्ठविंशतिसाधितम् ॥

नेपथ्यसदनं सर्वं नर्तकश्रमनाशनम् ।
रङ्गशीर्षं च नेपथ्यगृहवद्दीर्घमिष्यते ॥

विस्तीर्णमष्टभिर्हस्तैः षड्दारुभिरलङ्कृतम् ।
नेपथ्यपूर्वद्वारस्य पार्श्वयोः स्तम्भयोर्द्वयम् ॥

तयोरूर्ध्वमधश्चापि दारुयुग्मं मनोहरम् ।
विचित्ररचनोपेतं रङ्गशीर्षस्थितं तु यत् ॥

एतत्षड्दारुकं नाम भरतेन प्रकीर्तितम् ।
चतुस्तम्भ्यर्धमादाय समन्तात्प्रोक्तहस्तकम् ॥

रङ्गपीठं सुकृष्णाभिर्मृद्भिरापूरितं दृढम् ।
सार्धहस्तोत्सेधयुतं मनोनयनमोहनम् ॥

कल्पयीत न निम्नं तन्नाप्युच्चं सममिष्यते ।
आदर्शतलवत्स्निग्धं तस्य पीठस्य पार्श्वयोः ॥

दक्षान्ययोः प्रकुर्वीत स्तम्भयोर्मध्यसंश्रयाम् ।
आधारकाष्ठसुभगां विचित्रां मत्तवारणीम् ॥

तत्तद्दिगीशवर्णानि रत्नानि कनकं तथा ।
दिक्षु मध्ये च विन्यस्येद्रङ्गपीठस्य बुद्धिमान् ॥

रङ्गपीठप्रमाणेन कुर्यादुपरिभूमिकाम् ।
चतुस्तम्भीसमायुक्तां सुवर्णकलशोज्ज्वलाम् ॥

रङ्गपीठपुरस्तात्स्यात्सभापतिनिवेशनम् ।
षष्ठे कोष्ठे मध्यपङ्क्तेः चतुर्हस्तं समन्ततः ॥

उत्सेधेनाध्यर्धहस्तं सुधाधवलितं शुभम् ।
कोष्ठेष्वन्येषु परितो हस्तमात्रान्तराणि तु ॥

तावन्मात्रप्रमाणानि आसनानि प्रकल्पयेत् ।
विचित्रं लक्षणोपेतं कवाटद्वयरञ्जितम् ॥

उत्तरस्यां भवेदस्य द्वारं कोष्ठे चतुर्थके ।
चित्राणि नानारूपाणि लिखेद्भित्तिषु भूमिषु ॥

आविद्धदारुसद्वारसालभञ्जिकयान्वितम् ।
जालवातायनोपेतं गवाक्षैः परितो वृतम् ॥

चित्रनिर्माणशोभाढ्यं नानाकुट्टिमरञ्जितम् ।
गम्भीरशब्दप्रभवं रसभावादिदीपनम् ॥

सुधाधवलितं कुर्यात्समन्तान्नाट्यमन्दिरम् ।
पञ्चहस्तान्परित्यज्य परितो नाट्यमन्दिरम् ॥

त्रिहस्तोत्सेधिनीं कुर्याद्भित्तिमन्यां सनिर्गमाम् ।
अप्रमत्तैरक्षिजनैः परितो रक्षयीत तत् ।
एवं लक्षणसंपन्नमायुःकीर्तिजयावहम् ॥

विप्रदासः

## नाट्यशास्त्रम्

भरतकृतम् । षट्त्रिंशदध्यायेषु षट्सहस्रीग्रन्थपरिमित्या निर्मितः। अन्यो ग्रन्थः द्वादशसहस्री भरतकृतित्वेनासीदिति बहवो ग्रन्थकर्तारो वदन्ति । व्याख्यातारः लोल्लटादयः षट्सहस्र्या एव व्याख्यानमकार्षुः । भरतनाम्ना उदाहृताः श्लोकाः बहवः षट्सहस्र्यां न दृश्यन्ते । अस्य भरतसूत्रमिति प्रसिद्धिः । भरतो मुनिरित्युच्यते ।

## नाट्यशास्त्रस्य वेदप्रामाण्यम्

अङ्गत्वेनाथवास्यास्तु प्रामाण्यं तत्त्वस्मृतिवजाम् ।
चार्यापक्रान्तया होमविधानाच्छटकेन च ॥

मानान्तरानधिगते गायतीति विधिः स्फुटः।
औद्गात्रस्य विधानाच्च त्रैकाल्ये नाददर्शनात्॥
अश्वमेधक्रतौ गानविधानमपि दृश्यते।
ब्राह्मणस्य दिवारात्रौ राजन्यस्य च शासनात्॥
नाराशंस्यनुगामित्वं यन्निषेधस्य तत्र हि।
नृदेवो न निषिद्धयेत नृमात्रस्य निषेधनात्॥
न नृत्येदिति यन्नृत्यनिषेधः कामवर्गतः।
तद्ब्रह्मचारिविषये वचनं पर्यवस्यति॥
द्विजातिविषयो गाननिषेधो यत्र कुत्रचित्।
तद्विदां यदपात्रत्वं तत्तद्विद्योपजीविनाम्॥

कुम्भः

## नाट्यशेखरः

अयं विद्धसालभञ्जिकाव्याख्यायां स्मृतः।

## नाट्यसिद्धिः

सिद्धिस्तु द्विविधा ज्ञेया मानुषी दैविकी तथा।
वाङ्मनःकायसंभूता नानाभावसमुत्थिता॥
दशाङ्गा मानुषी सिद्धिः दैवी तु द्विविधा स्मृता।
नानासत्त्वाश्रयकृता शारीरी वाङ्मयी तथा॥
स्मितार्धहासा विज्ञेया साध्वहो कष्टमेव च।
प्रसिद्धनादावकृष्टा सिद्धिर्ज्ञेया च (वाङ्मयी) मानसी॥
पुलकैश्च सरोमाञ्चैरभ्युत्थानैस्तथैव च।
चेलाञ्चलाङ्गुलिक्षेपैः शारीरी सिद्धिरिष्यते॥
अहोकारस्तदा कार्यो नृणां प्रकृतिसंभवः।
विस्मयादिपु भावेषु प्रहर्षार्थे तथैव च॥
करुणेषु प्रयोक्तव्यं कष्टं शाब्दकृतेन तु।
साधिक्षेपेषु वाक्येषु प्रस्पन्दिततनूरुहैः॥
कुतूहलोत्तरावेधैः बहुमानेन साध्यते।
एवं साधयितव्ये या तद्गुणैस्सिद्धिस्तु मानुषी॥

दैवसिद्धिर्यथा—

या भावातिशयोपेता सत्त्वयुक्ता तथैवच।
सा प्रेक्षकैस्तु मन्तव्या दैवी सिद्धिः प्रयोगतः॥
न शब्दो नैव च क्षोभो न चोत्पातनिदर्शनम्।
संपूर्णता च रङ्गस्य सा सिद्धिर्दैविकी स्मृता॥

सिद्धिविघातकाः—

वाताग्निवर्षकुञ्जरभुजङ्गसंक्षोभमण्टपनिपाताः।
कीटव्यालपिपीलिकपशुविशसनादिदैविका घाताः॥
मात्सर्याद्द्वेषाद्वा तत्पक्षत्वात्तदर्थभेदाद्वा।
एते परप्रयुक्ता ज्ञेया घाता बुधैर्नित्यम्॥
गोमयलोष्टतृणोपलविक्षेपाश्चारिसंभूताः।
औत्पत्तिकाश्च घाताः पशुवेषोन्मत्तलिङ्गकृताः॥
विस्वरविमुक्ततालं वर्णस्वरसंपदा च परिहीणम्।
अज्ञातस्थानलयं स्वरगतमेवंविधं हन्यात्॥
विषमं मार्गविहीनं विमार्जनं बहुप्रहारं च।
अविभक्तग्रहमोक्षं पुष्करगतं तथा हन्ति॥
पुनरुक्तं ह्रसमासो विभक्तिभेदो विसन्धयोऽपार्थाः।
अस्थानभूषणत्वं पतनं मुकुटस्य च भ्रंशः।
आरोहणावतरणैरनभिज्ञत्वं विहस्तत्वम्॥

एते घाताः—

न च किञ्चिद्गुणहीनं दोषैः पाठैरवर्जितं च न हि।
तस्मान्नाट्यप्रकृतौ दोषा नात्यर्थतो ग्राह्याः॥

भरतः

नाट्याभरणम्—मेलरागः (नाटकप्रियमेलजन्यः)
(आ) स रि ग म प ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

## नाट्योक्तयः

भगवन्निति संबोध्यो देवस्तत्प्रतिमोऽपि वा।
आर्येति वृद्धो विधिवन्महाराजेति पार्थिवः॥
उपाध्यायेति विद्यादौ गुरुराचार्य इत्यपि।
नाट्ये भावेति विदुरः किञ्चिदूनस्तु मारिषः॥
समानोऽथ वयस्येति हंहो हंहेति चाधमः।
राज्ञा विदूषकोऽप्येवं वयस्येत्यभिभाष्यते॥
आयुष्मन्निति सूताद्यैः भूष्णुर्नित्यं तपस्विभिः।
स्वामिनस्तनयः श्लाघ्यः कुमारो भर्तृदारकः॥
सौम्यभद्रमुखाश्चैव देवानां प्रिय इत्यपि।
संबोध्याः शाक्यनिर्ग्रन्थाः भदन्तेति प्रयोक्तृभिः॥
देवेति नृपतिर्वाच्यो भट्टेति च महानृपः।
सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवने॥
अन्यथा पुनरार्येति तद्वज्ज्येष्ठोऽनुजन्मना।
छन्दतो नामभिर्वाच्या ब्राह्मणैः क्षत्रिया अपि॥
राजन्निति स्यादृषिभिः क्वचित्संबोधनं पुनः।
कैश्चित्स्वपूज्यपादानां साक्षान्नाम न गृह्यते॥

हञ्जे हण्डे हलाह्वाने नीचां चेटीं सखीमपि।
अज्जुकेति च वक्तव्या वेश्यापरिजनैः स्वकैः॥
अत्तेति तस्या धात्र्यादिररेरे इति नीचकः।
बहुत्वसंख्याप्याख्या स्यात्पूज्ये स्वात्मनि वा पुनः॥
पादश्रीश्चादयः शब्दाः पूज्यनामान्ततः श्रिताः।
पर्यायश्च प्रयोक्तव्यो यथास्वमुचितेष्वपि॥
हृष्टासिः पतयः स्त्रीभिः भाष्याश्शब्दैः प्रियादिभिः।
दुश्शीलादिभिरन्यत्र कथ्यन्ते तु यथाक्रमम्॥
प्रियः कान्तो विनीतश्च नाथस्वाम्यथ जीवितम्।
नन्दनश्चेत्यभिप्रीतौ वचनानि भवन्ति हि॥
दुश्शीलोऽथ दुराचारः शठो वामो विरूपकः।
निर्लज्जो निष्ठुरप्रायः क्रोधे प्रायोऽभिधीयते॥
द्विजस्य नाम शर्मान्तं वर्मान्तं क्षत्रियस्य च।
गुप्तान्तं वणिजः प्रायो दासान्तं वृषलस्य च॥
शौर्योदात्तानि नामानि तथा शूरेषु योजयेत्।
नानाकुसुमनामानि प्रेष्यवर्गे चकासति॥
मङ्गलार्थानि नामानि चेटानामपि कारयेत्।
गम्भीरार्थानि नामानि योजयेदुत्तमेषु च॥

साहित्यमीमांसायाम्

## नाथरामक्रिया—रागः

नाथरामक्रतिर्भाषा सत्रया रिपभोज्झिता।

सदनः

## नाथेन्द्रः—वंशः

यस्मिन् वंशे मुखताररन्ध्रयोरन्तरालं नवाङ्गुलपरिमितं स वंशो नाथेन्द्रः। नव नाथाः सिद्धपुरुषाः।

नाथेन्द्रवंशो विंशत्या युतया षड्भिरङ्गुलैः।
स यवैर्द्वितयेनाथ यूकाया अन्विते भवेत्॥
मध्यं नवाङ्गुलं तस्य रन्ध्रयोर्मुखतालयोः।
सम्भूयान्तरमानं च तथानुक्तमपीह यत्।
महानन्दस्य वंशस्य निर्माणात्तु गतार्थकम्॥

कुम्भः

## नादः

अनतेः प्राणनार्थस्य दहतेर्दाहकर्मणः।
संयोगादाद्यशक्तेश्च बीजैरेष विनिर्मितः॥
भस्मसात्प्राणिनां पापं कुर्वन् संजीवयंश्च तान्।
शक्त्या संसाधयन्नर्थान् नाद इत्यभिधीयते।
नादो वा नदतेर्धातोरिष्यते शब्दकर्मणः॥

कुम्भः

नादरूपा पराशक्तिः नादरूपो महेश्वरः।
यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रन्थिश्च यः स्मृतः॥
तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः।
वह्निमारुतसंयोगान्नादस्समुपजायते।
नादादुत्पद्यते बिन्दुः ततःसर्वं च वाङ्मयम्॥ इति केचित्

अन्ये तु—

नकारः प्राण इत्याहुः दकारश्चानलो मतः।
नादस्य द्विपदार्थोऽयं समीचीनो मयोदितः।
नादोऽयं नदतेर्धातोः स च पञ्चविधो भवेत्॥

मतङ्गः

## नादतरङ्गिणी—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म प नि स.
(अव) स नि ध म ग रि स.

मञ्ज

## नादद्वैविध्यम्

आहतानाहतत्वेन स द्वेधा गदितो बुधैः।
अनाहतोऽतिसूक्ष्मत्वादव्यक्तत्वान्न रक्तिदः॥
श्रुत्यादिद्वारतो गेये जनयन् रक्तिमाहतः।
आत्मन्येकाग्रभावेन भुक्तिमुक्ती प्रयच्छति॥

कुम्भः

## नादनामक्रिया—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि म ग म प ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

## नादप्राधान्यम्

न नादेन विना गीतं न नादेन विना स्वरः।
न नादेन विना नृत्तं तस्मान्नादात्मकं जगत्॥

मतङ्गः

## नादभेदाः

सूक्ष्मश्चैवातिसूक्ष्मश्च व्यक्तोऽव्यक्तश्च कृत्रिमः।
सूक्ष्मनादो गुहावासी हृदये चातिसूक्ष्मकः॥
कण्ठमध्ये स्थितो व्यक्त अव्यक्तस्तालुदेशगः।
कृत्रिमो मुखदेशे तु ज्ञेयः पञ्चविधो बुधैः॥

मतङ्गः

## नादरामक्रिया—मेलरागः

नादरामक्रियारागः समारोहेऽजवर्जितः।
अर्धश्रुतिसमायुक्तः ततः षाडवपूर्णकः॥

नादनामक्रिया गान्धारवर्जिता चेत् षाडवा। अल्पगान्धारश्चेत्पूर्णः। मालवगौलमेलजोऽयं रागः।

अस्य नामान्तरं नादनामक्रिया॥

परमेश्वरः

नादरामक्रिया गौरी मेलोत्पन्ना मभूषिता।
षड्जोद्ग्राहा च निन्यासारोहे गान्धारवर्जिता॥

प्रथमप्रहरोत्तरगेया।

अहोबिलः

**नादरामकृतिः—रागः (वंशे वादनक्रमः)**

ऋषभं महमास्थाय द्विस्त्रिर्वा ताडयेच्च तम्।
तमेव तु विलम्ब्याथ मध्यमं दीर्घतां नयेत्॥
रिगौ तु ऋषभस्यार्धमपि तु द्रुततां नयेत्।
निषादं तु विलम्ब्याथ तमेवोच्चारयेत्पुनः॥
धैवतं सकृदाहत्य वादयित्वा निषादकम्।
स्थायिस्वरे यदा न्यासो नादरामकृतस्तदा।
स्वस्थानमादिमं प्रोक्तं विदुषा वेमभूभुजा॥
यद्वा मध्यममास्थाय स्थायिनं पञ्चमं पुनः।
द्विस्त्रीर्वा ताडयित्वाथ धैवतादृषभावधि॥
द्रुतमेत्यावरोहेण रिषभार्धं च षड्जकम्।
पुनश्च रिषभस्यार्धं वादयित्वा ततःपरम्॥
रिमध्यमौ समुच्चार्य पञ्चमं तु विलम्ब्य च।
ग्रहन्यासान्नादरामकृतेः स्वस्थानमादिमम्॥

वेमः

**नादरामक्रियारागध्यानम्**

नीलवर्णां श्वेतवस्त्रधरां मकुटभूषिताम्।
वेणुवीणाकरां ध्याये नादरामक्रियां सदा॥

रागसागरः

**नादवती—श्रुतिः**

निषादस्य प्रथमा श्रुतिः।　　अनूपः

**नादवेदी—वीणा**

नकुलादीनां लक्षणे द्रष्टव्यम्।

**नादस्वरूपी—मेलरागः (रत्नाङ्गीमेलजन्यः)**

(आ) स रि म प ध नि – स.
(अव) स ध नि ध प म ग रि ग रि – स.

मज्ञ

**नादानुरणनम्—वंशे फूत्कारगुणः**

नादानुरणनं नाम घण्टाध्वनितसोदरम्।

कुम्भः

**नादान्तरी—रागः**

ऋषभे तारमन्द्रा स्यात् षड्जन्यासा च सग्रहा।
पूर्णा सनिधपैराढ्या गाल्पा नादान्तरीत्वियम्।
गान्धारस्वरमुख्यत्वात् करुणे तेन गीयते॥

जगदेकः

अथ नादान्तरी नाम तारमन्द्रा तथर्षभे।
अंशन्यासग्रहवती षड्जेनैकेन भूषिता॥
निषादसहितैः पूर्णा षड्जधैवतपञ्चमैः।
गान्धारस्वरमुख्यत्वमस्यास्सततमिष्यते॥

**नादान्ता—श्रुतिः**

षड्जस्य प्रथमाश्रुतिः। इयमेव मण्डलीमते तारषड्जस्य प्रथमा श्रुतिः।

षड्जस्य प्रथमा श्रुतिः।

सुधा

**नादोत्पत्तिनाड्यः**

चतस्रो जत्रुबन्धिन्या नाड्यः कण्ठमुपाश्रिताः　(स)
तालुमूलस्य बन्धिन्यस्तिस्रस्तत्रैव च स्थिताः　(रि)
ओष्ठयोरुभयोर्नाड्ये बन्धिन्यौ द्वौ व्यवस्थिते　(ग)
चतस्रो मूर्ध्नि बन्धिन्यो नाड्यो ब्रह्मपथाश्रयाः　(म)
नाड्यश्चतस्रस्तिष्ठन्ति दन्तानाबध्य सर्वतः　(प)
कण्ठताल्वोरन्तरे स्युर्नाड्यस्तिस्रस्तु सङ्गताः　(ध)
कण्ठोष्ठयोः द्वे बन्धिन्यौ नाड्ये तत्रैव तिष्ठतः　(नि)
एता द्वाविंशतिर्नाड्यो मध्यनाड्यां हृदि स्थिताः

जगदेकः

**नान्दी—पूर्वरङ्गाङ्गम्**

आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥

नान्दीपदानामन्तरेषु चित्रे पूर्वरङ्गे वर्धमानं प्रयोज्यं प्रागुक्तलक्षणम्। अन्ये तु गीतकप्रयोगादनन्तरं शुद्धे चित्रे च पूर्वरङ्गे वर्धमानप्रयोगमिच्छन्ति।

भरतः

**—देशीताल:**

नान्दीताले लघुः शून्यद्वितयं सगणो गुरुः ।००।।ऽऽ

सोमराजः

**—पूर्वरङ्गाङ्गम्**

नन्दी वृषो वृषाङ्कस्य जगदादौ जगत्पतेः।
नृत्यतः कल्पनायोगाज्जगाम किल रङ्गताम्॥

तस्य तद्रूपसंबन्धा पूजा नान्दीति कथ्यते ।
देवतादिनमस्कारमङ्गलारम्भपाठकैः ॥
या क्रिया नन्द्यते नाट्यारम्भे नान्दीति सा स्मृता ।
या पूर्वरङ्गसंबन्धा द्वाविंशत्यङ्गवर्तिनी ॥
सभ्यान्नन्दयतीत्येवं सापि नान्दीति कथ्यते ।
यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ॥
तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये ।
नान्दीश्लोको विधातव्यः चन्द्रनामाङ्क एव सः ॥
इहैव चन्द्रसंबन्धो लक्ष्यते व्यज्यतेऽथवा ।
नान्दी पदैर्द्वादशभिरष्टभिर्वाप्यलङ्कृता ।
समपादाथवा नान्दी भवेदिति च केचन ॥

शारदातनयः

प्रधानमङ्गं पूर्वरङ्गे सूत्रधारप्रयोज्यदेवस्तुतिसमाश्रया आशीर्वचनात्मिका नान्दी । सा द्वादशपदा अष्टपदा वा । पदमपि द्वयमत्र सम्मतम् । श्लोकस्य पाद एव पदं । तेषां मतेन श्लोकद्वयं श्लोकत्रयं वा विधातव्यम् । ये तु सुप्तिङसंज्ञाशब्दं पदमिच्छन्ति तेषां सुबन्ततिङन्तपदैर्द्वादशभिरष्टाभिर्वा एक एव श्लोकः कर्तव्यः ।

सागरः

गङ्गा गणपतिस्सोमः सुधानन्दो जयाशिषः ।
एतैर्नामपदैर्भाव्यैः नान्दी कार्या विचक्षणैः ॥
शिवानन्दकरी नान्दी नान्दी विघ्नोपशान्तये ।
सूत्रधारः पठेन्नान्दीं मध्यमस्वरमाश्रितः ॥

सोम इति हरचन्द्रावपि ।

शुभङ्करः

—तानः

षड्जग्रामे निगहीनौडुवः ।

प म रि स ध

कुम्भः

—मूर्छना

नन्दीशब्दे द्रष्टव्यम् ।

—श्रुतिः

षड्जप्रथमा श्रुतिः । जगदेकः

नान्दीमुखी—पञ्चदशाक्षरवृत्तम्

ननमयया: ।

भरतः

इदं वृत्तं मालतीत्युच्यते ।

नान्यन्ते

यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके ।
नान्यन्तशब्दबोधार्थमुक्तान्यङ्गानि लेशतः ॥
प्ररोचनान्तो नान्यन्तः प्रत्याहारादिकोऽथवा ।
अथ नान्यन्तशब्दोऽत्र षष्ठीतत्पुरुषोपि वा ॥

शारदातनयः

येषामङ्गानामन्ते सूत्रधारः कार्यमभिधत्त इति नान्यन्ते सूत्रधारः । एतदेव नान्यन्तशब्दवाच्यं यदनन्तरं काव्यप्रस्तावकप्रवेश इति कथं, सूत्रधारप्रयोज्यत्वात्तेषां कुतः खल्वन्ते सूत्रधारः ।

स एव तेषां पाठकः । स एव चान्त इति । सत्यं, सूत्रधाराकृतिः स्थापको नामान्यः प्रविशति सोयमन्ते स्यात् । उक्तानां पूर्वरङ्गानामन्ते समाप्तौ स्थापको नाम सूत्रधारशब्दवाच्यः प्रविशति । स च सुवाक्यमधुरैः श्लोकैः रङ्गं प्रसाद्य कवेर्नाम कीर्तयति । पुष्पाञ्जलिप्रभृतिनानाभावरसान्वितान् श्लोकानयमपि पठति । भरतोपदिष्टः क्रमः मानुष्यां सभायां सङ्कटतया नोपन्यस्तः । भारतीवृत्तिमाश्रित्य पुष्पाञ्जलिः कर्तव्या ।

सागरः

नान्यदेवः

सरस्वतीहृदयालङ्कारकर्ता । अयं कर्णाटजातीयः । राष्ट्रकूटराज्ञामन्यतमः । अस्य भ्राता कीर्तिराजः काशीदेशाधीशः । नान्यस्तु मिथिलेश्वरः । नेपालसिंहासनमात्मबन्धुमधिष्ठापयामासेति देशचरित्रात् ज्ञायते । ग्रन्थमहार्णव इति ग्रन्थान्तरमनेन रचितम् । क्रै. प. १०८० वर्षे अस्या वासकालेति ज्ञायते । मोहनमुरारिः, क्ष्मापालनारायण इत्यादि बहुविरुदान्यस्य वर्तन्ते ।

नामिका—श्रुतिः

षड्जस्य प्रथमा श्रुतिः । हनुमन्मते

हनुमन्मते अष्टादश श्रुतयः । उद्देशक्रमं पश्यत ।

नामनारायणी—मेलकर्ता (रागः)

स रि ग ० ० ० म प ० ध ० नि स .

मञ्ज

नामप्रभा—मेलरागः (शुभपन्तुवरालीमेलजन्यः)

(आ) स रि ग म ध नि स .
(अव) स नि ध म ग रि स .

मञ्ज

नामवराली—मेलरागः (वनस्पतिमेलजन्यः)

(आ) स रि ग म प ध – स .
(अव) स नि ध नि प म ग रि – सं .

मञ्ज

नामावली—देशीनृत्तम्

समे स्थित्वा स्थाने यदि भवति सूल्लू सुललिता
करौ स्वान्ते कृत्वा रुचिरशिखरौ योगसहितौ ।

ततः पार्श्वे सव्ये प्रसरति लताख्ये यदि भवेत्
करौ व्यावृत्यासौ हृदि शिखरतामेति सपदि ॥

पुरः पार्श्वतो दक्षवामौ पताकौ यदा प्रसृतौ
तद्दक्षवामेऽलपद्मौ कृतौ हंसवक्त्रौ पुरस्तौ ।

विधेयौ करौ चालपद्मौ हृदि स्थितौ पुनस्तौ ।
भवेदादितालेन तत्कारपूर्वक्रमोयं सदा देवनामावलीनां ।
विनोदास्तु तासां सदा संप्रयुक्तश्चतुः पञ्चषट्खण्डकैःकोहलेन॥

तत्र तत्कारशब्दो यथा—

थैथै तत तत थै जगजग तथ तथ जग जग तत्थथ इति नामावली तत्कारः ।

वेदः

नायकः

अथैष प्रत्येकमपि चतुर्धा भिद्यते । नायकः, उपनायकः, अनुनायकः प्रतिनायक इति । तत्र कथाशरीरव्यापी यथोक्तगुणयुक्तो नायकः । नायकाभ्यर्हणीयः सम उत्कृष्टो वा अनवाप्तपद उपनायकः । नायकात्किञ्चिदूनः कथाशरीरे विशेषोपयोगवाननुनायकः । नायकप्रतिकूलवृत्तिः तदुच्छेदावहप्रतापाभिमानार्थसाहसादिगुणोत्कर्षी धीरोद्धतप्रायः प्रतिनायकः । नायिकास्वपि एष भेदो वर्तते, यथा—उदात्ता, उद्धता, ललिता, शान्ता, प्रधाननायिका उपनायिका, अनुनायिका, प्रतिनायिका चेति ।

विभावलक्षणमुक्तमेव द्विविधो विभावः । आलम्बनविभावः उद्दीपनविभावश्च । यमालम्ब्य रत्यादय उत्पद्यन्ते स आलम्बनविभावो नायकादिः । तत्र नायकश्चतुर्धा, धीरोदात्तधीरोद्धतधीरललितधीरशान्तप्रभेदात् । धैर्यं हि नाम नायकव्यपदेशहेतुः इन्द्रियाविकारकारणं चित्तधर्मः । येन सतां सत्यपि गर्वादिहेतौ गुणसमूहेनोत्सेकादयो जायन्ते ।

भोजः

नायक इति वीजबिन्द्वादिसंवलितस्य नाटकस्य नाट्यमन्तं नयतीति नायकः । स एव धर्मकामार्थफलभाग्भवति ।

सागरनन्दी

नायकगुणाः

उत्तमत्वादिहेतवश्च नायिकानायकानां सामान्यगुणाः जात्यादयश्चतुर्विंशतिः । यथा—जातिः, अन्वयः, अभिजनः, निवासः, आस्पदं, पदं, पितरौ, प्रभावः, प्रतिज्ञा, शास्त्रज्ञानं,अदीनवाक्यता, वाग्मित्वं, देशकालावबोधः, इङ्गिताकारज्ञता, दाक्ष्यं,कलावैदग्ध्यं, चतुरता, रूपसंपत्, सौभाग्यं, त्यागः, सौहार्दं, महारंभता, शक्तिः, शौर्यमिति । नायिकानां च प्रत्येकं षोडशगुणाः, महाकुलीनता, रूपसंपत्, यौवनं, सौभाग्यं, सुवेषता, शुचिता, शीलसंपत्, प्रियंवदता, चातुर्यं, वाग्मिता, शास्त्रज्ञानं, अदीनवाक्यता, अविकत्थनत्वं, मानिता, कृतज्ञता, दृढभक्तिः, इति ।

भोजः

नायकसिद्धिः

भास्वरशब्दे द्रष्टव्यम् । भास्वरजातिनाटके द्वितीयस्सन्धिः ।

शारदातनयः

नायकी—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि म प ध नि प स.
(अव) स नि ध प म ग रि स.

मञ

—मेलरागः

(आ) स ० रि ० ० म ० प ० ध नि ० स.
(अव) स ० नि ध ० प ० म ० ग रि ० स.

मेललक्ष्मे

नायिकाः

नायिका अपि चतस्रः । स्वकीया परकीया पुनर्भूस्सामान्या चेति । अत्र केचित्पुनर्भुवं नायिकां न मन्यन्ते ।

भोजः

नायिकाभेदाः

स्वाऽन्या साधारणी चेति नायिका त्रिविधा मता ।
मुग्धा मध्या प्रगल्भेति त्रेधा स्वीया विभज्यते ॥

मध्या त्वधीरा धीरा च धीराधीरेति भिद्यते ।
भिन्ने ज्येष्ठाकनिष्ठेति प्रगल्भा मध्यमापि च ॥

तयोरुदात्तललितशान्तभेदैस्त्रिधा मता ।
ऊढा च कन्यका चेति द्विविधान्याङ्गना भवेत् ॥

साधारणस्त्री गणिका सा ह्येकैव न भिद्यते ।
त्रयोदशविधा स्वीया द्विविधान्याङ्गना मता ॥

एका वेश्या पुनश्चाष्टावस्थाभेदतोऽपि ताः ।
पुनश्च तास्त्रियस्सर्वा उत्तमाधममध्यमाः ॥

इत्थं शतत्रयं तासां अशीतिश्चतुरुत्तरा ।
संख्येयं रुद्रटाचार्यैरुपभोगाय दर्शिता ॥

शारदातनयः

रुद्रटाचार्येण शृङ्गारतिलके उक्तम् ।

## नायिकाशीलम्

सुखस्य च स्त्रियो मूलं नानाशीलधराश्च ताः ।
देवतासुरगन्धर्वरक्षोनागपतत्रिणाम् ॥
पिशाचऋक्षव्यालानां नरवानरहस्तिनाम् ।
मृगमीनोष्ट्रमकरखरसूकरवाजिनाम् ।
महिषाजगवादीनां तुल्यशीलाः स्त्रियः स्मृताः ॥

भरतः

## नारदः

पञ्चमसारसंहिता, नारदीयशिक्षा, एते नारदकृते । नारदेन गान्धारग्रामस्वरूपं सुष्ठूक्तम् । एष ग्रामः स्वर्गलोक एव प्रयोगेऽस्तीति बहूनां मतम् ।

## नारदप्रियः—तानः

गान्धारग्रामे नारदीयतानः ।
रि ग म प ध नि ?

नान्यः

## नारदीयतानाः

ते एकोनपञ्चाशत् । तेषां नामानि च षड्जमध्यमग्रामयोरनुलोमषाडवौडवाभ्यां भरतामिहितचतुरशीतितानेभ्यो निरन्तरैकान्तरविवादिपुनरुक्तत्यागाच्चतुर्विंशता गान्धारग्रामेऽपि अनुलोमषाडवौडवाभ्यां पञ्चत्रिंशत्तानेभ्यः पञ्चदशानामेव । आहत्यैकोनपञ्चाशन्नारदेनोक्ताः ।

## नारदीयशिक्षा

नारदकृता । इयं सामवेदशिक्षा । अस्याः व्याख्या शुभाकरकृता मुद्रिता च वर्तते । शुभाकरकृतायाः अस्याः व्याख्यायाः टीका नान्यदेवेन सूचिता ।

## नाराचकम्—मात्रावृत्तम्

ल ग　ल ग　ल ग　ल ग

विरहाङ्कः

## नाराटः—ध्वनिभेदः

बाहुल्यात्तालसंस्पर्शी माधुर्यगुणवर्जितः ।
नाराटोऽयं परिज्ञेयो गीतध्वनिविशारदैः ॥

पार्श्वदेवः

## नारायणः—देशीतालः

द्रौ जो नारायणे गुरुः　　० ० । ऽ । ऽ

मदनः

द्रुतौ जश्च गुरुर्नारायणाभिधे　　० ० । ऽ । ऽ
नारायणे द्रुतद्वन्द्वं जगणश्च गुरुः क्रमात्　० ० । ऽ । ऽ

सुधा

## नारायणगौलः—मेलरागः

अथ नारायणे गौले तीव्रगान्धारसंयुते ।
आरोहे च धगौ नस्तो निर्योरन्यतरादिमे ॥
पुनः स्वस्थानगमक आरोहे रिपयोर्मतः ।
पूर्वोत्तराहृतोपेते मध्यमन्यासमण्डिते ॥
तृतीयप्रहरोत्तरगेयः ।

अहोबिलः

—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

( आ )　स रि म प नि ध नि स .
( अव )　स नि ध प म ग रि स .

मञ्ज

## नारायणगौलारागध्यानम्

प्रावृट्कालपयोदचारुरुचिरां श्वेताम्बरालङ्कृतां
ज्योत्स्नातुल्यसिताङ्गकान्तिविलसत्कान्तायुतां कैशिकाम् ।
रत्नव्यापितकीरपञ्जरकरान्तर्बोलिकानूनवाक्
क्षिप्तां मे मनसा स्मरामि सततं नारायणीगौलिकाम् ॥

रागसागरः

## नारायणदेवः

सङ्गीतनारायणकर्ता । किमिडिमण्डलाधीशः । १६०० कालात्पूर्वः । अनेन बहवो ग्रन्थाः तत्कर्तारश्च स्मृताः ।

यथा—सङ्गीतदामोदरः, कोहलीयं, आदिभरतं, नाट्यदर्पणं, सङ्गीतकौमुदी, सङ्गीतसारः, कृष्णमूर्तिः, सिंहलः, पक्षधरः, कल्पतरुः, परशुरामसंहिता, शिरोमणिः, गीतप्रकाशः, पञ्चमसारसंहिता, हरिनायकः, मम्मटकृता संगीतरत्नमाला, कलाङ्कुरनिबन्धः, कृष्णदत्तः, इत्यादयः ।

## नारायणप्रियः—नृत्तबन्धः

यत्राद्यपङ्क्तेः प्रथमं स्थानं प्राप्ता तु नर्तकी ।
तस्मादाद्यं व्रजेत्स्थानं द्वितीयः स्यात्ततः परम् ॥
तृतीयः स्याद्द्वितीयं च तुर्यायाश्च तृतीयकम् ।
चतुर्थं च क्रमात्प्राप्य तृतीयं स्याच्चतुर्थकम् ॥
द्वितीयायास्तुरीयं च प्रथमाया द्वितीयकम् ।
स्थानं यथाक्रमं गच्छेदाद्यपङ्क्तेश्चतुर्थके ॥
स्थाने स्थित्वा नर्तकी तु क्रमाद्विनिमयं चरेत् ।
शेषस्थानेषु संप्रोक्तो बुधैर्नारायणप्रियः ॥

वेमः

## नारायणमदनावासः—सूडप्रबन्धः

रागो वराटिका यत्र तालो वर्णयतिस्तथा ।
पदानि स्वेच्छयालापभूषितानि यथाद्युति ॥

ततः स्वराश्च पाटाश्च ततः पद्यानि कानिचित् ।
इति नारायणपदान्मदनावासनामकः ।
प्रबन्धः क्षितिनाथेन लोकनाथस्य निर्मितः ॥

कुम्भः

**नारायणस्तुतिः**—गीतं (गान्धारग्रामे)

पुरा वामनरूपेण बलिं छलयता किल ।
त्रिविष्टपं त्रिभिः क्रान्तं विक्रमैश्चक्रपाणिना ॥
तं च विश्वावसुर्नाम गन्धर्वगणसेवितः ।
क्रामन्तं गगनं वेगात् त्रिश्चकार प्रदक्षिणम् ॥
तेन च स्वयमुत्पाद्यस्तुवता गरुडध्वजम् ।
नारायणस्तुतिं नाम गीतं गीतकमद्भुतम् ।
नारदेन ततः प्राप्तं नारदाद्वृत्रशत्रुणा ॥

बुधस्वामी

**नारायणी**—मेलरागः

मेलकर्ताऽयम्

नारायण्यां गनी तीव्रौ गान्धारादिकमूर्छना।
आरोहे गनी वर्ज्यौ स्यान्न्यासांशधैवताः स्मृताः ॥
प्रातर्गेयः । अहोबिलः

—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म प ध स.
(अव) स नि ध प म रि स.

ज्ञम

**नारायणीरागध्यानम्**

श्रीस्वामिपादार्चनसव्यहस्तां
सौवर्णकुम्भार्चितवामहस्ताम् ।
आलीजनैर्दत्तमहोपचारां
नारायणीं मे मनसा स्मरामि ॥

रागसागरः

**नारिकेलपाकः**

स नारिकेलपाकः स्यादन्तर्गूढरसोदयः ।

रसिकरसायने

**नारिकेलहस्तः**

शुकतुण्डौ संयुतौ चेन्नारिकेलाख्यहस्तकः ।
शिरोभागस्थितो हस्तो नारिकेले च मस्तके ॥

विनायकः

**नालगभैरवी**—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि म प ध स.
(अव) स नि ध प म ग रि स.

मज

**नालिका**—नृत्तरूपकम्

शृङ्गारबहुलैकाङ्का त्रिसन्धिर्न्यूननायिका ।
विदूषकविटोपेता पीठमर्दसमन्विता ॥
दशलास्याङ्गसंपन्ना स्वल्पवृत्तिर्मनोहरा ।
सनैपथ्या तु कथिता नालिका मुनिना सदा ॥

शुभङ्करः

—वीथ्यङ्गम्

हास्येनोपगतार्थप्रहेलिका नालिकेति विज्ञेया।
हासेनोपगतार्था प्रहेलिका परवितारिणी ॥

भरतः

अत एव हास्ययुक्ता सा नालिका प्रणालिका। व्यजेत्यर्थः प्रकर्षेण हेलिका नर्मादिक्रीढारूपं यस्यास्सा प्रहेलिका। यथा—रत्नावल्यां सुसंगतासागरिकासंभाषणानन्तरमाच्छादितं चित्रफलकम् ।

अभिनवः

केचित् हास्यहेतुनोपेतां निगूढार्थरूपां प्रहेलिकां नाटये मन्यन्ते। यथा— बालिकावञ्चितके — पारिप्रार्श्वकः पठति "तेजोमयं दिनकराद्द्वितीयमाचक्ष्व मे भूतम्।" इति निगूढो नारदलक्षणोऽर्थः सूत्रधारोऽस्मिन्नेव श्लोके द्वितीयमेनं मुनिं पश्य, इति चतुर्थपादमान्यथाकरणेन व्याख्यातः ।

रामचन्द्रः

यत्तु वाच्यं प्रपञ्चेन वदेद्वा हास्यहेतुना ।
प्रहेलिकेव गूढार्था सा ज्ञेया नालिका बुधैः ।
गूढार्थप्रश्नमिच्छन्ति नालिकामपरे यथा ॥

यथा—वासवदत्ताहरणे—

हस्ते कर्णस्य का शक्तिः क्षसमध्यगतोऽस्ति कः ।
परैः किमधितिष्ठन्तो न वाच्याश्शस्त्रिणो हताः ॥

सागरः

अत्र प्रथमप्रश्ने वासवदत्ता द्वितीयप्रश्ने ह तृतीयप्रश्ने रणम्। इति वासवदत्ताहरणमिति प्रहेलिका लभ्यते। इयमेव नालिका ।

प्रहेलिका निगूढार्था हास्यार्थं नालिका स्मृता ।
अन्तर्लापा बहिर्लापेत्येषा द्वेधा समीरिता ॥

सिंगः

**नाली**—श्रुतिः

गान्धारस्य चतुर्थी श्रुतिः ।
हनुमन्मतेऽष्टादशैव श्रुतयः। अत्र मते गान्धारश्चतुश्श्रुतिः।

**नालोलः**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स रि ग म प नि स.
(अव) स नि प ध प म ग म रि स.

मज

**नाशः**—विमर्शसन्धौ प्रथममङ्गम्
मुख्यकारणवैधुर्यं नाशः। यथा—मायामदालसे मदालसानाशो राज्ञो दर्शितः।

सागरनन्दी

**नासामञ्जरी**—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स ग रि ग प नि ध नि स.
(अव) स नि ध नि प म रि स.

मज

**नासिका**
नतामन्दा विकृष्टा च सोच्छ्वासाथ विकूणिता।
स्वाभाविकी चेति धीरैर्नासिका षड्विधोदिता॥

विप्रदासः

**नासिकाभूषणम्**—मेलकर्ता (रागः)
स रि ग ० म प ध ० नि ० स.

मज

**नासामणिः**—मेलरागः (नासिकाभूषणमेलजन्यः)
(आ) स रि ग म प स.
(अव) स नि ध नि प म रि स.

मज

**नि**
निषादस्वरः
—तालचिह्नम्
नि – निष्क्रामः

**निकुञ्चितम्**—करणम्
वृश्चिके चरणे योऽसौ पादं तं विधिवद्धृत्।
एतद्विकमरालं च शिरसः पार्श्वतः करम्॥
तथैवान्यमुरःक्षेत्रे नासिकाग्रानुसारिणम्।
यत्र कुर्वीत तत्त्वज्ञैः निकुञ्चितमुदाहृतम्॥
नासिकाग्रपताकोऽन्यैः प्रोक्तस्सूचीमुखोऽपरः।
अत्रालपल्लवः कीर्तिधराचार्येण कीर्तितः।
आकाशोत्पतनोत्कण्ठावितर्कादाविदं मतम्॥

ज्यायनः

**निकुञ्चिता**—भ्रूः
एकस्या उभयोर्वापि वक्रतायां निकुञ्चिता।
मोट्टायिते कुट्टमिते विलासे स्यान्निकुञ्चिता॥

सोमेश्वरः

**निकुट्टकम्**—करणम्
निकुट्टितौ यदा हस्तौ स्वबाहुशिरसोऽन्तरे।
पादौ निकुट्टितौ चैव ज्ञेयं स तु निकुट्टकः॥

भरतः

मण्डलस्थानके कृत्वा चतुरश्रतयास्थितः।
उद्वेष्ट्य दक्षिणं हस्तं नीत्वा स्कन्धशिरस्समम्॥
पतनोत्पतनाविष्टकनिष्ठाद्यङ्गुलीद्वयम्।
अलपद्माकृतिं कृत्वोद्घट्टितेऽङ्घ्रौ च दक्षिणे॥
आविद्धवक्त्रतां नीत्वा करेऽलं चतुरश्रिते।
तथैव वामपाण्यङ्घ्रि यत्र स्यात्तन्निकुट्टकम्।
आत्मसंभावनाख्यानपरे वाक्ये नियुज्यते॥

शार्ङ्गदेवः

**निकुट्टकः**—पादपाटः
कुञ्चितेन पदाग्रेणावस्थितिः स्यान्निकुट्टकः।

वेमः

**निकुञ्चः**—मणिबन्धः
बहिर्यो निम्नतां प्राप्तो निकुञ्चोऽसौ मतस्सताम्।
दाने त्वभयदानेऽपि मुनिना सम्प्रदर्शितः॥

अशोकः

अन्तर्वक्रो निकुञ्चस्स्यादाह्वानादौ स युज्यते।

सोमेश्वरः

**निकुट्टितम्**—करणम्
मण्डलस्थानके स्थित्वा चातुरस्त्र्यादनन्तरम्।
हस्तमुद्वेष्टितं सव्यं स्कन्धदेशे निकुट्टयेत्॥
तमेवोद्घट्टितं पादं कुर्याद्वामं यथास्थितम्।
पाणिपादमदाविद्धवक्रवर्तनकारणम्॥
तमेव चतुरस्रं च तस्यैव समकालतः।
अङ्गं निकुट्टयेदन्यत्पूर्ववद्यत्र तत्स्मृतम्॥
निकुट्टकं मुहुर्वाक्ये स्वस्य श्लाघाप्रधानके।
अलपद्मकनीयस्याः पतनोत्पतनात्मकम्।
निकुट्टकमितिज्ञेयं स्कन्दकोहलसम्मतम्॥

ज्यायनः

**निकृतिः**—वीणावादने दोषः
निकृतिस्तद्भवेद्यावं स्वरो यत्र बहिर्व्रजेत्।

कुम्भः

**निकृष्टम्**—दर्शनम्

निकृष्टं तदधोवक्रमपाङ्गस्यापसर्पणम् ।

वेमः

**निक्काणवसन्तः**—मेलरागः (सिंहेन्द्रमध्यममेलजन्यः)

(आ) स रि ग प ध स.

(अव) स नि ध प म ग रि स.

मल्ल

**निगूहितौ**—अधरौ

आकृष्टौ द्वावपि मुखे कथितौ तौ निगूहितौ ।
शोपे दुःखे च कर्तव्यौ प्रयोगनिपुणैरिमौ ॥

सोमेश्वरः

**निजवणा**—देशीलास्याङ्गम्

नन्द्यावर्ताभिधे स्थाने जानुनी पार्श्वयोर्नते ।
स्थितिर्निजवणा सैव विज्ञेया नृत्तकर्मणि ॥

वेदणः

**निजार्पणम्**—देशीलास्याङ्गम्

सौष्ठवं रेखया युक्तं प्रेक्षकेच्छानुसारतः ।
हस्तानुगतभावार्द्रं दृष्टिभिस्सुमनोहरम् ।
अप्रयत्नकृतं नृत्ते निजापणमुदीरितम् ॥

ज्यायनः

**नितम्बम्**—करणम्

व्यावर्तितं शिरोदेशमानीयाभिमुखाङ्गुली ।
पताकौ परिवृत्योर्ध्वौ निष्कासितभुजौ करौ ॥
यदा स्वमंसयोर्न्यस्येदितरेतरसम्मुखौ ।
ततस्तौ यत्र कुर्वीत नितम्बौ देहसम्मुखौ ।
बद्धायामासतश्चार्यां तन्नितम्बं निरूपितम् ॥

ज्यायनः

**नितम्बवर्तना**

नितम्बौ तु यदा हस्तौ विश्लिष्टाङ्गुलिपल्लवौ ।
मणिबन्धावधिभ्रान्तौ वर्तित्वा स्कन्धदेशयोः ॥
पुनर्नितम्बदेशस्थौ वर्तितौ क्रमशस्तदा ।
नितम्बवर्तना सोक्ता लक्ष्यलक्ष्मविशारदैः ॥

अशोकः

**नितम्बौ**—नृत्तहस्तौ

पताकौ त्रिपताकौ वा भूत्वोत्तानावधोमुखौ ।
स्कन्धप्रदेशान्निष्क्रम्य नितम्बक्षेत्रमाश्रितौ ॥
रेचितौ विदधानौ यौ तौ नितम्बाभिधौ करौ ।
पृष्ठक्षेत्रभ्रमादेतौ नितम्बाविति केचन ॥

विप्रदासः

**निदर्शनम्**—श्रव्यकाव्यम्

निश्चीयते तिरश्चामतिरश्चां वा यत्र चेष्टाभिः ।
कार्यमकार्यं वा तन्निदर्शनं पञ्चतन्त्र्यादि ॥
धूर्तविटकुट्टनीमतमयूरमार्जारिकादि यल्लोके ।
कार्याकार्यनिरूपणस्वरूपमिह निदर्शनं तदपि ॥

भोजः

धूर्तविटः । ईश्वरदत्तकविकृतो भाणः । तस्मिन् मानिनीमानमोचनादिविषया बहवः शास्त्रविदारभ्या चर्चिताः । कुट्टनीमतं प्रसिद्धो ग्रन्थः । मयूरमार्जारिकं प्रहसनम् ।

—लक्षणम्

यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।
पराप्रेक्षाव्युदासार्थं तन्निदर्शनमुच्यते ॥

भरतः

यथा—उभयाभिसारिकायां शान्ति यातीति श्लोकः ।

**निद्रा**—व्यभिचारिभावः

दौर्बल्यश्रमक्लममदालस्यचिन्ताव्याहारस्वभावादयो विभावाः । वदनगौरवशरीरावलोकननेत्रघूर्णनगात्रविजृम्भणमान्द्योच्छ्वसितसन्नगात्रताक्षिनिमीलनादयोऽनुभावाः ।

भरतः

दौर्बल्यालस्यविपच्चिन्ताभिर्जायते । मुखगौरवजृम्भास्यप्रायितैरभिनेत या ।

सागरः

सम्मीलनं हि चित्तस्य निद्रेति परिगीयते ।
दुःखातिरेकवैक्लव्यमनःखेदादिभिर्भवेत् ।
तत्र स्युरङ्गविक्षेपश्वासायासक्रियादयः ॥

सर्वेश्वरः

—चित्राभिनयः

मदस्वभावव्यायामनिश्चिन्तत्वसमाधिभिः ।
मानोनिमीलनं निद्रा.................॥
हनुस्थले पताकन्तु पुरस्तात् शिखरं करम् ।
चालयेद्यदि चिन्ताया राहित्ये विनियुज्यते ॥
हृदिस्थाने तु मुकुलं पुरस्तात्तु पताककम् ।
चलितं मन्दभावे तु रूपयन्ति मनीषिणः ॥
चतुरश्रपताकस्तु पुरोभागे तु चालितः ।
व्यायामार्थे दर्शयन्ति भरतागमवेदिनः ॥
प्राणायामाख्यहस्तस्तु नासाग्रे संस्थितो यदि ।
निमीलिताख्यदृष्टिश्च समाधेस्तु निरूपणे ॥

विनायकः

**निद्रानुभवः**—संगीतश्रृङ्गाराङ्गम्
रतावसाने सुखस्वापः ।
भोजः

**निन्दोपमा**—अलङ्कारः
(उदा) सा तं सर्वगुणैर्हीनं सस्वजे कर्कशच्छविम् ।
वने कण्टकिनं वल्ली दावदग्धमिव द्रुमम् ॥
भरतः

**निपीडिता**—वंशेऽङ्गुलिगतिः
सुषिरैस्सर्वधानेकैरङ्गुलीभिस्समन्ततः ।
यदा पूर्यते वंशं ज्ञेया सा निपीडिता ॥
विशाखिलः

विधायाङ्गुलिभिस्सम्यक् सर्वाणि सुषिराण्यपि ।
यद्वंशपूरणं सा तु गतिः प्रोक्ता निपीडिता ॥
वेमः

पूर्यतेऽत्र यदा वंशो रन्ध्राष्टकपिधानतः ।
त्रिस्थानस्वरसंभूत्यै तदा ज्ञेया निपीडिता ॥
कुम्भः

**निबद्धम्**
यतिच्छन्दस्समायुक्तं तथा च नियताक्षरम् ।
पादैश्चतुर्भिर्नियतं निबद्धं पदमीरितम् ॥
कुम्भः

**निबद्धगीतम्**
धात्वङ्गसङ्गतं ज्ञेयं निबद्धं गीतकोविदैः ।
जग-मल्लः

**निबन्धपर्यायाः**
प्रबन्धं रूपकं वस्तु निबन्धस्याभिधात्रयः ।
जग-मल्लः

**निभृतम्**—दर्शनम्
निभृतं ज्ञेयमाश्लिष्टं पुटमन्तरधोमुखम् ।
वेमः

**निमेषितौ**—पुटौ
निमेषितौ तु पुटयोस्संश्लेषात्क्रोधगोचरौ ।
कुम्भः

**नियतफलप्राप्तिः**—अवस्था
नियतां तु फलप्राप्तिं यदा भावेन पश्यति ।
नियतां तां फलप्राप्तिं सगुणाः परिचक्षते ॥
भरतः

**नियताक्षरा**—चतुष्पदागीतम्
यस्याः स्युः प्रथमे पादे गुरुलघ्वक्षराणि तु ।
तानि सर्वत्र पादादौ पादान्ते वा भवन्ति चेत् ।
चतुष्पदा सा कथिता नाट्यज्ञैर्नियताक्षरा ॥
वेमः

**नियमान्वितः**—वाद्यालङ्कारः
प्रशान्तनियमोपेतः स्फुटवाद्यसमन्वितः ।
उपयाति च गीतं यः स ज्ञेयो नियमान्वितः ॥
भरतः

प्रशान्तगीतिं सरति नियमस्यानुवर्तनात् ।
नियमान्वित इत्येवमलङ्कारं विदुर्बुधाः ॥
नान्यः

**निरनवद्यः**—मेलरागः ( धीरशङ्कराभरणमेलजन्यः)
( आ ) स रि ग म ध नि स .
( अव ) स नि ध म प म ग म रि स .
मङ्ग

**निरन्तरालम्**
किन्नर्यां दक्षिणहस्तव्यापारः ।
तत्र द्रष्टव्यम् ।

**निरस्तः**—श्वासः
असकृन्निर्गतो वक्त्रान्निरस्तश्शब्दवान्मरुत् ।
सरोगे दुःखसन्तप्ते शान्ते चैष विधीयते ॥
विप्रदासः

**निरालम्बा**—भाषाङ्गरागः
निरालम्बा तु संपूर्णा मांशान्ता पञ्चमग्रहा ।
गमन्द्रा तारधा चैव श्रृङ्गारे ताडिता मता ॥
कुम्भः

**निरुक्तम्**
नानानामाश्रयोत्पन्नं निघण्टुनियमान्वितम् ।
धात्वर्थहेतुसंयुक्तं नानासिद्धान्तसाधितम् ॥
स्थापितोऽर्थो भवेद्यत्र समासेनार्थसूचकः ।
धात्वर्थवचनेनेह निरुक्तं तत्प्रचक्षते ॥
भरतः

—**लक्षणम्**
निरुक्तं द्विविधं प्रोक्तं तथ्यं चातथ्यमेव च ।
सिद्धिपूर्वं भवेत्तथ्यमतथ्यं चाप्रसाधितम् ॥
भरतः

सिद्धिर्लक्षणेन स्वीकारः। तया प्रसाधितं तथ्यम्। ततोऽन्यदतथ्यम्। वीरोत्सव इति श्लोके अर्जुनकृष्णनाम्नोः परस्परमन्यत्र तथ्यत्वं स्वविषये त्वतथ्यता। अन्ये पठन्ति—

निरवद्यस्य वाक्यस्य पूर्वोक्तार्थप्रसिद्धये।
यदुच्यते तु वचनं निरुक्तं तदुदाहृतम्॥

भरतः

पूर्वस्य यत्प्रोक्ते सम्बन्धी कश्चिदर्थः 'तस्य प्रसिद्धयेऽवद्याभावस्य वाचकं यदुच्यते तेन निरुक्तमिति निरर्थकमेवात्र वाच्यम्।

अभिनवः

**निरोधः—निर्वहणसन्ध्यङ्गम्**

कार्यस्यान्वेषणं युक्त्या निरोध इति कीर्तितः।

भरतः

यथा—कुत इयं कन्यकेति वसुभूतिवाक्यं रत्नावल्याम्।

अभिनवः

निरोधः कार्यमीमांसा। नष्टस्य कार्यस्य युक्तये यत्तदन्वेषणं तन्निरुद्धवस्तुविषयत्वात् निरोधः। छलितरामे अये कथमित्यादि लववाक्यम्।

रामचन्द्रः

अस्तव्यस्तस्य कार्यस्य निरोधोऽन्वेषणं भवेत्।

सर्वेश्वरः

**—प्रतिमुखसन्ध्यङ्गम्**

या तु व्यसनसंप्राप्तिः स निरोधः।

पाठान्तरं—

सुखानां सन्निवेशो यः स निरोध इति स्मृतः।

भरतः

यथा—रत्नावल्यां उच्चैर्हसता त्वयेयं त्रासिता इति राजवाक्यम्। व्यसनमत्र खेदमानं। अभीष्टोपरोधान्निरोधः।

अभिनवः

सागरनन्दी तु विरोध इति पठति।

**निरोधनम्—अवमर्शसन्ध्यङ्गम्**

विरोधनस्य पाठान्तरम्।

**निर्घोषः—हौडुक्किकहस्तपाटः**

कोणाघातप्रकारेण निर्घोषस्तु भवेद्यथा।
नखखि थोंथों दिगिदिथों दिगिद।

वेमः

**निर्जरमणिः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)**

(आ) स ग म ध म प नि ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

**निर्णयः—निर्वहणसन्ध्यङ्गम्**

उद्भूतवस्तुकथनं निर्णयः परिकीर्तितः।

सर्वेश्वरः

अनुभूतार्थकथनं निर्णयः।

भरतः

प्रमाणसिद्धस्य वस्तुनः कथनमित्यर्थः। रत्नावल्यां अपि रत्नावलीति वसुभूतिवचनप्रभृति यावद्विदूषकवाक्यम्।

अभिनवः

निर्णयोऽनुभवख्यातिः। ज्ञेयेऽर्थे सन्दिहानमप्रतिपद्यमानं वा यदनुभूतस्यार्थस्य कथनं तद्ज्ञेयार्थनिर्णयान्निर्णयः। यथा—पुष्पदूषितके किन्नाम नक्षत्र इति समुद्रदत्तप्रश्नस्य सेनापतेरुत्तरम्। तच्छ्रुत्वा समुद्रदत्तस्य पूर्वचरितस्मरणम्। एतौ ताविति कथनं।

रामचन्द्रः

**निर्दोषः—वर्णालङ्कारः**

यथा—सरि, सरिगम, रिग, रिगमप, गम, गमपध, मप, मपधनि, पध, पधनिस।

प्रतापसिंहः

**निर्नादी—श्रुतिः**

मन्द्रनिषादद्वितीया श्रुतिः।

मण्डली

**निर्भासनम्—लक्षणम्**

अनेकयुक्ति यद्वाक्यमनेकार्थप्रसाधकम्।
अनेकवाक्यसंयुक्तं भासनं नाम तद्भवेत्॥

भरतः

भासनमिति च पठ्यते। भास्यते प्रकृतः क्रोधादिर्येन इति।

अभिनवः

**निर्भुग्नम्—वक्षः**

निम्नपृष्ठतया स्तम्भसंयुतं च तथोन्नतम्।
निर्भुग्नमुच्यते वक्षस्तच्च सत्यस्य भाषणे॥

माने स्तम्भे विस्मये च वीप्सायां हर्षगर्वयोः।
उत्सेके च प्रयोज्यं स्यादिति नैधिकरोऽब्रवीत्॥

नैधिकरः, निधिकरकुमारो विप्रदासः।

**निर्मलः—गीतालङ्कारः (ध्रुवभेदः)**

क्रीडाताले ध्रुवः स स्यान्मध्यवर्णाब्धिनिर्मलः।
शृङ्गाररससंपूर्णः श्रोतुस्तेजोऽभिवर्धनः।
एक एव प्लुतो यस्मिन्क्रीडातालस्स कथ्यते॥

संगीतसारः

**निर्मलगौलः**—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म ग रि ग म ध नि स.
(अव) स नि ध प म ग रि स रि स.

मञ्ज

**निर्मुण्डाः**

नपुंसका ये पुरुषाः स्त्रीस्वभावेन वर्जिताः ।
निर्मुण्डा नामतो ज्ञेयाः कामविज्ञानवर्जिताः ॥

भरतः

**निर्युक्तप्रबन्धः**

छन्दस्तालादिनियमान्निर्युक्तास्ते निरूपिताः ।

पार्श्वदेवः

**निर्युक्तानिर्युक्तप्रबन्धाः**

कचिदङ्गं कचिच्छन्दो गीते यस्मिन् विराजते ।
उभयात्मकमित्याहुर्गीतं गीतविशारदाः ॥

पार्श्वदेवः

**निर्वहणम्**—सन्धिः

यत्नानयनमर्थानां मुखाद्यानां महौजसाम् ।
फलोपबृंहितानां स्याद् ज्ञेयं निर्वहणं तु तत् ॥

भरतः

क्रियाफलेन सम्यग्योगो निर्वहणम् ।

भोजः

**निर्वापिता**—प्राकृते मात्रावृत्तम्

द्वौ चतुर्मात्रौ, जोवा नोवा, पञ्चमात्रिकः एकः ।

विरहाङ्कः

**निर्वाहः**—निर्वहणसन्धौ तृतीयमङ्गम्

उपक्रान्तस्य सकलस्याविरोधेन समापनं निर्वाहः । यथा—मदालसासिद्धिः मायामदालसानाटके ।

सागरनन्दी

**निर्विकारामोदः**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स ग म प नि ध नि स.
(अव) स ध म ग रि म ग स.

मञ्ज

**निर्वितं**—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि प ध नि स.
(अव) स नि ध म ग रि स.

मञ्ज

**निर्विरी**—श्रुतिः

इयं निद्रायेव ।

**निर्वृतिः**

यद्वियुक्ततया स्थानं क्लेशैर्नष्टैश्शरीरिणाम् ।
व्यवसायश्च बुद्धेश्च दीपनी सा तु निर्वृतिः ॥

भावविवेकः

**निर्वेदः**—चित्राभिनयः

कर्तरी तु पुरोभागे चलितस्तु वियोगके ।
हृदि स्थाने पताकौ द्वौ स्थितौ स्यातां तथाऽपदि ॥

फालस्थले पताकस्तु चलितस्स्याद्दरिद्रके ।
हनुस्थले पताकस्तु ऊर्ध्वदृष्टिविलोकनम् ।
पताको हृदये स्थाप्य आत्मदुःखनिरूपणे ॥

विनायकः

**निर्वेदः**

अस्तित्वे कचिदाविष्टे सर्वस्मादपि वस्तुनः ।
व्यावृत्तिर्दोषदर्शित्वं बुद्धेर्निर्वेद उच्यते ॥

भावविवेकः

तत्र निर्वेदो नामा दारिद्र्यव्याधिअपमानाधिक्षेपाक्रुष्टक्रोधताडनेष्टजनवियोगतत्त्वज्ञानादिभिर्विभावैस्समुत्पद्यते । तमभिनयेद्रुदितनिश्वसितोच्छ्वासितसंप्रसारणादिभिरनुभावैः । भवति चात्र श्लोकः ।

दारिद्र्येष्टवियोगेषु निर्वेदो नाम जायते ।
संप्रसारणनिश्वासैस्तस्य त्वभिनयो भवेत् ॥

अत्रानुवंश्ये आर्ये भवतः ।

इष्टजनविप्रयोगात् दारिद्र्याद्व्याधितस्तथा दुःखात् ।
परवृद्धिघातदृष्ट्या निर्वेदो नाम संभवति ॥

भाष्यपरिप्लुतनयनः पुनःपुनः श्वासदीनमुखनेत्रः ।
योगीव ध्यानरतो भवति हि निर्वेदवान् पुरुषः ॥

—व्यभिचारिभावः

दारिद्र्यव्याध्यवमानाधिक्षेपाक्रुष्टक्रोधताडनेष्टजनवियोगतत्त्वज्ञानादिभिः विभावैस्समुत्पद्यते । स्त्रीनीचकुसत्त्वानां रुदितनिश्वसितोच्छ्वसितसंप्रधारणादिभिरनुभावैस्तमभिनयेत् ।

भरतः

सागरः

निर्वेदुश्शोकमुपकुरुते ।

दारिद्र्यव्याधिदुःखेष्टवियोगपरवृद्धिभिः ।
ईर्ष्यातत्त्वावबोधाभ्यां निर्वेदो नाम जायते ॥

अन्तर्बाष्पोद्गमध्यानतनिश्वासाश्च मुहुर्मुहुः ।
स्वात्मावमाननं दैन्यं गद्गदत्वं विवर्णता ॥

अनुभावास्तु कथिता निर्वेदस्यैवमादयः ।
स्त्रीनीचादिषु वर्ण्योऽयं रसितश्वसितादिभिः ॥
तत्त्वाववोधितो योगिष्वनुपादेयतां व्रजेत् ।
निर्वेदश्शून्यचित्तत्वं वेदवित्तद्विनिर्गमात् ॥

शारदातनयः

स्वावमाननरूपो निर्वेदः । तत्त्वज्ञानादिभ्यो जायते । हेमचन्द्रः । तत्त्वज्ञानादिभ्य इति । चिरकालविभ्रमविप्रलब्धस्योपादेयत्व-निवृत्तये यत्सम्यग्ज्ञानं तन्निर्वेदं जनयति । न त्वात्मस्वभावः । तस्य शान्तस्थायित्वेनोक्तत्वात् । यथा— "वृथा दुग्धोऽनड्वान् ........कृपणमगुणज्ञं प्रणमत" इति । अयं च निर्वेदः स्वयंपुरुषार्थसिद्धये वोत्साहरत्यादिवदत्यन्तानुरञ्जनाय वा हास-विस्मयादिवन्न प्रभवतीत्यन्यमुखप्रेक्षितत्वाद्व्यभिचार्येव ।

अभिनवगुप्तः

शून्यचित्तत्वं निर्वेद इति स्वरूपकथनम् । वेदो वित् विद ज्ञाने इत्यस्माद्धातोः भावे घञि सति लघूपधगुणे वेद इति शब्दो निष्पन्नः । निर्गतो वेदः निर्वेदः । ज्ञानविनिर्गमाच्चित्तस्य शून्यत्वं निर्वेद इत्यर्थः ।

नरसिंहः

**निर्ह्रादी—श्रुतिः**

गान्धारस्य द्वितीया श्रुतिः ।
निर्वीरीति यत्पठितं तल्लेखकप्रमादिकम् ।

**निवर्तितः—ऊरुः**

पाष्र्ण्यान्तर्गतया नूनं ऊरुरुक्तो निवर्तितः ।
संभ्रमश्रमयोरस्य विनियोग उदाहृतः ॥

विप्रदासः

**निवृत्तम्—करणम्**

पादमाक्षिप्तयाक्षिप्य ततो हस्तेन संयुतम् ।
व्यावृत्तपरिवृत्तेन स्वदेहादपसारितम् ॥
प्रत्यावृत्य प्रकुर्वीत भ्रमरीं रेचयेत्करौ ।
यत्र तत्स्यान्निवृत्ताख्यमुद्धतस्य परिक्रमे ॥

ज्यायनः

**निवृत्ता—ग्रीवा**

यदा यामिमुखीभूय विनिवर्तेत्तदा तु सा ।
निवृत्ता कथिता स्कन्धभारे सा चकितेक्षणे ॥

अशोकः

या च ग्रीवा पराचीना भूयोऽप्यभिमुखी भवेत् ।
निवृत्ता सा प्रयोक्तव्या स्वस्थानाभिमुखादिषु ॥

वेमः

स्वस्थानं पुनरानीता निवृत्ताऽभिमुखादिषु ।

ज्यायनः

**निवेदनम्—नाट्यालङ्कारः**

कर्तव्यस्यावधारितस्य कथनम् । यथा— राघवाभ्युदये सेतुबन्धे समुद्राभ्यर्थनयेत्यादिलक्ष्मणवाक्यम् ।

सागरः

**निवेशम्—करणम्**

मण्डलस्थानकं वक्षो निर्भुग्नमवहित्थकः ।
करो वक्षस्स्थितो यत्र निवेशं गजवाहने ॥

ज्यायनः

सुखस्थितसुखासीने संयोज्यं गजवाहने ।

लक्ष्मणः

**निशीथः—संगीतश्रृङ्गाराङ्गम्**

अर्धरात्रं निशीथः ।

भोजः

**निशुम्भितम्—करणम्**

कुञ्चितं पादमन्याङ्घ्रेः पार्ष्णिभागे विनिक्षिपेत् ।
वक्षस्समुन्नतं बिभ्रत्खटकामुखमध्यमाम् ॥
कुर्यात्तिलकवत्फाले यत्र तत्स्यान्निशुम्भितम् ।
अनेन करणेन स्यादभिनेयस्त्रिलोचनः ॥
अत्र कीर्तिधरस्त्वाह सूचीमुखमधोमुखम् ।
तस्यामिनयने हस्तौ यस्मादयमुदीरितः ।
एतस्मिन्करणे पादं वृश्चिकं केचिदूचिरे ॥

ज्यायनः

खटकास्यकरस्थाने त्रिपताकोऽत्र हि ।

अशोकः

**निश्शङ्कः—गीतालङ्कारः (अटतालभेदः)**

प्लुतमेकं द्रुतौ द्वौ च वनमालिनि तालके ।
निश्शङ्कस्त्वड्डतालः स्याद्बुधैस्तेनैव गीयते ॥

संगीतसारः

**निश्शङ्कघ्याडः—देशीनृत्तम्**

रायवङ्घालघ्वाडे चेच्चरणद्वयमेलनम् ।
निश्शङ्क इति तं प्राहुर्नटशास्त्रविशारदाः ॥

वेदः

**निःशङ्कलीला—देशीतालः**

ताले निःशङ्कलीले स्यात्पद्वयं गद्वयं लघुः ऽ̍ ऽ̍ ऽ ऽ ।

वेमः

**निश्शंकवीणा**

अथोच्यते मया सम्यग्वीणा निश्शंकसंज्ञिता ।
रक्तचन्दनजा सा स्याच्छाकदारुभवाऽथवा ॥

षट्त्रिंशदङ्गुले काष्ठेऽधस्तेऽन्यस्मिन्निबध्यते ।
स्थौल्येनालापिनीतुल्ये प्राग्रात्त्यकाङ्गुलद्वयम् ॥

तन्त्रीनततस्त्वधस्ताच्च बध्नीयात्तुम्बकं दृढम् ।
नन्धप्रान्तातिरिक्तेंशे तन्त्रीं दैर्घ्ये चतुष्करा ॥
उपरिस्थे क्वचित्काष्ठे प्रान्तेनैकेन केनचित् ।
प्रान्तान्तरेण बध्नीयात् दारुतत्कुञ्चिताकृतौ ॥
मूलमावाह्य पार्श्वायां जङ्घायां वामपार्श्वतः ।
वामोरुमूलाक्रान्ताग्रं न्यस्याक्रम्य तु जङ्घया ॥
वामादितरया तस्य पिनाक्यामिव वादनम् ।
धनुषा वामहस्तस्थतुम्बकेन च सारणा ॥
आर्द्रचर्मकृतां पेशीं शुष्कां कोणयुतां खराम् ।
वामेनादाय हस्तेन तत्कोणेनाथवा भवेत् ॥
सारणा यत्र वीणासौ त्रिस्थानस्वरहेतुतः ।
सा तु निश्शङ्कवीणेति निश्शंकं निश्चलीकृता ॥

कुम्भः

**निश्शब्दा—क्रिया (तालाङ्गम्)**

क्रिया शब्दे द्रष्टव्यम्

**निश्वासः—श्वासः**

पश्चात्तापादिषु प्रोक्तो निश्वासो नृत्तपण्डितैः ।

अशोकः

**निषण्णम्**

सौष्टवशब्दनिर्वचनावसरे द्रष्टव्यम् ।

**निषधः—मेलरागः (नीतिमतीमेलजन्यः)**

(आ) स रि ग म प स.
(अव) स नि ध म प नि प म ग रि स.

मज्ज

**निषधः—हस्तः**

कपित्थं मुकुलं हस्तं परिवेष्टय यदा स्थितः ।
तदा निषधनामासौ सम्यक् स्थापितवस्तुनि ॥
निष्पेषणे तथा सत्यमिदमित्यपि कीर्तने ।
सम्यक्तया च शास्त्रार्थस्वीकारारेऽपि प्रकीर्तितः ॥
पूर्वोक्तं गजदन्तं तु निषधं सञ्जगुः परे ।
गर्वगाम्भीर्यधैर्यादिष्वसौ शौर्ये च कीर्तितः ॥

अशोकः

**—हस्तः**

मुकुलस्य कपित्थेन वेष्टनान्निषधो भवेत् ।
शास्त्रार्थसम्यग्ग्रहणे स स्यान्निष्पेषणे तथा ॥
सम्यक्च स्थापिते तथ्यमिदमित्यपि भाषणे ।
प्रथमं गजदन्तं तु निषधं केचिदूचिरे ।
सशौर्यधैर्यगाम्भीर्यगर्वादिषु मतस्तथा ॥

शार्ङ्गः

आवेष्टितः कपित्थेन यदा स्यान्मुकुलः करः ।
तदासौ निषधो ज्ञेयः स पुरः किञ्चिदानतः ॥
तात्पर्यसङ्ग्रहे कार्यः स त्वग्रे पीडिताङ्गुलिः ।
समये सत्यवाक्ये च तदङ्गैरेष प्रयुज्यते ॥
पुरोदेशाद्वामकानीतोऽसौ चैव प्रतिग्रहे ।
पार्श्वे निपीडितः क्वापि निक्षिप्तेऽर्थे नियुज्यते ।
रसनिष्पीडने कार्यः पुरोऽत्यन्तनिपीडितः ॥

वेमः

कूर्पराभ्यन्तरे कृत्वा भुजं वामेन दक्षिणम् ।
अन्यं मुष्टिकृतं वामे कूर्पराभ्यन्तरे न्यसेत् ।
यद्येतन्निषधः सोऽयं स्तम्भाश्लेषे भये भवेत् ॥
औत्सुक्यसौष्ठवाटोपस्थैर्यगर्वमदादिषु ।
भट्टाभिनवगुप्तोऽस्य लक्ष्मदूरान्तरं जगौ ॥
वेष्टितस्स्यात्कपित्थेन मुकुलो निषधस्त्विति ।
निरुक्तिविनियोगाभ्यां व्याख्यायां व्यक्ततत्त्ववित् ॥
अनेन वर्तना यातास्त्वनुतन्त्वविधायिनः ।
पूर्वलक्षणमेवास्य मेने कीर्तिधरः पुनः ॥

ज्यायनः

**निषादः**

जगती छन्दः, करुणो रसः, गजो बृंहति, दैत्यकुलजः, नानावर्णः, वैश्यः, पुष्करद्वीपभवः, तपोलोकवासी, नेपालदेशीयः, शनिवारजः, आथर्वणः, काण्वशाखी, पञ्चवार्षिकः, सप्तकलः, विनोदकर्मनियुक्तः, उच्चस्वरः, द्विश्रुतिः, गणेशदैवत्यः ।

पण्डितमण्डली

निषीदन्ति स्वरा अत्र निषादस्तेन हेतुना ।

पण्डितमण्डली

षड्जादयः षडेतेऽत्र स्वराः सर्वे मनोहराः ।
निषीदन्ते यतो लोके निषादस्तेन कथ्यते ॥

सङ्गीतसरणिः

निषादो गजवक्त्रः स्याच्चित्रवर्णश्चतुर्भुजः ।
त्रिशूलपद्मपरशुबीजपूरकभृत्करैः ॥
गणेशो दैवतं क्रौञ्चो द्वीपं वंशं सुपर्वजम् ।
गाता च तुम्बुरुः शान्तो रसस्स्याद्वाहनं गजः ॥

सुधाकलशः

**—स्वरहस्तः**

अपविद्धः पद्मकोशो निषादार्थे निरूप्यते ।

शृङ्गारः

### निषादस्वरमन्त्रः

मूर्छना हृदयाय नमः। तानः शिरसे स्वाहा। वादी शिखायै वषट्। संवादी कवचाय हुम्। अनुवादी नेत्रत्रयाय वौषट्। विवादी अस्त्रायफट्। हूहू ऋषिः अत्युक्तश्छन्दः महालक्ष्मी-र्देवता। ऐं ह्रीं श्रीं ऐं क्लीं सौं निं नमः।

जगदेकः

### निषादाभिनयः

हस्तेन करिहस्तेन कटिहस्तेन दीनया।
दृष्ट्या विधूतशिरसा निषादं सन्निरूपयेत्॥

दामोदरः

### निषादिनीकपालम्

नैषादिकाजातिकपाललक्ष्म वक्ष्ये ग्रहोंशोऽपि च षड्ज एव।
न्यासश्च वेद्यौ च रिगावहाल्पौ निषादको धैवतमध्यमौ च।
भवन्त्यमुष्मिन्न हुलाः किलाष्टौ कलाः कपालान्युदितानि सन्न॥

रघुनाथः

अथ षड्जस्वरजातेः पञ्चमहीनेन षाडवं भूतम्।
षड्जग्रहांशापन्यासन्यासं च रिगताल्पकम्॥
अभिधेयं च निषादधैवतमध्यमैः कृतावयवम्।
अष्टकलमपि कपालं वदति नृपस्तन्निषादिन्याः॥

षड्जग्रामे चोक्षसाधारितेन देश्यां वेलावल्यां गीयते।

नान्यः

### निषादीध्यानम्

वर्णैरशेषजनताहृदयङ्गमाभां
सर्वैस्समस्तगुणनिर्भरविभ्रमाङ्गीम्।
शर्वप्रियां शशिदलाकलितावतंसां
नैषादि देवि भवतीमनिशं नमामि॥

जगदेकः

### निष्कर्षः—वर्णालङ्कारः (अवरोही)

निनि धध पप मम गगरिरि सस.
निनिनि धधध पपप मममगगग रिरिरि ससस
निनिनिनि धधधध पपपप मममम गगगग ररिरिरि ससससस

पण्डितमण्डली

—वर्णालङ्कारः

यस्मिन् ह्रस्वाः स्वराः प्राहुः निष्कर्ष्य तु विपश्चितः।

ससा रिरि गगमम पपधध निनि

ह्रस्वैः स्वरैः त्रिरभ्यस्तैः निरन्तरतयोदितैः।
यत्र स्थितिः प्रसज्येत स निकर्षोऽपरो मतः॥

ससस रिरिरि गगग ममम पपप धधध निनिनि

स्वरैर्निरन्तरे यत्र चतुष्टयमुदीरितैः।
आरोहणं भवेद्यत्र स निष्कर्षः परो भवेत्॥

सससस रिरिरिरि गगगग मममम पपपप धधधध निनिनिनि

सङ्गीतपारदृश्वानः केचिदन्ये विपश्चितः।
इत्थमाकल्पितो भेदो निष्कर्षस्यैव मिन्वरे॥
एतौ निष्कर्षभेदौ द्वौ गात्रवर्णपरे जगुः।

पण्डितमण्डली

### निष्कर्षणम्—दन्तः

निष्कर्षणं स्यान्निष्क्रामो मतं मर्कटरोदने।

अशोकः

समदन्तक्रियायोगात् दशनास्स्युर्निकर्षणाः।
शल्योद्धारे दन्तघाते योज्या मर्कटरोदने॥

सोमेश्वरः

### निष्कलम्—एकतन्त्रीवाद्यभेदः

बिन्दोरुदयसिद्ध्यर्थं जीवाहीना विधीयते।
निश्शब्दस्वरतोऽधस्तात्कम्रिका नैव सर्पति।
यत्र स्यात्तर्जनीस्पर्शो निष्कलं तन्निगद्यते॥

पार्श्वदेवः

### वाद्यम्

आपनीय कलां कम्रामधो नैषाददेशतः।
न नयेत्तर्जनीस्पर्शं तन्त्र्याश्चेन्निष्कलं तदा॥
सूक्ष्मश्चात्र भवेन्नादः सारणामत्र केचन।
आमध्यमस्वरस्थानं सारणायां प्रपेदिरे॥

शार्ङ्गः

### निष्कला—श्रुतिः

षड्जस्य द्वितीया श्रुतिः।

सुधा

षड्जस्य तृतीया श्रुतिः।

पाल्कुरिकि-सोमः

षड्जस्य द्वितीया श्रुतिः। मण्डलीमते तारषड्जस्येयं वेदितव्या।

### निष्कूजितः—वर्णालङ्कारः (सञ्चारी)

आद्या द्वितीयमाद्यं च तृतीयात्पुनरादिमम्।
कलाः परास्तथैवैकत्यागान्निष्कूजितं जगुः॥

सरिसागसा रिगरीमरी गमगापगा मपमाधमा पधपानिपा।

मोक्षदेवः

**निष्कोटितम्**—व्यञ्जनधातुः

सव्याङ्गुष्ठप्रहारो यदूर्ध्वाधरसमाश्रयः ।
तन्त्र्यास्तमाहुर्मुनयो निष्कोटितमिति स्फुटम् ॥

नान्यः

निष्कोटितं पुनः । वामाङ्गुष्ठेन धातूर्ध्वाघाते ॥

कुम्भः

**निष्कोटितः**—वीणायामुभयहस्तव्यापारः

यत्र प्रदेशिनीं तन्त्रीं हन्ति सारणया विना ।
सनिष्कोटित इत्युक्तो वीणापथविवेकिना ॥

कुम्भः

**निष्कोटितम्**—धातुः

वामाङ्गुष्ठेन तूर्ध्वाधो घातो निष्कोटितं मतम् ।

शार्ङ्गः

—वादनम् (उभयहस्तव्यापारः)

उत्सृष्टसारणा यत्र हन्ति तन्त्रीं प्रदेशिनीम् ।
निष्कोटितामिधं पाणिमसुं वाद्यविदो विदुः ॥

शार्ङ्गः

**निष्क्रमः**—तारा

निष्क्रामो निर्गमः प्रोक्तः ।

अशोकः

स निष्क्रामस्तु वीरेप्यद्भुते रौद्रे भयानके ।

कुम्भः

**निष्क्रामः**—तालक्रिया

अधस्थमन्यहस्तस्य क्रमेणैव प्रसारणम् ।
कनिष्ठाद्यङ्गुलीनां यत्स निष्क्रामोऽभिधीयते ॥

वेमः

—क्रिया (तालाङ्गम्)

क्रियाशब्दे द्रष्टव्यम् ।

**निष्ठुरम्**—दर्शनम्

निष्ठुरं पुटयोरन्तस्तारयोर्लुठनं मुहुः ।

शारदातनयः

**निष्पन्दम्**—दर्शनम्

नान्यत्र स्पन्दते दृश्याद्यत्तन्निष्पन्दमुच्यते ।

वेमः

निष्पन्दं च तदन्यत्र दृष्टान्न स्पन्दते क्वचित् ।

शारदातनयः

**निस्साणः**—अवनद्धम्

एकवक्त्रं ताम्रकृप्तमधो ह्रस्वं मुखे बृहत् ।
खरचर्मनिबद्धास्यं वध्रीबद्धं समन्ततः ॥
निस्साणमिति विख्यातं महानादं भयङ्करम् ।
चर्मणा कृतदण्डेन वाद्यते ह्यरिभीषणम् ॥

सोमेश्वरः

**निःसारुकः**—देशीतालः

विरामान्तं लघुद्वन्द्वं ताले निःसारुके भवेत्

वेमः

—गीतालङ्कारः

कान्तारस्समराख्यश्च वैकुण्ठो वाञ्छितस्तथा ।
विशालश्च तदानन्दः षोढा निःसारुको भवेत् ॥

संगीतसारः

**निस्सृता**—जङ्घा

याऽग्रे प्रसारिता जङ्घा सा मता निस्सृताभिधा ।

अशोकः

क्षालने पादघाते च कार्या जङ्घा तु निस्सृता ।

सोमेश्वरः

छलभ्रमरिकाद्येषु निस्सृतं कीर्तितं परम् ।

ज्यायनः

**निस्सृतं**—जङ्घाकर्म ।

**निःस्वनितम्**—धातुः

तलं कृत्वावरोहेण घातो निःस्वनितं मतम् ।

शार्ङ्गः

**निहञ्चितम्**—शिरः

उत्क्षिप्तबाहुशिखरं मग्नग्रीवं निहञ्चितम् ।
विलासे ललिते गर्वे बिब्बोके किलिकिञ्चिते ।
मोट्टायिते कुट्टमिते माने स्तम्भेच तद्भवेत् ॥

शार्ङ्गः

उत्क्षिप्तांसं मनाक्तिर्यक्कृतग्रीवं निकुञ्चितम् ।
प्रयोज्यं तद्धि बिब्बोके विलासे किलिकिञ्चिते ॥
स्त्रीणां मोट्टायिते माने गर्वे कुट्टमिते स्थिते ।
निहञ्चितस्यैव भेदो ज्ञेयस्तिर्यङ्नतोन्नतम् ॥

विप्रदासः

ग्रीवाञ्चिता समुत्क्षिप्तौ यत्रांसौ तन्निहञ्चितम् ।

ज्यायनः

**नीकी**—देशीलास्याङ्गम्

नर्तकी नर्तने गीतवाद्यताललयेष्वपि ।
अस्खलन्ती यदा नीकी तदा जनमनोहरा ॥

अशोकः

**नीतिमती**—मेलकर्ता (रागः)

स रि ग ० ० ० म प ध नि स

मज

**नीरजप्रिया**——मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि म प ध नि स.

(अव) स नि ध प म ग स.

मज

**नीरटितः**—करणधातुः

षड्लोऽन्तगुर्नीरटितः । शार्ङ्गः

गुर्वन्तैर्लघुभिष्षड्भिः धातुर्नीरटितो भवेत् ।

कुम्भः

प्रहाराः षट् च लघवः सप्तमो गुरुरन्ततः ।

धातुर्नीरटितो नाम भवेत्तन्त्रीसमाहते ॥

नान्यः

**नीराजनम्**—चालकः

हस्तौ स्वस्तिकतां नीत्वा बहिरेतौ प्रसार्य च ।

वामदक्षिणयोरूर्ध्वौ युगपन्मण्डलभ्रमम् ।

कुरुते यत्र नृत्तज्ञैरेतन्नीराजनं स्मृतम् ॥

वेमः

एतदेव नीराजितमित्यशोको वदति ।

**नीराजितम्**—चालकः

नीराजनाख्यचालस्य नामान्तरम् ।

**नीलझोम्पटः**—देशीतालः

नीलझोम्पटताले लौ दशब्दो लेगुरुर्द्रुतौ ।

लावण्वादौ विरामान्तौ एतल्लक्षणमीरितम् ॥

॥ ० । ऽ ० ० ॥ ० ० ० दामोदरः

**नीलतोया**—ध्रुवावृत्तम्

स्याद्द्वितीयं ह्रस्वं

सर्वमन्यद्दीर्घं ।

यत्र पादे पादे

नीलतोया वै सा ॥

दूसहो आवादि । दुस्सह आवाति । भरतः

**नीलप्रभा**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म प ध नि स.

(अव) स नि ध म प म रि ग रि म ग रि स.

मज

**नीलाम्बरी**—मेलरागः (शङ्कराभरणमेलजोऽयं रागः)

नीलाम्बर्यां ततः पश्चादारोहे वृषधैवतौ ।

वर्जयेदवरोहे तु वक्रौ गान्धारधैवतौ ॥

वक्रः । गतिविशेषः

परमेश्वरः

—मेलरागः

नीलाम्बरी तु सम्पूर्णा षड्जपूर्वकमूर्छना ।

शुद्धमेलसमुद्भूता बहुकम्पमनोहरा ॥

अंशन्यासौ पमौ यत्र गरी सनी तथैव च ।

षड्जात्पञ्चम उद्गानं पञ्चमात्सस्वरा पुनः ॥

कम्पेति गमकनाम । उद्गानमारोहः । पञ्चमात् षड्जपर्यन्तमवरोहः ।

अहोबिलः

—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म स ग म प नि स.

(अव) स नि प ध नि प म ध म रि ग रि म ग स.

मज

**नीलाम्बरीरागध्यानम्**

कदम्बतरुमूलगां पुरुषरत्नगोष्ठीरतां

कचाग्रकरभासितां विलुलितालकां सुस्तनीम् ।

द्वितीयकरसंस्थितां विचिकले शिरोजस्थले

मदाधिकसुचेष्टितां हृदि भजामि नीलाम्बरीम् ॥

रागसागरः

**नीलोत्पला**—रागः (षाडबः)

नीलोत्पला धैवतजा गहीना

बीभत्सरौद्रेषु सदैव गेया ।

नारायणः

**नीलोत्पलिनी**—रागः

धैवतांशग्रहा तारा षड्जान्ता मन्द्रमध्यमा ।

स्वरैस्समा गहीना च ख्याता नीलोत्पला बुधैः ।

भयानके च बीभत्से रसयोर्निर्वियुज्यते ॥

जगदेकः

**नीलोत्पली**—रागः

अथ नीलोत्पली धैवतांशग्रहसमन्विता ।

तारा च धैवते षड्जन्यासा मन्द्रा च मध्यमे ।

समस्वरा तथा हीनगान्धारा सेयमीरिता ॥

हरिः

**नुतभाषितम्—मेलरागः ( नटभैरवीमेलजन्यः* )**

( आ ) स रि ग म प ध स.
( अव ) स ध प म ग रि स.

मञ्ज

**नूपुरम्—करणम्**

विधाय भ्रमरीं चारीं कुर्यान्नूपुरपादिकाम्।
येन पादेन तद्दिकं हंसपक्षं द्रुतभ्रमम् ॥

हस्तमन्यं लतासंज्ञं यत्र तन्नूपुरं विदुः।
लताख्यौ रेचितौ चात्र स्यातां कैर्तिधरे मते ॥

ज्यायनः

"नूपुरालङ्कृतौ मतम्"

लक्ष्मणः

**नूपुरः**

गुल्फोपरिभूषणम्।

**नूपुरपादिका—चारी**

अञ्चितं चरणं पार्श्वदेशादुद्यम्य तस्य तु।
पार्ष्णिना स्फिजमाश्लिष्य भूमावग्रतलेन चेत्।
न्यस्येदञ्चितजङ्घतं सा स्यान्नूपुरपादिका ॥

वेमः

**नूपुरविद्धिका—देशीचारी**

स्वस्तिकस्थानके स्थित्वा पार्ष्ण्योः पादाग्रयोरपि।
रेचितौ यत्र चरणौ सा स्यान्नूपुरविद्धिका ॥

**नृत्तरत्नावलिः**

ज्यायसेनापतिकृता। अस्यां पूर्वार्धे मार्गनृत्तं उत्तरार्धे देशीनृत्तं च सम्यग्विचारितम्। अष्टाध्यायपरिमितोऽयं ग्रन्थः। कीर्तिधरतण्डुमिनवगुप्तसोमेश्वरादीनां मतानि संशोधितानि। कालः क्रै. प. १२४५ अत्र आत्मचरितनामकः कश्चनग्रन्थ उदाहृतः।

**नृत्तानुगम्—वाद्यम्**

नृत्तेन सहितं यच्च तन्नृत्तानुगमीरितम्।

सोमेश्वरः

वाद्यशब्दं पश्यत।

**नृत्तप्रयोगकालः**

यस्यां यस्यामवस्थायां नृत्तं योज्यं प्रयोक्तृभिः।
तत्सर्वं संप्रवक्ष्यामि तच्च मे शृणुत द्विजाः ॥

अङ्गवस्तु निवृत्तौ तु यथा वर्णनिवृत्तिषु।
तथा चाभ्युदयस्थाने नृत्तं तदुज्ञः प्रयोजयेत् ॥

यत्र सन्दृश्यते किञ्चित् दम्पत्योर्मदनाश्रयम्।
नृत्तं तत्र प्रयोक्तव्यं प्रहर्षार्थगुणोद्भवम् ॥

यत्र सन्निहिते कान्ते ऋतुकालाभिदर्शनम्।
गीतकार्थाभिसंबन्धं नृत्तं तत्रापि चेष्यते।
खण्डिता विप्रलब्धा वा कलहान्तरितापि वा ॥

यस्मिन्नङ्गे तु युवतिर्न नृत्तं तत्र योजयेत्।
सखीप्रवृत्ते संलापे तथा सन्निहिते प्रिये।
न हि नृत्तं प्रयोक्तव्यं यस्या वा प्रोषितप्रियः ॥

दूत्याश्रयं यदा तु स्यादृतुकालादिदर्शनम्।
औत्सुक्यचिन्तासंबन्धं न नृत्तं तत्र योजयेत् ॥

यस्मिन्नङ्गे प्रसादं तु गृह्णीयान्नायिकाक्रमात्।
ततः प्रभृति नृत्तं तु शेषेष्वङ्गेषु योजयेत् ॥

देवस्तुत्याश्रयकृतं यदङ्गं तद्भवेदथ।
माहेश्वरैरङ्गहारैरुद्धतैस्तत्प्रयोजयेत् ॥

यत्तु शृङ्गारसंबद्धं गानं स्त्रीपुरुषाश्रयम्।
देवीकृतैरङ्गहारैर्ललितैस्तत्प्रयोजयेत् ॥

भरतः

**नृत्यम्**

रसाभिव्यक्तिपर्यन्तो (आङ्गिकः) नृत्यमित्यभिधीयते।
नृत्याभिधेऽङ्गाभिनये नाट्यशब्दोऽपि वर्तते ॥

नृत्यां लक्षणया ह्येतत्प्रागस्माभिर्निवेदितम्।
गात्रविक्षेपमात्रार्थाद्धातोः क्यप्प्रत्यये सति ॥

निष्पद्यते नृत्यशब्दो विवक्षायां तु कर्मणः।
कृत्वोपसर्जनं भावं रस एव प्रकाश्यते ॥

प्राधान्यतो यत्र नृत्ये नाट्यनृत्तं तदोच्यते।
रसोपसर्जनतया यदा भावः प्रकाश्यते ॥

प्राधान्यतो यत्र नृत्ये मार्गनृत्यं तदोच्यते।
अनिष्पन्नो रसोऽत्रेति मार्गो भावे इह स्मृतः ॥

इति नृत्यं द्विरूपं स्यान्नाट्यमार्गाविशेषणात्।
अस्यैकदेशीयं नृत्यमुक्तलक्षणलक्षितम् ॥

इतिकर्तव्यता तस्य द्विविधा परिकीर्तिता।
लोकधर्म्यान्नाट्यधर्म्यान्नाट्येऽपि द्विविधा मता ॥

चित्तवृत्त्यर्पितैकान्या बाह्यवस्तुनिरूपिता।
निर्वेदादेश्चित्तवृत्तेर्ज्ञानदृष्ट्यादयो यथा ॥

बाह्यस्य कमलादेस्तु पद्मकोशादयो यथा।
द्विविधा नाट्यधर्म्योऽपि तत्र नाट्योपयोगिनीम् ॥

आश्रित्य कैशिकीं वृत्तिं करोत्यावेष्टितादिभिः।
न केवलं लोकयात्रादविज्ञातादनादरात् ॥
अतश्च लोकशास्त्राभ्यां दिदृक्षास्योपजायते।
क्तप्रत्ययान्तादुक्तार्था धातोर्निष्पद्यते पुनः ॥
नृत्तशब्दो विवक्षायां शोभारूपश्च कर्मणः।
देशीयमेतदेवोक्तं पण्डितैर्नृत्यवेदिभिः ॥
यद्यप्येतौ समानार्थौ प्रत्ययौ क्तक्यपौ स्मृतौ।
तथापि सम्प्रदायज्ञैर्यादृशो यः प्रयुज्यते ॥
तादृगर्थस्य विज्ञेयो विवक्षा चात्र कारणम्।
लोके हस्तैकदेशेऽपि हस्तशब्दो यथा तथा ॥
नृत्ते नृत्यैकदेशत्वान्नृत्यशब्दोऽप वर्तते।
शोभाया एव मुख्यत्वं विवक्षितत्वात्प्रयुज्यते ॥
मार्गनृत्तेप्ययं नृत्यशब्दस्तस्माद्द्वयोर्ग्रहः।
स्यान्नृत्तनृत्यशब्दाभ्यां मार्गदेशीययोर्ध्रुवम् ॥
उत्तमं नाट्यनृत्यं स्यान्मार्गनृत्यं तु मध्यमम्।
देशीयनृत्तमधमं विज्ञेयं काव्यवद्बुधैः ॥

विप्रदासः

## नृपः

शीलवान्बुद्धिसंपन्नः सत्यवादी जितेन्द्रियः।
दक्षः प्रगल्भः स्मृतिमान् विक्रान्तो धृतिमान् शुचिः ॥
दीर्घदर्शी महोत्साहः कृतज्ञः प्रियवागपि।
लोकपालव्रतचरः शूरो धीरः क्रमान्वितः ॥
उत्थितश्चाप्रमत्तश्च वृद्धः स्मृत्यर्थशास्त्रवित्।
नानानयप्रचारज्ञ ऊहापोहविचक्षणः ॥
परभावेङ्गितज्ञश्च षाड्गुण्येनाप्यलङ्कृतः।
नानाशास्त्रार्थतत्त्वज्ञो नानाशिल्पप्रयोजकः ॥
स्थानवृद्धिक्षयज्ञश्च पररन्ध्रविचक्षणः।
कृतज्ञोऽव्यसनी चैव गुणैरेतैर्भवेन्नृपः ॥

भरतः

## नेपालः—मेलरागः (कीरवाणीमेलजन्यः)

(आ) स रि म ग म प नि स.
(अव) स नि ध प म रि स.

मल्ल

## नेरिः—देशीनृत्तम्

आदितालानुगं यत्र विलम्बितलयान्वितम्।
रेखामुद्राप्रमाणाढ्यं नानाकरविभूषितम्।
द्विचक्राभिमुखं नृत्तं नेरिरित्यभिधीयते ॥

दामोदरः

## नेरीभृङ्खला

हस्तनेरिश्शुद्धनेरिर्नेडनेरिस्तृतीयकः।
ततः करणनेरिश्च भावनेरिश्च पञ्चमः।
सालङ्गनेरिस्सङ्कीर्णनेरिस्सप्तेति भाषिताः ॥

वेदः

## नेवारा—चारी

एकोङ्घ्रिर्यत्र भूपृष्ठे सा वक्रैर्दृश्यते यदा।
द्वितीयश्च नभस्त श्रीः नेवारा सूरिसम्मता ॥

नागमल्लः

## नैपथ्यप्रयोगः—संगीतशृङ्गाराङ्गम्

स्नानाद्यनन्तरं वस्त्राभरणमाल्यानुलेपनादिग्रहणं नैपथ्यप्रयोगः।

भोजः

## नैराजितम्—शिरः

प्रदक्षिणक्रमेणैव यत्रारात्रिकवद्भ्रमः।
नैराजितं नृपादीनां तत्स्यान्नीराजनादिषु ॥

ज्यायनः

## नैष्क्रामिकी—ध्रुवा

अङ्कान्ते अङ्कमध्ये वा सनिमित्तं रङ्गात्पात्रस्य बहिर्निस्सरणं निष्क्रामः। तत्प्रयोजना नैष्क्रामिकी। अनुशतिकादेराकृतिगणत्वादिकमुभयपदवृद्धौ नैष्क्रामिकी। यथा देवीचन्द्रगुप्ते पञ्चमाङ्कान्ते ध्रुवा। (आर्या) उन्मत्तस्य चन्द्रगुप्तस्य मदनविकारगोपनपरस्य मनाक् शत्रुभीतस्य राजकुलगमनार्थं निष्क्रामसूचिका।

गुणचन्द्रः

निष्क्रमे चैकपात्रस्य प्रस्तुतार्थावसानगे।
अङ्कस्यान्ते च सर्वेषां निष्क्रामगुणयोगिनी।
गीयते सा ध्रुवा नाट्ये विद्भिर्नैष्क्रामिकी स्मृता ॥

वेमः

अङ्कान्ते निष्क्रमणे पात्राणां या गीयते प्रयोगेषु।
निष्क्रामोपगतगुणां विद्यान्नैष्क्रामिकीं तां तु ॥

भरतः

## नैषादी—जातिः

आरोहिणौ किल सपौ विलङ्घ्यौ चचत्पुटस्ताल इहोपदिष्टः।
गान्धारपूर्वा किल मूर्छनाश्वक्रान्ता कलास्ताद्दशषट्समेताः ॥
स्यान्नाटकस्य प्रथमाङ्कभाजो गाने ध्रुवाया विनियोजनं च।
ते शुद्धसाधारितदेशिवेलावल्याख्यरागाः स्फुटतां प्रयान्ति ॥

रघुनाथः

निषादवत्या निषादर्षभगान्धारा ग्रहा अंशाश्च। निषादगान्धारर्षभा अपन्यासाः। निषाद एको न्यासः। पञ्चमहीनं षाडवम्। पञ्चमषड्जहीनमौडुवितम्। पूर्णावस्थायां षड्जगान्धारमध्यम-

पञ्चमानामल्पत्वम्। औडुविते मध्यमधैवतयोरल्पत्वम्। पञ्चस्वरपरा तारगतिः। न्यासपरः तत्परो वा मन्द्रः। गान्धारादिर्मूर्छना। तालश्चच्चत्पुटः। दक्षिणे कलाश्चतुष्षष्टिः। चित्रेऽष्टौ। दशविधत्वं चास्याः। दशांशाः शुद्धाः। त्रयो विकृताः पूर्णा। रसश्च करुणः। ध्रुवागाने प्रथमप्रेक्षणिके विनियोगः।

मतङ्गः

## नैषादीकपालगानम्

षड्जो ग्रहस्तथा न्यासः तथांशो यत्र चाल्पकौ।
गान्धारर्षभकौ चातिबहुत्वं परिकीर्तितम्॥

नैषादीजातिसञ्जातं कपालं कीर्तितं यथा।
सरसगजेत्यादीन्यष्टौ पदानि॥

कुम्भः

## नैस्त्रिंशिकी—कला

चिबुके नासिकायां च ललाटे या निराश्रयम्।
खड्गाग्रं क्रमशो धत्ते निशितं नृत्यकारिणी॥

कुर्वती विस्मयं लोकमनसां यत्र सुन्दरी।
तीक्ष्णनैस्त्रिंशिकी ज्ञेया सा कला रोमहर्षिणी॥

नागमल्लः

## न्यञ्चः—बाहुः

अधः प्रसारितो न्यञ्चो बाहुस्स्यादूर्ध्वकेन च।
श्रमे दुःखे नदे मोहे स्तम्भे च विनियुज्यते॥

सोमेश्वरः

## न्यञ्चितम्—दर्शनम्

अपाङ्गाभ्यामथो यत्र दर्शितं न्यञ्चितं तु तत्।

वेमः

## न्यायाः

युधि स्वपरशस्त्राणां पातनं रक्षणं क्रमात्।
कर्तुमभ्युचितं गात्रवर्तना न्याय ईरितः॥

न्यायः पुनश्चतुर्धा स्याद्भारतस्सात्वतस्तथा।
वार्षगण्यः कैशिकश्चेति क्रमाद्वृत्तिसंश्रयाः॥

वेमः

ततोऽब्रवीत्पद्मयोनिर्नारायणमरिन्दमम्।
अहो विचित्रैर्ललितैः स्फुटैस्सुविशदैरपि॥

अङ्गहारैः कृतं देवं वृथादानवनाशनम्।
तस्माद्रूपं हि लोकस्य नियुद्धसमयक्रमः॥

सर्वशस्त्रविभेदेषु न्यायसंज्ञो भविष्यति।
न्यायाश्रितैरङ्गहारैर्न्यायैर्दैवसमुत्थितैः॥

यस्माद्युद्धान्यवर्तन्त तस्मात् न्यायाः प्रकीर्तिताः।
पुनर्नाट्यप्रयोगेण नानाभावसमन्विताः॥

वृत्तिसंज्ञास्ताडयेताः काव्यसंज्ञासमाहिताः।
ऋग्वेदाद्भारतीवृत्तिः यजुर्वेदात्तु सात्त्वती॥
कौशिकी सामवेदाच्चशेषाचाथर्वणात्तथा।

भरतः

## न्यायापेतम्—काव्यदोषः

न्यायादपेतं विज्ञेयं प्रमाणपरिवर्जितम्।

## न्यासः

न्यासनं कथितो येन तत्र गीतं समाप्यते।

तुलजः

न्यासो गीतसमाप्तिकृत्।

कुम्भः

—(रागे उपयुज्यमानः)

न्यासस्स्वरस्तु स प्रोक्तो यो गीतस्य समाप्तिकृत्।

कृष्णदासः

—सन्धिः

प्रशान्तिजातिनाटकस्य प्रथमः सन्धिः।

शारदातनयः

प्रशान्तिशब्दे द्रष्टव्यम्।

## न्याससमुद्भेधः

प्रशान्तजातिनाटके द्वितीयस्सन्धिः।

शारदातनयः

प्रशान्तशब्देद्रष्टव्यम्

## न्यासापन्यासजं साम्यम् (अवनद्धे)

पुष्करवाद्ये वंशवीणयोश्च न्यासापन्यासमत्वं।
न्यासापन्यासयोगस्तु स्वराणां तु भवेद्यदा।
वंशवीणोद्भवं वाद्यं न्यासापन्यासजं तु तत्॥

भरतः

## नोकु

अयमान्ध्रभाषाशब्दः। तन्त्र्यां मध्यमाङ्गुल्याः स्फोटः। चमत्कारविशेषः।

## प

प—स्वरः

प – पञ्चमस्वरः

पः

छन्दसि पञ्चमात्रागणः।
ताले प्लुतम्

पक्षसारणी—वीणायां करव्यापारः

मध्यमेलवीणायां वेङ्कटमखिना लक्षितः।
तत्र द्रष्टव्यम्।

पक्षप्रद्योतकौ—नृत्तहस्तौ

एतावेव परावृत्तौ पक्षप्रद्योतकौ वरौ।
उत्तानितौ केचिदिमौ परे तूर्ध्वगताङ्गुली।
पराङ्मुखौ च पूर्वाभ्वामाहुरेतावनन्तरम्॥

पक्षरुतम्—वीणावादनप्राणः

यत्रैते सकला हस्ताः क्रियन्ते बहुधा क्रमात्।
तत्पक्षरुतमित्युक्तं वाद्यं विद्यावतां वरैः॥

कुम्भः

अयं शब्दः पक्षिरुतं पक्षेरितं यक्षरुतं इत्यादिभेदैरादर्शेषु दृश्यते।

पक्षवञ्चितौ—नृत्तहस्तौ

त्रिपताकौ कटी मूर्ध्नि धृताग्रौ पक्षवञ्चितौ।

अशोकः

पक्षवञ्चितकावेव कैश्चिदुक्तो द्वयाश्रयः।

विप्रदासः

द्वयेति नृत्यनाट्ये इत्यर्थः।

पक्षिरुतम्—वीणावादनप्राणः

समस्तहस्तसंयोगाद्वाद्यं पक्षिरुतं मतम्।

पार्श्वदेवः

—वाद्यम्

समस्तहस्तवाद्यं तु वाद्यं पक्षिरुतं मतम्।

शार्ङ्गः

पक्षिशार्दूलः—देशीनृत्तम्

सूत्रपूर्वं यथा टेङ्कक्यां गगने चरणद्वयम्।
संयुक्तं चलनेनाशु निपतेद्भूतले यदि।
पक्षिशार्दूल इत्युक्तः सङ्गीतज्ञैः पुरातनैः॥

वेदः

पक्षिशीला—स्त्री

अत्यर्थंव्यावृतास्या च तीक्ष्णशीला सरित्प्रिया।
सुरासवक्षीररता बह्वपत्या फलप्रिया॥
नित्यं श्वसनशीला च सदोद्यानवनप्रिया।
शीघ्रा चपला बहुवाक् शाकुनं सत्त्वमाश्रिता॥

भरतः

पक्षिसालकः—लागनृत्तम्

यदालगमदिण्डस्य दक्षिणेन पदा पतेत्।
वामोऽन्तराले तिर्यक् चेत्प्रसृतः पक्षिसालकः॥

वेदः

पङ्केरुट्—मेलरागः (पङ्केरुहम्) (रागवर्धिनीमेलजन्यः)

(आ) स म ग म प नि ध नि स
(अव) स नि प म ग रि स

मञ्ज

पङ्क्तिः—ध्रुवावृत्तम्

त्रीण्यादौ तु यदा
चान्त्य चापि गुरु।
नाम्नावै कथिता
पङ्क्ति स्सा तु यथा॥
मसगणौ
एसा हंसवहू। एषा हंसवधूः।

भरतः

पङ्क्तिच्छन्दोवृत्तानि

पङ्क्त्यां संहस्रं वृत्तानां चतुर्विंशतिरेव तु।

भरतः

पङ्क्तिरथः—देशीतालः

ततः पङ्क्तिरथे पलौ ऽ।

लक्ष्मणः

पञ्चकर्तरी—पाटवाद्यम्

पञ्चभिर्हस्तपाटैर्यत्समकर्तरिकादिभिः।
अन्वितं तद्भवेद्वाद्यं पञ्चकर्तरिकाभिधम्॥

वेमः

पञ्चकारी—देशीतालः

पञ्चकार्येऽभिधदा लघुः। ३ मात्राः

तालप्रस्तारः

पञ्चघण्टानिनादः—देशीतालः

पञ्चघण्टानिनादाख्ये बिन्दुर्लगपपागलौ।
बिन्दुद्वयं च लगपास्ततः कालपदत्रयम्॥
०।ऽऽऽऽऽ॥००।ऽऽ + + + गोपतिप्पः

**पञ्चघातः**—देशीतालः

गद्वयं लत्रयं ज्ञेयं निश्शब्दं लत्रयं ततः ।
पञ्चघातस्स विज्ञेयः प्रसिद्धः सर्वसम्मतः ॥ दामोदरः
ऽऽ।।।।।।

**पञ्चतालेश्वरः**—प्रबन्धः

जगदेकस्तु पञ्चतालयुक्तगीतावर्तनमुक्त्वा लक्षणं पूरयति ।

यथा—

ततः प्रबन्धनामा स्याद्गीतं चाल विलम्बितम् ।
उद्घट्टिते ततो यस्या नेतुर्नाम प्रगीयते ॥

ततश्च मङ्गलं वाक्यं आलापे न्यास इष्यते ।
प्रबन्धोऽयं द्विधा ज्ञेयो वीरश्रृङ्गारभेदतः ॥

वीरावतारश्रृङ्गारतिलकौ तौ यथाक्रमम् ।
श्रीरागो मालवश्रीश्च हिन्दोलः कैशिकी तथा ॥

वेलावुली च तोडी च नट्टा शुद्धवरालिका ।
एतेषु येन केनापि रागेणासौ प्रगीयते ॥ जगदेकः

पदानि करणीयानि सप्तविंशतिसंख्यया ।
एषां प्रबन्धमालापतालैर्विरहितो भवेत् ॥

आद्यं चच्चत्पुटाख्यानतालेन पदपञ्चकम् ।
पादद्वितयमावर्त्य गातव्यं तदनुस्वरैः ॥

अन्तरा पटहोद्भूतैः कार्या षोडशमात्रिका ।
अन्यच्चाचपुटाख्येन तालेन पदपञ्चकम् ॥

ततो गातव्यमावर्त्य वारद्वयमथान्तरा ।
हुडुक्काप्रभवैः कार्या अष्टौ षोडशमात्रिकाः ॥

षट्पितापुत्रकाख्येन तालेनान्यदनन्तरम् ।
आवर्त्य पूर्ववत्प्राज्ञैः गातव्यं पदपञ्चकम् ॥

अन्तरा शङ्खपाटैस्स्यात्तत्र षोडशमात्रिकः ।
संपक्वेष्टाकतालेन पदषट्कं तथाऽपरम् ॥

ज्ञेयं पूर्ववदावर्त्य तत्र पूर्वोक्तमात्रिका ।
कांस्यतालस्य शब्देन करणीयान्तरा ततः ॥

उद्घट्टाख्येन तालेन नाम्ना नेतृप्रबन्धयोः ।
यस्यावसीयते पञ्चवाक्यमङ्गलमिष्यते ॥

सगाङ्गैरथवा शुद्धैः गेयोऽयममरप्रियः ।
पञ्चतालेश्वरः प्रोक्तः प्रबन्धो गानकोविदैः ॥ हरिपालः

अंत्रपदमिति समाप्तवाक्यं गीतस्य एको विभागः ।

**पञ्चपाणिः**—पाटवाद्यम्

समपाणिप्रभृतिभिर्हस्तपाटैस्तु पञ्चभिः ।
पञ्चपाण्यभिधं वाद्यं वाद्यवेदिभिरीरितम् ॥ वेमः

**पञ्चपाणिप्रहतम्**—पुष्करवाद्ये प्राणप्रहतिषु भेदाः

ते पञ्च समपाणिः अर्धसमपाणिः अर्धार्धसमपाणिः, पार्श्वपाणिः प्रदेशिनी चेति । भरतः

**पञ्चभङ्गिः**—प्रबन्धः

स्वरैः पदैश्च विरुदैः पाटैस्तेनैर्विरच्यते ।
एषां प्रस्तारविन्यासे प्रान्ते तेन्नाधिको भवेत् ॥

एको रागो यथेष्टं स्यादेकतालस्तथैव च ।
पञ्चभङ्गिर्भवेदेवं हरिपालः

अङ्कध्वनिप्रकारेण गेयं खण्डत्रयं भवेत् ।
चतुर्थपादकैर्गीतैर्गमकैस्तत्र वर्जिताः ॥

स्वरे पदे तथा पाटे विरुदैश्च पृथक् पृथक् ।
अन्तरा तेन्नकोपेतः पञ्चभङ्गिर्निगद्यते ।
चतुर्मुखप्रकारेण गीयते तेनकैर्विना ॥

विरुदास्तेन्नकस्थाने तेन्नकांशान्तरं तथा ।
पञ्चभङ्गिप्रबन्धस्य दर्शितं लक्षणं मया ॥ सोमेश्वरः

**पञ्चमः**—रागः

रागः पञ्चमको ज्ञेयः षड्हीनष्षाडवो मतः । दामोदरः

शुद्धश्च पञ्चमो रागात् पञ्चमैरेव मण्डितः ।
रागात् – रागाङ्गम् भद

—देशीतालः

पञ्चमे द्वौद्रुतौ चैव ताले हि परिकीर्तिता ०० वेमः

—रागः

शुद्धपञ्चमरागाङ्गं ग्रहांशन्यासपञ्चमः ।
समस्वरश्च पूर्णश्च रितारो मन्द्रमध्यमः ॥
पञ्चमः कैशिकीसंज्ञो गातव्योऽयं महोत्सवे । सोमराजः

विस्तारयत्येक एव ग्रामादस्मादयं स्वयम् ।
पञ्चेर्विस्तारवचनात्पञ्चमः सम्मतः सताम् ॥ कुम्भः

—मेलरागः ( मालवगौलमेलजन्यः )

पञ्चमांशग्रहन्यासो राजते रागपञ्चमः ।
रिरिक्तो गीयते प्रातस्सत्रयेणाथवा युतः ।
उच्यते केनचित्पूर्णः शृङ्गाररसदीपकः ॥

श्रीकण्ठः

—रागाङ्गरागः

शुद्धपञ्चमकस्याङ्गं ग्रहांशन्यास पञ्चमः ।
गेयो दिनाद्यप्रहरे उत्सवे पञ्चमः शुचौ ॥
शुद्धपञ्चमभाषायाः कैशिकी पञ्चमः ।
इति केचिन्न रागाङ्गं तथा स्यादिति तद्विधम् ॥

भट्टमाधवः

पञ्चमः

नाभेः समुत्थितो वायुरोष्ठकण्ठशिरोहृदि ।
पञ्चस्थानसमुद्भूतः पञ्चमस्तेन कीर्तितः ॥

कुम्भः

प्राणोऽपानस्समानश्चोदानो व्यान एव च ।
एतेषां समवायेन जायते पञ्चमस्वरः ॥

संगीतसरणिः

मरुन्नाभिस्थितो वक्षःकण्ठशीर्षाधराहतः ।
पञ्चस्थानोद्भवो यस्मात्पञ्चमः कथितस्ततः ॥

पण्डितमण्डली

पञ्चमोऽप्येकवदनो भिन्नवर्णश्च षट्करः ।
वीणाकरद्वये शङ्खाब्जे वापि वरदाभये ॥
स्वयंभूर्दैवतं दीपं शाल्मलिः पितृवंशजः ।
कोकिलावाहनं गाता नारदः प्रथमो रसः ॥

सुधाकलशः

—मेलरागः

अयं स्वतन्त्रमेलः

पञ्चमो रिपहीनः स्यात्तीव्रगः सादिमः स्मृतः ।
मध्यमन्याससंयुक्तो मध्यमांशेन शोभितः ॥

अहोबिलः

(सर्वदा गेयः)

सादिमः ग्रहः षड्जः ।

—स्वरहस्तः

अरालाख्योऽपविद्धश्चेत्पञ्चमस्त्वत्र इष्यते ।

शृङ्गारः

पङ्क्तिच्छन्दः, हास्यशृङ्गारयोर्विनियोगः, कोकिलो रौति पितृवंश्यः, जलदश्यामः, ब्राह्मणः, शाल्मलिद्वीपभूः, जनोलोकवासी, कान्यकुब्जदेशीयः, जीववारजः, सामवेदी, कौथुमशाखी, पञ्चत्रिंशद्वत्सरः, पञ्चकलः, उत्सवे विनियुक्तः, चतुश्श्रुतिः।

पण्डितमण्डली

पञ्चमगोट्टाणी—मेलरागः ( खरहरप्रियामेलजन्यः )

(आ) स रि म ग प नि स.
(अव) स नि ध नि ध प म ध म ग स.

मल्ल

पञ्चमरागध्यानम्

रक्ताम्बरो रक्तविशालनेत्रः
शृङ्गारयुक्तस्तरुणो मनस्वी ।
प्रभातकाले विजयी च नित्यं
सदा प्रियः कोकिलमञ्जुभाषी ॥

दामोदरः

रक्ताम्बुजाक्षोऽरुणचारुचीरः
युवा सुवेषो रतिरङ्गयुक्तः ।
प्रत्यूषकाले विजयी नितान्तं
स पञ्चमाख्यः कलकण्ठभाषी ॥

श्रीकण्ठः

पञ्चमललिता—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि प म रि ग म रि स.

मल्ल

पञ्चमषाडवः—रागः

आर्षभीधैवतीजात्योर्जातः पञ्चमषाडवः ।
ऋषभांशः काकलीयुक्तो मध्यमन्याससंश्रितः ॥

मोक्षः

वीरेऽद्भुते यदि कलोपनतारुण्यमूर्छा
तानस्तु वायुरतिरार्षभिका तु जातिः ।
अंशो भवेदृषभको यदि मध्यमोऽपि
न्यासस्थितस्तदिह पञ्चमषाडवस्स्यात् ॥

नान्यः

आर्षभ्यां च विनिष्पन्नो ज्ञेयः पञ्चमषाडवः ।
ऋषभांशेन संयुक्तः कचिन्न्यासोऽस्य पञ्चमः ॥

कश्यपः

—रागः

रिवयो रागसंभूतो ज्ञेयः पञ्चमषाडवः ।

मदनः

मध्यमग्रामसंबद्धो भवेत्पञ्चमषाडवः ।
आर्षभीधैवतीजातो रिषभो न्यासकांशयोः ॥

ग्रहे कचिन्मध्यमान्तस्तथा पञ्चमषाडवः ।
सकाकलीप्रसन्नादिरारोही वर्णसंश्रये ।
योजितो लक्षणैरेवं भवेत्पञ्चमषाडवः ॥
हरिः

**पञ्चमसारसंहिता**

नारदकृता । सङ्गीतमकरन्दनामकग्रन्थः नारदकृतत्वेन मुद्रितः तत्तु नास्य स्यात् ।

**पञ्चमस्वरमन्त्रः**

द्रुतो हृदयाय नमः । मध्यशिरसे स्वाहा । विलम्बितं शिखायै वषट् । द्रुतलम्बः कवचाय हुम् । द्रुतमध्यः नेत्रत्रयाय वौषट् । मध्यमलम्बः अस्त्राय फट् । वरुण ऋषिः सुप्रतिष्ठा छन्दः आन्हवी देवता । ऐं ह्रीं श्रीं पं नमः ।
जगदेकः

**पञ्चमस्वराभिनयः**

कृत्वा तु पल्लवो हस्तो धुतेन शिरसा तथा ।
वैष्णवस्थानकेनापि दृष्ट्वा कान्ताख्यया तथा ।
एवं विनिर्दिशेद्धीमान् स्वरं पञ्चमसंज्ञकम् ॥
दामोदरः

**पञ्चमीकपालम्**

अथोच्यते पञ्चमिकाकपाललक्ष्माधुनास्मिन् ऋषभो मतोंऽशः ।
षड्जो ग्रहस्तत्र निषादषड्जौ गान्धारका मध्यमधैवतौ च ।
अल्पे भवन्त्यत्र कलाहि चाष्टौ स्यात्पञ्चमीवत्परिशिष्टमत्र ॥
रघुनाथः

ग्रहगतषड्जस्वरमिह रिषभांशं स्यादल्पतरनिषादं च ।
दुर्बलधैवतगान्धारस्वरषड्जैः समध्यमैं रचितम् ॥
पूर्णस्वरमष्टकलं कपालमेतत्तु पञ्चम्याः ।
पञ्चमी शुद्धपञ्चमेन सकपालपाणिका गीयते ॥
नान्यः

**पञ्चमीकपालगानम्**

ऋषभोंशः स्वरो यत्र ग्रहष्षड्जस्तथाल्पकाः ।
षड्जमध्यमगान्धारनिषादा धैवतस्वरः ।
एतदष्टकलं नाम कपालं पञ्चमीभवम् ॥
जयति विषमेत्यादिगानमष्टकलम् ।
कुम्भः

**पञ्चमीध्यानम्**

वाणी न केवलमहारि यथा विजित्य
प्रीतिप्रदा पिककुलात्स च वर्णभेदः ।
देवेन्द्रशेखरितपादसरोजरेणुं
तां पञ्चमश्रुतिमयीमनिशं नमामि ॥
जगदेकः

**पञ्चमुखी**—मेलरागः (षड्विधमार्गिणीमेलजन्यः)

(आ) स ग रि ग म प ध नि स .
(अव) स नि प म ग रि स .

**पञ्चवक्त्रवंशः**

सपादद्वियवोपेतैरङ्गुलैर्दशभिः स्मृतम् ।
सप्ताधिकैः पञ्चवक्त्रवंशमानं महीभृतम् ॥
पञ्चाङ्गुलं च विवरं मुखतारास्यरन्ध्रयोः ।
रन्ध्राष्टकं पुनर्ज्ञेयं पुनरर्धाङ्गुलोन्मितम् ॥
सप्तकान्तरमानं तु पादोना त्रियवि पृथक् ।
समासतः सपादैकयवमङ्गुलकत्रयम् ।
मानं षण्मुखदण्डेन लक्ष्यशेषमिहेरितम् ॥
कुम्भः

**पञ्चहस्तः**—पाटवाद्यम्

समहस्तादिभिः पाटैः पञ्चभिः पञ्चहस्तकः ।
वेमः

पञ्चहस्ताः । दण्डहस्तः, युगहस्तः, ऊर्ध्वहस्तः, पिण्डहस्तः, स्थूलहस्तः—इति ।

**पञ्चाननः**—प्रबन्धः (पञ्चभङ्गीभेदः)

एतेषामेव विन्यासात्प्रान्ते पाटादिको यदा ।
रागाभ्यां तालयुग्मेन तदा पञ्चाननो मतः ॥
जग-मल्लः

एतेषामिति । स्वरपदपाटबिरुदतेन्नकाः ।
पञ्चभङ्गीप्रबन्धस्य भवन्त्यङ्गानि तत्र तु ।
प्रान्ते पादादिभिर्न्यासः तालरागावुभावुभौ ॥
इति पञ्चाननः प्रोक्तः.
हरिपालः

**पञ्चास्यनन्दनः**—मेलरागः (सुवर्णाङ्गीमेलजन्यः)

(आ) स रि ग म प ध नि स .
(अव) स नि ध प म ग म स .
मल

**पञ्चास्यः**—स्वरजातिः

द्वयशीतिभिस्सानुतारैः स्वरैः पञ्चास्य उच्यते ।
सानुतारैः चतुरधिकैरित्यर्थः ।
औमापतम्

**पञ्जरः**—देशीतालः

नगणो नगणश्चैव लोदौ द्रुतचतुष्टयम् ।
लघुर्द्रुतो गुरुश्चापि ताले पञ्जरसंज्ञके ॥
तालप्रस्तारः

पटः—अवनद्धम्

श्रीपर्णदारुजश्चारुः चतुरश्रो घनो दृढः ।
सविभागकरायामः पादः स्यात्करविस्तृतः ॥
क्षिप्ताभिरथ ऊर्ध्वं च द्वयोर्लोहशलाकयोः ।
मञ्जुमञ्जीरमालाभिः सुनादाभिरलङ्कृतः ॥
वाद्यतेऽसौ दृढं धृत्वा जानुभ्यामथवोरसा ।
पाटाः कखरटास्तस्मिन्नन्येऽपि पटहाश्रयाः ॥

सोमराजः

पटमञ्जरी—रागः

पञ्चमांशग्रहन्यासा संपूर्णा पटमञ्जरी ।
ऋष्यका मूर्छना ज्ञेया रसिकानां सुखप्रदा ॥

दामोदरः

पठमञ्जरी—मेलरागः

पञ्चमांशग्रहन्यासा (मा)लवस्वरसंभवा ।
अवरोहे गवर्ज्याऽपि सादिमा पठमञ्जरी ॥
तृतीयप्रहरोत्तरगेया ।

महोबिलः

पटहः

पट शब्दं जहातीति ह्याधातोस्त्यागवाचिनः ।
कृते कप्प्रत्यये चैवं पटहस्य विधिः स्मृतः ॥
एवं च करटादीनामातोद्यानां पृथक् पृथक् ।
शब्दानुकरणादेव प्रायो नाम विनिर्दिशेत् ॥

नान्यः

—(मार्गरीत्या)

मार्गदेशीविभेदेन पटहो द्विविधः स्मृतः ।
प्राङ्मार्गपटहस्यात्र लक्षणं व्याहरामहे ॥
सार्धहस्तद्वयं दैर्घ्यं परिणाहोऽपि तन्मितः ।
मध्ये स्याद्दक्षिणं वक्त्रं सार्धैरेकादशाङ्गुलैः ॥
वामं दशाङ्गुलैस्सार्धैर्वदने दक्षिणे ततः ।
आयसं वलयं कार्यं वामे वल्लीकृतं बुधैः ॥
षाण्मासिकस्य वत्सस्य मृतस्यादाय पारिकाम् ।
तयावकुण्ठिते वल्लीवलयं वामवक्त्रक ।
तत्सप्तरन्ध्रकं कार्यं निक्षिप्तैस्तेषु दोरकैः ॥
सूक्ष्मैर्दृढैश्च बध्नीयात्कलशान्सप्तसंख्यया ।
हेमादिनिर्मितान्प्राज्ञः श्लथांश्च चतुरङ्गुलान् ॥
आयसीं पत्रिकां वामे विस्तारे त्र्यङ्गुलां समाम् ।
वेष्टयेत्पटहे त्यक्त्वा यमङ्गुलचतुष्टयम् ॥

पटहस्य मुखे द्वे च वत्सकायस्य चर्मणा ।
कवलाख्येन बध्नीयाद्धनेन पिहिते तथा ॥
कवलं दक्षिणास्यस्य परितः कृतरन्ध्रकम् ।
रन्ध्रक्षिप्तान्गुणान्गाढं वलये वामवक्त्रगे ॥
आकृष्य प्रयतः प्राज्ञो बध्नीयाद्दार्ढ्यसिद्धये ।
कवले वामवक्त्रस्य सप्तरन्ध्रनिवेशिते ॥
गुणैरावेष्ट्य वलये लोहे तु कलशान्दृढैः ।
मध्ये निक्षिप्य चाकृष्टैः वलयं याति गाढताम् ॥
कलशेभ्यो बहिर्वामवलयं च निबध्यते ।
बध्नीयात्सुदृढां कच्छां कटिवेष्टेन सम्मिताम् ।
इत्युक्तलक्षणं मार्गपटहस्य परिस्फुटम् ॥

मोक्षदेवः

—(देशीरीत्या)

एवमेव भवेद्देशी दैर्घ्ये स्यात्त्रिवितस्तिकः ।
सप्ताङ्गुलैर्दक्षिणास्यं षड्भिस्सार्धैस्तथापरम् ॥
उद्दल्या वद्ध्यते वामं वदनं स्वेच्छया बुधैः ।
उद्दली गदितं चर्म जाठरं चान्तरं पशोः ॥
विशेषः कथितोऽत्रायमन्यत्सर्वं च पूर्ववत् ।
काष्ठेन खादिरेणेह कर्तव्यौ पटहावुभौ ॥

मोक्षदेवः

एवमेव । मार्गपटहोक्तमार्गेणेत्यर्थः ।

पटहः

देशीमार्गप्रकाराभ्यां तत्राहुः पटहं द्विधा ।
त्रिवितस्तिप्रमाणं स्यादाद्यः खदिरदारुजः ॥
षष्ट्यङ्गुलः परीणाहे हरीतक्याकृतिः पुरा ।
तस्याङ्गुलानि सप्त स्युः वामे षड्दक्षिणे मुखे ॥
वामे तु वलयं वल्ल्या कार्यं लोहेन दक्षिणे ।
त्यक्ताङ्गुलानि चत्वारि वामे स्याल्लोहपत्रिका ॥
कार्याश्चाङ्गुला विस्तीर्णास्तस्यां च कनकादिना ।
कर्तव्यास्सप्त कलशाः प्रमाणे चतुरङ्गुला ॥
चर्मरन्ध्राणि वामास्ये कुर्यात्कलशसन्निधौ ।
रन्ध्रः प्रोतैस्सूत्रगणैः कलशांस्तांस्तु वेष्टयेत् ॥
आतप्य तत्र कुर्वीत गाढं वलयमायसम् ।
वल्लीमयं तु वलयं विदद्ध्यात्सप्तरन्ध्रके ॥
मृतषण्मासवत्सस्य दृढं चर्मावकुण्ठितम् ।
कलशानामधस्तन्तुं बध्नीयात्सूक्ष्मदोरकैः ॥

बन्धयेत्कलशाग्रे तु कच्छामाकटिवेष्टनम् ।
दक्षिणं पटहस्यास्य कवलं वाम उद्दली ॥
देङ्कारः कवलोद्भूतो रेङ्कारस्तूद्दलीभवः ।
टवर्गश्च तवर्गश्च कवर्गश्च विवर्जितः ॥
भवन्ति पटहे वर्णा रहाभ्यां सह षोडश ।
क्रमव्युत्क्रमभेदेन पाटास्तेषामनेकशः ॥

सोमराजः

—मार्गपटहः

भवन्ति मार्गपटहे दैर्घ्ये पञ्चवितस्तयः ।
वक्त्रद्वयं सकवलं तत्र सार्धदशाङ्गुलम् ॥
शेषं समस्तमेतस्य देशीपटहलक्षणम् ।

सोमराजः

—अवनद्धम्

खदिरानोकहोद्भूतो मितास्यो मध्यमे महान् ।
त्रिवितस्तिर्भवेद्दैर्घ्यात् षष्ठ्यङ्गुलसुविस्तृतः ॥
पञ्चाङ्गुलं भवेत्तस्य मुखं सव्यापसव्यकम् ।
चतुर्विंशाङ्गुलं लौहं दक्षिणे वलयं भवेत् ॥
वामास्ये वलयं वल्ल्या कुर्यात्किञ्चित्ततोऽधिकम् ।
चतुरङ्गुलमुत्सृज्य वामास्ये लोहपत्रिकाम् ॥
अङ्गुलत्रयविस्तारां दृढं कण्ठे विवेष्टयेत् ।
भवेयुः कलशास्सप्त गीतिकोटिविनिर्मिताः ॥
परितः कीलितास्तेषां चतुरङ्गुलमन्तरम् ।
रन्ध्राणि तेन मानेन कुर्यात्सव्यास्यचर्मणि ॥
आवेष्ट्य कलशांस्तांश्च वलयं लोहनिर्मितम् ।
आकृष्य सुदृढं कुर्यात्सप्तरन्ध्रनिबन्धनैः ॥
षाण्मासिकस्य वत्सस्य मृतस्यादाय पारिकाम् ।
अङ्गुल्या वलयं वल्ल्या तया सुश्लक्ष्णभूतया ॥
वामास्ये तत्समावेश्य वलयं सप्तरन्ध्रकम् ।
कलशेषु निबध्नीयाच्छिथिलं सूक्ष्मरज्जुभिः ॥
सव्यस्य वलयस्यान्ते कलशेभ्यो बहिस्ततः ।
बन्धनीया दृढं कच्छा कटिवेष्टावधिस्थिता ॥
एवं लक्षणसंयुक्तं पटहस्थानकाभिधः ।
स्त्रीनृत्तस्योपयुक्तोऽयं कथितस्सोमभूभुजा ॥

सोमेश्वरः

## पट्टतालवाद्यम्

श्रीपर्णिका काष्ठसमुद्भवत्वात् श्लक्ष्णं समन्ताच्चतुरश्रशोभि ।
विस्तारतो हस्तमितं च लेख्ये द्वात्रिंशता चाङ्गुलकैः प्रमाणात् ।
स्यात् त्रिंशतावाङ्गुलकैर्मितं तत्पट्टाभिधं वाद्यमिदं गृणन्ति ॥
तल्लोहनिर्मापितपट्टिकाभ्यां ऊर्ध्वं तथाऽधःप्रविबद्धरज्जुभिः ।
उद्भूरिमिर्घर्घरिकामिधाभिरलङ्कृतं बन्धनमापिताभिः ।
यत्नेन सन्धार्य च वक्षसोऽग्रे जान्वोस्तथा मध्यत एतदत्र ।
स्वल्पेन तत्सिक्थकलेपनेन लिप्तं प्रवीणैरिह वाद्यते हि ।
करस्थशाखाग्रिमभागघृष्टाः पाटाः पुनस्तुत्त इमे भवन्ति ।
वाखोखटो वा घरटा इतीमे तथैव पाटाः पटहोद्भवाश्च ।
हौडुक्किकाश्चाप्यथ दैवतानि महर्षयो राजवरोदितानि ॥

कुम्भः

## पटाग्रणीः—मेलरागः ( खरहरप्रियमेलजन्यः )

( आ ) स रि ग म प ध नि स .
( अव ) स ध प म ग रि स.

मञ्ज

## पट्टिनृत्तम्—देशीनृत्तम्

पदमेकं तालहीनं बद्धं त्रैलिङ्गभाषया ।
पूर्वस्वरोच्चार्यमाणं यदेकयतिसंयुतम् ।
पट्टिस्सा कथिता तद्ज्ञैः विदग्धानां मनोहरा ॥

दामोदरः

## पट्टुः

अयमान्ध्रभाषाशब्दः। तन्त्र्यास्फोटने दृढास्फोटः। चमत्कारः।

## पडिमठ्यः—देशीतालः

दीप्तमेकं भवेद्यत्र स पडिस्तु मण्ठके ।

दामोदरः

ऽ

## पणवः

पणवन्ति स्तवन्तीति पणास्तोतार एव हि ।
अवति गच्छतीत्येवं पणवं चापि जानते ॥
श्रूयते चैव तस्यापि पुराणे यत्तथाध्वनिः ।
हरप्रीतिकरत्वेन तदाहुर्मुनयो यथा ॥
श्रुत्वा पणवनं (तः) शब्दं स्वयं नृत्यति शङ्करः ।
तस्माद्यन्नादसौ योज्यो गीतकासारितादिषु ॥

नान्यः

## पण्डितमण्डली

सङ्गीतशिरोमणिकर्तारः। क्रै. प. १४२९ वर्षे गङ्गायमुनासङ्गमसमीपे कडं नगरे सुल्तानसाहप्रभुणा आहूता नानादेशीयाः पण्डिताः संभूय तद्राजाज्ञया प्राचीनान् ग्रन्थान् परामृश्य सङ्गीतशिरोमणिं व्यरचयन्निति ग्रन्थावतरणे दृश्यते। तत्र गीताध्यायः प्रौढः। तत्रैवावतरणिका वर्तते। अन्यस्संगीतशिरोमणिनामा ग्रन्थभागः प्रवन्धाध्यायमात्रपरिकरः पण्डितमण्डली-

शब्दहीनो वर्तते। उभौ एकग्रन्थभागावेवेति मन्यामहे। प्रबन्धभागे परमर्दि, अर्जुन, सोमेश्वर, प्रतापपृथ्वीपति, सोमवल्लभादीनां नामानि दृश्यन्ते। गीतभागे बृहद्रुमलीक, संगीतसागर, रागार्णव, चूडामणि, वादिमत्तगजाङ्कुश, संगीतदर्पण, तालार्णव, सविस्तरकल्पवृक्ष, सङ्गीतरत्नावलि, नृत्यरत्नावलि, सङ्गीतमुद्रा, संगीतोपनिषत्सार, संगीतसारकलिका, संगीतविनोदानन्दसंजीवन, मुक्तावली, बालबोधादयो ग्रन्था: स्मृता:। तस्मादेते तत्पूर्वा इति स्पष्टम्।

पताकः—हस्तः

तर्जनीमूलसंलग्नः कुञ्चिताङ्गुष्ठको भवेत्।
पताकस्संहताकारः प्रसारिततलाङ्गुलिः॥
एष स्पर्शे चपेटे च पताकातालिकादिषु।
ज्वालासूर्ध्वगता स्वस्याङ्गुल्यः प्रविरलाश्चलाः॥
धारास्वधोगता पक्षिपक्षे त्वस्य कटिस्थिते।
ऊर्ध्वं गच्छन्नुच्छ्रितेषु पुष्करप्रहतौ त्वधः॥
ऊर्ध्वं गच्छन्कटिक्षेत्रादुत्क्षेपाभिनये करः।
आभिमुख्ये मुखक्षेत्रमागच्छन्निजपार्श्वतः॥
स्वपार्श्वे कम्पमानस्तु प्रतिषेधे भवत्यसौ।
शीघ्रं घर्षन्नधिष्ठाय पताकं क्षालने परम्॥
पताकं तु शनैर्घर्षन्मर्दने मार्जने तथा।
उत्पाटने धारणे च शिलादिस्थूलवस्तुनः॥
उचितौ विच्युतौ कार्यावेतावन्योन्यसंमुखौ।
अधोगतोच्छ्रितचलाङ्गुलिर्वायूर्मिवेगयोः॥

शार्ङ्गः

प्रसारितास्समास्सर्वाः यस्याङ्गुल्यो भवन्ति हि।
कुञ्चितश्च तथाङ्गुष्ठस्स पताक इति स्मृतः॥

भरतः

तर्जनीमूलगोऽङ्गुष्ठः कुञ्चितः कुञ्चिताङ्घ्रिवत्।
अङ्गुल्यो यत्र जायन्ते समश्लिष्टप्रसारिताः॥
स पताक इति ख्यातः पताकाकारधारणात्।
समा इति प्रकृतिस्थाः। प्रसारिताः प्रसारिताग्राः॥

ज्यायनः

एष प्रहारपाते प्रतापने नोदने प्रहर्षे च।
गर्वेऽप्यहमिति तद्वज्ज्ञैर्ललाटदेशोत्थितः कार्यः॥
एषोऽग्निवर्षधारानिरूपणे पुष्पवृष्टिपतने च।
संयुतकरणः कार्यः प्रविरलचलिताङ्गुलिर्हस्तः॥
स्वस्तिकविच्युतिकरणात्पल्लवपुष्पोपहारशष्पाणि।
विरचितमुर्वीसंस्थं यद्द्रव्यं तच्च निर्देश्यम्॥
स्वस्तिकविच्युतिकरणात्पुनरेवाधोमुखेन कर्तव्यम्।
संवृतविवृतं पाल्यं छन्नं निविडं च गोप्यं च॥
अस्यैव चाङ्गुलीभिस्त्वधोमुखप्रस्थितोत्थितचलाभिः।
वट्टाग्निवेगवेलाक्षोभश्चौघश्च कर्तव्यः॥
उत्साहनं बहु तथा महाजनप्रांशुपुष्करप्रहतम्।
पक्षोत्क्षेपाभिनयं रेचककरणेन कुर्वीत॥
परिमृष्टतलस्थेन तु धौतं मृदितं प्रमृष्टपिष्टे च।
पुनरेव शैलधारणमुद्वाटनमेव चाभिनयेत्॥
दशाख्याश्च शताख्याश्च सहस्राख्यास्तथैव च।
पताकाभ्यां तु हस्ताभ्यां कार्योह्यभिनये करः॥

भरतः

प्रतापने शीतशमनायाग्निस्पर्शग्रहणे राज्ञां च प्रतापे। प्रहारे हृदयलग्नतले ईषत्कम्पमानः प्रहर्षे च रोमाञ्चसम्मुख उद्गतः। गर्वेऽस्मदर्थे पार्श्वान्तरात्तत्पार्श्वमागच्छन् ललाटाभिमुख ऊर्ध्वः कर्तव्यः। संयुतकरण इति। हस्तद्वयमीदृशं कर्तव्यमित्यर्थः। चलनलक्षणा क्रिया यथाऽग्निज्वालासूर्ध्वगमनं जलधारास्वधोगमनमङ्गुलीनाम्। सम्मुखौ पताकौ मणिबन्धभुवि न्यस्तौ कृत्वा बाहुपरिभ्रमणयुक्त्या स्वपार्श्वसमं स्वस्तिकविच्युतिः। संवृतविवृतमिति अधोमुखेन स्वस्तिकेन तद्विच्युत्या च अर्धं संवृतं अर्धञ्च विवृतम्। पाल्यं पतमानाद्रक्षणीयं विच्युतिपूर्वकम्। रेचककरणं इति रेचयति स्वसन्निवेशाच्चापयति स्वक्षेत्राद्या या क्रिया। पक्षं पतत्रिणां। उत्क्षेपणं ऊर्ध्वगमनं। स्त्रीपुंसेति उभयोरपि अभिनेत्रोरभिनेययोर्वा।

अभिनवगुप्तः

तर्जनीसङ्गताङ्गुष्ठः स पताकः प्रकीर्तितः।
उत्कृष्टाथ लालने च सहसोत्तलकम्पितः॥
अम्बुधौ तु पुरोगस्स्यादूर्ध्वनिर्देशेष्वधोगतः।
चिन्तने तु पुरोगस्स्यात्पश्चादभिगतो ऋजुः॥
निवारणे तिरश्चीनः स्थितौ चाधोमुखो ऋजुः।
आत्मन्युरसि च ज्ञेयः पादयोरुभयोरपि॥
अधोमुखौ पुरोगौ च निकृष्टे च मनागुभौ।
उरसश्च समीपे च श्वङ्गे पार्श्वेत्वधोमुखौ॥
समूहे निविडे चैव संयुतौ तावधोमुखौ।
गमने तु पुरोगस्स्याद्दर्पे चौ चोर्ध्वगो भवेत्॥
अद्भुते चोत्तलो नेयः खड्गे पार्श्वेचलोधृतः।
अधस्तलौ युक्तपार्श्वौ प्रकाशे विगतक्लमे॥
मङ्गलद्रव्यसंस्पर्शे मर्यादायामुरोगतः।
अन्योन्याभिमुखौ तौ च वने वध्ये पुरोगते॥

पुरोवलयितेनैव मध्यदेशे तदा भवेत् ।
ललाटनिकटस्थौ तु तिरश्चीनौ समुद्धृतौ ।।

इमौ स्यातामन्धकारे मुखदेशे तदुन्मुखौ ।
पुरोत्तलौ तौ च पटे निषेधे च पराङ्मुखौ ।।

सत्यर्थे तु सभायां च ज्ञेयौ तौ संयुतौ तथा ।
अन्नस्पर्शे च विप्राणां प्रदाने ह्यभयस्य च ।।

तिर्यगावर्तमानौ च भवतोऽधोमुखावपि ।
क्रमादूर्ध्वान्निपतितो भविष्यति भवेदयम् ।।

पुरोदेशगतश्चोर्ध्वमुखदेशा ... मुद्धृतौ ।
विभावो चैव विवृतौ प्रेक्षे चैव पुरोगतः ।।

स्पार्श्वतलयोश्श्लिष्टावञ्जलिस्स्यात्पताकयोः ।
वन्दने शरणे चैव प्रार्थने कीर्तितावुभौ ।।

शरीरालंक्रियायां च स्फुटोत्तानतलो भवेत् ।
वने समुद्रे वलयाकारोऽयं कीर्तितो बुधैः ।।

घ्राणे चाये चोर्ध्वतलः नियतो मण्डलाकृतिः ।
शमने लोडने चैव मार्गे चाथ प्रकीर्तितः ।।

अधिकार्थेऽन्वेषणे च कुले चाधोमुखो भवेत् ।
कुहके कम्पितश्चायं द्वौ च पापे कृतौ तथा ।।

अन्तिके मङ्गले चैव लम्बितौ चापि वर्धके ।
मनस्तापे च मन्दे च धृतं सीमन्तपार्श्वके ।।

शयने च तले चैव चन्द्रस्योद्गमने तथा ।
विलम्बिताग्रौ नखरौ ... मुखकम्पितः ।
वचनार्थे चावितथे वितथे च भवेदयम् ।।

अभिनयप्रकाशे

सविक्षेपेन शिरोदेशे पाणिना शिरसा पुनः ।
न तेन वामतः किञ्चिद् भ्रुकुटीकुटिलभ्रु च ।।

स्तोकविस्फारिताक्षेण प्रहारमभिनिर्दिशेत् ।
प्रतापनं तथोद्धृतो ।।

विकृतास्येन फालस्यः किञ्चिद्विचलितः करः ।
पताकः स्फारिताक्षेण भ्रुकुटीकुञ्चितभ्रुवा ।।

कार्योऽहमिति गर्वस्स्याच्चित्रशास्त्रविशारदैः ।
अर्थेषु वक्ष्यमाणेषु संयुत चैनमाचरेत् ।।

द्वितीयहस्तमुक्तो यः महत्तरमंफुतप्लुतः ।
ऊर्ध्वं प्रसर्प्य कर्तव्यः प्रचलद्भिरलाङ्गलिः ।
विदध्यादित्थमेवोक्तं वर्षधारानिरूपणे ।।

........................ दर्शयेत् ।
पुष्पवृष्टिप्रपतने प्रचलद्भिरलाङ्गुलिः ।।

कार्यं हस्तद्वयं वक्र................ ।
तेनैव कृत्वा चोत्तानं विधायस्वस्तिकं बुधः ।।

कुर्वाणो विच्युतिं तस्य पल्वलं संप्रदर्शयेत् ।
पुष्पोपहारं शष्पाणि ये चार्था भूतलस्थिताः ।।

सानुन्नमितवामभ्रूः किञ्चिदुद्वाहयन् शिरः ।
तादृशं हस्तयुग्मं तु कुर्यादविकृताननः ।।

अधोमुखेन तेनैव कर्तव्या घटना मिथः ।
संवृतं याप्यविश्लिष्टं विवृतं वाथ श्लिष्टकम् ।।

दर्शनीयं च वदनमस्मिन्नविकृतं सदा ।
पाल्यं छन्नं च कर्तव्यं स्वस्तिकेन परस्परम् ।।

किञ्चिद्विनतमूर्धा च विधायाधोमुखौ तलौ ।
निविडं निविडेनैव निर्विकारमुखाम्बुजः ।।

उरसोऽग्रे तथोर्ध्वेन परावृत्तेन हस्तयोः ।
युगलेन मनश्शक्तिं प्रयत्नेन प्रदर्शयेत् ।।

गोप्यं वामेन गुप्तेन किञ्चिद्विनतमस्तकः ।
किञ्चिदाकुञ्चितां वामां भ्रुवं कृत्वा प्रदर्शयेत् ।।

पताकास्थानकम्—(प्रथमं)

सहसैवार्थसंपत्तिर्गुणवत्युपकारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्तितम् ।।

भरतः

यत्रोपकारकमपेक्ष्य गुणवतीं उत्कृष्टार्थस्य फलस्य सहसैवाचिन्तितोपनतत्वेन भवति सम्पत्तिः तत्प्रथममिति साध्यफलयोगात् प्रधानं पताकास्थानम् । यथा—रत्नावल्यां सागरिकायां पाशावलम्बनप्रवृत्तायां वासवदत्तेयमिति मन्यमानो यदा राजा पाशं मुञ्चति तदा तदुक्त्या सागरिकां प्रत्यभिज्ञाय हा कथं प्रिया सागरिका इत्यादि । अत्रान्यत्प्रयोजनं चिन्तितम् । तद्वैचित्र्यकारि च प्रयोजनान्तरं सम्पन्नम् । तत्र च दैवयोगः तथाभूतदेशकालभूतो नायकः स्वात्मैवान्याभिसन्धिवलात्कल्पितभेदः सागरिकैव वा मरणमेवोचितमित्यन्याभिसन्धानेन वदतीति पताकानायकसदृशत्वं भजते ।

अभिनवः

सहसैवेत्यादि । तत्क्षणादेव समीहितस्यार्थस्य निष्पत्तिः कुतः । उपकारतः । अभिवाञ्छितसिद्धिनिष्पादनतः । तत्पताकास्थानं प्रथमं वेदितव्यम् ।

यथा—जीमूतवाहनस्य परार्थे आत्मानं ददतः शङ्खचूडेन न दत्तं वध्यचिह्नं। तद्वधाकुलस्य कञ्चुकिनानीय मित्रावसुजनन्या प्रहितं रक्तवासोयुगं दत्तम्।

सागरः

पतकास्थानकम्—(द्वितीयम)

वचस्सातिशयं श्लिष्टं काव्यबन्धसमाश्रयम्।
पताकास्थानकमिदं द्वितीयं परिकीर्तितम्॥

भरतः

काव्यस्य प्रकृतस्य वर्णनीयस्य यो बन्धः अतिशयोक्त्यादिना योजनं तन्निमित्तवशाद्यद्वचनं सातिशयश्लिष्टमप्रकृतं प्रत्युचितं तद्वचनं तदर्थो वा तदुच्चारयिता वा याद्दच्छिकं वा प्रकृतोपयोगित्वेन सहकारित्वेन गच्छत् द्वितीयं पताकास्थानमभिसन्धानापेक्षया। यथा—रामाभ्युदये तृतीयेऽङ्के सीतां प्रति सुग्रीवस्य सन्देशोक्तिः।

बहुनात्र किमुक्तेन पारेऽपि जलधेः स्थिताम्।
अचिरादेव देवि त्वां आहरिष्यति राघवः॥

अत्रान्यप्रयोजनेन अतिशयोक्त्याशयेन प्रयुक्तेऽपि वचसि पारेऽपीत्यादि प्रकृतोपयोगातिशयात् पताकास्थानकम्।

अभिनवः

वचस्सातिशयमित्यादि। वचो वचनं सातिशयं बह्वर्थसमाधानम्। श्लिष्टं द्व्यर्थवाचकं काव्यबन्धसमाश्रयम्। प्रस्तुतस्य काव्यस्याश्रयम्। यथा – वेण्यां सूत्रधारः निर्वाणवैरेत्यादि।

सागरः

—(तृतीयम्)

अर्थोपक्षेपणं यत्र लीनं सविनयं भवेत्।
श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमिष्यते॥

भरतः

लीनमस्फुटरूपं उत्क्षिप्यमाणमर्थजातं श्लिष्टेन संबन्धयोग्येनाभिप्रायान्तरप्रयुक्तेनापि प्रत्युत्तरोपेतं सत् यत्र सविनयं विशेषेण नयनेन विशेषनिश्चयप्राप्त्या सहितं संपद्यते तत् तृतीयं पताकास्थानकम्। यथा—मुद्राराक्षसे चाणक्यः अपि नाम राक्षसो गृह्येत इत्यस्फुटेऽर्थे उपक्षिप्ते सिद्धार्थकः आर्य गृहीत इत्येतत्प्रत्युत्तरं सन्देशाशयेन प्रयुक्तं औचित्याद्विशेषनिश्चयं करोति। पुनश्चाणक्यः आत्मगतं गृहीतो राक्षस इति मन्यते। इदं च प्रकृतसाध्योपयोगाङ्गित्वात् पताकास्थानीयमिति वीथ्यङ्गाद्गण्डादस्य भेदः।

अभिनवः

अर्थोपक्षेपणमिति। यस्मिन्नर्थप्रकाशं लीनं सविनयं औद्धत्यमपास्य मर्म भवेत् श्लिष्टप्रत्युत्तरं द्व्यर्थावभासम्। खण्डितनायकयोः उत्तरोत्तरमस्मिन्नुदाहरणमुपन्यस्यते। कान्ते नाथेत्यादि।

सागरः

—(चतुर्थं)

द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
उपन्याससयुक्तश्च तच्चतुर्थमुदाहृतम्॥

भरतः

यो वचनविन्यासः कथारूपं वा सालङ्कारत्वसंपत्त्याशयेन शोभनः प्रसादयुक्तः श्लेषवशाद्व्यर्थ इति अनेकार्थसंप्रयुक्तः तादृशस्सन्नुपन्यासे वस्त्वन्तरोपक्षेपे सुष्ठु संपद्यते। तच्चतुर्थम्। यथा—रत्नावल्याम् प्रीत्युत्कर्ष इत्यादौ (१-२३) काव्यरूपताशयेन श्लेषः प्रयुक्तः प्रधानवस्त्वन्तरं सागरिकागतमुत्क्षिपति। अयं स राजा उदयनो यस्याहं तातेन दत्तेति सागरिका।

अभिनवः

उपपत्त्या संप्रयुक्तः, अर्थद्वयवाची काव्ययोजनाक्षमः उपपत्तिमान्। अस्य प्रयोगो मुखादिसन्धिचतुष्टये क्वापि विधातव्यः।

सागरः

आगर्भादाविमर्शाद्वा पताका विनिवर्तते।
कस्माद्यस्मान्निबन्धोऽस्याः परार्थः परिकीर्त्यते॥
यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते।
आगन्तुकेन भावेन पताकास्थानकं तु तत्॥

भरतः

स्वफलसिद्धये यत गाणनस्य तत्र तत्रावश्यं पृथग्गणनाशङ्काम्। असत्पक्षे कस्मिंस्तर्हि प्रधानसन्धौ तस्यानुयायित्वमिति दर्शयितुमाह आगर्भादिति। यमर्थं व्याप्य निवर्तते पताकेतिवृत्तं तावत्येव पताकानायकस्य स्वफलसिद्धिरुपनिबन्धनीया। सिद्धफलस्त्वसौ प्रधानफल एव व्याप्रियमाणः भूतपूर्वगत्या पताकाशब्दवाच्यः प्रधानवच्च कल्प्येते त्युक्तत्वान्निर्वहणपर्यन्ते पताकास्थानफले क्रियमाणे तुल्यकालयोरुपकार्योपकारकत्वाभावात्, तेन प्रधानोपकारो न भवेत्। प्रधानवच्च कल्प्येतेति पताकालक्षणे अभिधानाद्बहुतरेतिवृत्ते व्यापकता नायकस्य पताकानायकस्य तु परिमितेति धृतव्यापकत्वं। यत्रार्थे इत्यादि—अर्थः प्रयोजनमुपायश्च। कर्मकरणव्युत्पत्त्या अन्यस्मिन्नुपाये प्रयोजने वा चिन्तिते अन्यः उपायान्तरप्रयोजनान्तरलक्षणः प्रकर्षेण युज्यते सम्बध्यते यत्रेति तत्पताकास्थानकम्। पताकाधारत्वादुपचारादितिवृत्तमपि पताकास्थानकम्। उपाध्यायास्त्वाहुः पताकायाः स्थानमितिवृत्तता। तत्र चार्थः क्रियमाणोऽपि पूर्वपदार्थमुपसंक्रामति। पताकास्थानकमिति वृत्तमेवोच्यते। तत्र वर्तमानं तु जडाजडरूपं पताकासदृशमित्यर्थादुक्तं भवति। स चान्योऽर्थः तल्लिङ्गः

तन्मुख्यमर्थं लिङ्गयति। विचित्रयतीति। आगन्तुकेन भावेनेति। भावनं भावः कारणत्वं। तच्च द्विविधं स्वरूपकृतं सहकारिकृतं च। सहकारिकृतमागन्तुकमुच्यते। तेन सहकारित्वसामान्यात्तत्समर्थाचरणलक्षणात्पताकासादृश्यमिति यावत्। अन्यार्थसन्धानेऽन्यसिद्धिश्चेत् भूषणभूतापि कैश्चिद्दूषणत्वेन गृहीता। तैरर्थशब्दः उपायवाच्योपाश्रितः। तल्लिङ्ग इति कारणत्वधर्माभावप्रवृत्तिनिमित्त उपायः।

अभिनवगुप्तः

पताकास्थानानि चत्वारि। काव्यस्यालङ्कारभूतान्यपि निर्वहणसन्धिवर्जं कार्याणि पताकास्थानानि शोभाहेतूनि। यथा— दशरथाङ्के रामस्य राज्ये चिन्त्यमाने भरतस्य राज्यं तल्लिङ्गजातमिति दशरथ उक्त्वा रामोऽपि गच्छतु वनमिति विषादेनागन्तुकेन व्यभिचारिणा भावेन गृहीतः पठति।

सागरनन्दी

स्वार्थाय प्रवृत्तो यो हेतुश्चेतनः परस्य प्रधानस्य प्रयोजनं सम्पादयति सा प्रसिद्धिप्राशस्त्यहेतुत्वात्पताकेव पताका। सुग्रीवविभीषणादिर्हि रामादिनोपक्रियमाणो रामादेरात्मनश्चोपकाराय भवन् रामादेः प्रसिद्धिं प्राशस्त्यं च सम्पादयति।

रामचन्द्रः

अतीतानागते कार्ये कथ्यते यस्य वस्तुनः।
अन्यापदेशव्याजेन पताकास्थानकं तु तत्॥
तत्तुल्यसंविधानं च तथा तुल्यविशेषणम्।
इति द्विधा यदन्योक्तिरूपं तत्प्रथमं भवेत्॥

शारदातनयः

**पताकवर्तना**

मणिबन्धावधिभ्रान्तिः पताकस्य मुहुर्भवेत्।
सव्यापसव्यतो यत्र सा पताकाख्यवर्तना॥

अशोकः

**पताकहस्तमुख्यता**

प्रकृतित्वात्पताकस्य प्रवृत्तिस्सर्वकर्मसु।
जायते हि स्वभावेन विनियोगोऽस्य तन्महान्।
प्रसूतिर्बहुहस्तानामत एवास्य मुख्यता॥

ज्यायनः

**पताका—अर्थप्रकृतिः**

यस्या वृत्तं पदार्थे स्यात्प्रधानस्योपकारकम्।
तत्संबन्धाच्च फलवत्सा पताकेति कीर्तिता॥

भरतः

कथाशरीरव्यापिनि पुनस्सहायविशेषे साधकतमत्वं करणभूते वर्तमाने आरम्भः पताकेत्युच्यते। कथाशरीरव्यापिनो हि नायकस्य प्राधान्येन यदुपकारकं स्वेन च फलेन च फलवत्सा पताका। यथा हि पताका कस्य चित् चिह्नरूपेण प्रकर्षशोभायै भवति एवं तेषु यदुपनायकादेश्चरितं तत्प्रधानस्यात्मनश्च शोभाप्रकर्षाय जायमानं पताकेत्युच्यते।

भोजः

यथा – मूर्ध्ना जाम्बवतोऽभिवाद्य इति रामचरिते।

**—गर्भसन्धौ तृतीयमङ्गम्**

कार्यसिद्धये मित्रसंपल्लाभः।

यथा – मायामदालसे अग्निपतितां मदालसामदहता मैत्री दर्शिता।

सागरनन्दी

**—(क्रिया) तालाङ्गम्**

क्रियाशब्दे द्रष्टव्यम्।

**—अर्थप्रकृतिः**

यद्वृत्तं हि परार्थं स्यात्प्रधानस्योपकारकम्।
प्रधानवच्च कल्प्येत सा पताकेति कीर्तिता॥

**पतिता—क्रिया (तालाङ्गम्)**

क्रियाशब्दे द्रष्टव्यम्।

**—भ्रूः**

पतिता भ्रूरधः प्राप्ता सद्वितीयं क्रमेण वा।
हासे घ्राणे विस्मये च रोषे हर्षजुगुप्सयोः॥
असूयाक्षेपयोश्चाभे पतिते गदिते भ्रुवौ।

अशोकः

अनिष्टगन्धासूयादौ भ्रुवमेकामधो नयेत्।
हास्यशोकविषादेषु भ्रुवौ द्वे अप्यधो नयेत्॥

विप्रदासः

**पत्रकर्णिका—कर्णभूषणम्**

**पत्रलेखाः—गण्डभूषणम्**

**पथनी—श्रुतिः**

पञ्चमस्य द्वितीया श्रुतिः।
हनुमन्मतेऽष्टादशैव श्रुतयः। पञ्चमोऽत्र त्रिश्रुतिः।

**पथ्या**—प्राकृते मात्रावृत्तम्

त्रयश्चतुर्मात्रिका गणाः एकः पञ्चमात्रिकः ।
लः गः

विरहाङ्कः

**पदम्**—वाद्यप्रबन्धः

यत्र द्योद्ग्राहखण्डं तु स्वल्पमेव प्रयुज्यते ।
शुद्धैः कूटैस्समस्तैश्च व्यस्तैः पाटैः प्रकल्पितः ॥

बद्धो वर्णसरेणापि नातिदीर्घो भवेद्ध्रुवः ।
अन्ते च छण्डणः कार्यः पदं तत्परिकीर्तितम् ।
प्रायेण नर्तने दीप्ते पदं तस्मिन्प्रयुज्यते ॥

वेमः

वादयित्वा यतिं पूर्वं पाटेनान्ते विमुच्यते ।
वाद्यप्रबन्धमध्ये तत्पदमित्युच्यते बुधैः ॥

सोमेश्वरः

आदितो वादयित्वा यत्पाटेन लभ्यते यतिः ।
वाद्यप्रबन्धमध्ये तत्पदमित्युच्यते बुधैः ॥

उदाहरणं रत्नाकरे द्रष्टव्यम् ।

सोमराजः

उद्ग्राहोऽल्पो ध्रुवो नातिदीर्घः शुद्धादिनिर्मितः ।
स्याद्वर्णसरबद्धो वा छण्डणोऽन्ते यदा तदा ॥

पदं वदन्ति वाद्यज्ञाः प्रायस्तद्दीप्तनर्तने ।
वादयित्वा यतिं मध्ये प्रबन्धस्य विमुच्यये ।
पाटेन यत्र तत्प्रोक्तमपरैस्सूरिभिः पदम् ॥

शार्ङ्गः

—प्रबन्धार्थम्

पदं प्रकाशयेदर्थं,

हरिपालः

**पदकम्**—वक्षोविभूषणम्

सुवर्णोपरिविन्यस्तरत्नराजिसमन्वितम् ।
हरिन्माणिक्यनीलेन बृंहिता नायकेन च ॥

मध्यदेशनिविष्टेन मणिना परिशोभितम् ।
पदकं रुचिरं रम्यं वक्षःस्थलविभूषणम् ॥

सोमेश्वरः

**पदगलिता**—मात्रावृत्तम्

द्वौ चतुर्मात्रिकौ एकः पञ्चमात्रिकः चतुर्षु पादेषु यमकम् ।

विरहाङ्कः

**पदद्वयनिकुट्टिता**—भुडुपचारी

पदद्वयनिकुट्टा स्यात्सैवाङ्घ्रिद्वयनिर्मिता ।

अशोकः

सेत्येकपदकुट्टिता ।

**पदनृत्तम्**—देशीनृत्तम्

कर्णाटभाषया बद्धं यदुद्ग्राहादिभिर्युतम् ।
तालेन येन केनापि युतं तत्पदसंज्ञकम् ॥

दामोदरः

**पदार्थटीका**—हस्तप्राणः

अज्ञानां कथितानां स्यादर्थनिर्वाहता यदि ।
ज्ञेया पदार्थटीकेति पूर्वं या भरतोदिता ॥

शृङ्गारः

**पदार्थाभिनयः**

यद्यद्भावाश्रयं नृत्तं पदार्थाभिनयात्मकम् ।

शारदातनयः

**पदोच्चयः**—लक्षणम्

बहूनां तु प्रयुक्तानां पदानां बहुभिः पदैः ।
उच्चयस्सदृशार्थो यः स विज्ञेयः पदोच्चयः ॥

गुणैर्बहुभिरेकार्थैः पदैर्यस्संप्रशस्यते ।
पदोच्चयं तु तं विद्यान्नानार्थग्रथितार्थकम् ॥

भरतः

एकतात्पर्यार्थनिष्ठैः बहुभिश्शब्दैर्ये वाच्यत्वेन स्वीकृता धर्माः तदुपलक्षितत्वेनैव यस्तद्वस्तुनः प्रशंसनं कथं नानार्थैर्ग्रथितात्मकमुपलम्भितरूपं कृत्वा तत्पदानामुच्चयः उत्कर्षेण वचनबाहुल्यं यत्रेति पदोच्चयः । यथा—असारं संसारं (मालतीमाधवे) इत्यत्र ह्यवान्तरावगमकारिणां अवान्तरवाक्यरूपाणां पदानां तात्पर्यममिन्नं सार्थं तु भिन्नः । पादशब्दस्तु अन्ये पठन्ति पादो भाग इत्यादि ।

अभिनवः

**पद्मः**—देशीतालः

विज्ञेयः सगणः पद्मः । । । ऽ

मदनः

**पद्मकेसरः**—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स रि ग रि म ग म प ध प नि ध नि प नि ध स.
(अव) स नि ध प म ग रिं ग स.

मज्ञ

**पद्मकोशः**—हस्तः

अङ्गुष्ठाङ्गुलयो यस्मिन्नलग्नाग्रा धनुर्नताः ।
विरलाः पद्मकोशोऽसौ कार्यो देवार्चने बलौ ॥

द्वित्रिर्वा विप्रकीर्णाग्रैः पुष्पाणां प्रकरे करः ।
फले बिल्वकपित्थादौ स्त्रीणां च कुचकुम्भयोः ॥

शार्ङ्गः

**पद्मकोशस्वस्तिकहस्तः**

कुचस्थलसमीपस्थं पद्मकोशद्वयं तदा।
बध्वा तु कुचभावेऽपि पद्मकोशस्य स्वस्तिकः ॥

वक्षस्तले स्वयं हस्तः कुचद्वयनिरूपणे।
पार्श्वभागे स्वयं हस्तः पर्वतद्वयदर्शने ॥

दिनायकः

**पद्मनाभः**—देशीतालः

पद्मनाभे निरूपिता।
गुर्वोर्मध्ये तु षद्दण्डचयवोऽनुद्रुतान्तराः।

ऽ । ॅ । ॅ । ॅ । ॅ । । ऽ

लक्ष्मणः

**पद्मबन्धः**—नृत्तबन्धः

द्वितीया प्रथमे पङ्क्तिरथाद्याया द्वितीयके।

स्थाने स्थिता द्वितीयस्यास्तृतीयं पदमाश्रयेत्।
तृतीयायाश्चतुर्थं च चतुर्थ्या च द्वितीयकम् ॥
स्थानक्रमाद्व्रजेनेवं द्वितीया पङ्क्तिरिष्यते।
तृतीयपङ्क्ते राद्यस्था द्वितीयाया द्वितीयकम् ॥
आद्यायाश्च तृतीयं च चतुर्थं च क्रमाद्व्रजेत्।
एवं तृतीयपङ्क्तिः स्यादथ तुर्याद्यमाश्रिता ॥
तद्द्वितीयं पदं प्राप्य तृतीयायास्तृतीयकम्।
द्वितीयायाश्चतुर्थं च क्रमाद्गच्छेदियं पुनः ॥
चतुर्थी पङ्क्तिरेवं तु चतस्रः पात्रपङ्क्तयः।
मिथश्चरन्ति मिलिता एवं विनिमयात्पृथक्।
तं पद्मबन्धमाचष्ट रूपनारायणो नृपः ॥

वेमः

**पद्मभ्रमरः**—हस्तः

वक्षसोऽग्रे स्थितः पद्मो भ्रमन्नुपरिषट्पदः।
पद्मभ्रमरनामासौ करः प्रोक्तो मनीषिभिः ॥

षट्पदः – हस्तविशेषः।

जगन्नाथः

**पद्मवर्णः**

सितरक्तसमायोगे पद्मवर्णः प्रकीर्तितः।

भरतः

**पद्मवर्तना**

नलिनीपद्मकोशौ चेत्सविलासं लुठन्ति तौ।
पूर्वसूरिभिरादिष्टा पद्मवर्तनिका तदा ॥

अशोकः

पद्मकोशाभिधौ हस्तौ व्यावृत्तादिक्रियान्वितौ।
आश्लिष्टौ च करौ क्षेत्रव्यावृत्तपरिवर्तितौ।
मिथः पराङ्मुखौ सन्तौ सैषा कमलवर्तना ॥

कल्लिनाथः

**पद्मवीणा**

नकुलादीनां लक्षणे द्रष्टव्यम्।

**पद्मसौन्दर्या**—मेलरागः (रामप्रियमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि प म ग स.

क्रम

**पद्माकारः**—वर्णालङ्कारः

सरिससससरिगग, रिगरिरिरिगमम, गमगगगमपप, मपममम-मपसध, पधपपपधनिनि, धनिधधधनिसस।

प्रतापसिंहः

**पद्मावली**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग प ध नि स.
(अव) स नि ध प ग रि स.

मज

**पद्मासतम्**—मेलरागः (विश्वम्भरीमेलजन्यः)

(आ) स रि ग रि म प नि स.
(अव) स नि ध नि प ग रि स.

मज

**पद्मिनी**—द्वादशाक्षरवृत्तम्

रररराः।

भरतः

—प्राकृते मात्रावृत्तम्

चतुर्मात्रागणौ द्वौ पञ्चमात्र एकः ग

विरहाङ्कः

—(क्रिया) तालाङ्गम्

क्रियाशब्दे द्रष्टव्यम्।

**पद्मिनीहस्तः**

षड्जश्च धैवतश्चैव पद्मिनी स्वर इष्यते।
पद्मिन्याश्शुकतुण्डस्स्यादपवेष्टितरूपकः ॥

शार्ङ्गधरः

**पद्मिन्यभिनयः**

अलपल्लवमृगशीर्षहस्तयोः ललाटदेशधारणेन कर्तव्यः।

महाराष्ट्रे

पन्तुरागध्यानम्

अभिनवजलदाभश्यामलां कोमलाङ्गीं
करगतशुकबालां कान्तसान्निध्यलीलाम् ।
शुचिविमलदुकूलां चारुसौवर्णकैलां
मधुचषकसमीपां पन्तुकां चिन्तयामि ॥

रागसागरः

पन्तुवराली—मेलकर्ता

केक्यादि धेनुशिवमेषविरुद्धमध्य-
पञ्चाधिधैवतमहेशनिषादमेवम् ।
सर्वत्र तुल्यमिति पन्तुवरालिरागे
संपूर्णजातिरिति गायति चित्तसेनः ॥

सरिपधाः शुद्धाः । गस्साधारणः । प्रतिमध्यमः । काकलिर्निषादः ।

परमेश्वरः

—मेलरागः (शुभपन्तुवरालीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध प म ध म ग रि स.

मञ्ज

पन्तुवरालीरागध्यानम्

गण्डमण्डितसुकुन्तलजालां
दण्डकेलिवरकुण्डललोलाम् ।
पाटलाहितसखीसहलीलां
नाटिकां भजति पन्तुवराली ॥

रागसागरः

पन्नगलास्यः—रागः

षाड्जीधैवतिकाभ्यां जातिष्षड्जश्च षड्जकन्यासः ।
पूर्णः पञ्चमकाल्पः पन्नगलास्येति (विश्रु)ताख्या स्यात् ॥

नान्यः

परक्रिया—नायिका

परोढा यद्यपि प्रायो न महाकविभिः स्फुटम् ।
प्रबध्यते स्वप्रबन्धे तथाप्यत्रोच्यते कियत् ॥
अनन्यशरणा स्वीया धनहार्या पराङ्गना ।
अस्यास्ति केवलं प्रेम तेनैषा रागिणां मता ॥

कुम्भः

अत्र पराङ्गनेति वेश्या विवक्षिता । अस्याः परकीयायाः ।

परजरागध्यानम्

परज इषुधनुर्धारी हारी गौरस्तनुस्तनूदीर्घः ।
मिथ आहततालवधूशालीस्तवनेन शालीनः ॥

सोमनाथः

परद्रुते मतम्

परद्रुतानुद्रुतादींस्तालस्यावयवान् परे ।
कथयन्त्यतिसूक्ष्मत्वात्ते भेदा नैव लक्षिताः ।
एतेषामुपयोगस्तु गमकालापगोचरः ॥

वेमः

परन्तपः—देशीतालः

परन्तपे प्लुतो वक्री खण्डलः कुण्डलो लघुः ।
ऽ̇ ऽ । ० ।

लक्ष्मणः

परमेश्वरः

वीणालक्षणकर्ता । कालः १७००
दक्षिणे चिदम्बरप्रान्तवासी । मन्त्रज्यौतिषयोः प्रवीणः ।

परा—श्रुतिः

पञ्चमस्य द्वितीया श्रुतिः ।

अनूपः

पञ्चमस्य चतुर्थी श्रुतिः ।

सुधा

पराजिता—श्रुतिः

पञ्चमस्य तृतीया श्रुतिः ।

अनूपः

परावृत्तम्—शिरः

पराङ्मुखीकृतं शीर्षं परावृत्तमुदीरितम् ।
तत्कार्यं कोपलज्जादिकृते वक्त्रापसारणे ।
परावृत्तानुकरणे पृष्ठतः प्रेक्षणे तथा ॥

शार्ङ्गः

—देशीस्थानम्

परस्परं परावृत्य स्थितयोः पादयोर्द्वयोः ।
पार्ष्णिभ्यां सदृशौ यत्र कनिष्ठाङ्गुष्ठकौ कृतौ ।
स्थानकं तत्परावृत्तमवोचन्त विपश्चितः ॥

वेमः

— शिरः

यत्राननं पराचीनं तत्परावृत्तमिष्यते ।
पश्चाद्विलोकनादिष्टोद्विग्नस्यापनयादिषु ॥

ज्यायनः

परावृत्तः—बाहुः

पश्चात्सारिपरावृत्तो बाणाकर्षणकर्मणि ।
चूलिकाबन्धने योज्यो वीटिकाग्रहणे तथा ॥

सोमेश्वरः

—अङ्गहारः

शकटास्यालातकभ्रमरनिकुट्टककरिहस्तकटीछिन्नानां षण्णां करणं प्रयोगे परावृत्तः।

शार्ङ्गः

परावृत्ततला—देशीचारी

पश्चादुत्तानिततलः स्पृशन्नेव महीतलम्।
बहिश्चेत्प्रसृतः पादः परावृत्ततला भवेत्॥

वेमः

परावृत्ता—जङ्घा

पश्चाद्गता परावृत्ता

परावृत्ता तु कार्या स्यादुत्प्लुतौ दर्दुरासने।

सोमेश्वरः

पश्चाद्यान्ती परावृत्ता भूमौ जानुनिपातिते।
वामतः पितृकार्ये स्यादन्यतो वेदकर्मणि॥

विप्रदासः

परिकथा—श्रव्यकाव्यम्

पर्यायेण बहूनां यत्र प्रतियोगिनां कथाकुशलैः।
श्रूयन्ते शूद्रकवज्जिगीपुभिः परिकथा सा तु॥

भोजः

परिकरः—मुखसन्ध्यङ्गम्

यदुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरस्तु सः।

भरतः

तत ईषद्विस्तार्यते इति परिकरः।

अभिनवगुप्तः

समुत्पन्नेऽर्थे यदार्थानां बाहुल्यं स परिकरः।

सागरनन्दी

उपक्षिप्तार्थस्य सुष्टु विशेषवचनैरल्पविस्तारणं परिकरः।

रामचन्द्रः

यथा – युष्मच्छासनलङ्घनेति वेणीसंहारे।
समुत्पन्नार्थं परिज्ञाय इहानयनमित्यर्थः।

भोजः

परिक्रमः—देशीतालः

परिक्रमे द्रुतद्वन्द्वं यगणस्तदनन्तरम्।

० ० । ऽ ऽ

जगदेकः

परिक्रान्तम्—नृत्तकरणम्

स्वस्थं शिरोऽधोगतं स्यात्करः पुष्पपुटाह्वयः।
करुणा दृक् तथा चारी तत्परिक्रान्तमीरितम्॥

नन्दी

अत्र स्वस्थं स्थानं। करुणा गतिः।

मृदुप्रचारा करुणा नासादृष्टिः समा तथा।
समपादप्रचारा च करुणागतिरीरिता॥

परिक्षयः

भास्वरजातिनाटके चतुर्थसन्धिः।

शारदातनयः

परिक्षिप्तः—वाद्यालङ्कारः

पणवैश्छादितं यत्र वाद्यमल्पमृदङ्गजम्।
सुविभक्ताक्षरपदं परिक्षिप्तः स उच्यते॥

भरतः

गुणभूतो मृदङ्गः स्यात्प्रधानं पणवो भवेत्।
परितो मुरजः क्षेपात्परिक्षेपो भवेत्तदा॥

नान्यः

—वाद्यप्रकारः

पणवैश्छालितं यत्र वाद्यमल्पमृदङ्गजम्।
सुविभक्ताक्षरपदं परिक्षिप्तस्स उच्यते॥

अशोकः

परिगूहनम्—निर्वहणसन्ध्यङ्गम्

अद्भुताप्तिः परिगूहनम् – विस्मयस्थायिभावात्मकस्य अद्भुतरसस्य प्राप्तिरुपगूहनम्। यथा– रामाभ्युदये रामेण प्रत्याख्याता सीता ज्वलनं प्रविष्टा नेपथ्ये कलकलानन्तरं सीतामादाय वह्निः प्रविशति। आश्चर्यमाश्चर्यमिति।

सर्वजनवाक्यमद्भुतप्राप्तिसूचकम्। इदमङ्गं भरत उपगूहनमाह।

रामचन्द्रः

परिचरणम्—संगीतशृङ्गाराङ्गम्

आगतानामनुरागवृद्धये प्रसादनात्संवाहनादिविधिः परिचरणम्।

भोजः

परिचारिका

छत्रशय्यासनायुक्ता तदा व्यजनकर्मणि।
संवाहने च गन्धे च तथा चैव प्रसाधने॥

तथाभरणसंयोगे मालासङ्ग्रथनेषु च।
विज्ञेया नामतस्सातु नृपतेः परिचारिका॥

भरतः

परिच्छिन्नः—अङ्गहारः

समनखछिन्नसंभ्रान्तभ्रमरार्धसूच्यतिक्रान्तभुजङ्गत्रासितकरिहस्तकटीछिन्नानां नवानां करणानां प्रयोगे परिछिन्नाङ्गहारः।

शार्ङ्गः

## परिदेवनम्—लक्षणम्

अन्ये पठन्ति ।

परदोषैर्विचित्रार्थैः यत्रात्मा परिकीर्त्यते ।
अनुक्तोऽन्योऽपि वा कश्चित् स तु क्षोभ इतीरितः ।।

भरतः

परस्य दोषो येऽभ्यस्तास्तादृशा ये विचित्रा अर्थाः परगुणास्तैर्हेतुभूतैः अदृष्टोऽप्यर्थ आत्मा अन्य इति दृष्टत्वेन कीर्त्यते। अन्यो वा कश्चिदात्मव्यतिरिक्त इति क्षोभो हृदयसञ्चलनात्। अनुक्तसिद्धिरपीदमेव ।

अभिनवः

दोषैर्यदन्यनामोक्तैः प्रसिद्धार्थैः प्रयोजितम् ।
अन्यत्रार्थेन संबद्धं ज्ञेयं तत्परिदेवनम् ।।

भरतः

यथा—बालरामायणे दशरथनाम्ना ये दोषा उक्ता रामनिर्वासनादयः तैरेव प्रसिद्धार्थैः सद्भिर्यत्प्रयोजितं वचनं परमार्थेन संबन्धो रक्षस एव युक्तो न तु दशरथे तत्परिदेवितम्। नरेन्द्रवृद्धः इत्यादि । अर्थेन प्रयोजनेन ये अन्यनामोक्ता अर्थाः प्रसिद्धार्थैः यत्प्रयोजितं संवादितमन्यद्धृदये दोषाः । संबन्धं संबन्धनम्। तत्रार्थेन संबन्धं परमार्थतः रचितं तत्परिदेवितम्।

अभिनवः

इदमेव परिवादनमिति भोजः, सर्वेश्वरः परिवेदनमिति, परिवादो मृषा दोष इति शारदातनयश्च आहुः ।

## परिनन्दितः—प्राकृते मात्रावृत्तम्

र लौ ज स.

विरहाङ्कः

## परिन्यासः—मुखसन्ध्यङ्गम्

तन्निष्पत्तिः परिन्यासः । भरतः

ततोऽपि निश्चयापत्तिरूपतया परितो हृदये सोऽर्थो न्यस्यते।।

अभिनवः

संशुद्धार्थभाषणं यत्तत्परिन्यासः । संशुद्धं तत्त्वभूतं यद्भाषणं स एव परिन्यासः नानानुरोधात्।

सागरनन्दी

विनिश्चयः परिन्यासः । उपक्षिप्य विस्तारितस्यार्थस्य विशेषेण निश्चयः सिद्धतया हृदयेऽवस्थापनम् ।

रामचन्द्रः

तस्य निष्पत्तिसौन्दर्यं परिन्यासो विधीयते ।

सर्वेश्वरः

यथा—चञ्चद्भुजभ्रमितेति वेणीसंहारे ।

## परिभावः—मुखसन्ध्यङ्गम्

परिभावना शब्दे द्रष्टव्यम् ।

## परिभावना—मुखसन्ध्यङ्गम्

कुतूहलोत्तरावेगो विज्ञेया परिभावना । भरतः

कौतुकेन जिज्ञासातिशयेन व्यामिश्रो य आवेगः सा परिभावना । किमेतदिति । यथा–वेण्यां तूर्यशब्दं श्रुत्वा किमिदमिति द्रौपद्या वचनम् ।

अभिनवः

विस्मयः परिभावना । रामचन्द्रः

कुतूहलान्तरादायी स्यादर्थः परिभावना । सागरः

अद्भुतापादनं यस्मात्परिभावो मतो यथा । अमृतानन्दी

## परिभाषणम्—निर्वहणसन्ध्यङ्गम्

परिवादकृतं यत्स्यात्तदाहुः परिभाषणम् । भरतः

यथा–सागरिकावासवदत्ते अन्योन्यापराधमुद्घट्टयतः। यौगन्धरायणः प्रविश्य देव्या इत्यादिस्वापराधमप्युद्घट्टयति ।

अभिनवः

परिभाषास्वनिन्दनम् —स्वापराधोद्घट्टनम् ।

यथा—तापसवत्सराजे देवीं प्रति यथातथेत्यादिराजवाक्यम्।

रामचन्द्रः

परस्परकृता सूक्तिः परिभाषणम् ।

सर्वेश्वरः

इदं भाषणमिति भरतेनोच्यते ।

## परिभ्रमणचारिणी—गतिः

भ्रमणेन यदागच्छेत् परिभ्रमणचारिणी ।

देवनः

## परिवर्तकः—सात्त्वत्यङ्गम्

उत्थानसमारब्धानर्थानुत्सृज्य योऽर्थयोगवशात् ।
अन्यानर्थान्भजते स चापि परिवर्तको ज्ञेयः ।।
निर्दिष्टवस्तुविषयः प्रपञ्चबद्धः त्रिहास्यसंयुक्तः ।
सङ्कर्षविशेषकृतः विविधः परिवर्तको ज्ञेयः ।।

यथा—वेण्यां सहदेव गच्छत्वं अहमस्त्रागारं प्रविशामीति भीमवचने नेदमायुधागारं पाञ्चालीभवनमिति सहदेवेनोक्तं अथवा मन्त्रयितव्यैव पाञ्चालीति भीमेनोक्तं। परिवर्तकः। कार्यान्तरसंपादको मानसो व्यापारः परिवर्तयति कार्यमिति परिवर्तकवचनं तूपचारारूढम् ।

अभिनवः

योगक्षेमावहं कर्म प्रारब्धं वीक्ष्य निष्फलम् ।
परावृत्त्यारभेतान्यद्भवेत्स परिवर्तकः ।।

भेदस्साम च दानं च त्रयं निष्फलतां गतम् ।
उद्धरेद्दण्डमास्थाय यस्मात्तत्परिवर्तकम् ॥

यथा – रामाभ्युदये कूटसंधिना निष्फलीभूतो रावणः स्वरूपमास्थाय दुरात्मन् लक्ष्मण इत्यादि तस्य वाक्यम्। अन्ये तु प्रकृतस्य कार्यस्य दैववशादन्यथैव परिपाकः स परिवर्तकः। यथा – दुर्योधनः सदसि प्रविश्य भीमवचनादुत्थितः।

सागरः

परिवर्तनम्

तालप्राणे लयेऽङ्गम् ।

आवृत्तेः पादभागादेः परिवर्तनमिष्यते ।

अत्र पाद इति एककलद्विकलचतुष्कलादिषु प्रयुक्तः पादशब्दो व्यज्यते ।

अच्युतः

परिवर्तनम्—पूर्वरङ्गाङ्गम्

यस्माच्च लोकपालानां परिवृत्तिचतुर्दिशम् ।
वन्दनानि प्रकुर्वन्ति तस्माच्च परिवर्तनम् ॥
तुष्यन्ति लोकपालाश्च प्रयुक्ते परिवर्तने ।
परिवर्ताश्च चत्वारः पाणयस्त्रय एव च ॥

भरतः

—लयाङ्गम्

ताललये इदमङ्गम्। गीते वा नाट्ये वा पादभागानामावृत्तिरेव परिवर्तनम्। गीतनाट्ययोरन्तपर्यन्तं तालस्य पुनःपुनरावर्तनं नकशाले परिवर्तनमित्युच्यते।

अच्युतरायः

परिवर्तः—हस्तप्राणः

पार्श्वभागपुरोभागं प्राप्तो यो नटने करः ।
परिवर्तस्समाख्यातो नाम्ना हस्तविशारदैः ॥

शृङ्गारः

—वर्णालङ्कारः (सञ्चारी)

त्रीनारोहेत्स्वरान्पूर्वं लङ्घयित्वा द्वितीयकम् ।
परिवर्ते ह्यलङ्कारे प्रवृत्तिर्लङ्घिता पुनः ॥

नान्यदेवः

आद्यं तृतीयं च ततश्चतुर्थं गायेद्यदा सा प्रथमा कला स्यात्।
द्वितीयतुर्यावथ पञ्चमं च गायेद्द्वितीया तु मता कलेयम् ॥
तृतीयमादावथ पञ्चमं च षष्ठं तु गायेत्तु कला तृतीया ।
तौ तुर्यषष्ठावथ सप्तमं च गायेद्यदा सा त्विकला चतुर्थी॥
तं पञ्चमं सप्तममादिमं च स्वरं यदा गायति पञ्चमीयम् ।
एवं कलाः पञ्च भवन्ति यत्तालङ्कार उक्तः परिवर्त एषः॥
सगम रिमप गपध मधनि पनिस

रघुनाथः

परिवर्तितम्—हस्तकरणम्

कनिष्ठाद्यङ्गुलीनां चेन्निष्क्रमो बाह्यतः क्रमात् ।
तदा तत्करणं धीरैः परिवर्तितमीरितम् ॥

अशोकः

परिवादः—नाट्यालङ्कारः

वर्त्मना । यथा—वेण्यां ते तस्य मे इत्यादि दुर्योधनवाक्यम्।

सागरः

परिवादिनी—वीणा

विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी ।

विपञ्च्यां लौहतन्त्रीपञ्चकम्। परिवादिन्यां सारीद्वयमधिकम्। लोहतन्त्रीसप्तकम्। रञ्जकतालाभावे सारीद्वयमधिकमिति सम्प्रदायः। तयोरन्यत्सर्वं समानम्।

नारायणः

परिवाहितम्—शिरः

परिमण्डलिताकारभ्रामितं परिवाहितम् ।
लज्जाभरोद्भवे माने वल्लभानुकृतौ तदा ॥
विस्मये च स्मिते हर्षामर्षयोरनुमोदने ।
विचारे च विचारज्ञाः कार्यमाहुरिदं शिरः ॥

शार्ङ्गः

पार्श्वात्पार्श्वं शिरो नीतं पर्यायैः परिवाहितम् ।

ज्यायनः

मस्तकं मण्डलाकारभ्रामितं परिवाहितम् ॥
स्कन्धौ किञ्चिदिवाश्लिष्यदेनदारात्रिकं मतम् ।
हर्षेऽनुमोदने क्रोधे विचारे विस्मये स्मिते ॥
लज्जाकृतं यथा मौने प्रियानुकरणेऽपि च ।
कार्यमाहुरिदं तद्ज्ञाः पराभिप्रायवेदने ॥

कुम्भः

परिविष्टहिमांशुकम्—नृत्तकरणम्

प्रत्यालीढे स्थितिः पूर्वं पार्श्वाभिगमनं शिरः ।
दृष्टिः प्रलोकिता हस्तः सूचीविद्धाह्वयो मतः ।
हरिणत्रासिता चारी परिविष्टहिमांशुके ॥

नन्दी

हरिणत्रासिता गतिः । यथा—

कुञ्चितं वलिते पादतले स्वस्तिकतां गते ।
उत्प्लुत्य सञ्जते यत्र वारितान्तमिमां जगुः ।
हरिणत्रासिताभिख्यां चारीं चारीविचक्षणाः ॥

परिवृत्तम्—करणम्

ऊर्ध्वमण्डलिनौ सूची चरणौ बद्धयाश्रितः।
विचित्रत्वेन यत्रान्यपादो भवति वर्तितः॥
भ्रमर्योऽथ त्रिकभ्रान्तिः परिवृत्तं तदीरितम्।
अत्र कीर्तिधरो बाह्यभ्रमरीमपि मन्यते॥

ज्यायनः

परिवृत्तं स्यादङ्गयान्तरयोजने इति लक्ष्मणः।

परिवृत्तः—हौडुक्कहस्तपाटः

पुटद्वयाभिघातेन परिवृत्तो भवेद्यथा।
झें धां झें धां झें धां दिणनं दिणनं॥

वेमः

परिवृत्तकरेचितः—अङ्गहारः

नितम्बस्वस्तिकरेचितविक्षिप्ताक्षिप्तकलतावृश्चिकोन्मत्तकरिहस्तभुजङ्गत्रासिताक्षिप्तकनितम्बकरिहस्तकटीछिन्नानां करणानां क्रमात्प्रयोगे परिवृत्तकरेचितः।

परिवर्तिता—जङ्घा

प्रतीपयायिनी जङ्घा कथिता परिवर्तिता।
ताण्डवेऽशोकमल्लेन नृपाग्रण्या मनीषिणा॥

अशोकः

परिवर्तिनी—ग्रीवा

सव्यापसव्यचलिता ग्रीवा यत्रार्धचन्द्रवत्।
सा हि नाट्यकलाभिज्ञैः विज्ञेया परिवर्तिनी॥
शृङ्गारनटने कान्ताकपोलपरिचुम्बने।
नाट्यतन्त्रविचारज्ञैः प्रयोज्या परिवर्तिनी॥

नन्दी

परिश्रवणिका—पाटवाद्यम्

क्रियते वादनं यत्र कर्तर्या समपाणिना।
क्रमादवघटेनापि परिश्रवणिका च सा॥

वेमः

कर्तर्यवघटाभ्यां या मिश्रा च समपाणिना।
चतुर्विंशतिमात्राभिः परिश्रवणिका मता॥

पार्श्वदेवः

परिसर्पः—प्रतिमुखसन्ध्यङ्गम्

प्रथमं दृष्टस्य पश्चान्नष्टदृष्टस्यानुसरणं परिसर्पः।

सागरः

दृष्टनष्टानुसरणं परिसर्पः। भरतः

यथा—वेण्यां- कञ्चुकिनः, आशस्त्रग्रहणादिति वाक्यम्। दृष्टनष्टप्रायो हि कार्यान्तरव्यासङ्गात्कुरुकुलक्षयो भीष्मवधेन स्थानपरितोषसूचितेन दुर्योधनस्यायुक्तचेष्टितत्वेनानुसृत इति प्रकृतस्यार्थस्य परिसर्पणात्प्रसरणात्परिसर्पः।

अभिनवगुप्तः

परिहारः—संगीतशृङ्गाराङ्गम्

नवोढायाः कामप्रौढिपिशुनं मार्दवदर्शनं परिहारः।

मोजः

—नाट्यालङ्कारः

उक्तस्य परिहरणम्। वेण्यां अश्वत्थामाङ्के दुःखितोऽहमित्यादि अश्वत्थामवाक्यम्।

सागरः

परिहारविलासः—संगीतशृङ्गाराङ्गम्

मतीनामनुरागातिशयशंसिनः चेष्टाविशेषवेषादयः परिहारविलासः।

भोजः

परिहासः—लक्षणम्

यदग्राम्यं भवेद्वाक्यं गुरूणामधिकेष्वपि।
तथावसरमासाद्य परिहासस्स कथ्यते॥

भोजः

यथोत्तरचरिते - तमसावाक्यं, अयि वत्सेति।

—शृङ्गारचेष्टा

प्रेमलेखासमारब्धमुद्दामरतिवर्धनम्।
अन्योन्यहसितं सद्भिः परिहासो मुनेर्मतः॥

कुम्भः

—गीतगुणः

परिहार (हास) पदैर्युक्तं परभागोपबृंहितम्।
गीतं हास्यरसोदारं परिहासं विटप्रियम्॥

सोमेश्वरः

—रञ्जनगुणः

परेङ्गिता—श्रुतिः

गान्धारस्य द्वितीया श्रुतिः।

पाल्कुरिकि सोमः

पर्यङ्कहस्तः

आन्दोलिकाख्यहस्तस्याङ्गुष्ठे तु विरले यदि।
पर्यङ्को देवता विष्णुस्तत्रैव विनियुज्यते॥

गौरीमतम्

पर्यवसाना—अवनद्धे जातिः

प्रागुक्तकरणजातिं श्रयतेऽवसानतो यस्याः।
त्रिलयोऽपि हि नृत्यविधौ पर्यवसाना तु सा ज्ञेया॥

नान्यः

पर्यागच्छति पूर्वे यस्मिन्वै प्रस्तुतं करणजातम्।
त्रिविधेऽपि तु लययोगे पर्यवसाना तु सा जातिः ॥

भरतः

—पुष्करवाद्ये जातिः

पर्यवगच्छति पूर्वं यस्मिन् वै प्रस्तुतं करणजातम्।
त्रिविधेऽपि तु लययोगे पर्यवसाना तु सा जातिः ॥

अभिनवगुप्त पाठः

पर्यस्तकः—अङ्गहारः

तलपुष्पपुटापविद्धवर्तितनिकुट्टकोरूद्वृत्ताक्षिप्तोरोमण्डलनितम्ब-करिहस्तकटीछिन्नानां दशानां करणानां क्रमात्प्रयोगे पर्यस्तकाङ्गहारः।

पर्यस्ता—पुष्करवाद्ये जातिः

ताधें तां तां दोधे दोह्यामित्यक्षरैस्तु संयुक्ता।
पर्यस्ता जातिरियं मध्यमपुरुषेषु कर्तव्या ॥

अभिनवगुप्तपाठः

एकैकाक्षरचरितं यद्वाद्यं सर्वमार्गसञ्चारा।
पर्यस्तेति च विज्ञेया सा समस्तान्विता जातिः ॥

नपालपाठः

पर्यायगजदन्तकः—चालकः

लुठिते तिर्यगेकस्मिन्करोऽन्यः प्रसृतः पुरः।
पर्यायात्करयोर्ज्ञेयः पर्यायगजदन्तकः ॥

वेमः

पर्यायोद्वृत्तम्—पादमणिः

अङ्गुलीपृष्ठभागेन स्थितयोः पादयोर्द्वयोः।
एकः पादः पुरोगच्छेदपरः पृष्ठतो व्रजेत् ॥
उत्प्लुत्योत्प्लुत्य पर्यायादेवं यत्र क्रियां मुहुः।
कुर्वाते चरणौ तत्तु पर्यायोद्वृत्तमीरितम् ॥

वेमः

पर्युपासनम्—प्रतिमुखसन्ध्यङ्गम्

क्रुद्धस्यानुनयो यस्तु भवेत्तत्पर्युपासनम्।

यथा—रत्नावल्यां विदूषकवाक्येन राजा अनुनीतः दुर्वारामित्यादि पठति।

अभिनवः

रामचन्द्रः-तदेव सान्त्वनमित्याह। क्रुद्धस्यानुकूलनं सान्त्वनं। यथा – रामाभ्युदये मारीचं प्रति क्रुद्धस्य कोपशमनार्थं लोकत्रयेत्यादि प्रहस्तस्य वाक्यम्।

रामचन्द्रः

उपासनमुपास्यानां विषयेषूपसेवनम्।

सर्वेश्वरः

पर्वतकेदारः—रागः

ज्ञेयः केदारवद्भिन्नः केदारः पर्वताश्रयः।
अस्मिन् रागे रिपौ नस्तः। ग्रहांशन्यासः षड्जस्वरे।

मद

पर्वतनारदीयम्

एतन्नामा ग्रन्थो नोपलभ्यते। अच्युतरायकृततालाब्धौ वीणाद्या विचारे अयं ग्रन्थः स्मृतः।

पर्वबन्धः—श्रव्यकाव्यम्

यस्मिन्नितिहासार्थाः छन्दोभिः संस्कृतेन बध्यन्ते।
बहवस्सपर्वबन्धो भवति महाभारतप्रभृति ॥

भोजः

पर्वतमञ्जरी—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स ग प ध नि स.
(अव) स नि ध प ग रि ग म स.

मध

पर्वमणिः—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म प स.
(अव) स नि ध प म ग रि स.

मङ्ग

पल्लववर्तना

पल्लवौ वर्तितौ चेत्सा सविलासमनोहरैः।
निरवादि तदाधीरैः पल्लशमिधवर्तना ॥

अशोकः

पल्लविका—रागः

गान्धारपञ्चमकमध्यमसप्तमानां
अत्युल्वणाध्वनिभि……पूर्णभावा।
गान्धारधैवतरवाञ्चिततारमन्द्रा
धांशा……भवति पल्लविका विभाषा ॥

नान्यः

धांशन्यासग्रहोपेता पूर्णा गपनिमोल्वणा।
तारमन्द्रा च गान्धारं यावत्पल्लविकेष्यते ॥

मतङ्गः

पल्लवौ—नृत्तहस्तौ

व्यावृत्त्या तु भुजादूर्ध्वं प्रसार्य परिवर्तितः।
अधोमुखौ पताकौ चेत्स्वस्तिकौ पल्लवौ तदा ॥
शिथिलौ मेनिरे केचित् त्रिपताकौ कराविह।
यदा नतोन्नतौ स्यातां पद्मकोशाभिधौ करौ ॥
शिथिलौ मणिबन्धस्थौ पुरो यद्वा स्वपार्श्वयोः।
तदाहुः पल्लवौ केचिन्नृत्तविद्याविशारदाः।
पताकौ विबुधाः प्राहुः स्थाने तौ पद्मकोशयोः ॥

अशोक

शिखरौ त्रिपताकौ वा पताकौ वा करौ यदा ।
इति शिखरावपि विप्रदासेन विकल्पेन प्रोक्तौ ।
तिर्यग्वा पुरतो वापि प्रोन्नतौ न मितावपि ।
शिथिलौ मणिबन्धे तु पद्मकोशौ तु पल्लवौ ॥

सोमेश्वरः

व्यावर्तेत भुजादूर्ध्वं प्रसार्य परिवर्तनात् ।
पताकौ मणिबन्धस्थौ शिथिलौ स्वस्तिकीकृतौ ॥
सम्पद्येते यदा विद्धिः कथितौ पल्लवौ तथा ।
केचित्पताकयोस्स्थाने त्रिपताकाविहाब्रुवन् ॥

ज्यायनः

पल्लवी—रागाङ्गरागः

श्रिता धैवतन्यासमंशं ग्रहं यामतारामन्द्राच षड्जर्षभाढया।
सुपूर्णा मता पल्लवीरागकाङ्गं तथा कैश्चिनेपौव भाजाङ्गमुक्ता ॥

कुम्भः

पल्वलहस्तः

पद्मकोशं मतं कुर्यादीषत्पल्वलनामकः ।
घटासु पुष्पगुच्छेषु चषकेषु च कन्दुके ।
पल्वलादिषु वृत्तेषु वस्तुष्वपि नियुज्यते ॥

गौरीसतम्

पवनः—देशीतालः

पवने स्याद्विरामलः । लक्ष्मणः

पवनवसन्तः—मेलरागः ( हरिकाम्भोजीमेलजन्यः )
( आ ) स म ग म प ध नि स .
( अव ) स नि प ध नि प म रि म ग स रि स .

मज

पश्चात्तापः—लक्षणम्

अकार्यं सहसा कृत्वाऽकृत्वा कार्यमथापि वा ।
सन्तापो मानसो यस्तु पश्चात्तापः प्रकीर्तितः ॥

भरतः

सहसेत्यविचार्य अकार्यं कृत्वा । अथवा कार्यमकृत्वा पश्चात्तापः । द्वितीयस्योदाहरणम् । मुखमंसविवर्ति पक्ष्मलाक्ष्याः, इति दुष्यन्तवाक्यम् ।

अभिनवः

—नाट्यालङ्कारः

मोहादवधीरितस्यार्थस्य पश्चात्परितापः ।

यथा – अनुतापाङ्के – किं देव्या न विचुम्बितोसीति रामवाक्यम् ।

सागरः

पश्चात्क्षेपनिकुट्टिता—मुडुपचारी

पश्चात्क्षेपा भवत्येषा पश्चात्क्षेपनिकुट्टिता ।

अशोकः

एषा पुरःक्षेपनिकुट्टिता ।

पश्चात्पुरस्सरा—मुडुपचारी

एषा पश्चात्पुरःक्षेपान्मता पश्चात्पुरस्सरा ।

अशोकः

एषेति पुरःपश्चात्सरा ।

पहाडी—रागः

षड्जत्रया पहाडीस्याद्रिपहीना तथौडवा ।
छाया तैलिङ्गदेशीया यस्यास्सा परिकीर्तिता ॥

दामोदरः

—मेलरागः

गौर्युत्पन्ना पहाडी स्याद्गान्धारस्वरवर्जिता ।
उद्ग्राहे षड्जसम्पन्ना न्यासांशयो रिशोभिता ॥
सायं गेया अहोबिलः

पहाडीरागध्यानम्

वीगोपगायत्पतिसुन्दराङ्गी
रक्ताम्बरा वञ्जुलवृक्षमूले ।
श्रीचन्दनार्द्रौ स्थितिकारिणी सा
श्रीरागकान्ताविदिता पहाडी ॥

दामोदरः

पाञ्चालहस्तः

शुकतुण्डः फलकामी पाञ्चालार्थे निरूप्यते ।

शृङ्गारः

पाञ्चालानुयातम्—संगीतशृङ्गागङ्गम्

पाञ्चालमुनिप्रवर्तिता भिन्नभाषावेषचेष्टितैः प्रहासक्रीडा पाञ्चालानुयातम् । यस्या भूतमात्रेति प्रसिद्धिः ।

भोजः

पाञ्चालः – बाभ्रव्यः । यः चतुष्षष्टिलीलाः कामे उक्तवान् ।

पाञ्चालाभिनयः

शुकतुण्डहस्तस्य कपाले धारणेन कर्तव्यः ।

महाराष्ट्रे

पाञ्चाली—प्रवृत्तिः पाञ्चालमध्यमेति नामान्तरम्

पाञ्चालाः शौरसेनाश्च काश्मीरा हास्तिनापुराः ।
वाह्लीकाश्शंकराश्चैव मद्रकौशीनरास्तथा ॥

हिमवत्संश्रिता ये तु गङ्गायाश्चोत्तरां दिशम् ।
ये श्रिता वै जनपदाः तेषु पाञ्चालमध्यमा ।
पाञ्चालमध्यमायां तु सात्त्वत्यारभटी स्मृता ॥

भरतः

—भङ्गताल:

सा त्रिविधा। विलम्बा द्वादशमात्रा। मध्या चतुर्दशमात्रिका। द्रुतपाञ्चाली षोडशमात्रिका।

नान्यः

पाञ्चजन्यः—नृत्तबन्धः

पात्रैष्षोडशसंख्याते मध्यपङ्क्तिचतुष्टयम् ।
परितष्षोडश ज्ञेया शङ्खाकारनिवेशिता ॥

इति द्वात्रिंशदाख्याता नर्तकीनामनुक्रमात् ।
यत्र पङ्क्तेस्तृतीयायाः तृतीयं स्थानमाश्रिता ॥

तद्द्वितीयं द्वितीयस्या द्वितीयं च तृतीयकम् ।
चतुर्थं च क्रमात्प्राप्य तृतीयायाश्चतुर्थकम् ॥

क्रमात्स्थानानि चत्वारि तुरीयायाः समेत्य च ।
तृतीयायां द्वितीयाया आद्यं सर्वमपि क्रमात् ॥

ततः प्रदक्षिणावृत्त्या बाह्यस्थानानि षोडश ।
क्रमाद्व्रजेत्तथान्यास्तु चरेयुः प्रातिलोम्यतः ।
स पाञ्चजन्यबन्धस्स्यो वीरनारायणप्रियः ॥

वेमः

पाटः

वाद्यवर्णसमूहस्तु पाटः पटुधियां मतः ।

कुम्भः

—वाद्यप्रबन्धः

पाटः स्यात्केवलैः पाटैः क्रियते यत्र वादनम् ।

वेम

निष्पन्नः केवलैः पाटैः पट इत्यभिधीयते ॥

शार्ङ्गः

—प्रबन्धाङ्गम्

सन्दोहो वाद्यवर्णानां पाटस्तालानुगो भवेत् ।

जगन्नाथः

स पाटो यश्च शब्दानामुच्चारो वाद्यसञ्ज्ञितात् ।

हरिपालः

मृदङ्गवीणामुरजादिजन्माकराभिघातप्रभवस्तु पाटः ।

रघुनाथः

पाटकरणम्—प्रबन्धः

पाटपूर्वे तु करणे गीयते धातुयुग्मकम् ।
स्वरैश्च हस्तपाटैश्च यतिभिश्च मनोरमैः ॥

हरिपालः

स्वरैस्सह ततः पाटैर्यद्वाक्यरचितैरपि ।
धातुद्वयं परिस्थेयं तत्पाटकरणं द्विधा ॥

जगन्नाथः

पण्डितमण्डल्या करणप्रबन्ध अष्टधोक्तः। स्वर, पाटः, पद, बन्ध, तेन्न, विरुद, मिश्र, चित्र, भेदैः।

पाटचालिः—वाद्यप्रबन्धः

पाटवर्णादयोऽष्टाद्या अन्तास्संवादिनो वृताः ।
पटूखण्डास्ते स्युरत्रैकमेकं प्रत्येकविंशति ॥

तत्तत्संख्यात्मिका वर्णा मालावैचित्र्यसंयुताः ।
नानावाद्यान्विता रासताल्युक्ता भवेत्ततः ॥

अनेकवाद्यसंपन्नो बहुभङ्गीविचित्रितः ।
कलासश्चर्चरीयुक्तः स्यात्र तां पाटचारिकाम् ।
पाण्डरीकादयः प्राहुः शब्दचालिं परेऽपि च ॥

श्रीकण्ठः

अस्य नाम पाटचालिरित्यन्ये। पण्डरीकादय इति। पण्डरीकविटलादयः नर्तननिर्णयादिग्रन्थकाराः। पण्डरीकस्थाने पुण्डरीक इति केचित्पठन्ति। पाण्डुरङ्ग विटल देवस्य पर्यायशब्दत्वात्पण्डरीक इत्येव साधु स्यात्। परे इति। देवेन्द्रोदयः।

पाटलार्णवः—मेलरागः ( नटभैरवीमेलजन्यः )

(आ) स ग रि ग म प नि ध नि स.
(अव) स नि प म रि स.

मज

पाटवाद्यानि

पटहे तु हुडुक्कायां पाटविन्यासभेदतः ।
वाद्यानि विविधानि स्युस्तेषामुद्देश उच्यते ॥
आदौ वेल्लावणी चल्लावर्णा चाप्युडवस्तथा ।
ततः कुचुम्बिनी चापि चारुश्रवणिका तथा ॥
परिश्रवणिकालम्नः तथा कुडुपचारणा ।
समप्रहारसंज्ञश्च ततः स्यात्करचारणा ॥
दण्डहस्ताभिधश्चैव ततो घनरवाभिधः ।
इति द्वादश वाद्यानि प्रोक्तानि पटहे बुधैः ॥
चल्ली ततश्चल्लिपाटो घत्ता चैव झडप्पणी ।
अनुश्रवणिकाभेदो हस्तस्तदनुजोडणी ॥
त्रिगुणः पञ्चहस्तश्च पञ्चपाणिस्तथैव च ।
पञ्चकर्तरिकासंज्ञं ततश्चन्द्रकला तथा ॥
कथितानि हुडुक्कायां वाद्यानीति त्रयोदश ।
पञ्चविंशतिरुक्तानि वाद्यानि मिलितानि तु ॥

वेमः

पाटवाद्यम्

पटहहुडुक्कादिषु वादने भागः। अथवा खण्डः।
वाद्यमिति रूढिपदम्।

पाटीरवः—मेलरागः (गमनश्रममेलजन्यः)

(आ) स रि ग म प ध नि स.

(अव) स नि ध प ध प म ग म ग रि म ग स.

मल

—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स म ग म प ध नि स

(अव) स नि ध प म ग म ग रि स

मल

पाठ्यम्

पठ व्यक्तायां वाचीत्युक्तम्। व्यक्तत्वं विवक्षाविशिष्टस्वार्थार्पण-क्षमत्वम्। तच्च काकध्यायोक्तस्वरालङ्कारादिसामग्रीयोजनेन भवतीति तयोपस्कृतं पाठ्यमुच्यते।

अभिनवगुप्तः

—संस्कृतप्राकृतरूपेण द्विविधं संस्कृतपाठ्यं तु

नामाख्यातोपसर्गाश्च निपातास्तद्धिताः कृतः।
समासाश्च स्वराश्चैव सन्धयोऽथ विभक्तयः॥

व्यञ्जनान्यङ्गकैरेतैः नानाधातूपबृंहितम्।
प्रयोगार्हं प्रविज्ञेयं संस्कृतं पाठ्यमित्यदः॥

कुम्भः

पाठ्यभाषा

उपभाषार्यभाषा च जातिभाषा तथैव च।
तथा योन्यन्तरी चैव भाषा नाट्ये प्रकीर्तिताः॥

भरतः

पाडी—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि म प नि स.

(अव) स नि ध प म प म ग रि स.

मल

पाडीरागध्यानम्

चिकुरविजितमत्तालीं कान्तिपराभूतप्रावृडधरपालीम्।
शुद्धस्वरालीं हृदि पालीं ध्यायामि मूर्तिसमवर्णकालीम्॥

रागसागरः

पाणिका

पाणिका नाम यजुर्वेदसंबन्धि ब्रह्मप्रोक्तं गीतम्। इयं सप्तरूपाङ्ग-ध्रुवास्वन्यतमा।

चत्वार्येङ्गानि स्युस्सर्वास्वथ पाणिकासु सदा।
ध्रुवकं विद्यावि पुनरन्यच्चासारितेन॥

वक्त्रे प्रतिवक्त्रे द्वे शिरश्शरीरक्रमेण च चतुर्णाम्।
अंशानामेतेषां कथयामि च लक्षणं यथानियमम्॥

मुखमत्र षोडशकलं प्रतिमुखमपि षोडशकलं च।
द्वादशकलं च शीर्षं चतुरुत्तरविंशतिः शरीरकलम्॥

यदाह भरतः

मुखं प्रतिमुखं चैव द्वात्रिंशकमुदाहृतम्।
शिरो द्वादशकं प्रोक्तं द्विगुणं विग्रहस्ततः॥

इति चतुराद्यष्टकलान्तं नियमादत्र च तद्ध्रुवकम्।

एवं लक्षणयोगादष्टादशपाणिका ज्ञेयाः॥

पाणिकायाः पदानि स्वराश्च भरतभाष्ये नान्यदेवेनोदाहृताः।
तत्र पशुपतिपाणिकायाः शीर्षकं चोक्षषाडवे।

उमापाणिका, वरदापाणिका—शुद्धपञ्चमरागे, रुद्रपाणिका-शुद्धसाधारिते, धवलपाणिका मध्यमग्रामे चोक्षकैशिके च, सदाशिवपाणिका शुद्धकैशिके मध्यमग्रामे च, गान्धारीपाणिका भिन्न-षड्जे, गान्धारपञ्चमे च, दिवाकरपाणिका शुद्धमध्यमरागे, स्कन्दपाणिका गान्धारपाणिका। शिष्टानां पाणिकानां लक्षणं कछरूपं पदस्वरयोजनं च नोदाहृतं नान्यदेवेन। इतरग्रन्थेषु तन्नामैव नास्ति।

पाणिसमम्—अवनद्धे साम्यम्

समपाण्यर्धपाण्युक्तं तथैवोपरिपाणिकम्।
गीतवाद्यानुगं वाद्यं ज्ञेयं पाणिसमं तु तत्॥

भरतः

यत्र गीतिर्भवेदादौ पदं तु तदनन्तरम्।
पदं चादौ ततो गीतिः सममेवाथवा द्वयम्।
गीत्वा युक्तं तु तद्वाद्यं भवेत्पाणिसमं बुधैः॥

नान्यः

—गीतेन समं पञ्चपाणिप्रहारसमत्वम्

समपाण्यर्धपाण्युक्तं तथैवोपरिपाणिकम्।
गीतवाद्यानुगं यत्तु ज्ञेयं पाणिसमं तु तत्॥

भरतः

पाणिहस्तः—हस्तपाटः

समपाणिस्तु पटः(?) पुष्करे विरलाङ्गलिः।
वादयेद्यदि संप्रोक्तः पाणिहस्तो मनीषिभिः॥

तरगिड दरगिड वेमः

अङ्गुल्यो विरलास्सर्वाः साङ्गुष्ठास्ताडयन्ति चेत्।
पाणिहस्त इति ख्यातो हस्तपाटो मनीषिभिः॥

सोमेश्वरः

पाण्डुः—मुखरागः

ईषत्सितस्तु पाण्डुस्त्यात्स पुनर्विनियुज्यते ।
विप्रलम्भाख्यशृङ्गारे तथैवावेगशङ्कयोः ॥

वेमः

पाण्डुवर्णः

सितपीतसमायोगात्पाण्डुवर्णः प्रकीर्तितः ।

भरतः

पाण्यन्तरः—हौडुक्किकहस्तपाटः

यदा व्यवहिताङ्गुष्ठः स्वपुटे दक्षिणश्चलेत् ।
निपीडयेत्स्फुटं वामस्तदा पाण्यन्तरो भवेत् ॥

वेमः

उल्लासाद्दक्षिणो हस्तो व्यङ्गुष्ठः स्वपुटे मुहुः ।
पीडयेत्स्वं पुटं वामो भवेत्पाण्यन्तरस्तदा ॥

विश्लिष्टाङ्गुलिसञ्चारादङ्गुष्ठार्धार्धताडनात् ।
पाण्यन्तरस्य जननं केचिदाचक्षते बुधाः ॥

अन्ये पाण्यन्तरं प्राहुर्व्यङ्गुष्ठाद्युक्तलक्षणम् ।
हस्तान्तरं ततो भिन्नं विश्लिष्टादिकलक्षणम् ॥

मोक्षदेवः

पाण्यन्तरनिकुट्टकः—हस्तपाटः

दक्षिणाङ्गुष्ठतर्जन्योर्घाताद्वामस्य रेफवत् ।
क्रमव्युत्क्रमघाताच्च पाण्यन्तरनिकुट्टकः ॥

धगिडदां खरिक्करां खरिक्क खरिक्कदांदां खरिखरिदां गिडदां ।

वेमः

पातः—वादनम् (दक्षिणहस्तव्यापारः)

घातः केवलया पातः । शार्ङ्ग

केवलया, तर्जन्या, इति शेषः ।

—तारा

पातोऽधोगमनं, अशोकः
रसे च करुणे कार्यः । कुम्भः

—वीणायां दक्षिणहस्तव्यापारः

आहन्ति तन्त्रिकां गाढं तर्जनी खवला यदा ।
वैरिणां दुर्गपातज्ञस्तदा पातमिहाब्रवीत् ॥

कुम्भः

पातालकुण्डली—देशीतालः

पातालकुण्डलीताले शरो दीप्तो गुरुस्तथा ।
लपौ लगौ गपौ लपौ मपौ च मगणप्लुतौ ॥
गौ गौ लपौ गलौ लञ्च मगणो लप्लुतौ तथा ।
द्रुतद्वयं लघुद्वन्द्वं प्रान्ते व्यापकयुग्मकम् ॥

।ऽऽ।ऽऽ।ऽऽ।ऽऽऽऽऽऽऽऽऽऽऽ।ऽ॥
ऽऽ।ऽ००॥ (?)

दामोदरः

पात्रप्रवेशः

ध्रुवायां संप्रयुक्तायां पटे चैवापकर्षिते ।
कार्यः प्रवेशः पात्राणां नानार्थरससंभवः ॥

स्थानं तु वैष्णवं कृत्वा ह्युत्तमे मध्यमे तथा ।
समुन्नतं समं चैव चतुरश्रमुरस्तथा ॥

बाहुशीर्षे प्रसन्ने च नात्युत्क्षिप्ते च कारयेत् ।
ग्रीवाप्रदेशः कर्तव्यो मयूराञ्चितमस्तकः ॥

कर्णादष्टाङ्गुलस्थे च बाहुशीर्षे प्रयोजयेत् ।
उरसश्चापि चिबुकं चतुरङ्गुलसंस्थितम् ॥

हस्तौ तथैव कर्तव्यौ कटिनाभितटस्थितौ ।
दक्षिणो नाभिसंस्थस्तु वामः कटितटे स्थितः ॥

पादयोरन्तरं कार्यं द्वौ तालावर्धमेव च ।
पादोत्क्षेपस्तु कर्तव्यः स्वप्रमाणविनिर्मितः ॥

भरतः

पादः

घट्टितोद्घट्टितोत्सेधा मर्दितस्ताडितोऽग्रगः ।
पार्ष्णिगः पार्श्वगस्सूची निजश्चेति नवाह्वयः ॥

सोमेश्वरः

समाग्रतलसञ्चारकुञ्चितोद्घट्टिताञ्चिताः ।
इति पादभिधाः पञ्च भवेयुर्मुनिसम्मताः ॥
ताडितो घट्टितोत्सेधो घट्टितो मर्दितोऽग्रगः ।
पार्श्वगः पार्ष्णिगस्सूचीसंज्ञकोङ्गुलिपृष्ठगः ।
तलाहतिरिति प्राहुरस्य भेदान् परे दश ॥

ज्यायनः

समस्त्र्यस्रोऽञ्चितस्सूची पादोऽग्रतलसञ्चरः ।
कुञ्चितोद्घट्टितौ चेति चरणास्सप्त भारताः ॥
घट्टितो घट्टितोत्सेधो मर्दितस्त्रोटितस्तथा ।
पार्ष्णिगः पार्श्वगस्तद्वदग्रगश्चेति केचन ॥
सप्तान्यांश्चरणानाहुः । विप्रदासः
समोऽञ्चितः कुञ्चितश्च सूच्यग्रतलसञ्चरः ।
उद्घट्टितस्तथापादः षड्विधो मुनिना मतः ॥
त्रोटितोद्घट्टितोत्सेधघट्टितौ मर्दिताग्रगौ ।
पार्ष्णिगः पार्श्वगोऽप्येवं पादोऽन्यैस्सप्तधोदितः ॥

अशोकः

पादकटकम्—पादभूषणम्

सन्धिदेशे सुसंश्लिष्टौ नीलकेन तु कीलितौ ।
चतुरश्रौ षडश्रौ वा तथाष्टाश्रौ च कारयेत् ॥
सौवर्णैर्बुद्बुदैरम्यैः पङ्क्तिस्थैर्वा विराजितौ ।
श्लक्ष्णौ वा कान्तिसंयुक्तौ नादवन्तावथापि वा ॥
रत्नैर्वा विविधैर्युक्तौ कटकौ पादभूषणे ।

सोमेश्वरः

पादघर्घरिका—पादभूषणम्

किङ्किण्यः स्वर्णरचिता गुणगुम्भितविग्रहाः ।
नादवत्यस्सुरम्यास्ताः पादघर्घरिकाभिधाः ॥

सोमेश्वरः

पादतालोद्घट्टितम्—पादमणिः

तिष्ठतोरङ्गुलीनिष्ठैः अङ्घ्र्योरेको यथोचितम् ।
तालपातानुसारी स्यादपरश्चरणः पुनः ॥
पाटानुद्घट्टयेच्चारीरथवा जनयेद्यदि ।
पादतालोद्घट्टितकं प्राह वेममहीपतिः ॥

वेमः

पादपट्टः—पादभूषणम्

त्रिपञ्चशृङ्खलाक्लृप्तौ नानारत्नसरैः कृतौ ।
कीलकाहितसंघातौ पादपट्टावितीरितौ ॥

सोमराजः

पादपाटः

अयं देशीचारीष्वेव लक्षितः अशोककुम्भादिभिः ।
मतङ्गमतानुसारेण षोडश पादपाटा भिन्नाः ॥

—देशीलास्याङ्गम्

पाटाक्षराणि वाद्यानां पादपाटैर्निरन्तरैः ।
स्फुटमुच्चारयन्तीव पूर्वकायमचञ्चलम् ॥
रेखासौष्ठवसम्पन्नं दधाना यत्र नर्तकी ।
नर्तनं कुरुते सोऽयं पादपाटः प्रकीर्तितः ॥

वेमः

पादमणिः

अयमेव पादपाट इति क्वचित् दृश्यते ।

पादरेचकः

यात्वन्तर्बहिरङ्गुष्ठामस्य पार्ष्णेर्निरन्तरम् ।
नमनोन्नमनोपेता गतिः सा पादरेचकः ॥

अशोकः

पादस्थितिनिकुट्टिता—भुडुपचारी

यस्यां निकुट्टितः पादः स्थितोऽथाङ्गुलिपृष्ठतः ।
इतरस्ततः कुट्टितस्सा पादस्थितिनिकुट्टिता ॥

अशोकः

पादाङ्गुलिः

अवक्षिप्तास्तथोत्क्षिप्ताः कुञ्चिताश्च प्रसारिताः ।
पादाङ्गुल्यस्तथाङ्गुष्ठसंलग्नाश्चेति पञ्चधा ॥

सोमेश्वरः

उत्क्षिप्ताः कुञ्चितास्तद्वधा अवक्षिप्तास्स्वभावजाः ।
अनङ्गुष्ठयुताङ्गुष्ठसंयुक्ता चेति सप्तधा ॥

ज्यायनः

पादाङ्गुष्ठः

उत्क्षिप्तोऽवनतोऽङ्गुष्ठस्सहजश्चेति स त्रिधा ।

ज्यायनः

पादादियमकम्—अलङ्कारः

आदौ पादे तु यत्र स्यात्समावेशस्समाक्षरः ।
पादादियमकं नाम

यथा—विष्णुः सृजति भूतानि विष्णुस्संहरते प्रजाः ।

पादान्तयमकम्—अलङ्कारः

चतुर्णां यत्र पादानां अन्ते स्यात्सममक्षरम् ।
तद्वै पादान्तयमकं,

दिनक्षयात्संहृतरश्मिमण्डलं दिवीव लग्नं तपनीयमण्डलम् ।

भरतः

पादापविद्धकम्—करणम्

यत्र नाभिस्थले हस्तौ पराञ्चौ खटकामुखौ ।
सूचीपादस्ततोऽन्येन चरणेन समेत्य च ॥
कुर्याच्चारीमपक्रान्तमन्योऽङ्घ्रिश्च तथा भवेत् ।
पादापविद्धकं नाम करणं तत्प्रचक्षते ॥

वेमः

"सूक्ष्मनृत्तेऽभिनीयताम्" इति लक्ष्मणः ।

पादोर्ध्वचक्रभ्रमिः—कला

आनीयाशु विलासकल्पयुगं त्वस्मिन्स्थले हस्तयो-
र्धृत्वाऽधोवदना पृथक् पुरपथक्षिप्रप्रताभ्यां नटी ।
पश्चाद्यां भ्रामयते च पादयुगलं यत्रार्कभाजित्वरं
प्रोक्ता सा नृपनागमल्लजयिना पादोर्ध्वचक्रभ्रमिः ॥

नागमल्लः

पानाटगूर्जरी—मेलरागः

खरहरप्रियामेलः ।

मेललक्षणे

पानाटगूर्जरीरागध्यानम्

खड्गखेटधरां रक्तां चापतूणीरभासिताम् ।
दुकूलमकुटोद्भासां भजे पानाटगूर्जरीम् ॥
रागसागरः

पारस्परी—देशीनृत्तम्

सालङ्कृतं नटीयुग्मं धृत्वा दक्षिणहस्तके ।
दारुशस्त्रं वामहस्ते फलकं वर्तुलं वरम् ॥
स्थाने विषमसूच्यां च स्थित्वा सम्मुखमेव च ।
दण्डशास्त्रायुधाघातैः परस्परकृतोत्सवैः ॥
युद्धं तं सविलासं च सप्तखण्डैः सतालकैः ।
सार्थकैः वाद्यभेदैश्च ब्रुवन्तं च परस्परम् ॥
आभोगं वदतं चान्ते चारीकरणसंयुतम् ।
पूर्वकट्टरवन्मध्ये गतिमानेन राजितम् ।
एतादृशं पात्रयुग्मं रङ्गे पारस्परी मता ॥
वेदः

पूर्वकट्टरमिति बङ्गालीकट्टरम् ।

पारिजातलता—नृत्तरूपकम्

मुखसन्धि प्रतिमुखसन्धि निर्वहणैर्युता ।
उदात्तवर्णनोत्कर्षा ललितोदात्तनायका ॥
पारिजातलतैकान्ता मुखनिर्वहणान्विता ।
वर्णमालाखण्डतालवती गाथासमन्विता ॥
वीरशृङ्गारभूयिष्ठा देवक्ष्मादिनायका ।
कलहान्तरितावस्थानायिकोदात्तनायका ॥
अथवा भोगिनी स्वीया गणिका नायकान्विता ।
तास्युरष्टौ चतस्रस्युः दण्डरासकनर्तनाः ॥
अपसारलया चित्रकथागेय समन्विता ।
क्वचिद्विदूषकक्रीडा परिहासमनोहरा ॥
पारिजातलता सेयं यथा गङ्गातरङ्गिका ।
पारिजातकमित्येव कैश्चिद्देषाभिधीयते ॥
शारदातनयः

पारिपार्श्वकः—देशीतालः

पारिपार्श्वकतालं स्युश्चन्द्रौदलगपाः क्रमात् ।।ऽऽ̐
लक्ष्मणः

पार्वती—रागः

गान्धारांशन्यासा धरिहीना तारपञ्चमोपेता ।
मापन्यासा सा ध्वनिबहुला कथिता च पार्वती कविभिः ॥
नान्यः

गांशन्यासा धनिव्यक्ता मापन्यासोरुपध्वनिः ।
पञ्चमताराभिहिता पार्वती गीतवित्तमैः ॥
नागमल्लः

पार्वतीपतिः—देशीतालः

पार्वतीपतिताले तु द्रुता एकादश स्मृताः ।
विरामान्तास्ततो लोगः लक्ष्मणः
००००००००००ं।ऽ

पार्वतीलोचनः—देशीतालः

मगणाद्दो द्रुतोगौ च पार्वतीलोचने द्रुतौ ।
ऽऽऽ।००ऽऽ०० सुधा

गाद्वयो लप्लुतो लौदौ पार्वतीलोचने क्रमात् ।
ऽऽऽ।ऽ̐।।०० वेमः

पार्वतीलोचने वृत्तौ लौद्रुतौ तनभाः क्रमात् ।
००॥००ऽऽ।।।।ऽ॥ नन्दी

अथवा मगणो लश्च गुरुद्वन्द्वं द्रुतद्वयम् ।
ऽऽऽ।ऽऽ०० जग

पार्श्वम्

विवर्तिताभिधमथोपसृतं च प्रसारितम् ।
नतं चोन्नतमेवेति पार्श्वं पञ्चविधं भवेत् ॥
अशोकः

पार्श्वकम्पितम्—शिरः

कम्पिताभ्यामञ्चिताभ्यां चार्धं पार्श्वमुखं यदा ।
स्यात्पार्श्वकम्पितं पार्श्वाकम्पितं च क्रमात्तदा ।
प्रश्नताललयोल्लासलास्यादौ तद्वयं मतम् ॥
ज्यायनः

पार्श्वक्षेपनिकुट्टिता—भुडुपचारी

पार्श्वतः क्षेपणादेवं पार्श्वक्षेपनिकुट्टिता ।
अशोकः

एवमिति पुरःक्षेपोक्तक्रिया ।

पार्श्वक्रान्तम्—करणम्

यत्रान्यस्य पुरः पार्श्वक्रान्तायां चरणं क्षिपेत् ।
हस्तौ पादानुगौ यद्वत् प्रयोज्याभिनयोचितौ ।
पार्श्वक्रान्तमिदं रौद्रे भीमादेस्स्यात्परिक्रमे ॥
ज्यायनः

पार्श्वक्रान्ता—चारी

उद्यम्य पार्श्वभागेन चरणं कुञ्चितं यदि।
पातयेत्पार्ष्णिना भूमौ पार्श्वक्रान्ता प्रकीर्तिता॥

यद्वान्यचरणस्योरुक्षेत्रपर्यन्तमुद्धृतम्।
चरणं धरणीभागे न्यस्योद्घट्टितकं यदि।
एषापि पार्श्वक्रान्ताख्या चारी नृत्तविदां मता॥

वेमः

पार्श्वगः—पादः

पार्श्वं गच्छन् पार्श्वगस्स्याद्यद्वा पार्श्वे स्थितो मतः।

अशोकः

कण्टकोद्धृतौ।
आसने च भवेन्नृत्ये सा पुरो बहुभङ्गिभिः।

ज्यायनः

पार्श्वच्छेदः—अङ्गहारः

वृश्चिककुट्टितोर्ध्वजान्याक्षिप्तस्वस्तिकोरोमण्डलनितम्बकरिहस्तकटीछिन्नानां करणानां प्रयोगे पार्श्वच्छेदः।

शार्ङ्गः

पार्श्वजानु—करणम्

यस्मिन् समस्थितस्याङ्घ्रेरूरुपृष्ठेप्यवस्थितः।
अन्योऽग्रेणाथ वक्षस्थो मुष्टिस्स्यादपरः करः॥

अर्धचन्द्रः कटीसंस्थः पार्श्वजानु तदीरितम्।
बुधैर्युद्धे नियुद्धे वा विनियोगोऽस्य कीर्तितः॥

ऊर्वोरभ्यन्तरे पार्श्वे परपादाग्रसंस्थितिः।
भट्टतण्डुरिह ब्रूते पाठान्तरंविलोकनात्॥

ज्यायनः

पार्श्वताडितम्—पादमणिः

उत्प्लुत्य स्थितयोरङ्घ्र्योः पृष्ठेन च तलेन च।
पर्यायात्पार्श्वयोर्यत्र सत्वरं ताडनं भुवि।
क्रियते तदिदं तज्ज्ञैः कथितं पार्श्वताडितम्॥

वेमः

पार्श्वदर्शनम्—नृत्तकरणम्

अवहित्थस्थानकं स्यादञ्चितं दृक्प्रलोकिता।
पार्श्वावलोकिनी चारी यत्र तत्पार्श्वदर्शनम्॥

नन्दी

पार्श्वदर्शिनी—गतिः

पदाक्षेपसमन्विता।
क्रमेण दर्शयेत्पार्श्वे सान्वर्था पार्श्वदर्शिनी।

देवणः

पार्श्वदेवः

सङ्गीतसमयसारकर्ता। क्रै. प. १३०० काले स्यादित्यूह्यते। येन परमर्दि, सोमेश्वर प्रतापपृथ्वीश्वराः स्मृताः। अयं तु विशेषः। प्रतापपृथ्वीश्वरः जगदेकमल्लः सङ्गीतचूडामणिकारः स[ङ्गी]तसमयसारस्थलक्षणश्लोकाः बहवस्सङ्गीतचूडामणेरुद्धृताः। दिगम्बरमतोदित इति सङ्गीतसमयसारे तत्र तत्र दृश्यते। ग्रन्थकारमेव सा पङ्क्तिस्सूचयति। अयं दिगम्बरजैनमतावलम्बी। अस्य पिता ब्राह्मण इति ग्रन्थारम्भे उक्तम्।

पार्श्वद्वयचरी—मुडुपचारी

कुट्टितोऽङ्गुलि पृष्ठेच स्थितोऽङ्घ्रिरितरस्ततः।
स्वस्तिकाद्विच्युतः पूर्वैः स्वपार्श्वे च निकुट्टितः।
एवमङ्घ्र्यन्तरेणापि पार्श्वद्वयचरी तदा॥

अशोकः

पार्श्वद्वयनतम्—करणम्

पादौ च स्वस्तिकं गात्रं जनं पार्श्वं शिरस्तथा।
एकोऽलपल्लवो डोलस्तथान्यो मस्तके स्थितः।
क्रमादङ्गद्वयेप्येतत्पार्श्वद्वयनतं मतम्॥

देवणः

पार्श्वद्वयविवर्तितम्—करणम्

क्रमात्पार्श्वद्वयौ पादौ हस्तौ चापि प्रसारितौ।
अलपद्मौ च करणं पार्श्वद्वयविवर्तितम्॥

देवणः

पार्श्वनिकुट्टकम्—करणम्

यत्पार्श्वे स्वस्तिकौ हस्तौ पर्यायेण निकुट्टितौ।
उन्मुखाधोमुखौ स्यातां तत्पादं च निकुट्टितम्॥

यस्मिन्नङ्गान्तरेणैव तत्स्यात्पार्श्वनिकुट्टितम्।
प्रकाशाचरणाभ्यासवाक्यार्थाभिनये मतम्॥

ज्यायनः

पार्श्वपाणिः—हस्तपाटः

नखाग्रैर्वादनात्पार्श्वपाणिस्सञ्जायते यथा।
गिन गिनन गिगिन

वेमः

पार्श्वप्रसारितम्—करणम्

पार्श्वप्रसारितौ स्यातां हस्तपादौ तथैव च।
अन्यपार्श्वे क्रमेणैतद्भवेत्पार्श्वप्रसारितम्॥

देवणः

पार्श्वमण्डलौ—नृत्तहस्तौ

तौ मिथस्संमुखौ पार्श्वे विन्यस्तौ पार्श्वमण्डलौ ।
स्कन्धक्षेत्रादधस्त्वन्यपार्श्वयोर्भ्रमणं परे ।।
आविद्धभुजयोरूचुस्तयोरन्वर्थवादिनः ।
कक्षवत्तानेकत्यन्यदनयोर्नाम कल्पितम् ।।

ज्यायनः

केचिदावेष्टिताख्येन कर्मणा निजपार्श्वयोः ।
आविद्धभ्रामितभुजौ पार्श्वमण्डलिनौ जगुः ।।

अशोकः

पार्श्वमुद्राकरः—हस्तः

मुद्राहस्ते नासिका चेद्वक्रिताकारमाश्रिता ।
पार्श्वमुद्राकरस्सोऽयं पार्थोक्तमतसङ्ग्रहे ।
पार्श्वमुद्राकरस्सोयं यथार्थं संप्रयुज्यते ।।

शृङ्गारशेखरः

पार्श्वस्वस्तिकः—अङ्गहारः

दिक्स्वस्तिकार्धनिकुट्टकापविद्धोरूद्वृत्ताक्षिप्तनितम्बकरिहस्तकटीच्छिन्नानां करणानां क्रमात्प्रयोगे पार्श्वस्वस्तिकाङ्गहारः ।

शार्ङ्गः

पार्श्वाभिमुखम्—शिरः

पार्श्वाभिमुखमन्वर्थं पार्श्वस्तस्यावलोकने ।

शार्ङ्गः

पार्श्वाभिमुखमन्वर्थसंज्ञं पार्श्वप्रलोकिते ।

ज्यायनः

पार्श्वोद्वृत्तम्—पादमणिः

यस्मिन् समौ तु चरणौ समुत्प्लुत्य मुहुर्मुहुः ।
एकपार्श्वोन्मुखतलौ तिष्ठतोऽङ्गुलिपृष्ठतः ।।
ताडयन्तौ महीभागं तलाभ्यामन्तरान्तरा ।
पार्श्वयोश्चेत्क्रमादेयं पार्श्वोद्वृत्तं तदीरितम् ।।

वेमः

पार्श्वोरुताडितम्—पादमणिः

विधायाभ्यन्तरावृत्तिं प्रापितं पार्श्वमात्मनः ।
अङ्गुलीपृष्ठभागेन तिष्ठन्तं चरणं भुवि ।।
तलेन ताडयेदूरुमपरश्चरणो यदा ।
पार्श्वोरुताडितं प्रोक्तं तथा नृत्तविशारदैः ।।

वेमः

पार्ष्णिः

उत्क्षिप्ता पतितोत्क्षिप्ता पतितान्तर्गता तथा ।
बहिर्गता मिथो युक्ता विमुक्ताङ्गुलिसङ्गता ।
पार्ष्णिरित्यष्टधा पादचारीस्थानेषु दृश्यते ।।

विप्रदासः

पार्ष्णिगः—पादः

पृष्ठतो याति यः पार्ष्ण्या स पादः पार्ष्णिगो भवेत् ।

अशोक

पार्ष्णिगं किङ्किणीविधौ । ज्यायनः

पश्चादपसृतौ तस्य विनियोगो निरूपितः ।

सोमेश्वरः

पार्ष्णिपार्श्वगतम्—देशीस्थानम्

स्वाभाविकस्थितस्याङ्घ्रेरन्तः पार्श्वान्तरस्थितः ।
पार्ष्णिरन्यस्य यत्रैतत्पार्ष्णिपार्श्वगतं मतम् ।।

वेमः

पार्ष्णिपीडम्—देशीस्थानम्

पार्ष्णिः पादस्य चेदीषत्पुरोदेशान्मुखस्य तु ।
अन्यस्याङ्गुष्ठसंविद्धा पार्ष्णिपीडं तदुच्यते ।।

वेम

पार्ष्णिरेचिता—देशीचारी

पार्ष्णिपार्श्वगते स्थाने पादयोस्स्थितयोर्यदा ।
पार्ष्णी तु रेचितौ यत्र सा चारी पार्ष्णिरेचिता ।।

वेमः

पार्ष्णिसमा—अवनद्धे जातिः

धित्थं धिगधिं धिगटं सटधिक्करणैस्सपार्ष्णिगतैः ।
धे क्के टे घे ग्रथितपार्ष्णिसमा सा भवेज्जातिः ।।

भरतः

करुणेतरविषयेऽशोभग्रहणचलितचरणगतौ ।
पार्ष्णेर्घातात्पदयोः पार्ष्णिसमाजातिरिति मता तद्ज्ञैः ।।

नान्यः

पार्ष्णिसमा—पुष्करवाद्ये जातिः

धित्थं धिकटधिं धिकटं मठधिक्करणै स्स पार्ष्णिकृतैः ।
धे क्के टाघे ग्रथिता पार्ष्णिसमा सा भवेज्जातिः ।।

अभिनवगुप्तपाठ

धिधिकट कटधिंधि कं मां धिटिथिकटपटथिथीकरणे ।
धक्कंडाधुंगदिता पार्ष्णिसमा भवति जातिरियम् ।।

नेपालपाठः

ऊर्ध्वाङ्कदक्षिणमुखैः क्षिप्ता प्रभृता वितस्तमार्गे तु ।
पार्ष्णिसमस्ता जातिः कार्या शृङ्गारहास्यगता ।

भरतः

पाली—(मालवगौलमेलजा)

षड्जग्रहांशा सन्यासा गरिक्ता पालिका मता ।
गानज्ञैर्गीयते सायं कतिचिद्गमकान्विता ।।

श्रीकण्ठः

## पालीरागध्यानम्

अस्य पाडीति नामन्तरं वर्तते ।

पाली ललाटोदितचन्द्ररेखा-
प्रफुल्लराजीवसमत्रिणेत्रा ।
भागीरथीपूतजटाकलापा
चकास्ति मुक्ताफलचारुहारा ॥

श्रीकण्ठः

## पावः—सुषिरवाद्यम्

नवाङ्गुलप्रमाणेन कर्तव्यः पावसंज्ञकः ।
ताररन्ध्रप्रमाणेन मुखरन्ध्रं प्रकल्पयन् ॥
ग्रन्थिस्तत्र न भेत्तव्यो मुखरन्ध्राय धीमता ।
स्वल्पध्वनिविशिष्टोऽयं पावः कर्णसुखावहः ॥

सोमेश्वरः

वेणूद्भवो भवेत्पावो वङ्कपत्रैः परिष्कृतः ।
नवाङ्गरागो लोवरीति नाम्ना लोकेषु कीर्त्यते ॥

कुम्भः

लोचरीति केषुचिदादर्शेषु दृश्यते ।

## पावकरागध्यानम्

गोपालवेष एषः क्वणयन् वेणुं सदा मुदाक्रीडन् ।
चित्राङ्गरागविभवः पावकरागोऽसितो ललितः ॥

सोमनाथः

## पावनी—प्रबन्धाङ्गम्

अङ्गत्रयेणैव तु पावनी च,

रघुनाथः

इयं कविताख्येति गद्यपद्यचम्पूभेदादुक्तमन्यैः ।

## —मेलकर्ता

स रि ग ० ० ० म प ० ध नि ० स .

मज

## पाविका—सुषिरवाद्यम्

कनिष्ठिकापरीणाहगर्भरन्ध्रेण संयुता ।
द्वादशाङ्गुलिदीर्घा स्यात्पाविका वेणुसंभवा ॥
अङ्गुष्ठस्थौल्यसम्पन्ना तत्रैकं रन्ध्रमिष्यते ।
फूत्कारहेतुकं पञ्चरन्ध्राण्यन्यानि कल्पयेत् ॥
स्वरनिष्पत्तिसिध्द्यर्थं तानि लोकानुसारतः ।
वादनं क्रियते तस्यास्तारनादसमाश्रयम् ।
यक्षनागग्रहावेशविधायकमनेकधा ॥

कुम्भः

## पावी—सुषिरवाद्यम्

वितस्तिमात्रिका पावी स्थौल्येनाङ्गुष्ठमात्रिका ।
वैणवी सा प्रकर्तव्या कनिष्ठाग्रप्रवेशिनी ॥
मुखरन्ध्रं भवेदेकं स्वरार्थं रन्ध्रपञ्चकम् ।
वक्षोदेशे वाहनीया नादेनोच्चतरा हि सा ॥

सोमेश्वरः

## पाशहस्तः

सूच्या निकुञ्चिते श्लिष्टे तर्जन्यौ पाश ईरितः ।
पुरोभागे त्वयं हस्तः कलहे शृङ्खलार्थके ।
पाशे च रौद्रभावे च प्रतिबन्धे नियुज्यते ॥

विनायकः

## पिकप्रियः—देशीतालः

पिकेष्टो गलपः प्रोक्तः ।        ऽ । ऽ̐        मदनः

## पिच्छोला—मुखवाद्यविशेषः

लक्षणं मृग्यम्

## पिनाकम्—करणम्

देहं चापवदानम्य पुनश्चोन्नम्यते यदा ।
पाणिक्रियानुगं यत्र पिनाकं करणं तु तत् ॥

हरिपालः

## पिनाकी—वीणा

दण्डः पिनाक्यां धनुषः सपञ्चाङ्गुलसम्मितः ।
सार्धहस्तो भवेद्दैर्घ्ये स्यात्सपादाङ्गुलद्वयम् ॥
मध्यविस्तारतस्तस्मिन् शिखाते स्यादधस्तलीम् ।
आयामेऽङ्गुलिमानेन सपादाङ्गुलिसंमिता ॥
अस्मिन्नूर्ध्वा शिखा प्रोक्ता सपादाङ्गुलिपिण्डकौ ।
कर्तव्यौ कटकौ स्यातां दैर्घ्ये चाङ्गुलसंमितौ ॥
पादोनाङ्गुलमानौ वा संलग्नौ निकटे तयोः ।
तुम्बके चरणन्यूनाङ्गुलद्वन्द्वमुपान्तयोः ॥
विस्तारधनुषो मानं बध्नीयाच्छिखयोर्गुणम् ।
कोणोऽन्यो वादनाय स्यादङ्गुलान्येकविंशतिः ॥
पादोनमङ्गुलं मानमायामे तच्छिखाद्वयम् ।
त्यक्त्वा शिखाद्वयस्यान्ते तृतीयांशो न मङ्गुलम् (?) ॥
मुष्टिरस्य भवेत्सोऽथ विस्तारे त्र्यङ्गुलो भवेत् ।
अश्ववालधिकेशोत्थो गुणः योणस्य कल्प्यते ॥
पद्भ्यामाक्रम्यते तुम्बं भुवि न्यस्तमधोमुखम् ।
स्कन्धस्योर्ध्वा पिनाकी या तच्छिखा तत्र संश्रिता ॥

तुम्बमूर्ध्वमुखं वामहस्तेनाक्रम्य तद्गुणम् ।
दक्षहस्तश्च धनुषो रालासंलिप्तयाज्यया ॥
वादयेन्निपुणश्चास्यां स्वरस्थानानि कल्पयेत् ।
एकतन्त्रीवदधराधारतारयुता बुधः ।
पिनाकीलक्षणं प्रोक्तं पिताकिपदसेविना ॥

कुम्भः

पिनाकी वीरप्रमुखं निष्कलं वाद्यमीर्यते ।
पिनाकवीणाया यात्र कर्तव्या वस्तु काण्डतः॥
चतुर्दशभिरेवैतत् मुष्टिभिः प्रमितं भवेत् ।
मौर्वीविद्धं नयेदस्मिंस्तन्त्रीं स्नायुमयीं पुनः ॥
पञ्चमुष्टिप्रमाणेन सव्येतरकराश्रिता ।
सितगुग्गुलुचूर्णाक्तवाजिवालगुणेन च ॥
वादयेत्कार्मुकेनैव वामहस्तेन तत्परम् ।
सतालं तुम्बमादाय दक्षिणां संनिधापयेत् ॥
भूमौ निवेशयेत् तुम्बं स्थापयेद्दटिनीं ततः ।
अग्रभागममुष्यैव वामस्कंधेन धारयेत् ॥
अधोदेशे सुसंबद्धा रज्जुबाणासनस्य तु ।
वामेतरपदाङ्गुष्ठवेष्टनेन दृढा भवेत् ॥
क्रमेणानेन धनुषोऽशैथिल्यमुपजायते ।
एवं पिनाकवीणायाः स्वरूपं समुदीरितम्॥

हरिपालः

**पिशाचशीला—स्त्री**

मानाधिकाङ्गुलिः क्रूरा रात्रौ निष्कुटचारिणी।
वालोद्वेजनशीला च पिशुना क्लिष्टभाषिणी ॥
सुरते कुत्सिताचारा रोमशाङ्गी महास्तना ।
पिशाचसत्त्वा विज्ञेया मद्यमांसबलिप्रिया॥

भरतः

**पिहितौ—पुटौ**

पिहितावतिसंलग्नौ पुटौ स्यातां दृशां रुजे ।
सुप्तमूर्छितहर्षोष्णधूमवाताञ्जनार्तिषु ॥

कुम्भः

**पिञ्जरी—रागः**

धांशग्रहे निधनमध्यमरावरम्या
षड्जर्षभेण रहिता लघुसप्तमा च ।
तारास्पदस्फुरितपञ्चमका च नित्य-
मान्दोलितारव्यगमकेन मनोहरा च ।
मूर्छायां शुद्धगान्धार्या तानेन गमकेन च ।
गीतविद्भिस्समाख्याता पिञ्जरी लोकरञ्जनी ॥

नान्यः

धैवतांशा मध्यमान्ता षड्जर्षभविवर्जिता ।
निषादाल्पा च विज्ञेया पिञ्जरी तारपञ्चमी ॥

मतङ्गः

—भाषारागः

षड्जन्यासांशगान्धारा निषादेन विवर्जिता ।
हिन्दोलसंभवा भाषा पिञ्जरी सम्प्रगीयते ॥

मद्दमाधवः

**पिण्डहस्तः—हस्तपाटः**

रेफेण चोर्ध्वहस्तेन क्रमात्स्यात्पिण्डहस्तकः ।
धकड धककड झें झें झें वेमः

**पिण्डीपत्रम्**

देवपार्थिवशिरोभूषणे बलसन्धानतया चित्ररचनानि वर्तुलानि पत्राणि पिण्डीपत्राणीत्युच्यन्ते ।

**पिल्लमूरू—देशीनृत्तम्**

गीततालानुगो यत्र नानावाद्यविनिर्मितः।
अल्पो यत्रशब्दखण्डो हि थां तोधि दिगणान्तकः॥
पिल्लमूरू वेदः

**पिशाचहस्तः**

विरलाङ्गुलिकाः कुर्यात्पताकस्य पिशाचके ।
मानभेदे पिशाचेषु ताडनेविनियुज्यते ॥

गौरीमतम्

**पिष्टकुट्टम्—मण्डलम्**

कुरुते दक्षिणस्सूचीमपक्रान्तां तथेतरः ।
ततो तक्षिणवामाङ्घ्रीं भुजङ्गत्रासितां मुहुः ॥
पर्यायेणैव कुरुतः तथान्ते मण्डलक्रमम् ।
यत्र तत्पिष्टकुट्टाख्यं मण्डलं परिकीर्तितम् ॥

वेमः

**पीडनम्—दन्तः**

स्फोटने क्रमुकादीनां कोपे च परिकीर्तितम् ।

ज्यायनः

**पुटम्—द्वादशाक्षरवृत्तम्**

ननमयाः भरतः

**पुटपरिकर्म—(अवनद्धम्)**

द्विहायनस्य वत्सस्य चर्मणा कारयेत्पुटम् ।
वृद्धस्य वृषभस्यापि वध्रं कुर्याच्च चर्मणा ॥
पुटकुण्डलिकां काष्ठैः रथचक्रैश्च कारयेत्।
प्रयुक्तैश्च प्रमाणेन भाण्डेषु पणवादिषु ॥

कुर्याद्धस्तिपुटोत्थेन चर्मणा छादनं सदा।
सम्मार्जितामिस्तन्त्रीमिः दृढामिश्च पुटद्वयम् ॥
कुर्याच्चैवार्द्रनहनं पणवादिषु सर्वदा।
पणवस्य हुडुक्कस्य कीलकाश्च दशाङ्गुलाः ॥

चतस्रो यन्त्रकाख्यास्तु शृङ्गैर्दन्तैश्च दारुभिः।
उहलीमुखमेकं च पृथक्कद्विपुटं विदुः ॥

तद्बन्धाश्चैव तन्त्रीभिः कर्तव्या वाद्यवेदिभिः।
पणवे च हुडुक्के च स्कन्धारोपणरज्जवः।
स्युर्मौर्वीसस्यकार्पासतन्तुबद्धादिभिर्दृढा ॥

आलिङ्ग्यकोर्ध्वकाद्येषु चान्येषूहलिकादिषु।
चर्मकाञ्चनरूपाढ्यं कार्या मण्ढलिका सदा ॥
उहल्यां पुष्पिकाः कार्या दन्तधातूद्भवास्तथा।
शृङ्गकाञ्चनरूपाद्यैरन्यैरपि मनीषिभिः।
एवं स्याद्वाद्यभाण्डानां सिद्धिश्शास्त्रनिदर्शनात् ॥

नान्यः

**पुटमयूरः**—मेलरागः (खरहरप्रियमेलजन्यः)
(आ) स ग रि ग म नि ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**पुटौ**
समौ च प्रसृतौ चैव कुञ्चितौ च निमेषितौ।
उन्मेषितौ च स्फुरितौ पिहितौ च विवर्तितौ।
विताडितौ चेति पुटौ नवधा कथितौ बुधैः ॥

वेमः

**पुनर्भूमण्ठकः**—देशीतालः
सचतुर्लघुनिश्शब्दं पुनर्भूमण्ठको भवेत्।
॥ ऽ ॥॥

दामोदरः

**पुनर्वसुहस्तः**
मध्यमातर्जनी स्यातां स्वमूले कुञ्चिताकृती।
लीनमुद्राकरस्सोयं दृश्यतेऽत्र पुनर्वसू ॥

श्रृङ्गारः

**पुनर्वस्वभिनयः**
लीनमुद्राहस्तेन कर्तव्यः।

महाराष्ट्र

**पुरःक्षेपा**—देशीचारी
कुञ्चितं पादमुत्क्षिप्य प्रसार्य पुरतो जवात्।
स्वस्थाने स्थापयेद्यत्र पुरःक्षेपा भवेदियम् ॥

वेमः

**पुरःक्षेपनिकुट्टिता**—मुडुपचारी
चरणः कुट्टितः पूर्वं पुरतोऽङ्गुलिपृष्ठतः।
स्थापितः कुट्टितः स्थाने पुरःक्षेपनिकुट्टिता ॥

अशोकः

**पुरःपश्चात्सरा**—मुडुपचारी
केतनादौ निकुट्याथ पुरःपश्चान्निवेशिनः।
अङ्घ्रिरङ्गुलिपृष्ठेन स्वस्थाने कुट्टितो यथा।
पुरःपश्चात्सरा चारी तदान्वर्थनिरूपिता ॥

अशोकः

**पुरःपश्चान्नतम्**—करणम्
पुरः प्रसारितौ हस्तावलपद्मौ नतं वपुः।
पादः प्रसारितः पृष्ठे हस्तौ पृष्ठे प्रसारितौ।
पादोऽपि पुरतः क्षिप्तः पुरःपश्चान्नतं तु तत् ॥

वेलणः

**पुरगमणिः**—मेलरागः (खरहरप्रियामेलजन्यः)
(आ) स रि ग म प ध नि स.
(अव) स नि ध नि प म ग म रि स.

मञ्ज

**पुरस्ताल्लुठिता**—मुडुपचारी
पुरस्ताल्लुठिता सा स्याद्यत्राङ्घ्रिर्लुठितः पुरः।
सेति पृष्ठलुठिता।

**पुराटिका**—पादपाटः
उद्वृत्ताङ्घ्र्योर्मिथो यत्र ताडनं सा पुराटिका।

वेमः

**पुरानगः**—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि ग रि म प नि ध नि प ध नि स.
(अव) स नि ध ग रि स.

मञ्ज

**पुरुषभेदः**—तानः
षड्जग्रामे सपहीनौडुवः।
ध म ग रि नि

कुम्भः

**पुरुहूतिकं**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स म प ध नि स.
(अव) स नि ध प म स.

मञ्ज

**पुरोदण्डभ्रमणिकम्—चालकः**

एकस्तु मुष्टितां नीतस्तिरश्चीनतया धृतः ।
अन्यस्तस्य वहिर्भ्रान्तर्लीलया विलुठन् करः ॥
पुरःप्रसारितः पाण्योरेवं पर्यायययोजनात् ।
पुरोदण्डभ्रमणकं तदाहुर्नृत्तवेदिनः ॥

वेमः

**पुलस्त्यः—मेलरागः ( कामवर्धिनीमेलजन्यः )**

(आ) स म प ध नि स .
(अव) स नि ध म ग रि स .

मञ्ज

**पुलिन्दः—देशीतालः**

पुलिन्दे स्याद्विरामान्तं द्रुतद्वन्द्वं लघुस्तथा ।
चतुर्वारंलपावन्ते ।
० ऽ । ० ऽ । ० ऽ । ० ऽ । । ऽ

लक्ष्मणः

**पुलिन्दी—रागः**

धैवतषड्जावृषभकधौवतकौ यत्र संयदत्तः ।
मापन्यासा षट्जांशा धन्यासा च पुलिन्दिका रुचिरा ॥

नान्यः

षड्जांशा धैवतन्यासा न च गान्धारपञ्चमौ ।
सधयोरिधयोर्यत्र संवादस्स्यात्पुलिन्दिका ॥

मतङ्गः

षड्जांशधैवतन्यासा त्यक्तगान्धारपञ्चमा ।
सधयोरिधयोर्यत्र संवादः परिदृश्यते ।
भिन्नषड्जभवा सेयं पुलिन्द्यन्तरभापिका ॥

जगदेकः

अनन्तरं पुलिन्दी स्याद्भिन्नषड्जसमुद्भवा ।
षड्जांशा धैवतन्यासा हीनगान्धारपञ्चमा ॥
धैवतर्पभयोस्तद्वत् षड्जधैवतयोरपि ।
संवादयुक्ता सैवेयं भवेदन्तरभापिका ॥

अहोबिलः

षड्जांशा गपहीना स्याद्धैवतान्ता पुलिन्दिका ।
संयोगस्सधयोरस्यां पुलिन्दैः परिगीयते ॥

मोक्षः

**पुञ्चितम्—हस्तप्राणः**

पुरोभागे कुञ्चितो वा रेचितो वा प्रसारितः ।
यो हस्तस्तु पताकाख्यो नाम्नासौ पुञ्चितो भवेत् ॥

शृङ्गारः

**पुञ्जावलिः—मेलरागः (धीरशङ्कराभरणमेलजन्यः )**

(आ) स म ग रि म प नि ध नि स .
(अव) स नि ध म ग रि स .

मञ्ज

**पुण्डरीकः—तानः**

(षाडवः — षड्जलोपः)

ग रि नि ध प म

कुम्भः

**पुष्करम्—भाण्डवाद्यम्**

पुष्करप्रभवं यस्मादासीद्वाद्यमिदं पुरा ।
अतस्तु वाद्यभाण्डानि पुष्कराणि प्रचक्षते ॥

नान्यः

**पुष्करवाद्यप्राधान्यम्**

आतोद्यं पुष्करं चैव श्रेष्ठं तौर्यत्रिकं विदुः ।
सर्वप्रयोगमुख्यत्वादस्य नन्दिमतं यथा ॥
न पुष्करविहीनं हि नाट्यं नृत्तं विराजते ।
तत्रैव हि श्रुतौ लोके तन्मुखं प्रतिपद्यते ॥

नान्यः

**पुष्करवाद्यपूजा**

तदेवं सिद्धमालिङ्ग्यमूर्ध्वकं चाङ्किकं तथा ।
संस्थाप्य मण्डलेष्वेषां देवताः पूजयेत्ततः ॥
पुष्पोपहारधूपैश्च वलिभिर्विधिवत्कृतैः ।
नाम्ना चामन्त्रयेच्चैवमाचार्यः प्राङ्मुखश्शुचिः ॥
ध्वनयः कल्पिता येषामम्वोदाभा अमीषु च ।
नानावाद्यैश्च पुष्पैश्च बलिधूपैश्च पूजयेत् ॥
पूजाविधानमेतेषां त्रयाणां भरतो मुनिः ।
स्वशास्त्रे विस्तरं प्राह यथावच्चापि तद्यथा ॥
बध्वाह्येतेन विधिना त्वाङ्किकालिङ्ग्यकोर्ध्वकान् ।
देवताभ्यर्चनं कृत्वा ततः स्थाप्या महीतले ॥
चित्रायामथवा हस्ते शुक्लपक्षे शुभेऽहनि ।
उपाध्यायश्शुचिर्विद्वान् कुलीनो रोगवर्जितः ॥
मतिमान्गीतितत्त्वज्ञो मधुरोऽविकलेन्द्रियः ।
सोपवासोऽल्पकेशश्च शुक्लवासा दृढव्रतः ॥
मण्डलत्रयमालिप्य गोमयेन सुगन्धिना ।
ब्रह्माणं शङ्करं विष्णुं त्रिषु तेषु प्रकल्पयेत् ॥
आलिङ्ग्यं स्थापयेत्पूर्वं ब्रह्माणं पूर्वमण्डले ।
ऊर्ध्वकं तु द्वितीयेऽस्मिन्रुद्रनाम्नि निधापयेत् ॥
तिर्यगुत्सङ्गिकं सम्यग्वैष्णवे मण्डले क्षिपेत् ।
बलिपुष्पोपहारैस्तु पूजयेत्पुष्करत्रयम् ॥
पायसं घृतमध्वक्तं चन्दनं कुसुमानि च ।
शुक्लानि चैव वासांसि दत्त्वालिङ्ग्ये स्वयंभुवः ॥

त्र्यम्बकाय प्रदातव्यः सगणायोर्ध्वके बलिः ।
स्वस्तिकैर्लाजिकापुष्परूपपिण्डाष्टकैस्सह ॥

वैष्णवे मण्डले स्थाप्यः सर्वबीजहितोऽङ्किकः ।
स्रग्वस्त्रालेपनैः प्रीतः चरुभिश्च सपायसैः ॥

वज्रेक्षणश्शङ्कुकर्णो ग्रहश्चापि तथा महान् ।
एतास्तु देवता विप्राः पुष्करेषु प्रकीर्तिताः ॥

सृष्ट्वा मृदङ्गान्पणवं दर्दरं च महामुनिः ।
मेघैश्च स्वरसंयोगं मृदङ्गानामथासृजत् ॥

विद्युज्जिह्वो भवेद्वामे मेघस्स तु महास्वनः ।
ऐरावतो महामेघः तथा चैवोर्ध्वके भवेत् ॥

आलिङ्ग्यके तटिद्वांश्च नाम्ना चैव वलाहकः ।
दक्षिणे पुष्कलो मेघः पुष्कलो वामयोजितः ॥

मृदङ्गानां तु नामानि ऊर्ध्वके नन्द्यथोच्यते ।
आङ्किकस्सिद्धिरित्येवालिङ्ग्यकश्चैव पिङ्गलः । इति ॥

एवमुत्पाद्य विधिना वाद्यभाण्डानि शास्त्रवत् ।
चतुर्धा सन्निवेशेन स्थापयेद्वादनाविधौ ॥

ऊर्ध्वं तिर्यगथाङ्के च पार्श्वे च विनिवेशनम् ।
पञ्चानां वाद्यभाण्डानां नान्यदेवोऽनुमन्यते ॥

नान्यः

## पुष्करवाद्योत्पत्तिः

अवनद्धगतस्यापि तस्य वक्ष्यामि लक्षणम् ।
यथोक्तं मुनिभिः पूर्वं स्वातिनारदपुष्करैः ॥

सर्वलक्षणसंयुक्तं सर्वातोद्यविभूषितम् ।
मृदङ्गानां समासेन लक्षणं पणवस्य च ॥

दर्दरस्य च सङ्क्षेपाद्विधानं वाद्यमेव च ।
अनध्याये कदाचित्तु स्वातिर्महति दुर्दिने ॥

जलाशयं जगामाथ सलिलानयनं प्रति ।
तस्मिञ्जलाशये यावत्प्रतिष्ठः पाकशासनः ॥

धारासिर्महतीभिस्तु पूरयन्निव मेदिनीम् ।
पतन्तीभिश्च धाराभिः वायुवेगाज्जलाशये ॥

पुष्करिण्यां पटुश्शब्दः पत्राणामभवत्तदा ।
तेषां धारोद्भवं नादं निशम्य स महामुनिः ॥

आश्चर्यमिति मन्वानश्चावधारितवान्स्वनम् ।
ज्येष्ठमध्यकनिष्ठानां पत्राणामवधार्य च ॥

गम्भीरमधुरं हृद्यमाजगामाश्रमं ततः ।
ध्यात्वा सृष्टिं मृदङ्गानां पुष्करानसृजत्ततः ॥

पणवं दर्दरंचैव सहितो विश्वकर्मणा ।
देवानां दुन्दुभिं दृष्ट्वा चकार मुरजांस्ततः ॥

आलिङ्ग्यमूर्ध्वकं चैव तथैवाङ्किकमेव च ।
चर्मणा चावनद्धांस्तु मृदङ्गान्दर्दरं तथा ॥

तन्त्रीभिः पणवं चैवमूहापोहविशारदः ।
स्वयं चान्यानपि तथा कांस्यायसकृतान्यथ ॥

झल्लरीपटहादीनि चर्मनद्धानि तानि च ।
आतोद्यसमवाये तु यानि योज्यानि वादकैः ॥

भरतः

## पुष्करवाद्यमानमाकृतीश्च

अधुनाऽऽकृतिरेतेषां यथा मुनिभिरीरिता ।
परिमाणं च सर्वेषामातोद्यानां प्रचक्ष्महे ॥

हरीतकीयत्वग्गर्भा गोपुच्छा च तथापरा ।
समा पिपीलिका कुम्भा हरीतक्यर्धसंज्ञिता ॥

सप्तैवाऽऽकृतयस्त्वेताः विज्ञेया वाद्यवेदिभिः ।
सर्वेषां वाद्यभाण्डानां मार्गाणां मार्गदेशिना ॥

हरीतक्याकृतिं विद्याद्वाद्यमाङ्किकपुष्करम् ।
सार्धत्रितालमानं तन्मुखं चतुर्दशाङ्गुलम् ॥

जपाकृतिं विजानीयादूर्ध्वकं मध्यपुष्करम् ।
चतुस्तालेस्थितं वक्त्रे द्वादशाङ्गुलसम्मितम् ॥

गोपुच्छाकृतिरेवं स्यादालिङ्ग्यश्चापि पुष्करः ।
तालत्रितयमानश्च मुखेऽष्टाङ्गुलमानवान् ॥

एवमाकृतिमानाभ्यां जानीयात्पुष्करत्रयम् ।
पिपीलिकाकृतिं वापि प्रमाणं मध्यभागतः ॥

षोडशाङ्गुलदीर्घं च पणवं मुनयो विदुः ।
हीनमध्येऽङ्गुलान्यष्टौ पञ्चाङ्गुलमुखस्तथा ॥

तस्य छिद्रं तु मध्ये स्याच्चतुरङ्गुलसम्मितम् ।
सार्धाङ्गुलाष्टं च तथा मण्डलेन चतुर्दश ॥

विज्ञेयान्यङ्गुलान्येवं विधिः स्यात्पणवाश्रयः ।
विद्यते च घटाकारं वाद्यभाण्डं च दर्दरम् ॥

नवाङ्गुलमुखं चापि विस्तारे द्वादशाङ्गुलम् ।
द्विमुखं पीवरोष्ठं च वर्तुलं विपुलध्वनि ॥
पञ्चातोद्यानि चैतानि भरतोप्याह,

नान्यः

## पुष्कला—श्रुतिः

मन्द्रगान्धारप्रथमा श्रुतिः । मण्डली

पुन्नागरागध्यानम्

कान्ताद्वयेनाह्वियुगं वहन्तं
गजाधिरूढं कवचायुधाश्रितम्।
केलीसरस्तीरवनान्तवासिनं
पुन्नागरागं मनसा स्मरामि॥

रागसागरः

पुन्नागतोडी—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) नि ध नि स रि ग म प ध नि.
(अव) ध प म ग रि स नि ध नि स.

मञ्ज

पुन्नागललिता—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स म ग म प ध नि स.
(अव) स नि प म ग म ग रि स.

मञ्ज

पुन्नागवराटी—मेलरागः

पुन्नागाख्यवराट्यां तु निषादस्तीव्रसंज्ञकः।
यस्तु तीव्रतरः प्रोक्तो गधावुद्ग्राहकौ स्मृतौ॥
द्वितीयप्रहरोत्तरगेया।

अहोबिलः

पुन्नागवराली—मेलरागः

तोडिमेलजोऽयं रागः
पुन्नागाख्यवराल्यां तु षड्जधैवतयोः पुनः।
स्थायिभेदो भवेत्। परमेश्वरः

—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) नि स रि ग म प ध नि.
(अव) ध प म ग रि स नि.

मञ्ज

पुन्नाटकः—रागः

षड्जादिः स्वरसंपूर्णः स्वस्थाने चैव कम्पितः।
मध्यमः स्फुरितो नित्यं रागः पुन्नाटकः स्मृतः॥

सोमेश्वरः

पुन्नाटः—रागः

काश्यपस्य मते भिन्नषड्जोत्थो धैवतांशभाक्।
पूर्णाटो मध्यमन्यासो दैन्ये पञ्चस्वरान्वितः॥

जगदेकः

पुष्करकरणा—पुष्करवाद्ये जातिः

स्वस्तिकहस्तविचारा सर्वमृदङ्गप्रहारसंयुक्ता।
सा त्रिलयवाद्ययुक्ता पुष्करकरणा भवेज्जातिः॥

अभिनवगुप्तपाठः

एषा प्राचीनैर्दुष्करकरणेत्युक्ता। भरतः

पुष्करवाद्याक्षराणि—षोडश

कखगघ टठडढ तथदध मरलः इति षोडशाक्षराणीह।
नियतं पुष्करवाद्ये बाह्यकरणैस्संविधेयानि॥

भरतः

पुष्करवाद्ये करणानि—षट्

रूपं, कृतप्रतिकृतं, प्रतिभेदः, रूपशेषः, ओघः, प्रतिशुष्का.

भरतः

पुष्करवाद्ये मार्गाः

आलिप्तः अङ्कितः गोमुखः वितस्तः। भरतः

पुष्करवाद्ययतयस्तिस्रः

समा स्रोतोगता गोपुच्छा। भरतः

पुष्टिकृत्—तानः

षड्जग्रामे रिपहीनौडुवः।
म ग स नि ध कुम्भः

पुष्पम्—व्यञ्जनधातुः

निहन्यते यदा तन्त्रीरेककालं कनिष्ठया।
सहाङ्गुष्ठयुगेन स्याद्धातुः पुष्पाभिधस्तथा॥

कुम्भः

समकालमेकतन्त्र्यां प्रहारद्वितयेन तु।
अङ्गुष्ठाभ्यां कनीयस्या यत्र पुष्पं प्रचक्षते॥

नान्यः

—धातुः

अङ्गुष्ठाभ्यां कनीयस्या स्तन्त्रीरेका निहन्यते।
युगपद्यत्र तत्पुष्पमभिलेखुः पुरातनाः॥

शार्ङ्गः

—प्रतिमुखसन्ध्यङ्गम्

पूर्वं स्वयमन्येन वा केनचित् प्रयुक्तं वचनमपेक्ष्य यद्विशेषयुक्तं वचनमपेक्ष्यते तेनान्येन वा तत्पूर्वस्मात् विशेषवत्। तच्च वाक्यं पुष्पम्। केशरचनायाः पुष्पमिव पूर्ववाक्यस्यालङ्कारकारित्वात्। यथा—विलक्षदुर्योधने भीष्मवाक्यं यावन्तो वयमाहवप्रणयिनः तावन्त एवार्जुनाः, इति।

रामचन्द्रः

पुष्पं स्याद्वागुदारता। सर्वेश्वरः

विशेषवचनं यत्तत्पुष्पम्। भरतः

यथा—रत्नावल्यां एष कोऽपि चित्रफलकः-इति विदूषकोक्तिप्रभृतिपरिच्युत इति राजवाक्यपर्यन्तम्।

अभिनवः

विशेषवचनं पुष्पं। क्रियायामन्यत्र क्रियायामितरक्रियाधिक्यं विशेषवचनं पुष्पम्। यथा—जानकीराघवे सीतामाश्वास्यमानं वचनं "मा भैषीरित्यादि"।

सागरः

**पुष्पग्रहणहस्तः**

करपृष्ठौ तु संश्लिष्टौ श्लिष्टाङ्गुल्यः प्रसारिताः।
ततस्तिर्यङ्मुखे कृत्वा तर्जनीश्लेषपूर्वकम् ॥
प्रसारिता यदि तदा पुष्पग्रहणहस्तकः।
देवतानां शिरोभागपुष्पग्रहणदर्शने ॥

विनायकः

**पुष्पपुटः—हस्तः**

सर्पशीर्षौ मिलद्बाह्यपार्श्वः पुष्पपुटो भवेत्।
धान्यपुष्पफलादीनामपां च ग्रहणेऽर्पणे।
कार्यः पुष्पाञ्जलौ चैष प्रोक्तः सोढलसूनुना ॥

शार्ङ्गः

व्यक्तं संश्लिष्टकरभावुत्तानौ सर्पशीर्षकौ।
हस्तः पुष्पपुटो नाम पुष्पाञ्जलिविसर्जने ॥
धान्यपुष्पफलादीनां ग्रहणे देवतार्पणे।
अर्घदाने गुरुनृपप्रसादग्रहणे तथा।
पाणिपात्राशने तोयानयने च प्रकीर्तितः ॥

विप्रदासः

**पुष्पपुटवर्तना**

परिवृत्या पुष्पपुटः करः पार्श्वे व्रजेद्यदि।
ततो वक्षस्थलं प्राप्तो व्यावृत्या नेत्रसुन्दरः।
तदा धीरैः पुष्पपुटवर्तना समुदाहृता ॥

अशोकः

**पुष्पबाणः—देशीतालः**

पुष्पबाणे रसाब्धिद्रौ (?) ऽ। ऽ।। ऽ।।

[illegible]

**पुष्पमनोहरी—मेलरागः (कीरवाणीमेलजन्यः)**

(आ) स म ग प नि ध स.
(अव) स नि ध प म ग रि स.

मज

**पुष्पललिता—मेलरागः (कामवर्धिनीमेलजन्यः)**

(आ) स ग म ध नि स.
(अव) स ध म रि स.

मज

**पुष्पवद्धस्तः**

आदौ तु यामिनीं बध्वा मुखे चार्धपताककः।
पुष्पवन्ताख्यहस्तोऽयं प्रोच्यते भरतादिभिः।
पुष्पवन्तःपुरोभागे पुष्पिण्यां संप्रयोजयेत् ॥

विनायकः

**पुष्पवसन्तः—मेलरागः (रत्नाङ्गीमेलजन्यः)**

(आ) स ग म प ध नि — स.
(अव) स नि ध म ग रि — स.

मज

**पुष्पविवृद्धा—ध्रुवावृत्तम्**

आद्यचतुर्थं पञ्चमषष्ठं नवममथ च निधनगतं
ये च ततोऽन्ये येषु लघुत्वं यदि भवति चरणगतिविधौ ॥
सा निकृतिस्स्यात्पुष्पविवृद्धा द्विजगणमुनिगणपरिपठिता
भीमणिणादो चण्डपवाही विअरदि वरतणुसुहपवणो।
[भीमनिनादश्चण्डप्रवाही विचरति वरतनु सुखपवनः] ॥

भरतः

**पुष्पाञ्जलिः—हस्तः**

प्रणतोन्मुखकोदण्डसमानमुकुलाकृतिः।
श्लिष्टाङ्गुलिकरद्वन्द्वं पुष्पाञ्जलिरिति स्मृतम् ॥

उमा

**पुष्पापचयः—संगीतशृङ्गाराङ्गम्**

कामिनामन्योन्यानुरागहेतुः कुसुमपल्लवादिग्रहणे विभ्रमः पुष्पापचयः।

भोजः

**पुष्पाङ्कः—तानः**

गान्धारग्रामे नारदीयतानः।
प नि रि ग ध

नान्यः

**पुष्पहस्तः**

अङ्गुष्ठतर्जन्यौ चापि कनिष्ठा च यथाक्रमम्।
प्रसृताः स्युः प्रचालिताः शेषे द्वे कुञ्चिते तले।
[illegible] पुष्पार्थे संप्रयुज्यते ॥

[illegible]

**पुष्पा[illegible]**

[illegible]

[illegible]

**पुस्तः**

शैलयानविमानानि चर्मवर्मध्वजा नगाः।
ये क्रियन्ते हि नाट्ये तु स पुस्त इति संज्ञितः ॥

पुस्तस्तु त्रिविधो ज्ञेयो नानारूपप्रमाणतः ।
सन्धिमो व्याजिमश्चैव वेष्टिमश्च प्रकीर्तितः ॥

भरतः

पूगीविदारणकला—कला

तत्र पूर्वरचनिका—

यदि नोऽभिघन हानिरतिभिन्ने द्वदो भयम्।
सन्देहदिग्धहृदया कुर्यात्पूगीविदारणम् ॥

धृत्वा भूमौ करौ या चरणयुगमपि प्राक् प्रकण्र्यान्तमूलं
कुर्यात्पश्चात्प्रदेशोन्नमितगतिलघुर्न्यस्य कट्टारिकाग्रे ।
पूगीं चाथोभिनत्तिद्युमगतनुलता वक्षसा यत्र सोक्ता
वक्षः पूग्यङ्गभेत्त्रीत्यमितगुणकला नागमल्लक्षितीशैः ॥

नागमल्लः

पूरिका—मृदङ्गवामे पुटे देयं वस्तु
भक्तं चिपिटक लाजानाम्। तेषामन्यतमेन जलमिश्रं भस्म।

नारायणः

पूर्णम्—उदरम्

स्थूलरूपं भवेत्पूर्णं तुन्दिले श्वसिते तथा ।
जलोदराभिधे व्याधौ विनियोगोऽस्य दृश्यते ॥

विप्रदासः

तुन्दिलाभिनये गर्भे तथाश्वासनिरोधने ।
जलोदरे चात्यशने पूर्णं जठरमिष्यते ॥

सोमेश्वरः

पूर्णः—कपोलः

कपोलावुन्नतौ पूर्णौ तौ गर्वोत्साहगोचरौ ।

विप्रदासः

—नाटकभेदः

पूर्णस्य नाटकस्यास्य मुखाद्याः पञ्च सन्धयः।
उदाहरणमेतस्य कल्यारावणमुच्यते ॥

शारदातनयः

पूर्णकङ्कालः—देशीतालः

द्राश्चत्वारो गलौ क्रमात्। ००००ऽ। वेमः

पूर्णकाम्भोजी—मेलरागः ( हरिकाम्भोजीमेलजन्यः )

(आ) स रि ग म प नि स.
(अव) स ध प म ग रि स.

मञ्ज

पूर्णचन्द्रः—देशीतालः

पूर्णचन्द्राभिधस्तालः स्थित्या चन्द्रवदाकृतिः ।
द्रुतमाने द्रुतो ज्ञेयो लघुभिस्त्रिशमात्रिकः ।
एको द्वौ च त्रयश्चैव चत्वारः पञ्चच क्रमात् ।
एवं च व्युत्क्रमेणैव द्रुताश्च लघवोऽथवा ॥

सुधा

पूर्णचन्द्रिका—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

(आ) स रि ग म प म ध नि स.
(अव) स नि प ध प म ग म रि स.

मञ्ज

—मेलरागः

(आ) स ० रि ० ग म ० प ० ० ० ० स.
(अव) स नि ० ० ० प ० म ० ० ० रि स.

मेललक्षणे

—मेलरागः (शङ्कराभरणमेलजरागः )

स्यात्पूर्णचन्द्रिकायां त्ववरोहे मेषकुञ्जरत्यागः।
(गनिलोपः) परमेश्वरः

पूर्णतालः—देशीतालः

एकाद्येकान्ततो वृद्धिह्रासाभ्यां क्रमतो द्रुतैः।
वीजपूराकृतिधरैः पञ्चविंशतिसंख्यकैः ।
पूर्णतालः समादिष्टः पूर्णविश्रम्भरावृता ॥

कुम्भः

पूर्णपञ्चमः—मेलरागः

(आ) स ० रि ० ग म ० ० ध ० ० नि स.
(अव) स नि ० ० ० म ० प ० ग रि ० स.

मेललक्षणे

पूर्णमालवी—मेलरागः (मायामालवगौलमेलजन्यः )

(आ) स रि ग प ध नि स.
(अव) स नि ध प म ग म रि स.

मञ्ज

पूर्णमालिनी—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि ग म नि ध नि प ध नि स.
(अव) स ध म ग रि स.

मञ्ज

पूर्णरागगानफलम्

आयुर्धर्मो यशः कीर्तिः वुद्धिसौख्यधनानि च।
राज्याभिवृद्धिः सन्तानः पूर्णरागेषु जायते ॥

नारायणः

पूर्णवासा—श्रुतिः

मध्यमस्य प्रथमा श्रुतिः । पाल्कुरिकि सोमः
अस्य मते मध्यमः त्रिश्रुतिरेव ।

**पूर्णश्यामला**—मेलरागः (षड्विधमार्गिणीमेलजन्यः)
(आ) स रि ग म प ध नि स.
(अव) स ध प म रि ग रि स.

मल्ल

**पूर्णषड्जं**—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि ग म प ध स.
(अव) प म ग रि स नि ध नि स.

मल्ल

**पूर्णषाडवः**—रागः
न्यासांशग्रहमध्यममधुरो......मध्यमाधारः।
मध्यमया सहजातो जात्या स्यात् रागषाडवः पूर्णः॥

नान्यः

मध्यमग्रामसंभूतो मध्यमांशान्त एव च।
विकारान्मध्यमाजातिसंभूतष्षाडवस्वरः॥

कश्यपः

**पूर्णा**—श्रुतिः
पञ्चमस्य प्रथमा श्रुतिः।

सुधा

—श्रुतिः
मध्यमस्य द्वितीया श्रुतिः। मण्डलीमते तारमध्यमस्यैव।

—मूर्छना
मूर्छनाभेदे द्रष्टव्यम्।

**पूर्णाटः**—रागः
निर्णीयतेऽथ पूर्णाटो भिन्नषड्जसमुद्भवः।
धैवतांशो भवेन्न्यासे मध्यमोऽयमितीरितः॥

हरिः

**पूर्णोदयः**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स रि म प ध स.
(अव) स रि प म रि ग रि स.

मल्ल

**पूर्वः**—देशीतालः
पूर्वताले द्रुतौ द्वन्द्वौ गद्वयं लद्वयं भवेत्। ० ० ऽ ऽ॥

लक्ष्मणः

**पूर्वकर्णिका**—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि ग म प ध नि प स.
(अव) स ध प म ग स.

मल्ल

**पूर्वगौडः**—रागः
पूर्वो गौडः परित्यक्तो नित्रयो रागसंभवः।

मदनः

—उपाङ्गराग
तारस्थनिग्रहान्तांशः सगयोः समयोर्युतः।
संगत्याः षड्जभूयिष्ठ ऋषभेण विसर्जितः।
पूर्वगौड इति ख्यातः पूर्वदेशजनप्रियः॥
देशवालगौडस्य नामान्तरम्।

कुम्भः

**पूर्वगौलः**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स रि ग म प नि ध नि प ध नि स.
(अव) स नि ध नि प म ग रि स.

मल्ल

**पूर्वगौलीरागध्यानम्**
व्याघ्रासनां मञ्जुलरत्नहारिणीं
पुण्ड्रेक्षुपाशाङ्कुशबाणधारिणीम्।
रक्ताम्बरां पीतसुवर्णकञ्चुकां
भजामि नित्यं वरपूर्वगौलिकाम्॥

रागसागरः

**पूर्वफल्गुनीहस्तः**
पूर्वफल्गुनी निदर्शने ताम्रचूडहस्तः।

शृङ्गारः

**पूर्वफल्गुन्यभिनयः**
हस्तयोस्ताम्रचूडेन कर्तव्यः।

महाराष्ट्रे

**पूर्वभाद्राभिनयः**
सङ्कीर्णपताकहस्तेन कर्तव्यः। महाराष्ट्रे

**पूर्वभाद्राहस्तः**
पताके मध्यमा वक्रा तलं सम्यक् स्पृशेद्यदि।
सङ्कीर्णाख्यपताकोऽयं पूर्वभाद्रार्थके भवेत्॥

शृङ्गारः

**पूर्वभावः**—निर्वहणसन्ध्यङ्गम्.
पूर्ववाक्यशब्दे द्रष्टव्यम्।

**पूर्वरङ्गः**
पूर्वरङ्गस्सभापूजा,

शुभङ्करः

**पूर्वरङ्गः**

यतो रसात्मकस्यास्य प्रयोगे प्रयुयुक्षिते।
रज्यते वै सहृदयैः पूर्वरङ्गस्ततः स्मृतः॥

स पादभागसकलः परिवर्तैस्समन्वितः।
प्रयोगोऽयं यतो रङ्गे पूर्वमेव प्रयुज्यते।
तेनोक्ता भरताचार्यप्रमुखैः पूर्वरङ्गता॥

रङ्गशब्देन तत्कर्मोच्यते तौर्यत्रिकाश्रितम्।
तत्पूर्वभागो विद्वद्भिः पूर्वरङ्ग उदीरितः॥

सोपोहनास्तद्विना वा ध्रुवा उत्थापनीमुखाः।
सूत्रधारप्रवेशार्था यतोऽस्मिन्पूर्वमेव हि॥

प्रयुज्यते ततः पूर्व रङ्गतावास्य सम्मता।
चतुरश्रत्र्यश्रभेदाद्विविधस्स पुनर्द्विधा॥

शुद्धचित्रविभेदेन पृथगेवं चतुर्विधः।
करणाङ्गहाररहित्यशुद्धताचित्रता पुनः॥

तत्तद्भावोऽथ चित्राद्यैः मार्गैर्भिन्नध्रुवायुतः।
चतुरश्रस्तथा त्र्यश्रः षड्विधः कैश्चिदिष्यते।
केषांचन मते मिश्रो द्वयं सम्मिश्रणान्मिथः॥

कुम्भः

**पूर्वरङ्गाङ्गानि**

अस्याङ्गानि तु कार्याणि यथावदनुपूर्वशः।
तन्त्रीभाण्डसमायोगैः पाठ्ययोगकृतैस्तथा॥

प्रत्याहारोऽवतरणं तथा ह्यारम्भ एव च।
आश्रावणा वक्त्रपाणिः तथा च परिघट्टना॥

सङ्घोटना ततः कार्या मार्गासारितमेव च।
ज्येष्ठमध्यकनिष्ठानि तथैवासारितानि च॥

एतानि तु बहिर्गीतान्यन्तर्यवनिकागतैः।
प्रयोक्तृभिः प्रयोज्यानि तन्त्रीभाण्डकृतानि च॥

ततस्सर्वैस्तु कुतपैः संयुक्तानीह कारयेत्।
विघाट्य वै यवनिकां नृत्तपाठ्यकृतानि तु॥

गीतानां मद्रकादीनां योज्यमेकं तु गीतकम्।
वर्धमानमथापीह ताण्डवं यत्र युज्यते॥

ततश्चोत्थापनं कार्यं परिवर्तनमेव च।
नान्दी शुष्कावकृष्टा च रङ्गद्वारं तथैव च॥

चारी चैव ततः कार्या महाचारी तथैव च।
त्रिगतं प्ररोचना च पूर्वरङ्गे भवन्ति हि॥

भरतः

**पूर्वरङ्गप्रयोगफलम्.**

एवं यः पूर्वरङ्गं तु विधिना संप्रयोजयेत्।
नाशुभं प्राप्नुयादन्न पश्चात्स्वर्गं च गच्छति॥

शारदातनयः

**पूर्वरामक्रतिः—क्रियाङ्गरागः**

मांशमग्रहविराजपेशला पूर्णसप्तकशरीरशालिनी।
साधिकस्वरलघुप्रसारिणी पूर्वरामकृतिरीशतीषिणी॥

कुम्भः

**पूर्वरामक्री—रागः (वंशे वादनक्रमः)**

मध्यमं स्थायिनं कृत्वा तमेव द्रुततां नयेत्।
तत्परं स्वरमुक्त्वा च तुरीयं तु विलम्ब्य च॥

पुनः परं स्वरं स्पृष्ट्वा पञ्च पञ्च विलम्ब्य च।
स्थायी यदावरोहेण प्राप्यते जायते तदा।
स्वस्थानं प्रथमं रामकृतेरस्य द्वितीयकः॥

**पूर्ववाक्यम्—निर्वहणसन्ध्यङ्गम्**

पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थप्रदर्शनम्।

भरतः

यथा—रत्नावल्यां इदानीं सफलेत्यादि बाभ्रव्यवाक्यम्।

अभिनवः

पूर्वभाव इति नाम कृत्वा – लक्षणमाह – प्राग्भावः कृत्यदर्शनम्। यथा—स्फुटमेवेत्यादिवासवदत्तावचनम्।

रत्नावल्यां मुखसन्ध्यायुक्तसदृशवाक्यदर्शनं पूर्ववाक्यमङ्गमस्य स्थाने केचिदामनन्ति। यथा—मुद्राराक्षसे इदं च वक्तव्यो विजय इत्यादि चाणक्यवाक्यम्।

रामचन्द्रः

बीजोद्घाटनं पूर्ववाक्यम्। यथा—वेण्यां क सा भानुमतीत्यादि भीमवाक्यम्।

**पूर्वसारङ्गः—मेलरागः**

कोमलौ च रिधौ यत्र गनी यत्र च तीव्रकौ।
मश्च तीव्रतरः प्रोक्तः पूर्वसारङ्गके पुनः॥

सायं गेयः। अहोबिलः

**पूर्वा—रागः**

समस्वरा निरितरा सांशमन्द्रोत्सवे भवेत्।
पूर्वा पूर्वसमुद्भूता देशभाषाविचक्षणैः॥

हम्मीरः

**पूर्वाषाढाभिनयः**

युक्तचन्द्रहस्तेन कर्तव्यः ।

महाराष्ट्रे

**पूर्विकल्याणी—मेलरागः**

(आ) स रि ० ० ग ० ० प ० ध ० नि स.
(अव) स नि ० ध ० प म ० ग ० ० रि स. (वक्रम्)

मेललक्षणम्

**पूर्विकल्याणी—मेलरागः (गमनश्रममेलजन्यः)**

(आ) स रि ग म प ध नि प ध प स.
(अव) स नि ध प म ग रि स.

मज

**पूर्वकल्याणीरागध्यानम्**

सखीवरकराञ्चितां विवृतगोद्धबाहुद्वयां
नताङ्गिवरलेखिकां विपगपादनाट्यस्थिताम् ।
सिताम्बरधरां लसत्प्रसवदामभूषीकृतां
भजामि सुविलासिनीं मनसि पूर्वकल्याणिकाम् ॥

रागसागरः

**पूर्वीरागध्यानम्.**

अमृतकलनिभाङ्गीमङ्कनाथोत्तमाङ्गां
हरिणशिशुविलोलामालिकासेव्यलीलाम् ।
मधुचषकशुकीविन्यस्तहस्तां प्रशस्तां
कनकमयसुचेलां पूर्विकां चिन्तयामि ॥

रागसागरः

**पूर्वी—मेलरागः**

गौरीमेलसमुत्पन्ना षड्जोद्ग्राहसमन्विता ।
न्यासांशगस्वरोपेता पूर्वी सा सुखदायिनी ॥
सायं गेया । अहोबिलः

**पूर्वी—मेलरागः (मायामालवगौलमेलजन्यः)**

(आ) स रि ग म प ध नि प स.
(अव) स नि ध प म ग रि स.

मज

**पूर्वोत्तराषाढाहस्तः (पूर्वोत्तराषाढे द्वे द्वे आमलकवत्)**

भरतार्णवसंप्रोक्तः संयमाभिधहस्तकः ।
पूर्वाषाढोत्तरे योज्यो भरतार्णववेदिभिः ॥

भ्शारः

संयमहस्तो मुनिहस्तपर्यायः ।
अर्धचन्द्रेऽनामिका कनिष्ठा कुञ्चिता तले ।
युक्तचन्द्रसमाख्यातं पार्श्वोक्तमतसङ्ग्रहे ॥ भ्शारः

**पृथग्वाद्यम्.**

गीतनृत्ताभ्यां विना केवलं वाद्यप्रयोगः ।
विवादे च परीक्षायामुत्साहे त्यागकर्मणि ।
श्रूयते च यदा वाद्यं पृथग्वाद्यं तदुच्यते ॥
देवगेहे नृपावासे गजवाजिपदान्तिके ।
आहवे चोत्सवे चेति तद्वदन्येषु कर्मसु ॥
गीतनृत्तैर्विना यत्तु भोगार्थं वाद्यते यदा ।
तदपि प्रोच्यते प्राज्ञैः पृथग्वाद्यं पृथग्विधम् ॥

सोमेश्वरः

**पृथग्वाद्यम्**

वाद्यशब्दे द्रष्टव्यम्

**पृच्छा—लक्षणम्**

यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम् ।
पृच्छन्निवाभिधत्ते ऽर्थं सा पृच्छेत्यभिसंज्ञिता ॥

पृच्छा— शोकादिपरवशतया आत्मानं वा परं वा परोक्षे संबोध्य पृच्छन्निवाभिधानम् । तत्रोत्तरमपेक्षते । तस्यैव प्रत्याय-कत्वात् । यथा-रामचरिते सीतां दृष्ट्वा हनुमानाह स्थाने इत्यादि ।

**पृच्छा—लक्षणम्**

यत्राकारोद्भवैर्वाक्यैरात्मानमथवा परम् ।
पृच्छन्निवाभिधत्तेऽर्थं सा पृच्छेत्यभिसंज्ञिता ॥

भरतः

किं भीमादिति श्लोके (वेण्यां) आकारेणाभिप्रायसूचकेन काक्वादिनोद्भूतानि द्योतितशक्तिकानि वाक्यानीति भावः । यत्र भावरसोपेतमित्यन्ये प्राच्यं पादमधीयते ।

अभिनवः

**पृथुला—चतुष्पदागीतम्**

त्रिलया स्वल्पवाक्या च सुकुमारविचेष्टिता ।
गुरुप्लुताक्षरप्राया पृथुला परिकीर्तिता ॥

वेमः

**पृथुला—गीतिः**

लक्ष्मोच्यतेऽथो पृथुलाख्यगीतेस्संभाविताव्स्सकलं च वेद्यम् ।
लघ्वक्षराणां बहुलप्रयोगोऽपरं भवेदेष तयोर्विशेषः ॥
शिष्टं मागधीगीतिलक्षणे द्रष्टव्यम् ।

रघुनाथः

**पृथ्वी—मेलरागः (श्यामलाङ्गीमेलजन्यः)**

(आ) स ग म प नि ध नि स.
(अव) स नि ध प म रि स.

मज

**पृथ्वीकुण्डलतालः**—देशीतालः

पृथ्वीकुण्डलतालस्तु जायते षष्टिमात्रिकः ।
तानरत्नाकरं नामेतस्यास्माभिः प्रतिष्ठितम् ॥

पृथ्वीकुण्डलताले स्यु र्नौयस्तो ननभायतौ ।
यतौ तो यगणश्चैव जगणाश्च गुरुः क्रमात् ॥

।।।, ।ऽऽ,ऽऽ।, ।।।, ऽऽऽ, ऽ।।।ऽऽ, ऽ।।, ।ऽऽ,
ऽ।।, ऽऽ।, ।ऽऽ, ।ऽ।, ऽ ४०-गुरवः, २०-लघवः

सुधा

**पृष्ठलुठिता**—भुङ्पचारी

पादश्चेत्कुञ्चितः पृष्ठे लुठितोऽङ्गुलिपृष्ठतः ।
पुनश्च लुठितस्थाने स्यात्पृष्ठलुठिता तदा ॥

अशोकः

**पृष्ठस्वस्तिकम्**—करणम्

चारीं कुर्वन्नपक्रान्तां भुजावुद्वेष्ट्य विक्षिपेत् ।
अपवेष्टयोक्षिपन्नेतौ सूचिमेकाङ्घ्रिणा भजेत् ॥

ततस्त्रिकविवर्तेन विदधीतपराङ्मुखम् ।
पृष्ठे सन्यस्य पादस्य वामेन स्वस्तिकं यदा ॥

पृष्ठस्वस्तिकमाख्यातं पृष्ठस्यान्वेषणे तदा ।
अन्ये स्वस्तिकमिच्छन्तः पृष्ठतः करयोरपि ॥
विनियोगं वदन्त्यस्य सञ्ज्ञामस्य परिक्रमे ।

ज्यायनः

विसृष्टवस्तुग्रहणे सदन्वेषणभूषणे ॥

लक्ष्मणः

**पृष्ठानुसारी**—बाहुः

पृष्ठतस्सरणात्पृष्ठानुसारी बाहुरीरितः ।
वीटिकाग्रहणऽन्वेषे तूणाद्बाणग्रहे तथा ॥

अशोकः

**पृष्ठोत्क्षेपः**—पादपाटः

पृष्ठतश्चरणोत्क्षेपात्पृष्ठोत्क्षेपः प्रकीर्तितः ।

वेमः

**पृष्ठोत्तानतलम्**—देशीस्थानम्

एकः पुरस्समः पादः पश्चात्तु चरणोऽपरः ।
भूस्पृष्टाङ्गुलिपृष्ठश्चेत् पृष्ठोत्तानतलं भवेत् ॥

वेमः

**पृष्ठोद्वृत्तम्**—पादमणिः

मुहुः कृत्वा समोद्वृत्तं विनैव तलताडनम् ।
पृष्ठोन्मुखीभूततलौ पार्श्वाभिमुखपार्ष्णिकौ ॥
चरणौ तिष्ठतो यत्र पृष्ठोद्वृत्तं तदीरितम् ।

वेमः

**पेक्खणम्**

पेक्खणं तूच्यते नृत्तं गीतशब्दप्रबन्धजम् ।
नानार्थरससम्पन्नं नरनारीप्रवर्तितम् ॥
विचित्रं च मनोहारि स्वेच्छया कल्पितक्रमम् ।

देवणः

**पैङ्गला**—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि ग म प नि ध नि स .
(अव) स ध प ग रि स .

मञ्ज

**पैतामहकपालगानम्**

षड्ज पितापुत्रके ताले रूपसाधाररागतः ।
पैतामहं द्वितीयं स्यादित्युक्तं पृथिवीभृता ।

कुम्भः

**पैशाचः**—तानः

षड्जग्रामे नारदीयतानः
नि स रि ग म प ध ।

नान्यः

**पैसरः**—वाद्यप्रबन्धः

अयं वैसारसमुदायनामभ्यां च व्यवह्रियते ।
आतोद्यानि समस्तानि वाद्यन्ते च पृथक् पृथक् ।
खण्डे खण्डे यदा तद्ज्ञैः पैसरस्स तु कथ्यते ॥

सोमेश्वरः

**पैसारः**—वाद्यप्रबन्धः

खण्डस्स्यात्पृथगातोद्यवाद्यैः पैसारसंज्ञकः ॥

शार्ङ्गः

**पौण्डरीकः**—तानः

मध्यमग्रामे नारदीयतानः
ध नि स ग म प

नान्यः

**पौरविकारागध्यानम्**

तनुगौरी पौरविकाऽऽयतवेणी मिलितकञ्चुकीबन्धा ।
डोलान्दोलनलोला नीरनिचोला मधौ मुदिता ॥

सोमनाथः

**पौरवी**—मूर्छना

अम्भोधररवाकारान् पूर्वत्र कुरुते स्वरान् ।
पौरवी धैवते मूर्छा विधिश्चात्राधिदैवतम् ॥

नान्यः

**पौरवी—मूर्छना**

मध्यमग्रामे षष्ठी ।
(आ) ध नि स रि ग म प.
(अव) प म ग रि स नि ध.

पंडितमण्डली

**पौराली—रागः**

धांशन्यासग्रहणसरिगप्रचुरा च तारगान्धारा ।
मध्यममन्द्रा पूर्णा पौराली सूरिभिः प्रोक्ता ॥

नान्यः

गतारा मन्द्रमध्या च ग्रहांशन्यासधैवता ।
सरिगप्रचुरा प्रोक्ता पौराली परिकीर्तिता ।

मतङ्गः

धैवतांशग्रहन्यासा पञ्चमर्षभवर्जिता ।
षड्जमन्द्रा मतारा च पौराल्यौडुविता मता ॥

सोमेश्वरः

अनन्तरं तु पौराली जाता मालवकैशिकात् ।
न्यासांशग्रहषड्जा च षड्जमध्यमभूयसी ॥
संपूर्णा वर्णिता सेयं गीतशास्त्रविशारदैः

हरिः

षड्जन्यासग्रहोपेता जाता मालवकैशिकात् ।
षड्जमध्यमभूयिष्ठा पूर्णा पौरालिका मता ॥

जगदेकः

पौराली भिन्नषड्जोत्था धैवतांशारिकोमला ।
समपैः प्रचुरा ज्ञेया मन्द्रधैवतभूषिता ॥

मोक्षः

**पौरुषरसप्रेमविलासः—सूडप्रबन्धः**

रागे कर्णाटबङ्गाले सपौरुषरसात्परः ।
प्रेम्णा विलासनामायं प्रबन्धो माधवप्रियः ।

कुम्भः

**पौर्णमासः—तानः**

षड्जग्रामे निगहीनौडुवः
म रि स ध प

कुम्भः

**पौर्वाह्णिकम्—संगीतशृङ्गाराङ्गम्**

कामिना पूर्वाह्णकरणीयं पौर्वाह्णिकम् ।

भोजः

**पौशलम्—शारीरभेदः**

ज्ञेयं पौशलशारीरं तारे रागप्रकाशकम् ।

पार्श्वदेवः

**प्र—प्रवेशकः—तालचिह्नम्**

**प्रकम्पिता—ग्रीवा**

पुरः पश्चात्प्रचलनात्कपोतगलकम्पवत् ।
प्रकम्पितेति सा ग्रीवा नाट्यशास्त्रे प्रशास्यते ॥

युष्मदस्मदिति प्रोक्ते देशीनाट्यविशेषतः ।
डोलायां भणिते चैव प्रयोक्तव्या प्रकम्पिता ॥

नन्दी

**प्रकरणम्—रूपकम्**

यत्र कविरात्मशक्त्या वस्तु शरीरं च नायकं चैव ।
औत्पत्तिकं प्रकुरुते प्रकरणमिति तद्बुधैर्ज्ञेयम् ॥

यदनार्षमथाहार्यं काव्यं प्रकरोत्यभूतगुणयुक्तम् ।
उत्पन्नबीजवस्तु प्रकरणमिति तदपि विज्ञेयम् ।
यन्नाटके मयोक्तं वस्तु शरीरं च वृत्तिभेदाश्च ॥

तत्प्रकरणेऽपि योऽयं सलक्षणं सर्वसन्धिषु तु ।
विप्रवणिक्सचिवानां पुरोहितामात्यसार्थवाहानाम् ॥

चलितं तन्नैकविधं ज्ञेयं तत्प्रकरणं नाम ।
नोदात्तनायककृतं न दिव्यचरितं न राजसंभोगम् ।
बाह्यजनसंप्रयुक्तं तद्ज्ञेयं प्रकरणं तद्ज्ञैः ॥

दासविटश्रेष्ठियुतं वेशस्त्र्युपचारकारणोपेतम् ।
मन्दकुलस्त्रीचरितं काव्यं कार्यं प्रकरणे तु ॥

सचिवश्रेष्ठिब्राह्मणपुरोहितामात्यसार्थवाहानाम् ।
गृहवार्ता यत्र भवेन्न तत्र वेश्याङ्गना कार्या ॥

यदि वेशयुवतियुक्तं न कुलस्त्रीसङ्गमोऽपि स्यात् ।
यदि वा कारणयुक्त्या वेशकुलस्त्रीकृतोपचारः स्यात् ।
अविकृतभाषाचारं तत्र तु पाठ्यं प्रयोक्तव्यम् ॥

संक्षेपात्सन्धीनामर्थानां चैव कर्तव्यः ।
अङ्कान्तरालविहितः प्रवेशकोऽर्थक्रियां समभिवीक्ष्य ॥

भरतः

अत्र प्रधानलक्षणं तु—

वस्तूत्पाद्यं, कथाशरीरं तु यथोचितं कल्पनीयम । अनार्षं बृहत्कथादि । तस्माद्ग्राह्यं वस्तु । विप्रवणिगादि नायकनायिकाः । प्रख्यातराजर्षिनिषेधान्नाटकात्प्रकरणस्य वैलक्षण्यम् । प्रकरणं प्रायशो लोकव्यवहारदृष्टम् । दिव्यचरितमलौकिकमिति निषिद्धम् । कञ्चुकप्रभृतयोऽन्तःपुरजनः । तद्व्यतिरिक्तो बाह्यजनश्चेष्टदासादिः प्रवेशकादौ कार्यः । मन्दकुलानां स्त्रीणां चरितं वाऽस्मिन्प्रयोज्यम् । वेश्याकुलस्त्रियोस्सहसमावेशः प्रतिषिद्धः । अथवा तयोः प्राधान्येन समावेशः स्यात् ।

अभिनवः

धीरशान्तश्च सापायधर्मकामार्थतत्परः ।
शेषं नाटकवत्सन्धिप्रवेशकरसादिकम् ॥

नायिका तु द्विधा नेतुः कुलस्त्री गणिका तथा ।
कुलजाभ्यन्तरा वेश्या बाह्या नातिक्रमोऽनयोः ॥

आभिः प्रकरणं त्रेधा द्वाभ्यां सङ्कीर्णमुच्यते ।
सङ्कीर्णं तत्प्रकरणं यत्स्याद्धूर्तसमाकुलम् ॥

शिल्पादिव्यपदेशेन भवेद्वेश्यासमागमः ।
भाषेत प्राकृतं वेश्या संस्कृतं कुलनायिका ॥

शकारः कुट्टनी चेटी धर्मशास्त्रबहिष्कृताः ।
विटचेटादयो बाह्या नित्यं प्रकरणे मताः ॥

अन्यूनाधिकपञ्चाङ्कत्वादिलक्षणसंयुतम् ।
ईदृशं रूपकं यत्तु तद्वै प्रकरणं भवेत् ॥

पद्मावतीपरिणयो विप्रस्य चरितं भवेत् ।
तथैव मृच्छकटिका वणिजश्चरितं भवेत् ॥

कुलस्त्रीनायिकं तत्तु मालतीमाधवाभिधम् ।
यथा तरङ्गदत्ताख्यं गणिकानायिकाङ्कितम् ।
तथैव मृच्छकटिका विहितोभयनायिका ॥

शारदातनयः

तत्र विप्रचरितं मृच्छकटिकायां । वणिग्वृत्तं पुष्पभूषिते । अमात्यचरितं तरङ्गदत्ते ।

त्रिलोचनः

नवाङ्कं शारीपुत्रप्रकरणं अश्वघोषकृतम् ।

**प्रकरणम्**

सामानि गीतकानीति संप्रोक्तानि चतुर्दश ।
मन्द्रकाद्युत्तरान्तं च सप्तकं गीतकाभिधम् ॥

चतुर्दशापि चोक्तानि बुधैः प्रकरणाह्वयाः ।
प्रस्तूयन्ते प्रकार्यन्ते मार्गतालैस्तु पञ्चभिः ॥

अतः प्रकरणानीह प्रोक्तानि भरतादिभिः ।
बहुधा वस्तु तालाङ्गैः प्रकर्षेण स्थितेर्यतः ॥

कुलकच्छेद्यकपदप्रकारैः क्रियते ततः ।
आहुः प्रकरणं नाम मन्द्रकादि पुरातनाः ॥

कुम्भः

**प्रकरणिका—रूपकम्**

एवं प्रकरणी कार्या चतुरङ्का तु सा स्मृता ।
एवं प्रकरणवत् । प्रकरणिकायाश्चत्वारोऽङ्का' ॥

विष्णुधर्मोत्तरे

प्रकरणिकाया अपि उत्पाद्यं वस्तु । यथा – नाटकस्य भेदो नाटिका । एषा प्रकरणस्य भेदः । अत्र केचित् – "एको भेदः प्रख्यातो नाटिकाख्यः । इतरस्त्वप्रख्यातः प्रकरणिकासंज्ञो नाटीसंज्ञया द्वे काव्ये आश्रिते इति "व्याचक्षणाः प्रकरणिकां प्रकरणविशेषं मन्यन्ते । तदसत् । उद्देशलक्षणयोर्भरतेन अनभिधानात् ।

**प्रकरी—सप्तगीतभेदः**

अथ वस्तु प्रकर्याः स्याच्चतुष्षण्मात्रशोभितम् ।
शम्यान्तास्तत्र मात्राः स्युः द्वितीयान्त्यविवर्जिताः ॥

द्वितीयायाश्चतुर्थ्योश्च पञ्चम्याश्च यथाक्रमम् ।
ताला गुरुभिराख्याताः षोडशद्वादशाष्टमाः ॥

ततो द्वैकलमद्रक्यः कला अस्यास्तु षोडश ।
इति वस्तूनि चत्वारि त्रीणिसार्धान्यथापि वा ॥

त्रीणिचार्धानि चेदर्धमादौ दक्षिणमार्गके ।
यदा तदपि वृत्तौ स्यात्पूर्णमेव भवेत्तदा ॥

उपोहनं च तत्राद्यं स्मृतं चार्धविवर्जितम् ।
उभयोः पक्षयोस्तत्र कर्तव्ये विवधकके ॥

वस्तुन्यन्त उपान्त्यायां मात्रायां गमनान्तरम् ।
आसारितं कनीयः स्यादिति संहरणं स्मृतम् ॥

दत्तिलः

द्वैकलमद्रक्ये इति । याः कला द्विकलमद्रके उक्ताः ताः । उभयोः पक्षयोरिति । पूर्वार्धपश्चिमार्धविपर्यासपक्षयोः । आसारितं कनीय इति । कनिष्ठासारितम् । स्थाने निरुक्तम् ।

**—अर्थप्रकृतिः**

फलं प्रकल्पते यस्याः पदार्थायैव केवलम् ।
अनुबन्धविहीनां तां प्रकरीति विनिर्दिशेत् ॥

भरतः

कथाशरीरव्यापिनि पुनस्सहायविशेष एवासाधकत्वात्करणाभासभूते वर्तमानारंभः प्रकरीत्युच्यते । पताकैव ह्यपलवत्यनुबन्धविहीना च प्रकरी । प्रकरी लघुभिः प्रकरः प्रकरीत्युच्यते । स तु पुष्पादीनामेव स्यात् । यथा च पुष्पप्रकरः परार्थोपवरकादेः शयनस्थानस्यान्यस्य वा शोभायै भवति । एवं महाप्रबन्धस्य ऋतुवर्णनादिभ्यो वा कोपि तद्विधो व्यापारः सा प्रकरीति कथ्यते । यथा – मैनाकं किमयं रुणद्धि इत्याद्युदात्तराघवे ।

भोजः

फलं प्रकल्प्यते यस्याः परार्थं केवलं बुधैः ।
अनुबन्धविहीनं स्यात्प्रकरीमिति निर्दिशेत् ।

भरतः

**प्रकीर्णम्—हस्तः**

अङ्गुष्ठमृजुवक्राग्रं तर्जनी च सुसंगता ।
मध्यानामिकयोः पृष्ठे कनिष्ठा वक्रतां गता ॥
प्रकीर्णमिति विख्यातम् ।

उमा

**प्रकृतिः**

प्रस्तारस्य विन्यासक्रमः ।

**प्रकृतिच्छन्दोवृत्तानि**

तथा शतसहस्राणां प्रकृतौ विंशतिर्भवेत् ।
सप्त वै गदितान्यत्र नवतिश्चैव संख्यया ॥
सहस्राणि शतं चैकं द्विपञ्चाशत्तथैव च ।
वृत्तानि परिमाणेन वृत्तज्ञैः गदितानि तु ॥

**प्रक्षेप्यम्—आभरणम्**

प्रक्षेप्यं नूपुरं विद्याद्धस्ताभरणमेव च ।

भरतः

**प्रगमः—प्रतिमुखसन्ध्यङ्गम्**

प्रगयणस्य पाठान्तरम् ।

**प्रगमनम्—प्रतिमुखसन्ध्यङ्गम्**

प्रगयणस्य नामान्तरम् ।

**प्रगयणम्—प्रतिमुखसन्ध्यङ्गम्**

तत्तु प्रगमनं यत्स्यादुत्तरोत्तरभाषणम् । सिंगः

प्रगमः प्रतिवाक्श्रेणिः। प्रश्नप्रतिपन्थिनी वाक्, प्रतिवाक् तस्याः श्रेणिः अपकर्षतो द्वे प्रतिवचने उत्कर्षतो बहून्यपि। यथा—भानुमती दुर्योधनवाक्यानि। किन्नो व्याप्तदिशामिति ।

रामचन्द्रः

उत्तरोत्तरवाक्यं तु भवेत्प्रगयणं पुनः ।
प्रगमनं, प्रशमनमिति च पाठान्तरं वर्तते ।

प्रगयणमिति रूढिशब्दः। अन्ये तु प्रजाशब्दाद्धिचिक्लिप्य-यक्षशब्देन शताकिना व्युत्पत्तिं कल्पयन्ति। प्रागयणमिति अन्ये पठन्ति। प्रागिति पूर्ववचनम्। ततोऽयनं प्राप्तिः यस्योत्तरवचनस्येति ।

अभिनवः

**प्रगल्भा—नायिका**

संपूर्णयौवनतृतीयवयःप्ररूढ-,
कन्दर्पविभ्रमयुता वनिता पगल्भा ।
लीनेव भर्तरि रतप्रथमावतारे-
प्यानन्दमूर्छितविलासविशेषरम्या ॥

मानवृत्तेः प्रगल्भापि धीराधीरादिभेदतः ।
त्रिधा स्युस्ताः पुनर्ज्येष्ठाः कनिष्ठाभेदतो द्विधा ॥

धीरप्रौढाप्रकोपोदितमखिलविकारान्तरं गोपयित्वा
भर्तारं सादरानादरमिलितविकारान्तरैः सान्त्वयन्ती ।
धीराधीरप्रगल्भा तदुभयगुणसंमिश्रिता स्यादधीरा
कोपेनातर्ज्य कान्तं प्रकटितकटुवाक् ताडयेत्प्रौढरोषा ॥

नीलकण्ठः

प्रगल्भारमते स्वैरं बाह्ये चाभ्यन्तरे रते ।
अपराधे प्रिये रोषाद्भाषते परुषं मुहुः ॥

शारदातनयः

यौवनान्धा स्मराक्रान्ता लज्जानन्दाविला रतौ ।

कुम्भः

**प्रगीता—प्राकृते मात्रावृत्तम्**

चतुर्मात्रिकौ द्वौ, गगौ ।
४+४+ग+ग

विरहाङ्कः

**प्रघट्टाम्बुधिः—देशीतालः**

लघुर्बिन्दुत्रयं मध्ये द्रुतद्वन्द्वं लघुत्रयम् ।
गुरुश्च क्रमशो यत्र सो प्रघट्टाम्बुधिः स्मृतः ॥

तालप्रस्तारः

**प्रचला—हनुः**

मुहुर्विकाससंरोधात्प्रचला हनुरीरिता।
कोपे प्रयुज्यते जल्पे शष्कुल्यादेश्च चर्वणे ॥

सोमेश्वरः

**प्रचुरता —फूत्कारगुणः**

ध्वनेः प्रचुरता नाम पीवरत्वमुदाहृतम् ।

कुम्भः

**प्रच्छन्ना—श्रुतिः**

निषादस्य प्रथमा श्रुतिः ।

पाल्कुरिकि-सोमः

**प्रच्छाया—संगीतशृङ्गाराङ्गम्**

श्रमातपादिविश्रमहेतुः लतागृहान्तरपत्राद्याश्रयः प्रच्छाया ।

भोजः

**प्रणयहस्तः**

कनिष्ठिके स्वस्तिकतो बध्नीयाच्छिखरोभयोः ।
प्रणयाख्योऽधिदेवोऽस्य परमात्मा प्रकीर्तितः ।
तत्रैव विनियोगः स्यात्कथितश्शूलपाणिना ॥

गौरीमतम्

**प्रणयि—दर्शनम्**

यत्प्रीणयति दृष्टस्य मनस्तत्प्रणयि स्मृतम् ।

शारदातनयः

**प्रतापः**—मेलरागः (कामवर्धिनीमेलजन्यः)
(आ) स ग म ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**प्रतापरञ्जनी**—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि ग म प नि स.
(अव) स ध नि प म ग रि स.

मञ्ज

**प्रतापवराटिका**—रागः
कम्पिता पञ्चमे षड्जे धमन्द्रा भूरिपञ्चमा।
षड्जांशन्याससंपन्ना स्यात्प्रतापवराटिका॥

जगदेकः

**प्रतापवराटी**—प्रथम रागः
धमन्द्रा सग्रहांशा स्यात् षड्जपञ्चमकम्पिता।
प्रतापाख्या वराटी च विज्ञेया भूरिपञ्चमा॥

मोक्षः

—उपाङ्गरागः
या मन्द्रधैवतोपेता षड्जमध्यमकम्पिता।
भूरिपा गीयते वीरे सा प्रतापवराटिका॥

भट्टमाधवः

—रागः
स्यात्प्रतापवराटी च धमन्द्रा कम्पसरिपा।

हम्मीरः

प्रतापाख्या वराटी च षड्जाद्या चोपभाषया।
द्वितीयचकारेण अंशन्यासावपि सूचितौ।

मदनः

—मेलरागः
सतीव्रतरसंयुक्ता प्रतापोपपदान्विता।
वराटी च विना युक्ता तीव्रसंज्ञेन गादिका॥
द्वितीयप्रहरोत्तरगेया।

अहोबिलः

—रागः
ततः प्रतापपूर्वा या वराटी साऽभिधीयते।
कम्पिते पञ्चमे षड्जे मन्द्ररूपा च धैवते॥
पञ्चमस्वरभूयिष्ठा षड्जांशन्याससंयुता।

हरिः

**प्रतापवराली**—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि म प ध नि ध प ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**प्रतापवेलाधुली**—रागः
अथ प्रतापोपपदा भवेद्वेलाधुलीपुरः।
पञ्चमर्षभहीनेयं आहता धैवतेन च॥

हरिः

**प्रतापवेलावली**—उपाङ्गरागः
धैवतेनाहता नूनं पञ्चमर्षभवर्जिता।
वेलावल्येव रागज्ञैः प्रतापादिः प्रगीयते॥

भट्टमाधवः

—रागः
रिपाभ्यां वर्जितैषैव कर्तव्या धैवताहता।
वेलावलिः पतापादिः प्रतापपृथिवीभुजा॥

जगदेकः

—प्रथमरागः
वेलावली प्रतापाद्या धैवताहतिभूपिता।
पञ्चमर्षभहीना च गेया गीतविशारदा॥

मोक्षः

—रागः
सैव प्रतापपूर्वा स्याद्...हतारिपवर्जिता।

हम्मीरः

**प्रतापवेलाउली**—रागः
वेलाउली प्रतापाख्या धलया परिवर्जिता।

मदनः

**प्रतापवर्धनः**—प्रबन्धः
यत्रानन्दकरैः पाटैः पदैरुत्साहसूचितैः।
प्रतापवर्धनो रच्यः स्वरतेन्नकसंयुतः॥

एवमुत्साहजनकैः पदैः पाटोपशोभितैः।
इष्टेनार्थेन रागेण बुधैस्तालेन भाषया।
प्रतापवर्धनो गेयो लक्ष्यज्ञैर्वयकारकैः॥

सोमेश्वरः

प्रतापवर्धनाख्योऽथ पाटैस्तेन्नैः मदस्वरैः।
विरुदै रुचिरोऽस्य स्यादाभोगस्तु पदान्तरैः।
पाटैर्न्यास इति ख्यातः प्रतापादिश्च वर्धनः॥

हरिपालः

पाटैः स्वरैः पदैस्तेन्नैर्विरुदैश्चान्वितो रसैः।
प्रतापवर्धनो वीरे पाटन्यासेन गीयते॥

सोमराजः

**प्रतापशेखरः**—देशीतालः
प्रतापशेखरे दीप्तद्विरामान्तद्रुतद्वयम्।
ऽ००

वेमः

**प्रतापसिन्धुः**—मेलरागः ( खरहरप्रियामेलजन्यः )

(आ) स रि ग म प ध नि स.

(अव) स नि प म रि ग रि स स.

मङ्ग

**प्रतापाभरणम्**—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )

(आ) स रि ग म प नि स.

(अव) स नि ध प म ग रि ग स.

मङ्ग

**प्रतिज्ञानम्**—लक्षणम्

न साधयामि यद्येतदेवं कर्तास्म्यहं तदा ।
इत्युद्धवादेर्वाक्यस्य तत्प्रतिज्ञानमुच्यते ॥

यथा—मुकुटताडितके, ध्वस्ता इत्यादिभीमवाक्यम् । उर्वी-त्यादि भीमोक्तश्लोकश्च ।

भोजः

**प्रतितालः**—देशीतालः

प्रतिताले लघुद्वन्द्वादूर्ध्वं स्याद्द्रुतद्वयम् ।
।।०० वेमः

लघुना च द्रुताभ्यां च प्रतितालः प्रकीर्तितः ।
।०० सोमराजः

**प्रतिभा**—वाक्यार्थः

स्वं स्वमर्थमभिधायोपरतेषु पदेषु पदार्थप्रतिपत्त्यनन्तरं उपजायमाना इदं तदिति व्यपदेश्या अनुपदेशसिद्धा हिताहितप्राप्तिपरिहारहेतुः प्रवृत्त्यनुकूला बुद्धिः प्रतिभा ।

भोजः

**प्रतिभायुतः**

सन्निधावपि मान्यस्य कर्तुं किञ्चिद्यथापुरम् ।
बुद्धिर्यस्य वितर्काय नरोऽसौ प्रतिभायुतः ॥

भावविवेकः

**प्रतिभेदः**—करणम्

रूपक्रियाविपर्यासात्प्रतिभेदो भवेद्यथा ।
वाद्यते लद्वयं तज्ज्ञैर्मत्तकोकिलया यदा ।
गुरुस्तदा विपञ्च्यादि वीणाभिरिति तद्विधिः ॥

शार्ङ्गः

—अवनद्धे करणम्

मृदङ्गानां तु युगपत्करणे प्रकृते सति ।
अन्याक्षरप्रक्रमणं प्रतिभेदस्स उच्यते ॥
लघुद्वयानुकरणे प्रक्रान्ते हि तदादितः ।
गुरुद्वयानुकरणं (प्रतिभेदः प्रकीर्तितः) ॥

नान्यः

—वीणाकरणम्

प्रतिभेदो विपर्यस्ता भवेद्रूपक्रियैव सा ।
यदा द्रुतद्वयं मुख्यवीणायां वाद्यते विदा ।
विपञ्च्यादिषु वीणासु तदा लघुरिति स्फुटम् ॥

कुम्भः

यदा मत्तकोकिलायां द्रुतद्वयं वाद्यते तत्सहकारिषु विपञ्च्यादिषु एको लघुकालः प्रयुक्तः स एव प्रतिभेदः ।

—पुष्करे वाद्ये करणम्

युगपत्कृते करणे मृदङ्गानां यदुपरिकरणेन गच्छति ।

यथा—यद्वा धाधा णाधा मटिघे तमडिं घटेघटे दोघे घटमत्थिणह्न खो खो ।

भरतः

**प्रतिभेदनम्**—शृङ्गारचेष्टा

वचसा न पिधायैव ज्ञापनं क्रिययैव यत् ।
बध्वा प्रियापराधस्य भवेत्तत्प्रतिभेदनम् ॥

यथा—स्वप्नवीक्षितमित्यादि (कालिदासस्य) ।

कुम्भः

**प्रतिमट्ठः**—देशीतालः

प्रतिमट्ठे स्मृतः प्राज्ञै भगणः सगणोऽथवा ।
ऽ।।।।ऽ
तालविद्भिरसौ कश्चित्कथ्यते डोल्लकाभिधः ॥

सोमराजः

**प्रतिमठ्यः**—गीतालङ्कारः

तारश्चाप्यमरश्चैव विचारः कुन्दसंज्ञकः ।
चत्वारः कथिताह्येते प्रतिमठ्यास्तु शम्भुना ॥

संगीतसारः

**प्रतिमण्ठः**—प्रबन्धः

तालः पूर्वो भवेदेवं प्रतिमण्ठस्तथापरः ।
इह्वोद्ग्राहध्रुवाभोगा गातव्यास्तालवर्जिताः ।
रागैर्मनोहरैश्चैवं प्रतिमण्ठो निरूपितः ॥

हरिपालः

**प्रतिमल्लः**—देशीतालः

मगणो दत्रयं लौ च प्लुतश्च प्रतिमल्लके ।
12½ मात्राः तालप्रस्तारः

**प्रतिमल्लिकामोदः**—देशीतालः

जायते मल्लिकामोदे लद्वयं खचतुष्टयम् ।
।।०००० सुधा

प्रतिमुखम्—गीताङ्गम्

विशेषवर्णालङ्कारशोभितं अष्टगणं यथा— कान्तोसि देव गिरिदुहितृपति जगतिप वलितक झंदुं इति ।

नान्यः

—सन्धिः

बीजस्योद्घाटनं यत्र दृष्टनष्टमिव क्वचित् ।
मुखे न्यस्तस्य दृश्येत तद्वै प्रतिमुखं स्मृतम् ॥

भरतः

प्रतिमुखरी—मार्दलिकः

एतैः कतिपयैर्यश्च हीनो मुखरिणो गुणैः ।
स तु प्रतिमुखे युक्तो विदुषा वेमभूभुजा ॥

वेमः

प्रतिलम्भः—प्रबन्धः

लम्भकलक्षणे द्रष्टव्यम् ।

प्रतिलोमलक्ष्मीः—देशीतालः

लद्वयं दलयं लोदो लोदौ सश्च लदौ दगौ ।
लौललयं च निःशब्दं लक्ष्म्याख्ये प्रतिलोमके ॥

20 मात्राः　　तालप्रस्तारः

प्रतिलोमानुलोमकः—देशीतालः

नगणो भगणश्चैव यगणो मगणस्तथा ।
भगणो जगणो लौ च प्रतिलोमानुलोमके ॥

28 मात्राः　　तालप्रस्तारः

प्रतिलोमानुलोमिका—भुङ्गचारी

व्यत्यासाद्रचिता सैव प्रतिलोमानुलोमिका ।

अशोकः

सेति अनुलोमविलोमा ।

प्रतिवर्तना

प्रातिलोम्येन गात्रस्य हस्त आक्षिप्य वर्तितः ।
अलपल्लवनामाचेत्तदोक्ता प्रतिवर्तना ॥

अशोकः

प्रतिविच्युतः—वाद्यप्रकारः

प्रतिविद्युत एव नामान्तरम् ।

प्रतिविद्युतः—वाद्यप्रकारः

अनुगम्य यदातोद्य गच्छेत्समलयं पुनः ।
श्रान्तवत्समवाद्येषु तदा स्यात्प्रतिविद्युतः ॥

भरतः

अत्र प्रतिविच्युत इत्यपि केषुचिदादर्शेषु पठितम् ।

—वाद्यालङ्कारः

विद्योतनात्प्रतीपं तु वाद्यं स्यात्प्रतिविद्युतम् ।

नान्यः

प्रतिशीर्षः

पुस्तकृतशीर्षः ।

प्रतिशुल्कम्—मृदङ्गवाद्ये करणम्

अनुस्वारः मार्दङ्गिकपाणविकदर्दुरवादकानां यथा—घटमथि कुणकिटिघखाखा णखो णखो खोणाखा कुटकटकुणकिटि खटखे घदिदि ण ण णात्थि प्रतिशुल्काख्यं करणं ।

प्रतिशुल्का—अवनद्धे करणम्

चिरकालं मृदङ्गेन प्रयोगे तु कृते सति ।
तथैव पणवाद्यैः स्यात्प्रतिशुल्काभिधा भवेत् ॥

नान्यः

प्रतिशुष्का—करणम्

अंशसंवाद्यन्यतरस्वरव्यञ्जिकया यदा ।
तन्त्र्यैकयैव करणं स्यान्मुख्यामुख्यवीणयोः ।
प्रतिशुष्कां तदाचष्ट शार्ङ्गदेवो विदां वरः ॥

शार्ङ्गः

—वीणाकरणम्

एकयैव यदा तन्त्र्या स्यान्मुख्यामुख्यवीणयोः ।
संवाद्यंशान्यतरयोः स्वरव्यञ्जिकया यदा ।
तदा तत्करणं नाम प्रतिशुष्केति गीयते ॥

कुम्भ

प्रतिषेधः—अवमर्शसन्ध्यङ्गम्

ईप्सितार्थप्रतीघातः प्रतिषेधः प्रकीर्तितः ।

भरतः

यथा—रत्नावलीवृत्तान्तवर्णने ईप्सितार्थप्रतीघाते बाभ्रव्येण प्रस्तुते तस्य प्रतिघातोऽन्तःपुरदाहेन ।

अभिनवः

—लक्षणम्

कार्येषु विपरीतेषु यदि किञ्चित्प्रवर्तते ।
निवार्यते च कार्यज्ञैः प्रतिषेधः प्रकीर्तितः ॥

भरतः

यथा – लग्नानांशुकपल्लवे इत्यत्र तृतीयपादेन विपरीतकार्यप्रवृत्तिरुक्ता। आद्यार्धेन कार्यज्ञत्वं नायिकायाः। तथापि निवारणं तुरीयपादेनोक्तम्। अन्ये पठन्ति–

यद्वाक्यं वाक्यकुशलैरुपायेनाभिधीयते।
सदृशार्थाभिनिष्पत्त्या स लेश इति कीर्तितः॥

भरतः

वाक्यमिति वाक्यार्थौ निषेधो वा नदीपूरश्च वर्षासु रोधको दृष्ट इति सदृशाभिधानेन उपायेन निषेधः कृतः।

अभिनवः

**प्रतिष्ठा**—ध्रुवावृत्तम्

चतुरक्षरं छन्दः।

द्वितीयं लघु सर्वत्र चतुर्णां यत्र दृश्यते।
सा प्रतिष्ठा यथा – पुष्कवाही (छा) पुष्पवाही। भरतः

नायिकानां प्रयोक्तव्या प्रतिष्ठा प्रियसन्निधौ।
मालवकैशिकश्चात्र तालश्चाचपुटो भवेत्॥

नान्यः

**प्रतिसंस्कार्येतिवृत्तम्**– कथाशरीरम्

इतिहासेषु यथास्थितवृत्तोपनिबन्धने न्यायप्रवृत्तेरप्यफलवत्वं अनिष्टावाप्तिफलत्वंच दृश्यते। अन्यथा यत्प्रवृत्तेरपि फलयोग्यावधार्यते, तत्र तथा प्रतिसंस्कारो विधेयः। यथा—शाकुन्तलादिप्रतिसंस्कारः।

भोजः

**प्रतिहासः**

वीणायां स्वरावरोहे केवलं मध्यमोत्प्लवनम्।

**प्रतीक्षणम्**—संगीतशृङ्गाराङ्गम्

मदनार्तकामिकामिनी प्रतिपालनं अभिसारिका प्रतीक्षणम्।
भोजः

**प्रतीहारी**

सन्धिविग्रहसंबद्धं नानाकार्यसमुत्थितम्।
निवेदयन्ति कार्यं याः प्रतीहार्यस्तु ताः स्मृताः॥

भरतः

**प्रत्यङ्गः**—देशीतालः

गुरुत्रयं लघुद्वन्द्वं प्रत्यङ्गे परिकीर्तितम्। ऽऽऽ॥ वेमः
प ध नी स नि धा नि ध पा प म गा जगदेकः

**प्रत्यङ्गानि**—( षट् )

ग्रीवा करौ पृष्ठमथोदरमूरू सजङ्घिकौ।
प्रत्यङ्गानि षडेतानि त्रीण्यन्यानि जगुः परे।
जानुनी मणिबन्धौ च भूषणानीति तद्विदः॥

विप्रदासः

ग्रीवादोःकुक्षिपृष्ठोरुजङ्घाः प्रत्यङ्गकानि षट्।

ज्यायनः

**प्रत्यनुमर्म**—देशीतालः

रगणस्सगणश्चैव नगणस्तगणस्तथा।
सगणद्वितयं लोगः ताले प्रत्यनुमर्मणि।
28 मात्राः तालप्रस्तारः

**प्रत्यालीढम्**—देशीमण्डलम्

अलीढस्य विपर्यासात्प्रत्यालीढाख्यमण्डलम्।

नाट्यदर्पणे

—स्थानकम्

प्रत्यालीढं विपर्यासादालीढावयवस्थितिः।
अस्यापि देवता रुद्र इत्याह भरतो मुनिः।
आलीढयोजितं शस्त्रं प्रत्यालीढेन मोक्षयेत्।

विप्रदासः

**प्रत्याहारः**—पूर्वरङ्गाङ्गम्

कुतपस्य तु विन्यासः प्रत्याहार इति स्मृतः।
तथावतरणं प्रोक्तं गायकानां निवेशनम्॥ भरतः

नेपथ्यगृहद्वारयोर्मध्ये पूर्वाभिमुखो मार्दङ्गिकः, तस्य, पाणविकौ वामतः, रङ्गपीठस्य दक्षिणतः उत्तराभिमुखो गायनः, अस्याग्रे उत्तरतो दक्षिणाभिमुखस्थिता गायक्यः, अस्य वामे वैणिकः, अन्यत्र वंशकारिकौ इत्येवं कुतपविन्यासः। कुतं पाति। कुतः शब्दविशेषः। कुं तपतीति कुतपो न शब्दविशेषः। शब्दविशेषपालकस्य नाट्यभूमिकोज्वलताधायिनश्च। वर्गस्य यो विचित्रो न्यासः स विप्रकीर्णानां एकत्र ढौकनात्मना प्रत्याहारः। यद्यपि कुतपस्य विन्यासो मध्य एव गायकस्याभिमुख्यो रङ्गपीठस्योत्तरतो गायन्य इति गायकानां विन्यासः, तथापि त्ववतरणं नाम पृथगुक्तम्। अङ्गानां गीतस्यावश्यंभावित्वं रङ्गकवर्गे स्थापयितम्। गन्धर्व्यैश्च गन्धर्वाश्चेत्येकशेषेण स्त्रीगीतस्यापि नारदाद्यैश्च गन्धर्वैरित्यत्र संभावनादवतारणान्तं वस्तुत एकमेवाङ्गम्। अन्ये निवेशनं स्थानस्वरादाविति मन्यन्ते।

अभिनवगुप्तः

**प्रत्युत्पन्नमतित्वम्**—सन्ध्यन्तरम्

प्रत्युत्पन्नेऽर्थे मतिवैदग्ध्यम्। यथा चित्रशालाङ्के, मम शीर्षवेदना गता। बुभुक्षा आगतेति विदूषकवाक्यम्। सागरः
तात्कालिकी तु प्रतिभा प्रत्युत्पन्नमतिः स्मृता। सिंगः

**प्रथममञ्जरी**—रागः (वंशे वादनक्रमः)

पञ्चमं तु ग्रहं कृत्वा समारोहेत्तु पञ्चमम्।
आसाद्य तं विलम्ब्यास्यात् द्रुतं कुर्यादधस्तनम्।
तदधस्त्यं स्वरं दीर्घीकृत्य तस्मात्परं स्पृशेत्॥

दीर्घं कृत्वा तत्परं च पुनरप्यवरोहणात् ।
तं प्रोच्य तस्मादागत्य ग्रहे न्यासः क्रियेत चेत् ॥

तथा प्रथममञ्जर्याः स्वस्थानं प्रथमं भवेत् ।
वंशेऽप्यस्या द्वितीयस्तु स्वरः स्थायितया स्मृतः ॥

वेमः

...रागः

अनन्तरं......नाम्ना प्रथममञ्जरी ।
गान्धारमन्द्रा तारा च धैवतर्षभयोस्तदा ॥

गान्धारमध्यमाढ्या च ग्रहांशन्यासपञ्चमा ।
शेषेष्वल्पत्वसंयुक्ता गीतज्ञैरभिधीयते ॥

हरिः

न्यासांशकग्रहण रम्या
त्यक्तर्षभेण...तारनादा ।
गान्धारमध्यबहुला गकृतैकमन्द्रे
मन्द्रध्वनिः प्रथममञ्जरिकाविलापा ॥

नान्यः

षाडवा रिषभत्यागा मपांशाथ गमोत्कटा ।
...पग्रहन्यासांशका प्रथममञ्जरी ॥

मतङ्गः

—भाषाङ्गरागः (वीणायां वादनक्रमः)

स्थायिनं पञ्चमं मन्द्रं कृत्वा तेन सह क्रमात् ।
स्वरानारुह्य षट् तेषां स्वराणामवरोहणे ॥

तृतीयं तु विलम्ब्याथ कम्पयित्वा तुरीयकम् ।
स्थायिन्यस्या यदा न्यासः तदा प्रथममञ्जरी ।
गान्धारस्तु ग्रहो मन्द्रः तस्या लक्ष्येषु दृश्यते ॥

वेमः

—रागः

पञ्चमांशग्रहन्यासां धनितारां गमोत्कटाम् ।
रिवर्जितामन्द्रां च प्राहुः प्रथममञ्जरीम् ॥

सोमराजः

—भाषाङ्गरागः

गान्धारमध्यमानल्पा, धैवतर्षभतारयुक् ।
गेया शरदि शृङ्गारे गमन्द्रापूर्णतान्विता ।
मध्यमांशेन मित्य(?)न्ये तथा गीतेषु दर्शनात् ॥

भट्टमाधवः

अत्र पञ्चमो ग्रहांशन्यास इत्यन्ये । पञ्चग्रहत्वादुत्सवे विनियोगः । माधववाक्यं लेखदुष्टम् ।

—रागः

गमन्द्रा धरितारा च ग्रहांशन्यासपञ्चमा ।
गमध्यमाल्पशेषा च प्रोक्ता प्रथममञ्जरी ।
पञ्चमादिर्यतस्तस्मात् उत्सवे विनियुज्यते ॥

जगदेकः

—प्रथमरागः

पांशग्रहान्ता गदिता गमन्द्रा
गान्धारमध्योत्कटतालपशेषा ।
कारुण्यगेया धरितारकाया
सा मञ्जरी स्यात्प्रथमादिशब्दा ॥

मोक्षः

—रागः

पञ्चमांशग्रहन्यासा धरितारा गमोत्कटा ।
शृङ्गारे चोत्सवे गेया प्रातः प्रथममञ्जरी ॥

नारायणः

पञ्चमांशग्रहन्यासा धरितारा गमोत्कटा ।
गमन्द्रा चोत्सवे गेया तज्ज्ञैः प्रथममञ्जरी ॥

हम्मीरः

त्रिपञ्चमात्र भाषायां ज्ञेया प्रथममञ्जरी ।

मदनः

**प्रथममञ्जरीरागध्यानम्**

वियोगिनी कान्तवितीर्णपुष्प-
स्रजं वहन्ती वपुषातिमुग्धा ।
आश्वासमाना प्रियया च सख्या
विधूसराङ्गा फलमञ्जरीयम् ॥

सङ्गीतसरणिः

**प्रथममण्ठः—देशीतालः**

गुरुर्द्रुतः प्लुतो यत्र मण्ठे प्रथमसंज्ञके ।
ऽ ० ऽ́

दामोदरः

**प्रदीपः—देशीतालः**

प्रदीपके गुरू लपौ ऽ ऽ । ऽ́ ऽ' मदनः

**प्रदीपाग्निशिखा—कला**

शिरस्समाधाय विलासकानां त्रये कराम्भोजधृते हि यत्र ।
चक्रेण या भ्रामयते पदाभ्यां प्रोक्ता प्रदीपाग्निशिखेति नाम्ना ॥

नागमल्लः

**प्रदेशमुकुलहस्तः**

मुकुलार्थे कनिष्ठापि किञ्चिद्वक्रितभाग्यदि ।
नाम्ना प्रदेशमुकुलो योज्योऽयं सारसार्थके ॥

शृङ्गारशेखरः

प्रदेशः पृष्ठदेशः ।

प्रध्वानम्—हस्तः

हस्तेनास्फालनं च स्यात् उत्तानिततले करे ।
वामे वा दक्षिणे वापि तत्प्रध्वानं प्रिये मतम् ॥

उमा

प्रपञ्चः—वीथ्यङ्गम्

यदसद्भूतं वचनं संस्तवयुक्तं द्वयोः परस्परं यत्तु ।
एकस्य चार्थहेतोः स हास्यजननः प्रपञ्चः स्यात् ॥

भरतः

यथा—रत्नावल्यां – सुसंगताराजभाषणं आभरणदानपर्यन्तं प्रपञ्चः । तथाहि – सागरिकासुसंगतयो राजविदूषकयोः परस्पर-संबन्धमाश्रित्यासद्भूतसत्यं देव्यै निवेदयामीत्युक्तम् । संस्तवश्च तत्रास्ति । भट्टिणो पसादेण किंपि दं मए इति ।

हास्यमपि परिहासरूपं वर्तते । एकस्य च राज्ञोऽर्थे प्रयोजने सागरिकासङ्गमे हेतुर्भवत्येवेत्यन्यथाभिधानात्प्रपञ्चः ।

अभिनवः

केचित्त्वसद्भूतेन पारदार्यादिनैपुण्यादिना योऽन्योन्यस्तवो हास्यहेतुः तं प्रपञ्चमाहुः । यथा—रण्डाचण्डेत्यादि भिक्षुकौलि-कयोः परस्परधर्मांशंसनम् । अन्ये तु द्वयोर्लाभं विना मिथ्यारूपं हास्यं संस्तवयुक्तं प्रपञ्चत्वेन मन्यन्ते । यथा—तरङ्गदत्ते चेटी-विदूषणभाषणम् ।　रामचन्द्रः

प्रपदभ्रमरी—तिरिपनृत्ताङ्गम्

चतुरश्रे पताकौ चेत्प्रसृतौ पार्श्वयोः पुनः
वामाङ्घ्रिप्रपदे वक्षःप्रपदस्य तलं भवेत् ॥

हृदये वामशिखरो दक्षो मौलावधोमुखः ।
वपुर्वामे नामयेच्च दक्षिणावर्ततो भ्रमात् ।
प्रपदभ्रमरी प्रोक्ता कोहलेन मनीषिणा ॥

वेदः

प्रफुल्लकरणम्—करणम्

ऊर्ध्वजानुश्च चारी स्याद्धस्तौ चाप्यलपल्लवौ ।
उत्तानौ स्वस्तिकौ चापि प्रफुल्लकरणं तदा ॥

देवणः

प्रबन्धच्छन्दांसि

कुम्भकर्णोक्ताष्टाविंशप्रबन्धच्छन्दसां लक्षणमुच्यते ।

त्रिंशन्मात्रास्तु पूर्वार्धे विंशतिस्सप्त वा परे ।
सप्तपञ्चाशदुभयोर्मात्रा ज्ञेयास्तु योगतः ॥

त्रिंशतो येऽधिका वर्णाः द्विगुणास्तो स्रयाधिकाः ।
लघवस्तेऽत्र विज्ञेयाः शेषास्तु गुरवो मताः ।
ऊनि(ऋ)रूनिता अथवा वर्णैर्मात्राः स्युर्गुरवोऽखिलाः ॥

गुरुमिस्तूनिता वर्णा लघवः परिकीर्तिताः ।
वसन्तोत्सवः प्रबन्धः स्यान्नवभिः पञ्च मातृकैः ॥

द्विषष्ट्यान्ते तथा गीतौ द्विभङ्गिः परिकीर्तितः ।
द्विपदधान्ते तथागीतिरन्ते मध्येऽवलम्बकम् ॥

स त्रिभङ्गिर्द्विपदिका चद्वयं चाथ दद्वयम् ।
लघुदौ पस्तथा देलास्त्रयः कर्पूरपूर्विका ॥

तिथिच्छेदे अश्वचैर्नैन्त्ये द्विपदी विषमे षि(प?)जे ।
ललितैःविच्युतरसप्त चगणैः स्युः परा अपि ॥

लयोऽथ भ्रमरपदमुपपूर्वं तदेव हि ।
कुङ्कुमाङ्कं सूडपदं हरिणीपदमेव च ॥

कमलाकरं च भ्रमररुतं स्याद्रत्नकण्ठिका ।
कुङ्कुमतिलकावली कदलीपत्रमित्यपि ॥

एवमाद्यस्त्रिभिर्द्वाभ्यां योगे स्याद्वस्त्वनेकशः ।
चतुर्मात्रत्रयं पञ्चमात्रः स्यात् खञ्जनामकः ॥

श्रीयशोगुणपूर्वं तत्क्रमादोजे तु चद्वयम् ।
दस्समे चौ श्रीधवलं तथाद्ये च तृतीयके ॥

तथाविधे तृतीये च तथा तुर्ये तु चत्रयम् ।
पञ्चमे सप्तमे द्वौ चौ तद्वैकस्समयोः पुनः ॥

चद्वयं दस्तथा चैकः चत्रयं वा यशः परम् ।
धवलं तु षडङ्घ्रिस्त्वाद्ये चतुर्थे तु षद्वयम् ॥

दौ द्वितीये पञ्चमे च दौ षष्ठे च द्व तृतीयके ।
षद्वयार्थे धपे कीर्तिधवलं चतुरङ्घ्रिके ॥

पद्चौजे षच चाद्धस्तो वातस्याद्गुणपूर्वकम् ।
आद्ययोः षद्चत्रयं च प्रत्येकत्वं तयोस्तथा ॥

पञ्च चास्सर्वपादेषु चान्ते तो दोऽथ मङ्गलम् ।
आदिस्थे तोदनाद्ये तु तदाद्यं धवलादिकम् ॥

उक्तं च—

उत्साहहेलावदनानिलाद्यैः सञ्जायते मङ्गलवाचि किञ्चित् ।
तद्रूपकाणां अभिधानपूर्वं छन्दोविदो मङ्गलमामनन्ति ॥

कुम्भः

प्रबद्धः—श्वासः

यो निश्वासः प्रबद्धस्सन् सशब्दस्स्याद्विनिर्गतः ।
प्रबद्धनामासौ वायुः क्षयव्याध्यादिसंश्रयः ॥

अशोकः

प्रबन्धः

चतुर्भिर्धातुभिष्षड्भिश्चाङ्गैर्यस्मात्प्रबध्यते ।
तस्मात्प्रबन्धः कथितः प्रतापपृथिवीभुजा ॥

जगदेकः

**प्रबन्धकालव्यवस्था**

त्रिपदी षट्पदी चैव धवलो मङ्गलस्तथा ।
ओवी च चर्चरी चर्चा राहडी दन्तिका तथा ॥
एते सूडेषु नो गेयाः प्रबन्धा लौकिका मताः ।
विप्रकीर्णाः प्रगातव्या व्यापारेषु पृथक् पृथक् ॥
त्रिपदीकण्डने चैव शृङ्गारे विप्रलम्भके ।
प्रायशस्त्रिभिरेवैषा गेया नानार्थभूषिता ।
कथासु षट्पदा योज्या विवाहे धवलस्तथा ॥
उत्सवे मङ्गलो गेयश्चर्या योगिजनैस्तथा ।
महाराष्ट्रेषु योषिद्भिः ओवी गेया तु कण्डने ॥
होलाके चर्चरी गेया राहडी वीरवर्णने ।
दन्ती गोपालकैर्वादे गातव्या निजभाषया ॥

सोमेश्वरः

**प्रबन्धजातयः**

मेदिनी, आनन्दिनी, दीपनी, पावनी, तारावलीति.

**प्रबन्धनृत्तम्**

षडङ्गादिप्रमाणेन प्रबन्धाध्यायसंमताः ।
कृता वाग्गेयकारैस्तु तेषां खण्डानुसारतः ॥
स्वराणां पाटशब्दानां तेनकानां लयेन च ।
संगीतोक्तक्रमेणैव पदानां भावदर्शनम् ।
ये प्रबन्धाः पुरा प्रोक्ताः तेषां नर्तनमाचरेत् ॥

वेदः

**प्रबन्धबन्धुरः—देशीतालः**

प्रबन्धबन्धुरे लौ द्वौ विरामान्तावुदाहृतौ । ।।

**प्रबन्धाङ्गानि**

पदतेन्नौ च विरुदपाटतालस्वरा इति ।
एतान्यङ्गानि षट्प्राहुः प्रबन्धस्य मनीषिणः ॥

हरिपालः

**प्रबन्धानामानन्त्यम्**

प्रबन्धाङ्गानां समस्तव्यस्तभेदेन बहवो भेदास्संभवन्ति । एवं धातूनां एकतालतया पृथक्तालतया चान्ये प्रभूततरा भेदाः। किञ्च शतशो भेदा जरीजृम्भते । तं तु प्रतिपादयितुमशक्याः । तथोक्तं भट्टोद्भटेन—

न रागाणां न तालानां न वाद्यानां विशेषतः ।
नापि प्रबन्धगीतानां अन्तो जगति विद्यते ॥

कृष्णदासः

**प्रभातहस्तः**

श्लिष्टे कनिष्ठतर्जन्यौ मध्यमानामिकाङ्गुली ।
अङ्गुष्ठेन युते स्यातां प्रभातकर ईरितः ॥
नेत्रस्थाने तु बद्धश्चेन्नेत्रभावनिरूपणे ।
सूर्यावलोकने चैव दर्शयन्ति बुधोत्तमाः ॥

विनायकः

**प्रभावती—त्रयोदशाक्षरवृत्तम्**

जृभसजगाः । भरतः

**—ध्रुवावृत्तम्**

यस्याः पादे नित्यौ चतुर्थषष्ठौ जकारसंज्ञौ तु ।
शेषाण्यन्यानि स्युः गुरूणि सा स्यात्प्रभावती नाम्ना ॥
प्रतिवीरध्वनिं श्रुत्वा युद्धोद्योगपरिक्रमे ।
प्रभावत्युत्तमानां स्यात्तालरागौ तु पूर्ववत् ।
मेघच्छन्नं दट्ठूण अंबरं गज्जिदेण मज्जंतो ॥
[मेघछन्नं दृष्ट्वा अंबरं गर्जितेन मज्जता ।]

नान्यः

अत्र णअंबा जिदेण इति चतुर्थे षष्ठे जगणौ ।

**—प्राकृते मात्रावृत्तम्**

जः चतुर्मात्रिकः जः चतुर्मात्रिकः
लः गः

विरहाङ्कः

**—मेलरागः (पावनीमेलजन्यः)**

(आ) स रि म प ध नि स.
(अव) स नि ध म प म रि ग रि स.

मञ्ज

**—श्रुतिः**

षड्जस्य द्वितीया श्रुतिः ।

**प्रभासः—मेलरागः (शुभपन्तुवरालीमेलजन्यः)**

(आ) स रि ग म प ध स.
(अव) स नि ध प म ग रि ग म स.

मञ्ज

**प्रभातरङ्गिणी—मेलरागः (कामवर्धिनीमेलजन्यः)**

(आ) स रि ग म प ध नि स
(अव) स प ध नि प म रि ग म रि स

मञ्ज

**प्रमदः—शिल्पकाङ्गम्**

तं दृष्ट्वा शत्रुहन्तारमित्यादौ स तु दृश्यते।
मन्दप्रहर्षः प्रमदः परस्तात्स च वर्णितः ।
प्रियाप्रियेति वाक्यादौ मदणखे उदीरितः ॥

शारदातनयः

**प्रमाणम्**—देशीलास्याङ्गम्

प्रमाणं गीतवाद्याभ्यां नृत्तस्य समता भवेत्।

ज्यायनः

**प्रमादः**—शिल्पकाङ्गम्

प्रमादस्स्यात्पिशाचादेः यदृच्छागमनं भयम्।
सत्वाद्यैरिहः कल्पितेत्यादिमालतीमाधवादिवाक्॥

शारदातनयः

**प्रमिता**—ध्रुवावृत्तम् (दशाक्षरम्)

यदि पञ्चमं हि स तृतीयं गुरुणी पदान्तरचिते द्वे।
प्रमितेति सा भवति नाम्ना ह्यवकृष्टजातिरिह पङ्क्तिः।

(सजसगाः) गअणं ग णे पिहिदरस्सी। [गगनाङ्गणे पिहितरश्मिः]।

भरतः

उत्तमेषु प्रयोक्तव्या प्रमिता करुणे रसे।
ताले युग्मोजभङ्गोऽयं क ःणे च प्रयुज्यते॥

नान्यः

युग्मोजभङ्ग इति। चच्चत्पुटचाचपुटयोर्भङ्गः।

**प्रमिताक्षरा**—ध्रुवावृत्तम्

तृतीयं पञ्चमं चैव नवमं नैधनं तदा।
गुरूण्येतानि पादे तु यत्र तत्प्रमिताक्षरा॥
महुभूसिदं सुरहिचूदवणं—मधुभूषितं सुरभिचूतवनं।

भरतः

नवमान्त पञ्चमतृतीयगुरुलघुशेषमक्षरगतं भवति।
चरणं तु यस्य सततं विविधं प्रमिताक्षरेति कथिता सा॥

भरतः

**प्रमिताक्षरा**—द्वादशाक्षरवृत्तम्

स ज स साः

भरतः

**प्रमोदः**—प्रबन्धः

वद्दते तालसंयुक्तः प्रमोदः परिगीयते।

जग-मल्लः

पदैः पाटैश्च तेनैश्च सतालो गीयते मुदा।
प्रमोदाख्यः प्रबन्धोऽसौ प्रमोदजननस्सदा॥

श्रीकण्ठः

**प्रमोदकम्**—ध्रुवावृत्तम्

आद्यचतुर्थषष्ठदशमं स षोडशमथान्त्यमेव च
यदि द्वादशमेव यत्र चरणेषु सप्तदशकात्परं च विहितं।
छन्दसि चेत्तथा गुरुचेदथाकृतिगतं भवेत्तु सततं
मद्रकमेव खञ्जकमेवं पुलश्च कथितं प्रमोदकमिदम्॥

मद्रकमित्यस्यनामान्तरम्।

फुल्लिदचूदषंडसहयारमञ्जरीविलोलनादपवणे॥

भरतः

**प्रमोद्भटः**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अ) स नि म ग रि ग स.

मल्ल

**प्रयत्नः**—अवस्था

अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति।
परश्चौत्सुक्यगमनं प्रयत्नः परिकीर्तितः॥

भरतः

—शिल्पकाङ्गम्

स प्रयत्नोऽनिरुद्धस्य दर्शने चित्रलेखिका।

शारदातनयः

अनिवृत्तये यत्नः प्रयत्नः। यथा—प्रावृडङ्के अये अन्विष्टेयमित्यादि।

सागरः

अत्रानिरुद्धस्येति अनिरुद्धनायकं नाटकं। इदं तु नोपलब्धं। प्रावृडङ्कः, कृत्यारावणनाटके कश्चनाङ्कः।

**प्रयोगः**—गानक्रिया

गमकस्थायवर्णाद्या नानालङ्कृत्यलङ्कृता।
रागालपनमालप्तिर्भूरिभङ्गिमनोहरा।
प्रयोगाह्वा तथालापसंज्ञा साक्षरवर्जिता॥

कुम्भः

—रङ्गस्थले नाटकयोजना

स द्विविधः सुकुमारः आविद्धश्चेति।

भरतः

**प्रयोगातिशयः**—आमुखाङ्गम्

प्रयोगे तु प्रयोगं तु सूत्रधारः प्रयोजयेत्।
ततश्च प्रविशेत्पात्रं प्रयोगातिशयो हि सः॥

भरतः

यथा—स्वप्नवासवदत्ते नेपथ्ये सूत्रधारस्योत्सारणां श्रुत्वा अये कथं तपोवनेऽप्युत्सारणा। कथं मन्त्री पद्मावतीयजनैरुत्सार्यते इति उत्सारणाशब्दोऽत्र पूर्वकप्रयोगमुत्सार्य नाटकार्थसूचकः उत्सारणाप्रयोगश्चाङ्कोपक्षेपलक्षणः स खल्वतिशेते। सागरः

प्रयोग इति प्रस्तावनात्मकं। प्रयोगमिति नाट्यात्मकं भावितम्। एकस्तु शब्दो भेदान्तरेभ्यो व्यतिरेकमाह। द्वितीयोऽवधारणे। सूत्रधार एव यत्र प्रयोगे प्रयोगं समुद्गककवाटयुगलवद्योजयति स प्रयोगद्वयश्लेषणात् प्रयोगातिशयः। यथा—विक्रमोर्वश्यां - अथ कुररीणामिवाकाशे शब्दः। ऊरूद्भवा इति श्लोकः।

अभिनवगुप्तः

प्रयोगेतु प्रयोगन्तु सूत्रधारः प्रयोजयेत्।
ततश्चप्रविशेत्पात्रं प्रयोगातिशयो हि सः॥

भरतः

**प्रयोजनम्**

प्रयुज्यमानोऽभीष्टार्थः कारकादिसमन्वितः ।
नीयते यत्प्रमोदाय तत्प्रयोजनमुच्यते ॥

शारदातनयः

**प्ररोचना**—पूर्वरङ्गाङ्गम्

उपक्षेपेण कार्यस्य हेतुर्युक्तिसमाश्रया ।
सिद्धेनामन्त्रणा या तु विज्ञेया सा प्ररोचना ॥

भरतः

—अवमर्शसन्ध्यङ्गम्

प्ररोचना च विज्ञेया संहारार्थप्रदर्शिनी ।

भरतः

संह्रियमाणस्य निर्वाह्यमाणस्यार्थस्य दर्शिका प्रकर्षेण रोचत इति प्ररोचना । यथा—कासौ ज्वलन्नित्यादिवाक्यम् । युक्तिरित्यन्ये इदमङ्गं व्याहरन्ति । अत्रोद्देशक्रमत्यागे यत्केषाञ्चिदङ्गानां लक्षणं तत्क्रमानियमसूचनार्थम् ।

अभिनवः

—पूर्वरङ्गाङ्गम्

प्ररोचना सा यत्रैव प्रत्याख्यातोक्तवस्तुनः ।
प्रशंसया प्रेक्षकाणामुन्मुखीकरणं च यत् ॥

शारदातनयः

—भारत्यङ्गम्

पूर्वरङ्गे गुणस्तुत्या सभ्यौन्मुख्यं प्ररोचना ।

पूर्वं नाट्यात्प्रथमं गीततालवाद्यनृत्तानि नान्द्यादिकं च पाठ्यं व्यस्तं समस्तं च प्रयुज्यते यत्र रङ्गे रञ्जनाहेतौ स पूर्वरङ्गः । अस्य पूर्वरङ्गस्य प्रत्याहारादीनि नवान्तर्यवनिकाङ्गानि । गीतकादीनि दश बहिर्यवनिकाङ्गानि । प्ररोचना तु नाट्ये प्रवृत्तौ प्रधानमङ्गमिति लक्ष्यते । गुणस्तुत्या प्रस्तुतप्रबन्धार्थस्य प्रीत्यादिहेतुत्वप्रशंसनेन सामाजिकानां श्रवणावलोकनोत्साहोत्पादनं प्रकृतोऽर्थः प्रकर्षेण रोच्यते । उपादेयतया ध्रियतेऽनयेति प्ररोचना ।

रामचन्द्रः

जयाभ्युदयिनी चैव मङ्गल्या विजयावहा ।
सर्वपापप्रशमनी पूर्वरङ्गे प्ररोचना ॥

भरतः

प्ररोचनायाः कोऽर्थः । प्रसिद्धार्थप्रदर्शिनी प्ररोचनामिधीयते । यथा—अम्भोधिवारितरणे इत्यादि । अन्ये तु प्रस्तुतस्यैव काव्यस्य यन्निष्पन्नेन वस्तुना । कथनं सा प्ररोचना । मुखादिसन्धीनामवतारायादौ प्ररोचना कार्या ।

सागरः

भाविसिद्धिः प्ररोचना=भाविनोऽर्थस्य सिद्धिः सिद्धित्वेनोपक्रमणं प्रकर्षेण रोच्यते । अनया रूपकार्थ इति प्ररोचना । अन्ये तु सत्कारादेशनं प्ररोचनामाहुः । अन्ये तु अस्य स्थाने युक्तिं पठन्ति । युक्तिश्च सविच्छेदोक्तिः । यथा—पुष्पभूषितके 'भर्ता तवाह' मित्यादिसमुद्रदत्तवचनम् ।

रामचन्द्रः

प्ररोचना च विज्ञेया संहृतार्थप्रदर्शिनी ।

सागरः

प्ररोचना स्यात्फणितिरभूतस्यापि भूतवत् ।

सर्वेश्वरः

—शिल्पकाङ्गम्

गुणैरतिशयारोपः पदार्थस्य प्ररोचना ।
नेदं मुखं किमित्यादौ दृश्यते सा प्ररोचना ॥

शारदातनयः

—भारतीवृत्तिः

जयन्त्युदयनी चैव मङ्गल्या विजयावहा ।
सर्वपापप्रशमनी पूर्वरङ्गे प्ररोचना ॥

भरतः

**प्रलयः**— चित्राभिनयः

प्रलयस्तु सुखदुःखाद्यैः चेतसस्तु विसंज्ञिता ।
स्त्रीणां रत्यन्तसमये शुक्रचालनकालके ॥
तत्काले च मतिभ्रान्तिः स्त्रीजातीनामुदेष्यति ।
आलोलिताख्यदृष्टिश्च धुतं नाम शिरस्तदा ॥
हृदये मुकुलं बध्वा पुरोभागे तु कर्तरी ।
शरपञ्जरहस्तेन प्रलयस्य निरूपणम् ॥

विनायकः

—सात्विकभावः

श्रममूर्छामदनिद्राभिघातमोहादिभिः प्रलयः ।
निश्चेष्टो निष्प्रकम्पत्वादव्यक्तः श्वसितादपि ।
महीनिपातनाच्चापि प्रलयाभिनयो भवेत् ॥

भरतः

प्रलयो मदनिद्रारुक्प्रहारैरुपजायते ।
स च दुःखाभिषङ्गाभ्यां निश्चेतनतयोच्यते ॥

शारदातनयः

अभिषङ्गः सुखातिशयः ।

**प्रलोभनम्**

माधवस्य परिच्छेदव्यक्तिर्न भवतीतिवत् ।
प्रलोभनं गुणाख्यानपूर्वाभीष्टार्थलम्भनम् ॥

शारदातनयः

प्रयोजनार्थमर्थादिभिः प्रलोभनं प्रलोभः । यथा—मोटकाङ्के—शुवन्न आणं इत्यादि । मोटकाङ्कः—मृच्छकटिके अष्टमोङ्कः ।

सागरः

**प्रलोमिकं**—मेलरागः ( धीरशङ्कराभरणमेलजन्यः )
(आ) स रि ग प ध स.
(अव) स नि ध म ग स.

मञ्ज

**प्रवरललितम्**—षोडशाक्षरवृत्तम्
यमनसरगाः

भरतः

**प्रवल्हिका**—श्रव्यकाव्यम्

तत्र द्वयोर्विवादप्रधानमधिकृत्यं जायते सदसि ।
सार्धप्राकृतरचिता प्रवल्हिका चेटकप्रभृति ॥

भोजः

**प्रवालहस्तः**

तिर्यञ्चौ गजदन्तौ तु संयुक्तौ तु प्रवालकः ।
ऊर्ध्वेयं मुखसंयोगे दन्तक्षेत्रनिरूपणे ।
उभयोः पार्श्वसंयोगे मेषयुद्धे नियुज्यते ॥

विनायकः

**प्रवासविप्रलम्भः**

कः पुनरयं प्रवासो नाम । यस्यैते दैवजातयः नर्मश्रवण-सङ्कीर्तनादिभ्यो बिभ्यतीत्युच्यते । सत्यनुरागे परस्परं दैवादिज-नितदेशान्तरव्यवधानं प्रवासः । स दैवापन्न उत्तमः । धर्मापन्नो मध्यमः । अर्थापन्नः कनिष्ठः । अथैषत्रिविधोऽपि सामान्यतो विशेषतश्च प्रपञ्च्यमानः प्रायशो द्विपञ्चाशत्प्रकाराः प्रथते । तत्र सामान्यतो भूतपूर्वः अभूतपूर्वः साधारणः असाधारणः सहजरागो विस्रब्धरागः प्राप्तसमयः अप्राप्तसमयः सप्रति-विधानो निष्प्रतिविधानः सन्निकृष्टो विप्रकृष्टः सावधिर्निरवधिः अल्पकालो दीर्घकालः सानुबन्धो निरनुबन्धः प्रकाशकार्यः प्रच्छन्नकार्यः सोपसंहारो निरुपसंहारः नायिकानिमित्तः इति प्रकाराश्चतुर्विंशतिः ।

दैवापन्नश्चतुर्धा शापकृतः पापकृतः संभ्रमकृतः विभ्रमकृत इति ।

धर्मापन्नोऽपि चतुर्धा साभिप्रायो निरभिप्रायः सानुतापो निरनुताप इति ।

अर्थापन्नोऽपि साभ्यनुज्ञो निरभ्यनुज्ञः सोपधानो निरुपधान इति । दैवधर्मापन्नः प्रकृतिस्थः कोमलः कठोरः परिणत इति । दैवार्थापन्नस्तु ग्राम्यः नागरः उपनागरः विप्रकीर्ण इति । धर्मार्था-पन्नो हितः अहितः सुखः दुःखः इति । दैवधर्मार्थापन्नो विवृतः आयतः त्र्यश्रः चतुरश्र इति । षट्त्रिंशतः प्रवासानां षोडशानां तु कथ्यते ।

अथैकैकस्य त्रयः स्कन्धा भवन्ति प्राप्तिस्कन्धः व्याप्तिस्कन्धः समाप्तिस्कन्ध इति । तेषु प्राप्तिस्कन्धस्य प्रवासशङ्का प्रवासारंभः प्रियप्रस्थानं प्रियानुगमः प्रियाप्रश्नः प्रतिनिवृत्तिः प्रवासचर्या प्रवासवृत्तान्तः—इत्यष्टौ प्रकाण्डानि । व्याप्तिस्कन्धस्य वियुक्तस्वरूपं वियुक्तावस्था विरहोद्दीपनं विरहप्रतीकारः सहायाश्वासनं सहाय-सखीनायकानां स्वपरदोषोद्घाटनं उत्कण्ठाविनोदः सन्देशादानं-इति प्रवासावस्थाः ।

भोजः

एतेषामवान्तरभेदा उदाहरणानि च शृङ्गारप्रकाशे ज्ञेयानि ।

**प्रविचाराः**

न्यायस्वरूपज्ञानाय प्रविचारान्प्रचक्ष्महे ।
नानाविधास्तु गतयः प्रविचारा इति स्मृताः ।
चतुरैस्ते प्रयोक्तव्याश्शस्त्रमोक्षणकर्मणि ॥

वेमः

**प्रविभागः**—भक्तिः

एतावतोऽर्थभागस्य स्यादियान् शब्द इत्ययम् ।
प्रविभागः पदे वाक्ये महावाक्ये प्रतिष्ठितः ।
अन्वयव्यतिरेकाभ्यां शक्तिनिष्कर्ष एव सः ॥

साहित्यमीमांसा

**प्रविलोकितम्**—दर्शनम्

पार्श्वाभ्यां यत्प्रवृत्तं तत् प्रविलोकितमाश्रितम् ।

दिव्यदासः

प्रलोकितं परिज्ञेयं दर्शनं पार्श्वभागयोः ।

हरिपालः

**प्रवृत्तकम्**—आमुखाङ्गम्

कालप्रवृत्तिमाश्रित्य वर्णना या प्रयुज्यते ।
तदाश्रयाच्च पात्रस्य प्रवेशस्तत्प्रवृत्तकम् ॥

भरतः

यदा कालप्रवृत्तिमाश्रित्य काञ्चिदवलम्ब्य किञ्चिदनुवर्ण्यते तदाश्रयेण च पात्रस्य प्रवेशः । तत्कालप्रवृत्त्या स्वार्थीकृत्वात्प्र-वृत्तकम् । यथा-वेण्यां सत्पक्षा मधुरगिरः- इत्यादि ।

अभिनवः

यथा-शर्मिष्ठापरिणये नटनटीवाक्ये वसन्तसमयगानं व्यज्यते । वसन्तावतरणरुचिं दर्शयन्त्याऽनया शर्मिष्ठाया अवस्था प्रवर्णिता । अन्ये तुल्यकार्यप्रवर्तकमेव प्रवृत्तकमिच्छन्ति । यथा-गुरोर्विधातुं शुश्रूषामित्यादि ।

सागरः

कालसाम्यसमाक्षिप्तप्रवेशः स्यात्प्रवृत्तकम् ।

यथा-आसादितप्रकटेति (छलितरामे) ततः प्रविशति यथो-द्दिष्टो रामः । अत्र शरत्कालसाम्येन मुखस्वरूपस्येतिवृत्तरामपात्र-प्रवेशाक्षेपः ।

सुन्दरः

**प्रवृत्तिः**

पौरस्त्यादिभेदेन चतुर्विधेति केचित्। अन्ये पुनरन्यधा प्रवृत्तिं व्याचक्षते। दशविधा पुण्यप्रवृत्तिः। दशविधा पापप्रवृत्तिरिति। केचित्तु तामप्यन्यथाहुः। पञ्च बुद्धीन्द्रियाणि पञ्च कर्मेन्द्रियाणि तद्वारिका च पृथक्पृथक् दशप्रकारा प्रवृत्तिर्भवतीति। अथान्यमतं–प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः। तत्र वागारंभा द्वादश—आलापप्रलापादयः। बुद्ध्यारम्भा द्वादश—भावहावादयः। शरीरारंभा विलासादयः द्वादश। तत्र तत्रोदाहरिष्यन्ते। अन्यत्तु दर्शनम्। वेषविन्यासक्रमः प्रवृत्तिरित्युक्तम्। तत्र च पौरस्त्योढ्मागधीत्यादिना देशोपलक्षणेन देशप्रवृत्तिः। देशकालपात्रवयोऽवस्थाशक्तिसाधनाभिप्रायप्रत्ययविपरिणामनिमित्ताभिगमसङ्ग्रामविहारोपहारच्छलच्छद्माश्रमजातिवृत्तिविभवप्रकीर्णसङ्कीर्णविप्रकीर्णादयो वेषविशेषप्रवृत्तिहेतवः सङ्गृह्यन्ते।

भोजः

प्रवृत्तिः—विभवतः

यथा—शिरसि जटिलोऽहिगणमणि इत्यादि।

भोजः

—देशतः

ताटङ्कवल्गनतरङ्गितगण्डलेखं इत्यादि।

चेष्टाविशेषविन्यासक्रमो वृत्तिः। वेषविन्यासक्रमः प्रवृत्तिः। सा चतुर्विधा, पौरस्त्या, मागधी, दाक्षिणात्या, आवन्त्या चेति।

—पात्रतः

यथा—छणपिट्ठधूसरत्थणि इत्यादि।

—अवस्थातः

यथा—शाकुन्तले सप्तमेऽङ्के वसने परिधूसरे वसाना, इत्यादि।

—कालतः

यथा—कर्णे स्मेरं शिरीषं.........जयति मृगदृशां ग्रैष्मिको वेष एषः॥

—व्यक्तितः

यथा—अथ हिमशुचि भस्म भूषितं।

—(जातितः)

यथा—गलनिहितकुक्कुटानां......कुटीरकं हृद्गकुट्टिन्याः।

—(वयसः)

यथा—विरचित.........वृन्दैः कुमारकाणां विहितवतंसा इव ग्रामाः।

भोजः

आवन्ती दाक्षिणात्या च पाञ्चाली चोढ्मागधी।
चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोक्तृभिः॥

पृथिव्यां नानावेश वेषभाषाचाराः वार्ताः ख्यापयतीति वृत्तिः। प्रवृत्तिश्च निवेदने। समानलक्षणश्चासां प्रयोगश्चतुर्विधत्वकारणम्।

भरतः

—छद्मतः

यथा—जातं मे परुषेण भस्मरजसा तच्चन्दनोद्धूलनं। उदात्तराघवे।

भोजः

—आश्रमात्

यथा—चूडाचुम्बितकङ्कपत्र (महावीरचरित १)

भोजः

—विहारतः

यथा—शृङ्गाणि द्रुतकनकोज्ज्वलानि (माघ ८-३०)

—(छलात्)

यथा— अथाजिनाषाढधरः (कुमार सं ५-३०)

—निमित्ततः

यथा—प्रत्यग्रमज्जनविशेष, इत्यादि (रत्नावली १-२०)

**प्रवृत्तिः**

देशविशेषगता वेषभाषासमाचारवैचित्र्यप्रसिद्धिः। तत्र देशे देशे येष्वेव वेषादयो नैपथ्यं भाषा वा आचारो लोकशास्त्रव्यवहारः वार्ता कृषिपाशुपाल्यादि जीविका इति तान् प्रख्यापयन्ति। पृथिव्यादि सर्वलोकविद्याप्रसिद्धिं करोति। प्रवृत्तिर्बाह्यार्थे यस्मान्निवेदने निश्शेषवेदने ज्ञाने प्रवृत्तिशब्दः। प्रवृत्तयश्चतस्रः दाक्षिणात्या आवन्ती पाञ्चाली उढ्मागधीति।

भोजः

—शक्तितः

यथा - आर्द्राः स्रजोमलयजोदकमच्छमेकं इति।

—सङ्ग्रामात

यथा—आथामिपश्यन्निव विद्विषः पुरः (भारविः ३-५६)

—उपहारतः

यथा—न्यस्तालक्तकरक्तमाल्यवसनेत्यादि (मालतीमाधवे)

—अभिगमात्

यथा—गोराङ्गधात्तरुण्णा इत्यादि
(सरस्वतीकण्ठाभरणे ३-३६३ उदाहृतम्)

—विपरिणामतः

यथा—बभूव भस्मैव सिताङ्गरागः
कपालमेवामलशेखरश्रीः।
उपान्तभागेषु च रोचनाङ्कः
सिंहाजिनस्यैव दुकूलभावः॥

—व्यत्यासतः

यथा—प्रतिमूर्धजं निहितकर्णपूरकाः
रभसेन नारपददत्तकाञ्चयः।
परिवर्तिताम्बरयुगाः समापत-
द्वलयीकृतश्रवणकुण्डलाः स्त्रियः॥

—साधनतः

यथा—वासो जाम्बवपल्लवानि जघने गुञ्जाः स्रजोभूषणं ...
............यस्यागातिवधूजनेन शबरीसंवासतः शिक्षितः॥

—(अभिप्रायतः

यथा—सिहि वहुणाव अंस (गाथा सप्तशती २-७३)

भोजः

—नाट्यालङ्कारः

संशयव्युदासे प्रवृत्तिः। यथा—आशङ्कसे यदग्निमित्यादि-दुष्यन्तवाक्यम्।

सागरः

—लक्षणम्

एवं मयाऽत्र कर्तव्यमिति यन्निश्चितं वचः।
स्नेहाद्दाक्षिण्यतो वापि प्रवृत्तिस्सा निगद्यते॥

भोजः

यथा—मालतीमाधवे—कामन्दकीवाक्यम्।

—(संकीर्णतः)

यथा—क युवतिमार्दवं कच महापददारुणता इत्यादि।

—प्रकीर्णतः

यथा—मलिनवसणाणक अवेणि आण......

—(विप्रकीर्णतः)

यथा अथ स ललितयोषिद् भ्रूलताचारुशृङ्गम्
(कुमा. २-६४)

प्रवृत्तिकम्—आमुखाङ्गम्

प्रवृत्तं कार्यमाश्रित्य सूत्रभृत् यत्र वर्णयेत्।
तदाश्रयाच्च पात्रस्य प्रवेशस्तत्प्रवृत्तिकम्॥

भरतः

प्रवेणी—गीताङ्गम्

इयमेव पूर्वोक्ता वेणी प्रकर्षेण विरच्यमाना द्वादशगणा भवति। यथा—

गिरिचयगहने वातापाते जलनिधिपुलके सुरमुनि भवते सर्वगतत्वं पूजितमूर्ति॥

नान्यः

प्रवेशः—क्रिया (तालाङ्गम्)

मार्गशब्दे द्रष्टव्यम्।

प्रवेशकः

तत्र प्रवेशकः—प्रवेशयति पात्राणि रङ्गमिति प्रवेशकः। कथानुबद्धा नीचमध्यमाः ते प्रवेशकाः कर्तव्याः। रामस्य वनमधिवसतः क्व तथाविधः परिजनः सुग्रीवसख्यात्तु हनुमदादयः।

मातृगुप्तः, विटतापसविप्राद्यैर्मुनि कञ्चुकिभिस्तथा।
प्रवेशकमपीच्छन्ति सन्तस्संस्कृतभाषिभिः॥ इति प्रवेशकं वर्णयति।

अन्यस्तु प्रक्रमात्प्रवेशको नाम इत्याह। यथा—रेवतीपरिणये तृतीयेऽङ्के तापसः। शाकुन्तले तृतीये विप्रः। शशिकामदत्ते तृतीयेऽङ्के विटः। मायामदालसे तृतीयेऽङ्के गृध्रमिथुनं। कुम्भाऽङ्के तिलोत्तमाभानुमती संवादः। प्रवेशकेन कथासंग्रहणं कार्यम्। अनन्तरस्य पात्रस्य प्रवेशोऽभिधेयः। अङ्कमध्येऽसूचितस्य पात्रस्य प्रवेशो नैव विद्यते। स चाङ्कान्तरसन्धिषु कर्तव्यः। प्रवेशके नीच एव कर्तव्यः। यथा—शक्त्यङ्के वानरद्वयम्। यदा तु तापसादयः प्रवेशकास्सन्ति तत्र संस्कृतपाठ एव विशेषः। बहुपाठको न प्रवेशकः। बहुतरेऽपि वृत्तान्ते स्वल्पवचनैरसमापनीयः।

सागरः

प्रवेशकाः—अर्थोपक्षेपकाः

दिवसावसानकार्यं यद्यङ्के नोपपद्यते सर्वम्।
अङ्कच्छेदं कृत्वा प्रवेशकैस्तद्विधातव्यम्॥

विप्रकृष्टं तु यो देशं गच्छेत्कार्यवशानुगः।
अङ्कच्छेदेऽथ सङ्क्षेपान्निर्दिशेत्तं प्रवेशकैः॥

सन्निहितनायकोऽङ्कः कर्तव्यो नाटके प्रकरणे वा।
परिजनकथानुबन्धः प्रवेशको नाम विज्ञेयः॥

भरतः

दिवसोऽवसानं समाप्तिः यस्य तत्सर्वं यद्यङ्के प्रत्यक्षेण प्रदर्शयितुं न युज्यते तदा अङ्कच्छेदं कृत्वा प्रवेशकैः प्रदर्शनीयम्। अदृष्टमप्यर्थं हृदि प्रवेशयन्तीति प्रवेशकाः। चूलिका, अङ्कावतारः, अङ्कमुखः, प्रवेशकः विष्कम्भकश्चेहाभिप्रेतः।

अभिनवः

**प्रवेशः—तालक्रिया**

उत्तानस्यैव तस्यान्तरावर्त्याधस्तलं क्रमात् ।
अङ्गुलीकुञ्चनं यत्तु प्रवेशः परिकीर्तितः ॥

वेमः

**प्रवेशनम्—तारा**

पुटान्तरे प्रवेशो यः ।

अशोकः

बीभत्से च रसे स्मृतम् ।

कुम्भः

**प्रशंसोपमा—अलङ्कारः**

दृष्ट्वा तां विशालाक्षीं तुतोष मनुजाधिपः ।
मुनिभिस्साधितां कृच्छ्रात्सिद्धिं मूर्तिमतीमिव ॥

भरतः

**प्रशमनम्—स्वराङ्गम्**

प्रशमनं नाम तारगतानां स्वराणामेव विस्वरेणावतरणमिति ।

नान्यः

**प्रशमनम्—प्रतिमुखसन्ध्यङ्गम्**

प्रगयणस्य पाठान्तरम् ।

**प्रशस्तिः—शिल्पकाङ्गम्**

स्तुतिर्विद्याभिजात्यादेः प्रशस्तिरिति गण्यते ।
उत्पत्तिर्देवयजनादित्यादौ सा विलोक्यते ॥

उत्पत्तिः वीरचरि १-२१ शारदातनयः

**—निर्वहणसन्ध्यङ्गम्**

भरतैश्चराचराणां आशीराशंसनं प्रशस्तिः ।

यथा—बालरामायणे सम्यगित्यादिकं विभावकाद्याशंसनम् ।

सिंगः

नृपदेशप्रशान्तिश्च प्रशस्तिरमिधीयते । भरतः

यथा—उर्वीमुद्दामसस्यामिति भरतवाक्यम् । अभिनवः

प्रशस्तिश्शुभशंसना— जगतः कल्याणाशंसना प्रशस्तिः तच्च नायकस्तदन्यो वा पठति । यथा — कृत्यारावणे निरीतयः प्रजास्सन्त्वित्यादिरामवाक्यम् ।

रामचन्द्रः

**प्रशान्तम्—नाटकभेदः ( सुबन्धूक्तम् )**

प्रशान्तरसभूयिष्ठं प्रशान्तं नाम नाटकम् ।
न्यासो न्यास समुद्भेदो वीजोक्तिर्वीजदर्शनम् ॥

ततोऽनुद्दिष्टसंहारः प्रशान्ते पञ्चसन्धयः ।
सात्वतीवृत्तिरत्र स्यादिति द्रौहिणिरब्रवीत् ॥

स्वप्नवासवदत्ताख्यमुदाहरणमत्र तु ।
आच्छिद्य भूपाद्वैयसनादेवी मागधिकाकरे ॥

न्यस्ता यतस्ततो न्यासो मुखसन्धिरयं भवेत् ।
न्यासस्य च प्रतिमुखं समुद्भेद उदाहृतः ॥

पद्मावत्या मुखं वीक्ष्य विशेषकविभूषितम् ।
जीवन्त्यवन्तिकेत्येतदुद्ज्ञातं भूमिभुजा यथा ॥

उत्कण्ठितेन सोद्वेगं वीजोक्तिर्नामकीर्तनम् ।
एहि वासवदत्ते क्कयासीत्यादि दृश्यते ॥

सहावस्थितयोरेकं प्राप्यान्यस्य गवेषणम् ।
दर्शनस्पर्शनालापैरेतत्स्याद्वीजदर्शनम् ॥

चिरप्रसुप्तः कामो मे वीणया प्रतिबोधितः ।
तां तु देवीं न पश्यामि यस्या घोषवती प्रिया ॥

किं ते भूयः प्रियं कुर्यां इति वाग्यत्र नोच्यते ।
तमनुद्दिष्टसंहारमित्याहुर्भरतादयः ॥

युक्तिः प्राप्तिस्समाधानं विधानं परिभावना ।
एतान्यवश्यकार्याणि प्रशान्ते नाटके बुधैः ॥

शारदातनयः

**प्रसङ्गः—अवमर्शसन्ध्यङ्गम्**

प्रसङ्गश्चैव विज्ञेयो गुरूणां परिकीर्तनम् । भरतः

यथा—रत्नावल्यां वासवदत्तायाः इन्द्रजालिकस्यागमनं बन्धुकुलादागमनं बहुभावकरणम् ।

अभिनवः

अप्रस्तुतार्थख्यापनं प्रसङ्गः । यथा— वेण्यां - षष्ठेऽङ्के हा तात भीम इत्यादिवाक्यम् ।

सागरः

प्रसङ्गो महतां कीर्तिः—कीर्तिः संशब्दनम् । यथा—वेण्यां - युधिष्ठिरस्य निवापावसरे वाक्यानि । केचिदप्रस्तुतार्थवचनं प्रसङ्गमिच्छन्ति । यथा— वेण्यां द्रौपदीं प्रति सकीचकेत्यादि युधिष्ठिरवाक्यम् । अत्र युधिष्ठिरस्य अप्रस्तुतः शोकः ।

रामचन्द्रः

**प्रसन्नः—मुखरागः**

प्रसन्नः कान्तिभूषितः ।

शृङ्गारहास्ययोः कार्यः प्रसन्नस्त्वद्भुते तथा ।

सोमेश्वरः

प्रसन्नो निर्मले वीरे शृङ्गारेऽद्भुतहास्ययोः ।

वेमः

**प्रसन्नम्—दर्शनम्**

सस्मितभ्रूविलासं यत्तत्प्रसन्नमितीर्यते ।

वेमः

**प्रसन्नमध्यः**—वर्णालङ्कारः

तारद्वितयमध्यस्थो मन्द्रो यत्र प्रवर्तते ।
प्रसन्नमध्यमाहुस्तमलङ्कारं मनीषिणः ॥

पण्डितमण्डली

प्रयोगः—सा री गमा पधनी सा सानी धपमगरी सा।
अत्रवर्णतालः ।

जगदेकः

**प्रसन्नवदनम्**—नृत्तकरणम्

देहो रेखायुतो यत्र पादौ समनखायुतौ ।
शिरस्समं समा दृष्टिः प्रसन्नवदनाह्वयम् ॥

नन्दी

समदृष्टिस्तु सुरनारीवदुन्मेषनिमेषरहितं वीक्षणम् ।

**प्रसन्ना**—प्राकृते द्विपदी

विषमा—भ भ भ भ.
समा—स स स स.

विरहाङ्कः

—श्रुतिः

निषादस्य प्रथमा श्रुतिः । मण्डलीमते तारनिषादस्यैव ।
धैवतस्य प्रथमा श्रुतिः ।
निषादस्य द्वितीया श्रुतिः ।

सुधाः

**प्रसन्नादिः**—वर्णालङ्कारः

मन्द्रादारभ्य समारोहणं तारगतिं यावदसौ प्रसन्नादिः ।

मतङ्गः

अस्य प्रयोगः—

सा री गा मा पा धा नी सा
सा नी धा पा मा गा री सा

तालश्चच्चपुटः जग-मल्लः

प्रसन्नादिरसौ ज्ञेयस्तारो मन्द्रद्वयात्परः ।

जगद्धरः

मन्द्रं द्विरुच्चार्य सकृत्तु तारे गीते प्रसन्नादिमुदाहरन्ति ।

रघुनाथः

**प्रसन्नाद्यन्तः**—वर्णालङ्कारः

यत्राद्यन्तयोः प्रसन्नः मध्ये च तारः स प्रसन्नाद्यन्तः ।

मतङ्गः

अस्य प्रयोगः—

सा री ग म प ध नि सा .
सा नी ध प म ग रि सा .

तालः कुमुदः जगदेकः

**प्रसन्नान्तः**—वर्णालङ्कारः

तारादारभ्यावरोहे क्रमेण मन्द्रपर्यन्तं प्रसन्नान्तः ।

मतङ्गः

प्रयोगः—

स रि ग म प ध नि सा .
स नि ध प म ग रि सा .

अत्र लीलातालः जगदेकः

**प्रसभः**—मेलरागः

षड्जादिमूर्छनोपेतः प्रसभः पञ्चमोक्षितः ।

अहोबिलः

अयं भूपालीजन्यः स्यात् । प्रातर्गेयः

**प्रसरम्**—देशीनृत्तम् (उड्डुपाङ्गम्)

चतुरश्रस्थानकं च शिखरद्वितयं हृदि ।
आविद्धवक्रहस्ताभ्यां पार्ष्णिरेचितयान्वितम् ॥
मध्यसञ्चेन प्रसरमादितालाच्च यद्भवेत् ।
सव्यः पताकः प्रसृतः पार्श्वे वामः पुरोगतः ॥
पताकः स्याद्विपर्यासादङ्गानां प्रसरे भवेत् ।
मण्डलस्थानके पार्श्वे पताकौ प्रसृतौ यदि ॥
तत्तत्स्थाने कुञ्चितके शिखरद्वितयं हृदि ।
समसूच्या भुवं गत्वा सौष्ठवेन यदा भवेत् ॥
पुनः पश्चात्प्रचलनमाविद्धप्रसृतौ करौ ।
व्यावृत्य पुरतः पश्चात्परिवर्तनतो भवेत् ॥
संहृतस्थानके स्थित्वा भ्रमरीमाचरेत्ततः ।
प्रान्ते च चतुरश्रं स्यात्प्रसरोड्डुपमुच्यते ॥

वेदः

**प्रसरः**

प्रतिमुखसन्धेर्द्वितीयमङ्गं मातृगुप्तमते ।
प्रयत्नस्य निरोधनं प्रसरः ।

यथा—मायामदालसे पातालकेतुना मदालसाहरणं पातालकेतुना। मदालसावाक्ये भयं द्योत्यते ।

सागरनन्दी

**प्रसर्पितम्**—करणम्

यत्र वामो लतासंज्ञो रेचितस्त्वपरः करः ।
तद्दिक्कोद्धृष्टभूः पादो पदान्तरसमीपतः ॥
मन्दमन्दतरादेवं भवेदङ्गान्तरेण च ।
प्रसर्पितमिदं प्राहुर्देवदत्तनिरूपणे ॥

अत्र पादद्वयस्यापि पार्श्वयोस्स्यात्प्रसर्पणम् ।
यौगपद्यात्क्रमाच्चेति भट्टतण्डुरभाषत ।
समोत्सरितमत्तल्लीमत्र कीर्तिधरः पुनः ॥

ज्यायनः

युगपद्व्युत्क्रमादेवेति, पाठान्तरम् । अस्य विनियोगविषये "खगगता" विस्रशोकः पदानि खेचरसञ्चारविषय इति वेमः। व्योमयानगता चेति कुम्भश्च ।

प्रसवः—अवस्था

अपश्यतः फलप्राप्तिं यो व्यापारः फलं प्रति ।
परन्त्वौत्सुक्यगमनं प्रसवस्स उदाहृतः ॥

भोजः

—रागः

न्यासांशग्रहसहितो यदा तु षड्जो
निश्शेषस्वरपरिपूर्णतानिधानः ।
मध्यग्रामकरमणीयसर्वजातेः
जातस्स्यात् प्रसव इति स्फुटता न रागः ॥

नान्यः

मध्यमग्रामसंभूतो षड्जन्यासांशसंयुतः ।
मध्यमग्रामजातिभ्यः सर्वाभ्यः प्रसवस्स्मृतः ॥
भिन्नकैशिकवद् ज्ञेयौ रूपकालापकाविह ।
तद्विशेषपरित्यक्तौ न्यासमात्रेण भेदितौ ॥

कश्यपः

प्रसादः—काव्यगुणः

अप्यनुक्तो बुधैर्यत्र शब्दोऽर्थो वा प्रतीयते ।
सुखशब्दार्थसंयोगात्प्रसादः स तु कीर्त्यते ॥

भरतः

यत्रार्थे अनुक्तोऽपि बुधैः कष्टकल्पनया अव्याख्यातोऽप्यर्थः प्रयोजनं स्वयं जायते सोऽर्थो वैमल्याश्रयोऽपि । वैमल्यमुपचारात्सोऽर्थो वा काव्यस्य । वैमल्यं स्वयं जानन्ननुपयोगिपरिवर्जनात् । वैमल्यशब्दवाच्याज्जलस्येव पांसुभिः असंपर्काद्भवतीति वैमल्यमर्थस्य प्रसादः । सुखेति न प्रयत्नमपेक्षते ।

यच्छब्दार्थो यस्संयोगः शब्दविषय इत्यर्थः । कालमात्ररूप एव यत्र सन्धिः । अतएव शैथिल्यात्मा स शब्दगुणः प्रसादः।

अभिनवः

शैथिल्यं प्रसादः । गुणस्संप्लवात् । सत्वनुभवसिद्धः ।

वामनः

प्रसिद्धार्थपदन्यासात्प्रसाद इति कीर्तितः ।

प्रकाशवर्षः

शीघ्रार्थबोधकत्वं तु प्रसाद इति कथ्यते ।

मन्दारमरन्दे

अविद्वदङ्गनाबालं प्रकटं यत्प्रसादवत् ॥

साहित्यमीमांसायाम्

श्रुतिमात्रेण शब्दानां येनार्थप्रत्ययो भवेत् ।
साधारणस्समग्राणां स प्रसादगुणो भवेत् ॥

असमस्तपदन्यासः प्रसिद्धः कविवर्त्मनि ।
किञ्चिदोजः स्पृशन्प्रायः प्रसादोऽप्यत्र दृश्यते ॥

गमकानि निबध्यन्ते वाक्ये वाक्यान्तराण्यपि ।
पदानीवात्र कोऽप्येष प्रसादस्यापरः क्रमः ।

कुन्तकः

—निर्वहणसन्ध्यङ्गम्

प्रीत्युत्कर्षः प्रसादो वा विषयेपूपसेवनम् ।

सर्वेश्वरः

शुश्रूषाद्युपसंपन्नः प्रसादः प्रीतिरुच्यते ।

भरतः

यथा— एतावता तावन्मे इत्यादिवाक्यं रत्नावल्याम् ।

अभिनवः

—दृष्टिः

प्रसादे स्निग्धतारता ।

शारदातनयः

—वर्णालङ्कारः

भवेत्प्रतिकलं यत्र व्युत्क्रमस्तारमन्द्रयोः ।
तं प्रसादमलङ्कारमलङ्कारविदो जगुः ।
सरिसं संगमसं संपधनिसं इति प्रसादः ॥

पण्डितमण्डली

आद्यः कलानां यदि तारकः स्या-
दन्त्यश्च मन्द्रः तिसृणाममीषाम् ।
प्रसादनामा स भवेदितीह ॥ रघुनाथः

—(प्रबन्धे) नादः

स्वरस्थानपदानां यः प्रसादनमुपागतः ।
सप्रसादस्स्वरस्तेषु स्वं प्राह प्रसन्नकम् ॥

कुम्भः

—वर्णालङ्कारः (सञ्चारी)

पराश्चाधो यदायाति प्रथमः प्रथमस्वरः ।
तदा प्रसादनामानमलङ्कारं जगुर्बुधाः ॥
सरिस, रिगरि, गमग, मपम, पधप, धनिध

पण्डितमण्डली

प्रसाधनम्—संगीत शृङ्गाराङ्गम्

संभोगार्थं शरीरप्रतिकर्म प्रसाधनम् ।

भोजः

**प्रसारः**—वीणायामुभयहस्तव्यापारः

तले सङ्कुचिताङ्गुष्ठे चतुरङ्गुलिसम्मतौ।
कनिष्ठातर्जनीपार्श्वस्पर्शैस्तन्त्र्याः प्रसारकः॥

कुम्भः

**प्रसारणम्**—हस्तप्राणः

प्रसारणमिति ख्यातमङ्गुलीनां प्रसारणात्।

शृङ्गारः

**प्रसारकः**—वादनम् (उभयहस्तव्यापारः)

चतुरङ्गुलिसङ्घाते कुञ्चिताङ्गुष्ठके तले।
कनिष्ठातर्जनीपार्श्वस्पर्शैस्तन्त्र्याः प्रसारकः॥

शार्ङ्गः

**प्रसारिणी**—श्रुतिः

मध्यमस्य द्वितीया श्रुतिः।

**प्रसारितम्**—देशीस्थानम्

उपधानीकृतो बाहुर्जानुनी च प्रसारिते।
यत्र प्रसारितं तत्स्यात्प्रसुप्ते तत्प्रयुज्यते॥

वेमः

—शयनस्थितिः

एकं भुजमुपाधाय संप्रसारितजानुकम्।
स्थानं प्रसारितं नाम सुखसुप्तस्य कारयेत्॥

भरतः

—स्थानकम्

उपधानीकृतो बाहुः जानुनी च प्रसारिते।
यत्र प्रसारितं तत्स्यात्प्रसुप्ते तत्प्रयुज्यते॥

वेमः

नतमध्ये भुजं कृत्वा प्रसार्यं यदि जानुनी।
तत्स्यात्प्रसारिताभिख्यं तदा स्यात्सुखनिद्रिते॥

ज्यायनः

—पार्श्वम्

प्रसारितं मुखादौ तत्पार्श्वयोर्यत्प्रसारणात्॥

अशोकः

ऊर्ध्वस्थानां पदार्थानां कर्षणे बाहुयुग्मतः।
जलावतरणे पार्श्वं कर्तव्यं स्यात्प्रसारितम्॥

सोमेश्वरः

**प्रसारितः**—अधरः

अधरोष्ठो विनिष्क्रान्तः प्रसारित उदाहृतः।
रतौ रागविलेपे च रदनक्षतवीक्षणे॥

सोमेश्वरः

—बाहुः

प्रसरत्यग्रदेशे यो बाहुरस्स्यात्प्रसारितः।
आदानेऽसौ फलादीनां याचनेऽपि नियुज्यते॥

अशोकः

अनुधावन् पुरोदेशं समाख्यातः प्रसारितः।

ज्यायनः

**प्रसारिताः**—चरणाङ्गुल्यः

अङ्गुल्यः सरलाः स्तब्धाः यास्ता उक्ताः प्रसारिताः।
नियुज्यन्ते बुधैरेताः स्वापे स्तम्भेऽङ्गमोटने॥

अशोकः

—पादाङ्गुल्यः

ऋज्व्यस्स्तब्धा यदाङ्गुल्यः तदाख्याताः प्रसारिताः।
स्तम्भे च मोटने स्वापे प्रयुज्यन्ते प्रयोक्तृभिः॥

सोमेश्वरः

**प्रसिद्धिः**—लक्षणम्

वाक्यैस्सातिशयैर्युक्ता वाक्यार्थस्य प्रसाधकैः।
लोकप्रसिद्धैर्बहुभिः प्रसिद्धिरिति कीर्तिता॥

भरतः

प्रसाधकैः—प्रकृष्टसाधकैः। प्रसिद्धैः—पूर्वमेव सिद्धैः।

यथा—गदायुद्धे येनेन्द्रस्य चेति दुर्योधनवाक्यम्। अत्र वाक्यार्थस्य साधका एव भगवतोर्विष्णोः पारिजाताहरणलीला-वटपत्रशयनादयः। अन्ये तु प्रसादकैरलङ्कारैभिः—इति वदन्ति।

**प्रसृतः**—श्वासः

मुखाद्यो निर्गतो दीर्घः यः शब्दः प्रसृतश्च सः।
प्रसुताभिनये प्रोक्तोऽशोकमल्लेन धीमता॥

अशोकः

**प्रसृता**—द्विपदी

द्वौ पञ्चमात्रिकौ एकश्चतुर्मात्रिकः।
जः चतुर्मात्रिक एकः जः चतुर्मात्रिकः य।

विरहाङ्कः

**प्रसृतौ**—पुटौ

आयामितौ तौ प्रसृतौ वीरे हर्षे च विस्मये।

वेमः

**प्रसेनावली**—मेलरागः (गमनश्रममेलजन्यः)

(आ) स म प ध नि स.
(अव) स नि प म ग रि स.

मञ्ज

प्रस्तारः

अथ प्रस्तारसंभूताः प्रत्ययास्सन्ति विस्मयाः ।
तेषु पञ्चाङ्गसंभूतः प्रस्तरः कथ्यतेऽधुना ॥
(अत्र पञ्चाङ्गमिति अनुद्रुतद्रुतलघुगुरुप्लुतानि पञ्च)

प्रस्तारेऽस्मिन्विजानीयादल्पं प्रत्यधिकं महत् ।
इच्छातालं लिखेत्पूर्वं दक्षिणाद्वामगामिनम् ॥

तथा स्थूलादिसूक्ष्मान्तं यथा संभवयोगतः ।
तमेव विपर्यीकृत्य प्रस्तारः प्रस्तृतो भवेत् ॥

वामान्त्यमहतोऽधस्तादल्पं विन्यस्य दक्षिणे ।
यथोपरि तथाशेषं वामे स्थूलीकृतं न्यसेत् ॥

योगाङ्गं यत्ततो वामे लिखेदेवं पुनः पुनः ।
सर्वानुद्रुतपर्यन्तं तथा संख्यां विनिक्षिपेत् ॥
(एष अनुद्रुतान्त प्रस्तारः)

संख्या—तालप्रस्तारः

इत्यङ्गयुक्तो यस्तालः तस्य भेदाः कतीतितः ।
पृच्छति प्रसभं तस्य वक्तुं संख्याङ्कसन्ततिम् ॥
(इतीति—अनुद्रुतान्त प्रस्तारलक्षणोक्ताङ्गविन्यासक्रमेणेत्यर्थः)

प्रकल्प्याच्युतरायोऽसौ वक्ति लक्ष्यविचक्षणः ।
पृच्छकेच्छा तालजातान् शुद्धांशसमकोष्ठकात् ॥

तिरश्चीनान्वामपूर्वं विलिख्याथाङ्कयोजनान् ।
एकद्वन्द्वक्रमान्न्यस्य योजयेद्वामसंभवान् ॥

अङ्कानन्त्योपान्त्यतुर्याष्टमद्वादशकोष्ठगान् ।
तुर्याष्टमद्वादशानामभावे तु लिखेत्क्रमात् ॥

तृतीयं सप्तमं चैकादशं चैव पुनः पुनः ।
चन्द्राद्याद्यन्तभेदास्ते मीयन्तेऽत्र समुद्भवाः ॥
(चन्द्रा अनुद्रुताः

अनुद्रुती द्रुतस्यार्धं विन्दुमात्रासपादलः ।
दलौ चन्द्रदलावक्रौ विधुगौ विन्दुगौ ततः ॥

चन्द्राकाशयुतो वक्रः प्लुतः स्याद्वादशे गृहे ।
ततः परं तथैकैककलावर्धनयोगतः ॥

लिखेदुपरिकोष्ठानां तदधः कोष्ठसंख्यया ।
तावन्त एव भेदाः स्युरित्युत्तरमथोच्यताम् ॥
(चन्द्रः अनुद्रुतः । आकाशो द्रुतः । वक्रो गुरुः । कलेत्यङ्गम्)

नष्टम्—तालप्रस्तारः

येन तावतिथो भेदः किंरूपमिति पृच्छति
तन्नष्टमुत्तरं पश्य प्रोक्तमच्युतभूभुजा ॥

कतिभेदा नष्टताले तावत्संख्यां क्रमाल्लिखेत् ।
तत्प्रान्त्यपातनस्थानं पात्यास्तूपान्त्यपूर्वकाम् ॥

पातस्थाने नष्टसंख्या प्रथमं पातयेत्ततः ।
शेषतः पातयेदङ्कान् क्रमादेकैककोष्ठजान् ॥

एककोष्ठाङ्कपातेन भवेदेकद्रुतागमः ।
निरन्तरे कोष्ठयुगे पातिते मात्रिकागमः ॥

मात्राहेतोस्तृतीये तु पातिते लो गुरुर्भवेत् ।
यत्राङ्कपातनाभावो चतुर्थी गः प्लुतो भवेत् ॥

यत्राङ्कपातनाभावो भवेत्तस्मादनुद्रुतः ।
अङ्काभावे तालपूर्तिपर्यन्तं चन्द्रलेखनम् ॥

संप्रदायं प्रवक्ष्यामि द्रुतलाभादनन्तरम् ।
कोष्ठमेकं त्यजेत्तेन पातितेन समन्वितम् ॥

लघुलाभात्परं कोष्ठद्वयं ताभ्यां सह त्यजेत् ।
गुरुलाभे तु तेभ्योऽथ त्यजेत्कोष्ठत्रयं तदा ॥

प्लुतलाभे तथा तेभ्यः त्यजेत्कोष्ठचतुष्टयम् ।
अनुद्रुतस्त्वपात्योऽथ तस्मात्त्यागो न लभ्यते ॥

एवं कुर्यान्नष्टभेदमात्रापर्यन्तगां क्रियाम् ।
तथा नष्टस्य भेदस्य रूपमायाति कौतुकम् ॥

उद्दिष्टम्—तालप्रस्तारः

भेदमेकं समालिख्य कतमोऽयं वदेत्यथ ।
यः पृच्छति तदुद्दिष्टं तस्योत्तरमिहोच्यते ॥

उद्दिष्टे च लिखेत्संख्यासन्ततिं नष्टकात्पुनः ।
नष्टोत्पन्ने तु पतितानङ्कानङ्के निपातयेत् ।
तत्र शेषीकृताङ्कः स्यादुद्दिष्टस्योत्तरं वभौ ॥

पातालसंख्या—तालप्रस्तारः

अङ्गान्यनुद्रुतादीनि तालेऽस्मिन् प्रथिते सति ।
भवन्ति हि कतीत्येवं प्रश्नः पाताल उच्यते ॥

संख्यापङ्क्तेरधः पङ्क्तिं समकोष्ठां लिखेदथ ।
तत्राप्येकाङ्कयुग्माङ्कक्रमात्कोष्ठद्वयं लिखेत् ॥

ततोऽत्यन्तसमं संख्या पङ्क्तथङ्कं च स्वपङ्क्तिगान् ।
उपान्त्यादीन् यथायोगं प्रतीन्त्यक्त्वा पुरो लिखेत् ॥
(प्रतीनिति । प्रतिनिधीभूतान्तृतीयसप्तमैकादशकोष्ठाङ्कान्)

अच्युतरायः

तत्संख्याकोष्ठपर्यन्तं तदन्त्याद्यङ्कपञ्चकैः ।
मीयन्तेऽनुद्रुतादीनां क्रमादङ्गानि लक्ष्यतः ॥

अनुद्रुतमेरुः—तालप्रस्तारः

अथानुद्रुतमेरोस्तु लक्षणं ब्रूमहेऽधुना ।
कतिस्वेच्छागते ताले कृतेऽछिन्ने सुधाकराः ॥
(अछिन्ने सुधाकरा इति । प्रस्तारिता अनुद्रुताः कतीति सम्बन्धः)

तत्संख्यां समकोष्ठाङ्कां तिरश्चीनामधोलिखेत् ।
पङ्क्तिमेकां ततश्चोर्ध्वमूलाद्धीनैककोष्ठकाम् ॥
(तदिति । इछागततालसंख्यामनुद्रुतसंख्यामिति भावः)

ततःपरं द्विद्विकोष्ठहीनत्वात्सर्वपङ्क्तयः ।
प्रभवन्त्यन्तपर्यन्तं तास्वङ्कावलिरुच्यते ॥
(तासु–पङ्क्तिष्वित्यर्थः)

एकैकं विलिखेत्तासां कोष्ठयोः पूर्वपूर्वयोः ।
तत्राधः पङ्क्तिकोष्ठेषु विषमेषु यथाक्रमम् ॥

लिखेदन्तोपान्त्यतुर्याष्टमद्वादशकोष्ठगान् ।
अङ्कान्समेषु कोष्ठेषु त्यक्त्वान्तं पूर्ववल्लिखेत् ॥

तुर्याष्टमद्वादशानां अभावे तु यथाक्रमम् ।
तृतीयं सप्तमं चैकादशं प्रतिनिधिं लिखेत् ॥

अथोर्ध्वपङ्क्तौ विषमकोष्ठेष्वन्त्यादधस्तनम् ।
अन्त्यप्रतिनिधीकृत्योपान्त्यादिग्रहणं भवेत् ।
समेत्वन्त्यादिपञ्चानां नास्ति प्रतिनिधिस्तथा ॥
(पञ्चेति । अन्त्योपान्त्यतुर्याष्टमद्वादशाः)

अस्मिन्मेरावधः पङ्क्तेरेकादिविषमे गृहे ।
ऊर्ध्वपङ्क्तिक्रमेणैव तालदर्शनमुच्यते ॥

एकत्रिपञ्चसप्तादि चन्द्रतालान्विनिर्दिशेत् ।
समोर्ध्वपङ्क्तिकोष्ठस्थैः क्रमादङ्कैरुदीरयेत् ॥

चन्द्रहीनां चन्द्रयुग्मान् चतुष्षट्चन्द्रपूर्वकान् ।
तालान्प्रस्तारसञ्जातानच्युतेन्द्रो न्यरूपत ।
इत्युक्तलक्षणं मेरुर्लक्ष्यान्निर्दिशति स्वयम् ॥

अनुद्रुतद्रुतमेरुः-- तालप्रस्तारः

प्रस्तारेऽनुद्रुते बिन्दुर्हीनैकद्व्यादिसंभवान् ।
तालान् दर्शयितुं मेरुः प्रोच्यतेऽच्युतभूभुजा ॥

शशाङ्कमेरुवत्कोष्ठान् द्रुतमेरुर्विलिख्यताम् ।
तत्र पङ्क्तिषु सर्वासु प्रथमे प्रथमे गृहे ॥

लिखेदेकाङ्कमेकाङ्कं ततोऽधः पङ्क्तिरुच्यते ।
त्यक्तोपान्त्यतयान्त्यादीनभावे प्रतियोगतः ॥

संयोज्य विलिखेदग्रे तालसंख्याग्रहावधि ।
अथोर्ध्वपङ्क्तौ तस्योपान्तस्याधस्थं परिग्रहेत् ॥

तथा पञ्चकसंयोगं अत्र लेख्यं पुनःपुनः ।
तदात्वेवं प्रतिनिधिं न कुर्यादत्र पूर्ववत् ॥

तालानूर्ध्वक्रमेणैव क्रमाद्द्रुतविवर्धितान् ।
एकद्वित्रिचतुःपञ्चद्रुततालान्विलोकयेत् ।
धीमत्तरैश्च द्रष्टव्यं समेषु विषमेषु च ॥

अनुद्रुतलघुमेरुः—तालप्रस्तारः

लघुमेराविष्टतालद्रुतद्विगुणसंख्यया ।
कोष्ठसंख्यां लिखित्वात्र कुर्यात्कोष्ठत्रयोनितान् ॥

पङ्क्तिं द्वितीयां तदनु तदूर्ध्वोर्ध्वास्तु पङ्क्तयः ।
चतुश्चतुः कोष्ठहीनाः कार्याः प्रान्तसमाङ्किताः ॥

तास्वादिपङ्क्तौ प्रथमे कोष्ठद्वन्द्वे लिखेत्क्रमात् ।
एकद्व्यङ्कावथोर्ध्वासु सुपङ्क्तिष्वादिमे उभे ॥

क्षिपेदेकाङ्कमेकाङ्कं शेषकोष्ठेष्वथ क्रमात् ।
लिखेत्तुर्यान्परित्यज्य क्रमादन्त्यादियोगतः ॥

तत्राष्टमद्वादशयोरभावे प्रतियोगतः ।
उपरिस्थासु तुर्याधस्तुर्या प्रतिनिधिर्भवेत् ॥

एवमन्त्यादिभिर्युक्तमङ्कमग्रे पुनः पुनः ।
ऊर्ध्वहीनैर्द्व्यादिकांश्च लेख्यं द्रुतवद्द्रुतम् ॥
लघुतालान्वदेत्सुधीः ।

अनुद्रुतगुरुमेरुः—तालप्रस्तारः

गुरुमेरावधः पङ्क्तिः सप्तकोष्ठोनिता परा ।
द्वितीयाद्याः पङ्क्तयस्तु वसुकोष्ठोनिता मताः ॥

इत्थमन्त्यसमे मेरौ लेख्याधः पङ्क्तिकादिमान् ।
एकद्व्यङ्कक्रमान्न्यस्य लिखेदन्त्यादिपञ्चकम् ॥

अष्टमाङ्कत्यजेत्तत्र पुनः पुनरयं सुधीः ।
तत्र तुर्यादिकोष्ठानामभावे प्रतिकल्पनम् ॥

अथोपरि गतास्वत्र पङ्क्तिष्वाद्याद्यकोष्ठके ।
लिखेदेकैकमत्राङ्कमन्त्यादीन् चतुरः क्रमात् ॥

अष्टमस्याष्टमाधस्तं कृत्वा प्रतिनिधिं लिखेत् ।
तुर्यादिष्वप्रतिनिधिरथ तालान्विलोकयेत् ॥

अधोभागादाशिखान्तं गुरुहीनमथैकगम् ।
द्विगात्रिगचतुर्गादि तालरूपं विलोकयेत् ॥

अनुद्रुतप्लुतमेरुः—तालप्रस्तारः

प्लुतमेरावधःपङ्क्तिकोष्ठैकादशहीनतः ।
द्वितीयां विलिखेत्तत्र तदूर्ध्वाः पङ्क्तयः पराः ॥

द्वादश द्वादशोना स्युः दक्षिणाग्रसमन्विताः ।
तत्रादिपङ्क्तौ प्रथमे कोष्ठयुग्मे यथाक्रमम् ॥

एकां द्व्यङ्कां लिखेत्पूर्वं पराख्याद्यायकोष्ठके ।
क्षिपेदेकाङ्कमेकाङ्कं ततोऽधः पङ्क्तिलेखनम् ॥

त्यक्त्वा द्वादशमन्त्यादीन् (दिं ?) प्रतियोगात्पुरो लिखेत्।
तत्रोर्ध्वपङ्क्तयस्सर्वाः तथान्त्यादिविधानतः ॥

द्वादशस्य द्वादशाधः कोष्ठाङ्केन युतं पुरः ।
पूरयेदङ्कविन्यासैर्मेरुकोष्ठे न तां परम् ॥

यानि बिन्दुमुखानीष्टतालस्थानानि तान्यथ ।
कूटीकृत्य लिखेदादौ तत्रायुक्ततया यदि ॥

शेषाङ्कं वर्तते चेत्तद्वामभागे निवेशयेत् ।
प्रस्तारे जनकोऽयं स्यात्तालो जन्यक्रमं ब्रुवे ॥

अच्युतरायः

द्रुतप्रस्तारे नष्टोद्दिष्टपातालमेरुलक्षणानि, शार्ङ्गदेव कुम्भकर्णादि ग्रन्थेषु द्रष्टव्यानि । अतिविस्तरभिया नात्र दत्तानि । अनुद्रुतविरामप्रस्तारयोः शार्ङ्गदेवादिग्रन्थेष्वनुक्तत्वात्तयोर्विशेषाः प्रदर्श्यन्ते ।

विरामप्रस्तारः—तालप्रस्तारः

यानि बिन्दुमुखानीष्टतालस्थानानि तान्यथ ।
कूटीकृत्य लिखेदादौ तत्रायुक्ततया यदि ॥

शेषाङ्कं वर्तते चेत्तद्वामभागे निवेशयेत् ।
प्रस्तारे जनकोऽयं स्यात्तालो जन्यक्रमं ब्रुवे ॥

पूर्वप्रस्तारवत्कार्यस्तत्रात्पत्वमहत्वयोः ।
क्रमं ब्रवीमि महतः प्लुतस्याथो गुरुं न्यसेत् ॥

गुरुश्च महतोऽधस्तात्सविरामलघुं न्यसेत् ।
तस्याधस्ताच्च दलघुस्तस्यचाथो विरामदः ॥

तदधश्शुद्धबिन्दुश्च महदल्पविधीन् स्वयम् ।
तस्यां तु प्रथमे कोष्ठद्वयेत्वेकैकमालिखेत् ॥

द्वितीययुग्मे द्वौ द्वौ च ततो युग्मे तृतीयके ।
पञ्च पञ्च लिखित्वाऽथ सप्तमे मन्दिरे पुनः ॥

रुद्रसंख्यां विनिक्षिप्य तदूर्ध्वे लक्ष्म कथ्यते ।
द्वितीयं च तृतीयं च चतुर्थं षष्ठमष्टमम् ॥

द्वादशाङ्कं च संयोज्य लिखेत्कोष्ठेऽग्रिमे तथा ।
सैकीकृत्य प्लुतस्थाने तदग्रे पूर्ववल्लिखेत् ॥

यथालाभं लिखेदग्रकोष्ठे कोष्ठे पुनः पुनः ।
एवमन्त्यं विहायाङ्कसमूहे लिखिते सति ॥

क्रमाद्द्व्यङ्गभूतानां तालानां भेदवाचकाः ।
पूर्वादयं क्रमः प्रोक्तः प्लुतादद्रुतमुच्यते ॥

उपान्त्यादिक्रमेणैव द्रुताद्याद्यन्तसूचकाः ।
मात्रामात्राक्रमं तेषां कोष्ठानां ब्रूमहेऽधुना ॥

द्रुतो विरामदो लोऽथ बिन्दुयुक्तो विरामदः ।
विरामलो विरामान्तद्रुतयुक्तो लघुर्गुरुः ।
सविरामौ दलौ तस्माद्गौ शेखरबिन्दुगौ ॥

प्लुतो विरामान्तबिन्दुद्वययुक्तो गुरुस्तथा ।
दपौ विरामद्रुतपौ लपावित्यर्धबिन्दुना ॥

विवर्धितानां तालानां प्रस्तारेण समुत्थितान् ।
भेदानङ्कान्वदन्त्येते तत्तत्कोष्ठगतान् क्रमात् ॥

विरामपातालः—तालप्रस्तारः

वक्ष्ये विरामपातालसंख्यापङ्क्तिमथ क्रमात् ।
समकोष्ठयुतां पङ्क्तिं कृत्वा तत्राङ्कयोजनाम् ॥

ब्रूमस्तत्रादिमे कोष्ठद्वये त्वेकैकमालिखेत् ।
द्वितीयकोष्ठयुग्मे तु द्वौ द्वावङ्कौ ततःपरम् ॥

पञ्चमे पञ्च षष्ठे षट् सप्तमे दश पञ्च च ।
अष्टमेऽष्टादशाङ्कं च पीठिकां विलिखेदथ ॥

नवमादिषु कोष्ठेषु लक्षणं क्रमयोगतः ।
विहाय वामसंस्थानां लिखेदङ्कान्प्रयत्नतः ॥

द्वितीयं च तृतीयं च तुर्यं षष्ठं तथाष्टमम् ।
एकादशं च संयोज्य वामभागगतांस्तथा ॥

द्वितीयशिरसस्थानं कोष्ठाङ्केन युतं तथा ।
दशादिसमकोष्ठेषु युताङ्केत्वेकहीनतः ॥

लिखेदेवं विधानेन संख्याकोष्ठावधेः क्रमात् ।
तथोपान्त्यादिभेदेन मीयन्ते स्वस्वभेदजः ।
सर्वद्रुतादयस्तस्मात्पातालोऽयमितीरितः ॥

विरामप्रस्तारेनष्टम्

ब्रूमो विरामप्रस्तारे नष्टतालस्य दर्शनम् ।
अन्त्याङ्के शिष्टनष्टाङ्कं परित्यज्याथ शेषतः ॥

पातयेद्वामभागङ्कान् पूर्वपूर्वान् प्रयत्नतः ।
प्रत्यङ्के पतिताङ्के य अन्त्ये संत्यज्य शेषतः ॥

तालाङ्गान्युद्धरेदेवमन्त्यं त्यक्त्वा पुनः पुनः ।
एककोष्टाङ्कपातेन स्याद्विरामद्रुतागमः ॥

कोष्ठद्वयाङ्कपातेन निरन्तरतथा यदि ।
लघुलाभो भवेत्तेन तथा कोष्टत्रये यदि॥

पतिते स विरामो लः समायाति ततःपरम् ।
विरामलघुहेतोस्तु तुरीये पतिते सति॥

पूर्वलब्धविरामाङ्कलघुरेव गुरुर्भवेत् ।
गुरुहेतोस्तुरीये तु पतिते सति लब्धगः ॥

प्लुतो भवेत्तथा पाते कोष्ठे शुद्धद्रुतागमः ।
सविरामद्रुते प्राप्ते तथा कोष्ठौ वृथा त्यजेत् ॥

यदि शुद्धलघौ प्राप्ते ताभ्यां कोष्ठद्वयं त्यजेत् ।
स विरामे लघौ प्राप्ते तेभ्यो गेहत्रयं त्यजेत्॥

गुरुलाभे तथा कोष्ठत्रयस्त्याज्या निरन्तरम् ।
प्लुतलामे तथा पञ्च कोष्ठत्यागो निरन्तरम्॥

यथा शुद्धद्रुते लब्धे त्यजेत्तेनैकमन्दिरम् ।
एवं नष्टोत्थितस्तालो यद्यर्धद्रुतहीनवान् ।
तथा वामान्तिमे व्योम्नि न्यसेन्नष्टोत्तरं तथा॥

अच्युतरायः

एवमेव विरामप्रस्ताराः शेषा द्रष्टव्याः ।

**प्रस्तारः**— गीताङ्गम्

चतुरश्रतालेनाष्टभिर्गणैर्भवति, मन्द्रस्वरेण ।
त्र्यश्रतालदक्षिणमार्गेण चतुर्विंशतिगणैर्भवति ॥

नान्यः

तानः

षड्जग्रामे नारदीयतानः ।
ग म ध नि स रि ?

नान्यः

छन्दसि स्वरे ताले अङ्गानुसारि प्रस्तरणम् । अङ्गमिति छन्दसि गुरुलघु । स्वरे स रि ग म प ध नि तालेऽनुद्रुतद्रुतलघुगुरुप्लुतविरामाः, षडङ्गानि विरामेण विना पञ्चाङ्गानि, अनुद्रुतविरामाभ्यां विना चतुरङ्गानि ।

— वर्णालङ्कारः

प्रस्ताराख्यो भवेद्युक्तक्रमरेचितमध्यगाः ।
रिषभादिस्वरास्सर्वे दीप्ता स्युः स्थायिनं विना ॥
सरिस सगमस सधनिस.

जगद्दरः

—वर्णालङ्कारः (सञ्चारी)

मूर्छनायां क्रमेणैव विषमौ च समौ स्वरौ ।
निगद्येते यदा तस्मिन्स प्रस्तारोऽभिधीयते ॥
सगरिम गपमध पनि,

लक्ष्मणः

एकान्तरसमुच्चारः षड्जादीनां क्रमाद्यदि ।
द्विस्वरा स्वात्कलाचैका यत्र प्रस्तार उच्यते ॥
सग रिम गप मध पनि.

जगद्दरः

स्वरद्व(त्र)यान्मुक्तमध्यस्वरान्मुक्तस्वरादिकम् ।
तादृशं युग्ममारोहे चेत्प्रस्तारस्तदोदितः ॥
सग रिम गप मध पनि इति प्रस्तारः ।

पण्डितमण्डली

—वर्णालङ्कारः

कलासु तासु प्रत्येकमन्त्यस्तारो यदा भवेत् ।
तदा प्रस्तार नामानमलङ्कारं प्रचक्षते ॥
सां रिसं गमसं पधनिस.

पण्डितमण्डली

**प्रस्थानम्**—नृत्तरूपकम्

घटचेट्यादिनायिकं कैशिकीवृत्तिबहुलं बहुताललयात्मकं, सुरापानराजितं, विटोपनायकं, दासादिनायकं च । यथा—शृङ्गारतिलकं ।

सागरनन्दी

प्रस्थानं कैशिकीवृत्तियुतं हीनोपनायकम् ।
आपानकेलिललितं लयतालवशानुगम् ॥

दासादिनायकं द्व्यङ्कं विटचेटादिनायकम् ।
मुखनिर्वहणोपेतं शृङ्गारतिलकं यथा ॥

शारदातनयः

—नृत्यरूपकम्

प्रथमानुरागमानप्रवासशृङ्गारसंश्रयं यत्स्यात् ।
प्रावृड्संतवर्णनमन्यद्वापि सोत्कण्ठम् ॥
अन्ते वीररसाढ्यैर्निबद्धमेतच्चतुर्भिरपसारैः ।
प्रस्थानमिति ब्रुवते प्रवासमुपलक्षयेत्सुधियः ॥

अपसारैरिति । निष्क्रामैरित्यर्थः ।

भोजः

**प्रस्थानम्**

गजादीनां गतिं कुर्यात् कृत्वा प्रवसनं तथा ।
अल्पाविद्धं सुमसृणं तत्प्रस्थानं प्रचक्षते ।
अत्राल्पोद्धतं सुकुमारबहुलनृत्तं प्रयोज्यम् ॥

वेमः

प्रस्फुटः—देशीतालः

लैं दौं भो दौं गुरुदौं च गुरुश्च प्रस्फुटाह्वये ।

13-मात्राः । तालप्रस्तारः

प्रस्फुरा—हनुः

द्रुतप्रचलिता किञ्चिद्विकासा प्रस्फुरा हनुः ।
शीते शीतज्वरे तस्याः प्रयोगः कथितो बुधैः ॥

सोमेश्वरः

प्रहसनम्—रूपकम्

तद्द्विविधं शुद्धं सङ्कीर्णं च । आद्यं परिव्राट् तापसद्विजरन्यै-रपि हास्यकुशलैरारब्धं । सङ्कीर्णं वेश्याविटनपुंसकादिभूषितं । प्रथमं शशिविलासादि । द्वितीयं भगवदज्जुकादि । अस्य च द्वावङ्कौ भवतः । मुखनिर्वहणसन्धिश्च । नखकुट्टत्त्वाह—वृत्त्याऽऽर-भाद्या शून्यं शून्यं प्रहसनमिति ।

सागरनन्दी

भाणवत्स्यात्प्रहसनं तत्त्रिधा परिभिद्यते ।
शुद्धं क्वाप्यथ सङ्कीर्णं क्वचिद्वैकृतमित्यापि ॥

तत्र श्रोत्रियनिर्ग्रन्थशाक्यादीनां यथायथम् ।
भाषाचेष्टिततद्रूपहास्यवाक्यसमन्वितम् ॥

चेटचेटीविटव्याप्तं शुद्धं प्रहसनं भवेत् ।
उद्घात्यकादिवीथ्यङ्गैः मिश्रं सङ्कीर्णमुच्यते ॥

विटकामुकचेष्टादिवचो वर्षधरैस्तु यत् ।
परिव्राण्मुनिपापण्डैः कृतं वैकृतमुच्यते ॥

हास्यस्तु भूयसा कार्यः षट्प्रकारैस्ततस्ततः ।
मुखनिर्वहणे चैव सन्धी द्वावस्य कीर्तितौ ॥

अङ्कोप्येको भवेद्यस्य तत्तु प्रहसनं भवेत् ।
सौभद्रकं स्यात्सङ्कीर्णं शुद्धं सागरकौमुदी ।
शशिकलाप्रहसनं यत्तद्वैकृतमीरितम् ॥

शारदातनयः

द्विजपापण्डदुर्वर्णिचेटचेटीविटावृतम् ।
वेषभाषाविभूषाद्यैः शुद्धं हासकृतं भवेत् ।
कामुकरतिवाचाटैः चण्डदुष्पण्डितादिभिः ॥

जरत्कञ्चुकिनिर्ग्रन्थतापसैर्विकृतं स्मृतम् ।
धूर्तकापालिकव्रात्यचोरसंवाहकादिभिः ॥

वीथ्यङ्गैरन्तराकीर्णं सङ्कीर्णमिति कथ्यते ।
मुखनिर्वहणे सन्धी वृत्तिरेकैव भारती ।
एकाङ्कल्पनीयं स्यान्नानाहासमनोहरम् ॥

सर्वेश्वरः

हास्यः षट्प्रकार इति । हसितानिहसितविहसितादयः ।

प्रहरः—हस्तपाटः

प्रहरस्तु तलाङ्गुष्ठप्रहारात्कथितो यथा ।

झे दां थों गिगद किटथो थो

प्रहार इत्यपि कचिद्दृश्यते ।

वेमः

प्रहरणम्—वाद्यप्रबन्धः

कूटपाटैस्तु घटितमुद्धतध्वनिसंयुतम् ।
खण्डं मुहुः प्रयुक्तं तु यत्तत्प्रहरणं भवेत् ॥

छायालगस्य सूडस्यत्वन्त्यप्रवृत्तिः प्रवर्तते ।
नृत्ते सति प्रयोक्तव्यमेतन्नृत्तविचक्षणैः ॥

एतत्प्रयुज्यते तदुक्तैः ।

वेमः

उद्धतं ध्वनितं कूटबद्धं खण्डं मुहुर्मुहुः ।
प्रयुक्तं स्यात्प्रहरणं ध्रुवाद्याभोगगोचरे ।
नृत्ते प्रायः प्रयोक्तव्यमन्यत्रापीच्छया भवेत् ॥

शार्ङ्गः

प्रहर्षः—नाट्यालङ्कारः

मूढस्योद्बोधलब्धो हर्षः । अथा—अये उच्छ्वसितमार्येणेति लक्ष्मणवाक्यम् ।

सागरः

प्रहर्षिणी—त्रयोदशाक्षरवृत्तम्

मनजरगाः ।

भरतः

प्रहारः—हस्तपाटः

प्रहरशब्दपर्यायः ।

प्रहारगेया—रागाः

प्रहारैकोदयादर्वाक् प्रहारैकोदयेषरि ।
देशाक्षी भैरवी शुद्धा सालगा च प्रगीयते ॥

वराटिका तथा शुद्धा द्राविडी नागसंज्ञका ।
प्रहारोपरि गातव्या मल्लारी शावरी तथा ॥

अन्धालिका रामकृतिश्छायानट्टा गुरुञ्जिका ।
मध्याह्नात्परतो गेया गौडरागाणि यानि च ।
त्रियामोपरि गातव्या द्वसालगनाटिका ॥

जगदेकः

प्राकृतम्—तारा

तारयोस्समवस्थानं प्रकृत्या प्राकृतं मतम् ।

अशोकः

प्राकृतम्—शिरः

निर्विकल्पं स्वभावस्थं शिरः प्राकृतमुच्यते ।
तच्च पूजाजपध्यानस्वामिसेवादिषु स्मृतम् ॥ विप्रदासः

प्राकृतपाठ्यम्

एतदेव विपर्यस्तं संस्कारगुणवर्जितम्।
प्राकृतं पाठ्यं नानावस्थान्तरात्मकम्॥

भरतः

एतदिति। संस्कृतपाठ्यमित्यर्थः।

प्राकृतपाठ्यभेदाः

प्राकृतपाठ्यं त्रिविधं - समानशब्दं विभ्रष्टं देशीगतमथापि च।

भरतः

प्राकृतभाषाचारः

छन्दतः प्राकृतं पाठ्यं स्मृतमप्सरसां भुवि।
मानुषाणां च कर्तव्यं कारणार्थव्यपेक्षया॥

भरतः

प्राकृतभाष्याः

एतेषामपि सर्वेषां नायकानां प्रयोगजम्।
कारणव्यपदेशेन प्राकृतं सम्प्रयोजयेत्॥

दारिद्र्याध्ययनाभावयदृच्छादिभिरेव च।
ऐश्वर्येण प्रमत्तानां दारिद्र्येण प्लुतात्मनाम्॥

अनधीतोत्तमानां च संस्कृतं न प्रयोजयेत्।
व्याजलिङ्गप्रविष्टानां श्रमणानां तपस्विनाम्॥

भिक्षुचक्रचराणां च प्राकृतं संप्रयोजयेत्।
भागवततापसोन्मत्तबालनीचग्रहोपसृष्टेषु।
स्त्रीनीचजातिषु तथा नपुंसके प्राकृतं योज्यम्॥

भरतः

प्राकृतयुक्ताः

ये वर्णा वर्णगता व्यञ्जनयुक्ताश्च ये स्वरा नियताः।
तानपरस्परवृत्ते प्राकृतयुक्त्या प्रवक्ष्यामि॥

भरतः

प्रागयणम्—प्रतिमुखसन्ध्यङ्गम्

प्रगयणस्य नामान्तरम्।

प्रागल्भ्यम्

प्रयोगनिस्साध्वसता प्रागल्भ्यं समुदाहृतम्।

भावविवेकः

प्राजापत्यः—तानः

मध्यमग्रामे नारदीयतानः।
नि स रि म प ध.

नान्यः

—(रि-लोपः—षाडवः)
स नि ध प म ग.

कुम्भः

प्राड्विवाकाः

व्यवहारार्थतत्त्वज्ञा बुद्धिमन्तो बहुश्रुताः।
मध्यस्था धार्मिका रक्ताः कार्याकार्यविचक्षणाः॥

शान्ता दान्ता जितक्रोधा नोद्धतास्समदर्शिनः।
ईदृशाः प्राड्विवाकाश्च स्थाप्या धर्मासनेष्वथ॥

उत्थिताश्चाप्रमत्ताश्च त्यक्तालस्या जितक्लमाः।
स्निग्धाः क्षान्ता विनीताश्च मध्यस्था निपुणास्तथा॥

नयज्ञा विनयज्ञाश्च ऊहापोह विचक्षणाः।
नानारूपैस्समायुक्ता गुणैरेतैर्भवन्ति हि॥

भरतः

प्राणः—(प्रबन्धे) नादः

अनुस्वनस्वरूपः सन् प्रबन्धपदगामिभिः।
उपाधिभिरभिव्यक्तः स्थानत्रितयवर्तिभिः।
प्रीणयन् जनचेतांसि प्राण इत्युच्यते रवः॥

कुम्भः

प्राणायामः—हस्तः

मध्यमानामिकाभ्यां अङ्गुष्ठो मिश्रितो यदि।
अङ्गुष्ठमूलवक्रायां तर्जन्यां प्राणयामकः॥
नासाग्रभागे बद्धश्चेद्रेचके पूरके तथा।
कुम्भाकारो वायुबन्धे दर्शनीयो बुधोत्तमैः॥

विनायकः

प्रादोपिकम्—संगीतशृङ्गाराङ्गम्

निशाप्रथमयामकर्म प्रदोपिकम्।

भोजः

प्रातर्गेयाः—रागाः

देशाक्षी भैरवी शुद्धा सालगाख्या च भैरवी।
देवक्री रक्तहंसी च माहुरी रागरञ्जनी॥

एते सूर्यांशतो जाताः सायंकाले तु निन्दिताः।
प्रगायति प्रभाते यः स नरस्सुखमेधते॥

जगदेकः

प्रातर्गेयाः—रागाः

धनाश्रीर्मालवश्रीश्च रक्तहंसो वसन्तकः।
देशाख्यो देशकारी च भूपाली प्रसभस्तथा॥
मध्यमादिः कोलहासो वङ्गाली भैरवस्तथा।
नारायणो विभासश्च प्रातर्गेया इमे बुधैः॥

अहोबिलः

द्वितीयप्रहरगेयाः—रागाः

गुर्जरी रेवगुप्तिश्च कौमारी कज्जली तथा।
शङ्कराभरणस्तोडी सोरठी रामकृत्तथा॥

नादरामक्रियारागो वेलावलिः कुडारिका ।
गुणकरी जयश्रीश्च तथैव शशिवल्लभा ।
एते रागाः प्रगीयन्ते प्रथमप्रहरोत्तरम् ॥

अहोबिलः

तृतीयप्रहरगेयाः—रागाः

हंसाख्यो दीपको रागः काम्भोदी कङ्कणस्तथा ।
सारङ्गो देवगान्धारी रागो देवकिरिः परा ॥
ऐरावतोऽर्जुनो रागो रत्नावली ततः परम् ।
असावरी च हिन्दोलो मनोहरस्ततः परम् ॥
वैजयन्ती तथा रागाः सर्वाश्चैव वराठिकाः ।
एते रागाः प्रगीयन्ते द्वितीयप्रहरोत्तरम् ॥

अहोबिलः

चतुर्थप्रहरगेयाः—रागाः

घण्टारवस्तथा ठक्कः श्रीरागः कोकिलः पुनः ।
सौदामनीकुरङ्गश्च त्रिवेणी च सुरालयः ॥
पूर्वी विहङ्गडो रागः सामन्तः कुमुदस्तथा ।
बलहंसः पहाडी च चक्रधारस्तथैव च ॥
कल्याणाख्यवराली च मञ्जुभाषा ततः परम् ।
सिंहरवस्तथा रागः तथैव पटमञ्जरी ॥
सर्वे गौलास्तथा नाटाः कल्पतरुस्तथैव च ।
एते रागाः प्रगीयन्ते तृतीयप्रहरोत्तरम् ॥

अहोबिलः

सर्वदागेयाः—रागाः

सैन्धवो मेघरागश्च मल्लारी पञ्चमस्तथा ।
नीलाम्बरी मुखारी च भैरवी ललितस्तथा ॥
मेघनादस्तथा देशी रागो मङ्गलकौशिकः ।
गौडरागश्च मल्लारो राग अनन्दभैरवी ॥
शङ्करानन्दमालव्यौ राजधानी च शर्वरी ।
सावेरी राग इत्येतास्सर्वदा च सुखप्रदाः ॥

अहोबिलः

मालवश्चैव मल्लारः श्रीरागश्च वसन्तकः ।
हिन्दोलश्चाथ कर्णाट एते रागाःषडीरिताः ॥
क्षणदान्ते पुरो रात्रौ गेया गायनराजिभिः ।

बङ्गालदेश सङ्गीतसारः

वराटी मायु (थु?) री क्रीडावैराटी चैव धानसी ।
वेलावली मारहट्टा मध्याह्ने भरतोदिताः ॥
एवं वराटी मध्याह्ने सायाह्ने भरतोदिता ।
गान्धारी दीपिका चैव कल्याणी प्रवरी तथा ॥
आसावरी कानडा च गौरी केदारपाहिडा ।
माधवी मालवी पूर्णा शिन्धुडा नाटिका तथा ।
सायाह्ने रागिणीरेताः प्रगायन्ति चतुर्दश ॥

एतन्मतं केवलरागिणीगानपरम् ।

प्रातर्गेयास्तु देशा च ललितः पटमञ्जरी ।
विभासो भैरवी चैव कामोदी गुण्डकर्यपि ॥
एका रवाडी (वराटी?) मध्याह्ने सायं कर्णाटमालवौ ।
नाटश्च गौरवाडी च गूर्जरी देशिरेव च ।
गानं तेषां तु पूर्वाह्ने निषिद्धमिति तद्विदः ॥

बङ्गालदेश सङ्गीतसारः

प्रातर्गेयाः—रागाः

मधुमाधवी च देशाख्या भूपाली भैरवी तथा ।
वेलावली च मल्लारी बङ्गाली सामगूर्जरी ॥
धनाश्री मालवश्रीश्च मेघरागश्च पञ्चमः ।
देशकारो भैरवश्च ललितश्च वसन्तकः ॥
एते रागाः प्रगीयन्ते प्रातरारभ्य नित्यशः ।

दामोदरः

प्रापणम्—मुखसन्ध्यङ्गम्

प्राप्तेर्नामान्तरम् प्राप्तिशब्दे द्रष्टव्यम् ।

प्राप्तिः—मुखसन्ध्यङ्गम्

सुखार्थस्याभिगमनं प्राप्तिः । भरतः

सखयतीति सुखं । तादृशस्य वस्तुनः ।

यथा—वेणीसंहारे—प्रथमाङ्के—अयं ह्यर्थो भीमस्य चेतः सुखयतीति । अभिनवः

सुखार्थस्योपगमनं प्राप्तिः । सागरनन्दी
या चित्तस्य सुखप्राप्तिः सा प्राप्तिर्गीयते यथा ।

अमृतानन्दी

प्राप्तिः कोऽपि समागमः । शारदातनयः

प्राप्तिः—लक्षणम्

दृष्ट्वैवावयवं किञ्चित् भावो यत्रानुमीयते ।
प्राप्तिं तामभिजानीयाल्लक्षणं नाटकाश्रयम् ॥

भरतः

अभ्युन्नता पुरस्तादित्यत्र पदपङ्क्तिलक्षणमंशं दृष्ट्वाऽनयात्र भवितव्यमिति शकुन्तलासद्भावमनुमीयते ।

अभिनवः

यथा—कुन्दमालायां रामवाक्यम्—ननु वक्तव्यं सीतायाः पदानीति...समानं संस्थानमिति श्लोकः। अत्र पदपङ्क्तिः संस्थानेन सीताया एवेति निश्चिता सा प्राप्तिः।

**प्राप्तिसंभवम्**—अवस्था

ईषत्प्राप्तिर्यदा काचित्फलस्य परिकल्प्यते।
भावमात्रेण तं प्राहुर्विधिज्ञाः प्राप्तिसंभवम्॥

भरतः

**प्राभातिकम्**—संगीत शृङ्गाराङ्गम्

प्रत्यूषकालकर्म प्राभातिकम्।

भोजः

**प्रारम्भः**—अवस्था

औत्सुक्यमात्रं बन्धस्य यो बीजस्य निबध्यते।
महतः फलयोगस्य सोऽत्र प्रारम्भ इष्यते॥

भरतः

**प्रार्थना**—गर्भसन्ध्यङ्गम्

रतिहर्षोत्सवानां तु प्रार्थना प्रार्थना भवेत्।

भरतः

एतत्साध्यफलोचितभावलक्षणं। तत्र साध्यफले यः प्राधान्येन समुचितो भावः तद्विषया या प्रकर्षेणाभ्यर्थना सा प्रार्थनाख्यमङ्गं। यथा—रत्नावल्यां सङ्केतस्थो राजा तीव्रः स्मरेत्यादि वदति।

अभिनवः

अभ्यर्थनापरं वाक्यं प्रार्थनेत्यभिधीयते।

भोजः

प्रार्थना भावयाचना। भावानां साध्यफलोचितानां रतिहर्षोत्सवादीनां याचनं प्रार्थना। यथा—देवीचन्द्रगुप्ते कण्ठे किन्नरकण्ठीत्यादि चन्द्रगुप्तवाक्यम्। अत्र रतेः प्रार्थना। केचिदभ्यर्थनामात्रं प्रार्थनामाहुः। केचित्तु प्राक्तनमिदं चाङ्गं न मन्यते।

रामचन्द्रः

**प्रावृतम्**—पादपाटः

लीलया वलिता यत्र कोमला तनुवल्लरी।
उद्वृत्तश्चरणोऽप्येतत् प्रावृतं परिकीर्तितम्॥

वेमः

**प्रावेशिकी**—ध्रुवा

प्रविशतः पात्रस्य रसभावप्रकृत्यवस्थादिकं प्रवेशशब्देनोच्यते। तदनुसारेण श्लेषसमासोक्त्याद्यलङ्कृतं यद्रूपकं गीयते सा प्रावेशिकी— प्रवेशः प्रयोजनमस्या इतीकणि प्रावेशिकी। यथा देवीचन्द्रगुप्ते पञ्चमाङ्के स्वापायशङ्किनः कृतकोन्मत्तस्य कुमारचन्द्रगुप्तस्य चन्द्रोदयवर्णनेन प्रवेशप्रतिपादिका।

गुणचन्द्रः

प्रवेशसूचनी या तु पात्राणामर्थयोगतः।
नानाभावरसोपेता सा स्यात्प्रावेशिकी ध्रुवा॥

वेमः

गीयन्ते यत्र सादृश्यादल्पावस्थानकीर्तनात्।
रसभावानुरोधेन रागा यत्र भवन्ति हि॥
छन्दांसि च प्रसन्नानि पदैः श्रोत्रसुखानि च।
सैव प्रावेशिकी ज्ञेया प्रवेशविषये मता॥

नान्यः

नानारसार्थयुक्ता नृणां या गीयते प्रवेशे तु।
प्रावेशिकी तु नाम्ना विज्ञेया स ध्रुवा तद्ज्ञैः॥

भरतः

**प्राश्निकलक्षणम्**

चारित्राभिनयोपेताः शान्तवृत्तश्रुतान्विताः।
यशोधर्मरताश्चैव मध्यस्था वचसान्विताः॥
षडङ्गनाट्यकुशला अलुब्धाश्शुचयः समाः।
चतुरातोद्यकुशलाः वृत्तज्ञास्तत्त्वदर्शिनः॥
देशभाषाविधानज्ञाः कलाशिल्पप्रयोजकाः।
चतुर्थाभिनयज्ञाश्च रसभावविकल्पने॥
शब्दच्छन्दोविधानज्ञाः नानाशास्त्रविचक्षणाः।
एवं विधास्तु कर्तव्याः प्राश्निका दशरूपतः॥

भरतः

**प्रासादिकी**—ध्रुवा

प्रस्तुतस्य रसस्य विभावोन्मीलनेन निर्मलीकरणं प्रसादः। प्रविष्टपात्रस्यान्तर्गतचित्तप्रवृत्तेः सामाजिकान्प्रति प्रथनं वा प्रसादः। प्रसादप्रयोजनात्प्रासादिकी। इयं च प्रावेशिक्याक्षेपिकानन्तरमवश्यं प्रयोज्येति वृद्धसंप्रदायः।

गुणचन्द्रः

आर्धाक्षेपवशाद्या च रसान्तरमुपेयुषी।
रङ्गप्रसादं कुरुते सा स्यात्प्रासादिकी ध्रुवा॥

वेमः

या च रसान्तरमुपगतमाक्षेपवशात्कृतं प्रसादयति।
रागप्रसादजननीं विद्यात्प्रासादिकीं तां तु॥

भरतः

**प्रासङ्गिकं**—वस्तु

तस्योदाहरणार्थं तु प्रासङ्गिकमिहोच्यते। भोजः

तस्य। आधिकारिकवस्तुनः।

**प्रियम्**—लक्षणम्

आदौ यत्क्रोधजननमन्ते हर्षप्रवर्धनम्।
तत्प्रियं वचनं ज्ञेयं आशीर्वादसमन्वितम्॥

भरतः

विनष्टे तु यदा द्रव्ये ह्युपलब्धिः पुनश्च या ।
सुखमुत्पद्यतेऽतीव सा प्रीतिरिति कीर्तिता ॥

इति केचन तु भरतपाठान्तरमाहुः ।

यथा—'किं वृत्तान्तैरिति श्लोके भ्रमतिवल्लभेत्यादौ हन्त कीर्तिरिति हर्षकृत ।

अभिनवः

अन्ये पठन्ति – वाच्यमर्थं परित्यज्य दृष्टयादिभिरनेकधा ।
अन्यस्मिन्नेव पतनादाशु भ्रंशस्स उच्यते ॥

भरतः

दृष्टिर्दर्शनं प्रकृतिमुखरादिवाक्यमिति पूर्वोक्तमित्यर्थः । नचेयं व्याजस्तुतिः निन्दाभागे स्तुतेरभावात् । पूर्णतायास्तु निन्दाया अभावात् ।

अभिनवः

### प्रियोक्तिः—लक्षणम्

यत्प्रसन्नेन मनसा पूज्यं पूजयितुं वचः ।
हर्षप्रकाशनार्थं तु सा प्रियोक्तिरुदाहृता ॥

भरतः

यथा—वीणावासवदत्ते (७ अंके) भरतरोहको वत्सराजाय वासवदत्तां वीणाभ्यासार्थमर्पयितुकामं तं दृष्ट्वाह या शेते इत्यादि ।

### प्रीतिः

पुंसः पूर्वापरीभावः सुखित्वेन व्यवस्थितिः ।
बुद्धेरुन्मीलनीगाढं प्रीतित्वेन निगद्यते ॥

भावविवेकः

### —श्रुतिः

मध्यमस्य तृतीया श्रुतिः ।

### प्रीतिपीताम्वरतालश्रेणिमुक्ताफलम्—सूडप्रबन्धः

आदितालस्तथापञ्च हरवक्त्रसमुद्भवाः ।
प्रतिमण्ठश्चतुर्मातो मण्ठश्चैवाड्डुतालकः ॥

तालो वर्णयतिश्चैव जलमङ्गलसंज्ञकः ।
विजयानन्दनामा च जयश्रीसंज्ञकः परः ॥

नवमातृकमण्ठश्च निस्सारुझम्पकोऽपि च ।
रूपको द्रुतमण्ठश्च प्रतितालाभिधः परः ॥

प्रतितालं पदानि स्युः पाटास्तदुभयं तथा ।
मध्ये मध्ये यथा शोभा प्रयुक्तं च विशेषवत् ॥

विशेषतो वर्णयतौ जयश्रीसंज्ञकेऽपि च ।
तेनकाः स्युः पदस्थाने प्रतिताले न चेष्यते ॥

मुक्तिः पाटाकरैर्युक्तैरालापेन पुरस्कृतैः ।
पदान्येवं षोडशैव ताला एकोनविंशतिः ॥

गौण्डः स्यादेशवालादिरागस्सर्वपदाश्रयः ।
धीरोदात्तगुणैर्युक्तो वर्ण्य उत्तमनायकः ॥

छन्दः स्यात्स्वेच्छयाबद्धं समानादिगुणा दश ।
वर्णाः स्युर्यत्र स ज्ञेयः प्रबन्धः प्रीतिकृद्धरेः ॥
प्रीतिपीताम्वरतालश्रेणिमुक्ताफलाभिधः ।

कुम्भः

### प्रेक्षकः

अव्यग्रैरिन्द्रियैश्शुद्ध ऊहापोहविशारदः ।
व्यक्तादोषोऽनुरागी च स नाट्ये प्रेक्षकः स्मृतः ॥

यस्तुष्टे तुष्टिमायाति शोके शोकमुपैति च ।
दैन्ये दीनत्वमभ्येति स नाट्ये प्रेक्षकः स्मृतः ।
नवैवेते गुणास्सर्वे एकस्मिन्प्रेक्षके स्मृताः ॥

भरतः

### प्रेक्षणिकम्—नृत्तरूपकम्

पदार्थाभिनयं यच्च ललितं च लयान्वितम् ।
कुरुते नर्तकी यत्र सोऽपि नर्तनकः पुनः ॥

लास्यं द्विपथच्छलिकसमरथ्यासमन्वितम् ।
सुतालचतुरश्राभ्यां यत्र कर्तुः प्रवर्तते ॥

गर्भावमर्शरहितं सर्ववृत्तिसमन्वितम् ।
प्रभूतमागधीशौरसेनीकं रसभावयुक् ॥

विसन्धीति वदन्त्येतदुत्तमाधमनायकम् ।
भारत्यारभटीयुक्तं क्वचित्स्यात्तस्य सात्त्वती ॥

यथा बालवधाख्यं च नृसिंहविजयो यथा ।
पूर्णनैपथ्यपाठेन नान्दी तस्य विधीयते ॥

क्वचिद्गर्भावमर्शौ स्तः क्वचिद्वृत्तिचतुष्टयम् ।
क्वचिन्नेपथ्यपाठाङ्कं न कदाचन सूत्रधृत् ॥
एवं प्रेक्षणिकं विद्याद्यथा त्रिपुरमर्दनम् ।

शारद

### —नृत्यरूपकम्

यस्य पदार्थाभिनयं ललितलयं सदसि नर्तकी कुरुते ।
तन्नर्तनकं शम्या लास्यच्छलिकद्विपद्यादि ॥
रथ्यासमाजचत्वरसुरालयादौ प्रवर्तते बहुभिः ।
पात्रविशेषैर्यत्तत् प्रेक्षणकं कामदहनादि ॥

भोजः

### —नृत्तरूपकम्

अशेषभाषोपशोभितं, शौरसेनीप्रधानं, गर्भविमर्शशून्यं, तल्लक्षणयुक्तं च सर्ववृत्तिनिष्पन्नं, प्रतिमुखसन्धिप्रवेशका न कर्तव्याः परिवर्तकयुक्तं प्रयत्नतः कार्यं नियुद्धसंफेठयुतं, विपदनुचिन्ताबहुलं च । अत्र तु सूत्रधारो न विधेयः । यथा—वालिवधः ।

सागरनन्दी

**प्रेक्षोदीक्षणम्**—संगीत शृङ्गाराङ्गम्

विस्रंभानुरागयोः दार्ढ्यार्थं रमणीयपदार्थानां प्रदर्शनमवलोकनं वा ।

भोजः

**प्रेङ्खः**—वर्णालङ्कारः (सञ्चारी)

कला गतागतवती द्विस्वरैकैकहानतः ।
यत्रान्यास्तादृशः स स्यात्प्रेङ्खः ॥

सरीरिसा रिगा गरी गमा मगा मपा पमा पधा धपा धनी निधा ।

शार्ङ्गदेवः

**प्रेङ्खकः**—रागः

हिन्दोलस्य नामान्तरम् ।
तानश्चेत् खञ्जरीको भवति यदि पुनर्मूर्छना पौरवी स्यात्
बीभत्से भीषणेऽपि स्फुरमुदितमहाकालकालाधिदैवः ।
गान्धारीधैवतीभ्यां विहित...उभयग्रामजातिप्रसिद्धो
न्यासांशोद्ग्राह (षड्जे)स्थितधर...मयः प्रेङ्खको नाम रागः ॥

नान्यः

उभयग्रामसंभूतो धैवतापात एव च ।
द्वे जाती वर्जयित्वा तु गान्धारीं धैवतीमपि ।
गान्धर्वशास्त्रतत्वज्ञैः प्रेङ्खकः परिकीर्त्यते ॥

कश्यपः

**प्रेङ्खणम्**—देशीमण्डलम्

प्रसृत्यैकपदं पार्श्वे पार्ष्णिदेशं स्वपादतः ।
स्थित्वान्ते कूर्महस्तेन स्थितिः प्रेङ्खणमण्डलम् ॥

नाट्यदर्पणे

**प्रेङ्खितः**—वर्णालङ्कारः (अवरोही)

नीधधाप पाममागगारि रीस.

पण्डितमण्डली

—वर्णालङ्कारः

समुच्चार्य स्वरयुगं पूर्वपूर्वान्तिमादिमान् ।
परान् स्वरयुगान्कुर्यादान्दोल्य प्रेङ्खितो भवेत् ॥
स रीरिगा गमा मपा पधा धनी
केचिदेनमलङ्कारं क्रममाचक्षते बुधाः ।

पण्डितमण्डली

**प्रेङ्खोलितम्**—दर्शनम्

प्रेङ्खोलितं तदाख्यातं यत्र स्यातां गतागते ।

वेमः

—करणम्

डोलापादाङ्घ्रिमादाय तदन्येनोत्प्लुतिं भजेत् ।
चारीश्च भ्रमरीर्येत्र तत्प्रेङ्खोलितमितीरितम् ॥

ज्यायनः

**प्रेम**

स एव प्रचयाद्वस्तु प्रयुक्तो विवशत्तरः ।
संमतं तत्समीपे तु क्षिप्रं प्रेमतयोदितः ॥

सः—स्नेहः ।

भावविवेकः

**प्रेमगर्भि**—दर्शनम्

द्रवीभूतं मनो यस्य दर्शने प्रेमगर्भितत् ।

शारदातनयः

**प्रेमाभिसन्धिः**—शृङ्गारचेष्टा

विपक्षसंज्ञया ज्ञानादीर्ष्यातिशयसंभवम् ।
स्त्रीणां प्रेमाभिसन्धानं दुःखदं मरणादपि ॥

कुम्भः

**प्रेरणम्**

हास्यप्रायं प्रेरणं तु स्यात्प्रहेलिकयान्वितम् ।

वेमः

**प्रेरितम्**—देशीमण्डलम्

सन्ताड्यैकपदं पार्श्वे वितस्तित्रितयान्तरम् ।
तिर्यकुञ्चितजानुभ्यां स्थित्वाऽथ शिखरं करम् ॥
निधाय वक्षस्यन्येन प्रसृता च पताकिका ।
प्रदर्शयेदिदं तज्ज्ञाः प्रेरितं मण्डलं जगुः ॥

नाट्यदर्पणम्

—हस्तप्राणः

पश्चाद्भागे कुञ्चितो वा रेचितो वा प्रसारितः ।
यो हस्तः कथितस्सोऽयं प्रेरितः पूर्वसूरिभिः ॥

शृङ्गारः

**प्रेषणकारिका**

प्रेषणैः कामसंयुक्तैः गुह्यागुह्यसमुत्थितैः ।
या नियुक्ता बुधैस्सा तु ज्ञेया प्रेषणकारिका ॥

भरतः

**प्रोता**—विभाषारागः

पञ्चमांशग्रहा षड्जन्यासा याष्टिकसंमता ।
मध्यमग्रामगा पूर्णा प्रोता नाम विभाषिका ॥ कुम्भः

**प्रोत्साहनम्**—नाट्यालङ्कारः

कुतश्चित्कारणान्निवर्तमानस्य प्रवर्तनम् । यथा विक्रमोर्वश्यां मन्दारपुष्पेति (४-६३) पुरूरवोवाक्यम् ।

सागरः

—लक्षणम्

उत्साहजननैः स्पष्टैरर्थैरौपम्यसंश्रयैः ।
प्रसिद्धैरुपगूढं च ज्ञेयं प्रोत्साहनं बुधैः ॥

भरतः

औपम्यस्य संश्रयणं अन्वेषणं यत्रेति । अनेन यत्रान्वेषणेऽपि तस्य भाव इति दर्शितम् । यथा–भट्टेन्दुराजस्य हरवृषभेति श्लोकेऽप्रस्तुतप्रशंसाप्यत्र तद्वैचित्र्यम्। प्रोत्साहनत्वलक्षणकृतमेव। इदमन्यत्र प्रियवचनमिति पठितम्। अन्यैरुदाहरणमिति पठितम् प्रियवचनोदाहरणे द्रष्टव्ये ।

अभिनवः

प्रोन्नतम्—स्थानकम्

पादाग्राभ्यां समानाभ्यां तथाङ्गुलितलैः स्थितिः ।
या कायमायतीकृत्य तत्स्थानं प्रोन्नतं मतम् ॥
नासादघ्नजले धार्ये भित्त्याद्यन्तरितेऽपि च ।
प्रांशुग्राह्यफलादीनां ग्रहणेऽपि तदीरितम् ॥

अशोकः

समपादतलाग्राभ्यामङ्गुलीनां तयोरपि ।
आयतीकृत्य गात्रं चेत् तिष्ठेत्स्यात्प्रोन्नतं तदा ॥
नासिकाद्वयसेतोये...मन्तरीक्षणे ।
प्रांशुप्राप्यप्रमाणस्य फलादिग्रहणादिषु ॥

ज्यायनः

प्रोन्नतः—बाहुः

ऊर्ध्वप्रसारितो बाहुः प्रोन्नतस्तोङ्गमोटने ।
फलाद्याकर्षणे चोर्ध्ववस्तूनां धारणे भवेत् ॥

सोमेश्वरः

प्रोषितभर्तृका—नायिका

नानाकार्याणि सन्धाय यस्या वै प्रोषितः प्रियः ।
प्ररूढालककेशान्ता भवेत्प्रोषितभर्तृका ॥

भरतः

प्ररूढाः प्रलम्बीभूता अलकाः, केशान्तश्च कबरीभारः। प्ररूढे एकवेणीभूते यस्याः । अन्ये तु अकृतकर्मतया केशान्ते ललाटे रोम्णामुद्भेदमुत्प्ररूढं वर्णयन्ति ।

अभिनवः

प्रौढम्— गीतगुणः

सुस्थानं सरलं श्राव्यं शुद्धकाकुविराजितम् ।
सप्रमाणं क्रमयुतं गीतं प्रौढजनप्रियम् ॥

सोमेश्वरः

प्लवकलासः—(प्रथमः)

त्रिपताकौ पताकौ वा कृत्वा नाभिस्थितौ करौ ।
पद्भ्यां तालानुगं गच्छेत् पश्चाद्यत्र भवेदसौ ॥
आद्यो भेदः प्लवाद्यश्च कलासः स बुधैर्मतः ।

अशोकः

—(द्वितीयः)

विधाय त्रिपताकौ चेद्वाममङ्घ्रिं पुरोगतम् ।
पाणिमेवं विधं वामं लघुमानेन नर्तकी ॥
वामतो गमनं कृत्वा बध्नीयादासनं समम् ।
विषमं वा ततः स्थानात्समुत्प्लुत्य समाह्निकम् ।
गच्छेत्तदा प्लवस्योक्तः सद्भिर्भेदो द्वितीयकः ॥

अशोकः

—(तृतीयः)

त्रिपताकौ कटीक्षेत्रे विधाय सममासनम् ।
विषमं वा यदा स्थित्वा स्थित्वोत्प्लुत्य महीतले ॥
दधती चरणौ गच्छेत् लघुमानात्पुरोऽनु च।
पश्यन्तीमवनिं ज्ञेयः प्लवभेदस्तृतीयकः ॥

अशोकः

—(चतुर्थः)

यदाग्रे पृष्ठतश्चैव व्युत्क्रमात्क्रमतोऽथवा।
सव्यापसव्ययोर्नृत्यं चतुर्धा संप्रजायते ।
तदा भेदः प्लवस्य स्याच्चतुर्थश्चतुरोदितः ॥

अशोकः

प्लवकलासः

त्रिपताकं करं कृत्वोत्प्लुत्योत्प्लुत्य समे पदे ।
सर्वतो दधती चित्रं विषमासनमाश्रिता ।
यत्र नृत्यति स प्रोक्तः कलासः प्लवसंज्ञकः ॥

कुम्भः

अस्यैव मण्डूककलास इति नामान्तरम् ।

प्लुतः—आविद्धधातुः

प्लुतो लगाभ्यां लपुना लगुरुर्वा भवेदयम् ।
त्रिभिर्वा लघुभिः पूर्वे प्लुतमाहुर्विपश्चितः ॥

लपुना । लघुप्लुताभ्यामित्यर्थः । कुम्भः

प्लुतो लघुगुरुर्भवेत् । शार्ङ्गः

प्लुतचम्पा—देशीतालः

लप्लुतौ लप्लुतौ गश्च प्लुतचम्पेति कथ्यते ।

10 मात्राः तालप्रस्तारः

प्लुतपर्यायाः

त्रिमात्रश्च प्लुतो दीप्तस्त्र्यङ्गं सामोद्भवं तथा ।
तारस्थानं तथा शृङ्गी प्लुते नामसमुच्चयम् ॥

श्रीकण्ठः

फ

फणिः—देशीतालः

फणिताले द्रुताः पञ्चलघुस्तद्वत्त्रिवारकम्।
ततोऽन्ते मिश्रलोपः स्यात् ॥
००००० ॥ ०००००॥ ०००००

—स्वरजातिः

त्रयस्त्रिंशत्स्वरैर्जातिः फणिरित्यभिधीयते।

औमापतम्

**फणिभूषानुकरणम्**—नृत्तकरणम्

पार्ष्णिपीडे स्थितिं कुर्यादञ्चितं तु तदा शिरः।
दृष्टिर्वितर्किता सर्पशिरो मस्तकपार्श्वगः॥
मृगशीर्षो नाभिगतः ललिता चात्र चारिका।
फणिभूषानुकरणं करणं परिकीर्तितम्॥

नन्दी

पार्ष्णिपीडं स्थानम्। ललितागतिः। यथा,

मण्डलाकारतः पाष्ण्योरािभिमुख्ये कृते ततः।
ताभ्यां क्रमात्पुरः पश्चान्नात्यं चेल्ललिता भवेत्॥

**फणिभोगस्वस्तिकहस्तः**

अंसद्वयस्योर्ध्वभागे सर्पशीर्षौ स्थितौ यदि।
फणिभोग इति ख्यातो भरतागमवेदिभिः।
अंसभागे त्वसौ हस्तः अंसद्वयनिरूपणे॥

विनायकः

**फरजु**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स ग म प ध नि स.
(अव) स नि ध म ध प म ग रि स.

मज

**फरुस्**—मेलरागः

(आ) स रि ० ० ग म ० ० ध ० ० नि स.
(अव) स नि ० ० ध प ० म ग ० ० रि स.

मेललक्षणे

**फलम्**

अभीष्टार्थपरीपाको नेतादेरथवा कवेः।
द्रुमादिफलवद्यत्र स्वाद्यते तत्फलं भवेत्॥

शारदातनयः

**फलप्राप्तिः**—इतिवृत्तम्

कवेः प्रयत्नान्नेतॄणां युक्तानां विध्युपाश्रयात्।
कल्पिते हि फलप्राप्तिः समुत्कर्षात्फलस्य च॥

भरतः

**फलमञ्जरः**—हस्तः

उद्वर्ताभिधहस्तौ तु तथा तौ फलमञ्जरे।

श्रृङ्गारः

**फलमञ्जरी**—देशीतालः

रसजाः फलमञ्जरी
ऽ। ऽ॥ ऽ। ऽ।

लक्ष्मणः

—रागध्यानम्

द्राक्षालतागारनिवासभासुरां
माणिक्यकेयूरकिरीटशोभिताम्।
नारीयुगेनाश्रितपार्श्वयुग्मां
ध्यायामि रागं फलमञ्जरीं सदा॥

रागसागरः

**फलवृत्तिः**—वृत्तिः

उपलब्धग्रन्थेषु कुत्रापि सा न निरुक्ता। "औद्भटाः पञ्चमीमर्थवृत्तिं च प्रतिजानते" इति शारदातनयवाक्येन काचिदर्थवृत्तिरुद्भटेन कल्पितेत्यूह्यते। अभिनवगुप्तेन च नाट्यशास्त्रव्याख्यायां वीथीलक्षणे "यच्छकलीगर्भमतानुसारिणो मूर्छादौ आत्मसंवित्तिलक्षणां पञ्चमीं वृत्तिं सकलकार्यनिवृत्त्यनुमेयां मूर्छाकर्मानुभावेन फलेनावच्छिन्नां आत्मव्यापाररूपां मन्यन्ते। न च परिस्पन्द एवैको व्यापार इति मनसिकृत्य तन्मतं भावानां बाह्यग्रहणरूभावत्वमुपपादयद्भिः भट्टलोल्लटप्रभृतिभिः पराकृतं—इति न फलवृत्तिः काचित्।" इति उक्तम्। अर्थवृत्तिः फलवृत्तेर्भिन्ना नवेति सन्देहः।

**फल्गुनः**—देशीतालः

फल्गुने लपदा गः स्यात्।
। ऽ̇ ० ऽ

लक्ष्मणः

**फाललोचनः**—देशीतालः

ततःस्यात्फाललोचने। गुरोरूर्ध्वं लघुद्वन्द्वं लविरामः प्रकीर्तितः।
ऽ । । ।̇

लक्ष्मणः

**फालवर्तना**

व्यावृत्य वक्षसः फालं प्राप्य तत्पार्श्वमागतौ।
ततो मण्डलवद्भ्रान्त्या प्रचालितभुजौ करौ॥
पताकौ चेच्छनैरूर्ध्वमण्डलावेव कोविदैः।
चक्रवर्तनिकेत्युक्ता फालवर्तनिकापि च॥

कल्लिनाथः

**फुल्लः**—कपोलः

विकासितौ कपोलौ तु फुल्लौ हर्षे प्रकीर्तितौ।

वेमः

—देशीतालः

फुल्ले कुण्डलयोर्मध्ये यथा चन्द्रो विराजते।
० ऽ ०

लक्ष्मणः

**फुल्ला**—श्रुतिः

मन्द्रमध्यमप्रथमा श्रुतिः।

मण्डली

फूत्कारगुणाः—(वंशे)

ते द्वादश-ध्वनिप्रचुरता व्यक्तिः स्निग्धता सावधानता।
नादानुरणनं रक्तिर्लालित्यं घनता तथा।
त्रिस्थानत्वं श्रावकत्वं माधुर्यं सुकुमारता॥

कुम्भः

फूत्कारगुणाः

लालित्यं कोमलत्वं च स्निग्धता घनता तथा।
ध्वनिप्रचुरता चैव स्थानत्रितयशोभिता॥
रक्तिर्व्यक्तिरनुध्वानश्रावकत्वं ततःपरम्।
माधुर्यं सावधानत्वमिति द्वादश कीर्तिताः॥
फूत्कारस्य गुणाः।

वेमः

—(वंशे)

स्थैर्यं तारस्वरस्फूर्तिः घनता सुस्वरस्थता।
अमी गुणज्ञैर्निर्दिष्टा गुणाः फूत्कारसंश्रयाः॥

हरिपालः

फूत्कारदोषाः—(वंशे)

यमलः स्खलितस्तोकः कृशः कपिलकाकिनौ।
सन्दष्टस्तुम्बकी चैते वाव्यवस्थित एव च॥
दोषाः स्युः फूत्कृतौ,

कुम्भः

फेनद्युतिः—मेलरागः (रत्नाङ्गीमेलजन्यः)

(आ) स रि म प ध नि – स.
(अव) स नि ध प म ग रि – स.

मध्य

फेनमार्दवः—देशीतालः

मिश्रलः फेनमार्दवे।

लक्ष्मणः

व

बककलासः

यत्र पक्षौ समानीय बकवद्धून्वती करौ।
सव्यापसव्ययोरारात्सन्दंशमुकुलाभिधौ॥
नर्तकीलघुमानेन कृतासनसमुत्थितिः।
नृत्येत्ससौष्ठवं स स्यात्कलासो बकपूर्वकः॥

अशोकः

—(प्रथमः)

कामपि भ्रमरीं कृत्वा संहतस्थानमाश्रिता।
करौ कृत्वाऽलपद्माख्यावरालौ. यत्र पादयोः॥
नीत्वा क्रमेणैकदा चाकुत्पयेदच्युताविव।
जलक्लिन्नावद्ध...स्पर्पाणिं मुकुलसंज्ञिकम्॥
मत्स्यग्रहासक्तचित्तबकवद्यदि संव्रजेत्।
पादाग्रेण नटी मन्दं मन्दं पश्चात्पुरोऽपि च॥
तदैष भेद आद्यः स्याद्बकपूर्वकलासजः।

अशोकः

—(द्वितीयः)

त्रिपताकौ यदा पाणी विषमासनसंश्रिता।
विधाय मण्डिकां पादौ यथा स्वं च पदे पदे॥
नीत्वाऽत्र करौ चित्रं सन्दंशमथ कुर्वती।
पश्यन्त्यग्रे पार्श्वयोश्च चकितेव नटी मुहुः।
तनोति यत्र नृत्तं स बकभेदो द्वितीयकः॥

अशोकः

—(तृतीयः)

मुकुलं हस्तकं कृत्वा शनैः पश्चाद्द्रुतं पुरः।
गच्छन्ती प्रस्खलत्येव......नुपदं यदा॥
धृतभक्ते बको मत्स्येऽनुपदं हस्तकानपि।
अलपद्मारालं च मुकुलं वाऽपि तन्वती॥
चित्रं नृत्यति यत्रैष भेदः प्रोक्तस्तृतीयकः।

कुम्भः

—(चतुर्थः)

उत्तानवञ्चितौ हस्तौ यथाकृत्वार्धचन्द्रकम्।
कट्यां निवेश्य हस्तं च प्रपदाभ्यामथारभेत्॥
नानागतिविशेषांश्च धनुर्वत्पृष्ठतः पुरः।
वक्राकृतिः पदाङ्गुष्ठपाणिसंस्पर्शलालसा।
प्रनृत्यति यदा चित्रं भेदः प्रोक्तः चतुर्थकः॥

कुम्भः

बकहस्तः

विनतासूचिकाहस्ततर्जनी चेद्बकाह्वयः।
बकादिविस्तृतगलपक्षेष्वेष नियुज्यते॥

गौरीमतम्

बङ्गालः—ग्रामरागः (वीणायां वादनक्रमः)

मध्यस्थानस्थमास्थाय मध्यमं स्थायिनं स्वरम्।
तृतीयं तुर्यवान् कृत्वा गत्वान्यं तान्स्वरानथ॥
अवरुह्य गपर्यन्तं विधाय स्थायिनं स्वरम्।
हत्वा धमवरोहे चेत् स्थाय्यन्तं जायते तदा॥
बङ्गालो नाम रागाङ्गं रागज्ञजनसम्मतः।
पञ्चमोऽपि ग्रहः कैश्चिदस्य तद्ज्ञैरिहेष्यते॥

कुम्भः

बङ्गालः—रागः (वंशे वादनक्रमः)

मध्यमं स्थायिनं कृत्वा तत्पूर्वस्वरमेत्य च।
ततो ग्रहं सद्वितीयं कम्पयित्वा ततः परम्॥

तृतीयं सह तुर्येण लघूकृत्य तृतीयकम्।
उक्त्वा तमेव चाहत्य तत्पूर्वं प्रोच्य च स्वरम्॥

स्थायिन्यासेन बङ्गाले स्वस्थानं प्रथमं भवेत्।
द्वितीये च तृतीये च तुर्ये स्वस्थानके तथा॥

पञ्चमान्तं सप्तमान्तमष्टमावधि च क्रमात्।
भवेत्स्वराणामारोहः प्राक् प्राग्वदवरोहणम्।
लक्ष्यज्ञैरस्य देशेषु द्वितीयो ग्रह ईरितः॥

(व्याख्या) लक्ष्यज्ञैरिति। षड्जादिषु मध्ययोर्मुद्रितस्वरो भवति। तदपेक्षया द्वितीयर्षभादिः स्थायी। स द्वितीयोऽन्तिमरन्ध्रद्वये मुक्ते सति इति सम्प्रदायः। भैरवादिष्वपि द्वितीयस्वर एव ग्रहत्वेन गृहीतः।

वेमः

बङ्गालः—(प्रथमः) ग्रामरागः

बङ्गालो (मुक्त) षड्जेश्च षड्जमध्यमयोदितः।
समशेषस्वरः षड्जग्रहांशन्यासको भवेत्॥

भट्टमाधवः

—(द्वितीयः) ग्रामरागः

मध्यमे कैशिकीजातिसंभवस्तारपञ्चमः।
सांशन्यासग्रहस्तुल्यस्वरो बङ्गाल उच्यते॥

भट्टमाधवः

—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म प स.
(अव) ध नि ध प म रि ग रि स.

मञ्ज

—रागः

बङ्गालः कैशिकीजातः षड्जन्यासग्रहांशकः।
सकम्पमन्द्रगान्धारो गेयः करुणहास्ययोः॥

नारायणः

पञ्चमकतारमन्द्रः समशेषरवश्च कैशिकीजनितः।
षड्जांशन्यासयुतः संपूर्णो भवति बाङ्गालः॥

नान्यः

कैशिकीजातिसंभूतो मन्द्रपञ्चमतारकः।
बहुत्वाल्पत्वरहितः पूर्णो बाङ्गाल इष्यते॥

रूपकालापकावस्य कैशिकस्येव सङ्गतौ।
अमीभिर्भेदमापन्नैरशेषैरभ्युदीरितैः॥

मतङ्गः

पञ्चमांशन्यासयुक्तो मन्द्रे वृषभराजितः।
बङ्गालरागस्संपूर्णो निषादःप्ररिपीडितः॥

सोमेश्वरः

षाडवादेव बङ्गालो ग्रहांशन्यासमध्यमः।
ग्रहर्षे च नियोक्तव्यः प्रोक्तो हम्मीरभूभुजा॥

हम्मीरः

बङ्गालोंशग्रहन्यासमध्यमो रागजो मतः।

मदनः

—हस्तः

बङ्गाले च तथा ज्ञेयो हस्तोऽयं च पताकिकः।

शृङ्गारः

बङ्गालकः—रागः

षड्जांशन्यासग्रहमन्द्रत्यक्तश्च षड्जमध्याजः।
समस्वरश्च सम्पूर्णो बङ्गालो वृद्धरञ्जको न्यासः॥

नान्यः

मन्द्रे च रहितः पूर्णः षड्जन्यासांशसंयुतः।
समसप्तस्वरो नित्यं बङ्गालो नाम गीयते॥

मतङ्गः

बङ्गालगौडः—मेलरागः (मालवगौडजः)

गलयेण मनोज्ञोऽसौ बङ्गालो रिविवर्जितः।
पूर्णो मत्रययुक्तो वा कल्लिनाथमतन्त्विदम्॥

श्रीकण्ठः

बङ्गालरागध्यानम्

इन्द्रनीलभासमानकाकपक्षधारिणं
चन्द्रशेखराङ्घ्रियुग्मपूजनं जनार्चितम्।
खड्गखेटधारिणं जयासुमारुणं च वं-
ङ्गालरागशेखरं हृदि स्मरामि सन्ततम्॥

रागसागरः

भस्मोज्ज्वलाङ्गस्तरुणार्कवर्णो
जटाकलापं शिरसा दधानः।
कक्षास्थलस्थूलवलत्करण्डो
बङ्गालरागः कथितस्तपस्वी॥

मनोज्ञवेषः कमनीयकेशः
प्रफुल्लनेत्रः शरदिन्दुवक्त्रः।
सदा विलासी नवगेहवासी
बङ्गालनामा रविकल्पधामा॥

श्रीकण्ठः

मनोज्ञमौञ्जीगुणगुम्फिताङ्गः
स्वरं दधानो धरणीरुहस्य।
चण्डः कुमारः कमनीयमूर्तिः
बङ्गालरागः शुचिसामगानः॥

संगीतसरणिः

**बङ्गालीकट्टरम्—देशीनृत्तम्**

फलशं वामहस्तेन धृत्वा शिरसि दक्षिणम् ।
करं लताकरं कृत्वा संहतस्थानके स्थितम् ॥

यवन्याः परतः पात्रं सौष्ठवेन विराजितम् ।
समश्रुतिं वादयित्वा मेलापं बृन्दकेन च ॥

ततो यवनिकां दूरीकृत्वा रङ्गे समागतम् ।
परिवृत्य लताहस्तं कृत्वाग्रतलसञ्चरौ ॥

पादौ पाटाक्षरैस्तत्रालापं कुर्यान्मनोहरम् ।
बङ्गालदेशभाषायां गीर्वाण्या भाषयापि च ॥

ललिताक्षरबद्धानि पञ्चखण्डानि सप्त च ।
भिन्नतालैरुपेतानि सचच्चाराणि तानि वै ॥

गीयन्ते गायकैस्सम्यक् गतिभेदयुतानि च ।
अङ्गोपाङ्गैश्च हस्तैश्च पदभावं प्रदर्शयन् ॥

मध्ये मध्ये पिल्लमूरुकईमूरुकल्लासकाः ।
प्राह्यारसगतिमानेन पात्रेण सुन्दरेण धै ।
साभोगं नृत्यते तच्च बङ्गालीकट्टरं शुभम् ॥

वेदः

**बङ्गालिका—रागः**

मध्यमर्षभकौ तारौ मपौ स्फुरणसंयुतौ ।
धैवतो दीर्घतां याति यत्र बङ्गालिका च सा ॥

मोक्षः

**बङ्गाली—भाषारागः**

मध्यमर्षभयोर्दीर्घा ग्रहांशन्यासधैवता ।
भिन्नषड्जोद्भवा भाषा बङ्गाली मन्द्रधैवता ।
गापन्यासा सदा गेया परमुद्दीप्ते बुधैः ॥

भट्टमाधवः

**—मेलरागः**

बङ्गाली रिधहीना स्यात् मतीव्रतरसंयुता ।
नितीव्रेणापि संयुक्ता सस्वरोत्थितमूर्छना ॥
प्रातर्गेया ।

अहोबिलः

**—रागः**

पञ्चमांशग्रहन्यासा षड्जोत्था मध्यमावधि ।
अपन्यासस्तु रिषभः पूर्णा बङ्गालिकाभिधा ॥

नान्यः

सप्तस्वरा तु रुचिरा बङ्गाली पञ्चमांशसंयुक्ता ।
(गति) मध्यमतस्तारा रिषभापन्यांसलक्षणोपेता ॥

कश्यपः

बङ्गाली स्यादौडुवेयं ग्रहांशन्यासषड्जभाक् ।
रिधहीना च विज्ञेया मूर्छना प्रथमा मता ।
पूर्णा च मत्वयोपेता कल्लिनाथेन भाषिता ॥
स ग म प नि स .

दामोदरः

**बङ्गालीदेशा—रागः**

मध्यमार्षभबाहुल्या मन्द्रधवतभूषिता ।
संपूर्णा भिन्नषड्जोत्था बाङ्गाली गीयते बुधैः ॥

मोक्षः

**बङ्गालीरागध्यानम्**

कक्षानिवेशितकरण्डधरा तपस्वि-
न्युद्यत्त्रिशूलपरिमण्डितवामहस्ता ।
भस्मोज्ज्वला निबिडबद्धजटाकलापा
बङ्गालिकेत्यभिहिता तरुणार्कवर्णा ॥

दामोदरः

सिन्दूरशोभिसीमन्ता वेष्टिताङ्गी सुवाससा ।
संस्फुरत्कम्बुवलया बङ्गाली सोन्नतस्तना ॥

सङ्गीतसरणिः

**बदरीवसन्तः—मेलरागः (लताङ्गीमेलजन्यः)**

(आ) स रि ग म नि स .
(अव) स नि ध प ध नि ध म ग रि ग म ग स .

मक्ष

**बद्धः—देशीतालः**

सतपः स्याद्बद्धतालः ।
। । ऽऽ ऽ ऽ । ऽ

मदनः

**बद्धा—चारी**

जङ्घास्वस्तिकतां यत्र प्राप्तयोः पादयोर्मिथः ।
ऊरुद्वयस्य वलनं सा बद्धेत्यभिधीयते ॥

अथवा स्वस्तिकं मुक्त्वा तदग्रे मण्डलभ्रमम् ।
कुर्वन्तावूरुवलनं विधाय स्वस्वपार्श्वयोः ।
चरणौ यदि तिष्ठेतां सा च बद्धा प्रकीर्तिता ॥

वेमः

**बद्धापणः—देशीतालः**

बद्धापणस्तु कथितो लघ्वोरूर्ध्वे प्लुतं लघुः ।
। । ऽ ।

जग

बद्धापुणस्तु कथितो लघ्वोर्मध्ये द्रुतं भवेत्।
। ० ।

बन्धः—(काव्ये)
वाच्यवाचकसौभाग्यलावण्यपरिपोषकः।
व्यापारशाली वाक्यस्य विन्यासो बन्ध उच्यते ॥
कुन्तकः

बन्धकरणम्—प्रबन्धः
ततस्तु बन्धकरणे गातव्या धातुयुग्मके।
स्वरा मुरजपाटाश्च।
हरिपालः

बन्धनीयम्—आभरणम्
श्रोणीसूत्राङ्गदे मुक्ताबन्धनीयानि सर्वदा।
भरतः

बन्धनृत्यम्—देशीनृत्तम्
यत्र पात्रे उभे युक्ते नृत्येते करणैस्तदा।
यदा मिथो भुजौ हस्तौ पादावपि तदा तयोः ॥
रमणीयाकृतिर्यद्वा त्रीणि चत्वारि वा तथा।
यद्वा सुन्दररूपाणि त्रीणि चत्वारि सप्त च ॥
पात्राणि यत्र नृत्यन्ति तन्नृत्यं बन्धपूर्वकम्।
बन्धनृत्ये विलासिन्याः प्राधान्यं तु विशेषतः ॥
वेदः

बन्धसारः—नृत्ते बन्धः
पात्राणां पङ्क्तयो यत्र चतस्रश्चारुविभ्रमाः।
क्षोराक्रमेण सारीवत्तिरश्चीनांश्चरन्ति चेत्।
स बन्धो बन्धसाराख्यः कथितो वेमभूभुजा ॥
वेमः

बन्धुरम्—दर्शनम्
तदेव बन्धुरं ख्यातं किञ्चिदुत्फुल्लतारकम्।
शारदातनयः

तदिति मन्थरदर्शनम्।

—वक्षोभूषणम्
नानारत्नविचित्रं च मध्यनायकसंयुतम्।
सरकैर्लम्बितं रम्यं पदकं बन्धुरं विदुः॥
सोमेश्वरः

बम्बरस्वस्तिकहस्तः
मध्यमानामिकाङ्गुष्ठाः श्लिष्टाश्चान्ये प्रसारिते।
करद्वयेन बद्धश्चेद्बम्बरस्वस्तिकाभिधः।
अलकस्थानचलित अलकार्थनिरूपणे ॥
विनायकः

बम्बलः—ध्वनिभेदः
एरण्डकाण्डवद्यत्र खणिका संविवर्जितः।
निस्सरो बम्बलः स्थूलो बाहुले न तु मध्यभाक्॥
पार्श्वदेवः

बम्बल एव बोम्बक मध्यभागिति। मन्द्रतारयोः स्पर्शनं कुरुते। न तु मध्यस्थाय्यां चिरमवतिष्ठते।

बर्बर (भर्भरः)—मेलरागः (वाचस्पतिमेलजन्यः)
(आ) स ग म रि ग म ध नि ध स.
(अव) स नि ध म ग रि स.
मत

बर्बरबाहुः—देशीतालः
अथ बर्बरबाह्वौ द्रमध्ये गलद्बाणगाः।
०ऽ।०।ऽ०
गोपतिप्पः

बहिर्गीतम्—निर्गीतमित्यपि वदन्ति
बहिर्गीतविधौ सम्यगुत्पत्तिं कारणं तथा।
चित्रदक्षिणवृत्ते तु सप्तरूपे प्रकीर्तिता ॥
सोपोहने सनिर्गीते देवस्तुत्यभिनन्दिते।
नारदाद्यैस्तु गन्धर्वैस्सभायां देवदानवाः ॥
निर्गीतं श्राविताम्सम्यग्लयतालसमन्वितम्।
तच्छ्रुत्वा तु शुभं गानं देवस्तुत्यभिनन्दितम् ॥
अभवन् क्षुभितास्सर्वे मात्सर्याद्दैत्यराक्षसाः।
सम्प्रधार्य च तेऽन्योन्यमित्यवोचन्नवस्थिताः ॥
निर्गीतं तु सवादित्रमिदं गृह्णीमहे वयम्।
सप्तरूपेण सन्तुष्टा देवाः कर्मानुकीर्तनात् ॥
वयं गृह्णीम निर्गीतं तुष्यामोऽत्रैव सर्वदा।
ते तत्र तुष्टा दैत्यास्तु साधयन्ति पुनः पुनः ॥
रुष्टाश्चापि ततो देवाः प्रत्यभाषन्त नारदम्।
एते तुष्यन्ति निर्गीते दानवास्सह राक्षसैः ॥
प्रणश्यतु प्रयोगोऽयं कथं वै मन्यते भवान्।
देवानां वचनं श्रुत्वा नारदो वाक्यमब्रवीत् ॥
धातुवाद्याश्रयंकृतं निर्गीतं मा प्रणश्यतु।
किन्तूपोहनसंयुक्तं धातुवाद्यविभूषितम् ॥
भविष्यतीदं निर्गीतं सप्तरूपविधानतः।
निर्गीतेनावबद्धाश्च दैत्यदानवराक्षसाः ॥
न क्षोभं न विघातं च करिष्यन्तीह तोषिताः।
एवं निर्गीतमेतं तद्दैत्यानां स्पर्धया द्विजाः॥
देवानां बहुमानेन बहिर्गीतमिति स्मृतम्।
भरतः

बहिर्गीतशब्दस्योत्पत्तिं तत्प्रयोगे प्रयोजनरूपं कारणं तत्पुराकल्पद्वारेणाह गीतवाद्यगीतवाद्योभयक्रमेण चित्रादयो वृत्तिमार्गाः, तद्विषयं यद्गीतकं सहोपोहनप्रत्युपोहनैः वर्धमाननिर्गीतेन सहिते देवस्तुत्या च वाच्यभूतयाऽभिनन्दितं समृद्धं, तस्मिन् प्रवर्तिते प्रवृत्ते सति, तद्गानं गीयमानं सुखजनकमिति श्रुत्वा दैत्याद्याः क्षुभिता मात्सर्यात्। कुतः। देवैरहो रम्यं साधु साध्वित्यादिभिः स्तुतिभिरभिनन्द्यमानं यतः। नारदाद्यैः—सप्तरूपाधिष्ठितैर्नारदाद्यैः प्रवर्तितं, लयो द्रुतादिः, तालः शम्यापातविशिष्टचतुरश्रादयः। सम्प्रधार्य परितोष्टव्यम्। तुष्याम इति स्तुतिकीर्तनाभावेऽपि आभिमानिकेन निर्गीतम्। वादित्रं तद्गतं शुष्काख्यं वीणावाद्यं, धातुवाद्याश्रयकृतमिति धातवः तन्त्रीविशेषाङ्गुलिविशेषसंयोगजा वैणस्वराः रञ्जनया अदृष्टविशेषस्य (धातुवाद्यस्य) सप्तभेदलक्षणं तदाश्रयणं कृतमिति चित्रम्। अवबद्धा इति। अव, अवखेलनेन वालहेवाकपोषणन्यायेन बद्धाः स्वीकृताः। एवमविनाशकारणं प्रतिपाद्य संज्ञानिर्वचनं रूपयति। निर्गीतमिति तावद्वाद्यं नाम। निरर्थकं गीतमिति। तत्तु गन्धर्वैः बहिर्गीतमिति स्मृतम्। कुतः। दैत्यानां स्पर्धयेति। तत्कृतोऽयं स्वीकारः। ततो हेतोः। देवानामिति देवकर्मकं यद्बहुतयोत्कृष्टतया मननं। तेन प्रयोजनभूतेन वयं देवान्दानवेभ्यो बहुत्वेन मन्यामहे। तथाचेदं नाभ्यन्तरम्। बाह्यं गीतमस्माभिर्गीयत इति तैरेव वेदितव्यः।

अभिनवगुप्तः

## बहिर्गीताङ्गानि

यत्तत्कीर्तिधरेण नन्दिकेश्वरमतागमित्वेन दर्शितं तदस्माभिस्साक्षान्न दृष्टम्। तत्प्रत्ययात्तु लिख्यते सङ्क्षेपतः।

नत्र कृते मार्गोसारिते प्रयोगे नर्तकीचतुष्कं पटान्तर्हितपुष्पवीथ्यां पुष्पाञ्जलिमादाय प्रविश्याष्टाभिः षोडशाभिर्द्वादशभिर्वा यः प्रतिक्षेपो गीयमानः स्थितलयेन तदर्थं भावयेत्। अपकृष्टे तु पदे स्थितलयेन परिवर्त्य पूर्वरङ्गमध्ये पुष्पं त्यक्त्वा मध्यगतलयं परिवर्तद्वयमङ्गहारैः कुर्यात्। तत्र प्रथमः पञ्चकल उपोहनः। पुष्पवीथ्यां सूचया भावयेन्। ततः तिस्रो वर्तितं करणं कुर्युः। चतुर्थी तु वैशाखरेचितकरणम। एतदेव तमङ्गहारैः कुर्यात्। ततः प्रथमवस्त्वर्थमभिनयेत्। ततस्सर्वा मिलित्वा तदेव देवताराधकं पिण्डीबन्धं कुर्युः। तत्रोपोहनमङ्गहारैर्नृत्येयुः। ततो द्वितीयांप्राग्वदुपोहनं प्रयुज्य द्वितीयवस्तुनः चच्चत्पुटात्मकेनार्थमुपानयेत्। तदेव चास्य पतिक्षेपाङ्गहारपर्यस्तकाख्यं कुर्यात्। ततः सर्वाः शृङ्खलां कृत्वा पुनरुपोहनं कुर्युः। तत आद्या प्रतिक्षेपं कृत्वा प्रथमवस्त्वर्थं पुनरभिनयेत्। द्वितीया चाङ्गहारं कुर्यात्। ततः प्रथमपिण्डस्योपोहनं कुर्युः। ततस्तृतीया प्रविश्योपहारं कृत्वा तृतीयवस्तुनः पञ्चपाणेरर्थमभिनयेत्। आद्यौ अङ्गहारैः कुर्याताम्। ततो लतापिण्डीस्थमुपोहनं कुर्युः। ततो द्वितीया द्वितीयस्यार्थमभिनयेत्। ततोऽङ्गहारान्कृत्वा शृङ्खलया सोपोहनं कुर्युः। प्रथमा आद्यस्याभिनयनं कृत्वा आद्यं पिण्डीबन्धं कुर्यात्। ततस्सर्वा नार्थे उपोहनं कुर्युः। पुनश्चतुर्थी तुर्यवस्तुनः पञ्चपाणेरर्थमभिनयेत्। ततस्सर्वाः भेद्यकस्थाः तृतीयोपोहनं रचयेयुः। पुनस्तृतीया तदेव भावयेत्। ततो लतास्थाः द्वितीयोपोहनं सूचयेयुः। पुनर्द्वितीया द्वितीयस्यार्थमभिनयेत्। अन्याङ्गहारं कृत्वा शृङ्खलयोपोहनं कुर्यात्। आद्या प्रतिक्षेपार्थमभिनयेत्। अन्या-अङ्गहारं कृत्वा विदध्युः, यदा चतुर्थवस्त्वन्तात्तृतीयद्वितीयप्रथमवस्तूनि केवलैरेवाङ्गहारैः कुर्युः। तदेव हि पुनर्वस्त्वन्याश्रयेण तेन प्रतिक्षेपान्ते आद्या(अन्याः)पिण्डीबन्धं कृत्वा रङ्गपीठं परीत्य पुष्पवीथ्यां पुष्पाणि कृत्वा अपसरेयुः। एवमन्याश्चतस्रो द्वितीयमासारितं प्रयुञ्जीरन्। एवं चतस्रश्चतस्रो यावच्चतस्रः। उक्तं हि "एवं पदे पदे कार्यो विधि" रिति।

पिण्डीबन्धकाले तु द्वादशमाला विकिरेयुः। तत्र षोडश सम्भूय शैवमन्यं वा पिण्डीबन्धं कृत्वा पुष्पवीथ्यां पुष्पं प्रतिक्षिप्य निष्क्रामयेयुः। अभावे तु आसारितचतुष्कान्ता एव चतस्रस्तत्र प्रतिक्षेपार्थवद्भिः पदैः दर्शितमुपोहनं चच्चत्पुटपञ्चपाणिद्वयसन्निपाताश्चेति तालाध्यायोक्तपदैः सह भविष्यति। एवमासारितक्रिया। ततो वर्धमानं प्रयुञ्जीरन्। एकप्रघट्टकेन चतुर्भिर्नयैः परिवर्तं प्रयुज्य पटेऽपकर्षिते पुष्पवीथ्यां चतसृणां नर्तकीनां प्रवेशः, ततो ब्राह्मीपरिवर्तेन पुष्पाञ्जलिं क्षिपेयुः। तत एका ब्राह्मीमभिनयेत्। ततस्सर्वाः शिववीथ्यामासीरन्। तद्यथा—एकस्या आलीढमर्थवत् मण्डलवत्खटकामुखेन। तत्पार्श्वयोः द्वौ षोडशकलानिबद्धसंभाविता गीतिकोद्दिष्टा। (तदनन्तरं वर्धमानप्रयोगे यत्प्रोक्तं भरतेन कण्डिकाः विशालादयः ते प्रयोज्याः। वर्धमानानन्तरं ध्रुवां कुर्यात्) इति नन्दिकेश्वरमतानुसारेणायं चित्रपूर्वरङ्गविधिरिति मया न बद्धः।

अभिनवगुप्तः

नाट्यशास्त्रव्याख्यायामेकोनत्रिंशाध्याये उक्तं तत्र द्रष्टव्यम्।

## बहिर्यवनिकाङ्गानि—पूर्वरङ्गाङ्गानि

प्रत्याहाराद्यासारितक्रियापर्यन्तं नवाङ्गानि पूर्वरङ्गाङ्गानां अन्तर्यवनिकाङ्गानीत्युच्यन्ते। ततो गीतविधिः, उत्थापना, परिवर्तनं, नान्दी, शुष्कावकृष्टा, रङ्गद्वारं, चारी, महाचारी, त्रिगतं, प्ररोचनाचेति दश बहिर्यवनिकाङ्गानीत्युच्यन्ते। अन्तर्यवनिकाङ्गानां दृष्टार्थ एव प्रयोगः। तान्यन्तरेण प्रयोगस्यैवासंपत्तेः। बहिर्यवनिकाङ्गान्यपि दश दृष्टफलान्येव। तथाहि गीतकवर्धमानान्युपजीव्य

ध्रुवागानं, नाट्योपजीव्यत्वादवश्यं प्रथमं बुद्धौ निवेश्यं तावत्सामान्ये। तत्र सदाचारपालनाय देवतावन्दनं ततःपर माशीर्वादनमभिमुखीकरणार्थम्। ततोऽपि शङ्क्यमानविघ्नशान्त्युपकरणीभूतस्योत्तेजनं, ततोऽपि पुराकल्पद्वारेण प्रयोक्तव्यानुसन्धानं, ततोऽपि शृङ्गारवीरयोः सर्वत्र रञ्जकपरमपुमर्थताप्रकर्षादुपक्षेपः। तदपि नाट्यविनेयसुकुमारजने स्वच्छन्दताहारिसर्वरञ्जकहास्यप्राधान्येन काव्य विषोद्भवनाभिधेयानुसन्धानं तस्यापि प्रयोजननिरूपणम। एवं यथाशास्त्रं कुर्वत आदिवाक्यपरिग्रहो लौकिकस्य वा कर्तव्यविषयमनुसन्धानम्। तथैव नाट्यारम्भे गीतकपिण्यादिप्ररोचनान्तं लौकिकानुसार्येव। नात्र कस्यचिदङ्गस्य सामर्थ्यलक्ष्यत्वादि चोदनीयम्। सुकुमारजनविषयत्वादस्य प्रयोगस्य। तस्मान्नालौकिकं किञ्चिदेतत्। केवलं नाट्यस्य रचनाप्राधान्याद्वैचित्र्येण योजनीयमदृष्टसंपत्तये च इति मन्तव्यमित्यलं बहुना।

अभिनवगुप्तः

**बर्हिः**—तानः

मध्यमग्रामे रिवर्जितषाडवः।
प म ग स नि ध.

कुम्भ

**बलभद्रः**—देशीतालः

बलभद्रः प्लुतो गश्च लोद्रुतोऽनुद्रुतो लघुः।
SS।००।

लक्ष्मणः

**बलिभित्तिः**—मेलरागः (विश्वम्भरीमेलजन्यः)

(आ) स म ग म ध नि प नि स.
(अव) स नि ध प म ग रि स.

मज

**बलहंसः**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म प ध स.
(अव) स नि ध प म रि म ग स.

मज

—रागः

धैवतांशग्रहन्यासो मन्द्रमध्यमकम्पितः।
निषादतारसंयुक्तो बलहंसः प्रकीर्तितः॥

सोमेश्वरः

**बला**—मूर्छना

सुबलाशब्दे द्रष्टव्यम।

**बलिबन्धाञ्चितम्**—उत्प्लतिकरणम्

यत्राञ्जलिं पृष्ठदेशे विधायाञ्चितमाचरेत्।
बलिबन्धाञ्चितं नाम करणं तत्प्रचक्षते।
केचित्तु गजदन्तेन कार्यमित्येतदूचिरे॥
अलकेचिदित्यशोकादयः।

वेमः

**बलिभित्**—तानः

प—लोपः-षाडवः।
रि स नि ध म ग.

कुम्भः

**बलोदरः**—मेलरागः (लताङ्गीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध नि प ग म ग रि स.

मज

**बसवशङ्करः**—चित्रतालः

द्रुतत्रयं लदौ लश्च ताले बसवशङ्करे।
मात्रा ४ अर्धकला त्रिपमयतिः॥
०००।००।

ताललक्षणे

**बहिर्गता**—जङ्घा

पार्श्वप्रसारिता नृत्ते या जङ्घा सा बहिर्गता।

विप्रदासः

पङ्गुवाद्यभिनये कार्या बहिष्क्रान्ता विचक्षणैः।

सोमेश्वरः

बहिष्क्रान्ता—बहिर्गता।
बहिर्गतं क्षितौ पार्श्वे निर्गतं खण्डसूचके।

ज्यायनः

बहिर्गतं—जङ्घाकर्म। खण्डसूचकं—स्थानम्।

**बहुत्वम्**

अलङ्घनं तदभ्यासो बहुत्वं द्विविधं मतम्।
स्वरस्य स्पर्शनं यत्तल्लङ्घनं परिकीर्तितम्॥
साकल्येन स्वरस्पर्शस्त्वलङ्घनमिति स्मृतम्।
यदेकस्य स्वरस्यैव नैरन्तर्येण वाऽथवा॥
व्यवधानेन भूयोऽपि भूयोप्युच्चारणं हि तत्।
अभ्यास इति शंसन्ति बहुत्वं द्विविधं ततः॥

तुलजः

**बहुधारी**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स ग म ध प ध नि स.
(अव) स नि ध म ग रि म ग स.

मज

**बहुभङ्गिकम्**—शारीरभेदः

तच्छारीरगुणा मिश्रा यत्र तद्बहुभङ्गिकम्।

पार्श्वदेवः

**बहुमतिः**

गुणानुद्भाव्य कस्मिंश्चित्तत्र पूजा प्रवर्तनी ।
स्वार्थेन्प्रत्याविनी चेति बुद्धिर्बहुमतिः स्मृता ॥

- भावविवेकः

**बहुरूपम्**—देशीनृत्तम्

नानावेषधरं यत्तद्बहुरूपमितीरितम् ।

वेदः

**बहुला**—मेलरागः

गौरीमेलसमुद्भूता बहुला मध्यमोज्झिता ।
सविर्योगी निना युक्ता गान्धारोद्ग्राहणांशका ॥
प्रथमप्रहरोत्तरगेया ।

अहोबिलः

**बहुलीरागध्यानम्**

दूर्वादलश्यामलभव्यगात्रा
शय्यातलस्थापितनव्यपात्रा ।
प्रसूनमालापरिबद्धकेशा
विलासिनीयं बहुली विभाति ॥

श्रीकण्ठः

मदनसन्निभौ माधवीलतागृहनिवासिनीं गूढचारिणीम् ।
विहितमालया वीणयाञ्चितां बहुलिकां सदा भावयाम्यहम् ॥

रागसागरः

**बहुली**—उपाङ्गरागः (वीणायां वादनक्रमः)

ग्रहं कृत्वा मध्यषड्जं संस्पृशेत्तत्परौ स्वरौ ।
संप्राप्य पञ्चमं षड्जं अवरोहेदुभाविमौ ॥

ततश्च स्थायिपर्यन्तं तृतीयादवरुह्य च ।
स्थायिनः प्राक् द्वितीयाद्वा समारुह्य स्वरद्वयम् ॥

प्राक् तुरीयं प्रकम्प्याथ वादयेत्तत्परं स्वरम् ।
स्थायिस्वरे यदा न्यासः तदा तु बहुलीभवेत् ॥

वेमः

बहुली रामकृतिरिति नामान्तरम् ।

—मेलरागः (मालवगौलमेलजन्या)

मध्यमांशग्रहन्यासा रिधहीनाऽथवा नपा ।
प्रगेया बहुली प्राज्ञैस्सन्ध्यायामिति निर्णयः ॥

श्रीकण्ठः

**बहुसुवर्णकः**—तानः (रि—लोपः—षाडवः)

ध प म ग स नि

बहुसौवर्ण इत्यपि इयं पठिता ।

कुम्भः

**बहुसौवर्णः**—तानः

बहुसुवर्णकशब्दे द्रष्टव्यम् ।

**बहुसौवर्णकः**—तानः

मध्यमग्रामे नारदीयतानः ।
ग म प ध नि स .

नान्यः

**बह्वक्षरा**—चतुष्पदागीतम्

सुव्यक्तवाक्यकलिता समन्विता लघुभिरक्षरैः प्रायः ।
द्रुतलयवाद्यसमेता ज्ञेया बह्वक्षरा तज्ज्ञैः ॥

वेमः

व्यक्तवाक्या लघुप्राया लघ्वक्षरसमन्विता ।
द्रुतवाक्या द्रुतलया ज्ञेया बह्वक्षरेति सा ॥

भरतः

**बसवराजः**

शिवतत्त्वरत्नाकरकर्ता । कालः १७००.
दक्षिणकन्नडस्थमूकाम्बिकाक्षेत्रवासीति ज्ञायते ।

**बाङ्गालिका**—रागः

न्यासांशकस्फुरितषड्जकपञ्चमाप-
न्यासे च सम्मत...निगरि...।
दीर्घप्रदाग्रतरधैवतरावरम्या
बाङ्गालिकेति कथिता मिथिलेश्वरेण ॥

नान्यः

स्फुरणैर्मध्यमपञ्चमजनितैस्संपूर्णदीर्घ धैवत......।
रिमतारैर्बङ्गाली गनिजापन्यासरुचिररवा ॥

कश्यपः

**बाणः**—हस्तः

तर्जन्याद्यास्त्रयोऽङ्गुल्यः अङ्गुष्ठेन तु संयुताः ।
प्रसृता स्यात्कनिष्ठा तु बाणहस्तः प्रकीर्तितः ॥

पार्श्वोभयोश्च चलितो सन्धिनृत्यप्रदर्शने ।
पुरोभागस्थितौ तौ चेत् षष्ठसंख्यानिरूपणे ॥

पुरोमुखः पुरोभागचलितो बाणदर्शने ।
नेत्रान्ते चलितो ह्येष नेत्रबिन्दुविसर्जने ।
बाणहस्तो नियुञ्जीत करटीकाविचक्षणैः ॥

विनायकः

**बाणगणाः**

बाणगणाः प्रतिष्ठायाः प्रोक्ता भेदाश्च षोडश ।
तत्र ये लघुपूर्वास्युस्तेषु प्रागधिकं लघुः ॥

मोक्षदेवः

बान्धवः—देशीतालः
बान्धवः परमाश्रयः ।
ऽ ऽ । ऽ ऽ ऽ ऽ
लक्ष्मणः

बार्हस्पती - मूर्छना
जीमूतग्रामे सप्तमी मूर्छना ।
मध्यग्रामे स्वरश्रान्त्यो यदा व्रजति मूर्छनाम् ।
तदा बार्हस्पती ज्ञेया मूर्छना ब्रह्मणः प्रिया ॥
वादिमत्त.

बालचन्द्रः—हस्तः
विनाचाङ्गुष्ठतर्जन्योरर्धचन्द्रस्य चोन्नताः ।
अङ्गुल्यो बालचन्द्राख्यस्स एव ज्ञातव्यं बुधैः ॥
प्रवेशे बालचन्द्रे च ह्रस्वेष्वन्येषु वस्तुषु ।
जन्तुष्वपि च कथितो भावशास्त्रविचक्षणैः ॥
गौरीमतम्

बालरामभरतम्
अयं ग्रन्थः केरलाधिपतिना बालरामवर्मणा कृतः ।
क्रैस्तवशक 1724 आरभ्य 1798 पर्यन्तमासीत् ॥

बालरामवर्मा
बालरामभरतग्रन्थकर्ता ।

बाला—श्रुतिः
पञ्चमस्य प्रथमा श्रुतिः
जगदेकः
निषादस्य प्रथमा श्रुतिः ।
सुधा

बालासारितम्—गीतम्
कनिष्ठासारितस्य नामान्तरम् ।

बालिकावसन्तः—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि ग म प ध नि स.
(अव) स नि ध नि प म प ध नि म ग रि स.
मर्जे

बाहुः
स्वस्तिकोऽधोमुखस्तिर्यगपविद्धं प्रसारितः ।
ऊर्ध्वास्यो मण्डलगतिरञ्चितोद्वेष्टितावपि ॥
पृष्ठानुसारीति बुधैर्दशधा बाहुरिष्यते ।
सरलः कुञ्चितो नम्र आविद्धान्दोलितौ तथा ।
उत्सारित इति प्राज्ञाः षडन्यान्केचिदूचिरे ॥
विप्रदासः

सरलः प्रोन्नतोऽन्यश्च कुञ्चितो ललितस्तथा ।
लोलितो वलितो बाहुः परावृत्तस्तथाष्टमः ॥
सोमेश्वरः

बाहुबन्धलोहडी—उत्प्लुतिकरणम्
गजदन्तेन हस्तेन क्रियते लोहडी यदा ।
तदा भवेद्बाहुबन्धलोहडी तद्विदां मता ॥
वेमः

बाह्यभ्रमरी—भ्रमरी
दक्षिणेनाङ्घ्रिणा स्थित्वा वाममङ्घ्रिं तु कुञ्चयन् ।
वामावर्तं भवेद्यत्र सा बाह्यभ्रमरी मता ॥
वेदः
सव्येतरेण पादेन स्थित्वा सव्याङ्घ्रिकुञ्चनात् ।
सव्यावर्तं भ्रमेद्यत्र सा बाह्यभ्रमरी मता ॥
कुम्भः
सव्यावर्तमिति । प्रदक्षिणमित्यर्थः ।

बाह्लीकः—मेलरागः (कोसलप्रियमेलजन्यः)
(आ) स रि ग म प ध नि स.
(अव) स नि ध प म ग रि स.
मज

बिटात—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स ग रि ग रि म प म ध नि ध प नि स.
(अव) स नि ध प म ग रि स.

बिडचिन्दम्—देशीनृत्तम्
खण्डद्वयात्मकं भिन्नतालमाभोजवर्जितम् ।
बिडचिन्दं ॥
वेदः

बिन्दम्
चिन्दस्य रूपान्तरम् ।

बिन्दुः—अर्थप्रकृतिः
प्रयोजनानां विच्छेदे यदविच्छेदकारणम् ।
यावत्समाप्ति यद्बन्धः स बिन्दुरिति कीर्तितः ॥
भरतः

बीजमित्युक्तारंभः विष्कम्भप्रवेशकादिभिः असंबद्धस्संबद्धो वा कथाशरीराद्विच्छेदहेतुतयाऽवतिष्ठमानो बिन्दुरित्याख्यायते । बिन्दुरिव बिन्दुः । यथा—पयोबिन्दुश्च्योतन्पयोभिष्यन्दलक्षणायाः क्रियाया अविच्छेदहेतुः यथा वा घृतबिन्दुः अग्निज्वलनलक्षणाया एवं विछिन्नाविछिन्नेषु कथाशरीरेषु योऽनुसन्धाता स बिन्दुरित्युच्यते ।

यथा—हा वत्साः खरदूषणेत्यादि महावीरचरिते ।

भोजः

प्रयोजनानां विच्छेदे यदविच्छेदकारणम् ।
यावत्समाप्तिर्बन्धस्य स बिन्दुः परिकीर्तितः ॥

भरतः

—देशीतालः

गोद्राप्ववाया गुरुर्बिन्दौ । ऽ ० ० ० ० ऽ

मदन:

—धातुः

बिन्दुरेकत्र तन्त्र्यां स्यात्प्रहारो गुरुनादकृत् ।

शार्ङ्गः

—वर्णालङ्कारः

प्लुताद्धर्व्यं ततः प्लुतं ।
इति क्रमस्यादारोहे यत्रासौ बिन्दुरुच्यते ॥
सास सारि गागा गमा पापा पाधा नीनी इति बिन्दुः ।

पण्डितमण्डली

—वर्णालङ्कारः (अवरोही)

नीनीनी ध पापापा म गागागा रि सासासा

पण्डितमण्डली

—वर्णालङ्कारः (आरोही)

चिरमेकस्मिन्स्वरे षड्जादिरूपे स्थित्वा तदीयतारमन्निवत्स्पृष्ट्वा कलामन्त्यकां च स्थित्वा यत्र पुनरपि समा सा मन्द्रया गम्यते स बिन्दुः ।

मतङ्गः

स्वरे कर्चाचिरं स्थित्वा तारं संस्पृश्य शीघ्रतः ।
पूर्वस्थानं यदा याति सबिन्दुरिति संज्ञितः ॥

हरिपालः

—वर्णालङ्कारः (सञ्चारी)

स्वरमाद्यं प्लुतं कृत्वा तं द्वन्द्वं नेमिवत्स्पृशेत् ।
प्रत्यागच्छेत्पुनर्मुख्यं स बिन्दुः परिकीर्तितः ॥

मोक्षदेवः

सासासारिसा, रीरीरीगरी, गागागामगा, पापापापमा, मामामापमा, पापापा धपा, धाधाधानिधा, ।

—वादनम् (उभयहस्तव्यापारः)

अनामया बहिस्तन्त्रीघाताज्जातो यदा ध्वनिः ।
तर्जन्या धार्यते बिन्दुः निश्शङ्केनोदितस्तदा ॥

शार्ङ्गः

—वीणायामुभयहस्तव्यापारः

बहिर्दक्षानामिकया घातात्तन्त्री भवेद्ध्वनिः ।
धार्यते वामतर्जन्या यदा बिन्दुस्तदा भवेत् ॥

कुम्भः

—व्यञ्जनधातुः

बिन्दावेकत्र तन्त्र्यां स्यात्प्रहारः पृथुनादवान् ।

कुम्भः

एकस्यामेव यत्तन्त्र्यां प्रहारो गुरुवल्गुवान् ।
विलम्बितकलाकालः स बिन्दुरिति कीर्त्यते ॥

नान्यः

—साधनसंबन्धवाक्यम्

प्रतिमुखसन्धौ तृतीयमङ्गम् । यथा मायामदालसे कुवलयस्य वाक्यं कृत्स्नामरादीति । अत्र भीताया मदालसायाः गालवदत्तसाधनदर्शनेनाश्वासनम् ।

सागरनन्दी

—हौडुक्किकहस्तपाठः

यदा वामेन हस्तेन समवष्टभ्य पुष्करम् ।
तर्जन्या ताड्यते बिन्दुः तदा सञ्जायते यथा ॥
दें दें गिटें गिरिटें गिरिटें गिरिगि ।

वेमः

**बिन्दुकलिङ्गा**—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि प म ग म रि ग रि स.

मञ्ज

**बिन्दुतिलकम्**—मात्रावृत्तम्

विषमं— चतुर्मात्रिकात्रयः गुरुः ।
समं द्वौ चतुर्मात्रिकौ पञ्चमात्रिक एकः लः गः ॥

विरहाङ्कः

**बिन्दुमालिनी**—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि ग म ग प ध नि प स,
(अव) स नि ध प ग म ग रि स.

मञ्ज

**बिन्दुमाली**—देशीतालः

मध्यगुर्वोस्तु चत्वारो बिन्दुमालिनि बिन्दवः

वेमः

ऽ ० ० ० ० ऽ
मा गा ससा रिरि गामा ।

जगदेकः

**बिन्दुहेरली**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग रि ग म प ध नि ध म प ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**विवास्**—मेलरागः

(आ) स रि ० ग ० ० ० प ध ० ० ० स.
(अव) स ० ० ० ध प ० ० ० ग ० रि स.

मेललक्षणे

बिवासु—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग प ध स.

(अव) स ध प ग रि स.

मञ्ज

बिब्बोकः—अनुभावः

ईर्ष्याणां भावानां प्राप्तावभिमानगर्वसंभूतः ।
स्त्रीणामनादरकृतो बिब्बोको नाम विज्ञेयः ॥

भरतः

अभीष्टप्राप्तामिमानगर्वसंभावनादरकृतो विकारो बिब्बोकः ।

भोजः

अभिमतवस्तूपहृतावपि गुरुदर्पादनादरस्तन्व्याः ।
स्खलितप्रियस्य संयमताडनमभिधायि बिब्बोकम् ॥

पद्मश्रीः

इष्टानां भावनां प्रणयेऽपि अनास्थागर्वसंभवः पादप्रहारः प्रियस्य कृतागसश्चरणयोः काञ्च्या संयमनं पुष्पमालया ताडनं अनादरपरिग्रहो बिब्बोकः ।

सागरः

बिब्बोकः

इष्टानां भावानां प्राप्तावभिमानगर्वसंभूतः ।
स्त्रीणामनादरकृतो बिब्बोको नाम स ज्ञेयः ॥

बिम्बोक इत्यपि पठितम् ।

विशदभ्रूयुगक्षेपो निर्भुग्नोष्ठस्सविभ्रमः ।
ग्रीवा रेचकसंयुक्तो बिब्बोकस्सोऽपि कीर्तितः ॥

भावविवेकः

बिब्बोकस्त्विष्टलाभेन जातादूर्वादनादरः ।

शार्ङ्गः

विरुदः—प्रबन्धाङ्गम्

विरुदं वेषभाषाभिः द्विषामुद्वेगदं भवेत् ।

हरिपालः

विरुशब्दो विरोधार्थो महाराष्ट्रप्रसिद्धितः ।
परेभ्यस्तत्प्रदानेन बिरुदं सूरिभिः स्मृतम् ॥

यद्वीररससंयुक्तं द्विषामुद्वेगदायकम् ।
रसान्तरसमायुक्तं तत्पदं बिरुदं मतम् ॥

जगन्नाथः

औदार्यशौर्यादिगुणप्रशंसा शब्दं प्रभूणां विरुदं वदन्ति ।
आर्यप्रसिद्धेर्विरुदाख्यशब्दो म्लेछप्रसिद्धेरथवा निरुक्तः ॥

एवं प्रसक्ते सति संशयेऽस्मिन् विनिश्चितं श्रीचरणैर्विविच्य ।
विरुद्धवाची विरुदाख्यशब्दो भवेन्महाराष्ट्रजनप्रसिद्धः ॥

निर्जित्य शत्रून् बिरुदं दधानं राजानमासाद्य सपत्नभूपाः ।
रामार्जुनादेरिव शौर्यरीती राधासुतादेरिव दातृतेति ॥

एतत्प्रबन्धश्रवणे तदीयचिह्नावलोके खलु ते विशुद्धाः ।
एतादृशं वीररसप्रधानं द्विषां तथोद्वेगकरं च यत्स्यात् ।
द्विषां विरुद्धप्रतिपादनस्य बोद्धव्यमेतद्विरुदाभिधानम् ॥

रघुनाथः

बिलहरी—मेलरागः

शङ्कराभरणमेलजोऽयं रागः ।
बिलहर्यां समारोहे मध्यकुञ्जरवर्जनम ॥
(मध्यमनियोर्लोपः)

परमेश्वरः

बिलहरिः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग प ध स.

(अव) स नि ध प म ग रि स.

मञ्ज

बिलहरीरागध्यानम्

कण्ठगतपुष्पमालां मञ्जुलसङ्गीतलोलुपां साध्वीम् ।
वामकरनिहितवीणां नादकलां बिलहरीं ध्याये ॥

रागसागरः

बिसखादिकम्—संगीतशृङ्गाराङ्गम्

अभिनवबिसाङ्कुरोद्भेदसमये सरः समाश्रित्य कामिमिथुनानां क्रीडाविशाखादिकम ।

भोजः

बिहाग्—मेलरागः

(आ) स ० रि ० ग म ० प ० ० ० नि स.

(अव) स नि ० ० ० प ० म ग ० रि ० स.

मेललक्षण

बीजम्—अर्थप्रकृतिः

अल्पमात्रमुपक्षिप्तं बहुधा यद्विसर्पति ।
फलावसानं यच्च स्यात्तद्बीजमिति संज्ञितम् ॥

कथाशरीरव्यापिनि नायके कर्तरि कर्मणि वा अवतिष्ठमाने आरम्भो बीजमित्युच्यते । यथा—रामचरितं, शिशुपालवधः इति । एतेन नायिका अपि व्याख्याताः । यथा—लक्ष्मीस्वयंवरः, सुभद्राहरणमिति । बीजमिव च बीजम् । यथा बीजमुप्तमङ्कुरमूलप्रकाण्डपत्रस्कन्धशाखाप्ररोहपल्लवपुष्पादिना प्रकारेण बहुधा विसर्पदन्ते फलाय कल्पते, तथा यो महावाक्यार्थो नायकोपनायकानुनायकप्रतिनायकसुहृत्सहायादिव्यापारभेदान बहुधा विसर्पन्नन्ते फलाय जायते, स बीजमित्युच्यते ।

भोजः

यथा—प्राचेतसो मुनिवृष इति महावीरचरिते ।

स्वल्पमात्रं समुत्सृष्टं बहुधा यद्विसर्पति ।
फलावसानं तच्चैव बीजं तदिह कीर्तितम् ॥

भरतः

—मातृगुप्तमते मुखसन्धेः तृतीयमङ्गम्

साध्योपगमस्य फलस्य बीजभूतमुक्तं वाक्यम्। यथा—मायामदालसे पातालकेतुवधचिन्तनं देवरातेरित्यादिश्लोकोक्तं बीजं, साध्यपातालकेतुवधस्य फलस्य, भवति।

सागरनन्दी

**बीजदर्शनम्**—सन्धिः

प्रशान्तजातिनाटके चतुर्थस्सन्धिः।

शारदातनयः

**बीजसंपत्तिः**—विमर्शसन्धौ तृतीयमङ्गम्

कार्यसंपादने विघ्नहरणस्य साधनस्य संपत्तिः बीजसंपत्तिः। यथा—मायामदालसे पातालकेतुवधः।

सागरनन्दी

**बीजोक्तिः**—सन्धिः

प्रशान्तजातिनाटके तृतीयस्सन्धिः।

शारदातनयः

प्रशान्तशब्दे द्रष्टव्यम्।

**बीभत्सः**—रसः

बीभत्सो नाम जुगुप्सास्थायिभावात्मकः। स चाहृद्याप्रशस्ताप्रियाचोक्ष्यानिष्टश्रवणदर्शनोद्वेजनपरिकीर्तनादिभिरुत्पद्यते। तस्य सर्वाङ्गसंहारमुखविकूणनोल्लेखननिष्ठीवनोद्वेजनादयो अनुभावाः। भावाश्चापस्मारोद्वेगावेगमोहव्याधिमरणादयः।

भरतः

हृदयस्यापि किञ्चित्कस्यचिन्निसर्गतोऽप्रियं लशुनमिव द्विजानां अप्रियं। धात्वादिदोषात् यथा, श्लेष्मोपहतस्य क्षीरं। अचोक्षं स्वरूपेणादुष्टमपि तुमलाद्युपहतं। अनिष्टं यत्रानिष्टं भुक्तत्वेनेच्छानिवृत्ता। संहारः पिण्डीकरणं। मुखविकूणनं तदङ्गानां सङ्कोचनम्। उल्लेखनमुल्लाघः। उद्वेजनं गात्रोद्धूननम्।

अभिनवगुप्तः

उद्वेजकः क्षोभजश्च बीभत्स इति तद्विधा।
विष्ठादिभिस्स्यादुद्वेगी क्षोभजो रुधिरादिभिः॥

विप्रदासः

जुगुप्सात्मको बीभत्सः। तस्यात्यन्ताहृद्यक्रिमिकीकसपूयादयो विभावाः। स चोद्वेगः क्षोभणश्चेति द्विधा। उद्वेगी यथा—

उत्कृत्योत्कृत्य कृत्तिं इत्यादि (मालतीमाधवे)। क्षोभणो यथा—आन्त्रप्रोतबृहत्कपालेत्यादि (मालतीमाधवे)। विरक्तानां रमणीयेऽप्यपि कान्ताजघनस्तनादिषु घृणाशुद्धानां बीभत्सो जायत इति। त्रिविधो वा। यथा—

बीभत्सः क्रिमिपूतिगन्धवमथुप्रायैर्जुगुप्सा कभूः।
उद्वेगी, रुधिरान्त्रकीकसवसामांसादिभिः क्षोभणः॥

वैराग्याज्जघनस्तनादिषु घृणाशुद्धोऽनुभावैर्वृतो।
नासावक्त्रविकूणनादिभिरिहावेगो विशङ्कादयः॥

रसविवेकः

वधेर्धातोस्सनन्तस्य बीभत्सं रूपमिष्यते।
यत्पदार्थस्य बीभत्सा स बीभत्स इतीरितः॥

गर्हा निन्दा च बीभत्सा कुत्सा पर्यायवाचकाः।
गर्हणीयश्च निन्द्यश्च कुत्सनीयश्च यो भवेत्।
स भावः कथ्यते सद्भिर्बीभत्स इति संज्ञया॥

शारदातनयः

**बीभत्सरसः**

जुगुप्सितार्थे विज्ञानजनिता चित्तविक्रिया।
बीभत्साख्यो रसो ज्ञेयो नेत्रवक्त्रविकारकृत्॥

भावविवेकः

**बीभत्सा**—दृष्टिः

निकुञ्चितपुटप्रान्ता घृणाविक्रान्ततारका।
संरुद्धपक्ष्मा बीभत्सा बीभत्से विनियुज्यते॥

सोमेश्वरः

क्षोभान्विता समुद्विग्ना मिथो मिलितपक्ष्मका।
आकूणितापाङ्गपुटा तरलीकृततारका।
बीभत्सा दृष्टिराख्याता बीभत्सरससंश्रया॥

वेमः

**बुद्बुदकम्**—ध्रुवावृत्तम्

पञ्चमं सप्तमं चैव नैधनं च गुरूण्यथ।
पादे तु बृहतीसंस्थे यत्र बुद्बुदकं यथा॥

सिधखगपतिसोहिदो। सितखगपङ्क्तिशोभितः।

भरतः

**बुधहस्तः**

कर्तरीमुखहस्ते तु......अङ्गुष्ठमेव च।
मध्यमा तर्जनीमध्यश्लिष्टा चेत् श्लिष्टकर्तरी॥
बुधार्थे नवसंख्यायां कथ्यते श्लिष्टकर्तरी॥

भ्रक्षारः

**बृन्दः**

गातृवादकसङ्घातो बृन्द इत्यभिधीयते।
चत्वारो मुख्यगातारो द्विगुणास्समगायनाः॥

अष्टौ तु गायनीः प्रोक्ताः तालधारि चतुष्टयम्।
मार्दङ्गिकास्तु चत्वारो वांशिकानां चतुष्टयम्॥

एवं चोत्तमबृन्दस्य कर्तव्यं च प्रयत्नतः।
मध्यमं स्यात्तदर्धेन तदर्धेन लघु स्मृतम्॥

दामोदरः

## बृन्दम्

सभायामथ सिद्धायां साम्प्रदायकबृन्दकम् ।
रङ्गाचनिं विशेत्सम्यक् स्फुरद्गतिमनोरमम् ॥
गातृवादकसङ्घातो बृन्दमित्यभिधीयते ।
आलापकास्तु मुख्यास्तु चत्वारो यत्र गायकाः ॥
द्विगुणास्तत्सहायास्तु गायिन्यस्तत्समा मताः ।
चतुष्टयं तालभृतां मार्दङ्गिकचतुष्टयम् ॥
चतुष्टयं वांशिकानां तदुक्तं बृन्दमुत्तमम् ।
तदर्धं मध्यमं प्रोक्तं कनिष्ठं स्यात्तदर्धतः ॥

देवेन्द्रः

गातॄणां वादकानां च समूहो बृन्दमुच्यते ।

कुम्भः

## बृन्दगुणाः

मुख्यानुवृत्तिर्मिलनं ताललीलानुवर्तनम् ।
मिथः त्रुटितनिर्वाहः त्रिस्थानव्याप्तिशक्तिता ।
शब्दसादृश्यमेतीति प्रोक्ता बृन्दस्य षड्गुणाः ॥

दामोदरः

अनुवृत्त्यैव मुख्यस्य तालकालप्रवीणता ।
त्रिस्थानभृति धैर्यं च मेलस्त्रुटितमेलनं ॥
मानशब्दस्य सम्पूर्तिर्वाद्याक्षरसुपाठता ।
कौचटद्राढवक्तृत्वं बृन्दस्यैते गुणा मताः ॥

देवेन्द्रः

## बृन्दावनसारङ्गः—मेलरागः

(आ) स ० रि ० ० म ० प ० ० नि ० स .
(अव) स ० नि ० ० प ० म ० ० रि ० स .

मेललक्षणम्

—मेलरागः ( खरहरप्रियामेलजन्यः )
(आ) स रि म प नि स .
(अव) स नि प म रि ग म रि स

मज

## बृहतीच्छन्दोवृत्तानि

शतानि पञ्चवृत्तानां बृहत्यां द्वादशैव तु ।

भरतः

## बृहत्कथा—श्रव्यकाव्यम्

लम्भाङ्किताद्भुतार्था पिशाचभाषामयी महाविषया ।
नरवाहनदत्तादेः चरितमिव बृहत्कथा भवति ॥

भोजः

## बृहत्किन्नरी

किन्नर्यदपरोच्यते ।
एतस्या अधिका दैर्घ्ये द्वादशाङ्गुलमानतः ।
परिणाहेऽङ्गुलेनापि तन्त्री स्नायुमयी भवेत् ॥
आलापिन्यां यथापूर्वमुक्तं तुम्बं तृतीयकम् ।
तथास्यामपि कर्तव्यमेवमेषा वितुम्बिका ॥
लघ्वीवदस्यां विज्ञेयं लक्ष्मशेषं विजानता ॥

कुम्भः

—वीणा

कथ्यते साम्प्रतं रम्या किन्नरी महती मया ।
द्विवितस्त्यधिकायामा परिणाहेऽङ्गुलाधिका ॥
स्नायुतन्त्रीसमायुक्ता तुम्बकत्रयभूषिता ।
शेषं स्यात्किन्नरीलक्ष्म सारीमेडकशङ्कुषु ॥
ककुभे पत्रिकायां च बृहती किन्नरी भवेत् ।
सारीककुभयोर्मध्ये दक्षिणेन करेण तु ॥
धारयेत्किन्नरीदण्डं मुष्ट्याऽशिथिलबन्धया ।
तर्जनी मध्यमा नाम्ना उल्लेखपरिलेखने ॥
व्याप्रियन्ते प्रयोगेषु तन्त्र्या वादनकर्मणि ।
तर्जनीमध्यमा नाम सारीणामन्तरेऽन्तरा ।
प्रसार्यन्ते स्वरव्यक्त्यै वामाः किन्नरवादने ॥

सोमेश्वरः

## बृहत्किन्नरीलक्षणम्

अत्रैव ककुभे वामभागे शंकुपरिस्थले ।
पत्रिका प्राक्तनयातु तस्याः किञ्चिदेवोन्नताम् ॥
संस्थाप्य पत्रिकां तस्यां बन्धयेत्तंत्रिकायुगम् ।
तस्माच्छङ्कोरधोदेशे बन्धनीयाः प्रयत्नतः ॥
सारिकास्तत्रपूर्वस्यास्तंत्रिकायास्समादृढम् ।
अधस्स्थले तन्त्रिकायास्तिस्र स्थाप्याः परा अपि ॥
तिस्रस्तदन्तिमायास्तु स्थाप्यास्तन्त्र्यास्तु तत्र च ।
अनुमंद्राभिधास्सप्त स्वराः स्थाप्या यथायथम् ॥
पूर्वोक्तरीत्या तत्रानुमंद्रसप्तकवादनम् ।
(न) सस्वरैस्साधयेद्धीमान् शिक्षाभ्यासवशानुगैः ॥
पुनर्वादनविन्यासविशेषं वक्ति तत्ववित् ।
वीणादण्डः परः कार्यः पूर्वस्मान्न्यूनितोङ्गुलैः ॥
गुणेन्दुसंख्या (रिवारं) रंतेस्य दृढा लोहशलाकिका ।
बध्यते सदृशा वक्त्रे पश्चात्ककुभवामतः ॥
पालिकायां पाणिरूपां शलाकां स्थापयेदमूम् ।
कर्णशङ्कोर्मूर्धदेशे शलाकाग्रं फणाकृति ॥

निधाय कर्णदेशस्थं शङ्कुरन्तरतो यथा ।
तथा द्रोर्णान्तरफणायां लग्नां कृत्वा तु मूर्ध्वतः ॥

प्रसार्य तन्त्रिकामुक्तरीत्या शङ्कुयुगेन ताम् ।
नीत्वा सुदृढतां पूर्वतन्त्रिकां सदृशध्वनिम् ॥

विधाय वादयेत्प्राज्ञः कमयाभ्यासयोगतः ।
वामहस्तानामिकया अन्तरे सक्तया दृढम् ॥
आसारणादियद्वाद्यं चतुर्थाप्रःक्प्रकीर्तितम् ।
तदिहापि यथायोगं योजयेद्वाद्ययोगयुक् ॥
दुष्करामन्यशास्त्राणां दृष्ट्वा मत्वेह किंनरी ।
पटुतद्वादने वाद्यं सर्वविद्यागुरुर्व्यधात् ॥

स्वकीयानुभवादेतत्साक्षात्कृत्वोपदर्शितम् ।
अनन्यदृष्टमधुना प्रथक्कृत्प्रत्ययो च्यते) दितम् ॥

तत्र रत्नाकरादीनां दृष्ट्वा सारीप्रकल्पनम् ।
सुखबोधाय शिष्याणां दर्शयत्यवनीपतिः ॥
सारीमस्तकमध्यानां यदिहान्तर्रामष्यते ।
मेरुमूर्धन्युपक्रम्य यथावत्प्रतिपाद्यते ॥

तत्राद्यम(व)तरं पञ्चाङ्गुलं सयवमीरितम् ।
तद्द्वितीयं च चतुरङ्गुलकं तत् तृतीयकम् ॥

तुर्यं चैत्र यवन्यूनं पञ्चमं त्र्यङ्गुलं तथा ।
यवाधिकं ततः षष्ठं यवोनं त्र्यङ्गुलं पुनः ॥

सयवं त्र्यङ्गुलं ज्ञेयमंतरालं तु सप्तमम् ।
वसुसंख्यं पुनर्ज्ञेयं सार्धत्र्यङ्गुलमन्तरम् ॥

नवमं तु यथार्थोनं दशमं पुनरन्तरम् ।
सार्धाङ्गुलमितं ज्ञेयं यवोनं त्र्यङ्गुलं ततः ॥

एकादशं द्वादशं तु तत्तृतीयांशवर्जितम् ।
त्रयोदशं ततो ज्ञेयं यत्तृतीयांशमङ्गुलम् ॥

अङ्गुलं मानमाख्यातमन्तरे च चतुर्दश ।
द्वितीयमन्तरालेतु न्यस्य तुम्बमधोमुखम् ॥
तस्मिन् दण्डे तनोऽधस्तादन्यत् ककुभमूर्धतः ।
अधस्तात्तुम्बकं न्यस्य तुम्बकं परिधिर्मुखे ॥

षट्त्रिंशदङ्गुलो ज्ञेयः प्रथमेऽधस्तने पुनः ।
किञ्चिन्न्यूनो भवेत्तस्मान्निवेश्यास्तत्र सारिकाः ॥
ईषदप्रप्रसरिकाः पूर्वमेव प्ररूपिताः ।
मुक्ततन्त्रीभवस्तत्र जायते प्रथमस्वरः ॥

चतुर्दशान्तरैरन्ये भवेयुस्ते चतुर्दश ।
सप्तकद्वयमेवं स्यात् सतारस्वरमत्र तु ॥

श्रुतीरपि विचिन्वन्ती तदुज्ज्ञास्तदेशभागतः ।
सप्तकत्रयपूर्त्यर्थं सार्धस्स्युरधिका यथा ॥

तथा प्रागेव गदितमन्तराण्यपि तत्वतः ।
तददृष्टाय विज्ञेयं नदृष्टपरिपोषकम् ॥

दृष्टद्वारा पुनरिदमदृष्टायोपपद्यते ।
तस्माददृष्टप्रधानेऽस्मिन् शास्त्रे राजोपदेशतः ।
स्वराविर्भावमाज्ञाय स्थाप्यास्स्युस्सारिका बुधैः ॥ कुम्भः

बृहद्दाक्षिणात्या—रागः

धांशन्यासग्रहोपेता मन्द्रमध्यागतारका ।
ऋषभेणाऽथ षड्जेन गान्धारेणाथ भूयसी ॥

बृहती दाक्षिणात्येयं परिपूर्णा समस्वरा ।
गुर्वाज्ञास्मरणे प्रोक्ता भिन्नषड्जसमुद्भवा ॥ जगदेकः

### बृहद्देशी

मतङ्गकृता । अत्र, काश्यप, नन्दि कोहल दत्तिल दुर्गशक्ति याष्टिक बल्लभ विश्वावसु शार्दूलप्रभृतयः उदाहृताः । तस्मात्ते प्राचीनाः । कोऽसौ वल्लभ इति ज्ञातुं,न शक्यते । यतः परैर्नायं प्रत्यभिज्ञापितः । अत्र (यन्मतङ्गेन विवृता) द्वादशस्वरमूर्छना सा अभिनवादिभिरनादृता । किन्नरीवीणा लक्षणमपि अत्र दृश्यते । भरतं गुरुमाह मतङ्गः ।

बृहद्भानुः—देशीतालः

बृहद्भानू रययुतः । ऽ।ऽ।ऽऽ लक्ष्मणः

बृहन्मुखः—देशीतालः

प्लुतत्रयं गुरुत्रयं लघुत्रयं गुरुत्रयं ।
लघुर्गुरुर्गलौ लपौ बृहन्मुखाख्यतालकं ॥ तालप्रस्तारः
31½ मात्राः

### बृहस्पतिमतम्

अभिनयभूषणे नन्दिभरते च बृहस्पतिमतमनेकस्थलेषूदाहृतम् । शारदातनयोऽपि तं स्मरति ।

### वेगडारागध्यानम्

स्वनाथचिबुकन्यस्तसव्यहस्तां सिताम्बराम् ।
करेणान्येन गृह्णन्तीं हृदि ध्यायामि वेगडाम् ॥ रागसागरः

**बोट्टः—रागः**

पञ्चमीमध्यषड्जाभ्यां बोट्टरागः प्रजायते ।
पञ्चमस्स्याद्ग्रहे चांशे मध्यमान्तो भवेदयम् ॥

गान्धारात्पः काकलीयुक् पञ्चमादिकमूर्छनः ।
सावरोही प्रसन्नान्तः संपूर्णोयमितीरितम् ॥

हरिः

**बोट्टरागः**

पञ्चमीषड्जमध्याभ्यां बोट्टरागस्य संभवः ।
पञ्चमांशग्रहो मान्तोऽल्पगान्धारस्सकाकलिः ॥

मोक्षः

**बोधः—चित्ताभिनयः**

बोधस्त्याच्चेतनाप्राप्तिः
पुरोभागे द्वौ पताकौ संयुक्तौ चलितौ यदि ।
नेत्रस्थाने त्विमौ हस्तौ चलितौ तु विबोधने ॥

विनायकः

**बोधनम्—शिल्पकाङ्गम्**

कार्यप्रतिवचनेन प्रतिबोधनं बोधनम् । यथा—राघवाभ्युदये लक्ष्मणवाक्यं—अभ्यर्थ्यतामित्यादि ।

सागरः

**बोम्बकः—ध्वनिभेदः**

बम्बलशब्दं पश्यत ।

**बोल्लावणी—पाटवाद्यम्**

यत्राद्यखण्डे पाटानामादौ मध्यावसानयोः ।
दकारबहुलस्तद्वद्द्वितीये शकलेऽपि च ॥

प्रयुज्यते चेत्प्रत्येकमसौ बोल्लावणी स्मृता ।
वाद्यान्तरेऽन्यथा खण्डद्वयमस्यास्तु योजयेत् ॥

झेङ्कारो देङ्कृतिस्थाने हुडुक्कायां प्रयुज्यते ।
ढक्कायां थोंकृतिर्ज्ञेया टाङ्कारो मद्दले पुनः ॥

योज्यस्त्रिवल्यां टेङ्कारः करटायां तु टेङ्कृतिः ।
एवं प्रयोजयेन्मुख्यान्पाटवर्णान्विचक्षणः ॥

वेमः

दों दों दों थो थों थों दों दों दों,
पाटादौ पाटमध्ये च पाटान्ते दें कृतिर्भवेत् ।
इत्येककरसंपन्ना प्रोक्ता बोल्लावणी बुधैः ॥

पार्श्वदेवः

**बौली—हस्तः**

बौल्यां भ्रमरहस्तोऽपि मूर्धनि ।

भ्ङ्गारः

**ब्यागडा—मेलरागः (शङ्कराभरणमेलजोऽयं रागः)**

ब्यागडायामथारोहे वर्जयेदृपसं पुनः ।
तथैव धैवतं वक्रं वदेत्षाडवपूर्णकं ॥

परमेश्वरः

**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)**

(आ) स ग रि ग म प ध प स .
(अव) स नि ध प म ग रि स .

मञ्ज

**ब्यार्—मेलरागः (हरिकाम्भोजीमेलजन्यः)**

(आ) स रि ग म स ग म प नि ध नि प ध नि स.
(आ) स नि प घ नि ध प म ग रि ग म ग स .

मञ्ज

**ब्रह्म**

ब्रह्मपर्यायशब्दैः शुद्धस्वर उच्यते ।

**ब्रह्मचारिकः—तानः**

मध्यमग्रामे नारदीयतानः ।
ध नि स रिः म प

नान्यः

**ब्रह्मतालोडुपम्—देशीनृत्तम्**

लघुद्रुतो लघुश्चैव द्रुतद्वयमथो लघुः ।
द्रुतलयं लघुश्चेति ब्रह्मतालं बभाषिरे ॥

अस्य रूपं यथा—

विधाय चतुरं स्थानं पताकौ संप्रसारितौ ।
हृदि विन्यस्य शिखरं भ्रमेत्सव्यापसव्यतः ॥

चतुर्दिक्षु ततो नन्द्यावर्ते स्यात्परतःकृते ।
सूचीपादेऽलपद्मश्च संहतं स्थानमाचरेत् ॥

पुरोवामोऽलपद्मश्च दक्ष ऊर्ध्वमथोमुखः ।
शिखरश्चतुरश्चे चेद्वामो हृदि तथेतरः ॥

प्रसारितः पताकश्च स्वस्तिकं स्थानमाचरेत् ।
त्रिपताकेन पुरतः पर्यायेण मुहुःकृता ॥

पञ्चवारं च चरणे स्थापयेच्चरणं परम् ।
अधोमुखं शिरस्यूर्ध्वं शिखरं सम्प्रयोजयेत् ॥

सव्यभ्रमरिकां कृत्वा जङ्घालङ्घनिकां चरेत् ।
वाम ऊर्ध्वं पताकश्च प्रसार्य दक्षिणः पुनः ॥

तिरश्चीनं प्रसार्यैवं तथैवाङ्गान्तरेण च ।
ततश्च संहतं स्थानं हृदि स्याच्छिखरद्वयम् ॥

चतुरस्थानके स्थित्वा कुर्याच्चरणकुट्टनम् ।
पर्यायेण पताकस्य प्रसारात्पुरतः पुनः ॥

हृदये शिखरं न्यस्य पताकस्तु परः करः ।
तिर्यक् प्रसारितः पश्चाच्चतुरश्रे भवेद्यदा ॥

परावृत्य कृतं हस्तः पताको गारुडं चरेत् ।
दक्षपार्श्वे पताकश्च परावृत्य पुरः कृतः ॥

तमेव शिखरं कृत्वा न्यसेद्धृदि ततःपरम् ।
त्रिपताकं करं चोर्ध्वं प्रसार्य सुरुमाचरेत् ॥

चतुरश्रे वामकरः शिखरो हृदि संस्थितः ।
दक्षोत्तानः पताकश्च तिर्यक्स्यात्संप्रसारितः ॥

परावृत्तिश्शरीरस्य द्विवारं स्तनयोः पुरः ।
शिखरद्वितयं स्थाप्यं वामजानोश्च पृष्ठतः ॥

दक्षिणाङ्घ्रेः पृष्ठदेशं कृत्वा भ्रमरिकां चरेत् ।
मण्डलस्थानके स्थित्वा हस्तौ तिर्यक्प्रसारितौ ॥

पताकौ स्वस्तिकस्थाने भवेतां स्वस्तिकौ करौ ।
मोटितस्थानके स्थित्वा दक्षिणः स्याल्लताकरः ॥

वामस्योर्ध्वं प्रसारश्च पताकस्य भवेत्तदा ।
हृदये शिखरद्वन्द्वं पश्चावर्तनतो भवेत् ।
उडुपं ब्रह्मतालस्य भरतेन प्रवर्तितम् ॥ वेदः

**ब्रह्मतालः** (तालः)

लघुर्द्रुतो लघुश्चैव द्रुतद्वयमथो लघुः ।
द्रुतत्रयं लघुश्चेति ब्रह्मतालं बभाषिरे ॥ वेदः

नसौ द्रुतौ लघुर्दौ च प्लुतश्च ब्रह्मतालके ।

13 मात्राः तालप्रस्तारः

—देशीतालः

ब्रह्माभिधे दौलोदत्रयं लघुः ।
।०।००।०००। श्रीकण्ठः

लघुर्द्रुतौ लघुश्चैव द्रुतद्वयमथो लघुः ।
द्रुतत्रयं लघुश्चेति ब्रह्मताले बभाषिरे ॥
।०।०।००।०००। दामोदरः

**ब्रह्मनन्दनः**—देशीतालः

ब्रह्मनन्दनताले तु द्रुतस्याद्यन्तयोर्गुरू ।
ऽ०ऽ लक्ष्मणः

**ब्रह्माङ्गः**—तानः

रि – लोपः — षाडवः ।
स नि ध प म ग । कुम्भः

**ब्रह्मवर्धिनी**—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि म प ध नि स.
(अव) स नि ध प म रि स. मध

**ब्रह्मवीणा**—(एकतन्त्री)

इदानीं ब्रह्मवीणायाः स्वरूपमभिधीयते ।
दण्डः खदिरनिर्वृत्तः षड्वितस्तिमितो भवेत् ॥

द्वादशाङ्गुलमात्रोऽस्याः परिणाहः प्रकीर्तितः ।
सार्धाङ्गुलप्रमाणेन छिद्रमान्तरमस्य तु ॥

सार्धां वितस्तिं त्यक्त्वाग्र्यं अधस्तात् छिद्रयोर्मिथः ।
कृत्वा दण्डमहीनाङ्गं वीणादण्डानुरूपतः ॥

छिद्रं विरचयेदत्र ततस्तुम्बं सरन्ध्रकम् ।
षष्ट्यंगुलपरिणाहं स्नायुपाशेन बन्धयेत् ॥

दैर्घ्यादष्टाङ्गुलमितो विस्तराच्चतुरङ्गुलः ।
अधस्तात्ककुभः कार्यस्ततो व्यङ्गुलविस्तृताम् ॥

चतुरङ्गुलदीर्घां च कूर्मपृष्ठोपमाकृतिम् ।
पत्रिकां लोहविहितामस्योपरि निधापयेत् ॥

दृढं निवेशनीयोऽस्या रन्ध्रे ककुभशङ्कुकः ।
तन्त्रीपत्रिकयोर्मध्ये स्थाप्या स्याद्वेणुजीविका ॥

रन्ध्रं विहाय ककुभे ततस्तन्त्र्याः प्रवेशयेत् ।
अग्रमेकं ततोऽन्यत्तु तुम्बस्योपरि निश्चलम् ॥

नागबन्धं प्रमाणेन बध्नीयात्स्थानकद्वये ।
तुम्बस्याधस्तने भागे दोरीं गाढं निवेशयेत् ॥

एकतन्त्रीयुता वीणा ब्रह्मवीणेति वर्ण्यते ।
पातकं क्षपयत्येषा दर्शनात् स्पर्शनादपि ॥

दण्डः स्यात्खण्डपरशुस्तन्त्री शैलेन्द्रकन्यका ।
पत्रिका कमला ज्ञेया ककुभो गरुडध्वजः ॥

नाभिर्वाचामधीशा स्यात् तुम्बः कमलसंभवः ।
रज्जुर्वासुकिरुद्दिष्टो जीविका च सुधाकरः ॥

सर्वदेवमयी वीणा ततः पातकहारिणी ।
व्यक्तमेवोच्यते सम्यगेतस्या वादनक्रमः ॥

एतां तु दोरिकाधस्तात् वामस्कन्धेन धारयेत् ।
पाणिना ककुभे दद्यात् अङ्गुस्संख्येतरस्य च ॥

शलाकां वेणुनिर्वृत्तां द्वादशाङ्गुलमानिकाम् ।
वामहस्तकनिष्ठायां पृष्ठे विन्यस्य तत्परम् ॥
संवेष्ट्यानामिकाङ्गुल्या तर्जन्यङ्गुष्ठकस्ततः ।
सम्पीड्य गाढमनया वादयेदखिलान्स्वरान् ॥
सारणा त्रिविधा रम्या वामहस्तोद्भवा भवेत् ।
सन्निविष्टा तथोत्क्षिप्ता परस्तादुभयात्मिका ॥
तन्त्री सङ्गात्सन्निविष्टा परान् यात्युत्प्लुतेः क्रमात् ।
क्वचित्त्यक्ता क्वचित्स्पृष्टा सारणा सोभयात्मिका ॥
सव्येतरस्य हस्तस्य व्यापाराष्टकमीर्यते ।
घातः पातश्च संलेख उल्लेखश्चावलेखकः ॥
छिन्नाख्यसंहिता पश्चात्भ्रमरामिध इत्यपि ।
वर्ण्यते रूपमेतेषां समुद्देशानुरूपतः ॥
तन्त्रीघाताद्भवेद्घातः तर्जन्या सह मध्यया ।
पातः केवलया सिध्येत्तर्जन्या दृढघातया ॥
तर्जन्यन्तरघातेन संलेखस्य समुद्भवः ।
मध्यमान्तरघातेन स्यादुल्लेखसमुद्भवः ॥
संसिध्येदवलेखोऽत्र मध्यमा बाह्यघाततः ।
तर्जनीलग्नतन्त्रीका यदा बहिरनामिका ॥
कुर्यादाहननं शीघ्रं तदा च्छिन्नस्समीरितः ।
बहिराहननात्तन्त्र्या मध्यमानामिकाकृतम् ॥
संहतस्स्याच्चतसृभिर्हननाद्भ्रमरोऽन्तरा ।
घातादिलक्ष्म कथितं कर्तर्याद्यमिधीयते ॥
कर्तरीनखकर्तर्यावर्धकर्तरि संज्ञकः ।
सारणा कर्तरी घोषा रेफो निष्कोणसंज्ञकः ॥
खचितश्शुकतुण्डश्च परिवर्तनमूर्छने ।
एवं दश समुद्दिष्टा एषां लक्षणमुच्यते ॥
अङ्गुलीभिश्चतसृभिः प्रत्येकं हननाद्भवेत् ।
कर्तरी नखरेणैव चतुर्भिर्नखकर्तरी ॥
सद्योन्तर्बहिराघातात् मध्यमानामिकोद्भवात् ।
स्यादर्धकर्तरी सव्यसव्येतरकराहते ॥
सारणा कर्तरीघोषा रेफस्समुपघुष्यते ।
अङ्गुल्या मध्यया घातो बाह्येनामिकयान्तरे ॥
यदा तदा भवेद्रेफ इति प्रोक्तो मनीषिभिः ।
नादं संरुध्य तर्जन्या स्यादनामिकया बहिः ॥
हननाद्बिन्दुसंभूतिस्त्यक्त्वा तदनुसारिणाम् ।
तर्जन्यङ्गुलिघातेन निष्कोटः कथ्यते बुधैः ॥
करेण दक्षिणेनैव कर्तर्यन्येन सारिणा ।
उत्क्षिप्योत्क्षिप्य बहुशो यदा स्यातामिमे क्रमात् ॥
तदा खसितकोभ्रेण तर्जन्यङ्गुष्ठयोर्हतेः ।
वक्रतुण्डः प्रयोगेषु दोषज्ञैस्समुदीर्यते ॥
तर्जनीप्रमुखेनैव कनिष्ठा प्रथमेन च ।
हननेन विरूपेण परिवर्तनसंविधाः ॥
भ्रान्ता रिक्ता तयोः पार्श्वे संस्पर्शेन यदा द्रुतम् ।
अङ्गुलिः सारिताभ्येति स्वरस्थाने कनीयसी ॥
तदा संमूर्छनाख्यस्य हस्तस्यापसरो भवेत् ।
कर्तर्या द्वादशकरा मूर्छनान्तास्समीरिताः ॥
सकलं निष्कलं चेति तन्त्रीवाद्यं द्विधा भवेत् ।
सकोणं सकलं प्रोक्तं निष्कोणं निष्कलं भवेत् ।
सकलं जीवया युक्तं निष्कलं शून्यमेतया ॥

हरिपालः

ब्रह्मशिरोमणिः—देशीतालः

सगणो बिन्दुयुग्मश्च लगौ चाथ प्लुतद्वयम् ।
भगणश्च नजौ पश्च ताले ब्रह्मशिरोमणौ ॥

28 मात्राः तालप्रस्तारः

ब्रह्मशुकतुण्डः—हस्तः

खटकामुखे तर्जन्यङ्गुष्ठयोर्मेलनं ब्रह्मशुकतुण्डहस्तः ।

शृङ्गारशेखरः

ब्रह्मसूत्रम्—भूषणम्

एत एव सरा हीना मृणालीभिः सुसंहता ।
आनाभि लम्बिता भूषा ब्रह्मसूत्रमितीरिता ॥

एत इति वर्णसरादयः ।

सोमेश्वरः

ब्राह्मः—रसः

ब्राह्मो नाम रसस्सर्वप्रपञ्चोत्तीर्णरूपकः ।
नित्यश्च स्थिर एवायं पृथक्त्वेन प्रकीर्तितः ॥

हरिपालः

ब्राह्मकपालगानम्

ब्राह्मं कपालगानं तु ज्ञेयं षाडवरागतः ।
तालश्चचत्पुटस्तत्र क्रमादेककलादितः ॥

कुम्भः

गौरीमुखेत्यादि वैदिकं गानम् ।

ब्राह्मम्—देशीस्थानम्

समस्यैतस्य पादस्य जानुसन्धिसमं यदि ।
पृष्ठतः कुञ्चितोत्क्षिप्तोऽपरस्तद्ब्राह्ममुच्यते ॥ वेमः

ब्राह्मी —वृत्तिः (कैशिक्यादिष्वन्यतमा)

केचिद्ब्राह्मीं तु वृत्तिं तु शान्ताद्भुतरसोदयाम्।

देवणः

—वृत्तिः

इयं हरिपालमते कैशिक्यादिपञ्चवृत्तिष्वन्यतमा।

ब्राह्मीनाम भवेद्वृत्तिः ब्राह्मशान्ताद्भुताश्रया।

ब्राह्मी ब्रह्मोद्भवा तत्र शेषा नारायणोद्भवाः ॥

हरिपालः

एषां तु पाठ्याभिनयरसानां योगतो भवेत्।

ब्रह्मेति हरिपालमते रसविशेषः॥

इयं वृत्तिर्देवणभट्टेनापि सङ्गीतमुक्तावल्यां लक्षिता।

भ

भक्तिः—गीतगुणः

देवताश्रुतिसंयुक्तं तत्प्रभावप्रबोधकम्।

आस्तिक्योत्पादनं गीतं स्तोत्रं भक्तजनप्रियम् ॥

सोमेश्वरः

भग्नतालः—देशीतालः

भग्नतालस्तथापुनः। चतुर्द्रुतीलत्रयेण सविरामेण संयुता।

० ० ० ० । । ।

कुम्भः

भङ्गतालः

मार्गतालपञ्चके गुरुलघुप्लुतानां मात्रागणनेन तदन्यानां विनिमयः। यत्र नियमस्तु—

द्वौ द्रुतौ लघुरेकः स्यात् गुरुरेको लघुत्रयम्।

चतुर्द्रुतो गुरुः प्रोक्त इति भङ्गस्य लक्षणम् ॥

नान्यः

भञ्जी—रागः

निर्णीयतेऽथ भञ्जी च ककुभाङ्गमियं भवेत्।

मध्यमस्वरसंत्यक्ता पञ्चमान्दोलिता भवेत्।

षाडवाख्या भवेदेवं निर्णीता गीतकोविदैः ॥

हरिः

भद्रः—देशीतालः

भगौ द्वौ जद्रुतौ गश्च भद्रताले प्रतिष्ठिताः।

13½ मात्राः

तालप्रस्तारः

भद्रदन्तः—हस्तः

हंसपक्षौ स्वस्तिकौ चेद्भद्रदन्त इतीरितः।

पुरोभागेत्वयं हस्तः उत्सङ्गेऽकारि तुण्डके ॥

विनायकः

भद्रनायकहस्तः

मुष्टिश्च वक्षसि स्थायी भद्रनायकनर्तने।

भञ्जारः

भद्र इति मूलदेवः, "भद्रस्समूलदेवस्स" इति मातृकस्य हरमेखलातन्त्रे दृश्यते।

भद्रपुरुषाभिनयः

मुष्टिहस्तस्य हृदयधारणेन कर्तव्यः।

महाराष्ट्रे

भद्रबाणः—देशीतालः

भद्रबाणस्तु कथितो लघ्वोर्मध्ये द्रुतं भवेत्।

। ० ।

नन्दी

भद्रमण्डलः—तालः

लघुः प्लुतो लघुः प्लुतो लघुर्द्रुतः प्लुतः।

द्रुतद्वयं द्रुतद्वयं प्लुतश्च भद्रमण्डले ॥

20 मात्राः।

तालप्रस्तारः

भद्रवाहिनी—मेलरागः (ज्योतिस्स्वरूपिणीमेलजन्यः)

(आ) स रि म प ध नि स.

(अव) स प म ग रि स.

मञ्जु

भद्रसारङ्गलीला—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म प ध प नि स.

(अव) स ध प म रि स.

मञ्जु

भद्रा—प्राकृते मात्रावृत्तम्

चतुर्मात्रिको वा पञ्चमात्रिको वा चतुर्मात्रः पञ्चमात्रिकः द्वौ चतुर्मात्रिकौ एकः पञ्चमात्रिकः।

विरहाङ्कः

भम्माणपञ्चमः—रागः

षड्जांशो मध्यमन्यासो मध्यमाजातिसंभवः।

भम्माणपञ्चमो रागो द्विश्रुतिस्वरदुर्बलः ॥

मोक्षः

षाड्जीधैवतिकोद्भूतो भवेद्भम्माणपञ्चमः।

षड्जग्रहांशकन्यासः पूर्णः काकलिकायुतः ॥

षड्जादिमूर्छनायुक्तः आरोहीवर्णको भवेत्।

प्रसन्नमध्यालङ्कारो भवेद्भम्माणपञ्चमः ॥

हरिः

षड्जन्यासः पञ्चमांशो धैवतांशोऽथवा पुनः ।
गान्धारसप्तमाल्पश्च षड्जमध्यासमुद्भवः ॥

षड्जांशोमध्यमन्यासः शृङ्गारैकरसाश्रयः ।
मिथिलाखण्डलेनोक्तः पुनर्भम्माणपञ्चमः ॥

नान्यः

भम्माणपञ्चमः पान्थः स्वल्पद्विश्रुतिकस्वरः ।

कश्यपः

पूर्णश्च पान्तो धान्तो वा सांशो भम्माणपञ्चमः ।

मतङ्गः

भम्माणी—रागः

मालापञ्चमसंभूता भम्माणी चात्र लक्ष्यते ।
मन्द्रतारा च षड्जे स्यान्न्यासांशग्रहपञ्चमः ॥

गान्धारे पञ्चमे चापि बहुत्वं समुपेयुषी ।
ऋषभेण क्वचित्त्यक्ता विभाषेयमुदीरिता ॥

हरिः

न्यासांशग्रहपञ्चमषड्जगतारा च मन्द्रमध्या च ।
गान्धारधैवताल्पा रिषभविहीना तु भम्माणी ॥

नान्यः

समन्द्रा षड्जतारा च ग्रहन्यासांशपञ्चमा ।
स्वल्पधैवतगान्धारा भम्माणी रिषभाल्पका ॥

मतङ्गः

मालापञ्चमसंभूता समन्द्रा षड्जतारभाक् ।
पञ्चमांशग्रहन्यासा विभाषा वृषभोज्झिता ॥
गान्धारधैवताभ्यां च भम्माणी कथितोत्सवे ।

जगदेकः

भयम्—स्थायिभावः

स्त्रीनीचप्रकृतिकं गुरुराजापराधश्वापदशून्यागाराटवीपर्वतगहनगजादिदर्शननिर्भर्त्सनकान्तारदुर्दिननिशान्धकारोलूकनक्तंचरारावश्रवणादिभिरुत्पद्यते। तस्य प्रकम्पितकरचरणहृदयकम्पनस्तम्भनमुखशोषजिह्वापरिलेहनस्वेदवेपथुत्रासपरित्राणान्वेषणधावनोत्क्रुष्टादयोऽनुभावाः ।

अत्र आर्या

करचरणहृदयकंपैः स्तम्भनजिह्वोपलेहमुखशोषैः ।
स्रस्तसुविषण्णगात्रैरस्वामिनयः प्रयोक्तव्यः ॥

भरतः

—सन्ध्यन्तरम्

भयं त्वाकस्मिकं त्रासः । सिंगः

भयं भीतिः । यथा—मालत्या अघोरघण्टाद्भीतिः ।

सागरः

भयम्

भयन्नाम वदन्त्यार्याः सहसात्मविघातिनी ।
पुरः प्रतीते चित्तस्य विक्रियां रोमहर्षणीम् ॥

भावविवेकः

भयानकः— रसः

अथ भयानको नाम भयस्थायिभावात्मकः । स च विकृतरवसत्वदर्शनशिवोलूकत्रासोद्वेगशून्यागारारण्यप्रवेशमरणस्वजनवधबन्धनदर्शनश्रुतिकथादिभिर्विभावैरुत्पद्यते । तस्य प्रवेपितकरचरणनयन चपलपुलकमुखवैवर्ण्यस्वरभेदादयोऽनुभावाः । भावाश्चास्य स्तम्भस्वेदगद्गदरोमाञ्चवेपथुस्वरभेदवैवर्ण्यशङ्कामोहदैन्यावेगचापलजडतात्रासापस्मारमरणादयः ।

भरतः

विकृतरवोऽट्टहासादिः । सत्वानां पिशाचानाम् । त्रासोद्वेगौ परगतौ । भयं तावत्स्त्रीनीचादिषु वक्ष्यते, नोत्तममध्यमप्रकृतिषु । तेपि तु गुरुभ्यो राज्ञश्च भयं दर्शयेयुः । अप्रभुत्वं चामात्यानाम् । यथाह—

"स्वेच्छाचारी भीत एवास्मि" इति (रत्ना १.७.) ।

अभिनवगुप्तः

भयस्य कृतकत्वविचारः अभिनवगुप्तव्याख्यायां(नाट्यशा ६,७५) द्रष्टव्यः ।

अकृत्रिमं कृत्रिमं चेत्यत्र द्वेधा प्रवर्तते ।
स्त्रीषु नीचप्रकृतिषु मध्यमेष्वपि वास्तवम् ।
पुरुषेषूत्तमेष्वेतद्वास्तवं नेष्यते बुधैः ॥

विप्रदासः

गुरुभ्यः स्वामिनो वापि भीतः स्याद्विनयान्वितः ।
तेनोत्तमोऽपि कुर्वीत निर्भयः कृत्रिमं भयम् ॥
इत्युक्तेः कृतकोऽपि भयानकभेदो लक्ष्यः ।

रसविवेकः

ञिभीभय इतिप्रायो धातुस्स्याद्भयवाचकः ।
चलनं भयशब्दार्थ इति विद्भिरुच्यते ।
बिभेति भाययत्यस्मात्कर्मणेति यथाक्रमम् ॥

किञ्चिच्चलति कस्माच्चिद्भयात्तेनैव हेतुना ।
चाल्यते च यतस्तस्माद्भयं तु चलनात्मकम् ।
भयेनाकायतोर्जन्तोर्जायते स भयानकः ।

शारदातनयः

स्त्रीनीचप्रकृतिर्भयानकरसः संपद्यतेऽसौ भयात्
रक्षोभूतपिशाचघोरसमराराविश्मशाने क्षणात्।
ज्ञेयः साहस्कितस्तथैव कृतको द्वेधा पुनस्सूरिभिः
शङ्कात्रासविमोहरोमपुलकैः प्रायैर्विभावैर्युतः ॥

स्तम्भेन गात्रस्य मुखस्य शोषैरुरःप्रकम्पेन च रोमहर्षैः।
संस्वेदहृद्मीलनदुर्विलापैः स्व......कृतिनामिनेयः॥

भूपालदेवगुरुशासनलङ्घनेन प्रौढारिचौर्यपरयोपिदतिक्रमेण।
संपद्यते किल रसः कृतकाभिधानो भावाद्भवेदिह भयानक एव लोके ॥

जगद्धरः

भयानका—दृष्टिः

स्फुरदुद्वृत्ततारा च स्तब्धोद्वृत्तपुटद्वये।
दृष्टिर्भयानका योज्या भयोत्पादनकर्मणि ॥

सोमेश्वरः

स्तब्धोभयपुटात्यर्थं वलमानकनीनिका।
दृश्यात्पलायमानेव या दृष्टिस्सा भयानका ॥

विप्रदासः

अत्यन्तचञ्चलाव्यक्तातारा स्तब्धपुटद्वया।
भयानका दृष्टिरियं रसे ज्ञेया भयानके ॥

वेमः

भयान्विता—दृष्टिः

विस्फारितपुटद्वन्द्वा त्रासचञ्चलतारका।
निष्क्रान्तमध्या दृष्टिस्तु भयभावे भयान्विता ॥

सोमेश्वरः

भरणीहस्तः

दीर्घौ कनिष्ठिकाङ्गुष्ठौ पूर्वोक्तशुकतुण्डके।
स एव चलहस्तश्चेद्भरण्यां सम्प्रयुज्यते ॥

शृङ्गारः

पूर्वोक्तेति। योनिबद्धते इत्यर्थः।

भरण्यभिनयः

शुकतुण्डहस्तेन कर्तव्यः।

महाराष्ट्रे

भरतः

नाट्यशास्त्रकर्ता। कालः क्रै. पू. ४०० वर्षे स्यादिति अस्माकं मतम्।

भरतकल्पलतामञ्जरी

कर्ताऽस्य न ज्ञायते। बेङ्गलूर नगरे मुद्रितः। मेलकर्तरागनिर्णये प्रामाणिकत्वेन तद्देशीयैः स्वीक्रियते।

भरतङ्कुलेश्वरः—देशीतालः

यथार्थगणविन्यासो भरतङ्कुलेश्वरः।
ऽ॥ऽ।ऽऽऽ।

लक्ष्मणः

भरतबालबोधः

अयं ग्रन्थः नाट्यशास्त्रव्याख्यारूपः। सङ्गीतशिरोमणौ स्मृतोऽयं ग्रन्थः। नोपलब्धोऽद्यापि।

भरतभाष्यम्

नान्यदेवकृतसरस्वतीहृदयालङ्कारनाम्नो नाट्यशास्त्रव्याख्यानस्य नामान्तरम्।

भरतमितिः

नाट्यशास्त्रव्याख्या सिङ्गणार्यैरचिता। अल्लयवेमभूपप्रौढदेवरायादिसभासु प्रसिद्धः सिङ्गणार्यः। सिङ्गणार्यपौत्रेण विट्ठलेन सङ्गीतरत्नाकरान्ध्रव्याख्यायामुक्तम्।
क्रै. प. १४०० आसीत्।

भरतरत्नाकरः

हनुमत्संहिताया नामान्तरम्।

भरतवार्तिकम्

राहुलकृतम्। वार्तिकादस्मात् अभिनवादयः श्लोकानुदाहरन्ति।

भरतसङ्ग्रहः

विद्याचक्रवर्तिकृतः। कालः क्रै. प. १२८०

भरतसारसङ्ग्रहः

चिक्कदेवरायकृतः। कालः १७००। अत्र हरिपालीयरत्नाकरस्थविषया एवानूदिताः।

भरतसारसङ्ग्रहः

अस्य कर्ता मुडुम्बि नरसिंहाचार्यः गोदावरीप्रान्तीयः ग्रन्थोऽयं संस्कृतान्ध्रभाषयोः मूलतत्परिवर्तनरूपेण वर्तते। मुख्यतया अङ्गाभिनयो निरूपितः। कालः क्रै. प. १७५०। अन्योऽपि एतन्नामा ग्रन्थः जगज्ज्योतिर्मल्लकृतः संस्कृतभाषायां वर्तते।

भरतार्णवः

नन्दिकेश्वरकृतः। अभिनवगुप्तेन तण्डुमुनिशब्दौ नन्दिभरतयोः पर्यायावित्युक्तम्। तण्डुभट्टमतं ज्यायसेनापतिना करणलक्षणेषु स्मृतम्। अत्र उपलब्धभागस्तु गुहेशभरतमिति लेखकेन लिखितम्। ग्रन्थेस्मिन्, याज्ञवल्क्य, गौरी, कमलमन्दिरा,

सदाशिवमतादयः स्मारिताः। उपलब्धभागः लेखकैरशुद्धीकृत इति, विचारपरमेष्ठिविरुद्धस्य हरिपालदेवस्य श्लोकानां बहूनामन्तर्भावितत्वाद्ग्रन्थोऽयमशुद्ध इति च ज्ञायते। भरतार्णवः चतुर्लक्षग्रन्थसंमित इति केनचिदुक्तम्। नृत्तभाग एवाल्पः लभ्यते। तस्यानुवाद औमापते गीतखण्डे विद्यते।

**भरतार्णवपारीणः**—देशीतालः

भरतार्णवपारीणे द्रौ लौ पोद्धा ततो दलौ।
०० ॥ ०० ॥ ०० ॥ ०० ॥ ०० ॥ ०० ॥ ० ।

गोपतिप्पः

**भरतार्थचन्द्रिका**

पार्वत्या कृता इति नन्दिकेश्वरेण भरतार्णवे दशमाध्याये उक्तम्।

**भरतोत्तरम्**

अस्य कर्ता कीर्तिधर इति ज्ञायते। अयं ग्रन्थः सर्वेश्वरेण स्मृतः। नाद्यापि लब्धः। अस्य व्याख्या धनञ्जयकृता वर्तत इति वदन्ति। नोपलब्धा नाद्यापि। "शेषमुत्तरतन्त्रेण कोहलः कथयिष्यतीति" भरतेन उक्तत्वात्, तच्छिष्येण कोहलेन प्रणीतमपि भवेदिति चाभिप्रयन्ति।

**भर्गभूपालरागध्यानम्**

वृषाधीशपात्रं सुवर्णेभगात्रं
गदाखड्गशार्ङ्गारिशङ्खारिहस्तम्।
चतुर्बाहु......लोलं भजेहं
त्रिमूर्त्यात्मकं भर्गभूपालदेवम्॥

रागसागरः

**भर्मकेसरी**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग प ध नि स.
(अव) स ध नि ध म ग रि स.

मज

**भल्लातः**—रागः

भल्लातोऽथ भवेद्रागो हिन्दोलकसमुद्भवः।
षड्जेनांशग्रहन्याससंपन्नो वर्जितर्षभः।
षाडवो धैवते मन्द्रः कथितो रागवेदिभिः॥

हरिः

**भल्लाता**—उपाङ्गरागः

छेवाड्युपाङ्गं भल्लाता षड्जांशन्यासषड्जका।
धमन्द्रारिस्वरत्यक्ता शृङ्गारादौ प्रगीयते।
भाषाङ्गत्वेऽप्युपाङ्गत्वं भल्लाताया इहोदितम्॥

भट्टमाधवः

**भल्लाती**—मेलरागः

(आ) स ० रिं ० ० म ० प ० ० नि ० स.
(अव) स ० नि ० ० प ० म ० ग रि ० स.

मेललक्षणे

—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि प म रि ग म रि स.

मज

**भल्लातीरागध्यानम्**

हस्ताग्रनिहितवीणां कुसुमसमूहेन भूषिताभ्युदयाम्।
हरिमणिसमनीलाङ्गी मम मनसि विचिन्तयामि भल्लातीम्॥

रागसागरः

**भल्लारिका** रागः

हिन्दोलकस्वरे छाया सद्रा भल्लारिका भवेत्।
षड्जांशग्रहणन्यासा रिहीना षाडवा भवेत्।
धमन्द्रा............शृङ्गारे विनियोगभाक्॥

जगदेकः

**भवकेसरी**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग ध नि स.
(अव) स नि ध ग रि स.

मज

**भवप्रिया**—मेलकर्ता (रागः)

स रि ग ० ० ० म प ध नि ० ० स.

मज

**भवमनोहरी**—मेलरागः (गमनश्रममेलजन्यः)

(आ) स रि ग म ध प नि स.
(अव) स नि ध नि प म ग म रि स.

मज

**भवसिन्धुः**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग प ध नि स.
(अव) स नि प म ग म रि स.

मज

**भवानी**—मेलरागः (भवप्रियामेलजन्यः)

(आ) स रि ग म ध नि स.
(अव) स नि ध म ग रि स.

मज

**भव्यलीला**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स ग म ध नि स.
(अव) स नि ध प म ग स.

मज

भागः—प्रबन्धावयवः

यस्योद्ग्राहपदं मिश्रं पूर्वार्धेन समन्वितम्।
गीयते यत्र गीतज्ञैः स भागः कथ्यते बुधैः॥

सोमेश्वरः

भाग्यरञ्जनी—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म ध नि स.
(अव) स प म ग रि स. .

मज

भाणः—नृत्तरूपकम्

हरिहरभानुभवानी स्कन्धप्रमदाधिपस्तुतिनिबद्धम्।
उद्धतकरणप्रायं स्त्रीवर्जं वर्णनायुक्तम्॥

गुणकीर्तनप्रकाशनगाथाभिर्द्व्यताख्तुतिनिबद्धा।
गायनसहोक्तियुक्तोदात्तेन विभूषितप्रायम्॥

त्रिचतुःपञ्चवितालैर्विश्रामस्सप्तभिः परिच्छिन्नैः।
अर्धोद्ग्राहनिवारणसङ्ख्यातैः क्वचिन्नियमम्॥

समविश्रामैर्विविधैः विभूषितं पञ्चमे विपरिवर्तेत।
गाथामात्रा द्विपथकपाठ्येनालङ्कृतं ललितम्॥

वर्णोऽथ मत्तपालीसभग्नतालावनन्तरं गाथा।
अनुभग्नतालमात्रे प्रथमे स्याद्भग्नतालश्च॥

गाथाद्विपथवसन्ताः विश्रामे स्युर्द्वितीये तु।
मात्राविषमच्छिन्ना सभग्नताला भवेद्रथ्या॥

मार्गणिका स्याद्वार्धा स्यात्तालविकारे तृतीये तु।
रथ्या द्विपथवसन्तकरथ्यातालाश्चतुर्थे स्युः॥

रथ्याऽथ भग्नतालो मार्गणिका द्विपथविषमाश्च।
पञ्चमके षष्ठे वा रथ्या नव भग्नतालाः स्युः॥

द्विपथकमार्गणिके च स्यातामथ सप्तमे च विश्रामे।
रथ्याऽथ भग्नतालः शुद्धे भाणे क्रमः प्रदिष्टोऽयम्॥

सङ्कीर्णभाणभरितः सङ्करनाम्नायमुभयसंयोगात्।
किञ्चिदनुद्धतभावस्तालक्रमवर्जितश्च चित्रोऽयम्॥

इति शुद्धस्सङ्कीर्णः चित्रोऽयमिति त्रिधा भवेद्भाणः।
यदि चैष शुद्धभाणः शुद्धस्सङ्कीर्णयाऽथ संकीर्णः॥

सर्वाभिर्भाषाभिः विचेष्टितैर्विचित्रः स्यात्।
अयमुद्धतोऽथ ललितो भाणो ललितोद्धतश्च मिश्रः स्यात्।
अर्थानामौद्धत्याल्ललितः स्यादुभयभावाच्च॥

यद्दुष्कराभिधेयं चित्रं चात्युद्भटं च यद्भवति।
तद्भाणकेऽभिधेयं युतमनुतालैर्वितालैश्च॥

तस्यान्तर्भावो यो भाणोऽसौ नन्दिमालिनामास्यात्।
मिश्रः कैश्चित्कथितो भरतमतं सम्यगविदित्वा।
आकाशपुरुषमुद्दिश्य वस्तु यत्पठ्यतेऽथवा क्रियते।
विशेषोद्भाव्यभावात्मा प्रयोगो यत्र दृश्यते।
भाणस्स नन्दिमालीति नाम्ना कविभिरुच्यते॥

शारदातनयः

—रूपकम्

आत्मानुभूतशंसी परसंश्रयवर्णनाविशेषः विविधाश्रयः एकहार्यः (एकया नार्या हार्यः) "भाण इहैकाकिन्या नार्या हार्योऽङ्गहारिण्येति" यत्र परवचनमात्मवचनैः सान्तरैर्ग्रथितं वाच्यं च भवेत्। आकाशपुरुषा यत्र व्याहरन्ति धूर्तविटानां संप्रयोगो नानावस्थाभिः सुखदुःखात्मकाभिश्चोपेतः एकाङ्कश्च भाणः। यथा— पद्मलेखा ललितनागरः। अस्य लास्याङ्गान्यवश्यकानि।

सागरनन्दी

कोहलादिभिराचार्यैरुक्तं भाणस्य लक्षणम्।
लास्याङ्गदशकोपेतं सम्यगुत्पाद्यवस्तुकम्॥

भारतीवृत्तिभूयिष्ठं शृङ्गारैकरसाश्रयम्।
परस्वात्मानुभूतार्थधूर्तचारित्रवर्णनम्॥

तत्तद्विटोक्तिप्रत्युक्तिविहिताकाशभाषितम्।
मुखनिर्वहणप्रायसन्धियुग्रूपकं च यत्॥

एकाङ्कं च वदेद्भाण इति विद्वद्भिरुच्यते।
अपरे नृत्यभेदास्तु गुल्मशृङ्खलिकालताः।
भेद्यकं चेति चत्वारः कथ्यन्तेऽत्र मनीषिभिः॥

शारदातनयः

लास्याङ्गदशकलक्षणं गुल्मादिलक्षणं तु पृथग्दत्तम्।

उदाहरणम्— शूद्रककृतः पद्मप्राभृतकः। उभयाभिसारिका वररुचिकृता। पादताडितकं श्यामिलककृतम्।

—अवनद्धवाद्यम्

भाणोऽङ्गुलैः स्यात्परिधौ मितो द्वादशभिस्तदा।
नवभिस्तु पलैः क्षिप्तोऽथवा द्वादशभिर्भवेत्॥

सार्धैर्झल्लरिकावत्स्याच्छेषं लक्षणमस्य तु।
अनुक्ताविह धातूनां ग्रहः स्यात्ताम्रकांस्ययोः॥

कुम्भः

भाणः

नृसिंहसूकरादीनां वर्णानां जल्पयेद्यतः।
नर्तकी तेन भाणः स्यादुद्धताङ्गप्रवर्तितः॥

अत्र केवलमुद्धतमेव कार्यम्।

वेमः

**भाणिका**—नृत्तरूपकम्

उदात्तनायिका सूक्ष्मनेपथ्यविभूषिता एकाङ्का कैशिकीभारतीवृत्तिप्रधाना मन्दपुरुषा। यथा कामदत्ता। भाणिकाया अङ्गानि सप्त, विन्यासः उपन्यासः विरोधः अनुवृत्तिः साध्वसं समर्पणं संहार इति।

सागरनन्दी

अमृतानन्दी तु—मुखनिर्वहणोपेतेत्यधिकं वक्ति।

डोम्बीव बाणिकोदात्तनायिकैकाङ्कभूषिता।
कैशिकीभारतीप्राया वीरशृङ्गारमेदुरा॥

श्लक्ष्णनैपथ्यभाङ्मन्दोत्साहपूरुषनायका।
अङ्गानि तस्यास्सप्त स्युः कामदत्ता यथा कृता॥
अस्या लास्याङ्गदशकं यथायोगं प्रयुज्यते।

शारदातनयः

बालक्रीडानि युद्धानि तथा सूकरसिंहजा।
ध्वजादिना कृता क्रीडा यत्र सा भाणिका स्मृता॥

अत्रापि षिद्गडवन्नृत्तं मन्तव्यम्। वेमः

**भाणी**—नृत्तरूपकम्

सुकुमारतः प्रयोगाद्भाणोऽपि च भाणिका भवति।
दिव्याभिश्चारीभिर्विवर्जिता ललितकरणसंयुक्ता॥

तालान्तरालनृत्ता कचिदपि रथ्यादिसङ्कलिता।
अर्धोद्गाहनिवारणगायनसवसन्तमत्तपालीभिः॥

विश्रामैश्च विहीना स्त्रीयोज्या वर्जितोत्तालैः।
वस्तूनि भाणिकायां नव दश वा नियमतो विधीयन्ते॥

नवमादिपञ्चकेषु स्थानेषु च भग्नतालः स्यात्।
स्थानान्तरेषु चास्याः लयकालविधिर्यदृच्छया क्रियते॥

विविधवचोविन्यासैः सभ्यजनोत्साहसंपत्तिः।
लास्याङ्गसन्धिनियमो भाणवदेवात्र भाणिकायाः स्यात्॥

अथ भाण्यङ्गिशृङ्गारा श्लक्ष्णनैपथ्यनायिका।
गर्भावमर्शहीना च मुखादित्रयभूषिता॥

स्वल्पवृत्तप्रबन्धा च पीठमर्दविटान्विता।
विदूषकेन सहिता दशलास्यसमन्विता।
पाञ्चालरीतिनियता भवेद्वीणावती यथा॥

शारदातनयः

दिव्याभिः। आकाशचारीभिः। ललितकरणेति। अष्टोत्तरशतकरणेषु ललितैः संयुक्ता। रथ्या—तालभेदः। मत्तपाली। नेपथ्यरङ्गस्थलभिन्नदेशः। विश्रामाः विरामाः। उत्तालैः उद्धततालैः। भग्नतालः भङ्गतालविशेषः। लास्याङ्गानि—दश। मुखादित्रयं। मुखं, प्रतिमुखं, निर्वहणम्।

एकाङ्का विटविदूषकपीठमर्दशोभिता शृङ्गाररसा स्वल्पचित्रकाव्या दशलास्याङ्गशोभिता। यथा वीणावती।

सागरनन्दी

अन्यचित्रकथैकाङ्का दशलास्याङ्गशोभिता।
भाणी शृङ्गारसंपन्ना पीठमर्दादिरञ्जिता॥

शुभङ्करः

**भाण्डम्**—अवनद्धम्

कल्याणे च मुखे चैव भाडिधातुं प्रचक्षते।
मुखकल्याणकारत्वाद्भाण्डमाहुर्मनीषिणः॥

अथवा भणधातोस्तु शब्दार्थादुपजायते।
भणतीत्येव भाण्डमित्यूहनीयं सुबुद्धिभिः॥

नान्यः

**भाण्डकूटम्**

श्रुतिवाद्यशब्दे द्रष्टव्यम्।

**भाण्डी**—मेलरागः

(आ) स ० रि ० ० ० ० प ० ध ० ० स.
(अव) स ० नि ध ० प ० म ० ग रि ० स.

मेललक्षणे

**भानवी**—गतिः

भानोर्गतिरिवालक्ष्या स्यान्नटस्य च नृत्यतः।
सा भानवी गतिः प्रोक्ता सज्जनैकमनोरमा॥

देवेन्द्रः

**भामिनी**—प्राकृते द्विपदी

विषमा — स स स -
समा — भ भ भ ग.

विरहाङ्कः

**भारतः**—न्यायप्रविचारः

वामहस्तेन फलकं दक्षिणेन कृपाणकम्।
गृहीत्वा सम्प्रसार्यैव समुत्क्षिप्य च तत्पदम्॥

पार्श्वयोरुभयोः कुर्यात्फलकभ्रमणं मुहुः।
ततश्च परितःशीघ्रं भ्रामयित्वा कृपाणकम्॥

ततश्शिरः कपोलान्ते करं खड्गसमन्वितम्।
उद्वेष्टयेत्ततो मूर्ध्नः पर्यन्ते फलकस्य तु॥

विधाय भ्रमणं कट्या शस्त्रपातनकृद्भवेत्।
विधिरेष प्रयोक्तव्यो भारते नाट्यवेदिभिः॥

वेमः

**भारती**—वृत्तिः

भोजेन भारतीवृत्तिर्धर्मशृङ्गाराङ्गतयोक्ता। तदुच्यते–तत्र भारतीवृत्तिः पौरस्त्या प्रवृत्तिः। पाञ्चाली रीतिः। स्वकीया नायिका।

धीरोदात्तश्च नायकः। तत्र भारतीवृत्तिः तदनुरूपा। स्वरूपाङ्गत्वात्। तथाहि—

या वाक्प्रधानात् नृवरप्रयोज्या स्त्रीवर्जिता संस्कृतपाठ्ययुक्ता।
स्वनामधेयैर्भरतप्रयोज्या सा भारती नाम भवेत्तु वृत्तिः ॥

तदङ्गानि प्ररोचना, प्रस्तावना, वीथी, प्रहसनमिति। सा तु वाक्प्रधानेत्यनेन श्रुतिस्मृत्युक्तविधिवाक्यानामवश्य विधेयतां प्रतिपादयति। नृवरप्रयोज्येत्यनेनाधिकारिणो निर्दिशति। स्त्रीवर्जितेत्यनेनानधिकारिणो निरस्यति। संस्कृतपाठ्ययुक्तेत्यनेनान्तर्वेद्यां न म्लेच्छितव्यमित्यभिधत्ते। अङ्गेषु प्ररोचनयार्थवादं द्योतयति। वक्तव्यार्थे प्रशंसापरं हि वचः प्ररोचना। प्रस्तावनयेतिकर्तव्यताक्रमं बोधयति। प्रस्तुतवस्तूपपादनावसरसूचकं हि वाक्यं प्रस्तावना। वीथ्यां परिप्रश्नोत्तरप्रत्युत्तरादिभिरनुवादविधानाद्विपर्ययाज्ञानादीन् संशयादीनपनयति। उद्घात्यकादीनां अङ्गानां हि प्रवृत्तिपरिपाटी वीथी। प्रहसनेन तु स्वधर्मान्नचलितव्यं नियमयति। स्वधर्मचलितानां हि तापसादीनां उपहासपरं वचःप्रहसनम्। सेयं भारती वृत्तिः चतुरङ्गा धर्मश्रृङ्गारस्याङ्गम्।

भोजः

या वाक्प्रधाना पुरुषप्रयोज्या स्त्रीवर्जिता संस्कृतपाठ्ययुक्ता।
स्वनामधेयैर्भरतैः प्रयुक्ता सा भारती नाम भवेत्तु वृत्तिः ॥

भरतः

स्त्रीवर्जितेति। कैशिकीप्राधान्यावकाशं गमयति। संस्कृतेति वचसा प्राकृतपाठ्यलालित्यात्कैशिकीमत्रश्यमाक्षिपेदिति सूचयति। भरतैरिति। नटैः, स्वतो वंशकरं नामधेयं येषां भरतसन्तानत्वात्तद्धिते भरताः।

अभिनवः

सर्वरूपकगामिन्या मुखप्ररोचनोत्थिता।
प्रायस्संस्कृतनिश्शेषरसाढ्या वाचि भारती ॥

सर्वरूपकेष्वभिनेयानभिनेयेषु गमनशीलादिप्रायस्तन्मयत्वाद्वर्णनाय आमुखप्ररोचनयोरुत्थितः प्रायो बाहुल्येन संस्कृतेन सर्वरसैश्च दीप्ता वाचि- वाग्व्यापारविषये वाग्व्यापारात्मिका भारती।

रामचन्द्रः

नाममात्रसमुद्दिष्टाश्चतस्रो वृत्तयो मया।
एकीभावस्तु सर्वासां भारत्यामेव दृश्यते ॥

सागरनन्दी

## भारत्यङ्गानि

प्ररोचनाऽऽमुखं चैव वीथी प्रहसनं तथा।

भरतः

**भार्गवप्रियः**—तानः

गान्धारग्रामे नारदीयतानः।
प ध नि ग म ?

नान्यः

**भार्गवाङ्कः**—देशीतालः

पताभ्यां भार्गवाङ्कः स्यात्।
ऽऽऽ।

कुम्भः

**भावः**—अनुभावः

अङ्गजोऽनुभावः।

वागङ्गमुखरागैश्च सत्त्वेनाभिनयेन च।
कवेरन्तर्गतं भावं भावयन्भाव उच्यते ॥

देहात्मकं भवेत्सत्त्वं सत्त्वाद्भावः समुत्थितः।
भावात्समुत्थितो हावो हावाद्धेला समुत्थिता ॥

भरतः

हावाद्भाव इति कीर्तिधरादयः।

भरतवचनात्क्रमेणैतेषां हेतुभावः। तथापि परम्परया तीव्रतमसत्त्वस्याङ्गस्यैव करणत्वादङ्गजा इत्युक्ताः। एवं च परस्परसमुत्थितत्वेऽप्यमीषामङ्गजत्वमेव। यथाहि–कुमारीशरीरे प्रौढतरकुमार्यन्तरगतहेलावलोकने हावोद्भवो भावश्चेदुल्लासितपूर्वः। अन्यथा अनुभावस्यैवोद्भवः। एवं भावेऽपि दृष्टे हावो हेला वा। यदा तु हावावस्थोद्भिन्नपूर्वा परत्र च हेला दृश्यते तदा हेलातोऽपि हेला। एवं हावाद्भावः, भावाद्भाव इत्यपि वाच्यम्। एवं परकीयभावादिस्मरणात्सरसकाव्यादेरपि हेलादीनां योगो भवति। ऐतदन्योन्यसमुत्थितत्वम्। तत्राङ्गस्याल्पो विकारोऽन्तर्गतवासनात्मतया वर्तमानं रत्याख्यं भावं भावयन् सूचयन् भावः। यथा—दृष्टिस्सा रसतामित्यादि।

अभिनवः

चित्तस्याविकृतेरसत्त्वं विकृतेः कारणे सति।
ततोऽल्पा विकृतिर्भावो बीजस्यादिविकारवत् ॥

ततो मनोविकारस्य भावत्वं प्रकटीकृतम्।
(वागादिभिः) भावयन्बहिरन्तस्थानर्थान्भाव उदाहृतः ॥

शारदातनयः

अत्र चित्तशब्दो मनोवाची। नचान्तःकरणपरिगणितचित्तवाची। निर्विकारस्य बीजस्यादिमो विकारः उच्छूनावस्था। चित्तस्य प्रथमः परिस्पन्दो भावः।

नरसिंहः

कान्तस्य दृष्टिपथतस्तिरोधातुमिवेच्छति।
लज्जयाऽधोमुखी मुग्धा तिर्यग्विक्षिप्तलोचना॥

प्रियं पश्यत्यतिशयजातरोमाञ्चकञ्चुका।
तत्क्षणोद्भूतमदनाचार्यशिक्षोपदेशतः।
यत्तस्यां जायते चेष्टा स भावश्शाक्यसम्मतः॥

कुम्भः

—देशीलास्याङ्गम्

गीतं नृत्यानुगं यत्र नाट्यं च विलसल्लयम्।
समासाद्य मुदं यत्र पात्रं पुष्यत्कलाङ्कुरान्।
नृत्येद्विलासमधुरं तदासौ भाव उच्यते॥

अशोकः

यत्र नृत्यानुगं गीतं नाट्यं च लयसुन्दरम्।
पश्यन्ती हर्षमासाद्य पुष्यती च कलाङ्कुरान्।
सूच्यं हंसालसं नृत्ये स भावो भावनोदितः॥

कुम्भः

भावः

अधिष्ठितं यदर्केण मनस्सवैकसाक्षिणा।
तत्संस्कारवशादेतदमलं मनुतेऽखिलम्॥

तादृगेव मनस्सत्वं गुणैरस्पृष्टमुच्यते।
तस्मादविकृतादाद्यस्पन्दो भाव उदाहृतः॥

व्यापारो यत्र नेत्रादेः शृङ्गारादिर्विभाव्यते।
अर्थसन्दर्भचातुर्यात्स भाव इति कथ्यते॥

शारदातनयः

भावकः— गायकभेदः

रसहानौ रसं धत्ते निर्भावे भावमानयेत्।
अलङ्करोति वैदग्ध्याद्भावकस्सोऽभिधीयते॥

सोमेश्वरः

भावाः

भावानिदानीं वक्ष्यामः। किं भावयन्तीति। उच्यते। वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्तीति भावाः। भू इति करणे धातुः। भावितं कृतमित्यनर्थान्तरम्, लोकोपि च सिद्धमहो...... रसेन वा सर्वमेव भावितमिति।

विभावेनोद्धृतो योर्थस्त्वनुभावेन गम्यते।
वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः॥

वागङ्गमुखरागेण सात्त्वनाभिनयेन च।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते॥

नानाभिनयसंबद्धान् भावयन्ति रसानिमान्।
यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः॥

भरतः

भावार्थः

योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः।
शरीरं व्याप्यते तेन शुष्ककाष्ठमिवाग्निना॥

भरतः

भावकृतिः—क्रियाङ्गरागः

क्रियाङ्गद्वितयं भावकृतिर्नागकृतिस्तथा।
लक्ष्यमार्गाप्रसिद्धत्वान्न सम्यगिह लक्षितम्॥

कुम्भः

भावजाभिनयः

एतदेव विना हस्तपादभेदक्रमं दृशा।
संसूचितं शिरोभेदैः भावजाभिनयो मतः॥

भ्र्ङ्गारः

एतदिति सूचकाभिनयः।

भावना—वाक्यार्थः

तत्रान्यपदानुकूलो भवन्तं प्रयुञ्जानः पुरुषव्यापारः करोत्यर्थो भावनेत्युच्यते।

मीन्न

औदासीन्यदशायां तु पुमान् येन प्रपद्यते।
स यत्नो यागहोमादौ भावनेत्यभिधीयते॥

—चित्तवृत्तयः

अन्तःकरणवृत्तीनामानन्त्येऽपि पुरातनैः।
प्रोक्ता एकोनपञ्चाशत्तत्प्रयोगाद्रसोदयः॥

तेष्वष्टौ स्थायिनः पूर्वे त्रयस्त्रिंशत्ततः परे।
सञ्चारिणः परे त्वष्टौ सात्त्विकाः परिकीर्तिताः॥

लोके रत्यादयोऽवस्थाभेदा रामादिषु स्थिताः।
य एते ते च कविभिर्नटश्चाभ्यासपाटवात्॥

काव्ये नाट्ये वर्णनात्तु स्वे चेतस्यनुसंहिताः।
रसा भवन्तीति भावा भावयन्तीति वा स्मृताः।
स्थायिनस्तु भवन्तीति भावयन्तीति चेतरे॥

विप्रदासः

भावप्रकाशः

शारदातनयकृतः। दशपरिच्छेदात्मकोऽयं ग्रन्थः। रसभावलक्षणे नाट्यलक्षणे च परां काष्ठां लभते। अत्र कल्पतरुयोगमालामातृगुप्त शङ्कुकाभिनवगुप्तभोजव्यासवासुकिमतानि बहूनि संसूचितानि वर्तन्ते। रूपकलक्षणे बौद्धानां ब्राह्मणानां च मतद्वयमपि अनूदितं वर्तते। काव्यकामधेनुरिति ग्रन्थः भावप्रकाशपरिवर्तरूपो दृश्यते।

भावनेरिः—देशीनृत्तम्

रसभावादिदृष्ट्या यो भावनेरिरस उच्यते।
आयते कान्तया दृष्ट्या स्थायिभावो रतिर्भवेत् ॥
तत्र स्निग्धा भावदृष्टिः धुतेन शिरसा युतः।
हस्तेन त्रिपताकेन चमत्कारेण निर्मितः ॥
किञ्चिदन्तस्समाविष्टविचित्रभ्रान्ततारका।
आकुञ्चितपुटा मन्दमध्यतीव्रतया क्रमात् ॥
तद्भावदृष्टिहृष्टा स्यात्सा यथा प्रतिपाद्यते।
फुल्लगल्ला विशत्तारा किञ्चिदाकुञ्चिताचला ॥
निमेषिणी स्मिताकारा हृष्टा दृष्टिरुदाहृता ॥

इति हास्योदृष्टिः।

या त्वर्धपतिता स्तब्धपुटसंबद्धतारका।
सा बाष्पमन्दसञ्चारा दीना दृष्टिरसौ मता ॥

इयं करुणे रसे।

स्थिरोद्वृत्तपुटां रूक्षां किञ्चित्तरलतारकाम्।
भ्रुकुटीकुटिलां दृष्टिं क्रुद्धां ब्रूते हरप्रियः ॥

इयं रौद्रे रसे।

भावाः

लोके ये हेतवस्तेषां सीता चन्द्रोदयादयः।
उपादानं निमित्तं च काव्यशब्दैरसमर्पिताः ॥
नाट्ये नटैस्तदाकारानुकृत्याध्यक्षतां गताः।
भावान्विभावयन्तीति ते विभावास्तथा स्मृताः ॥
लोके रत्याद्यवस्थानां कार्यरूपा भवन्ति ये।
भ्रूविक्षेपकटाक्षाद्यास्ते च शब्दसमर्पिताः ॥
काव्येषु कविभिर्नाट्ये नटैस्साक्षादिवार्पिताः।
अनुभावा इति प्रोक्ताः भावानामनुभावनात् ॥
विभावैर्जायमानत्वमनुभावैः प्रकाशनम्।
तुल्यतुल्ये च सर्वेषु भावेषु व्यभिचारिता ॥
रसचर्वणपर्यन्तं यस्य स्याद्व्यभिचारिणः।
व्याभिरस एव भावः स्यात्स्थायी सञ्चारिणः परे ॥
अनवस्थितजन्मानो भूमौ भूयः स्वभावतः।
स्थायिनां रसनिष्पत्तौ चरन्तो व्यभिचारिणः ॥
विशेषेणाभिमुख्येन चरन्ति स्थायिसागरे।
तरङ्गा इव येनैते तेन वा व्यभिचारिणः ॥
स्थाय्यवस्थामनापन्ना भवन्ति व्यभिचारिणः।
सञ्चारिणोऽर्पिता नाट्ये सात्विकाः परिकीर्तिताः ॥

विप्रलम्भः

तेषां। रसभावानाम्। काव्यशब्दैरिति। केवलं काव्ये नाट्ये च व्यपदेश्यैः शब्दैरित्यर्थः। अर्पिताः व्यपदिष्टाः।

स्थायिसञ्चारिभावेभ्यो न भिन्नास्सत्त्विका यतः।
चित्तवृत्तिविशेषास्ते इति केचिदचूचुदन् ॥
न तच्चारु यतः स्थायिभावास्सञ्चारिणस्तथा।
चित्तस्य परिणामास्ते साक्षात्स्तम्भादयः पुनः ॥
परिणामं हृदो द्वारीकृत्य ये संभवन्त्यमी।
देहस्य परिणामास्तु सात्त्विका इति कीर्तिताः ॥
नन्वेवमनुभावास्यू रत्यादेरनुदर्शनात्।
यथानुभावैर्गम्येत स्तम्भाद्यैरप्यसौ तथा ॥
भावात्मा व्यज्यते तस्मात्को विशेषेण योजयेत्।
सत्यं यद्यप्यभिव्यक्तिफलाः स्युरुभयेऽप्यमी ॥
तथापि कर्तुं शक्यं न नटैर्विक्षिप्तमानसैः।
भ्रूविक्षेपकटाक्षाद्याः सर्वे भेदादयं पुनः ॥
समाहितान्तःकरणैरेवाभिनयगोचरः।
तस्मात्सत्त्वैकनिष्पन्नाः स्तम्भाद्यास्सात्त्विका मताः ॥

भेदः

स्तम्भःस्वेदादिभिर्गम्या याः काश्चिच्चित्तवृत्तयः।
तासु स्तम्भादयश्शब्दा वर्तन्ते लक्षणाबलात् ॥
तेन भावत्वमप्येषां मुख्यवृत्त्यैव युज्यते।
रत्याद्याः स्थायिनो भावाः निर्वेदाद्यास्ततःपरे ॥
सञ्चारिणः परे भावाः स्तम्भाद्याः सात्त्विकाः स्मृताः।
एकप्रयोगावगतास्ते प्रयोज्याः परस्परम् ॥
वर्तन्तेऽङ्गाङ्गिभावेन यथा भावा अमी तथा।
रत्यादेरङ्गिनो भावा अङ्गाः स्युर्व्यभिचारिणः ॥
रत्यादेरङ्गिनस्सर्वेष्वङ्गं सञ्चारिणो यदि।
अङ्गिभिस्तुल्यकालत्वमङ्गानां न्यायतो भवेत् ॥
यतो नाङ्गाङ्गिभावः स्यादर्थयोर्भिन्नकालयोः।
चित्तवृत्त्यात्मकाश्चोक्ता भावा रत्यादयस्तु याः ॥
अन्तःकरणवृत्तिश्च बुद्धिरित्यभिधीयते।
यौगपद्यं च बुद्धीनां नेष्यते तार्किकैर्मतम् ॥
मनसो लिङ्गमुत्पत्तिर्ज्ञानानां क्रमशालिनी।
शब्दबुद्धिक्रियाणां च न स्थितिस्स्थायिनी मता ॥
तत्कथं तुल्यकालत्वं स्थायिसञ्चारिणोर्भवेत्।
उपकार्योपकर्तृत्वं कीदृशं भिन्नकालयोः ॥
अत्र ब्रूमश्चित्तवृत्तिरूपत्वेऽप्यविरुद्धता।
क्षणविध्वंसिनो ह्येते शक्तिरूपेण संस्थिताः ॥

पोष्यपोषकतां यान्ति नित्यचेतनसंश्रिताः ।
विज्ञानेच्छाप्रयत्नानां तुल्यकालत्वमिष्यते ॥
तार्किकैरपि तेनात्र ज्ञानत्वेऽपि न दुष्टता ।
अथवा विषयः पूर्वज्ञानं ज्ञानस्य भाविनः ॥
यत्रोत्तरोत्तरज्ञानपूर्वस्य...संभवः ।
विद्यमानार्थविषयः प्रत्यक्षस्तेन गीयते ॥
तस्मात्सञ्चारिभिर्योगः स्थायिनां न विरुद्ध्यते ।
ननु निर्वेदादयः स्युर्यथाङ्गं स्थायिनां तथा ॥
अन्येऽपि यान्त्यङ्गभावं निर्वेदादेस्ततः कथम् ।
सञ्चारिण इति ज्ञेया निर्वेदाद्यास्तदुच्यते ॥
नात्र सञ्चारिभावत्त्रमनङ्गत्वस्य सूचकम् ।
किन्त्वङ्गतया सान्यैपां प्रधानापेक्षया भवेत् ॥
न स्वाङ्गापेक्षया तेनाङ्गित्वं स्वाङ्गैः प्रवर्तताम् ।
सोमाङ्गभूतस्य पशोः पुरोडाशोऽङ्गतां व्रजेत् ॥
तेनाङ्गयपि पशुस्सोमस्याङ्गतां भजते तथा ।
तथा स्वाङ्गैरङ्गिनोऽपि चिन्ताद्या व्यभिचारिणः ।
अङ्गं रसस्याङ्गिनः स्युरिति सर्वमनाविलम् ॥

विप्रदासः

भास्वरम्—नाटकभेदः (सुबन्धुमते)

माला नायकसिध्यङ्गग्लानिस्तस्याः परिक्षयः ।
मात्रावशिष्टसंहारः भास्वरे पञ्च सन्धयः ॥
एतस्मिन्नायके ख्याते तत्समोऽन्यः प्रतापवान् ।
यदि स्यात्प्रतिपक्षश्च सा मालेति प्रकीर्तिता ॥
यथा हि चन्द्रगुप्तस्य नन्दनः प्रतिपूरुषः ।
नायकं छलयित्वेष्टसिद्धिर्वा परिपन्थिनः ॥
एषा नायकसिद्धिः स्यान्मारीचेनेव रावणः ।
दुर्गस्यान्यैर्विमर्दादिदर्शनं ग्लानिरिष्यते ॥
कपिभिर्वार्धिमुत्तीर्य लङ्कावेष्टनमेव तत् ।
परिक्षयोऽत्र मोहादिर्नायकस्य रिपोर्बलात् ॥
सनागपाशबन्धादौ रामलक्ष्मणयोरिव ।
मात्रावशिष्टसंहारसन्धिरेकस्तु नाटके ॥
शुल्तबन्दीकृतस्त्रीणां तस्य शत्रोर्वधादथ ।
तत्परीक्षास्थितिर्मात्रावशिष्टमिति कथ्यते ॥
यथा सीतापरिक्षेपे रावणानन्तरे कृते ।
भारतीवृत्तिभूयिष्ठं वीराद्भुतरसाश्रयम् ।
भास्वरं नाटकं बालरामायणमिदं यथा ॥ शारदातनयः

चन्द्रगुप्तनन्दनौ । प्रतिज्ञाचाणक्यनाटके प्राप्ते । मारीचेनेव रावण इत्यत्र मारीचवंचनाख्यनाटकं विवक्षितम् ।

अन्यापवादसंफेटाप्रसङ्गो विद्रवस्तथा ।
सङ्ग्रहश्चेति चाङ्गानि सम्यग्योज्यानि भास्वरे ॥

शारदातनयः

भाविकद्वन्द्वः

स्वावाचिकं समासाद्य शिरोनेत्रादिभिः क्रमात् ।
स स्यादभिनयो नाम्ना भाविकद्वन्द्वसंज्ञिकः ॥

भावना

भाविनी—ध्रुवावृत्तम्

आद्यपञ्चमान्त्यसप्तमं स्यात्तृतीयमेव दीर्घकम् ।
यस्य पादयोगतो हि सा भाविनीति खञ्जकं तथा ॥
जातिफुल्लपाणमत्तयो [जातिफुल्लपानमत्तः]

भरतः

भाषणम्—निर्वहणसन्ध्यङ्गम्

सामदानादिसम्पन्नं भाषणं तदुदाहृतम् । भरतः

यद्यपि गतार्थेऽपि सङ्ग्रहाख्यमिदमङ्गमुक्तम्, तथाप्यत्र स्थाने अवश्यं प्रयोक्तव्यतां ख्यापयितुं पुनरुपादनं शब्दान्तरेण । यथा — रत्नावल्यां स्थाने देवीशब्दमित्यादि वसुभूतिवाक्यम् । अथवा सामदानं तु यथा भगवती जीमूतवाहनस्य वरं ददाति नागानन्दे ।

अन्ये मन्यन्ते,आदिशब्देन भेददण्डादेरुपायान्तरस्य सङ्ग्राह्यत्वम् । तदिहानौचित्यात् न ग्राह्यम् ।

अभिनवः

भाषणी—मेलरागः (षण्मुखप्रियामेलजन्यः )
(आ) स ग रि ग म प ध नि स.
(अव) स नि ध प म ग रि स. मञ्ज

भाषा

प्रकारवाची विज्ञेयो भाषाशब्दोऽत्र पण्डितैः ।
रागालप्तिप्रकारास्स्युर्भाषा भाषाविदां मते ॥
भाषाश्चतुर्विधाः प्रोक्ता मतङ्गाद्यैर्महर्षिभिः ।
मुख्या स्वराख्या देशाख्या उपरागसमुद्भवाः ॥
स्वरागकाकुभिर्युक्ता भाषा मुख्या इति स्मृता ।

हम्मीरः

यथा—मालवकैशिके ।

या सा नाम स्वरैः काकुः तास्स्वराख्याः प्रकीर्तिताः । यथा—पञ्चमीगान्धारी ।

देशाख्यास्तायुता या स्युर्नामकृद्देशकाकुभिः । यथा, गौडी

हर्षपुरी उपरागाश्रया यासां काकुस्ता उपरागजाः। यथा—
श्रीकण्ठी, ललिता, भिन्नपञ्चमी।

**भाषाङ्गरागः—रागजातिः**

भाषाणामाश्रिता छाया यैस्तदङ्गानि तानि च।

कुम्भः

**भाषाङ्गाः**

भाषाछायाश्रिता येन जायन्ते सदृशाः किल।
भाषाङ्गास्तेन कथ्यन्ते गायकैस्तुतितत्परैः॥

तुलजः

**भाषाङ्गी—श्रुतिः**

धैवतस्य द्वितीया श्रुतिः। तारधैवतस्य प्रथमा श्रुतिर्मण्डलीमते।

पाल्कुरिकि सोमः

**भाषाप्रयोगः**

स चतुर्विधः।

अतिभाषार्यभाषा च जातिभाषा तथैव च।
तथा योन्यन्तरी चैव भाषा नाट्ये प्रकीर्तिता॥

भरतः

**भाषारागः**

भाष्यते येन तच्छाया स भाषाराग उच्यते।

येन। ग्रामरागेण

कुम्भः

**भाषास्मृतिः—मेलरागः (गमनश्रममेलजन्यः)**

(आ) स ग म प ध नि ध स.
(अव) स ध नि ध प म रि म ग रि स.

मज

**भाषिणी—श्रुतिः**

निषादे प्रथमा श्रुतिः।
हनुमन्मतेऽष्टादशैव श्रुतयः।

**भाष्यम्**

सूत्रार्थो वर्ण्यते यत्र वाक्यैस्सूत्रानुकारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥

**भासः—रागः**

निषादांशग्रहो न्यासगान्धारष्षड्जवर्जितः।
नितारस्त्व...काजन्मा भासोल्वहुलस्स्मृतः॥

कश्यपः

**भास्करः—देशीतालः**

भास्करे नभसाः प्रोक्ताः।

। । । ऽ । । । । ऽ

लक्ष्मणः

**भिण्डिः—दशतालप्रमाणमायुधम्**

**भित्तकः—मात्रावृत्तम्**

ग ल ल ग ल ल भ ग ग

विरहाङ्कः

**भिन्नम्—देशीनृत्तम् (उड्डुपाङ्गम्)**

कुञ्चिते स्थानके स्थित्वा यदा नूपुरपादिका।
वामोऽधोमुखमंसास्यः अलपद्मः प्रकम्पितः॥

पादः प्रसारितास्तथः त्रिपताकः शिरःस्थितः।
दक्षिणे प्राग्गतीर्नीत्वा तथा वामे च चारिवत्॥

नूपुराङ्गविपर्यासाद्भ्रमरी रचिता यदा।
क्रीडातालेन विहितं तद्भिन्नमभिधीयते॥

अत्र भ्रमरीति बाह्यभ्रमरी।

वेदः

**भिन्नः—रागजातिः**

श्रुतिभिश्च स्वरैश्चैव शुद्धत्वेन च जातिभिः।
चतुर्भिर्भिद्यते यस्तु स भिन्न इति कीर्त्यते॥

कुम्भः

**भिन्नकैशिकः—रागः**

कार्मारव्याश्च कैशिक्यास्सञ्जातो भिन्नकैशिकः।
पन्यासः सग्रहान्तश्च संपूर्णः काकलीयुतः॥

मोक्षः

कार्मारव्याश्च कैशिक्यामुद्भूतो भिन्नकैशिकः।
षड्जग्रहांशको न्यासे पञ्चमस्वरपूरितः॥

काकलीयुक् च मन्द्रास्यसञ्चारी चात्र दृश्यते।
प्रसन्नादि समायुक्तष्षड्जाद्याश्रित मूर्छनः।
भिन्नकैशिक इत्येवं कथितं हरिभूभुजा॥

हरिः

**भिन्नकैशिकमध्यमः—रागः**

षड्जमध्यमया सृष्टो भिन्नकैशिकमध्यमः।
षड्जांशो मध्यमन्यासः प्रयोगैर्मन्द्रगामिभिः।
वीररौद्राद्भुतरसः संपूर्णः काकलीयुतः॥

मोक्षः

षड्जमध्यमया सृष्टो भिन्नकैशिकमध्यमः।
षड्जोंऽशग्रहयोर्न्यासे मध्यमो मन्द्रतारयोः॥

षड्जस्वरो भवेत्पश्चात्षड्जान्ताश्रितमूर्छनः ।
पूर्णसञ्चारिवर्णोऽयं काकलीसङ्गकोमलः ।
सप्रसन्नान्त इत्युक्तो भिन्नकैशिकमध्यमः ॥

हरिः

**भिन्नतानः—रागः**

जातो मध्यमपञ्चम्यां भिन्नतान उदीर्यते ।
पञ्चमांशग्रहश्चास्य रिषभस्वरवर्जितः ॥
मध्यमान्तः काकलिमान् वर्णे संचारशोभितः ।
प्रसन्नान्तकृताकल्पो भवेदन्तिममूर्छनः ।
इत्येवं स्फुटमाख्यातं भिन्नतानस्य लक्षणम् ॥

हरिः

भिन्नतानो भवेत्पांशो मध्यमापञ्चमीभवः ।
निरिभ्यां दुर्बले मान्तः करुणे काकलीयुतः ॥
निषादस्य च दौर्बल्यं भवेज्जातिसमाश्रितम् ।
दौर्बल्यं रिषभस्येह विचार्यं रागवेदिभिः ॥

मोक्षः

**भिन्नपञ्चमः—रागः**

मध्यमापञ्चमी जात्योर्भिन्नपञ्चमसंज्ञकः ।
धैवतांशश्च पन्यासः स्वल्पद्विश्रुतिकस्वरः ॥
पञ्चमीतो भवेन्न्यासो मध्यमा यस्तदंशकः ।
निगलोपवशादत्र स्वल्पत्वमुभयोर्मतम् ।
भयानके सबीभत्से गीयतेऽसौ विशारदैः ॥

मोक्षः

मध्यमापञ्चमीजात्योर्लक्ष्यते भिन्नपञ्चमः ।
धैवतस्स्याद्ग्रहश्चांशः पञ्चमान्तः परिष्कृतः ॥
पञ्चमो मूर्छितान्ते च काकलीसङ्गशोभितः ।
निषादाल्पत्वसञ्चारिवर्णसङ्गविराजितः ।
प्रसन्नान्तयुतः प्रोक्त इत्येवं भिन्नपञ्चमः ॥

हरिः

स बीभत्से हास्ये क्वचिदपि च शृङ्गारविषये
श्रुतिर्मुख्या मध्य......रिषभः ।
सं संवादी षड्जस्वर इह भवेद्धैवत इह
स्वरश्चान्ते स्फुरति खलु भिन्नपञ्चमः ॥
माह्यव्रतिकतानोऽथ नन्दिनीहृष्यकान्वितः ।
मध्यमापञ्चमी जात्योः मन्द्रस्स्यात् भिन्नपञ्चमः ॥

नान्यः

शुद्धपञ्चमताप्रोक्तः स्वरांशो भिन्नपञ्चमः ।
केवलं धैवतांशश्च मन्द्रस्थानविभूषितः ॥

कश्यपः

—मेलरागः (गानमूर्तिमेलजन्यः)
(आ) स ग म प ध नि – स.
(अव) स नि ध प म ग रि – स.

मख

**भिन्नपञ्चमी—रागः**

प्राज्या रिमपधैर्भिन्नपञ्चमी ककुभोद्भवा ।
गान्धारवर्जिता ज्ञेया...प्रयोगकारकैः ॥

मोक्षः

धैवतांशग्रहामध्यरिपधोत्था गवर्जिता ।
मापन्यासा निसोपेता कथिता भिन्नपञ्चमी ॥

नान्यः

गान्धारस्वररहिता रिमपधबहुला तु भिन्नपञ्चमिका ।
षड्जनिषादसमेता मापन्यासेन भवति लक्षणतः ॥

कश्यपः

**भिन्नपौराली—रागः**

धैवतांशग्रहन्यासा मन्द्रमध्या गतारभाक् ।
सरिगप्रचुरा पूर्णा भिन्नषड्जसमुद्भवा ।
पौराली भिन्नपूर्णेयं प्रहर्षे विनियुज्यते ॥

जगदेकः

**भिन्नमण्ठः—तालः**

दवयं च लघुश्चैको द्रुतो लघुर्द्रुतो लघुः ।
शरद्वयं भवेद्यत्र भिन्नमण्ठस्स कथ्यते ॥
० ० ० । ० । ० । ॥ वेदः

—देशीतालः

द्रुतत्रयं लघुश्चैको द्रुतो लघुद्रुतो मतः ।
शरद्वयं भवेद्यत्र भिन्नमण्ठस्स कथ्यते ॥
० ० ० । ० । ० ॥ दामोदरः

**भिन्नराग**

श्रुतिभिश्च स्वरैश्चैव शुद्धत्वेन च जातिभिः ।
चतुर्भिर्भिद्यते यस्तु स भिन्न इति कीर्त्यते ॥

कुम्भः

**भिन्नवलिता—रागः**

न्यासांशग्रहपञ्चमा कृशरवा गान्धारके सप्तमे
षड्जेमन्द्रतमा तथर्षभरवे तारा च कम्पान्विता ।
मापन्यासवती च धैवतबहूपूर्णस्वरा सूरिभिः
भाषात्वन्तरजा च भिन्नवलितेत्याख्यायते नित्यशः ॥

नान्यः

पांशन्यासग्रहा स्वल्पनिगा चाकम्पितर्षभा ।
मापन्यासा मता भिन्नवलिता धैवतोरुका ॥

मतङ्गः

भिन्नविक्रमः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स रि ग म प ध स.
(अव) स नि ध प रि स.

मञ्ज

भिन्नषड्जः—रागः
षड्जोदीच्यवतीजातेः भिन्नषड्जस्तु धांशकः ।
मावसानो रिपत्यक्तः संवादी चान्तरस्वरः ।
काकलीकालितो ज्ञेयो वीभत्से स भयानके ॥

मोक्षः

षड्जोदीच्यवतीजातः पञ्चमर्षभवर्जितः ।
धैवतांशग्रहोपेतो मध्यमान्तमनोहरः ॥
सञ्चारिवर्णसंयुक्तः प्रसन्नान्तविभूषितः ।
काकल्यन्तरसंयुक्तो भिन्नषड्ज उदीरितः ॥

हरिः

भिन्नहेरली—मेलरागः (धवलाम्बरीमेलजन्यः)
(आ) स म प ध नि ध स.
(अव) स नि ध प म स.

मञ्ज

भिन्नाभीरी—रागः
धन्यासा धैवतांशा च पूर्णा चाभीरिछायभाक् ।
आभीरी ककुभोद्भूता मतङ्गगतितारणे ॥

जगदेकः

भिन्नार्थम्—काव्यदोषः
भिन्नार्थमभिविज्ञेयमसभ्यं ग्राम्यमेव च ।

भरतः

भीतिरूपम्—नर्म
रूपेण भीतिजननं भीते रूपमुदाहृतम् ।

सर्वेश्वरः

भीमः—अङ्गहारः
हस्तौ नितम्बनामानौ पादौ प्रेङ्खणकुट्टनैः ।
उल्लोकितदृशा भूयात्समदृष्ट्या च भावयेत् ॥
हस्तीव नटनं कुर्याद्भीमस्य प्रथमे तदा ।
मूर्ध्नि देशे पुरोभागे पौनःपुन्यप्रचालितौ ॥
पताकाभिधहस्तौ तु तस्यां तदनुगौ परौ ।
आलोकितदृशा भूयाद्भीमस्यैव द्वितीयके ॥

नन्दीश्वरः

—देशीतालः
दोलौ दोलौ दोलौ दोलौ दौदो लोदौ दोलो दौदः ।
लोदौ दोपश्चेति न्यासे सञ्जायते भीमतालः ॥

22 मात्राः

तालप्रस्तारः

भीमनादा—श्रुतिः
मन्द्रमध्यमचतुर्थी श्रुतिः ।

मण्डली

भीमसेनः—देशीतालः
भीमसेनो गदाङ्कितः ।
ऽ ०

लक्ष्मणः

भीमसेनप्रियः—तानः
गान्धारग्रामे नारदीयतानः ।
स रि ग म प नि

नान्यः

भीष्मावली—मेलरागः (हनुमत्तोडीमेलजन्यः)
(आ) स ग रि ग म ध प नि ध स.
(अव) स नि ध ग रि स.

मञ्ज

भुक्का—सुषिरवाद्यम्
चतुर्हस्तकृतायामा सैव भुक्केति कीर्त्यते ।
सैव । काहलैव ।

कुम्भः

भुग्नम्—वदनम्
तद्भुग्नं तदधोवक्त्रं पतिप्रक्रुसिलज्जयोः ।

अशोकः

भुजगमुखी—ध्रुवावृत्तम्
यदि गुरुदशमे हि सदा निधनगतमनुसप्तमं चरणगतम् ।
जभवतिगणषष्ठ इतरस्त्वमिक्तिरथ चैव सा तु भुजगमुखी ॥
जलभरसमयागतयो सुसुरभिकुसुमुक्कडोमदजणणो ।
जलभरसमयागतकसुकुसुमोत्कटो मदजननः ॥
कारयेद्भुजगमुखी प्रियदूतीप्रवेशने ।
गेया मालवभाषायां तालदेशस्तु पूर्ववत् ॥

नान्यः

पूर्ववदिति । रतिध्रुवायामुक्तवत् ।

भुजङ्गत्रस्तरेचितम्—करणम्
भुजङ्गत्रासिता हस्तौ रेचितौ वामपार्श्वगौ ।
यत्र कुर्वीत तत्प्रोक्तं भुजङ्गत्रस्तरेचितम् ॥

ज्यायनः

**भुजङ्गत्रासितम्**—करणम्

भुजङ्गत्रासितां चारीं विधायाङ्घ्रिं तु कुञ्चितम् ।
उत्क्षिप्योरुकटीजानु यदि त्र्यस्रं विवर्तयेत् ॥

व्यावृत्या परिवृत्या च यत्रको डोलसंज्ञिकः ।
करोऽन्यः खटकाख्यस्तत् भुजङ्गत्रासितं तदा ॥

अशोकः

"अशङ्कितेक्षितोपात्तभुजङ्गत्रासलूचनं" इति विनियोगमाह

वेमः

भुजङ्गग्रहणे मतम् ।

लक्ष्मणः

**भुजङ्गत्रासिता**—चारी

अन्याङ्घ्रेरूरुमूलेऽन्तमुत्क्षिप्याकुञ्चितं पदम् ।
पार्ष्णिं नितम्बाभिमुखं कृत्वा चोत्तानितं तलम् ॥

जानुस्तनपार्श्वगं यत्र कटीजानुविवर्तनम् ।
सा भुजङ्गत्रासिता स्याद्भुजङ्गत्राससूचने ॥

वेमः

**भुजङ्गविजृम्भितम्**—षड्विंशत्यक्षरवृत्तम्

ममतननननरसलगाः ।

भरतः

**भुजङ्गाञ्चितकम्**—करणम्

भुजङ्गत्रासिताङ्घ्रिस्स्यात् दक्षिणो रेचितः करः ।
यत्र वामो लतासंज्ञः तद्भुजङ्गाञ्चितं भवेत् ॥

ज्यायनः

"तुरङ्गारोहणे भवेत्"

लक्ष्मणः

**भुजङ्गिनी** -मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि ग म प ध स .
(अव) स नि ध म ग रि स .

मञ्ज

**भुजङ्गी**—गतिः

पताकिकौ करौ कृत्वा पार्श्वयोरुभयोरपि ।
पूर्ववद्गमनं यत्तु सा भुजङ्गीगतिर्भवेत् ॥

नाट्यदर्पणे

**भुञ्छी (भुञ्जी)**—उपाङ्गरागः

धैवतांशग्रहन्यासा मध्यमस्वरवर्जिता ।
आन्दोलितसपा भुञ्छी योक्ता योगवियोगयोः ॥

मध्यमस्याविलोपित्वादत्र यत्तस्य लोपनम् ।
गदितं शार्ङ्गदेवेन तद्गतिश्चिन्त्यतां बुधैः ।
वेलावलीविभेदत्वादस्याङ्गग्रहतोचिता ॥

कुम्भः

**भुञ्छी**—भाषाङ्गरागः

धान्तग्रहांशा मृदुमध्यमा च मतारिका गेन विवर्जिता च ।
भूरिप्रयोगर्षभपञ्चमा च भुञ्छ्यत्र भाषाङ्गतया प्रदिष्टा ॥

कुम्भः

—प्रथमरागः

आंदोलितसपा भुञ्जी मध्यमेन विवर्जिता ।
धैवतांशग्रहन्यासा विप्रलम्भे नियुज्यते ॥

मोक्षः

**भुञ्जी**—रागः

धैवतांशग्रहन्यासा मध्यमेन च वर्जिता ।
षड्जपञ्चमकम्पा तु भुञ्जी नाम्ना प्रकीर्तिता ॥

सोमेश्वरः

मलयक्कान्दोलितसपा धन्यासांशग्रहान्विता ।
विप्रलम्भे भवेद्भुञ्जीत्याह शाकम्भरीश्वरः ॥

हम्मीरः

सञ्जाता ककुभाद्भुञ्जी मध्यमेन विवर्जिता ।
पञ्चमान्दोलिता ज्ञेया विप्रलम्भे तु षाडवा ॥

जगदेकः

**भुञ्जीवेलावली**—उपाङ्गरागः

ग्रहांशन्यासधैवता ।
मध्यमस्वरसंत्यक्ता भुञ्जान्दोलितषड्जपा ।
विप्रयोगे विधातव्या शृङ्गारे चेति केचन ॥

महूमाधवः

**भुवनानन्दः**

विश्वप्रदीपकारः ।
वङ्गदेशवास्तव्यः । कालः १३५०

**भूंछीदेशाख्या**—रागः

भुंजी ज्ञेया त्रिगान्धारा षड्हीना चोपरागिका ।

मदनः

**भूतलतन्वी**—ध्रुवावृत्तम्

आद्यपदे द्वे यत्र तु ह्रस्वे सा खलु भूतलतन्वी ।
मेहणिरुद्धम् । (छाया) मेघनिरुद्धम् ।

भरतः

नायिकासु प्रयोक्तव्या करुणे ककुभेन च ।
चञ्चत्पुटस्य तालेन सदा भूतलतन्विका ॥

ककुभः । रागविशेषः ।

नान्यः

**भूपकल्याणी**—मेलरागः

(आ) स रि ० ग ० ० ० प ध ० ० ० स.
(अव) स नि ० ० ध प म ० ० ग ० रि स·

मेललक्षणे

—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि म प ध स

(अव) स नि ध प म ग रि स

मल्ल

भूपतिः—रागः

मध्यमांशग्रहन्यासो भूपतिः करुणे दिवा।

नारायणः

भूपालः—मेलकर्ता

भूपालरागे शिखिधातृधेनु-
कृष्णाजपञ्चादि तुरङ्गमेवम्।
सवादमाभात्युभयत्र तस्मात्
स्याद्गौडुवोयं रमणीयगानः॥

सरिपधाः शुद्धाः! अन्तरगान्धारः। परमेश्वरः

—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) स रि ग प ध स.

(अव) स ध प ग रि स.

मल्ल

—रागहस्तः

भूपाले त्वलपद्मस्स्यान्नाभेरुद्वेष्टितश्चली।

भृङ्गारः

भूपालपञ्चमः—मेलरागः (झलवरालीमेलजन्यः)

(आ) स ग रि ग प म ध स.

(अव) स प ध म ग रि स.

मल्ल

भूपालरागध्यानम्

सिंहासनमधिवसितं चामरलसितं कुरङ्गनयनाभ्याम्।
परिवारवलसमेतं मनसि ध्यायामि सन्ततं भूपालम्॥

रागसागरः

भूपालिका—मेलरागः (कर्णाटगौडमेलजा)

भूपाली सत्रयेणाढ्या मनिर्हीनोदितोषसी।
रिपहीना मते केषां रसे शान्ते प्रयुज्यते॥

श्रीकण्ठः

भूपाली—मेलरागः

मनिवर्जा तु भूपाली रिधौ यत्र च कोमलौ।
गान्धारोद्ग्रहसंयुक्ता रिन्यासा गांशशोभिता॥

प्रातर्गेया। अहोबिलः

—भाषाङ्गरागः

षड्जग्रहांशकन्यासा त्रवणाङ्गं मनिवर्जिता।
भूपालिकाभिधा ज्ञेया भाषाङ्गं दैन्यलज्जयोः॥

भट्टमाधवः

त्रवणाङ्गं सग्रहांशन्यासा ऋषभवर्जिता।
भूपालपालकेनोक्ता भूपाली दैन्यलज्जयोः।
याष्टिकः पुनराहैमां सैन्धवीसंज्ञया सुधीः॥

कुम्भः

—रागः

षड्जग्रहांशकन्यासा भूपाली कथिता बुधैः।
मूर्छना प्रथमा यत्र संपूर्णा शान्तिके रसे।
कैश्चित्तु रिपहीनेयं औडवा परिकीर्तिता॥

दामोदरः

भूपालीरागध्यानम्

उत्तुङ्गवक्षोभरभारनम्रा
गौरी स्फुरत्कुङ्कुमलिप्तदेहा।
संपूर्णशीतांशुमनोज्ञवक्त्रा
भूपालिका सैव पतिं स्मरन्ती॥

श्रीकण्ठः

भूयोमणी(णिः?)—मेलरागः (खरहरप्रियमेलजन्यः)

(आ) स ग म ध नि स.

(अव) स निं प म ग रि स.

मल्ल

भूरञ्जनी—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि ग प ध नि स.

(अव) स नि ध म ग रि स.

मल्ल

भूषणम्—लक्षणम्

विभूषणमित्यपि वदन्ति।

अलङ्कारैर्गुणैश्चैव बहुभिर्यदलङ्कृतम्।
भूषणैरिव विन्यस्तैः तद्भूषणमिति स्मृतम्॥

भरतः

भूषणैः—कटकादिभिः विभज्य—स्थानदेशकालदशापुरुषादिविभागं विचार्य न्यस्तैरिव गुणालङ्कारैः यदलङ्करणं तद्भूषणं नाम लक्षणं कविव्यापारः। तद्द्वारेण शब्दार्थव्यापारावपि यथा—लीनेव प्रतिबिम्बितेव (मालतीमाधवे) इत्यत्र स्थाने निवेशः।

अभिनवः

अत्र श्लेषोपमाद्यलङ्कारैः श्लेषप्रसादादिभिर्गुणैः उपेतता द्रष्टव्या। सन्ध्यङ्गेषु गुणालङ्कारयोगो नापेक्ष्यते। इतरत्र यथासंभवमूहनीया।

भोजः

अलङ्कारैर्गुणैश्चैव बहुभिस्समलङ्कृतम्।
भूषणैरिव चित्रार्थैस्तद्भूषणमिति स्मृतम्॥

अलङ्कारैरिति। भरतोक्तैरुपमादिभिः गुणैश्च यत्र कथाशरीररचना समुल्लासिता तद्भूषणं नाम लक्षणं,चित्रार्थैरिति विभावादिसामग्रीप्रत्यायकतया रसोद्योतकैरर्थविशेषैर्मतान्तरे वक्रोक्ति रूपैरित्यर्थः। गुणालङ्कारैरेव यत्र कथारूपा वक्रोक्तिरतिशयिता तत्र भूषणम्।

**भूर्गवाद्यम्**

गिरिजारत्नसंभूतं ताम्रलोहेन निर्मितम्।
धुत्तूरपुष्पसङ्काशं दशतालमहोन्नतम ॥
अथ द्वादशतालं वा मुखमङ्गुष्ठविस्तरम्।
अष्टाङ्गुलं पुच्छभागं बध्यते कीलकैस्त्रिभिः ॥
शिवेन निर्मितं पूर्वं मुखवाद्यं महोत्तमम्।
भूर्गस्य नादो विख्यातो मङ्गलप्रद एव च ॥
क्रतोर्मध्ये विवाहे च पुत्रजन्मदिने शुभे।
राज्याभिषेकवेलायां वादो भूर्गस्य चोत्तमः॥
वामहस्ते ब्रह्महत्या दक्षिणे गोवधस्तदा।
उभाभ्यां पीड्यते भूर्गः कोटियज्ञफलं ददेत्॥

चिकः

**भूषावली**—मेलरागः (वाचस्पतिमेलजन्यः)
(आ) स रि ग म प ध स.
(अव) स नि ध प म ग रि स.

मज

**भृङ्गजातिः**—श्रुतिः
गान्धारे प्रथमा श्रुतिः। मण्डलीमते तारगान्धारस्यैव।

**भृङ्गिजातिः**—श्रुतिः
गान्धारस्य प्रथमा श्रुतिः।

पाल्कुरिकि-सोमः

**भृङ्गिविलसितं**—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स रि म ध नि स.
(अव) स ध प म रि स.

मज

**भेदः**—सन्ध्यन्तरम्
भेदः पृथग्भावः। यथा वेण्यां—मित्रोऽहमद्यप्रभृतीति भीमवाक्यम्। सागरः
भेदस्तु कपटालापैः सुहृदां भेदकल्पना। सिंग

—मुखसन्ध्यङ्गम्
सङ्घातभेदनार्थो यः स भेद इति कीर्तितः।

भरतः

पात्रसङ्घातस्य यन्निजप्रयोजनोपक्षेपेण निष्क्रमणसिद्धये भेदनं प्रकरणमिव स भेदः। सर्वत्राङ्केऽन्तर्भावी वस्तूपायात्मा भेदः। स सन्ध्यन्तरैकविंशतौ। अस्योदाहरणं अन्योन्यास्फालेति भीमवाक्यम्। अभिनवः

संघातेन मिलितस्यार्थस्य भङ्गो भेदः। यथा— दशरथः कौशिकमुक्तवान्—रामोऽयमित्यादि। सागरः

भेदनं पात्रनिर्गमः। रङ्गप्रविष्टपात्राणां निर्गमो येन तद्भेदनम्। यथा—अन्योन्यास्फालेति वेण्यां भीमवाक्यम्। तेन हि सङ्ग्रामविचारणे पाण्डवानां पाण्डित्यख्यापनेन सङ्ग्रामतरणाभिप्रायः सङ्घातभेदनार्थ एव उपदर्शित इति भेदः।

अन्ये तु भेदं प्रोत्साहनमाहुः। यथा— भीमवाक्यं द्रौपदीं प्रति अन्योन्यमिति। अन्ये तु बीजफलोत्पत्तिनिरोधकानां शत्रूणां संहतानां विश्लेषोपायं भेदनमाहुः।

सागरः

—पाटवाद्यम्
अङ्गोपाङ्गान्यङ्गभवैर्वाद्यं पूरणहेतुभिः।
नानावाद्यभवैः पाटैः भेदः तद्ज्ञैर्निरूपितः॥

वेमः

येनाङ्गेनैक उत्पन्नः पाटोऽन्यस्तदुपाङ्गजः।
अन्यस्त्वस्याङ्गजो हस्तैः मिश्रैः स्यात्पाटपूर्वकैः॥
नानावादित्रजैः पाटैः त्रिधा भेदो लयक्रमात्।

मोक्षदेवः

**भेद्यकः**—नृत्तम्
भाणादौ प्रयुक्तम्।
एकैकस्य बहिस्सङ्घात् नृत्तं यत्स तु भेद्यकः। द्रुते स्याद्भेदकः स्मृतः। द्रुतो लयः।

शारदातनयः

**भेरी**—अवनद्धम्
सार्धहस्तकृतायामा भेरी ताम्रमयी शुभा।
चतुर्विंशतिरेतस्यामङ्गुलानि मुखे मुखे॥
सच्छिद्रं चर्मणा नद्धं स्यात्तत्त्ववलयद्वयम्।
रज्ज्वा च बद्ध्यते सेयं मध्यसूत्रेण वेष्टयेत्॥
वामे पाणिप्रहारः स्याद्दक्षिणे कोणताडनम्।
ठकारपूर्वकश्चात्र पाटवर्णः प्रकीर्तितः॥
गर्जत्पर्जन्यगम्भीरभीषणो गगनान्तरे।
भवेद्दिग्विजये भेर्या नादश्शत्रुभयङ्करः॥

सोमराजः

ततोऽधिका भवेद्भेरी भूरिगम्भीरनिस्वना।
ततः। डमसटक्कावाद्याभ्याम्। सोमेश्वरः

भेरुण्डहस्तः

मणिबन्धकपित्थाभ्यां भेरुण्डकर इष्यते ।
पार्श्वभागे तु भेरुण्डपक्षिणां च निरूपणे ॥ विनायकः

भैरवम्—मेलरागः

(आ) स रि ० ० ग म ० ० ० ध ० नि स.
(अव) स नि ० ध ० प ० म ग ० ० रि स. मेललक्षणे

भैरवः—रागाङ्गरागः (वीणयां वादनक्रमः)

स्थायिनो धैवताद्गत्वा त्रिपञ्चचतुरः स्वरान् ।
अवरोहात्पुनः स्थायिस्वरपर्यन्तमेत्य च ॥

तत्तृतीयं ततोऽधस्थं कृत्वा स्थायी यदोच्यते ।
तदा स्याद्भैरवस्थायी विरम्योद्वीक्ष्यते जनैः ॥ कुम्भः

—रागः (वंशे वादनक्रमः)

धैवतं ग्रहमास्थाय तत्पूर्वं स्थायिनं ततः ।
तृतीयं च स्वरं कृत्वा पुनः प्राच्यं स्वरं व्रजेत् ॥

तृतीयं कम्पयित्वा च विलम्ब्याथ द्वितीयकम् ।
आहत्य च द्वित्रिवारं ग्रहो न्यासो यदा भवेत् ॥

स्वस्थानं प्रथमं प्रोक्तं भैरवस्य तदा बुधैः ।
भवेद्द्वितीये स्वस्थाने त्वारोहः पञ्चमावधि ॥

षष्ठान्तः सप्तमान्तो वा स्यादारोहस्तृतीयके ।
अष्टमस्वरपर्यन्तमारोहः स्याच्चतुर्थके ॥

अवरोहः स्वराणां तु पूर्वपूर्ववदिष्यते ।
वंशेऽत्रास्य द्वितीयस्तु स्वरः स्थायी निरूपितः ॥ वेमः

—रागः

अथ स्याद्भैरवो रागः षड्जांशन्यासमध्यमः ।
समस्वरो धैवतांशः पञ्चमर्षभवर्जितः ॥ हरिः

—(मालवगौलमेलजः)

यदीयांशग्रहन्यासाष्षड्ज एव निगद्यते ।
रिपास्तो भैरवो रागः प्रभाते स प्रगीयते ॥ श्रीकण्ठः

—रागः

धैवतांशग्रहन्यासा संपूर्णोऽथ समस्वराः ।
आन्दोलितस्तु स्वस्थाने स्वाश्रितः पञ्चमेन तु ॥

गान्धारः कम्पितो मन्द्रे रिषभे चापि कम्पितः ।
निषादषड्जबहुलो भैरवः परिकीर्तितः ॥ सोमेश्वरः

न्यासग्रहांशस्थितधैवताख्यो गान्धारषड्जावधितारयुक्तः ।
मन्द्रश्च पूर्णश्चनिधैवतीयः शेषास्समा भैरव एष उक्तः ॥ नान्यः

धैवतांशग्रहन्यासस्संपूर्णोऽथ समस्वरः ।
आगान्धारमथो षड्जं तारो मन्द्रश्च धैवतः ॥ मतङ्गः

धैवतांशग्रहन्यासयुक्तः स्याच्छुद्धभैरवः ।
सकम्पमन्द्रगान्धारो गेयो मध्याह्नतः परम् ॥
अयमौडुव इत्यपि गण्यते। नारायणः

—रागः (औडुवः)

भिन्नषड्जसमुत्पन्नो भैरवोऽपि रिपोज्झितः ।
धग्रहांशो मध्यमान्तो गेयो मङ्गलकर्मणि ॥
इयमेव भैरवी। भैरवी कैशिकी चैव भैरवस्यैव वल्लभा। नारायणः

—मेलरागः

भैरवे तु रिपौ न स्तो धादिमे न्यासमध्यमे ।
तत्रोक्तौ तु गनी तीव्रौ कोमलो धैवतः स्मृतः ॥
अयं मेलाधिकारी। प्रातर्गेयः। अहोबिलः

—रागाङ्गरागः

धैवतांशो मध्यमान्तो विमुक्तर्षभपञ्चमः ।
शीते च भैरवो भिन्नषड्जजातः समस्वरः ।
हेमन्तप्रथमे यामे करुणे विप्रलंभजे ॥ भट्टमाधवः

—रागः

एकास्याष्ट भुजः श्वेतवर्णो वृषभवाहनः ।
कृत्तिवासाः सर्पशूलः खट्वाङ्गजपमालिका ॥

वीणापाशफलाब्जानि बिभ्राणो भैरवप्रभः ।
कैश्चिद्रागविदां वर्यैः स्मर्यते शूलरूपभृत् ॥ कुम्भः

—रागः

भिन्नषड्जसमुद्भूतो मन्यासो धांशभूषितः ।
स्वरास्समपरित्यक्तः प्रार्थने भैरवस्स्मृतः ॥ जगदेकः

—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स ध प म ग रि ग स. मज

—पुंरागः

धैवतांशग्रहन्यासो रिपहीनो धसान्तकः ।
भैरवस्स तु विज्ञेयो धैवतादिकमूर्छनः ।

विकृतो धैवतो यत्र औडुवः परिकीर्तितः ॥
ध नि स ग म ध . दामोदरः

—देशीतालः
भैरवे भगणस्त्वेकः । ऽ ॥ लक्ष्मणः

—रागः
भिन्नषड्जभवो धांशः ग्रहन्याससमस्वरः ।
रिवर्जितो भैरवस्स्यात् देवताप्रार्थनादिषु ॥
सोमराजः

—तानः
मध्यमग्रामे गनिर्हीनेर्डुवः ।
रि स प ध म कुम्भः

—हस्तः
भैरवे त्रिपताकः स्यात्तथैव गुणमाश्रितः ।
भ्याारः

—रागः
भिन्नषड्जसमुद्भूतो मन्यासो धांशभूषितः ।
समस्वरः परित्यक्तः प्रार्थने भैरवस्स्मृतः ॥
हम्मीरः

—औडुवः रागः
धग्रहांशो रिपत्यक्तो भैरवो मांशयुक् चरः ।
मदनः

## भैरवरागध्यानम्

सचन्द्रहासं फलकं दधानो निबद्धकोपो दृतबद्धचूडः ।
चारीर्वितन्वन्बहुधा पदातिप्रचण्डरूक्षः किल भैरवोऽयम् ॥
सङ्गीतसरणिः

श्रुतिस्वरमहोदधिं सकलतालमानामृतं
शिवार्चितमनोहरं भसितलेपिताङ्गं सदा।
जटामकुटभासुरं शिशुशशिप्रभामौलिकम्
कपालभरणं भजे नटनकौशलं भैरवम् ॥
रागसागरः

गान्धारकः शशिकला फलितस्त्रिणेत्रः
सर्पैः विभूषिततनुर्गजकृत्तिवासाः ।
भास्वत् त्रिशूलकर एष नृमुण्डधारी
शुभ्राम्बरो जयति भैरव आदिरागः ॥
संगीतदर्पणे दामोदरः

गङ्गाधरश्चन्द्रकलोत्तमाङ्गो
भुजङ्गमव्यूहविभूषिताङ्गः ।
शुद्धाम्बरः शूलविभूतिधारी
स भैरवाख्यो जयति प्रकामम् ॥
श्रीकण्ठः

भैरवाञ्चितम्—उत्प्लुतिकरणम्
समाङ्घ्रेरूरुभागे तु निधाय चरणं परम् ।
उत्प्लुत्याञ्चितमादध्याद्यत्र तद्भैरवाञ्चितम् ॥
वेमः

भैरवी—रागः
संपूर्णा भैरवी ज्ञेया ग्रहांशन्याससमध्यमा ।
सौवीरी मूर्छना यत्र मध्यमग्रामचारिणी ॥
देवी ह्येषा भैरवस्य स्वरैर्गेया विचक्षणैः ।
म प ध नि स रि ग म दामोदरः

निरूप्यतेऽथ रागेषु भैरवी संज्ञितः पुनः ।
भिन्नषड्जसमुद्भूतो न्यासांशग्रहधैवतः ।
समशेषस्वरः पूर्णो गान्धारे तारमन्द्रता ॥
हरिपालः

—मेलरागः (श्रीरागमेलः)
षड्जत्रयेण संयुक्ता सदा पूर्णा प्रगीयते ।
भैरवस्य संमिश्रा भैरवी रिपमुद्रिता ॥
श्रीकण्ठः

—मेलकर्ता
या भैरवीह तु मयूरसुरारिवेनु-
तच्छागशुद्धतरमध्यमपञ्चमाश्च ।
हर्यश्वकैशिकनिषादमिदं समानं
संपूर्णजातिरिति गायति नारदोऽपि ॥
समपाः शुद्धाः । रिधौ चतुःश्रुतिकौ । अन्तरौ गनी ।
परमेश्वरः

—रागः
धैवतादिस्ताडितांशा नित्यपञ्चमकम्पिता ।
संपूर्णा च स्वरैस्सर्वैर्भैरवी नामतो मता ॥
सोमेश्वरः

न्यासांशग्रहधैवतयुक्ता गान्धारतारमन्द्रा च ।
समशेषस्वरभासा संपूर्णा भवति भैरवीयम् ॥
नान्यः

गान्धारतारमन्द्रा च न्याशांशग्रहधैवता ।
समाखिलस्वरा पूर्णा भव्या भवति भैरवी ॥
मतङ्गः

—उपाङ्गरागः (वीणायां वादनक्रमः)
धैवतं स्वरमास्थाय स्थायिनं तदधस्तनम् ।
गत्वा पुनर्ग्रहं प्राप्य संस्पृशेत्तत्परं स्वरम् ॥
स्थायिनश्च ततःपूर्वं स्वरं स्पृष्ट्वा पुनर्ग्रहम् ।
ततः स्वरांस्तृतीयादींस्त्रीनारोहेत्तदनन्तरम् ॥

स्वरं पञ्चममारभ्य षट्स्वरानवरुह्य च ।
पुनश्च ग्रहमुच्चार्य तृतीयं कम्पयेत् स्वरम् ॥
ततस्तुर्यं पञ्चमं च तुरीयं च स्वरं स्पृशेत् ।
तृतीयं च द्वितीयं च प्रोच्य न्यासो ग्रहे यदा ।
तदा स्याद्भैरवी तस्यां लक्ष्यते गान्धारको ग्रहः ॥

वेमः

—रागः (वंशे वादनक्रमः)

धैवतं स्थायिनं कृत्वा तत्तृतीयस्थमेत्य च ।
त्रीन्स्वरानवरुह्यास्माद्विरभ्यस्येदिदं त्रयम् ॥
स्थायिनं तत्परं चैव पुनःस्थायिनमेत्य च ।
पूर्वमुक्त्वा तमारुह्य न्यस्यते स्थायिनि स्वरे ॥
तदा तु भैरवीरागे भवेत्स्वस्थानमादिमम् ।
अभ्यास्तृतीयो वंशेषु स्थायित्वेन समीक्ष्यते ।

वेमः

—उपाङ्गरागः

उपाङ्गललिता चात्र भैरवी प्रतनिष्यते ।
नीलांशुका रक्तवर्णा शुकवाहनमाश्रिता ॥

कुम्भः

—मेलरागः

सस्वरांशग्रहन्यासा भैरवी स्या द्वैकोमला ।
रिणारोहे तु पन्यासा पञ्चमेनोभयोरपि ।
षड्जेनाथावरोहे तु सर्वदा सुखदायिनी ॥

अहोबिलः

—उपाङ्गरागः

भैरवी भैरवोपाङ्गं ग्रहांशन्यासधैवता ।
समैरन्यैस्त्वः रैर्युक्ता गीयते तारमन्द्रगा ॥
मन्द्रगा । गान्धारस्तारमन्दः ।

भट्टमाधवः

—रागः

भिन्नषड्जसमुद्भूता धांशन्यासग्रहान्विता ।
समशेषस्वरा पूर्णा गाम्विता मन्द्रतारयोः ।
देवादिप्रार्थनायां तु भैरवी विनियुज्यते ॥

जगदेकः

— मेलरागः ( नटभैरवीमेलजन्यः )

( आ ) स ग रि ग म प ध नि स .
(अव) स नि ध म प म ग रि स .

मख

—रागः

धैवतांशग्रहन्यासा भिन्नषड्जसमुद्भवा ।
गतारमन्द्रा तुल्यान्यस्वरा भवति भैरवी ॥

—प्रथमरागः

भैरवी भैरवोपाङ्गं धांशास्यात्तारमन्द्रगा ।
पूर्णा समस्वरा गेया प्रायेण करुणे रसे ॥

मोक्षः

—रागः

धांशा समग्रहा तारा मन्द्रगान्धारशोभिता ।
भैरवी भैरवोपाङ्गं समशेषस्वरा भवेत् ॥

हम्मीरः

भैरवी धद्वयामान्तेत्युपाङ्गेयं प्रकीर्तिता ।

मदनः

## भैरवीरागध्यानम्

सरोरुहस्थे स्फटिकस्य मण्डपे
　सरोरुहैः शङ्करमर्चयन्ती ।
तालप्रयोगैः प्रतिबद्धगीता
　गौरीतनुर्नारदभैरवीयम् ॥

संगीतसरणिः

स्फटिकरचितपीठे रम्यकैलासशृङ्गे
　विकचकमलपत्रैरर्चयन्ती महेशम् ।
करधृतघनवाद्या पीतवर्णा वराक्षी
　सुकविभिरियमुक्ता भैरवी भैरवश्रीः ॥

दामोदरः

सुवर्णवर्णा घनवाद्यहस्ता
　विशालनेत्रा द्विजराजवक्त्रा ।
नित्यं स्थिता स्फाटिकचारुपीठे
　कैलासशृङ्गे किल भैरवीयम् ॥

श्रीकण्ठः

**भोगकन्नडा**—मेलरागः ( खरहरप्रियामेलजन्यः )

( आ ) स रि म प ध प नि स .
( अव ) स नि ध प ध म ग रि ग स .

मख

**भोगध्वजः**—मेलरागः (झलार्णवमेलजन्यः)

( आ ) स रि ग म प ध नि स .
( अव ) स ध प म रि स .

मख

**भोगवती**—ध्रुवावृत्तम् (सप्ताक्षरम्)

आद्यचतुर्थगते अन्त्यतमं च गुरू ।
यत्र सदा चरणे सा खलु भोगवती ॥
भंभगा:
णिम्मलयम्मि जले । निर्मले जले ।

भरतः

भोगवर्धनी—भाषारागः

तारमन्द्ररक्षगान्धारा ग्रहांशन्यासधैवता।
धैवतेन निषादेन गमकैरपि भूयसी।
ककुभादुत्थिता भाषा भोगवर्धनिकाभिधा ॥

भट्टलाधवः

—रागः

धांशन्यासग्रहभृतमध्यमगान्धारपञ्चमप्राया।
अनृषगान्धाराबधिकतारमन्द्रा च पौरवीयुक्ता॥

पौण्डरीकेण तानेन महाकालाधिदेवता।
बीभत्सेन समाश्रित्य गातव्या भोगवर्धनी ॥

नान्यः

मपगैर्बहुशोन्यासग्रहांशीकृतधैवता।
आगान्धारतारमन्द्रा रिहीना भोगवधनी ॥

मतङ्गः

बहुला गमपैर्भोगवर्धनी स्याद्रिवर्जिता।
प्रयोगे सनिधोपेता कैश्चित्स्वल्पर्षभा मता ॥

मोक्षः

भोगवसन्तः—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स रि ग म ध नि स.
(अव) स नि ध म ग रि स.

मज

भोगसावेरी—मेलरागः (साल्वगमेलजन्यः)

(आ) स म प ध नि स.
(अव) स ध म ग रि स.

मज

भोगलीला—मेलरागः (सरसाङ्गीमेलजन्यः)

(आ) स रि ग प ध नि स.
(अव) स नि ध म ग रि स.

मज

भोगिनी

सुशीला लघुसम्माना मृदुर्नात्युद्धता तथा।
मध्यस्था निभृता क्षान्ता भोगिनीति हि सा स्मृता ॥

भरतः

भोगीश्वरी—मेलरागः (वाचस्पतिमेलजन्यः)

(आ) स रि ग प ध नि ध स.
(अव) स नि ध प म ग रि स.

मज

भोजदेवः

अयं स्वबिरुदनामभाजां चतुस्सप्ततिग्रन्थानां कर्ता। तेषु शृङ्गारप्रकाशः अलङ्कारग्रन्थः। सरस्वतीकण्ठाभरणनामकः व्याकरणे, काव्यालङ्कारे, सङ्गीते, च त्रयो ग्रन्था वर्तन्ते। अन्ये प्रसिद्धाः। अयं क्रै.प. ९९८—१०६२ पर्यन्तमासीदिति चरित्रज्ञा वदन्ति।

भौपालिकं—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स ग म प नि स.
(अव) स नि प म ग स रि स.

मज

भौम्यश्चार्यः

एताः षोडश।
धरणिस्पृष्टचरणद्वयव्यापारतो यतः।
एताः क्रियन्ते तस्मात्तु चार्यो भौम्य इतीरिताः ॥
तदन्याः आकाशिक्यः, देशीचार्यः, इति प्रसिद्धाः।

वेमः

भौलाङ्गी—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स ग रि ग म प ध प स.
(अव) स नि ध प म ग रि स.

मज

भौलामुखी—मेलरागः (शुभपन्तुवरालीमेलजन्यः)

(आ) स रि ग म प नि स.
(अव) स नि ध प म ग रि स.

मज

भौलिः—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग प ध स.
(अव) स नि ध प ग रि स.

मज

भ्रंशः—लक्षणम्

वाच्यमर्थं परित्यज्य दृष्टादिभिरनेकधा।
अन्यस्मिन्नेव पतनादाशु भ्रंशस्स इष्यते ॥

भरतः

भ्रमणम्—तारा

पुटान्तर्मण्डलावृत्तिस्तारयोर्भ्रमणं मतम्।

अशोकः

रसे वीरे च रौद्रे च।

कुम्भः

भ्रमरम्—करणम्

उत्क्षिप्य हस्तपादौ च ततस्तौ स्वस्तिकं नयेत्।
त्रिकं च वलितं कुर्यात्करौ चाप्युल्बणौ कृतौ ॥

एवमङ्गान्तरं चापि भ्रमश्चोर्ध्वगते गते।
भ्रमरं नाम करणं देवणार्येण भाषितम् ॥

देवणः

आक्षिप्तां यत्र कुर्वाणस्तमुद्वेष्टयन् करौ ।
जङ्घयोस्स्वस्तिकं कृत्वा कुर्वीत भ्रमरीं ततः ॥

उल्बणौ वा करावेष द्वितीयाङ्गे पुनर्विधिः ।
भ्रमरं तद्गुणैर्ज्ञेयमुद्धृतन्य परिक्रमे ॥

ज्यायनः

कुर्वन्नाक्षिप्तचार्यङ्घ्रिं पाणिमुद्वेष्ट्य चेत्ततः ।
वलितं तु त्रिकं कुर्यात्स्वस्तिकं पादसम्भवम् ॥

यत्रापराङ्गमेवं स्यादुल्बणावेकदा करौ ।
तत्तदा भ्रमरं ज्ञेयमुद्धतस्य परिक्रमे ॥
करणं भ्रमरं योज्य तदुन्मत्तगते भवेत् ।

लक्ष्मणः

—हस्तः

अङ्गुष्ठमध्ययोरूर्ध्वं स्थितयोरन्तरे स्थिता ।
तर्जनी यत्र तत्प्रोक्तं भ्रमरं वक्रितेतरम् ॥

उमा

—मण्डलम्

दक्षिणो जनितां कुर्याद्वामोऽङ्घ्रिः स्यन्दितां ततः ।
दक्षिणो भ्रमरीं कृत्वा त्रिकं च परिवर्तयेन् ॥

वामोऽङ्घ्रिः स्यन्दितां चारीं कुर्यात्तदितरः पुनः ।
शकटास्यामथो वामः कुर्याच्चाषगतिं ततः ॥

भ्रमरीं स्पन्दितां चैव क्रमेण कुरुते यदा ।
तदा भ्रमरसंज्ञं तन्मण्डलं पण्डिता जगुः ॥

वेमः

भ्रमरः—हौडुक्किकहस्तपाटः

समस्ताङ्गुलिघातेन जायते भ्रमरो यथा ।
खोणं खुखुणं खुखुणं झेंद्रः झेंद्रः णेहणेह करझें ॥

वेमः

—(अङ्गहारः

नूपुराक्षिप्तकर्कटिछिन्नसूचीनितम्बकरिहस्तोरोमण्डलकटिछिन्नानां अष्टानां करणानां क्रमात्प्रयोगे भ्रमराङ्गहारः ।

शार्ङ्गः

—हस्तः

अङ्गुष्ठमध्यमाङ्गुल्यौ श्लिष्टाग्रे तर्जनी मता ।
यत्रोर्ध्वविरले शेषे सकरो भ्रमरो भवेत् ॥

ग्रहणे दीर्घनालानां पुष्पाणामयमिष्यते ।
कर्णपूरे तालपत्रे कण्टकोद्धरणादिषु ॥

शार्ङ्गः

—वीणायां दक्षिणहस्तव्यापारः

चतस्रोऽङ्गुलयो यत्र घ्नन्त्यन्तस्तन्त्रिकां यदा ।
क्रमाच्छीघ्रं तदा प्राहुर्भ्रमरं भ्रमवर्जिताः ।

कुम्भः

—चिलहस्तपाटः

तलप्रहारो वलितसंमिश्रो वाद्यते यदि ।
स एव भ्रमरः प्रोक्तस्तद्वादक्षैरसौ यथा ॥
धें धां द्धें झेंद्रः दोंधां झेंद्रः खुखुदरि कुकुधरि धोंकिटधों किट ।

वेमः

—वादनम् (दक्षिणहस्तव्यापारः)

भ्रमरोऽन्तः क्रमाच्छीघ्रं चतुरङ्गुलिताडनम् ।

शार्ङ्गः

भ्रमरकेतनः—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) स रि ग म प नि ध नि स .
(अव) स नि ध प म ग स .

मख

भ्रमरमाला—ध्रुवावृत्तम् (सप्ताक्षरम्)

आद्ये पुनरथान्ते पादे च गुरुणी सा ।
ज्ञेया भ्रमरमाला नाम्ना प्रकथिता सा ॥

तसगाः

हंसागमणधीरं—हंसागमनधीरं ।

भरतः

भ्रमरमालिका—सप्ताक्षरवृत्तम्

तसगाः ।

भरतः

भ्रमरयुग्मकः—देशीतालः

ततो भ्रमरयुग्मके ।
षट्त्रिंशद्बिन्दवस्तत्र मध्यद्वादशके ततः ।
कृत्वा भ्रमरयुग्मानां क्रमादाद्यन्तयोर्लघुः ॥
तालान्ते च विधातव्यो लघुः संकीर्णजातिभिः ।
oooooooooooo|oooooooooooo|oooooooooooo|

लक्ष्मणः

भ्रमरावली—भाषाङ्गरागः

भाषाङ्गभ्रमरावलीनि गदिता तारस्थगान्धारिका ।
मध्ये मार्दवपेशला विरहिता धांशाल्पतायेन च ॥

अंशे च ग्रहणे तथा च विरतौ मुक्तानिषादेन सा ।
षड्जाद्यञ्चितमूर्छनागमकयुक् सारोहि वर्णान्विता ॥

कुम्भः

—मात्रावृत्तम्

विरहाङ्क

स य स स स .

भ्रमरिकामञ्जरी—मेलरागः (खरहरप्रियामेलजन्यः)
(आ) स ग म ध प नि स.
(अव) स नि ध म ध म ग रि स.

मञ्ज

भ्रमरी—ध्रुवावृत्तम्
लघुनी प्राग्गुरुणी द्वे प्रतिपादं भ्रमरी सा।
उदा—वणहत्थी—(छाया) वनहस्ती। भरतः

उत्तमोद्धतपात्राणां भ्रमरी टक्कभाषया।
तालश्चाचपुटश्चात्र पादाक्षरप्रमाणतः॥

नान्यः

टक्कभाषेति। टक्करागस्य भाषारागेषु गीयते।

—देशीचारी
पुनःप्रसार्य चरणमेकमन्यतलभ्रमात्।
भ्राम्यते चेद्द्रुतं गात्रं बहिस्सा भ्रमरी भवेत्॥

वेमः

—चारी
अतिक्रान्तावदुद्धम्य चरणं कुञ्चिताकृतिम्।
विवर्तित्र्यस्रमूरुं च द्वितीयाङ्घ्रेस्तलेन तु।
शरीरं भ्राम्यते वेगाद्यत्र सा भ्रमरी मता॥

वेमः

भ्रमरीकर्तरी—चारी
एकः पादस्समो यत्र तत्पृष्ठोर्ध्वतलोऽपरः।
भ्रमणं च द्वयोर्यत्र भ्रमरीकर्तरी मता॥

भ्रमरीमुड्डुका—चारी
यत्र पादाग्रपृष्ठाभ्यां भ्रमणं क्रियतेतराम्।
बाह्योन्नतमुखी पार्ष्णिः भ्रमरीमुड्डुका मता॥

नागमल्लः

भ्रमितः—मणिबन्धः
भ्रमणाद्भ्रमितः खड्गच्छुरिकाभ्रमणादिषु।

विप्रदासः

भ्रामणे भ्रमितः प्रोक्तः खड्गादेश्चारणे भवेत्।

सोमेश्वरः

भ्रान्तः—श्वासः
भ्रान्तस्स चान्तर्भ्रमणात्प्रथमे प्रियसङ्गमे।

कुम्भः

भ्रान्तपादाञ्चितम्—उत्प्लुतिकरणम्
दक्षिणं चरणं यत्र भ्रामयित्वा ततःपरम्।
तदीयतलभागेन वामस्य चरणस्य तु॥
जङ्घामध्यमवष्टभ्य विधायाञ्चितकं तथा।
ततस्स्कन्धद्वयेनोर्वीं अधिष्ठाय विवृत्य च।
पादावुल्लालयेद्यत्र भ्रान्तपादाञ्चितं तु तत्॥

वेमः

भ्रान्ता—दृष्टिः
चलत्पुटा चलत्तारा विवृता मध्यभागतः।
आवेशे संभ्रमे भ्रान्तौ विभ्रान्ता दृष्टिरीरिता॥

सोमेश्वरः

या नैकत्र स्थितिं याति विक्षिप्तेवावलोकने।
विस्तीर्णोत्फुल्लतारा दृक् सा विभ्रान्ताभिधा भवेत्।
विभ्रमावेगयोरेषा संभ्रमेऽपि प्रवर्तते॥

विप्रदासः

भ्रान्तिः
एवमेवेदमिति सा वस्तुभावविरोधिनी।
व्यभिचारनिमित्तोऽर्थो भ्रान्तिस्सत्यपि वस्तुनि॥

भावविवेकः

—सन्ध्यन्तरम्
भ्रान्तिर्विपर्ययज्ञानं प्रसङ्गस्याविनिश्चयात्।
यथा—वेण्यां भानुमतीस्वप्नस्यानिश्चयाद्दुर्योधनस्य विपरीतज्ञानं भ्रान्तिः। सिंगः

भ्रान्तिर्भ्रमः। यथा—वेण्यां युधिष्ठिरस्य भीम एव दुर्योधनबुद्धिः। सागरः

भ्रामितम्—जङ्घा
भ्रामितं मण्डलभ्रान्त्या वाद्ये डमरुकाभिधे।

ज्यायनः

भ्रुकुटी—भ्रूः
भ्रुवोरत्यर्थमुत्क्षेपाद्भ्रुकुटी सा भवेत्क्रुधि।

वेमः

सूक्ष्मरन्ध्रविलोके च सूर्यविद्युन्निरीक्षणे।
अतिक्रोधे प्रयोक्तव्ये भ्रुकुटीसंज्ञिते भ्रुवौ॥

सोमेश्वरः

भ्रूः
भ्रूभेदानधुना ब्रूमस्तत्रा या सहजा ततः।
उत्क्षिप्ता रेचिता चैव पतिता कुञ्चिता तथा।
भ्रुकुटी चतुरा चेति सप्तधा भ्रूरुदारिता॥

वेमः

उत्क्षिप्ता पतिता चैव भ्रुकुट्या सहिता तथा।
चतुरा कुञ्चनोपेता स्फुरिता सहजाऽपि च॥

सोमेश्वरः

म

म—स्वरः

म—मध्यमस्वरः

मकरः—हस्तः

उपर्युपरि विन्यस्तौ यत्रान्योन्यमधोमुखौ ।
ऊर्ध्वाङ्गुष्ठौ पताकाख्यौ करौ स मकरः करः ॥

स नक्रमकरादीनां क्रव्याद्द्वीपिनामपि ।
सिंहादीनामभिनये नदीपूरस्य चेष्यते ॥

शार्ङ्गः

परस्परोपरिन्यस्तावूर्ध्वाङ्गुष्ठावधस्तलौ ।
पताकौ यत्र स करो मकरः परिकीर्तितः ॥
क्रमात्पार्श्वद्वये तिर्यक् स्फालं स्फालं प्रसारितः ।
स करो मत्स्यगमनाभिनये विनियुज्यते ॥
मृगेन्द्रव्याघ्रमकरनक्रादीनां निरूपणे ।
तत्तन्नृत्तानुसारेण विवृताग्रः प्रयुज्यते ॥
वक्षोदेशात्पुरो गच्छन् विप्रकीर्णचलाङ्गुलिः ।
सरित्प्रवाहाभिनये स करो विनियुज्यते ॥

वेमः

मकरकशीर्षा—ध्रुवावृत्तम्

गुरुयुगमन्ते यदिपरमस्याः इह कथिता सा मकरकशीर्षा ।
(उदा) इह सिसिरम्मि (छाया) इह शिशिरे ।

भरतः

मकरन्दः—गीतालङ्कारः (अठतालभेदः)

राजतालाभिधाने तु लघुर्द्रुतौ लघुस्ततः ।
अनेन तु समायुक्तो मकरन्दोऽट्टतालकः ॥

सङ्गीतसारः

—देशीतालः

मकरन्दाह्वये ताले द्रुतौ द्वौ लत्रयं गुरुः ।
० ० । । । ऽ

वेमः

दौलौलो मकरन्दः ।
० ० । । ।

शार्ङ्गः

मकरन्दे द्रुतद्वन्द्वं लत्रयं च गुरुस्ततः ।
० ० । । । ऽ

नन्दी

मकरन्दोडुपम्—देशीनृत्तम्

दो लैलो मकरन्दकः ।
तालेनानेन विहितं मकरन्दोडुपं बुधैः ॥

वेदः

मकरवर्तना

करो मकरनामा चेत्पुरतः पार्श्वयोस्तथा ।
व्यावर्तितो बहिश्चान्तस्तदा मकरवर्तना ॥

अशोकः

मकरशीला—स्त्री

स्थूलशीर्षाञ्चितग्रीवा दारितास्या महास्वना ।
ज्ञेया मकरसत्त्वा तु क्रूरा मत्स्यगुणैर्युता ॥

भरतः

मकरहस्तः

पूर्वोक्ताञ्जलिहस्ते तु तत्राङ्गुष्ठौ कनिष्ठिके ।
श्लिष्टे प्रसारिते चापि क्रमाद्झषकरो भवेत् ॥
कोहलस्य मते प्रोक्तो मकारार्थे नियुज्यते ।

शृङ्गारः

मकरिका—शिरोभूषणम्

मकरपत्रं नाम ।

मखाभिनयः

नतलाङ्गूलहस्तेन कर्तव्यः ।

महाराष्ट्रे

मखाहस्तः—(शारावाकृतिर्मखा)

काङ्गूले हस्तविधृतस्ततो लाङ्गूलमिष्यते ।
मखार्थे भार्गवेणासौ कल्पितो बहुधीमता ॥

शृङ्गारः

मङ्गलम्—रञ्जनगुणः

शुभवाद्यैर्युतं गीतं शुद्धपञ्चमनिर्मितम् ।
विवाहाद्युत्सवे गेयं मङ्गलं महिलाप्रियम् ॥

सोमेश्वरः

शुद्धपञ्चममिति ग्रामरागभेद उच्यते ।

मङ्गलः—प्रबन्धः

लक्ष्यते मङ्गलश्चाथ मङ्गलच्छन्दसा युतः ।
विलम्बितलयैराढ्यमुत्सवेषु च गीयते ॥

हरिपालः

मङ्गलं घोटरागे वा कैशिक्यां मङ्गलैः पदैः ।
विलम्बितलये गेयं मङ्गलच्छन्दसाऽथवा ।
भगणाः पञ्च विज्ञेया मङ्गलाख्ये पदं प्रति ॥

श्रीकण्ठः

—देशीतालः

मङ्गलो भेन । ऽ । ।

कुम्भः

—वर्णालङ्कारः

नागपाशो द्विद्विरुक्तो द्विस्वरश्रान्तिमे यदि ।
गाने तदा मङ्गलोऽयं मतङ्गमुनिसम्मतम् ॥

यथा— सरिगमसरिगमसरि सरिगम रिगमगरिगमपरिगरि-गमप इत्यादि । अवरोहणमप्यूह्यम् । उभावपि मङ्गल एव । तालानुगतत्वेनालङ्कारत्वम् ।

संगीतसरणिः

—गीतालङ्कारः (मठ्यभेदः)

गुरुर्लघुद्वयं यत्र भृङ्गतालस्स कथ्यते ।
मङ्गलो मट्यकस्तेन रसे चाद्भुतसंज्ञके ॥

संगीतसारः

मङ्गलकोशः—मेलरागः

धैवतोद्ग्राहधांशान्तो गौरीमेलसमुद्भवः ।
रागो मङ्गलकोशाख्यो धनी यत्र समन्वितौ ॥
सर्वदा गेयः । अहोबिलः

मङ्गलकौशिकः—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग म स म ग म प म ग म.
(अव) स नि ध प म ग रि स.

मज

मङ्गलकौशिकारागध्यानम्

अस्या मङ्गलकैशिकी मङ्गलकौशिकीति च नामनी दृश्येते ।

कुसुमाञ्जलिना सम्यक् भसितां हरिसन्निधौ ।
नीलाङ्गीं श्वेतचेलां तां भजे मङ्गलकौशिकाम् ॥

रागसागरः

मङ्गलाचारः—प्रबन्धः

रेचितो यस्तु गद्येन पद्येनापि द्वयेन वा ।
स स्वरो मङ्गलाचारो निस्सारूः कैशिकीयुतः ॥

श्रीकण्ठः

सुमङ्गल पदोपेतैः शुभैर्वाक्यैर्मनोरमैः ।
कैशिक्या वोट्टरागेण गेयं मङ्गलगीतकम् ॥

सोमेश्वरः

चतुष्षष्ट्या विरचितो मध्ये मध्ये स्वराश्रितः ।
झंपातालेन संयुक्तः कैशिकीरागभूषितः ॥
एवं स्यान्मङ्गलाचारः । हरिपालः

मङ्गलाभिनयः—देशीतालः

मङ्गलाभिनये गोलौ निःशब्दं च गुरुद्वयम् ।
ऽ॥ऽऽ वेमः

मञ्जरी—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म ध नि स.
(अव) स नि ध म ग रि स.

मज

मञ्जीरकः—तालवाद्यम्

विस्तारतः स्याच्चतुरङ्गुलोऽत्र मञ्जीरकस्तालसमानसंस्थः ।
कुरङ्गशृङ्गोचितकोणकेन वामेन हस्तेन च वाद्यतेऽसौ ॥

कुम्भः

मञ्जीरशिञ्जितम्—पादमणिः

तलेनाङ्गुलिपृष्ठेन पार्ष्णिना च क्रमान्महीम् ।
एकोऽङ्घ्रिस्ताडयेदन्यं पादौ घातद्वयान्तरे ॥
तलेन ताडयेद्भूमिं निजं पार्श्वं व्रजेद्यदि ।
राजवेश्याभुजङ्गेन प्रोक्तं मञ्जीरशिञ्जितम् ॥

वेमः

मञ्जुकल्याणी—रागः (सङ्कीर्णः)

वारट्याख्या नाटकर्णाटकेभ्यः
संभूतेयं मञ्जुकल्याणिकाख्या ॥

नारायणः

मञ्जुघोषा—मेलरागः

श्रीरागमेलसंभूता गस्वरेण विवर्जिता ।
मञ्जुघोषा धपूर्वा स्यादारोहे त्यक्तनिस्वरा ॥
सायं गेया । अहोबिलः

मञ्जुलः—देशीतालः

मञ्जुलः पूर्वलो गुरुः ।
।ऽ लक्ष्मणः

मठः—देशीतालः

मठे लघुद्वयं गश्च निःशब्दं लचतुष्टयम् ।
।।ऽ।।।। वेमः

स्याच्चतुर्लघु निःशब्दम् ।
।।ऽ+

यद्वा भाद्भावशब्दकौ ।
ऽ।।ऽ+ शार्ङ्गः

मड्डतालः—देशीतालः

गुरुर्लघु गुरुश्चात्र व्यवहारे तु दृश्यते ।
ऽ।ऽ सोमराजः

मट्टिका—देशीतालः

मट्टिकायां विधातव्या गुरुबिन्दुप्लुताः क्रमात् ।
ऽ००ऽ́
सासारी गामापा जग

**मठ्यः—ध्रुवालङ्कारः**

मठ्यतालनिबद्धो यः स मठ्य इति कीर्तितः।
मठ्यताले ध्रुवस्त्वादावक्षरद्वयसम्मितः ॥

ततो लघू द्वौ विज्ञेयौ चतुरक्षरसम्मितौ ।
आहत्य मठ्यतालोऽयं दशाक्षरमितः स्मृतः ॥

सरिगरिसरिसरिगम, रिगमगरिसरिगमप । वेङ्कटमखी

**मट्ठ्यः—ध्रुवतालः**

मट्ठ्यताले ध्रुवस्त्वादौ अक्षरद्वयसम्मितः ।
ततो लघू द्वौ विज्ञेयौ चतुरक्षरसम्मितौ ।
आहत्य मट्ठ्यतालोऽयं दशाक्षरमितः स्मृतः ॥

वेङ्कटमखी

**मट्ठ्यकः**

मट्ठ्यकः, मण्ठकः, मट्ठ्यः, मठ्ठः, मण्ठः इत्यादिभीरूपैरयं शब्दो दृश्यते ।

**मणिकुम्भकः—देशीतालः**

तगणो दत्रयं गश्च नद्वयं च गुरुर्लघुः ।
प्लुतश्चेति क्रमाद्यत्र स ताले मणिकुम्भकः ॥

20½ मात्राः तालप्रस्तारः

**मणिकुल्या—श्रव्यकाव्यम**

मणिकुल्यायां जलमिव न लक्ष्यते यत्र पूर्वतो वस्तु।
पश्चात्प्रकाशते सा मणिकुल्या मत्स्यहसितादि ॥

भोजः

**—नृत्तरूपकम्**

मणिकुल्यायां जलमिव न लक्ष्यते यत्र पूर्वतो वस्तु ।
पश्चात्प्रकाश्यते या सा मणिकुल्यापि मल्लिका ज्ञेया ॥

शिष्टं मत्तल्लिकाशब्दे द्रष्टव्यम् । शारदातनयः

**मणिगणनिकरः—ध्रुवावृत्तम्**

यदि खलु चरणविधौ, लघुवसुगणकमिदम् ।
भवति हि खलु बृहती , मणिगणनिकरकृता ॥

भरतः

अष्टौ द्रुता गुरुश्चान्ते त्र्यश्रजा मणिमालिका।
नायिकासु प्रयोक्तव्या रसरागौ च पूर्ववत् ॥

उडुगणकुसुमवती। नान्यः

पूर्ववदिति । अविचालितावत् ।
शृङ्गारो रसः । मालवकैशिको रागः॥

**मणिबन्धः**

आकुञ्चितो निकुञ्चश्च भ्रमितश्च समस्तथा ।
चतुर्धा मणिबन्धोऽथ नामतः कथितो मया ॥

सोमेश्वरः

निकुञ्चाकुञ्चितौ स्यातां चलश्च भ्रमितस्समः ।
एवं पञ्चविधो धीरैर्मणिबन्धः प्रकीर्तितः ॥

अशोकः

**मणिबन्धगतागतम्—चालकः**

एकस्य मणिबन्धे तु विलुठन्नपरः करः।
अन्तर्बहिर्मुसलकैः स्थायं स्थायं गतागतम् ।
(कथितं वेमभूपेन) मणिबन्धगतागतम् ॥

वेमः

**मणिबन्धासिकर्षणम्—चालकः**

द्विगुणालुठितावंसपर्यन्तेऽञ्चितकूर्परौ ।
करौ ततः परं कृत्वा कूर्परस्वस्तिकान्वितौ ॥

तथैव लोलयित्वांसौ करं तत्रोपरि स्थितम् ।
विधाय मुष्टिरूपेण त्वरया तन्निवेशयेत् ॥

करेऽन्यस्मिन्विलुठति त्र्यस्रभावमुपेयुषि ।
भ्रमयेन्मण्डलावृत्या पार्श्वयोरपरं करम् ॥

तथैव मुष्टिहस्तस्य संक्षेपो प्रविलासितः ।
क्रियते चेत्तदाचष्ट मणिबन्धासिकर्षणम् ॥

वेमः

**मणिमञ्जरी—मेलरागः (खरहरप्रियामेलजन्यः)**

(आ) स रि ग म प ध नि स.
(अव) स नि ध प म प ध प म रि ग म ग स.

मञ्ज

**मणिमण्डनम्—कर्णभूषणम्**

एवं बहिष्टसु यन्मध्ये वज्रैश्च भूषितम्।
मध्ये माणिक्यसंयुक्तं मणिमण्डनमुच्यते॥

सोमेश्वरः

**मणिरङ्गु—मेलरागः (खरहरप्रियामेलजन्यः)**

(आ) स रि म प नि स.
(अव) स नि प म ग रि स.

मञ्ज

**मणिवान्—मेलरागः (ऋषभप्रियामेलजन्यः)**

(आ) स रि ग म प ध नि स.
(अव) स नि प ध म ग रि स.

मञ्ज

**मण्ठः**—प्रबन्धः

विलम्बितो द्रुतश्चेति तथैवातिविलम्बितः ।
त्रिधा भवेदयं मण्ठो मण्ठतालेन गीयते ॥
नेतृनामाङ्कितामोगो यो भवेत्सविलम्बितः ।
द्रुतो द्रुतेन तालेन गेयो मण्ठश्च नामनि ॥

हरिपालः

**मण्ठकः**— गीतालङ्कारः

उद्ग्राहो ध्रुवपदः स्यादाभोगस्तदनन्तरम्
नियमस्त्रिविधो ज्ञेयो मण्ठकस्य विचक्षणैः ॥
जयप्रियः कलापश्च कमलस्सुन्दरस्तथा ।
वल्लभो मङ्गलश्चेति षडेते मठकाः स्मृताः ॥

संगीतसारः

**मण्ठिका**—देशीतालः

मण्ठिका लौ द्रुतद्वन्द्वं । ।।०० मदनः

**मण्डनः**—प्रबन्धः

अलङ्कारैर्निबद्धो यः प्रसन्नादिपुरस्सरैः ।
उपमाभिश्च बह्वीभिः मण्डितो मण्डनो भवेत् ॥

हरिपालः

काव्यजैर्गीतसंभूतैर्योऽलङ्कारैर्विरच्यते ।
अलङ्कारभवो यस्मात् तस्मात्प्रोक्तस्तु मण्डनः ॥
गीतालङ्कारमार्गेण गीतमप्युपलक्षितम् ।
उपमाद्यैरलङ्कारैर्गीते न्यस्य पदावलिम् ।
यत्र गायति गीतज्ञः स भवेन्मण्डनाभिधः ॥

सोमेश्वरः

**मण्डलम्**

त्रिभिश्चतुर्भिर्वा खण्डैर्मण्डलं पण्डितैस्स्मृतम् ।

वेमः

**—स्थानकम्**

एकतालान्तरौ पादौ त्र्यश्रपक्षस्थितौ भुवि ।
ऊरुनिषण्णौ गगने सार्धतालद्वयान्तरे ॥
धरण्याः कटितुल्यं च स्यातां द्वे जानुनी अपि ।
यत्रैतन्मण्डलं नाम स्थानं वासवदैवतम् ॥
चतुस्तालान्तरावत्र चरणौ केचिदूचिरे ।
प्रयोगो वज्रचापादेः तथा वारणवाहने ।
तार्क्ष्यादिवीक्षणे चास्य विनियोगं विदुर्बुधाः ॥

विप्रदासः

**मण्डलगतिः**—बाहुः

सर्वतो भ्रमणाद्यस्यात् स मण्डलगतिर्भुजः ।
भ्रमणे तु गदाखड्गाद्यायुधानां प्रकीर्तिता ॥ अशोकः

**मण्डलभ्रमरी**—तिरिपनृत्ताङ्गम्

चतुरश्रे स्थानके च प्रसृतौ च पताककौ ।
पार्श्वयोर्वामशिखरं हृदि दक्षं पुरः पुनः ॥
त्रिपताकं करं कृत्वा दक्षमूर्ध्वकटीसमम् ।
पादं प्रसारयेदग्रे दक्षिणावर्ततो भ्रमेत् ॥
मण्डलभ्रमरी सा स्याद्गदिता हनुमन्मते ।

वेदः

**मण्डलस्वस्तिकम्**—करणम्

स्वस्तिकौ तु करौ कृत्वा प्राङ्मुखोर्ध्वतलौ समौ ।
तथा च मण्डलं स्थानं मण्डलस्वस्तिकं तु तत् ॥

भरतः

चतुरस्रौ करौ कृत्वा विदधद्विच्यवां ततः ।
उद्वेष्टितक्रियापूर्वमूर्ध्वमण्डलिनौ करौ ॥
विधाय स्वस्तिकौ कुर्यादत्र स्थानं च मण्डलम् ।
मण्डलस्वस्तिकं तत्स्यात्प्रसिद्धार्थावलोकने ॥

शार्ङ्गदेवः

चारीं तु विच्यवां कृत्वा चतुरस्रौ करौ ततः ।
उद्वेष्टितक्रियापूर्वमूर्ध्वमण्डलिहस्तकौ ॥
प्रयुज्य स्वस्तिकौ यत्र कुर्यात्स्थानं तु मण्डलम् ।
मण्डलस्वस्तिकमिदं प्रसिद्धार्थनिरीक्षणे ॥

अशोकः

विलासपरिसंख्याने प्रत्यक्षेऽर्थे भवेदिदम् ।

ज्यायनः

**मण्डला**—श्रुतिः

षड्जस्य द्वितीया श्रुतिः । नान्यः

**मण्डलाग्रम्**—चालकः

एकस्मिन् लुठिते हस्ते पूर्वोक्तस्थानगामिनी ।
अन्यः करो मुष्टिरूपे विलुठ ऊर्ध्वमार्जवात् ॥
ततस्तथैव पर्यायात्पार्श्वयोश्च गतागतः ।
किञ्चित्पार्श्वात्समानीतः पुरतोऽपि प्रसारितः ।
एवं पाण्योस्तु पर्यायात्क्रिया चेन्मण्डलाग्रकाम् ॥

वेमः

**मण्डलाभरणम्**—चालकः

पर्यायात्पार्श्वयोर्यत्राभ्यन्तराविद्धकर्मणि ।
प्रातिलोम्यानुलोम्याभ्यां आलोल्येते भुजौ क्रमात् ।
मण्डलाभरणं प्राह तत्सञ्ज्ञामधनञ्जयः ॥

वेमः

## मण्डलानि

चमत्काराय चारीणामानुपूर्व्येण या क्रिया।
तन्मण्डलमिति प्रोक्तमखण्डमतिशालिभिः॥
भौममाकाशिकं चेति तत्पुनर्द्विविधं भवेत्।
प्राचुर्याद्भौमचारीणां भौममण्डलमुच्यते॥
आकाशचारी बाहुल्यादाकाशिकमिति स्मृतम्।
भौमाकाशिकभेदानामुद्देशोऽत्र विधीयते॥
भ्रमरं च तदावर्तमास्कन्दितमथाड्डितम्।
समोत्सरितमत्यर्थमेलकाक्रीडितं तथा॥
शकटास्यं पिष्टकुट्टं ततश्चाषगताभिधम्।
भौमानि मण्डलानीति दशोद्दिष्टान्यनुक्रमात्॥
अतिक्रान्तं दण्डपादं क्रान्तं च विहृतं तथा।
सूचीविद्धं वामविद्धं तदा ललितसञ्चरम्॥
विचित्रं ललितं चैव ततश्चालातमित्यपि।
एतान्याकाशिकानि स्युः मण्डलानि दश क्रमात्॥

अशोकः

भौमाकाशिकचारीणां प्राचुर्यान्मण्डलान्यपि।
भौमान्याकाशिकानीति व्यपदेशं प्रपेदिरे॥
एतेषां विनियोगश्च विज्ञेयः शस्त्रमोक्षणे।
नभोभवानां प्राधान्यं ज्ञेयं युद्धपरिक्रमे॥
चारीवाम्लातचरणवक्षश्चारी विवक्षया।
चारीणां न्यूनताधिक्यं न दूषयति मण्डलम्॥

विप्रदासः

मिथो योजनयोग्यानां चारीणां निचयेन तु।
अन्यान्यप्येवमूह्यन्तां मण्डलान्यनया दिशा॥
यत्सजातीयचारीणां समुदायेन जायते।
तन्मण्डलं समं प्रोक्तमाचार्यैर्नृत्तवेदिभिः॥
न्यायप्रचारयुक्तानि मण्डलान्यखिलानि च।
विधिनैव प्रयुञ्जीत तानि नृत्ते यथोचितैः।
शोभान्वितैर्नृत्तहस्तैरन्वितानि प्रयोजयेत्॥

वेमः

## मण्डिभ्रमरी—तिरिपनृत्ताङ्गम्

चतुरश्रे मध्यमं चेत्पताकौ प्रसृतौ यदि।
पार्श्वदेशे शिरस्यूर्ध्वमलपद्मो विधीयते॥
दक्षिणः शिखरः स्वान्ते दक्षिणं गुल्फमेव तु।
वामजानुशिरस्यूर्ध्वं स्थाप्य दक्षिणतो भ्रमेत्॥
मण्डिभ्रमरिका प्रोक्ता तण्डुना कोहलेन च।

स्वान्ते। हृदये।

वेदः

## मण्डिका

सव्यापसव्यतो यत्र वामं तदितरं तथा।
जानुस्तत्वरमापात्य भुजङ्गी स्थापयेद्यदा।
मण्डिका सा तदा प्रोक्ता शाकमल्लेन भूभुजा॥

अशोकः

सव्ये तदितरे भागे वामे वामेतरं यदि।
आपातयेद्द्रुतं जानु सवेगं चरणौ भुवि।
विदधाति तदा प्रोक्ता मण्डिका नृत्यकोविदैः॥

कुम्भः

## मण्डीढक्का

षोडशाङ्गुलदीर्घा स्यान्मुखे चाष्टाङ्गुलान्तरा।
मध्यप्रदेशे कर्तव्या षोडशाङ्गुलवेष्टना॥
शेषं लक्ष्म हुडुक्कावत्कच्छार्गलविवर्जितम्।
पाटाक्षरं हुडुक्कावन्मण्डीढक्कासु कल्पितम्॥
मण्डलीमध्यरज्जुं च वामहस्तेन पीडयेत्।
सव्यजानुगतं वक्त्रं सव्यहस्तेन वादयेत्॥
शक्तिदैवतपूजायां चर्यागानविधौ तदा।
वादनीया प्रयत्नेन मण्डीढक्का विचक्षणैः॥

सोमेश्वरः

## मण्डूकी—गतिः

कराभ्यां शिखरं धृत्वा किञ्चित्सिंहीसमा गतिः।
मण्डूकगतिरित्येषा प्रसिद्धा भरतागमे॥

नाट्यदर्पणे

## मतङ्गकिन्नरी

तिस्रः किन्नरवीणास्स्युर्बृहद्देशीसमाश्रिताः।
बृहती मध्यमा लघ्वीत्यथासां लक्षणं ब्रुवे॥
अत्राङ्गुलं निस्तुषैस्स्यात्पंक्तिस्तिर्यग्यवोदरैः।
पञ्चाशदङ्गुलो दैर्घ्ये परिणाहे षडङ्गुलः॥
वैणवः खादिरो वाऽथ रक्तचन्दनजोऽथवा।
कांस्यजो वा भवेद्दण्डो ऋजुः श्लक्ष्णो व्रणोज्झितः॥
दण्डमानं दधद्गर्भे सुषिरं पृथुलं समम्।
शाकजः ककुभस्तस्य दण्डो दैर्घ्ये षडङ्गुलः॥
ककुभस्य शिरस्तस्य दीर्घे स्याच्चतुरङ्गुलम्।
चतुरङ्गुलविस्तारमुच्छ्राये द्व्यङ्गुलम्मतम्॥
ककुभस्य तु दण्डं तु वीणादण्डान्तरे क्रियेत्।
परिशेषश्च दण्डान्तः तावान् याति विशेषिते॥

ककुभस्य शिरोमध्यवीणा दण्डान्तमध्यतः।
तन्त्री भागस्तुरीयांशोऽधिकस्त्र्यङ्गुलको भवेत्॥

विदध्यात्काकुभे मूर्ध्नि श्लक्ष्णां कूर्मवदुन्नताम्।
परितोऽर्धाङ्गुलन्यूनां पत्रिकामायसीं समाम्॥

नादातिशयसिद्ध्यर्थं वीणावादनकोविदः॥

सार्धाङ्गुलद्वयं त्यक्त्वा वीणादण्डस्य मूर्धतः॥

अर्धाङ्गुलपरीणाहं विदध्यात् सुषिरं ततः।
अधस्तात्तिर्यगपरं रन्ध्रं सोऽभयतो मुखम्॥

अधस्तादूर्ध्वरंध्रस्य सार्धत्र्यङ्गुलके भवेत्।
मेरुः सगलरन्ध्रेण कर्तर्या वान्वितो भवेत्॥

मेरुरंध्रस्य वीणाया दण्डस्य च तथान्तरम्॥

द्व्यङ्गुलं सयवं ज्ञेयं मेरुरङ्गुलमुच्छ्रितः।
सार्धाङ्गुल्यान्तरे शङ्कुः स्थिरो मेरोः पुरो भवेत्॥

अत्र तिर्यग्भवेद्रन्ध्रं चलशङ्कुवदायतम्।
सिंधूरेणाथवा वस्त्रकज्जलेनाथवा युतम्॥

श्लक्ष्मेष्टकायाश्चूर्णेन मर्दयन्मदनं घनम्।
विमिश्रास्तेन कर्तव्यास्सारिकास्त्युश्चतुर्दश॥

अष्टादशाथवा दण्डपृष्ठे न्यस्या यथायथम्।
ताश्चतस्रो निवेश्यास्तु तारसप्तकसिद्धये॥

मंद्रसप्तकसिद्ध्यर्थं सारीद्वन्द्वं परे जगुः।
एवं त्रिस्थानसंशुद्धरागव्याप्तिर्भवेदिह॥

आमन्द्रसप्तकान्मध्यसप्तकावधि युक्तितः।
सार्धाङ्गुलपरीणाहास्तथा सार्धाङ्गुलायताः॥

गृध्रवक्षोऽस्थिनलिका यद्वा,तच्चरणास्थिजा।
आयस्यः कांस्यमय्यो वा नळिकास्सारिका मताः॥

मौलोर्ध्वतन्त्रिकापार्श्वतन्त्र्यौ द्वे षड्जगे यदि।
ह्रस्वा पञ्चमगा चेत्स्यात् षड्जग्रामो भवेदयम्॥

ऊर्ध्वतन्त्री यदि भवेन्मध्यमस्वरयोगिनी।
तत्पार्श्वे तन्त्रिकाद्वन्द्वं षड्जमध्यमगं यदि॥

मध्यमग्रामगा ज्ञेया तदेयं किंनरी बुधैः।
येन येन स्वरेणैवं योगस्तन्त्र्याः प्रतन्यते॥

सारणाभेदमाश्रित्य सा स्यात्तत्तत्स्वराह्वया।
तां तां चामूर्छनामस्यामभ्यसेत्तद्विदग्रणीः॥

स्वस्थाने प्रकृतीकृत्य षड्जस्वश्रुतिपेशलम्।
स्वरप्रबन्धना स्थाप्या दण्डपृष्ठेऽथ सारिकाः।
तास्विष्टरागं निपुणमालपेत्स्वच्छमानसः॥ कुम्भः

**मतङ्गः**

बृहद्देशीकर्ता। क्रै. प. ६०० वर्षकाले आसीदिति केवलमूह्यवर्तते। सर्वैरपि सङ्गीतशास्त्रकर्तृभिः प्रामाणत्वेनायमादृतः। विषयपरामर्शे अस्य कौशलं सर्वानतिरिच्यते।

**मतिः**—चिन्ताभिनयः

अनेकशास्त्रपठनादर्थनिर्धारणं मतिः।
हृदये मुकुलं बध्वा तिर्यक्स्थश्चतुरः करः॥

तस्मिन् हंसास्यचलनान्मुखस्थाने तथैव च।
हंसास्यं श्रोत्रभागे तु सूची स्यान्मतिरूपणे॥

विनायकः

—व्यभिचारिभावः

नानाशास्त्रविचिन्तनोहापोहादयो विभावाः। शिष्योपदेशार्थविकल्पनसंशयच्छेदादयोऽनुभावाः॥

भरतः

मतिस्तत्वगता बुद्धिरदुष्टा शिष्टसम्मता।
सापि निष्पद्यते लोके शास्त्रादेस्तत्त्वसंपदा।
तत्राभान्ति गुणोत्कर्षसदसच्चिन्तनादयः॥
अनुभावाः। सर्वेश्वरः

**मत्तकोकिलः**—मेलरागः (हरिकम्भोजीमेलजन्यः)
(आ) स रि प ध नि ध स.
(अव) स ध नि ध प रि स.

मञ्ज

**मत्तकोकिलावीणा**

मत्तकोकिलवीणाथ स्वरमण्डलसंज्ञिका।
लोकशास्त्रानुसारेण लक्ष्यतेऽत्र समासतः॥

सार्धहस्तमितामत्र प्रथमां परिकल्पयेत्।
एतश्चास्य तृतीयांशन्यूना दैर्घ्ये तृतीयका॥

अथान्यापदिकास्तिस्रा आयामेष्टादशाङ्गुला।
समाना दोषरहिता कार्या पञ्चाङ्गुलोच्छ्रया॥

तत्राद्या सार्धहस्ता स्याद्द्वितीया हस्तमात्रिका।
दक्षिणोत्तरमूलाग्रा विन्यसौ चैतयोर्द्वयोः॥

मध्येन्यस्यातु पट्टिका ..................।
दशाङ्गुलानि संत्यज्य पूर्वापरमुखीतु सा॥

दीर्घा तुर्या पट्टिका स्यादन्तरा च लघीयसी।
ईशानाग्रयाग्रयोस्स्यादन्तरं यदिह द्वयोः॥

तत्राल्पपट्टिका कार्या पूर्वपट्टिकया समा।
उत्सेधपिण्डयोरेकां परे त्वीशान कोणगाम्॥

वदन्ति पट्टिकामस्याः पार्श्वे स्यात्पट्टिकान्तरम् ।
तदन्तरेऽङ्गुलद्वंद्वात्तिर्यगीशानकोणगाम् ॥

एवं यत्न यथा श्लक्ष्णा समं स्यात् श्लिष्टसंधिकम् ।
संयोज्यानि तथाकाष्ठान्यस्य भागं दशाङ्गुलम् ॥

चर्मणा मुद्रयेच्छेपं यन्त्रमाच्छादयेद्दृढम् ।
श्लक्ष्णकाष्ठेन यन्त्रस्य या तिर्यक्पट्टिका स्थिता ॥

दिश्युत्तरस्यां या चास्याः पट्टिकापार्श्वतो गता ।
तस्या रंध्राणि कुर्वीत विद्वान् द्वाविंशतिं तथा ॥

यत्र च स्यादधोरन्ध्रपंक्तिमध्यगतं तथा ।
ऊर्ध्वपंक्तिस्थरन्ध्रं स्यादेकस्यामेव वा बुधः ॥

कुर्यात् द्वाविंशतिं रन्ध्रान्येषु रन्ध्रेष्वनुक्रमात् ।
हेमादिधातुजान्वापि गजदन्तमयानथ ।
विचित्रान्दारवान्वापि कुर्याच्छंकून् यदृच्छया ॥

द्वयोः पट्टिकयोर्युक्ता कचिद् द्वे अपि पट्टिके ।
स्यातामीशानकोणान्ते तत्र दक्षिणतः स्थिता ॥

पट्टिकाद्वयमूलस्पृक् पट्टिकाया बहिः पुनः ।
अन्या भागेऽङ्गुलमितं दण्डं कुर्याद्विचक्षणः ॥

विस्तारे च तथायामे पट्टिकासंमितं सुधीः ।
तस्मिन् दण्डे प्रकुर्वीत रन्ध्रद्वाविंशतिं क्रमात् ॥

सप्त षड्वा पत्रिकास्युरत्र यन्त्रानुसारतः ।
रन्ध्रमानं यवार्धं स्यात्तेषां प्रथमसप्तके ॥

रन्ध्राणां कल्पयेद्धीमान् सार्धद्वियवमंतरम् ।
द्वितिये त्रियवं सार्धं त्रियवं तु तृतीयके ॥

अथवानुगुणं रागनिष्पत्तेरन्तरं मतम् ।
समा श्लक्ष्णा घना नातिस्थूलसूक्ष्मदृढा अपि ॥

पट्टसूत्रमयीस्तन्त्रीर्विद्वानेषु प्रकल्पयेत् ।
तासां प्रान्तान्तरं धीमान् बध्नीयाच्छङ्कुषु क्रमात् ॥

तत्र या उत्तरास्सप्त तन्त्र्यस्तारास्स्मृतास्तु ताः ।
मध्यस्थानगता मध्या मन्द्रास्तासामधस्थिताः ॥

द्वाविंशतितमा यातु सर्वाधस्थितया स्थिता ।
सनादरन्ध्रपूर्त्यर्थं ख्यातानुरणनात्मिका ॥

वाद्यादिवादनं चास्यामेकतन्त्रीवदीरितम् ।
निर्दोषशाकजं वाथ श्रीपर्णीदारुसंभवम् ॥

केश्चिदेतादृशं यन्त्रं काष्ठेनैकेन वर्ण्यते ।
अष्टादशाङ्गुलं दैर्घ्ये त्वायामे सार्धहस्तकम् ॥

सुन्दरं काष्ठमापाद्यमुत्सेधे चतुरङ्गुलम् ।
एतत्काष्ठं तथातक्ष्यं यथा हीयेत दैर्घ्यतः ॥

तृतीयांशं परित्यज्य रुद्रकोणान्तमेव वा ।
यां योदग्दिगवस्थास्य काष्ठस्येशान कोणतः ॥
द्वित्राङ्गुलिमितोधस्ताद्यत्र भागो नवा भवेत् ।
दशाङ्गुलानि संत्यज्य दक्षिणादर्धभागतः ॥

यथास्याः परितः पिण्डं मानमर्धाङ्गुलोन्नतम् ।
अङ्गुलयं समन्विष्यन् विदधीत खर्निंतं तथा ॥

दशाङ्गुलमितो भागो यः परो दारुणोऽत्र च ।
खर्निं कृत्वोपरि दृढं चर्मणा मुद्रयेदिदम् ॥

अङ्गुलोत्सेधपार्श्वं च विधायैतदधोमुखम् ।
कल्पयेदुक्तया रीत्या रागवाद्यादिवादनम् ॥
सार्धहस्तमितान्मानान्न परं मानमिष्यते ।
अर्वाग्वाधिकरादेतत् मानं नो कल्पयेत्कचित् ॥

एतयोर्मानयोर्मध्ये यथेष्टं मानकल्पना ।
प्रकृतित्वादिहान्यासां वीणानामेकतन्त्रिका ॥

तदङ्गसर्ववीणानां मुख्येयं मत्तकोकिला ।
अन्याः प्रत्यङ्गमेतस्यास्त्रिस्थानेषु यत् स्फुटम् ॥

यथास्थमस्यां भासन्ते स्वरास्सप्तापि तद्विदाम् ।
षड्विधैः करणैरेतां चित्रयन्त्यस्समेत्य ताम् ॥
उपरञ्जकतामस्याः प्रयान्ति सकला अपि ॥

कुम्भः

## मत्तकोकिलायां हस्तव्यापाराः

मत्तकोकिलवीणायामेतद्धात्वादिवादनम् ।
एकतन्त्र्यादिवीणासु यथायोगमवस्थितम् ॥

यद्यपि स्यादेकतन्त्रीवीणानां प्रकृतिः परा ।
तथाप्यत्रोपदिष्टत्वात्तत्रेदमपदिश्यते ॥

यदेकतन्त्र्यां निर्दिष्टं तद्धवेन्नकुलादिषु ।
वंशेष्वप्येतदिच्छन्ति वांशिका ये सुशिक्षिताः ॥

कुम्भः

## मत्तगजविलसितम्—षोडशाक्षरवृत्तम्

ऋषभमत्तगजविलसितमेवेदम् ।

## मत्तचेष्टितम्—ध्रुवावृत्तम्

यदा तृतीयसप्तमं तदाद्यपञ्चमं लघु ।
तदा तु मत्तचेष्टितं वदन्ति खञ्जकं बुधाः ॥
वणं पणीद छपदं उवेयि एस कोकिला। वनं प्रगीतषट्पदं उपलैषा कोकिला । भरतः

—अष्टाक्षरच्छन्दः

चतुर्थं च द्वितीयं च पञ्चममष्टममेव वा ।
गुरूण्यष्टाक्षरे पादे यत्र तन्मत्तचेष्टितम् ॥

विलम्बिताकुलालकं । जरलगाः ।

भरतः

## मत्तमयूरः—देशीतालः

ततो मत्तमयूराख्ये लपौ लौ द्वौ गुरू स्मृतौ ।
। ऽ । । ऽ ऽ

लक्ष्मणः

## मत्तमयूरकम्—त्रयोदशाक्षरवृत्तम्

मतयसगाः ।

भरतः

## मत्तमातङ्गगामि—नृत्तकरणम्

स्थानकं मण्डलं यत्र मयूराख्यपताककौ ।
कम्पितं कं हता दृष्टिः चारी च करिगामिनी ।
यत्रैवं क्रियते नृत्तं मत्तमातङ्गगामि तत् ॥

कं-शिरः ।

नन्दी

## मत्तल्ली—चारी

जङ्घा स्वस्तिकसंयुक्ता वर्धं त्र्यस्रकृता तदा ।
अशेषतलसंस्पृष्टधरणी चरणौ यदा ॥

घूर्णितावपसर्पेतामथवा चोपसर्पतः ।
उद्वेष्टितापविद्धौ च विधीयेत करावुभौ ॥

तदा चारी निगदिता मत्तल्ली तरुणे मदे ।

वेमः

## मत्तल्लिका—नृत्तरूपकम्

यस्यामुद्धाव्यं स्यात्पुरोहितामात्यतापसादीनाम् ।
प्रारब्धानिर्वाहः साऽपि हि मत्तल्लिका भवति ॥

क्षुद्रकथा मत्तल्ली येह महाराष्ट्रभाषया भवति ।
गौरीचने च कार्याऽतङ्कवती भावरसविद्धा ॥

मल्लिकाभोगशृङ्गारा कैशिकीवृत्तिमन्थरा ।
एकद्वयङ्कसमाश्लिष्टविदूषकविटक्रिया ॥

गाथा द्विपथकोपेता रथ्या रासकतालयुक् ।
अनालक्ष्यकथापूर्वं पश्चादालक्ष्यवस्तुका ॥

शारदातनयः

## मत्तल्लि—करणम्

घूर्णमानस्य पादस्य यत्र स्यादपसर्पणम् ।
गुल्फस्वस्तिकपर्यन्तं तत्रैवानुचरः करः ॥
उद्वेष्टितो नितम्बस्स्यादेव पादोऽपसर्पणे ।
अपवेष्टितमादध्यादेवमङ्गान्तरेण च ॥
क्रियेयं बहुशः प्रोक्ता तन्मत्तल्लि बुधैर्मदे ।

ज्यायनः

मत्तल्लीकरणं तत्स्यान्मदे वैवश्यदर्शने ।
गुल्फस्वस्तिकबन्धेन पादयोरपसर्पणम् ॥
हस्तयोर्युगपच्चैवोद्वेष्टनं चापवेष्टनम् ।
मत्तल्लिकरणं केचिदाचार्यास्संप्रचक्षते ॥

वेमः

## मत्तस्खलितः—अङ्गहारः

मत्तल्लि गण्डसूचीलीनमत्तापविद्धतलसंस्फोटितकरिहस्तकटी-छिन्नानां सप्तानां करणानां प्रयोगे मत्तस्खलिताङ्गहारः ।

शार्ङ्गः

## मत्ता—ध्रुवावृत्तम् (सप्ताक्षरम्)

यदि तु भवन्त्यन्त्ये, यदि यदि दीर्घाणि ।
त्रिगुरुरिहप्रोक्ता भवति तु मत्तेयम् ॥

नयगाः

अजुतदिसत्तोपि प्रिययुवतिसार्थः । भरतः

कुसुमवतीति नामान्तरमस्या विद्यते ।

## मत्ताक्रीडः—अङ्गहारः

भ्रमरनूपुरभुजङ्गत्रासितवैशाखरेचिताक्षिप्तछिन्नभ्रमरव्यंसितो-रोमण्डलनितम्बकरिहस्तककटीछिन्नानां द्वादशकरणानां प्रयोगे मत्ताक्रीडाङ्गहारः ।

## मत्ताक्रीडा—ध्रुवावृत्तम्

इयं विद्युन्मालेति देवीति च कथ्यते ।

अष्टावादौ दीर्घाणिस्युर्यदि च पुनरपि हि भवति बहुलघुगणः
भूयश्चान्ते दीर्घं त्वेकं यदि भवति पदिपदि पुनरपि च तथा ।
मत्ताक्रीडा विद्युन्मालेत्यपि च विविधकविभिरपि बहुभिरुदिता
णाणा विज्जुज्जोया लोओ घणपडलनिचयजलधर समणुगदो ।
नानाविद्युद्योतालोको घनपटलनिचयजलधरसमनुगतः ।

भरत-

## मत्तेभावली—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स ग म ग रि प ध नि स.
(अव) स नि ध म ग रि स.

भज

मत्सरा—मूर्छना

षड्जग्रामे पञ्चमी मूर्छना।
(आ) म प ध नि स रि ग.
(अव) ग रि स नि ध प म.
मत्सरीकृतेत्यपि नामान्तरमस्या दृश्यते।

पण्डितमण्डली

मत्सरीकृता—मूर्छना

मध्यमालापसरणं सा भवेन्मत्सरीकृता।
स्वरेण मध्यमेनेयं स्मृता गागाधिदेवता॥

नान्यः

मत्सरेव मत्सरीकृता।

मत्स्यकरणम्—उत्प्लुतिकरणम्

उत्प्लुतेर्मध्यमावृत्या कुरुते वामपार्श्वतः।
परिवृत्तिं तदा यत्र तन्मत्स्यकरणं भवेत्॥

वेमः

यद्वा कस्यापि करणस्यान्ते तु क्षितिमण्डले।
उत्तानशयतो मध्यं नितम्बोन्नतिपूर्वकम्॥
आवर्त्य वामपार्श्वेन मत्स्यवत्परिवर्त्य च।
अन्ते समुत्प्लुतिं कृत्वा पादोल्लालनया क्षणात्।
उत्तिष्ठेद्यत्र तदपि मत्स्याद्यं करणं भवेत्॥

वेमः

मत्स्यपुटम्—स्थलस्थध्वाडनृत्तम

कुञ्चितस्थानके स्थित्वा हृदये शिखरद्वयम्।
ततः पताकौ प्रसृतौ पुरस्तादुत्प्लुतिः पदे॥
अन्तराले यदा स्यातां वलने मत्स्यपुच्छकम्।
नर्तकस्तु ततः कुर्यादुत्कटस्थानके स्थितिम्॥

वेदः

मत्स्यशीला—स्त्री

दीर्घपीनोन्नतोरस्का चला नातिनिमेषिणी।
बहुभृत्या बहुसुता मत्स्यसत्त्वा जलप्रिया॥

भरतः

मत्स्यहस्तः

करपृष्ठोपरिन्यस्तो यत्र हस्तस्त्वधोमुखः।
किञ्चित्प्रसारिताङ्गुष्ठकनिष्ठो मत्स्यनामकः।
पुरोभागे त्वयं हस्तो मत्स्यार्थस्य निरूपणे॥

विनायकः

मधुरा—श्रुतिः

ऋषभस्य तृतीया श्रुतिः।

सुधा

मदः—व्यभिचारिभावः

मदो नाम मद्योपयोगादुत्पद्यते। स च त्रिविधः। पञ्चविभावश्च। तरुणमदः, मध्यमदः, अपकृष्टमदः। इति त्रिविधः।

मद्योपयोगादैश्वर्याद्विद्यया चाभिजन्मतः।
उत्तमस्त्रीपरिष्वङ्गान्मदः सम्पद्यते नृणाम्॥
कश्चिन् मत्तो गायति रोदिति कश्चित्तथा हसति कश्चित्।
परुषवचनाभिधायी कश्चित् कश्चित् तथा स्वपिति॥
उत्तमसत्त्वः शेते हसति च गायति च मध्यमप्रकृतिः।
परुषवचनाभिधायी रोदित्यपि चाधमप्रकृतिः॥
स्मितवचनमधुररागो धृष्टतनुः किञ्चिदाकुलितवाक्यः।
सुकुमाराविद्धगतिस्तरुणमदस्तूत्तमप्रकृतिः॥
स्खलिताघूर्णितनयनः स्रस्तव्याकुलितबाहुविक्षेपः।
कुटिलव्याविद्धगतिर्मध्यमदो मध्यमः प्रकृतिः॥
नष्टस्मृतिर्हतगतिश्छर्दितहिक्काकफैः सुबीभत्सः।
गुरुसज्जमानजिह्वो निष्ठीवति चाधमप्रकृतिः॥
रङ्गे पिबतः कार्या मदवृद्धिर्नाट्ययोगमासाद्य।
कार्यो मदक्षयो वै यः खलु पीत्वा प्रविष्टः स्यात्॥
सन्त्रासाच्छोकाद्वा भयप्रकर्षाच्च कारणोपगतः।
उद्यम्यापि हि कार्यो मदप्रणाशस्तथा तज्ज्ञैः॥
एभिर्भावविशेषैः मदो द्रुतं संप्रणाशमुपयाति।
यैरभ्युदयसुखैर्वाक्यै शोकः क्षयं याति॥

अधममदे तु—निमेषोन्मेषविकारः, तारकान्तर्दर्शनं, चक्षुरधोऽवलोकनं, एते विकाराः। भरतः

मत् शब्दार्थो मतिर्मानः तद्दानात्खण्डनान्मदः। शारदातनयः

—चित्राभिनयः

मदस्त्वानन्दसम्मोहमदिरासंभ्रमादिभिः।
पुरोभागे कर्तरीति चलिता मोहनार्थके।
कपित्थाङ्गुष्ठचलनं सौभाग्यार्थनिरूपणे॥
निमीलिताख्यदृष्टिश्च समशीर्षं तथैव च।
अधोमुखौ पताकौ द्वौ चलौ चानन्ददर्शने।
मुखस्थानेऽर्धचन्द्रस्तु बद्धश्चेन्मद्यपानके॥

विनायकः

—शृङ्गारचेष्टा

मधुपानमदप्रायः तारुण्यातिशयोद्भवः।
विकारो यो वरः स्त्रीणां तं वदन्ति मदं बुधाः॥

कुम्भः

—सन्ध्यन्तरम्

मदस्तु मद्यजः। सिंगः

मदः सुरापानप्रभवो विकारः। यथा—तमालवीथ्यङ्के- शेखरं प्रति भट्ट सुरा इति चेटवाक्यम्। सागरः

यथा—कृत्यारावणे भीता क्षिममक्ष: इति रावणवाक्यम्। अथवा-पाननिमित्तः मालविकाग्निमित्रे इरावत्यां मदः।

भोजः

मदः

स एव स्वानुकूल्येन दर्शयन्नखिलं जगत्।
यत्किंचित्कारितं चाग्र्य कुर्वन्मद उदाहृतः ॥

सः। दर्पः। भावविवेकः

मद्दललक्षणम्

शुद्धसालगसङ्कीर्णा मद्दलास्त्रिविधा मताः।
शुद्धे मद्दलविस्तारः षण्णवत्यङ्गुलो भवेत् ॥

शुद्धमद्दलदीर्घं स्यादूनपञ्चाशदङ्गुलम्।
शुद्धे तु मद्दलमुखं षोडशाङ्गुलमिष्यते ॥

अपामार्गोत्तदाश्वत्थान्मार्जनाभस्मकल्पनात्।
गोचर्मबन्धनं कार्यं मुखयें वलये तथा ॥

अशीत्यङ्गुलाभोगसालगे मद्दलो भवेत्।
आयामस्तु तदर्धं स्यात्सालगे मद्दली तथा ॥

चतुरङ्गुलहीनः स्यात्सङ्कीर्णो मद्दलः पुनः।
सालगेऽपि च सङ्कीर्णे कर्तव्यं दृढबन्धनम् ॥

तकारो जायते वामभक्षिकाहस्तताडनात्।
बाडवज्वालघातोप्सु थिकारश्चैव लक्षणम् ॥

रुद्रसृष्टशक्तौरुरुविग्रहायां ब्रह्मारुरुस्तामनुधावतिस्म
तथाम्बिकायां भुवि तत्सुरोऽत्थो नादस्तु थोकार इति प्रणीतः ॥

ठेकारः खे मरुद्घाताद्यो नादस्स तु तत्समः।
चत्वारि तद्विकृथो टे स्युर्मूलं वाद्याक्षरस्य वै ॥

थोकारः शक्तिरूपः स्यात्तद्विकृ टे स्युश्शिवांशकाः।
शाखाक्षराणि चैतेषां चतुर्णां द्वादशैव तु ॥

टवर्गश्च तवर्गश्च कवर्गश्च ववर्जितः।
हकारश्च लकारश्च नानाशब्दप्रसूतयः।
अलकारकर्तरीशब्दः त्रिंशत्काद्यभिवर्धयेत् ॥

उमापतिः

मदनः—देशीताल:

मदने गप्लुतौ प्रोक्तौ। ऽऽ लक्ष्मणः
मदने च द्रुतौ गुरुः। ००ऽ मदनः
ताले मदनसंज्ञे तु दास्त्रयश्च गुरुस्तथा। ०००ऽ वेमः

मदनपालः

आनन्दसञ्जीवनकारः। क्रै, प. १३५० कालः। अयं मदनपालनिघण्ड इति वैद्यग्रन्थं, मदनपारिजातमिति धर्मशास्त्रग्रन्थं अन्यांश्च बहून् ग्रन्थान् चकार। अस्यास्थाने विश्वेश्वरमहाकविरास। अयं मदनपालः डिल्लीपुराधीश इति पाञ्चालाधीश्वर इति च श्रूयते।

मदनमारुतम्—मेलराग: (खरहरप्रियामेलजन्यः)

(आ) स रि ग म ध नि स.
(अव) स नि ध नि प म रि म ग स.

मख

मदनरेखा—मेलराग: (धीरशङ्कराभरणमेलजन्यः)

(आ) स ग म प म नि स.
(अव) स नि ध प म स.

मख

मदनवती—ध्रुवावृत्तम् (त्रयोदशाक्षरम्)

अष्टावादौ दीर्घाणि स्युस्त्वतिजगती
अन्त्यं दीर्घं सा विज्ञेया मदनवती
सन्धारन्तो विज्जुज्जोयं भमदि नहम्।
सन्धारयन् विद्युद्योतिं भ्रमति नभसि।

मान्मः

मदना—श्रुति:

मन्द्रर्षभप्रथमा श्रुतिः। मण्डली
धैवतस्य द्वितीया श्रुतिः। सुधा

मदनोत्सवः—संगीतशृङ्गाराङ्गम्

मदनत्रयोदश्यां कामदेवादिपूजा मदनोत्सवः।

मोक्षः

मदन्ती—श्रुति:

धैवतस्य प्रथमा श्रुतिः।

मदमन्थरम्—दर्शनम्

आमीलदन्तराद्दृश्य परिच्छेदविवर्जितम्।
आपूर्यमानमरुणं मदमन्थरमीरितम् ॥

वेमः

अपरिछिन्नविषयं मदमन्थरमीरितम्।

शारदातनयः

मदमन्थरम्—देशीलास्याङ्गम्

मंदघूर्णनतच्छायं चलनं मदमन्थरम्।

वेदणः

**मदविलसितः—अङ्गहारः**

मदस्खलितमत्तल्लिवलसंस्फोटितनिकुट्टकोरूद्वृत्तकरिहस्तकटीछिन्नानां सप्तानां करणानां प्रयोगे मदविलसिताङ्गहारः ।

**मदविह्वलः—देशीतालः**

मदविह्वलताले तु द्रुतौ द्वौ लप्लुतौ ।

०० । ऽ लक्ष्मणः

**मदस्खलितम्—करणम्**

यत्र डोलौ करौ स्यातां मस्तकं परिवाहितम् ।
पर्यायेण मुहुः पादौ स्वस्तिकीभूय विच्युतौ ॥

मदस्खलितमेतत्स्यात्प्रयोज्यं मध्यमे मदे ।
अत्र भ्रमरिकाविद्धे चार्यौ कीर्तिधरोऽभ्यधात् ॥

ज्यायनः

**मदालसम्—स्थानकम्**

आसने द्विगुणः पादो मनागन्यः प्रसारितः ।
शिरोञ्चिततया यत्र किञ्चित्पार्श्वमुपागतम् ॥

तत्स्याच्चिन्ताकृतं चिन्ताविप्रलम्भमदादिषु ।
अन्यैः पुनस्समाख्यातमिदं मन्दालसाख्यया ॥

ज्यायनः

**—देशीस्थानम्**

अधिष्ठितासनस्त्वेकः पादोऽन्यश्चरणः पुनः ।
किञ्चित्प्रसारितश्शीर्षमीषत्पार्श्वगतं भवेत् ॥

यत्र तत्स्थानकं तज्ज्ञैर्मदालसमुदीरितम् ।
विपद्विरहनिर्वेदचिन्तौत्सुक्यमदादिषु ॥

वेमः

**मदालसा—देशीचारी**

चरणौ मदिरापानमत्तस्येव विसंस्थुलौ ।
न्यस्येते यत्र हस्तौ च लोलितौ सा मदालसा ॥

वेमः

**मदाक्रान्ता—गतिः**

मदस्खलनयोगेन मदाक्रान्ता गतिर्मता । देवणः

**मदिरा—दृष्टिः**

आघूर्णितान्तरा क्षामा किञ्चिदञ्चिततारका ।
विकासिता चला दृष्टिर्मदिरा तरुणे मदे ॥

मनाक् स्रस्तपुटा दृष्टिर्या किञ्चिद्भ्रान्ततारका ।
अनवस्थितसञ्चारा मुहुः पक्ष्माग्रपीडिता ॥

मदिरा सा मदे धीरैर्मध्यमे परिकीर्तिता ।
अधस्तात्सञ्चरन्ती या किञ्चिल्लक्षिततारका ।
सनिमेषा च सा धीरैर्मदिराख्याऽधमे मदे ॥

अशोकः

**मद्गुणः—देशीतालः**

मद्गुणः स्यात्तु रगणः । ऽ । ऽ लक्ष्मणः

**मद्रकम्—सप्तगीतभेदः**

द्विविधं मद्रकं ज्ञेयं चतुर्वस्तु त्रिवस्तुकम् ।
शीर्षकेण समायुक्तं तत्तु ज्ञेयं त्रिवस्तुकम् ॥

मदनं मदिति प्रोक्तं यत्तद्राति तदुच्यते ।
मद्रकं हर्षजननं शम्भोर्भगवतस्सदा ॥

शीर्षकं सोपवहनं विदार्या च विभूषितम् ।
एककं विवधं चैव तथाप्यंशद्वयं भवेत् ॥

गुरुच्छेदाष्टकं कृत्वा न्यसेल्लघ्वष्टकं पुनः ।
तत्रोपवहनं कृत्वा प्रथमे तु गुरुद्वये ॥

गुर्वक्षरे तृतीये च ततः स्यात्प्रत्युपोहनम् ।
गुर्वक्षरे चतुर्थे तु शम्या कार्या तु पञ्चमे ॥

षष्ठसप्तमयोस्तालः शम्या गुर्वक्षरेऽष्टमे ।
तत्रार्धकलिकापातं कुर्याल्लघ्वक्षरैः पुनः ॥

गुर्वक्षरे तालगतो योगस्तु कलिकाः स्मृताः ।
तालं शम्यां च तालं च सन्निपातं तथैव च ।
कुर्यादेककलो ज्ञेयः कलायोगस्तु मद्रके ॥

उपवहनं । उपोहनम् । एककं विवधं च विदारी भेदः ।

उदाहरणम्—

रक्षतु विषमनयनदहनतीव्रतरतापमनुभवतः ।
कृतमदनदेहभङ्गं तृतीयनयनोत्पलं शम्भोः ॥

एषायां ध्रुवा । झंटुं झंटुं ०००० महत्कपालधरकमलसंभवपरमार्थविभवसूक्ष्मासूक्ष्मसनातनपरम् । एतत्प्रथमं वस्तु । झंटुं झंटुं इति शुष्काक्षराणि । अत्रोपवहनरूपाणि । झंटुं झंटुं सकलसुरासुरमुनिनायक किंपुरुषवृन्दनिरतिशयवदनसंस्तुतनिजमहिमानम् । इदं द्वितीयं वस्तु । दिग्ले दिग्ले वासवसद्भावविभावं वेदरहस्यपठितानुभावं विश्वप्रजं वन्देदेवं इति तृतीयं वस्तु । व्रजामि तमहं इति चाचपुटेन शीर्षकम् ।

द्विकलमद्रकम्

गुर्वक्षराणां विश्लेषात्तदेवं द्विकलमुत्पद्यते । अत्र चतुर्मात्रगणैः चतुर्विंशतिगणैः कला परिसंख्याता । वस्तुनि प्रथमे त्रिकलं स्यादुपोहनम् । उत्तरं स्यात्प्रत्युपोहनम् । यदुक्तमुपरिष्टात् कलिकं

द्विकलिकं वापि नव स्यादुपोहनमिति, द्विकले निषेधः। शङ्करमादिभवं परमेशं कारणमध्यगतं विनाशकरम्। फणिपतिपरिचेष्टितमूर्तिं नित्यतनुं तमहं प्रणमामि। इति ध्रुवा। वस्तुत्रयानन्तरं सुब्रह्मण्य प्रणतोऽस्मि परं सुदीर्घनादं इति विवधेन षट्कलं शीर्षकम्। अस्य रागस्तु शुद्धषाडवः।

चतुष्कलमद्रकम्

द्विर्भावाद्द्विकलस्यापि विज्ञेयं च चतुष्कलम्।
लघ्वक्षरे सप्तमे तु द्विर्भावोऽन्त्ये विधीयते॥

चतुष्कले मद्रके तु कलाष्टकमुपोहनम्।
एका द्वे वा चतस्रो वा एवं स्यात्प्रत्युपोहनम्॥

यथाक्षरश्च कर्तव्यो मद्रकस्य तु शीर्षके।
चतुष्कलं पञ्चपाणिः द्विकले स तु कीर्तितः।
चतुष्कलस्तु कर्तव्यो शीर्षकं पञ्चपाणिकम्॥

उदाहरणम्—

अवनिवह्निमरुदम्बरनीलं सोमसूर्ययजमानशरीरम्।
भीमशर्वभवरूपमहान्तं उग्रमीशपशुपालकमन्तम्॥

इति ध्रुवा। विवधेन प्रथमं वस्तु। एककेन द्वितीयं च। इत्थं वस्तुत्रयानन्तरं पञ्चपाणिना शीर्षकम्। एवं षट्सु गीतिषु एकद्विचतुष्कलभेदेषु स्वयमेवोपहनादिकमूह्यम्। स्थाने लक्षणमेवोच्यते।

नान्यः

मद्रकम्—द्वाविंशत्यक्षरवृत्तम्

भरनरनरनगाः। भरतः

मधुकरसदृशा—ध्रुवावृत्तम् (अष्टाक्षरम्)

लघुगण इव षट्के यदि भवति मुखे तु।
चरणगतिविधौ सा मधुकरसदृशाख्या॥

ननगगाः। पमदयणसुगन्धि। प्रमदजनसुगन्धी। भरतः

मधुकरिका—ध्रुवावृत्तम् (सप्ताक्षरम्)

आदौ यदि गुरुणी अन्त्यं निधनगतम्।
ज्ञेया मधुकरिका उष्णिह्यमिकथिता॥

जादा कुसुमवदी। जाता कुसुमवती। भरतः

मधुकरी—सुषिरवाद्यम्

कार्या मधुकरी रम्या काहलाकारधारिणी।
शृङ्गजा दारुजा यद्वाष्टाविंशत्यङ्गुलायता॥

अत्र फूत्काररन्ध्रः स्यादाढकीवीजसम्मितम्।
मुखरन्ध्रप्रदेशात्तु मुक्त्वाङ्गुलचतुष्टयम्॥

वंशवत्स्वरसंसिद्ध्यै सप्त रन्ध्राणि कल्पयेत्।
सप्तानामपि रन्ध्राणां मुखरन्ध्रस्य चान्तरे॥

अधस्तादपरं रन्ध्रं मधुरस्वरसिद्धये।
कर्तव्यं मुखरन्ध्रे तु विधातव्या च नालिका॥

ताम्रजा च यवस्थूला चतुरङ्गुलसम्मिता।
तदूर्ध्वे दन्तरचिता यद्वा शुक्तिविनिर्मिता॥

कर्तव्या पत्रिका चाथ मुखरन्ध्रस्य मध्यतः।
विधेया शुक्तिकाकाशमयी यद्वा नलोद्भवा॥

काञ्ची समुच्छूसज्जातिमुकुलाकारसारिणी।
म्रदीयसी क्षीरपाकान्मधुरध्वनिकारिणी॥

ततोऽङ्गुष्ठेन वामेन स्वधोरन्ध्रं विधाय च।
शुभां मधुकरीमेनां वंशवद्वादयेत्सुधीः॥

वेमः

अस्या महुरी, महुर इत्यपि नामान्तरे भवतः।
महुरस्य विषाणं वा दारुजं वा प्रकल्पयेत्।
अष्टाविंशतिरङ्गुल्यस्तस्य दैर्घ्यं विधीयते॥

मुखरन्ध्रं च तस्य स्यादाढकीवीजवाहि च।
अग्रतो द्व्यङ्गुलं छिद्रं कर्तव्यं काहलाकृति॥

मुखरन्ध्रसमूत्रा स्यात्क्षेप्तव्या यवमात्रका।
चतुरङ्गुलदीर्घा तु सुतन्वी ताम्रनालिका॥

ऊर्ध्वं तस्याः पिधातव्या द्व्यङ्गुला शुक्तिचक्रका।
दन्तजा वा विधातव्या मध्यरन्ध्रसमन्विता।
देवनालकृतां शुक्तिं काशपुष्पसमाकृतिम्॥

क्षीरपाकान्मृदूभूतां चक्ररन्ध्रे नियोजयेत्।
शृङ्गे रन्ध्राणि कुर्वीत विहाय चतुरङ्गुलम्॥

द्वादशाङ्गुलवंशस्य प्रमाणेन विचक्षणः।
स्वङ्गवक्त्रादधोदेशे रन्ध्रदेशादधस्तदा॥

छिद्रमन्यत्प्रकर्तव्यमेवं मधुरिका भवेत्।
अङ्गुलीर्वंशमार्गेण छिद्रास्येषु विधारयेत्।
अधश्छिद्रं पिधातव्यं वामाङ्गुष्ठमुखेन तु॥

सोमेश्वरः

—नवाक्षरच्छन्दः

नवाक्षरकृते पादे त्रीणि स्युर्नैधनानि च।
गुरूणि यस्यास्सा नाम्ना ज्ञेया मधुकरी यथा॥

ननमाः। (उदा) वनमतिशयगन्धाढ्यम्। भरतः

—रागः

मध्यममन्द्रा तारागान्धारा धांशकग्रहन्यासा।
संपूर्णा समशेषा मधुररवा मधुकरी प्रोक्ता॥

नान्यः

गतारा मन्द्रमध्या च ग्रहांशन्यासधैवता।
समस्वरा च पूर्णा च मता मधुकरीति सा॥

मतङ्गः

ततः ककुभसंभूता ख्याता मधुकरीति च।
धैवतांशग्रहन्यासा गान्धारेण विवर्जिता।
समस्वरा मन्द्रमध्या विभाषा पूर्णतां गता॥

हरिः

—श्रुतिः

निषादस्य द्वितीया श्रुतिः।

जगदेकः

—सुषिरवाद्यम्

स्वेच्छया तदभिज्ञैश्च निर्मिता वेणवोऽपि ये।
ते ते विभावनीयास्तु सुषिरातोद्यलक्षणे॥

यथा मधुकरी वेणुः छिद्रैस्सप्तभिरङ्कितः।
खलु वेणुस्तदा ज्ञेयो विद्वद्भिर्वेणुलक्षणम्॥

शङ्खश्च काहला चैव शृङ्गं ग्रहणमेव च।
विलोला तुरतुरिका वियोगा चैवमादयः॥

वाद्यभेदेषु विज्ञेयाः सुषिरातोद्यलक्षणैः।
चतुर्भिरक्षरैर्युक्तैः स्वरैरोहत्यनेकशः॥

(एते श्लोका अतीवलेखकदोषदुष्टा मन्तव्याः)

वलौ, धनौ, पटौ इति शङ्खेहकारश्च टकारश्च चकारश्च काहलायां तऊशरइकाराः शृङ्गे धतुरतुरिकायां नकारो विलोलयोगयोः मुख्याक्षराः।

नान्यः

—नवाक्षरवृत्तम्

ननमाः।

भरतः

—वाद्यम्

मद्वरीति नामान्तरमादर्शेषु दृश्यते।

अथ वाद्यं प्रवक्ष्यामि मतङ्गमुनिसम्मतम्।
तद्वाद्यलक्षणं वक्ष्ये पूर्वोक्तविधिना मतम्॥
निर्दोषबीजकाष्ठेन मधुरीति च सा स्मृता।
एकविंशत्यङ्गुलीभिः मिता तत्र पृथक् पृथक्॥
मधुरी मूलमङ्गुल्या द्व्यङ्गुलमध्यमम्।
भवत्यग्रं द्व्यङ्गुलेन सर्वाङ्गं चैकविंशतिः।
मूलराद्वे स्थितो ब्रह्मा चाग्रे पशुपतिस्तथा॥
मध्ये जनार्दनः पार्श्वे साक्षान्नाम महेश्वरः।
अद्यन्तयोर्वसुः पत्रं ब्रह्मा नाभिस्सरस्वती॥
कमला पत्रिकाकुम्भे जत्रावस्तु सुधाकरः।
सप्तरन्ध्रैश्च सम्मिश्रं सप्तस्वरसमन्वितम्॥
तेऽमिश्राण्येकरन्ध्रेण रन्ध्राण्यप्येकविंशतिः।
मधुर्या मूलकं बद्धं दक्षिणाख्येतरेण च॥
सर्पशीर्षकरेणैव मतङ्गमुनिना मतम्।
अग्रं चतुरहस्तेन मृगशीर्षकरेण च।
करद्वयेन सम्पीड्य मधुर्या लक्ष्म चोदिता॥
पीडिता दक्षहस्तेन ब्रह्महत्यादिपातकम्।
पीडिता वामहस्तेन भ्रूणहत्यां लभेत्सदा॥
पीडिता चेत्कराभ्यां च भवेत्प्रीतस्सदाशिवः।
षड्जमध्यमगान्धाराः स्थायिसञ्चारिणो मताः॥

चिह्नः

—रागः

धांशं मधुकरी प्रोक्ता मन्द्रधैवतभूषिता।
सरिभ्यां निधपैर्भूरि संभवः ककुभान्मतः॥

मोक्षः

—विभाषारागः

विभाषा स्यान्मधुकरी निर्गता ककुभाच्छुभा।
शीघ्रा निषादऋषभैः ग्रहांशन्यासधैवता।
गहीना मन्द्रमध्याभाक् गातव्या करुणे रसे॥

भट्टमाधवः

—रागः

ककुभोत्था विभाषेयं निर्दिष्टा याष्टिकेन तु।
धैवतांशग्रहन्यासा गहीना मन्द्रमध्यभाक्।
समस्वरा च संपूर्णा करुणे मधुकर्यसौ॥

जगदेकः

## मधुपंचारी

इयमशोकेन मुडुपचारीति कथ्यते।

अङ्गुलीपृष्ठभागं हि नृत्तज्ञा मुडुपं जगुः।
चार्यते तेन मुडुपचारीत्यन्वर्थसञ्ज्ञिका॥

निरुक्तिमेवं केऽप्याहुरन्ये संज्ञां डिपित्थवन्।
मुडुपोपपदाश्चार्यस्सन्ति यद्यप्यनेकशः।
तथाप्यमूर्मया काश्चित् लिख्यन्ते कोहलोदिताः॥

अशोकः

मधुमती—श्रुतिः

निषादस्य द्वितीया श्रुतिः।

सुधा

मधुमाधवी—चतुर्दशाक्षरवृत्तम्

वसन्ततिलकमेव गोमानसमतं मधुमाधवीत्युच्यते।

मधुमाधवीरागध्यानम्

गृहीतमधुपात्रिकां परखनाथनाथोलिकां
जपासुमसमारुणां विमलचारुपीताम्बराम्।
द्वितीयकरसाशितप्रकटशम्बराडम्बरां
स्मरामि मधुमाधवीं मनसि मे सदा मानितीम्॥

रागसागरः

मधुरम्

अव्याहतं मनः पुंसां मृदुत्वजनकं ततः।
इरत्यन्यपदार्थेभ्यो मधुरं वस्तु कीर्तितम्॥

भावविवेकः

—दर्शनम्

शीतलीक्रियते तापो येन तन्मधुरं स्मृतम्।

शारदातनयः

—शारीरभेदः

मन्द्रे मध्ये च माधुर्याच्छारीरं मधुरं मतम्।

पार्श्वदेवः

—रञ्जनगुणः

ललितैरक्षरैर्युक्तं शृङ्गाररसरञ्जितम्।
श्राव्यं नादसमोपेतं मधुरं प्रमदाप्रियम्॥

सोमेश्वरः

मधुरः—ध्वनिभेदः

कोकिलस्वनसंकाशो मधुरो ध्वनिरुच्यते।

सोमेश्वरः

—गीतालङ्कारः (ध्रुवभेदः)

गार्गितालेन गीयेत कारुण्ये मधुरो ध्रुवः।
अङ्घ्रिर्द्विसप्तभिर्वर्णैरानन्दफलदस्सदा।
चतुर्द्रुतो विरामान्तः तालोऽयं गार्ग्यसंज्ञकः॥

संगीतसारः

—(प्रबन्धे) नादः

मधुरः स तु विज्ञेयो यास्तारस्थानकेऽपि सन्।
श्रोतृचित्ताह्लादकरो ध्वनिर्ध्वनिविदां वरैः॥

कुम्भः

मधुरप्रियः—देशीतालः

प्रलगा मधुरप्रिये। ऽ।ऽ

लक्ष्मणः

मधुरा श्रुतिः

ऋषभस्य प्रथमा श्रुतिः। मण्डलीमतं तारपंभस्यैव।

ऋषभे द्वितीया श्रुतिः। पाल्कुरिकि-सोमः

ऋषभस्य प्रथमा श्रुतिः। सुधा

मधुरपुमादविद्याधरलीला—सूडप्रबन्धः

पदानां दशकं यत्र ताले वर्णयतौ भवेत्।
ध्रुवः प्रतिपदं ज्ञेयः कविनामाङ्कितात्पदात्॥

गीत्वालापं यथाशोभं प्रतिताले ततःपरम्।
पाटास्तेनाश्च शृङ्गारो रसो नायक उत्तमः॥

देवशाखाभिधे रागे प्रबन्धस्संप्रदर्शितः।
सविद्याधरलीलाख्यः श्रीपतिप्रीतिकारकः॥

कुम्भः

मधुरिपुरत्नकण्ठिका—सूडप्रबन्धः

रागो धन्नासिका यत्र तालो वर्णयतिः स्मृतः।
चम्पूबन्धः प्रयोगोऽन्ते गमकानेकधा स्वरः॥

तदन्ते स्युः स्वरास्तेनाः पाटाश्शुचिरसाञ्चिताः।
प्रबन्धोऽयं मधुरिपोः पुरस्ताद्रत्नकण्ठिका॥

कुम्भः

मध्यचक्रा—भुडुपचारी

कुट्टितस्स्थापितो यत्र भ्रमितः कुट्टितः पुनः।
स्थाने सा मध्यचक्रेति चारी प्रोक्ता विचक्षणैः॥

अशोकः

मध्यदेहा—रागः

संज्ञा सरितगमका सधनिर्बलवत्तरा।
मापन्यासा रिपत्यक्ता मध्यदेहेति कीर्तिता॥

नान्यः

मध्यमदेहा......पन्यासेन युता समधैः।
पञ्चमरिषभविहीना सस्फुरितैर्गमकविन्यासैः॥

कश्यपः

मध्यपताकहस्तः

पताकाभिधहस्ते तु कुञ्चिता स्यात्कनीयसी।
नाम्ना मध्यपताकोऽयं विश्वकद्रौ निरूप्यते॥

विश्वकद्रुः शुनकः। शृङ्गारशेखरः

मध्यमः—कवितारचनामार्गः

वैचित्र्यं सौकुमार्यं च यत्र सङ्कीर्णतां गते।
भ्राजेते सहजाहार्यशोभातिशयशालिनी॥

माधुर्यादिगुणग्रामो वृत्तिमाश्रित्य मध्यमाम् ।
यत्र कामपि पुष्णाति बन्धच्छायातिरिक्तताम् ।
मार्गोऽसौ मध्यमो नाम नानारुचिमनोहरः ॥

कुन्तकः

## मध्यमा किन्नरी

मध्यमा या अथोलक्ष्म वक्ष्यते शास्त्रसम्मतम् ।
दण्डस्य दैर्घ्यं विज्ञेयं त्रिचत्वारिंशदङ्गुलम् ॥

परिधिर्मध्यमायाश्च द्वियवोनषडङ्गुलः ।
अस्य स्यात्काकुभं शीर्षमायामे चतुरङ्गुलम् ॥

सार्धत्र्यङ्गुलविस्तारं दण्डः पञ्चाङ्गुलः खलु ।
वीणादण्डस्य सुषिरे क्षिपेद्दण्डं च काकुभम् ॥

तावांश्च परिशेषे सा यावतःपरिशेषणे ।
वीणादण्डान्तककुभशिरोमध्यात्परस्थितः ॥

सारिका च यवो माने विंशोनत्र्यङ्गुलो भवेत् ।
स्याद्यवोनाङ्गुलद्वन्द्वो दण्डान्ते सारिकोच्छ्रयः ॥

मेरोरुपान्ते सारीणामुत्सेधस्त्वात्तदर्धतः ।
सारीणामन्तरस्याथ परिमाणमिहोच्यते ॥

सार्धाङ्गुलचतुष्कन्तु तत्र प्रथममन्तरम् ।
सयवत्र्यङ्गुलं ज्ञेयं द्वितीयकमिहान्तरम् ॥

तृतीयमन्तरं त्र्यंशाभ्यधिकैरङ्गुलैस्त्रिभिः ।
पूर्णत्र्यङ्गुलकं तुर्यं पञ्चमं पुनरन्तरम् ॥

सार्धत्र्यङ्गुलकं ज्ञेयं यवैकोनाधिकं पुनः ।
षष्ठं यवद्वयं न्यूनमङ्गुलं सप्तमं तथा ॥

यवोनमङ्गुलद्वन्द्वमन्तरं दशमं भवेत् ।
सपादाङ्गुलमानानि त्रीण्यन्यान्यन्तराणि च ॥

स्यादेकाङ्गुलमानेन चतुर्दशमिहान्तरम् ।
सारीणामधेकं सार्धयवमानामिहस्मृतम् ॥

अत्रापि त्र्युङ्गलं वीणा दण्डस्य परिशिष्यते ।
लक्ष्मशेषं विजानीयाद्बृहतीकिन्नरीगतम् ॥

कुम्भः

## मध्यमः—स्वरहस्तः

शुकतुण्डोऽपविद्धो हि मध्यमस्वरनिर्णये ।

शृङ्गारः

## मध्यमः

नादः सुमुत्थितो नाभेरुरःकण्ठसमाहृतः ।
नाभिं प्राप्तः पुनर्मध्यस्थानगो मध्यमः स्मृतः ॥

पण्डितमण्डली

मध्यमश्चैकवक्त्रः स्याद्धेमवर्णश्चतुःकरः ।
सवीणाकलशौ हस्तौ सपद्मवरदौ तथा ॥

भारती दैवतं द्वीपं कुशं वंशं सुपर्वजम् ।
गाता चन्द्रो रसश्शान्तः क्रौञ्चो वाहनमस्य तु ॥

सुधाकलशः

बृहतीछन्दः, हास्यशृङ्गारौ रसौ, ऋष्यादौ विनियोगः । क्रौञ्चः क्वणति, देवकुलसंभवः, कुन्दवर्णः, ब्राह्मणजातिः, क्रौञ्चद्वीपजः, महोलोकवासी, काश्मीरवासी, सौम्यवासरजः, यजुर्वेदी, माध्यन्दिनी शाखा. मिंशद्वर्षः, कलाचतुष्टयवान्, स्वरकर्मणि प्रयुक्तः, चतुःश्रुतिः ।

पण्डितमण्डली

मध्यमो मध्यमस्थानाच्छरीरस्योपजायते ।
अग्निमूलाच गम्भीरः किञ्चित्तारस्वभावतः ॥

सङ्गीतसरणिः

## मध्यमकपालगानम्

मध्यमेंऽशो ग्रहो यत्र निषादर्षभपञ्चमाः ।
गान्धारश्चाल्पका न्यासो मध्यमस्तु कला नव ॥
कपालं मध्यमाजातेः तदुक्तं कुम्भभूभुजा ।
शूलिकपालेत्यादि कला नव ।

कुम्भः

## मध्यमकैशिकः—रागः

धैवतीषड्जमध्याख्याजातिद्वयसमुद्भवः ।
मध्यमन्यासवानंशषड्जोऽल्पद्विश्रुतिस्वरः ॥
ऋषभो धैवतो वापि स्यादपन्याससंश्रयः ।
तदा सञ्जायते रागो नाम्ना मध्यमकैशिकः ॥

नान्यः

षड्जांशो मध्यमन्यासो धैवतीषड्जमध्ययोः ।
मध्यमकैशिको ज्ञेयः स्वल्पद्विश्रुतिकस्वरः ॥

कश्यपः

## मध्यमग्रामः

गान्धारस्याधिपत्येन निषादस्य गतागतैः ।
धैवतस्य च दौर्बल्यान्मध्यमग्राम उच्यते ॥

नारदः

यत्र संवादिनौ स्यातां नित्यं पञ्चमधैवतौ ।
ऋषभस्य तथा तद्ज्ञैः मध्यमग्राम इष्यते ॥

न लोप्यो मध्यमग्रामे पञ्चमो धैवतः पुनः ।
यदान्योन्यविपर्यस्तश्रुती पञ्चमधैवतौ ॥

तदैनं मध्यमग्रामं प्रवदन्ति मनीषिणः ।
अधिकं ग्रामशब्दे द्रष्टव्यम् ।

कुम्भः

—रागः

शृङ्गारहास्यरसयोर्यदि मुख्यभूत-
षड्जस्वरः फुरति चांशपदप्रतिष्ठः।
सम्मूर्छना यदि भवेदिह शुद्धमध्या
गोदानिको यदि तनुर्वितनोति तानम् ॥
संवादी च विवादी च क्रमाच्चेन्मध्यमर्षभौ।
क्रमाद्धैवतगान्धारौ दुर्बलातिबलौ यदि ॥
गान्धारीमध्यमापञ्चमीजातिसमुद्भवः।
निषादाख्यस्वरश्चैव सञ्चारी जायते यदा ॥
गणेन पञ्चाबणेन वेदनेन समाश्रितः।
तदा संपद्यते रागो मध्यमग्रामनामकः ॥

नान्यः

गान्धारीमध्यमाजात्योः सपञ्चम्योस्समुत्थितः।
षड्जांशो मध्यमग्रामो मध्यमो न्यास एव च ॥

कश्यपः

गान्धारस्याधिपत्येन निषादस्य गतागतैः।
धैवतस्यातिदौर्बल्यान्मध्यमग्राम उच्यते ॥

मतङ्गः

अयं कुडुमियामलशासने रूपकालापकाभ्यां विस्तृतः।

## मध्यमदेहा—रागः

सधमैर्मध्यदेहाद्या ममन्द्रा रिपवर्जिता।
गन्योर्गमकसंयुक्ता तारगान्धारधैवता ॥

मोक्षः

## मध्यमषाडवः—राग

वीररौद्राद्भुतरसे ऋषभांशपरिग्रहात्।
पञ्चमन्याससंयोगादपन्यासस्तु धैवतः।
स्वल्पपञ्चमकः प्रोक्तो रागो मध्यमषाडवः ॥

नान्यः

## मध्यमस्वरमन्त्रः

तत्वं हृदयाय नमः। ओखः शिरसे स्वाहा। अनुगतः शिखायै वषट्। समः कवचाय हुम्। उपरिः नेत्रत्रयाय वौषट्। उपपदाख्याय फट्। मित्रऋषिः सुप्रतिष्ठा छन्दः। सावित्री देवता। ऐं क्लीं सैं मं नमः।

जगदेकः

## मध्यमस्वराभिनयः

पताकौ स्वस्तिकौ कृत्वा शिरसा विधुतेन च।
शैवाख्यस्थानकेनापि कटिछिन्नेन वा पुनः।
दृष्टया च हास्यया धीरै रभिनेयोऽत्र मध्यमः ॥

दामोदरः

## मध्यमाकपालम्

अथोच्यते मध्यमिकाकपाललक्ष्माधुनां मध्यम एष चारः।
न्यासोऽप्यपन्यास इह ग्रहश्च स एव तत्रेत्यवधारणीयम्।
अल्पे निषादर्षभपञ्चमाः सगान्धारकाः तत्र कला नवैव ॥

रघुनाथः

अथ मध्यमस्वरोंऽशः स एवापन्यासः ग्रहश्चैव।
धैवतबाहुल्ययुतं प्रहीणषड्जस्वरेण संयुक्ताम् ॥
युतमल्पतया गान्धारर्षभपञ्चमनिषादानां।
नवकलमेव कपालमपि विद्वद्भिः मध्यमाजातेः ॥

इदं चोक्षषाडवेन देश्यां अन्धालिकया गीयते।

नान्यः

## मध्यमादिः—ग्रामरागः (वीणायां वादनक्रमः)

मध्यस्थानस्थितं कृत्वा मध्यमं स्थायिनं स्वरम्।
परानारुह्य पनिसान्स्वरान्पञ्च क्रमेण च ॥
अवरोहणतः स्थायिपर्यन्तान् धैवतं यदि।
हन्ति स्वस्थानमाख्यातं मध्यमादेस्तदादिमम् ॥
स्वस्थानत्रितयेऽन्यस्मिन् ह्यर्धमर्धस्थितं स्वरम्।
तत्तद्द्विगुणमारुह्य पूर्वं स्वस्थानमाव्रजेत् ॥
षाडवादिषु रागेषु पूर्वपूर्वस्वरस्य तु।
क्रमादसंभवे गच्छेत्सर्वत्रैव परम्परम् ॥
यद्रत्नाकरकारेण मन्द्रमारभ्य वर्णितम्।
रागालापनमेतन्मे रक्तिहानेर्न सम्मतम् ॥
यातस्त्रिस्थानलाभोऽस्मिन्नथ स्थानान्तराश्रितैः।
न भवेदुद्गता रक्तिः कुतस्तेन तदुच्यताम् ॥
पञ्चस्वरावरोहश्च षड्जे स्थायिनि मन्द्रगे।
संभवेदपि नो तस्मात्स्वस्थानं स्थाप्यते कथम् ॥
षड्जतः स्थायिपर्यन्तमवरुह्य यदीरितम्।
धैवतस्यामिहननं तदभावे कथं हि तत् ॥
तस्मात्सर्वेषु रागेषु मध्यस्थं कञ्चन स्वरम्।
स्थायिनं परिकल्प्येष्टं रागालपनमारभेत् ॥

वेमेन मध्यमादेः मन्द्रमन्द्रस्थायित्वमेवोक्तम्। तन्मतमनेन खण्डितम्।

कुम्भः

—रागः (वंशे वादनक्रमः)

आदौ स्थायिनमास्थाय मध्यमं तदनन्तरम्।
तृतीयं कम्पितं कृत्वा तृतीयं तु विलम्ब्य च ॥

यथा स्थायिस्वरे न्यासः स्वस्थानं प्रथमं तदा।
स्थायिनो मध्यमात्कृत्वा तृतीयं कम्पितस्वरम् ॥

चतुर्थं पञ्चमं चैव चतुर्थं च द्वितीयकम्।
कृत्वा ग्रहे न्यस्यते चेत्स्वस्थानं स्याद्द्वितीयकम् ॥

स्थायिस्वराच्चतुर्थं च समावृत्य स्वरं ततः।
स्थायिनं तत्परं कृत्वा तुरीयस्वरमेत्य च ॥

पञ्चमं तु विलम्ब्याथ वादयेत्षष्ठपञ्चमौ।
द्वितीयं च स्वरं कृत्वा स्थायिन्यासो यदा भवेत् ॥

तदा तृतीयं स्वस्थानं कथितं रागवेदिभिः।
स्थायिनं वादयित्वाथ द्वितीयं च तुरीयकम् ॥

पञ्चमं सप्तमं कृत्वा अष्टमे तु विलम्बयेत्।
द्वितीयं तत्परं चोक्त्वा द्वितीयं सप्तमं पुनः ॥

पञ्चमं च चतुर्थं च द्वितीयं प्राप्य च क्रमात्।
ग्रहे न्यासान्मध्यमादेः स्वस्थानं स्याच्चतुर्थकम्।
वंशेषु मुद्रितस्तद्ज्ञैः मध्यमादेर्ग्रहः स्मृतः ॥

वेमः

प्रथमे स्वस्थाने तृतीये कम्पिते इत्यत्र विवादित्वाद्धैवतस्य वादने क्रियमाणे रागहानिर्भवत्येव। अतः तं विहाय तदुत्तरो निषादोऽत्र तृतीयत्वेन ग्राह्यः।

यथाहुः—

असंभवे पूर्वपूर्वस्वरस्य तु परंपरम्।
क्रमेण स्वरमारोहेत्सर्वरागेष्विति स्थितिः ॥

तस्मान्निषाद एव तृतीयस्वर इत्यूह्यः।

द्वितीयस्वस्थाने तृतीयं कम्पितस्वरं। चतुर्थं इत्यत्र तृतीय-चतुर्थस्वरौ उक्तवचनान्निषाद एव। तृतीयत्वं निषादस्य लक्षणया आश्रितम्। चतुर्थं तु मुख्यत्वेन। एवं सर्वत्रोह्यम्। विवादिस्वरो वर्ज्यः। वंशेष्विति। सर्ववंशेष्वित्यर्थः। यथा— यस्मिन् वंशे यो मुद्रितस्वरो भवति, यथा अष्टादशाङ्गुले वंशे सप्तसु स्वररन्ध्रेषु मुद्रितेषु षड्जो जायते। स तत्र मुद्रित उच्यते। तथैव कलानिधिवंशे मन्द्रर्षभो मुद्रितः। मनुवंशे मन्द्रगान्धारः। स एव ग्रहः।

—रागः (औडुवः)

मध्यमादिर्मग्रहान्तो मध्यमग्रामगोचरः।
अयं सायं तु गातव्यः शृङ्गारे रिधवर्जितः ॥

नारायणः

—रागः

मध्यमादिश्च रागाङ्गो ग्रहांशन्यासमध्यमः।

मदनः

मध्यमग्रामसंभूतो मध्यमांशग्रहान्वितः।
मध्यमादिरिति ख्यातः शृङ्गारे विनियुज्यते ॥

हम्मीरः

—रागाङ्गरागः

मध्यमग्रामरागाङ्गं मध्यमादिः प्रगीयते।
षड्जमध्यमयोस्तारं मन्द्रवान् मध्यमो ग्रहे ॥

मध्यमो वा धैवतो वा न्यासेनांशेन मध्यमः।
ग्रीष्मस्य प्रथमे यामे शृङ्गारे स्यादसौ रसे ॥

गायकः प्राक् प्रयुञ्ज्येमं संपूर्णं वैणिका अपि।
इष्टं प्रयुञ्जते रागं तेनासौ प्राङ्निवेशितः ॥

भट्टमाधवः

—मेलरागः

मध्यमादौ गधौ न स्तौ मूर्छनामध्यमादिका।
तत्र त्वंशस्वराः प्रोक्ताः रिमनयो मुनीश्वरैः ॥

प्रातर्गेयः अहोबिलः

रिमनयः। रिषभमध्यमनिषादाः।
अयं वसन्तभैरवजः स्यात्।

—रागः

मध्यमग्रामसंभूता मस्यमांशग्रहान्विता।
मध्यमादिरिति ख्याता शृङ्गारे विनियुज्यते ॥

एतामेव प्रयुज्यादौ वैणिका वांशिकास्तथा।
पश्चादभिमतं गानं प्रकुर्वन्ति विचक्षणाः ॥

जगदेकः

मध्यमादिश्च रागाङ्गा ग्रहांशन्यासमध्यमा।
सप्तस्वरैस्तु गातव्या मध्यमादिकमूर्छना।
संपूर्णा कथिता तज्ज्ञै रिधहीनाक्वचिन्मता।
म प ध नि स रि ग म.

दामोदरः

मध्यमांशग्रहोपेता मध्यमग्रामसम्भवा।
मध्यमादिः प्रयोक्तव्या गीतादौ वैणिकादिभिः ॥

सोमराजः

—प्रथमरागः

स्यान्मध्यमग्रामभवाभिरामा
मांशग्रहान्ताहितमध्यमादिः।
........ वांशिकवैणिकाद्यैः
सङ्गीयते पूर्वमभीष्टरागात् ॥

मोक्षः

—रागः

तत्रादिर्मध्यमादिस्स्यान्मध्यमग्रामसंभवा।
मध्यमांशग्रहन्यासा गीयते प्रथमं बुधैः ॥

हरिः

मध्यमादिरागध्यानम्

सत्यासहासं परिरम्भकामा
संचुम्बितास्या कमलायताक्षी।
स्वर्णच्छविः कुङ्कुमलिप्तदेहा
सा मध्यमादिः कथिता मुनीन्द्रैः॥

दामोदरः

मध्यमाध्यानम्

मन्दारकुन्दकुमुदप्रतिरूपरूपा-
मिन्दीवरायतविशालविलोलनेत्राम्।
चन्द्रावतंसपरिचुम्बितपादपद्मां
तां मध्यमस्वरमयीमनिशं नमामि॥

जगदेकः

मध्यमावती—मेलरागः (श्रीरागमेलजोऽयं रागः)

ततस्तु मध्यमावत्यां गान्धाराङ्कविवर्जनम्।
गधयोः लोपः। परमेश्वरः

—मेलरागः ( खरहरप्रियामेलजन्यः )

(आ) स रि म प नि स.
(अव) स नि प म रि स.

मञ्ज

मध्यमुकुलहस्तः

पूर्वोक्तमुष्टिहस्तस्यानामिकाङ्गुष्ठयोजनात्।
नाम्नाऽयं मध्यमुकुलो मार्जारे संप्रयुज्यते॥

शृङ्गारशेखरः

मध्यमोदीच्यवती—जातिः

मध्यमोदीच्यवा लक्ष्म ततः परमुदीर्यते।
तत्रांशः पञ्चमो नित्यं साम्यस्वर्यं च दृश्यते॥
गान्धारोदीच्यवा यत्स्यात् शिष्टमस्यास्तु लक्षणम्।

हरिपालः

अंशः स्वरः पञ्चम एव तस्यां चच्चत्पुटस्तत्र चतुष्कलः स्यात्।
रिलोपतष्षाडवमत्रवेयं संपूर्णतायां पुनरंशभिन्नाः।
अल्पे स्वरास्तत्र भवन्ति सर्वे निगौ तदा पञ्चमधैवतौ च॥
स्वल्पा भवन्त्यत्र हि षाडवत्वे स्याद्वैवतस्यर्षभकस्य योगः।
सा मध्यमग्रामभवा तु तस्यां सौवीरिका मूर्छनिका च मादिः॥
... प्रोक्षणिके चतुर्थे गाने ध्रुवाया विनियोजनं स्यात्।
स्यान्मध्यमो न्यास इहाथ षड्जोऽपन्यासतां याति सधैवतश्च॥

रघुनाथः

गान्धारपञ्चमीभ्यां मध्यमया विरचिता सधैवत्याः।
जातिस्तु मध्यमोदीच्यवेति सद्भिस्सदा ज्ञेया॥

इति भरतसूत्रम्।

अंशः पञ्चम एवापन्यासौ षड्जधैवतौ यत्र।
मध्यम एको न्यासो मन्द्रो बहुलश्च गान्धारः॥
भेदेऽपन्यासकृते द्विधैव वा स्यात्प्रकीर्तिता सद्भिः।
पूर्णे च मध्यमोदीच्यवेति जातिर्भवतीत्थम्॥

नान्यः

मध्यलुठिता—भुवपचारी

कुट्टितः स्थापितोऽङ्घ्रिश्चेल्लुठितश्च निकुट्टितः।
समादिष्टा तदा मध्यलुठिता नृत्तवेदिभिः॥

अशोकः

मध्यस्थापनकुट्टिता—भुवपचारी

पादश्चेत्कुट्टितः पूर्वं पुरः षड्जान्निवेशितः।
मध्ये निवेशितश्चाथ पुनस्तत्रैव कुट्टितः।
मध्यस्थापनकुट्टेति तदान्वर्था प्रकीर्तिता॥

अशोकः

मध्या—श्रुतिजातिः

इयं, छन्दोवती, रञ्जनी, मार्जनी, रक्तिका, रम्या, क्षोभिणी, इति षट्सु श्रुतिषु वर्तते।

मध्यमासारितम्—गीतम्

एतस्मिन् लयो द्विकलषट्पितापुत्रकतालाः। 'तेष्वादिमे उत्तरे तिस्रः कलास्त्यजेत्। अन्ते सन्निपातः। शेषमासारितसामान्यलक्षणे द्रष्टव्यम्।

मध्यमेलवीणा

अथ मध्यमेलवीणा लक्ष्यत इतरत्र चतसृषूर्ध्वासु।
मेढगतस्तन्त्रीषु ज्ञेया त्वाद्याऽनुमन्त्रपदा॥
मन्द्रसयुता द्वितीया तृतीयिका मन्द्रपञ्चमां दधती।
तुर्या समध्यषड्जा तिस्रश्श्रुतयस्तु पार्श्वस्थाः॥
मन्द्रस मन्द्रपमध्यसयुक्ताः क्रमतः स्वरस्थितिस्सैव।
सारीषड्जे तेषु प्रामाण्यं पूर्ववत्किन्तु॥

पूर्वदिति। शुद्धमेलवीणालक्षणे।

पञ्चमतन्त्रीजसरी तदप्रयोज्यौ पुनस्सतन्त्र्योर्यत्।
तत्संख्याश्च न सार्योऽतीता रागाः परमते शिष्टाः॥

इयमपि।

मयुतान्यमते पञ्चमतन्त्रीषु पूर्ववच्छेषम्।
त्याज्यौ मन्द्रसतन्त्र्याः शुद्धमृदुपौ मतन्त्र्यां यत्॥
पूर्वोक्तिस्तस्तन्त्रीर्विनाऽत्र तन्त्र्यां तु मध्यषड्जस्य।
त्रिस्थानस्वरसिद्ध्यै स्थाप्यन्ते सारिकाः कैश्चित्॥

अतितारपञ्चमादौ वामे पार्श्वे श्रुतिस्तु मन्द्रसयुक्।
दक्षिणपार्श्वे मध्यमस्वरसयुक्तेश्रुतीवास्याम् ॥
तन्त्र्यां मन्वत एकोऽतितारमपि कृत्रिमोक्तितः प्राच्याम्।
किन्त्वतितीवे नादे न स्वरता रञ्जनाभावात् ॥

सोमनाथः

ततः परं संप्रतिमध्यमेलवीणात्र तस्यामुपरिस्थतन्त्रीः।
प्राप्तास्वरं प्रागनुमन्द्रषड्जं स्यात्पञ्चमोऽस्यामनुमन्द्रपूर्वः ॥
तन्त्री द्वितीया खलु याऽनुमन्द्रपूर्वेण युक्ता खलु पञ्चमेन।
तस्यां निवेश्यः खलु मन्द्रषड्जः तृतीयतन्त्र्यां स्वरमीरयामः ॥
तृतीयतन्त्री किल मन्द्रषड्जयुक्ता पुरा संप्रति तत्र तन्त्र्याम्।
मन्द्रादिमः पञ्चम एव वेद्यः चतुर्थतन्त्र्यां स्वरमामनामः ॥
तन्त्रीं तु मन्द्रादिममध्यमेन युक्ता तुरीया किल याथ तस्याम्।
मन्द्रादिषड्जो विनिवेशनीयः पार्श्वस्थतन्त्रीत्रितयं यदैव ॥
ऊर्ध्वस्थतन्त्रीत्रयतुल्यनादं तदा भवेन्मध्यममेलवीणा।

रघुनाथः

मध्यमेलाऽधुनोच्यते........
शुद्धमेलाख्यवीणा यामूर्ध्वतन्त्रीचतुष्टये।
युतानुमन्द्रपेनाद्या द्वितीया मन्द्रसे न च ॥
तृतीया मन्द्रपेनापि चतुर्थी मंद्रसेन च।
उपरिस्थिततन्त्रीभिश्चतसृभिरसमं ध्रुवम् ॥
अधोगतत्रितन्त्रीषु समाने श्रुतिता भवेत्।
सरी शुद्धौ पतं च्युतौ प्रयोगे संमतौ न हि।
वीणावेदिभिरुद्दिष्टा मध्यमेलेयमीदृशी ॥

श्रीकण्ठः

अथोच्यते मध्यमेलवीणाया लक्षणं मया।
तन्त्र्याद्या चानुमन्द्राख्यपञ्चमेन युता यदि ॥
द्वितीया मन्द्रषड्जेन तन्त्रिका चेत्समन्विता।
मन्द्रपञ्चमसंयुक्ता तृतीया यदि तन्त्रिका ॥
तुरीया मध्यषड्जेन तन्त्रिका चेत्समन्विता।
तदा भवेन्मध्यमेलवीणा पार्श्वे त्रितन्त्रिका ॥
तिसृणां पार्श्वतन्त्रीणां वक्ष्येऽथ स्वरयोजनम्।
आद्या टीप्यभिधा तारषड्जतुल्यध्वनिर्भवेत् ॥
द्वितीया तन्त्रिका ज्ञेया मध्यपञ्चमसंमिता।
तृतीया मध्यषड्जेन संमिता झल्लिकाभिधा ॥
इत्येवं मध्यमेलाख्यवादित्रस्वरयोजना।
अथास्याः पर्वसंदेशं वक्ष्ये लक्ष्यैक संमतम् ॥
मेरोः पुरस्तात्पर्वाणि षडस्यामपि विन्यसेत्।
तन्त्रीचतुष्टये चैवं प्रत्येकं षट्सु पर्वसु ॥

ये स्वरास्संप्रसूयन्ते क्रमशस्तांप्रचक्ष्महे।
आद्या तन्त्र्यानुमन्द्राख्यपञ्चमाञ्चितया क्रमात् ॥
शुद्धश्च दैवत. शुद्धो निषादश्च ततः परम्।
कैशिक्याख्यनिषादश्च काकल्याख्यनिषादकः ॥
षड्जर्षभौ च जायन्ते षट्सु पर्वसु षट्क्रमात्।
तन्त्र्या द्वितीयया मन्द्रषड्जगर्जितया पुनः ॥
शुद्धश्च रिषभश्शुद्धगांधाराख्यस्स्वरस्ततः।
साधारणाख्य गांधारो गान्धारोन्तरसंज्ञकः ॥
शुद्धमध्यमनामा च वराली मध्यमस्ततः।
क्रमादमी षट्स्वरास्स्युः षट्सु तेष्वेव पर्वसु ॥
मंद्रपञ्चमशोभिन्या तन्त्र्या चाथ तृतीयया।
शुद्धश्च धैवतश्शुद्धो निषादश्च ततःपरम् ॥
कैशिक्याख्यनिषादश्च काकल्याख्यनिषादकः।
षड्जः शुद्धर्षभश्चेति स्वराः षट्सु च पर्वसु ॥
तन्त्र्या तुरीयया मध्यषड्जगर्जितया पुनः।
शुद्धश्च रिषभः शुद्धगान्धाराख्यस्स्वरस्ततः ॥
साधारणाख्यगान्धारो गान्धारोऽतर संज्ञकः।
शुद्धमध्यमनामा च वरालीमध्यमस्ततः ॥
एते स्वराः प्रजायन्ते षट्सु तेष्वेव पर्वसु।
वराली मध्यमस्याग्रे त्रीणि पर्वाणि विन्यसेत् ॥
पर्वसु त्रिषु चैतेषु तन्त्र्या तावत्तुरीयया।
क्रमेण संप्रसूयन्ते पधनीति त्रयस्स्वराः ॥
तदूर्ध्वं सप्तपर्वाणि विनिवेश्यानि तेष्वथ।
आद्यं तु दीर्घपर्वं स्यात्प्रवाले तारषड्जकम् ॥
रिगादिषट्स्वरोत्पत्त्यै ह्रस्वपर्वाणि षट् पुनः।
पीठे संवेशनीयानि तदग्रे पर्वसप्तमम् ॥
अतिताराख्यषड्जस्य स्थितये विनिवेशयेत्।
शद्धर्षभकरं ह्रस्वं पर्वपीठे यथा भवेत् ॥
तथा प्रवाले पीठं च वैणिकैर्विनिवेश्यताम्।
मेरोः परस्तादपर्वं सप्तमं पञ्चमाभिधम् ॥
अनेन सहजातानि पर्वाण्येकादश क्रमात्।
एतेषु तारषड्जातितारषड्जाख्यपर्वणी ॥
द्वे पर्वणी पञ्चमयोश्चत्वारि स्युर्ध्रुवाणि हि।
अन्यानि सप्त पर्वाणि तत्तद्रागानुसारतः ॥
उत्पाद्योत्पाद्य वेश्यानि सकलस्वरसिद्धये।
अस्यां दीर्घाणि पर्वाणि दश ह्रस्वानि सप्त च ॥

एषैकरागमेलाख्यवीणैवं सति जायते ।
प्रवाले दीर्घपर्वाणि वेश्यानि द्वादश क्रमात् ॥
एकादश ह्रस्वपर्वाण्यथ पीठे निवेशयेत् ।
सर्वस्थानेषु सकलस्वराणां सिद्धये यदि ॥
तत्सर्वरागमेलाख्यवीणैवं सति जायते ।
न कैशिकीनिषादोऽस्यामस्ति पीठस्थपर्वसु ॥
वादयन्ति हि तत्स्थाने काकलीमेव वैणिकाः ।
पीठेऽपि केचित्कैशिक्याः पर्व ह्रस्वं प्रकुर्वते ॥
पीठे द्वादश पर्वाणि तेन जातानि तन्मते ।
लक्षितैवं मध्यमेलवीणा भेदद्वयान्विता ॥
एतस्यामपि वीणायां स्वराणामेकविंशतेः ।
शुद्धायामिव मन्द्रादिस्थानानीति विनिश्चयः ॥
प्रथमादिषु तन्त्रीषु तद्वदित्येव निश्चयः ।
तन्त्रीराद्यानुमन्द्राख्यपञ्चमेन समन्विता ॥
मध्यमेलाख्यवीणायां तिस्रस्स्थानविभाजने ।
वरास्तद्व्यक्तिलाभाय तां निबध्नन्ति वैणिकाः ॥
मन्द्रषड्जादिकास्वेव तन्त्रिकासु तिसृष्वतः ।
स्वरान्स्थानविभागेन दर्शयाम्येकविंशतिम् ॥
तत्र तन्त्र्यां द्वितीयायां मन्द्रषड्जो निवेश्यते ।
तस्यां ग्राह्यास्सरिगमाश्चत्वारो निषधादयः ॥
मन्द्रपञ्चमनामा यस्तृतीयायां निवेशितः ।
तस्यां पधनिनामानो ग्राह्या न सरिगादयः ॥
मन्द्रस्थानस्वरास्सप्त तदेवं संप्रदर्शिताः ।
मध्यषड्जसमेतायां तुर्यतन्त्र्यामथ स्वराः ॥
सप्त ग्राह्यास्सारिगमपधनीति क्रमादमी ।
मध्यस्थानगता एते सप्तसंदर्शितास्स्वराः ॥
प्रवालस्यान्तिमस्थूलपर्वप्रभृतिषु स्वराः ।
ग्राह्याष्षड्जादयस्सप्तपीठस्थह्रस्वपर्वसु ॥
तारस्थानगता एवं स्वरा सप्त निदर्शिताः ।
एकविंशतिरित्युक्तास्स्वरास्स्थानत्रये स्फुटम् ॥
एतेषु मन्द्रषड्जस्य ये स्वरास्स्युरधस्तनाः ।
तेऽनुमन्द्राभिधस्थानस्वरा इति विनिर्णयः ॥
येऽतितारस्थषड्जस्य स्वरस्याग्रे व्यवस्थिताः ।
तेऽतितारस्वरा ज्ञेया इति सर्वं समञ्जसम् ॥
अत्रापि स्थानगणने रामो बभ्राम तद्यथा ।
तन्त्रीराद्यानुमन्द्राख्यपञ्चमेन युता यदि ॥

द्वितीया मन्द्रषड्जेन तन्त्रिका संयुता यदि ।
मन्द्रपञ्चमसंयुक्ता तृतीया तन्त्रिका यदि ॥
तुरीया मन्द्रषड्जेन तन्त्रिका चेत्समन्विता ।
तदा भवेन्मध्यमेलवीणेत्येतदसङ्गतम् ॥
द्वितीयायां तन्त्रिकायां मन्द्रषड्जो निवेशितः ।
पुनः कथं तुरीयायां मन्द्रषड्जो निवेश्यते ॥
उच्चोच्चतरनादिन्यश्चतस्रः खलु तन्त्रिकाः ।
द्वितीयतुर्ययोस्तासु द्वयोस्तन्त्रिकयोरपि ॥
मन्द्रषड्जाभिधस्यैकस्वरस्य विनिवेशनम् ।
अयुक्तमिति नैतत्किं पशुपालोऽपि बुध्यते ॥
तस्मादस्माभिरुक्तेन वर्त्मनैव विचक्षणैः ।
ज्ञातव्यं मध्यमेलायां तन्त्रीषु स्वरयोजनम् ॥
स्थानत्रयस्वराश्चोक्तवर्त्मनात्वेकत्रिंशतिः ।
एकविंशति संख्याकस्वरेष्वेतेषु वादकैः ॥
गायकैश्च चतुर्दण्ड्यां ग्राह्यास्सप्तदशैव तु ।
तथा हि वादकास्सप्तमध्यस्थानगतान्स्वरान् ॥
तारस्थानगतान् सप्त षड्जमप्यतितारगम् ।
धनीचमन्द्रस्थानस्थावेवं सप्तदशस्वरान् ॥
समादाय चतुर्दण्डीवादानं कुर्वतेऽखिलाः ।
अयं च सारणीमार्गे वैणिकैः परिकल्पितः ॥
मध्यस्थानस्थयोर्धन्योर्मध्येत्वन्यतरस्स्वरः ।
गृह्यते सारणीमार्गे चतुर्दण्डी प्रसिद्धये ॥
प्रायशस्तेन सञ्जाताष्षोडशैव स्वराः खलु ।
तथापि मन्द्रस्थानस्थधन्याख्यस्वरयोर्द्वयोः ॥
क्वचित्क्वचिदुपादानात्स्वरास्सप्तदशेरिताः ।
गायकास्तु स्वरान्सप्त मन्द्रस्थानसमुद्भवान् ॥
मध्यस्थानस्वरान्सप्त तारषड्जं तथाऽपरम् ।
धनी चैवानुमन्द्रस्थावेवं सप्तदश स्वरान् ॥
समादाय चतुर्दण्डीगानं सर्वेऽपि कुर्वते ।
अत्रापि चानुमन्द्रस्थधन्याख्यस्वरयोर्द्वयोः ॥
सारणीमार्गसंबन्धी स्वरोऽन्यतर ईरितः ।
क्वचित्कत्वामभिप्रेत्य स्वरास्सप्तदशेरिताः ॥
एतेषामग्रतो ये स्युस्स्वरा ये चाप्यधस्तनाः ।
क्वाचिद्गीतप्रबन्धादौ दृश्यन्ते ते स्वराः खलु ॥
तत्पुनस्संप्रदायज्ञैस्तानप्याचैरनादृतम् ।
यद्येवं मध्यताराख्यस्थानगैरेव तु स्वरैः ॥

निर्वाहस्त्याच्चतुर्दण्ड्यां मन्द्रस्थानं वृथा भवेत् ।
इत्याशङ्क्यैव मन्द्राख्यस्थानसाफल्यसिद्धये ॥

पक्वसारणिमार्गोऽयं वैणिकैः परिगृह्यते ।
पक्वसारणिमार्गस्तु लक्ष्यतामिति चेच्छृणु ॥

शुद्धमेलाख्यवीणायां पक्वसारणि वर्त्मनि ।
ये गृह्यन्ते विकल्पेन तान्स्वरानभिदध्महे ॥

मन्द्रस्थानजुषां सप्तस्वराणां गणनाविधौ ।
आद्यतन्त्र्या ग्रहीतव्यास्स्वरास्सरिगमाभिधाः ॥

चत्वार एव षड्जाद्याः पञ्चमादिर्नगृह्यते ।
पक्वसारणिमार्गे तु तया तन्त्र्याऽऽद्यया पुनः ॥

विकल्पेन ग्रहीतव्यः पञ्चमश्शुद्धधैवतः ।
अथ द्वितीयया मन्द्रपञ्चमस्वरयुक्तया ॥

ग्राह्याः पधनिनामानस्स्वरा न सरिगादयः ।
पक्कसारणिमार्गे तु तया तन्त्र्या द्वितीयया ॥

उपादेया विकल्पेन मध्यस्थानसमुद्भवाः ।
षड्जश्शुद्धर्षभश्चैव शुद्धगान्धार इत्यपि ॥

तन्त्र्या तृतीयया चाऽथ मध्यषड्जेन युक्तया ।
मध्यस्थानस्वराणां तु गणने सरिगाभिधाः ॥

त्रय एव स्वरा ग्राह्या न पुनर्मध्यमादयः ।
पक्कसारणिमार्गे तु तया तन्त्र्या तृतीयया ॥

शुद्धमध्यमसंज्ञश्च वराली मध्यमस्तथा ।
पञ्चमश्चेति संग्राह्या विकल्पेन त्रयस्स्वराः ॥

मध्यस्थानसमुद्भूता इत्यस्माभिर्विनिश्चितम् ।
शुद्धमेलाख्यवीणायां पक्कसारणि वर्त्मनि ॥

निर्वाहकाश्चतुर्दण्ड्यास्स्वराः पञ्चदशैव तु ।
अनुमन्द्रस्थयोर्धन्योरस्थाने स्यान्मध्यषड्जकः ॥

इत्येवं शुद्धमेलायां पक्कसारणि वादने ।
ये गृह्यन्ते विकल्पेन स्वरास्ते संप्रदर्शिताः ॥

अथातो मध्यमेलाख्यवीणायामभिदध्महे ।
वादने पक्कसारण्या ये स्वरास्तान्विकल्पितान् ॥

मन्द्रस्थानजुषां सप्तस्वराणां गणनाविधौ ।
आद्यतन्त्रिकया ग्राह्यास्स्वराः सरिगमाभिधाः ॥

चत्वार एव न पुनः पञ्चमाद्यास्तदुद्भवाः ।
पक्कसारणि मार्गे तु ते गृह्यन्ते विकल्पिताः ॥

मन्द्रपञ्चमशोभिन्या तन्त्र्या चाथ द्वितीयया ।
पधनीति स्वरा ग्राह्यास्त्रयो न सरिगादयः ॥

पक्कसारणि मार्गे तु ते गृह्यन्ते विकल्पिताः ।
ततश्च मध्यमेलायां पक्कसारणिवर्त्मनि ॥

ग्राह्यन्ते पक्कसारण्यां गाने दण्ड्यामिव स्फुटम् ।
कर्णाटान्ध्रतुरुष्कादिपदगानेषु संग्रहम् ॥

तारस्थानरिगादीनां कुर्वते खलु गायकाः ।
गाने च वादने चैव स्वराणामेकविंशतेः ॥

विनियोगप्रकारस्तु विविच्य परिदर्शितः ।
लक्षितैवं मध्यमेलवीणा लक्ष्यानुसारतः ॥

वेङ्कटमखी

**मध्या**—नायिका

प्रियं प्रार्थयते मध्या रतिव्यायामकेलिषु ।
स्वयं पुनः प्रवर्तेत सहते सुरतश्रमम् ।
सोपालम्भं वचो वक्ति सापराधे प्रिये मिथः ॥

शारदातनयः

मध्या संलक्ष्ययौवना ।
तुल्यलज्जास्मरा ज्ञेया मोहान्तसुरतक्षमा ॥

कुम्भः

प्रोद्यद्द्वितीयनवयौवनवर्तमाना
तारुण्यपूर्णसकलातयवा तु मध्या ।
मन्दाक्षमन्मथविलासविमिश्ररम्या
मोहावसानमदनोत्सवभेदयोग्या ॥

नीलकण्ठः

**मध्योत्तरादिरधरः**—वीणायां धातुः

तारयोर्मध्ये मन्द्रः ।
मध्योत्तरदिरधरे तारौ मध्यस्थमन्द्रकौ ॥

शार्ङ्गः

**मनः**—देशीलास्याङ्गम्

शृङ्गाररससम्पन्नः कोऽप्यपूर्वो गुणो यदा ।
लक्ष्यते शिक्षिताद्योतिसूक्ष्मोऽतिभयभावभाक् ॥
अन्य एव तु नाट्याङ्गक्रियायोगाद्यदा लयैः ।
तदा मनो मनोहारि सुमनोभिरिदं मतम् ॥

अशोकः

**मनस्वी**

क्लेशैरुपहतस्यापि मानसं सुखिनो यथा ।
स्वकार्येषु स्थिरं यस्य मनस्वी स पुमान् स्मृतः ॥

भावविवेकः

मनुवंशः

अङ्गुलैः स्याच्चतुश्चत्वारिंशताऽत्र सयूकया ।
लिक्षाद्वयेनाधिकया मनुर्दण्डप्रमाणतः ॥
शीर्षप्रदेशतस्त्यक्त्वा सार्धमङ्गुलकद्वयम् ।
एकाङ्गुलं वक्त्ररन्ध्रं भवेज्जातिमुखाभिधम् ॥
मुखरन्ध्रात्ताररन्ध्रमङ्गुलानि चतुर्दश ।

कुम्भः

परित्यज्य भवेत्सार्धयवत्रितयसम्मितम् ।
सप्तात्र स्वररन्ध्राश्च ताररन्ध्रमितानि च ॥
कर्तव्यानि तदन्यानि तेषामप्यन्तरं भवेत् ।
अङ्गुलत्रितयं पादन्यूनं षट् लिक्षिकाधिकम् ॥
प्रत्येकं मिलितं तच्च सप्तानामन्तरालगम् ।
लिक्षाद्वयं यवयुगं यूकैकैकाङ्गुलानि च ॥
एकोनविंशतिर्मानं तथा रन्ध्राष्टकस्यतु ।
अङ्गुलानि च चत्वारि तथा यवचतुष्टयम् ।
वंशस्य प्रान्तभागे तु सार्धमङ्गुलकद्वयम् ॥
अवशिष्टं भवेन्मानं मनुवंशे समासतः ।
अयं सर्वेषु वंशेषु परमः परिकीर्तितः ॥
त्रिस्थानस्वरसंभूतेः साधकत्वात्पुरातनाः ।
वर्णालङ्कृतिधात्वादिमूर्छनाद्यमनेकधा ।
वदन्ति वाद्यमेतस्मिन् वाद्यतत्वविशारदाः ॥

कुम्भः

मनवः—चतुर्दश । तस्मात्फूत्कारताररन्ध्रयोः चतुर्दशाङ्गुलान्तरत्वेन मनुवंश इत्युक्तम् ।

मनुष्यशीला—स्त्री

आर्जवाभिरता नित्यं दक्षा क्षान्तिगुणान्विता ।
विभक्ताङ्गी कृतज्ञा च गुरुदेवार्चने रता ॥
धर्मकामार्थनिरता वश्याऽहङ्कारवर्जिता ।
सुहृत्प्रिया सुशीला च मानुषं सत्त्वमाश्रिता ॥

भरतः

मनोज्ञगमना—ध्रुवावृत्तम्

सजसंज्ञिता यदि गणा भवन्ति चरणेषु चाकृतिसमुत्था ।
गुरु चान्त्यमेव यदि तां मनोज्ञगमनां प्रवदन्ति खलु नाम्ना ॥
कमलायरस्सि भमरायि अम्मि सुसुवंध पदुमंमि ।
कमलाकरे भ्रमरायिते सुसुगन्धपद्मे ।

भरतः

मनोज्ञा—ध्रुवावृत्तम् (सप्ताक्षरम्)

अस्या अभिप्रकाशिनीति नामान्तरमस्ति ।
यदि चतुर्थमन्त्यं गुरु तथैव षष्ठम् ।
भवति सा तु नाम्ना निगदिता मनोज्ञा ॥

कुसुमगंधवाही—(नरगाः) भरतः

मनोधर्मः—देशीलास्याङ्गम्

अपूर्वभङ्गीरुचिरमङ्गोपाङ्गैर्मनोहरैः ।
मनोऽनुकूलया वृत्या रचितं चोत्तरोत्तरम् ।
यन्नृत्तं समनोधर्म इत्युक्तं नृत्तवेदिभिः ॥

वेमः

मनोन्मथनम्—नृत्तकरणम्

सम्मतं स्वस्तिकौ हस्तौ व्याधूतं विस्मया च दृक् ।
चतुरस्रा यत्र चारी मनोन्मथननामकम् ॥

नन्दी

सम्मतं, स्थानं । चतुरस्रा, गतिः ॥

मनोरथः --लक्षणम्

हृदयस्थस्य भावस्य सुश्लिष्टार्थप्रदर्शकम् ।
अन्यापदेशकथनैर्मनोरथ इति स्मृतः

भरतः

यथ—णिग्गन्ध इति गाथायां (सप्तशती—५—६४) अत्र पादपमारोहन्नेव वृद्धविदग्धया कश्चिद्दुराशय पुंश्चलीसङ्गमोत्सुकः स्वाभिप्रायद्योतनेन प्रबोध्यते । तत्प्रस्तुतमेवान्यदपदिश्यम् । अत एवाप्रस्तुतप्रशंसा । सापि चात्रैवान्तर्भूता ।

अभिनवः

हृदयस्थस्य वाक्यस्य गूढार्थस्य विभावकम् ।
अन्यापदेशैः कथनं मनोरथ इति स्मृतम् ॥

भरतः

यथा—विकटनितम्बायाम्—नायिका—आह अन्यास्वित्यादि अत्रात्मानमेव सुमनोलतात्वेनापदिशति ।

मनोरमः—प्रबन्धः

पाटैर्बिरुदतेन्नैश्च प्रबन्धस्स्यान्मनोरमः ॥

जग-मेहः

मनोरमा—मालावृत्तम्

चतुर्मात्रिकास्त्रयः जः गः

विरहाङ्कः

—श्रुतिः

तारषड्जस्य चतुर्थी श्रुतिः ॥

पार्श्वः

**मनोवती**—प्राकृते मात्रावृत्तम्

चतुर्मात्रगण एकः पञ्चमात्रिक एकः गश्च ।
४+५+ग=

विरहांकः

—प्रभुवावृत्तम् (त्रयोदशाक्षरं छन्दः)

यदि पञ्चमं हि स तृतीयनैधनं
नवमं द्वितीयमपि तस्य तादृशम् ।
चरणे गुरुणि यदि सातिपूर्विका
जलती बुधैर्निगदिता सा मनोवती ॥
अवलंबिऊण रयणीमुहे ससी ।
अवलम्ब्य रजनीमुखं शशी ॥
मनोवती भयार्तानां तपस्विद्विजमन्त्रिणाम् ।
पञ्चपाण्योजसा चैषा चिन्ता पञ्चमरागजा ।

सजसजगाः ॥

नान्यः

**मनोहरम्**

यस्मिन्सक्तं मनः पुंसां तान्येव ह्रियते पुनः ।
अन्येभ्यो यच्च हरति तन्मनोहरमुच्यते ॥

भावविवेकः

**मनोहरः**—मेलरागः

शुद्धमेलसमुद्भूतः षड्जादिः समनोहरः ।
आरोहे गरिमैस्त्यक्तः आन्दोलितपसान्वितः ॥
धैवतं प्राप्य तस्माच्च सन्निवृत्तोऽत्र कम्पितः ।
पञ्चमात् षड्जमासाद्य निवृत्तो मध्यमं प्रति ।
तत्राप्यान्दोलितो गे च रौ च स्वस्थानशोभितः ॥

द्वितीयप्रहरोत्तरगेयः ॥

अहोबिलः

गान्धारग्रामे नारदीयतानः

निरिगमप ?

नान्यः

—मेलरागः

शङ्कराभरणमेलजोऽयं रागः ।

तथा मध्यमवक्रं स्यादवरोहे मनोहरे ॥

परमेश्वरः

**मनोहरी**—मेलरागः ( खरहरप्रियामेलजन्यः )

(आ) स ग रि ग म प ध स.
(अव) स ध प म ग रि ग स.

मञ्च

(आ) स ० ० ० ग म ० प ० ० ० नि स.
(अव) स नि ० ० ध प ० म ग ० ० ० स.

मेललक्षणे

**मनोहरीरागध्यानम्**

सुधावर्णचेलां मदायत्तलीलां
सदानङ्गसान्निध्यसङ्गीतलोलाम् ।
कटिन्यस्तहस्तां कुचाग्रान्यहस्तां
मनोहारिणीं चिन्तयेऽहं शुभाङ्गीम् ॥

रागसागरः

**मन्थरम्**—दर्शनम्

मन्थरं तत्समाख्यातं यावच्छ्रुतिविकस्वरम् ।

शारदातनयः

**मन्थुल्लिका**—श्रव्यकाव्यम्

यस्यामुपहासः स्यात्पुरोहितामात्यतापसादीनाम् ।
प्रारब्धानिर्वाहे सापि हि मन्थुल्लिका भवति ॥

क्षुद्रकथाशब्दे द्रष्टव्यम् ॥

भोजः

**मन्दा**—नासिका

ईषच्छ्वासोच्छ्वासयुक्ता नासा मन्दोदिता बुधैः ।
चिन्तानिर्वेदयोश्शोके तथौत्सुक्ये नियुज्यते ॥

अशोकः

**मन्दारगौलः**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि म ग म प ध प नि स.
(अव) स नि ध प म रि म ग स.

मञ्च

**मन्दारी**—मेलरागः (नाभनारायणीमेलजन्यः)

(आ) स रि ग म प नि स.
(अव) स नि प म रि ग रि स.

मञ्च

**मन्दारीगौलीरागध्यानम्**

मन्दारमालाञ्चितकेशजालां
वृन्दावनान्तः प्रविलासलीलाम् ।
इन्दीवराक्षीयुतनृत्तशीलां
मन्दारगौलां मनसा स्मरामि ॥

रागसागरः

**मन्दालीरागध्यानम्**

सेवन्तिकासुरभिदामविलोलकेशां
सीमन्तिनीकरसमर्पितचारुवीणाम् ।
कूर्मासने निवसितां सुरशाखिमूले
मन्दालिकां मनसि मे सततं स्मरामि ॥

रागसागरः

**मन्देमारी**— मेलरागः (वनस्पतिमेलजन्यः)
(आ) स रि म प नि – स.
(अव) स नि ध प म ग रि – स.

मल्ल

**मन्नाङ्करी**—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स ग म नि ध नि प ध नि स.
(अव) स ध प म प ग रि स.

मल्ल

**मन्मथः**—देशीतालः
द्रुतद्वयं गुरुश्चैकस्तालो मन्मथसंज्ञके
० ० ऽ

सोमराजः

लौ द्रौ लो गौ च मन्मथः ॥ ० ० । ऽ ऽ

मदनः

**मन्मथलता**—मेलरागः (कामवर्धिनीमेलजन्यः)
(आ) स नि स रि ग म प ध प स.
(अव) स ध प म ग रि स नि स.

मल्ल

**मन्द्रः**—
अलङ्कारविधिशब्दे द्रष्टव्यम्।

**मन्द्रतारप्रसन्नः**—वर्णालङ्कारः (सञ्चारी)
प्रसन्नादष्टमारंभः तस्मादेवावरोहणे।
मन्द्रतारप्रसन्नाख्यमलङ्कारं तथा विदुः॥
सा स नि ध प म ग रि स.

जगद्धरः

**मन्द्रमध्यः**—वर्णालङ्कारः (सञ्चारी)
पूर्वोदिताः कला यत्र मध्यमन्द्रतया स्थिताः।
मन्द्रमध्यमलंकारं तमाहुर्गानपारगाः॥
गंसरि संरिग पगंम धमंप निपंध।

पण्डितमण्डली

**मन्द्रस्वरः**
नीचैः स्वरेण यद्गानं स मन्द्रस्वर उच्यते।

तुलजः

**मन्द्रा**—श्रुतिः
पञ्चमस्य तृतीया श्रुतिः। हनुमन्मतेऽष्टादशैव श्रुतयः।
(पञ्चमोऽत्र त्रिश्रुतिः)
मन्द्रषड्जाद्या श्रुतिः।

मण्डली

मन्द्रधैवततृतीया श्रुतिः॥

मण्डली

षड्जे तृतीया श्रुतिः।

**मन्द्रादिः**—वर्णालङ्कारः (सञ्चारी)
स्वरं पूर्वं समुच्चार्य व्यत्ययात्तु स्वरद्वयम्।
त्रिस्वरैका कला मन्द्रेणाङ्किताद्ये परा पुनः॥
आदावन्तस्थितं कृत्वा पूर्ववत्तु स्वरान्विता।
संगरि रिंमग गंपम मंधप पंनिध.

जगद्धरः

**मन्द्रान्तः**—वर्णालङ्कारः (सञ्चारी)
अन्त्यमन्द्रकला यत्र मन्द्रान्तः परिकीर्तितः।
गरिसा मगरी पमगा धपमा निधपा

पण्डितमण्डली

**मम्मटः**
सङ्गीतरत्नमालानाम्नो ग्रन्थस्य कर्तेति सङ्गीतनारायणादवगम्यते। काव्यप्रकाशकाराद्भिन्न एव स्यात्।

**मयूरहस्तः**—हस्तः
सन्दंशहस्ततर्जन्या पर्वाङ्गुष्ठस्य योजयेत्।
मयूरहस्तो भ्रमति मयूरे विनियोगवान्।
कुक्कुटादिषु भेदेषु हस्तो ज्ञेयो विशारदैः

गौरीमतम्

—हस्तः
अस्मिन्ननामिकाङ्गुष्ठे श्लिष्टे चान्याः प्रसारिताः।
मयूरहस्तः कथितः करटीकाविचक्षणैः॥
(अस्मिन्निति कर्तरीमुखहस्ते)
पुरोमुखः पुरो भागेरियत्तश्शिखिमुखे करः।
ऊर्ध्वाधो भागचलितो लतायां संप्रदर्शयेत्॥
पार्श्वभागे स्थितौ तौ चेद्विहङ्गार्थनिरूपणे।
मुखस्थले तु चलितो वमनार्थे नियुज्यते॥
फालभागे तु चलित अलकापनये तथा।
फालमध्ये तु चलितस्तिलकार्थनिरूपणे॥
नेत्रस्थानेप्यधोभागे चलितो बाष्पपूरणे।
पुरोभागे तु चलितश्शास्त्रवादे प्रसिद्धके॥
मयूरहस्तक्षेत्राणि भरतागमकोविदैः।

विनायकः

—स्वरजातिः
स्वराणामथ सप्तत्या मयूरः परिकीर्तितः।

औमापतम्

षड्जो मयूरपर्यायशब्दैरुच्यते॥

**मयूरमणिः**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि म प ध स.

(अव) स नि ध प म रि स.

मञ्ज

**मयूरललितम्**—नृत्तकरणम्

आयतं कं परावृत्तं साची दृष्टिरुदीरिता ।
चतुरस्रः करश्चारी ह्यर्धमण्डलसंज्ञका ।
यत्रेत्थं वर्तते नृत्तं मयूरललितं मतम् ॥

नन्दी

अत्र आयतं स्थानम् । कं शिरः । गतिः अर्धमण्डली ।

यथा—

भूम्यां स्पृष्टतलौ मन्दं बाह्यतो भ्रमितौ द्रुतात् ।
यत्राङ्घ्री गच्छतः पश्चात् सार्धमण्डलिका मता ॥

—करणम्

आचरेद्रेचितौ हस्तावुरावाकुञ्च्य वृश्चिकम् ।
अङ्घ्रिं यत्र भ्रमरिकां विदध्यान्नर्तको यदि ।
तत्तथा करण प्रोक्तं मयूरललिताभिधम् ॥

अशोकः

"मयूरललितं नृत्ते मयूरस्य तदिष्यते" इति ज्यायनः ॥

**मयूरवसन्तः**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग म ध नि ध स.

(अव) स ध प म रि स.

मञ्ज

—मेलरागः (गमनश्रममेलजन्यः)

(आ) स रि ग म प ध नि स.

(अव) स नि प ध नि ध प म रि म ग रि ग स.

मञ्ज

**मयूरसारिणी**—दशाक्षरछन्दः

शिखिसारिणीवृत्तस्य नामान्तरम् ।

**मयूरसारी**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग रि म नि ध नि स.

(अव) स नि प ध प म ग रि स.

मञ्ज

**मयूरी**—गतिः

प्रपदाभ्यां बहिस्स्थित्वा कपित्थं हस्तयोर्वहन् ।
एकैकजानुचलनान्मयूरगतिरिष्यते ॥

नाट्यदर्पणे

**मरणम्**—व्यभिचारिभावः

व्याधिजमभिघातजं च । तत्रान्त्रकृच्छ्रशूलदोषवैषम्याथगण्डपिटकज्वरविषूचिकाभिरुत्पद्यते। तद्व्याधिप्रभवम्। अभिघातजं तु शस्त्राहिदंशविषपानश्वापदगजतुरगरथपशुयानपातविनाशप्रभवम्। तत्र व्याधिजे—विषण्णगात्रव्यायताङ्गविचेष्टितनिमीलिताक्षिनयनहिक्काश्वासोपेतानवेक्षितपरिजनाव्यक्ताक्षरकथनादयोऽनुभावाः । अभिघातजे—शस्त्रक्षताहिदष्टविषपीतगजादिपतितश्वापदहताः नानाप्रकारा अभिनेतव्याः । तत्र शस्त्रक्षते सहसा भूमिपतनवेपनस्फुरणादयोऽभिनेयाः । अहिदष्टविषपीतयोर्विषवेगो यथा— कार्श्यवेपथुविदाः हिक्काफेनस्कन्धभङ्गजडतामरणानि इत्यष्टौ विषवेगाः ।

भरतः

प्रसिद्धमपि वक्तव्यं मरणं भूतपञ्चता ।
विरहव्याधिदुष्कर्मविधिभ्यस्तस्य संभवः ।
जनताशोकविण्मूत्रस्तम्भनिश्चेष्टतादयः ॥

सर्वेश्वरः

रोमाञ्चो मुखशोषश्च वैवर्ण्यं चैव वेपथुः ।
हिक्का श्वासश्च सम्मोहः सप्तैता विषविक्रियाः ॥ इति मतान्तरे

—चित्राभिनयः

मरणं द्विविधं प्रोक्तं व्याधिजं चाभिघातजम् ।
रोगाधिक्येन जनितं मरणं व्याधिजं स्मृतम् ॥
वियोगोद्रेकजनितं मरणं चाभिघातजम् ।
मुखस्थाने मयूरं तु शिरसः पार्श्वभागके ॥
पताकं दर्शयेच्चैव विपूची मरणे स्मृतम् ।
कण्ठस्थाने त्वर्धचन्द्रं बध्वा तु तदनन्तरम् ।
पुरोभागे पाशहस्तस्त्वभिघाते विधीयते ॥

विनायकः

—विरहावस्था

सर्वैः कृतैः प्रतीकारैः यदि नास्ति समागमः ।
कामाग्निना प्रदीप्ताया जायते मरणं ततः ॥

भरतः

**मराला**—देशीचारी

नन्द्यावर्ते स्थितावङ्घ्री पार्ष्णिप्रपदरेचितौ ।
पुरतः प्रसृतौ यत्र सा मरालाभिधीयते ॥

वेमः

**मरुवसीमन्तः**—मेलरागः (चलनाटमेलजन्यः)

(आ) स म ग म प ध प स.

(अव) स नि ध प स नि ध प म ग रि स.

मञ्ज

**मरू—नृत्तम्**

स्थाने कुञ्चितके वदन्ति विबुधास्त्वङ्गैरुपाङ्गैस्तथा
प्रत्यङ्गैः करवर्तनैश्च करणैर्युक्तं पताकेन च ।
दिक्चक्राभिमुखं च नृत्यमसकृत्सव्यापसव्यं मुहुः
आद्यन्ते भ्रमरीमरू निगदिता सङ्गीतसूर्योदये ॥

वेदः

**मर्त्यद्रुमः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)**

(आ) स रि म ग म प नि स.
(अव) स नि ध प म ग रि स.

मज

**मर्दितः—पादः**

तिर्यक्चलेन मृद्नाति भुवं यस्सहि मर्दितः ।

अशोकः

नाट्ये नृत्ते च योज्यते ।

वेमः

मर्दितः किङ्किणीविधौ ।

ज्यायनः

तिर्यक्तलेनाददाति भ्रामयंस्तु स मर्दितः ।
मर्दने पेषणे त्रासे योज्यौसावपसर्पणे ॥

सोमेश्वरः

**मर्मतालः— देशीतालः**

रसौ नगौ मर्मताले मात्ना अत्र चतुर्दश ।

तालप्रस्तारः

**मर्माक्षिरी—मेलरागः (सुवर्णाङ्गीमेलजन्यः)**

(आ) स रि ग म प नि स.
(अव) स नि ध प म ग म रि स.

मज

**मलकम्—स्थानकम्**

मलकं तन्निगदितं मण्डले स्थानके स्थितः ।
हृदये न्यस्य शिखरौ पृष्ठं नम्रं शिरो मुहुः ।
कम्पयेत्सौष्ठवेनैव नर्तको विमुखस्थितः ॥

वेदः

**मलपः—वाद्यप्रबन्धः**

बद्धश्शुद्धादिभिः पाटैः कृतो वर्णसरेण वा ।
क्वापि वर्णोत्करैर्दीप्तैः कलितः क्वापि कोमलैः ॥
भूरिद्रुतलयः प्रान्ते लयः प्रोक्तो विलम्बितः ।
विस्तृते मलपः प्रोक्तः प्रायशो दीप्तनर्तने ॥

वेमः

यत्रोद्ग्राहः सकृद्द्विर्वा ध्रुवकोऽथ सकृद्भवेत् ।
व्यापकाक्षरमिश्रैस्तद्धिधों थों टें देंभिरक्षरैः ।
बद्धं निरन्तरयतिं प्राहुस्तं मलपं परे ॥

शार्ङ्गः

व्यापकाक्षरेति । कादयष्षोडश ।

द्विवारमेकवारं वा यत्रोद्ग्राहो विधीयते ।
ध्रुवो नानाविधो यत्र मलपं तं प्रचक्षते ॥

सोमेश्वरः

उद्ग्राहेण सकृद्द्विर्वा वाद्ये चाथ यदृच्छया ।
दें थों टेंकार तद्धीति व्यापकैरक्षरैर्युतम् ।
निरन्तरयतिप्रायो मुनयो मलपं विदुः ।

सोमराजः

यत्र शुद्धादिभिर्बद्धः खण्डो वर्णसरेण वा ।
विशालः स्याद्द्रुतलयः पर्यन्ते तु विलम्बितः ॥
दीप्तैर्वर्णैः क्वचित्क्वापि कोमलैश्चारुगुम्फितः ।
यत्रासौ मलपः प्रोक्तः प्रायिको दीप्तनर्तने ॥
यत्रोद्ग्राहः सकृद्द्विर्वा ध्रुवकोऽथ सकृद्भवेत् ।
व्यापकाक्षरमिश्रैस्तद्धथों टों दोंभिरक्षरैः ।
बद्धं निरन्तरयतिं प्राहुस्तं मलपं परे ॥

शार्ङ्गः

**मलपपाटः—वाद्यप्रबन्धः**

पाटैर्मलपपाटः स्याद्विषमैर्मलपोपमः

शार्ङ्गः

यः खण्डो विषमैः पाटैर्वाद्यते मलपोपम ।
सोऽयं मलपपाटस्तु कथितो वाद्यकोविदैः ॥

वेमः

**मलपाङ्गम्—वाद्यप्रबन्धः**

मलपं वादयित्वाऽथ तत्राङ्गं वाद्यते यदा ।
तदा तु मलपाङ्गाख्यः प्रबन्धः परिकीर्तितः ॥

वेमः

मलपं वादयित्वा तु तदङ्गं तु ततस्तथा ।
पुनर्मलपवादेन मलपाङ्गमुदीरितम् ॥

सोमेश्वरः

मलपाङ्गं तु मलपेनाङ्गेन मलपेन च ।

शार्ङ्गः

मलयमारुतं—मेलरागः (चक्रवाकमेलजन्यः)
(आ) स रि ग प ध नि स.
(अव) स नि ध प ग रि स.

मञ्ज

मलयाङ्गी—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि ग प म प ध नि स.
(अव) स नि ध प म प ग रि स.

मञ्ज

मलयानिलः—देशीतालः
मलयानिलताले तु खण्डमिश्रौ लघू क्रमात्।

लक्ष्मणः

मलयानिलहस्तः
मध्यमानामिके वक्रे तर्जनी च कनिष्ठिका।
तयोरुपरि संस्थाप्यो मलयानिलहस्तकः॥
मलयानिलः पार्श्वभागे गवाक्षे मन्दमारुते।
पार्श्वभागे पार्श्वमुखः प्रभातार्थे नियुज्यते॥

विनायकः

मलहरी—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि म प ध स.
(अव) स ध प म ग रि स.

मञ्ज

—हस्तः
योज्यो मलहरी रागे ताले लाङ्गूलहस्तकः।

शृङ्गारः

मलहरीरागध्यानम्
शरदम्बुदनिभदेहां सुरतरुमूले निवासिनीं शुद्धाम्।
शिवपूजापरतन्त्रीं शरदरविन्दां मलाहरीं ध्याये॥

रागसागरः

मलिनं—दर्शनम्
यदश्रुलुलितालोकं मलिनं तदुदाहृतम्।

शारदातनयः

—मुखरागः
मलिनस्तु मनाक्‌श्यामो भवेद्भयजुगुप्सयोः।
निर्वेदादिषु भावेषु प्रयोज्योऽसौ यथोचितम्॥

वेमः

मलिना—दृष्टिः
ईषदस्पृष्टपक्ष्माग्रा किञ्चिद्दर्शिततारका।
निर्वेदे चाथ वैवर्ण्ये मलिनेयं प्रयुज्यते।

सोमेश्वरः

किञ्चित्कुञ्चत्पुटा लक्ष्याव्यावर्तितकनीनिका।
प्रस्पन्दमानपक्ष्माग्रा मलिनान्ता च या भवेत्॥
सा दृष्टिर्मलिना प्रोक्ता वैवर्ण्ये विकृते स्त्रियाः।
विकृतं तदसंलोपप्रियेण समयेऽपि यत्॥

अशोकः

मल्लः—देशीतालः
मल्लतालेऽङ्घ्रिलघवो विरामान्तं द्रुतत्रयम्।
।।।।०००

जगदेकः

(द्रुतद्वयमिति पाठः स्यात्)
मल्लतालेऽङ्घ्रिलघवो विरामांतद्रुतद्वयी।
।।।०००̇

कुम्भः

मल्लकः—भङ्गतालः
लः दचतुष्टयं लः दचतुष्टयं लौ।
।००००।००००॥

नान्यः

मल्लारः—रागः
धैवतांशश्च तन्न्यासः षड्जपञ्चमवर्जितः।
ताडितोऽयं निजस्थाने मल्लारश्चौडवस्स्मृतः॥

सोमेश्वरः

—मेलरागः
षड्जादिमूर्छनोपेतः षड्जत्रयसमन्वितः।
गनिर्हीनोऽन मल्लारो वर्षासु सुखदायकः॥
यतो वर्षासु गेयोऽयं मेघ इत्यपि कीर्तितः।
अकालरागगानेन जातदोषं हरत्ययम्॥
षड्जत्रय इति। ग्रहांशन्यासाः षड्ज एव। सर्वदा गेयः॥

अहोबिलः

—रागः
लक्षणं विनियोगं च भवेन्मल्लारिकासमम्।
मल्लारस्य गनित्यागः पञ्चमस्फुरणं भवेत्॥

जगदेकः

धैवतांशग्रहन्यासः षड्जगान्धारवर्जितः।
समन्द्रः पञ्चमाकम्पी मल्लारीति च कथ्यते॥

सोमरागः

—( वंशे वादनक्रमः )

धैवतं तु ग्रहं कृत्वा सकृदाहत्य च ग्रहम् ।
तस्मात्परं समुच्चार्य पुनः स्थायिस्वरं व्रजेत् ॥
तस्मात्परौ द्विरुच्चार्य समाहत्य ग्रहस्वरम् ।
ग्रहात्पूर्वं द्वितीयं च क्रमेणोक्ता ग्रहे यदा ॥
न्यासो मल्हाररागस्य स्वस्थानं प्रथमं भवेत् ।
तस्य स्वरो द्वितीयस्तु वंशेषु स्थायितां गतः ॥

वेमः

मल्लाररागध्यानम्

शङ्खावदाताङ्गुलिकं दधानाः
प्रलम्बकर्णः कुमुदेन्दुवर्णः ।
कौपीनवासाः शुचिहारधारी
मल्लाररागः कथितस्तपस्वी ॥

मल्लारीति नामान्तरम् ॥ संगीतसरणिः

मल्लारकः—रागः

यस्मिन्पञ्चमषड्जनिस्वनकथा नास्त्येव मन्द्रध्वनि-
र्गान्धारस्य च सप्तमस्तु परितो यत्रास्ति तारध्वनिः ।
न्यासांशग्रहधैवतध्वनिधरं तं धैवतीसम्भवं
मल्लारं नृपमल्लमोहनमुरारातिर्वदत्युत्सुकः ॥

नान्यः

धैवतांशग्रहन्यासः षड्जपञ्चमवर्जितः ।
निषादतारो गान्धारमन्द्रो मल्लारकस्स्मृतः ॥

मतङ्गः

मल्लारिका—रागः

अन्धाल्याया विभाषाया अङ्गं मल्लारिका स्मृता ।
पञ्चम्यंशग्रहन्यासा ग्रहान्ता मन्द्रमध्यमा ॥

हम्मीरः

मल्लारी—रागः

न्यासांशग्रहपञ्चमका च पसारा च तारहीना च ।
गनिहीनापि समन्द्रा समशेषा भवति मल्लारी ॥

नान्यः

तारहीना षड्जमन्द्रा पञ्चाप्तिर्गनिवर्जिता ।
पञ्चमांशग्रहन्यासा मल्लारी सदृशस्वरा ॥

मतङ्गः

अस्याश्चापि विशेषेण यथोक्तेनोपलक्षितौ ।
पञ्चमोद्भूतसैन्धव्याविवालापकरूपकौ ॥

नान्यः

अन्धालिका समुद्भूता मल्लार्यथ निगद्यते ।
पञ्चमांशग्रहा षड्जमन्द्रा गान्धारवर्जिता ॥

हरिः

एवंविधैव मल्लारी षड्जपञ्चमदुर्बला ।
संपूर्णा कम्पितस्थाना गीयते लक्षणान्विता ॥

सोमेश्वरः

—मेलरागः

गौरीमेलसमुद्भूता मल्लारी निस्वरोज्झिता ।
आरोहणे गहीना स्यात् षड्जादिस्वरसंभवा ॥

इयं सर्वदा गेया ॥ अहोबिलः

—रागः

अन्धालिकाङ्गं मल्हारी मध्यमांशग्रहान्विता ।
रिमन्द्रा च गशून्या च शृङ्गारे ताडितस्वरा ॥

जगदेकः

—(षाडवः)

पञ्चमांशग्रहन्यासा पहीना मन्द्रमध्यमा ।
शृङ्गारे दुर्दिने गेया मल्लारी परिकीर्तिता ॥

नारायणः

अयमेव माधवादिरुच्यत इति गोपगोविन्दटीकाकारः
मूर्तिवर्णने माधवादिरित्यपि ।
मल्लारी सपहीना स्याद्ग्रहांशन्यासधैवता ।
औडुवा पौरवीत्युक्ता वर्षासु सुखदा सदा ॥

दामोदरः

मल्लारीरागध्यानम्

गौरीकृशा कोकिलकण्ठनादा
गीतच्छलेनात्मपतिं स्मरन्ती ।
आदाय वीणां मलिना रुदन्ती
मल्लारिका यौवनदूनचित्ता ॥

मेघरागभार्या । दामोदरः

मल्लिकामोदः—देशीतालः

लौद्वौ द्रुताश्च चत्वारो मल्लिकामोदसंज्ञिते ।

।। ० ० ० ० वेमः

पापा धनि धनि जगदेकः

मल्लिकापसन्तः—मेलरागः ( मायामालवगौलमेलजन्यः )

(आः) स ग म प नि स .

(अव) स नि ध प म ग रि स .

मज

मल्हारः—मेलकर्ता

शुद्धौ मगौ मपौ शुद्धौ पतादिगौ मसौ पुनः ।
विश्रुतिस्त्याज्निषादोऽपि मल्हारस्यापि मेलनम् ॥

धैवतांशग्रहन्यासः षड्जपञ्चमवर्जितः ।
मल्हारो गीयते प्रातर्गानविद्याविशारदैः ॥

श्रीकण्ठः

—रागः

मल्हारोऽप्यथ गान्धारवर्जितष्षाडवः पुनः
निषादस्फुरितश्शेषे मल्हारीवद्भवेदिह ॥

हरिः

—उपाङ्गरागः ( वीणायां वादनक्रमः )

धैवतं ग्रहमास्थाय तत्परं तु विलम्बयेत् ।
पुनः स्थायिस्वरं स्पृष्ट्वा द्वितीयं च स्वरं स्पृशेत् ॥
स्थायिनं प्राक् तृतीयं च स्वरमीषद्विलम्बयेत् ।
आरुह्य च महादियं द्वौ तृतीयं विलम्बयेत् ।
तदधस्त्यं स्पर्शमात्रादवरुह्य ततः क्रमात् ॥
स्पृष्ट्वा स्वरान् ग्रहांश्च त्रीन् पुनश्च स्थायिनं स्पृशेत् ।
उक्तं स्वरं तत्परं च स्थायिनि न्यस्यते यदा ॥
यदा सञ्जायते रागो मल्हाराख्यो मनोहरः ।
रागस्यैतस्य लक्ष्ये तु लक्ष्यते पञ्चमो ग्रहः ॥

वेमः

—रागः

अन्धाल्युपाङ्गं मल्हारष्षड्जपञ्चमवर्जितः ।
धन्यासांशग्रहो मन्द्रगान्धारस्तारसप्तमः ॥

हम्मीरः

—उपाङ्गरागः

गमन्द्रः सपनिर्मुक्तो ग्रहांशन्यासधैवतः ।
अन्धाल्युपाङ्गमल्हारो नितारः प्रावृषि स्मृतः ॥

भट्टमाधवः

मल्हाररागध्यानम्

वीणातिवादः कलकण्ठनादः
सुवर्णवर्णः स्फुरदब्जकर्णः ।
काश्मीरचित्रश्शरदिन्दुवक्त्रो
मल्हारनामा नितरां विभाति ॥

श्रीकण्ठः

मल्हारी—प्रथमरागः

विभाषान्धालिका तज्जा मल्हारी मन्द्रमध्यमा ।
पांशा स्याद्धीनगान्धारा शृङ्गारे ताडितस्वरा ॥

मोक्षः

—रागः

मल्हारी सपर्हीना स्यात् धलया चोपुजामता ।
धलयेति ग्रहांशन्यासेषु धैवतः । उपजेति उपरागजानां सूचनम् ।

मदः

—मेलरागः ( मालवगौलमेलः )

पलयेण युता प्रातर्मल्हारी रिविवर्जिता ।
वर्षास्वपि विशेषेण प्रगेया सुखदायिनी ॥

श्रीकण्ठः

—उपाङ्गरागः

पांशन्यासग्रहा मुक्तमध्यमा गविवर्जिता ।
शृङ्गारे सा प्रयोक्तव्या मल्हार्यन्धाल्युपाङ्गका ॥

भट्टमाधवः

मल्हारिदेशी—रागः

मल्हारादुद्गता देशी त्रिधा साधवियुक् सपा ।

मदनः

मल्हारीरागध्यानम्

मृणालतन्वी पिककण्ठनादिनी
गानच्छलेन स्मरति प्रियं स्वकम् ।
विपाञ्चिकामञ्जुलपाणिरुत्तमा
मल्हारिका यौवनभारसन्नता ॥

श्रीकण्ठः

मसृणम्—दर्शनम्

मसृणं तत्तु विज्ञेयमनुरागकषायितम् ।

शारदातनयः

मसृणं तु परिज्ञेयमनुसारणरञ्जितम् ।

वेमः

मसृणता—देशीलास्याङ्गम्

मुग्धा स्निग्धां यदा दृष्टिं तनुते रसनिर्भराम् ।
नृत्तहस्तानुगां नृत्ये तदा मसृणता भवेत् ॥

अशोकः

महत्

लघुर्गुरुः प्लुतं वा द्रुतापेक्षया मात्रया गुरुत्वात् तालप्रस्तारे महदित्युच्यते ।

प्लुतो गुरुर्लघुश्चैव महच्छब्देन कथ्यते ।
द्रुतश्चानुद्रुतश्चास्मिन्नल्पशब्देन कथ्यते ॥

यस्मात्परोऽस्ति स महान् स नो चेदल्प एव सः ।
द्रुतस्यानुद्रुतापेक्षं महत्त्वं यद्यपि स्थितम् ॥
तथापि चतुरङ्गेऽस्मिन् प्रस्तारे सोल्प इष्यते ।
अनुद्रुतस्य प्रस्तारबाह्यत्वाच्चतुरङ्गके ॥
महदेव प्लुतं शश्वदल्पं शश्वदनुद्रुतम् ।
गुर्वादिकं तु त्रितयं महदल्पं च जायते ॥

तालप्रस्तारः

**महद्दिण्डम्**—लागनृत्तम्

उलथा चरणद्वन्द्वमन्तराले यदा भवेत् ।
अधश्शीर्षपदद्वन्द्वमूर्ध्वं च वलनद्वयम् ।
भूतले सन्मुखं पातं महद्दिण्डं तदुच्यते ॥

वेदः

**महाकाली**—श्रुतिः

तारमध्यमस्य प्रथमा श्रुतिः पार्श्वः

**महाचारिः**—पूर्वरङ्गाङ्गम्

मण्डलादिप्रचारो यः स महाचारिरुच्यते ।

शारदातनयः

रौद्रः प्रचरणाच्चापि महाचारीति कीर्तिता।

भरत.

**महत्तरा**

सर्वान्तःपुररक्षायामाशीस्स्वस्त्ययनादिभिः ।
या नित्यमभिनन्दन्ति ज्ञेयास्तास्सुमहत्तराः ॥

भरतः

**महादेवी**

तत्र मूर्धाभिषिक्ता या कुलशीलविभूषिता ।
समतुल्यचरित्रा च मध्यस्था क्रोधवर्जिता ॥
अनीर्ष्या नृपशीलज्ञा समदुःखसुखास्पदा ।
शान्तिस्वस्त्ययनैर्नित्यं भर्तृमङ्गलकांक्षिणी ॥
पतिव्रता क्षमायुक्ता अन्तःपुरहिते रता ।
एभिर्गुणैस्तु संयुक्ता महादेवी प्रकीर्तिता ॥

भरतः

**महान्**

अवाप्तव्यान्यवाप्तानि यस्य सर्वाणि देहिनः ।
परोपकारव्यसनी स महानभिधीयते ॥

भावविवेकः

**महानन्दः**—वंशः

महानन्दाभिधे वंशे दण्डमानमुदीरितम् ।
सार्धयूकाधिकैरत्राष्टाविंशत्यङ्गुलैस्तदा ॥
मध्यं दशाङ्गुलं ज्ञेयं मुखतालाख्यरन्ध्रयोः ।
सपादत्रियवीताराद्यष्टरन्ध्रमितिः पृथक् ॥
सप्तरन्ध्रान्तरालेषु सपादाङ्गुलकं पृथक् ।
सयूकात्रितयं रन्ध्राष्टके सामस्त्ययोगतः ।
सयवद्वितयं मानं शेषः स्याद्रुद्रवंशवत् ॥

कुम्भः

**महानन्दिनी**—मेलरागः (शुभपन्तुवरालीमेलजन्यः)

(आ) स म ग म प ध नि स .
(अव) स ध नि ध म ग रि स

मत

**महामर्मतालः**

रगणस्सगणश्चैव नगणो भगणस्तथा ।
सगणश्चेति विज्ञेया महामर्माख्यतालके ॥
20 मात्राः

तालप्रस्तारः

**महारम्भा**—अवनद्धे जातिः

अवपाणिकर्णयुक्तं कृत्वादौ मध्यलयतुल्यम् ।
वाद्यं द्रुतलयमन्ते जातिः सा स्यान्महारम्भा ॥

भरतः

—पुष्करवाद्ये जातिः

अभिनवगुप्तपाठः

अवपाणिकरणयुक्तं कृत्वादौ मध्यलयतुल्यम् ।
वाद्यं द्रुतलयमन्ते जातिस्सा स्यान्महारम्भा ॥

नेपालपाठः

पटुकलकखटामिति यात्वक्षरैस्समायुक्ता ।
अधमस्त्रीणां प्रायः संरम्भा नाम सा जातिः॥

भरतः

**महाराष्ट्रगूर्जरी**—उपरङ्गरागः

ग्रहन्यासर्षभस्वरा ।
अंशे तु रिस्वरा मन्द्रनिषादा ताडितेतरा ।
उत्सवे पञ्चमत्यक्ता सा महाराष्ट्रगूर्जरी ॥

मल्लमाधवः

—रागः

उपाङ्गा रिषभाद्या च महाराष्ट्री च गूर्जरी ।
चात् अंशन्यासयोरपि रिषभः सूचितः ।

मदनः

—रागः

अतः परं महाराष्ट्रपूर्विका गुर्जरी पुनः।
न्यासांशभूतऋषभा मन्द्रऋषभवर्जिता।
पञ्चमस्वरसंत्यक्ता समाख्याता मनीषिभिः॥

हरिः

—रागः

गूर्जरी स्यान्महाराष्ट्री रिन्यासांशा च ताडिता।
निमन्द्रा च पहीनेयं उत्सवे विनियुज्यते॥

जगदेकः

—रागः

पञ्चमेनोज्झिता मन्द्रनिषादा ताडितोत्सवे।
गीयते रिषभान्तांशा महाराष्ट्री तु गुर्जरी॥

रम्भा

—प्रथमरागः

अपञ्चमा महाराष्ट्री गूर्जरी ताडितस्वरा।
रिषभांशन्यासयुक्ता निमन्द्रा गीयते बुधैः॥

मोक्षः

महालक्षणः तानः

गान्धारग्रामे मादीयतानः
म प नि स रि ग .

नान्यः

महावज्रः—( वर्णालङ्कारः )

यथा सरिगरि, सरि, सरिगम, (१) रिगमग, रिगमग, रिग, रिगमप, (२) गमपम, गम, गमपध, (३) मपधप, मप, मपधनि, (४) पधनिध, पध, पधनिस, (५)

प्रतापसिंहः

महाव्रतः—तानः

रि—लोपः। षाडवः.
म ग स नि ध प

कुम्भः

महाव्रतिकः—तानः

मध्यमग्रामे नारदीयतानः.
प ध नि स रि म .

नान्यः

महासन्निः—देशीतालः

महासन्निस्तु विज्ञेयो द्रुतद्वयं च लघुद्वयम्।
द्रुतश्शरो द्रुतौ लश्च द्रुतो लौ यत्र सम्मतः।
केचिदेनं प्रशंसन्ति प्रहमाज्ञायुतो भवेत्॥
०० । । ० । ०० । ०॥

दामोदरः

महासन्निस्तु विज्ञेयो द्रुतत्रयं लघुद्वयम्।
द्रुतश्शरो द्रुतौ लश्च द्रुतो लत्रयसंयुतः॥

वेदः

। ० ० ० ॥ ० । ० । ० । । ।

महासन्नितालोडुपम्—देशीनृत्तम्

महासन्निस्तु विज्ञेयो द्रुतत्रयं लघुद्वयम्।
द्रुतश्शरो द्रुतो लश्च द्रुतो लत्रयसंयुतः।
महासन्योडुपं प्रोक्तं तालेनानेन सूरिभिः

वेदः

महितम्—दर्शनम्

यद्दर्शनान्मनो जन्तोस्सर्वस्य महितं भवेत्।

शारदातनयः

महिषसत्वा—स्त्री

स्थूलपृष्ठाक्षिदशना तनुपर्वोदग स्थिरा।
हरिरोमाञ्चिता रौद्री लोकद्विष्टा रतिप्रिया॥
किञ्चिदुन्नतवक्त्रा च जलक्रीडावनप्रिया।
बृहल्ललाटा सुश्रोणी माहिषं सत्त्वमाश्रिता॥

भरतः

मही—ध्रुवावृत्तम् ( अष्टाक्षरम् )

यदि च खलु षष्ठकालघुगण इह आदितः।
पुनरपि च सप्तमं लघुभवति सा मही॥

(नसलगाः) बहुकुसुमसोहिये—

भरतः

महुरी—रागः

अथोच्यते महुरिका भिन्नषड्जसमुद्भवा।
मन्द्राभागधैवतन्यासा धैवतांशग्रहा तथा।
गान्धारतारा गीतज्ञैर्महुरीति निरूपिता॥

हरिः

महेन्द्रः—देशीतालः

महेन्द्रे पलगा लघुः ऽ । ऽ ।

महेश्वरः—देशीतालः

तगणश्च द्रुतश्चैव लत्रयं च महेश्वरे।

8½ मात्राः

तालप्रस्तारः

महोदयः—देशीतालः

दगौ दगौ दगौ दगौ द्रुतौ द्रुतौ गुरुद्रुतौ।
द्रुतौ गुरुर्लघुत्रयं द्रुतौ प्लुतौ महोदये॥

25 मात्राः।

तालप्रस्तारः

**मागधिकः**—प्राकृते मात्रावृत्तम्

द्विमात्रिकात्रयः रः लः गः .

विरहाङ्कः

**मागधी**—गीतिः

त्रिर्निवृत्ता च या गीतिः सा मागधिरिति स्मृता ।
चित्रे मार्गे मागधिरष्टौ कलाः ।

चित्रे चैककले ताले विज्ञेया गीतिमागधी।

तस्यैव द्विमात्रिकप्रयोगाद्वार्तिके द्विकल एव तालः ।
द्विगुरुः द्विर्निवृत्ता च चित्रे गीतिस्तु मागधिः।

चित्रे समा यतिः । द्रुतो लयः । उपरिपाणिः मागधी । ओघोऽवयवः अनागतग्रहः । अभिसृतवाद्यप्रयोगाः । मार्गभेदाद्गीतिर्भिद्यते। तद्यथा-दक्षिणमार्गे प्रवृत्ता पृथुला गीतिः यथा चित्रे प्रयुज्यते सा मागधीत्युच्यते । तथैव वृत्तिमार्गे च चित्रे यदा मागधी तदा संभाविता स्यात् । वार्तिकमार्गे द्विः परिवृत्तक्रमेण योज्यते । एवमुक्तं भवति । चित्रे च द्विमात्रा कला सैव मागधी गीतिः । संभावितया गीत्या प्रयुज्यते तदा चतुर्मात्रिकवृत्तिशब्देनोच्यते। यदा तु चित्रे मागधी गीतिः संभावितशब्दवाच्या द्विगुणिता, अष्टमात्रा पृथुलाशब्दवाच्या दक्षिणमार्गे भवति । त्रिस्त्रिर्निवृत्तिः त्रिरावृत्तिः मागधी । मगधदेशोद्भवत्वान्मागधी । अतोदाहरणपदे प्रथमकलाः विलम्बितलयेन, द्वितीया कला मध्यलयेन, तृतीया कला द्रुतलयेन गीयते।

मतङ्गः

—चतुष्पदागीतम्

त्रिलया त्रियतिश्चैव त्रिप्रकाराक्षरान्विता ।
एकविंशतिताला च मागधी संप्रकीर्तिता ॥

त्रिप्रकार इति मृदङ्गे परिभाषा।

भरतः

त्रियतिस्त्रिलयश्च लघुप्लुतगुर्वक्षरपदैश्च संबद्धा ।
तालैकविंशतियुता विज्ञेया मागधी तद्ज्ञैः ॥

वेमः

—श्रुतिः

मध्यमस्य प्रथमा श्रुतिः

जगदेकः

माधवीति पठितं नाट्यरत्नाकरे ॥

**माञ्जी**—मेलरागः ( नटभैरवीमेलजन्यः )

(आ) स रि ग म प नि ध नि प ध नि स .
(अव) स नि ध प म ग म प गा रि स .

मल्ल

**माणिक्यशेखरः**—देशीतालः

नलौ गोदौ लदौ दोलो गसौ दौ यगणः पुनः ।
तगणश्च प्लुतश्चेति ताले माणिक्यशेखरे ॥

30 मात्राः

तालप्रस्तारः

**मातङ्गः**—तानः

गान्धारग्रामे नारदीयतानः

म प ध नि स .

नान्यः

—स्वरजातिः

अष्टसप्ततिसंख्याभिः स्वरैर्मातङ्ग उच्यते ।

औमापतम्

**मातङ्गी**—श्रुतिः

मध्यमस्य तृतीया श्रुतिः ।

जगदेकः

**मातङ्ग्जनी**—मेलरागः ( शुभपन्तुवरालीमेलजन्यः )

(आ) स रि ग म प ध नि स .
(अव) स नि प ध ग रि स .

मल्ल

**मातुः**—गीते पदानि

पदं वागभिधेयं स्यात्सो मातुरभिधीयते ।

कुम्भः

**मातृका**—प्रबन्धः

आदाय गीयते यस्यामेकैकं मातृकाक्षरम्।
इष्टेनार्थेन संयोज्या मातृका सा प्रकीर्तिता ॥

मतङ्गः

अकारादिक्षकारान्तमेकैकं मातृकाक्षरम्।
क्रमेणादौ पदानान्तु सन्निवेश्य पुनःपुनः ॥

इष्टेनार्थेन संयोज्य संस्कृते च प्रबध्यते ।
अथवा प्राकृतेनैव द्वाभ्यां मिश्रेण वा पुनः ॥

पदैश्च विरुदैस्तालैः गीयते श्रुतिसुन्दरैः ।
मातृकैवं समाख्याता सर्वदेवप्रियंकरी ॥

हरिपालः

तालानां नियमो नात्र न रागनियमस्तथा ।
प्रबन्धो मातृकानाम स्वेच्छया परिगीयते ॥

सोमेश्वरः

**माला**—श्रुतिः

धैवतस्य प्रथमा श्रुतिः ।

जगदेकः

इयं तालशास्त्रे "पादभागैश्चतुर्भिस्तन्माला स्यान्मन्द्रकादिषु" इति । मन्द्रकेति सप्तगीतिपरश्शब्दः । चतुःपादभूत एकस्ताल

एककलो वा द्विकलो वा चतुष्कलो वा मात्राशब्देन गीयते। अत्र न छन्दोमात्रा। छन्दसि लघुरेको मात्रेत्युच्यते। ताले तु यथा चतुरश्रजातिः चच्चत्पुटतालस्य चतुष्कलस्य गुरवः षोडश मात्राः। सैका मात्रा। द्वे मात्रे एको गुरुः। पारिभाषिकतालशास्त्रीयगुरोः स्वाभाविकगुरवो द्वात्रिंशत्तुल्या भवन्ति। पारिभाषिकगुरुरूपं चच्चत्पुटः एककलः, स एककलो द्विगुणितश्चेत् पारिभाषिकमात्राश्चतस्रः। पारिभाषिकगुरू द्वौ। तयोश्चतुष्षष्टिगुरवः छन्दश्शास्त्रप्रसिद्धास्तुल्याः। अयं चच्चत्पुटद्विकलः।

अच्युतरायः

—ताले

मात्राया लक्ष्म कथ्यते।

पञ्चलघ्वक्षरोच्चारपरिमाणक्रिया भवेत्।
मात्रा तथैव विज्ञेया लघुगुर्वादिकल्पना ॥

वेम.

छन्दश्शास्त्रे एकस्य लघोरुच्चारणकालः मात्रेति कथ्यते।

ताले तु चतुष्पादात्मकं चतुरश्रस्यैककलस्य द्विकलचतुष्कलयोर्वा त्र्यश्रस्य एकद्विचतुष्कलानां वा रूपं मात्रोच्यते। पारिभाषिको मात्राशब्दः तालशास्त्रान्नान्यत्र वर्तते।

**मात्राविशिष्टसंहारः**

भास्वरजातिनाटके पञ्चमसन्धिः।

शारदातनयः

**माथुरी**—हस्तः

माथुर्यां मकरः करः। शृङ्गारः

माथुर्या मालवसन्त इत्यपि नामान्तरमस्ति ॥

**माधवभट्टः**

सङ्गीतचन्द्रिकाकारः। वाराणसीयः

क्रै. प. 1400 काले आसीत्।

**माधवप्रियः**—अङ्गहारः

करणं वलितोरु स्याद्वलितं च ततः परम्।
पादापविद्धं च ततो डोलापादं समाश्रयेत् ॥
पार्श्वक्रान्तं परिवृत्तं सिंहविक्रीडितं ततः।
एलकाक्रीडितं पश्चात्कटिछिन्नमतः परम् ॥
नवभिः करणैरेभिर्निर्मितः कुम्भभूभुजा।
माधवप्रियसंज्ञोऽयं प्रयुक्तो माधवार्चने ॥

कुम्भः

**माधवप्रिया**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग रि म ग म नि ध नि प ध नि ध स.
(अव) स नि ध म नि ध प म रि ग रि स.

मञ्ज

**माधवमनोहरी**—मेलरागः (सिंहेन्द्रमध्यममेलजन्यः)

(आ) स ग रि ग म प नि ध नि स.
(अव) स नि ध म ग म ग रि स.

मञ्ज

**माधवश्रीः**—मेलरागः (धेनुकप्रियामेलजन्यः)

(आ) स ग रि ग म ध नि ध स.
(अव) स नि ध प म ग रि स.

**माधवी**—श्रुतिः

मध्यमस्य प्रथमा श्रुतिः।
मागध्या नामान्तरम्।

**माधवोत्सवकमलाकरः**—सूडप्रबन्धः

रचितो गद्यपद्याद्यैर्वसन्तः पार्थिवोत्सवे।
वसन्तरागे झम्पाह्वताले मध्यलयाश्रिते ॥
गमकालप्तिभूयिष्ठः पूर्णकल्पः प्रकीर्तितः।
पूर्वौ पुनस्तेन पाटौ स्वरराजिविराजितः।
माधवोत्सवकमलाकरनामा प्रबन्धतः ॥

कुम्भः

**माधु(थु?)री**—रागः

गान्धारांशा धैवतैकग्रहाधन्यासस्थाने पञ्चमेनापि युक्ताः।
तारास्सर्वेषां स्वरैरेव पूर्णा तामाचष्टे माथुरां मैथिलेन्द्रः ॥

नान्यः

गान्धरांशा...न्मासपञ्चमाधैवतग्रहा।
ताराशेषस्वरैः पूर्णा मा(थु?)री कथ्यते किल ॥

मतङ्गः

**माधुर्यम्**—काव्यगुणः

बहुशो यच्छ्रुतं वाक्यमुक्तं वापि पुनः पुनः।
नोद्वेजयति यस्माद्धि तन्माधुर्यमिति स्मृतम्।

भरतः

यदिति यस्माद्धेतोर्वाक्यं श्रुतं संशयविपर्ययोरास्पदं न भवतीति तन्माधुर्यम्। द्राघीयसि समासे तावदश्यं भवत इति तद्विरह एव माधुर्यं शब्दगुण इत्युक्तं भवति। गाहन्तां महिषा

इत्यादि। पुनः पुनरप्युक्तमर्थजातं यस्माद्धेतोरपनीतमवगाहनेन वैरस्येन तद्वचनवैचित्र्यात्मकं माधुर्यमर्थगुणः। वचनान्तराभिधेयतया हि स एवार्थो विचित्रो भवति॥

अभिनवः

पृथक्पदत्वं माधुर्यम्। वामनः

केचिन्माधुर्यं क्रोधादावप्यतीव्रतामाहुः।

साहित्यमीमांसायाम्

अर्थौचितवचोबन्धो माधुर्यमभिधीयते।

प्रकाशवर्षः

अभ्युक्तं बहुशश्चेतः प्रीतिकृन्मधुरं परम्।

सर्वेश्वरः

—गीतगुणः

ललितैरक्षरैर्युक्तं शृङ्गाररसरञ्जितम्।
श्रव्यं नादसमोपेतं मधुरं प्रमदाप्रियम्॥

सोमेश्वरः

—वंशे फूत्कारगुणः

कोकिलालापलालित्यं मधुरत्वमिति स्मृतम्।

कुम्भः

स्थानत्रयेऽप्यवैस्वर्यं माधुर्यमभिधीयते।
कोकिलालापलावण्यं मधुरत्वप्रकाशकम्। नान्यः

अभ्यासात्कारणानां तु श्लिष्टत्वं यत्र जायते।
महत्स्वपि विकारेषु माधुर्यमिति कीर्त्यते॥

सर्वावस्थाविशेषेषु दीप्तेषु ललितेषु च।
अनुल्बणत्वं चेष्टानां माधुर्यमिति संज्ञितम्॥

भावविवेकः

माध्याह्निकम्—संगीतशृङ्गाराङ्गम्

मध्याह्नकरणीयं माध्याह्निकम्। भोजः

मानः

मानो रोषः प्रणयसंभवः। शार्ङ्गः

मानधैवम्—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स ग रि ग म ध नि स.
(अव) स नि प ध प म ग रि स.

मञ्ज

मानवती—मेलकर्ता (रागः)

स रि ग ० ० म ० प ० ध ० नि – स.

मञ्ज

मानवान्

ऐन्द्रेऽपि विषये लभ्ये जीविते वा परान्प्रति
अयोदण्डवदप्रह्वः पुरुषो मानवत्तरः॥

भावविवेकः

मानवी—गतिः

मण्डलाकारवद्भ्रान्त्वा समागत्य मुहुर्मुहुः।
वामं करं न्यस्य कटौ दक्षिणे खटकामुखम्।
मानवी गतिरित्येषा प्रसिद्धा पूर्वसूरिभिः॥

नाट्यदर्पणे

—मेलरागः

आरोहणे नियोगेन सैन्धवी मानवी मता।
सर्वदा गेया। अहोबिलः

मानसुगन्धी—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स ग म प ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

मानावलिः—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग म नि ध नि स.
(अव) नि ध प म ग रि स नि ध नि स

मञ्ज

मानशृङ्गारः

कः पुनरयं मानो नाम, यस्यैष त्रिभुवनेऽपि मानो मान इति महान् महत्ववादः। उच्यते—दृष्टश्रुताद्यपराधजन्मा मिथो मिथुनमानसेषु रोषो मानः। स विषयाश्रयालम्बनभेदादनेकप्रकारः। यस्मिन्मान उत्पद्यते स विषयव्यलीकाप्रियादेरपराधस्य कर्ता धीरोद्धतधीरललितधृष्टशठादिनायकप्रकारः। यस्योत्पद्यते स आश्रयः। व्यलीकविप्रियादीनां धीराधीरोद्धतोदात्तादिनायकप्रपञ्चः। यत उत्पद्यते तदालम्बनम्। व्यलीकविप्रियाद्यपराधः तेनानयोर्माने मिथो विपर्ययः। अथ मानविषयाश्रयालम्बनभेदाः मानजातयः। मानविशेषाः विषयाश्रयालम्बनप्रकीर्णानि विषयाश्रयालम्बनकर्माणि मानविकाराः मानोपलक्षणं मानस्थानानि मानोत्पत्तिकारणानि मानोद्दीपनानि मानविलासाः मानमोट्टायितानि मानसुखानुभवाः मानोत्पत्तिप्रकीर्णानि मानोपाधिभङ्गाः मानभङ्गकारणानि मानोपशान्तयः मानोपशमलक्षणानि मानभङ्गोपाधयः मानानुभवसौख्यानि च इति चतुर्विंशतिरर्थाः।

मानजातयस्तु चतुर्विंशतिः भामः कोपः क्रोधः उत्प्रासः रोषः ईर्ष्यायितं मन्त्युतं असूयितं वैमनस्यं उन्मादः (थः?)

मन्युः मात्सर्यं अभिनिवेशः अवज्ञासूचनं वैलक्ष्यं अनुशयः कालुष्यं क्षोभः आवेगः अमर्षः उग्रत्वं प्रणयकलहः इति।

मानापनयने सामदानभेददण्डयोगा मानभङ्गोपायाः।

मानोत्पत्तिकारणानि-विप्रियकरणं प्रियाकरणं वारितवामता कामचारः शाठ्यं प्रतारणं खण्डनं अवज्ञानं अकृतज्ञता सपत्नीनामग्रहणं गोत्रस्खलनमिति।

मानोद्दीपनानि यथा—वयस्यावाक्यं विपक्षसन्निधिः सखीवैलक्ष्यं सपत्न्युपहासः सौभाग्यदर्शनं दाक्षिण्योक्तिःअत्यन्तोपेक्षा दृष्टव्यपलापः अपराधस्मरणं विपक्षानुकम्पा आर्द्रापराधता प्रियानुनयः—इति।

मानभङ्गकारणानि—मदत्रासभयानि मृदूपगमः उपवनविहारः सुरभिवनवातः कोकिलाद्यालापः प्रभातं प्रदोषः चन्द्रोदयः प्रवासालम्बः विविक्तं इति।

मानानुभवसौख्यानि यथा—पादपतनं प्रसह्यश्लेषः हठकचग्रहः चुम्बनबलात्कारः प्रियप्रणयोक्तिः उपालम्भसूक्तिः स्नेहपरीक्षाभिभवः सखीश्लाघा बन्धुबहुमानः लाभविशेषः शृङ्गारकर्तृत्तिः इति।

भोजः

**मानिनी**—प्राकृते मात्रावृत्तम्

र ज ग ग . विरहाङ्कः

—**श्रुतिः**

गान्धारस्य द्वितीया श्रुतिः। अनूपः

**मानुषः**—स्वरजातिः

त्र्यशीतिभिः स्वरैः...प्रोक्तो मानुष इत्ययम्।

सौमापतम्

**मान्मथम्**—करणम्

स्थानकं वैष्णवं यत्र त्रिपताकौ तथा करौ।
पुरःप्रसारिता वामः करोन्योंऽसनिवेशितः।
पर्यायेण नतं गात्रमुन्नतं तत्तु मान्मथम्॥

हरिपालः

**मामिडिवेङ्कया**

विशेषशब्दचिन्तमणिग्रन्थकर्ता। अनेन काव्यप्रकाशान्ध्रभाषानुवादादयो रचिताः॥

**माया**—सन्ध्यन्तरम्

माया कैतवकल्पना—(सिंगः) मयेन दानवेन सुरान् छलयितुं प्रयुक्तः कपटो माया।

सागरः

यथा—देवीचन्द्रगुप्ते—चन्द्रगुप्तस्य कृतकोन्मादः मानुषी माया। कृत्यारावणादिषु कनकमृगादिरचनात्वमानुषी माया।

भोजः

**मायाप्रदीपः** मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स म ग म प ध नि स.
(अव) स ध प म ग रि स.

मञ्ज

**मायामालवगौलम्**—मेलकर्ता (रागः)

स रि ० ० ग म ० प ध ० ० नि स.

मञ्ज

**मायारूपिणी**——मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि प म ग रि स.

मञ्ज

**मायाद्रविडः**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि प म रि ग म रि स.

मञ्ज

**मायूरी**—मार्जना

गान्धारो जायते वामे वाद्यमाने तु पुष्करे।
दक्षिणे पुष्करे षड्जो मध्यमस्तूर्ध्वपुष्करे।
यदा सञ्जायते ज्ञेया मायूरी मार्जना तदा॥

वेमः

—**पुष्करवाद्ये मार्जना**

गान्धारो वामके कार्यः षड्जो दक्षिणपुष्करे।
ऊर्ध्वके पञ्चमश्चैव मायूर्यां तु स्वरा मताः॥

भरतः

**मारजयन्तः**—मेलरागः (सिंहेन्द्रमध्यममेलजन्यः)

(आ) स रि म प ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**माररञ्जनी**—मेलकर्ता

स ० रि ० ग म ० प ध नि ० ० स.

मञ्ज

**मारवज्रमणिः**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स ग रि ग म प स.
(अव) स नि ध म ग रि स.

मञ्ज

मारवारागध्यानम्

केलिचित्ररचनाङ्गधारिणीं
फाललोचनसमीपवासिनीम्।
आरसालतरुमूलसंस्थितां
मारवां मनसि चिन्तयामि ताम् ॥

रागसागरः

मारविः—मेलरागः (कीरवाणीमेलजन्यः)

(आ) स रि ग म ध नि ध म प ध नि स.
(अव) स नि प ग रि स

मज

मारवी—मेलरागः

(आ) स ० ० ग ० म ० प ० ० नि ० स.
(अव) स ० नि ध ० प ० म ० ग रि ० स.

मेललक्षणं

मारवीरागध्यानम्

इन्दुमुखी कनकाभा दीर्घालम्बालकातुलाचलदृक्।
अरुणाम्बरा नृपवरान् त्वरयन्ती मारवी समिते ॥

समिते—युद्धार्थम्। सोमनाथः

मारहेरली—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स ग रि ग म ध नि स.
(अव) स नि ध प म ध म रि ग रि स.

मज

मारुः—मेलरागः

शुद्धस्वरसमुद्भूतो गान्धारोद्ग्राहसंयुतः।
आरोहे त्यक्तधो ज्ञेयो गान्धारच्यावितोदितः॥
अग्रस्वस्थानसंयुक्तः पुनःस्वस्थानसंयुतः।
आन्दोलितनिषादाद्यो मारुर्धान्दोलितो मुहुः ॥

सायं गेयः। अहोबिलः

मारुती—कला

चतुर्विलासेषु शिरो निधाय नभोगतैर्यत्र कराङ्घ्रिपद्मैः।
चक्राणि चोद्भ्रामयतो हि सैव प्रोक्ता कलेयं किल मारुतीति ॥

नागमल्लः

मारुवः—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि म प नि स.
(अव) स नि ध प म ग म रि स.

मज

मारुवधन्याशी—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि म प ध स.
(अव) स ध नि ध प म ग रि म ग रि स.

मज

मारुवधन्यासिः—मेलरागः

(आ) स ० ० ० ग म ० प ध ० ० ० स.
(अव) स नि ० ० ध प ० म ० ग रि ० स.

मेललक्ष्मे

मार्गाः—तालप्राणभेदाः

मार्गाः स्युस्तत्र चत्वारो ध्रुवश्चित्रश्च वार्तिकः।
दक्षिणश्चेति तत्र स्याद्ध्रुवके मात्रिका कला।
शेषेषु चतस्रोऽष्टौ क्रमान्मात्राः कला भवेत् ॥

अत्र कलेति लघुः। इदं शार्ङ्गदेवमतम्।

तालकलाविलासकारस्य यथा—

देशीयोग्याः प्रदर्श्यन्ते मार्गाश्चत्वार एव हि।
चित्रश्चित्रतरश्चैव तथा चित्रतमः पुनः।
अतिचित्रतमश्चैव तेषां रूपमुदीर्यते ॥

सङ्गीतविद्याविनोदे—

दक्षिणो वार्तिकश्चित्रः तत्र चित्रतरः स्मृतः।
तथा चित्रतमश्च स्यादतिचित्रतमो मतः।

षडेवं कथिता मार्गास्तत्स्वरूपं निरूप्यते ॥ इत्युक्तम्।

जैनास्त्वाहुः—

दक्षिणो वार्तिकश्चैव चित्रश्चित्रतरस्तथा।
तथा चित्रतमश्चैव ह्यतिचित्रतमस्तथा ॥

चतुर्भागस्त्रुटिश्चैवानुत्रुटिर्घर्षणस्तथा।
अनुघर्षणकश्चैव स्वरश्चापि प्रकीर्तितः ॥

सर्वेषां मतमाश्रित्य मार्गा द्वादशधा स्मृताः।
एतेषां मार्गभेदानां कलाभेदान्प्रचक्ष्महे ॥

तदर्धार्धार्धभेदेन शास्त्रतस्संप्रदानतः।
तत्र दक्षिणमार्गस्य मात्राष्टकमुदाहृतम् ॥

वार्तिके तु चतुर्मात्रा चित्रामार्गो द्विमात्रिकः।
एकमात्रश्चित्रतरो धृतश्चित्रतमो मतः ॥

अतिचित्रतमे मार्गेऽनुद्रुतः परिकीर्तितः।
चतुर्भागे तदर्धं स्यात्पलाशकलिकाकृतिः।
त्रुटी तदर्धभागोऽनुत्रुटी स्यात्तु तदर्धकम् ॥

एतदर्धं घर्षणे तु तदर्धं चानुघर्षणे ।
एतदर्धं स्वरे प्रोक्तं सूक्ष्मतत्त्वार्थवेदिभिः ।।

दक्षिणादि नवानां च तालमार्गा नियामकाः ।
इतरेषां त्रयाणां च जिह्वाया स्वरतो मताः ।
ते द्वादशविधा मार्गा अस्माभिरुदिताश्शुभाः ।।

इति—(नियामकाः-ज्ञापका इत्यर्थः)

अनुद्रुतः द्रुतलघ्वोरनन्तरं विरामरूपेण वर्तते । न स प्रत्येकं तालाङ्गम् । चतुर्भागादयः पञ्च न तालाङ्गानि ।

अच्युतः

मार्गः—तालप्राणः

क्रियासमूहरूपायाः कलायाः स्थानमेव यत् ।
तालमार्ग इति प्रोक्तः स चापि बहुधा स्मृतः ।।

मार्गाः स्युस्तत्र चत्वारो ध्रुवश्चित्रश्च वार्तिकः ।
दक्षिणश्चेति तत्र स्यात् ध्रुवके मात्रिका कला ।।

शेषेषु द्वे चतस्रोऽष्टौ क्रमान्मात्राः कला भवेत् ।

कलेति लघुः । भरतमते चित्रवार्तिकदक्षिणा एव मार्गाः ।

तालकलाविलासे—

चित्रश्चित्रतरश्चैव तथा चित्रतमः पुनः ।
अतिचित्रतमश्चैव तेषां रूपमुदीर्यते ।। इत्युक्तम् ।

सङ्गीतविद्याविनोदे तु दक्षिणवार्तिकाभ्यां साकं चित्रादिभिः षण्मार्गाः कथिताः । अस्माभिस्तु मार्गाः द्वादश निरूप्यन्ते । तत्र दक्षिणमार्गस्य मात्राष्टकमुदाहृतम् ।

वार्तिके तु चतुर्मात्रः चित्रमार्गो द्विमात्रिकः ।
एकमात्रश्चित्रतरो द्रुतश्चित्रतमे मतः ।।

अतिचित्रतमे मार्गेऽनुद्रुतः परिकीर्तितः ।
चतुर्भागे तदर्धं स्यात्पलाशकलिकाकृतिः ।
त्रुटी तदर्धभागोऽनुत्रुटी स्यात्तु तदर्धकम् ।।

एतदर्धं घर्षणे तु तदर्धं चानुघर्षणे ।
एतदर्धं स्वरे प्रोक्तं सूक्ष्मतत्त्वार्थवेदिभिः ।।

सङ्गीतमार्गे चित्रचित्रतरचित्रतमवार्तिकदक्षिणाः पञ्चमार्गा इत्युक्तम् ।

अच्युतरायः

—सङ्गीतभेदः

स्वरा ग्रामास्तथा जातिर्वर्धमानादिगीतकम् ।
आलापादिक्रियाबद्धं स तु मार्ग इति स्मृतः ।।

पार्श्वदेवः

मार्गितत्वाद्विरिञ्चेन प्रयुक्तत्वात्तथर्षिणा ।
महोदयनिमित्तत्वान्नियतो मार्ग उच्यते ।।

कुम्भः

( ऋषिणेति—भरतेनेत्यर्थः )

गर्भसन्ध्यङ्गम्

तत्त्वार्थवचनं मार्गः । भरतः

यथा—रत्नावल्यां वासवदत्तया चित्रफलकं दृष्ट्वा विदूषकेन यत्कपटवचनमुक्तं तद्विमृश्य काञ्चनमालयोक्तम् देवि कदापि गुणाक्षरमपि संभाव्यते इत्युक्तम् । वासवदत्ता अयि ऋजुके वसन्तकः खल्वसौ इति समयानुसारि परमार्थोचितमाह । तत् तत्त्वार्थवचनम् ।

अभिनवः

तत्त्वार्थकथनं मार्गः ।

सागरः

परमार्थस्य वचनं सामान्येनोच्यमानं प्रकृतार्थेन यत्संबध्यते तन्मार्गः ।

रामचन्द्रः

वास्तवार्थकथा मार्गः । सिंग:

मार्गवत्प्रसिद्धत्वात् परमार्थे मार्ग इति व्यपदेशः ।

अभिनवः

पुष्करवाद्येषु वाक्करणाक्षरकरणसंयोजनप्रकारः ।

—तालप्राणः

क्रियासमूहरूपायाः कलायाः स्थानमेव यत् ।
तालमार्ग इति प्रोक्तः स चापि बहुधा स्मृतः ।।

अच्युतरायः

मार्गजयन्ती—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म ग प ध नि स .
(अव) स ध प म ग म रि ग म स .

मञ्ज

मार्गतोडी—मेलरागः

मार्गतोड्यां षड्हीनायां कोमलाख्यौ रिधौ स्मृतौ ।
स—न्यासो मध्यमांशः स्यान्मूर्छना तत्र धादिका ।।

प्रातर्गेया । महोबिलः

**मार्गदेशिकः**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स ग म प ध नि स.

(अव) स नि ध प म ग रि स.

मञ्ज

**मार्गमोहिनी**- मेलरागः (खरहरप्रियमेलजन्यः)

(अव) स रि ग म ग प ध नि स.

(अव) स नि प म रि म ग स.

मञ्ज

**मार्गरागः**

तेष्वनेकविधेष्वेषु ग्रामराजादयः पुनः।
रागा अन्तरभाषान्ता मार्गरागाः प्रकीर्तिताः।
अतो गन्धर्वलोकेषु प्रयोज्यास्ते व्यवस्थिताः॥

तुलजः

**मार्गवीणा**—

भरतादिभिः प्रयुक्ता वीणाजातिः।

**मार्गसञ्जीविनी**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग रि म प ध नि प ध प स.

(अव) स नि ध प म ग रि स.

मञ्ज

**मार्गहिन्दोलः**—मेलरागः

हिन्दोले रिपयोगेन मार्गहिन्दोलको भवेत्।

द्वितीयप्रहरोत्तरगेयः। अहोविलः

—(नटभैरवीमेलजन्यः)

(आ) स ग म नि ध नि स.

(अव) स नि ध प म ग रि ग स.

मञ्ज

—रागः

मार्गहिन्दोलरागाङ्गं हिन्दोलो वेतिसंज्ञिकः।
अंशे न्यासे ग्रहे षड्जः तस्य तारे तु मध्यमः॥

षड्जस्वरो भवेन्मन्द्रे ताडितो रिधवर्जितः।
सपयोः कम्पितश्चैव शृङ्गारे विनियुज्यते॥

जगदेकः

**मार्गाः**—तालाङ्गम्

एतासां मार्गभेदेन मितिर्ज्ञेया विचक्षणैः।
मार्गस्तु ध्रुवकश्चित्रो वार्तिकश्चाथ दक्षिणः।
चत्वार इति विख्यातास्ते च मात्राप्रमाणिकाः॥

अन्ये मार्गत्रयमेवाहुः। वेमः

**मार्गी**—मूर्छना

मृगैस्सञ्चरते यस्मान्मृग्यते च स्वरैरियम्।
मार्गी विषादे विज्ञेया मृगेन्द्रश्चाधिदैवतम्॥

नान्यः

मध्यमग्रामे पञ्चमी।

(आ) नि स रि ग म प ध.

(अव) ध प म ग रि स नि.

पण्डितमण्डली

**मार्जनाः**

अधुना मार्जनास्तिस्रो मृदङ्गे सम्प्रचक्ष्महे।
मायूरी चार्धमायूरी तथा कार्मारवीति च।
एतास्तु मार्जनास्तिस्रो विज्ञेयाः स्वरसंश्रयाः॥

वेमः

पुष्करवाद्ये षड्जादिस्वरोत्पत्तिक्रमः।

भरतः

**मार्जनामृल्लक्षणम्**

निश्शर्करा निस्सिकता निस्तृणा निस्तुषा तथा।
न पिच्छिला न विपदा न क्षारा न कटुस्तथा॥

नावदाता न कृष्णा च नाम्ला नैव च तिक्तिका।
मृत्तिका लेपने शस्ता तया कार्या तु मार्जना॥

नदीकूलप्रदेशस्था श्यामा च मधुरा च या।
तोयापसरणश्लक्ष्णा तया कार्या तु मार्जना॥

भरतः

**मार्जनाविधिः**

एवं तु मार्जनां कृत्वा जातिरागसमाश्रयाम्।
कुर्यान्निषादं सर्वेषां स्वराणामनुवादिनम्॥

मायूरी मार्जना ज्ञेया मध्यमग्रामसंश्रया।
मार्जनात्वर्धमायूरी षड्जग्रामाश्रया मता।
कार्मारवी मार्जना स्याद्ग्रामद्वयसमाश्रया॥

वेमः

शैथिल्यादायतत्वाच्च वध्रा कोटनयापि च।
स्वराणां संभवः कार्यो मार्जनायाः प्रयोक्तृभिः।
मार्जना तु मृदा कार्या वामकोर्ध्वकयोस्सदा॥

भरतः

**मार्जनी**—श्रुतिः

मध्यमस्य चतुर्थी श्रुतिः।

**मार्जारः**—स्वरजातिः

सप्तत्रिंशत्स्वरैर्जाता मार्जारः परिकीर्तितः।

मौक्षापतम्

## मार्दलिकभेदाः

वादको मुखरी चैव तथा प्रतिमुखर्यपि ।
गीतानुग इति चतुर्विधो मार्दलिको मतः ॥

वेमः

## मालकंसः—मेलरागः

( आ ) स रि ० ० ० म ० ० ध ० ० नि स ·
( अव ) स नि ० ० ध प ० म ग० रि ० स.

मेललक्षणे

## मालती—ध्रुवावृत्तम्

यदि खलु भवन्ति युग्मः जकारमात्रात्रिकाः कृताः पादे ।
लघुगणकृतस्त्वदादौ वदन्ति तां मालतीनाम्ना ॥

ध्रुवा पादाक्षराणां तु गुरो स्थाने लघु न्यसेत् ।
लघुद्वेतं गुरुश्चैते भेदाश्चत्पुटद्वये ॥

विप्रलम्भे प्रयोक्तव्या मध्यमाधमनायके ।
ध्रुवेयं मालती ज्ञेया रागे मालवकैशिके ॥

नान्यः

परहुदणिणाद वाआलिदाणि चप्पया सद्दगीयाणि ।
परभृतनिनादवाचालितानि षट्पदाशब्दगीतानि ।

भरतः

—प्राकृते मालावृत्तम्

पञ्च चतुर्मात्रिकाः पञ्चमात्रिक एकः गुरुश्च ।

विरहाङ्कः

—षडक्षरवृत्तम्

ररगणौ ।

भरतः

## मालतीरागध्यानम्

इयं मालसीत्यपि पठिता । इयं संपूर्णा ।

करावधूतांबुजयुग्मरम्या
इतस्ततश्चारु विलोकयन्ती ।
कण्ठस्फुरन्मौक्तिकचारुहारा
सा मालती सङ्कलिता विचित्रा ॥

सङ्गीतसरणिः

## मालवः—हस्तः

मालदेऽपि तथा भूतः शिखरामिधहस्तकः ।

शृङ्गारः

—मेलरागः

रिधौ तु कोमलौ यत्र गनी तीव्रौ च मालवे ।
षड्जावरोहणोद्ग्राहे सरी न्यासांशशोभिते ॥
तृतीयप्रहरोत्तरे गेयः ।

अहोबिलः

## मालवकैशिकः—रागः

कैशिकीजातिसंभूतो भवेन्मालवकैशिकः ।
षड्जग्रहांशतारेषु धैवतान्तस्सकाकलिः ॥

षड्जादिमूर्छना वर्णः तथारोही भवेदिह ।
प्रसन्नमध्योऽलङ्कार इति मालवकैशिकः ॥

हरिः

अंशे न्यासे ग्रहे षड्जो निषादर्षभसंयुतः ।
आन्दोलितस्तु स्वस्थाने गान्धारे च सकम्पनः ॥

सप्तस्वरैश्च संपूर्णो मन्द्रतारोपशोभितः ।
रागोऽयं सोमभूपेन ख्यातो मालवकैशिकः ॥

सोमेश्वरः

संभोगे विप्रलम्भे च शृङ्गारे हास्यसंयुते ।
मध्यमाख्ये स्वरे चैव सम्यक् संवादिनि द्रुते ॥

विवादिरिपमे शेषस्वरेष्वेवानुवादिषु ।
मूर्छायां शुद्धमध्यायां तानेऽस्मिन् राजसूयके ॥

मध्यरिश्रुतिसंयोगात् मदनैकाधिदैवतः ।
कैशिकीजातिसंभूतः षड्जन्यासांशसंयुतः ।
जायते धैवतस्वल्पो रागो मालवकैशिकः ॥

नान्यः

धैवतो दुर्बलो यत्र कैशिकीजातिसंयुतः ।
षड्जन्यासांशसंयुक्तो गेयो मालवकैशिकः ॥

कश्यपः

—रागः

षड्जग्रहांशकन्यासः संपूर्णः कैशिको मतः ।
मूर्छना प्रथमा यत्र काकली स्वरमण्डितः ॥

दामोदरः

कैशिकः—मालवकैशिकः ।

षड्जांशन्याससंयुक्तः कैशिकीजातिसंभवः ।
दुर्बलो धैवतेन स्यात् रागो मालवकैशिकः ।
काकली कलितो ज्ञेयो वीरो रौद्रेऽद्भुते रसे ॥

मोक्षः

## मालवकैशिकरागध्यानम्

आरक्तवर्णो धृतगौरयष्टिः वीरः सुवीरेषु कृतप्रचारः ।
वीरैर्वृतो वैरिकपालमालामलीमसो मालवकैशिकोऽयम् ॥

दामोदरः

मालवगौडः—रागः (वंशे वादनक्रमः)

निषादं ग्रहमास्थाय प्राप्य तत्प्राक्तनं स्वरम् ।
तदुत्तरं स्वरं स्पृष्ट्वा तुरीयस्वरमेत्य च ॥

द्वितीयात्त्रीन्स्वरान्पश्चादवरुह्य ग्रहे स्वरे ।
न्यासान्मालवगौडस्य स्वस्थानं प्रथमं भवेत् ।
रागस्यैतस्य वंशेषु तृतीयो ग्रह इष्यते ॥

वेमः

तुरुष्कगौड इत्यस्य नामान्तरम् ।

—उपाङ्गरागः (वीणायां वादनक्रमः)

अस्य रागस्य तुरुष्कगौडः, मालवीति च नामान्तरे स्तः ।

मन्द्रं निषादमास्थाय स्थायिनं तत्परं स्वरम् ।
समुच्चार्य व्रजेत्तस्मात्तृतीयं च तुरीयकम् ॥

ततः स्थायि तृतीयं च स्थायितुर्यं च संस्पृशेत् ।
तस्मात्पञ्चावरुह्याथ स्थायिनोऽधस्तुरीयकम् ॥

स्थायिनोऽधस्तनं चैव स्थायिनं तत्परं क्रमात् ।
उक्त्वा स्थायि तुरीयं च ग्रहं प्राप्य च तत्परम् ॥

ग्रहे चेन्न्यस्यते स स्याद्रागो मालवगौडकः ।
पञ्चमोऽपि ग्रहः कार्यः तस्य लक्ष्ये विचक्षणैः ॥

—मेलकर्ता

शुद्धास्सरिमपाः शुद्धो धःपतादिसमध्यमौ ।
मेलो मालवगौलस्य रागस्यापि तथा भवेत् ॥

रागस्स्यान्मालवो गौडः निषादत्रयमण्डितः ।
रिपहीनः कचित्सायं रजनी तस्य मूर्छना ॥

श्रीकण्ठः

षड्जादिधनुहरमेष सुमध्यपञ्च
ब्रह्माश्वरुद्रगजषड्जमथावरोहे ।
तद्व्युत्क्रमो भवति मालवगौलरागे
संपूर्णनाम बहुकल्पनया नु रागः ।

शुद्धसरी, साधारणो गः, शुद्धौ मपौ, शुद्धो धः काकलिनिः ।

परमेश्वरः

—मेलरागः

अथ मालवगौलेऽस्मिन् गौरीस्वरसमुद्भवे ।
त्यक्त्वे रिस्वरोद्ग्राहे नह्यारोहे तु गस्वरः ।
आरोहे यदि गान्धारः पादिर्मान्तो विधीयते ॥

तृतीयप्रहरोत्तरगेयः । अहोबिलः

—उपाङ्गरागः

अयं निपविनिर्मुक्तो मालवो गौल उच्यते ।

अयमिति द्राविडगौलनिर्देशः ।

भट्टमाधवः

मालवगौलरागध्यानम्

उत्तुङ्गवक्षोरुहनम्रकान्तः
कान्तासमालिङ्गितगौरगात्रः ।
हेमस्फुरत्कुण्डलमण्डितास्यो
विराजते मालवगौलरागः ॥

श्रीकण्ठः

मालवदेशा—रागः

धगतारर्षभर्हाना स्यान्मालवा बहुपञ्चमा ।
टक्कसैन्धवमालव्यपञ्चमेत्थप्रयोगसमा ॥

मालवाद्याहताविद्भिर्गान्धारेण समुत्कटा ।
निषादधैवतत्यक्ता जाता मालवकैशिकात् ॥

मोक्षः

मालवपञ्चमः—रागः

मध्यमापञ्चमीजातो भवेन्मालवपञ्चमः ।
पञ्चमांशग्रहन्यासो मध्यमाश्रितमूर्छनः ॥

सावरोहिप्रसन्नान्तो गान्धारोऽल्पस्सकाकलिः ।
इत्येवं कोहलः प्राह रागं मालवपञ्चमम् ॥

हरिः

पञ्चमीमध्यमोद्भूत...काकलिः ।
पञ्चमांशग्रहन्यासो गेयो मालवपञ्चमः ॥

मोक्षः

षड्जांशां पञ्चमन्यासां समगान्धारकस्वराम् ।
अपन्यासस्त्वृषभोऽल्पीकृतगान्धारसप्तमीम् ॥

हास्यशृङ्गारयोराह पञ्चमीमध्यमोद्भवाम् ।
शुद्धमालवभूपालकीर्तिर्मालव पञ्चमीम् ॥

नान्यः

पञ्चमांशस्तदन्तश्च पञ्चमीमध्यमोद्भवः ।
द्विश्रुतिस्वरकालस्यः ज्ञेयो मालवपञ्चमः ॥

कश्यपः

मालवरागध्यानम्

अयमेव मालवकौशिक इत्यप्युच्यते।

नितम्बिनीचुम्बितवक्त्रपद्मः
शुकद्युतिः कुण्डलवान् प्रमत्तः।
सङ्गीतशालां प्रविशत्प्रदोषे
मालाधरो मालवरागराजः ॥

संगीतसरणिः

सुन्दरीयुगकुचाञ्चितहस्तं
कुण्डलोल्लसितचारुकपोलम्।
गाढचुम्बितनितम्बिनिवक्त्रं
भावयामि हृदि मालवरागम् ॥

रागसागरः

मालववेसरा—रागः

धपन्यासा च षड्जांशा विस्फुरत्षड्जमध्यमा।
परिहीना ससरिता ज्ञेया मालववेसरा ॥

नान्यः

षड्जनिषाद.....रागेंऽशन्यासेन टक्करागभवा।
पञ्चमरिषभविहीना...स्तदा मालवाख्यवेसरिका ॥

कश्यपः

मालववेसरी—रागः

राजसूयकतानाख्या शुद्धमध्यममूर्छना।
वसन्तसमये गेया शृङ्गारे स्मरदेवता ॥

ग्रहांशषड्जा च्युतधैवतध्वनिः दधत्यपन्यासपदे बहुस्वनम्।
सा पञ्चमोत्स्फुरितैरलङ्कृता कृतात्मनां मालववेसरी स्मृता ॥

नान्यः

स्फुरणैर्मध्यमपञ्चमजनितैर्युतमालवेसरिका।
रिषभापन्यासयुता धैवतरहिता तु हिन्दोला ॥

कश्यपः

पञ्चममध्यस्फुरिता र्पपन्यासा धवर्जिता।
षड्जन्यासग्रहा प्रोक्ता सदा मालववेसरी ॥

नान्यः

स्फुरितैर्मध्यमपञ्चमजनितैर्युता तु मालववेसरी।
रिषभापन्यासयुता कैशिकजनिता च धैवतेन विना ॥

कश्यपः

मालवकैशिकोत्पन्ना मुख्या मालववेसरी।
अधैवता मपप्राच्या सरी तारौ परी मृदू ॥

मालववेसरी ज्ञेया टक्करागसमुद्भवा।
रिपहीना सगमन्द्रा सनिभ्यां बहुला तथा ॥

मोक्षः

मालवश्रीः—रागः

कैशिक्यां कैशिकः प्रोक्तो मालवाद्यस्तदुद्भवा।
समस्वरा तारमन्द्रा षड्जांशन्यासषड्जभाक्।
मालवश्रीस्सदा गेया रसे वीराद्भुते तथा ॥

हम्मीरः

मालवश्रीश्च रागाङ्गा पूर्णा सत्रयसंयुता।

मदनः

—(वंशे वादनक्रमः)

षड्जं स्थायिनमाश्रित्य ममाहत्य ततो ग्रहम्।
रिमौ क्रमात्समाहत्य पमान्दोल्य प्रकम्पयेत् ॥

द्विवारं पमगान् प्रोच्य ममान्दोल्य प्रकम्प्य च।
लघूकृत्य ततः षड्जं कम्पयित्वा रिमौ स्वरौ ॥

षड्जगौ द्विस्त्रिरावर्त्य स्थायिनि न्यस्यते यदा।
तदा भवेत्तु प्रथमं स्वस्थानं मालवश्रियः ॥

पञ्च स्वरान् प्रयुञ्ज्याद्यं स्वस्थानोक्तप्रकारतः।
धैवतं तु विलम्ब्याथावरोही चेद्गावधि क्रमात् ॥

प्राग्वत्प्रयुज्य स्वस्थानं द्वितीयं गीतवेदिभिः।
प्राग्वद्द्वितीयं संस्थानं धैवतान्तं विधाय च ॥

निषादस्वरमान्दोल्य तमाहत्य ततः परम्।
स्वस्थानस्य द्वितीयस्यावरोहश्च कृतो यदि ॥

तदा तृतीयं स्वस्थानं कथितं रागकोविदैः।
मध्यमं स्वरमाहत्य कृत्वा द्विगुणषड्जकम् ॥

ऋषभं ततपरं चोक्त्वा समेव पुनरेत्य च।
निमाहत्य विलम्ब्याथ विधाय पुनरप्यमुम् ॥

स्वस्थानस्य तृतीयस्यावरोहः क्रियते यदा।
तदा चतुर्थं स्वस्थानं आदिष्टं वेमभूभुजा ॥

वंशे षड्जस्वरोऽन्यो वा ग्रहः स्यान्मुद्रितो मतः।
तस्य स्वरस्य षड्जत्वं कल्पयित्वा मनीषया ॥

इतरेषां स्वराणां तु विधाय ऋषभादिताम्।
योजयेदखिलं लक्ष्ये इत्युक्तं वेमभूभुजा ॥

वेमः

—प्रथमरागः

अङ्गं मतं मालवकैशिकस्य
न्यासांशषड्जा च सतारमन्द्रा ।
समस्वरा पूर्णतनुः प्रगेया
वीरेऽद्भुते वा किल मालवश्रीः ॥

मोक्षः

—रागः

अङ्गं तु मालवादेस्स्यात् कैशिकस्य समस्वराः ।
मालवश्रीरंशे न्यासे तारे मन्द्रे च षड्जयुक् ॥
सैव हर्षपुरीत्येके शुद्धमध्यममूर्छना ।
शृङ्गारविषयः कार्यः प्रयोग उभयोरपि ॥

सोमराजः

मालवश्रीश्च रागाङ्गा पूर्णा सत्रयभूषिता ।
मूर्छनोत्तरमन्द्रस्था शृङ्गाररसमण्डिता ॥

दामोदरः

मालवादेर्भवेदङ्गं देशीकस्य समस्वरा ।
सम्पूर्णा तारमन्द्रस्था षड्जस्वरविराजिता ॥
षड्जांशन्याससंपन्ना मालवश्रीरियं मता ।
अयं रागः हर्षपुरीव शृङ्गारे विनियुज्यते ॥

जगदेकः

—रागाङ्गरागः

तारषड्जग्रहा मन्द्रषड्जन्यासा समस्वरा ।
रसे वीरेऽद्भुते तस्माज्जाता मालवकैशिकात् ।
हेमन्तपश्चिमे यामे मालवश्रीः प्रगीयते ॥

भट्टमाधवः

—रागः

मालवश्रीः शरद्गेया जाता मालवकैशिकात् ।
एषा षड्जग्रहन्यासा पार्वतीप्रीतिकारिणी ॥

नारायणः

आर्षभधैवतीवर्जिताः शुद्धजातयः कैशिकीजातिवाच्याः ।
इयं मालवश्रीः मालसीत्युच्यते ।

—मेलरागः

रिहीना मालवश्रीः स्याच्छुद्धमेलस्वरोद्भवा ।
मध्यमादिस्वरोद्ग्राहा धांशयुक्ताऽन्त्यपा स्मृता ॥
प्रातर्गेया ।

अहोबिलः

—(श्रीरागमेलः)

पूर्णा षड्जत्रयोपेता मालवश्रीस्सदा भवेत् ।
रिधाल्पा रसशृङ्गारवर्धनी चित्तरञ्जनी ॥

श्रीकण्ठः

—रागः

उदीर्यते मालवश्रीर्जातो मालवकैशिकात् ।
समस्वरस्तु संपूर्णः षड्जे स्यात्तारमन्द्रवान् ।
षड्जांशन्याससहितो रागोऽयं परिकीर्तितः ॥

हरिः

मालवश्रीरागध्यानम्

लीलारविन्दस्य दलानि बाला
विभावयन्ती तनुदेहयष्टिः ।
माळूरवृक्षस्य तले निषण्णा
शोणा मृदुः मालवश्रीः प्रदिष्टा ॥

संगीतसरणिः

प्रफुल्लरक्तोत्पलपाणिरेषा
मन्दस्मितोद्भासितगल्लयुग्मा ।
स्वैरं निषण्णा सहकारमूले
विभाति नित्यं किल मालवश्रीः ॥

श्रीकण्ठः

मालवा—रागः

धनिहीना तु गान्धारे बहुला वीर्यलोलितैः ।
गमकैरंशकन्यासग्रहषड्जा तु मालवा ॥

नान्यः

धैवतनिषादरहिता गान्धारसमुत्कटा च पञ्चमस्वरिका ।
मालवकैशिकजनिता मधुररवा मालवेति विख्याता ॥

कश्यपः

मालवा धैवतांशा स्यादाढ्या सरिगमैरियम् ।
धमन्द्रा गमकप्राज्या भिन्नषड्जसमुद्भवा ॥

मोक्षः

—भाषाङ्गरागः

टक्ककैशिकभाषा या मालवा तत्समुद्भवा ।
मालवांशग्रहन्यासनिषादा सङ्गतौ रिसौ ॥
रिधैवावान्तिमे यामे गेयाह्नः करुणे शुचौ ।
केचिद्दैवतमप्यस्य ग्रहांशौ प्रतिजानते ॥

भट्टमाधवः

—विभाषारागः

मध्यमांशा धैवतान्ता विभाषा मालवी मता ।
पूर्णा माळवदेशोत्था चिन्ताग्रस्ते नियुज्यते ॥
तथा मतङ्गमुनिना भिन्नषड्जे समीरिता ।
संपूर्णांशग्रहन्यासधैवता भूयसी पुनः ॥
सरिमैश्च प्रयोगार्हो टक्ककैशिकसंज्ञिनः ।
रागस्य साम्ययोगेन विभाषा मालवाभिधा ॥

कुम्भः

—भाषारागः

टक्कैशिकजा भाषा मालवा धग्रहान्तयुक् ।
सधयोस्सङ्गतिस्तत्र रिधयोरपि युज्यते ॥

भट्टमाधवः

मालवी—रागः

औडवी मालवी ज्ञेया निन्नया रिपवर्जिता ।
रजनी मूर्छना चात्र काकलीन्तरमण्डिता ॥

दामोदरः

—मेलरागः

संपूर्णजातौ मालव्यां पिको वक्रोऽवरोहणे ।
पिकः । पञ्चमः । वक्रः गतिविशेषः । मालवगौलमेलजोऽयं रागः ।

परमेश्वरः

मालवीगौडः—रागः

रागजो मालवीगौडो नित्रयो रिपवर्जितः ।

मदनः

माला

भाखरजातिनाटके प्रथमा सन्धिः ।
भास्वरशब्दे द्रष्टव्यम् ।

शारदातनयः

—श्रुतिः

गान्धारस्य द्वितीया श्रुतिः ।

जगदेकः

—लक्षणम्

अभिप्रेतार्थसिद्ध्यर्थं कीर्त्यन्ते यत्र सूरिभिः ।
प्रयोजनान्यनेकानि सा मालेत्यभिसंज्ञिता ॥

भरतः

यथा—तापसवत्सराजे 'दृष्टा यूय'मित्यादि ।

—मङ्गताल:

लौ गौ लचतुष्कं गपञ्चकम् ।
॥ ऽ ऽ ॥ ॥ ऽ ऽ ऽ ऽ ऽ

नान्यः

—ध्रुवावृत्तम् ( सप्तदशाक्षरम् )

यदि खलु पञ्चममष्टममन्त्यं दशमपरे
चरणगतानि गुरुणि माला भवति सदा ॥
नजजयनलगाः ।

शब्दक्षते प्रयोक्तव्या साङ्कश्र्लेकार्धनिर्मिता ।
मध्यमे पञ्चमे चैव तालः पूर्ववदेव हि ॥
असणिरवाहदपादपकूडो धरणिधरो ।

नान्यः

मध्यमे इति मध्यमलये ।

अथवा शुद्धमध्यमरागे । पञ्चमे इति । शुद्धपञ्चमरागे । पूर्ववदिति । कुमुदवतीध्रुवायामुक्तालवत् ।

—ध्रुवावृत्तम्

यस्याः पादे नित्याविष्टः षष्ठो गणो जकाराख्यः ।
सर्वैर्वर्णैर्दीर्घैरन्यैरुक्तो विभाषिता माला ॥

एदे लोअं संछादंता भीमा णनंति गंभीरा ।
एते लोकं संछादयन्तः भीमा नदन्ति गंभीराः ।

ममभरयगाः

मध्यमोत्तमपात्राणां माला युद्धसमुद्यमे ।
ठक्करागेण गातव्या चच्चत्पुटचतुष्टये ॥

नान्यः

अत्र षष्ठो गणो जकारः । अन्ये गुरव इति लक्षणम् । गणशब्दो मात्राचतुष्टये वर्तते । जकारस्तु मध्यगुरुः । मात्राचतुष्टय एव । इयं ध्रुवा भरताभिनवादिभिः न निर्दिष्टा ।

मालागलितम्—मात्रावृत्तम्

द्विपदी—

चतुर्मात्र एकः पञ्चमात्र एकः द्वौ चतुर्मात्रौ पञ्चमात्र एकः द्वौ चतुर्मात्रौ ल ग ।

विरहाङ्कः

मालाशीर्षकम्—प्राकृते मात्रावृत्तम्

चतुर्षु पादेषु समानसंख्याकाः चतुर्मात्रगणाः ।
एकः पञ्चमात्रिकः । शीर्षकं तु एकं गीतम् ।
गीतं—ओजेषु चतुर्मात्रिकगणं तृतीयो गणः ।
जो वा नलौ वा

विरहाङ्कः

मालाश्रीरागध्यानम्

तन्वी रसालतलगा कलगाना सस्मिता प्रति स्वपतिम् ।
मृगदुष्करगतकमला मालाश्रीः मालयोल्लसिता ॥

सोमनाथः

मालिनी—पञ्चदशाक्षरवृत्तम्

नान्दीमुख्येव मालिनी ।

—प्राकृते मात्रावृत्तम्

सप्त चतुर्मात्रिकाः अथवा पञ्चमात्रिकाः मिलिता वा गः ।

विरहाङ्कः

—षडक्षरवृत्तम्

रमगणौ ।

भरतः

—मेलरागः ( सेनावतीमेलजन्यः )

(आ) स रि ग म प – स.

(अव) स नि ध म ग रि – स.

मञ्ज

—ध्रुवावृत्तम्

आद्यं चतुर्थमन्त्यं च गुरूण्येतानि यस्य तु।
गायत्र्यधिकृते पादे ज्ञेया सा मालिनी यथा॥

(उदा) जोह्न समागयो (छाया) ज्योत्स्ना समागता।

भरतः

—श्रुतिः

पञ्चमस्य प्रथमा श्रुतिः।

माल्यम्—अलङ्कारः

वेष्टिमं विततं चैव सङ्घात्यं ग्रन्थिमं तथा।
प्रालम्बितं तथा चैव माल्यं पञ्चविधं स्मृतम्॥

भरतः

वेष्टिमं तृणवेष्टनया निर्मितम्। बहुमालावेष्टनकृतं वा। विततं। आवेष्टितान्योन्यश्लिष्टमालासमूहात्मकं वस्त्रधारणभयेन उम्भितं वा। संघात्यं आस्यच्छिद्रान्तःप्रक्षिप्तसूत्रम्। बहुपुष्पगुच्छोम्भितं वृत्तं वा। ग्रन्थिममिति। ग्रन्थिभिरुम्भितं प्रालम्बितं जालादिपर्यन्तव्याप्तिकं।

अभिनवः

माषघातः—गीताङ्गम्

गीते द्वादशकलो माषघात इत्युच्यते। माषः द्वादशो भागः-तस्मात्संहननं गुणनं यस्येति स माषघातः।

उदाहरणम्।

नित्यसमुद्यतनानाप्रहरणबन्धकरनिवहम्।
नित्यमनादिं सुरवरजननं परमं तेजम्॥

इति माषघातः।

नान्यः

माहाजनिकम्—गीताङ्गम्

इदमेवान्ताहरणं महता प्रकर्षेण तत्त्वाद्यतः।

इति माहाजनिकम्।

नान्यः

माहिरी—राग

पञ्चमांशग्रहन्यासा स्थाने चान्दोलिता भवेत्।
निषादतिरिबोपेता माहिरी कलहावहा॥

सोमेश्वरः

माहुरी—रागः

भिन्नषड्जाभिधानस्य रागस्याङ्गं समन्द्रभाक्।
धैवतांशग्रहन्यासा गतारा माहुरी तथा।
गुर्वाद्याज्ञा विधाने स्यात् विनियोगो विलोक्यते॥

जगदेकः

धैवतांशग्रहा पूर्णा स्थाने चान्दोलिता भवेत्।
षड्जपीडनकम्पाढ्या माहुरीत्यभिधीयते॥

सोमेश्वरः

माहुरिः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स म ग म रि ग म प ध नि स.

(अव) स ध प म रि ग म स.

मञ्ज

माहेश्वरम्—करणम्

यत्राश्वक्रान्तकं स्थानं मुहुः पादौ च कुट्टितौ।
चतुरस्रौ करौ पूर्वं रेचितौ भ्रमितौ पुनः।
वलिता च कटी शीघ्रमेतन्माहेश्वरं मतम्॥

हरिपालः

मिथुनहस्तः

व्यत्ययाभिमुखीभूतौ सूची मिथुनभाजने।

श्रृङ्गारः

मिथोऽसवीक्षावाह्यम्—चालकः

एकः करश्चेदन्यस्य स्कन्धदेशमृजुर्गतः।
निवृत्तस्सन्निजे पार्श्वे क्रमाद्विहितमण्डलः।
मिथोऽसवीक्षावाह्यं तत्कथ्यते चालकं तथा॥

अशोकः

मिथ्याध्यवसायः—लक्षणम्

अभूतपूर्वैर्यत्रार्थैः तुल्यस्यार्थस्य निर्णयः।
स मिथ्याध्यवसायस्तु प्रोच्यते काव्यलक्षणम्॥

भरतः

अपारमार्थिकैरेवार्थैः तत्तुल्यस्यावस्तुभूतस्यार्थान्तरस्य यस्य वक्तृव्यापारे सति निश्चयः सोऽयं मिथ्याध्यवसायः। यथा—यो दुर्जनादिति श्लोकः। काव्यलक्षणमित्यनेन काव्येषु लोकविपर्यासबाहुल्यमवश्यं भवतीति दर्शयति। अन्ये तु पठन्ति।

विचारस्यान्यथा भावः तथा दृष्टापदृष्टयोः।
सन्देहात्कल्प्यते यत्र स विक्षेपो विपर्ययः॥

भरतः

विचार्यत इति विचारोऽर्थः। अदृष्टमित्यर्थः। सन्देहो अत्र भ्रमः अथवा अन्यथा भावो विपर्ययः। संशयोऽपि हि वस्तुतो विषयतत्वं अन्यथाकारं दर्शयन्विपर्यय एव।

अभिनवगुप्तः

मिश्रकः--ध्वनिभेदः

एतद्ध्वनिगुणोन्मिश्रो यत्र सोऽयं तु मिश्रकः।

पार्श्वदेवः

मिश्रकध्वनिभेदाः

कथं तयोर्मिश्रणं स्याद्विरुद्धगुणयोगिनोः।
अत्रोच्यते परित्यागात्पारुष्यस्य विरोधिनः॥
अविरुद्धस्य माधुर्यस्थौल्यादेर्मिश्रणं मतम्।
एतेन घननिस्सारगुणनाराटबम्बयोः॥
विरुद्धगुणताक्षेपसमाधाने निवेदिते।
मिश्रस्य भेदाश्चत्वारो युक्तौ नाराटकावुलौ॥
नाराटबोम्बकौ बोम्बकाहुलौ मिश्रितास्त्रयः।

अधिकं रत्नाकरे प्रकीर्णाध्याये उक्तं द्रष्टव्यम्।

मिश्रकरणम्—प्रबन्धः

ततस्तु मिश्रकरणे धातुद्वन्द्वं प्रगीयते।
स्वरैः पाटैस्सतेनैश्च विरुदैः प्रान्तशोभितैः॥

हरिपालः

मिश्रचन्द्रः—हस्तः

तिर्यग्भावात्समाश्लिष्टावर्धचन्द्राह्वयौ करौ।
मिश्रचन्द्राविति ख्यातौ योज्यौ खड्गिमृगार्थके॥

शृङ्गारशेखरः

मिश्रवर्णः—देशीतालः

मिश्रे पुनर्विरामान्तं त्रिस्याद्रुतचतुष्टयम्।
ततोगुरुप्लुतौ द्वौ दौ पलगाः स्युस्ततः क्रमात्॥
००००ं००००ं००००ं०ऽऽ̇०ऽ̇।ऽ

वेमः

मिश्रो द्रुतचतुष्काः स्युर्विरामान्तास्त्रयः पृथक्।
ततः पगौ दौ गलौ गः।
०००ं००ःं००००ंऽ̇ऽ००ऽ।ऽ

शार्ङ्गः

प्रतितुर्यविरामान्तं मिश्राख्ये द्वादशद्रुताः।
प्लुतौ गुरू द्रुतद्वन्द्वं गद्वयं लगुरुस्ततः (?)॥
००००ं००००ं००००ंऽ̇ ऽ̇ऽऽ००ऽऽ।ऽ

जगदेकः

(अत्र—'प्लुतोः'- इति केचिद्ग्रन्थकाराः पठन्ति)

मिश्रशीर्षका—चतुष्पदागीतम्

अनयोरेव पातैस्तु रचितैकान्तरत्वतः।
मिश्रा शीर्षकयुक्ता तु विज्ञातव्या सशीर्षका॥

भरतः

अत्रानयोरिति मिश्रशीर्षके चतुष्पदे गृह्येते।

मिश्रा—वृत्ति

यत्रारभट्यादि गुणास्समस्ताः मिश्रत्वमाश्रित्य मिथः प्रथन्ते।
मिश्रेति तां वृत्तिमुशन्ति धीराः साधाणीमर्थचतुष्टस्य॥

भोजः

—भङ्गताल:

एको गुरुर्लद्वयं गद्वयं लः गद्वयम्।
ऽ̇।।ऽऽ।ऽऽ

नान्यः

—चतुष्पदागीतम्

मिश्रा तु कथ्यते तद्ज्ञैः खञ्जनर्कुटमिश्रणात्।
खञ्जनर्कुटकावत्र वृत्तभेदावुदीरितौ॥

वेमः

त्र्यश्रा वा चतुरश्रा वा तदा मिश्रेति कीर्त्यते।

भरतः

मीनहस्तः

त्रिपताकाह्वयौ हस्तौ चान्योन्यमुखमिश्रितौ।
स्थापितावग्रभागे तु मीनार्थे संप्रयुज्यते॥

शृङ्गारः

मीसरगण्डः—देशीतालः

ताले मीसरगण्डाख्ये लत्रयं गत्रयं प्लुतः
।।।ऽऽऽऽ̇

गोपतिप्पः

मुकुन्दः—देशीतालः

मुकुन्दताले सरलौ खचतुष्कं गुरुस्तथा।
।।००००ऽ

सुधा

मुकुन्दे लगयोर्मध्ये कथिता दचतुष्टयी।
।००००ऽ
लदलागोऽथवा कैश्चिदुक्तोयं तालवेदिभिः।
।०।ऽऽ

कुम्भः

मुकुराङ्गी—मेलरागः (लताङ्गीमेलजन्यः)

(आ) स ग म नि ध नि स.
(अव) स नि ध प म ग म रि स.

मख

मुकुलः—हस्तः
यत्राङ्गुष्ठाग्रलग्नाश्च संहताङ्गुलयोऽखिलाः ।
ऊर्ध्वाश्च मुकुलस्स स्यात्पद्मादिमुकुलाकृतौ ॥
बलिकर्मणि देवानां पूजने भोजनादिषु ।
मुहुर्विकास्य प्रकृतिं नीतो दाने त्वरान्विते ॥
मुखचुम्बे तु कान्तानां संनिधौ विटचुम्बने ।
कुचकक्षादिदेशस्थः स्यादाच्छुरितके करः ॥
यदाङ्गुलीपञ्चकेन सशद्वं नखलेखनम् ।
कुचादौ कामसूत्रज्ञाः तदाच्छुरितकं विदुः ॥
शार्ङ्गः

मुकुलम्—हस्तः
अन्तर्वक्रतरं पाणिद्वन्द्वं तु मुकुलाकृतिः ।
श्लिष्टाङ्गुष्ठद्वयं प्रोक्तमृजु तन्मुकुलं भवेत् ॥
उमा

मुकुला—दृष्टिः
चलदाश्लिष्टपक्ष्मान्ता मुकुलोर्ध्वपुटाञ्चिता ।
सुखामीलिततारा च मुकुला गन्धसम्मदे ॥
सोमेश्वरः

स्फुरदाश्लिष्टपक्ष्माग्रा किञ्चिन्मीलिततारका ।
विलम्बोर्ध्वपुटा दृष्टिर्मुकुलेति प्रकीर्त्यते ।
हृद्यगन्धस्पर्शयोः स्यादियमानन्दनिद्रयोः ॥
विप्रदासः

मुकुलार्थहस्तः
अङ्गुष्ठार्धान्तयोऽङ्गुल्यः श्लिष्टाश्चान्याः प्रसारिताः ।
मुकुलार्थकरस्सोऽयं पूर्वशास्त्रविनिश्चितः ॥
ऊर्ध्वभागे चोर्ध्वमुखस्तारकामल्लिकादिषु ।
ओष्ठस्थले तु यो हस्तः चुम्बनार्थे नियुज्यते ॥
चुम्बनस्थानदशके तत्तत्स्थानस्थितो यदि ।
दशस्थानचुम्बनाद्यं दर्शयन्ति बुधोत्तमाः ॥
विनायकः

मुकुलौ—ओष्ठौ
निष्क्रान्तौ मिलितावोष्ठौ मुकुलौ परिकीर्तितौ ।
फूत्कृते चुम्बने चूषे विनियोगस्तयोर्मतः ॥
सोमेश्वरः

मुक्तजानु—स्थानकम्
उत्कटस्थानकस्यैव जान्वेकं भूमिसंश्रितम् ।
यदि तन्मुक्तजानु स्याद्गामिनीनां प्रसादने ।
सान्त्वने सज्जनानां च देवतापूजने तथा ॥
वेमः

मुक्ता—वंशेऽङ्गुलिगतिः
स्वरमुक्तेन रन्ध्रेण मुक्तानाम प्रवर्तते ।
विद्यासिन्धुः

—वंशगतिः
वंशस्याङ्गुलिमुक्तेषु रन्ध्रेषु सकलेष्वपि ।
मुक्ता गतिस्समाख्याता मुक्तशब्दविधायिनी ॥
वेमः

यदा रन्ध्राष्टकं नैवाङ्गुलीभिः पिहितं भवेत् ।
तदा मुक्ता मुक्तशब्दप्रदिष्टा वंशपूरणात् ॥
कुम्भः

मुक्ताङ्गी—मेलरागः (चक्रवाकमेलजन्यः)
(आ) स रि ग प म प ध नि स .
(अव) स ध नि प म ग रि स .
मञ्ज

मुक्ताजालिका—शिरोभूषणम्
ललाटान्ते तोरणजालिकादिरूपेण प्रसिद्धं भूषणम् ।

मुक्तताटङ्कम्—कर्णभूषणम्
केवलैर्मौक्तिकैरेव. वलयैस्सुनिवेशितैः ।
मुक्तताटङ्कसंज्ञं तत्कर्णभूषणमुत्तमम् ॥
सोमेश्वरः

मुक्तावली—प्रबन्धः
अनुप्रासससमोपेतैः पदैस्तालेन संयुता ।
देशीकारपदैर्भव्या ज्ञेया मुक्तावली तु सा ॥
सोमेश्वरः

—मेलरागः (हेमवतीमेलजन्यः)
(आ) स रि ग रि म प ध नि स .
(अव) स नि ध नि प ध म प म रि ग रि स .
मञ्ज

—डेङ्कीप्रबन्धः
बुधैर्मुक्तावली ज्ञेया छन्दसा वर्जितैः पदैः ।
मोक्षदेवः

मुखम्—सन्धिः
यत्र बीजसमुत्पत्तिः नानार्थरससंभवा ।
कथाशरीरानुगता तन्मुखं परिकीर्तितम् ॥
भरतः

—गीताङ्गम्

गीतवृत्तप्रारंभकं मुखमुच्यते । चच्चत्पुटायितमष्टगणं यथा—
वेदान्तपुराणयोगिपते सुरसिद्धयक्षप्रमुखैः प्रणतम् ।

नान्यः

मुखः—ताल

नद्रौ लघुर्मुखे ताले । 4½ मात्राः ।

तालप्रस्तारः

मुखगलिता — मात्रावृत्तम्

खण्डोद्गता अन्त्ययमकनियमः ।
इयं चतुर्विधा । पञ्चगणा, सप्तगणा, नवगणा, एकादशगणा चेति ।

विरहाङ्कः

मुखगह्वरहस्तः

अङ्गुष्ठाङ्गुष्ठसंयुक्ते तर्जनी तर्जनीं यदि ।
तिर्यग्बध्वा स्वयं हस्त मुखगह्वरनामकः ।
ओष्ठस्थले स्वयं हस्तः ओष्ठभावनिरूपणे ॥

विनायकः

मुखगुम्भनीकला

अर्मि ललाटे दधती मुखान्तं
नानाविधा या गुलिकाः समुक्ताः ।
गृध्नाति सूत्रेण सनृत्यपाणिः
यत्राद्भुतोक्ता मुखगुम्भनीयम् ॥

नागमल्लः

मुखचपला—ध्रुवावृत्तम् ( एकादशाक्षरम )

यदि खलु षष्ठं गुरुयुगलं निधनगतं चाप्यथ गुरुकम् ।
भवति हि नैवं चरणविधौ मुखचपला त्रिष्टुभिरचिता ॥

द्रुताष्टकस्य मध्ये तु लघुद्वय इक्षासतः ।
मुखचपलायामन्ते गुरुयुग्मस्य भङ्गतः ॥

शृङ्गारे संप्रयोज्यैषा मध्यमोत्तमपात्रजा ।
मालवकैशिकरागे ध्रुवा लयविशारदैः ॥

नान्यः

युग्मस्येति । चच्चत्पुटस्य भङ्गतालत्वाद्‍द्रुताष्टकादितालक्षणं गदितमिति भावः । कुसुमसुवंधीमिदुपवणो ।

पादे पञ्चममन्त्ये च दीर्घं द्वादशमेव च ।
यदातिधृत्यां सा ज्ञेया चपला मुखसंहिता ॥

पविचलिदे मदसुरमिमुही सुरवरयुवदी ।
प्रविचलिता मदसुरभिमुखी सुरवरयुवतिः ।

भरतः

ध्रुवा तु मुखचपला सुरतश्रमखेदजा ।
चच्चत्पुटद्वयं चैव भवेच्चाचपुटोऽपि च ॥

नान्यः

मुखचम्पा—देशीतालः

गुरुश्चाथ प्लुतश्चेति मुखचम्पेति कथ्यते ।
5 मात्राः

तालप्रस्तारः

मुखतालः—देशीतालः

लगौ लगौ द्रुतद्वन्द्वं लगौ च मुखतालके ।
10 मात्राः

तालप्रस्तारः

मुखरसः—देशीलास्याङ्गम्

तत्तन्नृत्तोचिताभीष्टनैपथ्यरचना भुवः ।
प्रसन्नमुखरागस्य कान्तिर्मुखरसस्मृतः ॥

ज्यायनः

मुखरागः

एवमेव विशेषज्ञैः यथाभावं यथारसम् ।
मुखरागो नियुक्तोऽसौ रसभावप्रकाशकः ।
कृतोऽप्यमिनयस्तावत् शाखाङ्गोपाङ्गसंयुतः ॥

न भाति यावन्नालेढि मुखरागं यथारसम् ।
आङ्गिकामिनयोऽल्पोऽपि मुखरागेण संयुतः ॥

शोभां द्विगुणतां धत्ते शशाङ्केनेव शर्वरी ।
रसभावसमाकीर्णदृष्टिभ्रूवदनान्वितम् ॥

प्रतिक्षणं यथानेत्रमन्यदन्यत्प्रवर्तते ।
तथोचितं प्रकुर्वीत मुखरागं प्रयोगवित् ।
यथारसं यथाभावमिति नृत्यविदां मतम् ॥

अशोक

रसात्मिकां मनोवृत्तिं प्रकटीकुरुते यतः ।
अतोऽसौ मुखरागस्स्यात्सोऽष्टधा परिकीर्तितः ॥

स्वाभाविकः प्रसन्नश्च रक्तश्श्यामो विकस्वरः ।
अरुणो मलिनः पाण्डुरित्येषां लक्ष्म कथ्यते ॥

वेमः

येनामिव्यज्यते चित्तवृत्तिर्धीरै रसात्मिका ।
रसामिव्यक्तिहेतुत्वान्मुखरागस्स उच्यते ॥

अशोकः

सूचने च मनोवृत्तेर्मुखरागस्य मुख्यता ।
शरीरामिमुखे यस्मात्कार्यस्तस्मादिहाधरः ॥

ज्यायनः

सहजश्च प्रसन्नश्च रक्तश्श्यामस्तथैव च ।
मुखरागोऽत्र कथितश्चतुर्धाऽभिनयं प्रति ॥

सोमेश्वरः

**मुखरी**—देशीतालः

समे लौ दौ विरामान्तौ मुखरीति प्रचक्षते।
॥ ं ं

दामोदरः

—मार्दलिकः

वाद्यप्रबन्धनिर्माता गीतवाद्नकोविदः ।
ऊहान्वितश्च सरसो नृत्तशिक्षाविचक्षणः ॥
अर्धाङ्गभूतो नर्तक्या रङ्गभूमिविभूषणम् ।
कुर्वन्नृत्तानुगं वाद्यं सरसैर्वादकैस्सह ।
सुसंप्रदायशिक्षावान् मुखरी परिकीर्तितः ॥

वेमः

**मुखारिः**—मेलरागः ( खरहरप्रियामेलजन्यः )

( आ ) स रि म प नि ध स .
( अव ) स नि ध प म ग रि स .

मत्र

**मुखारिरागध्यानम्**

सखीद्वये हस्तयुगं च दत्त्वा प्रसर्पयन्ती मदलालसेन ।
मन्दारमालाञ्चितकण्ठभागां ध्यायेन्मुखारीं सततं मनो मे ॥

रागसागरः

**मुखारी**—मेलकर्ता

केकी चतुःश्रुतिवृषोऽन्तरमेषशुद्ध-
क्रौञ्चावनप्रियचतुर्दयकैशदन्ति ।
आरोहणे त्वजनिषादविसर्जनं स्यात्
तस्मान्मुखारिरियमौडुवपूर्णजातिः ॥
शुद्धास्समपाः । चतुःश्रुतिकौ रिधौ । अन्तरकैशिकी गनी ॥
आरोहे गनित्यागः ।

परमेश्वरः

—मेलकर्ता

यत्र शुद्धास्स्वरास्सप्त भवेयुश्चित्तरञ्जकाः ।
स स्यान्मुखारिकामेलः सजातीया भवन्त्यतः ॥
सन्यासांशग्रहा पूर्णा मुखारी गीयते सदा ।
कतिचिद्गमकैर्युक्ता कष्टसाध्या सुबुद्धिभिः ॥

श्रीकण्ठः

**मुखारी**—मेलरागः

ऋषभः कोमलो यत्र गान्धारः पूर्वसंज्ञकः ।
मुखार्यां धैवतोद्ग्राहो निधौ पूर्वाख्यकोमलौ ।
आरोहे गनिर्हीनायां न्यासांशौ षड्जपञ्चमौ ॥
सर्वदा गेया ।

अहोबिलः

पूर्वेति—श्रुतिद्वयपरित्यागात् पूर्वशब्देन मन्यत इत्यहोबिलकृता परिभाषा ।

**मुखारीरागध्यानम्**

शिखण्डधम्मिल्लमिलद्विपञ्चीं
प्रपञ्चयन्ती चलदङ्गुलीभिः ।
चतुर्भुजा चारुचकोरनेत्रा
मुखारिका चन्द्रमुखी विभाति ॥

श्रीकण्ठः

**मुखावरी**—रागः ( सङ्कीर्णः )

सैन्धवीतोडिकायोगात् समुत्पन्ना मुखावरी ।

नारायणः

**मुख्या**—(भाषा)

तत्र भाषा समाख्याता मुख्याऽनन्योपजीविनी ।

कुम्भः

**मुग्धम्**—दर्शनम्

स्वभावालोकितं मुग्धं भावगर्भमपि छलात् ।

शारदातनयः

भावगर्भमपि व्याजात्स्वाभाविकमिव स्थितम् ।
दर्शनं यत्र तदिदं मुग्धमित्यभिधीयते ॥

वेमः

**मुग्धमधुसूदनहंसक्रीडः**—सूडप्रबन्धः

रागो गौण्डकृतिर्यत्र प्रतिमण्ठपुरस्कृतः ।
आभोगान्ते तथा पाटस्वरैः पद्यगणाञ्चितैः ॥
शृङ्गाररससंपूर्णः कृष्णकेलिविराजितः ।
मुग्धमधुसूदनाख्यो हंसक्रीडः प्रबन्धराट् ॥

कुम्भः

**मुग्धा**—नायिका

मुग्धा नववयः कामा रते वामा मृदुः क्रुधि ।
यतते रतिचेष्टासु पत्युर्व्रीडामनोहरा ।
अपराधे रुदत्येव न वदेच्च प्रियाप्रिये ॥

शारदातनयः

मृदु—निष्फलमानत्वम्।

मुग्धाल्पयौवना मूढा लज्जाविजितमन्मथा।
मनोऽस्या मन्मथस्तोकमिति भावविदो विदुः॥

कुम्भः

मुग्धा—नायिका

मुग्धा बाल्यविशेष...विलसद्भावान्तराढ्या निगू-
ढोद्यन्मन्मथविभ्रमा रतिविधौ मन्दाक्षमन्दोद्यमा।
कान्ते सागसि विप्रियं प्रियमपि स्पष्टं न संभाषते।
मुग्धा त्वेकविधैव सेयमुदिता मन्दप्रकोपालसा॥

नीलकण्ठः

मुडुपः

मुडुपः प्रपदस्य स्यात्कम्पनं द्रुतरासतः।
अथवा, पादाङ्गुलीपार्ष्णिकाङ्गान् भुवि स्थाप्य यदा नटः।
करोति नर्तनं ताले द्वितीयाख्ये यथोचितम्।
तदा मुडुपमाख्यातं नटैः कर्मविचक्षणैः॥

देवेन्द्रः

अत्र द्वितीयः तालभेदः।

मुडुपचारी

इयं कल्लिनाथेन मधुपचारीति कथ्यते। देशीचारीष्वेव एताश्चार्योऽन्तर्भूताः॥

मुडुम्बिनरसिंहाचार्यः

क्री-१८५० कालः भरतसारसङ्ग्रहग्रन्थकर्ता।

मुद्गरः—हस्तः

मुष्टिहस्तस्सविवरः कृतश्चेन्मुद्गरः करः।
मुद्गरेष्वपि भल्लाद्यायुधधारणकेषु च।
विनियोगोऽस्य विख्यातः सर्वदा नटनप्रियः॥

गौरीमतम्

मुद्रिकाः—पादभूषणम्

पादतर्जनिमानेन कनत्काञ्चननिर्मिताः।
स्थूलाश्च ध्वनिसंयुक्ता यमला मुद्रिकावराः॥

सोमेश्वरः

मुद्रितमट्ठः—देशीतालः

गुरोर्लघुद्वयोश्चोर्ध्वं चत्वारो लघवो यदि।
शब्दहीनं प्रयुज्यन्ते स स्यान्मुद्रितमट्ठकः॥
ऽ ।।।।।।

वेमः

मुद्रितमण्ठकः—देशीतालः

मचतुर्लघुनिःशब्दं भवेन्मुद्रितमण्ठके।
ऽऽऽ।।।।

दामोदरः

मुनिवंशः

मुनयः सप्त। इह वंशे मुखताररन्ध्रयोरन्तराळस्याङ्गुलसप्तकत्वान्मुनिवंश इति प्रसिद्धिः।

मुनेर्वंशे दण्डमानमङ्गुलान्येकविंशतिः।
सार्धानि यकिकाश्चाष्टलिक्षाषट्कोनिताः पुनः।
सप्ताङ्गुलो मध्यदेशो मुखतालाख्यरन्ध्रयोः॥
रन्ध्राष्टकान्तरं ज्ञेयं पृथगर्धाङ्गुलोन्मितम्।
एकवीरावधिप्रोक्त ऊर्ध्ववंशेषु सप्तसु॥
लिक्षाश्चतस्रस्सार्धास्स्युः यूकाषट्केण संयुताः।
सप्तान्तरालं मानमुक्तं यवचतुष्टयी॥
सार्धसप्तकलिक्षा च यूकानामपि पञ्चकम्।
पञ्चाङ्गुलानि त्रियवीमानमेतत्समासतः॥
प्रमाणं मुखरन्ध्रस्य शिरःप्रान्तस्य च स्मृतम्।
वसुवंशवदत्रापि मुनावपि मुनेर्मतात्॥

कुम्भः

मुनिस्तम्भः

योगाभ्यासजपादिषु मुनीनां निश्चलाङ्गत्वं मुनिस्तम्भः।

शृङ्गारः

मुरजः—अवनद्धम्

मुरजं त्वङ्गुलैरेकविंशत्या प्रमितायतिम्।
कुर्यादसनकाष्ठस्य पृथुमन्तर्मनोहरम्॥
पिण्डमर्धाङ्गुलं प्रोक्तमङ्गुलानि चतुर्दश।
निर्दिशेदस्य वामांशे दक्षिणास्ये त्रयोदश॥
प्रत्येकमास्ययोश्चर्म कार्यमेकाङ्गुलाधिकम्।
चत्वारिंशच्च रन्ध्राणामङ्गुलव्यवधानतः॥
कुर्याद्रोमूत्रिकाबन्धे रन्ध्रनिक्षिप्तकर्करैः।
मुरजे मध्यमेतस्य त्रिभिर्वध्रैस्तु बन्धयेत्॥
कुण्डलीद्वितयं प्रान्ते कृत्वा कच्छान्निबन्धयेत्।
लेपयेद्वदनद्वन्द्वं भक्तिमिश्रेण भस्मना॥
टकारश्च धिकारश्च थोकारः थंधकारकः।
नकारश्च सदोङ्कारः पाटवर्णा मृदङ्गजाः॥

सोमराजः

मुरजवाद्यम्

पुरा मुरासुरं भित्वा भगवान्देवकीसुतः ।
तत्कलेबरमादाय मर्दलं कृतवान भुवि ॥
पिनद्धं चर्मणा तस्य सिराभिर्दृढबन्धनम् ।
कण्ठध्वानश्च तस्यैव तेनासौ मुरजो भवेत् ॥
मुरजं तं समादाय दत्तवान्नन्दिनं हरिः ।
मुरजस्य ततो लोके देवता नन्दिकेश्वरः ॥
नन्दिकेशं समाराध्य मुरजं वादयेद्बुधः ।
मुरजानां प्रभेदाः स्युरङ्क्यालिङ्ग्योर्ध्वगास्त्रयः ॥
हरीतक्याकृतिस्त्वङ्क्यो यवमध्यस्ततोर्ध्वगः ।
आलिङ्ग्यश्चैव गोपुच्छः मध्यदक्षिणवामगः ॥
हरीतकीसमं रूपं अङ्के नैव प्रकीर्तितम् ।
अङ्गुष्ठाङ्गुलमानेन त्र्ययः पञ्चाशदङ्गुलम् ॥
दीर्घं स्यान्मध्यमं स्थूलं तावदङ्गुलवर्तुलम् ।
उभयोरग्रयोश्चापि द्वादशाङ्गुलवर्तुलम् ॥
चतुरङ्गुलविस्तारं कर्णिकामध्यतो भवेत् ।
कर्णिकाया वहिर्भागे वलयेन समावृतः ॥
मध्यतो ग्रन्थिसंयुक्तं मृदङ्गं रचयेद्बुधः ।
देवता कर्णिकाद्वन्द्वे सूर्याचन्द्रमसावुभौ ॥
वलयद्वितयस्यापि परिवेपोऽधिदेवता ।
ग्रन्थेस्तु विश्वकर्मा स्याद्गन्धर्वा वध्रदेवताः ॥
मणिचूडमणिग्रीवौ चर्मणोरधिदेवते ।
स्वस्यापि मर्दलस्यात्र या रज्जुर्मध्यमे स्थिता ॥
तस्यास्तु वासुकिर्देवो मर्दलस्सर्वदेवतः ।

चित्रः

मुरजः

मुरसुषधिषसा च श्लक्ष्णसुकुमारायां मृदि प्ररोहतीति । मृदपि मुरा ततो जाता मुरजाः, मृदङ्गा इत्यर्थः ॥

अभिनवः

मुरजः

मुरशब्दो वृहद्वाची (जशब्दो) मध्यवाचकः ।
यन्मध्येनोरुणा जातः तस्मान्मुरज उच्यते ॥

नान्यः

मुरजकर्तरी—चालकः

अंसावधिस्तनक्षेत्राद् भ्रान्त्वा मण्डलवृत्तितः ।
ततो वक्षस्थलप्राप्तौ मुहुर्निक्षिप्य पार्श्वतः ॥
अधस्तात्र व्रजत्येका द्वितीयो मण्डलभ्रमः ।
विलोडितो यदा पश्चादुभौ हस्तौ कटिस्थितौ ।
अन्योन्याभिमुखौ भ्रान्तौ तदा मुरजकर्तरी ॥

अशोकः

मुरजमर्दलभेदः

त्रयोदशाङ्गुलो वामे मुखे स्याद्द्वादशाङ्गुलः ।
दक्षिणे तु मुखे धीरैर्मर्दलः परिकीर्तितः ॥
मुरजोऽष्टाङ्गुलो वामे दक्षे सप्ताङ्गुलो मुखे ।
अङ्क्योर्ध्वकालिङ्ग्यभेदात्सदृशः परिकीर्तितः ॥

नारायणः

मुरजाडम्बरम्—चालकः

दक्षिणो यत्र विदिशि वामदक्षिणपार्श्वयोः ।
मन्थराकारवलनं पर्यायेण विधाय च ॥
ततो वामोंऽसपर्यन्तं समुद्धत्य ततो द्रुतम् ।
स्वपार्श्वे प्रसृतस्तत्र विलुठंश्चलदङ्गुलि ॥
अन्यःकरो नाभिदेशे तिरश्चीनो लुठंयदि ।
मुरजाडम्बरं नाम चालको मुनिभिः स्मृतः ॥

वेमः

मुरली—सुषिरवाद्यम्

हस्तद्वन्द्वाधिकायामा वदते (?)रन्ध्रधारिणी ।
चतुर्भिस्तारसुषिरैः संयुता मुरली मता ॥

कुम्भः

स्वरुली जायते हस्तद्वयाभ्यधिकसम्मितः ।
फूत्काररन्ध्रेणैकेन चतुर्भिः स्वररन्ध्रकैः ॥

वेमः

मुरली, सुरुली, स्वरुली एते पर्याया दृश्यन्ते ।

मुरली

आदर्शेषु केषुचित् सुरुलीत्यपि दृश्यते ।
मुखताररन्ध्रान्तरालं विंशत्यङ्गुलमितं चेत् सुमुरलीवंशः ।

मुरुडी—नृत्तबन्धः

मध्ये चतस्रो नर्तक्यः तिस्रस्तिस्रश्च कोणगाः ।
नृत्तं कुर्वन्ति यत्रासौ मुरुडीबन्ध उच्यते ॥

वेमः

मुष्टिः—हस्तः

तलमध्यस्थितैर्लग्नैरङ्गुल्यग्रैरगोपितैः ।
निपीड्य मध्यमां तिष्ठत्यङ्गुष्ठो मुष्टिरिष्यते ॥

कुन्तनिस्त्रिंशदण्डादिग्रहे विविधयोधने ।
धावने प्राङ्मुखाङ्गुष्ठे मल्लयुद्धे करद्वयम् ।
मुष्टेरूर्ध्वकृतोऽङ्गुष्ठः शिखरः सम्प्रयुज्यते ॥

शार्ङ्गः

**मुष्टिकस्वस्तिकौ—नृत्तहस्तौ**

करणेनापवेष्टेन स्यादेकः कुञ्चितो यदा ।
तदान्योऽप्यञ्चितो भूत्वोद्वेष्टितेन बहुक्रमात् ॥

स्वस्तिकं खटकास्यौ चेन्मुष्टिकस्वस्तिकौ मतौ ।
यत्परंपरया मुष्टेर्जातौ तौ मुनिना ततः ।
तथोक्तो मुष्टिशिखरकपित्थकटकेष्वपि ॥

स्यातामन्यतमावेतावित्याशयवतामुना ।
एकः स्यात्कुञ्चितो मुष्टिः खटकास्योऽञ्चितः परः ॥

इति कीर्तिधरः प्राह मुष्टिकस्वस्तिकौ करौ ।
खड्गवर्तनिकेत्यन्यन्नामधेयं च कल्पितम् ॥

ज्यायनः

**मुष्टिमुकुलः—हस्तः**

पूर्वोक्तमुष्टिहस्ते तु मध्यमाङ्गुष्ठयोजितम् ।
नाम्नायं मुष्टिमुकुलः कप्यर्थे च निरूपितः ॥

शृङ्गारशेखरः

**मुष्टिमुद्राहस्तः**

वामो मुष्टिः दक्षिणो मुद्रामणिबन्धेन मिश्रितः ।
मुद्रिकोऽधोमुखो मुष्टिर्मुद्राहस्तोऽयमीरितः ॥

मुष्टिमुद्राकरश्चापि चमर्यां संप्रयोजयेत् ।

शृङ्गारशेखरः

**मुष्टिमृगहस्तः**

पूर्वोक्तमुष्टिहस्ते कनिष्ठाङ्गुष्ठप्रसारितः ।
नाम्ना मुष्टिमृगो हस्तः कृष्णसारे प्रयुज्यते ॥

शृङ्गारशेखरः

**मुष्टिवर्तना**

व्यावृत्तिक्रियया मुष्टिं कृत्वा चेद्भ्रामयेन्मुहुः ।
सव्यापसव्यतो मुष्टिवर्तना सद्भिरीरिता ॥

अशोकः

**मुष्ट्यर्धहस्तः**

किञ्चिद्विस्तृतमुष्टिस्तु मुष्ट्यर्धं इति कथ्यते ।
पुरोभागे तु मुष्ट्यर्धः पादपृष्ठनिरूपणे ॥

विनायकः

**मूरुगण्डः—काडनृत्ताङ्गम्**

षष्ट्याधिकशताणूनां कुर्यात्पिण्डस्य लेखनम् ।
अधश्चोर्ध्वं पिण्डके च वामदक्षिणभागतः ॥

वामेऽतीतलघोरूर्ध्वं त्रिमात्रो ध्रुवतालकः ।
त्रयोदशमिता संख्या त्रिमात्रस्य भवेद्ध्रुवम् ॥

रतितालस्सहातीतश्चत्वारिंशल्लसम्मितः ।
सूडादि सप्ततालानां दक्षिणे रूपमीदृशम् ॥

त्रिवारं ध्रुवतालः स्याद्द्विधा भवति मण्ठकः ।
द्विवारं रूपकं पश्चाज्झम्पातालो द्विधा भवेत् ॥

त्रिधा तृतीयतालः स्यादष्टताल्येकधा भवेत् ।
सप्तधात्वेकताली स्यादेषा मात्रामितिर्भवेत् ॥

पञ्चत्रिंशल्लघोरूर्ध्वमणुत्रयमुदीरितम् ।
चत्वारिंशल्लघूनां च वामस्था या मितिः कृता ॥

न्यूनं सप्तदशाणूनां तत्र तेषां नियोजना ।
ध्रुवत्रयेण चतुष्कं तथैव मण्ठकद्वये ॥

रूपकद्वितये द्वन्द्वं तथैव झम्पकद्वये ।
तृतीये त्रितयं प्रोक्तमेकं स्यादष्टतालके ॥

सप्तैकताल्यामन्ते चाधिकमेकं भवेद्ध्रुवम् ।
एवं कृते त्वणूनां च पिण्डे भवति साम्यता ।
मूरुगण्डस्तदा काडः तालज्ञैः प्रतिपादितः ॥

वेदः

**मूरु—देशीनृत्ताङ्गम्**

हृदये वामशिखरं स्थाप्य सव्यपताककम् ।
दक्षपार्श्वे प्रसार्याथ दक्षिणावर्ततस्ततः ॥

भ्रमरीमाचरेत्पश्चादेकपादोपरि स्थितः ।
नम्रीभूत्वा त्रिपताकं पुरतश्च प्रसारयेत् ॥

हृदि वामं च शिखरं न्यस्य स्कन्धानत शिरः ।
वलनद्वितयं कुर्यादन्ते स्याच्च तकारणम् ।
मूरुलक्षणमित्युक्तं सङ्गीतज्ञैः पुरातनैः ॥

वेदः

**मूर्छना**

श्रुतेर्मार्दवमेव स्यान्मूर्छनेत्याह तुम्बुरुः ।
गायतां शृण्वतां चापि भवेद्रागामृते ह्रदे ।
मनसो मज्जनं यत्स्यान्मूर्छनेत्याह कोहलः ॥

हरिपालः

### मूर्छनाः

त्रिग्राममूर्छना नामानि ग्रन्थान्तरे।

ललिता, मध्यमा, चित्रा, रोहिणी च मतङ्गजा।
सौवीरा वर्णिमध्या च षड्जमध्या च पञ्चमी।
मत्सरी मृदुमध्या च शुद्धा चैव कलावती॥
तीव्रा रौद्री तथा ब्राह्मी वैष्णवी खेचरी वरा।
नादवती विशाला च त्रिषु ग्रामेषु मूर्छनाः॥

आहत्यैकविंशतिः — चूडामणिसारः

उभयग्रामयोः मूर्छनाश्चतुर्दश।

आरोहो यः स्वराणां स्यादवरोहोऽप्यनुक्रमात्।
सा मूर्छनाग्रामयोः स्युरस्या भेदाश्चतुर्दश॥
षड्जे तूत्तरमन्द्रादौ रजनी चोत्तरायता।
चतुर्थी शुद्धषड्जाख्या पञ्चमी मत्सरीकृता।
अश्वक्रान्ताभिधा षष्ठी सप्तमी चाभिरुद्गता॥
सौवीरा हरिणाश्वा स्यात् स्यात्कलोपनताऽपि च।
शुद्धमध्या ततो मार्गी पौरवी हृष्यका तथा।
सप्तैता मूर्छनाः प्रोक्ताः मध्यमग्रामजाः क्रमात्॥

कुम्भः

नन्दी विशाला सुमुखी चित्रा चित्रवती सुखा।
बला या चाथ विज्ञेया देवानां सप्तमूर्छनाः॥
आप्यायनी विश्वभृता चन्द्रा हेमा कपर्दिनी।
मैत्री बार्हस्पती चैव पितॄणां सप्तमूर्छनाः॥
षड्जेतूत्तरमन्द्रा स्यात् ऋषभे चाभिरुद्गता।
अश्वक्रान्ता तु गान्धारे तृतीयामूर्छना स्मृता॥
मध्यमे खलु सौवीरा हृष्यका पञ्चमे स्वरे॥
धैवते चापि विज्ञेया मूर्छना तूत्तरायता।
निषादाद्रजनीं विद्यात् ऋषीणां सप्तमूर्छनाः॥
इदं भरतस्य न सम्मतम्। — नारदः

### मूर्छना

महोच्छ्रायाभिधायी यो मूर्छधातुस्ततो ल्युटि।
करणार्थे मूर्छनेति पदमत्र समुच्छ्रये॥

पण्डितमण्डली

ग्रामप्रोक्ताः स्वरा यत्र मूर्छामायान्ति हेलया।
विज्ञेया मूर्छना सा तु त्रिसप्तगुणिता बुधैः॥

वादिमत्तगजाङ्कुशः

मूर्छा— मोहसमुच्छ्राययोः—इति मूर्छनाशब्दस्य व्युत्पत्तिः।

मूर्छते येन रागो हि मूर्छनेत्यभिसंज्ञिता।
आरोहणावरोहणक्रमेण स्वरसप्तकम्।
मूर्छनाशब्दवाच्यं हि विज्ञेयं तद्विचक्षणैः॥

मतङ्गः

आरोहेणावरोहेण क्रमेण स्वरसप्तकम्।
रागादौ मूर्छनादत्र मूर्छना परिकीर्तिता॥

कुम्भः

—वीणायामुभयहस्तव्यापारः

उद्दिष्टपरिवर्ताभ्यां करे भ्राम्यति दक्षिणे।
स्वरस्थाने हतं तन्त्र्यां कम्पिता यत्र सर्पति।
कम्रिका मूर्छनासंज्ञा करोऽसौ कीर्तितो बुधैः॥

कुम्भः

—वादनम् (उभयहस्तव्यापारः)

उद्दिष्टपरिवर्ताभ्यां तन्त्र्यां भ्राम्यति दक्षिणे।
स्वरस्थाने द्रुतं कम्रासारणं मूर्छना मता॥

शार्ङ्गः

### मूर्छनाक्रमः

मत्तकोकिलवीणायां तन्त्र्यो यास्तास्वनुक्रमात्।
स्वराः षड्जादयस्सप्त सप्तभूत्वातिथाश्रिता॥
मध्यषड्जकसप्तेन मूर्छनारभ्यतेऽग्रिमा।
षड्जस्थानस्थितैर्न्यायैः यद्वा षड्जादधःस्थितैः।
आरभ्यन्ते रजन्याद्याः षट् षड्जग्राममूर्छनाः॥

पण्डितमण्डली

मध्यस्थमध्यमेनाद्या मध्यमग्राममूर्छना।
मध्यमस्थानगैर्गाद्यैः अथवा स्यादधस्स्थितैः॥
जायन्ते मध्यमग्राम्याः हरिणाश्वादिमूर्छनाः।
आरम्भकस्वरोपान्त्यस्वरे कुर्यात्समापनम्।
षड्जमध्यमयोः स्थाने न्याद्या गाद्या यथाक्रमात्॥
तदूर्ध्वं सारयेत् षड्जमध्यमादीन् स्वरान् सुधीः।

पण्डितमण्डली

### मूर्छनातानभेदः

एकद्विस्वरलोपेन षाडवौडुवितीकृताः।
तानाः स्युर्मूर्छनाशुद्धाः ग्रामद्वयमुपाश्रिताः॥
तानादीन् षडवन्तीति स्वराः षट् षाडवा यतः।
षाडवेभ्यः समुत्पन्नास्तानाद्याष्षाडवास्ततः॥

उडुवो यान्ति गच्छन्ति तस्मिंस्तदुडुवं नभः।
भूतसंख्याहितं निष्ठा भूतानां पञ्चमं हि तत्॥
औडुवी पञ्चसंख्या सा येषां तेऽप्यौडुवाः स्मृताः।
तस्मात्पञ्चस्वरात्मानस्तानाद्या औडुवाः स्मृताः॥

पण्डितमण्डली

ननु मूर्छनातानयोः को भेदः। उच्यते। मूर्छनातानयोः अणुत्वान्तरत्वमिति विशाखिलः। एतच्चासङ्गतम्। भरतस्य सङ्ग्रहश्लोके मूर्छनातानयोर्भेदस्य प्रतिपादितत्वात्। कथम्। मूर्छनारोहक्रमेण तानोवरोहक्रमेण भवतीति भेदः।

मतङ्गः

## मूर्छनाभेदाः

सप्तस्वरमूर्छना, द्वादशस्वरमूर्छना चेति द्विविधा मूर्छना। तत्र सप्तस्वरमूर्छना चतुर्विधा, पूर्णा, षाडवा, औडुविता, साधारणा-चेति। तत्र सप्तभिः स्वरैः या गीयते सा पूर्णा। षड्भिः स्वरैः या गीयते सा षाडवा। पञ्चभिः स्वरैः या गीयते सा औडुविता। काकल्यैरन्तरस्वरैः या गीयते सा साधारणा।

मतङ्गः

## मूर्छनाविधिः

तत्र येनैव स्वरेणोच्छ्रायः (प्रबन्धे उद्ग्राहः) प्रवर्तते तेनैव स्वरेण यदा समाप्तिरपि भवति तदा मूर्छना जायते। यथा—षड्जग्रामे प्रथमायां मूर्छनायां सरिगमपधनिसेति स्वरसन्निवेशे सति षड्जो मूर्छति। तथा च सौवीरायां उद्ग्राहसमाप्तौ मध्यमस्वरयोगात् मपधनिसरिगमेति स्वरसन्निवेशे सति सौवीराख्या प्रथमा मूर्छना जायते।

नान्यः

## मूर्छनाश्रुतिनामानि—(मतान्तरे)

नान्दी विशाला सुमुखी विचित्रा संभवस्तदा।
षड्जे मतो मुनीन्द्रेण भरतेन शिवेन च॥
चित्रा घना वलनिका निवेशा सञ्जायतेऽसौ वृषभस्तथैव।
स्वरोऽत्र माला सरसानिवेशाद्गान्धारनामा कथितः पृथिव्याम्॥
मातङ्गी मागधी मैत्री शिवा ज्ञातस्तु मध्यमः।
कला कलाभवा मद्रा शार्ङ्गरव्यास्तु पञ्चमः॥
बालामृतारसानां तु संयोगाद्धैवतस्वरः।
जपामधुकराभ्यां तु निषादः परिकीर्तितः।
एवं स्वराः संमूर्छितो यत्र रागतां प्रतिपद्यते॥

कृष्णदासः

## मूर्छनासंख्या

स्वरौ यावतिथौ स्यातां ग्रामयोः षड्जमध्ययोः।
मूर्छना तावतिथ्येव तद्ग्रामावत एव तौ॥

दत्तिलः

## मूर्तिवसन्तः—मेलरागः (रामप्रियमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध प म ग म रि स.

मत्र

## मूलाभिनयः

अर्धपताकहस्तयोरङ्गुल्योश्चालनेन कर्तव्यः।

महाराष्ट्र

## मूलाहस्तः

(मूलाङ्कुशवत्)

पूर्वोक्ताधपताके तु तर्जनीर्मध्यमापि च।
फणिवद्वक्रिताकारे मूलार्थेऽस्स प्रयुज्यते॥

शृङ्गारः

## मृगकलासः

पादाङ्गुलीमिराक्रम्य भुवमुत्थाय जानुनी।
मुहुर्मुहुरसन्निपात्य गर्भखिन्नमृगीव चेत्॥
सालस्यगमनोपेता मृगशीर्षकरान्विता।
नर्तकी गुरुमानेन हरिणप्लुतयाप्लुतिम्॥
विदध्याद्द्विविधां यत्र कलासौऽसौ मृगादिगः।

अशोकः

सालस्यगमनेति लास्याङ्गे नृत्यन्तीत्यर्थः।

## मृगचन्द्रहस्तः

दक्षिणे मृगशीर्षाङ्गोऽप्यस्य कोणेऽपरः करः।
अर्धचन्द्राकृतिस्तिर्यक् मृगचन्द्रकरो मतः।
चमूरौ मृगचन्द्रोऽयं प्रयोज्यस्तु गुरोर्मते॥

शृङ्गारशेखरः

## मृगचपला—ध्रुवावृत्तम् (दशाक्षरम्)

आद्यचतुर्थाविह निधनः पञ्चम एवं यदि च गुरुः।
पङ्क्तिविधाने परिपठिता सा खलु नाम्ना मृगचपला॥
चतुर्थे पञ्चमाद्यौ च लघवो गुरुरन्ततः।
शेषाश्च षट् द्रुता ज्ञेया युग्मौजा मृगचापला॥

भतनगा गणाः ।
शृङ्गाररसमाश्रित्य रागे मालवकैशिके ।
पंकयसंडे विमलजले । पङ्कजषण्डे विमलजले ॥

नान्यः

इयं भरतमते सुरदयितेति कथ्यते ।

**मृगनन्दनः—मेलरागः (मेचकल्याणीमेलजन्यः)**
(आ) स रि ग ध नि स.
(अव) स नि ध म ध ग रि स,.

मज

**मृगप्लुता—चारी**
एवं कुञ्चितमुद्धृत्योद्धृत्य भूमौ निपातयेत् ।
अन्यमञ्चितजङ्घान्तं पश्चाद्देशे विनिक्षिपेत् ॥
यत्र सा कथिता चारी नृत्तविद्भिर्मृगप्लुता ।
एनां चारीं प्रयुञ्जीत विदूषकपरिक्रमे ॥

वेमः

**—देशीचारी**
मुहुर्मुहुरसमुत्प्लुत्य प्रसार्य चरणौ यदा ।
महीतले निपात्येते तदा ज्ञेया मृगप्लुता ॥

वेमः

**मृगराट्—देशीताल:**
मृगराडिति विख्याते द्रुतात्संकीर्णलो भवेत् ।
० ।

लक्ष्मणः

**मृगशीर्षः—हस्तः**
सर्पशीर्षकरस्योर्ध्वे यदाङ्गुष्ठकनिष्ठिके ।
मृगशीर्षस्तदा हस्तः सत्वधो वदनो भवेत् ॥
अद्येह सांप्रतार्थेषूत्तानोद्यूताक्षपातने ।
गण्डादिक्षेत्रसंस्थस्तु गण्डादिस्वेदमार्जने ॥

शार्ङ्गः

**मृगशीर्षहस्तः**
मृगशीर्षे तु काङ्गूलो ह्यथवा मृगशीर्षकः ।

शृङ्गारः

**मृगशीर्षाभिनयः**
काङ्गूलहस्तेन कर्तव्यः ।

महाराष्ट्रे

**मृगसत्वा—स्त्री**
स्वल्पोदरी भग्ननासा तनुजङ्घा वनप्रिया ।
चलनिस्तीर्णनयना चपला शीघ्रगामिनी ॥
परित्रासपरा भीरू रोमशा गीतलोभिनी ।
निवासस्थिरचित्ता च मृगसत्वाङ्गना स्मृता ॥

भरतः

**मृगाङ्कः—देशीतालः**
मृगाङ्को द्रुलघुर्मतः । ० ।

मदनः

**मृगाङ्कमण्डनः देशीतालः**
लघुर्नसौ द्रुतो लघुर्द्रुतौ लघुर्द्रुतौ लघुः ।
नसौ द्रुतो जनो लगो मृगाङ्कमण्डनाह्वये ॥
31 मात्राः

तालप्रस्तारः

**मृगाविद्धः—हस्तः**
मृगशीर्षाभिधौ हस्तौ श्लिष्टावाविद्धवक्रतः ।
मृगाविद्धाविति प्रोक्तौ योज्यौ वादमृगार्थके ॥

शृङ्गारशेखरः

**मृगी—गतिः**
मृगवद्गमनं वेगात्त्रिपताककरौ वहन् ।
पुरतः पार्श्वयोश्चैव यानं मृगगतिर्भवेत् ॥

नाट्यदर्पणे

मृगीव चकिताङ्गैर्या स्वनुरागमनोरमा ।
प्रोक्ता मृगगतिस्सैव नित्यसौन्दर्यवर्धनी ॥

देवेन्द्रः

**—ध्रुवावृत्तम्**
यस्या द्वितीयषष्ठौ जकारसंज्ञौ चतुर्थकं चैव ।
धृत्यां भवन्ति पादे गुरूणि चान्यानि सा मृगी नाम्ना ॥
नायिकानां मृगी कार्या पर्वतोद्यानदर्शने ।
हिन्दोलाख्येन रागेण चतुरश्रचतुष्टये ॥
एदाणि पादसंखोभिदाणि पुप्फाणि वुत्तचूदाणि ।
एतानि वा संक्षोभितानि पुष्पाणि निवृत्तचूतानि ।

नान्यः

अत्र णिपाद भिदाणि णिवुत्ताः द्वितीयचतुर्थषष्ठगणा जगणाः ।

**मृदङ्गः—आनद्धम्**
बीजवृक्षशरीरोऽयं कर्करैः सुदृढीकृतैः ।
चर्मणानद्धतुण्डोऽसौ ब्रह्मणा निर्मितः पुरा ॥

एकविंशाङ्गुलायामो मध्ये किञ्चित्पृथुर्भवेत् ।
मन्वङ्गुलमुखं वामं दक्षिणास्यं त्रयोदश ॥

एकाङ्गुलाधिके चक्री चर्मणी वर्तुले घने ।
मध्ये तयोश्च रन्ध्राणि चत्वारिंशत् पृथक् पृथक् ॥

प्रान्ते रन्ध्राणि कुर्वीत तेषामङ्गुलमन्तरम् ।
तेषु रन्ध्रेषु वध्रं च सीवनीक्रमतो न्यसेत् ॥

तस्मिन्वध्रे तु प्रोतव्या पट्टिका कर्करात्मिका ।
अधश्चोर्ध्वं च कर्तव्या पृष्ठोदरनिदर्शिनी ॥

मध्यं विवेष्टयेत्प्राज्ञः त्रिभिर्वध्रैर्दृढं ततः ।
तत्र गोमूत्रिकाबन्धं द्विविधं सम्मुखं न्यसेत् ॥

प्रान्ते कुण्डलिके कार्ये कक्षाबन्धनहेतवे ।
तत्र कक्षां विनिक्षिप्य सव्यतो द्विगुणं न्यसेत् ॥

प्रोतां द्विगुणितां कक्षां बध्नन्द्वां द्विरञ्चलाम् ।
कुर्वीत यस्य तन्नाम मृदङ्ग इति कीर्तितम् ॥

भूतिमिश्रं तथा चान्नं मृदितं च सुचिक्कणम् ।
पिण्डकं तत्र वामास्ये पूरिकामानने न्यसेत् ॥

तनुमानतया भक्तं सव्यवक्त्रे विलेपयेत् ।
ततस्तस्य भवेन्नादः श्रवणोत्सवकारकः ॥

तकारश्च धकारश्च थोङ्कारो हिङ्करस्तथा ।
नकारश्च सदङ्कारो मृदङ्गे पाटवाचकाः ॥

सर्वतूर्येष्वयं गुल्यो मृदङ्गो नादशोभनः ।
अस्य संयोगमासाद्य वाद्यं सर्वं सुशोभते ॥

हौडुक्किकस्यानुगताः श्रेष्ठा मार्दलिकाः मृताः ।

सोमेश्वरः

## मृदङ्गः

अङ्गं मृदो यतश्चैषां मृदङ्गास्तेन कीर्तिताः ।
मथनादथ मृच्चर्म मेनिरे ह्यनयोः परे ॥

नान्यः

## मृदङ्गलक्षणम्

निर्दोषबीजवृक्षोत्थः पिण्डो द्व्यङ्गुलसम्मितः ।
एकविंशत्यङ्गुलः स्याद्दैर्घ्ये वामे मुखे पुनः ॥

चतुर्दशाङ्गुलानि स्युः दक्षिणे तु त्रयोदश ।
घनं यस्य मनाङ्मध्यपृथुरेकाङ्गुलाधिकं ॥

वक्त्राभ्यां चर्मणी वृत्ते वलये...प्रतियोस्तयोः ।
चत्वारिंशत्पृथग्रन्ध्राण्यङ्गुलान्तरवर्ति च ॥

बद्धे तद्रन्ध्रविन्यस्तैः सीवनप्रक्रियावती ।
प्रोतार्धाधःस्थिता दृष्टोदरपृष्ठावदम्रिका ॥

क्रियते वेष्ट्यते मध्यः त्रिभिर्बन्धैर्दृढं ततः ।
कार्यो गोमूत्रिकाबन्धः तत्र वध्रद्वयेन च ॥

तथा यथापि नद्धास्ये भवेतां चर्मणी दृढे ।
कुण्डलयोः प्रान्तयोर्वामकुण्डल्यां सन्निवेश्य च ॥

कक्षां क्षिप्त्वा दक्षिणस्यां कृत्वा द्विगुणतां नयेत् ।
साञ्चलद्वितयां पट्टमयीमष्टाङ्गुलायताम् ॥

यद्वाऽन्यवक्त्रजां शोभानुगां न्यस्य कटीतटे ।
भूतिमिश्रेण भक्तेन चिक्कणेनातिमर्दनात् ॥

पिण्डिकां पूरिकाकारां वामवक्त्रे निवेशयेत् ।
बोहणाख्येन तेनास्यं लिम्पेदल्पेन दक्षिणम् ॥

एवं जलधरध्वानगम्भीरो भवति ध्वनिः ।
रक्तचन्दनजो यद्वा खादिरोऽन्यैरयं मतः ॥

त्रिंशदङ्गुलदैर्घ्यश्च पिण्डेत्वङ्गुलसम्मितम् ।
एतस्य वामवदनं द्वादशाङ्गुलसम्मितम् ॥

दक्षिणं तु मितं सार्धैरेकादशभिरङ्गुलैः ।
मुनिभिर्मर्दलस्योक्ता देवता नन्दिकेश्वरः ॥

निगदन्ति मृदङ्गं तं मर्दलं मुरजं तथा ।
प्रोक्तं मृदङ्गशब्देन मुनिना पुष्करत्रयम् ॥

अत्यन्ताव्यवहार्यत्वान्नास्माभिरुपदर्शितम् ।
संज्ञामात्रं तथापीह कथ्यते संभवे तथा ॥

हम्मीरः

## मृदङ्गवादनमार्गः

वादनैस्य चतुर्मार्गा ईरिताश्चन्द्रमौलिना ।
घट्टिताख्या विकृष्टा च गोरक्षालम्रिका ततः ॥

नारायणः

## मृदङ्गोत्पत्तिः

मृदङ्गढक्कानिस्सानत्रिवलीपटहादिकाः ।
मुरजस्तु मते जैने जातश्शङ्खान्महानिधेः ॥

लोके तु स्वयमीशेन स वाद्यो मुरजः कृतः ।
कथं रुद्रेण तद्वाद्यं मुरजाख्यं विनिर्मितम् ॥

कथं पाटाख्यया वर्णा न्यस्तास्तस्मिंश्च बन्धिनि ।
कैलासाद्रौ स्थितं रुद्रमन्यदा ध्यानतत्परम् ॥

ज्ञात्वा स्वघातकमिति तत्रागान्मुरजासुरः ।
प्राप्तब्रह्मवरं मां तु न हन्तुं कोऽप्यलं परः ॥

कृते हरस्तपोयुक्त्वा ततस्तं पातयाम्यतः ।
विमृश्यैवं तपोविघ्नरूपं निर्मापयन्मधुम् ॥

तत्र कैलासशिखरे वने बहुतरश्च सः ।
ध्यानं विसृज्य रुद्रोऽपि पश्यति स्म तपोवनम् ॥

तपोलोपि च तद्ज्ञात्वा तत्कृतं ज्ञानचक्षुषा ।
तपोलोपिनि तस्मिंस्तु कुपितो निर्ययौ ततः ॥

रुद्रो रौद्रमनास्तं च दृष्ट्वा प्रोवाच राक्षसम् ।
तपोभङ्गोद्यमं कृत्वा रेरे रक्षः क यास्यतः ।
व्रजन्नित्युक्त एवायं युयुत्सुर्हरमापतत् ॥

सुचिरं योधयित्वा तं पशुमारममारयत् ।
कण्ठपाण्यङ्घ्रिहीनं तद्देहं कृत्वाऽत्यजद्भुवि ॥

शिवे स्वस्थानमायाते सार्धं तद्देहपञ्जरम् ।
उत्पाद्य मांसलोभेन गृध्रैर्नीतं नभस्थले ॥

मांसं तत्पञ्जरस्थं तैः किञ्चिद्भुक्त्वा तु भारतः ।
पातितं स्वमुखेभ्यस्तत्प्रान्तवृक्षोपरि स्थितम् ॥

आन्त्रावलिभिः संलग्नं तरुशाखाविलम्बितम् ।
सूर्यातपेन संशुष्कं चर्मानद्धं मुखद्वये ॥

निर्मांसत्वात्तदन्तस्तु सुषिरं वायुयोगतः ।
शब्दायमानं श्रीकण्ठः शुश्राव......॥

तच्छब्दितं समाकर्ण्य श्रुतिसौख्यकरं परम् ।
कौतुकात्तत्र गत्वेशः तं ददर्श तथास्थितम् ॥

किमेतदिति तद्रूपं पश्यन् सस्मार तं शिवः ।
विचिन्त्य स्वहृतं पूर्वं वामहस्तेन चास्पृशत् ॥

त्रिविधश्शब्द उत्पेदे वक्त्रास्मिन्सनादके ।
कुतुकाद्दक्षिणेनापि करेण प्रहृतात्ततः ॥

उत्पन्नो धीत्ययं शब्दस्तं जघान पुनश्शिवः ।
करेण वामेन परे जजृम्भे धो इति स्फुटम् ॥

दक्षिणेन करेणापि मुरजाच्च पुनर्हतात् ।
जज्ञे द्रौमित्ययं शब्दः स चाथ स्वाश्रयं ययौ ॥

कियत्यपि गते काले प्रावृडार्तैस्समेतरि ।
विज्ञप्तश्शम्भुरुमया नवोटजकृते तदा ॥

पलाशस्याग्रपत्राणां शाद्वलानां निवेशनात् ।
गणेभ्यः कारयामास सर्वस्तत्रोटजं वनम् ॥

एकदोटजपत्रेषु शुष्केषूपरि पातितान् ।
नवाब्देनाम्बुबिन्दूंस्तु शुश्रावोमायुतो हरः ॥

उक्तश्च शिवया स्वामिन्पत्रेष्वासारयोगतः ।
सञ्जाता यादृशाश्शब्दाः तादृशान्स्थापय क्वचित् ॥

इत्युक्ते विमृशन्नीशः स्मृत्वा मुरजमोमिति ।
ऊचे च पूर्ववृत्तान्तं तच्छब्दांस्तत्र च न्यधात् ॥

ते शब्दाः कीदृशास्तत्र कथं व्यस्ता ।
तत्प्रसङ्गेन तत्पाणेरुत्पन्नाः कीदृशास्त्विति ॥

शुष्कपत्रोद्भवाः पूर्वमुत्पन्ना मुरजेऽपि ते ।
उक्ताश्शब्दाः पञ्चत्रिंशदथ पाटाः करोद्भवाः ॥

सुधाकलशः

अनध्याये कदाचित्तु स्वातिर्महति दुर्दिने ।
जलशयं जगामाथ सलिलानयनं प्रति ॥

तस्मिन् जलाशये यावत् प्रतिष्ठः पाकशासनः ।
धाराभिर्महतीभिस्तु पूरयन्निव मेदिनीम् ॥

पतन्तीभिश्च धाराभिर्वायुवेगाज्जलाशये ।
पुष्करिण्यां पटुः शब्दः पत्राणामभवत्तदा ॥

तेषां धारोद्भवं नादं निशम्य स महामुनिः ।
आश्चर्यमिति मन्वानश्चावधारितवान् स्वनम् ॥

ज्येष्ठमध्यकनिष्ठानां पत्राणामवत्तार्य च ।
गम्भीरमधुरं हृद्यमाजगामाश्रमं ततः ॥

ध्यात्वा सृष्टिं मृदङ्गानां पुष्करानसृजत्ततः ।
पणवं दर्दरं चैव सहितो विश्वकर्मणा ॥

देवानां दुन्दुभीर्दृष्ट्वा चकार मुरजांस्ततः ।
आलिङ्ग्यमूर्ध्वकं चैव तथैवाङ्किकमेव च ॥

चर्मणा चावनद्धांस्तु मृदङ्गान् दर्दरं तथा ।
तन्त्रीभिः पणवं चैवमूहापोहविशारदः ॥

स्वयं चान्यान्यपि तथा काष्ठायसकृतान्यथा ।
झल्लरीपटहादीनि चर्मनद्धानि तानि च ॥

आतोद्यसमवाये तु यानि योज्यानि वादकैः ।

भरतः

मृदवम्—वीथ्यङ्गम्

यत्कारणाद्गुणानां दोषीकरणं भवेद्विवादकृतम् ।
दोषगुणीकरणं वा तन्मृदवं नाम विज्ञेयम् ॥

भरतः

गुणानां दोषत्वं दोषाणां वा गुणत्वं यत्र क्रियते तन्मृदवम् विवादकृतमित्यनेन लक्षणाद्विशेषमाह । इदं वृत्त्यन्तरं स्वभाव-

मित्यर्थः। यथा—'वेण्यां—शिरः श्वा काको वा द्रुपदतनयो वा परिमृशे'दित्यत्र दोषस्य गुणीकरणम्। यदि शस्त्रमुज्झितं इति कर्णवचनेन प्रतिज्ञातपरिपालनस्य गुणस्यापि दोषीकरणं विवादकृतमेव। मृदवं मर्दनं। मृतपरपक्षमर्दनेन स्वपक्षमवति रक्षतीति।

अभिनवः

मृदुः—श्रुतिजातिः

इयं मन्दा, रतिका, क्ष्मा, प्रीतिः, इति चतसृषु श्रुतिषु वर्तते।

मृल्लक्षणम्

इष्टकाकीशसाङ्गारशर्कराप्रस्तरादिभिः।
दोषैर्हीना मृदो ग्राह्या मृदङ्गानां तु सिद्धये॥

मर्दयेत्सलिलेनाथ भूयो भूयस्तथा मुहुः।
एभिश्चैते श्लक्ष्णमृद्भिः मृदङ्गान्कारयेद्बुधः॥

शुष्का तु द्विगुरप्येवं तथा श्वेतातपे तथा।
पाचयेच्च करीषाग्नौ सुपक्वांश्चोद्धरेत्तथा॥

नान्यः

मेखला—श्रोणीभूषणम्

अष्टयष्टियुतायष्टिः लता।

—हस्तः

मेखलावत्परिभ्रान्तं मेखलेति प्रकीर्तितम्।

उमा

मेघः—रागः

मेघरागो मन्द्रहीनो ग्रहांशन्यासधैवतः।

हम्मीरः

प्रसक्तो धैवत्याः स्वरपरिकरैः पूरितवपुः
परित्यक्तो मन्द्रध्वनिभिरपि शेषस्त्वसमः।
सदा धांशन्यासग्रहणसहितस्तारपदवी-
स्फुरत्षड्जो मेघो गुरुभिरिह रागो निगदितः॥

नान्यः

पूर्णमन्द्रेण रहितो न्यासांशग्रहधैवतः।
षड्जतारस्त्वरसमो मेघरागो निगद्यते॥

मतङ्गः

वीरे धांशग्रहन्यासः षड्जधैवतिकोद्भवः।
गेयो घनागमे मेघरागोऽयं मन्द्रहीनकः॥

नारायणः

मेघः पूर्णो धत्रयस्त्यादुत्तरायतमूर्छनः।
विकृतो धैवतो ज्ञेयः शृङ्गाररसपूरकः॥

दामोदरः

—ग्रामरागः

ग्रहांशन्यासषड्जः स्यात् षड्जधैवतिकोद्भवः।
षड्जतारः समशेषस्वरस्स्यान्मेघरागकः॥

भट्टमाधवः

—मेलरागः

अयं मल्लार इत्यप्युच्यते।

अहोबिलः

मल्लारशब्दे द्रष्टव्यम्।

मेघतरङ्गिणी—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स म ग म प नि स.
(अव) स ध प म रि ग रि स.

मत्र

गौडी भिन्नमतङ्गस्य षड्जोत्था धैवतांशभाक्।
लवणोद्भवभाषाया विभाषा रिपवर्जिता॥

मेघनादस्स एवोक्तः प्रार्थनायां नियुज्यते।

जगदेकः

भाषाण्याख्यायामिदं त्रावणीलक्षणमित्युक्तम्। प्रार्थनायामिति नायिकानायकयोरित्यूह्यम्।

मेघनादः—मेलरागः

ऋणायुक्तः कोमलेन मेघनादस्तु षाडवः।
सस्वरादिस्वरारब्धो मवर्ज्योऽपि रिगांशकः॥

प्रातर्गेयः। अहोबिलः

मेघमाला—चतुर्विंशत्यक्षरवृत्तम्

ननररररराः। भरतः

मेघरञ्जनी—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि म प ध नि स.
(अव) स ध प म ग रि स.

मत्र

मेघरञ्जनीरागध्यानम्

विद्युल्लताङ्गीं विबुधेन्द्रपूजासन्धानहस्तार्पितपुष्पमालाम्।
नीलांबराडम्बरसम्भितम्बिनीं भजामि नित्यं घनमेघरञ्जनीम्॥

रागसागरः

**मेघरञ्जिका**—रागः

अयं रागः कर्णाटबङ्गालपञ्जविकानामभ्यां प्रपञ्चितमन्यत्र ।

जगदेकः

**मेघरञ्जी**—हस्तः

मेघरञ्ज्यां ताम्रचूडः ।

शृङ्गारः

**मेघरञ्जी**—(त्रावणी) रागः

नाटीलक्षणसंयुक्ता स्वस्थाने च प्रकम्पिता ।
मेघरञ्जीति विख्याता त्रावणी कथिता बुधैः ॥

सोमेश्वरः

**मेघरञ्जीरागध्यानम्**

श्रुतौ दधाना वचकर्णिकारं
कटिस्फुरत्केसरपुष्पकाञ्चिः ।
अध्यापयन्ती स्वकरस्थशारीं
श्रीरामरामेति च मेघरञ्जी ॥

संगीतसरणिः

**मेघरागः**

रागाङ्गो मेघरागस्स्यात् धैवतैः परिपूरितः ।

मदनः

**मेघरागध्यानम्**

पर्यङ्के प्रियया सार्धमासीनश्चोपवीणयन् ।
पीताम्बरसुभूषाढ्यो मेघरागो घनान्वितः ॥

संगीतसरणिः

अयं संपूर्णः ।

नीलोत्पलाभवपुरिन्दुसमानचेलः
पीताम्बरस्तृषितचातकयाच्यमानः ।
पीयूषमन्दहसितो घनमध्यवर्ती
वीरेषु राजति युवा किल मेघरागः ॥

दामोदरः

**मेघवराली**—मेलरागः ( मायामालवगौलमेलजन्यः )

( आ ) स रि म प ध नि स .
(अव) स नि ध नि प म रि म ग रि ग स .

मत्र

**मेघावरणः**—देशीतालः

मेघावरणंताले तु नवद्रुतगुरुप्लुतौ ।

लक्ष्मणः

पाठोऽस्पष्टः—

**मेचकमौली**—मेलरागः (मायामालवगौलमेलजन्यः)

( आ ) स रि ग प प ध नि स .
(अव) स नि ध प म ग रि स .

मत्र

**मेचकल्याणी**—मेलकर्ता रागः

स रि ग ० ० म प ० ध ० नि स .

मत्र

**मेदिनी**—प्रबन्धाङ्गम्

षडङ्गयुक्ता खलु मेदिनी स्यात् ।

रघुनाथः

इयं श्रुतिरिति षडङ्गत्वयान्यैरुच्यते ।

**मेधा**—प्राकृते मालावृत्तम्

चतुर्मात्रिकाः पञ्च यः ।

विरहाङ्कः

**मेरुकृतिः**—क्रियाङ्गरागः

षड्जांशग्रहणन्यासा धैवतर्षभवर्जिता ।
शुद्धभैरवजा धीरैर्वीरैर्मेरुकृतिः स्मृता ॥

कुम्भः

**मेरुनन्दनः**—मेलरागः (नासिकाभूषणमेलजन्यः)

( आ ) स ग रि ग म प नि ध स .
(अव) स नि ध म रि ग म रि स .

मत्र

**मेलः**

मेलज्ञानं विना मेलजन्यं ज्ञातुं न शक्यते ।
तस्मात्तन्मेलबोधार्थं तत्स्वरूपं निरूप्यते ॥

षड्ज आद्यस्तदुपरि चत्वारः क्रमशः स्वराः ।
ऋषभाख्यानकाश्चापि गान्धाराख्यानकाश्च ते ॥

आद्यस्तत्र न गान्धारः चतुर्थऋषभो न हि ।
ऋषभावपि गान्धारौ द्वितीयकतृतीयकौ ॥

प्रथमादित्रयं यत्र भवेदृषभसंज्ञिकम् ।
द्वितीयादित्रयं चात्र भवेद्गान्धारसंज्ञितम् ॥

नन्वेवं षड्जोपरि विद्यमानेषु चतुर्षु स्वरेषु प्रथमः ऋषभ एव न गान्धारः । चतुर्थस्तु न गान्धारः । न ऋषभः । मध्यगतौ द्वावृषभौ गान्धारावपि भवतः—इति यदुक्तं—तन्न सङ्गच्छेत् । प्रथमस्यर्षभत्वसंभवेऽपि चतुर्थस्य गान्धारत्वसंभवेऽपि मध्यगतयोः द्वयोः स्वरयोः ऋषभत्वगान्धारत्वे विरुद्धधर्मौ एकैकस्य न संभवतः । विरुद्धधर्मयोः एकत्र समावेशायोगात्—इति ।

अत्रोच्यते—सत्यं, यद्यपि निरपेक्षयोः विरुद्धयोः धर्मयोरेकत्र संमावेशायोगः, तथापि विरुद्धयोरपि सापेक्षयोर्धर्मयोरेकत्र समावेशस्सङ्गच्छत एव । एकमातृप्रसूतानां चतुर्णां भ्रातॄणां मध्यमगतयोर्द्वयोः ज्येष्ठकनिष्ठापेक्षया ज्येष्ठत्वकनिष्ठत्वविरुद्धधर्मा विति न दोषः । अत्र एषु चतुर्षु स्वरेषु मुखरि—श्रीरागनाटाख्य-लक्ष्यानुरोधेन प्रथमद्वितीयौ वा शुद्धर्षभगान्धारौ द्वितीयतृतीयौ वा पञ्चश्रुत्यृषभसाधारणगान्धारौ तृतीयचतुर्थौ वा षड्छ्रुत्यृष-भान्तरगान्धारौ ऋषभगान्धारावन्यतरौ नियमेन सङ्ग्राह्यौ । तत्रर्ष-भः पूर्वभावी । गान्धारस्तदनन्तरभाव्येव । एवमुक्ताः शुद्धर्ष-भादयः अन्तरगान्धारान्ताश्चत्वारः स्वराः । वीणायां मेरोः पुरस्ताच्छतसृषु सारिकासु स्पष्टमुपलभ्यन्ते । तत ऊर्ध्वं पञ्चमे पर्वणि शुद्धमध्यमः । षष्ठे पर्वणि जायमानः स्वरः च्युतपञ्चम-मध्यम इति स्वरमेलकलानिधिकारः । च्युतषड्जच्युतमध्यमयोः निषादत्वगान्धारत्वव्यवहारबलाच्च्युतषड्जनिषादच्युतमध्यम-गान्धारसंज्ञाकरणवदस्यापि च्युतपञ्चममध्यमसंज्ञां कृतवान् । चतुर्दण्डीप्रकाशिकाकारस्तु एवं लक्ष्यज्ञव्यवहारानुरोधेन वरा-लीमध्यमसंज्ञयैव व्यवहृतवान् । अस्माकं तु मध्यमग्रामविभा-जकपञ्चमस्योपान्तश्रुतिस्थस्यैव षड्जग्रामे शास्त्रे विकृतत्वकथ-नाच्छास्त्रानुरोधेन विकृतपञ्चममध्यम इति व्यवहर्तुमुचितमिति भाति । मध्यमग्रामजन्यरागेषु मध्यमादितोडिप्रभृतिषु तादृश-पञ्चमप्रयोगादर्शनात् षड्जग्राम एव मध्यमादिप्रभृतिलक्ष्येषु स्वचतुर्थश्रुतिस्थितपञ्चमस्यैव प्रयोगदर्शनाच्च विकृतपञ्चममध्य-मेन सह शुद्धपञ्चमस्य कचिल्लक्ष्ये प्रयोगदर्शनात् विकृतपञ्चम-मध्यम इत्येव व्यवहर्तुमुचितः । एवं विकृतपञ्चममध्यमे सिद्धे अनयोः शुद्धमध्यमविकृतपञ्चममध्यमयोरन्यतरो नियमेन सङ्ग्रा-ह्यः । ततःसप्तमे पर्वणि शुद्धपञ्चमो निष्पद्यते । अयमेकः सङ्ग्राह्यः ।

षड्जस्वरस्य पुरतः चत्वारः स्युः स्वरा यथा ।
पञ्चमस्यापि पुरतः चत्वारः स्युः स्वरास्तथा ॥
धैवताख्या निषादाख्याः प्रथमाद्यास्तु धैवताः ।
द्वितीयाद्या निषादाः स्युः मुखार्यादिषु तु त्रिषु ॥
रागेष्वथ धनी शुद्धौ द्वितीयौ तु धनी इमौ ।
पञ्चश्रुतिर्धैवतस्य कैशिक्याख्यनिषादकः ॥
तृतीये षट्च्छ्रुतिस्थस्य काकल्याख्यनिषादकः ।
त्रिष्वेषु युगलेष्वन्यतरत्सङ्ग्राह्यमीरितम् ॥
स्वरेषु द्वादशस्थेषु तत्तद्रागोपयोगतः ।
तत्तत्स्वरसमूहात्मा मेल इत्येवमीरितः ॥

विशेषसंज्ञया सम्यक् संज्ञिता ये स्वराः पुरा ।
त एतेष्वत्र विज्ञेयाः तद्विशेषपुरस्सरम् ॥

तुलजः

रामामात्येन विंशतिमेलाः कल्पिताः । तत्र ऋषभस्य धैवत-स्य च शुद्धपञ्चश्रुतिषट्श्रुतीति त्रीणि स्थानानि, गान्धारस्थशुद्ध-साधारणान्तरच्युतमध्यमसंज्ञानि चत्वारि स्थानानि, मध्यमस्य शुद्धच्युतपञ्चमभेदेन द्वे स्थाने, पञ्चमस्य शुद्धमित्येकमेव स्थानं निषादस्य शुद्धकैशिकीकाकलीच्युतषड्जेति स्थानचतुष्टयं, षड्ज-स्यैकमवस्थानं कल्पयित्वा शुद्धविकृतस्वरान् वीणायां स्थापि-तवान् । विंशतिमेलजन्याः षष्ट्यधिक रागा लक्षिताः । तेषां लक्षणे प्राचीनरागलक्षणेष्विव ग्रहांशन्यासगानवेलाः स्वरलोपादि-विषयाः मुख्यरागाणां दत्ताः ।

रामामात्यः राजसभाविनोदेषूपयुक्तान् रागानेव गृहीत्वा श्रुतिस्वरसामान्यगुणान् विंशतिमेलेषु विभाजितान् प्रकटीचकार । तेषु मेलेष्वपि पौनरुक्त्यादि दोषास्सन्तीति वेङ्कटमखिप्रभृतय ऊचुः । यथा—सारङ्गनाटकेदारगौल्योः एकैव स्वरस्थापना । समपाः शुद्धाः । रिधौ पञ्चश्रुतिकौ । गान्धारनिषादौ च्युतमध्य-मच्युतषड्जौ । सामान्योऽयं विन्यासः । द्वौ रागावप्येकमेले वर्तेते । रघुनाथस्तु सारङ्गनाटस्थाने काम्भोजीमुक्त्वा केदारगौल-काम्भोजीरागयोः समानलक्ष्म पठितवान् । उभयोरपि रागयोः रघुनाथानुसारि लक्षणं यथा—समपाः शुद्धाः रिधौ पञ्चश्रुतिकौ गान्धारोऽन्तरः । निषादः काकलिः । द्वयोर्मेलयोः समानलक्ष्म दोष इति वेङ्कटमख्याह ।

द्वितीयो दोषः । जन्यरागाणां भैरवीशङ्कराभरणगौलीरागाः श्रीरागमेललक्षिता रामामात्येनेति वदता वेङ्कटमखिना ते मेलान्तरेषु विन्यस्ताः । अपरो दोषः । नादरामक्रियामेले रामामात्येन साधारणगान्धार उक्तः । तदन्तरगान्धार एवेति वेङ्कटमखी । हेज्जुज्जिमेले रामामात्येन काकलिनिषाद उक्तः । शुद्धनिषाद एव गायकैः प्रयुक्त इति वेङ्कटमखी । रामामात्येन काम्भोजीमेले काकलिनिषाद उक्तः । तत्र कैशिक एवेति वेङ्कट-मखी । वीणारहस्यकारादिभिः काम्भोजीरागलक्षणे काकलि-निषाद एवोक्तः । रघुनाथवेङ्कटमखितुलजाः काम्भोजरागे कैशिकीनिषादमेवावदन् । सङ्ग्रहचिन्तामणौ सङ्गीतसम्प्रदाय-प्रदर्शिन्यां च काकलिनिषाद एवोक्तः । केदारगौलसारङ्गनाटयोः लक्षणसामान्यविषये आन्ध्रभाषायां रागतालचिन्तामणौ तयोः श्रुतिस्वरविन्यासे सादृश्यं यद्यप्यस्ति, स्वरलोपग्रहांशन्यास-बहुत्वाल्पत्वविषयेषु सर्वथा तौ भिन्नावेवेत्युक्तम् । अपि च विंशतिमेलेषु पञ्चदशैव ग्राह्याः, शिष्टाः पञ्चमेलाः कारणान्तरेण सामान्यतः कल्पिता इति तत्रैवोक्तम् ।

**मेलरागक्रमः—(विठ्ठलोक्तः)**

विठ्ठलस्य सङ्गीतरत्नाकरनाम्नि ग्रन्थे एकदेशभागो लब्धः। तत्रापि ग्रन्थपाता बहवो दृश्यन्ते। लब्धपत्रेषु शुद्धमेलवीणा त्रिविधा लक्षिता। मध्यमेलवीणा एकभेदा च। अनन्तरं मेलसंख्या गणिता। तत्र विकृतस्वराणां संयोगान्नवतिमेलास्संभवन्ति। यथा—शुद्धानां भेदः एकः। स्वराणां द्विविकारे जाते सति षड्भेदाः त्रयाणां विकारे जाते पञ्चत्रिंशत्। त्रिविकारे द्वात्रिंशत्। चतुर्विकारे दशप्रभेदाः। पञ्चस्वराणां विकृतानामेको भेदः। आहत्य नवतिभेदा मेला इति कथ्यन्ते। तेष्वेकोनविंशतिमेलाः प्रधानतमाः। यथाह—

मेलेषु सर्वेष्विह वर्णितेषु प्रख्यातरागोद्भवनैकहेतून्।
मेलानिदानीं कतिचिद्गृणामः पूर्वोक्तलक्ष्मान्वितवीणिकायाम्।
कृताद्यमेलस्तु मुखारिकायास्ततो भवेन्मालवगौडमेलः॥

श्रीरागमेलस्तदनन्तरं स्यात् स्याच्छुद्धनट्टाह्वयकस्य मेलः।

देशाक्षिकाया अपि मेलकः स्यात्कर्णाटगौडस्य भवेत्समेलः।

केदारगौलस्य भवेत्तु मेलो हेज्जुज्जिमेलोऽपि हमीरमेलः।
कामोदरागाभिधकस्य मेलः ततस्तु तोड्याह्वयरागमेलः।
आभीरिकारागगतश्च मेलो मेलो भवेच्छुद्धवराटिकाख्यः।
स्याच्छुद्धरामक्रियमिधस्स मेलो देवक्रियायाश्च भवेत्तु मेलः।
सारङ्गमेलस्तदनन्तरं स्यात्कल्याणमेलोऽपि ततःपरं तु।
हिन्दोलरागस्य भवेत्तु मेलो स्यान्नादरामक्रियमिधस्य मेलः।
इतीरितास्ते नवचन्द्रसंख्या एवं परांस्तान्कलयन्तु तद्ज्ञाः॥

अस्मिन्ग्रन्थे काकलिनिषादस्य लघुषड्ज इति अन्तरगान्धारस्य लघुमध्यम इति च नाम विहितम्। रसकौमुद्यां विठलः श्रीकण्ठेन स्मृत इति हेतोः विठलः श्रीकण्ठात्प्राचीनः।

**मेलः—(नृत्ते)**

मृदङ्गपाटजं गानं करटाश्रुतितन्त्रिकम्।
घनं पात्रनटैर्युक्तं मेलमित्यभिधीयते॥

नन्दी

**मेलनहस्तः**

सन्दंशो नाभिदेशे तु विसृतो मेलनाभिधः।
नाभिस्थाने त्वसौ हस्तो नाभिस्थलनिरूपणे।
वक्षस्स्थले त्वसौ हस्तो मनश्चाञ्चल्यदर्शने॥

विनायकः

**मेलापकः—वाद्यप्रबन्धः**

काहला करला टीपी कलितैर्वादनैस्सह।
धृतैकताली तालेन प्रारम्भे नर्तनस्य तु॥

कूटेनैकेन संबद्धो यदल्पो वाद्यखण्डकम्।
अभ्यस्यते चेद्बहुलस्तथा मेलापको भवेत्॥

अस्यावसाने कर्तव्यः छण्डणो वाद्यवेदिभिः।
एतत्तु व्यवहारे स्वे तद्ज्ञा मेलाविनीविदुः॥

तिरिकित्यक्षरावृत्तिः टीपिरित्युच्यते बुधैः।

वेमः

करटा टीपीति। करटायाः टिरिकीति पाट उच्यते। उदाहरणं रत्नाकरे द्रष्टव्यम्।

**मेलापकः**

प्रोक्तो मेलापकस्तद्ज्ञैरुद्ग्राहध्रुवमेलनात्।

जगमल्लः

मेलापको द्विधैव स्यादुद्ग्राहध्रुवमेलनात्।
आभोगध्रुवयोश्चैव मेलनादपरो भवेत्॥

हरिपालः

**—वाद्यप्रबन्धः**

एकावल्यां द्रुते माने नर्तनारम्भगोचरे।
समं च करटाटीपिकाहलावादने सति॥

अभ्यस्तो वाद्यखण्डोऽल्पः कूटेनैकेन निर्मितः।
तद्धीमिति छण्डणान्तः स्मृतो मेलापको बुधैः॥

विद्यावन्तः स्वसमये प्राहुर्मेलापनीमिमाम्।
वर्णानां टिरिकीत्येषामावृत्तिष्टीपिरुच्यते॥

मार्गः

**मेषः—हस्तः**

मध्यमानामिकाङ्गुष्ठाश्लिष्टाश्चापि प्रसारिताः।
वक्रे कनिष्ठातर्जन्यौ मेषहस्त इतीरितः॥

अधोमुखः पार्श्वभागे मेषार्थे विनियुज्यते।
अग्नेर्वाहनभावे च भावशास्त्रानुसारतः॥

विनायकः

**मेषः**

गान्धारो मेषपर्यायशब्दैरुच्यते।

**मेषहस्तः**

करो ह्यजामुखाभिख्यो मेषराशौ प्रयुज्यते।
काङ्गूलश्चापि विज्ञेयो मेषराशौ गुरोर्मते॥

गङ्गाधरः

**मैत्रा—श्रुतिः**

मध्यमस्य चतुर्थी श्रुतिः। जगदेकः

**मैनवी**—गतिः

कूपान्तर्गतमीनस्य विश्रान्तिरहिता गतिः।
यथा तथैव नटति सा गतिर्मैनवी मता ॥

देवेन्द्रः

**मोक्षदः** तानः

मध्यमग्रामे गनिहीनौडुवः।
म रि स ध प

कुम्भः

**मोक्षदेवः**

सङ्गीतसारकलिकाकारः। भीमदेवस्य पुत्रः। भीमदेवनाम्नो राज्ञो मन्त्री। स्वर्णकारकुलजः। गणितलीलावत्याः व्याख्याता। मोक्षदेवशब्दः भाषारीत्या मोखदेव इति पामरैरुक्तम्। औत्तरीयग्रन्थमातृकासु षकार खकारयोः विनिमयः असकृद्दृश्यते तस्मान्मोक्षदेवः कैश्चिन्मोषदेव इति पठितः। स्वर्णकारकुलजत्वात् मोषकार इति नाम साध्वति केनचिदुक्तम्। दूषणमेव तथाभिधानम्। अयं श्रीमालवंशीयाचार्य इति ग्रन्थान्ते उक्त्वाजैन इत्यपि मन्यते। कालः क्रि. प. 1500।

**मोचकम्**—कर्णशष्कुल्या मध्यच्छिद्रे कृतं कर्णभूषणम्।

**मोटकम्**—एकादशाक्षरच्छन्दः

अचौ द्वौ पञ्चमं चैवाप्यष्टमं नैधनं तथा।
गुरूण्येकादशे पादे यत्र तन्मोटकं यथा ॥

(च. म्) श्रुत्वा घनगुर्जितमद्रितटे। तजजलगाः।

भरतः

**मोट्टायितम्**

मोट्टायितं प्रियकथादृष्ट्यादौ तन्मयात्मता।

शार्ङ्गः

—**अनुभावः**

इष्टजनकथायां तद्भावभावनोत्थितो विकारो मोट्टायितम्।

भोजः

इष्टजनस्य कथायां लीलाहेलादिदर्शने चापि।
तद्भावभावनकृतमुक्तं मोट्टायितं नाम ॥

भरतः

प्रियतमकथाश्रवणावर्जितकर्णया यद्भङ्क्त्वाङ्गानि विजृम्भितं तन्मोट्टायितम्।

सागरः

दयितस्य कथारम्भे साङ्गभङ्गविजृम्भणम्।
कर्णकण्डूयनं स्त्रीणां मोट्टायितमुदीरितम् ॥

पद्मश्रीः

**मोटितम्**—देशीमण्डलम्

प्रपदाभ्यां भुवि स्थित्वा जानुयुग्मेन संस्पृशेत्।
क्रमाद्भूतलमेकैकं त्रिपताककरद्वयम्।
कृत्वा तन्मोटितं नाम मण्डलं कथितं बुधैः ॥

नाट्यदर्पणे

—**स्थानकम्**

ऊर्ध्वाङ्गुलितलः पादः कुञ्चितान्यसमुत्थितः।
ऊरोः कुञ्चितपार्श्वस्य पुरतः कर्कटः करः।
यत्र तन्मोटितामित्थं कामावस्थासु कीर्तितम् ॥

ज्यायनः

**मोटितोत्प्लवनम्**

पर्यायपार्श्वोल्लवनं कर्तरीवत्तु मोटितम्।
त्रिपताकाख्यकरयोः कृत्वा शश्वत्प्रकाशनात् ॥

नाट्यदर्पणे

**मोहः**—चित्ताभिनयः

आपद्भीतिवियोगाद्यैः मोहश्चित्तस्य मूढता।
विक्रियास्तत्र विज्ञेया इन्द्रियाणां तु शून्यता ॥
निश्चेष्टिताङ्गभ्रमणपतनाद्घूर्णनादयः।
पुरोभागे कर्तरी तु चलिता तु वियोगके ॥
पुरोभागे पताकौ द्वौ मिलितौ चापदि स्मृतौ।
मुखस्थाने पताकस्तु बद्धश्चेद्भयदर्शने ॥

विनायकः

—**व्यभिचारिभावः**

दैवोपघातव्यसनाभिघातव्याधिभयावेगपूर्ववैरानुस्मरणादयो विभावाः। तस्य निश्चैतन्यभ्रमणपतनाघूर्णनादर्शनादयोऽनुभावाः॥

भरतः

आदिशब्देन तीव्रवेदनाशक्यप्रतीकारचौरराजाहिव्याघ्राद्याक्रमणदेशविप्लवाम्बुदकाद्युपघातवैरिदर्शनश्रवणादयो गृह्यन्ते।

अभिनवः

मोहश्चित्तस्य शून्यत्वं।

शारदातनयः

मोहे विचित्रिता भीतिदुःखावेगानुचिन्तनैः।

अल्लराजः

**मोहः**

मोहो नाम दैवोपघातव्यसनाभिघातभयादावेगपूर्ववैरानुस्मरणादिभिर्विभावैस्समुत्पद्यते। तस्य निश्चैतन्यभ्रमेण पतनाघूर्णनदर्शनादिभिरभिनयः प्रयोक्तव्यः।

भवत्यपि च—

अस्थाने तस्करान् दृष्ट्वा त्रासेनैव पृथग्विधः।
तत्प्रतीकारशून्यस्य मोहः समुपजायते॥

भरतः

**मोहनं**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स ग रि ग प ध स.
(अव) स ध प रि ग प ग रि स.

मञ्ज

**मोहनः**—मेलरागः (काम्भोजीमेलजोऽयं रागः)

मोहने वर्जयेन्मध्यनिषादावपि केवलम्।

परमेश्वरः

**मोहनकल्याणी**—मेलरागः

(आ) स ० रि ० ग ० ० प ० ध ० ० स.
(अव) स ० ० ध ० प म ० ग ० रि ० स.

मेललक्षणे

**मोहनारागध्यानम्**

परिगलितशिखाग्रां पारिजातप्रसून-
स्रगविरलभुजान्तां श्यामलां श्वेतचेलाम्।
चिकुरविचिकिलाग्रन्यास्तिलीलां सुशीलां
मुकुरसहितहस्तां मोहनां चिन्तयामि॥

रागसागरः

**मोहनकल्याणी**—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि ग म प ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

**मोहनचन्द्रिका**—मेलरागः (रागवर्धनीमेलजन्यः)

(आ) स ग रि ग म प ध नि स.
(अव) स नि ध म ग रि स.

मञ्ज

**मौञ्जीवसन्तः**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध प म ग म रि म ग स.

मञ्ज

**मौढ्यम्**—शिल्पकाङ्गम्

मौढ्यं स्रगियमित्यादि यदजेन विभाषितम्।
(अजेन रघुवंशे)

शारदातनयः

स्त्रीस्वभावविशेषो मौढ्यम्। यथा— चैत्रावलयद्धे अम्मो इत्यादि।

सागरः

रत्नावलीप्रथमाङ्कस्य चैत्रावलयद्धक इति नाम।

**मौतधन्याशी**—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) स ग म प नि प.
(अव) स नि ध प नि प म ग म ग रि स.

मञ्ज

**मौर्धावी**—श्रुतिः

धैवतस्य प्रथमा श्रुतिः।

हनुमन्मतेऽष्टादशैव श्रुतयः। अत्र मते धैवतो द्विश्रुतिः।

**मौग्ध्यम्**—अङ्गविकारः (चेष्टा)

मौग्ध्यं बाल्यव्यपगमाद्धिसदृशी वचनम्।
लोके यस्य चारिमेति व्यवहारः॥

सागरः

मुक्ताफलं तरोः कस्येत्यादि यत्कृत्रिमं वचः।
वल्लभानां पुरः प्रोक्तं मौग्ध्यं वदन्त तद्बुधाः॥

पद्मश्रीः

बाल्ये गते वचोभङ्गी रामाणां कान्तसन्निधौ।
आरिमोक्तिमयं यत्तु तन्मौग्ध्यं परिकीर्तितम्॥

कुम्भः

आचार्यास्तु स्त्रीणां स्वभावमेव मौग्ध्यं मन्यते।

**मौलतानधन्यासी**—मेलरागः

(आ) स ० ० ग ० म ० प ० ध नि ० स.
(अव) स ० नि ध ० प ० म ० ग ० रि स.

मेललक्षणे

**मौलिरेचितकम्**—चालकः

एकः करः कटीदेशे विलुठन्विनिवेशितः।
करोऽपरः पुरोनीतः तथैव चलदङ्गुलिः।
प्रापितो मौलिभागं चेन्मौलिरेचितकं भवेत्॥

वेमः

## य

**यक्षक्रिया**—मेलरागः ( हेमवतीमेलजन्यः )

(आ) स रि म प नि स.

(अव) स नि ध प म ग रि स.

मज

**यक्षरात्रिः**—

दीपोत्सवो यक्षरात्रिः। भोजः

**यक्षशीला**—स्त्री

स्वप्नप्रस्वेदनाङ्गी च स्थिरशय्यासनप्रिया।
मेधाविनी विभक्ताङ्गी मद्यगन्धामिषप्रिया॥

बुधस्वामी

चिरदृष्टेषु हर्षं च कृतज्ञत्वादुपैति या।
अदीर्घशायिनी चैव ज्ञेया यक्षान्वयाङ्गना॥

भरतः

**यजनी**—श्रुतिः

मध्यमस्य प्रथमा श्रुतिः। अनूपः

**यज्ञसेनः**—देशीतालः

यज्ञसेनो यजनगो।

। ऽ ऽ । ऽ ।।। । ऽ लक्ष्मण

**यतिः**—तालप्राणः

लयप्रवृत्तिनियमा यतिरित्यभिधीयते।
समा स्रोतोवहा चान्या गोपुच्छा त्रिविधा च सा॥

अच्युतरायः

स्रोतोवहा च गोपुच्छा समा च यवमध्यगा।
वेदिमध्या च विषमा षड्विधा यतिरुच्यते॥

चतुरसभाविलासः

खड्गयतिः, नागयतिः, छत्रयतिः, परशुयतिः, इत्यादयः कल्पनामात्राः। तस्माद्यतित्रयमेव साध्विति रत्नाकरकार आह।

अच्युतरायः

लयप्रवृत्तिनियमा यतिरित्युच्यते बुधैः।
समा स्रोतोवहा चान्या गोपुच्छा त्रिविधा च सा॥

अयमर्थः। चित्रमार्गे क्रियानन्तरविश्रान्तिः द्रुतलयः। वार्तिके क्रियाविरतिः मध्यलयः। दक्षिणे तथैव विलम्बितः। लयानां प्रवर्तयित्री यतिः। त्रैविध्यमादिमध्यावसानेषु कृशत्वपुष्टत्वरूपेण संभवति। आदिमध्यावसानेषु लयो यत्समानेन प्रवर्तयति चित्रादिमार्गेषु सा समायतिः। प्रारम्भेऽधिकः। क्रमेण कृशश्चेत्सा स्रोतोवहा। प्रारम्भे कृशः क्रमेण पुष्टश्चेत्सा गोपुच्छा।

चतुरसभाविलासकार आह—

स्रोतोवहा च गोपुच्छा समा च यवमध्यगा।
वेदिमध्या च विषमा षड्विधा यतिरुच्यते॥ इति।

यवमध्याया मृदङ्गयतिरिति नामान्तरम्। वेदिमध्यायाः पिपीलिकायतिरिति। अल्पाङ्गयोर्मध्ये अधिकाङ्गस्य वर्तनं यवमध्या। अधिकाङ्गयोर्मध्येऽल्पाङ्गस्थितिर्वेदिमध्या। इत्थमनिर्धार्या विषमा। विभागोऽयमसमञ्जसः। अन्यैरपि खड्गयतिः, नागयतिः, शक्तिच्छत्रयतिः, परशुयतिः इत्यादयः कल्पिताः। तेषां कल्पनागौरवात् सूक्ष्मदृग्भिर्निरासः क्रियते।

अच्युतः

—देशीतालः

यतिताले द्रुतं लघुः। ० । मदनः

—वाद्यप्रबन्धः

काभ्यांचित्कूटवर्णाभ्यां रचितोऽत्यन्तकोमलः।
एकरूपाक्षरस्तालच्छन्दोभिव्यञ्जनोज्ज्वलः॥

यो वाद्यते वाद्यखण्डो विरामैर्बहुभिर्मुहुः।
यतिर्ज्ञेया च सा तज्ज्ञैर्वाद्या मण्ठादिसालगे॥

आदौ वाद्यप्रबन्धस्य कस्याप्यङ्गतया यदा।
तद्विदो वादयन्त्येतां वदन्त्युटवणं तदा।
पाटनां रचनां केचिदत्र नेच्छन्ति सूरयः॥

शार्ङ्गः

तालच्छन्दप्रबन्धो यो विरामो वा निरन्तरः।
यतिर्निगद्यते सा तु प्रबन्धे वाद्यकर्मभिः॥

सोमेश्वरः

तालच्छन्दोऽभिरामे यो विरामः श्रुतिसौख्यदः।
वाद्यते पाटरहितः सा यतिः परिकीर्तिता॥

सोमराजः

यो वाद्यखण्डः केनापि पाटाक्षरयुगेन च।
रचितोऽत्यन्तरुचिरस्तालच्छन्दस्समन्वितः॥

एकरूपाक्षरमितैर्विरामैर्बहुभिर्मुहुः।
वाद्यते सा यतिः प्रोक्ता सैव शङ्केति कथ्यते॥

वेमः

श्रीकण्ठेन पाटाक्षरस्थाने 'कूटवर्णैर्द्वयरूपैरचितोऽथ मनोहरः' इत्युक्तम्।

प्रबन्धान्ते च देङ्कारः प्रायेण विनियुज्यते ।
सघट्टिताक्षरस्तालछन्दोभिर्व्यक्तिकारकः ॥

रचितः कटवर्णाभ्यां काभ्यांचित्सौकुमार्यवान् ।
मुहुर्भूरिविरामैर्यो वाद्यते वाद्यखण्डकः ॥

सा यतिः प्रोच्यते प्राज्ञैः वाद्या मण्ठादिसालगे ।
आदौ वाद्यप्रबन्धः स्यात्तस्याऽथ गतयो यथा ॥

तद्विदो वादयन्त्येनां वदन्त्युद्दवणं तदा ।

यथा –

गङ्गाथां गकथों टंग द्रगधों गकथों टें-
इच्छन्ति केचिदाचार्याः यतिं पाटविवर्जिताम् ॥

मोक्षदेवः

पाटरहितत्वं केचिदाचार्यैस्सोमराजादिभिरुक्तम् । यतिभेदेषु छलिवर्टी पिल्लमूरु कैमुरु कलासक इत्यादयः पाटाक्षरभेदेनान्तर्भूता इति श्रीकण्ठेनोक्तम् ।

यतिका– मूर्छना

सुभद्रग्रामे सप्तमी मूर्छना ।

ज्ञातव्या यतिका नाम मूर्छना यतिवल्लभा ।
निषादस्य प्रमूर्छत्वादन्त्यग्रामे तु सा भवेत् ॥

वादिमत्तः

अन्त्यग्रामः–सुभद्रग्रामः । रञ्जनी नामान्तरं नारदशिक्षायामियं पितृप्रिया ।

पण्डितमण्डली

यतिनृत्तम्

द्रवक्त्रोद्भवैः पाटैः कूटैरत्यन्तकोमलैः ।
अष्टताल्यैकताल्या वा विरामैर्भूरिभिर्मुहुः ॥

यो मतो वाद्यखण्डो वा वाद्यभेदयतिः स्मृता ।
कूटाक्षरैः क्रमेण स्यादायतः पादयोः समः ।
पार्श्वाङ्गुला मूलपार्ष्णिचरणाग्रेण च क्रमात् ।

अष्टतालीत्यड्डुताली विवक्षिता ।

वेदः

कूटाक्षराभ्यां कैश्चिद्वयां निर्मितोऽत्यन्तकोमलः ।
वाद्यतं वाद्यखण्डो यो विरामैर्भूरिभिर्मुहुः ।
यतिरेषा तया वृत्तं चतुर्दिक्षु मनोरमम् ॥

दामोदरः

यतिप्रौढः— देशीतालः

यतिप्रौढे द्रुताश्चन्द्रद्वयं बिन्दुद्वयं पुनः ।
चन्द्रत्रयं खत्रयं च यथा चन्द्रत्रयं पुनः ॥

००ᴗᴗᴗ ००ᴗᴗᴗ ००० ᴗᴗᴗ

लक्ष्मणः

यतिमङ्गलः—वर्णालङ्कारः

स्वरमाद्यं द्विरुच्चार्य तद्द्वितीयं सकृत्तथा ।
पुनश्चतुस्स्वरा यत्र कलाऽसौ यतिमङ्गलः ॥

यथा–ससरिसरिगमारिरिगरिगमप इत्यादि । ममगमगरिस । उभावपि मङ्गलौ बौद्धव्यौ ।

आरोही यतिमङ्गलः । अवरोही च । अस्य कुडुक्कतालानुगतत्वेनालङ्कारत्वम् ।

सङ्गीतसरणिः

यतिलग्नः—देशीतालः

ताले तु यतिलग्नाख्ये लघुरेको द्रुतात्परः ।
० ।

वेमः

यतिशेखरः—देशीतालः

यतिशेखरताले च द्रुतः शरद्वयं द्रुतौ ।
लघुद्रुतौ शरद्वन्द्वं वदन्ति च मनीषिणः ॥
० ॥ ० ०, । ० ॥

दामोदरः

यतिशेखरतालोडुपम्—देशीनृत्तम्

यतिशेखरतालस्योडुपं द्वादशकं भवेत् ।

वेदः

यतिसमम्—गानेन यतीनां समता पुष्करवाद्ये

समाः स्रोतोगता वापि गोपुच्छा वा यतिर्यथा ।
तथा भवेत्तु यद्वाद्यं तद्धै यतिसमं भवेत् ॥

भरतः

यथाक्षरः

मार्गताले परिभाषा । यथाक्षरत्वं नामाक्षरानतिक्रमात् । अक्षराणामनतिक्रमो यथाक्षरमित्यव्ययीभावः । यथाक्षरमस्तीति मत्वर्थीये अकारप्रत्यये कृते यथाक्षर इति भवति । स्वनामगतगुरुलघ्वक्षरानतिवृत्त्या स्वरूपगुरुलघुमान् इति । चच्चत्पुटशब्दे छन्दश्शास्त्रप्रसिद्धगुरुलघुनिर्णये चच्चत्पुटस्य द्वौ गुरू एको लघुः एकः प्लुतश्च भवति । (प्लुतत्वं विशेषवचनात्), चाचपुटे एको गुरुर्द्वौ लघू गुरुश्च भवन्ति ।

कल्लिनाथः

यदुकुलकाम्भोजी – मेलरागः (काम्भोजीमेलजोयं रागः)

ततो यदुकुले मेषगजावारोहणे त्यजेत् ।
गनिलोपः ।

परमेश्वरः

—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म प ध स.

(अव) स नि ध प म ग रि स.

मञ्ज

यदृच्छायोगः—लक्षणम्

यदृच्छया भवेद्योगो यत्राभीष्टेन केनचित्।
अचिन्तितस्य धीमद्भिः यदृच्छायोग उच्यते॥

भोजः

यथा—मालतीमाधवे त्वत्पादपङ्कजेति माधववाक्यम्। (५-२७)

यमकम्—अलङ्कारः

शब्दाभ्यासस्तु यमकं पादादिषु विकल्पितम्।
पादान्तयमकं चैव काञ्चीयमकमेव च।
समुद्गयमकंचैव विक्रान्तयमकं तथा।
यमकं चक्रवालं च सन्दष्टयमकं तथा॥

पादादियमकं चैव तथाम्रेडितमेव च।
चतुर्व्यवसितं चैव मालायमकमेव च।
एतद्दशविधं ज्ञेय यमकं नाटकाश्रयम्॥

भरतः

यमलः—वंशे फूत्कारदोषः

कुम्भः

यमलता—फूत्कारदोषः

कुम्भः

यमल प्रतिफूत्कृतिः।

यमलहस्तः—हौडुक्किकहस्तपाटः

स्फुटं वामेन सन्धार्य दक्षिणेन च पीडनम्।
क्रियते ताडनं यत्र स स्याद्यमलहस्तकः॥

कुन्द कुन्द कुकुन्द झेन्द्रः झेंहें झेंहें झेंहें।

वेमः

यमुनाकल्याणी—मेलरागः

(आ) स रि ० ० ग ० म प ० ध ० नि स.

(अव) स नि ० ध ० प म ० ग ० ० रि स.

मेललक्षणे

—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि ग म प ध स.

(अव) स ध प म प गा रि स.

मञ्ज

यमुनाकल्याणीरागध्यानम्

डोलानटनाश्रुतपारां नारीकरभारवद्धस्ताम्।
नीलायतराजचेलां ध्याये यमुनाकल्याणीम्॥

रागसागरः

यमुनारागध्यानम्

शृङ्गारमातृकां मे मधुरिपुवामाङ्कवासिनीं सद्भूषां।
यमुनां रुचिजितयमुनां मनसि ध्यायामि सन्ततं मृदङ्गीम्॥

रागसागरः

यमेशः—देशीतालः

यमेशो भयभूपितः।

लक्ष्मणः

ऽ।।।ऽऽ

यवनिका—नृत्यमण्डपे

अष्टाविंशतितायामास्तदर्धेन तु विस्तृताः।
पुरो यवनिकाश्लिष्टा सूची विज्ञानभङ्गिभिः।
तिस्रस्ततोऽधिका वा स्युर्यथावाद्यं यथारुचि॥

जायनः

यशःशाली—देशीतालः

यशःशालिनि भोमयुक्।

लक्ष्मणः

ऽ।।ऽऽऽ

यशोमणिः—मेलरागः (हेमवतीमेलजन्यः)

(आ) स रि ग म प नि ध नि स.

(अव) स प म ग रि स.

मञ्ज

यागप्रिया—मेलकर्ता (रागः)

स ० ० रि ग म ० प ध नि ० ० स.

मञ्ज

याच्ना—नाट्यालङ्कारः

रामं प्रति अनुमन्यस्वेति सीतावाक्यम्।

सागरः

याच्ना—(याच्ञा) लक्षणम्

आदौ यत्क्रोधजननमन्ते हर्षप्रवर्धनम्।
यत्र प्रियं पुनर्वाक्यं सा याच्ना परिकीर्तिता॥

भरतः

प्रथमार्धेन हितं व्याख्यातम्। तेन प्रथमं यत्तदात्वे परुषमायत्यां च सत्फलं वस्तूच्यते। ततश्च प्रियम्। पुनश्शब्दात्ततोहितम्। पुनः प्रियमित्येवं प्रबोध्यस्य प्रबोधधिया याचनाद्याच्ना।

अभिनवः

**यादवेन्द्रः—देशीतालः**

यादवेन्द्रो यमौ जसा। (सौ)
। S S S S S । S । । । S

लक्ष्मणः

**यामिनीशिखरस्वस्तिकहस्तः**

अधोमुखः पुरोभागे यामिनी सन्निवेशितः।
तन्मुखे शिखरं बध्वा दर्शितो भावकोविदैः॥
यामिनी शिखरस्वस्तिहस्त इत्यभिधीयते।
पुरोभागे स्वयं हस्तो मूढरत्यां नियोजयेत्॥

विनायकः

**यामिनीस्वस्तिकहस्तः**

अधोमुखायां यामिन्यां तदूर्ध्वं यामिनी स्थिता।
यामिनीस्वस्तिको हस्तः प्रोच्यते भरतादिभिः॥
अधोमुखः पुरोभागे बध्वा तु करसंयुगी।
स्त्रीस्त्रीरतौ नियोक्तव्यो भरतागमवेदिभिः॥

विनायकः

**यामिनीहस्तः**

मध्यमाङ्गुष्ठसंयोगे तर्जिनी वक्रिता यदि।
शेषे प्रसारिते सोऽयं यामिनी नाम हस्तकः॥
अधोमुखः पुरोभागे स्थितो मदनमन्दिरे।
अङ्गारक्षेत्रभारे च यामिनीं संप्रयोजयेत्॥

विनायकः

**याष्टिकसंहिता**

याष्टिकप्रोक्तोऽयं ग्रन्थः नाद्यापि लभ्यते। रामभक्तोऽयमिति हनूमतः सङ्गीतशास्त्रोपदेष्टेति च सङ्गीतसुधायां रघुनाथेनोक्तम्। अस्यास्संहितायाः बहवः श्लोकाः मतङ्गेन बृहद्देश्यामुदाहृताः। तस्मादयं प्राचीनः।

**यि(इ)न्दुकौशिकः—मेलरागः (हरिकाम्भोजीमेलजन्यः)**

(आ) स रि ग म प ध नि स.
(अव) स ध नि प ध म ग रि म ग स.

मञ्ज

**युक्तिः—अवमर्शसन्ध्यङ्गम्**

सविच्छेदं वचो यत्र सा युक्तिरिति संज्ञिता।

भरतपाठान्तरम्

प्ररोचनास्थाने भरतेन पठ्यते।

**—नाट्यालङ्कारः**

असूयया भाव्यस्यार्थस्य घटनावचनम्। यथा—वेण्यां 'अत एव अस्याः' इति दुर्योधनवाक्यम्। भानुमत्यङ्के।

सागरः

**—मुखसन्ध्यङ्गम्**

संप्रधारणमर्थानां युक्तिः।

भरतः

अस्याः प्रयोजनं प्रकाश्यप्रकाशनम्। यथा—वेणीसंहारे प्रथमेऽङ्के सहदेवभीमयोस्संल्लापः।

अभिनवः

युक्तिः कृत्यविचारणा। विचारणा गुणदोषविवेकतः कार्यपर्यालोचनम्। यथा—उदात्तराघवे किं लोभेनेति लक्ष्मणवाक्यम्। इयं च युक्तिः स्थानान्तरभाविन्यपि तापसवत्सराजे उपक्षेपपरिकरानन्तरं निबद्धा।

रामचन्द्रः

**—लक्षणम्**

साध्यते योऽर्थसम्बन्धो महद्भिस्समवायतः।
परंपरानुकूल्येन सा युक्तिः परिकीर्तिता॥

भरतः

यथा—लावण्यसिन्धुरित्यत्र महद्भिरुत्कृष्टैः नेत्रवदनादिभिः परस्परशोभात्मकानुकूल्योपलक्षितेन समवायेन एकविश्रान्त्या अर्थः संबन्ध्यमान उपपद्यमानोऽपूर्वतरङ्गिणीलक्षणः साधित इति योजनादियं युक्तिः। प्रतीयमानं रूपकमत्रेति चेत्किं ततः। शरीरं लक्षणमयमेवेत्युक्तमसकृत्।

अभिनवः

युक्तेः प्रत्येकलक्षणत्वविषये उपपत्तिशब्दे किञ्चिल्लिखितम्।

**—शिल्पकाङ्गम्**

योग्यतापादनं युक्तिरन्योन्यस्य पदार्थयोः।
तुल्यशीलवयोरूपामित्यादौ तद्विलोक्यते॥

शारदातनयः

**युगसौरभं—मेलरागः (धीरशङ्कराभरणमेलजन्यः)**

(आ) स ग म ध नि स.
(अव) स नि ध प म ग स.

मञ्ज

**युग्महस्तः—हस्तपाटः**

युग्महस्तस्तु रेफाभ्यां ऊर्ध्वघातद्वयात्पृथक्।
द्रें द्रें दां दां

वेमः

युग्मिनी—डेङ्कीप्रबन्धः
युग्मिनी वृत्तयुग्मेन निबद्धा परिगीयते ।

मोक्षदेवः

युद्धप्रवर्धिनी—मेलरागः (कान्तामणिमेलजन्यः)
(आ) स रि ग प ध नि स.
(अव) स नि ध म ग रि स.

मञ्ज

युद्धवीरः
गर्वाभिमानचपलो भुजदर्पशाली
सङ्ग्रामसेवनपरो विजितारिवर्गः ।
नानाप्रकारबलवीर्यमदान्धचक्षुः
ज्ञातव्य एष विबुधैरिह युद्धवीरः ॥

भार्गवो रामभद्रश्च ससुग्रीववृकोदरः ।
मारुतिप्रमुखाः प्रोक्ताः युद्धवीरा मनीषिभिः ॥

रोमाञ्चस्मितपूर्वभाषणभुजद्वन्द्वावलोकक्षमा
सोत्साहारुणलोचनोग्रवचनप्रायः प्रतिज्ञा भवेत् ।
भ्रूभङ्गाधरखण्डनैरभिनयः स्याद्युद्धवीरस्य तु ॥

जगद्धरः

युवरत्निका—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि ग म प म ध नि प ध नि स.
(अव) स नि ध प म रि ग म रि स.

मञ्ज

यूपः—देशीतालः
गपद्रुगपलु यूपे ।
ऽ ऽ́ ० ऽ ऽ́ ।

मदनः

योगगान्धारी—मेलरागः (यागप्रियामेलजन्यः)
(आ) स रि ग म ध नि स.
(अव) स नि ध प म ध म ग रि स.

मञ्ज

योगचिन्तामणिः—मेलरागः (सेनावतीमेलजन्यः)
(आ) स रि म प ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

योगप्रदः—हस्तः
पताकावप्रसंयुक्तौ हस्तौ योगप्रदो भवेत् ।
अन्योन्यप्रीतिकरणे मेलनेऽपि विधीयते ॥

विप्रदासः

योगभैरवी—मेलरागः (नटभैरवीमेलजन्यः)
(आ). स रि ग म प ध स.
(अव) स नि ध प रि स.

मञ्ज

योगमतिः—मेलरागः (नाटकप्रियमेलजन्यः)
(आ) स रि ग म ध नि स.
(अव) स ध प म रि ग रि स.

मञ्ज

योगलीला—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि ग रि म प नि ध नि प ध स.
(अव) स ध प म ग रि स.

मञ्ज

योन्यन्तरी—पाठ्यभाषा
अथ योन्यन्तरी भाषा ग्राम्यारण्यपशूद्भवा ।
नानाविहंगजा चैव नाट्यधर्मी प्रतिष्ठिता ॥

भरतः

र

रक्तः—ध्वनिभेदः
वेणुवीणासमो नादो रक्तोऽसौ ध्वनिरिष्यते ।

सोमेश्वरः

—मुखरागः
रक्तः कोकनदच्छाय ।
वीरे रौद्रे च करुणे मदादौ रक्त इष्यते ।

सोमेश्वरः

रक्तः स्याल्लोहितं रौद्रे करुणे मध्यमे मदे ।

वेमः

रक्तगान्धारी—जातिः
रक्तगान्धार्याः षड्जमध्यमपञ्चमगान्धारनिषादा ग्रहा अंशाश्च पञ्चस्वरपरस्तारः । न्यासपरस्तत्परो वा मन्द्रः । ऋषभहीनं षाडवम् । रिधहीनमौडुवितम् । पूर्णावस्थायां ऋषभधैवतयोरल्पत्वम् । शेषाणां बाहुल्यम् । निषादस्यांशत्वादबहुत्वे प्राप्ते वचनादबहुत्वम् । धैवतस्यानंशत्वादल्पत्वे प्राप्ते वचनाद्बाहुल्यम् । षाडवे धैवतस्याल्पत्वम् । ऋषभस्य न कदाचिदपि । औडुविते सर्वेषामंशत्वान्न कस्याप्यल्पत्वम् । उक्तभङ्ग्या शेषाणां बाहुल्यम् । न्यासो गान्धार एव । अपन्यासस्तु मध्यमः । षड्जगान्धारयोस्तु सञ्चारः । दशविधलक्षणमस्या भवति । ऋषभादिर्मूर्छना ।

करुणो रसः। तालः पञ्चपाणिः। एकद्विचतुष्कलेषु चित्रवार्तिकदक्षिणेषु मागधीसंभावितपृथुला गीतयः।

मतङ्गः

गान्धारीपञ्चम्योः संभवाच्च रक्तगान्धारीति सूत्रम्।
षड्जर्षभगान्धारैर्निषादमध्यग्रहैरंशैः।
पञ्चममध्यमषड्जैश्चापन्यासैश्च मध्यमविकल्पात्॥

गान्धारोप्यभ्यासः षाडवमपि रिषभलोपतो यत्र।
रिधलोपादौडुवितं यस्याः स्यात्साहि रक्तगान्धारी॥

नान्यः

अस्यां बहुत्वं निधयोः प्रदिष्टं स्यात्पञ्चमेंशेन हि षाडवत्वम्।
संवादिनावत्र रिपौ यतो न संवादिनोः स्यादृषभस्य लोपः॥

षड्जे निषादेऽपि च पञ्चमे च स्यान्मध्यमंशे न किलौडुवत्वम्
स्यान्मध्यमग्रामभवा कलोपनता मता मूर्छनिकर्षभादिः।
अङ्के तृतीये किल नाटकस्य गानं ध्रुवाया विनियोजनं स्यात्॥

न्यासोऽत्र गान्धारक एव वेद्योऽपन्यासको मध्यम एव नान्यः।

रघुनाथः

रक्तहंसः—रागाङ्गरागः

गान्धारपञ्चमस्याङ्गं षड्जधांशग्रहान्तकः।
रक्तहंसो गतारश्च रिषभेण विवर्जितः।
हंसयानः पीतवस्त्रो विद्रुमप्रभ इष्यते॥

कुम्भः

—रागः

ऋषभांशः पञ्चमान्तः स्यादपन्यासधैवतः।
वीररौद्राद्भुतरसो रक्तहंसास्स्मृतो बुधैः॥

हम्मीरः

न्यासग्रहांशस्थितधैवतस्तु स्याद्धैवतीजः स्फुटमन्द्रमध्यः।
गान्धारतारस्सरिगाधिकश्च हीनो निषादेन च रक्तहंसः॥

नान्यः

—मेलरागः

गहीनो रक्तहंसः स्यादारोहे निस्वरोज्झितः।
अवरोहे धवर्जः स्यात् षड्जसपूर्वकमूर्छनः॥

अहोबिलः

रक्ता—श्रुतिः

पञ्चमस्य द्वितीया श्रुतिः।

—प्राकृते मात्रावृत्तम्

र, ज, ग. विरहाङ्कः

रक्तिः—वंशे फूत्कारगुणः

अनुरञ्जकता नाम रक्तिरित्यमिधीयते।

कुम्भः

रक्तिका—श्रुतिः

ऋषभे तृतीया श्रुतिः।
रतिकेति केचित्।

रक्तिध्वजः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स ध प म ग रि स.

मख

रक्षकः—देशीतालः

रक्षको रजतात्मजः।

ऽ।ऽ।ऽ।

लक्ष्मणः

रक्षोघ्नः—देशीतालः

रक्षोघ्नो यमसारः स्यात्।

।ऽऽऽऽऽ।।ऽऽ।ऽ

लक्ष्मणः

रगन्ती—भाषारागः

रगन्ती ककुभोद्भूता भाषारागो मवर्जिता।
धैवतांशग्रहन्यास स्फुरितैर्धैवतैर्युता।
अपन्यासस्थितिजुषा पञ्चमेनोपशोभिता॥

विजये विनियोक्तव्या।

भट्टमाधवः

रघुनाथभूपः

रघुनाथेन पञ्चदश मेला उक्ताः। प्रथमः तस्मिंयतमो नट्टः। तत्र समपाः शुद्धाः, रिधौ षट्श्रुती। गान्धारोऽन्तरः। निषादः काकलिः। द्वितीयो मेलः घूर्जरी। अन्यैस्तु घूर्जरीस्थाने गौलरागः प्रोक्तः। घूर्जरी पूर्णरागः। आरोहणे पञ्चमत्यागेऽपि पूर्ण इत्येवोक्तः। तृतीयो मेलो वराटी। तस्मिन्मध्यमस्य षट्श्रुतित्वमुक्तम्। वेङ्कटमखी तु तत्र सप्तश्रुतिमाह। एवमेव वीणारहस्यकारोऽपि। सर्वैर्निषादः काकलिर्गृहीतः। वीणालक्षणकृता तु कैशिकीनिषाद उक्तः। रघुनाथः घण्टारवं श्रीरागमेलजातमुवाच। तस्मिन्धैवतः पञ्चश्रुतिकः। वीणारहस्यकारवेङ्कटमखिनौ तं भैरवीमेलजातमुक्त्वा धैवतं शुद्धं चोचतुः। श्रीरागः चतुर्थो मेलः रघुनाथमते। देवगान्धारी श्रीरागज इति रघुनाथः। वीणारहस्यकारमते भैरवीमेलजः। भैरवीमेले धैवतश्शुद्धः। रीतिगौलरागः श्रीरागजः रघुनाथमते। रामामात्यः तं स्वतन्त्र-

मेलमाह। रिषभश्शुद्धः रामामात्यमते, रघुनाथमते पञ्चश्रुतिकः। वीणारहस्यकृद्वेङ्कटमखिनौ नीतिगौलं भैरवीजं वदतः। मालवश्रीः श्रीरागजेत्याह रघुनाथः। तदनुमतं वीणारहस्यकाररामामात्ययोः। वेङ्कटमखीतु भैरवी जन्यामाह। तन्मते धैवतश्शुद्धः। धन्यासा श्रीरागजेति रघुनाथः। वीणारहस्यकृत्तु तां भैरविजां मन्यते। भैरवीमेलः पञ्चमो रघुनाथमते। तत्र मेले ममपधाश्शुद्धाः। रिः पञ्चश्रुतिः। साधारणो गान्धारः। निषादः कैशिकी। श्रीकण्ठादयो धैवतं पञ्चश्रुतिकमाहुः। न तल्लक्ष्ये दृष्टमिति रघुनाथः। वीणालक्षणे धैवतं चतुःश्रुतिकमुक्तम्। जयन्तसेनः रघुनाथेन सृष्ट इति तनैवोक्तम्। अयं च भैरवीजः। श्रीरागजं तं तुलजो वदति। भिन्नषड्जं भैरवीमेलजं मन्यते रघुनाथः। भूपालमेलजं मन्यते वेङ्कटमखी। भूपालभैरवीमेलयोः क्रमादृषभः शुद्धः पञ्चश्रुतिकश्च। रामामात्यस्तु सालगनाटजं वदति। तस्मिन् ऋषभः पञ्चश्रुतिकः गः च्युतमध्यमः (अन्तरः)। निषादश्च्युतषड्जः। रघुनाथमते साधारणकैशीकीस्वरावेतौ। हिन्दोलवसन्तः भैरवीजात इति रघुनाथः। वेङ्कटमखीत्वाहरीजातमाह। तत्र निषादः काकलिः। रघुनाथः कैशिकीमवदत्। हिन्दोलः भैरवीजात इति रघुनाथः। रामामात्यः हिन्दोलं स्वतन्त्रं मन्यते। भूपालरागो भैरवीजन्य इति रघुनाथमतम्। रामामात्यस्तु हिन्दोलमेले उक्तवान्। वीणारहस्ये तोडिमेलभवः भूपालराग इत्युक्तम्। शङ्कराभरणः रघुनाथमते षष्ठो मेलः। ऋषभोऽत्र पञ्चश्रुतिकस्तदन्ये शुद्धाः। रामामात्यमते शङ्कराभरणः श्रीरागमेलजः तस्य धैवतः पञ्चश्रुतिः, गान्धारस्साधारणः निषादः कैशिकी शिष्टाश्शुद्धाः। वेङ्कटमखिमते समपाश्शुद्धाः रिधौ पञ्चश्रुती, गान्धारोऽन्तरः निषादः काकलिः। वीणालक्षणे समपाश्शुद्धाः रिधौ चतुःश्रुती। गान्धारोऽन्तरः कैशिकीनिषादः। वीणारहस्ये रिधौ पञ्चश्रुती काकलिनिषादः। सगपाश्शुद्धाः। नारायणी शङ्कराभरणजेति रघुनाथः। सालङ्गनाटजेति रामामात्यः। सगमपाश्शुद्धाः, रिधौ पञ्चश्रुती, च्युतमध्यमो गान्धारः, च्युतषड्जो निषादः। तदेव लक्षणं वीणारहस्ये शङ्कराभरणमेलस्य दत्तम्। आहरी सप्तमो मेलो रघुनाथमते। समपधाश्शुद्धाः। रिः पञ्चश्रुतिकः साधारणो गान्धारः निः काकलिः। वीणारहस्ये आहरी भैरवीमेलजेत्युक्तम्। सामन्तः नवमो मेलः रघुनाथमते। समपाश्शुद्धाः धरी षट्श्रुतिकौ। गान्धारोऽन्तरः निः काकलिः। वेङ्कटमखस्त्वृषभं पञ्चश्रुतिकं वदति। कन्नडगौलः सामन्तमेलज इति रघुनाथः वेङ्कटमखी श्रीरागजमाह। रामामात्यमते धैवतः पञ्चश्रुतिकः निषादः कैशिकी। वेङ्कटमखी तु रिं पञ्चश्रुतिं धं षट्श्रुतिकं गं साधरणं निं कैशिकीं चाह। वीणारहस्ये कन्नडगौडः श्रीरागज इत्युक्तम्। काम्भोजी दशमो मेलो रघुनाथमते। समपाश्शुद्धाः, धरी पञ्चश्रुतिकौ, गान्धारोऽन्तरः, निः कैशिकी। अत्र रामामात्यः निषादं काकलिमुवाच। वीणारहस्यमत्र रघुनाथमतमनुसरति। मुखारी रघुनाथमते एकादशो मेलः सर्वे स्वराश्शुद्धाः। वीणारहस्येऽयं श्रीरागमेलजः। वीणालक्षणे समपाश्शुद्धाः रिधौ चतुःश्रुतिकौ गान्धारोऽन्तरः। निः कैशिकी। श्रीकण्ठः रघुनाथमनुसरति। शुद्धरामक्रिया द्वादशो मेलः रघुनाथमते। सरिपधाश्शुद्धाः निः काकलिः। गोऽन्तरः। मः षट्श्रुतिकः। रामामात्येन मस्य षट्श्रुतिकत्वं नोक्तम्। वेङ्कटमखी तु मध्यमं सप्तश्रुतिकं मेने। रामामात्यः पाडी, आर्द्रदेशीच शुद्धरामक्रियाजन्ये इति वदति। तयोः गौडजनक(न्यत्वं)त्वमुक्तं वेङ्कटमखिना।

केदारगौलो रघुनाथस्य त्रयोदशो मेलः। समपाश्शुद्धाः। धरी पञ्चश्रुतिकौ। गान्धारोऽन्तरः। निषादः कैशिकी। रामामात्यमते निषादः काकलिः। वेङ्कटमखिनः केदारगौलः काम्भोजीजन्यः। वीणारहस्येपि तन्मतमनुमतम्। हेज्जुज्जी चतुर्दशो मेलः रघुनाथमते। गान्धारोऽन्तरः। षडितरे शुद्धाः रामामात्यः काकलिं निषादमाह। मखिनस्तु निषादश्शुद्धः।

देशाक्षी पञ्चदशो मेलः रघुनाथमते। समपाः शुद्धाः। ऋषभः षट्श्रुतिः। धैवतः पञ्चश्रुतिः। गोऽन्तरः। निषादः काकलिः। पञ्चदशमेलजन्याः पञ्चाशद्रागाः, आक्षिप्तिका रागवर्द्धनी, विदारी, आरोहावरोहक्रमौ च एतादृशप्रभृत्यङ्गयुक्तं गानविस्तारक्रमं लक्षितं रघुनाथेन, तद्ग्रन्थे द्रष्टव्यम्।

एवं विरोधे परिशङ्क्यमाने ततस्त्वत्रादीतपरिहारमेवम्।
शास्त्रस्य लक्ष्यस्य मिथो विरोधो न स्याद्यथा स्यादपि रागलाभः॥

स पर्यभाषीदिति तान् विरोधान् द्राग्याष्टिको रामपदाब्जसेवी।
तां याष्टिकोक्तामविरोधरीतिं यक्षौघगीतामपि गानशैलीम्॥

आलोच्य बुध्या चिरमाञ्जनेयो लक्ष्याविरुद्धं प्रणिनाय शास्त्रम्।
येषां श्रुतीनां नियमः स्वराणां न ग्रामजातिप्रमुखस्य चास्ति॥

भजन्ति नानाविधदेशजाताः छायाश्च ये ते किल देशिरागाः।
इति॥

आञ्जनेयोऽपि-

येषां श्रुतिस्वरग्रामजात्यादिनियमो न हि।
नानादेशगतिच्छाया देशीरागास्तु ते स्मृताः॥ इत्याह।

अधुनातनैः गायकैः हनुमन्मतमेवाश्रित्य नियमराहित्येन सुलभत्वाद्यथेच्छं विदेशीयगानशैलीछायामपि संश्रित्य बहवो रागाः सम्प्रदाये प्रवर्तिताः। तेषां मुख्यहेतुरयं भवति। नारद, भरत, मतङ्गादिवीणासु त्रिस्थायिसर्वश्रुतिवादनयोग्यां वीणां गृहीत्वा प्रतिरागं प्रत्येकं श्रुतिस्थानं च सारीभिर्निवेश्य कोणेन

वा नखैर्वा नानाविधठायानि प्रगीतान्यवर्तन्त। भरतो नवतन्त्रीकां मत्तकोकिलां स्वातिर्विपञ्चीं नारदो महतीमेकविंशतितन्त्रीकां मतङ्गस्सप्ततन्त्रीं चित्रां अवादयदिति प्राहुः। मतङ्गप्रभृतिभिः किन्नरीनामवीणावादनमेव संप्रदाये प्रावर्तत। तदनन्तरं चिरकालं किन्नर्यैव मुख्यतयाऽवादि। शार्ङ्गदेवार्वाचीनैर्मध्यमेलाख्यशुद्धमेलाख्यप्रभृतिवीणाः नियतस्थानस्थितसारीकत्वेन सम्प्रदाये प्रयुक्ताः। क्रैस्तुशकषोडशशतकमध्यकाले हनुमन्तमाश्रित्य सम्प्रदायप्रवर्तितरागाणां वादनसौकर्याय तत्तच्छ्रुतिस्थानेषु अचलाः सारीः निर्मायानुमन्द्रमन्द्रमध्यतारतारोत्तरस्थानानि स्वराणां निश्चित्य नानाविधा वीणाः बुधैः(गायकैः)प्रवर्तिताः। तत्कालेऽनुभवसिद्धरागाणां श्रुतिभेदमाश्रित्य समानस्वरश्रुतिकरागाः एकैकमेले संहृत्य सर्वे प्रवर्तकरागा नियतमेलेषु विभाजिताः। तत्पूर्वमान्त्रवन्त्र्यः उपयुक्ताः। क्रैस्तुशकदशमशतकप्रभृतिलोहतन्त्र्वः उपयुक्ता इति सम्यक् ज्ञायते। आन्त्रतन्त्रीध्वननं लोहतन्त्रीशब्दारिकञ्चिन्मृदुतरमेव; मन्द्रगुणवच्च। लोहतन्त्रीप्रयोगादेकतन्त्रीहनने द्वितीयतृतीयतन्त्र्योः स्वयमेव नाद उत्पद्यते। तद्ध्वनेरनुरणनात्मनः स्वयंभूरिति नाम दत्तं रामामात्यश्रीकण्ठप्रभृतिभिः। श्रुतिविभागे रामामात्यप्रभृतिभिः निषादे काकल्यां भेदान्तरमपि सूचितम्। तदज्ञात्वा वेङ्कटमखिना रामामात्यस्य काम्भोजीलक्षणं अपहसितं स्यात्। रामामात्यादनु नातिचिरकाले सोमनार्येण षण्णवतिमेलाः कल्पिताः। रामामात्येनैकोनविंशतिमेलाः कल्पिताः। रघुनाथस्तु पञ्चदशैव मेलानुक्त्वा यो यो दोषो रामामात्यग्रन्थे प्रायश उद्घाटितो वेङ्कटमखिना तेन तेन दोषेण साकं पञ्चदशसु मेलेषु पञ्चाशद्रागलक्षणं प्रणिनाय। वेङ्कटमखी द्विसप्ततिमेलान्निर्माय अनुभवसिद्धान् पञ्चदशमेलान् गृहीत्वा पञ्चपञ्चाशद्रागान् ठायालापगीतप्रबन्धोपयोगिनः प्रावर्तयत्। तस्माद्वेङ्कटमखिनः वर्षशतप्रायार्वाचीनकाले प्रकृतकालोपयोगिनी वीणा निर्मिता। द्विसप्ततिमेला गृहीताः। तज्जन्यरागाः प्रस्तारेण लक्षिता अपि केचिदेव पञ्चाशत् रागा गायकानां वादने गाने च वर्तन्ते। रागाणां विभागे श्रुतिस्वरसामान्यानां रागाणां मेलने च मेलशब्दस्य व्युत्पत्तिस्स्यात्। मेलज्ञानेन प्रतिरागस्य श्रुतिस्वरस्थाननियमः स्पष्टतरो भवति साधारणवादकानामपि। प्राचीनविभागेऽष्टादशजातिनामके भरतादिमहर्षिसम्प्रदायसिद्धे तारमन्द्रव्यवस्था षाडवौडुवभेदः स्वरस्य बहुत्वाल्पत्वे ग्रहांशन्यासविभागश्च ते सर्वे गायकस्य स्पष्टा भवन्ति। मेलज्ञाने तेऽन्वेषणीया विचार्या एव वा। जातिविभागे वीणायाः छलसारीकत्वाद्वादकानां श्रुतिस्वरज्ञाननिष्कर्षः आवश्यको भवति। अथ भरतादीनां रागविभागक्रममुक्त्वा मेलशब्दे भिन्नमतानां परिपाटी प्रदर्श्यते।

भरतः गीतचतुष्टयमेव नाटकोपयोग्याह। पूर्वरङ्गप्रसङ्गे ध्रुवागानसम्बन्धास्सप्त रागाः सूचिताः। शार्दूलः षोडशभाषागीतय इति रागविशेषानवोचत्। मतङ्गेन भाषाविभाषा इति रागाणां भेदद्वयमुक्तम्। याष्टिकेन भाषाविभाषाचान्तरभाषिकेति त्रयो विभागाः प्रोक्ताः। दुर्गया रागाः शुद्धाः भिन्नाः वेसराः गौडाः साधारिताश्चेति पञ्चधा विभक्ताः। दुर्गामतमनुसृत्य प्राचीनैश्शार्ङ्गदेवप्रभृतिभिः रागप्रस्थानं प्रकल्पितम्। नान्यदेवेन भाषाविभागे द्वादश, स्वराख्यौ द्वौ उपरागाष्षट्, उपरागजास्त्रयोदश, विभाषा दश, अन्तरभाषाः पञ्च क्रियाङ्गास्सप्त, मध्यमग्रामे पञ्चोपरागजाः, चत्वारो भाषारागाः उपरागजौ द्वौ अन्तरभाषास्त्रयः, क्रियाङ्गाः पञ्च विभाषा अष्टौ गान्धारग्रामेऽपि कतिपयरागाः सम्यग्लक्षिताः। अभिनवगुप्तश्शुद्धरागा निर्वचनानन्तरं दुर्गामतमाश्रित्य षण्णवतिरागानलक्षयत्। सोमेश्वरो ग्रामरागलक्षणमुक्त्वा सङ्गीतविनोदे भाषाविभाषा, क्रियाङ्ग- विभक्तरागान् षण्णवतिरागे प्रयुक्तानपि सम्यगलक्षयत्। तत्पुत्रो जगदेकमल्लः भाषाङ्गक्रियाङ्गभेदेन लक्ष्ये दृष्टरागाणामेकशतं सम्यक् निरूपयामास। हरिपालादिभिः नन्दिकेश्वरमतमाश्रित्य शुद्धछायालगभेदेन रागाङ्गभाषाङ्गक्रियाङ्गभेदेन च सप्ततिरागाः निदर्शिताः। शार्ङ्गदेवो दुर्गादिमतमाश्रित्य चतुष्षष्ट्यधिकशतद्वयरागान् निरूपितवान्। तत्र शार्ङ्गदेवः अवोधकाल्पतरप्रयोगानुद्दिष्टरागानुदितस्वरूपान् सप्ताध्यायीं व्यरचयदिति परिहासपूर्वं रघुनाथेनोक्तम्। चतुष्षष्ट्यधिकशतद्वयरागाणां लक्षणं पूर्वग्रन्थसम्मतं विद्यारण्यपादैः सङ्गीतसारे सम्यग्विवेचितमिति रघुनाथवचनेन ज्ञायते। यद्यपि नोक्तं शार्ङ्गदेवेन। सङ्गीतसारो नोपलब्धः। तेषां रागाणां लक्षणं दुर्गा-नान्यदेव- जगदेकादिभिः सम्यक्सूचितमस्ति। भाषा विभाषादिशब्दानां निर्वचनं प्रत्येकं तत्तत्स्थाने लिख्यते।

अयं तञ्जापुराधीशः सङ्गीतसुधाकारः। अनेन रागाणां पञ्चदश मेल कर्तृविभागः कृतः। पञ्चाशत्प्रसिद्धरागाणां लक्षणं विस्तरेण निरूपितम्। कालः १६००–३०। नन्दीश्वरसंहिता, याष्टिकसंहिता, सङ्गीतचन्द्रिका, विद्यारण्यकृतसङ्गीतसार, बृहद्देशी। सङ्गीतरत्नाकरस्य सिंग, केशव, कल्लिनाथकृता व्याख्याः, सङ्गीत समयसारः, एतान् ग्रन्थान् निपुणं परामृश्य सङ्गीतसुधा रचितेति ज्ञायते। आन्ध्रभाषायां महाकविः। आन्ध्रभाषायां बहवो ग्रन्था अनेन निर्मिताः।

## रघुनाथेन्द्रमेलवीणा

ततोऽनुरघुनाथेन्द्रमेलवीणा निरूप्यते।
तल्लक्षणं तु संगीतसुधानिधिरिति श्रुते॥

चेव्वयाच्युतभूपालरघुनाथनृपाङ्किते ।
अस्मत्तातकृते ग्रन्थे प्रोक्तान श्लोकान लिखामि तान् ॥

पूर्वोक्तवीणाद्वय एव मध्यमेलाख्यवीणा खलु या च तस्याम् ।
तन्त्रीसमेतश्रुति पञ्चमां च तथैव मन्द्राख्यतपञ्चमां च ॥

तथाऽऽद्यतन्त्रीमपि पञ्चमेनानुमन्द्रपूर्वेण विराजमानाम् ।
विधाय तिस्रोऽपि समाननादास्तन्त्रीस्सहाधस्तनमध्यमेन ।
आद्यं स्वरं पञ्चममें च कृत्वा वाद्येत वीणा यदि वैणिकेन ॥

तथाच्युतश्रीरघुनाथभूपमेलाख्यवीणा कथिता तृतीया ।
आद्यं स्वरं पञ्चममित्यस्यार्थः कथ्यते मया ॥

मध्यमेलाख्यवीणास्थं मध्यषड्जाभिधं स्वरम् ।
आद्यं केवलसारिण्या जातं कृत्वाऽथ पञ्चमम् ॥

वादयेत तदा मध्यमेलवीणास्थमध्यम ।
रघुनाथेन्द्रवीणायां षड्जस्संपद्यते ततः ॥

तथापि वादनं कुर्युर्वीणायां वैणिका इति ।
यत्सर्वरागमेलैक रागमेलेति चेरितम् ॥

द्वैविध्यं मध्यमेलायामस्यामपि तदूह्यताम् ।
तदेवं रघुनाथेन्द्रमेलवीणा निरूपिता ॥

वेङ्कटमखी

**रघुप्रिया—मेलकर्ता (रागः)**

स रि ग ० ० ० म प ० ० ध नि स.

मञ्ज

**रघुलीला—मेलरागः (रघुप्रियामेलजन्यः)**

(आ) स म रि प म ग म प म रि म प नि स.
(अव) स नि ध नि प म ग म म रि म ग रि स.

मञ्ज

**रङ्गः—देशीतालः**

चतुर्द्रुतास्तु गुर्वन्ता रङ्गताले प्रतिष्ठिताः ।
० ० ० ० ऽ

श्रीकण्ठः

रङ्गताले गुरुर्ज्ञेयः परं द्रुतचतुष्टयात् ।
० ० ० ० ऽ

वेमः

**रङ्गकौस्तुभः—मेलरागः (हरिकाम्भोजीमेलजन्यः)**

(आ) स रि म ग म प ध प स.
(अव) स नि ध प म ग रि स.

मञ्ज

**रङ्गद्वारम्—पूर्वरङ्गाङ्गम्**

यस्मादभिनयस्त्वत्र प्रथमं ह्यवतार्यते ।
रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकम् ॥

भरतः

**रङ्गनाथः**

सङ्गीतसारदुग्धाब्धिकारः । महीसूरनगरनिकटस्थ श्रीरङ्ग-पट्टणवास्तव्यः । शतद्वयवर्षपूर्वः स्यात्

**रङ्गन्ती—रागः**

रङ्गन्ती ककुभोद्भूता सस्फुटैर्गमकैर्युता ।
धैवताद्या भवेदस्यां मध्यमस्तारमन्द्रगः ॥

मोक्षः

अनन्तरं तु रङ्गन्ती ककुभांशसमुद्भवा ।
पूर्णा चांशग्रहन्यासधैवता मन्द्रमध्यमा ।
गान्धारतारभाषा च सेयं निगदिता बुधैः ॥

हरिः

**रङ्गप्रकाशः—देशीतालः**

रङ्गप्रकाशताले तु मगणो लघुपावपि ।

तालप्रस्तारः

**रङ्गप्रदीपः—देशीतालः**

रङ्गप्रदीपताले द्वौ गुरू लघुगुरुप्लुताः ।
ऽ ऽ । ऽ ऽ̒

वेमः

**रङ्गभूषा—देशीतालः**

रङ्गभूषा गुरुलौ पुः ।
ऽऽ । । ऽ̒

मदनः

**रङ्गमण्ठः—तालः**

गुरुः कूपद्वयं गश्च द्वौ शरो रङ्गमण्ठके ।
ऽ ० ० ऽ ० ० ।

वेदः

**रङ्गमण्ठकः—देशीतालः**

गुरुः कूपद्वयं गश्च द्वौ शरो रङ्गमण्ठके ।
ऽ ० ० ऽ ० ० ।

दामोदरः

**रङ्गमनोहरी—मेलरागः (सरसाङ्गीमेलजन्यः)**

(आ) स ग म प ध नि स.
(अव) स नि ध प म ग रि ग स.

मञ्जः

**रङ्गमल्लिका**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म नि ध म प ध नि स.

(अव) स नि ध प म रि म ग स.

मज

**रङ्गराजस्थापकः**—देशीतालः

रङ्गराजस्थापकेऽन्तदौ गौपौ द्रुदरन्तरा।

ऽ ० ० ऽ ० ० ऽ ० ० ऽ गोपतिप्पः

**रङ्गरीतिः**—रागः

धैवतांशग्रहन्यासा मन्द्रमध्या गतारभाक्।

स्वरास्साम्ययुताः पूर्णाः भाषा ककुभसंभवा।

रङ्गरीतिस्समुद्दिष्टा नियुक्ता करुणे रसे॥

जगदेकः

रङ्गरीतिरन्यत्र रङ्गन्ती, उरगन्ती. उरङ्गन्ती, इति नामभिः दृश्यते।

**रङ्गलक्ष्मीः**—नृत्तबन्धः

कोणस्था नर्तकी यत्र तिस्रः तिसृषु पङ्क्तिषु।

अर्धावृत्तिक्रमेणैव षट्पदानि परिक्रमेत्॥

अन्ते च भ्रमरीं कुर्यादेवमन्याश्च कोणगाः।

चरन्ति सोऽयं बन्धः स्याद्रङ्गलक्ष्मीसमाख्यया॥

वेमः

**रङ्गलक्ष्मीविलासः**

अयं ग्रन्थः नाम्नैव लक्ष्मीधरविरचितगीतगोविन्दव्याख्यायां स्मृतः। प्रायशष्षोडशशतके निबद्धो भवेत्। केनेति न ज्ञायते।

**रङ्गलीला**—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म प ध नि स.

(अव) स नि ध प म ध प ध म ग रि स.

मज

**रङ्गाभरणः**—नृत्ते बन्धः

यत्र चत्वारि चत्वारि पात्राणि च चतुर्दश।

स्थापयित्वा ततःपात्रं प्राक्चतुष्काग्रसंश्रितम्॥

यत्र युग्मप्रचारेण क्रमात्प्रतिचतुष्टयम्।

प्रचारयेत्ततश्चान्यत्पात्रं प्राग्वत्प्रवर्तयेत्।

रङ्गाभरणबन्धोऽयं वीरनारायणोऽदितः॥

वेमः

—देशीतालः

रङ्गाभरणताले तु गद्वयं लद्वयं प्लुतः।

ऽ ऽ। । ऽ̒ वेमः

सानी सानी धापा मागासा। जगदेकः

**रङ्गोद्योतः**—देशीतालः

रङ्गोद्योतनताले तु मगणाल्लप्लुतावपि।

ऽ ऽ ऽ । ऽ̒ सुधा

रङ्गोद्योते गुरूणि त्रीण्यथ स्यातां लघुप्लुतौ।

ऽ ऽ ऽ । ऽ̒ वेमः

पा नी धा पा मा गा सा री मा पा।

जगदेकः

**रचिता**—प्राकृते मात्रावृत्तम्

चतुर्मात्रिकः एकः द्वौ पञ्चमात्रिकौ।

सः सः जः गः विरहाङ्कः

**रजनी**—मूर्छना (षड्जग्रामे द्वितीया मूर्छना)

(आ) नि स रि ग म प ध.

(अव) ध प म ग रि स नि.

पण्डितमण्डली

**रजितावली**—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) स रि ग म प ध नि स.

(अव) स नि ध म ग स रि स.

मज

**रञ्जकः**—गायकभेदः

श्रोतॄणां हृदयं ज्ञात्वा तेषां चित्तानुसारतः।

गायन् रञ्जयते यस्तु स रञ्जक इति स्मृतः॥

सोमेश्वरः

**रञ्जनगौरी**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) नि ध प नि स रि ग म प नि.

(अव) ध प म ग रि स नि ध प.

मज

**रञ्जनी** मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग रि म प ध नि स.

(अव) स नि ध म ग रि स.

मज

—मूर्छना

सर्वान् स्वरान् रञ्जयन्ती तेनेयं रञ्जनी मता।
निषादस्वरसंभूता राक्षसश्चाधिदैवतम् ॥

नान्यः

यतिकाशब्दे द्रष्टव्यम्।

,—श्रुतिः

मध्यमे द्वितीया श्रुतिः।
हनुमन्मतेऽष्टादशैव श्रुतयः।
मध्यमोऽत्र द्विश्रुतिः।
ऋषभे द्वितीया श्रुतिः।

रञ्जिका—श्रुतिः

पञ्चमस्य द्वितीया श्रुतिः।

सुधा

मध्यमस्य द्वितीया श्रुतिः। पाल्कुरिकि सोमः

अस्य मते मध्यमः त्रिश्रुतिरेव।

मध्यमस्य प्रथमा श्रुतिः। मण्डलीमते तारमध्यमस्यैव।

रञ्जितः—वर्णालङ्कारः (सञ्चारी)

मन्द्रादिर्द्विः प्रतिकलं मन्द्रान्तश्चेत्स रञ्जितः।

जगद्धरः

आद्यं तृतीयं तत्पूर्वं द्विरुच्चार्य प्रसन्नकम्।
एवमेकैकहीनाच्च रञ्जिते स्युः पराः कलाः ॥

सगरिसगरिसा, रिमगरिमगरी, गपमगपमगा, मधपमधपमा, पनिधपनिधपा,

मोक्षदेवः

रञ्जिनी—मेलरागः (धर्मवतीमेलजन्यः)

(आ) स रि ग म ध स.
(अव) स नि ध म ग स रि स.

मञ्ज

रणभेरीमहोत्साहः—देशीतालः

रणभेरीमहोत्साहतालेऽस्मिन् संप्रयुज्यते।
द्रुताष्टकं समस्थानविरामेन विराजितम् ॥
ततो लघुत्रयं गश्च लपञ्चकमतः परम्।
० ० ० ० ० ० ० ० । । । S । । । । । लक्ष्मणः

रणमञ्जरी—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि म प नि स.
(अव) स ध नि प म ग म रि स.

मञ्ज

रणरङ्गः—प्रबन्धः

यत्र पाटैस्सबिरुदैः रङ्गतालेन कल्प्यते।
रणरङ्गप्रबन्धः स्यादयं च द्विविधो भवेत्।
समातीतानागताख्या तालग्रहविभेदतः ॥

पण्डितमण्डली

कीर्त्यते रणरङ्गोऽथ पादैश्च बिरुदैर्युतः।
रङ्गतालेन गेयोऽथ गेयस्तालैस्समादिभिः ॥
रणरङ्ग इति प्रोक्तः।

हरिपालः

रणसिंहः

सङ्गीतमहोदधिकारः। सङ्गीतमहोदधिग्रन्थः काश्मीरेषु रघुनाथालयग्रन्थभाण्डागारे वर्तते।

रतम्—संगीतशृङ्गाराङ्गम्

आलिङ्गनादिप्रयोगो रतम्।

भोजः

रता—श्रुतिः

पञ्चमस्य प्रथमा श्रुतिः।

अनूपः

रत्नावलिः—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स ग म प ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

रतावसानम्—संगीतशृङ्गाराङ्गम्

संप्रयोगे विरामो रतावसानम्।

भोजः

रतिः—स्थायिभावः

रतिर्नाम प्रमोदात्मिका ऋतुमाल्यानुलेपनाभरणभोजनवरभवनानुभवनाप्रातिकूल्यादिभिः विभावैरुत्पद्यते। अनुभावास्तु स्मितवदनमधुरकथनभ्रूक्षेपकटाक्षादयः।

रत्यर्थविषयप्राप्त्या रतिस्समुपजायते।
सौम्यत्वादभिनेया सा वाङ्माधुर्याङ्गचेष्टितैः ॥

भरतः

—देशीतालः

रतिताले समुद्दिष्टो लघुरादौ ततो गुरुः।
। S श्रीकण्ठः

रतिः

भोग्यं नरं तु पश्यन्त्याः स्त्रियस्तदितरस्य वा।
विकुर्वाणा भृशं चेष्टा रतिश्शृङ्गारसंज्ञिता ॥

भावविवेकः

—ध्रुवावृत्तम्

यदि दशमषष्ठमथ षोडशान्तगतं त्रयोदशमपि तथा।
गुरु भवति पादविहितं सततं यदि सङ्कृतौ भवति रतिः॥

ध्रुवा यथाक्ष-ाणां तु गुरोः स्थाने लघु न्यसेत्।
लघोर्द्वौ गुरुश्चान्ते भङ्गोऽयं चतुरश्रयोः ॥

मध्यमोत्तमपात्राणां वीरे रौद्रे रतिर्भवेत्।
टक्करागेण गातव्या ध्रुवा द्रुतलये सदा ॥

जलहरणिणादमतितिव्वारं असमत्थओ विअविहसियुं।
जलभरनिनादमतितीव्रं च समर्थक इव विहस्तिुं।

नान्यः

रतिका—श्रुतिः

रक्तिकैव रतिका।

रतिगणाः

अत्युक्तायाश्च चत्वारो भेदा रतिगणा मताः।
तत्र ये लघुपूर्वास्स्युः तेषु प्रागधिकं लघुः ॥

मोक्षदेवः

रतिचन्द्रः—रागः

न्यासांशकग्रहणमध्यमनादहृद्यः
प्रान्तस्थमध्यमरवो धनिरावशून्यः।
अत्यल्पपञ्चमरवः स्फुट...स्यात्।
स्नातङ्गतानरुचिरो रतिचन्द्रकश्च ॥

नान्यः

अंशन्यासोपेत...मध्यमको मध्यान्तरमणीयः।
धैवतनिषादरहितो रतिचन्द्रः पञ्चमेन चात्यल्पः ॥

याष्टिकः

रतिडिण्डिमः—देशीतालः

मभौ नजौ जलौ गश्च प्लुतश्च रतिडिण्डिमे।

27 मात्राः तालप्रस्तारः

रतिरागः—मेलरागः (सुवर्णाङ्गीमेलजन्यः)

(आ) स ग रि ग म म ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

रतिलीलः—देशीतालः

ताले तु रतिलीलाख्ये लघुद्वन्द्वं गुरुद्वयम्।
॥ S S वेमः

गा पा नीसा नीसा। जगदेकः

रतिशेखरः—देशीतालः

गद्वयं नगणो दौ च प्लुतश्च रतिशेखरे।

11 मात्राः तालप्रस्तारः

रतिशोभितं—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग म ध नि स.
(अव) स नि प म ग रि स.

मञ्ज

रत्नगर्भः—देशीतालः

रत्नगर्भे तु गलपाः।
S । S̀ लक्ष्मणः

रत्नजालकम्

ग्रथदाच्छादकभूषणम्।

रत्नज्योतिः—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स ग म प नि स.
(अव) स नि ध ग रि स.

मञ्ज

रत्नपूर्णा—मेलरागः (कनकाङ्गीमेलजन्यः)

(आ) स रि ग म प ध नि – स.
(अव) स नि ध म ग रि म ग – स.

मञ्ज

रत्नभानुः—मेलरागः (ऋषभप्रियामेलजन्यः)

(आ) स रि ग म ग रि म प नि ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

रत्नमणिः—मेलरागः (कोकिलप्रियमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध प ग रि स.

मञ्ज

रत्नमतिः—मेलरागः (सुवर्णाङ्गीमेलजन्यः)

(आ) स ग म प म ध नि स.
(अव) स ध प म प ग रि स.

मञ्ज

रत्नमाला—देशीतालः

रत्नमालाह्वये ताले द्लौ दगद्पाः क्रमात्।

०।०ऽ०ऽ

लक्ष्मणः

रत्नमाला—प्राकृते मात्रावृत्तम्

एकश्चतुर्मात्रः द्वौ पञ्चमात्रिकौ चतुमात्र एकः सः।

विरहाङ्कः

रत्नाकर्पिणी—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म प म ध नि स.

(अव) स ध प ग रि स.

मल्ल

रत्नाङ्गी—मेलकर्ता (रागः)

स रि ग ० ० म ० प ध ० नि ० स.

मल्ल

रत्नाभरणम्—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि म प ध नि स.

(अव) स नि प ध प म रि म ग स.

मल्ल

रत्नावली—मेलरागः

रत्नावल्यां रिनी नस्तः तीव्रतीव्रतमौ गमौ।

गान्धारमूर्छना यत्र तत्रोक्तो न्यासपञ्चमः॥

द्वितीयप्रहरोत्तरगेया।

अहोबिलः

रथक्रान्तः—तानः

प—लोपः—षाडवः।

ध म ग रि स नि.

कुम्भः

रत्यादिस्थायिनिर्वचनम्

रम्यते रमते वेति रति रमयतीति वा।

हास्यते हासयति वा हासः स्याद्धसतीति वा॥

उत्तन्द्रतामभिभवत्यत उत्साह उच्यते।

उत्साह्यते चोत्सहते उत्साहयति वा भवेत्॥

विविधः स्यात्स्मयो हर्ष इति विस्मयतेऽथवा।

विस्माप्यते स्वयं कांश्चित् विस्मापयति वा भवेत्॥

क्रुत्क्रौर्यं तेन सर्वत्र धक्ष्यतीत्यस्य निर्वहः।

क्रुद्ध्यति क्रोधयत्येव क्रोध इत्यभिधीयते॥

शुक् क्लेशः शोषणात्मैव शोच्यते शोचतीति वा।

शोचयत्यपरानेवं शोकशब्दस्य निर्वहः॥

सर्वेन्द्रियार्थगर्हेव जुगुप्सेत्यभिधीयते।

जुगुप्सते जुगोप्स्येत जुगुप्सापयतीति वा।

बिभेति भाययत्यन्यानित्यादि भयनिर्वहः॥

शारदातनयः

रथचक्रा—देशीचारी

स्थाने तु चतुरस्राख्ये स्थित्वा श्लिष्टौ परस्परम्।

पुरतः पृष्ठतो वापि चरणौ चेत्प्रसर्पतः।

यत्रैषा रथचक्राख्या चारी तु परिकीर्तिता॥

वेमः

रथनेमिसमम्—चालकः

आदिमध्यावसानेषु स्वस्तिकाकारधारिणौ।

क्रमेण युगपद्वा लुठन्तौ रथचक्रवत्।

करौ यत्र तमाचष्ट रथनेमिसमाह्वयम्॥

वेमः

रथाङ्गः—नृत्तबन्धः

मध्ये चतस्रो नर्तक्यः परितोऽष्टौ क्रमेण च।

चरन्ति मण्डलावृत्या चारुशिञ्जानभूषणाः॥

कुर्वन्ति भ्रमरीमेव चतस्रः कोणगाः स्त्रियः।

पङ्क्तिमध्यद्वयेनान्तश्चतुष्केच युगस्य च॥

अभितः क्रियते यत्र भुवां विनिमयो मिथः।

सोऽयं रथाङ्गबन्धः स्याद्वेमभूपालभाषितः॥

वेमः

रथोत्तरम्—ध्रुवावृत्तम्

प्रथमं च तृतीयं च सप्तमं नवमान्तिके।

गुरूणि त्रैष्टुभे यत्र नर्कुटं तद्रथोत्तरम्॥

सारदे मदकलोपकूजिता -

भरतः

रथोद्धता—एकादशाक्षरछन्दः

आद्यं तृतीयमन्त्यं च सप्तमं नवमं तथा।

गुरूण्येकादशे पादे यत्र सा तु रथोद्धता॥

रनरलगाः

(उ-म्) किं त्वया सुभटदूरवर्जितम्।

भरतः

रथ्या—देशीतालः

रथ्याताले लघुः प्रोक्तो द्विरामः प्रकीर्तितः।

। ऽ

दामोदरः

**रन्तिका** - रागः

गान्धारांशन्यासा तारा मन्द्रा च पूर्णतायुक्ता।
दीर्घोल्लासितगमका ग्रहगान्धारा च पञ्चमप्राया ॥

बहुसौपर्णिकताना हरिणाश्वा मूर्छना च करुणस्था।
सौम्याधिदेवता तु प्रोक्ता तज्ज्ञैश्च रन्तिका सततम् ॥

गांशन्यासग्रहदीर्घोल्लसितैर्गमकैर्युता।
तारमन्द्रा च पूर्णा च रन्तिकेत्यभिधीयते ॥

मतङ्गः

**रभसः**

सर्वोत्ययानवेक्षी तु त्वरावान् लङ्घितक्रमः।
अशक्यस्सोढुमन्यैश्च व्यापारो रभसः स्मृतः ॥

भावविवेकः

**रमाङ्कितः**—देशीतालः

रमाङ्कितो रामतालः।
। ऽ । ऽ ऽ ऽ

लक्ष्मणः

**रमापतिः**—देशीतालः

रमापतौ रमाभ्यां ससगणोऽन्तनिरूपितः।
ऽ । ऽ ऽ ऽ ऽ ॥ ऽ ऽ

लक्ष्मणः

**रमाललिता**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग म ध नि प स.
(अव) स नि ध म प म ग स.

मञ्ज

**रमाविलसितं**—मेलरागः ( खरहरप्रियामेलजन्यः )

(आ) स रि म प ध नि स.
(अव) स ध प म रि म ग रि स.

मञ्ज

**रम्भावली**—मेलरागः हनुमत्तोडीमेलजन्यः)

(आ) स रि म प ध स.
(अव) स नि प म ग रि म स.

मञ्ज

**रम्या**—मेलरागः (रागवर्धनीमेलजन्यः)

(आ) स रि ग म प ध नि प स.
(अव) स नि ध प म ग रि स.

मञ्ज

**—श्रुतिः**

धैवतस्य तृतीया श्रुतिः।

**रविकालिता**—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स नि स रि ग म प नि.
(अव) ध प म ग रि स नि स.

मञ्जः

**रविचन्द्रिका**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म ध नि ध स.
(अव) स नि ध म ग रि स.

मञ्ज

**रविद्युतिः**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग म प ध प नि स.
(अव) स नि ध प म स.

मञ्ज

**रविमण्ठः**—देशीतालः

रगणो गलसंयुक्तो निःशब्दं लचतुष्टयम्।
रविमण्ठकसंज्ञे तु मात्रा द्वादशमिर्युते ॥
ऽ । ऽ ऽ । ॥ ॥

दामोदरः

**रविमण्डलम्**—अङ्गुलिभूषणम्

वृत्ताकारनिविष्टैश्च कुलिशैः परिवेष्टितम्।
मध्ये च मणिना युक्तं रविमण्डलमीरितम् ॥

सोमेश्वरः

**रशना**

षोडशलतायुतश्रोणीभूषणम्।

**रसः**

विभावैर्विविधैर्जातोऽनुभावैः प्रकटीकृतः।
सञ्चारिभिः प्राप्तपोषः स्थायी याति रसात्मताम् ॥

ननु लोकेऽङ्गनाचन्द्रमलयानिलचन्दनैः।
उत्पद्यते रतिस्सा च कटाक्षाद्यैः प्रकाश्यते ॥

पोषं च ग्लानिनिर्वेदचिन्तौत्सुक्यादिभिः परम्।
तथापि न रसास्वादो मनागप्युपलभ्यते ॥

तत्कथं काव्यनाट्यादौ रसः स्यादिति चेच्छृणु।
विभावादिमुखेनैव यत्र भावोऽवगम्यते ॥

रत्यादिस्तत्र संवेद्यो रसास्वादोदयः परः।
इति वस्तुस्वभावोऽयं केन पुर्यनुयुज्यताम् ॥

विभावादिर्न लोकेऽस्ति किन्त्वसौ काव्यनाट्ययोः।
इत्युक्तं प्राक्तयोर्लक्ष्मापीदृशं काव्यनाट्ययोः ॥

अनुभावविभावानां वर्णना काव्यमुच्यते ।
तेषां काव्यप्रयोगस्तु नाट्यं गीतादिरञ्जितम् ॥

कृत्रिमेष्वेषु भावेषु विभावाद्यैश्च कृत्रिमैः ।
प्रतीतिर्जायमानेऽयं कथं न भ्रान्तितां व्रजेत् ॥

इति चेदुच्यते नैषां सत्यासत्यत्ववर्णनम् ।
उपयुक्तं प्रत्युतैतदुपहासाय जायते ॥

सामाजिकानां चित्तेषु सुखसंवित्प्रकाशते ।
स्वसंवेद्या यदि ततः किं सत्यासत्यचिन्तया ॥

न चासत्यात्सत्यबोधो न प्रमेत्यपि युज्यते ।
भ्रान्तिरप्यर्थसंबन्धात्प्रमेति प्रत्यपीपदन् ॥

मणिप्रदीपदृष्टान्तात्तर्कमांसलबुद्धयः ।
गुडचिञ्चादिभिर्द्रव्यैः मधुरादिरसान्वितैः ॥

यथायुक्तिविशेषेण पानकाख्यो रसो भवेत् ।

विप्रदासः

ननु मानसविकारात्मको भावो विभावादिनिष्पन्नस्वाद्यत्वशरीरो रसतयाऽनुभूयत इति भवतामाकूतम् । न वयमात्मनो बुद्ध्यादिव्यतिरेकेण आन्तरं विकारान्तरं तत्त्वं बुद्ध्यामहे । सर्वस्यात्मव्यतिरिक्तस्य वस्तुनः परिणाममस्तीत्यवगतं तावत् । न च मनो विक्रियते अन्यानि विक्रियन्ते परिणामीन्यपीति नियमे कारणमस्ति । नापि मनोविकारोऽत्यन्तमप्रसिद्धः । भवति मम विकारः कोऽपीत्यादि, 'विकारहेतावपि विक्रियन्ते येषां न चेतांसि त एव धीराः' इति च । स्मरणमपि कामिनीनां मनसो विकाराय इत्यादि प्रयोगाणां दर्शनात् । न च मानसविकारस्य भावशब्दो वाचक इत्यप्ययुक्तम् । विकारो मानसो भावः इति अमरशासनात् । किञ्च विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति श्रुतेश्च सिद्धयोरात्ममनसोर्नास्ति रसत्वम् । साध्यस्यापि बुद्ध्यादेः स्वसिद्धौ विभावादित्रितयनिरपेक्षस्य कथमिव रसता संभाव्यताम् । तस्मादात्मादिव्यतिरिक्तो विभावादिसव्यपेक्षः स्वाद्यते, स भावशब्दवाच्यो मानसविकारोऽभ्युपगन्तव्यः, यस्योत्कर्षो रसः स्यात् । अत एवोक्तं—

बाह्यार्थालम्बनो यस्तु विकारो मानसो भवेत् ।
स भावः कथ्यते सद्भिः तस्योत्कर्षो रसः स्मृतः ॥ इति ।

ननु सिद्ध्यत्वेवं काममान्तरो मानसविकारो भावशब्दवाच्यः तदुत्कर्षरूपो रसः । तथापि तस्यासुखरूपत्वेनापुरुषार्थत्वात्प्रेक्षावतां तत्र प्रवृत्तिर्नभवेत् । न खलु मनोविकारमात्रं तदुत्कर्षमात्रं वा सुखं प्रतीयन्ति सन्तः । प्रत्युत तस्यासुखरूपत्वमेव निक्षिपन्ति । उन्मादापस्मारादौ तस्य दुःखात्मत्वश्रुतेः । न खलु पुरुषस्य दुःखादतिरिच्यते व्याधिः । आस्तां तावत्तथाभूतस्य रसस्य स्पृहणा, यस्य वार्तापरिहरणीयत्वमेवाग्रतः प्रत्युपतिष्ठते । तथाभूते रसे रसवतः काव्यस्य तदलङ्कारजातस्य चानुपादेयता । काव्यस्यानुपादेयत्वे शक्तिनैपुण्याभ्यासरूपस्य तदुत्पत्तिहेतोर्वैयर्थ्यं स्यात् । किञ्च मायारूपत्वान्मनसः तद्विकारस्याप्यमाननीयत्वान्मानसविकारनिर्वृत्तिरेव परमः पुरुषार्थः । तथा मनोविकाराद्व्यतिरिक्तस्य भावोत्कर्षस्य रसतां प्रतिजानन् अपहास्यतामेवात्मनि सन्दध्यात् । न चैतद्वाच्यं सत्त्वरजस्तमोमयत्वान्मनसः सत्त्वरजस्तमसो विकारस्तस्यैव सुखात्मकत्वात् पुरुषार्थाभावान्न भ्रश्यतीति विचारसहिष्णुत्वात् । तथाहि मनःखल्वणुपरिमाणमिन्द्रियं तच्च सत्त्वादिसहितमेवेन्द्रियभावमनुभवति । तथा गन्धादिसहितमेव पार्थिवादिद्रव्यम् । तथाभूतं च तदिन्द्रियं कथं नाम सुखस्वभावं स्वात्मानमेव सत्त्वं गृह्णीयात् । एकस्य ग्राह्यग्राहकत्वानुपपत्तेः । तस्मात्काव्योपादेयतामिच्छद्भिर्मनोविकारोत्कर्षव्यतिरेकेण अन्य एव रसो वाच्य इतिचेत्, तत्रोच्यते—इह खलु सर्वत्र द्विविध एव रसः श्रूयते भूतप्रभवो मनःप्रभवश्चेति । भूतप्रभवो मधुरादिः । मनःप्रभवः शृङ्गारादिः । न चानयोः सुखस्वभावत्वाभावापराधेन न पुरुषार्थत्वं, न च नास्ति शृङ्गारादेः सुखसाधनत्वं, दृश्यते हि तर्कव्याकरणादिनिपुणाः प्रतिभाभियोगव्युत्पत्तिमन्तः पुरुषार्थविवेचनपराः काव्यमुत्पादयन्तो महाकविप्रबन्धाननुसन्दधानाः रसयन्तश्च शृङ्गारादिसुखास्वादेन मोक्षस्यापि व्यर्थतामापादयन्तः तृतीयपुरुषार्थं तृणं मन्यमानाः योगिनोऽपि युक्तावस्थायां साक्षात्कृतपरब्रह्मसागरप्रकटमोदपरम्पराप्रहारमूर्धानः प्रवयःकातरा अपि अर्थानां प्रसंख्यानयोग्यतां चेतसः काव्यार्थभावनास्वादेन संपादयन्तो विलोक्यन्ते । किञ्च नाटकादीनि प्रयत्नेन शृङ्गारादीन्युल्लास्य तन्मुखेनैवास्वादं नाम परमानन्दं परिषत्सु तन्वन्ति । मन्दधियस्तु व्युत्पत्तिमात्रफलानीति तानि मन्यन्ते । काव्यार्थश्चानन्दहेतुरिति सुप्रसिद्धः । न खलु रसादन्यस्य काव्यार्थस्यानन्दहेतुत्वं संभवति । यथोक्तवर्णसन्दर्भपदपदार्थप्रतिबद्धस्यापि निबन्धनस्य रसशून्यस्य निर्वृत्तिकरत्वाभावात् काव्यार्थेषु रस एवानन्दकारीति जानीमः । ततश्च कृतधियो रसानन्दयोर्हेतुहेतुमद्भावेनाभेदमेवाध्यवस्यन्तो अलौकिकसुखास्वादस्यैव रसत्वमुपदिशन्ति । उक्तं च

तत्प्रेक्ष्यं पश्यतां श्राव्यं सम्यक्भावयतां हृदि ।
अलौकिकसुखास्वादो रस इत्यभिधीयते ॥

इति काव्यार्थेषु वाच्यलक्ष्यव्यङ्ग्यात्मकेषु व्यङ्ग्यस्य रसस्य मुख्यत्वप्रसिद्धिरप्यानन्दकारित्वादेव । न हि रसादृते कश्चिदर्थ उपपद्यते ।

न चानन्द एव रसः। तस्य ब्रह्मत्वेन विभावादिभिरनिषिद्ध-त्वात्, आनन्दो ब्रह्मेति श्रुतेः। अनुद्विग्नो गभीरत्वादित्यादेः रसस्य दुःखात्मकत्वश्रुतेः कथं तस्य हेतुः फलं आनन्दो रसस्य।

तत्सन्निधौ हृदयं मदीयमङ्गारचुम्बितमिति शृङ्गाररसेऽपि दुःखस्याप्युपलब्धेरानन्दस्वभावत्वं रसस्य सर्वथा न वचनीयम्। अपि तु आनन्दहेतुत्वमेव न खलु मनोविकारः स्थाय्युत्कृष्टो-ऽप्यानन्दरूपो भवति। रसश्च मानसविकारोत्कर्षात् न व्यति-रिच्यत इति कथं तस्यानन्दस्वभाववत्वम्। परमार्थतो नान्तःकरण वृत्तिरेव सुखम्। किन्तु तत्प्रतिबिम्बितं चैतन्यमेव स चैतन्य-मात्मा आत्मा च सुखम्। आत्मैव सुखमित्यादि श्रुतेः। यदर्थं सर्वं यच्च नान्यार्थं तत्सुखमित्यस्य सुखलक्षणस्यात्मन्येव पर्यवसानाच्च।

आत्मनो नित्यत्वेऽपि सुखस्यानित्यत्वप्रतिभासः तद्वृत्तीनाम-नित्यत्वात्। सुखस्य वृत्तीनां कारणान्वयव्यतिरेकानुविधायि-त्वात् सुखेऽपि तत्प्रतिपत्तिर्न युक्ता। तत्तादाविन्द्रियसंप्रयुक्त-स्रक्चन्दनवनितादिविषये प्रसन्ना वृत्तयो जायन्ते। प्रसन्नासु तासु वृत्तिषु प्रतिबिम्बितं चैतन्यमेव स्वर्गसुखतामनुभूयते। प्रसादतारतम्यात्सुखतारतम्यं प्रसादतारतम्यं च विषयसौन्दर्य-तारतम्यादिति स्थितिः।

तत्र य एव लोके स्थायिभावस्य कारणकार्यसहकारिणः पदार्थास्त एव काव्यनाटकादौ सुकविना प्रतिपाद्यमानाः लोकोत्तर-तामवगाहन्ते। स खलु शब्दस्य कोऽपि महिमा येन लौकिका अपि भावाः तदभिधेयदशामाविशन्तो लोकोत्तरचमत्कारका-रित्वेनालौकिकाः संपद्यन्ते। अत एव तेषां कारणादिपदार्थानां अलौकिकैः विभावादिपदैः व्यपदेश्यत्वम्। ये चात्यन्तलौकिका विभावादयो नाट्यकाव्ययोर्गोचरीक्रियमाणाः श्रोतृप्रेक्षकाणां वासनात्मिकायां स्वाभिव्यञ्जितायां भावलक्षणायां वृत्तौ प्रसा-दातिशयं निदधति। निरतिशयप्रसादमहितायां तस्यां स्वात्मा-नन्दः स्वयं प्रथते। यत्र भूमा यो वै भूमा तत्सुखं—इति श्रुतेः॥ भावस्य चायमेवोत्कर्षः यदत्रानन्दसंविन्मयः स्वात्मा परिस्फुरति। भावोत्कर्ष एव रसः। तस्यैव स्वाद्यत्वात्। स्वाद्यस्यैव सर्वत्र रसत्वमिष्टं, यतः स्वादश्चानन्दोद्भवः। यदुक्तं स्वादः काव्यार्थ-संभेदादात्मानन्दसमुद्भवः—इति।

स्वाद्यविषया संविदपि स्वादरूपैवेति भावोत्कर्षस्य स्वादगोच-रत्वलक्षणं स्वाद्यत्वमयत्नसिद्धम्।

तथाहि—वृत्तौ प्रतिबिम्बितं चैतन्यमेवानन्दः। आनन्द एव स्वादः। स्वादश्च स्वयंप्रकाशो वृत्तिमपि प्रकाशयति। इदमेव वृत्तेः स्वाद्यत्वम्। यदियं स्वादे प्रकाशमाने स्वयमपि प्रकाशते। अन्यथा तत्संभवे प्रमाणाभावात्। तदसिद्धेरेव वृत्तिः स्यात्। यथा—वृत्तेरेव वृत्त्युपहितरूपस्यानन्दस्य स्वाद्यत्वं तथा वृत्तेरपि उपाधि-भूताया उपहितानन्दस्य स्वसंवेद्यमानत्वं आनन्दस्वभाववत्वं च। वृत्तिवृत्तिमतोरैक्याध्यासात्सिद्धम्। ततश्च युक्तैवेयं वाचोयुक्ति-रानन्दसंविद्रूपो रस इति। अतो रसं रसयन्तो रसिकाः शब्द-ब्रह्ममुखेन परब्रह्मैवानुभवन्तीति तेषां युक्तम्। शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति। तस्माद्यथोक्तदोषाभावाद्रसः पुरुषार्थ एवेति सर्वमनवद्यम्।

रसविवेकः

विभावाद्यैस्सुप्रयुक्तैस्तथा स्याद्रससंभवः।
सोऽयं रसः किं कार्यं स्यादनुमेयोऽथवा भवेत्॥
किं वा ज्ञाप्योऽथवा न स्यादथ व्यङ्ग्योऽपि वा भवेत्।
तत्र कार्यं केचिदाहुः लोल्लटाद्या विपश्चितः॥
तथा हि प्राक्प्रतीतार्थानुसन्धानविनिर्मितैः।
विभावाद्यैरपूर्वोऽर्थो नट एवोच्यते रसः॥
तत्रस्थं सहृदयाः साक्षात्कुर्वन्ति चेतसा।
कार्योऽप्यसौ न मुख्योऽस्ति नटादावनुकर्तरि॥
किं तु मुख्यतया रामाद्यनुकार्येषु वर्तते।
यो भावस्सोऽनुकारेण लिङ्गेनैवानुमीयते॥
प्रतिबिम्बाद्यथा (बिम्ब) प्रतीतिरुपजायते।
यथाऽसत्याद्विभावादेः सत्यज्ञानोऽदयो भवेत्॥
अनुकार्ये स्थितस्सोयं नटैस्सामाजिकैरपि।
आस्वाद्यते स्वमनसा सुखसंवित्तिलक्षणम्॥
इत्याहुरनुमेयत्वं केचिद्रसविवेचकाः।
अनुकार्यस्य रामादेरतीतत्वान्नटेष्वसौ॥
नटेऽपि नासौ तस्यानुभावादौ व्याकुलत्वतः।
ममेदमित्यहङ्काराभावात्सामाजिकेष्वपि॥
अनुकार्यानुकर्तृत्वविरहाच्च न युज्यते।
ज्ञाप्यते चापि भावाद्यैः चित्रन्यस्ततुरङ्गवत्॥
प्रतिभाति न सन्देहो न तत्त्वं न विपर्ययः।
धीरसावयमित्यस्ति नासावेवायमित्यपि॥
विरुद्धबुद्ध्यसंभेदा अपि वञ्चितविप्लवः।
युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कया॥
तस्मान्नटस्थ एवायमानन्दात्मानुभूयते।
इति श्रीशङ्कुकः प्राहानुमेयत्वेऽप्यलौकिकम्॥
उत्पत्त्यनुमितिज्ञप्तिरूपावस्थाकदम्बितः।
सामाजिकानुकार्यानुकर्तृषु त्रिष्वपि स्फुरन्॥

भावस्साधारणीभूतो यदाऽसौ भावनाबलात्।
साधारणैरुपायैश्च भाव्यते स्यात्तदा रसः ॥

इत्याह भावनापक्षं भगवान्भट्टनायकः।
अत्रोच्यते न कार्योऽयं विभावादिष्वसन्नपि ॥

अदर्शनानुचक्रादेरभावेनेक्ष्यते घटः।
न च स्यादनुमेयोऽयं परोक्षत्वप्रसङ्गतः ॥

सिद्धो हि ज्ञाप्यते नासौ सिद्धः स्याद्रसलक्षणः।
तस्मान्न ज्ञाप्यतापक्षं कक्षीचक्रुर्विपश्चितः॥

नेष्टं च भाव्यमानत्वमसत्वापत्तिदोषतः।
पारिशेष्यादभिव्यक्तिपक्षश्शुक्लस्य सम्मतः ॥

(शुक्लो) विप्रदासः

रसो वै सरसं ह्येवायमित्यादिश्रुतिश्रुतः।
ब्रह्मानन्दः परो योऽस्ति स एव रस उच्यते॥

स्रक्चन्दनाङ्गनाद्यर्थैर्लौकिकेऽभिव्यक्तिमागतः।
आनन्दोऽयं यथालोके सुखमित्युपचर्यते ॥

प्राग्मा तथात्वैरप्येभिर्विभावाद्यैस्तदात्मताम्।
आपन्नैरिव नाट्यादौ सुप्रयुक्तैर्नटादिभिः ॥

रत्यादिस्थायिभावेषु पुष्टेषु व्यक्तिमागतः।
सुप्रयुक्तविभावादिजीवितैककृतावधिः ॥

अनुकार्यानुकर्त्रादिप्रत्यक्षनियताश्रयः।
अभिन्नोऽपि निजाकार इव भिन्नतया स्थितः ॥

सर्वाङ्गीणमिवालिङ्गन्नान्यत्सर्वं तिरोदधत्।
परिस्फुरन्निव पुरः परिच्छेदविवर्जितः ॥

सामाजिकैश्चर्व्यमाणः चमत्कारात्मकः परः।
आनन्दो ब्रह्मणो रूपं रस इत्युच्यते तथा ॥

व्यञ्जिकायाश्चित्तवृत्तेः स्थिताया वासनात्मना।
उत्पत्तिज्ञप्तिपोषाणां करणाभिमतेषु तु ॥

व्यञ्जकत्वं विभावादिष्वास्थेयमुपचारतः।
न नित्योऽयं विभावादिः प्रतीत्यवधिकत्वतः ॥

नाप्यनित्यो विभावादिः विरहेऽपि प्रसञ्जनात्।
न निर्विकल्पग्राह्योऽयं विभावाद्यनुसंहिति ॥

नापि ग्राह्यो विकल्पेन स्वसंवेद्यतया स्थिते।
उभयाभावरूपस्य नोभयात्मकता मता ॥

उभयाभावरूपत्वान्न च नास्तीति युज्यते।
अपलप्येत नास्तीति स्फुरन्ननुभवः कथम् ॥

चतुःकोटिबहिर्भावः किन्न लोकोत्तरो भवेत्।
तस्माद्ब्रह्मानुभवनात् शृङ्गारादिः स्थिरो रसः ॥

विप्रदासः

विभावैर्जनितो भावोऽनुभावैरनुबोधितः।
व्यभिचारिभिरास्फीतो रस इत्यभिधीयते ॥

स चानुकार्ये रामादौ वर्तते मुख्यवृत्तितः।
तद्रूपताऽनुसन्धानान्नर्तकेऽपीति लोल्लटः ॥

व्यावर्त्य सम्यङ्मिथ्याभ्यां कोटिद्वयविलंबितः।
ज्ञानात्तत्सदृशाकारप्रतीतेश्च निरासतः ॥

तत्तद्विलक्षणात्स्थानाच्चित्ररूपकवन्नटः।
सेयमित्येष संवित्तिग्राह्यस्सामाजिकैरिह ॥

वासनाभावितः स्वीयकार्यप्रकटनेन च।
विभावाद्यैर्नटै रेवोद्भासितैरनुमापितः ॥

रसनीयत्वमासाद्य वैलक्षण्यात्परस्य च।
संभाव्यमानो रत्यादिस्थायित्वेन तदात्विह ॥

असन्नपि प्रेक्षकाणां चर्व्यमाणो रसः स्मृतः।
इति श्रीशङ्कुकाचार्यो रसव्यक्तिं न्यवेदयत् ॥

न व्यङ्ग्यश्च न तूत्पाद्यो न प्रत्याय्योऽपि युज्यते।
स्थाय्येव भाव्यमानोऽत्र व्यापाराद्भावकत्वतः ॥

सत्त्वोद्रिक्तप्रकाशेनानन्दप्राचुर्यसंविदः।
विश्रान्तिस्थानमातत्य भोगभोज्यो रसोऽथवा ॥

इति नायकभट्टानां मतमेतदुदीरितम्।
अथाभिनवगुप्तार्यभट्टानामप्युदीर्यते ॥

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
स्वीयान्यदीयसंबन्धविशेषप्रविहाणतः ॥

साधारणैरभिव्यक्तो वासनात्मतया स्थितः।
रत्यादिकः स्थायिभावो वेद्यान्तरविनाकृतः ॥

वाङ्मनोगोचरानेकविद्वत्साधारणीकृतः।
स्वीयाकार इवाभिन्नसभ्यैः स्वविषयीकृतः ॥

विभावादिविभाव्यत्वात्तद्गतावधिजीवितः।
चर्व्यमाणः पानकवदन्यत्सर्वं विलुप्य च ॥

मनस्संक्रमिवागच्छत्सर्वाङ्गीणं भवत्स्वयम्।
अलौकिकचमत्कारकारी कोऽपि रसः स्मृतः ॥

सा कापि परिहारेणालौकिको ज्ञाप्यकार्ययोः।
व्यञ्जितश्च विभावाद्यैः चर्वणीयः स्मृतो बुधः ॥

लोकोत्तरः स्वसंवेद्यः प्रत्ययोऽप्युपपद्यते।
औपचारिककार्यत्वमीदृशं तस्य भूषणम् ॥

मुख्यः

ननु कोऽयं रसो नाम पदार्थस्तद्विचार्यते।
रस्यते वा सहृदयैः स्वयं वा रस्यते रसः॥

सामाजिकान् रसयति ते वायं रसयन्ति च।
रसनं वा नटेनात्र चित्तवृत्तिर्नटस्य यः॥

रसतीति रसो वा स्याद्रसयत्यथवा रसः।
रामः स्याद्वा न वेत्यादि प्रतीतिं नटसंश्रिताम्॥

अथवा रस्यते सभ्यैः रामोऽयमिति तत्त्वतः।
इत्यादिपक्षस्तद्विद्भिरादृता रसरूपणे॥

कुम्भः

उद्याने प्रेयसीभिर्मलयजपवनैः कोकिलाद्यैर्विभावैः
ग्रीवाभ्रूवल्लिनेत्राम्बुजभुजलतिकान्दोलनाद्यानुभावैः।
व्यक्तीभूतो विवृद्धस्सुचिरमुपचितो भूरिनिर्वेदनाद्यैः
नाट्ये गीते च काव्ये त्रिपु वसति रसश्शुद्धबुद्धस्वभावः॥

उत्पादितो यौवनरम्यरामारामादिभिस्तैर्बहुभिर्विभावैः।
संवर्धितो भ्रूलतिकाविभङ्गैः भङ्गैरपाङ्गस्य करक्रियाभिः॥

निर्वेदमुख्यैस्सहकारिभिस्तैः संवर्धितः पल्लवितः क्रमेण।
रामादिरूपे पटुनर्तकेऽपि प्रतीयमानो रसशब्दवाच्यः॥

भोगेन भुज्यत इति प्रवदन्ति केचित्
सामाजिकप्रकरसादविचर्व्यमानः।
कार्यो न कारणकलापविभावनाशे
यस्मान्न तिष्ठति रसो रसनीयरूपी॥

श्रीकण्ठः

प्राचीनवासनायुक्ताप्यङ्गविद्याभिराश्रिता।
बुद्धिर्या हृदयं तां च कथयन्ति विचक्षणाः॥

एवं सहृदयानां तु सुखिनो स्थिरचेतसाम्।
नियतं वासनारूपो रसस्तिष्ठति मानसे॥

तद्वीजबोधकान् भावानधिगम्य जनैः कृतान्।
आस्वाद्यमानो मधुरो रसो व्यक्तः प्रजायते॥

भङ्गराजः

रसवस्तु किमित्युक्ते कार्यकारणविस्मृतेः।
स्वयंप्रकाशो ब्रह्मेव भावान्मानसगोचरः॥

सर्वेन्द्रियाणामाधारो मन इत्यभिधीयते।
मनोनिष्ठगुणो भावः भावनिष्ठगुणो रसः॥

तद्रसो वृक्षरूपेण लक्षणं वक्ष्यते मया।
आलम्बनगुणं शाखा तच्चेष्टापल्लवादिकम्॥

पुष्पादिकमलङ्कारं सात्त्विकं च फलादिकम्।
यद्यत्कालकृतं कर्म निर्वेदादिकमित्यपि॥

फलं चोपरसः प्रोक्तः रसबीजमितीरितम्।
आजटात्फलपर्यन्तं व्यापको रस उच्यते॥

रामानन्दः

विभावैस्सानुभावोद्यत्सात्त्विकैर्व्यभिचारिभिः।
स्वादुत्वं नीयमानोऽसौ स्थायी भावो रसो भवेत्॥

सर्वेश्वरः

विभावैरनुभावैश्च नटस्थैर्व्यभिचारिभिः।
जनितान्यपरामित्रमित्राद्याश्रयतां विना॥

अवस्था देशकालादिभेदसंभेदवर्जितम्।
केवलं रतिहास्यादिस्थायिरूपं निगृह्णतीम्॥

अतो निरन्तरायत्वात्परां विश्रान्तिमाश्रिता।
प्रतिभानुभवस्मृत्याद्यन्ययोधविलक्षणा॥

ब्रह्मसंवित्तिसदृशी नानारत्यादिसङ्गमा।
सुखरूपा स्वसंवेद्या संविदास्वादनाभिधा॥

रसः स्यादथवा स्थायी रसस्तद्गोचरीभवत्।
दध्यादिव्यञ्जनैश्चिञ्चाहरिद्रादिभिरौषधैः॥

मधुरादिरसोपेतैः यद्वा द्रव्यैर्गुडादिभिः।
युक्तैः पाकविशेषेण षाडवाख्यो रसोऽपरः।
उत्पाद्यते विभावाद्यैः प्रयोगेण तथा रसः॥

हम्मीरः

विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः।

भरतः

विभावस्यानुभावस्य तथा च व्यभिचारिणः।
स्थायिसंयोगनिष्पत्तेः शृङ्गाराद्यो रसो भवेत्॥

अत्युत्पन्नमिदं सूत्रमिति कश्चिदनूनुदत्।
अहेतुत्वेन भावानां हेतुत्वस्यानुकीर्तनात्॥

प्रमाद्यं लोल्लटोऽत्राह घटेतेदं यदा भवेत्।
षष्ठीसमासः किन्वत्र समासोऽयं तृतीयया॥

विभावाद्यैः स्थायिनोऽत्र संयोगस्तन्मते मतः।
अर्थाक्षिप्तस्थायिनोऽत्र भवेत्सापेक्षता ततः।
सापेक्षमसमर्थं स्यात्सामर्थ्याभावतस्ततः॥

समासाभावतः षष्ठीसमासस्सम्मतस्त्विह।
इति कीर्तिधराचार्यमतस्यानुमतेन हि॥

स्वसामर्थ्यात्पदविधेः निर्माता पृथिवीश्वरः।
षष्ठीसमासमाश्रित्याश्लोकयत्सूत्रमैश्वरम्॥

भावो विभावजनिता चित्तवृत्तिरिहेरिता ।
शरीरेन्द्रियवर्गस्य विकारस्य विधायिनी ॥

भावो निगद्यते तेषां देहेन्द्रियविकारिणी ।
विभावजनिता चित्तवृत्तिस्तद्वार्तिके यथा ॥

विभावेनाहृतो योऽर्थः सोऽनुभावेन कथ्यते ।
वागङ्गसत्त्वाभिनयैरस भाव इति संज्ञितः ॥

विभावो हि पुरोवर्तिवस्तुनो दर्शनं मतम् ।
तद् द्वारेण चित्तवृत्तेर्विकारः प्रतिपद्यते ॥

अनुभावेन तद्भावावबोधाय निरूप्यते ।
निर्विकल्पकतः पूर्वं किञ्चिदस्तीति तत्परम् ॥

स्त्रीति तामवधार्यार्थः कोऽयमित्थं विचारयन् ।
पूर्वानुभूतस्नेहस्य भावनाभावितेन च ॥

मनसा मत्प्रिया सेयमिति चित्तविकारवान् ।
तदेकीभावतो भावावस्थः स्यात्प्रेक्षकस्तदा ।
एवं विभावादुत्पत्तिः भावस्य प्रतिपादिता ॥

स एव भावः प्रसन्नमुखरागललिताङ्गलीलादिविभावप्रतिपत्तावनुभावत्वमेति ॥

एवं विभावानुभावव्यभिचारिसमागमात् ।
क्रीडन् तया सह पुमान् शृङ्गारी जायते तथा ॥

एवमेषां तु संयोगाद्भावोत्पत्तिर्निरूपिता ।
स स्थाय्येव तीव्ररूपो रसी भवति भासुरः ॥

कुम्भः

आत्मस्थितं गुणविशेषमहङ्कृतस्य
शृङ्गारमाहुरिह जीवितमात्मयोनेः ।
तस्यात्मशक्तिरसनीयतया रसत्वं
युक्तस्य तेन रसिकोऽयमिति प्रवादः ॥

सत्त्वात्मनाममलधर्मविशेषजन्मा
जन्मान्तरानुभवनिर्मितवासनोत्थः ।
सर्वात्मसंपदुदयातिशयैकहेतुः
जागर्ति कोऽपि हृदि मानमयो विकारः ॥

तात्पर्यमेव वचसि ध्वनिरेव काव्ये
सौभाग्यमेव गुणसंपदि वल्लभस्य ।
लावण्यमेव वपुषि स्वदतेऽङ्गनायाः
शृङ्गार एव हृदि मानवतो जनस्य ॥

शृङ्गारवीरकरुणाद्भुतरौद्रहास्य-
बीभत्सवत्सलभयानकशान्तनाम्नः ।
आम्नासिषुर्दश रसान् सुधियो वयं तु
शृङ्गारमेव रसनाद्रसमामनामः ॥

वीराद्भुतादिषु च येह रसप्रसिद्धिः
सिद्धा कुतोऽपि वटयक्षवदाविभाति ।
लोके गतानुगतिकत्ववशादुपेता-
मेतां निवर्तयितुमेष परिश्रमो नः ॥

अप्रातिकूलिकतया मनसो मुदादे-
र्यः संविदोऽनुभवहेतुरिहाभिमानः ।
ज्ञेयो रसस्सरसनीयतयात्मशक्ते
रत्यादिभूमनि पुनर्वितथा रसोक्तिः ॥

रत्यादयोऽर्धशतमेकविवर्जिता हि
भावाः पृथग्विविधभावभुवो भवन्ति ।
शृङ्गारतत्त्वमिह ते परिवारयन्तः
सप्तार्चिषं द्युतिचया इव वर्धयन्ति ॥

(शृङ्गारतत्त्वमभितः परिवारयन्तः) इति पाठान्तरमत्र विद्यते ।

आभावनोदयमनन्यधिया जनेन
यो भाव्यते मनसि भावनया स भावः ।
यो भावनापथमतीत्य विवर्तमानः
साहङ्कृतौ हृदि परं स्वदते रसोऽसौ ॥

रत्यादयो यदि रसाः स्युरतिप्रकर्षे
हर्षादिभिः किमपराद्धमतद्भिभिन्नैः ।
अस्थायिनस्त इति चेद्भयहासशोक-
क्रोधादयो वद कियच्चिरमुल्लसन्ति ॥

स्थायित्वमत्र विषयातिशयात्मकं चेत्
चिन्तादयः कुत उत प्रकृतेर्वशेन ।
तुल्येन सात्मनि भवेदथ वासनायाः
सन्दीपनात्तदुभयत्र समानमेव ॥

अतः स्थितमेतद्रत्यादयः शृङ्गारप्रभवा एव एकोनपञ्चाशद्भावाः वीरादयो मिथ्यारसप्रवादाः । शृङ्गार एवैकः चतुर्वर्गैककारणं रस इति, स चानुभवैकसमधिगम्यत्वादसर्वविषयत्वाच्च दुरवसेयः सम्यगभिनयेषु वा विदग्धशैलूषैः प्रदर्श्यमानः सामाजिकैरवधार्यते । प्रबन्धेषु वा महाकविभिर्यथावदाख्यायमानो विदुषां मनीषाविषयमवतरति । तत्र न तथा पदार्थाः प्रत्यक्षेण प्रतीयमानाः स्वदन्ते, यथा वाग्मिनां वचोभिरावेद्यमानाः ।

रसं त्विह प्रमाणमेवामनन्ति । सर्वेषामपि हि रत्यादिप्रकर्षाणां रातिप्रियो रणप्रियोऽमर्षप्रियः परिहासप्रिय इति प्रेमण्येव पर्यव-

सानात्। तत्कथमुच्यते रत्यादिभूमनि पुनर्विंतथा रसोक्तिरिति। उच्यते। न रत्यादिभूमा रसः। किं तर्हि। शृङ्गारः। शृङ्गारो नाम विशिष्टेष्टदृष्टचेष्टानामभिव्यञ्जकानामात्मगुणसंपदां उत्कर्षबीजम्। बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नसंस्काराद्यतिशयहेतुरात्मनोऽहङ्कारगुणविशेषः सचेतसा रस्यमानो रस इत्युच्यते। यदस्तित्वे रसिकोऽन्यथात्वे नीरस इति। तदाविर्भावहेतवश्च तत्प्रभवा एव भावाः। ते चैकोनपञ्चाशत्। रतिः हर्षः श्रम इत्यादि। अत्र केचिदाचक्षते—रतिप्रभवः शृङ्गार इति। वयं तु मन्यामहे रत्यादीनामयमेव प्रभव इति। शृङ्गारिणो हि रत्यादयो जायन्ते नाशृङ्गारिणः। शृङ्गारिणो हि रमन्ते, स्मयन्ते, उत्सहन्ते, स्निह्यन्तीति ते तु भाव्यमानत्वाद् भावा एव न रसाः। यावत्संभवं हि भावनया भाव्यमानो भाव एवोच्यते भावनापथमतीतस्तु रस इति। मनोऽनुकूलेषु दुःखादिष्वपि सुखदुःखादिष्वात्मनः सुखानुभवाभिमानो रसः। स तु पारम्पर्येण सुखहेतुत्वाद्रत्यादिभूमसूपचारेण व्यवह्रियते। अतो न रत्यादीनां रसत्वम्। अपि तु भावनाविषयत्वाद्भावत्वमेव। यदप्युक्तं परप्रकर्षगामी रत्यादिभावो रस इति—तदप्यसारम्। ग्लान्यादिष्वपि तदुपपत्तेः। तेऽपि श्रमादिभिः परं प्रकर्षमारोप्यन्ते। न ते स्थायिन इति चेत्, स्थायित्वमेषां उत्पन्नतीव्रसंस्कारान्। संस्कारोत्पत्तिश्च विषयातिशयात् नायकप्रकृतेश्च। नायकप्रकृतिश्च त्रिधा। सात्त्विकी राजसी तामसी चेति। तदन्वयाच्च तथाविधानुभवभावनोत्पत्तिः ततश्चैषां स्थायित्वव्यपदेश इति। ननु अष्टौ सात्त्विकाः त्रयस्त्रिंशद्व्यभिचारिणः—इति ब्रुवते। तेनैतत्साधु यतोऽमीषामन्यतमस्यैतेनैव परस्परानिर्वर्त्यमानत्वात्कश्चित्कदाचित्स्थायी कदाचित्तु व्यभिचारी। अतोऽवस्थावशात्सर्वेऽप्यमी व्यभिचारिणः सर्वेऽपि च स्थायिनः सात्त्विका अपि सर्व एव मनःप्रभवत्वात्। अनुपहतं हि मनः सत्त्वमित्युच्यते। यच्चोक्तं विभावानुभावव्यभिचारिसंयोगात्स्थायिनो रसत्वमिति। तदपि हर्षादिष्वपि विभावानुभावव्यभिचारिसंयोगस्य विद्यमानत्वात्। तस्माद्रत्यादयः सर्व एवैते भावाः, शृङ्गार एवैको रस इति। तैश्च विभावानुभावैः प्रकाशमानः शृङ्गारो विशेषतः स्वदते।

तत्र केचनाहुः—नायं रसः शृङ्गाराख्यो रत्यादिभिर्व्यज्यते। अपि तु आलम्बनविभावादुत्पन्नो रत्यादिरेवोद्दीपनविभावादिभिः परं प्रकर्षमारोप्यमाणो रसीभवन् शृङ्गारादिसंज्ञां लभत इति। त एवं प्रष्टव्याः किमेते रत्यादयः स्वेभ्य आलम्बनेभ्य एवोत्पद्यमानाः सर्वस्याप्युत्पद्यन्ते। उत कस्यचिदेवेति। यदि तावत्सर्वस्य सर्वं जगद्रसिकं स्यात्। न चैतदस्ति। ततः कश्चिद्रसिकः कश्चित्तु नीरसः इति दृश्यते। न च दृष्टविपरीतं शक्यमनुज्ञातुम्। अतो न सर्वस्य रत्यादयो जायन्ते। अथ कस्यचित् तस्य नियमनिमित्तमभिधानीयम्। तद्दृष्टमदृष्टं वा स्यात्। न तावद्दृष्टं। अनुपलभ्यमानत्वात्। अदृष्टं तु साधारणमसाधारणं वा। साधारणे पूर्वोक्त एव दोषः, सर्वं जगद्रसिकं स्यादिति। असाधारणं तु नान्तरेण प्रत्यगात्मकत्वाऽनादिवासनानुबन्धिधर्मकार्यं भवितुमर्हति। तं तु आत्मनोऽहंकारेण गुणविशेषं ब्रूमः। स शृङ्गारः। सोऽभिमानः। स रसः। तत एते रत्यादयो जायन्ते। तैश्चायं प्रकर्षप्राप्तैः सप्तार्चिरर्चिश्चयैरिव प्रकाश्यमानः शृङ्गारिणामेव स्वदते, इति तदुपाधिश्चायमुपजायमानो रसः त्रिधा विख्यायते। प्रकृष्टो भावरूप आभासश्च। उत्तमनायकस्य तथाविध एव विषये जायते स प्रकृष्टः। मध्यमस्य य उपजातो न प्रकर्षमासादयति, स भावरूपः। यश्च तिरश्चां प्रतिनायकादीनां चोपजायते स शृङ्गाराभासः।

भोजः

रसस्तु द्विविधः। स्थायिभावः, सञ्चारिभावश्चेति। स च भावः इन्द्रियादिभिरेव प्रकाशते। इन्द्रियादिष्वधिष्ठितो रसः वृत्तिज्ञानाश्रितः विषयेष्वपि भावमुखेन प्रकाशते। (अनेन भावशब्देन अभिनयो विवक्षितः) यतो मनस्ततो भाव इदि सामान्यशास्त्रे भावज्ञानेनैव रसज्ञानस्य संभवो विवक्षितः। ननु भावो नामात्मधर्मः। रसो नासेंद्रियादिवेद्यः। आत्मजन्यगुण इति भेदसत्त्वाच्छिरोभावप्रकटने स्वात्मनिष्ठगुणानामप्रकारत्वाद्गुणभेदग्रहणार्थं इन्द्रियादिभिरेवोपाङ्गं प्रत्यङ्गमिति भेदचिन्ता। कर्मेन्द्रियादिभिरर्थक्रियागुणनिरूपणं विशेषरूपेण प्रत्यङ्गाभिनये वक्ष्यामः। ज्ञानेन्द्रियादिभिः श्रोत्रत्वगादिभिः करणैरेव रसो निरूप्यते। यथा—शब्दग्राहकमिन्द्रियं श्रोत्रम्। मधुरशब्देन शृङ्गारः। क्रूरशब्देन कोपः। दीनशब्देन करुणा। उत्तमशब्देनाद्भुतः। निकृष्टशब्देन वीभत्सः। हुंकारशब्देन भयम्। निन्दितशब्देन रौद्रः। विनोदशब्देन हास्यम्। स्वभावशब्देन शान्तिः। इत्थमन्येन्द्रियैरपि रसः प्रकाश्यते। एवं पदव्यापारयोरपि नवरसोऽस्ति। राजवीथीगमने शृङ्गारः। उल्लासगमनेऽद्भुतः। कण्टकमार्गगमने करुणा। वेश्यावीथीगमने हास्यम्। चारमार्गगमने भयम्। सङ्कटमार्गगमने वीभत्सः। स्वेच्छागमने शान्तिः। एवमुक्तानां नवरसानां उक्तेष्विन्द्रियेषु विषयेषु च लक्ष्यलक्षणभावचिन्तने गौरवादुपाङ्गेष्वेव लक्ष्यलक्षणचिन्ता। नेत्रभ्रूनासाकपोलचिबुकाधरा उपाङ्गाः।

बालरामः

विभावस्यानुभावस्य व्यभिचारिण एव च।
संयोगादुन्मिषेद्भावस्थाय्येव तु रसो भवेत्॥

अथवा रसाश्च भावाश्चैतेऽन्योन्योपकारात् सहभावेनैव प्रवर्तमानाः सिद्धिमधिरोहन्ति अन्नव्यञ्जनवत्—यथा भोक्तुरन्नं

व्यञ्जनमुपकुरुते, व्यञ्जनमन्नं ततो रसः स्यात्तथैव भावान्रसा रसांश्च भावा उपकुर्युः। परस्परं सर्वदा संबद्धाः प्रेक्षकान्मनसि प्रमोदेनोपश्लिष्यन्तो रसा इति व्यपदिश्यन्ते। अन्ये तु कार्यकारणत्वमनयोस्तत्कार्यत्वादिदर्शनेनाङ्गीकुर्वन्ति। यत्र भावाः कार्यं, रसाः कारणं। द्वयमप्येतत्तुल्यकालावस्थित्या अन्योन्योपकारात्परस्परकृतां सिद्धिं साधयन्ति।

सागरनन्दी

अभिधा भावना च स्यात्तद्भोगीकृतिरेव च।
अभिधाधामतां याति शब्दार्थालङ्कृतिं ततः॥

भावनाभाव्य एषोऽपि शृङ्गारादिगुणो मतः।
तद्भोगीकृतिरूपेण व्याप्यते सिद्धिमान्नरः॥

भट्टनायकः

भट्टनायकमतमिदं अभिनवगुप्तेन खण्डितम्।

विभावैश्चानुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
वर्द्धितास्स्थायिनो भावाः नायकादिसमाश्रयाः॥

अनुकार्यतया नाट्यं क्रियमाणा नटादिभिः।
सामाजिकैस्तु रस्यन्ते यस्मात्तस्माद्रसाः स्मृताः॥

न द्रव्यं न च सामान्यं न विशेषो गुणो न च।
न कर्मसमवायो वा न पदार्थान्तरोऽपि वा॥

विकारो मानसो यस्तु बाह्यार्थालम्बनात्मकः।
विभावाद्याहितोत्कर्षो रस इत्युच्यते बुधैः॥

रसो मनोविकारोऽपि पदार्थान्यतमो भवेत्।
पदार्थाष्षट् प्रमीयन्ते रसस्त्वनुभवात्मकः॥

अतो रसः पदार्थेभ्यो मात्रया कापि भिद्यते।
द्रव्यादीनां पदार्थानां तत्तद्रूपतया रसः।
कापि कापि प्रतीयेत तेषामन्यतमो रसः॥

शारदातनयः

लोकव्यवहारे कार्यकारणसहचारात्मकलिङ्गदर्शने स्थाय्यात्मपरचित्तवृत्त्यनुमानाभ्यास एव पाटवादधुना तैरेवोद्यानकटाक्षवृक्षा (धृत्या) दिभिः लौकिकीं कारणत्वादिभुवमतिक्रान्तैः विभावनानुभावनासमुपरञ्जकत्वमात्रप्राणैरत एवालौकिकविभावादिव्यपदेशभाग्भिः प्राच्यकारणादिरूपसंस्कारोपजीवनाख्यापनाय विभावादिनामधेयव्यपदेश्यैः भावाध्यायवक्ष्यमाणस्वरूपभेदैः गुणप्रधानतापर्यायेण सामाजिकधियि सम्यग्योगं संबन्धमैकाग्र्यं वा साधितवद्भिः अलौकिकनिर्विघ्नसंवेदनात्मकचर्वणागोचरतां नीतोऽर्थः चर्व्यमाणतैकसारो न तु सिद्धस्वभावः तात्कालिक एव न तु चर्वणातिरिक्तकालावलम्बी स्थायिविलक्षण एव रसः।

अभिनवगुप्तः

विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः—इति भरतसूत्रम्। अत्र भट्टलोल्लटप्रभृतयस्तावदेवं व्याचख्युः। विभावादिभिः संयोगोऽर्थात्स्थायिनः ततो रसनिष्पत्तिः। तत्र विभावः स्थाय्यात्मिकायाश्चित्तवृत्तेरुत्पत्तौ कारणम्। अनुभावाश्च न रसजन्या अत्र विवक्षिताः। तेषां रसकारणत्वेन गणनानर्हत्वात्। तेऽनुभावा व्यभिचारिणश्च चित्तवृत्त्यात्मकत्वाद्यद्यपि न सहभाविनः स्थायिना, तथापि वासनात्मतेह तस्य विवक्षिता। तेन स्थाय्येव विभावानुभावादिभिरुपचितो रसः। स्थायीत्वनुपचितः। स चोभयोरपि मुख्यया वृत्त्या रामादावनुकार्येऽनुकर्तरि च नटे रामादिरूपतानुसन्धानबलादिति। चिरन्तनानां चायमेव पक्षः। तथाहि दण्डिना—'रतिश्शृङ्गारतां गता रूपबाहुल्ययोगेन' इति। 'अधिरुह्य परां कोटिं कोपो रौद्रात्मतां गता' इत्यादिचोक्तम्।

एतन्नेति श्रीशङ्कुकः। विभावाद्ययोगे स्थायिनो लिङ्गाभावेनावगत्यनुपपत्तेः भावानां पूर्वमभिधेयताप्रसङ्गात्, मन्दतरतममाध्यस्थ्याद्यानन्त्यापत्तेः, कामावस्थासु दशस्वसंख्यरसभावादिप्रसङ्गात्। हास्यरसे पोढात्वाभावप्राप्तेश्शोकस्य प्रथमं तीव्रत्वं कालात्तु मान्द्यदर्शनं क्रोधोत्साहरतीनां अमर्षस्थैर्यसेवाविपर्यये ह्रासदर्शनं इति विपर्ययस्य दृश्यमानत्वात्। तस्माद्धेतुभिः विभावाख्यैः कार्यैश्चानुभावात्मभिस्सहचारिरूपैश्च व्यभिचारिभिः प्रयत्नार्जिततया कृत्रिमैरपि तथाऽनभिमन्यमानैरनुकर्तृस्थत्वेन लिङ्गबलतः प्रतीयमानः स्थायिभावो मुख्यरामादिगतस्थाय्यनुकरणरूपः अनुकरणरूपत्वादेव नामान्तरेण व्यपदिष्टो रसः। विभावा हि काव्यबलानुसन्धेयाः। अनुभावाः शिक्षिताः। व्यभिचारिणः कृत्रिमनिजानुभावार्जनबलात्, स्थायी तु काव्यबलादपि नानुसन्धेयाः, रतिरनुक्रियमाणा शृङ्गार इति तदात्मकत्वं तत्प्रभवत्वं च युक्तम्। अर्थक्रियापि मिथ्याज्ञानदृष्टा। न चात्र नर्तक एव सुखीति प्रतिपत्तिः नाप्ययमेव राम इति। न चाप्ययं न सुखीति नापि रामः स्याद्वा न वायमिति। न चापि तत्सदृश इति। किं तु सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणा चित्रतुरगादिन्यायेन यः सुखी रामः असावयमिति प्रतीतिरस्तीति।

तदिदमपि अन्तस्तत्त्वशून्यं न विमर्दक्षममित्युपाध्यायाः। तथाहि—अनुकरणरूपो रस इति यदुच्यते तत्किं सामाजिकप्रतीत्यभिप्रायेण उत नटाभिप्रायेण किं वा वस्तुवृत्तविवेचकव्याख्यातृबुद्धिसमवलम्बनेन वा इति। अथाद्यः पक्षोऽसङ्गतः। किञ्चिद्धि प्रमाणेनोपलब्धं तदनुकरणमिति शक्यं वक्तुम्। इह च नटगतं किं तदुपलब्धं तदनुकरणतया भातीति चिन्त्यम्। तच्छरीरं तन्निष्ठं प्रति शीर्षकादिरोमाञ्चगद्गदादि भुजाक्षेपभ्रूक्षेपकटाक्षादिकं च न रतेश्चित्तवृत्तिरूपतयाऽनुकारत्वेन

कस्यचित्प्रतिभाति। न च रामगतां रतिं उपलब्धपूर्विणः केचित्। एतेन रामानुकारी नट इत्यपि निरस्तप्रवादः। अथ नटगता चित्तवृत्तिरेव प्रतिपन्ना सती रत्यनुकारः शृङ्गार इत्युच्यते। तत्रापि किमात्मकत्वेन सा प्रतीयते इति चिन्त्यम्। विभावादयः काव्यशिक्षादिबलोपकल्पिताः कृत्रिमास्सन्तः किं कृत्रिमत्वेन सामाजिकैर्गृह्यन्ते न वा। यदि गृह्यन्ते तदा तैः कथं रतेरवगतिः। अक्रुद्धोऽपि नटः क्रुद्ध इव भाति। नैतावता अनुकारः कश्चित्। न चापि सामाजिकानां सादृश्यमतिरस्ति। तेषां न भावशून्या नर्तके प्रतिपत्तिः। तस्मात्सामाजिकप्रतीत्यनुसारेण स्थाय्यनुकरणं रस इत्यसत्। यत्तु स्यादुत्तमप्रकृतेर्ये शोकानुभावाः तानुकरोमीति। तत्रापि कस्योत्तमप्रकृतेः? यस्य कस्यचिदितिचेत् सोऽपि विशिष्टतां विना कथं बुद्धावारोपयितुं शक्यः, य एवं रोदितीति चेत्, स्वात्मापि मध्ये नटस्यानुप्रविष्ट इति गलितोऽनुकार्यानुकर्तृभावः।

भट्टनायकस्त्वाह—रसो न प्रतीयते; नोत्पद्यते नाभिव्यज्यते। स्वगतत्वेन हि प्रतीतौ करुणे दुःखित्वं स्यात्। न च सा प्रतीति र्युक्ता। सीतादेरविभावत्वात्। स्वकान्तास्मृत्यसंवेदनात्। देवतादौ साधारणीकरणायोग्यत्वात् समुद्रलङ्घनादेरसाधारण्यात्। न च तत्त्वतो रामस्य स्मृतेरनुपलब्धत्वात्, न च शब्दानुमानादिभ्यः तत्प्रतीतौ लोकस्य सरसता प्रयुक्ता प्रत्यक्षादिव। नायकयुगलकावभासे हि प्रत्युत लज्जाजुगुप्सास्पृहादिस्वोचितचित्तवृत्त्यन्तरोदयः। प्रतीतिरनुभवस्मृत्यादिरूपरसस्य युक्ता। उत्पत्तावपि तुल्यमेतद्दूषणं। शक्तिरूपत्वेन पूर्वस्थितस्य पश्चादभिव्यक्तौ विषयार्जनतारतम्यापत्तिः। स्वगतत्वपरगतत्वादि च पूर्ववद्विकल्प्यम्। तस्मात्काव्ये दोषाभावगुणालङ्कारमयत्वलक्षणेन नाट्ये चतुर्विधाभिनयरूपेण निबिडनिजमोहसङ्कटतानिवारणकारिणा विभावादिसाधारणीकरणात्मना अभिधातः, द्वितीयेनांशेन भावकत्वव्यापारेण भाव्यमानः रसोऽनुभवस्मृत्यादिविलक्षणेन रजस्तमोऽनुवेधवैचित्र्यबलाद्द्रुति विस्तारविकारलक्षणेन सत्त्वोद्रेकप्रकाशानन्दमयनिजसंविद्विश्रान्तिलक्षणेन परब्रह्मास्वादसविधेन भोगेन परं भुज्यते इति। तत्र पूर्वपक्षोऽयं भट्टलोल्लटपक्षानभ्युपगमादेव नाभ्युपगत इति। तद्दूषणमनुत्थानोपहतमेव। प्रतीत्यादिव्यतिरिक्तश्च संसारे को भोग इति न विद्मः। रसनेति चेत्सापि प्रतिपत्तिरेव। केवलमुपायवैलक्षण्यात् नामान्तरं प्रतिपद्यताम्। दर्शनानुमितिश्रुत्युपमितिप्रतिभानादिनामान्तरवत् निष्पादनाभिव्यक्तिद्वयानभ्युपगमे नित्यो वाऽसद्वा रसस्तृतीया गतिस्स्यात्। न चाप्रतीतं वस्त्वस्ति व्यवहारयोग्यम्।

अथोच्यते। प्रतीतिरस्य भोगीकरणं। तच्च रत्यादिस्वरूपम्। तदस्तु तथापि न तावन्मात्रम्। यावन्तो हि रसास्तावन्त एव रसनात्मनः प्रतीतयो भोगीकरणस्वभावाः। सत्वादिगुणानां चाङ्गाङ्गिवैचित्र्यमनन्तं कल्प्यमिति का त्रित्वेनेयत्ता अभिधा भावना भोगीकरणमिति। यत्र काव्येन भाव्यन्ते रसा इत्युच्यते तत्र विभावादिजनितचर्वणात्मकास्वादरूपप्रत्ययगोचरतापादनमेव यदि भावनं तदभ्युपगम्यत एव। यत्तूक्तं—

> संवेदनाख्यव्यङ्ग्यपरसंवित्तिगोचरः।
> आस्वादनात्मानुभवो रसः काव्यार्थ उच्यते॥ इति—

तत्र व्यज्यमानतया व्यङ्ग्यो लक्ष्यते। अनुभवेन च तद्विषय इति मन्तव्यम्।

श्रीकण्ठः

> शृङ्गारो हास्यनामा च बीभत्सः करुणस्तथा।
> वीरो भयानकाह्वानो रौद्राख्योऽद्भुतसंज्ञकः॥
>
> शान्तो ब्रह्माभिधः पश्चाद्वात्सल्याख्यस्ततःपरम्।
> संभोगो विप्रलम्भः स्याद्रसास्त्वेते त्रयोदश॥
>
> भोजराजेन दशमो वात्सल्याख्य उदीरितः।
> संभोगो विप्रलम्भश्च ब्राह्मश्चेति त्रयो रसाः।
> अतिरिक्ता उदीर्यन्ते हरिपालमहीभुजा॥

हरिपालः

भोजः शृङ्गार एक रसः तदन्ये सर्वे भावा एवेति मन्यते। आम्नासिषुर्दशरसानिति प्राचीनमतमनूद्य खण्डयति। तस्मिन् दशमो वात्सल्यरसः॥

रसकलाम्बिका—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स म ग ध नि प ध नि स.
(अव) स नि ध ग रि स.

मच

## रसकौमुदी

श्रीकण्ठकृता। अत्र पञ्चाध्यायाः सङ्गीतविषयकाः। अन्ये पञ्च साहित्यविषयकाः। अस्य ग्रन्थस्य मातृका कविनैव लिखिता। १५८० वर्षे वर्तते। शत्रुशल्यस्य शिलाशासनानि १६०० वर्ष पर्यन्तं उपलब्धानि। तथापि ग्रन्थः १५८० वर्षे रचितः। अत्र विषयनिरूपणात् शब्दरचना प्रौढा। पञ्चदशमेलकर्तारः रागविषये प्रशंसिताः। स्वयंभुवः इति नादभेदाः रामामात्येन निर्णीतप्रकारेण अत्र दृश्यन्ते। श्रीकण्ठस्य गुरुणैवोक्तानि निदर्शनान्यपि निरूपितानि सन्ति।

**रसगतयः**

अश्लेषलीनविच्छेदसूक्ष्मव्यतिकरस्थिराः ।
शोभनश्च समश्चेति सर्वत्राभिनयाश्रयाः ।
अष्टधा गतिरेतेषां रसानां कथ्यते बुधैः ॥

शारदातनयः

**रसगीतिका—श्रुतिः**

गान्धारे द्वितीया श्रुतिः । मण्डलीमते तारगान्धारस्यैव ।

**रसगुम्भितम्—नृत्तकरणम्**

पृष्ठोत्तानतले स्थित्वा विधुतं तु भवेच्छिरः ।
चतुरश्चापि सन्दंशो दृक् शृङ्गारगतिश्च सा ।
अङ्गद्वये प्रवृत्तं चेत्तदेतद्रसगुम्भितम् ॥

अत्र शृङ्गारिणीदृष्टिः । सैव गतिः ।

चतुरस्रा समा द्वया सविलासातिशोभना ।
गतिश्शृङ्गारिणी सा स्यात्कटाक्षस्मितसंयुता ॥

नन्दी

**रसनाः**

ऋज्वी लोला लेहिनी च वक्रा सृकानुगोन्नता ।
षोढेति रसनाः प्राहाशोकमल्लो नृपाग्रणीः ॥

अशोकमल्लः

**रसनी—श्रुतिः**

मध्यमस्य प्रथमा श्रुतिः ।
हनुमन्मतेऽष्टादशैव श्रुतयः मध्यमोऽत्र द्विश्रुतिः ।

**रसप्रतापः—मेलरागः (हनुमत्तोडीमेलजन्यः)**

(आ) स रि ग म नि स .
(अव) स नि ध प म ग रि स .

मञ्ज

**रसभास्करा—मेलरागः ( मायामालवगौलमेलजन्यः )**

(आ) स रि म नि स .
(अव) स नि प ध प म ग रि स .

मञ्ज

**रसमञ्जरी—मेलरागः (रसिकप्रियामेलजन्यः)**

(आ) स रि ग म प ध नि स .
(आ) स नि प म ग रि स .

मञ्ज

**रसरत्नप्रदीपः**

अयं अल्लराजकृतः समीचीनो वर्तते । बहवो ग्रन्था उदाहृताः । १३०० काले आसीत् ।

**रसवरालिः—मेलरागः (मानवतीमेलजन्यः)**

(आ) स रि ग म प ध नि ध – स.
(अव) स नि ध प म ग रि – स.

मञ्ज

**रसवर्जितम्—नृत्तकरणम्**

समं शिरः पराधीनं कर्तर्यर्धपताककौ ।
बीभत्सा दृक् सैव चारीकरणे रसवर्जिते(?) ॥

अत्र बीभत्सगतिलक्षणम् ।

बीभत्सा कुञ्चिताङ्घ्रिभ्यां कृताविरलचारिणी ।
क्वचिद्दीर्घा क्वचिद् ह्रस्वा बीभत्सस्थलगोचरा ॥

नन्दी

समं, स्थानं ।

**रसविकल्पनम्**

अष्टावेव रसा इति केचित् । केचिन्नवेति । दशेत्यपरे । तेन संशयलोलानां प्रीतये किञ्चिदुच्यते । यथाहि—विभावादिभिः स्वादतां नीयमानो भावः स्थायी रस इति प्रत्यज्ञायि । स च स्वादानन्दलक्षणो वस्तुत एकोऽपि उपाधिभेदादनेकधा भिद्यते । उपाधिरपि चित्तभूमिकैव । ताश्च प्राधान्याच्चतस्रः । विकासो विस्तरः क्षोभो विक्षेप इति । तत्र विकासोपाधिकः स्वादः शृङ्गारः विस्तरोपाधिको रौद्रः । हास्याद्भुतभयानककरुणेष्वपि विकासादिरेवोपाधिरिति हास्यादीनां चतुर्णां शृङ्गारादिजन्यत्वम् । यदुक्तं—

स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः ।
विकासविस्तरक्षोभविक्षेपैस्स चतुर्विधः ॥

शृङ्गारवीरबीभत्सरौद्रेषु मनसः क्रमात् ।
हास्याद्भुतभयोत्कर्षकरुणानां त एव हि ।
अतस्तज्जन्यता तेषामत एवावधारणम् ॥

अत्र विकासादिचित्तसंभेदेन हेतुहेतुमद्भाव एव रसानां विवक्षितः । न तु कार्यकारणभावः । तेषां प्रत्येकं विभावादिकरणभेदस्य दृष्टत्वात् ।

शृङ्गारानुकृतिर्यातु स हास्य इति संज्ञितः ।
वीरस्य चापि यत्कर्म सोद्भुतः परिकीर्तितः ।

भरतः

**रसवृत्तिः**

तेषां सविकासादिसंभेदैक्यमेव स्फुटं विभाव्यते। शृङ्गार-हास्ययोर्विकासः वीराद्भुतयोर्विस्तरः। बीभत्सभयानकयोः क्षोभः। रौद्रकरुणयोः विक्षेप इति। तेषां द्वयोर्द्वयोस्संभेदैक्येऽपि नास्त्येव साङ्कर्यम्। प्रतिरसं नियताभावादिरेव विकासादिरूपविशेष-स्यापि सिद्धेः शृङ्गारविभावादेः, अन्य एव हास्यविभावादिः। अतस्तज्जन्येऽपि विकासरूपेऽपि उपाधौ कोऽपि विशेषः काव्ये कल्प्यो येन भेदः सिद्ध्येत्।

तयोर्हेतु हेतुमद्भावोऽपि सिद्धः। तत्र हेतुत्वं तत्प्रयोजकत्वमेव। एतदुक्तं भवति। धाराधिरूढ इव शृङ्गारे। प्रत्यासीदति च हास्ये। तदुन्मेषहेतोर्विकासात्मिकायाः चित्तभूमेस्समुद्भावनप्रवीणकारण-कलापव्यापारस्य स्वकार्यनिर्वहणसिद्धेः पूर्वोत्तरायाः तथा-विधाया भूमिकायाः शृङ्गारानुगुणायाः हास्यं प्रत्यनुकूलत्वाच, समानाकारयोः परस्परोपात्तकार्यकारणप्ररूढप्रागल्भ्ययोः अन्यो-न्यसङ्कलनसातत्यप्रत्यस्तमितभेदवादयोः तुल्याधिकरणयोः सम-रसीभूतयोः चित्तभूमिकयोरेकात्मतायाः प्रतीतेः शृङ्गारबीजस्य हास्यं प्रति निमित्तत्वप्रतीतिसिद्धौ सिद्धैवेयं वाचोयुक्तिः—शृङ्गा-राद्धि भवेद्धास्य, इति। इयमेव प्रक्रिया वीराद्भुतादिद्वयेष्वपि द्रष्टव्या। एतच्च विकासादिसंभेदचतुष्टयस्यैव रसभेदोपाधिकत्वेन सङ्ग्रहात्।

रसविवेकः

**रसवृत्तिः—देशीलास्याङ्गम्**

सम्भोगो विप्रलम्भो वा गीतस्यार्थोऽभिनीयते।
अङ्गैर्यथोचितैर्नृत्तैस्तद्भावाकृष्टचित्तया।
नर्तक्या यत्र भावज्ञा रसवृत्तिमिमां विदुः।

ज्यायनः

**रसवृत्तिनियमः**

शृङ्गारे कैशिकी वीरे सात्त्वत्यारभटी पुनः।
रसे रौद्रे सबीभत्से वृत्तिस्सर्वत्र भारती॥

शारदातनयः

**रससंख्या**

अष्टावेव स्थायिनो भावाः—इत्यवधारणाच्चाष्टावेव रसाः युक्ता इत्येके। शान्तोऽपि नवमोऽस्ति रस इत्यन्ये। इह तु शान्तरसं प्रति बहुविधाः प्रतिपत्तयः। केचिदाहुः—नास्त्येव शान्तो रसः तस्य चाचार्येण विभावाद्यप्रतिपादनात्। अलक्षणकरणाच्चेति। परे तु वस्तुतस्तस्याभावं वर्णयन्ति। अनादिकालप्रवाहायातरागद्वेषादे-रत्यन्तमुच्छेत्तुमशक्यत्वादिति। अन्ये तु वीरबीभत्सयोरन्तर्भावं वर्णयन्तः शममपि नेच्छन्ति। अपरे तु यथातथास्तु नाटकादौ।

नाटकादावभिनयात्मनि स्थायित्वमस्मामिर्निषिध्यते। तस्य शान्तस्य समस्तव्यापाराप्रशमनरूपस्याभिनयायोगादिति। वयं तु तत्त्वज्ञानजनितस्य निर्वेदस्य स्थायितामभ्युपगच्छन्तो निर्वेद-स्थायिभावं रसं ब्रूमः। उक्तं हि कश्मीराधिपतिना—"निर्वे-दस्यामङ्गलप्रायस्य प्रथममनुपादेयत्वेऽप्युपादानं व्यभिचारिणोऽपि स्थायित्वस्थापनार्थं। तेन निर्वेदः स्थायिभावः। शान्तोऽपि नव-मोऽस्ति रसः" इति। तत्त्वज्ञानादपि निर्वेदो जायते। यथा—निर्वेदो नाम दारिद्र्यव्याधिक्षेपाक्रुष्टक्रोधताडनेष्टवियोगतत्त्वज्ञा-नादिभिर्विभावैरुत्पद्यत इत्याह मुनिः। उक्तं चान्यत्र—तत्त्वज्ञा-नापदीर्ष्यादेर्निर्वेदं स्वीयमानसे—इति। तत्त्वज्ञानवता केनापि हेतुना निर्वेदस्य स्थायित्वात्तेषामेव शान्तरसादयो न तु सर्वेषाम्।

ननु स्वाद्यो हि रस इत्युच्यते। शान्तोऽपि स्वाद्यश्चेत्तस्य विकासादिषु कः संभेदः। अत्रोच्यते-अनादिकालप्रवृत्तरागद्वेषादि-दूषितस्य भावकचेतसस्तदधिवासासंभवात्तद्भावभावनालक्षण-भावानुत्पत्तौ तत्तद्विभावादैरपि तस्य शान्तरसानुदय एव। तथापि तदात्मकानां तदुपायभूतानां काव्यगोचराणामेकत्र करुणा-मुदितोपेक्षाणां आस्वाद्यत्वमस्त्येवेति ततः स्वाद एव तत्प्रति-बद्धस्य स्वादः। तथा च सति शान्तरसस्वादं प्रति विकासा-दयश्चत्वारोऽपि यथासंभवं संभेदा उपपद्यन्त इति। यदुक्तं—'शमप्रकर्षो निर्वाच्यो मुदितादेस्तदात्मता।' इति यदुक्तं अत-एवावधारणमष्टावेवेति तन्नाट्यरसत्वाभावविवक्षयेति बोद्धव्यम्। ननु शान्तस्य सर्वव्यापारोपरमरूपस्यानभिनेयतया नाट्यरसत्वा-भावेऽपि काव्यरसत्वमस्त्येव। उक्तं हि काव्ये नवरसाः स्मृता इति। ननु शान्तरसस्य नाट्यरसत्वाभावकथनमप्ययुक्तमिति पश्यामः। यतो नागानन्दे जीमूतवाहनस्य पित्रोर्विधातुश्शुश्रूषां इत्यादिना शान्तरसोऽनुवर्णितः। मध्येऽद्भुतरसोऽपि अधिकृतः। अत्रोच्यते—न वयं शान्तस्य नाटकादावनुप्रवेशो नास्तीति ब्रूमः। अपि तु तस्याभिनेयत्वायोगान्नाट्ये परिपोषो नास्तीति। एतच्च जीमूतवाहनस्य शान्तरसाश्रयत्वमङ्गीकृत्योक्तम्। न च जीमूतवाहनः शान्तरसाश्रयो धीरशान्तः। किन्तु धीरोदात्तः। औदात्त्यं नाम सर्वोत्कर्षेण वृत्तिः। तच्च जीमूतवाहने पुष्कल-मेव। ननु निर्जिगीषुतयैव प्रतिपादिते तस्मिन् कुतः सर्वोत्कर्षेण वृत्तिः। उच्यते—न खल्वेकरूपैव जिगीषुता। यस्तु वपुस्त्यागे कारुण्येन गुणान्तरेण वा अन्यानतिशेते सोऽपि विजिगीषुरेव। ततः शान्तरसाश्रये तस्मिन्नद्भुतान्तरितस्यापि शृङ्गाररसस्योपवर्णन-मत्यन्तानुचितमेवेत्यसौ धीरोदात्त एवेष्टः।

अपरेत्वाहुः—पित्रोरपत्यविषयो यः प्रकर्षो (वत्सलो रसः) नासौ शृङ्गारः। अश्रान्तविषयत्वात्। नापि हास्यादिष्वन्यतमः। तल्लक्षणरहितत्वात्। न चायमनास्वाद्यः। तस्मान्नवभ्यो भिन्नो

वत्सलाख्यो दशमो रसोऽवश्यमेपितव्यः—इति। तद्युक्तम्। दशनवैकादशप्रभृतीन्यपि समर्थयितुं शक्यन्ते। यतः महेश्वरे या प्रीतिः नासौ वत्सलः। अपत्यविषयत्वाभावात्। नापि शृङ्गारादावन्यतमः। तद्विलक्षणत्वात्। तस्माद्भक्तिरूप एकादशोऽङ्गीकर्तव्यः। मित्रविषये प्रीतिप्रकर्षः सौहार्दनामा रसो द्वादशोऽपि इति प्रतिविषयमनन्ता रसाः प्रसज्येरन्। अथैतेषां प्रीत्युत्कर्षरूपतया वत्सलेऽन्तर्भावाद्दशैव रसा इति चेदेवं तर्हि प्रमोदात्मा रतिरिति वचनाद्रतिप्रीत्यौरेकार्थतया वत्सलस्यापि शृङ्गारेऽन्तर्भावान्नवैव रसा इति किन्नेष्यते। अपत्यविषयायां रतौ शृङ्गारव्यवहारो नास्तीति चेन्माभूद्व्यवहारः। तथाप्यसौ न शृङ्गाराद्व्यतिरिच्यते। अन्ये तु देवद्विजमुनिनृपपुत्रादिविषयां रतिमुत्कृष्टामपि भाव इत्येव व्यवहरन्ति। एवमन्येप्युदाहार्याः।

रसविवेकः

स्थायी शान्तस्य निर्वेदो भावरसञ्चार्यपीष्यते।
जुगुप्सां स्थायिनं केचिदुत्साहमपरे विदुः॥

भरतः स्थायिनः सर्वानुद्दिश्य व्यभिचारिषु।
अमङ्गलमपि ब्रूते प्रथमं तेन गम्यते।

निर्वेदः स्थायिभावोऽस्ति शान्ताख्यो नवमो रसः॥

तमेवं नवमं शान्तं नाट्ये नेच्छन्ति केचन।
अनैकसाद्ध्यः शान्तः स्याच्छान्तिः करणनिर्वृतिः॥

विभावादेर्युक्तिपरे नटे च तदसंभवात्।
तदयुक्तं विभावाद्याः सन्त्यत्रान्यरसे यथा॥

तथाहि शुकबुद्धथादिपरिव्राजकतापसाः।
नासाग्रावेक्षणं योगमुद्रा चक्षुर्निमीलनम्॥

एवमाद्या विभावाद्याः तत्किं नाट्येन जायते।
नटश्च पात्रमात्रं स्याद्रसनानां तु भावकः॥

सामाजिकास्तु दधते रसं स्वात्मैकगोचरम्।
स्थायित्वव्यभिचारित्वे निर्वेदो भजते दशाम्।
तत्त्वज्ञानोद्भवः स्थायी भावो निर्वेद इष्यते॥

विप्रदासः

रससन्दोहः—प्रबन्धः

लक्ष्यते रससन्दोहः शृङ्गारप्रमुखैरसैः।
समग्रैरसमग्रैर्वा ग्रथितः परिकीर्तितः।
उद्वाहादिषु भागेषु द्रष्टव्या बहुधा रसाः॥

हरिपालः

शृङ्गारादिरसैर्योऽसावष्टभिः परिकल्पितः।
क्रमेण व्युत्क्रमेणाऽपि रससन्दोह उच्यते॥

सोमेश्वरः

यस्योद्वाहादयस्सर्वं शृङ्गाराद्यैरसैर्युताः।
समस्तैरसमस्तैश्च रससन्दोहलक्षणम्॥

श्रीकण्ठः

रससद्भावविचारः

ननु रस एवासिद्धः किमाश्रयो विचार इति चेन्न, रसो रसः, शृङ्गारो रसः, वीरो रसः, करुणो रसः, इति सामान्यविशेषाभ्यां व्यवहारतस्तत्सिद्धेः। तथाहि—

रसे रसत्वाशयतां गतस्य गुणे गुणे हर्षवशीकृतस्य।
विवेकसेकस्थकभावमिश्रं मनः असूतेऽङ्कुरवत्कवित्वम्॥

शृङ्गाररसशृङ्गारः तस्यास्सौन्दर्यवीरुधः।
कर्णमारोप्यतां देव हितं विस्मयपल्लवम्॥

अनुद्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः।
पुटपाकप्रतीकाशो रामस्य करुणो रसः।

वीरो रसः किमयमान्युतदर्प एव—इति व्यवहाराः सन्ति।

भ्रान्तोऽयं व्यवहारः इतिचेन्न, तत्र सादृश्येन्द्रियदोषाद्यभावाद्बाधकाभावाच्च। भ्रान्तिर्नामातस्मिंस्तन्मतिः। सा च विभावानुभावव्यभिचारिसंयोगान्निष्पन्ने तथा स्वेनानुभूयमाने रसात्मनि कथमवकाशमासादयेत्। लौकिकानां अत्यन्ताव्युत्पन्न लोकोत्तरसहृदयजनहृदयैकसाक्षिणि सद्यः परां निर्वृत्तिमावहति। विभावादिजीविते चमत्कारकरणस्वभावे ब्रह्मास्वादसब्रह्मचारिणि असदृशे रसभावे न केनापि सादृश्यमस्ति, येन भ्रान्तिसंभावनापदमधिरोहति। तद्वदेवेन्द्रियदोषोऽपि। न खलु एक एव रसस्य भावमपरो क्षयति, यस्येन्द्रियदोषेण भ्रान्तिस्स्यात्। किन्त्वनेकेषां अवधाननयनानां अन्योन्यसाक्षित्वेनैकं रसं रसयतां सहृदयानामिन्द्रियदोषप्रसञ्जनं प्रसञ्जयितुरेव भ्रान्तिं प्रथयति। कः खलून्मत्तादन्यो महाजनस्य भ्रान्तिं प्रकल्पयेत्।

एवं बाधोऽपि न संभवति। सादृश्येन्द्रियदोषाभ्यां प्राप्तस्यैव बाधोपपत्तेः। भ्रान्तिरपि न निर्विषया, अत्यन्ताभावप्रतियोगिनो गृहीतृभावात्। भ्रान्त्यापि यत्र क्वचन प्रतीतस्यैवावगमः। न खल्वननुवृत्तरजतस्तः शुक्काविदं रजतमिति भ्राम्येत्। नापि यथोक्तलक्षणो रसोऽन्यत्र गृहीतः, येन भ्रान्तोऽयमित्युच्येत। किञ्च केषामसिद्धो रसः किं रसिकानां प्राकृतानां वा। रसिकानां रसोऽसिद्ध इति वचनव्याघातः। प्राकृतानामसिद्धत्वं अलौकिकप्रसिद्धस्य भूषणमेतन्नदूषणमित्यलमतिप्रसङ्गेन।

रसविवेकः

रससिन्धुः—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि म प नि स.

(अव) स नि ध प म ग रि स.

मधु

## रसस्याश्रयः

अथैते रसाः किमाश्रया इति निरूप्यते। तत्र नायकनटसामाजिकाश्रया इत्येके। अन्ये तु नटस्यानुकरणमात्रपरतयाऽनुभावत्वं भावकत्वे वा सामजिकान्तर्गतत्वमिति नायकसामाजिकाश्रयत्वं मन्यन्ते। न च सामाजिकेष्वेव भावकरसिकादिपदप्रयोगात्तन्मात्राश्रयत्वमाशङ्कनीयं, अनुभवविरोधात्। नायकस्य रसानाश्रयत्वे विगतरसभावनतया कुतो रसाभिष्कारः। सामाजिकानां निरवलम्बनो रसः कथं प्रवर्तते। न च मालत्यादेरेवालम्बनत्वं, अनौचित्यात्. अत्र केचित्समाधानमाहुः। मालत्यादिशब्दाः योषिन्मात्रोद्बोधकाः रावणादि शब्दाः शत्रुमात्रस्येति। तेन सामान्येन स्मृत्यारूढो योषिदादिः सामाजिकानामालम्बनत्वं भजते। न च विशेषाप्रतिपत्तिदोषः, दृष्टो देवदत्तः कीदृग्गुण इति न ज्ञायत इति स्मरणदर्शनात्। न चैवं करुणादेर्दुःखात्मकतया तत्प्रधानानां प्रबन्धानां अनुपादेयत्वं, सर्वस्यापि रसस्य सामाजिकेष्वानन्दरूपतया पर्यवसानात्। नचैव मूर्छोद्वेगादेरनुपपत्तिः। तस्योपक्रमगोचरत्वात्।

अन्ये त्वन्यथा समाधानमाहुः। वासनारूपेण सामाजिकानां चेतसि रसः प्रवर्तते। तेनालम्बनाद्यनपेक्षा। यथा—प्रसिद्धालम्बन एव रसः स्वान्यसंबन्धितया निर्विकल्पेन गृह्यते, अनुमितो वा, भावनया साक्षात्क्रियते। तेन नानौचित्यं स्वायित्वेनानवभासनादतटस्थ्यं अन्यदीयत्वेनानाकलनात्।

करुणाभयानामप्युपादेयत्वं सामाजिकानां रसस्य सुखदुःखात्मतया तदुभयलक्षणत्वेनोपपद्यते। अत एव तदुभयजनकत्वम्। एवंविधस्याप्युपादेयत्वं, अन्वयव्यतिरेकगम्यत्वमिति रसाः नायकाश्रिता एव। समाजिकैर्नटचेष्टया काव्यश्रवणेन च साक्षाद्भाव्यन्ते। समनुभाव्यमानाः तं तमनुभवं जनयन्ति। परगतरससम्यग्भावनया अन्वयव्यतिरेकाभ्यां निरतिशयानन्दजनकत्वमिति तत्र प्रवृत्तिरपि घटत इति सर्वं रमणीयम्।

रसकलिकाकारः

मतमिदमसमञ्जसम्। अभिनवगुप्तव्याख्या द्रष्टव्या।

अत्र केचिदाहुः। मुख्यया वृत्त्या रामादावनुकार्ये रसः। तादूप्यानुसन्धानान्नर्तकेऽपि प्रतीयत इति। तदयुक्तम्। प्रेक्ष्यं पश्यतां श्राव्यं शृण्वतां स्वात्मगततयैव तस्य संवेदनसिद्धत्वात्। किञ्च रामादिषु रसः पूर्वमासीत्। अद्यत्वे सभ्यानां किमायातम्। अतोऽन्यथोच्येत। नटो हि रामादीननुकरोति। तथाभूते तस्मिन् रसः। सोऽनुभूयते सभ्यैरिति—तन्नशोभनम्। धनार्थमेव प्रयतमानस्य नटस्य चेतसि न भाववासनाप्राप्तिः। रसस्य तु का वार्ता।

यन्मतं रामादेः स्थायिभावस्यानुकारो रस इति. तदप्यसारम्। कटाक्षादिभिरेव भावमनुकर्तुं नट उत्सहते। अतद्रूपैस्तैः कथमिव भावोऽनुक्रियते। अथ चेष्टानुकारेण भावानुकार इतिचेत्, तन्न। भावस्याप्रतीतेः। रामचेष्टात्वेनावबुद्ध्यमानाद्रामचेष्टानुकारिनर्तकचेष्टादर्शनाद्रामगतस्थायिभावप्रतीतिः. इति चेष्टास्थायिभावयोः सम्बन्धग्रहणात्प्रतीतिरितिचेत्—संबन्धाग्रहे तच्चेष्टानुकारात्तद्भावप्रतीतिर्दुर्लभैव।

तथाविधो भावो नटेन प्रकाशितो विभावादिभिरुपायैः साधारणैस्सामाजिकानामेव। तथाविधो भावो निर्भरानन्दसंविद्रूपतामधिगच्छन् रसावस्थामवगाहताम्। यतः तत्कालविगलितवेद्यान्तरशून्यतासंपर्कतया तन्मयतां दधते। अयमेव समरसभावः। अयं नटस्य सामाजिकानां च हृदयेषु भावोत्कर्षस्यैकघनसंवादः। अयमेव लयः। व्यञ्जकवृत्तिचित्तसंविदानन्दानां पूर्वस्य पूर्वस्योत्तरस्मिन्नुत्तरस्मिन्प्रलीनतया यदानन्दस्यैवावशेषः ततश्च व्यञ्जकानां भावानां वृत्तिमात्रत्वं वृत्तेरन्तःकरणमात्रत्वमन्तःकरणस्य संविन्मात्रत्वं संविदोऽप्यानन्दमात्रत्वं लय इत्युक्तं भवति। आनन्दस्य ब्रह्मत्वेन लयवतामधिष्ठानत्वमेव। अधिष्ठानत्वमेव न तु लयः। एष प्रकारो योगशास्त्रेपूल्लङ्घनक्रम इत्युपदिश्यते। उक्तं हि—

> भावा वृत्तिषु ताश्चित्ते चित्तं संविदि चापरे।
> धामन्यस्तं यत्र याताः क्रम उल्लङ्घनात्मकः॥

लयो यथा—प्रेमार्द्राः प्रणयस्पृश इत्यादिश्लोके भावनायाः कोऽप्येव महिमा येन व्यञ्जकादिचतुष्टयमानन्दे विलीयते। स्वयं च। अन्यथा आनन्दैकरसत्वविरोधः। भावानां विलयावसरे चाहंकारविरहादानन्दाकारः। वृत्तिप्रवाहतया च सम्प्रज्ञातसमाधाविव रसिकानामवस्था संप्रज्ञातसमाधिः।
यथोच्यते—

> ब्रह्माकाररसे वृत्तिप्रवाहोऽहङ्कृतिं विना।
> सम्प्रज्ञातसमाधिः स्याद् ध्यानाभ्यासप्रकर्षतः॥ इति

असंप्रज्ञातसमाधौ तु वृत्तिशून्यं सहजानन्दचित्तमेव स्फुरति। उक्तं हि—

> प्रशान्तवृत्तिकं चित्तं परमात्मानुदीपकम्।
> असंप्रज्ञातनामाऽयं समाधिर्योगिनां प्रियः॥

रसिकदशाया यतो वृत्तिरेव विकारो भावनानां भावोत्कर्ष एव रस इत्युक्तम्।

ननु यद्यात्मस्थ एव भावः वासनात्मको भावः सामाजिकैरनुभूयते तत्किमत्र नटेन कार्यम्। उच्यते—अहो पूर्वोत्तरानुसन्धान-

कौशलं प्रज्ञावतः। यन्नाट्यरसनिरूपणे प्रस्तुते किमत्र नटेनेति पर्यनुयोगः क्रियते। नाट्यं नामावस्थानुकृतिः। अनुकार्यो रामादिः। अनुकर्ता नटः। तेन च रसो निर्वर्तनीयः। भावश्च द्विप्रकारः। अनुकार्याश्रयो भावकाश्रयश्चेति। अनुकार्यात्मको नाम सविकारात्मकः। बाह्यार्थालम्बन इत्यादेर्भावलक्षणस्य तत्रैव मुख्यार्थत्वादनुकार्येण स्वयं भावस्य परामर्शे विकारात्मकत्वप्रतीतेश्च। तथाहि—परिच्छेदातीतः विनिश्चेतुं शक्यो न सुखमिति इत्यादिषु विकारात्मकः। स च भावः तस्यैव रसयितुं योग्यो नान्यस्य रसिकत्वायोगात्, स्वसंवेदनविरोधाच्च। न भावशून्योऽस्ति रसः—इति स्मरणात्सामाजिकेष्वपि भावसंभवो दर्शनीयः। रामादिष्वसत्स्वेव सामाजिकेषु भावो जायते। तेन भावस्य रूपान्तरं वाच्यम्। तच्च विकारत्वेऽपि वासनात्मकत्वमेव। यदुक्तं भावस्तद्भावभावनमिति। तद्भावस्य भावकचेतसो भावानां वासनं भावनमित्यर्थः। तस्य वासनात्मकस्य सामाजिकानां भावस्य व्यक्तस्यैव रसत्वम्। तद्व्यक्तिश्च विभावादेः। विभावाद्यप्रतीतौ नोत्पद्यते इति विभावादीनां प्रत्येतव्यत्वं प्रत्यायकत्वं अभिनयकाव्ययोरित्यभिनेतुमनिगदतो नटस्य सामाजिकरसनिष्पादकत्वादुपधायकमयत्नसिद्धमेवेति न तस्याकिञ्चित्करत्वं स्वप्नेऽप्याशङ्कनीयम्।

ननु रामादिष्वसत्स्वेव तद्विभावनाद्रसो यदि सामाजिकेषु स्यात्तदा निरालम्बनवादो दत्तावलम्बः स्यात्। न तेषामनपेक्षितबाह्यार्थसत्त्वानां शब्दोपहितरूपतया अध्यासितसत्त्वानां सत्त्वाद्भावकचेतसि विपरिवर्तमानानामालम्बनत्वादिसिद्धेः कार्यैकरसमधिगम्याभिवस्तुसत्ताव्यवस्था यथाविधौ सत्यङ्गीक्रियमाणे समीहितसिद्धिः तथा विधमेव सत्त्वमाश्रयणीयम्। शब्दोपादानादेवाहितसत्त्वे वस्तुनि रसोदयदर्शनात् शब्दाहितसत्त्वमेव विभावादीनामेषितव्यम्।

शब्दोपहितरूपांस्तान्बुद्धेर्विषयतां गतान्।
प्रत्यक्षानिव कंसादीन्साधनत्वेन मन्यते॥ इति।

अत एवास्य लौकिकरसादन्यत्वमिति। यदयमनपेक्षितबाह्यसत्त्वैरेव विभावादिभिर्निष्पाद्यते। यद्यपि नाट्ये चित्राश्वन्यायेन रामोऽयमिति प्रतिपत्त्या नटे गृह्यमाण एव रसो जायते। यत्सत्त्वस्यापरमार्थत्वात्तस्य लौकिकरसत्वं न सम्भावनीयम्। तत्रापि शब्दोपहितसत्त्वे न्याय एव नटाहितसत्त्वस्यापि रामादेरित्यमभिप्रायः। कचिच्छब्दसन्दर्शितैः कचिदभिधेयतयोपदर्शितैः विभावादिपदस्थैः रामादिभिः श्रोतृप्रेक्षकाणां रसो निर्वर्त्यत इति न तेषां श्राव्यत्वे दृश्यत्वे वा रसे किञ्चिदपि वैषम्यम्।

कथं पुनः सीतादीनां विभावत्वे ह्यविरोधः। अत्रोच्यते—न खलु कवयो योगिन इव त्रैकाल्यावच्छिन्नान्नायकान्निष्प्रतीयेरन्। ज्ञानचक्षुषा साक्षात्प्रतीत्या तेषां प्रातिस्विकं रूपं स्ववाङ्मयादिप्रभृतिषु प्रतिच्छन्दयन्ति। अपि तु औचित्याद्रसोपनिषदा संभाव्यमानां भगवतीं लोकयात्रां पुरस्कृत्य तदनुरोधेन सर्वसाधारणीं स्वोत्प्रेक्षापरिष्कृतां तां तामवस्थां श्राव्यदृश्यमार्गेण निर्दिश्य तां च नटेषूपस्थापयन्ति। ततश्च स्त्रीपुंलक्षणं विभावितविशेषं विभावत्वसामान्यात्मन इव रसनिष्पत्तिदशायामुपलब्धियोग्यं भवति। असदाश्रयं काव्यमग्राह्यम्। तस्मात्काव्यनाट्ययोः स्वादिविभावानामन्यथैवोपयोगः। यथादर्शनं हि कार्यं प्रति कारणव्यापारः परिकल्प्यते। दृश्यते च रामादावनुकार्ये सामाजिकानां लोकोत्तरस्वसंवेदनानन्दः। सामाजिकानामेवाधिकरणत्वम्। किञ्च शब्दार्थयोर्गुणभावेन रसाङ्गभूतस्यापि रसप्रवणतया विलक्षणं लोकोत्तरवर्णनानिपुणकविकर्म काव्यं कस्य रसवत्तामापादयितुं कविभिः प्रवर्त्यत इति चिन्त्यम्। न तावदनुकार्यस्य। तस्य वृत्तत्वात्। नापि नटस्य। तस्य धनार्थित्वेन भावशून्यत्वात्। ततः परिशेषात्सहृदयानामेव। यदि नटोऽपि सहृदयः स्यात्तदा तस्यापि भावकस्य गानास्वादवत्काव्यरसास्वादो युज्यत एव। यदुक्तं काव्यार्थभावनास्वादो नटस्यापि न वार्यते—इति।

रसविवेकः

**रसा**—श्रुतिः
धैवतस्य द्वितीया श्रुतिः। जगदेकः

**रसावली**—मेलरागः (वनस्पतिमेलजन्यः)
(आ) स रि ग म ध नि – स.
(अव) स नि ध प म ग रि – स.
मञ्ज

**रसाश्रिता**—रागः

हिन्दोलो मालवाख्यश्च शृङ्गाररसमाश्रितौ।
पञ्चमष्टक्करागस्तु वीरे रौद्रे यथाक्रमम्॥
करुणे ककुभश्चैव हास्यैर्मालवकैशिकः।
ककुभो भयानके कार्यः षड्जो बीभत्सशान्तयोः।
एते रसाश्रिता रागाः योज्यास्सर्वत्र गीतके॥
नान्यः

**रसास्वादे विघ्नाः**

तत्र विघ्नापसारका विभावप्रभृतयः। तथाहि—लोको सकलविघ्नविनिर्मुक्ता संवित्तिः। एवं चमत्कारनिर्वेशरसनास्वादनभोगसमापत्तिलयविश्रान्त्यादिशब्दैरभिधीयते। सप्तविघ्नाश्चास्यां प्रतिपत्तौ। अयोग्यता। संभावनाविरहो नाम स्वगतत्वपरगतत्वनियमेन देशकालविशेषावेशः निजसुखादिविवशीभावः प्रतीत्युपायवैकल्यं स्फुटत्वाभावः अप्रधानता संशययोगश्च। तथाहि—

संवेद्यमसंभावयमानः संवेद्ये संविदं विनिवेशयितुमेव न शक्नोति। का तत्र विश्रान्तिः—इति प्रथमो विघ्नः।

तदपसारणे हृदयसंवादो लोकसामान्यवस्तुविषयः। अलोकसामान्येषु तु चेष्टितेष्वखण्डितप्रसिद्धिजनितगाढारूढप्रत्ययप्रसारकादिप्रख्यातरामादिनामधेयपरिग्रहः।

स्वैकगतानां च सुखदुःखसंविदामास्वादे यथासंभवं तदपगमभीरुतया वा तत्परिरक्षाव्यग्रतया वा तत्सदृशी जिजीषया वा तज्जिहासया वा तत्प्रचिख्याषयिषया वा तद्गोपनेच्छया वा प्रकारान्तरेण वा संवेदनान्तरसमुद्गम एव परमो विघ्नः।

परगतत्वनियमभाजामपि सुखदुःखानां संवेदने नियमेन स्वात्मनि सुखदुःखमोहमाध्यस्थ्यादिसंविदन्तरोद्गमनसंभावनादवश्यंभावी विघ्नः। तदपसरणे कार्यः पूर्वरङ्गविधिः नटरूपताधिगमः तत्पुरस्सरः प्रतिशीर्षकादिना तद्विघ्नप्रच्छादनप्रकारोऽभ्युपायश्च, अलौकिकभाषादिभेदलास्याङ्गरङ्गपीठमण्डपगतकक्ष्यादि परिग्रहनाट्यधर्मीसहितः। तस्मिन् हि सति अस्यैव अत्रैव एतर्ह्येव सुखं दुःखं वेति न भवति। तस्मादेव मुनिना रसचर्वणोपयोगित्वेन परिकरबन्धः समाश्रितः।

निजसुखादिविवशीभूतश्च कथं वस्त्वन्तरे संविदं विश्रामयेदिति विघ्नः। तत्प्रत्यूहव्यपोहनाय प्रतिपदार्थनिष्ठैस्साधारणमहिम्ना सकलभोग्यत्वसहिष्णुभिः शब्दादिविषयमयैरातोद्यगानविचित्रमण्डपपदविदग्धगणिकादिभिरुपरञ्जनं समाश्रितं, येनाहृदयोऽपि हृदयवैमल्यप्राप्त्या सहृदयीक्रियते।

किञ्च प्रतीत्युपायानामभावः कथं प्रतीतिभावः। अस्फुटप्रतीतिकारिशब्दलिङ्गसंभवेऽपि न प्रतीतिर्विश्राम्यति। यथाहुः—सर्वा चेयं प्रमितिः प्रत्यक्षपरेति। तदपसरणायाभिनया नाट्यधर्मी वृत्तिप्रवृत्त्युपस्कृताः समभिषिच्यन्ते। अभिनयनं हि सशब्दलिङ्गव्यापारसदृशमेव प्रत्यक्षव्यापारकल्पमिति निश्चेष्यामः।

अप्रधाने च वस्तुनि कस्य संविद्विश्राम्यति। तस्यैव प्रत्ययस्य, प्रधानान्तरं प्रत्यनुधावतः स्वात्मनि विश्रान्तत्वात् अतः अप्रधानत्वे जडे विभावानुभाववर्गे व्यभिचारिनिचये च संविदात्मकेऽपि नियमेनान्यमुखसंप्रेक्षिणि संभवतीति तदतिरिक्तः स्थाय्येव तथा चर्वणापात्रं। तत्र पुरुषार्थनिष्ठाः काश्चित्संविद इति प्रधानम्+ एवं रत्यादीनां प्राधान्यम्। स्थायित्वमेव प्रधानम्। जात एव हि जन्तुरियतीभिस्संविद्भिः परीतो भवति। तथा हि दुःखविद्वेषात्सुखास्वादनादरात्सर्वो रिरंसया व्याप्तः स्वात्मन्युत्कर्षमानीतया परमुपहसन्नभीष्टवियोगसन्तप्तः तद्धेतुषु कोपपरवशोऽशक्तौ च ततो भीरुः किञ्चिदुज्जिहीषुरप्यनुचितवस्तुविषयवैमुख्यात्मकतया आक्रान्तः किञ्चिदनभीष्टतया अभिमन्यमानः तत्तत्स्वपरकर्तव्यदर्शनसमुदितविस्मयः जिहासुरेव जायते। न ह्येतच्चित्तवृत्तिवासनाशून्यः प्राणीभवति। ये पुनरमी ग्लानिशङ्काप्रभृतयश्चित्तवृत्तिविशेषाः ते समुचितविभावाभावात् जन्ममध्येऽपि न भवन्त्येव। तस्मात् स्थायिरूपचित्तवृत्तिसूत्रस्यूता एवामी व्यभिचारिणः। तस्मिन् सूत्रे स्वसंस्कारवैचित्र्यमनिवेशयन्तोऽपि विचित्रार्थस्थायिसूत्रं विचित्रयन्तो प्रतिभासावकाशमुपदधन्तो प्रतिभासन्ते। एवमप्रधानत्वनिरासः।

संशययोग इति सप्तमो विघ्नः। तत्रानुभावानां विभावानां व्यभिचारिणां पृथक्स्थायिनि नियमो नास्ति। यस्माद् बाष्पादेरानन्दाक्षिरोगादिजत्वदर्शनात्, व्याघ्रादेश्च क्रोधभयादिहेतुत्वात्, श्रमचिन्तादेरुत्साहभयाद्यनेकसहचरत्वावलोकनात् शङ्का जायते। तद्विघ्नशमनाय विभावानुभावव्यभिचारिणां संयोग उपात्तः।

अभिनवः

रसिकः—गायकभेदः

स्निग्धमात्रश्रुतिं श्रुत्वा भृशमानन्दभाग्भवेत्।
पुलकाङ्कितसर्वाङ्गो गाता स रसिकः स्मृतः॥

सोमेश्वरः

रसिकप्रिया—मेलकर्ता (रागः)

स रि ग ० म प ० ध ० नि स.

मत

रसिकरसायनम्

महाभामहाचार्यकृतमलङ्कारशास्त्रम्।

अत्र ग्रन्थे भवभूति शारदातनय मम्मट विद्यानाथादयः स्मृताः। कालः १४००.

रसोत्पत्तिः

योगमालामते—

अहङ्कारस्य वृत्तिर्या सोऽभिमानः प्रकीर्तितः।
साभिमानात्मिका वृत्तिस्तत्तदिन्द्रियगोचरा॥
बाह्यार्थालम्बनवती शृङ्गारादिरसात्मताम्।
याति तत्र विभावादिभेदाद्भेदं प्रयाति च॥
विभावा ललिताः सत्त्वानुभावव्यभिचारिभिः।
यदा स्थायिनि वर्तन्ते स्वीयाभिनयसंश्रयाः॥
तदा मनः प्रेक्षकाणां रजस्सत्त्वव्यपाश्रयि।
सुखानुबन्धी तत्रत्यो विकारो यः प्रवर्तते॥
स शृङ्गाररसाख्यां तु लभते रस्यते च तैः।
यदा तु ललिताभासाः भावैस्स्वोत्कर्षहेतुभिः॥

सत्त्वादिभिश्चाभिनयैः स्थायिनं वर्धयन्ति ते ।
तदा मनः प्रेक्षकाणां रजःस्पृष्टं तमोऽन्वयि ।।

चैतन्याश्रयि तत्रत्यो विकारो यः प्रवर्तते ।
स हास्यरस इत्याख्यां लभते रस्यते च तैः ।।

स्थिरा विभावास्तु यदा स्वयोग्यैः सात्त्विकादिभिः ।
भावैः स्थायिनि वर्तन्ते स्वीयाभिनयसंश्रयाः ।।

तदा मनः प्रेक्षकाणां सत्त्ववृत्ति रजोऽन्वयि ।
नाभिमानश्च तत्रत्यो विकारोस्यः प्रवर्तते ।।

स वीररसनामा स्याद्रस्यते स च तैरपि ।
यदा चित्रा विभावास्तु भावैस्सत्त्वादिभिः सह ।।

स्वाश्रयाभिनयैर्युक्ता वर्तन्ते स्थायिनि स्वके ।
तदा मनः प्रेक्षकाणां रजस्सत्वोज्वलं भवेत् ।।

बुद्धिस्पर्शि च तत्रत्यो विकारो यः प्रवर्तते ।
स चाद्भुतरसाख्यां तु लभते रस्यते च तैः ।।

खरा विभावास्तु यदा स्वानुकूलैस्सहेतरैः ।
स्थायिनि से प्रवर्तन्ते स्वीयाभिनयसंश्रयाः ।।

तदा मनः प्रेक्षकाणां रजसा तमसान्वितम् ।
साहङ्कारं च तत्रस्थो विकारो यः प्रवर्तते ।।

सरौद्ररसनामा स्याद्रस्यते च स तैरपि ।
यदा रूक्षाविभावास्तु स्वेतरैस्सानुगैस्सह ।।

स्वीये स्थायिनि वर्तन्त नाट्याभिनयसंश्रयाः ।
तदा मनस्तमोरूढं चित्तावस्थं जडात्मकम् ।।

सदन्वयि च तत्रत्यो विकारो यः प्रवर्तत ।
प्राप्नोति सोऽपि करुणरसाख्यां रस्यते च तैः ।।

निन्दिता ये विभावाः स्युः स्वेतरैः सहकारिभिः ।
यदा स्थायिनि वर्तन्ते तैस्तैरभिनयैस्सह ।।

तदा मनःप्रेक्षकाणां बुद्धयवस्थमसत्वयुक् ।
चिदन्वयि च तत्रत्यो विकारो यः प्रवर्तते ।।

स बीभत्सरसाख्यां तु लभते रस्यते च तैः ।
ईदृशी च रसोत्पत्तिः मनोवृत्तिश्च शाश्वती ।।

कथिता योगमालायां संहितायां विवस्वते ।
यदा तु विकृता भावाः स्वोचितैस्सहकारिभिः ।।

स्थायिन्यभिनयोपेता वर्तन्ते नाट्यकर्मणि ।
तदा मनः प्रेक्षकाणां चित्तावस्थं तमोऽन्वितम् ।।

सत्त्वान्वितं च तत्रत्यो विकारो यः प्रवर्तते ।
स भयानकसंज्ञां तु लभते रस्यते च तैः ।।

शारदातनयः

## रसोपादानानि

कथ्यते स्थायिभावानां रसोपादानहेतुता ।
मनोऽनुकूलेष्वर्थेषु सुखसंवेदनात्मिका ।।

इच्छा रतिः सा द्विधा स्याद्रतिप्रीतिविभागतः ।
तयोस्साधारणो भेदः सप्तधा परिकीर्तितः ।।

निसर्गसंसर्गोपमामिधेयाध्यात्मरूपतः ।
अभिमानाच्च विषयात्सप्तधा सांप्रयोगिकी ।।

रतिरेव भवेत्प्रीतिरेवमाभ्यासिकी भवेत् ।
प्रीतिः क्रियात्मा प्रायेण रतिरिच्छात्मिकैव हि ।।

ज्ञानं द्विनिष्ठं तद्रूपं मनोऽधिष्ठाय वर्तते ।
रतिस्सत्त्वस्थिता सेऽयं विभावाद्युपबृंहिता ।।

रजसानुगृहीता तु साध्वी सर्वत्र भासते ।
प्रीतेर्विशेषश्चित्तस्य विकासो हास उच्यते ।।

षोढा विकल्पमायाति परिणामे रसात्मना ।
रजःस्थितो विभावाद्यैः बृंहितस्तमसा भवेत् ।।

उत्साहस्सर्वकृत्येषु सत्त्वतो मानसी क्रिया ।
सहजाहार्यभेदेन स द्विधा परिकीर्तितः ।।

विस्मयश्चित्तवैचित्र्यं स त्रिधा त्रिगुणात्मकः ।
तेजसो जनकः क्रोधः स त्रिधा कथ्यते बुधैः ।।

क्रोधः कोपश्च रोषश्चेत्येप भेदस्त्रिधा मतः ।
क्रोध्यते क्रोध इत्येव कथ्यतीत्यभिधीयते ।।

सर्वेन्द्रियपरिक्लेशः शोक इत्यभिधीयते ।
सत्त्वादिपरिणामेन स त्रिधा परिपठ्यते ।।

निन्दात्मा चित्तसङ्कोचो जुगुप्सेत्यभिधीयते ।
द्विधा विभज्यते सोऽपि परिणामे रसात्मना ।।

भयं चित्तस्य चलनं तच्च प्राहुरनेकधा ।
स्वरूपमिदमाचार्यैः स्थायिनां कथितं पुरा ।।

शारदातनयः

## राकाप्रतापः—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग प ध नि स .
(अव) स नि ध प ग रि स .

मज

## राक्षसशीला—स्त्री

बृहद्व्यायतसर्वाङ्गी रक्तविस्तीर्णलोचना ।
खररोमा दिवास्वप्ननिरतायुज्यभाषिणी ।।

नखदन्तक्षतकरी क्रोधेर्ष्याकलहप्रिया।
निशाविहारशीला च राक्षसं शीलमास्थिता ॥

भरतः

## रागः

प्रचिता सैव कुर्वाणा प्रवृत्तिश्चोत्तरक्षणे।
तदस्थिरौ विरोधेन तापनी राग उच्यते ॥

भावविवेकः

स्वरवर्णविशिष्टेन ध्वनिभेदेन वा जनः।
रज्यते येन कथितः स रागस्सम्मतस्सताम् ॥

अश्वकर्णादिवद्रूढो योगिको वापि मन्थवत्।
योगरूढश्च वा रागो ज्ञेयः पङ्कजशब्दवत् ॥

तुलजः

रागोऽभिधीयते गीतं दशलक्षणलक्षितः।

दशलक्षणेति। अंशन्यासादि जातेर्लक्षणम्।

विचित्रवर्णालङ्कारे विशेषो यो ध्वनेरिह।
ग्रहादिस्वरसन्दर्भो रञ्जको राग उच्यते ॥

कुम्भः

## रागकदम्बकः—प्रबन्धः

गद्येन रचितं प्राहुः केचिद्रागकदम्बकम्।
अष्टवृत्तस्स्वस्तिकाख्यस्तालैरष्टाभिरन्वितः।
रागैश्च बहुभिर्गेयश्शेषं पूर्ववदुच्यते ॥

जग-मल्लः

नन्द्यावर्तश्चतुर्वृत्तः स्वस्तिकश्चाष्टवृत्तकः।
तालस्तत्संख्यया योज्या गीतशास्त्रविशारदैः ॥

गद्यैस्तालविहीनैश्च वृत्तैर्वा तालसङ्गतैः।
रागैरनेकैः क्लृप्तोऽसौ भवेद्रागकदम्बकः ॥

सोमेश्वरः

नन्द्यावर्त इति ख्यातस्स्वस्तिकश्चेति स द्विधा।
प्रथमस्तु चतुस्तालः चतुर्वृत्तश्चतुस्स्वरः ॥

चतूरागस्ततोऽप्यस्मादाभोगोऽपि पदान्तरैः।
भवेदुद्ग्राहके न्यासः तालमानद्वयेन हि ॥

असौ तु कैश्चिद्गीतज्ञैः तालेनैकेन गीयते।
अन्यैस्तु बहुभी रागैस्तालैरष्टाभिरिष्यते।
शेषं पूर्ववदस्यैवमुक्तो रागकदम्बकः ॥

हरिपालः

नन्द्यावर्तः स्वस्तिकश्चेत्युभौ रागकदम्बकौ।
आद्यो वृत्तैश्चतुर्भिस्स्यात्तालैः रागैश्च भूषितः ॥

उद्ग्राहेण भवेन्न्यासः तालमानद्वयेन वा।
नन्द्यावर्तो भवेदेवं गद्येनाप्यपरे जगुः।
स्वस्तिको द्विगुणः प्रोक्तश्शेषमन्यच्च पूर्ववत् ॥

श्रीकण्ठः

## रागकाव्यम्

स्वरस्य रक्तिरूपत्वाद्गीत्यात्मा राग उच्यते।
कार्यं तदा रागभूतं रागकाव्यमुदाहृतम् ॥

रागकार्यमित्यप्यस्य नामान्तरम्—

वेमः

## रागचूडामणिः—उपाङ्गरागः

रागचूडामणौ रागे षड्जग्रामनिवासिनि।
संग्रहांशे निविरतौ त्रिरिपान्दोलितर्षभे ॥

तारषड्जो मन्द्रमध्ये सुप्रकम्पितपञ्चमे।
विनियुक्ते युद्धवीरेऽद्भुते दिनमुखे तथा ॥

मन्द्रादिभूते चारोहिवर्णे क्ष्माभृदुपक्रमे।
नरेन्द्रविजये गेये कमलापतिवल्लभे।
आलप्तिस्तन्यते राज्ञा गीतज्ञहृदयंगमा ॥

कुम्भः

## रागपक्षिसालुवः—देशीनृत्तम्

निश्शोकोऽर्धपदद्वन्द्वे वलनाद्वितयं यदि।
अन्तराले रायपङ्कसालुवः समुदीरितः ॥

वेदः

## रागप्रदीपकं—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म प म नि ध नि स.
(अव) स नि ध प म रि स.

मञ्ज

## रागमञ्जरी

अस्य कर्ता न ज्ञायते। काश्मीरे जम्मूनगर्यां राजारामसिंह-पुस्तकालयेऽयं ग्रन्थो वर्तते ॥

## रागमञ्जूषा

अस्य कर्ता न ज्ञायते। रागमञ्जूषेति नाम भरतकल्पलता-मञ्जर्यां स्मृतम्।

## रागमूर्तिध्यानावश्यकता

ध्यानं विना रागसमूहमेतं गायन्ति रागे निपुणा जना ये।
सङ्गीतशास्त्रोक्तफलानि रागाः तेभ्यः प्रयच्छन्ति कदापि नैव ॥

श्रीकण्ठः

रागराजपञ्चमः—रागः

आर्षभीपञ्चमीजातः पञ्चमांशग्रहान्वितः।
षड्जादिमूर्छनायुक्तः षड्जन्यासस्सकाकलिः॥

सावरोही प्रसन्नान्तो धैवताल्पो भवेदयम्।
रागराजप्रथमकः पञ्चमोऽप्येषमीरितः॥

हरिः

रागवर्धनः—देशीतालः

बिन्दुद्वयं विरामान्तं खप्लुतौ रागवर्धने।
० ० ० ऽ जगदेकः

ध ध नी पा मा गा

रागवर्धनक्रमः

आलापो रूपकं चैव करणं वर्धनी तथा।
आक्षिप्तिका चेति रूपैः रागः स्यात्पञ्चभिः स्फुटः॥

ग्रहोंऽशस्तारमन्द्रौ च न्यासोऽपन्यास एव च।
व्यक्तिं गच्छन्ति यत्रैते स रागालाप ईरितः॥

रागालापवदेव स्याद्रूपकं किन्तु तत्र च।
पृथक्क्रियन्ते वाद्यादेः स्वरा ये स्युर्विवादिनः॥

चित्रादिमार्गत्रितये ताले चच्चत्पुटादिके।
सन्दर्भिता स्वरपदैः रुदिताक्षिप्तिका बुधैः॥

करणस्य भिदाः सन्ति बोध्या वर्धनिकाणि च।
प्रोक्ता करणवद्रूपं रूपकं तु तयोरतः॥

निरूपयिष्यते यस्मात्तदन्तर्गामिता तयोः।
तत्रालापश्चतुर्भिस्तु स्वस्थानैः प्रकटीभवेत्॥

यस्मिन् रागे ग्रहो यस्तं स्थायिनं परिकल्प्य च।
तृतीयान्दोलनादूर्ध्वं द्वितीयस्मिन्विलम्ब्य च॥

न्यासस्वरविरामे च स्वस्थानं प्रथमं स्मृतम्।
ग्रहात्तुर्येषु वेदाङ्घ्रिन्यासैः प्रोक्तो द्वितीयकः॥

तुर्याद्यङ्घ्रियुगान् कृत्वा स्थित्वा पञ्चमकं ततः।
विधाय रसवाणाङ्घ्रिन्यासेनान्त्ये तृतीयकम्॥

ग्रहाङ्घ्रिवेदवाणाग्निनागान्कृत्वा विलम्ब्य च।
द्वितीयमग्निपक्षौ च विधायन्यसनं स्वरे॥

न्यासाच्चतुर्थं स्वस्थान इत्युक्ता पृथिवीभुजा।
अत्र या गणना प्रोक्ता द्वितीयादिस्वरादितः।
असौ विज्ञेन विज्ञेया वर्जयित्वा विवादिनम्॥

कुम्भः

रागवर्धनी—मेलकर्ता (रागः)

स ० ० रि ग म ० प ध ० नि ० स

मञ्ज

रागवाहिनी—मेलरागः (भवप्रियामेलजन्यः)

(आ) स प म ग रिं स नि ध स.
(अव) स प नि ध नि प म ग रिं स.

मञ्ज

रागविबोधः

सोमनाथकृतः। मुद्रितः। अयं सोमनाथः क्रै. प.१६०९ काले आसीत्। आन्ध्रदेशीयः। रागविबोधव्याख्यापि तेनैव कृता।

रागविभागः

भरतमहर्षिणा दशरूपकप्रयोगोपदेशे नाट्यशास्त्रे अङ्कमध्ये स्वरदीर्घत्वनिषिद्धत्वात् सप्तैव शुद्धरागाः पूर्वरङ्गे ध्रुवागाने चोपदिष्टाः।

यथा—मुखे तु मध्यमग्रामः षड्जः प्रतिमुखे भवेत्।
गर्भे साधारितश्चैव अवमर्शे तु पञ्चमः॥

संहारे कैशिकः प्रोक्तः पूर्वरङ्गे तु षाडवः।
चित्रस्याष्टादशाङ्गस्य त्वन्ते कैशिकमध्यमः।
शुद्धानां विनियोगोऽयं ब्रह्मणा समुदाहृतः॥

अत्र मध्यमग्रामः षड्जग्रामनामानौ भरतेनोपदिष्टा रागाः ग्रामरागा इति प्रसिद्धिरस्ति। रागाणां प्राधान्येन दशविधांशत्वं निर्णीय तत्परस्परसाङ्कर्येनाधिक्येन च रागानष्टादशधा विभज्य, तेषां विभागानां प्रत्येकं जातिनाम दत्तवान्महर्षिः। "जातिसंभूतत्वाद्ग्रामरागाणा" मिति मुनिनैवोक्तत्वाद्रागाणामष्टादशविभागहेतुत्वं दशांशलक्षणा जातिरेवेत्यूह्यम्। तस्मिन् विभागे श्रुतिज्ञानं त्रिस्थाय्यारोहणावरोहणक्रमः ग्रह (प्रारम्भस्वर) स्वरूपं न्यासस्वरूपं रागाणां षाडवौडुवावस्थायां स्वरलोपः सम्यक् प्रदर्शितं स्यात्। तस्मिन् शुद्धस्वरप्रयोग एवाङ्गीकृतः। नियतस्वरसंख्ययैव ग्रामद्वयप्रयोगे पञ्चमधैवतश्रुति संख्याभेदाद्बहवो रागाः प्रयुक्ताः। नारदेन तदनुसारिणा नान्यदेवेन च गान्धारग्रामजातरागा उपदिष्टाः। नारदेन यज्ञोपयोगिनः, नान्यदेवेन लौकिकविनोदे च ते प्रयोज्यन्ते। गान्धारग्रामस्य केवलं स्वर्गे प्रयुक्तत्वं नारदेनाभिहितम्। अभिनवगुप्तादिभिः गान्धारग्रामरागेषु अतिमन्द्रत्वं अतितारत्वं च दृश्यत इत्युक्तम्। तस्माद्बहुभिः ग्रन्थकारैः गान्धारग्रामरागा नोपदिष्टाः। ग्रामरागाः केवलं मार्गरागा इति लोके व्यवह्रियन्ते। ते लौकिकविनोदेष्वप्रशस्ता इति सोमेश्वरादिभिरुक्तम्। देशीरागा इति जात्यंशविभागसम्मताः प्रायशः ग्रामद्वयविभागावलम्बकाः प्रत्येकं बहुवो

उपन्यस्ता मतङ्गेन बृहद्देश्याम्। तस्मिन् ग्रन्थे याष्टिकदुर्गाकाश्यपमतानि संसूचितानि। तेषां वृद्धकाश्यपो देशीरागाणां लक्षणानि दत्तवानिति प्रसिद्धिः। वृद्धकाश्यपः, स्वराणां पञ्चदशत्वमुक्त्वा—

काकल्यन्तरयोगेन चतुस्त्रिद्व्येकश्रुतीन्।
स्वरान् सर्वान् प्रयुञ्जीत रागभाषा सुसर्वथा॥

स्वराः षड्जादयः सप्त तथाचोत्कृष्टपञ्चमः।
अथ धैवतकश्चान्यः काकल्यन्तरसंज्ञकौ॥

षड्जमध्यमगान्धाराः साधारा इति सर्वदा।
जातिष्वेते प्रयोक्तव्याः स्वराः पञ्चदशैव तु॥

इति दर्शयन् विकृतस्वरानपि स्वरमध्ये पठित्वा रागभाषाविभागं प्रोक्तवान्। रागभाषाविभागो विकृतस्वरप्रयोगात् ग्रामरागविभागाद्भिन्न एव। तल्लक्ष्येऽसंभवमिति भरतसूचितमिति ज्ञायते। याष्टिकाञ्जनेयप्रभृतयः श्रुतिसंख्यानियमं वर्जयित्वा स्वराणां केषाञ्चित् पञ्चषट्सप्तश्रुतिकत्वं च यथेच्छं गृहीत्वा देशीरागान् नानाविधान् लौकिकविनोदयुक्तान् प्रणिन्युः।

रघुनाथस्तु—

कदाचिदागात्कदलीवनान्तमासोदिवान् याष्टिकमाञ्जनेयः।
संगीतविद्योपनिषद्रहस्यमध्यापयन्तं धुरि दक्षमुख्यान्॥

देशीयरागेष्वपि च स्वरेषु श्रुतिष्वमूषामपि लक्षणेषु।
नानाविरोधानिह याष्टिकं तं ते दक्षमुख्यास्त्विति पर्यपृच्छन्॥

सप्तस्वरा द्वादश वैकृता ये तेषां चतुस्त्रिः श्रुतयो न चान्याः।
पञ्चश्रुतिः षट्श्रुतिकस्वरश्च सप्तश्रुतिश्चास्ति हि देशिरागे।
अतो भवेच्छास्त्रविरोध एषां त्यागेन तासां न हि रागलाभः॥

## रागसागरः

परिधित्रयात्मकोऽयं ग्रन्थः केन रचित इति न ज्ञायते। ग्रन्थमध्ये शार्ङ्गदेवनाम स्मृतमस्ति।

**रागसुगन्धिः**—मेलरागः (नाटकप्रियमेलजन्यः)

(आ) स रि म प नि ध स.
(अव) स नि ध प म ग रि स.

मध्य

**रागाः**—(नाटकपालेषु योज्याः)

वेलाधूलिवराटितोडिपुरनीरन्धालिपौरालयः
तानश्चान्तरयश्च कामरमथ श्रीकण्ठकाह्वयौ।

गान्धारश्च कुरुलकुरुञ्जिविमला मुद्गामिधा कैशिका।
हिन्दोलद्वयपञ्चमत्रयममी रागाश्च नाट्ये स्मृताः॥

उषसि......व्यत्यासे पुरनीर् वर्षवर्णने।
श्रीकामरस्तु शृङ्गारे विस्मये तानमिष्यते॥

उत्कृष्टायां निकृष्टस्य कामे मुद्गामिधानकः।
हिन्दोलश्चोत्तमे पात्रे मध्यमे पञ्चमं भवेत्॥

प्रमेयस्यान्तरीं विद्याचेटीनां पञ्चमं भवेत्।
कुरुलु कुरुञ्जित्रानराणां वेलाधूलिं मुदान्विते॥

श्रीकण्ठी रतिभक्त्यां तु भक्त्यां तोडी तु कथ्यते।
वीरे रसे तर्कराग उन्मादे मुरलीदलम्॥

हास्ये तु कैशिकी पात्रे नीचपात्रे वराटिका।
दुःखे सुखे तु गान्धारमार्ते शृङ्गारमिश्रितम्॥

चूडामणिसारः

एते रागा द्रविडभाषायां पण्णित्युच्यन्ते। तक्केशी गोल्ली मेघरागः सादारी मट्टपाडः—इति अधिकं विद्यन्ते। श्रीकण्ठी—एव तक्कोशी स्यात्।

## रागाः

रागोपाधिना संभोगशब्दस्यानुभवार्थे उपसर्गार्थे संक्षेपपक्षे रागोपाधिः प्रेमापि द्वादशप्रकारं भवति। तत्र हरिद्रारागं रोचनारागं काम्पिल्यरागं रीतिरागमिति सात्त्विकस्य, कुसुम्भरागं लाक्षारागं अक्षीबरागं मञ्जिष्ठारागमिति राजसस्य, कर्दमरागं कषायरागं सकलरागं नीलीरागमिति तामसस्य, ते प्रायेण पुरुषाणां विशेष उपजायन्ते। तत्र अल्पकारणापनेयो हरिद्रारागः। तदतिसत्त्वोत्तरस्य। सहि तथा न कामेन बाध्यते। यथा सत्त्वोद्रेकात्करुणादिभिः तेनासौ नातितरामतिचिरं वा रज्यते। अतो हरिद्रारागः। यथा—नागानन्दे जीमूतवाहनस्य।

अनल्पकारणापनेयो रोचनारागः। तन्महासत्त्वस्य। स हि कामेनाबाध्यमानधर्मादिप्रवृत्तेरेव स्वकारणसामर्थ्यतो जायते। तेनास्य नातिदुरपनेया नातिरक्ता च रोचनाया इव रागलेखा भवन्ति। यथा—शाकुन्तले दुर्वासःशापेनापनीतस्मृतेर्दुष्यन्तस्य।

अनल्पकारणोपनिपातेऽपि प्रयत्नापनेयं काम्पिल्यरागम्। तदतिसात्त्विकस्य। यथा—हरिश्चन्द्रचरिते विश्वामित्रमोचनाय दारविक्रयिणो हरिश्चन्द्रस्य। कारणोपनिपाते महाप्रयत्नेनापनेतुं शक्यते तद्रीतिरागं। तदतिमहासत्त्वस्य। यथा—जनापवादभीरुतया निर्वासितायामपि सीतायां रामायणे रामस्य। एतेषु च सत्त्वच्छायाधिक्यान्न तथाविधा रागच्छायानुवृत्तिरित्यापीत एव रागवर्णो भवति। एवं अल्पकारणापनेयं कुसुम्भरागं। तद्रजोबहुलस्य। स हि तथा न धर्मार्थयोरनुषज्यते। यथा—कामः तेनातितरां सज्यते। गुणेषु च यथोत्तरेच्छत्वात् स्वमिनामनुरागोऽपि शीघ्रमेव विरज्यते। यथा—हरिवंशे वासुदेवस्य।

अनल्पकारणापनेयं लाक्षारागम्। तदपि रजोबहुलस्यैव जायते। यथा– विक्रमोर्वश्यामुर्वशीविलोकनापहृतमहादेवीप्रेमसंपदः पुरूरवसः।

कारणोपनिपाते महाप्रयत्नापनेयं अक्षीवरागम्। यथा—यौगन्धरायणादिप्रयत्नतो राज्यलाभाय तापसवत्सराजे वासवदत्तायां वत्सराजस्य।

महाप्रयत्नेनाप्यपनेतुमशक्यं मञ्जिष्ठारागम्। यथा—मदालसोपाख्याने मदालसायामेव कुवलयाश्वस्य।

एतेषु च रजोबहुलत्वाद्रागभूयिष्ठेषु रागान्तरोपनिपाताद्रक्तछायामेव वर्णोत्कर्षो भवति।

भोजः

## रागाङ्गम्

रागाङ्गत्वं ग्रामरागच्छायामात्रोपजीवनात्।

कुम्भः

## रागाङ्गाः

ग्रामोत्थानां तु रागाणां छायामात्रां भजन्ति हि।
गीतज्ञैः कथितास्सर्वे रागाङ्गास्तेन हेतुना॥

मतङ्गः

## रागाणां रसभावयोर्विनियोगः

योयदा बलवान् यस्मिन्स्वरे जातिसमाश्रयात्।
तत्प्रवृत्तं रसे गानं, (इति)
अत्र गानमिति रूपकेषु ध्रुवागानं विवक्षितम्।

लौकिकप्रबन्धगानोपयुक्तं कश्यपाद्युद्दिष्टं रसभावेषु रागाणां
विनियोगजातं श्लोकरूपेणाभिनवगुप्तैरुक्तम्।
केचन श्लोकाः काश्यपदुर्गयोरेवोद्धृतम्।

यथा—

मुखे तु मध्यमग्रामः षड्जः प्रतिमुखे स्मृतः।
गान्धारो गर्भसन्धेः स्यादवमर्शे तु पञ्चमः॥

कैशिकः स्यान्निर्वहणे प्रशस्यन्ते तु मध्यमः।
षाडवः पूर्वरङ्गे स्याद्विष्णोर्ग्रामद्वयं विदुः॥

मध्यमग्राम षड्ज गान्धार पञ्चम कैशिक कैशिकमध्यम षाडवाः एते सप्त शुद्धरागाः।

गौर्यास्तु पञ्चमं कुर्यात्साधारं स्कन्दसूर्ययोः।
मध्यमं कैशिकं विद्यात्साधारं तु भयानके॥

ललितज्योरियं शुद्धा गीतिः स्यान्नाट्यनृत्ययोः।

अत्र शुद्धसाधारशब्दौ दुर्गामते शुद्धगौडभिन्नसाधारणविभागान् वदतः।

दैन्यावमानभूयिष्ठे रसे षड्जो विधीयते।

षड्जः शुद्धरागः।

कामिनीजनितेर्ष्यायां भाषास्तद्वथभिचारिषु।

भाषाः भाषारागा याष्टिकोक्ताः।

शुद्धावहित्थे गोप्यत्वे दक्षिणात्या च धैवती।

शुद्धरागः शुद्धः।

चिन्तायां कणिकौत्सुक्ये पौराली धूर्तजालिके।
बाङ्गाली खेदप्रणये सैन्धव्यपि च साम्बरी॥

कालिन्दी सम्मर्दे कुत्से पुलिन्दी च निवासिनि।
त्रावणी शोकभूयिष्ठे षड्जाख्याटोपसम्मर्दे॥

मालवी गूर्जरी चाथ चिन्ताप्रशमयोः क्रमात्।
मतिधृत्यवहित्थेषु गीयते चोक्षषाडवः॥

कोसली कौशले कुर्यात् गान्धारी खड्गपङ्क्तिके।
मृदौ सौवीरललितौ ललिते ललितासमे॥

तुम्बुरावश्यकैशिक्ये गान्धारललिता भवेत्।
कर्णाटी बन्धनिर्विण्णे चित्रकर्मणि वा भवेत्॥

कालिङ्ग्यमर्षवेगे तु लिङ्गिनां कपटात्मनाम्।
मध्यमा स्मृतिशङ्कासु निर्विण्णे पार्वती भवेत्॥

निषादिनी विमोहादौ भिन्नषड्जे गणस्त्वयम्।
स्थापकीये सदोत्साहे भिन्नपञ्चम उच्यते॥

संभ्रमे नर्तरागस्य मले कैश्चिदथाद्भुते।
श्रमाद्यसूयामर्षेषु शुद्धभिन्नान्नियुज्यते॥

वराटी हर्षसंवेगविस्मयेषु विधीयते।
धृतिस्मृत्यवहित्थेषु भवेद्धैवतभूषिता॥

आलस्यदैन्यमोहेषु विशाला व्रीलितेऽपि च।
गर्वौत्सुक्यवितर्केषु प्रथमा परिगीयते॥

त्रासशङ्कासंभ्रमेषु कौसल्या विनियुज्यते।
बाङ्गाल्यमर्षावेगेषु धृतिस्मृतिषु च स्मृता॥

उत्तमे करुणे भावे सूदिये व्यभिचारिणि।
कार्यान्तरातङ्कभूते भाषा कामोदिका मता॥

छन्नेऽभिलापे श्रृङ्गारे वीरे धर्मात्मके तथा।
कृतकर्तव्यतायां च कर्तव्यो भिन्नकैशिकः॥

हर्षौचित्याद्भुतोत्साहे भिन्नकैशिकमध्यमः।
अनयोर्भिन्नयोर्बालकैशिक्ये व्यभिचारिणी॥

सूक्ष्मवक्रस्वरैर्जात्या शुद्धा भिन्ना निरूपिता।
अतत्स्वभावो यो रौद्र उत्साहो धर्मवर्जितः॥

गौडपञ्चममिच्छन्ति तत्रैके काश्यपादयः।
चिन्तादैन्यधृतिश्रद्धामर्षादौ द्राविडी स्मृता॥

दुःखे दुरन्तेष्वभये पताकादेर्नियुज्यते।
गौडकौशिकमेकस्य भाषां तन्नामिकामपि॥

भयानके मध्यमः स्याद्भिन्ना चोत्साहयोगिनी।
नन्दयन्तीव तद्भाषा भवेत्तु व्यभिचारिषु॥

गौडगीतिरियं प्रायो वेगस्वरविचित्रता।
टक्करागस्तु कर्तव्यो रसयोर्वीररौद्रयोः॥

दीप्ते च हृदयस्यार्थे स्याद्गाढविषयेऽपि सः।
हर्षे वाप्यथ चिन्तायां त्रवणा त्रवणोद्भवा।
वैरञ्जिका हितावन्ध्याच्छेवाडी रणकल्पने॥

मालवेसरिका कार्या समराङ्गणरूपणे।
गूर्जर्यमर्षवेगेषु सौराष्ट्री निष्ठुरात्मके॥

सैन्धवी परितोषे स्याद्वैरस्ये वेसरी मता।
पञ्चमाख्या विहसिते रविचन्द्रा विषादिनि॥

अम्बाभेरी मदोन्मादे ललिता हर्षविप्लवे।

अम्बाभेरी अन्धाभेरीत्यप्युच्यते। टक्करागस्य भाषा।

कोलाहला कलकले मध्यमग्रामिका धृतौ।
शङ्कासूयाश्रमे भाषा गेया गान्धारपञ्चमी॥

धृतावेषा मतिस्मृत्योः स्याद्दिवाकरवर्धनी।
पौराली दीप्तभावेषु स्याद्धृतौ ताम्रतूलिका॥

चिन्ताविषादनिर्वेदे शार्दूली शोकसंश्रया।
जये हर्षे वितर्के च मालवी परिगीयते॥

स्वाध्यायादिषु सक्तेषु तद्भावस्थे च गीयते।
सौवीरो मतिधृत्योस्तु सौवीरी वेगमध्यमा॥

साधारिता च हर्षे स्याद्गान्धारी शोकचिन्तयोः।
अभिलाषितशृङ्गारे मध्यस्थे हृदयेऽथवा॥

संसारतया वाथ गेयो मालवपञ्चमः।
निर्वेदग्लानिशङ्कासु भ्रमे चाभीरिका भवेत्॥

आवेगशङ्कासामर्षगर्वौग्र्ये भावनी मता।
वाङ्गाली च मदोन्मादे सैन्धव्यौत्सुक्यनिद्रयोः॥

गूर्जरी धृतिहर्षादौ अन्धाली मदवृद्धिषु।
कामावस्थां दाक्षिणात्या सर्वामुद्दीपयेत्किल॥

श्रान्तावहित्थमतिषु टक्कभेदोद्भवा मता।

टक्कभेदोद्भवेति तानोद्भवरागो विवक्षितः स्यात्।

श्रावणी मदनावस्था शोकोत्कण्ठासु कथ्यते।
नीचानां मदशङ्कौग्र्यगर्वालस्येषु कैशिकी॥

करुणे दैन्यभूयिष्ठे आहुर्वेदमतीं बुधाः।
पौराल्यध्वश्रमे हर्षगर्वेत्वन्ध्रीं प्रचक्षते॥

औग्र्ये क्रोधे च गान्धारीं सङ्गमे च विभावनीम्।
भिन्नकैशिकमध्यस्य स्थाने वेसरषाडवः॥

पुष्पमोक्षे चावहित्थवृत्यादौ बाह्यषाडवः।
बाह्यन्धा हास्ययोगे च माङ्गल्या वोट्टरागतः॥

मङ्गलाख्योत्सवे हर्षे रागशोभाविधायिनी।
रतेः कामदशानां वा छन्नत्वे टक्ककैशिकः॥

भिन्नषड्जस्य वा स्थाने चिन्ताव्रीडासु मालवी।
अन्ये तु कथयन्त्येनां चेटिकाशबरादिषु॥

रोषे स्यात्कैशिकीबन्धे भये स्याद् द्रामिली शुचिः।
विप्रलम्भे कामदशायोगे मालवकैशिकः॥

शुद्धा स्यात् षड्ज... पौराली शोकगोचरे।
हर्षे हर्षपुरी चैव चिन्तायामर्धवेसरी॥

जुगुप्सायां तु वाङ्गाली सैन्धवी मोहगोचरे।
नर्मस्फुञ्जेपि चाभीरी खण्डिनी गीयते शुचिः॥

अमर्षे गुर्जरी रौद्रकौशिकी मसुरार्चने।
धृतौ मतौ श्रमे पोता स्यात्सिन्धुवलिता भये॥

पोता पञ्चमषाडवरागस्य भाषा।

शार्दूली यज्ञकर्मादौ धृतिस्मृतिमतिष्वपि।
प्रोञ्जः संभोगशृङ्गारे विदूषकपरिक्रमे॥

आवेगे वेसरी दैन्यचिन्तयोश्चूतमञ्जरी।
औत्सुक्ये विश्रमे खेदे छेवाडीं सम्प्रयोजयेत्॥

षड्जमध्यमिका हर्षधृत्योर्मधुरिका तथा।
शोके च रविचन्द्राख्या मदोन्मादेषु पिञ्जरी॥

व्रीडायां भिन्नवलिता चापले च विधीयते।
कर्तव्या भिन्नपौराली हासासूयावितर्कगा॥

द्रामिडी स्यात्पथि भ्रष्टे पार्वत्युत्साहहर्षयोः।
अष्टधा रागगीतिः स्याद्दोषलावित्यजीविता (?)॥

शोकेऽवेक्षेत ककुभो धृतौ काम्भोजिका मता।
मध्यमग्रामिका गर्वे चिन्तालस्येषु माधुरी॥

सालवाहनिका चिन्ताश्रमक्षीवेषु गीयते।
भोगवर्धनिका शोके दैन्ये निर्वेदचिन्तयोः॥

निद्रोन्मादजडत्वेषु सा भाषा ललिता मता।
भिन्नपञ्चमिकां कुर्यात्स्मृतौ धृत्यवहित्थयोः॥

भोगवर्धनिकास्थाने मदे वाभीरिका भवेत्।
विषादचिन्तानिर्वेददैन्यखेदप्रजागरे॥

रगन्ती चैव पौराल्या धीवराद्यवहित्थगा।
प्राकृतेषु सचिन्तेषु गातव्या शकमिश्रिका॥

उक्तरहुलिकस्थाने योज्यते किरणावली।
रेचयन्ती बन्धुवधे विच्छेदे प्रियबान्धवे॥

ललिता धैर्यगाम्भीर्ये हर्षे वाङ्गालवेसरी।
नर्तरागमिहेच्छन्ति यत्र मालवकैशिकः॥

ककुभो वा दैन्यचिन्तालस्यमोहेषु नर्तकी।
वीराभासे तु हास्येन निर्वाहे शक इष्यते॥

शङ्कावहित्थनिर्वेदश्रमे तद्वलिता स्मृता।
नारीलास्यदिदृक्षायामाहुः पञ्चमषाडवम्॥

अस्य भाषे रेवगुप्ता शकास्याथ स्वतन्त्रका।
रागो हर्षमदोत्साहधृतिस्मृत्यादिगोचरः॥

मार्गभ्रष्टेऽथ वीभत्से नीचे भम्माणपञ्चमः।
श्रमशङ्कावितर्केषु कार्या मध्यमभूषिता॥

रूपसाधारकपृक्करागस्थाने स्वरूपकः।
गान्धारपञ्चमस्सोऽपि नीचस्याद्भुतहास्ययोः॥

वीभत्से हास्यवीरागे कर्तव्यष्षड्जकैशिकः।
चिन्तावितर्कयोः सा स्यात्स्त्रीणां मालवपञ्चमः॥

औत्सुक्ये प्रोषिते पत्यौ शङ्कासूयासु भावनी।
इति साधारगीतिः स्यात्सर्वगीतिविमिश्रणात्॥

भूयात्वाल्पत्वतो भावव्यभिचारिगताद्भवेत्।
नानारसेषु यत्रोक्ता विषयस्यैकता स्थितिः॥

ध्रुवादौ मध्यमग्रामः षड्जौ षाडवपञ्चमौ।
गान्धारमध्यदेशाख्यवाचो गान्धारपञ्चमः॥

सूर्ये सौवीरकश्चण्ड्याः कैशिकः पञ्चमोऽपि च।
सर्व एव सुरारातौ भवेन्मालवकैशिकः॥

सर्वे रागा महादेवे सम्यक् सन्तोषकारकाः।
गीती साधारगौडीये नाट्यं तु प्रहरद्वये॥

भिन्ना तु चरमे सैव पूर्वस्मिन्नपि जातुचित्।
नाट्यादभावता न स्यादमङ्गलतमो ह्यसौ॥

चरमे रागगीतिः स्यान्नाट्येन नियमः स्वयम्।
प्रेङ्खोलितो वसन्ते स्यात्तथा मालवपञ्चमी॥

टक्करागोऽथ ककुभो भिन्नषड्जोऽथ कैशिकः।
भिन्नपञ्चमकश्चेति ग्रीष्माद्यृतुषु सम्मतः।

इत्येष कश्यपाद्युक्तो विनियोगो निरूपितः॥

अभिनवगुप्तः

## रागाणां स्त्रीपुंन्नियमः

रागं चेदालपेत्पूर्वं तत्पत्नीं तदनन्तरम्।
अन्यपत्नी न गातव्या नृपाज्ञायां न दूषणम्॥

नारायणः

## राघवः—देशीतालः

दीर्घयुग्मद्रुतावृत्तित्रयं पश्चाद् द्रुतद्वयम्।
विरामान्तं लघु प्रान्ते राघवे च प्रकीर्तितः॥

०ऽऽ०, ०ऽऽ०, ०ऽऽ० ०० ।

श्रीकण्ठः

## राजनारायणः—देशीतालः

राजनारायणे बिन्दुद्वितयं जगणो गुरुः।

० ० । ऽ । ऽ

जगदेकः

रीरी गामा पमगरीसा

## राजकल्याणी—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स ग म ध नि स.

(अव) स नि ध म ग रि स.

मत

## राजपञ्चमः—रागः

मध्यमापञ्चमीजात्योः सञ्जातो राजपञ्चमः।
मध्यमांशो भवेत्पान्तः संपूर्णस्सप्तभिस्स्वरैः॥

मोक्षः

## राजचूडामणिः—देशीतालः

राजचूडामणौ दौद्वौ लाश्चयो द्द्वयं लगौ।

० ० । । । ० ० । ऽ

वेमः

## राजः—देशीतालः

राजताले क्रमात्प्रोक्ता गपौ दौ गलपास्तथा।

ऽ ऽ́ ० ० ऽ । ऽ́

वेमः

सा री री मा गा पा धा पा धा नी सा

**राजधानी**--मेलरागः

कल्याणमेलसंभूता राजधानी सुखप्रदा।
आरोहणे धर्हीना स्याद्वहुकम्पमनोहरा।
आम्रेडितस्वरैर्युक्ताऽवरोहेऽपि गवर्जिता ॥
सर्वदा गेया। अहोबिलः

**राजपक्षिसालुवः**—देशीतालः

ततस्ताले राजपक्षिसालुवे दोन्तरे पयोः।
ऽ ० ऽ गोपतिप्पः

**राजभूपः**—हस्तः

श्मश्रुस्थाने पुंमुखे च हंसास्याख्यकरो यदि।
पुनःपुनश्च चलितो राजभूप इतीरितः।
श्मश्रुस्थाने तु यो हस्तः राज्ञां श्मश्रुनिदर्शने ॥
विनायकः

**राजभ्रमिः**—चारी

पाश्चात्यभाग (गतिः) तिर्यग्वामदक्षिणयोः पदोः।
क्रमेण सोत्प्लुतिर्यत्र भ्रमो राजभ्रमिर्मता ॥
नागमल्लः

**राजमञ्जरी**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग म प ध प नि स.
(अव) स नि ध प म नि ध म ग रि ग म ग स.
मज

**राजमनोहरी**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म प नि स.
(अव) स नि ध प म ग म रि ग रि स.
मज

**राजमार्ताण्डः**—देशीतालः

गुरुर्लघुर्द्रुतस्ताले राजमार्ताडसंज्ञके।
ऽ । ० हम्मीरः

**राजमृगाङ्कः**—देशीतालः

ताले राजमृगाङ्के तु द्रुतो लघुरथो गुरुः।
० । ऽ हम्मीरः

**राजराजविलासः**—देशीतालः

द्विः कृत्वो दलगपै राजराजविलासकः।
० । ऽ ऽ ० । ऽ ऽ कुम्भः

**राजवश्यनी(?)**—मेलरागः (सुवर्णाङ्गीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स ध प म ग स.
मज

**राजवङ्कालः**—देशीतालः

जायते राजवङ्काले लघुद्वन्द्वं गुरुर्द्रुतौ।
। । ऽ ० ० सुधा

**राजवंकोलः**—देशीतालः

राजवंकालमेव कुम्भ एवं पठति।

**राजविद्याधरः**—देशीतालः

लघुर्गुरुद्वयं दौ च राजविद्याधरे मताः।
। ऽ ऽ ० ० वेमः

लघुश्चगोद्रुतौ तालेराजविद्याधराभिधे।
। ऽ ० ० जगदेकः

सा री गा मा ध नि स पा स म.

**राजवीरः**—देशीतालः

राजवीरे गगौ द्लौ।
ऽ ऽ ० । लक्ष्मणः

**राजसूयः**—तानः

(षाडवः—षड्जलोपः)
नि ध प म ग रि कुम्भः

मध्यमग्रामे नारदीयतानः।
स ग म प ध नि नान्यः

**राज्ञामभ्यन्तरस्त्रीजनः**

महादेवी तथा देवी स्वामिनी स्थायिनी तथा।
भोगिनी शिल्पकारी च नाटकीयाऽथनर्तकी ॥
अनुचारी तथायुक्ता तथा च परिचारिका।
तथा सञ्चारिणी चैव तथा प्रेषणकारिका ॥
महत्तरा प्रतीहारी कुमारी स्थविरा तथा।
आयुक्तिकेति भूपानामेष आभ्यन्तरो गणः ॥
भरतः

**रात्तिः**—तानः

षड्जग्रामे निगहीनौडुवः।
रि स ध प स कुम्भः

**रात्रिपरावृत्तिः**—संगीतशृङ्गाराङ्गम्

अपररात्रे रात्रिपरावृत्तिः ।

भोजः

**राद्धम्**—अवनद्धे संयोगः

सिद्धं हि राद्धमित्याहुरितरस्यानपेक्षणात् ।
द्रुतादेव समाप्तत्वादयं राद्धोऽभिधीयते ॥

नान्यः

**राद्धः**—पुष्करवाद्ये संयोगः

समा यतिर्द्रुतश्चैव लयो यत्र भवेदथ ।
तथैवोपरिपाणिश्च राद्धस्त्वेष विधिर्भवेत् ॥

भरतः

**रामकरी**—मेलरागः

रिकोमला गतीव्रा या मतीव्रतरसंयुता ।
धकोमला नितीव्रा च ख्याता रामकरीति सा ॥
प्रातर्गेया ।

अहोबिलः

रामकरी, रामकिरी, रामक्री, रामक्रिया, एते पर्यायाः ।

—रागः

षड्जग्रहांशकन्यासा पूर्णा रामकरी मता ।
मूर्छना प्रथमा ज्ञेया करुणे सा प्रगीयते ॥
रिधत्यक्ताऽथवा प्रोक्ता कैश्चित्पञ्चमवर्जिता ।
त्रिविधा सा समुद्दिष्टा संपूर्णा षाडवौडुवा ॥

दामोदरः

**रामकली**—मेलरागः

(आ) स रि ० ग ० ० ० प ० ध ० ० स.
(अव) स नि ० ० ध प ० ० ० ग ० रि स.

मेललक्षणे

**रामकृतिः**—रागः

षड्जांशन्याससंयुक्ता पञ्चमेन विवर्जिता ।
मन्द्रतारर्षभोत्कृष्टा रम्या रामकृतिर्मता ॥

सोमेश्वरः

**रामक्री**—रागः (वंशे वादनक्रमः)

तारषड्जं ग्रहं कृत्वा तदर्धं वादयेत्ततः ।
द्वितीयस्वरसुच्चार्य तृतीयं तु विलम्बयेत् ॥
द्वितीयं द्रुततां नीत्वा ग्रहार्धं स्थिरतां नयेत् ।
स्थायिनं कम्पयित्वाथ द्रुतौ कुर्यात्परौ स्वरौ ॥
तत्परं च वलीकृत्य ग्रहे न्यासो यदा भवेत् ।
तदा रामकृतेः प्रोक्तं स्वस्थानं प्रथमं बुधैः ॥
स्वरो द्वितीयः स्थायी स्यादेतस्या वंशगोचरे ।
वलीकृत्य—लघूकृत्येत्यर्थः ।

वेमः

**रामकृतिः**—रागः

कोलाहलेति या भाषा टक्करागसमुद्भवा ।
अङ्गं तस्या रामकृतिष्षड्जन्यासांशमध्यमा ।
पञ्चमस्वरहीनेति प्रोक्ता रामकृतिर्भवेत् ॥

हरिः

पञ्चमकावधिकपधा तारामन्द्रा च रचितषड्जांशा ।
षड्जर्षभस्वरोधा रामकृतिस्सग्रहन्यासा ॥

नान्यः

षड्जर्षभोत्कटा षड्जग्रहांशन्याससंयुता ।
आपञ्चमात्तारमन्द्रपधा रामकृतिर्मता ॥

मतङ्गः

टक्करागोद्भवा भाषा योक्ता कोलाहलाख्यया ।
तदङ्गं रामकृतिः षड्जन्यासोपशोभिता ।
मध्यमांशा पहीनाच रसे वीरे नियुज्यते ॥

जगदेकः

—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग म प म ध नि स.
(अव) स नि ध प म ग म स.

मञ्ज

—रागः

षड्जन्यासा मध्यमांशा पञ्चमेन च वर्जिता ।
अङ्गं कोलाहलायाश्च प्रोक्ता रामकृतिर्बुधैः ॥

सोमराजः

—प्रथमरागः

सांशग्रहा रामकृतिस्तदन्ता
प्राज्यौ सरी पञ्चमतारमन्द्रा ।
शृङ्गारसंज्ञे परिगीयतेऽसौ
सविप्रलम्भे करुणे रसे च ॥

मोक्षः

मध्यमांशा न्यासषड्जा गेया कोलाहलोद्भवा ।
आपञ्चमा रामकृतिः वीरे धीरे प्रयुज्यते ॥

मोक्षः

—रागः

आपञ्चमं तारमन्द्रा षड्जन्यासांशकग्रहा।
रिषड्जा पादिका धीरैरेषा रामकृतिर्मता॥

हम्मीरः

कोलाहला। रामकृतिर्मांशा सान्ता पवर्जिता।
भाषाङ्गत्वेप्युपाङ्गत्वं अतिसामीप्यतोऽत्र च।
गेया वीररसे चैवमन्यत्राप्यूह्यतां बुधैः॥

हम्मीरः

रामक्रियारागध्यानम्

वीरासने वसन्तीं तां शरकोदण्डधारिणीम्।
जम्बूफलनिभां देवीं ध्याये रामक्रियां सदा॥

रागसागरः

रामक्री—रागः

क्रियाङ्गा स्याद्रामकृतिः त्रिधाषड्जेन भूषिता।

मदनः

रामक्रीरागध्यानम्

स्वर्णप्रभाभासुरभूषणाढ्या
नीलं निचोलं वपुषा वहन्ती।
कान्ते पदोपान्तमधिष्ठितेऽपि
मानोन्नता रामकिरी प्रदिष्टा॥

इयं सम्पूर्णा। संगीतसरणिः

रामकेली—रागः (सङ्कीर्णः)

गुर्जरी देशिका सङ्गात् रामकेली च जायते।

नारायणः

रामकृतिः—क्रियाङ्गरागः

या षड्जर्षभगान्धारमध्यमैः तारमन्द्रभाक्।
सन्यासांशग्रहष्षड्जः सा रामस्य कृतिस्स्मुता॥
शृङ्गारे विप्रलंभाख्ये करुणे च प्रगीयते।

माधवभट्टः

ऋषभोऽधिक इति रघुनाथः।

—भाषाङ्गरागः

कोलाहला टक्कभाषा तज्जा रामकृतिर्मता।
ग्रहांशमध्या षड्जान्ता तथा पञ्चमवर्जिता।
अह्नः चतुर्थे प्रहरे गेया वीररसे बुधैः॥

मङ्गनाथः

—रागः

प्रहराभ्यन्तरे गेया षड्जन्यासग्रहांशका।
षड्जर्षभघनारंभा तद्ज्ञैरामकृतिर्मता॥

नारायणः

रामबाणः—काडनृत्ताङ्गम्.

पिण्डः स्यादष्टषष्ट्या च युक्तं शतमुदीरितम्।
सप्तमात्रः चक्रतालः प्रतीपो ब्रह्मतालकः॥

द्विर्दशस्यात्सव्यहस्ते वामे षड्वारमेव च।
त्रिवारं दक्षपादे स्यादेकवारं तु वामतः॥

एतेषां योजनं पिण्डे यथा भवति कथ्यते।
अधस्तादूर्ध्वमारभ्य दक्षहस्ते द्रुते द्रुतः॥

द्विद्रुते सरलः प्रोक्तो वामे स्याद्द्वये द्रुतः।
दचतुष्के लघुः प्रोक्तो दक्षपादे ततःपरम्॥

दचतुष्के द्रुतः प्रोक्तो दाष्टके लघुरेव च।
वामपादे द्वादशेषु द्रुतेषु द्रुतमाचरेत्॥

चतुर्विंशतिषु प्रोक्तः सरलः काड ईदृशः।
रामबाणाभिधः प्रोक्तो नटानां नर्तने ऋजुः॥

वेदः

रामप्रिया—मेलकर्ता (रागः)

स रि ग ० ० म प ० ध ० नि ० ० स.

मध

राममनोहरी—मेलरागः (रामप्रियमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध प म ध म ग रि स.

मध

राममनोहरी—मेलरागः (सरसाङ्गीमेलजन्यः)

(आ) स ग म प नि स.
(अव) स नि ध प म ग स.

मध

रामलीरागध्यानम्

तालीदलताटङ्कां वलित्रयसुमध्यमां सुनीलाङ्गीम्।
माधवपूजानिरतां पुस्तकहस्तां च रामलीं ध्याये॥

रागसागरः

रामसेतुस्तम्भस्थापकः—देशीतालः

ततस्ताले रामसेतुस्तम्भस्थापकसंज्ञिते।
प्लुतपुंखौ पञ्चकृत्वो मध्ये व्यञ्जनयोर्मतौ॥

०ऽ।ऽ।ऽ।ऽ।ऽ।०

गोपतिः

रामा—गीतालङ्कार (एकतालीभेदः)

द्रुतनेकं भवेद्यत्र तालोऽयं खण्डसंज्ञकः ।
रामा तेनैकताली तु गीयते गायनोत्तमैः ॥

संगीतसारः

रामाक्रीडम्

ऋतुवर्णनसंयुक्तं रामाक्रीडं तु भाष्यते ।

वेमः

रामामात्यः

स्वरमेलकलानिधिकारः । अयं विजयनगराधीशस्य अलियरामराजस्य मुख्याश्रितः सेनापतिः कोण्डवीटिनगराधीश्वरः वयकार (वाग्गेयकार) विरुदान्वितः महाकविरान्ध्रभाषायाम् । कालः क्रै. प. १५५०। कल्लिनाथदौहित्रोऽयम् ।

राममनोहरी—मेलरागः (मालवगौलमेलजोऽयं रागः)

रागे रामामनोहारे आरोहे धैवतं त्यजेत् ।
उभयत्रापि ऋषभं त्यजेदौडवषाडवे ॥

अयं रागः धैवतर्षभहीन औडवः । रित्यागे षाडवः ।

परमेश्वरः

रायभारहुरुमयी—स्थलतालनृत्तम्

स्थलस्थो रायबङ्गाले विना सूलं कृतो यदा ।
तन्मध्ये तिर्यगूर्ध्वं चेद्वलनेन यदा भवेत् ।
पदा वामेन निपतेद्रायभारहुरुमयी ॥

वेदः

रायबङ्गालः—देशीनृत्तम्

सूलं बध्वैकपादेन दक्षपादेन कुट्टनम् ।
तत उत्प्लुत्य चरणावूर्ध्वं च विरलीकृतौ ॥
अन्तराले भ्रामयित्वा निपतेद्धरणीतले ।
रायबङ्गालष्वाडोऽयं कथितः पूर्वसूरिभिः ॥

वेदः

राला

लोकप्रसिद्धो निर्यासविशेषः ।

रावणहस्ता—वीणा

वितस्तिसंमितो दैर्घ्ये दण्डो रावणहस्तक ।
पञ्चाङ्गुलपरीणाहो व्याप्तैकमुखरन्ध्रयुक् ॥
अग्रादङ्गुलदेशे तु शंकर्धं सुषिरं भवेत् ।
तदूर्ध्वं तन्त्रिकारन्ध्रं पूर्ववत्परिकल्पयेत् ॥
तदाङ्गुलायतां कम्रां चतुरङ्गुलमानतात् ।
रन्ध्रे प्रविश्यावशिष्टां नालिकेरस्य कर्परे ॥
तिरश्चीनोभयमुखे रन्ध्रविन्यस्ततन्मुखे ।
बध्नीयात् सुदृढीकृत्य नादनिष्पत्तिहेतवे ॥
कर्परस्योर्ध्वरन्ध्रे तु चतुरङ्गुलविस्तृते ।
शुष्कचर्मावपि हिते जीवां संस्थाप्य वैणवीम् ॥
तिर्यग्ग्रन्थिविनिर्यातां कम्राग्रे बन्धयेद्दृढम् ।
कम्रिकागवलो वास्याद्वा वेणुसमुत्थिता ॥
अश्ववालकृतां तन्त्रीं तत्रैवाबद्ध्य सारयेत् ।
रन्ध्रे प्रवेश्यतां तन्त्रीं योजयेच्छंकुना दृढम् ।
यावत्तन्त्री दृढा तावत् तं शंकुं भ्रामयेच्छनैः ॥
वामहस्ताङ्गुष्ठकेन शंकुमूलं निपीड्य च ।
तन्त्रिकायां निवेशान्याश्चतस्रश्चाङ्गुलीर्दृढम् ॥
कोणं दक्षिणहस्तेन वादनार्थं यथा पुरा ।
धृत्वा वादनतत्त्वज्ञो वादयेत्तु यथाविधि ॥
पूर्वं स्वरगताध्याये ये स्वराः पूर्वपक्षतः ।
रावणीयमतज्ञेन कुम्भकर्णेन भूभुजा ॥
ते चत्वारश्चतसृभिरङ्गुलीभिः क्रमादिह ।
ज्ञेयं रावणहस्तेऽत्र द्विगुणा रावणोक्तितः ॥
रावणारिप्रसादात्स परसाम्राज्यसंपदा ।
अरातिरावणेनायमुक्तो रावणहस्तकः ॥

कुम्भः

रावणहस्ता—वीणा

रावणहस्ताया उत्पत्तिस्तत्ताध्याये नान्येन सम्यक्कथिता तस्यायं सङ्ग्रहः । वारिधिमध्ये मन्दराचलं शङ्करमुद्दिश्य रावणस्तपस्तेपे । तेनातुष्टं शङ्करं दशाननस्तोषयितुं स्वशिरांसि नव निकृत्य समिद्धदहने जुहाव । तेनाप्यतुष्टं भगवन्तं केन मार्गेण तोषयामीति चिन्तयन्नासीत् । समीपवने वेणोस्सङ्घर्षोज्जातं श्रुतिस्वरादिकं श्रुत्वा गानेनाहं तं प्रीणयामीति निश्चित्य प्रकोष्ठान्मांसमुत्कृष्य स्नायुमाकृष्य करडकोशेन तं हत्वा भगवन्तमुपावीणयत् । सोऽपि भगवान्प्रसन्नो भूत्वा वरान् दत्त्वा प्रसङ्गेन तस्य च वाद्यस्य रावणहस्तमिति नामाप्यकरोत् ।

मान्यः

रावणार्चितः देशीतालः

। ऽऽऽऽऽऽऽऽऽऽ ऽ॑ ॥ ऽ॑ ०० ॥ ॥ ऽ॑ ऽ॑ ऽ ०००००० ऽऽऽ॑ ऽ॑ ००००

हम्मीरः

रासकः—प्रबन्धः

आदितालेन सहितो रहितो गमकैर्भवेत् ।
शेषो झोम्पटवद्ज्ञेयो रासकश्चेति लक्षितः ॥

हरिपालः

गणैर्वर्णैश्च मात्राभिः निबद्धस्स्यादसौ त्रिधा।
छगणैर्यस्य रासस्य स तु सारलयो मतः॥
पगणे चरणे यस्स्यात्सहंसतिलको भवेत्।
चगणे चरणो यस्य रतिरङ्गस्स उच्यते॥
तगणाद्यैस्तु मदनावतारः परिकीर्तितः।
मात्रागणैर्विरचितो रास इत्थं चतुर्विधः।
खण्डाक्षरादि............वर्धनात्॥
पञ्चविंशतिसंख्याता रासका वर्णसंभवाः।
त्रिपञ्चाशन्मात्रिकाः स्युः चरणादष्टमात्रकात्॥
षष्टिमात्रावधिर्ज्ञेया रासपादास्सतालकाः।
आलापेन न चोद्ग्राह्यं केचिदिच्छन्ति रासकम्॥

लेखकापभ्रंशभूयस्त्वादिदं लक्षणं संवादान्तरं विना न ग्राह्यम्।

पण्डितमण्डली

—गीतालङ्कारः

चतुर्धा रासकः प्रोक्तो गीतवादित्रकोविदैः।
विनोदो वरदो मन्द्रः कम्बुजश्चेति कीर्तितः॥

सङ्गीतसारः

## रासकम्

लासिकास्समचारीकाः प्रतिसीरा पदान्तरात्।
प्रविश्य द्वन्द्वशो रङ्गं पार्श्वयोस्सह पातनैः॥
ऋतूचितेन रागेण गीयमानेषु गायकैः।
द्विपद्यादिप्रबन्धेषु देशीसूडस्थितेषु च॥
गीतेषूद्गीयमानेषु वाद्येषु प्रस्तुतेष्वपि।
खण्डमण्डललास्याङ्गचारीयोगमनोहरम्॥
नानाबन्धमनोहारिगीतार्थाभिनयान्वितम्।
युक्तं प्रवेशनिष्क्रामप्रसारैश्च विसन्धिभिः॥
छोटिकाभिर्हस्ततालैः वाद्यताललयानुगैः।
ललितं नर्तनं कुर्युः नर्तक्यो नयनोत्सवाः॥

वेमः

षोडश द्वादशाष्टौ वा यस्मिन्नृत्यन्ति नायिकाः।
पिण्डीबन्धादिविन्यासैः रासकं तदुदाहृतम्॥
पिण्डानां तु भवेत्पिण्डी गुम्भनाच्छृङ्खला भवेत्।
भेदनाद्भेद्यको जातो लताजालोपनाहतः॥
एते नृत्तात्मना कार्या नाट्यवन्तः क्रियाविधौ।
सुकुमारोद्धतैरङ्गैर्नायिकाभिर्विलक्षणाः॥
वाक्यस्यावधयो ह्येते पिण्ड्याद्या दृश्यजातयः।
न पदेनाभिधीयन्ते ह्यनुकार्यानुकारिणः॥

कामिनीभिर्भुवो भर्तुश्चेष्टितं यत्र नृत्यते।
रागाद्वसन्तमालोक्य स ज्ञेयो नाट्यरासकः॥
चर्चरीमिति तामाहुः वर्णतालेन यत्र तु।
प्रविशेत्कामिनीयुग्मं समचार्यादिशिक्षितम्॥
वामदक्षिणसञ्चारैरङ्गैस्तत्तत्परिष्कृतम्।
ततस्तदेव वर्णान्त आलीढद्वयसंस्थितम्॥
छोटिकाभिर्द्रुतं तालं वादकानां प्रदर्शयेत्।
पञ्चघातुकसंज्ञार्थः छेदस्तस्मात्प्रवर्तते॥
नृत्तेन विभजेत्खण्डैश्चतुर्भिस्त्रिभिरेव वा।
अन्योन्याङ्गिकसञ्चारैः हस्ततालैर्मिथः कृतैः॥
परिक्रम्य च निष्क्रामेत्ततोऽन्यद्वितयं विशेत्।
एककालस्तु निस्सन्धिः प्रवेशो निर्गमस्तयोः॥
पुष्पाञ्जलिप्रयोगस्तु मात्रातालेन योजयेत्।
उभयोः पार्श्वयोः पश्चात् पात्राणि प्रविशन्ति च॥
बद्धा पणवतालेन रथ्यावर्णादिवर्णकैः।
शुष्कगीतप्रयोगेण ततो गायन्ति नायिकाः।
लताभिर्भेद्यकैर्गुल्मैः नानानृत्तप्रदर्शकैः॥
पातैश्चैकत्र संयुक्तं पिण्डीबन्धं तु कारयेत्।
ततो मल्लाभिधं तालं शुष्कवर्णप्रयोगतः॥
मुरजाक्षरवाद्यं तु हन्याद्दण्डं तु दण्डकैः।
एवं नृत्तक्रमेणाद्यो ह्यपसारस्समाप्यते॥
अपसारत्रयं चान्यदेवमेव प्रकल्पयेत्।
तत्रापि पूर्ववन्नृत्तं कामतस्तु लयक्रमः॥
कथयेद्रासकस्यान्ते शुभार्थं वचनक्रमम्।
ब्रह्मादुग्धमहोदधौ सुरगणैः पीत्वामृतं यस्तथा
पिण्डी शृङ्खलिकाविशेषविहितो युक्तो लताभेद्यकैः।
चित्रातोद्यपरिक्रमैर्लययुतो भेदद्वयालङ्कृतः
चारीखण्डसुमण्डलैरनुगतस्सोयं स्मृतो रासकः॥

शारदातनयः

लताशृङ्खलाभेद्यकगुल्माः नृत्तविशेषाः। चर्चरी प्रबन्धः। वर्णः मल्लतालौ। खण्डः करणसमूहः। तत्र स्थाने द्रष्टव्यम्।

—नृत्तरूपकम्

सूत्रधारविहीनं तु स्यादेकाङ्कं तु रासकम्।
उत्कृष्टनान्दीसंयुक्तं कैशिकीभारतीयुतम्॥
त्रिसन्धिकं पञ्चपात्रं युक्तं भाषाविभाषयोः।
वीथ्यन्तमण्डितं मुख्यनायिकं ख्यातनायकम्॥

मूर्खोपदेशसंरंभ गर्भामर्शविवर्जितम् ।
उदात्तभावविन्यासमुत्तरोत्तरसंश्रितम् ।
केचिद्वदन्ति गोपानां क्रीडारासकमित्यपि ॥

शुभङ्करः

### रासकम्

पिण्ड्यादिबन्धलीलाभिः षोडश द्वादशाष्ट वा ।
यत्र नृत्यन्ति नर्तक्यः तद्रासकमुदाहृतम् ॥

पिण्ड्यादिति । पिण्डीबन्धशब्दे द्रष्टव्यम् ।

अनेकनर्तकीयोज्यं चित्रताललयान्वितम् ।
आचतुष्षष्टियुगलाद्रासकं मसृणोद्धतम् ॥

वेमः

### रासकभेदाः

रासकस्य प्रभेदास्तु रासकं नाट्यरासकम् ।
चर्चरीतित्रयः प्रोक्ताः.........

वेमः

### रासा—मात्रावृत्तम्

चतुर्मात्राखयः ग ग.

विरहाङ्कः

### राहुलाचार्यः

वङ्गेष्वयं ताम्रलिप्तिमध्यासीति ज्ञायते । कालः ६००. अयं नाट्यशास्त्रस्य वार्तिकरूपव्याख्यां रचयामास ।

### राहुहस्तः

शुकतुण्डौ मिश्रिताङ्गौ राहोरर्थे निरूपितौ ।

श्रृङ्गारः

### रि—ऋषभस्वरः

### रिक्तपूर्णम्—उदरम्

अन्वर्थं रिक्तपूर्णं स्यादामरोगे प्रयुज्यते ।

विप्रदासः

उदाने विकृते कोशे श्रमे श्वासे तथैव च ।
रिक्तपूरं प्रयोक्तव्यं जठरं नाट्यवेदिभिः ॥

सोमेश्वरः

### रिक्ता—श्रुतिः

निषादस्य द्वितीया श्रुतिः ।

मनूपः

### रिगोणी—वाद्यप्रबन्धः

यत्र खण्डत्रयं शुद्धैः कूटैर्व्यस्तैस्समस्तकैः ।
पाटैर्विरचितं यद्वा स्याद्वर्णसरनिर्मितम् ॥

युक्तं चोपशमेन द्विः पृथगन्तानुषङ्गिणः ।
वादकारब्धबहुलकोलाहलसमाकुलम् ॥

उद्धतध्वनिसंबन्धमन्ते च छण्डणान्वितम् ।
सा रिगोणीति कथिता सङ्गीतज्ञैर्मनीषिभिः ॥

प्रारम्भे स्याद्विकल्पेन कार्यमुद्ग्रवणं बुधैः ।
दीप्ते नृत्ते प्रयोक्तव्यो रिगोणी वाद्यकोविदैः ॥

तदङ्गैरुपशमः कार्यो ललिते नृत्तकर्मणि ।
दीप्तनृत्तं सोपशमच्छण्डणेऽत्यन्तखण्डके ॥

वेमः

उदाहरणं रत्नाकरे द्रष्टव्यम् ।

प्रत्येकं द्विःप्रयुक्तेनोपशमेनान्तयोगिना ।
युक्तं खण्डत्रयं शुद्धैःकूटैः खण्डैश्च निर्मितम् ॥

पाटैर्व्यस्तैस्समस्तैश्च बद्धं वर्णसरेण वा ।
यस्यां स्याद्वादकस्थूलमिति कोलाहलाकुलम् ॥

छण्डणान्ता रिगोणी स्यादुद्धती ध्वनिमुत्तमम् ।
अस्यामुद्ग्रवणं कार्यं वैकल्पिकमुपक्रमे ॥

दीप्तनृत्ते भवेदेषोपशमाल्ललिता मता ।
ललितं यद्युद्ग्रवणं तदा तल्ललिते भवेत् ।
अन्त्यखण्डात्सोपशमच्छण्डणा दीप्तनर्तनम् ॥

शार्ङ्गः

### रिङ्गावलिः—मेलरागः ( मायामालवगौलमेलजन्यः )

( आ ) स रि ग म प ध नि स.
( अव ) स नि ध नि प ध प म ग रि ग म ग स.

मल

### रिभितः—करणधातुः

धातौ रिभितसंज्ञे तु लद्वयं गान्तगं भवेत् ।

कुम्भः

यत्रादौ तौ प्रहारौ द्वौ लघू स्यातां गुरुस्ततः ।
तृतीयो भवतीत्येवं रिभितो धातुरुच्यते ॥

नान्यः

रिभितो द्वौ लघू गान्तौ ।

शार्ङ्गः

### रीतिः—रागः

षड्जग्रहा पञ्चमकांशयुक्तान्यासस्थतारध्वनिमध्यमायाम् ।
गान्धारमल्पामपि षड्जमन्द्रां पूर्णस्वरां रीतिमुदाहरन्ति ॥

नान्यः

षड्जग्रहा पञ्चमांशा मन्यासा तारमध्यमा ।
पूर्णाल्पा गसमन्द्रा च रीतिरित्यभिधीयते ॥

मतङ्गः

रीतिकैशिकी—रागः

शुद्धपञ्चमभाषाङ्गं संपूर्णा मन्द्रमध्यमा ।
समस्वरसमायुक्ता तारषड्जविभूषिता ॥
पञ्चमांशग्रहन्यासा कैशिकी रीतिकैशिकी ।
महोत्सवे प्रयोगोऽस्या दर्शितः कश्यपादिभिः ॥

जगदेकः

अस्य श्लोकस्य केरलभाषाव्याख्यायां "तारस्वरो वृषभस्येति" पठितम् ।

—देशीतालः

रीतिताले लघुः कार्यो गुरुश्चैकः प्रकीर्तितः ।
। ऽ

नन्दी

रीतिगौलं—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग म नि ध नि स.
(अव) स नि ध म ग म प म ग रि स.

मज्ञ

रीतिगौलः—मेलरागः

रीतिगौले समारोहे ऋषभं वर्जयेत्ततः ।
अवरोहे पञ्चमं तु वर्जयेदेप षाडवः ॥
भैरवीमेलजोऽयं रागः ।

परमेश्वरः

रीतिगौलस्तु संपूर्णो धैवतादिकमूर्छनः ।
अवरोहे पवर्ज्यः स्यान्न्यासांशसरिभूषितः ॥
तृतीयप्रहरोत्तरगेयः ।

अहोबिलः

रुक्—सन्ध्यन्तरम्

प्रहारादिप्रभवा वेदना। यथा—शक्त्यङ्के लक्ष्मणः। अन्येऽपि मनःक्षोभजननमनिमित्तदर्शनमपि रुजापक्ष एव व्याचक्षते ।

यथा—शुष्कद्रुमगतो रौति आदित्यभिमुखं स्थितः ।
कथयत्यभिमिसं मे वायसो ज्ञानपण्डितः ॥

इति चारुदत्तवाक्यम् ।

सागरः

श्लोकोऽयं मृच्छकटीमातृकासु न दृश्यते। भोजोऽपि मृच्छकटीश्लोक इत्युदाहरति ।

रुचकः—मणिबन्धभूषणम्

करगोलके विततः

रुचिरमुखी (ध्रुवावृत्तम्) एकादशाक्षरम्

कमलदलाक्षी नाम ध्रुवावृत्तम् ।

रुचिरा—ध्रुवावृत्तम् (नवाक्षरम्)

आद्ये चतुर्थमपि चान्त्ये दीर्घाणि यत्र चरणे ।
प्रावेशिकी तु बृहती सा नाम्ना तथैव रुचिराख्या ॥
राहूपगःअहदसोहं ।

भरतः

मध्यमोत्तमपात्राणां रुचिरा करुणे रसे ।
ताले युग्मोपभङ्गोऽयं ककुभेन समन्विता ॥

नान्यः

युग्मोपभङ्गः । चच्चत्पुटतालस्योपभङ्गास्तालाः ।
तेष्वन्यतमः । उपभङ्गलक्षणं लयताललक्षणे दत्तम् ॥

रुञ्जा

अष्टादशाङ्गुला दैर्घ्या रुञ्जा द्रुततरा समा ।
एकादशाङ्गुला वक्त्रे कवलानद्धकुण्डले ॥
वामतुन्दे प्रकर्तव्यं तदन्ते कुण्डलीद्वयम् ।
तन्त्रीभिर्धारितं सम्यग्मुराकार्थं तु वादकैः ॥
रुकारो मुख्य झङ्कारो बहुलो वादने भवेत् ।
रुकाररञ्जिता यस्मात्तस्माद्रुञ्जाप्रकीर्तिता ॥

सोमेश्वरः

रुदितभेदाः—(रोदनभेदाः)

स्यात्कोपाद्रुदितस्वरः सरभसो दैन्यात्तथा शीफरो
विच्छिन्नः प्रणयाद्भयेन विरसो हर्षोदयाद्गद्गदः ।
मन्ये क्रोधवशं गता प्रणयिनी ह्येषा सदैन्या तथा
प्रारम्भे रभसं विरामबहुलं मन्दं तथा रोदिति ॥

ईश्वरदत्तः

रुद्रघण्टारवः—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग रि म प म ध नि प स.
(अव) स नि ध म ग स.

मज्ञ

रुद्रपञ्चमः—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स ग म नि ध स.
(अव) स नि ध म ग रि स.

मज्ञ

रुद्रभूषणः—वाद्यप्रबन्धः

यथा पृथक् पृथग्वाद्यान्नवखण्डान्मुरञ्जकान् ।
नातिह्रस्वान्नदीर्घांश्च कृत्वा सम्यक् ततोऽपरम् ॥

हस्तखण्डं पृथग्वाद्यं रक्तं यत्पल्लवाभिधम् ।
एवं तु प्रतिखण्डान्ते योजयेच्च ततःपरम् ॥
विचित्रवाद्यसंपन्नं दीर्घं कलशखण्डकम् ।
अन्ते कुर्यात्तदा चाहुर्मुनयो रुद्रभूषणम् ॥
तमेव ताण्डिकां सर्वे दलशृङ्गारकं जगुः ।
स्रोतोवहा यतिश्चात्र तालस्तु प्रेप्सितो मतः ॥
कलशः कलासः अथवा शेखरः । श्रीकण्ठः

रुद्रवंशः

रुद्रवंशस्य दण्डोऽत्र सप्तचैस्त्रिभिरङ्गुलैः ।
रुद्राङ्गुलैर्मितं मध्यं द्वाररन्ध्रास्यरन्ध्रयोः ॥
सार्धाङ्गुलं पृथक्स्थानं रन्ध्रसप्तान्तरालगम् ।
दशाङ्गुलं सन्निधयं सम्भूयान्तरतो मितिः ।
आदित्यलक्ष्मणाख्यातं शेषं लक्षणमस्य तु ॥
कुम्भः

रुद्रवीणा

सार्धैकादशमुष्टिर्दण्डः क्रियतेऽत्र तदुपरि च हित्वा ।
अङ्गुलपञ्चकमेकं रन्ध्रे तिर्यक् चलच्छङ्कुः ॥
ऊर्ध्वं तन्त्री सुषिरवदपरं षष्ठेऽङ्गुले त्वचलशङ्कुः ।
तिर्यङ्मात्रं तस्मान्मेढक ऊर्ध्वोऽङ्गुलात्परतः ॥
तुम्बं तदधोऽङ्गुलतोऽष्टाविंशत्यङ्गुलान्तरेणान्यत् ।
नाभिद्वयं सुवृत्तं सच्छिद्रं त्र्यङ्गुलोच्चततम् ॥
ककुभो द्व्यङ्गुलमुखश्चतुरङ्गुलदीर्घविपुलमसृणशिराः ।
वीणादण्डान्तर्गतदण्डोऽधः प्रक्ष उत्कीलः ॥
मेरोरुच्चः किञ्चित्स्वदक्षिणतुरीयतन्त्रिकास्थाने ।
उच्चोच्चान्यन्निपदः स चतुरयःपत्रमूर्धांशः ॥
दृढवेणुजाणुजीवोऽथ सारिकामेरुककुभवद्विपुलाः ।
एकादशाङ्गुललघुसारीदशकक्षमापट्टी ॥
तुम्बाग्रमनुगताग्रा बन्धार्थं दोरका दृढास्त्रिगुणाः ।
तुम्बादिबन्धनादि तु लोकात्स्याद्रुद्रवीणेति ॥
सोमनाथः

दण्डोऽस्या रुद्रवीणाया मुष्ट्येकादशसम्मितः ।
भ्रमदङ्गुष्ठमामितं सुषिरं तस्य कीर्तितम् ॥
दण्डस्योभयतो देयं कांस्यसंवरकद्वयम् ।
पश्चात्संवरकं चात्र छत्राकृतिशिरो भवेत् ॥
दण्डस्य वेष्टनं सार्धपञ्चाङ्गुलमिहोदितम् ।
तस्मि......तस्याः कर्तव्या सुन्दराकृतिः ॥

ककुभो रुद्रवीणाया त्रिशिराः परिकीर्तितः ।
ऊर्ध्वे शिरसि दातव्या लोहपत्रिसमन्विता ॥
मूलतन्त्रीस्तदुपरि न्यसेल्लौहीं ततःपरम् ।
दक्षिणे शिरसि न्यस्येच्छ्रुतितन्त्रीद्वयं क्रमात् ॥
एवं त्रिककुभं तत्र वीणादण्डे निवेशयेत् ।
अङ्गुलोच्चं तूर्ध्वशिरोऽङ्गुष्ठमात्रं तु पार्श्वकम् ॥
सप्ताङ्गुलान्तरं तस्मात्तुम्बमन्यं निवेशयेत् ।
अन्यं ततश्चतुस्त्रिंशदङ्गुलान्तरमाक्षिपेत् ॥
अष्टादशाङ्गुलमुखं चक्रत्वे स्वरगर्भकम् ।
सकुम्भमुन्नतं कान्तं वर्तुलं तुम्बयुग्मकम् ॥
औन्नत्ये किञ्चिदधिकमनयोश्च प्रशस्यते ।
अर्धाङ्गुलान्तरं पश्चात्तुम्बं संस्थापयेद्बुधः ॥
दण्डपृष्ठे रन्ध्रयुतेऽस्याः सरस्वतिकां शुभाम् ।
संवरद्व्यङ्गुलोपेतां छत्राकृतिशिरोयुताम् ॥
ततस्सार्धद्व्यङ्गुलान्ते एकां मोटनिकां न्यसेत् ।
पञ्चाङ्गुलान्तरं त्वन्यामग्रे वेष्टविलान्विताम् ॥
पूर्वमोटनिकावेष्टरन्ध्रमेकं समन्ततः ।
लोकशङ्कुस्तु कर्तव्यो वर्तुलो वडिशाकृतिः ॥
तद्रन्धनगुणे तस्मिन्वेष्टरन्ध्रे निवेशयेत् ।
तत्परायां तु मोटन्यां वेष्टरन्ध्रे कुशं क्षिपेत् ॥
तन्मोटिनी वृत्तरन्ध्रसदृशं दण्डरन्ध्रकम् ।
सुयन्त्रितं तु तत्रैव बध्नीयान्मुखतन्त्रिकाम् ॥
तावच्च भ्रामयेत्पूर्वां मोटिनीं च शनैश्शनैः ।
न यावदेति स्वस्थानं तन्त्री यन्त्रविशारदः ॥
अस्यास्त्वष्टादश प्रोक्ताः सारिकाः पूर्वसूरिभिः ।
तासां बृहत्तरा अष्टौ दश क्षुद्राः प्रकीर्तिताः ॥
एतास्तु तारवादिन्यः तिष्ठन्ति पदिकोपरि ।
वितस्तिमात्रपदिकाङ्गुष्ठोच्चोऽयास्तु गर्भकः ॥
तावच्छून्यस्तु कर्तव्यो यथादण्डे स्थितो भवेत् ।
मदनस्य च सिक्थस्य योगेन सुदृढीकृता ॥
बृहतीनां तु सारीणां खननीयं तलं क्रमात् ।
एतास्तु सर्वावयवैः कथितास्त्र्यङ्गुला बुधैः ॥
स्थाप्या दण्डस्य ताः पृष्ठे यथा रागस्वरं पुनः ।
मदनस्य च सिक्तस्य योगेन सुदृढीकृताः ॥
सर्वासां लोहकलिका मस्तके स्युस्सुयन्त्रिताः ।
एकाङ्गुलोच्चाः क्षुद्राः स्युरिति सारीविनिर्णयः ॥

एवं विनिर्मिता रुद्रवीणा जनमनोहरा।
अस्याश्शिक्षा तु कर्तव्या दाक्षिणात्योपदेशतः ॥

नारायणः

वीणादण्डप्रमाणं तु मुष्टिद्वादशभिः स्मृतम्।
तस्मिन्मुष्टित्रयं वामे त्यक्त्वा मेरुर्विधीयते ॥
सोऽपि द्व्यङ्गुलमानेन मेरुरुन्नत उच्यते।
ततोऽपि तिलमात्रेण सम्मतः कर्दे उन्नतः॥
उन्नतावपि दीर्घौ स्ताश्चतुरङ्गुलमानतः।
स्थानकान्यपि चत्वारि कर्षे तु पवमानतः॥
क्रमादुच्चतराणि स्युरानुकूल्यानि वादने।
तत्कर्देदक्षिणे भागे दण्डास्यं योजयेद्बुधः॥
मेरुतोऽङ्गलिनाप्यन्तो मुष्टियुग्मेन कर्दतः।
मेरोरधः प्रदेशे तु तुम्बौ द्वौ योजयेद्बुधः॥
दण्डतुम्बकयोर्मध्ये तुम्बकौ दण्डकारिणौ।
वक्ष्यते मौर्णिकानां च मेरुतो वामपार्श्वयोः॥
तन्त्र्यस्तु स्वरसिद्ध्यर्थं चतस्रो मेरुकर्दयोः।
वदन्त्याद्याः सस्वरादीन् पस्वरादीन् द्वितीयकाः॥
द्वे अग्रे अवशिष्टे स्तो मन्द्रस्योक्ता अधो पुनः।
दण्डस्य दक्षिणे भागे तिस्रोऽन्यास्स्वदेशतः॥
स्वरसंवादसिद्ध्यर्थं ताश्च स्युः श्रुतिसंज्ञया।
मेरुस्थास्त्वष्टमांशेन स्थौल्यं स्यादुत्तरोत्तरम्॥
तन्त्रीणां तत्र सम्बन्धो दोरकैरपि सङ्गतः।
शालेस्तुपाप्रमाणेन पर्कोऽशेन निर्मिता॥
अथवा पट्टसूत्रेण या सा जीवा सुखप्रदा।
कर्दतन्त्री मध्यदेशे तां जीवां स्थापयेद्बुधः॥
सा शैथिल्यं समुत्पाद्य करोति मधुरध्वनिम्।
सारिकायाश्च संबन्धो मधूच्छिष्टेन सम्मतः।
एतल्लक्षणयुक्ता या रुद्रवीणेति कथ्यते॥

अहोबिलः

रुद्रवीणावादनक्रमः

किन्नर्या रुद्रवीणायाः सांप्रतं वादनक्रमः।
दिङ्मात्रदर्शनार्थन्तु कथ्यते वेमभूभुजा॥
तत्रादौ मध्यमादेस्तु कथ्यते वादनक्रमः।
विधाय स्थायिनं मन्द्रं मध्यमं ...... ॥
............ समारुह्य यथाक्रमम्।
षड्जतरस्थायिपर्यन्तानेतान्पञ्चस्वरान्पुनः॥
वादयित्वावरोहेण ताडयेद्धैवतं ततः।
इत्येतं मध्यमादेस्तु स्वस्थानं प्रथमं नतम्॥
स्वस्थानत्रितयेऽन्यस्मिन्नारभ्य स्थायिनं स्वरम्।
द्व्यर्धमर्धस्थितं चैव द्विगुणं च स्वरं क्रमात्॥
समारुह्य पुनः कुर्यात्स्वस्थानं प्रथमं यदि।
मध्यमादेरभिव्यक्तिस्तदा सञ्जायते स्फुटम्॥
पूर्वंपूर्वं स्वराभावे षाडवौडुवकारणात्।
स्वरान्परान्समारोहेत्स्वस्थानेषु यथाक्रमम्॥
सर्वेषामपि रागाणामेष साधारणो विधिः।
एतास्तु किन्नरीः प्राहुः रुद्रवीणाख्यया जनाः॥

वेमः

एताः। बृहती, मध्यमा, लघ्वी, किन्नर्यः।

रुद्रसावेरी—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स म ग म प ध स.
(अव) स नि ध प नि ध म ग रि ग म स.

मञ्ज

रुद्रहासः—रागः

षड्जांशकग्रहधरो धृतसान्द्रमध्यो,ऽपन्यास...पञ्चमरञ्जितान्तः।
त्यक्तस्तथर्षभनिषादरवः...,तारास्पदस्फुरितधैवतरावरम्यः॥
षड्जर्षभमूर्छांतो भीमस्य प्रियतानवान्।
स्मराधिदेवश्शृङ्गारे रुद्रहासः प्रकीर्तितः॥

नान्यः

षड्जग्रहांशयुक्तो सापन्यासोऽथ पञ्चमान्तश्च।
ऋषभनिषादत्यक्तः सरुद्रहासो धतारस्स्यात्॥

मतङ्गः

रुद्राभिषेकः—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स ग म प नि स.
(अव) स ध म ग रि स.

मञ्ज

रुरुः—स्वरजातिः
त्रिषष्टिसंख्यैस्संप्रोक्ता रुरुरित्येवमीरितः।

औमापतम्

रूक्षम्—दर्शनम्
तत्तद्वर्णप्रभाहीनं यत्तद्रूक्षमिति स्मृतम्।

शारदातनयः

रूपम्—गर्भसन्ध्यङ्गम्
चित्रार्थसमवाये तु वितर्को रूपमिष्यते।

भरतः

यथा— रत्नावल्यां द्वितीयेऽङ्के "प्रसीदेति ब्रूयामिदमसति कोपे न घटते" इत्यादिराजवचने विचित्रार्थानां समवाये संभावने सर्वविषय एव विरुद्धस्तर्कः इदं नोचितं इदं नोचितं इति प्रतिर्युक्तिपर्यन्तः। युक्तिस्तु नियतप्रतिपत्तिपर्यन्तेति विशेषः। रूपमिति चानियताकृतिरुच्यते। तत्र विशेषप्रतिपत्तिरिहास्त्युपचाराद्व्यपदेशः।

अभिनवगुप्तः

नानारूपाणामर्थानां संशयोऽनवधारणं रूपमिव रूपम्। अनियतो ह्याकारो रूपमुच्यते। मुखसन्ध्यङ्गात् युक्तेः कृत्यविचाररूपत्वेन नियताकाराया अस्य भेदः। अन्ये त्वधीयते रूपं वितर्कवद्वाक्यमिति। अन्ये तु चित्रार्थं रूपकं वच इति पठन्ति। यथा— वेण्यां चित्रसङ्ग्रामवर्णनम्।

रामचन्द्रः

रूपं सन्देहकृद्वचः। सिंगः

—मृदङ्गे करणभेदः

विभक्तकरणं रूपम्। यथा— दं घं दं घे घं किटिमाकिटि माघटत्ति घटमत्थि घट्टुगुटु किटिकिट क्रिहं दोघे क्रु इति।

भरतः

—अवनद्धे करणम्

क्रिया यत्र विभक्ता स्यान्मुरजे पणवे तथा।
विभक्तकरणं तत्र रूपमाहुर्मनीषिणः॥
गुरुद्वयं मृदङ्गे स्यादन्यत्र लघुनी गुरुः।
एवमक्षरविन्यासाद्रूपं स्यात् (तद्धि तद्यथा)॥

नान्यः

—करणम्

मुख्यवीणाप्रयुक्तस्य गुर्वादेर्भञ्जनेन यत्।
युगपद्वादनं रूपं विपञ्च्यादिषु तद्यथा॥
वाद्यते गुरुमुख्यायां यदा द्वे लघुनी तदा।
विपञ्च्यादौ यदा त्वस्यां लस्तदान्यासु दद्वयम्॥

शार्ङ्गः

—वीणाकरणम्

मुख्यवीणाप्रयुक्तं यद्भक्त्वा गुर्वादि वाद्यते।
युगपत्तदन्यासु तद्रूपं तद्विधागतम्॥

लघुनी द्वे विपञ्च्यादौ तथा स्यातां यथा लघुः।
एकोऽस्यां वाद्यतेऽन्यासु तथा वाद्यं द्रुतद्वयम्॥

कुम्भः

भक्त्वा। भञ्जनं कृत्वा। एतत्करणं मत्तकोकिलाख्यवीणायां भरतेन निदर्शितम्। अत्र मुख्यवीणायां यत्र गुरुः तं भक्त्वा लघुद्वयरूपेण विपञ्च्यादिषु युगपद्वादनं रूपमिति भावः।

रूपकम्

रूपकं द्विविधं नाट्यरूपेण नृत्तगीतरूपेणेति। नाट्यरूपकं पूर्वराजचरितं, अथवोत्पाद्यकथा। नटैर्यत्प्रदर्श्यते तन्नाट्यम्। तत्र नृत्तगीतानां प्रवेशो नास्ति। यत्र नृत्तगीतानां समन्वयस्तन्नृत्तरूपकमित्युच्यते। यथा—डोम्बीप्रभृतीनि। नाट्यरूपकाणि दशैव भरतेन गृहीतानि। तेषु नाटकप्रकरणे प्रधाने। तच्छेषाण्यष्टौ रूपकाणीति भरताभिप्रायः। महेन्द्रविक्रमेण भगवदज्जुकाप्रहसने सूत्रधारमुखेन "प्रकरणनाटकोद्भवासु पारेहामृगडिमसमवकारव्यायोगभाणसल्लापवीथ्युत्सृष्टिकाङ्कप्रहसनादिषु दशजातिषु नाट्यरसेषु हास्यमेव प्रधानमिति प्रहसनमेव प्रयोक्ष्यामि" इत्युक्तम्।

तन्मते नाटकप्रकरणाभ्यां द्वादशरूपकाणि भवन्ति। तेषु भरतेनानुक्ते सल्लापकोल्लोप्यके गृह्येते। कोहलादयस्तु सल्लापकोल्लोच्यकरूपके नृत्तजातिष्वन्तर्भावयन्ति। विष्णुधर्मोत्तरे प्रकरणनाटकोद्भवानि दशरूपकाणीति ताभ्यां सह द्वादशोक्तानि। रूपकाणि भरतमते दश। यथा—

नाटकं सप्रकरणमङ्को व्यायोग एव च।
भाणस्समवकारश्च वीथी प्रहसनं डिमः।
ईहामृगश्च विज्ञेयो दशमो नाट्यलक्षणे॥

हरिपालमतम्—

ज्ञानावतरणं पूर्वं द्वितीयं नाटकं भवेत्।
तृतीयं तु प्रकरणमङ्को व्यायोग एव च॥
भाणस्समवकारश्च वीथी प्रहसनं डिमः।
ईहामृगः स्याल्लटकमेलापकमितीरिताः॥

इति द्वादशोक्तानि। भगवदज्जुकासूत्रधारवाक्येन पार इति कश्चिद्रूपकविशेषोऽस्तीति ज्ञायते। भगवदज्जुकादर्शेषु बार इत्यपि शब्दो दृश्यते। वारो वा पारो वेत्यद्यापि संशयः। नृत्तपारः नाट्यपारः नाट्यधारः नृत्तसार इति पारशब्दस्य बहवो रूपभेदाः नाट्यशास्त्रव्याख्यानादर्शेषु दृश्यन्ते। नृत्तपारो रूपकविशेषः। तस्मिन्नङ्कमध्ये नाटकान्तरं पुनस्तस्मिन्नाटकान्तरे नाटकान्तरं इति क्रमेण बहूनि नाटकान्यन्तरान्तरभावाद्दृश्यन्त इति नाट्यायितशब्दव्याख्यानेऽभिनवगुप्तप्रोक्तवचनादवगम्यते। तेनैवोक्तं नाट्यायितं एकस्वप्ने स्वप्नान्तरवदिति। उदाहृतं च सुबन्धुकृतनाट्यपाराख्यग्रन्थादेकं प्रघट्टकम्। तत्र बिन्दुसारः तस्य सचिवा अङ्के प्रविशन्ति। उदयनवासवदत्ताचेष्टितं बिन्दुसारो नाटयति। मध्ये उदयनश्च बिन्दुसारकथां नाटयति। तदन्तरे उदयनश्च पद्मावती प्रद्योतचरितानि नाटयति, इत्यान्तर-

क्रमो दृश्यते। सुबन्धोर्ग्रन्थादन्यः न कोऽपि नृत्तपारः दृश्यते श्रूयते वा। तज्जातीयकं रूपकमस्तीति महेन्द्रविक्रमवचनाद् ज्ञायते।

रामाद्यारोपणान्नेतुः स्यादस्मिन्रूपकाभिधा।

जग-मल्लः

—वाद्यप्रबन्धः

यत्रोद्ग्राहः सकृद्द्विर्वा स्यादोतावाद्यपूर्वकः।
सपाटकैर्वर्णपदैः प्रान्ते च कृतदेंकृतिः।
प्रबन्धोऽसौ मध्यलये छण्डणो रूपकाभिधः॥

सोमराजः

—रागवर्धनाङ्गम्

रागवर्धनशब्दे द्रष्टव्यम्।

रूपकः—ध्रुवालङ्कारः

बद्धो रूपकतालेन रूपकः परिकीर्तितः।
आदौ द्रुतो लघुः पश्चात्ताले रूपकनामके॥
तेन रूपकनामायं विज्ञातव्यष्षडक्षरः।
सरि सरिगम, रिगरिगमप

वेङ्कटमखी

—प्रबन्धः

रूपकाख्येन तालेन रागैर्गेयो मनोहरैः।
उद्ग्राहध्रुवकाभोगा इति रूपकलक्षणम्॥

हरिपालः

रूपकम्—अलङ्कारः

स्वविकल्पेन रचितं तुल्यावयवलक्षणम्।
किञ्चित्सादृश्यसंपन्नं यद्रूपं रूपकं तु तत्॥
(उ-म) पद्माननास्ताः कुमुदप्रभासा विकोशनीलोत्पलचारुनेत्राः।
वापीस्त्रियो हंसकुलैः स्वनद्भिर्विरेजुरन्योन्यमिहालपन्त्यः॥

भरतः

—निबद्धभेदः

आरोप्यते गुणग्रामोपाधिकं यत्र नायके।
रामादित्वं मही‌भर्त्रा तद्रूपकमुदीरितम्॥

कुम्भः

—वाद्यप्रबन्धः

ओतां कृत्वा द्विरुद्ग्राहः सकृद्वा व्यापकाक्षरैः।
सपाटैर्विहितो यत्र प्रान्ते रचितदेंकृतिः॥
मध्ये लये छण्डणस्याद्रूपकं तन्निरूपितम्।

शार्ङ्गः

रूपकः—मुक्तालः

आदौ द्रुतो लघुः पश्चात्ताले रूपकनामके।

वेङ्कटमखी

रूपनारायणः— देशीतालः

लगपादौ लगौ पश्च रूपनारायणाह्वये।
। ऽऽ ० ० । ऽऽ

कुम्भः

रूपभेदः—नर्म

रूपेण भेदकरणं रूपभेदो निगद्यते।

सर्वेश्वरः

रूपवती—वीणा

कच्छपी वीणाया नामान्तरम्।

रूपशुद्धम्—नर्म

केवलेनैव रूपेण जनताहासकारि यत्।
तन्नर्म काव्यबन्धेषु रूपशुद्धं निगद्यते॥

सर्वेश्वरः

रूपशेषः—वीणाकरणम्

यदा विदध्याद्विच्छेदं विदार्यां मुख्यवैणिकः।
तदान्यासां वादनं यद्रूपशेषं तदुच्यते॥

कुम्भः

मत्तकोकिलायां यदा विरामो गृहीतः तदाऽन्यासु विपञ्च्यादिषु वादको विलम्बितलयेऽन्यद्वादयेत् स रूपशेषः।

—अवनद्धे करणम्

पुष्कराणां विरामे तु पणवाद्यैः प्रपूरणम्।
वाद्याक्षरस्य क्रियते रूपशेषः स उच्यते॥

नान्यः

रूपशेषम्—करणम्

यदा विदारीविच्छेदं कुरुते मुख्यवैणिकः।
तदाऽन्यसां वादनं यद्रूपशेषं तदुच्यते॥

शार्ङ्गः

—पुष्करवाद्ये करणम्

करणानामविरामे रूपशेषः। यथा—खुखुणा खुखुणा खखणाह्नाणह्ना खेखखा मह्ना खदा मप्पह्नावाद्यसिदं रूपशेषं तु।

भरतः

रूपसाधारितः—रागः

निषादीषड्जमध्याभ्यां रिपस्वल्पस्सकाकलिः।
षड्जांशो मध्यमन्यासो रूपसाधारितो मतः॥

मोक्षः

संभूतष्षड्जमध्यायां निषादिन्यां तथैव च।
रूपसाधारितष्षड्जग्रहन्याससमन्वितः ॥
मध्यमांशः पञ्चमे च रिषभे स्वल्पतां गतः।
सकाकलिकः प्रसन्नमध्यालङ्कारभूषितः ॥
स्वरैः पूर्णश्च षड्जादिमूर्छनासङ्गमस्थिरः।
एते साधारिताः प्रोक्ता रागा रागविचक्षणैः ॥

हरिः

रूपसाधारितम्—रागः

षड्जांशो मध्यमन्यासो ह्यपन्यासस्तु धैवतः।
षड्जमध्यानिषादिन्योरुद्भूतं बलवन्निगम् ॥
शृङ्गारेऽद्भुतसंबद्धे निषादान्तं कदाचन।
जातं कन्दर्प (दैवत्यं) रूपसाधारितं स्मृतम् ॥

नान्यः

षड्जमध्यानिषादिन्यो रूपसाधारितं विदुः।
षड्जांशो मध्यमन्यासो निषादान्तः क्वचिद्भवेत् ॥

कश्यपः

रूपाङ्गी—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि म प नि स.
(अव) स ध नि प म ग रि स.

मञ्ज

रूपावती—मेलकर्ता रागः

स ० ० ग ० म ० प ० ० ध नि स.

मञ्ज

रूपेच्छाकथनम्—नर्म

रूपेण स्पष्टमाचष्टे संभोगेच्छां यदायताम्।
रूपेच्छाकथनं तत्तु कथ्यते तत्त्ववेदिभिः ॥

सर्वेश्वरः

रेखा—देशीलास्याङ्गम्

स्वे स्वे स्थाने निविष्टानां शोभातिशयशालिनाम्।
ससौष्ठवानामङ्गानामनङ्गोदयकारिणाम्।
मनोहरास्थितिर्यातु सा रेखेत्यभिधीयते ॥

वेमः

रेगुप्तिः—मेलरागः

रेगुप्तौ वर्जयेत्कौञ्चनिषादावुभयत्र च।
रागोसावौडुवस्तस्माद्देशान्तरमनोहरः ॥
मालवगौलमेलजोयम्। अस्य प्रसिद्धं नाम रेवगुप्तिः। क्रौञ्चो मध्यमः। उभयत्र—अरोहावरोहयोः।

परमेश्वरः

रेगुप्तिः—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग प ध स.
(अव) स ध प ग रि स.

मञ्ज

रेगुप्तिरागध्यानम्

रसालतरुमूलगां निजवराङ्कशय्यातलां
करे निहितपुस्तकां शुकपिकालिनादाञ्चिताम्।
सुमासवचषप्रियां मदविघूर्णिताक्षीं सदा
दुकूलवसनांप्रियां हृदि भजामि रेगुप्तिकाम् ॥

रागसागरः

रेचकाः

ग्रीवायां पादयोः कट्योः हस्तयोश्च भवन्ति तत्।
बद्धावस्थेन तेनेह तेषां लक्षणमुच्यते ॥

विप्रदासः

अथाहं रेचकान्वक्ष्ये चतुरो मुनिसम्मतान्।
पाणिकण्ठकटीपाद विशेषेण समुद्भवान् ॥

अशोकः

अथ भरतमुनीश्वराभिमत्या निगदति रेचकलक्षणं नरेशः।
करचरणकटीषु कण्ठदेशे पुनरुदिततदवस्थितिर्मुनीन्द्रैः ॥
यदपि च गदितोऽङ्गहारमध्ये मुनिविलुतो ननु रेचकस्समस्तः।
तदपि च पृथगुच्यते यतोऽयं फलजनने गदितः पृथक्समर्थः ॥

कुम्भः

रेचितम्—हस्तप्राणः

अङ्गुलीनां प्रचलनाद्रेचितं परिकीर्तितम्।

शृङ्गारः

—नृत्तहस्तप्राणः

मणिबन्धावधी यौ तौ करौ सम्यक् प्रसारितौ।
रेचिताख्यमिति ख्यातं सर्वहस्तेष्वयं विधिः ॥

शृङ्गारः

सर्वहस्तेष्विति पताकादिहस्तेषु।

रेचितः—अङ्गहारः

स्वस्तिकरेचितार्धरेचितवक्षःस्वस्तिकोन्मत्ताक्षिप्तरेचितार्धमत्तल्लि-रेचकनिकुट्टभुजङ्गत्रस्तरेचितनूपुरवैशाखरेचितभुजगाञ्चितदण्ड-रेचितकचक्रमण्डलवृश्चिकरेचितवृश्चिकविवृत्तविनिवृत्तविवर्तित-गरुडप्लुतमयूरललितमर्पितस्खलितप्रसर्पिततलसंघट्टित वृषभक्री-डितललितोरोमण्डलकफटीछिन्नानां प्रयोगे रेचितः।

—अधरः
ईषच्चलितपर्यन्तो विलासे रेचितोऽधरः ।

विप्रदासः

सृक्‌प्रलोठनाद्‌ज्ञेयौ रेचितौ दशनच्छदौ ।
…………………योज्येते प्रयोक्तृभिः ॥

सोमेश्वरः

चलनात्सृक्‌देशस्य रेचितस्स्थिरविभ्रमे ।

ज्यायनः

—हौडुक्किकहस्तपाटः
स्कन्धस्य स्फुरणेनापि तर्जन्यङ्गुष्ठघाततः ।
वाद्यस्योत्तम्भकरणाद्रेचितो जायते यथा ॥
दें दें थां थां टें टें हझें हझें हझें हहन हुझें ।

वेमः

रेचितनिकुट्टकम्—करणम्
रेचितो दक्षिणो हस्तः पादश्चोद्घट्टितो यदि ।
वामो डोलायते डोलः स्याद्रेचितनिकुट्टकम् ॥

ज्यायनः

रेचितवर्तना
हंसपक्षौ स्वस्तिकाच्चेत् विच्युतौ त्वरितभ्रमौ ।
रच्येते रेचितौ यत्र सोक्ता रेचितवर्तना ॥

अशोकः

रेचिता—कटी
रेचिता तु कटी ज्ञेया भ्रमणेन समन्ततः ।
भ्रमणे सा प्रयोक्तव्या नाट्ये नृत्ते च कोविदैः ॥

वेमः

—भ्रूः
भ्रूरेका ललितोत्क्षिप्ता रेचिता नर्तने मता ।

वेमः

—ग्रीवा
या ग्रीवा विधुतभ्रान्ता सा मता रेचिताभिधा ।
वर्तुले मथनेप्येषा नियुक्ता नृत्तपण्डितैः ॥
मथनं, अङ्गमर्दनम् । अशोकः

रेचितौ—नृत्तहस्तौ
कृत्वोत्तानौ पताकौ प्रागथ कुर्याद्‌द्रुतभ्रमौ ।
हंसपक्षौ पार्श्वगतौ तावुक्तौ रेचितौ करौ ॥
प्रयुक्तोऽयं नृसिंहेन दैत्यवक्षोविदारणे ।
उत्तानौ प्रसृतौ केचित् पताकौ रेचितौ करौ ॥
तन्नेष्टं विप्रदासस्य प्रायो लक्ष्येष्वदर्शनात् ।

विप्रदासः

प्रसारितौ तथोत्तानतलौ हस्तौ तु रेचितौ ।
द्रुतभ्रान्तौ हंसपक्षावथवा रेचितौ मतौ ॥
यद्वानयोर्मिलित्वामू लक्ष्मणीलक्ष्मसम्मतम् ।
हिरण्यकशिपोर्वक्षोदारणे नृहरेर्मतौ ॥

अशोकः

रेणुका—श्रुतिः
पञ्चमस्य प्रथमा श्रुतिः ।

पाल्कुरिकि सोमः

रेवसन्तः—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि म ध नि स.
(अव) स नि ध म ग रि स.

मज

रेफः—वादनम् (उभयहस्तव्यापारः)
दक्षिणानामया यत्र तन्त्रीरन्तर्निहन्यते ।
वामस्य मध्यमाङ्गुल्या बहिस्तं रेफमूचिरे ॥

शार्ङ्गः

—धातुः
रेफस्त्वेकस्वरो घातः क्रमात्सर्वाङ्गुलीकृतः ।

शार्ङ्गः

—वीणायामुभयहस्तव्यापारः
दक्षिणानामया तन्त्री यदान्तः सः प्रहन्यते ।
वाममध्यमया बाह्ये रेफो नाम भवेत्तदा ॥

कुम्भः

—व्यञ्जनधातुः
कराङ्गुलीभिस्सर्वाभिः क्रमादेकस्वरो यदा ।

कुम्भः

यस्तु सर्वाङ्गुलीभिः स्यात्प्रहारः क्रमवानिह ।
पर्यायेणैकतन्त्र्यां तु रेफ इत्यभिधीयते ॥

नान्यः

सर्वाङ्गुलिसमाक्षेपो रेफ इत्यभिधीयते ।

भरतः

—हौडुक्किकहस्तपाटः
रेफः स्यात्स्कन्धसंज्ञेन सकलाङ्गुलिताडनात् ।
सह धों झें झें द्रः झें हें झें झें द्रः झें हें द्रः । वेमः

**रेराजितं**—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स रि ग म प ध नि स.
(अव) स ध नि प म ग रि स.

मज

**रेवगुप्तः**—रागः
आर्षभीमध्यमोत्पन्नो रेवगुप्तोऽथ लक्ष्यते ।
षड्जग्रामांशकश्चैष मध्यमान्तविराजितः ।
सप्रसन्नाद्यलङ्कारो रेवगुप्त इति स्मृतः ॥

हरिः

वीररौद्राद्भुतरसे ताने जीवनसंज्ञके ।
अभिरुद्गतायां मूर्छायां...मध्यमाश्रुतौ ॥
आर्षभ्यां ऋषभेऽप्यंशन्यासयोष्षड्जवर्जितः ।
जितसंग्रामगुप्तेन रेवगुप्तः प्रकीर्तितः ॥

नान्यः

आर्षभीजातिसंभूतो ऋषभांशस्तदन्तकः ।
संपूर्णो रेवगुप्तस्तु विद्वद्भिष्षड्जषाडवः ॥

कश्यपः

रेवगुप्तो रिग्रहांशो मान्तो मर्षभसोत्कटः ।

नारायणः

मध्यमार्षभिकाजातयो रेवगुप्तोरिरंशकः ।
मध्यमन्याससंयुक्तः संपूर्णो गीयते बुधैः ॥

मोक्षः

—प्रथमरागः
स्याद्रेवगुप्तो रिषभग्रहांश-
स्तन्न्यासकः पञ्चमवर्जितोऽयम् ।
गान्धारमन्द्रस्सनिषादमध्य-
प्राज्यश्च देशीकरणे प्रगेयः ॥

मोक्षः

**रेवतीहस्तः**—रेवतीमत्स्याकृतिः
भरतार्णवसंप्रोक्तो गजदन्तामिधश्चलः ।
ईषत्कुञ्चितरूपश्चेद्रेवत्यां संप्रयुज्यते ॥

श्वरः

**रेवत्यभिनयः**
गजहस्तचालनेन कर्तव्यः ।

महाराष्ट्र

**रेवा**—मेलरागः
गौरीमेलसमुद्भूता षड्जोद्ग्राहेण मण्डिता ।
मनित्यक्ता सदा रेवा गपादियमलस्वरा ॥
तृतीयप्रहरोत्तरगेया । अहोबिलः

**रोधः**—प्रतिमुखसन्ध्यङ्गम्
निरोधस्य नामान्तरम् ।

**रोमाञ्चः**—चित्राभिनयः
समा दृष्टिस्समं शीर्षं किञ्चित्सूचीतिहस्तकः ।
स्त्रीणां रोमाञ्चनविधौ दर्शयन्ति मनीषिणः ॥

विनायकः

—सात्विकभावः
स्पर्शभयशीतहर्षैः क्रोधाद्रोगाच्च रोमाञ्चः ।
मुहुःकण्टकितत्वेन तथोल्लुकसनेन च ।
पुलकेन च रोमाञ्चं गात्रस्पर्शेन दर्शयेत् ॥

भरतः

इष्टस्पर्शसहर्षाद्यैः क्रोधशीतभयैरपि ।
रोमाञ्चो जायते तं गात्राणां कण्टनकैर्दर्शयेत् ।

सागरः

रोमाञ्चः क्रोधरुग्भीतिहर्षशीतादिभिर्भवेत् ।

शारदातनयः

आदिशब्देन विस्मयोत्साहादयो गृह्यन्ते ।

नरसिंहः

**रोविचक्षम्**—हस्तः
दूरे प्रसारिताङ्गुष्ठतर्जनी यत्र वक्रिता ।
तिस्रस्त्वन्याश्च संसृष्टा रोविचक्षं तदीरितम् ॥

उमा

**रोविन्दकम्**—सप्तगीतभेदः
अथार्धान्ते च मात्राणां तालशम्ये यथाक्रमम् ।
चतुर्दश्यां च पञ्चम्यां मात्रायां ताल इष्यते ॥
षष्ठी तु मद्रकान्त्यावन्मात्रा रोविन्दकस्य तु ।
तत्राष्टकलमाद्यायाः मात्रायाः स्यादुपोहनम् ॥
पूर्ववत् त्रिकलं कार्यमन्यासां प्रत्युपोहनम् ।
पादः पूर्वोऽयमपरः तद्वदन्यपदः स्मृतः ॥
कलास्त्वष्टासु योन्यासु वर्णः पूर्वस्य गीयते ।
स च द्वितीयपादादौ स च प्रस्तार इष्यते ॥
द्वितीयपादे प्रस्तारः शरीरे द्विकलोत्तरे ।
तत्रोपवर्तनं कैश्चिदिष्यते पूर्ववत्तु तत् ॥
तत्रादौ विवधं कार्यं प्रवृत्तमपि वा भवेत् ।
निवृत्तयस्तथा कार्या मध्ये त्रिचतुराः स्मृताः ॥

भरतः

अवमर्शे निवृत्ते स्यादुत्तरान्ते च शीर्षकम् ।
अस्यादावेककं नित्यं प्रवृत्तं चाप्यत' परम् ॥
पादादिषु यथेष्टं च योक्तव्ये विवधकके ।

पूर्ववदिति । शरीरे त्रिकलं कार्यं माषघातकम् । उपवर्तनादीनां लक्षणं स्थाने उक्तम ।

दत्तिलः

रोहिणी—श्रुतिः
धैवतस्य द्वितीया श्रुतिः ।

रोहिणीहस्तः
.........पु किञ्चिद्विश्लिष्टे च प्रसारिते ।
अनामिका कनिष्ठाग्रमिश्रिताङ्गुष्ठ एव च ।
नाम्नायं श्लिष्टमुकुलो रोहिण्यां संप्रयुज्यते ॥

शृङ्गारः

रोहिण्यभिनयः
श्लिष्टमुकुलहस्तेन कर्तव्यः ।

महाराष्ट्रे

रौद्रः—तानः
मध्यमग्रामे रिधहीनौडुवः ।
प म ग स नि

कुम्भः

—रसः
क्रोधः स्थायी भवेद्भावो यत्र रौद्रो रसस्तु सः ।
राक्षसा दानवा एवाप्युद्धताः स्युस्स्वभावतः ॥

आलम्बनविभावास्ते सङ्ग्रामोप्यत्रदारुणः ।
क्रोधश्चाक्रमणं निन्दावमानौ परुषा गिरः ॥

मात्सर्यं द्रोह इत्याद्यैरसमुद्दीप्यते रसः ।
आरक्तनेत्रता स्वेदो भ्रुकुटीकरणं मुहुः ॥

दन्तौष्ठपीडनं पाणिनिष्पेषो दन्तघर्षणम् ।
ताडनं छेदनं पीडाप्रहारश्शस्त्रपातनम् ॥

अनुभावैरेवमाद्यैरस्याभिनयमाचरेत् ।
औग्र्यं सम्मोह उत्साहवेगहर्षाश्च वेपथुः ॥

रोमाञ्चगद्गदस्वेदप्रमुखैर्व्यभिचारिणः ।
परिपोषं नयेदेनं रसं नर्तकपुङ्गवः ॥

क्रोधश्चतुर्विधो ज्ञेयो रिपौ भृत्ये प्रिये गुरौ ।
नर्तनाल्लक्ष्म चैतेषां वक्ष्ये लक्ष्मविदां मतम् ॥

विकटभ्रुकुटी भीमो दष्टौष्ठो हस्तकम्पवान् ।
स्वभुजप्रेक्षणः क्रोधो रिपौ ज्ञेयो निरर्गलः ॥

भूरिभर्त्सनवानक्षिविस्तारविकृतेक्षणः ।
भृत्ये कार्यवशाज्जातः कृत्रिमः क्रोध उच्यते ॥

भ्रुकुटीकुटिलं वक्त्रं नेत्रान्तादश्रुनिर्गमः ।
यत्रोष्ठौ स्फुरितौ क्षीणामेष प्रणयसंभवः ।
अव्यक्तचेष्टाविनययन्त्रिता स्याद्गुरौ रुषा ॥

विप्रदासः

अथ रौद्रोनाम क्रोधस्थायिभावात्मकः रक्षोदानवोद्धतमनुष्यप्रभवः सङ्ग्रामहेतुकः । स च क्रोधधर्षणाधिक्षेपावमानानृतवचनोपघातवाक्पारुष्याभिद्रोहमात्सर्यादिभिर्विभावैरुत्पद्यते । तस्य च ताडनपाटनपीडनछेदनप्रहरणाहरणशस्त्रसंपातसंप्रहाररुधिराकर्षणाद्यानि कर्माणि । पुनश्च रक्तनयनस्वेदभ्रुकुटीकरणावष्टम्भदन्तोष्ठपीडनगण्डस्फुरणहस्ताग्रनिष्पेषादयोऽनुभावाः । भावाश्चास्य सम्मोहोत्साहावेगामर्षचपलतौग्र्यगर्वविकृतेक्षणवेपथुरोमाञ्चगद्गदादयः ।

भरतः

अत्र व्याचक्षते । युद्धहेतुकोद्धतमनुष्येषु भीमसेनादिषु रुधिरपानादिलक्षणः । रक्षोदानवास्तु स्वभावरौद्रा इति । तदसत् । भीमस्य रुधिरपानं न युद्धहेतुकम् । अपि तु विपर्ययः । उद्धतस्वभावत्वादसौ क्रोधपरवशस्सन् अनुचितमपि प्रतिज्ञातवान् । नन्वेते स्वभावक्रोधना अपि किमुद्दीपनमपेक्षन्ते । ओमित्याह मुनिः । रक्षोदानवमनुष्योद्धतादेरुद्दीपनहेतुभिर्विनापि चेष्टितमात्रं यदपि कुर्वते ताडनादिप्रधानम् । रक्षःप्रभृतयो हि नर्मणापि प्रहरन्ति ।

अभिनवः

रुद्रो हस्तं ददातीति रुद्रशब्दो निरुच्यते ।
तत्कर्मकर्तृताहेतुर्यस्य रौद्रः प्रकीर्तितः ।
यत्कर्म रोदयत्यन्यान्स रौद्र इति वा भवेत् ॥

शारदातनयः

रौद्रगान्धारी—मेलरागः (कामवर्धिनीमेलजन्यः)
(आ) स रि ग म नि स.
(अव) स नि प म रि स.

मत्र

रौद्री—श्रुतिः
गान्धारे प्रथमा श्रुतिः ।

—दृष्टिः
रूक्षा क्रूरारुणोद्वृत्ता निष्टब्धपुटतारका ।
रौद्रा दृष्टिः प्रयोक्तव्या रसे रौद्रे विचक्षणैः ॥

सोमेश्वरः

कुटिलभ्रूकुटी भीमा रूक्षा स्तब्धपुटद्वया ।
उद्भ्रमतारका क्रूरा सान्द्ररौहित्यसम्भृता ।
रौद्रदृष्टिरियं रौद्रे रसे तद्ज्ञैर्नियुज्यते ॥

वेमः

रौद्रसारितम्—नृत्तकरणम्

वर्धमानं बाणहस्तावञ्चितं रौद्रिका च दृक् ।
जलसारितका चारी यत्र तद्रौद्रसारितम् ॥

नन्दी

वर्धमानं, स्थानम् । अञ्चितं, शिरः । जलसारिता गतिः । यथा, अङ्गुलीभिः पश्चाद्गमनं पादपार्श्वैः...... पादेन च गतिः ।

रौव्यानगः(?)—मेलरागः (रूपावतीमेलजन्यः)

(आ) स रि ग म प स.
(अव) स नि ध प म ग रि स.

मञ्ज

## ल

ल

ताले छन्दसि च लघुः ।

लक्षणम्

समस्तार्थालङ्कारवर्गस्य बीजभूताश्चमत्काराः कथाशरीरवैचित्र्यदायिनो वक्रोक्तिरूपा लक्षणशब्देन व्यवह्रियन्ते । लक्षणानि गुणालङ्कारमहिमानमनपेक्ष्य स्वसौभाग्येनैव शोभन्ते । लक्षणं महापुरुषस्य पद्मादिरेखादिवत् काव्यशरीरस्य सौन्दर्यदायि । यथा लक्षणरहितः पुरुषो न सुन्दरशब्दवाच्यः तथा लक्षणवर्जित कथाशरीरं गुणालङ्कारोज्ज्वलमपि नीरसत्वं भजत् प्रौढकाव्याभिधानं नार्हति । लक्षणान्यसंख्येयानि । चमत्कृतिविशेषपरिष्ठानि षट्त्रिंशदेव मुनिना संगृहीतानि । कालप्रवाहे भरतग्रन्थे पाठान्तराणि प्रक्षिप्तानि । तेषामपि सौन्दर्यजनकत्वकारणेन भोजादिभिः उभयपाठगतान्यपि लक्षणानि स्वीकृतानि ।

लक्ष्मणः—देशीतालः

लक्ष्मणस्तु गुरोः पश्चाल्लघुर्भूत्वा विराजते ।
ऽ ।

लक्ष्मणः

लक्ष्मणाह्वयः—देशीतालः

लक्ष्मणाह्वयताले ~~द्रुमलद्वन्द्वं~~ गुरुस्तथा ।
ऽ । ऽ । ऽ

लक्ष्मणः

लक्ष्मीः—देशीतालः

दविरामो द्रुतश्चैको दविरामो लघुर्द्रुतः ।
तद्द्वयं लविरामश्च लक्ष्मीताले प्रचक्षते ॥
०̇ ० ०̇ । ० ऽ ऽ । ऽ ऽ । ?

दामोदरः

—प्राकृतगाथा

सप्तविंशतिगुरवः, त्रयो लघवः ।

विरहाङ्कः

—प्राकृते मात्रावृत्तम्

एकश्चतुर्मात्रिकः पञ्चमात्रिकास्त्रयः यः ।

विरहाङ्कः

लक्ष्मीकटाक्षः—देशीतालः

ताले लक्ष्मीकटाक्षाख्ये मगणः परिभाषितः ।
ऽ ऽ ऽ

लक्ष्मणः

लक्ष्मीतालः—देशीतालः

दौ लोर्दीर्घद्वयं दोलो द्रुतौ दीर्घद्वयं द्रुतः ।
दीर्घं च दद्वयं दीर्घं दलौ लक्ष्म्यभिधे क्रमात् ।
० ० । ᑌ ᑌ ० । ० ० ᑌ ᑌ ० ᑌ ० ० ᑌ ० ।

श्रीकण्ठः

लक्ष्मीनारायणः

सङ्गीतसूर्योदयकर्ता । कृष्णदेवरायास्थाने आस । कालः १५२०

लक्ष्मीपतिरत्नावली - सूडप्रबन्धः

ताले वर्णयतिर्मेघरागो देवादिवर्णनम् ।
विप्रलम्भाख्यशृङ्गारो रसः करणवेदनम् ॥
कविनामाङ्कितपदप्रान्ते पाटस्वरावलिः ।
द्वित्राण्यथ पदानि स्युरिति लक्ष्मीपतेः पुरः ।
रत्नावली प्रबन्धोऽयं निबद्धः कृष्णभूभुजा ॥

कुम्भः

लक्ष्मीशः—देशीतालः

द्रौ विः प्रान्तैर्लघु श्रीशे ।
० ०̇ । ऽ̇

मदनः

लघीयसी किन्नरी

उच्यते लक्षणोपेता किन्नर्यथ लघीयसी ।
लघीयस्या दण्डमानं स्यात्पञ्चत्रिंशदङ्गुलम् ॥
त्रिंशाधिपञ्चाङ्गुलकः परिधिस्तस्य कीर्तितः ।
ककुभस्य शिरो ज्ञेयमङ्गुलत्रयविस्तरम् ॥
ककुभस्य तथा दण्डो वीणादण्डे निवेश्यते ।
तथास्य परिशेषस्स्याद्यथा दण्डाग्रतन्त्रिका ॥
ककुभस्य शिरोमध्यात् यावत्त्र्यङ्गुलसंमिता ।
दण्डान्तसारिकोत्सेधः सार्धाङ्गुलमितो मतः ॥

मेरोरुपान्ते तस्यार्थं सारिकामोढिकान्तरम्।
प्रोच्यते तत्र पूर्वे स्यात् सयवं चतुरङ्गुलम् ॥

द्वियवाङ्गुल्युग्मंस्यात् द्वितीयं च तृतीयकम।
यवोनाभ्यामङ्गुलाभ्यां पादोनत्र्यङ्गुलं पुनः ॥

तुर्यं पञ्चममत्रस्याद्यवार्थोनाङ्गुलद्वयम।
यवैस्सार्धाष्टभिस्षष्ठसप्तमे पुनरीरितम ॥

यवोनाङ्गुल्युग्मेन सार्धाङ्गुलमथाष्टकम्।
यवाष्टकं तु नवमं नवमैकादशे पृथक् ॥

सपादाङ्गुलके तत्र द्वादशं च त्रयोदशम्।
यवन्यूनाङ्गुलमितमन्तरं स्याच्चतुर्दशम् ॥

एकाङ्गुलं तथा सारीमस्तकं यवसम्मितम।
मध्यमायामि चात्रापि मेढकं स्थानमिष्यते ॥

अत्र किन्नरवीणायां यवन्यूनाङ्गुलत्रयम्।
दण्डस्य परिशेषो हि परिशेषं विजानता ॥

शेषं......लविज्ञेयमेतस्यां मध्यमागतम्।
पञ्चाशदङ्गुलादूर्ध्वं न न्यूनं त्रिंशदङ्गुलात् ॥

एतयोर्मानयोर्मध्ये मानं स्याद्वादकेच्छया।
एष एव यथामार्गाश्रितं वीणाद्वयं पुरा।
गतानुगतिकत्वेन प्रोक्तं नो रक्तिहेतुतः ॥

कुम्भः

## लघुकामोदः—रागः

ग्रहतारषड्जयुक्तष्षड्जन्यासस्समस्वरो धांशः।
पूर्णो मतारमन्द्रो भवतिकमोदश्च षड्जमध्योत्थः ॥

नान्यः

तारषड्जग्रहः षड्जन्यासो धांशस्समस्वरः।
गतारमन्द्रस्संपूर्णः कामोदो लघुरुच्यते ॥

मतङ्गः

## लघुकिन्नरीवीणा

तत्र मार्गगता तावत्किन्नरी प्रतिपाद्यते।
लघ्वीति बृहती चेति द्विधा चात्र लघीयसी ॥

लक्ष्यते सर्वतस्तस्या दण्डमानमिहोच्यते।
दैर्घ्ये दण्डो भवेदत्रैकचत्वारिंशदङ्गुलः ॥

वैणवः परिणाहोऽस्य भवेत्पञ्चाङ्गुलैर्मितः।
दण्डदैर्घ्यमितं रन्ध्रं गर्भेऽस्य ककुभस्तथा ॥

शाकदारुभवस्सार्धत्र्यङ्गुलो विस्तरेण च।
दैर्घ्ये पञ्चाङ्गुलास्तस्माद्दैर्घ्यविस्तारयोर्भवेत् ॥

स्थूलोऽर्धाङ्गुलमानेन पत्रिका ककुभस्थिता।
मध्ये कूर्मोन्नता लौही तथा स्युर्नलिका अपि ॥

कांस्यजा लोहजा वाऽथ गृध्रवक्षोऽस्थिजा अथ।
चतुर्दशस्वरस्थाने सारिकाः स्युश्चतुर्दश ॥

श्लक्ष्णवस्त्रमषीमिश्रमदनेन विनिर्मिताः।
स्थापनीया दण्डपृष्ठे तासां स्यात्स्थापने विधिः ॥

सप्तकद्वितयं न्यस्यं द्वितीयस्य परस्यतु।
अधोनिषाददेशे स्यात्प्रथमा सारिका ततः ॥

अङ्गुल्यादूर्ध्वदेशेऽस्यास्ततस्स्थाप्याः परा अपि।
पूर्वाधिकेऽन्तरे किञ्चित् किञ्चिद्व्यङ्गुलतः परा ॥

स्थापनीयाद्यष्टमी तु पूर्वस्यास्त्र्यङ्गुलान्तरे।
स्थापयित्वा पराष्षट् च पूर्वपूर्वाधिकान्तरे ॥

चतुरङ्गुलपर्यन्तं निवेश्यास्सर्वसारिकाः।
दण्डस्य ककुभस्याधः सन्धौ तुम्बं निवेशयेत् ॥

तृतीयतुर्ययोः सार्योर्मध्ये न्यस्याद्द्वितीयकम्।
विस्तरेणाधिकं तुम्बं किञ्चित्पूर्वात्परं भवेत् ॥
विधाय त्र्यङ्गुले दण्डाग्रतो रन्ध्रमधःक्षिपेत्।
तस्मिन् शङ्कुं चलं रन्ध्रं दधत् कण्ठेऽङ्गुलात्ततः ॥

शरपुङ्खाकृतिं मेरुमधस्तादङ्गुलोच्छ्रयम्।
कृत्वा ततः स्थिरं शङ्कुं किञ्चिदग्रे निवेशयेत् ॥

मिश्रलोहमयी श्लक्ष्णा वर्तुला च समा दृढा।
गजकेशनिभा तन्त्री निबध्या ककुभे दृढम् ॥

ईषत्संस्पृष्टनलिकां सारिकामूर्ध्वदेशगाम।
मेरोरुपरि नीत्वाथ प्रान्ते लग्ना द्वितीयके ॥

वेष्टिते चलशङ्कौ सा कर्तव्या सुदृढा बुधैः।
चलशङ्कोर्भ्रामणेन तद्बले रन्ध्रदेशगम् ॥

वक्रोभयान्तं विन्यस्य लौहकीलं पुनस्स च।
स्थिरशङ्कुगलच्छिद्रे बध्नीयाद्दार्ढ्यहेतवे ॥

एवमेषा भवेल्लघ्वी किन्नरी किन्नरप्रिया।
त्रिस्थानस्वरसंपत्तिरस्यां राज्ञा निवेदिता ॥

उपर्यधस्ताच्चत्वारश्चत्वारस्तु स्वराः पृथक्।
मध्यसप्तकतोऽन्यस्या यथा नादः स्फुटो भवेत् ॥

केचित् द्वाविंशतिं प्राहुः सारीणामिह तद्विदः।
अत्र किञ्चित्स्वरं स्वीयरागस्यापेक्षया सुधीः ॥

कल्पयेत्स्थायिनं तस्मादारभ्य गणयेत्क्रमात् ।
सारीककुभयोर्मध्ये सप्तकत्रितयं ततः ॥

वाद्या किन्नरवीणायास्तन्त्री दक्षिणपाणिना ।
तर्जन्या ङ्गुष्ठीनां तु त्रितयेनाथ पाणिना ॥

वामेन तिसृभिस्ताभिरङ्गुलीभिस्तु नन्त्रिका ।
स्वरागहेतुकस्वरव्यक्त्यै तत्स्वरसारिकाम् ॥

अवलम्ब्य स्थितां तन्त्रीं मन्तृणां पीडयेच्छनैः ।
इति लघ्वी समादिष्टा................॥

कुम्भः

लघुकिन्नरीसारिकामानम्

दण्डान्तसारिकोत्सेधः सार्धाङ्गुलमितो मतः ।
मेरोरुपान्तं तस्यार्धं सारिकामेढकान्तरम् ॥

प्रोच्यते तत्र पूर्वं स्यात्सयवं चतुरङ्गुलम् ।
द्वियवाङ्गुलयुग्मं स्याद्द्वितीयं च तृतीयकम् ॥

यवोनाभ्यामङ्गुलाभ्यां पादोनत्र्यङ्गुलं पुनः ।
तुर्यं पञ्चममत्र स्याद्यवार्धोनाङ्गुलद्वयम् ॥

यवैस्सार्धोष्टभिः षष्ठसप्तमे पुनरीरितम् ।
यवोनाङ्गुलयुग्मेन सार्धाङ्गुलमथाष्टमम् ॥

यवाष्टमं तु नवमं नवमैकादशे पृथक् ।
सपादाङ्गुलके तत्र द्वादशं च त्रयोदशम् ॥

यवन्यूनाङ्गुलमितमन्तरं स्याच्चतुर्दशम् ।
एकाङ्गुलं तथा सारीमस्तकं यवसम्मितम् ॥

मध्यमायामि वात्रापि मेढकं स्थानमिष्यते ।

कुम्भः

लघुदाक्षिणात्या—रागः

अथो लघुप्रथमिका दाक्षिणात्या निगद्यते ।
न्यासांशपञ्चमा पूर्णा जाता मालवपञ्चमात् ॥

तारा निषादगान्धारे निषादे मन्द्ररूपिणी ।
समुपेता बहुत्वं च निषादर्षभधैवते ॥

भाषायां दाक्षिणात्यायां रागे मालवपञ्चमे ।
तदङ्गं दाक्षिणात्येयं न्यासाश्च निखिलस्वराः ॥

गनितारा च मन्द्रा च प्रचुरा निरिधैरपि ।
लघ्वीयं परिपूर्णा च दाक्षिणात्या निगद्यते ।
शृङ्गारे विनियोगोऽस्यास्सूरिभिः परिकीर्तितः ॥

जगदेकः

भाषाव्याख्यायां निरिधैरपि इति निषाधरोधमिति पठति ।
इयं परिपूर्णेत्युक्तं तदा निषादवर्जनमसमंजसम् ॥

लघुशब्दपर्यायाः—देशीतालः

सरलं मात्रकं ह्रस्वं व्यापकं लघुनो मताः ।

वेमः

व्यापकः सरलो ह्रस्वः शिरोदण्डो लघुस्तथा ।
लघोर्मेरुटिमासंज्ञा मुनिभिः क्रमशो मताः ॥

श्रीकण्ठः

लघुशेखरः—देशीतालः

एकेन सविरामेण लघुना लघुशेखरः ।

जगदेकः

लघुसञ्चयः—पुष्करवाद्ये लघूनां प्रवृत्तिः

द्रुतलयप्रवृत्तिः यथा—घटघटमाधिगटमत्थिगड्डुगुड्डितकिटि-
तट्टुगुड्डुघ इति ।

भरतः

लघ्वङ्गः—देशीतालः

लघ्वङ्गपादभागौ द्वौ दश्च द्राघमनुद्रुता (?) ।
षड्लघ्वङ्गसमुद्भूते

लक्ष्मणः

लङ्कादाहाञ्चितम्—उत्प्लुतिकरणम्

समपादाञ्चितं कुर्वन् गात्रस्य तु विवर्तनात् ।
पराङ्मुखश्चेदासीत भिन्दन्नेवोत्कटासनम् ।
लङ्कादाहाञ्चितं तत्तु कैश्चिदुक्तमुरोऽञ्चितम् ॥

वेमः

लङ्घनम्

किञ्चित्स्पर्शः । बहुत्वशब्दे द्रष्टव्यम् ।

लङ्घितः—देशीलास्याङ्गम्

मुहुर्मुहुस्समुल्लङ्घ्य वाद्यस्यावयवान्यदा ।
पात्रं विश्रम्य विश्रम्य नृत्येत्स्याल्लङ्घितं तदा ॥

अशोकः

विलम्बनमितीदमेव कुम्भ उवाच ।

लङ्घितजङ्घा—देशी चारी

आकृष्य वेगात्तज्जङ्घां पादेनान्येन लङ्घयेत् ।
तदा लङ्घितजङ्घाख्या सा चारी कथिता बुधैः ॥

वेमः

लङ्घितप्रतिलङ्घितम्—पादमणिः

अङ्गुलीपृष्ठभागेन पुरस्त्र्यस्रं स्थितं भुवि ।
एकं चरणमन्योऽङ्घ्रिं लङ्घयेत्प्रतिलङ्घयेत् ।
क्रमेण यत्र तत्प्रोक्तं लङ्घितप्रतिलङ्घितम् ॥

वेमः

लज्जा

स्खलितं मम जानीयुरिति चिन्तासमुद्भवा ।
मानसी विक्रिया लज्जा सर्ववृत्तिविरोधिनी ॥

भावविवेकः

लज्जिता—दृष्टिः

किञ्चिदञ्चितपक्ष्मान्ता पतितोर्ध्वपुटा च या ।
व्रीडाधोगततारा च त्रपायां लज्जिता भवेत् ॥

सोमेश्वरः

विवृत्तान्योन्यसांमुख्यात्परितोर्ध्वपुटद्वया ।
अधस्ताद्गततारा च किञ्चिदञ्चितपक्ष्मता ।
लज्जिता दृष्टिरेषा तु व्रीडायां विनियुज्यते ॥

वेमः

लटकमेलापकः—रूपकविशेषः

अयं हरिपालेनैव द्वादशरूपकेषूद्दिष्टः । लक्षणं न दत्तम् । लटकशब्दो विटार्थे भारतीयेऽपि दृश्यते । लटके मेलक इति रूपकं शङ्खधरकविकृतमस्ति । तस्मिन् शृङ्गारहास्यौ प्राधान्येनोक्तौ । स एव लटकमेलापकस्यापि दृष्टान्तो भवेत् ।

लता—हस्तः

क्रमेणोपरिविन्यस्तवक्रिताङ्गुलिसञ्चयम् ।
लतेति कथ्यते हस्तं नाट्यशास्त्रार्थकोविदैः ॥

उमा

—नृत्तम्

भाणादौ प्रयुक्ता । परस्पराङ्गवेष्टेन यन्नृत्यं सा लता मता ।
मध्यमे स्याल्लताबन्धो...।
मध्यमः लयविशेषः

शारदातनयः

लताकरौ—नृत्तकरौ

त्रिपताकौ यदा हस्तौ पार्श्वभागप्रसारितौ ।
तत्रैव रेचितौ भूयः स्यातां हस्तौ लताभिधौ ॥

सोमेश्वरः

प्रलम्बितभुजौ तिर्यक् पताकौ चेत्प्रसारितौ ।
लताख्याविति विज्ञेयौ नृत्ताभिनयगोचरौ ॥
नितम्बप्रभृतिष्वेषु त्रिपताकौ जगुः परे ॥

ज्यायनः

लताक्षेपः—पादपाटः

पश्चाद्विन्यस्य चरणं पुरस्तात्संप्रसार्य च ।
यदा निकुट्टयेद्भूमिं लताक्षेपस्तदा भवेत् ॥

वेमः

लताङ्गी—मेलकर्ता (रागः)

स रि ग ० ० म प ० ध नि स.

मख

लताबन्धः—नृत्तबन्धः

आद्यपङ्क्तौ द्वितीयस्था व्रजेत्तत्प्रथमं पदम् ।
प्रथमं च द्वितीयं च तृतीयस्याः समेत्य च ॥
ततस्तृतीयं तुर्यं च प्रथमायाः पदं श्रयेत् ।
ततःपरं द्वितीयायां तुरीयं च तृतीयकम् ॥
तृतीयाया द्वितीयं च प्रथमं च पदं व्रजेत् ।
आद्यं द्वितीये तुर्यायाः तृतीयायास्तृतीयकम् ॥
चतुर्थं च तुरीयायाः चतुर्थं च तृतीयकम् ।
स्थानं क्रमाद्व्रजेद्यत्र लताबन्धस्स उच्यते ॥

वेमः

लतामञ्जरी—मेलरागः ( नटभैरवीमेलजन्यः )

(आ) स रि म प नि स.
(अ) स नि ध प म प म ग रि स.

मख

लतामतिः—मेलरागः (शुभपन्तुवरालीमेलजन्यः)

(आ) स रि ग प म प ध प स.
(अव) स नि ध प म ध म ग रि स.

मख

लतावृश्चिकम्—करणम्

लतासंज्ञः करो वामः पादश्च यदि वृश्चिकः ।
तल्लतावृश्चिकं प्रोक्तं पतनं गगनादधः ।
वामो यतः प्रयोगस्स्याद्दक्षिणोऽत्र हृदि स्थितः ॥

ज्यायनः

परिक्रमेऽथ हर्म्यादेरारोहणविधौ मतम् ।

लक्ष्मणः

लतावेष्टनभ्रमरी—भ्रमरी

जानुक्षेत्रसमस्याङ्घ्रेश्चरणं न्यस्य कुञ्चितम् ।
तरुपर्यन्ततरुणवल्लरीवेष्टनक्रमात् ॥

भ्रमन्नेवोर्ध्वमारोहेदवरोहेत्तथैव वा ।
लतावेष्टनपूर्वान्तां भ्रमरीं सम्प्रचक्षते ॥

वेमः

लतावेष्टितम्—चालकः

अन्तर्बहिश्चालयित्वा चोर्ध्वमुद्वेष्टयेत्करौ ।
तयोरेकः करः पार्श्वद्वये पर्याययोगतः ॥

लुठितस्स्यात्करोऽप्यन्यस्तथैव कुरुते यदि ।
लतावेष्टितसंज्ञं तं चालकं तद्विदो विदुः ॥

वेमः

लताहिता—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग प ध नि स.
(अव) स प म ग रि स.

मञ्ज

लम्बतालः—देशीतालः

पादौ लोलम्बतालके । मात्राः ४½

तालप्रस्तारः

लम्बिता—मात्रावृत्तम्

एको द्विमात्रिकः चतुर्मात्रिक एकः जः ।
चतुर्मात्र एकः ज. चतुर्मात्रिकः ।

विरहाङ्कः

लम्भकः—प्रबन्धः

लक्ष्यते लम्भकश्चाथ पदमेकं द्वयं च वा ।
किञ्चिद्भ्रमकसंयुक्तमीषदेवेह गीयते ॥

ध्रुवं द्विवारमावर्त्य गीत्वा भोगं च गीयते ।
ततः कार्यो ध्रुवे न्यासो लम्भकोऽपि भवेदिति ॥

हरिपालः

उद्ग्राहे पाद एकस्स्यात् एकः पादस्तथा ध्रुवे ।
द्विरुद्ग्राहः प्रगातव्यो ध्रुवो वारद्वयं ततः ॥

वर्ण्यनामसमोपेतः आभोगस्तदनन्तरः ।
आवर्त्यैव ततो भूयः स भवेल्लम्भकाभिधः ॥

उद्ग्राहे च ध्रुवे चैव पादमेकं प्रवर्तते ।
आभोगो वर्ण्यनामाङ्को विलम्भः परिकीर्तितः ॥

तालशून्यो भवेद्यस्मिन् उद्ग्राहः पादमात्रिकः ।
ध्रुवस्तालयुतो यत्र प्रतिलम्भस्स उच्यते ॥

यस्योद्ग्राहपदं भिन्नं पूर्वार्धेन समन्वितम् ।
गीयते यत्र गीतज्ञैः स भागः कथितो बुधैः ॥

लम्भकेषु भवेद्भागो नियमेन द्वितीयकः ।
झोम्वडेषु तथाभागो विकल्पेन प्रगीयते ॥

सोमेश्वरः

द्विरुद्ग्राहस्सकृच्चैव खण्डो द्विश्चकलेऽथवा ।
द्विर्ध्रुवस्तत आभोगो ध्रुवेऽन्यासस्सलंभकः ॥

आलापलम्भकः प्रोक्त उद्ग्राहे तालवर्जिते ।
अन्यथा तु गतोद्ग्राहो ध्रुवस्थाने प्रलम्भकः ॥

उद्ग्राहा बहवो यस्मिन् ध्रुवाभोगविवर्जिते ।
सविलम्भो बुधैः प्रोक्त इति लम्भत्रयं मतम् ॥

मोक्षदेवः

लयः—तालप्राणः

विश्रान्तियुक्तया काले क्रियया मानमिष्यते ।
क्रियानन्तरविश्रान्तिर्लयः स त्रिविधो मतः ॥

द्रुतो मध्यो विलम्बश्च द्रुतश्शीघ्रतमो मतः ।
द्विगुणाद्विगुणो ज्ञेयो तस्मान्मध्यविलम्बितौ ॥

अच्युतरायः

तालान्तरालवर्ती यः कालोऽसौ लयनामकः ।

—देशीलास्याङ्गम्

प्रवर्तमाने कस्मिंश्चिल्लये तत्रापरौ लयौ ।
यथोचितं तु संयोज्य नर्तनाल्लय उच्यते ॥

अथवा करयोश्चारुविलासोत्तंसशालिनोः ।
यद्विलासेन चलनं स चापि लय उच्यते ॥

वेमः

—देशीतालः

लये लगौ यत्र पञ्च गपौ बिन्दुत्रये तथा ।
। S S S S S S S Ś ० ० ०

कुम्भः

—तालप्राणः

द्रुतलयस्तु मार्गताल एव प्रयुक्तः ।
त्र्यश्रादिजातितालेषु ज्ञेयौ मध्यविलम्बितौ ॥

त्र्यश्रखण्डादितालेषु द्रुतोत्पत्तिर्यतो न हि ।
तस्मान्नास्ति द्रुतः कालस्त्वस्ति मध्यो विलंबितः ॥

परमेश्वरः

विश्रान्तियुक्तया काले क्रियया मानमिष्यते ।
क्रियानन्तरविश्रान्तिः लयस्स त्रिविधो मतः ॥

द्रुतो मध्यो विलम्बश्च द्रुतश्शीघ्रतमो मतः ।
द्विगुणाद्विगुणो ज्ञेयो तस्मान्मध्यविलम्बितौ ॥

देशीमार्गेषु तालेषु कलाभेदोऽप्यनेकधा ।
तत्र मार्गोऽप्यनेकः स्यान्मार्गे तत्र लयत्रयम् ॥

अत्र पूर्वः पक्षः ।

मार्गाणां कालभेदेऽपि विश्रान्तेस्तु भिदा न हि ।
तस्माल्लयश्चैकविधः कथं तु त्रिविधो भवेत् ॥

यथा—चित्रमार्गे एकस्य गुरोरनन्तरं विश्रान्तिः । वार्तिके द्वयोर्गुर्वोः । दक्षिणे चतुर्णां गुरूणामनन्तरं । तत्र विश्रान्तौ को भेदः । उच्यते ।

क्रियामानेन मार्गाणां भेदस्तेन लयस्य च ।

अत्र कलानुसारिणी विश्रान्तिः । रत्नाकरकारस्तु लयानामेव विश्रान्तिभेदेन भेदो भवति न तु मार्गभेदेभ्य इत्याह ।

अस्य नृत्तादिभिर्योगे लयोऽपि त्रिविधो भवेत् ।
अन्यथा लयहीनः स्यादिति प्राहुर्मनीषिणः ॥ इति चाह ।

तालकलाविलासे

तालान्तरालवर्ती यः कालोऽसौ लयनाल्लयः ।
त्र्यश्रादिजातितालेषु ज्ञेयौ मध्यविलम्बितौ ॥

तस्मात् त्र्यश्रमिश्रखण्डसङ्कीर्णजातिषु द्रुतलयो नास्ति । द्रुतमध्यविलम्बास्तु तालेषु च चतुरश्रगाः । तस्मादर्धार्धक्रमेण त्र्यश्रादिजातितालानां ह्रासे विरामरूपद्रुत एवावशिष्यते । न तु द्रुतलयः । नृत्ते तदनुपयोगो वक्तव्यः ।

अच्युतः

लयमध्या—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि म प ध नि स.
(अव) स ध प म ग रि स.

मञ्ज

लयसंमम्—अवनद्धे साम्यम्

यन्नानुरोधनाद्गानं लयेन त्रिविधेन च ।
तस्य साम्यं भवेत्तत्र वाद्यं लयसमं स्मृतम् ॥

नान्यः

—गानतालयोः समत्वम्

स्थिते मध्ये द्रुते वापि लये गानं यथा भवेत् ।
तथा भवेत्तु तद्वाद्यं तद्वै लयसमं ततः ॥

भरतः

लयान्तरम्—गीतम्

तद्वल्लयान्तरं मार्गेलयाभ्यां द्विगुणं ततः ।
वर्धमानाङ्कमित्यन्ये ॥

अत्र कनिष्ठासारितान्मार्गे लये च द्विगुणं लयान्तरम् ।

लयान्वितः—देशीतालः

भवेदथ लयान्विते ।

चतुरश्रादिजातीनां लघूनां क्रमगामिनाम् ।
अनुलोमविलोमाभ्यां लक्ष्मीनारायणोदितः ॥

लक्ष्मीनारायणः

ललाटतिलकम्—ललाटभूषणम्

—करणम्

अन्वर्थं नाम यत्पृष्ठं वृश्चिकं चरणं यथा
तदङ्गुष्ठेन कुर्वीत यत्र भावे विशेषकम् ।
ललाटतिलकं विद्याद्विद्याधरगताविदम् ॥

ज्यायनः

ललिः—देशीलास्याङ्गम्

नृत्यं सरसिकं यत्र सौकुमार्यसमुज्ज्वलम् ।
तालानुगं तिरश्चीनमङ्गानां चारुचालनम् ॥

तदुक्तं नृत्तचतुरैर्लास्याङ्गं ललिसंज्ञितम् ।
यद्वा सौन्दर्यसम्पन्नसङ्गीतप्राप्तिसंभवम् ।
अधिभूमिं गतः कोऽपि हर्षो ललिरुदीरितः ॥

वेमः

ललितम्—हस्तः

ईषद्वक्रपरिन्यस्ततर्जन्याद्यङ्गुलीदलम् ।

ललितं कथ्यते सद्भिः

उमा

ललितम्

कान्तायास्सुकुमाराङ्गोपाङ्गत्वं ललितं विदुः ।

पार्श्वः

करचरणाङ्गन्यासः सभ्रूनेत्रोष्ठसंप्रयुक्तो यः ।
सुकुमारविधानेन स्त्रीभिरितीदं स्मृतं ललितम् ॥

भावविवेकः

—नृत्तकरणम्

वैशाखस्थानमास्थाय कर्तरीस्वस्तिकः करः ।
शिरस्सौन्दरसंज्ञं स्याद् द्रुतादृष्टिः प्रकीर्तिता ।
स्फुरिता च भवेच्चारी यत्र तल्ललितं मतम् ॥

नन्दी

स्फुरिता गतिः। यथा
भूस्पृष्टपार्श्वभागाभ्यां पादयोस्सरणं तथा।
पुरतोऽन्यत्र सारङ्गैः स्फुरिता साऽभिधीयते ॥

—करणम्
केशबन्धनितम्बाख्यहस्तयोरनुसारतः।
असकृद्दक्षिणं हस्तमुपवर्जितमाचरन् ॥
पादं चोद्वृत्तं कुर्याद्वामं करिकरं परम्।
मुहुरङ्गद्वयेनैव यत्र तल्ललितं मतम्।
स्यान्नृत्यनृत्तयोरस्य प्रयोगस्सविलासयोः ॥

ज्यायनः

'विलासानन्दवर्तने' इति लक्ष्मणः।

ललितम्
अबुद्धिपूर्वजं यत्तु सुकुमारं स्वभावजम्।
शृङ्गाराकारचेष्टात्वं ललितं तदुदाहृतम् ॥

भावविवेकः

—ध्रुवावृत्तम् (अष्टादशाक्षरम्)
यदि खलु पञ्चममष्टमनिधनं भवति धृतौ।
त्र्यधिकमथो दशमं गुरुकथितं ललितमिदम् ॥
मध्यमोत्तमपात्राणां दीर्घिकाद्यवलोकने।
चतुरश्रे पञ्चवक्त्रे ललिता नट्टभाषया ॥
खुविद विहंग विकंपिदमुहलं हसदि विअ।
कुपितविहंगविकंपितमुखरं हसतीव।

नान्यः

(नजजनभसाः) पञ्चवक्त्रः तालविशेषः। नट्टभाषा रागः।

—दर्शनम्
यदन्तर्विलसत्तारं प्रेमार्द्रे ललित तु तत्।

वेमः

प्रेमार्द्रमन्तर्विकसच्चारं ललितमीरितम्।

शारदातनयः

—मण्डलम्
दक्षिणं कुरुते सूचीं वामोऽतिक्रान्तचारिकाम्।
अन्यस्तु पार्श्वक्रान्तां च भुजङ्गत्रासितामपि ॥
वामः कुर्याद्दतिक्रान्तां आक्षिप्तां दक्षिणस्तथा।
अतिक्रान्तामथोद्वृत्तां अलातां च यथाक्रमम् ॥
वामः कुर्याद्दक्षिणस्तु पार्श्वक्रान्तां ततःपरम्।
वामस्तु सूचिकां कुर्यादपक्रान्तां तु दक्षिणः ॥
वामो विधायातिक्रान्तां ललितं सञ्चरेद्यदा।
तदा ललितसंज्ञं तन्मण्डलं परिकीर्तितम् ॥

वेमः

—अनुभावः
करचरणाङ्गन्यासः सभ्रूनेत्रोष्ठसंप्रयुक्तस्तु।
सुकुमारविधानेन स्त्रीभिरितीदं स्मृतं ललितम् ॥

भरतः

सुकुमारतया करचरणाङ्गन्यासो ललितम्।

भोजः

चरणनिपातझणझणितनूपुरं मसृणचरणरेखावशेषस्थितत्रिवलितरङ्गसंस्थानसमुन्नमितभुजमुरस्थलप्रसारणात् द्विगुणपृथक्कृतस्तनस्तबकं स्कन्धावसक्तैककुण्डलमुल्लसितभ्रूसाचीकृतविलोकितं ललितम्।

सागरः

भ्रूनेत्रादिक्रियाशालिसुकुमारविधानतः।
हस्तपादाङ्गविन्यासः तरुण्या ललितं विदुः ॥

पद्मश्रीः

—नाटकभेदः (सुबन्धूक्तम्)
ललितं कैशिकीवृत्तिशृङ्गारैकरसाश्रयम्।
उर्वशीविप्रलम्भोऽत्र तदुदाहरणं यथा ॥
विलासो विप्रलम्भश्च विप्रयोगो विशोधनम्।
उद्दिष्टार्थोपसंहारो ललिते पञ्चसन्धयः ॥
विलासः नायकादीनां यथर्तु रतिसेवनम्।
यथा श्रीवत्सराजस्य वसन्तोत्सववर्णनम् ॥
ईर्ष्यया छन्दतो यूनोर्विप्रलम्भः पृथक्स्थितिः।
यथा हि वत्सराजस्य देव्या वासवदत्तया ॥
विप्रलम्भस्तु मासादि वत्सरान्तमसङ्गतिः।
यथा शर्मिष्ठया देव्या ययातेर्वार्षपर्वणेः।
परिवादभयाद्दोषः शोधनं स्याद्विशोधनम् ॥
यथा रामेण वैदेह्या लङ्कावासविशोधनम्।
यथाहि विक्रमोर्वश्या उद्दिष्टार्थोपसंहृतिः ॥
उर्वशीयं चिराद्देहे सहधर्मचरी तव।
भवत्वितीन्द्रसन्देशः तत्पुरूरवसं प्रति ॥
विरोधः प्रणयं चैव पर्युपासनमेव च।
पुष्पं वज्रं च बध्नीयादवश्यं ललिते सुधीः ॥

शारदातनयः

शर्मिष्ठयेति। शर्मिष्ठायायातं नाटकम्।

ललित:—अङ्गहार

आयतस्थानके स्थित्वा नृत्येन सुडुमाश्रयेत् ।
समदृष्ट्या समायुक्तो ललितः प्रथमो भवेत् ॥

अवहित्थस्थानकेन सूक्ष्मनर्तनभाविकः ।
सूचनादृष्टिसंभूतो ललितश्च द्वितीयकः ॥

पादाभ्यां कुञ्चितांतो(?) हंसहस्तौ तु चालितौ ।
भ्रमतः पार्श्वयोश्चैव ललिताख्यस्तृतीयकः ॥

हस्तौ तु रेचिताकारौ सूक्ष्मनृत्तानुभाविनौ ।
वामपादाग्रसरणात् ललितश्च चतुर्थकः ॥

कटिस्थशशिहस्तेन लम्बिना शिखरेण च ।
चलनाभिधपादौ च ललितः पञ्चमो भवेत् ॥

नन्दीश्वरः

—देशीतालः

द्रुतद्वयाल्लगौ ज्ञेयौ ताले ललितनामनि ।

० ० । ऽ

वेमः

—बाहुः

ईषन्निम्नस्तु ललितस्स स्यान्मालादिधारणे ।
स्नपने याचने तोयप्लवने च नियुज्यते ॥

सोमेश्वरः

—मेलरागः (मालवगौलमेलजः)

सग्रहन्याससंयुक्तस्सांशः पञ्चमवर्जितः ।
प्रातः प्रयुज्यते नित्यं पूर्णः कैरपि सम्मतः ।
धत्रयेण समायुक्तो मतान्या ललिता बुधैः ॥

श्रीकण्ठः

—देशीतालः

ललिते स्याद्द्रुतद्वन्द्वाद्गुरुत्रयान्ते द्रुतौ लघुः ।

० ० ऽ ऽ ऽ ० ० ।

लक्ष्मणः

—वर्णालङ्कारः (सञ्चारी)

ललितस्वरमेव ललितमाह जगद्धरः । तल्लक्षणं तु

स्वरद्वयं क्रमात्तुर्यं व्युत्क्रमादागते द्वयम् ।
पूर्वमेव कलाः पूर्वरीत्यान्या ललितामिधे ॥

सरिमरिस रिगपगरि गमधमग मपनिपम-

जगद्धरः

—गीतालङ्कारः (ध्रुवभेदः)

यष्षड्विंशतिवर्णाङ्कः स स्यात्सर्वार्थसिद्धिदः ।
ललितश्चचत्पुटो ज्ञेयः तालः शृङ्गारपोषकः ।
ताले चच्चत्पुटे ज्ञेयं गुरुद्वन्द्वं लघुः प्लुतः ॥

संगीतसारः

—प्रबन्धः

लक्ष्यते ललिताख्योऽथ पदतेन्नविनिर्मितः ।
कृताभोगः पदैरन्यैर्न्यासः पूर्वं रेष्यते ॥

पूर्ववदिति । तालद्विमानितः		हरिपालः

पदैस्तेन्नैश्च तालैश्च सक्तो यत्र गीयते ।
प्रबन्धो ललितो नाम कथितस्सोमभूभुजा ॥

सोमेश्वरः

ललितगतिः—ध्रुवावृत्तम्

यदि पञ्च भवन्ति सकारगणा यदि चान्तगतोऽपि भवेद्गुरुः ।
यदि षष्ठगणश्च जकारकृतो विकृतेस्ततस्तु ललितगतिः ॥

सह आर मणोहर गंधवहो समआयि रोसमदजणणो ।
सहकारमनोहरगंधवहः संवाति रोषमदजननः ।

भरतः

द्वौ द्रुतौ लघुरेकश्च षोडशायतिवेशनम् ।
चतुर्द्रुतं गुरुश्चेति भेदश्चचत्पुटद्वये ॥
कर्तव्या ललितगतिः क्रीडावनविहारिणा ।
हिंदोलकेण रागेण वसन्ते नायिकां प्रति ॥

नान्यः

ललितपञ्चमः—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स ग म ध नि स.

(अव) स नि ध प म ग म रि स.

मख

ललितप्रियः—देशीतालः

ललितप्रियताले स्यात्सगणानन्तरो लघुः ।

। । ऽ ।		जगदेकः

पा पा मा गा पा मा गा

ललितप्रियताले स्यात्सगणानन्तरौ लगौ ।

। । ऽ । ऽ		कुम्भः

ललितरागध्यानम्

समच्छदानां कुसुमैर्विचित्रो
गौरो युवा पङ्कजपत्रनेत्रः ।
विभाति चित्रं ललिताभिधानः
प्रसन्नवक्त्रः सविलासवेषः ॥

श्रीकण्ठः

ललितवर्तना

लीलया ललितौ हस्तौ वर्तितौ स्वोक्तरीतितः ।
यदा स्यातां तदा प्रोक्ता ललिताभिधवर्तना ॥

अशोकः

एतावेव चलौ मूर्धक्षेत्रगौ ललिता मता।
खटकास्यौ शिरोदेशे लग्नाग्रौ तां परे जगुः॥
एताविति अलपद्मोल्वणौ । 　　कल्लिनाथः

ललितसञ्चरम्—मण्डलम्
ऊर्ध्वजानुं तथा सूचीं दक्षिणश्चरणस्ततः ।
अपरोऽङ्घ्रिरपक्रान्तां पार्श्वक्रान्तां तु दक्षिणः ॥

वामस्सूचीं भ्रमरिकां पार्श्वक्रान्तां तु दक्षिणः ।
वामः कुर्यादतिक्रान्तां चरणो दक्षिणः पुनः ॥

सूचीं कुर्यादपक्रान्तां कुरुते दक्षिणेतरम् ।
पार्श्वक्रान्तां दक्षिणोऽङ्घ्रिः वामोऽतिक्रान्तचरिकाम् ॥

ततश्छिन्नाख्यकरणसंश्रयौ चरणावुभौ ।
ततस्तु बाह्यभ्रमरीं कुरुते दक्षिणेतरः ।
यत्र तन्मण्डलं तद्ज्ञैः ज्ञेयं ललितसञ्चरम् ॥
　　वेमः

ललितस्वरः—वर्णालङ्कारः (सञ्चारी)
आद्यौ स्वरौ समुच्चार्य ततो गच्छेच्चतुर्थकम् ।
प्रत्यागच्छेत्क्रमेणैवमनेन ललितस्वरे ॥
　　मोक्षदेवः

ललितस्वरमेव ललितमाह जगद्धरः।

ललिता—मेलरागः ( मायामालवगौलमेलजन्यः )
(आ) स म ग ध नि स.
(अव) स नि ध म ग रि स.
　　मञ्ज

—रागः
ललिता टक्करागात्तु तदङ्गं ललिता मता ।
षड्जांशन्याससंयुक्ता ज्ञेया वीरे रिपोज्झिता ॥
　　जगदेकः

—(द्वितीया) भाषारागः
षड्जन्यासग्रहवती पञ्चमर्षभवर्जिता ।
ललिता स्यात् टक्कभाषाया उत्सवस्नेहयोर्मता ॥
　　भट्टमाधवः

—(प्रथमा) भाषारागः
मध्यमर्षभगैस्तारमन्द्रैस्तु ललितैर्युता ।
धैवतांशग्रहन्यासा मन्द्रमध्यमशालिनी ।
गीयते ललिता भाषा भिन्नषड्जसमुद्भवा ॥
　　भट्टमाधवः

—ध्रुवावृत्तम् (एकादशाक्षरम्)
आद्ये चतुर्थं दशमं नैधनं ह्यष्टमं तथा ।
यत्र दीर्घाणि पादे स्युः तद्वृत्तं ललितं स्मृतम् ॥
　　भरतः

मध्यमोत्तमपात्राणां ललिता करुणे रसे ।
पञ्चपाणैर्भ्रोपभङ्गः रागस्तु ककुभो भवेत् ॥

पासाहिवद्धचलणो गआणुगो—पाशाभिबद्धचरणो गजानुगः ।
　　नान्यः

ध्रुवावृत्तम् (अष्टाक्षरम्)
पञ्चमं नैधनं चैव पादे स्यातां तु यत्र वै ।
नित्यमानुष्टुभे दीर्घे विज्ञेया ललतेति सा ॥
(नजलगाः) 　　भरतः

कुसुमसुगन्धि अये ।

—मेलरागः
या गौरीरागसंभूता ललिता पञ्चमोज्झिता ।
सांशोद्ग्राहा तथा मान्ता गीतान्ते सा सुशोभना ॥
सर्वदा गेया। 　　अहोबिलः

—दृष्टिः
ईषदाकुञ्चितप्रान्ता मधुरा च समन्मथा ।
ललिता सस्मिता दृष्टिः ललितेऽर्थे प्रयुज्यते ॥
　　सोमेश्वरः

स्वामिप्रेतप्रियालोके स्त्रीभिरेषा प्रयुज्यते ।
　　विप्रदासः

ललिता दृष्टिरेषा तु कलिता धृतिहर्षयोः ।
　　वेमः

ललिता मन्थरा ।
　　शारदातनयः

—रागः (वंशे वादनक्रमः)
तारषड्जं ग्रहं कृत्वा द्रुतीकृत्य तमेव च ।
तृतीयं स्वरमुक्त्वाथ द्वितीयं च तृतीयकम् ॥
प्राप्य द्रुततां पश्चादधो धो वादयेत्स्वरम् ।
तमेव च द्रुतीकृत्य वादयित्वा द्वितीयकम् ॥
तृतीयं द्विस्त्रिराहत्य ग्रहे न्यासो यदा भवेत् ।
स्वस्थानं प्रथमं प्रोक्तं ललितायास्तथा बुधैः ।
वंशे स्वरस्तृतीयोऽस्याः स्थायित्वेनोपलक्षितः ॥
　　वेमः

—उपाङ्गरागः (वीणायां वादनक्रमः)
स्थायिनं धैवतं कृत्वा तत्पूर्वावधरुह्य च ।
ग्रहाधस्थ्यं ग्रहं चोक्त्वा तस्माचोक्त्वा तृतीयकम् ॥
तुर्यं विलम्बयेत्तस्मादधस्त्यौ संस्पृशेत्स्वरौ ।
तृतीयं च विलम्ब्याथ स्वरं स्पृष्ट्वा ग्रहात्परम् ॥
अवरुह्य ग्रहात्पूर्वौ ग्रहाधस्त्यं पुनर्व्रजेत् ।
कम्पिते चेद्ग्रहे न्यासो जायते ललिता तदा ॥

वेमः

—रागः
गान्धारर्षभनिस्त्वनेन बहुलस्सांशग्रहो धैवतं
मध्ये मध्यमपध्वनिर्मृदुरवा मन्द्राऽपि ताराऽपि वा ।
सम्पूर्णास्फुरिताखिलेन गमकेनालंकृता पञ्चम-
स्वल्पां तां ललितां वदन्ति नियतं गान्धर्वविद्याविदः ॥

नान्यः

समस्वरा तु ललिता गमकस्वरपेशला तथा चित्रैः ।
स्फुरणैर्भवति समेता मन्द्रैस्तारैश्च गीतिविन्यासैः ॥

कश्यपः

धैवतांशा समन्द्रा च किञ्चित्स्पृशति पञ्चमम् ।
निषादगान्धारहीना ललितौडुविता मता ॥

सोमेश्वरः

अथाङ्गं टक्करागस्य ललिता कथ्यते गुणैः ।
षड्जो न्यासे तथांशे स्यात्कथिता पूर्वसूरिभिः ॥

हरिः

रागस्तु टक्करागस्य अङ्गं च ललिताभिधः ।
सांशन्यासो रिपत्यक्तो गातव्यो मङ्गलादिषु ॥

सोमराजः

—समा प्रथमरागः
या टक्करागाल्ललिता प्रदिष्टा
तदङ्गमेषा ललिता समा च ।
न्यासांशषड्जा रिपवर्जिता स्यात्
संगीयते वीररसे प्रवीणैः ॥

मोक्षः

—रागः
समन्द्रा रिपहीना स्याल्ललिता टक्करागजा ।
गसाभ्यां मनिधैर्भूरि तारगान्धारधैवता ॥
संपूर्णा ललिता चित्रैर्निगमैर्वलिमिस्तथा ।
धमन्द्रा मन्द्रतारैश्च गमकैरुपशोभिता ॥

मोक्षः

—शकृते मात्रावृत्तम्
चतुर्मात्रिक एकः अथवा पञ्चमात्रिक एकः । चतुर्मात्रिकः पञ्चमात्रिकः चतुर्मात्रिकः पञ्चमात्रिकः ।

विरहाङ्कः

—मात्रावृत्तम्
पञ्च चतुर्मात्रिकाः, गुरुः,
द्वौ चतुर्मात्रिकौ र एकश्चतुर्मात्रकः र र ग
अन्त्यप्रासः ।

विरहाङ्कः

—नायिका
रूपयौवनसम्पन्ना सखीकेलिकृतोद्यमा ।
वासोऽङ्गरागमाल्यर्तुवेलाशैलसरित्प्रिया ।
कामभोगैकरसिका ललिता परिकीर्तिता ॥

शारदातनयः

श्रुतिः
पञ्चमस्य चतुर्थी श्रुतिः ।
पञ्चमस्य तृतीया श्रुतिः ।

पाल्कुरिकि सोमः

—रागः
सर्वाङ्गं ललितेत्याहुः सर्वसंपूर्णलक्षणा ।
टक्कभाषैव ललिता ललितैरुत्कटैस्स्वरैः ।
षड्जांशग्रहणन्यासा षड्जमन्द्रा रिपोज्झिता ॥

हम्मीरः

—(अपरो) रागः
भिन्नषड्जेति ललिता ग्रहांशन्यासधैवता ।
रिगमैर्वलितैस्स्नेहे हेमन्ते मुनिसम्मता ॥

हम्मीरः

—रागः
परिवर्जा च ललिता औडुवा सत्रपा मता ।
मूर्छना शुद्धमध्या स्यात् संपूर्णा केचिदूचिरे ॥

दामोदरः

उपाङ्गा ललिता ज्ञेया सत्रया रिपवर्जिता ।

मदनः

## ललितारागध्यानम्

वीणापुस्तकपाणिं मञ्जुलकेशीं प्रियेण जल्पन्तीम् ।
अरुणारविन्दनयनां ललितां सङ्गीतमातृकां ध्याये ॥

रागसागरः

प्रफुल्लसप्तच्छदमालभारी तिगौरोऽलसलोचनश्रीः ।
विनिःसृतो वासगृहात्प्रभाते विलासिवेषो ललितः प्रदिष्टः ॥
अस्याः पौरुषमूर्तिः कल्पभेदात् । इयमौडुवा ।

संगीतसरणिः

ललितौ—नृत्तहस्तौ

शिरःक्षेत्रे यदा प्राप्तौ पल्लवौ ललितौ तदा ।
चतुरश्रक्रियोपेतौ शीर्षस्थावचलौ परे ॥
जगुरेतावथान्ये तु करौ तौ खटकामुखौ ।
शनैर्गत्वा शिरोदेशं लुप्तावाविति मेनिरे ॥

अशोकः

वलितौ पल्लवौ वापि शीर्षकौ ललितौ विदुः ।

कुम्भः

लवणवारि—मेलरागः ( खरहरप्रियमेलजन्यः )
(आ) स ग म प ध स.
(अव) स नि ध प म ग रि स.

मज

लवणी—देशीलास्याङ्गम्

नर्तक्या प्रौढया नृत्तप्रयोगे दुष्करेऽपि च ।
अप्रयत्नेन नमनमङ्गानां लवणी मता ॥

वेमः

लवणिरिति ज्यायनः । नवणिरित्यन्यः ।

लहरीचक्रसुन्दरः—चालकः

हस्तेनापि समीपस्थे तिर्यगेकत्र लोलिते ।
आन्दोलिताङ्गुलिदलं पराचीनं परं करम् ॥
नीत्वा वामांसपर्यन्तं प्रसार्य च बहिः पुनः ।
तमेवान्तस्समाक्षिप्य मूर्ध्नस्सव्यापसव्ययोः ॥
चालयित्वा विलासेन स्वपार्श्वे प्रापयेद्यदि ।
वीरनारायणेनोक्तो लहरीचक्रसुन्दरः ॥

वेमः

लाक्षणिकः—(अभिनयः)

नोच्चार्य वस्तुनामानि केवलं हस्तभेदतः ।
तदाकारप्रकटनं नाम्ना लाक्षणिको मतः ॥

शृङ्गारः

लाक्षा—श्रुतिः

मध्यमस्य द्वितीया श्रुतिः ।

अनूपः

लागभृङ्खला—देशीनृत्तम्

ढेङ्कीजोडाचितौ पश्चात्त्रौको लगमदिण्डकः ।
पक्षिसालो हुरुमयी प्रोक्ता गुण्डालपूर्वका ॥
ढलथा च सहदिण्डं हनुमद्गापिता इमे ।
धावने गदिता लागा वसुभिर्गणिता बुधैः ॥
ऊर्ध्वस्थितभावेन लागाश्चत्वार ईरिताः ।
होयलाया हुरुमयी तथा डालस्य हुर्मयी ॥
हुरुमयी रायभारस्य कुञ्चितं दोटमेव च ।
चत्वारः कथिता लागा गणवर्येण तण्डुना ॥

वेदः

लाङ्गलः—नृत्तबन्धः

आद्यपङ्क्तेस्तृतीयस्था तद्द्वितीयादिमं व्रजेत् ।
द्वितीयाया द्वितीयं च तृतीयायास्तृतीयकम् ॥
तुरीयायाश्चतुर्थं च तृतीयं च द्वितीयकम् ।
स्थानं व्रजेत्क्रमेणैव ततश्चान्या तु नर्तकी ॥
तृतीयपङ्क्तिं तुर्यस्था शेषस्थानेष्वनुक्रमात् ।
चरेद्यत्र च बन्धोऽयं लाङ्गलः परिकीर्तितः ॥

वेमः

लाटवराटी—रागः

धैवतांशग्रहन्यासा रहिता पञ्चमेन च ।
गतारा मन्द्रहीना च वराटी लाटदेशजा ॥

नान्यः

लाटी—रागाङ्गरागः

शुद्धपञ्चमरागाङ्गं लाटी स्यान्मन्द्रवर्जिता ।
धैवतांशग्रहन्यासा पञ्चमस्वरवर्जिता ।
स्वल्पत्वादि विहीनत्वाद्भाषाङ्गं कश्चिदभ्यधात् ॥

कुम्भः

—(प्रबन्धे) रीतिः

कथ्यतेऽत्र समासेन वैदर्भीप्रमुखास्तु याः ।
वर्णभेदेन गदिता अनुप्रासविशेषतः ॥
तत्र तालाद्यभेदेन पदानुप्राससंश्रया ।
लाटदेशप्रियत्वाच्च वृत्तिर्लाटी निगद्यते ॥

कुम्भः

लाडनृत्तम्—देशीनृत्तम्

धावनेनोत्प्लुतिर्यत्र तेऽष्टौ कठिनकर्मणि ।
उद्धृत्योत्प्लुतिपूर्वा च चत्वारः परिकीर्तिताः ।
एवं द्वादशधा प्रोक्ताः तण्डुना वायुसूनुना ॥

वेदः

लाभः— प्रतिमुखसन्धेः प्रथममङ्गं मातृगुप्तमते ।

साधनसंपत्तिर्लाभः । यथा–मायामदालसे गालवर्षिणा दत्तस्य मार्गणस्य संपत्तिः कुवलयाश्वस्य । मार्गणं तु तालकेतुवधस्य साधनम् ।

सागरनन्दी

लालनहस्तः

अङ्गुष्ठानामिके वक्रे शेषाङ्गुल्यः प्रसारिताः ।
लालनाख्यकरः प्रोक्तः भरतागमपारगैः ।
गण्डस्थलेत्वसौ हस्तो लालनार्थे नियुज्यते ॥

विनायकः

लालित्यम्—वंशे फूत्कारगुणः

लालित्यं गमकालापपेशलत्वमुदीरितम् ।

कुम्भः

लावणम्—देशीनृत्तम् (उडुपाङ्गम्)

मण्डले दशहस्तोर्ध्वप्रसारितपताककः ।
वामोऽर्धचन्द्रः कट्यां चेद्भ्रामयेत कटीतटात् ॥

ऊर्ध्वमङ्गविपर्यासाद्भ्रामयेदुत्प्लुतानि चेत् ।
दक्षिणे दक्षिणमुखो वामे वाममुखस्तथा ॥

सम्मुखे द्वौ करावर्धचन्द्रौ स्यातां कटीतटे ।
रूपकेणैव तुल्येन भ्रामयेल्लावणं ततः ॥

वेदः

लास्यम्—नृत्यम्

ललनाललिताङ्गैर्यत्साधितं कामवर्धनम् ।

कुम्भः

लिङ्गहस्तः

वामे पताकहस्तस्य कारयेच्छिखरं बुधः ।
लिङ्गहस्तोऽथवाप्यर्धचन्द्राङ्गुष्ठं पिधाय च ॥

यथा बहिः प्रकाशं स्यान्मुष्टिना दक्षिणेन च ।
मुष्ट्यङ्गुष्ठं प्रसार्याङ्गुलीमिराच्छादयेदयम् ।

ईश्वरोऽस्याधिदेवः स्याद्विनियोगस्तु तत्र वै ॥

गौरीमतम्

लीनम्—करणम्

पताकाञ्जलिवक्षस्थं प्रसारितशिरोधरम् ।
निहञ्चितांसकूटं च तल्लीनं करणं स्मृतम् ॥

भरतः

ऊर्ध्वमण्डलिनौ कृत्वा करौ वक्षःस्थितोऽञ्जलिः ।
निहञ्चितं चांसकूटं यत्र ग्रीवा नता कृता ।
लीनं तत्करणं योज्यं वल्लभाभ्यर्थने बुधैः ॥

शार्ङ्गदेवः

ऊर्ध्वमण्डलिनौ कृत्वा ततो वर्तनयानयोः ।
वक्षःस्थलेऽञ्जलिं कुर्याच्छिरो यत्र निहञ्चितम् ।
तल्लीनमिति विज्ञेयं प्रिययोः प्रार्थनां प्रति ॥

ज्यायनः

ग्रीवानतांसकुट्टं च भवेद्यत्र निहञ्चितम् ।

इत्यधिकं कुम्भो वक्ति । 'भवेदन्योन्यवन्दने' इति लक्ष्मणः ।

लीनः—रसगतिः

रसोऽनुभूयमानश्चेद्रसान्तरतिरस्कृतः ।
अन्यरागान्निवृत्तो वा स लीन इति विश्रुतः ॥

शारदातनयः

लीनमतिः—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स रि म प ध स .
(अव) स नि ध प म ग रि स .

मल्लः

लीमनी (?)—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग म प ध स .
(अव) स नि ध प म ग रि स .

मल्लः

लीलम्—करणम्

यत्र स्वाभाविकं चार्यां पद्भ्यां च क्रमणं भवेत् ।
उद्वेष्टितापवेष्टितौ करौ लीलाह्वयं च तत् ॥

हरिपालः

लीला—अनुभावः

प्रेम्णा जनस्य या चेष्टा याऽनुरागाधिकेन या ।
क्रियतेऽनुकृतिरस्येह लीलोक्ता मुनिसत्तमैः ॥

वात्स्यायनः

वागङ्गालङ्कारैः श्लिष्टैः प्रीतिप्रयोजितैर्मधुरैः ।
इष्टजनस्यानुकृतिर्लीला ज्ञेया प्रयोगज्ञैः ॥

भरतः

प्रियस्यानामसमागमा सखीनां पुरतः रूचिरसविनोदनार्थं वेषगतिहसितभणितैरनुकृतिर्या क्रियते सा लीला ॥

सागरः

अप्राप्तवल्लभसमागमनायिकायाः
सख्याः पुरोऽत्र निजचित्तविनोदबुद्ध्या ।
आलापवेषगतिहास्यविलोकनाद्यैः
प्राणेश्वरानुकृतिमाकथयन्ति लीलाम् ॥

यथा वेणीबन्धेत्यादि ।

शारदातनयः

इष्टजनानुकृतिर्लीला– यथा—जंजं करेसि (गाथासप्तशती

भोजः

लीला—देशीतालः

लीला दलप्लुतात्मतः ।

० । ऽ

मदनः

लीलाद्यः

लीलादिहावचर्गस्य विभावत्वे विकल्पतः ।
मुनेरत्रानुभावत्वं सम्मतं तदथोच्यते ॥

लक्षणोदाहृतीनां च वैचित्र्यादुभयाङ्गता ।
भङ्गिस्तोऽस्त्वनुभावित्वं विभावित्वं च दृश्यते ॥

लीलाविलासविच्छित्तिकिलिकिञ्चितविभ्रमाः ।
मोट्टायितं च बिब्बोकः तथा कुट्टमितं भवेत् ॥

विकारो ललितं स्त्रीणां स्वभावप्रभवा दश ।
हावास्तथा नृणां चेति विकाराः सम्भवन्ति च ॥

केलिर्हेला मदो मौग्ध्यं चाटुहावाल्पतास्तथा ।
विक्षेपपरिहासौ च भावो व्याजेङ्गितेऽपि च ॥

प्रतिभेदनमाकारः चित्तस्खलितमित्यपि
कुतूहलं क्रीडनकं प्रेमाभिसन्धिसंवृती ।
अनुतापः क्रमादेषामुदाहरणमुच्यते ॥

कुम्भः

लुठितम्—पादमणिः

गच्छतस्तिष्ठतो वापि पादस्यैकस्य पार्श्वतः ।
स्वपार्श्वगः पुरः पाते सशब्दं ताडनं भुवि ॥

विदधात्यङ्गुलीपृष्ठतलाभ्यां सत्वरं यदा ।
तदा लुठितमाचष्ट रूपनारायणो नृपः ॥

वेमः

—पादचारः

स्वस्तिकस्थितपादाग्रे लुठनाल्लुठितं भवेत् ।

नाट्यदर्पणे

स्वस्तिकस्थितपादस्य लोलनाल्लुठितं भवेत् ।

हरिपालः

लुलायहस्तः

कनिष्ठानामिकाङ्गुष्ठाः श्लिष्टाश्चाग्रे पुरोमुखम् ।
तर्जनीमध्यमे चैव ऊर्ध्वाग्रे विस्तृते यदि ॥
लुलायाभिधहस्तोऽयं प्रोच्यते भरतादिभिः ।
पुरोमुखौ स्थितौ तौ चेत्कुरङ्गार्थे लुलायके ॥

विनायकः

लेखः—सन्ध्यन्तरम्

विवक्षितार्थकलिता पत्रिका लेख ईरितः ।

यथा— विक्रमोर्वश्यां भूर्जपत्रगतोऽयमक्षरविन्यास इति राजवाक्यम् ।

सिंगः

यथा—तापसवत्सराजे प्रणीतेन वासवदत्ताया लेखः ।

भोजः

सन्ध्यन्तरप्रदेशाः सन्धीनामन्तरे चाकाशपुरुषवचनानि लेख्योक्त्या विधातव्यानि इति सागरनन्दिमतम् ।

लेखनः—हस्तः

वामोत्तानपताकस्थः चलत्संदंशहस्तकः ।
लेखनाख्यो भवेद्धस्तो ज्ञेयो लेखनकर्मणि ।
केचनैनं जगुः पूर्वनृत्ताभिनयगोचरम् ॥

विप्रदासः

लेशः—लक्षणम्

यद्वाक्यं वाक्यकुशलैरुपायेनाभिधीयते ।
सदृशार्थाभिनिष्पन्नः स लेश इति कीर्तितः ॥

भरतः

यथा अविमारके—द्वितीयेऽङ्के धात्रीनायकसंवादः । अन्ये तु लेख इति पठन्तः, इङ्गितज्ञानाभिधानमिति लक्षयन्ति ।

लेशगण्डः वीथ्यङ्गम्

द्व्यर्थता यत्र वाक्यानां लेशेनापि प्रतीयते ।
शब्दभङ्गानुयातश्च लेशगण्डस्स कथ्यते ॥

यथा–वेण्यां–रक्तप्रसाधितभुव इति सहदेववाक्यम् ।

सागरः

लेशचम्पा—देशीतालः

लघुर्गुरुर्गुरुश्चैव लेशचम्पाख्यतालके ।

10 मात्राः

तालप्रस्तारः

लेहनम्—चिबुकम्

जिह्वया लेहनं लेहो लेहे लौल्ये च तद्विदुः ।

ज्यायनः

लेहिनी—रसना
या जिह्वा लेढि दन्तोष्ठं सा सद्भिर्लेहिनी मता ।
अशोकः

लिहती किलदन्तोष्ठौ लेहिनी सा भयादिके ॥
विप्रदासः

लोकप्रतापः—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स रि म प ध स.
(अव) स नि ध प म ग रि ग स.
मञ्ज

लोकेन्द्रमणिः—मेलरागः (खरहरप्रियामेलजन्यः)
(आ) स रि म प ध स.
(अव) स ध प म ग रि स.
मञ्ज

लोभः
लोभोऽपि सम्मतशिष्टैर्वित्तत्यागासहिष्णुता ।
भावविवेकः

लोलम्—दर्शनम्
धारावाहिकसञ्चारो यत्र तल्लोलमुच्यते ।
शारदातनयः

लोलः—देशीतालः
लोलताले क्रमात्प्रोक्ताः खण्डमिश्रविरामकाः ।
लक्ष्मणः

लोलम्—चिबुकम्
तिर्यग्गतागतं लोलं रोमन्थावर्तनादिषु ।
कुम्भः

रोमन्थे कवलावर्ते लोलं तिर्यग्गतागतम् ।
विप्रदासः

लोलम्बः—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स म प ध नि स.
(अव) स नि म ग रि स.
मञ्ज

लोला—हनुः
तिर्यक् प्रचलिता तज्ज्ञैः लोलानामोच्यते हनुः ।
रोमन्थे कवलावृत्तौ गण्डूषे च प्रयुज्यते ॥
सोमेश्वरः

व्यादीर्णा चलिता लोला रोमन्थे ग्रासलोलने ॥
ज्यायनः

—श्रुतिः
पञ्चमस्य तृतीया श्रुतिः ; बालेति केचन पठन्ति ।

—रसना
व्यात्तास्ये या चला लोला सा वेतालनिरूपणे ।
अशोकः

अन्तर्भ्रान्ता भवेल्लोला जिह्वा सा तु नियुज्यते ।
डोलने बालमञ्चस्य जिह्वायाः पतनं तथा ॥
सोमेश्वरः

लोलाङ्गी—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स रि म ग रि म प ध नि.
(अव) स नि ध म ग स.
मञ्ज

लोलितम्—शिरः
सर्वतो लोलनान्मन्दं मन्दं स्याल्लोलितं शिरः ।
मूर्छाव्याधिग्रहोन्मादनिद्रावेशेषु तन्मतम् ॥
विप्रदासः

लोलितः—बाहुः
आन्दोलितो लोलितस्स्यात्संयोज्यो बालरोदने ।
नृत्ते वृश्चिकदंशे च नवनीतावकर्षणे ॥
सोमेश्वरः

लोलितम्—करणम्
वैष्णवं स्थानकं हस्तो रेचितोऽन्योऽलपल्लवः ।
वक्षस्स्थो लोलितं शीर्षं विश्रान्तिः पार्श्वयोः क्रमात् ॥
यत्र कुर्वीत तत्त्वज्ञैर्लोलितं प्रतिपादितम् ।
अत्र चारीमलाताख्यां भट्टतण्डुरमन्यत ॥
ज्यायनः

—पादचारः
पूर्ववत्कुट्टनं कृत्वा मन्दं मन्दमतःपरम् ।
अस्पृष्टभूमेः पादस्य चालनं लोलितं भवेत् ॥
नाट्यदर्पणे

—शिरः
शिरः स्याल्लोलितं सर्वदिक्कैः शिथिललोचनैः ।
निद्रागदग्रहावेशमदमूर्छासु तन्मतम् ॥
शार्ङ्गः

लोलितौ—स्कन्धौ
विनियोगो लोलितयोः हुडुक्कावाद्यवादने ।
हास्ये विटकृते नृत्ते विप्रदासेन वर्ण्यते ॥
विप्रदासः

स्कन्धः प्रचलितः ख्यातो लोल इत्यपि संज्ञितः।

सोमेश्वरः

**लोल्लटः**

अयं नाट्यशास्त्रव्याख्याता। रससूत्रव्याख्याने अभिनवेन स्मृतः। क्री. प. ८००

**लोल्ली—प्रबन्धः**

सानुप्रासपदद्वन्द्वा प्रान्तैर्लोल्लीपदान्विता।
पदैश्च बहुभिर्गीता लोल्ली प्राकृतभाषया॥

जग-मल्लः

निरूप्यतेऽथ लोलीयं सानुप्रासपदद्वया।
लोल्ली पदान्विता प्रान्ते प्राकृतप्रथिता भवेत्॥

हरिपालः

पदद्वयं तथा प्रान्ते ललितं च पदं यदि।
गीयते सा तु विख्याता लोल्ली प्राकृतभाषया॥

सोमेश्वरः

**लोहडी—उत्प्लुतिकरणम्**

समपादस्थितस्तिर्यगुत्प्लुतो वलितं ततः।
पराङ्मुखो यदि पतेत्सहसा सा तु लोहडी॥ वेदः

इयमेव, लोभडी, लोहटी, इति च व्यवह्रियते।

**लोहड्यञ्चितम्—उत्प्लुतिकरणम्**

विधाय लोहडीं पश्चादञ्चितं क्रियते द्रुतम्।
यत्र तत्करणं प्रोक्तं लोहड्यञ्चितसंज्ञिकम्॥

वेमः

## व

**वंशः**

पूर्वं भगवन्महेश्वराराधनसाधनं मतङ्गमुनिप्रभृतिभिः वेणुनिर्मितं, ततो वंश इति प्रसिद्धम्। वस्तुतस्तु छिद्रात्मकसुषिराभिव्यक्तस्वरविशेषरूपतयैवास्योपयोगः खादिरादिनिर्मितोऽप्यसौ भवत्येव। तथा चोक्तम्—

वंशे सृष्टा यदा पूर्वं वंशसंज्ञा तु वैणवी।
वंशास्तु खादिरा रौप्याः कांस्यजा वा सकाञ्चनाः॥

अत एव सुषिरयोगात् प्राणसंयोगेनातोदनीयत्वात् सुषिराद्यमित्युच्यते।

अभिनवगुप्तः

**—वाद्यविशेषः**

वैणवः खादिरो वा स्याद्रक्तचन्दनजोऽथवा।
दन्ततो गजदन्तेन निर्मितो वा तथा हि सः॥
कांस्यजो वा भवेद्रौप्यः सुवर्णेनाथ निर्मितः।
अग्रन्थिरव्रणः श्लक्ष्णो निर्भेदस्सरलः समः॥

सुवृत्तः सुषिरं गर्भे कनिष्ठामूलसम्मितम्।
स्वदैर्घ्ये मानदैर्घ्यं च समाकृति समन्ततः॥

नवरन्ध्रीं परां पृष्ठे बदरी बीजसन्निभाम्।
दधतो जायते वंशः पिण्डः सार्धयवोऽस्य च।
सामान्यलक्षणं त्वेतद्विशेषोऽथोऽभिधीयते॥

कुम्भः

**वंशगतयः**

वंशस्य गतयः पञ्च कम्पिता चलिता ततः।
मुक्ता तथार्धमुक्ता च ततः प्रोक्ता निपीडिता॥

वेमः

**वंशपत्रम्—ध्रुवावृत्तम्**

प्रथमे यदा तु गुरु यत्र जान्तं तृतीयकं यदि च द्वितीकं गुरु अथ षोडशाक्षरकृते तु पादे चतुर्थकं त्रिकमिहोद्धृटं नर्कुटं हि तदिति, यत्तु चतुर्दशमनिधनगैर्भूषितमक्षरैर्गुरुकृतैः श्रवणसुखकरैः, तत्खलुवंशपत्रपतितं मुनिगणगदितं नर्कुटकं वदन्ति नियमादतिधृतिरचितम्।

माधव काणणं जुअदिअमदजणणं। माधवकाननं युवती मदजननम्।

**वंशपत्रपतितम्—सप्तदशाक्षरवृत्तम्**

भरनभनलगाः। भरतः

**वंशपिण्डमानम्**

सार्धयवः सर्ववंशेषु पिण्डः।

**वंशभेदाः**

तत्रादावेकवीराख्ये वंशे त्वेकाङ्गुलं भवेत्।
मानं फूत्काररन्ध्रस्य ताररन्ध्रस्य चान्तरे॥

अन्येऽपि वंशाः फूत्कारताररन्ध्रद्वयान्तरे।
अष्टादशाङ्गुलं यावदेकैकाङ्गुलवर्धनात्॥

चतुर्दशोदितास्तत्रोमापतिश्च त्रिपूरुषः।
चतुर्मुखः पञ्चवक्त्रः षण्मुखश्च मुनिर्वसुः॥
नाथेन्द्रश्च महानन्दश्चादिशौ रुद्र एव च।
मनुः कलानिधिस्तद्वत् अपरोऽष्टादशाङ्गुलः॥

त्रयोदशाङ्गुलो वंशः तथा पञ्चदशाङ्गुलः।
नेष्टः पूर्वैरनुक्तत्वात्तद्वत्सप्तदशाङ्गुलः॥

वंशो विंशत्यङ्गलैः स्यात्मुरलीसंज्ञकोऽपरः ।
द्वाविंशत्यङ्गुलैश्चान्यो वंशः श्रुतिनिधिर्मतः ।
अतिमन्द्रस्वरतया नेष्टोऽसौ वंशवेदिभिः ॥ वेमः

वंशभेदः
अतितारस्वरतया वंशान्पञ्चाङ्गुलान्तरान् ।
अर्वाक्तनाः परे वंशान्नेष्यन्ते, वेमः

वंशभेदाः
पञ्चाङ्गुलात्समारभ्य यावद्दष्टादशाङ्गुलम् ।
फूत्कारसुपिरस्याधः ताररन्ध्रस्य पूर्वतः ॥
अङ्गुलानामिय संख्या समाख्याता पृथक् पृथक् ।
तारं रन्ध्राणि कुर्वीत वंशेऽष्टौ समभागतः ॥
पञ्चाङ्गुलो भवेद्वंशः षोडशाङ्गुलमायतः ।
फूत्काररन्ध्रादारभ्य गणना तत्र कीर्तिता ।
समभागाष्टकरन्ध्रेणार्धभागं समुत्सृजेत् ॥
एवं वंशेषु सर्वेषु सुषिराणि प्रकल्पयेत् ।
फूत्काररन्ध्रादूर्ध्वं स्याच्चतुस्त्रिद्वयङ्गुलं क्रमात् ।
सर्ववंशेषु कुर्वीत यथाशोभं यथारुचि ॥ सोमेश्वरः

वंशरन्ध्रबहिर्मानम्
जातिवक्त्रशिरः प्रान्तौ आदित्यादेः समासतः ।
एकवीरावधिर्ज्ञेया वंशानां विश्वमूर्तिवत् ।
लिक्षाद्वितयसंयुक्तः सपादयवसंयुतैः ॥
मानं. कुम्भः

वंशरन्ध्रेषु स्वरन्यासः
षड्जग्रामवेणौ स रि ग म प ध नि .
मध्यमग्रामिकवेणौ म प ध नि स रि ग .
गान्धारग्रामिके वेणौ ग म प ध नि स रि . नान्यः

वंशवादनक्रमः
वंशे यः क्रियते स्थायी योजयेत्तदपेक्षया ।
द्वितीयादिपदं त्वत्र लक्षणस्थं विचक्षणः ॥
लक्षणे यस्य रागस्य यावन्तः स्युर्ग्रहादयः ।
स्वराणां तावतां यस्मिन्सम्भवः स्थायिनि स्वरे ॥
तेषु स्वरेषु मतिमान् स्थायिनं तं समाश्रयेत् ।
अनयैव दिशाऽन्येऽपि रागा ऊह्या विचक्षणैः ॥
नवाङ्गुलस्य वंशस्य प्रमाणं सकलं श्रितम् ।
वंशवादनक्रमे नवाङ्गुलवंश एव ॥ वेमः

वादनक्रमो गृहीतः । नवाङ्गुलवंश इति फूत्काररन्ध्रात्प्रथमरन्ध्रपर्यन्तं यदन्तं तन्मानं यस्मिन्वंशे ।

वंशवादनेऽङ्गुलिविन्यासः
व्यक्तमुक्ताङ्गुलिस्तत्र स्वरो ज्ञेयश्चतुःश्रुतिः ।
कम्पमानाङ्गुलिश्चैव त्रिश्रुतिः परिकीर्तितः ॥
द्विकोऽर्धाङ्गुलिमुक्तः स्यादिति श्रुत्याश्रिताः स्वराः ।
एते स्युर्मध्यमे ग्रामे भूयः षड्जाश्रिताः पुनः ॥
व्यक्तमुक्ताङ्गुलिकृताः षड्जमध्यमपञ्चमाः ।
ऋषभो धैवतश्चापि कम्पमानाङ्गुलीकृतौ ॥
अर्धमुक्ताङ्गुलिश्चैव गान्धारोऽथ निषादवान् ।
स्वरसाधारणे चापि काकल्यन्तरसंज्ञके ॥
निषादगान्धारकृते षड्जमध्यमयोरपि ।
विपर्ययः सन्निकर्षे श्रुतिलक्षणसिद्धितः ॥ अभिनवगुप्तः

वंशसंख्या
एकवीरादिमुखुवंशपर्यन्तं वंशाः चतुर्दश । कलानिधिमुरलीश्रुतिनिधिवंशत्रयेण साकं सप्तदश वंशाः ।

तेषु त्रयोदश–पञ्चदश–सप्तदशाङ्गुलान्तराः वंशाः अतिमन्द्रध्वनिमत्त्वेन निराकृताः । तथैवातितारध्वनिमत्त्वेनैकवीरादिपञ्चमुखपर्यन्तं वंशाः पञ्चोपेक्षिताः । आहत्याष्टौ ।

शिष्टा नववंशाः कीर्तिधरादिमतेऽङ्गीकृताः । केचित्पञ्चवक्त्रचतुर्वक्त्रयुताः वंशान् नव मुख्यानाहुः । एषु सर्वेषु वंशेषु त्रिस्थानस्वरसाधको मनुवंशः । आदित्यवंशोऽपि त्रिस्थानस्वरगामीति केचिद्वदन्ति । कीर्तिधरस्तु नववंशानां व्यवस्थानमेकमुवाच । आदित्यो विश्वमूर्तिर्मन्द्रस्वरविधायकौ । नाथेन्द्रमहानन्दरुद्रा मध्यस्वरविधायिनः ॥ वसुमुनिषण्मुखास्तारस्वरसाधकाः ।

अस्य मते मनुवंशस्त्रिस्थानसाधकः ।
नव वंशास्तु विज्ञेयास्त्रिस्थानस्वरगोचराः ।
तेषां चैवहि वंशानां स्थाने स्थाने त्रिकत्रयम् ॥
यथा बन्धलयस्तेषां स्वरा ज्ञेयास्समासतः ।
(साधश्लोकः कीर्तिधराचार्येण भरतग्रन्थे प्रक्षिप्तः ।) भरतः

इति कैश्चिदुच्यते । कीर्तिधरो नववंशानेव स्वरसौष्ठवाय गृहीतवान् ।

वंशस्था—द्वादशाक्षरवृत्तम्
अथवा वंशस्थगतिः ।
जतजराः भरतः

—प्राकृते मालावृत्तम्
एकश्चतुर्मात्रः दौ पञ्चमात्रिकौ ।
सः दौ चतुर्मात्रिकौ सः । विरहाङ्कः

वंशावयवानां मानम् 8-लिक्षाः = 1-यूका. 8-यूकाः = 1-यवः. 6-यवाः = 1-अङ्गुलम्

| वंशनाम | वेमभूपमते दण्डमानम् | वेमस्यान्तर मानम् | खानिः कनिष्ठा मध्यमानम् |
|---|---|---|---|
| १ एकवीरा | 14 अङ्गु | $\frac{1}{2}$-अं. | 1—$\frac{1}{5}$ |
| २ उमापतिः | 16$\frac{1}{2}$-अ. $\frac{1}{2}$-यव | 3$\frac{1}{2}$-यव | „ |
| ३ त्रिपुरुषः | 16$\frac{1}{2}$-अ. $\frac{1}{2}$-यव | 3$\frac{1}{2}$-यव | „ |
| ४ चतुर्मुखः | 18$\frac{1}{2}$-अ. | 4$\frac{1}{2}$-यव | „ |
| ५ पञ्चवक्त्रः | 20-अ. 2-यव | 5-यव | „ |
| ६ षण्मुखः | 22-अ. $\frac{1}{2}$-यव | 5$\frac{1}{2}$-यव | „ |
| ७ मुनिवंशः | 23$\frac{1}{2}$-अ. | 1-अ. | „ |
| ८ वसुवंशः | 24-अ. 4-यव | 7$\frac{3}{4}$-यव | „ |
| ९ नाथेन्द्रवंशः | 27$\frac{1}{4}$-अ. | 1$\frac{1}{4}$-अ. | 1—$\frac{1}{6}$ |
| १० महानन्दः | 30-अ. | 1$\frac{1}{2}$-अ. | „ |
| ११ रुद्रवंशः | 33$\frac{1}{4}$-अ. | 1$\frac{3}{4}$-अ. | 1—$\frac{1}{7}$ |
| १२ आदित्यवंशः | 35-अ. $\frac{1}{8}$-यव | 1$\frac{7}{8}$-अ. | 1—$\frac{1}{8}$ |
| १३ विश्ववंशः | 37$\frac{1}{2}$-अ. $\frac{1}{16}$-यव | 2$\frac{1}{16}$-अं. | 1 |
| १४ मनुवंशः | 40$\frac{3}{4}$-अ. | 2$\frac{1}{4}$-अ. | 1 |

### वंशोऽङ्गुलिकर्म

अर्धमुक्तिरमुक्तिर्वा मुक्तिश्चलनमाशु च ।
चत्वार्यङ्गुलिकर्माणि निर्दिष्टानि प्रयोक्तृभिः ॥

हरिपालः

### वंशोऽङ्गुलिन्यासः

नारदादिमहर्षिभिः त्रैग्रामिकवेणुष्वेव नानासवनेषु सामगानं प्रगीतम् । तेष्वेवालापजातिवर्णग्रामरागदेशी रागाः बहुविधगमकोपेताः वादिताः । अधुनातनवेणौ प्रक्रिया भिद्यते । यतः देशीरागेषु श्रुतिसंख्यानियमो नास्ति । ग्रामरागास्तु लौकिकगानेऽनुपयुक्ता इति मतमप्यस्ति । अत्र त्रैग्रामिकवेणुषु स्वरकल्पनोच्यते ।

षड्जः कनिष्ठिकायां स्यादृषभोऽनामिकागतः ।
गान्धारो मध्यमायां च तर्जन्यामपि मध्यमः ॥

दक्षिणस्येति पाणेस्स्यादङ्गुलीषु स्वरक्रमः ।
वामपाणेरुदीर्यन्ते स्वराश्चाङ्गुलिगोचराः ॥

पञ्चमोऽनामिकायां तु मध्यमायां च धैवतः ।
प्रदेशिन्यां निषादः स्यात् षाड्जे वंशे क्रमस्त्वयम् ॥

दक्षिणस्य कनिष्ठादि विद्यादेव स्वरान्यथा ।
मध्यगान्धारयोश्चापि ग्रामयोरुभयोरपि ॥ नान्यः

| | दक्षिणहस्तस्य | | | | वामहस्तस्य | | |
|---|---|---|---|---|---|---|---|
| | तर्जनी | मध्यमा | अनामिका | कनिष्ठिका | तर्जनी | मध्यमा | अनामिका |
| षड्जग्रामवंशे | म | ग | रि | स | नि | ध | प |
| मध्यमग्रा–वंशे | नि | ध | प | म | ग | रि | स |
| गान्धारग्रा–वंशे | ध | प | म | ग | रि | स | नि |

### वंशोऽङ्गुलियोजनम्

षड्जस्त्वनामिकाङ्गुल्यामृषभो मध्यमाङ्गुलौ ।
निरङ्गुल्यां च गान्धारो मध्यमः कम्पितो यथा ॥

वामहस्ते त्रयो ह्येते चत्वारो दक्षिणे पुनः ।
पञ्चमोऽनामिकायां तु धैवतो मध्यमाङ्गुलौ ॥

प्रदेशिन्यां निपादस्तु मध्यमः कम्पितो यथा ।

अत्र पञ्चमोऽनामिकायामिति वचनान्मध्यमस्वरे कनीयसी-त्याह निरङ्गुलीति कनीयसी तर्जनी वा कर्कन्धूफलबीजवदङ्गुलीनां निवेशनम् ।

अभिनवः

वंशेऽङ्गुलीनां गतिः

पञ्च स्वरगतिं कुर्यात्पञ्च भेदविकल्पनात् ।
कम्पितां चलितां मुक्तामर्धमुक्तां निपीडिताम् ॥

विशाखिलः

वंशे वैदिकस्वरनिर्णयः

तौ विज्ञेयौ वेणुरन्ध्रे कम्पमानाङ्गुलीकृतौ ।

षड्जग्रामिकवेणौ तु चतुःश्रुतियुतास्त्रयः ॥

वेदितव्या गीतविद्भिः षड्जमध्यमपञ्चमाः ।
स्वरौ निगौ द्विश्रुतीतिं त्रिश्रुती धैवतर्षभौ ॥

मुक्तार्धमुक्तकम्पैश्च स्युरेतैर्द्रुतकर्मभिः ।

यदा षड्जस्वरस्यैकां निषादो व्रजति श्रुतिम् ॥

निषादः काकलीत्येव विज्ञेयः कम्पिताङ्गुलिः ।

ऋषभश्च यदास्यैव व्रजेदेकां श्रुतिं तदा ॥

वंशे रसभावयोरेकीभावः

अध्वन्यागमने चैव कामिन्या निर्जितस्य च ।
शोकार्तस्य प्रकुर्वीत मध्यमं मृदुमिश्रितम् ॥

शृङ्गारे वा नियोक्तव्यमत्यन्तललितं द्रुतम् ।

क्रोधे चैवाभिमाने च स्फुरितद्रुतकम्पितम् ॥

मतङ्गः

वंशे स्वरापादनम्

आननच्छिद्रेष्वाधारेषु गान्धारादिस्वरोत्पादकस्वरूपमुक्तं, कम्प्यमानार्धमुक्तव्यक्तमुक्ता इति भरतेन । छिद्रोपरि दीयमानाङ्गुलिगतछिद्रनिवेशिताङ्गुलिना क्रियया तीव्रातीव्रमध्यरूपप्राणपूरणप्रभवो हि वंशे स्वरविभागः ।

अभिनवगुप्तः

वंशे स्वरोत्पत्तिः

अन्यथैवाभ्यधुः केचित्स्थानत्रितयवर्तिनाम् ।
स्वराणामुद्भवं तेषां मतमत्रोपवर्ण्यते ॥

मध्यमे सप्तकेऽभ्यासवशतः फूत्कृतेरिह ।
शरीरवीणासंभूतस्वरसंवादभाजनम् ॥

स्वराः समग्रा जायन्ते तारस्थानगता अपि ।
मुखसंयोगसाङ्कर्यवादिते मुखरन्ध्रके ॥

टीपा पटीयसाऽऽचक्षुः तं प्रकारं पुरातनाः ।
तद्वादनप्रकारेण यद्रन्ध्रं वाद्यते बुधैः ॥

तस्मादुत्पद्यते यस्तु स्वरः सिद्धगणो भवेत् ।
विप्रकर्षे तु रन्ध्रस्य मुखसंयोगकर्तृके ।।

मन्द्रस्थानगतानां च स्वराणामुद्भवो भवेत् ।
अभ्यासवशतः कैश्चिद्वंशवादनकोविदाः ॥

शैध्र्याशैध्र्यतया वायोः तीव्रातीव्रतयापि च ।
रन्ध्रस्य पूरणाद्वायोः पूरणेन च वा ध्वनेः ॥

प्राप्तोपचययोगेनापचयेनाथवा क्वचित् ।
एकस्मिन्नेव रन्ध्रेऽपि चित्रं नानास्वरोदयम् ।
कुर्वन्ति किल तत्रास्ति किमभ्यासस्य दुष्करम् ॥

कुम्भः

सप्तानां स्वररन्ध्राणां वंशेत्वष्टादशाङ्गुले ।

मुद्रणान्मन्द्रषड्जः स्यादथ मन्द्रस्थिताः स्वराः ॥

ऋषभाद्याष्षडाद्येषु षट्सु वंशेष्वनुक्रमात् ।
अधस्तनेषु जायन्ते स्वररन्ध्रविमुद्रणात् ॥

मध्यस्थानस्थितास्सप्तस्वरा वंशान्नवाङ्गुलात् ।

अर्वाक् सप्तसु वंशेषु जायन्ते छिद्रमुद्रणात् ॥

एकवीराभिधे वंशे तारषड्जः प्रजायते ।
एतेषु सर्ववंशेषु सुषिरद्वितयेऽन्तिमे ॥

मुक्तस्वरौ द्वितीयस्तु जायते तारसंश्रितः ।
त्र्यादिरन्ध्रविमोक्षेण तृतीयाद्या स्वराः पुनः ॥

निषादान्ताः प्रजायन्ते क्रमशस्तारगामिनः ।
ताररन्ध्रे विमुक्ते च परेषु सुषिरेष्वपि ॥

विहितेषु विजानीयादष्टमस्वरसंभवम् ।
स्वरः सम्पद्यते पूर्णः स्फुटमुक्ताङ्गुलित्वतः ॥

श्रुतिरेका च कृष्टास्यादङ्गुल्याः कम्पनादिह ।
रन्ध्रेऽर्धमुक्ते द्वितयं श्रुत्योरत्रापचीयते ॥

अर्धमुक्ते कम्पनेन चीयते च श्रुतित्रयम् ।
अन्यथाऽन्यत्र मन्यन्ते सप्तस्वरसमुद्भवम् ॥

वेमः

अधुनैतेषु वंशेषु स्वरोत्पत्तिः प्रदर्श्यते ।
अर्धेन्दुरिव वंशस्य दण्डे स्याद्दक्षिणः करः ॥

स्थापनीयः परं तज्ज्ञैः वामो भुजगशीर्षवत् ।
तत्र षड्जो भवेद्वामकरानामिकया पुनः ॥

ऋषभस्वरसंभूतिर्वामस्यैव तु मध्यया ।
गान्धारस्तत्प्रदेशिन्या स्वरः सञ्जायते त्वथ ॥

दक्षहस्तकनीयस्या मध्यमः पञ्चमः पुनः ।
दक्षहस्तानामिकया धैवतो मध्यया भवेत् ॥

तर्जन्या दक्षहस्तस्य निषादो जायते स्वरः ।
एवं वामात्त्रयः प्रोक्ताः चत्वारो दक्षिणात्करात् ॥

अन्येऽन्येन प्रकारेण वर्णयन्ति स्वरोदयम् ।
मन्द्रस्थाने स्थितः षड्जः स्वररन्ध्रेषु सप्तसु ॥

मुद्रितेषु मनौ वंशे जायतेऽथर्षभो भवेत् ।
रन्ध्रद्वयेऽन्तिमे मुक्ते परे पञ्च स्वराः पुनः ॥

आदिरन्ध्रेषु मुक्तेषु विश्वमूर्तौ पुनर्भवेत् ।
पिहितायां सप्तरन्ध्र्यामृषभो गादिकाः परे ॥

मन्द्राः स्युर्द्व्यादिरन्ध्राणां विमुक्तेरिति तद्विदः ।
आदित्ये स्वररन्ध्राणां मुद्रणाद्गस्वरोदयः ॥

मन्द्रगा मध्यमाद्यास्तु द्व्यादिरन्ध्रविमोक्षणात् ।
जायन्ते षट्स्वराः रुद्रवंशे स्यान्मध्यमस्वरः ॥

सप्तरन्ध्रपिधानेन पञ्चमाद्याः पुनःस्वराः ।
द्व्यादिरन्ध्रविमोक्षेण महानन्दे तु पञ्चमः ॥

सप्तरन्ध्रपिधानेन षडन्ये धैवतादिकाः ।
द्व्यादिरन्ध्रविमोक्षेण नाथेन्द्रे मन्द्रधैवतः ।
मुद्रणात्स्वररन्ध्राणां निषादाद्याः परे पुनः ॥

द्व्यादिरन्ध्रविमोक्षेण भवेयुर्मन्द्रदेशगाः ।
मध्यस्थानस्थितष्षड्जः स्वररन्ध्रेषु सप्तसु ॥

मुद्रितेषु वसौ वंशे जायन्ते ऋषभादयः ।
मुक्तेषु द्व्यादिरन्ध्रेषु षट्स्वन्येष्वपि सप्तसु ॥

स्वररन्ध्रेषु जायन्ते मुद्रणादृषभादयः ।
द्व्यादिरन्ध्रविमोक्षेण तत्परे षडपि क्रमात् ॥

षट्स्विति । मुनिवंशादिषट्सु वंशेष्वित्यर्थः ।
षडपीति । गान्धारादय इत्यर्थः ।

तारस्थानस्थितः षड्जस्त्वेकवीरस्य सप्तसु ॥

मुक्तेषु स्वररन्ध्रेषु, जायन्ते ऋषभादयः ।
द्व्यादिरन्ध्रेषु मुक्तेषु भवेयुस्तारदेशजाः ॥

त्रयोदशं पञ्चदशं तथा सप्तदशाङ्गुलम् ।
हित्वा द्वादशमुख्येषु वंशेषु क्रमतः स्वराः ॥

स्वररन्ध्रपिधानेन द्व्यादिरन्ध्रविमोक्षणात् ।
षड्जादिकाः प्रजायन्ते मन्द्रगास्सप्त ते पुनः ॥

षट्षट् तेभ्यः परेऽपि स्युरेतेप्युक्तनयेन हि ।
जायन्त इति केषाञ्चिन्मतमत्रोपवर्णितम् ॥

पिधानादन्यरन्ध्राणांताररन्ध्रविमोचनात् ।
केचिदेवाभ्यदुस्तद्ज्ञा अष्टमस्वरसंभवम् ॥

मन्वादेः पूर्वपूर्वस्मान्मुद्रितादुत्तरोत्तरः ।
मुद्रितः क्रमशो वंशः स्यादेकैकस्वराधिकः ॥

कुम्भः

## वंशेषु रन्ध्रपरिमाणम्

पूत्काररन्ध्रस्य मानमङ्गुष्ठप्रमाणम् । अन्यरन्ध्राणां कनिष्ठिकामानम् । मध्यमगान्धारग्रामयोः पूत्काररन्ध्रं क्रमान्मध्यमाकनिष्ठिकातुल्यम् ।

नान्यः

## वंशोत्कर्षः

वंशवीणाशरीराणां त्रयाणामपि तत्त्वतः ।
समाने स्वरहेतुत्वे यतो वंशो विशिष्यते ॥

स्निग्धत्वान्मधुरत्वाच्च ललितत्वादिहेतुभिः ।
वंशवीणाशरीराणामेकत्वे सति यो ध्वनिः ।
यः कोऽपि तत्र जायेत विशेषो रक्तिहेतुकः ॥

कुम्भः

## वांशिकगुणाः

अङ्गुलीसारणाभ्यासः स्वस्थानत्वं सुरागता ।
स्वस्थानवदपस्थाने रागोद्भावनशक्तिता ॥

गतेर्वेगस्य करणं गीतवादनचातुरी ।
गातॄणां स्थानदायित्वं तद्दोषाणां च मुद्रणम् ॥

तालानुगमनं मार्गदेशीरागेषु कौशलम् ।
वांशिकस्य गुणाः प्रोक्ताः दशदिग्जयिना दश ॥

कुम्भः

### वांशिकदोषाः

वहणिशिरसः कम्पः स्वस्थानानाप्तिरेव च ।
वृथाप्रयोगबाहुल्यमज्ञता गीतवादने ।
एते दोषा महानिन्द्याः वांशिकस्य विशेषतः ।।

हरिपालः

स्थानाप्राप्तिःशिरःकम्पो भुजयोश्चलनं तथा ।
त्रयः शरीरजा दोषाः वांशिकानामुदाहृताः ।।

हीनस्वरत्वमव्यक्तिः कम्पः कर्णेऽच घूर्णनम् ।
प्रतिफूत्कार इत्येते दोषाः पञ्चस्वराश्रिताः ।।

अज्ञता तालवेलाया अव्यक्तिर्गमकोदये ।
स्थानकावसरे जाड्यं गतेर्निर्वाहहीनता ।।

मिथ्याप्रयोगप्राचुर्यं जडता गीतवादने ।
षडेते वांशिकगता दोषा दोषज्ञसम्मता ।।

हरिपालः

### वांशिकलक्षणम्

चातुर्यं गमकारंभे रागाङ्गनैपुणम् ।
स्वरे समे च विषमे रागनिर्माणकौशलम् ।।

ग्रहे मोक्षे च वैदग्ध्यं सर्वतारेष्वभिज्ञता ।
इत्युक्तमस्य लक्ष्मैतद्वांशिकस्य समीरितम् ।।

हरिपालः

### वकुलाभरणम्—मेलकर्ता (रागः)

स रि ० ० ग म प ध ० नि ० स.

मञ्ज

### वक्रम्—दर्शनम्

अधश्चोर्ध्वमपाङ्गस्य गमनाद्वक्रमुच्यते ।

वेमः

### —चिबुकम्

तिरश्चीनगतं वक्रं भूतावेशादिषु स्मृतम् ।

वेमः

### वक्रकोणा—गतिः

भुजङ्गगतिरेवं स्यात्सकोणा वक्रकोणका ।

देवणः

### वक्रा

वीणावादने गतिविशेषः । कश्चित्स्वरमुपक्रम्य तद्द्वितीयं प्रताड्य पुनः प्रथमं प्राप्य तृतीयानुधावनम् । अयमपि तन्त्रीवादने चमत्कारः ।

### —रसना

प्रसृता स्यान्नताग्रे या सा वक्रा नृहरौ मता ।

अशोकः

ऊर्ध्वास्या व्यात्तवक्त्रा स्याद्वक्रा ब्रह्मनिरूपणे ।

वप्रदासः

### —गतिः

वक्रा भुजङ्गगतिसन्निभा ।

देवण

### —हनुः

हनुस्तिर्यग्गता वक्रा ग्रहावेशेऽर्दिते भवेत् ।

सोमेश्वरः

तिरश्चीना गता वक्रा महावेशेऽर्दितामये ।।

ज्यायनः

### —रागे गतिः

केषाञ्चित्तत्र रागाणां वक्रानाम गतिर्यथा ।
कश्चित्स्वरमुपक्रम्य तद्द्वितीयं प्रताड्य च ।
पुनश्च प्रथमं प्राप्य तृतीयमनुधावति ।।

परमेश्वरः

### वक्रितार्धपताकहस्तः

नेत्रस्थानेत्वप्रयुक्तौ पताकार्थौं यथास्थितौ ।
वक्रितार्थपताकस्स्यादिति नाट्यविदो विदुः ।।

नेत्रस्थानेत्वयं हस्तो वक्रितार्थपताकिकः ।
पक्ष्मयुग्मे दर्शयन्ति पुरोभागस्थितो यदि ।
विष्टामोक्षार्थगमनभाषणे च नियुज्यते ।।

विनायकः

### वक्रोक्तिः—(काव्ये)

वक्रोक्तिर्वैदग्ध्यभङ्गीभणितिः ।

कुन्तकः

ध्वनिवर्णपदार्थेषु वाक्ये प्रकरणे तथा ।
प्रबन्धेप्याहुराचार्याः केचिद्वक्रत्वमाहितम् ।।

वक्रताभेदाः— ध्वनिवक्रता, वर्णवक्रता, पदपूर्वार्थवक्रता, प्रत्ययवक्रता, वाक्यवक्रता- प्रकरणवक्रता, इति ।

कविव्यापारवक्रत्वप्रकारास्संभवन्ति षट् ।
प्रत्येकं बहवो भेदाः तेषां विच्छित्तिशोभिनः ।।

वाक्यस्य वक्रभावोऽन्यो भिद्यते यस्सहस्रधा ।
यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति ।
वक्रभावप्रकरणे प्रबन्धेऽप्यस्ति यादृशः ।।

साहित्यमीमांसा

वक्षः

समं निर्भुग्नमाभुग्नं तथा वक्षःप्रकम्पितम्।
उद्वाहितामिधं चेति वक्षः पञ्चविधं स्मृतम्॥

अशोकः

वक्षःस्वस्तिकम्—करणम्

चतुरस्रावुरः क्षेत्रे भवतो यत्र रेचितौ।
व्यावृत्तक्रियया वक्षस्याभुग्ने स्वस्तिकौ करौ॥

पादौ च स्वस्तिकौ जङ्घागुल्फस्य वलनान्मिथः।
तद्वक्षःस्वस्तिकं प्रोक्तं लज्जानुशयगोचरम्॥

उत्प्लुत्य घटयेत्पाणिपादेन स्वस्तिकाविति।
ऊचे कीर्तिधराचार्यः किञ्चिल्लक्ष्यनिरीक्षणात्॥

ज्यायनः

तद्भवेदल्पभुग्नासं (?) लज्जामन्मथतापयोः।

लक्ष्मणः

वचश्शुद्धम्—नर्म

केवलेनैव वचसा लोकहास्यकरं तु यत्।
तदेव युक्तितोऽस्माभिः वचश्शुद्धमुदाहृतम्॥

सर्वेश्वरः

वज्रम्—प्रतिमुखसन्ध्यङ्गम्

प्रत्यक्षरूक्षं यद्वाक्यं वज्रं तत्। भरतः

वज्रं प्रत्यक्षकर्कशम्—यन्निष्ठुरत्वात्प्रत्यक्षरूक्षवाक्यं यच्च पूर्व-प्रयुक्तस्यान्यवाक्यस्यानुष्ठानस्य वा प्रध्वंसकं तद्वज्रमिव वज्रम्।

यथा—वेण्यां—कथमपीति अश्वत्थामवाक्यम्।

सागरः

वज्रः—तानः

षड्जग्रामे सपहीनौडुवः।
म ग रि नि ध.

कुम्भः

वज्रः

ओदनं छागडिम्भस भस्म चापि पुरातनम्।
स्नेहविण्मूषयोश्चूर्णं समभागं सुपेषयेत्।
लेपयेद्दक्षिणपुटे लेपोऽयं वज्र ईरितः॥

पुरातनं भस्मेति। बहुदिनमेकत्र स्थितं यत्किञ्चिद्भस्म। मूषेति। ताम्रादिद्रावणपात्रम्। को इति भाषायामुक्तम्। दक्षिणपुट इति। मर्दलस्य।

नारायणः

—देशीतालः

वज्रताले लघौ गुरुः। । ऽ ऽ लक्ष्मणः

वज्रगर्भम्—कर्णभूषणम्

मौक्तिकानि बहिःपङ्क्तौ तन्मध्ये नीलकं ततः।
वज्राणि च ततोऽप्यन्तर्वज्रगर्भमितीरितम्॥

सोमेश्वरः

वज्रचूडामणिः—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग प ध स.

(अव) स नि प ध प म ग रि स.

मल्ल

वज्रतिलकम्—सीमन्तभूषणम्

अश्वत्थपत्रसंकाशं सुवर्णेन विनिर्मितम्।
माणिक्यवज्रखचितमायतं मौक्तिकैर्युतम्॥

तत्र मुक्ताफलैः पार्श्वे सूसकाभ्यां विराजितम्।
ताभ्यां बहिर्मरालाभं नानारत्नैः प्रकल्पयेत्॥

तदूर्ध्वं वज्रमाणिक्यमौक्तिकैः बहुभिर्युतम्।
तदिदं हंसतिलकं योषित्सीमन्तभूषणम्॥

सोमेश्वरः

वज्रहासितं—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) स रि ग म प ध नि स.

(अव) स नि ध प म रि स.

मल्ल

वज्रिका—श्रुतिः

मध्यमस्य प्रथमा श्रुतिः।

वञ्चितिका—पुष्करवाद्ये जातिः

करणैर्बहुभिश्चित्रैः सर्वमृदङ्गप्रहारसंयुक्ता।
स्वाभाविकोत्तमगतौ वञ्चितिका सा तु विज्ञेया॥

अभिनवगुप्तपाठः

इयं ऊर्ध्वकोष्ठेति उक्त्वा तल्लक्षणमुक्तं नेपालमातृकायां-
धं धां द्रां द्रां प्राया वीराद्भुतरौद्रभावसंयुक्ता।

जातिर्वितस्तिमार्गो सा विज्ञेयोर्ध्वकोष्ठेति॥

भरतः। नेपालादर्शपाठः

वटुकी

शुद्धवराट्या नामान्तरम्।
तामेव वटुकीमाहुर्भूरिमिर्धनिपैर्युता।
धनदस्य प्रतिनिधिर्भूरिमिर्धनपैर्युतः॥

कुम्भः

तामिति—शुद्धवराटी, धनदस्येत्यादि—कालसेनो वा कुम्भकर्णः।

—भाषाङ्गरागः

निगदिता वटुकी धरणीभृतामविरतिग्रहणा ऋषभोज्झिता।
बहुलतारयुतालपमृदुस्वना विरहितालिपततादिकताङ्कनैः॥

कुम्भः

शुद्धवराटिकाया नामान्तरम्।

वडहंसः—मेलरागः

वडहंसः सदा ज्ञेयः शङ्कराभरणस्वरैः।
षड्जादिः पञ्चमांशः स्यान्न्यासोऽपि पञ्चमस्वरः।
अवरोहे गहीनः स्यादारोहे तु धवर्जितः॥
तृतीयप्रहरोत्तरगेयः। अहोबिलः

वदनम्

भुग्नमुद्वाहि विवृतं विधुतं विनिवर्तकम्।
व्याभुग्नं चेति षोढोक्तं मुखं तल्लक्ष्मचोच्यते॥

अशोकः

वधः—सन्ध्यन्तरम्

वधो व्यापादः। यथा—कुलपत्यङ्के— अवत्वस्य दोर्दर्पमपहाय सुखेन लङ्कां प्रविशामीति रावणवाक्यम्।

सागरः

वधस्तु ज्ञापिता द्रोहक्रिया स्यादाततायिनः।

सिंगः

वध्रम्

चर्मणा कृता रज्जुः। मृदङ्गबन्धने उपयुज्यते।

वनजाम्बरी—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स रि म ध नि स.
(अव) स नि ध म रि स.

मज

वनमाली—देशीतालः

वनमालिनि ताले स्यादूर्ध्वं द्रुतचतुष्टयात्।
लघुरेको द्रुतद्वन्द्वं गुरुरन्ते यथाक्रमात्॥

१ ० ० ० । ० ० ऽ वेमः

म प ध नि सा री गा जगदेकः

तकथु गुधिकथुगुता दिद्धिन्नगझिझिंझ।

सुधाकलशः

वनमाली—देशीतालः

द्रुचतुष्कं लघुश्चैव द्रुतौ गो वनमालिनि।

० ० ० ० । ० ० ऽ सुधा

वनराजी—प्राकृते मात्रावृत्तम्

एकश्चतुर्मात्रः द्वौ पञ्चमात्रिकौ ज गः गः।

विरहाङ्कः

वनवसुन्धरा—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म नि स.
(अव) स नि ध प म ग रि स.

मज

वनविहारः—संगीतशृङ्गाराङ्गम्

वने विविक्तालोकजनकः कामिनां चेष्टाविशेषो वनविहारः॥

भोजः

वनविहारगमनम्—संगीतशृङ्गाराङ्गम्

क्रीडार्थं काननविहारागमनं वनविहारगमनम्।

भोजः

वनस्पतिः—मेलकर्ता (रागः)

स रि ग ० ० म ० ७ ध नि ० स.

मज

वन्द्युमुखी—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि म प नि स.
(अव) स नि ध प म ग म रि स.

मज

वयोरञ्जनी—मेलरागः (मायामाळवगौळमेलजन्यः)

(आ) स रि ग रि म प ध नि स.
(अव) स नि ध म ग स.

मज

वरदः—गीतालङ्कारः (रासकभेदः)

लघुर्द्रुतौ गुरुर्यत्र तालोऽयं गजलीलकः।
वरदो रासकस्तेन श्रोतॄणां च सुखावहः॥

सङ्गीतसारः

वरदाभयौ—नृत्तहस्तौ

वामदक्षिणभागस्थौ वरदाभयदौ करौ।
अरालौ कटिपार्श्वस्थौ गदितौ वरदाभयौ॥

कुम्भः

पराङ्मुखतलौ मित्रौ पताकौ कटिपार्श्वगौ।
......लगौ स्यातां क्रमेण वरदाभयौ॥

उत्पायनः

वराटिका - प्रथमरागः
भिन्नादिभूतस्य च पञ्चमस्य
प्रोक्ता विभाषैव वराटिकेयम्।
समन्द्रका धांशयुताधतारा
षड्जग्रहान्ता च समस्वरा स्यात् ॥
मोक्षः

—रागः
विभाषा रागराजस्य पञ्चमस्य वराटिका।
अंशषड्जग्रहन्यासौ नितारामन्द्रमध्यमा।
समशेषस्वरा पूर्णा शृङ्गारे याष्टिकोदिता ॥
जगदेकः

वराटी—रागः
अतःपरं वराटीति प्रथिता राग उच्यते।
रागाज्जातस्ततोराग राजपञ्चमसंज्ञकात् ॥
धैवतांशग्रहो न्यासष्षड्जोऽसौ तारधैवतः।
मध्यमन्द्रस्तु संपूर्णः स्वरशेषस्समो भवेत् ॥
हरिः

रिषभकतारापूर्णा मन्द्रत्यक्ता समस्वराभोगा।
न्यासांशग्रहपञ्चमयुक्ता प्रोक्ता वराटिका बहुभिः ॥
नान्यः

समस्वरा च पूर्णा च रितारा मन्द्रवर्जिता।
बराटी पञ्चमन्यासग्रहांशा किल कथ्यते ॥
मतङ्गः

प्रहरावर्ततो गेया भिन्नपञ्चमवत्सदा।
षड्जन्यासग्रहांशैषा वराटी भरतोदिता ॥
अस्याः त्रैविध्यम्— रत्नमालायां शुद्धवराटी, द्रविडवराटी देशवराटीति उक्तम्। कौमुद्यां तु षाडवमध्ये गणिता।
नारायणः

साद्यन्ता सांशसंयुक्ता वराटी रागजामता।
मदनः

—रागाङ्गरागः
भिन्नपञ्चमकस्याङ्गं वराटी स्यात्समस्वरा।
धांशा षड्जग्रहन्यासा मन्द्रमातारधैवता।
ग्रीष्मे प्राक्प्रहरे गेया संपूर्णा कामगे रसे ॥
भट्टमाधवः

अस्य रागस्य वरालीति नामान्तरमपि दृश्यते।

—रागः
विभाषा रागराजस्य पञ्चमस्य वराटिका।
समशेषस्वरा पूर्णा शृङ्गारे याष्टिकोदिता ॥
हम्मीरः

षड्जग्रहांशकन्यासा वराटी कथिता बुधैः।
प्रथमा मूर्छना यस्यां संपूर्णा कीर्तिवाहिनी ॥
स रि ग म प ध नि स
दामोदरः

—रागाङ्गरागः (वीणायां वादनक्रमः)
धैवतं स्थायिनं कृत्वा तत्पूर्वस्वरमेत्य च।
पञ्चारुह्य चतुर्थं च तृतीयं द्वियेदोच्यते।
स्थायिन्यासे वराटीस्यात्तदा स्यात् रिग्रहः क्वचित् ॥
कुम्भः

—रागः (वंशेवादनक्रमः)
ग्रहं कृत्वा तारषड्जमर्धीकृत्य तमेव च।
तत्पूर्वं स्थायिनं चाथ द्वितीयं च तृतीयकम् ॥
द्वितीयं च क्रमात्प्राप्य स्थायिनि न्यस्यते यदा।
तदा वराट्याः स्वस्थानं प्रथमं परिकीर्तितम् ॥
स्वस्थानत्रितयं चात्र कर्तव्यं भैरवे यथा।
स्यादेष एव स्वरधानक्रमो रागान्तरेष्वपि।
वंशेष्वस्यां द्वितीयस्तु स्थायित्वेनोपलक्षितः ॥
वेमः

—मेलरागः
रिकोमला गतीव्राद्या कोमलीकृतधैवता।
निना तीव्रेण संयुक्ता वराटी धैवतादिका।
सतीव्रतरसम्पन्नान्दोलनेन मनोहरा ॥
आन्दोलनं गमकविशेषः।
अहोबिलः

मेलकर्तावं रागः। द्वितीयप्रहरोत्तरगेया।

वराटीतोडी—मेलरागः
रिधौ च कोमलौ प्रोक्तौ यत्र तीव्रतरश्च मः।
उद्ग्राहकौ पधौ स्यातां वराटी तोडिका च सा ॥
द्वितीयप्रहरोत्तरगेया।
अहोबिलः

वराटीनाटः—मेलरागः
वराटीस्वरसञ्जाते वराटीनाटके पुनः।
अवरोहे धगौ वर्ज्यौ न्यासांशौ षड्जपञ्चमौ।
धैवतोद्ग्राहसम्पन्ने निमयोः कम्पनं भवेत् ॥
सायंगेयः।
अहोबिलः

वराटीरागध्यानम्
विनोदयन्ती दयितं च गौरी
सुकङ्कणा चामरचालनेन।
कर्णे दधाना सुरपुष्पगुच्छं
वराङ्गनेयं कथिता वराटी ॥
संगीतदर्पणः

**वराट्युपाङ्गानि**

षण्णामपि वराट्युपाङ्गानां अंशन्यासग्रहाः षड्ज एव वेदितव्यम् ।

भट्टमाधवः

**वरालिगौलीरागध्यानम्**

सुमालिदामावृतचारुकेशां
पुरःप्रदेशस्थितरुद्रवीणाम् ।
सखीमुखाब्जन्मृदुवेणुनालां
वरालिगौलीं हृदि चिन्तयामि ॥

रागसागरः

**वराली**—मेलरागः

(आ) स रि ग ० ० ० म प ध ० ० नि स.
(अव) स नि ० ध ० प म ० ० ० ग रि स.

मेललक्षणे

**वराली**—मेलकर्ता

बर्ह्यादिधेनुविधिभेषविरुद्धमध्य-
पञ्चाधिधैवशिवदन्ति तथोभयत्र ।
पूर्णाभिधे बहुलकल्पनया वराली
रागे चमत्कृतिमनेकविधां वदन्ति ॥

स रि ग प धाः शुद्धाः । प्रतिमध्यमः । काकलिर्निषादः ।

परमेश्वरः

**वरालीरागध्यानम्**

विवर्दकुसुमभूषां संवृतालीं सदालीं
मधुरमृदुलवाक्यैस्तोषयन्तीं वलन्तीम् ।
वलभिदुपलनीलां भार्गवे ध्यानलोलां
मम मनसि सदा तां चिन्तये श्रीवरालीम् ॥

रागसागरः

**वराहहस्तः**

मृगशीर्षे त्वन्यकरः तेन श्लिष्टस्ततो यदि ।
कनिष्ठाङ्गुष्ठयोर्योगाद्वराहः कर ईरितः ।
पुरोभागेत्वयं हस्तो वराहस्य निरूपणे ॥

विनायकः

**वरुणध्वजः**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म प ध स.
(अव) स नि प ध प म ग रि म ग स.

मञ्ज

**वरुणप्रिया**—मेलकर्ता

स ० रि ग ० म ० प ० ० ध नि स.

मञ्ज

**वरुणसिन्धुः**—मेलरागः (वरुणप्रियामेलजन्यः)

(आ) स म ग म प ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**वरुणा**—देशीतालः

वरुणा दलगाः प्रोक्ता ।
० । ऽ

लक्ष्मणः

**वर्णः**

अलङ्कारैरलङ्कार्यो यो वर्ण इति गीयते ।
तस्य कोऽर्थो भवेद्भूमो वर्णो गानक्रिया भवेत् ॥

वर्ण्यतेऽत्र पदं यस्मात्— पण्डितमण्डली

स्थाय्यादिभिश्चतुर्धासौ वर्णो गानक्रिया मतः ।

कुम्भः

ननु वर्णशब्देन किमुच्यते । वर्णशब्देन गानमभिधीयते । स्थायी, सञ्चारी, आरोही, अवरोहीति, चत्वारो वर्णाः ।

मतङ्गः

—प्रबन्धः

कर्णाटभाषया वर्णो विरुदैर्वर्णतालतः ।
तालत्रैविध्यतः प्राज्ञैः

श्रीकण्ठः

**वर्णकुरञ्जी**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स म ग रि प ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**वर्णतालः**—देशीतालः

चतुरश्रत्र्यश्रमिश्रप्रभेदात् त्रिविधो मतः ।

वेमः

० ० ० ० ० ० ० ० ० ० ० ० ऽऽ ० ० । ऽ हम्मीरः

**वर्णाः**—(पाठ्ये)

उदात्तश्चानुदात्तश्च स्वरितः कम्पितस्तथा ।
वर्णाश्चत्वार एव स्युः पाठ्ययोगे तपोधनाः ॥

तत्र हास्यशृङ्गारयोः स्वरितोदात्तैर्वर्णैः पाठ्यमुपपाद्यम्, वीररौद्राद्भुतेषूदात्तकम्पितैः करुणबीभत्सभयानकेषु अनुदात्तस्वरितकम्पितैः ।

भरतः

**वर्णदीपिका**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स ग म प ध नि स.
(अव) स नि ध नि प म रि ग रि स.

मञ्ज

**वर्णभिन्नः**—देशीतालः

वर्णभिन्नाभिधे ताले द्रुतद्वन्द्वं लघुर्गुरुः।

०० । ऽ वेमः

**वर्णमण्ठः**—देशीतालः

लघुद्वन्द्वं द्रुतद्वन्द्वं लघ्व दौ वर्णमण्ठके।

।। ०० । ०० दामोदरः

**वर्णमट्ठिका**—देशीतालः

लौविन्दू लघ्व बिन्दू च विज्ञेया वर्णमट्ठिका।

मा गा पा धा नी ।।००।०० जगदेकः

**वर्णसंयोगे मानम्**

लययतिपाणीनां त्रिविधः संयोगः। स च त्रिप्रकारो भवति। तद्यथा—राद्धं विद्धं शय्यागतं चेति। तत्र त्रियतिर्नाम समा स्रोतोगता गोपुच्छा। त्रिलयो नाम द्रुतो मध्यो विलम्बितः। त्रिपाणिकं नाम समपाणिरर्धपाणिरुपरिपाणिश्चेति। तेषां संयोगो यथा—

समा यतिर्द्रुतश्चैव लयो यत्र भवेदथ।
तथैवोपरिपाणिश्च राद्धस्त्वेपविधिर्भवेत्॥
स्रोतोगता यतिर्यत्र लयो मध्यस्तथैव च।
समपाणिस्तथा चैव विद्धं वाद्यं तु तद्भवेत्॥
अर्धपाणिस्तु यत्र स्यात्तथा चैव स्थितो लयः।
यतिश्चैव तु गोपुछा वाद्यं शय्यागतं तु तत्॥
स्थिताद्ययात्प्रभृत्येषां प्रमाणं संप्रवर्तते।
कार्या हानिः कलानां च शेषेष्वन्येषु पाणिषु॥
यतयः पाणयश्चैव लया वै वाद्यसंश्रयाः।
यथाक्रमं हि कर्तव्या नाट्ययुक्तिमवेक्ष्य तु॥

स्थितलयः। विलम्बितलयः। भरतः

**वर्णसंहारः**—प्रतिमुखसन्ध्यङ्गम्

वर्णितस्यार्थस्य तिरस्कारः। यथा—रत्नावल्यां कदलीगृहे मुखरैषा गर्भदासीति विदूषकवचनम्। सागरः

पात्रौघो वर्णसंहृतिः। पृथक्स्थितानां पात्राणां कार्यार्थं ओघः मीलनं वर्ण्यन्त इति वर्णसंहारः। रामचन्द्रः

सर्ववर्णोपगमको वर्णसंहार उच्यते। यथा—बालरामायणे जामदग्न्यवचनम्। किं ब्रूथेत्यादि। तत्र हरचापदलनविषयतया राघवविश्वामित्रपौरादिपरामर्शेन ब्राह्मणादिवर्णानां संग्रहाद्वर्णसंहारः। सिंग

चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते। भरतः

वर्णितार्थतिरस्कारो वर्णसंहार इति पाठान्तरम्। चातुर्वर्ण्यशब्देन पात्राण्युपलक्ष्यन्ते। यत्र पात्राणि पृथक्स्थितान्यपि ढौक्यन्ते स वर्णसंहारः। भट्टतौतस्तु वीरप्रधाने नायकप्रतिनायकौ तत्सचिवौ च वर्ण्यन्त इति वर्णा इत्याह। कामप्रधाने नायको नायिका सचिवौ च अत्र चतुर्णामेकीभावः प्रयोगस्य। यदुक्तं ब्राह्मणादिवर्णचतुष्टयमेलनमिति तदफलत्वादनादृत्यम्। अभिनवः

**वर्णसङ्कीर्णहस्तः**

सूचीहस्तौ नाभिमूले चोर्ध्वाग्रौ च प्रचालितौ।
वर्णसङ्कीर्णहस्तोऽयं कीर्तितो भरतागमे।
नाभिमूले चोर्ध्वभागे चलितो रोमराजिषु॥

विनायकः

**वर्णसरकः**—प्रबन्धः

स्वरैस्तालैः पदैस्तेनैस्सहितोऽयं प्रबध्यते।
आभोगेऽन्यपदैरस्य तेन्नकैर्न्याससंविधिः॥

हरिपालः

अयमेव वर्णस्वर इति कचिद्दृश्यते।

**वर्णालङ्कारः**

वर्णालङ्कार एव गीतालङ्कार इत्यधुनातनैरुच्यते। प्राचीनैरपि वर्ण एव गीतिरिति व्याख्यातम्।

अष्टौ प्रसिद्धालङ्कारा लक्ष्यन्ते तत्र झोम्पटः॥
ध्रुवो मठ्यो रूपकश्च झम्पा त्रिपुट एव च।
अठतालैकतालौ चेत्यष्टालङ्कृतयः स्मृताः॥

वेङ्कटमखी

अस्मिन्कोशे मतविवेचनार्थं वर्णालङ्कारा अपि ध्रुवालङ्कारा इति विभज्योच्यन्ते।

—ओढूमतानुसारिणः

एकस्वरो द्विस्वरश्च त्रिस्वरश्च चतुस्वरः।
शृङ्खली नागपाशश्च मङ्गलो यतिमङ्गलः॥
नन्दनः सुन्दरः कुन्दः सरलः कुटिलोद्घटौ।
एते चतुर्दश प्रोक्ताः पूर्वैः सङ्गीतकोविदैः॥

संगीतसरणिः

**वर्णैला**—एलाप्रबन्धः

मण्ठादितालमध्यात्तु तालेनैकेन केन चित्।
युता रागादिनियमरहितास्ता परे विदुः।
वर्णमालाभिधा एला एलागानविवेचकाः॥

कुम्भः

वर्तना

बाहूनां करणानां च समस्तव्यस्तयोजनात् ।
क्रमाद्द्रुतादिवैचित्र्याज्जायन्तेऽत्र सहस्रशः ।
वर्तनाश्चतुरैरूह्या ताश्शोभाभरसंभृताः ॥

शार्ङ्गदेवः

कराभिनयशोभाया विचित्रां रचयन्ति हि ।
ततो मयेह लिख्यन्ते वर्तनास्ता मनोहराः ॥

अशोकः

'उद्देशान्ते पञ्चविंशतिरित्युक्ता वर्तनावायुसूनुना' इत्यशोको वक्ति । कल्लिनाथस्तु . कोहलीयवर्तना इति उद्देशान्ते 'चतुर्विंशतिरित्युक्ता वर्तना भट्टतण्डुना' इत्याह ।

वर्तनानन्दः—प्रबन्धः

रागोऽपि कलयेद्वस्तु रसैस्तेनैश्च निर्मितः ।
आभोगश्च पदैर्न्यासः स्वरैर्यस्य प्रगीयते ।
तालेनेष्टेन स ज्ञेयो वर्तनानन्दसंज्ञकः ॥

पण्डितमण्डली

वर्तनाभरणम्—चालकः

एकः करः परिलुठत्कर्णाभ्यर्णनिवेशितः ।
प्रसारितोद्वेष्टितकैः वर्तितो यदि लीलया ।
अपरः पाणिरेतत्तु वर्तनाभरणं भवेत् ॥

वेमः

वर्तनास्वस्तिकम्—चालकः

विद्युद्दामानुकारेण पाणिरेकस्स्वपार्श्वतः ।
वलनं कुरुते पाणिरन्यो विच्युतिपूर्वकम् ॥
अनेन योगमायाति क्रियासमभिहारतः ।
वर्तनास्वस्तिकं प्राह तत्सञ्ज्ञामधनञ्जयः ॥

वेमः

. अथवेदं त्रिखण्डोक्तवर्तनाभिर्भवेदिति ।

अशोकः

वर्तनी—श्रुतिः

मन्द्रपञ्चमद्वितीया श्रुतिः ।

पण्डितमण्डली

—मूर्छना (गान्धारग्रामे तृतीया)

(आ) प ध नि स रि ग म .
(अव) म ग रि स नि ध प .

नान्यः

—प्रबन्धः

वर्तन्यां न द्रुतो लयः ।

पण्डितमण्डली

यस्यामावृत्तिरुद्ग्राहे ध्रुवाभोगौ सुसंयुतौ ।
ध्रुवके स्यात्ततो मुक्तिः वर्तनी साभिधीयते ॥
कङ्कालः प्रतितालौ च कुडुक्कद्रुतमण्टकान् ।
संत्याज्येतरतालैश्च स्वरैश्च परिगीयते ॥
मन्तव्योऽत्र सदा भेदः वर्तिन्याः करणस्य च ।
सविलम्बलयैरेव वर्तिनी कथिता बुधैः ॥
वर्तिन्यां वा विवर्तिन्यामालापस्तालवर्जितः ।
आदावारोप्यते यस्याः सा स्यादालापपूर्विका ॥

सोमराजः

तालं विहाय प्रथमं स्वरैरालापयिष्यते ।
गीत्वा द्विवारमुद्ग्राहं ध्रुवाभोगौ ततः परम् ॥
गीयते ध्रुवकेनैव पुनर्मुक्तिर्भवेदिह ।
प्रतितालो ध्रुवो मट्टः कङ्कालश्च कुडुक्ककः ॥
इति ख्यातान्विहायैतान् तालास्सर्वे भवन्ति च ।
लयो विलम्बितश्चात्र करणेषु द्रुतो भवेत् ॥
करणानाममुष्याश्च दृश्या स्यादियतो भिदा ।
वर्तनीति समाख्याता,

हरिपालः

वर्तिका—श्रुतिः

धैवतस्य तृतीया श्रुतिः । तारधैवतस्य द्वितीया श्रुतिरिति मण्डल्याह ।

वर्तितम्—करणम्

कुञ्चितौ मणिबन्धे तु व्यावृत्तपरिवर्तितौ ।
हस्तौ निपतितौ चोर्वोर्वर्तितं करणं तु तत् ॥

भरतः

आश्लिष्टौ मणिबन्धस्थस्वस्तिकाभिमुखौ करौ ।
कृत्वा वक्षस्येककालं व्यावृत्तपरिवर्तितौ ॥
उत्तानौ पातयेदूर्वोर्यत्र तद्वर्तितं मतम् ।
असूयायां प्रयोगस्स्यात्पताकौ यदि पातयेत् ॥
अधोमुखनिघृष्टौ तौ क्रोधं सूचयतः करौ ।
शुकतुण्डादयोऽप्यन्ये विनियोगवशादिह ॥

शार्ङ्गदेवः

उन्मुखौ स्वस्तिकाकारावश्लिष्टौ मणिबन्धतः ।
वक्षःक्षेत्रे करौ कृत्वा तत्रैव युगपत्पुनः ॥
व्यावृत्तिपरिवृत्तिभ्यां पताकौ यत्र पातयेत् ।
स्वौर्वोरुत्तानितावेव वर्तितं तत्प्रकीर्तितम् ॥
आविद्धवर्तनापूर्वावधस्तलनिपातितौ ।
एतौ तदा यथारोषवाक्यार्थाभिनयौ मतौ ॥

शुकतुण्डादयोऽप्यत्र प्रयोक्तव्या यथोचितम् ।
मुनिनाप्यत एवात्र विशेषो न निरूपितः ।
तत्राप्यनन्तरोक्तत्वात्तलपुष्पपुटोदितः ॥
पादोऽनुमत इत्येके मुनेराशयवेदिनः ।
कथयामासुराचार्याश्चरणं तलसञ्चरम् ।
अपरे तु विदुः पादं हस्तौचित्यानुसारतः ॥

ज्यायनः

असूयाकोपयोर्योज्यम्' इति लक्ष्मणः ।

—नृत्तकरणम्

उन्मुखस्वस्तिकाकारौ यौ श्लिष्टौ मणिबन्धतः ।
वक्षःक्षेत्रान्तरे कृत्वा तत्रैव युगपत्पुनः ॥
व्यावृत्तिपरिवृत्तिभ्यां पताकौ यत्र पातयेत् ।
पुनरुत्तानितावेव वर्तितं तत्प्रकीर्तितम् ॥

नन्दी

वर्धनः—देशीतालः

भवन्ति वर्धने ताले द्रुतौ लश्च प्लुतस्तथा ।
०० । ऽ

सुधा

वर्धनी—रागवर्धनाङ्गम्

रागवर्धनशब्दे द्रष्टव्यम् ।

वर्धापणः—देशीतालः

ताले वर्धापणे ज्ञेयं लघूनां च चतुष्टयम ।
॥ ॥

सुधा

वर्धमानम्—हस्तः

तदेवोर्ध्वीकृतं हस्तं वर्धमानं प्रकीर्तितम् ।

उमा

वर्धमानम्—गीतम्

खण्डिकावर्धमानं, आसारिताभासं, वर्धमानासारितं, इति त्रिविधम ।

—देशीस्थानम्

अन्योन्यपार्ष्णिसंबन्धं तिरश्चीनं पदद्वयम् ।
यत्र तद्वर्धमानाख्यं स्थानकं तद्विदो विदुः ॥

वेमः

वर्धमानः—पूर्वरङ्गाङ्गम्

यस्मान्नृत्याच्च वर्णाच्च वाद्यात्तालाल्लयादिभिः ।
वर्धतेऽभिनयाच्चैव प्रयोगो वर्धमानकः ॥

शारदातनयः

—हस्तः

स्वस्तिकेन विनाभूतौ केचिदिच्छन्ति तं बुधाः ।
सीमन्ताभिनये योज्यः स्त्रीभिस्तद्देशगः करः ॥

अशोकः

हंसपक्षौ स्वस्तिकत्वं प्राप्तौ यदि पराङ्मुखौ ।
वर्धमानस्तदा हस्तः कवाटोद्घाटने भवेत् ॥
विच्युतस्वस्तिकस्तद्वद्वक्षःस्थलविदारणे ।
सर्पशीर्षौ हंसपक्षस्थानेऽस्मिन्नपरे जगुः ।
अपरेऽभ्युपजग्मुस्तं स्वस्तिकेन विना कृतम् ॥

शार्ङ्गः

मृगशीर्षौ पराग्वक्त्रावथवा हंसपक्षकौ ।
तादृशौ वस्तिकीभूतावथवा सर्पशीर्षकौ ॥
पराङ्मुखाविति त्रेधा वर्धमानाभिधः करः ।
द्वारवातायनादीनां कवाटोद्घाटने मतः ॥
विच्युतस्वस्तिकौ हंसपक्षौ वक्षोविदारणे ।
द्वितीयं निषधं प्राह वर्धमानाभिधं बुधः ।
श्रीमान् कीर्तिधराचार्यो विनियोगोऽस्य वर्णितः ॥

विप्रदासः

वर्धमानप्रयोगः—पूर्वरङ्गाङ्गम्

यान्यवोचमहं पूर्वं गीतकानि चतुर्दश ।
वर्धमानादिकं चैव सर्वमत्रैव योजयेत् ॥
उपक्रमे गीतकानां प्रयोगस्सूचनादिभिः ।
उपोह्यन्ते स्वरा यस्मात्तस्मादुक्तमुपोहनम् ॥
तदुक्तपूर्वमस्माभिः चतस्रः कण्डिका अपि ।
विशाला सङ्गते तत्र कनिष्ठासारितोद्भवे ॥
मध्यमासारिताज्जाता विशाला सङ्गता तथा ।
सुनन्देति चतस्रोऽपि ज्येष्ठासारितसंभवाः ॥
सुमुखी च सुनन्दा च सङ्गताच विशालिका ।
उक्तपातक्रमैरेतैरासारितविधिः क्रमात् ॥
पिण्डीबन्धाः प्रदर्श्यन्ते वर्धमानक्रमेण च ।
ते चेष्टदेवतारूपा इष्टचित्राश्रिता अथ ॥
विलम्बितलयेऽभीष्टमाना आसारितस्य तु ।
कला कलापसंयुक्तोपोहनस्यार्धभागिकः ॥
समाश्वतस्रश्चतुरा नर्तक्यः पुष्पपाणयः ।
अन्तर्धानमथाकृत्याऽलङ्कुर्युः रङ्गभूमिकाम् ॥
तत्रावकीर्य पुष्पाणि नमस्कुर्युः क्रमेण ताः ।
इन्द्रादिलोकपालेभ्यः परिवर्त्य चतुर्दिशम् ॥

वन्दनानि प्रकुर्वन्ति चतस्रः परिवर्तनात् ।
उपोहनार्थाभिनयमङ्गहारैः प्रयुज्य ताः ॥

पिण्डीं बध्नन्ति तत्रस्थाः कनिष्ठासारिताश्रये
उपोहनं पञ्चकलं सूचया भावयन्ति ताः ॥

वैशाखरेचितेनासावेका भूत्वा पृथक् ततः ।
भ्रमिनीयोपोहनार्थं दर्शयेच्च तदेतराः ॥

पर्यस्तकाद्यङ्गहारैः प्रवृत्येयुस्ततस्तु ताः ।
पिण्डीबन्धं समास्थाय भावयन्त्यङ्कुरेण तु ॥

प्रथमोपोहनस्यार्थं परिवर्त्य पुनश्च ताः ।
वैशाखरेचितं कृत्वा करणं रङ्गपीठके ॥

विकीर्य पुष्पनिचयं कुर्युर्वस्तु विभावनम् ।
ताभ्य एका विनिश्चित्य प्रथमं वस्तु भावयेत् ॥

तदेव चारु चातुर्याद्दर्शयेन्नृत्यतः पुनः ।
ततः पिण्डीगतास्सर्वाः पिण्डीबन्धमुपागताः ॥

सूचया षट्कलं कुर्युर्द्वितीयोपोहनं पुनः ।
तस्यैव करणं ज्ञेयं तदर्थस्य विभावनम् ॥

अपसृत्य द्वितीयाथ ताभ्यो वस्तु द्वितीयकम् ।
चच्चत्पुटेन तालेनाभिनयेत्प्रथमा तदा ॥

प्रनृत्येदङ्गहारेण चतस्रो मिलिताः पुनः ।
विधाय शृङ्खलाबन्धं द्वितीयस्यात्र वस्तुनः ॥

अङ्कुरेण पुनःकुर्युरुपोहनमथैकिका ।
ताभ्यो निस्सृत्याभिनयेद्द्वितीयं वस्तु तत्परम् ॥

प्रदर्शयत्यङ्गहारैः तदर्थं मिलिता अथ ।
पिण्डीबन्धं समास्थाय समं कुर्युरुपोहनम् ॥

एवं तृतीयाभिनयेत्तृतीयं वस्तु रङ्गगा ।
षट्पितापुत्रकेण द्वे कुर्यातामङ्गहारतः ॥

नर्तक्यो मिलिताः पश्चाल्लताबन्धमुपाश्रिताः ।
अङ्कुरेण पुनः कुर्युरुपोहनमथ स्फुटम् ॥

अन्योन्यं मिलिताः प्राग्वत् तृतीया प्रश्रमान्तिका ।
तृतीयं वस्त्वभिनयेन्नृत्तं कुर्याद्द्वितीयिका ॥

ततस्सङ्गत्य पिण्डीस्थाः कुर्युस्तुर्यमुपोहनम् ।
सूचयाष्टकलं पश्चादपसृत्य चतुर्थिकाम् ॥

चतुर्थं वस्त्वभिनयेदङ्गहारं ततःपराः ।
कुर्वीरन्मिलितास्तिस्रश्चतस्रोऽपि ततःपरम् ॥

अङ्कुरेण चतुर्थस्य वस्तुनो भेद्यकाभिधम् ।
बन्धमास्थाय कुर्वीरन्नुपोहनमतःपरम् ॥

विश्लिष्यान्योन्यमाद्याभ्यां द्वाभ्यां साकं तृतीयया ।
अङ्गहारैरभिनयेच्चतुर्थीवस्तु तुर्यकम् ॥

अथ सर्वास्तु नर्तक्यः पिण्डीबन्धमुपाश्रिताः ।
चतुर्थोपोहनं कुर्युरपसृत्य तृतीयिकाम् ॥

तृतीयं वस्त्वभिनयेत्तिस्रो नृत्यन्ति तत्परम् ।
लताबन्धमथास्थाय कुर्युः पूर्वमुपोहनम् ॥

प्रथमं वस्त्वभिनयेत्प्रथमापसृता ततः ।
तदेतराः प्रनृत्यन्ति मिलिताः पुनरेव ताः ॥

कुसुमाञ्जलिमाकीर्य चतस्रोऽपि तदा समम् ।
अङ्गहारैः प्रनृत्याथो भवन्त्यपसृतास्तु ताः ॥

कुम्भः

वर्षवराः

ये त्वल्पसत्वाः क्लीबाश्च ... स्त्रीस्वभाविनः ।
जात्या न दुष्टाः कार्ये च ते वै वर्षवराः स्मृताः ॥

भरतः

वलनम्—तारा

तिर्यग्गमनं वलनं मतम् ।

अशोकः

वलनं शङ्खगमनं रसयोर्वीररौद्रयोः ।

कुम्भः

वलयम्—बाहुभूषणम्

वलितः—ऊरुः

जानुनोऽभ्यन्तरगतौ वलनं समुदीरितम् ।
स्वेच्छापरिक्रमे स्त्रीणां करणे वलितोरुणि ॥

ज्यायनः

जानुन्यन्तर्गते प्राहूरूरुं वलीतसंज्ञकम् ।
स्वैरस्त्रीणां गतावेष विनियुक्तो महर्षिणा ॥

विप्रदासः

—बाहुः

भ्रमितः कूर्परोद्देशे वलितः परिकीर्तितः ।
खड्गादिभ्रामणे योज्यो धृतहस्तस्य मोचने ॥

सोमेश्वरः

वलितम्—स्थानकम्

किञ्चिद्विवलमानाङ्घ्रिं पदं वलनपार्श्वगम् ।
भूमिस्स्पृष्टकनिष्ठं च भूमिगाङ्गुष्ठकं परम् ।
कुर्वीत वलितं प्रोक्तं साभिलाषविलोकिते ॥

ज्यायनः

—दर्शनम्
दृष्टेरिष्टान्निवृत्ताय भूयोऽङ्गत्र्यश्रभावतः ।
क्रियते दर्शनं यत्र वलितं तत्प्रचक्षते ॥
वेमः

वलितं तन्निवृत्तस्य भूयस्त्वग्रावलोकनम् ।
शारदातनयः

—करणम्
अपक्रामति देहस्य क्षेत्रात्सूचीमुखे करे ।
सूचीपादोऽप्यपक्रामेत्तद्दिको भ्रमरीं ततः ।
पुनरङ्गान्तरेणैव यत्र तद्वलितं मतम् ॥
ज्यायनः

वलितवर्तना
वलितामिधहस्तौ चेद्वर्तितौ स्वोर्ध्वतितः ।
सौष्ठवेन तदा सोक्ता धीरैर्वलितवर्तना ॥
अशोकः

कूपरावस्तिकाकारवर्तनाद्वलिता मता ।
अन्ये त्वाचक्षतेऽन्योन्यलग्नाग्रौ खटकामुखौ ।
ऊर्ध्वगौ पृष्ठतो नम्रकूर्परौ वलितेति च ॥
कल्लिनाथः

वलिता—ग्रीवा
पार्श्वोन्मुखी पुनर्ग्रीवा वलितेत्यमिधीयते ।
पार्श्वेक्षणे तथा ग्रीवाभङ्गे चैषा प्रयुज्यते ॥
वेमः

ग्रीवाभङ्गे तथा भर्तुः प्रेक्षायां गुरुसन्निधौ ।
अशोकः

प्रलोकिते स्वभङ्गे च वलिता पार्श्वतोमुखी ।
ज्यायनः

—रागः
मध्यांशकानिधनपञ्चमकाङ्क्षिता च
मन्द्रर्षभे च बहुला बहुसप्तमा च ।
व्यक्तत्रिभिन्नगमका सगवर्जिता च
ज्ञेया तु भाषा वलितान्तराख्या ॥
नान्यः

पञ्चमान्ता च मध्यांशा रिमन्द्रा बहुसप्तमा ।
सगहीना सत्रिभिन्ना भाषा च वलिता च सा ॥
मतङ्गः

वलितोरु—करणम्
उरसो यौगपद्येन कृत्वा व्यावर्तितौ करौ ।
आनीयाक्षिप्तया सार्धं तत्रैव परिवर्तनात् ॥
स्थापयित्वा यदा सम्यक् शुकतुण्डावधस्स्थले ।
बद्ध्या चावतिष्ठेत वलितोरु तदीरितम् ॥
अपत्रपितमेतेन मुग्धायास्संप्रदृश्यते ।
ज्यायनः

आकारगुप्तक्रीडायामेकान्ते च नियुज्यते ' इति लक्ष्मणः ।

वलितोरुकम्—करणम्
शुकतुण्डौ यदा हस्तौ व्यावृत्तपरिवर्तितौ ।
ऊरू च वलितौ यस्मिन्वलितोरुकमुच्यते ॥
भरतः

वक्षःक्षेत्रे समं हस्तौ व्यावृत्तपरिवर्तितौ ।
विधायाक्षिप्तया चार्या संहतौ परिवर्तनात् ।
तत्रानीय निधीयेते शुकतुण्डावधोमुखौ ॥
बद्धा याति स्थितिर्यत्र वलितोरु तदुच्यते ।
मुग्धस्त्रीक्रीडिते चास्य प्रयोगश्शार्ङ्गिणोदितः ॥
शार्ङ्गदेवः

वलितौ—नृत्तहस्तौ
कूर्परस्वस्तिकाकारौ लताख्यौ वलितौ करौ ।
परेतौ विधुतौ मूर्ध्नि मुष्टिकस्वस्तिकौ जगुः ॥
केचिदन्योन्यलग्नाग्रौ पृष्ठतो नम्रकूर्परौ ।
ऊर्ध्वाग्रौ खटकास्यौ च तदाहुर्वलितौ करौ ॥
अशोकः

वल्लभः—गीतालङ्कारः (मठ्यभेदः)
मलयाख्ये भवेत्ताले गुरुर्लघुरतो गुरुः ।
वल्लभो मठ्यको ज्ञेयः तालेऽस्मिन्करुणे रसे ॥
सङ्गीतसारः

—देशीतालः
वल्लभो मगणद्वन्द्वं मध्यगे लघुनि स्मृतः ।
। S S S । S S S कुम्भः
... ... ... ... मण्ठकः ।
वल्लभो रगणेनैव कथितस्तालवेदिभिः ॥
दामोदरः

वल्लभमण्ठः—तालः
वल्लभो रगणेनैव । S । S वेदः

वल्लवी—रागः (सङ्कीर्णः)
देशाख्या शावरीयोगाद्वल्लवी परिकीर्तिता ।
नारायणः

वल्लाता—भाषाङ्गरागः
भाषामभाषिष्ट तु भिन्नषड्जे श्रीकण्ठिकामत्र मुनिर्मतङ्गः।
तदङ्गमंशग्रहणान्तषड्जां वल्लातिकामाह महीमहेन्द्रः॥

अस्य वल्लातिकेत्यपि नाम दृश्यते।

कुम्भः

—रागः
षड्जांशग्रहणन्यासा धमन्द्रा रिषभोज्झिता।
प्रोक्ता हिन्दोलकोपाङ्गं वल्लाता गीतकोविदैः॥

सोमराजः

वल्लाना—रागः
मध्यमग्रहसन्यासा पञ्चमेन च वर्जिता।
धैवतेन च भूयिष्ठा वल्लाना षाडवा भवेत्॥

सोमेश्वरः

वल्लालिरागध्यानम्
सख्या प्रबोध्यमानापि कान्ते रोषं न मुञ्चती।
परावृत्तमुखी श्यामा वल्लाली प्रीतनायका॥

संगीतसरणिः

वशिः—देशीतालः
वशिःस्याल्लघु नृत्तेन। (?)
। । ऽ। लक्ष्मणः

अत्र पाठोऽतीव भ्रष्टः। चिह्नकलनया 'लघुद्वन्द्वं गुरुलघू' इति द्योत्यते।

वशीकरणः—तानः
षड्जग्रामे रिपहीनौडुवः।
स नि ध म ग कुम्भः

वषट्कारः—तानः
मध्यमग्रामे गनिहीनौडुवः।
ध म रि स प. कुम्भः

वसन्तः—रागाङ्गरागः (वीणायां वादनक्रमः)
षड्जं कृत्वा ग्रहं तस्मात्स्वरमेत्यादिमं ततः।
तृतीयतुर्यावुच्चार्य द्वितीयादीन्स्वरानथ॥
त्रीनारुह्यावरुह्याथ वसन्तः सग्रहान्तिमः।
ऋषभोऽपि ग्रहः कैश्चिदस्य लक्ष्येषु दृश्यते॥
षड्जं। मध्यषड्जम्। कुम्भः

—रागः (वंशे वादनक्रमः)
षड्जं स्थायिनमास्थाय तद्द्वितीयतृतीयकौ।
सकृदाहत्य वेगेन प्रोच्यतुर्यतृतीयकौ॥
द्वितीयं पुनरुच्चार्य तृतीयं च चतुर्थकम्।
तृतीयं तदधस्ताच्च स्वरं प्रोच्य ग्रहे यदा॥
न्यासो विधीयते तत्र स्वस्थानं स्यात्तदादिमम्।
वसन्तस्य तृतीयोऽपि स्थायी स्याल्लक्ष्यवर्त्मनि॥

कुम्भः

—देशीतालः
वसन्तताले कर्तव्यो नगणो मगणस्तथा।
९ मात्राः तालप्रस्तारः

—उपाङ्गरागः
सांशन्यासग्रहः पूर्णो मन्द्रनिस्सपकम्पितः।
भूयिष्ठरिनिसो दैने पश्चिमे प्रहरे बुधैः॥
हिन्दोलाङ्गं वसन्तोऽयं वसन्ते गीयते शुचौ।
विद्रुमाभं दशभुजं षडास्यं कोकिलागतिम्॥
तालखट्वाङ्गचक्राब्जफलशंखाश्च षट्करैः।
बिभ्राणं वीणया सक्तकरद्वन्द्वं वराभये।
दधतं पाणियुग्मेन केचित्प्राहुस्तद्विदः॥

कुम्भः

—रागाङ्गरागः
हिन्दोलाङ्गं वसन्तः स्याद्ग्रहांशन्यासषड्जकः।
संपूर्णः कम्पितसपो मन्द्रनि ............।
वसन्ते पश्चिमे यामे शृङ्गारे गीयते बुधैः॥

मट्टमाधवः

—रागः
अंशे न्यासे ग्रहे षड्जोन षड्जो तारमन्द्रयोः।
पूर्णस्वरो वसन्तोऽत्र शृङ्गारे सप्रकम्पितः॥

सोमराजः

देशीतालः
वसन्तताले नगणो मगणः परिकीर्तितः।
। । । ऽ ऽ ऽ श्रीकण्ठः

वसन्तताले विज्ञेयौ नगणो मगणस्तथा।
। । । ऽ ऽ ऽ सुधा

—रागः
पूर्णो वसन्तः षड्जस्त्रिः रागाङ्गश्च त्रयो बुधैः।

मदनः

आन्दोलितो निजस्थाने मध्यमादिविलम्बितः।
मध्यमे नैव.........नित्यं भवति कम्पितः॥

वसन्ते सततं गेयः शृङ्गारे वीरकेऽपि च ।
शृङ्गारे मुख्यवृत्तिस्त्याद्वसन्ते गीयते यतः ।
अयमेव वसन्ताख्यस्तेन सर्वजनोदितः ॥

हम्मीरः

—हस्तः

वसन्ते विप्रकीर्णाख्यः तद्वधूसमुपाश्रितः ।

शृङ्गारः

—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स ग म ध नि स.
(अव) स नि ध म ग रि स.

मञ्ज

—मेलरागः (स्वतन्त्रमेलः)

षड्जादिमूर्छने मान्ते गनी तीव्रौ वसन्तके ।

प्रातर्गेयः

अहोबिलः

—रागः

षड्जमध्यमिकाजातः षड्जन्यासग्रहांशकः ।
गेयो वसन्तरागोऽयं वसन्तसमये बुधैः ॥

नारायणः

—मेलरागः (श्रीरागमेलजोऽयं रागः)

वसन्तरागे वक्रस्तु निषादस्वर उच्यते ।

परमेश्वरः

—मेलरागः (कर्णाटगौडमेलजः)

षड्जत्रययुतः पूर्णो वसन्तो वा रिपोज्झितः ।
प्रातर्मधौ प्रयोक्तव्यौ वीरे रौद्रेऽद्भुते रसे ।
सहायः पञ्चबाणस्य रागो हिन्दोलसंभवः ॥

श्रीकण्ठः

वसन्तगन्धी—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग म ध स.
(अव) स नि ध प म रि स.

मञ्ज

वसन्ततिलकम्—चतुर्दशाक्षरवृत्तम्

त भ ज ज गगाः

भरतः

वसन्ततिलकं, उद्धर्षिणी, सिंहोन्नता, मधुमाधवी, चेतोहिता, इन्दुमुखीत्यादि नामभिर्व्यवहरन्ति ।

वसन्ततिलकः—देशीतालः

वसन्ततिलको लघ्वोर्मध्ये बिन्दुरुदीरितः ।
।०।

लक्ष्मणः

वसन्तभैरवः—मेलरागः

कोमलाख्यौ रिधौ तीव्रौ गनी वसन्तभैरवे ।
धैवतांशग्रहन्यासो मध्यमांशोऽपि सम्मतः ॥

प्रातर्गेयः ।

अहोबिलः

वसन्तभैरवध्यानम्

पीतवस्त्रधरं गन्धकुङ्कुमागरुलेपनम् ।
वसन्तभैरवं ध्याये कार्तिकेयस्वरूपिणम् ॥

रागसागरः

वसन्तमनोहरी—(मायामालवगौलमेलरागः)

(आ) स रि ग म प ध नि स.
(अव) स नि प म ग स.

मञ्ज

वसन्तमुखारी—मेलरागः (वकुलाभरणमेलजन्यः)

(आ) स ग रि ग म प नि ध नि स.
(अव) स नि ध प म रि स.

मञ्ज

वसन्तरागध्यानम्

शृङ्गारवनसमीपे नर्तन्तं युवतिजनकदम्बैश्च ।
शुकपिकशारीयुक्तं ध्याये मे मनसि सन्ततवसन्तम् ।

रागसागरः

शिखण्डिपिञ्छोच्चयचारुचूडः चूताङ्कुरोद्भासुरकर्णपूरः ।
नव्याम्बुदश्यामतनुर्विलासी वसन्तरागोऽतिमनोहरश्रीः ॥

श्रीकण्ठः

शिखण्डबर्होच्चयबद्धचूडः पुष्णन्पिकं चूतलवाङ्कुरेण ।
भ्रमन्मुदाराममनङ्गमूर्तिर्मतिमतङ्गस्य वसन्तरागः ॥

सङ्गीतसरणिः

वसन्तलीला—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि म प ध नि स.
(अव) स नि ध प ग रि स.

मञ्ज

वसन्तिका—रागः

मार्गहिन्दोलरागाङ्गं वेदीहीन्दोलसंज्ञकः ।
पूर्णोऽथ मन्थरो देशीहिन्दोलश्चैव कथ्यते ॥
ऋषभेण निनादेन समष्षड्जो विराजते ।
आन्दोलितो निजस्थाने मध्यमोऽपि विलम्बितः ॥
मध्यमे पञ्चमे चैव नित्यं भवति कान्तितः ।
वसन्ते सततं गेयश्शृङ्गारे वीरकेऽपि च ॥

शृङ्गारमुख्यवृत्तिस्स्याद्वसन्ते गीयते यतः।
अयमेव वसन्ताख्यस्तेन सर्वजनोदितः॥

वसन्ती—रागः

वसन्ती स्यात्तु संपूर्णा सत्रया कथिता बुधैः।
श्रीरागमूर्छनैवात्र गेया रागविशारदैः॥

दामोदरः

वसुः—देशीतालः

वसुः स्याल्लद्वयोर्मध्ये बिन्दुद्वन्द्वसमुद्भवः।
।००।

लक्ष्मणः

वसुकरी मेलरागः (षण्मुखप्रियामेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध म ग रि स.

मञ

वसुन्धरा—देशीतालः

वसुन्धरायां पलपा लद्वयं दत्रयं लघु।
ऽ।ऽ॥०००।

लक्ष्मणः

वसुवंशः

अष्टौ वसवः। मुखतारन्ध्रयोरन्तरालमष्टाङ्गुलमिति हेतोः वसुवंशः।

वसोर्वंशे दण्डमानमङ्गुलानामुदीरितम्।
अन्तरात्रिंशतिं पञ्च यवा यूकात्रयं तथा॥

अन्तरं मुखताराख्यरन्ध्रयोर्दिग्गजाङ्गुलम्।
संभूयान्तरसप्तानां मानमत्र भवेदिदम्॥

पञ्चाङ्गुलानि सार्धाष्टा यवयुक्सप्तयूकिकम्।
प्रतिस्वमन्तरं ज्ञेयमङ्गुलं पादवर्जितम्।
सयूकायवकं शेषं नाथेन्द्रवदिह स्मृतम्॥

कुम्भः

वस्तु—निबद्धाङ्गम्

यस्मिन्वसन्ति नियतं...ङ्गानि कानिचित्।
सद्वस्तुधनिमुख्येन तद्वस्तु परिकीर्तितम्॥

कुम्भः

वस्तु

उद्ग्राहाद्यास्तु चत्वारस्स्वरादीनि च षट् तथा।
वसन्ति यत्र स ज्ञेयः प्रबन्धो वस्तुसंज्ञितः॥

जग-मल्लः

—प्रबन्धः

पादाः पञ्च भवन्त्यत्र प्रान्ते दोहलकोऽपि वा।
विषमेष्वेव पादेषु मात्रास्युर्दश पञ्च च॥

मात्रा द्वादश संख्यातास्समयोः पादयोरपि।
पादा भवन्ति पूर्वास्ते परार्थेष्वपरेण ते॥

अन्ते दोहलकस्त्वन्यैः पदैरामोग इष्यते।
तेन्नैर्न्यासो यथेष्टं स्यात्तालो वस्त्विति लक्षितम्॥

हरिपालः

वस्तुन्यर्धात्पुनः पाठः परार्थे स्वरतेन्नकाः।
तत स्याद्दोहकादूर्ध्वं आभोगोऽन्यपदैः कृतः।
कर्तव्यस्तेन्नकैर्न्यासः तालश्चात्र यथारुचि॥

जगन्नाथः

प्रबन्धे वस्तु संज्ञेऽस्मिन् तेन्नकैर्न्यास इष्यते।
वस्त्वेवं स्वरपाटान्त्ये तेन्नकैरपि रञ्जितम्।
तालैर्याद्दच्छिकैः पञ्च पञ्चकर्णाटभाषया॥

पण्डितमण्डली

प्रथमे च तृतीये च पञ्चमे तिथिसंख्यया।
द्वितीये च चतुर्थे च मात्रा भास्करसंख्यया॥

ईदृक्पञ्चपदं चान्ते दोहकेन समन्वितः।
वस्तु नाम प्रबन्धोऽयं मुनिभिः परिकीर्तितः॥

ईदृग्विधः प्रबन्धोऽसौ नाटके परिगीयते।
भरतोक्तप्रकारेण नानारससमन्वितः॥

सोमेश्वरः

—वाद्यम्

स्पृष्टतारमुपेतं तत्कर्तर्या खसितेन च।
कुहरेणाऽथ तद्वाद्यं वस्तु वस्तुविदो विदुः॥

शार्ङ्गः

—वीणावादनप्राणः

तद्वाद्यं वस्तुसंज्ञं स्याद्यत्रैते क्रमतः स्वराः।
कर्तरी खसितश्चैव कुहरस्तारसंस्पृशः॥

कुम्भः

कर्तव्यो खसितेनापि कुहरेण परिस्फुटम्।
तारः संस्पृश्यते यत्र तद्वाद्यं वस्तुसंज्ञकम्॥

पार्श्वदेवः

वस्तूत्थापनम्—आरभट्यङ्गम्

सर्वरससमासकृतं सविद्रवाविद्रवाश्रयं वापि।
कार्यं विभाव्यते यत् तद्वस्तूत्थापनं ज्ञेयम्॥

भरतः

वस्तूनां बहूनामुत्थापनं प्रसङ्गः गतनिबन्धनं यत्र कार्ये तत्तथोक्तम्। कानि वस्तूनीत्याह सर्वरसेति। रसशब्देन स्थायिनो व्यभिचारिणश्च। तेषां संक्षेपेण कृतं करणं यत्र विद्रवैः अन्या-युपप्लवैस्सह तैर्विहीनं च इत्येवं विद्रवाश्रयं वस्तूत्थापनम्।

यथा- कृत्यारावणे रावणं दृष्ट्वा एतेनापि सुरा जिताः, यस्तातेन निगृह्य बालक इव-इत्यादि वदतोऽङ्गदस्य जुगुप्साहासविस्मयरसाः। रावणस्य शोको विद्रवः। तत्रैव कृत्यारावणे 'नेयं सीता स्वनाशाय कृत्येयं ह्रियते त्वया' इति। ऋषीणां वचनं भाविवस्तुनः समुत्थापनम्।

अभिनवः

यथा- शम्बरकामदेवयोस्सङ्ग्रामे किं स्यादत्र शिशोः कामस्येति हरेः क्रोधः। सीरिणः संभ्रमः शोको यादवानां भयं वासुदेवस्य नानारसयुक्तं बन्धूनां चेष्टितं वस्तूत्थापनम्।

सागरः

## वडहंसः—रागः

त्रिषड्जो रिपवर्जस्स्यात् वडहंसस्तु रागजः।

मदनः

## वांशिकगुणाः

सुस्थानत्वं सुस्वरत्वं अङ्गुलीसारणं त्रिधा।
समस्तगमकज्ञानं रागरागाङ्गवेदिता॥

क्रिया भाषाविभाषासु दक्षता गीतवादने।
स्वस्थाने चापि दुस्स्थाने नादनिर्माणकौशलम्॥

गात्रूणां स्थानदातृत्वं तद्दोषाच्छादनं तदा।
वांशिकस्य गुणा एते मया संक्षिप्य दर्शिताः॥

शुभङ्करः

## वांशिकदोषाः

बहुकृत्वश्शिरःकम्पः स्वस्थानाप्राप्तिरेव च।
वृथा प्रयोगबाहुल्यमल्पता गीतवादने।
एभिर्दोषैर्युतोऽतीव विकृतो वाशितो मतः॥

वाशितः। वाशितसमानस्वरौ यस्य स वाशितः।
काकादिपक्षिस्वरः वाशितः। शुभङ्करः

## वांशिकवृन्दम्

वांशिकस्तु भवेदेको मुख्यस्तदनुयायिनः।
चत्वारश्चतुरेणेदमुक्तं वांशिकवृन्दकम्॥

कुम्भः

वांशिको मुख्य एकः स्याच्चत्वारश्चानुवांशिकाः।
वांशिकानामिदं वृन्दमुत्तमं परिकीर्तितम्॥

वेमः

## वांशी—श्रुतिः

पञ्चमस्य प्रथमा श्रुतिः। मण्डलीमते तारपञ्चमस्यैव।

## वाक्करणम्

वाष्करणमिति पाठान्तरं दुष्टम्।
वाचा ताल्वोः सङ्घट्टनं अनुहारसादृश्यम्।

## वाक्करणानि

पुष्करवाद्यसंविहितान्यक्षराणि वाक्करणानि।

भरतः

## वाकेली—वीथ्यङ्गम्

एकद्विप्रतिवचने वाकेली स्यात्प्रयोगेऽस्मिन्।

भरतः

एकं द्वयोः प्रतिवचनमस्याां। द्विग्रहणमनेकोपलक्षणम्। तदमुना सर्वप्रश्नोत्तरवर्गः स्वीकृतः। यथा—

"नदीनां मेघविगमे का शोभा प्रतिभासते।
बाह्यान्तरा विजेतव्याः के नाम कतिनारयः।" इति।

अभिनवः

अत्र अरय इत्येकत्र रयाभावोऽपरत्र शत्रव इत्येकं प्रतिवचनं। एतत्प्रश्नोत्तरम्। छेकोक्तिः प्रत्युक्तिरपि सहा स वाकेली। यथा— "कोऽयं द्वारि हरिः प्रयाह्युपवनं शाखामृगस्यात्र किं कृष्णोहं दयिते" इत्यादि। केचित्तु साकाङ्क्षस्य वाक्यस्य विनिवर्तनं वाकेलीममिधीयते—यथा उत्तरचरिते—त्वं जीवितमित्यादि।

रामचन्द्रः

## वाक्प्राधान्यम्

वागेवेयमुपयोगिनी किन्तु चतुर्थगोपायभूता परमपुरुषार्थस्वभावा विश्वकारणभूता भगवती भारतीत्याह, वाङ्मयानीति। वाचि फलरूपायां निष्ठा येषां। कुत इत्याह वागिति। इह भावानां सत्तासम्बन्धनिजलक्षणार्थक्रियाकारित्वादिकृतं यत्सत्त्वं तत्प्रधानकबोधस्वभूतं शपथशरणं। तस्य बोधस्य पारमैश्वर्यं स्वातन्त्र्यं प्रत्यवमर्शात्मकमेव जडवैलक्षण्यदायीति वितमस्तपरम गुरुपादैः प्रत्यभिज्ञादौ अस्माभिश्च तद्विवरणे भेदवादविदारणादौ च। एवं वागेवावभासिका। सैव च निर्वाहिकी। अवभासनैव परमार्थतो निर्वाणम्। तदाह — वाग्भ्य इति। वागेव विश्वाभुवनानीतिश्रुतेः शब्दविवर्तादिरूपत्वं च प्रसाधितं तत्र भवद्भिः भर्तृहरिप्रभृतिभिरिति तदिहानुसरणीयम्।

वाचि यत्नस्तु कर्तव्यो नाट्यस्यैषा तनुः स्मृता।
अङ्गनैपथ्यसत्त्वानि वाक्यार्थं व्यञ्जयन्ति हि॥

वाङ्मयानीह शास्त्राणि वाङ्निष्ठानि तथैव च।
तस्माद्वाचः परं नास्ति वाग्धि सर्वस्य कारणम्॥

भरतः

वाक्यम्

यतस्सर्वः पदार्थोऽयं वाक्यार्थे पर्यवस्यति ।
ततस्तेषां समूहोऽत्र वाक्यं वाक्यविदोच्यते ॥

कुम्भः

वाक्यतिराटिका (वाक्यार्तिराटिका)—रागः

मध्यमांशग्रहन्यासगान्धारा च समस्वरा ।
संपूर्णापि च गीतज्ञैरुक्ता वाक्यतिराटिका ॥

सोमराजः

वाक्यार्थः

वाक्यार्थस्त्रिधा भावना विधिः प्रतिभा च । ननु एवं क्रियापि नाम वाक्यार्थो विद्यते । सोऽपि वक्तव्यो भवति । नैवं पदार्थः क्रिया न वाक्यार्थः । पदार्थानां तु मिथस्संसर्गे यदाचिक्यमुपजायते स वाक्यार्थः । स कदाचित्पुरुषव्यापाररूपो भावनेति कदाचिच्छब्दव्यापाररूपो विधिरिति कदाचिद्बुद्धिव्यापाररूपः प्रतिभेति चोच्यते ।

भोजः

वाक्यार्थविचारः (मतभेदः)

नन्वन्वितामिधानेऽपि तथैवाभिहितान्वये ।
पदार्थानेव वाक्यार्थमाहुरन्वितरूपतः ॥

तत्रान्वितामिधायीनि पदानीति कृतश्रयाः ।
प्रधानगुणभावेन लब्धान्योन्यसमन्वयान् ॥

पदार्थानेव वाक्यार्थं सङ्गिरन्ते विपश्चितः ।
यद्यदाकांक्षितं योग्यं सन्निधानं प्रपद्यते ॥

तत्तदन्वितरूपेण पदैः स्वार्थोऽभिधीयते ।
भूयांसो यद्यपि स्वार्थाः पदानां ते पृथक्पृथक् ॥

प्रयोजनतया ह्येको वाक्यार्थत्वेन सम्मतः ।
तत्प्रतीत्येककार्यत्वात् वाक्यमप्येकमुच्यते ॥

प्रतिपत्तिर्गुणानां हि प्रधानैकप्रयोजना ।
पदान्येव समर्थानि वाक्यार्थस्यावबोधने ॥

विशेषान्वितवादीनि भागशो भागशालिनः ।
अपरे केचिदाचार्याः वदन्त्यभिहितान्वयम् ॥

पदैरभिहितस्वार्था अकांक्षादित्रयान्विता ।
सामर्थ्याद्गमयन्त्येकं फलं वाक्यार्थमन्वितम् ॥

न विमुञ्चन्ति सामर्थ्यं वाक्यार्थानि पदानि च ।
वाक्यार्थमितरेषां तु प्रयुक्तौ कारणं स्मृतम् ॥
पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ।

साहित्यमीमांसा

वाक्यार्थाभिनयः

यद्यद्रसात्मकं तत्तद्वाक्यार्थाभिनयात्मकम् ।

शारदातनयः

वागधीश्वरी—मेलकर्ता

स ० ० रि ग म ० प ० ध नि ० स .

मञ्ज

वागिच्छा—नर्म

संभोगेच्छां गिरा यत्तु वदति प्रियसन्निधौ ।
तदत्र कथ्यते सद्भिः वागिच्छाप्रतिपादनम् ॥

सर्वेश्वरः

वाग्मती—मेलरागः (वागधीश्वरीमेलजन्यः)

(आ) स रि ग म प ध स .
(अव) स नि ध प म ग रि स .

मञ्ज

वागुरा—ध्रुवावृत्तम्

पञ्चाक्षरा—

प्रथमं च तृतीयं च त्वन्तं चैव यदा गुरु ।
दृश्यते प्रतिपादं तु सा ज्ञेया वागुरा यथा ॥
(उदा) मेघरुद्धओ (छाया) मेघरुद्धः ।

भरतः

उत्तमानां तु दीनानां वागुरा ककुभे भवेत् ।
अत्र चाचपुटस्तालः पाटाक्षरविनिर्मितः ॥

नान्यः

वाग्भवं—नर्म

वाचा प्रीतिकरं नर्म वाग्भवं वस्तुतो भवेत् ।

सर्वेश्वरः

अत्र वाग्भयमिति पाठान्तरं दृश्यते । यदि तत्पाठमाद्रियते तदा वाचा भीतिकरं नर्मेत्यपि पठितव्यम् ।

वाग्भीत्यपरसंयोगी—नर्म

वचस्संपृक्तया भीत्या रसान्तरविचारि यत् ।
वाग्भीत्यपरसंयोगी भवेत्तन्नर्म नाटके ॥

सर्वेश्वरः

वाग्भेदनम्—नर्म

वचसा भेदनं भर्तुर्वाग्भेदनमुदाहृतम् ।

सर्वेश्वरः

वाग्विलसितम्—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स ग रि ग म प ध नि स.
(अव) स नि ध प म ग म रि स.
मञ्ज

वाग्विललिता—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि म प ध स.
(अव) स नि प ध म रि ग रि स.
मञ्ज

वाग्गेयकारः
प्रबन्धनिर्माणविशेषदक्षो वाग्गेयकारस्त्विति वर्णितं प्राक्।
रघुनाथः

अयमेव 'वयकार' इत्यपि उच्यते।

वाग्गेयकारकः
गेयं मातुस्तयोः कर्तोच्यते वाग्गेयकारकः।
कुम्भः

वाचस्पतिः—मेलकर्ता (रागः)
स रि ग ० ० म प ध ० ० नि स.
मञ्ज

वाचानुरागम्—नर्म
विदधाति गिरा यत्तु स्वानुरागविवेदनम्।
वाचानुरागकथनं तदुक्तं भरतादिभिः॥
सर्वेश्वरः

वाचिकभेदाः
आङ्गयवाचिकयोर्नृत्येष्वभेदः प्रतिपाद्यते।
तथापि किञ्चिल्लोकेषु भेदोऽयं प्रतिपादितः॥
स्वगीतवाचिकः पूर्वमुपगीताख्यवाचिकः।
स्वशब्दवाचिकं चापि ह्युपशब्दाख्यवाचिकः॥
श्रृङ्गार

वाचिकाभिनयः
गीतानां च प्रबन्धानां वाक्यानां वृत्तसंसदाम्।
द्विपदी चूर्णिकानां च आर्याणां गीतसंसदाम्॥
अन्येषां गीतबन्धानामेषां च नटनं क्रमात्।
वाचिकाभिनयः प्रोक्तो भरतार्थविवेकिभिः॥
श्रृङ्गारः

वाचोधरी—मेलरागः (शुभपन्तुवरालीमेलजन्यः)
(आ) स रि ग म नि ध नि स.
(अव) स नि ध प म रि ग म रि स.
मञ्ज

वाध्यकः—देशीतालः
गुरवोऽष्टौ लघूनां च दशकं यत्र वाध्यके।
ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । । । । । । । । ।
हम्मीरः
अयं हम्मीरकल्पित इति सन्दिह्यते। नाम्न्यपिसन्देहः।

वाजपेयः—तानः (षाडवः षड्जलोपः)
प म ग रि नि ध
कुम्भः

वाजपेयिकः—तानः
मध्यमग्रामे नारदीयतानः।
प ध नि स ग.
नान्यः

वाजी—मूर्छना
सुभद्रग्रामे तृतीया मूर्छना
गान्धारश्च सुभद्राख्ये यदा मूर्छां व्रजेत्स्वरः।
तदा वाजीति विज्ञेया गेया बुद्धिविचक्षणैः॥
नारदशिक्षायां अश्वक्रान्तो नाम दृश्यते।
वादिमत्तः

वाञ्छितः—गीतालङ्कारः (निसारुकभेदः)
लघुत्रयं द्रुतद्वन्द्वं ताले शरभलीलके।
अयं निसारुको ज्ञेयो वाञ्छितो वाञ्छितप्रदः॥
सङ्गीतसारः

वाणासिका—प्राकृते मात्रावृत्तम्
द्वौ चतुर्मात्रिकौ, जो वा नलौ वा, सो वा गौ वा.
विरहाङ्कः

वाणीतालः
वाणीताले गुरुर्दलौ।
$3\frac{1}{2}$ मात्राः
तालप्रस्तारः

वातचन्द्रिका—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स रि म प ध नि स.
(अव) स नि प म रि स.
मञ्ज

वातिका—श्रुतिः
पञ्चमस्य तृतीया श्रुतिः।
सुधा

वादकः—मार्दलिकः
परिग्रहश्च पक्षस्य स्वपक्षस्य च साधनम्।
दूषणं परपक्षस्य इति वाद इतीरितः।
वादं करोति यत्तज्ज्ञैः स वादक इतीरितः॥
वेमः

### वादकानां निवेशने दूरनियमः

वीणानृपात्पञ्चहस्ते सप्तमे शुद्धसालगे।
दशहस्ते कथागीतं विंशहस्ते च नाटकम्।
त्रिंशद्धस्ते च कोलाटमिति गानादिदूरता ॥

हम्मीरः

### वादिकोलाहलः—देशीतालः

ऽऽ।।००ऽऽ̇ऽ̇।।००ऽ̇ऽ̇।।००० हम्मीरः

### वादित्रिपुरान्तकः—देशीतालः

ऽऽऽऽ।।००।।००।।००̊ हम्मीरः

### वादिदर्पविभञ्जनः—देशीतालः

पद्वयं दद्वयं लौ च दद्वयं लद्वयं तथा।
पद्वयं गो लघूद्वौ च विरामान्तं च दद्वयम्।
तालज्ञैः कथितस्तालो वादिदर्पविभञ्जनः ॥
ऽ̇ऽ̇००।।००।।ऽ̇ ऽ̇ऽ।।००̊ हम्मीरः

### वादिनां भजनः—देशीतालः

ऽ̇ऽ̇ऽ̇ऽ̇।।ऽ००ऽ̇ऽ̇००।।०̊०̊०̊ऽ̇ऽ।।००।।ऽ।।००ऽ

हम्मीरः

### वादिप्रबलभैरवः—देशीतालः

गुरवो द्वादशसंख्या दचतुष्कं तथा प्लुतौ।
गुरूणां च चतुष्कं च लघूनां च तथैव च ॥
वक्रो लौ च विरामोऽन्तद्रुतत्रयविभूषितः।
वादिप्रबलभैरवस्तालोऽयं संमतः सताम् ॥
ऽऽऽऽऽऽऽऽऽऽऽऽ००००ऽ̇ऽ̇ ऽऽऽऽ।।।।ऽ।।०००

हम्मीरः

### वादिमुद्गरः—देशीतालः

ऽ̣ ऽ̇ ऽ̇ऽ̇।।००ऽ̇।ऽऽ।।००००

### वादिस्वरादिभेदः

समानश्रुतिकतया वादीति। श्रुतिमण्डले च नवत्रयोदशान्तरपरस्परः संवादीति। तथैव हि ययोश्च द्विश्रुतिकमन्तरं तौ विवादिनौ। शेषाश्चानुवादिन इति भरतसूत्रस्यार्थः। शेषा इति वादिसंवादिविवादिभिः संवलितोद्धारणातुल्यधर्माणोऽनुवादिन इत्यर्थः। यथा—समौ, निगौ, सपौ, रिधौ, चत्वारः संवादिनः, धनी, रिगौ, विवादिनौ। चतुर्दशानुवादिनः। नत्वेव काकल्यन्तरस्वरप्रयोगेषु श्रुत्युत्कर्षेणायं वाद्यादिप्रकारो नियमितुं शक्यत इति सूत्रेणैवाह भरतः। ऋषभगान्धारौ, धैवतनिषादौ, विवादिनाविति। शेषा अनुवादिनः।

नान्यः

निषादः काकलीसंज्ञो द्विश्रुत्युत्कर्षणाद्भवेत्।
गान्धारस्तद्वदेवस्यादन्तरस्वरसंज्ञकः ॥
अनंशत्वात्तु भेदेन स्वरता नोच्यते तयोः।
योऽत्यन्तबहुलो यस्य वादीवांशश्च तत्र सः ॥
मिथःसंवादिनौ ज्ञेयौ त्रयोदशनवान्तरौ।
अतोऽनुवादिनश्शेषाद्द्वयन्तरौ तु विवादिनौ ॥

दत्तिलः

### वादी—स्वरः

वदनाद्वादी स्वामिवत्। वदनं हि नामाऽत्र प्रतिपादकत्वं विवक्षितम्। न वचनमिति। किं तत्प्रतिपाद्यते। रागस्य रागत्वं जनयति। वा‍ंशवत् बोद्धव्यः।

मतङ्गः

### वाद्यम्

वाद्यं चतुर्विधम्।

पृथग्वाद्यं भवेदेकं द्वितीयं गीतसङ्गतम्।
नृत्तानुगं तृतीयं च तुरीयं गीतनृत्तगम् ॥
एवं चतुर्विधं वाद्यं विनोदार्थं महीपतेः।
विवाहे च परीक्षायामुत्साहे त्यागकर्मणि ॥
श्रूयते च यदा वाद्यं पृथग्वाद्यं तदुच्यते।
देवगेहे नृपावासे गजवाजिपदातिके ॥
आहवे चोत्सवे चेति तद्वदन्येषु कर्मसु।
गीतनृत्तैर्विना यत्तु भोगार्थं वाद्यते सदा ॥
तदपि प्रोच्यते प्राज्ञैः पृथग्वाद्यं पृथग्विधम्।
गीतेन सङ्गतं यत्तु तद्गीतानुगमुच्यते।
नृत्तेन सहितं यच्च तन्नृत्तानुगमीरितम् ॥
गीतपात्रानुगं वाद्यं तद्भवेद्गीतनृत्तगम्।
एवं चतुर्विधं वाद्यं कथितं हर्षदायकम् ॥

सोमेश्वरः

नामान्तरमातोद्यम्।

ततं चैवावनद्धं च घनं सुषिरमेव च।
चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् ॥

भरतः

—वीणावादनम्

त्रिप्रकारा मया प्रोक्ता ये हस्तास्समवायतः।
तेषां वादनविन्यासो वाद्यमित्युच्यते बुधैः ॥

त्रिप्रकारेति। वामदक्षिणोभयहस्तव्यापाराः।

कुम्भः

—नाट्याङ्गम्

आनद्धं द्विविधं प्रोक्तं एकं वीणादिवाद्यकम्।
घनमेकं तदाख्यातं सुषिरं द्वयमेव च॥
मर्दलौ च तथा ढक्का दिक्कालादिक एव च।
उपाङ्गमुखवीणे च नाट्याङ्गं षड्विधं भवेत्॥

विङ्कः

वाद्यमत्रोच्यते तत्तत्पाणियोगेन वादनम्।

कुम्भः

—वादः

टाकिणीवत्समस्तं प्राक्खण्डं कृत्वा ततःपरम्।
खण्डं खण्डं द्विर्द्विवारं वाद्यते वादसंज्ञके।
तत्रैकसरजोडात्वं टाकिणीवदुदाहृतम्॥

शार्ङ्गः

वाद्यक्रिया

चतुर्विधस्य वाद्यस्य क्रियाभेदोऽथ कथ्यते।
एकहस्तं द्विहस्तं च कुडुपाघातजं तथा॥
कोणकाहननं चैव धनुराकर्षसंभवम्।
फूत्कारजनितं चान्यद् वादनं बहुभङ्गिकम्॥

सोमेश्वर

वाद्यतालः— देशीतालः

ऽऽऽऽऽऽऽऽ।।।।।।।।।।।।ऽ

हम्मीरः

वाद्यप्रकाराः

ते च विंशतिः।

एवमेते प्रकारास्तु कर्तव्या वाद्यसंश्रयाः।
गतिप्रचारे गीते वा रसभावानवेक्ष्य च॥
प्रकारा जातयश्चैव सर्वमार्गेषु संस्थिताः।
ये वै गतिप्रचारेषु शुद्धास्ते केवला मताः॥

भरतः

गतिप्रचार इति नायिकानायकचेटकादिविदूषकपरिक्रमः। मार्ग इति अङ्कितालिप्तादिवाद्यमार्गः।

वाद्यप्रबन्धः

अथ वाद्यप्रबन्धानां लक्षणं प्रतिपाद्यते।
यतिरोता रिंगोणी च गजरः कवितं तथा॥
पदं मेलापकश्चैव ततश्चोपशमाभिधः।
उद्ग्राहश्च प्रहरणमन्तरं चाप्यवत्सकः॥

तुडुका छण्डणश्चाथ मलपं मलपाङ्गकम्।
ततो मलपपाटश्च छेदो रूपकमन्तरः॥
ततश्चान्तरपाटश्च खोञ्जःखण्डयतिस्तथा।
खण्डछेदः खण्डपाटः खण्डकः खण्डहुल्लकः॥
ततो ह्यलयतिश्चैव समपाटो ध्रुवस्तथा।
अङ्गरूपकमङ्गं च वितालस्तालसंज्ञकः॥
कलकस्समुदायश्च जोडण्युडुपसंज्ञकः।
ललपाटश्चाट्टवणी तुण्डवश्चाङ्गपाटकः।
वैसारश्चेत्यमी भेदाश्चित्वारिंशदीरिताः॥

वेमः

अत्र द्वात्रिंशदेव वाद्यप्रबन्धा उक्ताः सोमराजेन। विंशतिरेवोक्तास्सोमेश्वरेण। श्रीकण्ठेन तु "यतिरोता च गजरो व्यापकः श्रुतिभूषणः। पटचारिस्तथा रुद्रभूषणः क्रमशो मताः॥"इत्युक्तम्। द्विचत्वारिंशदुक्ता मोक्षदेवेन।

सारी चन्द्रकला चैव बन्धसारस्तथैव च।
मुरुडी हंसलीला च रङ्गाभरणनामकः॥
चतुर्मुखी रङ्गलक्ष्यः तथा नारायणप्रियः।
गजलीलश्च तुरगलीलोऽवघडचक्रकः॥
पद्मबन्धो नागबन्धः सर्वतोभद्रसंज्ञकः।
कूर्मबन्धो रथाङ्गश्च दक्षिणावर्तसंज्ञकः॥
ततरदश्चतुरश्रो भ्रमरको विचित्रकः।
लताख्यो लाङ्गलश्चैव पाञ्चजन्यस्सुदर्शनः॥
इत्येते कथिता बन्धाः चतुर्विंशतिसंख्यया।
समाश्च विषमाश्चेति बन्धा एते द्विधा स्मृताः।
तत्राष्टमिषोडशभिः पात्रैर्द्वात्रिंशता तथा॥
चतुष्षष्ट्याथवा बन्धाः संश्रिताः प्रतिकीर्तिताः।
अत्र षोडशसंख्यैव बन्धः प्रायः प्रशस्यते॥
पात्रैर्नवादिविषमसंख्याकैर्ये प्रवर्तिताः।
ते बन्धा विषमाः प्रोक्ता रसरक्तविचक्षणैः।
उद्दिष्टानां च बन्धानां लक्षणं कथ्यते क्रमात्॥

वेमः

एते बन्धा दण्डरासकरासकनृत्तयोः प्रायः प्रयुज्यन्ते। ते हि नृत्ते वाद्यबन्धाः। वाद्यप्रबन्धास्तु नृत्तगीताभ्यां विना केवलं वाद्य एव प्रबन्धरूपकेण विलसिताः।

उद्ग्राहादिविधा वाद्यप्रबन्धाः पाटवर्णजाः।

कुम्भः

**वाद्यप्रमाणः—देशीतालः**

।।।।।००।।००।।।।।ऽ̇ ऽ̇ ०००००̇ हम्मीरः

**वाद्यप्रयोजनम्**

अभिषेके नरेन्द्राणां यात्रायामुत्सवे तथा।
मङ्गलेषु च सर्वेषु विवाहोपनयादिषु।।

उत्पाते संभ्रमे युद्धे नारके वीररौद्रिणि।
सर्वातोद्यानि वाद्यन्ते कानिचित्वन्यमङ्गले।।

विशतां रङ्गसंस्थानं गायतां नृत्यतामपि।
एतान्युत्साहकारीणि वीराणां मङ्गलाय च।।

कुर्वन्ति हृदयस्फूर्तिं दुःखमुन्मूलयन्ति च।
गीतनृत्यगतन्यूनप्रच्छादनपटून्यपि।।

हम्मीरः

**वाद्यप्रवरः—देशीतालः**

।। ऽऽऽऽऽऽऽऽऽऽऽऽ ऽऽऽऽऽऽऽऽऽऽऽ ।।।।।।।।।
०००००००००००००० हम्मीरः

**वाद्यभञ्जनः देशीतालः**

ऽऽऽऽ।।००ऽ̇।।०००००००ऽ हम्मीरः

**वाद्यभरितः—देशीताल**

।ऽऽ।।ऽऽ००ऽ००।ऽऽ००ऽऽ̇।।००̇ हम्मीरः

**वाद्यभाण्डकल्पने माननिर्णयः**

अङ्गुलं मानमङ्गुष्ठपर्वदैर्घ्यादिह स्मृतम्।
तैरङ्गुलैर्द्वादशभिः वितस्तिर्मानमिष्यते।।

वितस्तिभ्यामुभाभ्यां तु हस्तमानमुदाहृतम्।
एवमुक्तेन मानेन वाद्यभाण्डानि कल्पयेत्।।

वेमः

**वाद्यभेदाः**

पञ्चधा च चतुर्धा च त्रिविधं च मते मते।
कोहलस्य मते ख्यातं पञ्चधा वाद्यमेव च।।

सुषिरं च घनं चैव चर्मबद्धं तथैव च।
तन्त्रीगानं पुराख्यातं पञ्चधा वाद्यलक्षणम्।।

चतुर्विधं दत्तिलेन—

आनद्धं ततमेव स्यात् घनं च सुषिरं तथा।
एवं चतुर्विधं वाद्यं दत्तिलेन प्रकीर्तितम्।।

नारदमते तु चार्मणं तन्त्रिकं चैव घनं च त्रिविधं मतम्।
एवं त्रिधा नारदस्य मते वाद्यस्य लक्षणम्।।

चिक्कः

**वाद्यरत्नावलिः**

न्यायसेनापतिकृतिः श्रूयते। कालः क्रै. प. १२४५

**वाद्यविनियोगः**

नास्ति किञ्चिदनायोज्यमातोद्यं दशरूपके।
रसभावप्रयोगं तु ज्ञात्वा योज्यं विधानतः।।

उत्सवे चैव याने च नृपाणां मङ्गलेषु च।
शुभकल्याणयोगे च विवाहकरणे तथा।।

उत्पाते संभ्रमे चैव सङ्ग्रामे पुत्रजन्मनि।
ईदृशेषु हि कार्येषु सर्वातोद्यानि वादयेत्।।

स्वभावगृहवार्तायामल्पभाण्डं प्रयोजयेत्।
विप्रलम्भे सकरुणे दुःखदीनश्रमादिषु।।

अल्पभाण्डं प्रयोजयेदिति संबन्धः।

तथा चारभटीवृत्तौ लयस्योद्दीपिनी मुखे।
उत्थानकार्यबन्धेषु सर्वातोद्यानि वादयेत्।।

अङ्गानां तु समत्वाच्च छिद्रप्रच्छादने तथा।
विश्रामहेतोः शोभार्थं भाण्डवाद्यं विनिर्मितम्।।

भरतः

**वाद्यसंश्रयः—वाद्यप्रकारः**

विशुद्धवाद्यप्रकृतिः समपाणिकृतस्तथा।
स्वरूपानुगतश्चैव विज्ञेयो वाद्यसंश्रयः।।

भरतः

**वाद्याङ्गिः— क्रियाभेदः**

एकहस्तं द्विहस्तं च कुड्डुपाघातजं तथा।
कोणकाहननं चैव धनुराकर्षसंभवम्।
फूत्काररजनितं चान्यद्वादनं बहुभङ्गिकम्।।

सोमेश्वरः

**वाद्यालङ्कारः**

इदानीं वाद्यजातीनामेतासां संप्रचक्ष्महे।
उत्कर्षहेतुरन्योन्योच्छ्रयरूपा अलङ्क्रियाः।।

य आतोद्यान्तराणां हि परस्परसमन्वयः।
तमलङ्कार इत्येवसूचे स भरतो यथा।।

नान्यः

**वाद्येष्वङ्गप्रत्यङ्गानि**

विपञ्ची चैव चित्रा च दार्वीष्वङ्गसंज्ञिते।
कच्छपी घोषकादीनि प्रत्यङ्गानि तथैव च।।

मृदङ्गा दर्दुराश्चैव पणवाश्चाङ्गसंज्ञिताः।
झल्लरीपटहादीनि प्रत्यङ्गानि तथैव च।।

अङ्गलक्षणसंयुक्तो विज्ञेयो वंश एव हि ।
शङ्खस्तुण्डिकिनी चैव प्रत्यङ्गे परिकीर्तिते ॥

भरतः

वाद्योत्पत्तिः

वाद्यं दक्षाध्वरध्वंसोद्वेगत्यागाय शम्भुना ।
चक्रे कौतुकतो नन्दी स्वातितुम्बुरुनारदैः ॥

हम्मीरः

वानरः—स्वरजातिः

एकोनचत्वारिंशद्भिः स्वरैर्वानर उच्यते ।

औमापतम्

वाना—श्रुतिः

मन्द्रपञ्चमतृतीया श्रुतिः ।

मण्डली

वामदक्षतिरश्चीनम्—चालकः

वामदक्षविलासितचालकस्य नामान्तरम् ।

वामदक्षविलासितम्—चालकः

वामदक्षिणयोः पाण्योः यत्र स्वस्तिकयोगतः ।
लुठनं क्रियते तिर्यक् वामदक्षविलासितम् ॥

एतन्नामान्तरेण वामदक्षतिरश्चीनमिति तण्डुना प्रोक्तमिति-चाशोकः ।

वामध्रुवा—भङ्गतालः

लघुद्वयं द्रुतषट्कम् ।

॥ ० ० ० ० ० ०

नान्यः

वामनालङ्कृतिव्याख्याकारः—देशीतालः

वामनालङ्कृतिव्याख्याकारे द्विःस्युर्द्रुतान्तरे ।
लगप्लुतगलाः पूर्वेकं दपरा मताः (?) ॥

। ऽ । ऽ̍ ऽ̍ ऽ । । ऽ । ऽ̍ ऽ̍ ऽ !० (?)

गोपतिप्पः

वामविद्धम्—मण्डलम्

पादस्तु दक्षिणस्सूचीं वामोऽपक्रान्तचारिकाम् ।
दक्षिणोऽङ्घ्रिर्दण्डपादां वामस्सूचीं तथैव च ॥
भ्रमरीं च ततःकुर्यात् पार्श्वक्रान्तां तु दक्षिणः ।
कुर्याद्वामोऽङ्घ्रिराक्षिप्तामथान्यश्चरणः पुनः ॥
दण्डपादां तथोद्वृत्तां ततोऽङ्घ्रिर्दक्षिणेतरः ।
कुर्यात्सूचीं भ्रमरिकामलातां च यथाक्रमम् ॥
पार्श्वक्रान्तां दक्षिणोऽङ्घ्रिर्वामोऽतिक्रान्तचारिकाम् ।
कुरुते यत्र तत्प्रोक्तं वामविद्धं विचक्षणैः ॥

वेमः

वामा—श्रुतिः

धैवतस्य तृतीया श्रुतिः ।

कुम्भः

वामोर्ध्वकप्रवृत्ता—अवनद्धे जातिः (एकरूपा)

वामोर्ध्वकप्रवृत्तादौघे क्षिप्तावकृष्टलययुक्ता ।
सा करुणरसप्राया जातिः स्यादेकरूपा तु ॥

भरतः

दीर्घाक्षरैकयुक्ता करुणरसे स्थितलया च या जातिः ।
तामाह नान्यदेवो वाद्यविधावेकरूपेति ॥

स्थितलयः । विलम्बितलयः ।

नान्यः

वाम्यम्—शिल्पकाङ्गम्

प्रसादने व्युत्थानं वाम्यम् । यथा—कुम्भाङ्के देवि देवी-त्यादि ।

सागरः

वायुः—नारदीयतानः

मध्यमग्रामे ।
ग म प ध नि रि

नान्यः

वाराहहस्तः

गजहस्ते गजमुखमधो वदनतः क्षिपेत् ।
वाराहस्स च देवः स्याद्विनियोगस्तु नान्यथा ॥

गौरीमतम्

वारिदः—वर्णालङ्कारः

सनिनिनि, सधधध, सपपप, सममम, सगगग, सरिरिरि, ससस ।

प्रतापसिंहः

वारिधिः—देशीतालः

वारिधौ गोलघू दलौ ।
ऽ ॥ ० ।

लक्ष्मणः

वारुणम्—करणम्

कर्तरी स्वस्तिकौ हस्तौ स्थानकं वर्धमानकम् ।
जानुनी नमिते किञ्चित् भूयोभूयः प्रसारिते ।
भवेतां यत्र करणं तद्वारुणमुदाहृतम् ॥

हरिपालः

वार्षगण्यः—न्यायप्रविचारः

प्रविचारस्सात्त्वतवद्वार्षगण्योऽपि दृश्यताम् ।
किन्तु हस्तोद्वेष्टनं तु स्कन्धे वक्षसि वा भवेत् ॥
अत्राधिकं स्याद्भ्रमणं पृष्ठतः फलकस्य तु ।
अत्र पातः कृपाणस्य क्रियते वक्षसः स्थले ॥

वेमः

**वासः**—नादभेदः (अलब्धलक्षणम्)

ज्योतिर्वासः, विज्योतिवासः, कुमारवासः, पक्षवासः, भवनवासः, श्वेतवासः, भास्वरवासः, रुद्रवासः, हरिवासः, दधिवासः, दिग्वासः, ऋषिवासः, कार्तिकवासः, अघोरवासः, ब्रह्मवासः, त्रिपुरवासः, शिवशक्तिवासः, भुवनाधिपतिवासः। इति पाल्कुरिकिसोमनाथेन स्मृताः। अत्र वासशब्दः वासेति स्त्रीलिङ्गरूपो वा भवेत्।

**वासकसज्जिका**—नायिका

उचिते वासके या तु रतिसंभोगलालसा।
मण्डनं कुरुते हृष्टा सा वै वासकसज्जिका॥

भरतः

उचिते वासक इति पूर्वोक्तेन नयेनायातः। लालसा- साभिलाषा।

**वासगृहोपगमनम्**—संगीतशृङ्गाराङ्गम्

रत्यावासप्रवेशः। भोजः

**वासवारिधिः**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध प म ध म ग रि स.

मल्ल

**वासुकिः**—देशीतालः

वासुकिर्गिरलाविष्टः।
ऽ।ऽ।। लक्ष्मणः

**वासोपचारः**

नायिकायाः समीपे नायकस्थितिः।

वासोपचारो यश्चैषां स रात्रौ परिकीर्तितः।
परिपाट्यां फलार्थे वा नवे प्रसव एव वा।
दुःखे चैव प्रमोदे च षडेते वासकाः स्मृताः॥

एषां राज्ञां। परिपाटी यथाकल्पितानुपूर्वीं। अस्या एकेन मिश्रेन वा वारः। फलार्थ इति ऋताविति यावत्। नव इति नवत्वे। नवीने इत्यर्थः। प्रसवे वृत्ते चिरविरहखिन्ना सुखायितं। दुःखे तदीयबन्धुव्यापत्त्या दुःखिता आश्वासनीयेति। प्रमोद इति तदीयपुत्रोत्सवादौ। वासयति तत्र स्थाने रात्रं इति वासः।

**वाद्यषाडवः**—रागः

न्यासांशग्रहसप्तमषड्जापन्यासधैवतायुक्तः।
व्यक्तमनोहरताने तूत्तरगान्धारमूर्छनायुक्तः॥
अद्भुतैकप्रयोज्यश्च.........धिदैवतः।
वाद्यषाडवकामिख्यस्संख्यावद्भिरुदीरितः॥

नान्यः

निषादांशग्रहन्यासः षड्जापन्याससूषितः।
धैवतस्वरहीनश्च वाद्यषाडवको मतः॥

मतङ्गः

**विक्षेपः**—तालचिह्नम्

**विकटं**—नृत्तम्

विकटं रूपवेषादौ वैरूप्येण प्रवर्तितम्

कुम्भः

**विकटहस्तः**

मणिवन्धात्पताकः स्यात्कुञ्चितो विकटः स्मृतः।
उष्ट्रेषु वक्रसत्त्वेषु विकटे नर्तने तथा।
विनियोगोऽस्य गदितो नाट्यशास्त्रार्थकोविदैः॥

गौरीमतम्

**विकत्थनम्**—लक्षणम्

स्वगुणोत्कर्षतो वापि कर्मणो वापदानतः।
आत्मश्लाघापरं वाक्यं विकत्थनमिहोच्यते॥

भोजः

यथा—वेण्यां सकलेत्यादि (५-२७) भीमवाक्यम्।

**विकलः**—अङ्गहारः

हस्तौ तु मुष्टिसंभूतौ पार्ष्णिभ्यां वा तदग्रतः।
पार्श्वद्वयाभ्यामथवा कुट्टनं नृतिमाश्रये॥
समदृष्टिस्समाख्याता प्रथमे विकलस्य तु।
बाणाभिधानहस्तौ तु पादयोः पार्श्वभागतः॥
स्वभावकुट्टनं पश्चात्प्रलोकितदृशा भवेत्।
समदृष्टिश्च विज्ञेयो द्वितीये विकलस्य तु॥

नन्दीश्वरः

**विकल्पिनी**—श्रुतिः

धैवतस्य द्वितीया श्रुतिः।

**विकसितानन्दः**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स ग म ध नि प ध स.
(अव) स नि ध प म ग रि ग स.

मल्ल

**विकस्वरः**—मुखरागः

विकस्वरो विकासी स्याद्रसे हास्ये मतौ स्मृतौ।
विबोधविस्मयोत्साहगर्वेष्वेप नियुज्यते॥

वेमः

विकासि—दर्शनम्

विकासि दृश्यातिशयाद्विकासितपुटं भवेत्।

वेमः

विकासि तत्तद्विषयविशेषमवगाहते ॥

शारदातनयः

विकासी—अधरः

ऊर्ध्वपङ्क्तिस्थदन्तानां विकासी दर्शनाद्भवेत्।
प्रियसन्दर्शने हासे प्रयोगस्तस्य वर्ण्यते ॥

सोमेश्वरः

किञ्चिल्लक्ष्योर्ध्वदन्तो यः स विकासी स्मिते मतः।

अशोकः

विकूणितम्—दर्शनम्

यत्र भागत्रये पूर्वे दृष्टेः सङ्कोचनं भवेत्।
विकासश्चरमे भागे तद्विकूणितमुच्यते ॥

वेमः

विकूणिता—नासिका

नासा सङ्कुचिता या स्यात्सोक्ता धीरैर्विकूणिता।
आर्ते हास्ये जुगुप्सायामसूयायामपि स्मृता ॥

अशोकः

विकृतम्—अनुभावः

विहृतमित्यन्ये पठन्ति।

वचसा प्राप्तकालेऽपि चोत्तरं नाभिधीयते।
क्रियया यदनुष्ठानं विकृतं तदुदाहृतम् ॥

कुम्भः

प्राप्तावपि च वचसां क्रियते यदभाषणम्।

ह्रिया स्त्रीभिर्घातात्स्वभावतो वाप्येतत्समुदाहृतम्। वक्तव्यसमयेऽपि वचसानभिभाष्य क्रियानुष्ठानं विहृतम्।

भरतः

यथा—पत्युश्शिरश्चन्द्रकलामनेन—(कुमा) भोजः

वाच्यानामर्थानां ज्ञानेऽपि यदभाषणं तद्विकृतम्।

सागरः

अत्र ज्ञानेऽपि सति लज्जाभरादभाषणम्। अथवा अस्य योषिद्भिरकथनम्। अथवा यौवनविकारात्स्वभावादन्यथाकथनम्। तदिदं वात्स्यायनशिशिशाक्यानां मतत्रयेऽपि सर्वं विहृतमेव।

कुम्भः

विकृतः—अङ्गहारः

अरालो दक्षिणो हस्तो वामस्याच्छिखरः करः।
पादौ चङ्क्रमणामिख्यौ प्रथमे विकृतस्य तु ॥

अपसव्यार्धचन्द्रस्स्याद्वामस्स्यादलपद्मकः।
पादो विषमसञ्चारो विकृतस्य द्वितीयके ॥

नन्दीश्वरः

विकृतस्वराः

साधारणविधानेन सर्वथा द्विश्रुती समौ।
च्युताच्युततया द्वेधा विकृतिर्विकृतौ च तौ ॥
च्युताच्युतविभेदः स्यादेकद्विश्रुतिमोक्षणात्।
षड्जैकश्रुतिसंसर्गान्निषादे विकृतिर्भवेत् ॥

तच्छ्रुतिद्वयसंयोगान्निषादः काकलीमतः।
एवमेव तु गान्धारे मध्यमश्रुतिसङ्गतः ॥

एकश्रुतिर्विकारी स्याद्द्विश्रुतिरन्तराह्वयः।
च्युतषड्जच्युतेरेवमृषभः स्याद्विकारवान् ॥

पञ्चमो मध्यमग्रामे विकृतस्त्रिश्रुतिद्वयात्।
सदैवमध्यमग्रामे धैवतः स्याच्चतुश्श्रुतिः।
एवं स्वरविकाराः स्युः द्वादशान्यश्रुतिश्रयात् ॥

मोक्षदेवः

विकृतास्तु स्वराः पञ्चेत्यस्माभिरवधार्यते।
रत्नाकरे तु निश्शङ्को विकृतान् द्वादश स्वरान् ॥

अब्रवीत्केचन पुनः सप्ताहुर्विकृतस्वरान्।
स्वराः पञ्चैव विकृता इति राद्धान्तितं मया ॥

साधारणश्च गान्धारो गान्धारश्चान्तराभिधः।
द्वौ तौ च मध्यमक्षेत्रसंभूतौ विकृतस्वरौ ॥

वरालीमध्यमश्चैकः पञ्चमक्षेत्रसंभवः।
षड्जक्षेत्रसमुद्भूतौ कैशिकीकाकलीश्वरौ।
एवमेते स्वराः पञ्च विकृता इति निर्णयः ॥

वेङ्कटमखी

तद्यथाऽत्र द्विधा षड्जः च्युताच्युतविभेदतः।
गृहीते चेन्निषादोऽस्य श्रुतिमाद्यां तथान्तिमाम् ॥

ऋषभः स्यात्तथा षड्जच्युतस्साधारणो भवेत्।
काकलीत्वे निषादस्य निषादेन श्रुतिद्वये ॥

गृहीते द्विश्रुतिः षड्जो भवेदच्युतसंज्ञकः।
ऋषभोऽपि यथा षाड्जीं श्रुतिमन्त्यामपाहरेत् ॥

चतुःश्रुतित्वाद्विकृतः साधारणविधौ तथा।
साधारण्ये त्रिश्रुतिः स्यान्मध्यमस्य श्रुतिर्भवेत् ॥

स्यादन्तरश्च गान्धारो मध्यमस्य श्रुतिद्वयम्।
चतुःश्रुतिरितिप्रोक्तौ द्वौ भेदौ विकृताविह ॥

मध्यमोऽपि भवेद्द्वैधान्तरसाधारणाश्रयात्।
गान्धारस्यान्तरत्वे तु गृहीतेऽस्य श्रुतिद्वये ॥

गान्धारेणाच्युतत्वेन तदेको विकृतो मतः।
साधारण्ये तु गान्धारः श्रुतिमाद्यां हरेद्यदा।
पञ्चमस्त्वन्तिमामस्य तदाऽन्यो विकृतो मतः॥

पञ्चमो मध्यमग्रामे त्रिश्रुतिर्विकृतो भवेत्।
धैवतेन गृहीतायामन्तिमायां श्रुतौ पुनः॥

मध्यमस्य श्रुतिं प्राप्य साधारण्ये चतुःश्रुतिः।
धैवतो मध्यमग्रामे विकृतः स्याच्चतुःश्रुतिः॥

साधारण्ये कैशिके तु निषादः त्रिश्रुतिर्भवेत्।
काकलीत्वे पुनः स स्याच्चतुःश्रुतिरिति द्विधा ॥

षड्जे द्वौ ऋषभे चैको गमपेषु द्वयं द्वयम्।
एको धे नौ द्विकं भेदाः द्वादशेमे प्रकीर्तिताः॥

कुम्भः

—अनूपसिंहमते

ऋषभस्य—यदा रञ्जन्यां श्रुतौ ऋषभोऽस्ति तदा मृदुः। यदा दयावत्यां तदा तीव्रः।

गान्धारस्य—यदा रौद्रयां श्रुतौ गान्धारोऽस्ति तदा मृदुः। रञ्जन्यां श्रुतौ अतिमन्दः। रतिकायां अतिमन्दः।

मध्यमस्य—यदा प्रीतौ श्रुतौ मध्यमोऽस्ति तदा मृदुः। प्रसादन्यां अतिमन्दं। वज्रिकायां मन्दः। क्रोधायां शुद्धगमध्यमः। रौद्रयां मन्दगमध्यमः रतिकायां शुद्धर्षभमध्यमः। इति षड् भेदाः।

पञ्चमस्य—सन्दीपिन्यां श्रुतौ पञ्चमो दीप्तः।

धैवतस्य—रोहिण्यां श्रुतौ धैवतो मृदुः। मदन्त्यां मन्दः। आलापिन्यां शुद्धपञ्चमधैवतः।

निषादस्य—उग्रायां श्रुतौ निषादो मन्दः। रम्यायां श्रुतौ शुद्धः। रोहिण्यां श्रुतौ मध्यमधैवतनिषादसंज्ञः। मदन्त्यां श्रुतावतिमन्दध्वनिः।

यदा निषादः तीव्रायां स्थितस्तदा तीक्ष्णः। कुमुद्वत्यां तीक्ष्णतरः। यदि मन्दायां निषादस्तीक्ष्णतमः। उग्रायां यदि धैवतस्स्यात् स तीक्ष्णः। क्षोभिण्यां धैवतः शुद्धनिषादधैवतनामा भवति। या तीव्रायां श्रुतौ धैवतः स्यात्तदा तीव्रनिषाधदैवतः। यदा कुमुद्वत्यां धैवतोऽस्ति तदातितीक्ष्णः। क्षित्यां श्रुतौ मध्यमो यदा स्यात्तदा तीक्ष्णः। रक्तायां मध्यमः अतितीक्ष्णः। सन्दीपिन्यां मध्यमः तीक्ष्णतमः। यदा वज्रिकायां श्रुतौ गान्धारः तदा तीक्ष्णः। यदा प्रसारिण्यां तदा तीक्ष्णतरः। प्रीतौ तीक्ष्णतमः। सम्मार्जन्यां शुद्धमध्यमगान्धारसंज्ञो भवति क्षित्यां तीक्ष्णमध्यमगान्धारः। रक्तायां तीक्ष्णतममध्यमगान्धारः। ऋषभस्य रौद्रयां श्रुतौ सत्त्वे तीक्ष्णता। क्रोधायां शुद्धगान्धारर्षभः। वज्रिकायां तीक्ष्णगान्धारर्षभः। प्रसारिण्यां तीक्ष्णतरगान्धारर्षभः। प्रीत्यां तीक्ष्णतमगान्धारर्षभः। सम्मार्जन्यां शुद्धगान्धारर्षभः। क्षितौ तीक्ष्णमध्यमगान्धारर्षभः।

## विकृतिच्छन्दोवृत्तानि

ज्ञेया शतसहस्राणामशीतिस्त्र्यधिका बुधैः।
अष्टाशीतिसहस्राणि वृत्तानां षट् शतानि च।
अष्टौ चैव तु वृत्तानि विकृत्यां गदितानि तु ॥

भरतः

## विकृष्टम्—गीतगुणः

स्वरैरुच्चतरैर्युक्तं प्रयोगैर्बहुलीकृतम्।
विकृष्टं नाम तद्गीतं तत्तद्देषां मनोहरम् ॥

सोमेश्वरः

—दर्शनम्

विकृष्टं तच्छून्यमेव यदाकाशावलोकनम्।

शारदातनयः

## विकृष्टा—मृदङ्गवादनमार्गः

विकृष्टाऽङ्गुलिमूलतः। नारायणः

—नासिका

अत्युत्फुल्लपुटा नासा विकृष्टा भीतिरोषयोः।
आर्तौ तदोर्ध्वश्वासे च तीव्रगन्धे क्षुदाहृता ॥

अशोकः

कोपे हर्षे च कामे च बहुलोच्छ्वास इष्यते।

सोमेश्वरः

## विकोशा—दृष्टिः

विकासितपुटद्वन्द्वा निमेषपरिवर्जिता।
चलत्तारा विकोशा स्याद्विशोकेऽमर्षगर्वयोः॥

सोमेश्वरः

उग्रदर्शनविज्ञानक्रोधेषु ज्ञानगर्वयोः।

अशोकः

## विक्रान्तयमकम्—अलङ्कारः

एकैकं पादमुत्क्रम्य द्वौ पादौ सदृशौ यदा।
विक्रान्तयमकं नाम—

(उ.म्) स पूर्वं वारणो भूत्वा द्विशृङ्ग इव पर्वतः।
अभवद्दन्तवैकल्याद्विशृङ्ग इव पर्वतः॥

भरतः

विक्षिप्तम्—करणम्

सविद्युद्भ्रान्तदण्डपादया चतसृष्वपि ।
दिक्षु पादस्य विक्षेपः कृतोद्वेष्टापवेष्टयोः ॥

पादानुकूलयोः पार्ष्ण्योः रेचनाञ्चितयोरपि ।
क्रियते यत्र विक्षिप्तं तदुद्धतपरिक्रमे ॥

ज्यायनः

विक्षिप्ताक्षिप्तकम्—करणम्

व्यावृत्तकरणं येन करेण प्रविधीयते ।
तेनैव सह विक्षिप्तं स एव चरणो बहिः ।
आक्षेपो हस्तपादस्य तस्यैव परिवर्तनात् ॥

अन्याङ्गे च भवेदेवं विक्षिप्ताक्षिप्तकामिचे ।
एतन्नाट्याङ्गविच्छेदे प्रयोज्यं सन्धिगुप्तये ॥

तालानामनुसन्धाने गतीनां वा परिक्रमे ।
चारीयुद्धनियुद्धादौ संचारेषु यथोचितम् ।
केचिद्गतागते त्वस्य विनियोगं प्रचक्षते ॥

ज्यायनः

गतागते वदन्त्यस्य नियोगं केऽपि सूरयः ।
स नेष्टो नाट्यविदुषां यतोऽभिनयपाणिभिः ॥

वाक्यार्थाभिनयः कार्यः प्राधान्येनाभिनेतृभिः ।
इदं तु सद्भिराख्यातं नृत्तमात्रपरं ततः ॥

अशोकः

यत्र व्यावर्तमाने तु हस्ते तदनुसारतः ।
बहिर्विक्षिप्यते पादः चतुरस्रोऽपरः करः ॥

पूर्वोक्तं पाणिपादं तु परिवर्तनकर्मणा ।
आक्षिप्यते तथैवास्य पाणिपादस्य च क्रमात् ॥

विक्षेपाक्षेपणात्स्यातां विक्षिप्ताक्षिप्तकन्तु तत् ।
विनियोगो भवेदस्य गतागतिनिरूपणे ॥

विनियोगममुं नाट्यवेदिनो नैव मन्यते ।
नृत्तहस्तप्रधानत्वात् नृत्त एवैतदिष्यते ॥

अतोऽन्तरालसन्धाने वाक्ययोरभिनेययोः ।
तथा युद्धनियुद्धे च चारीस्थानकसंक्रमे ॥

तालक्रियानुसन्धाने तथा गतिपरिक्रमे ।
प्रयोज्यमेतत्करणं तत्स्यादभिनये क्वचित् ॥

नृत्तहस्तप्रधानेषु करणेष्वपरेष्वपि ।
प्रतीयेतामयं न्याय इत्युक्तं वेमभूभुजा ॥

वेमः

विक्षेपम्—नृत्तहस्तप्राणः

कोष्ठावधि समभ्रान्तौ पूर्ववत्पुरतःकृतौ ।
विक्षेपोऽयमिति ख्यातो नाट्यहस्तविशारदैः ॥
कोष्ठं कूर्परः

शृङ्गारः

विक्षेपः—अङ्गविकारः

अर्धावसक्तधम्मिल्लः विसंस्थुलनिवेशिततिलकः । लोचनैकलग्नकज्जललवः अवहेलधृतपतिष्णुजघनसिचयाञ्चलः । ताम्बूलरागलेखलाञ्छितैकाधरप्रदेशो विविधविकारनाट्यनर्तको विक्षेपः ।

सागरः

अन्यथा वेषविन्यासो विकारो यो भवेत्प्रियः ।
तमामनन्ति विक्षेपं मुनयः कपिलादयः ॥

कुम्भः

विसंस्थुलावेशमयो विकारो विविधः स्त्रियः ।
तमामनन्ति विक्षेपं मुनयः कपिलादयः ॥

पद्मश्रीः

विक्षेपः—तालक्रिया

उत्तानितस्य हस्तस्य तस्यैव प्रसृताङ्गुलेः ।
पार्श्वे दक्षिणतः क्षेपो विक्षेप इति कथ्यते ॥

वेमः

—क्रिया (तालाङ्गम्)

क्रियाशब्दे द्रष्टव्यम् ।

विक्षेपा—देशी चारी

पुरः प्रसार्य गगने पादमाकुञ्चयन्मुहुः ।
यदा तदोक्ता विक्षेपा चारीनृत्तविशारदैः ॥

वेमः

विक्षेपि—दर्शनम्

विक्षेपि कथ्यते दूरात्पार्श्वापाङ्गप्रसारणात् ।

वेमः

विक्रमः—अङ्गहारः

पताकौ मुष्टिसहितौ हस्तदृष्टथा च पादयोः ।
दक्षिणस्सरणाकारो वामस्स्यात्तु स्वभावकः ॥

एवं प्रकारनटनं विक्रमः प्रथमो भवेत् ।
ललितं चरणं भूयात्समदृष्टिस्तदा भवेत् ॥

इत्यादिनटनं कुर्याद्विक्रमस्य द्वितीयके ।
पादाभ्यां तत्र कलयेत्समोत्सारितमण्डलम् ॥

शुकतुण्डपुरोभागा चलितौ सवदृष्टितः।
एतादृशेन नृतिना विक्रमस्थ तृतीयकः॥

नन्दीश्वरः

**विक्रमवराली**—मेलरागः (सुवर्णाङ्गीमेलजन्यः)
(आ) स ग म प नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**विक्रमा**—मेलरागः (कामवर्धिनीमेलजन्यः)
(आ) स रि ग म प नि स.
(अव) स नि ध प म ग म ग रि स.

मञ्ज

**विक्रान्ता**—ध्रुवावृत्तम् (द्वादशाक्षरम्)
*अष्टावादौ यस्याः सान्त्यं स्यान्नवमं
दीर्घाणि स्थाप्ये शिष्टे च द्वे लघुनी।
वृत्तं ह्येतद् ज्ञेयं तद्ज्ञैः वृत्तविधौ
गीते ह्येवं नित्यं विक्रान्ता जगती॥
म म म स

भरतः

मध्यमोत्तमपात्राणां विक्रान्ता जगतीभवा।
चच्चत्पुटद्वयं चाचपुटोऽन्ते पञ्चमेन तु॥

· एसो मेहो नानदंतो धूमणिहो। एष मोघो नानर्दन् धूमनिभः।
पञ्चमेनेति। पञ्चमनाम्ना ग्रामरागेण।

नान्यः

**विक्रुष्टम्**—रञ्जनगुणः
स्वरैरुच्चतरैर्युक्तं प्रयोगैर्बहुलीकृतम्।
विक्रुष्टं नाम तद्गीतमेतद्देषां मनोहरम्॥

सोमेश्वरः

**विक्रमानम्**—देशीतालः
खाब्धयो लघुखंगुश्च विक्रमानाभिधे मतम्।
१ ० ० ० । ० ० ऽ

मदनः

**विगतक्रमा**—अवनद्धे जातिः
ऊर्ध्वाङ्कि दक्षिणमुखे क्षिप्रप्रहता वितस्तमार्गा च।
अङ्कोर्ध्वकप्रवृत्ता दक्षिणवामप्रहारजाता च॥
प्रायेणोद्धतमार्गा वितस्तमार्गाश्रयेण दिव्यानाम्।
धं द्रां धं द्रां प्राया जातिर्विगतक्रमा नाम॥

भरतः

स्याद्वामोर्ध्वकयोर्वापि स्यादूर्ध्वाङ्किकयोरथ।
दिव्यानामथ पात्राणां गतौ च विनियुज्यते।
तदा जातिरियं तद्ज्ञैः विज्ञेया विगतक्रमा॥

नान्यः

—पुष्करवाद्ये जातिः
दुष्वद्ये न प्रतिमायति प्रोद्धतवाद्या वितस्तमार्गा च।
दिव्यानां सा जातिर्युक्ता देशानुरूपेति॥

इयं जातिः नेपालमातृकायां देशानुरूपेत्युक्ता।

**विगलितकरणा**—अवनद्धे जातिः
विगलितेति नामान्तरम्
सर्वमार्गाश्रया चित्रकरणा लघुवर्णिका।
त्यक्तानुबन्धा पुनरुक्तवाद्या गलिता च सा॥
परिक्रमे विटादीनां गलितं यद्विशेषतः।
अनावृत्त्यैव वर्णानां प्रस्तुतं च यथा विदुः॥

नान्यः

लघ्वक्षरभूयिष्ठा विचित्रकरणा च सर्वमार्गेषु।
वाद्यविसर्पितकरणा विगलितकरणा तु सा जातिः॥

भरतः

**विगलिता**—पुष्करवाद्ये जातिः
लघ्वक्षरभूयिष्ठा विचित्रकरणा च सर्वमार्गेषु।
वाद्यविसर्पिकरणा विगलितनामा तु सा जातिः॥

अभिनवगुप्तपाठः

इयं विधूतेति उक्ता नेपालादर्शे।

**विघ्नतालः**—देशीतालः
दत्रयं गो विघ्नताले।
3½ मात्राः

तालप्रस्तारः

**विचलना**—अवमर्शसन्ध्यङ्गम्
ज्ञेया विचलना तद्ज्ञैः अवमानार्थसंयुता।

भरतः

सर्वेश्वरः विच्छलनमिति पठति।

**विचारः**—गीतालङ्कारः प्रतिमठ्यभेदः)
लघुद्वयं विरामान्तं ताले कन्दुकसंज्ञके।
विचारो गीयते तेन विलम्बश्च लयो भवेत्॥

संगीतसारः

—लक्षणम्

पूर्वाशयसमानार्थैरप्रत्यक्षार्थसाधनैः ।
अनेकोपाधिसंयुक्तो विचारः परिकीर्तितः ॥

भरतः

प्रवृत्तार्थानुसारि परोक्षार्थसाधकं बहूपायोपाधिदर्शनं वाक्यं विचारः । यथा—मुद्राराक्षसे साध्ये निश्चितमित्यादि राक्षसवाक्यम् ।

विचारचतुराननम्—करणम्

अङ्गुलीपृष्ठचलनं पादस्यैकस्य चापरम् ।
निकुट्टिताजानुभानु त्रिपताकौ करौ पुनः ॥

प्रसारितौ संकुचितौ बहुशो यत्र संक्रमम् ।
करणं कलितं तद्धि विचारचतुराननम् ॥

हरिपालः

विचारप्रतिमण्ठः—देशीतालः

विचारप्रतिमण्ठोऽसौ नगणो द्वौ विरामदः ।
।॥ ० ० ०̊

दामोदरः

विचित्रम्—मण्डलम्

दक्षिणो जनितां चारीं ऊरूद्वृत्तां च विच्यवाम् ।
ततश्चारीं स्थितावर्तां शकटास्यां तथैव च ॥

एलकाक्रीडितां चारीं ऊरूद्वृत्तां तथैव च ।
अड्डितासंज्ञितां तद्वच्चारीं च जनितामिधाम् ॥

समोत्सारितमत्तल्लीं वितनोति यथाक्रमम् ।
वामोऽङ्घ्रिः स्पन्दितां चारीं पार्श्वक्रान्तां तु दक्षिणः ॥

भुजङ्गत्रासितां चारीं कुर्याद्वामोऽथ दक्षिणः ।
अतिक्रान्तां तथोद्वृत्तां वामोऽलातां तथैव च ॥

पार्श्वक्रान्तां दक्षिणस्तु वामः कुर्याच्च सूचिकाम् ।
विक्षिप्तां दक्षिणः पादो वामोऽतिक्रान्तचारिकाम् ।
यत्र तत्स्याद्विचित्राख्यं मण्डलं तद्विदां मतम् ॥

वेमः

—करणम्

पार्श्वतस्सन्नतं गात्रं पादः पार्श्वप्रसारितः ।
पार्श्वे च वलितं हस्तौ विश्लिष्टस्वस्तिकीकृतौ ॥

गात्रं च भ्रामयन्नेव भ्रमरीमाचरेत्तदा ।
अन्ते चाप्यायतस्थानं विचित्रं करणं तदा ॥

देवणः

—पादमणिः

पादस्योदञ्चनादूर्ध्वं कृत्वाऽन्तर्भ्रमरीमपि ।
अलगं क्रियते यत्र तद्विचित्रं प्रकीर्तितम् ॥

वेमः

विचित्रः—अङ्गहारः

सूचीवक्त्रामिधौ हस्तौ पदोऽस्तु तलकुट्टनम् ।
प्रलोकितदृशा भूयाद्विचित्रः प्रथमो भवेत् ॥

हस्तौ सन्दंशनामानौ पादौ विषमसञ्चरौ ।
दृष्टिभ्यां समसाचिभ्यां विचित्रस्य द्वितीयके ॥

नन्दीश्वरः

—नृत्तबन्धः

यत्र चत्वारि चत्वारि पङ्क्तिद्वितयरूपकम् ।
निवेशितानि पात्राणि द्वे द्वे तत्पार्श्वयोर्द्वयोः ॥

एवं द्वादश पात्राणि भुवां विनिमयैर्मिथः ।
विचित्रक्रमनृत्तं तु कुर्वन्ति कलनूपुरम् ।
विचित्रसंज्ञो बन्धोऽसौ भवेद्वैचित्र्यकारणम् ॥

वेमः

विचित्रः—कवित्वरचनामार्गः

प्रतिभा प्रथमोद्भेदसमये यत्र वक्रता ।
शब्दाभिधेययोरन्तः स्फुरतीव विभाव्यते ॥

यत्र तद्वदलङ्कारैः भ्राजमानैर्निजात्मना ।
स्वशोभातिशयान्तःस्थमलङ्कार्यं प्रकाश्यते ॥

उक्तिवैचित्र्यमार्गेण काष्ठां कामपि नीयते ।
यत्रान्यदा भवत्सर्वं अन्यथैव यथारुचि ॥

भाव्यते प्रतिभोल्लेखमहत्त्वेन महाकवेः ।
स्वभावस्सरसाकूतो भावानां यत्र वध्यते ॥

केनापि कमनीयेन वैचित्र्यैणोपबृंहितः ।
विचित्रो यत्र वक्रोक्तिवैचित्र्यं जीवितायते ॥

कुन्तकः

विचित्रकः—प्रबन्धः

अनेकदेशभाषाभिः स्वरैः पाटैश्च तेन्नकैः ।
विरचितो बहुतालैश्च विचित्रक इतीरितः ॥

पदान्येवंविधान्यत्र प्रति रागं नियोजयेत् ।
स्वरान्वर्ज्यान्परित्यज्य क्षिपेद्रागोचितान्स्वरान् ॥

तालान्भिन्नान्स्तथा तत्र न्यसेत्तत्र पदेपदे ।
पाटांस्तालानुसारेण तेन्नकान्प्रतिसंयुतान् ॥

एवं कृत्वा पदन्यासं रागैस्तालैस्समन्वितः ।
स्वरैः पाटैस्तथा तेन्नैः गातव्योऽयं विचित्रकः ॥　सोमेश्वरः

चित्राभिर्देशभाषाभिः बद्धो यस्स विचित्रकः।
य इति त्रिभङ्गिः। हरिपालः

**विचित्रलोहडी**—उत्प्लुतिकरणम्

यत्र स्यात्पार्श्वतस्तिर्यग्भ्रान्तिः कायस्य चक्रवत्।
विचित्रलोहडी सा तु कथिता नृत्तवेदिभिः॥ वेमः

**विचित्रा**—श्रुतिः

षड्जचतुर्थी श्रुतिः। जगदेकः

**विच्यवा**—चारी

चरणौ समपादाया विश्लेष्य क्रमशो यदा।
तालाग्राभ्यां महीभागं कुट्टयेद्विच्यवा तदा॥ वेमः

**विच्युतोद्वृत्तम्**—पादमणिः

एतदेव स्वस्तिकस्य विश्लेषेण मुहुर्मुहुः।
क्रियते यत्र तदिदं विच्युतोद्वृत्तमुच्यते॥
एतत्, पृष्ठोद्वृत्तम्। वेमः

**विच्छर्दः**

किन्नर्यां दक्षिणहस्तव्यापारः।
तत्र द्रष्टव्यम्।

**विच्छलनम्**—अवमर्शसन्ध्यङ्गम्

सद्भिर्विच्छलनं प्रोक्तं नृणामात्मविकत्थना। सर्वेश्वरः

**विच्छित्तिः**

माल्याच्छादनभूषणविलेपनानामनादरन्यासः।
स्वल्पोऽपि परां शोभां जनयति सा या तु विच्छित्तिः॥ भावविवेकः

—**द्विपदी**

एको द्विमात्रगणः चतुर्मात्रिकाः पञ्च। विरहाङ्कः

—**अनुभावः**

प्रसाधनानां दयितापराधे यदीर्ष्ययानादरतस्सखीनाम्।
प्रयत्नतो धारणमङ्गनाभिर्विच्छित्तिरेषा कथिता मुनीन्द्रैः॥ पद्मश्रीः

माल्याच्छादनभूषणविलेपनानामनादरावासः।
स्वल्पोऽपि परां शोभां नयति हि यः सा तु विच्छित्तिः॥ भरतः

मालाभरणाच्छादनविशेषाणां कुतश्चित्प्रियापराधात्।
ईर्ष्ययाऽनादरेण सखीनां प्रयत्नाद्धारणं विच्छित्तिः।
अन्ये प्रियेण दत्तं प्रीतिनिबन्धनं स्वल्पमपि भूषणं विच्छित्ति-मिच्छन्ति। सागरः

विभूषणादीनामनादरविन्यासो विच्छित्तिः। भोजः

**विच्छुरितः**—हस्तपाठः

हस्तसङ्गेन शुद्धेनाङ्गुष्ठेन च यथाक्रमम्।
वाद्यते पुष्करं यत्र स स्याद्विच्छुरितो यथा॥
झें द्रः झें गिरिटि झें गिरिटि दानगिरि गिडनं वेमः

**विच्छेदः**—रसगतिः

विच्छिन्नमध्यः प्रबलैर्विरुद्धैर्हेतुभिः कचित्।
पुनश्चेत्सानुरक्तः स्यात्स विच्छेद इतीरितः॥ शारदातनयः

—**स्वराङ्गम्**

तत्र विच्छेदो नाम विरामकृतः। नान्यः

**विजयः**—गीतालङ्कारः (ध्रुवभेदः)

विजयाख्यो ध्रुवः स स्याद् द्वाविंशत्यक्षराङ्घ्रिकः।
सन्निपातेन संयुक्तः शृङ्गारोऽभीष्टदो रसः।
एक एव गुरुर्यत्र सन्निपाते विधीयते॥ सङ्गीतसारः

—**गीतालङ्कारः** (अठतालभेदः)

द्रुतद्वयं विरामान्तं ताले तुरगलीलके।
विजयो गीयते तेन गीतनृत्यविशारदैः॥ सङ्गीतसारः

—**देशीतालः**

ताले विजयसंज्ञे तु ज्ञेयाः पगपलाः क्रमात्।
ऽ। ऽ। वेमः

—**प्रबन्धः**

तेन्नैः स्वरैस्तथा पाटैः पदैर्विजयतालतः।
गीयते विजयस्सोऽयं विजयस्तेन सुक्रमः॥ पण्डितमण्डली

विजयाख्येन तालेन तेन्नपाटपदस्वरैः।
स्वरन्यासेन चाभोगे गीयते विजयाभिधः॥ सोमराजः

—तानः

मध्यमग्रामे नारदीयतानः।

नि स ग म प ? नान्यः

—देशीतालः

गलौ पपञ्चकं यत्र द्रत्रयं विजये भवेत्।

ऽ । ऽ ऽ ऽ ऽ ऽ ० ० ० दामोदरः

विजयकोकिलः—मेलरागः (झल्वरालीमेलजन्यः)

(आ) स रि ग म प ध स.

(अव) स नि ध प म ग रि स.

मङ्ग

विजयमण्ठकः—देशीतालः

नगणो जयणश्चैव लघुर्विजयमण्ठके।

। । । । ऽ । । दामोदरः

विजयवधनं—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म प ध नि स.

(अव) स नि ध प म ग म स.

मङ्ग

विजयश्रीः—प्रबन्धः

पदैस्तेनैः स्वरैर्यस्तु बिरुदैश्च प्रगीयते।

जयश्रीनामतालेन जयश्रीः परिकीर्तितः।

आभोगोऽन्यपदे न्यासस्तालमानद्वयेन तु॥

जग-मल्लः

—मेलरागः (पावनीमेलजन्यः)

(आ) स रि ग म प नि स.

(अव) स नि प म ग रि स.

मङ्ग

विजया—श्रुतिः

निषादस्य प्रथमा श्रुतिः।

जगदेकः

ऋषभस्य तृतीया श्रुतिः।

अनूपः

—प्राकृते मात्रावृत्तम्

चतुर्मात्रागणास्त्रयः। जः गः

विरहाङ्कः

विजयानन्दः—देशीतालः

विजयानन्दसंज्ञे तु लघुद्वन्द्वं गुरुत्रयम्।

॥ऽ ऽ ऽ शार्ङ्गः

विटसन्दोही—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म प ध नि स.

(अव) स नि ध प ग रि स़.

मङ्ग

विटिः

तन्त्रीस्फोटनेऽङ्गुलिचमत्कारः। अवरोहे स्थानापसर्पणरूपः।

विट्ठलः

षड्रा(सद्रा?)गचन्द्रोदय, नर्तननिर्णययोः कर्ता।

पण्डरीकविट्ठल इति प्रसिद्धः। पण्डरीक इत्यत्र पुण्डरीक इति च पठन्ति। पण्डरीकविट्ठल इति नाम रसकौमुद्यां श्रीकण्ठः स्मरति। तस्य कालः १५८०। तस्मात् विट्ठलः श्रीकण्ठात् प्राचीन इति ज्ञायते। कर्णाटदेशीयः। शिवपुरवासी।

विडम्बः—मेलरागः (सरसाङ्गीमेलजन्यः)

(आ) स रि ग म प ध प नि स.

(अव) स नि प म ग रि स.

मङ्ग

विडम्बी—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स म प ध नि स.

(अव) स नि ध प म ग म ग रि स.

मङ्ग

विततम्—देशीलास्याङ्गम्

चारी पादादिकं यत्र सुकुमारं निसर्गतः।

कृतं बलेन कठिनमेतद्विततमीरितम्॥

ज्यायनः

इदं वितथं, वितडं, इत्यपि दृश्यते।

वितर्कः—व्यभिचारिभावः

सन्देहविमर्शविप्रतिपत्त्यादयो विभावाः। द्विविधविचारितप्रश्नसम्प्रधारणमन्त्रसङ्गूहणादयोऽनुभावाः।

भरतः

सन्देहेन जायते। प्रश्नविचारभ्रूक्षेपशिरःकम्पनैस्तमभिनयेत्।

सागरः

वितर्कस्तु विचारः स्यादतिसन्दिग्धवस्तुनि।

विकल्पशास्त्रप्रज्ञादेरुत्पत्तिस्तस्य दृश्यते।

तत्राङ्गुलीविचलनभ्रूशिरोवक्रतादयः॥

सर्वेश्वरः

—चित्राभिनयः

निस्संशयस्संशयश्च वितर्को द्विविधो मतः।

ऊर्ध्वाधोमुखहंसास्यः चालितो निश्चयार्थके।

हृदिस्थाने तु सन्दंशः संशयार्थवितर्कके॥

विनायकः

**वितर्किता—दृष्टिः**

उद्वर्तितपुटद्वन्द्वा तथैवोत्फुल्लतारका ।
अधोविकासा दृष्टिस्स्याद्वितर्के तु वितर्किता ॥

स्मृतावपीति वेमः । सोमेश्वरः

**वितस्तमार्गः**

अन्यदक्षणः तस्यति नाशयति । तस्य भावोचितः । तां हिंसतां तद्विषये दीनरौद्राभावस्य विनियोगो यतस्स वितस्तमार्गः । अन्ये तु वितस्तिमात्राक्षिप्तहस्तप्रहरणसूचनार्थं वितस्तिमार्ग इति पठन्ति । अभिनवः

**—पुष्करवाद्ये अक्षराणामुत्पादने करणभेदः**

धक्तां तकितां, तकितां किटिगघ तकितां किर्तिधकि तार्थधं घवां गुड घघघा द्राङ्क इतिवितस्तमार्गः ।

भरतः

**वितांडितौ—पुटौ**

अन्तस्थितपुटाघातादुत्तरेण पुटेन तु ।
वितांडितौ पुटौ स्यातामभिघाते नियोजितौ ॥

वेमः

अन्योन्यमभिधातो यः पुटयोस्तद्वितांडितम् ।
आहुरन्ये त्वदृश्यत्वमतिविस्तारणात्तयोः ॥

विप्रदासः

**वितालः—वाद्यप्रबन्धः**

वितालः स्यादादिमध्यान्तकृतात्तालविकारतः ।

वेमः

वितालस्त्वादिमध्यान्तविकृतस्ताल इष्यते ॥

शार्ङ्गः

**विदग्धम्—दर्शनम्**

विदग्धं तद्यदालोके विवशास्सर्वजन्तवः ।

शारदातनयः

**विदारीभेदः**

गीतखण्डं विदारी स्यात्पदस्वरविदारणात् ।
महत्यवान्तरा चेति सा द्विधा परिकीर्तिता ॥

व्याप्ता वस्त्वखिलं वर्णपदान्ते या समाप्यते ।
महती सा भवेन्मध्ये सञ्जाता स्यादवान्तरा ॥

प्रमाणं तु विना रूपं विदार्या वस्तुवन्मतम् ।
अस्यां जात्यंश एवाङ्गो भवेन्न्यासस्तु वस्तुवत् ॥

यदा स्यादल्पतांशस्य तत्संवाद्यनुवादिनौ ।
स्वरावंशौ तदा कार्यौ गान्धर्वाम्नायकोविदैः ॥

P 2 P विदारीणामसौ संख्यानियमो भरतोदितः ।
त्र्यपरैकादशपरो महतीनामिह स्फुटम् ॥

चतुर्विंशतिसंख्यात्वं प्रमाणं परमं मतम् ।
अवान्तरविदारीणामेकैकस्याथ लक्षणम् ।
या स्यादन्या समांशं वा विदार्येका तदेककम् ॥

वेमः

**विदारीभेदाः**

सामुद्गश्चार्धसामुद्गो विवृत्तश्चेति सा त्रिधा ।
विदारी द्वितये वर्णपदपाठादिसाम्यतः ॥

या गीतिर्जायते सोऽयं सामुद्ग इति कीर्तितः ।
अर्धे सामुद्गतस्साम्याद्विदारीद्वयभागयोः ॥

निवृत्तकस्तु विषमं विदारीद्वयसंयुतः ।
न्यासापन्यासरचितो विज्ञेयो गीतिकोविदैः ॥

द्वैगेयकं विना सर्वो न्यासान्तो विवधः स्मृतः ।
तुर्यस्य वा तृतीयस्य वस्तुनोऽन्तो विधीयते ।
सामद्गश्चेदसावेव दैगेयक इतीरितः ॥

वेमः

**विद्धम्—अवनद्धे वर्णसंयोगः**

यतिः स्रोतोगता । लयो मध्यः ।
... ... ... ... ... समपाणिश्च ॥

भरतः

**अवनद्धे लिसंयोगः**

रूपद्वयपरामर्शाद्विद्धमित्यभिधीयते ।

नान्यः

**—दर्शनम्**

अपाङ्गयोरधस्ताराविक्षेपो विद्धमुच्यते ।

शारदातनयः

**—पुष्करवाद्ये लययतिपाणिसंयोगः**

स्रोतो गता यतिर्यत्र लयो मध्यस्तथैव च ।
समपाणिस्तथा चैव विद्धं वाद्यं तु तद्भवेत् ॥

भरतः

**विद्धः—वाद्यालङ्कारः**

मृदङ्गकरणे वाद्यं पणवानुगतं तु यत् ।
सूचीविद्धैर्विचित्रैश्च करणैर्विद्ध उच्यते ॥

भरतः

—देशीचारी

विद्धा स्यात्स्वस्तिकं मुक्त्वा यत्र चोर्ध्वं प्रसारितः।
चरणः कुञ्चितस्त्वग्रे किञ्चिदान्दोलितो यदि ॥

वेमः

विद्धा—चारी

जङ्घयोस्वस्तिकं मुक्त्वा कुञ्चितश्चरणः पुनः।
पुनः प्रसारिताविद्धा स्वपार्श्वे चेन्निपात्यते।
पार्ष्णिना पार्ष्णिपर्यन्ते सा विद्धा परिकीर्तिता ॥

वेमः

विद्याचक्रवर्ती

भरतसङ्ग्रहकर्ता। कालः क्रै. प. १२८०। द्वारावतीपुरवरेश्वरविष्णुवर्धनवंशीय भल्लालराजास्थानेऽयं विद्यापतिः। तेनालङ्कारसर्वस्वव्याख्यानं, काव्यप्रकाशस्य गुरुलघुरूपे द्वे व्याख्ये, रुक्मिणीकल्याणं नाम षोडशसर्गात्मकं काव्यं भरतसङ्ग्रहनामकः —नाट्यग्रन्थः— एते प्रणीताः। साहित्यमीमांसापि अस्यैवेति सन्देहः।

विद्याधरः—देशीतालः

विद्याधरे लगुद्रुतौ।
।ऽ०० मदनः

विद्याविनोदः—देशीतालः

।ऽऽ́ऽ́ऽ́।।।ऽऽ००॥ऽ́ऽ́ऽ́॥०́००० ́

हम्मीरः

विद्युत्—ध्रुवावृत्तम्

मध्यलघुनाऽथ विद्युत्। यथा—शङ्करः।

भरतः

अङ्किता त्र्यक्षरा प्रोक्ता ग्लौ गश्चेति मनीषिभिः।
आवापाद्यङ्गुलीभिः स्याच्चतुर्भिः प्रथमो गुरुः ॥
निष्क्रमे च प्रवेशे च द्वितीयं सम्प्रयोजयेत्।
अन्ते च पूर्ववत्कार्यं लयतालसमस्थितम् ॥

नान्यः

पूर्ववदिति। एकाक्षरद्व्यक्षरध्रुवयोरिव विलम्बितलयः।

—प्राकृते मात्रावृत्तम्

चतुर्मात्रागणास्त्रयः एकः पञ्चमात्रिकः अथवा—चतुर्मात्रिक एकः पञ्चमात्रिकः द्वौ चतुर्मात्रिकौ।

विरहाङ्कः

विद्युद्भ्रमरी—भ्रमरी

विद्युद्भ्रान्तां दक्षिणेन चरणेन विधाय चेत्।
प्रदक्षिणं परिभ्राम्येत्सा विद्युद्भ्रमरी भवेत् ॥

वेमः

विद्युद्भ्रान्तम्—करणम्

विद्युद्भ्रान्ता भवेद्यत्र चारी तद्वशगौ करौ।
विद्युद्भ्रान्तं तदाख्यातमुद्धतस्य परिक्रमे।
अत्र पादक्रियां केचित् सौकर्यात्पुरतो जगुः ॥

ज्यायनः

विद्युद्भ्रान्तः—अङ्गहारः

वामाङ्गप्रयोज्यार्धसूची दक्षिणप्रयोज्यविद्युद्भ्रान्ताङ्गविपर्यासकृतछिन्नातिक्रान्तलतावृश्चिककटीछिन्नानां करणानां क्रमात्प्रयोगे विद्युद्भ्रान्तः। शार्ङ्ग

विद्युद्भ्रान्ता—ध्रुवावृत्तम्

पञ्चाक्षरा...

पञ्चापि गुरवो यत्र वृत्ते पञ्चाक्षरे सदा।
विद्युद्भ्रान्तेति सा ज्ञेया विलम्बितलया ध्रुवा ॥
मध्यमोत्तमपात्राणां विद्युद्भ्रान्ता हि पञ्चमे।
पञ्चवक्त्रेण तालेन पाटाक्षरमितेन च ॥

(उदा) संप्रत्ता मेहा। (छाया) संप्राप्ता मेघाः।

—चारी

पृष्ठभागे तु वलितः पादस्संप्रपृश्य मस्तकम्।
ऊर्ध्वाधःपार्श्वयोः कृत्वा मण्डलभ्रमणं ततः।
प्रसार्यते चेत्सा चारी विद्युद्भ्रान्ता निगद्यते ॥

वेमः

देशीचारी

पुरो ललाटपर्यन्तं पादमुत्क्षिप्य सत्वरम्।
भ्रमयित्वार्पयेत्पार्श्वे विद्युद्भ्रान्ता भवेत्तदा ॥

वेमः

विद्युन्माला—अष्टाक्षरच्छन्दः

अष्टाक्षरकृते पादे सर्वाण्येव भवन्ति हि।
गुरूणि यस्मिन्सा नाम्ना विद्युन्मालेति कीर्तिता ॥

अष्टौ गाः भरतः

(उ—म) दिक्षु भ्रान्ता विद्युन्माला।

—अष्टाक्षरवृत्तम्

म म न गाः भरतः

विद्युद्विलासः—हौडुक्किकहस्तपाटः

अर्धोर्धहस्तवलनात्तर्जन्यङ्गुष्ठघाततः।
विद्युद्विलाससंज्ञस्तु हस्तपाटो भवेद्यथा।
कण कण तिरि झें झें हिझें हिझें हित्रः॥

वेमः

विद्रवः—गर्भसन्ध्यङ्गम्

उपनतं भयमुद्वेगः। तत्संभावना तु विद्रवः। यथा—कृत्यारावणे शान्तिगृहे मन्दोदरीवाक्यम्। येत्वत्र रावणस्य शङ्कां त्रासरूपां ससंभ्रममङ्गमाहुः तद्विद्रवोद्वेगाभ्यां गतार्थम्। शङ्काभयत्रासकृतो विद्रवः। रामचन्द्रः

यथा—खरादिविहितं घोरं श्रुत्वा कलकलं वने।
शङ्का रामस्य सीताया भयं त्रासस्तपस्विनाम्॥

एकैककृतं केचिदिच्छन्ति। सागरः

शङ्कात्रासौ यत्र वाक्ये संभ्रमः कथ्यते यथा।

अमृतानन्दी

प्रियशङ्का समुद्भूतिः संभ्रमः परिकीर्त्यते।

सर्वेश्वरः

शत्रुव्याघ्रादिसंभूतो शङ्का स्यात्सैव संभ्रमः।

सिंगः

शङ्काभयत्रासकृतो विद्रवस्समुदाहृतः।

भरतः

नृपारिभयसंयुक्तः संभ्रमस्त्वभिसंज्ञितः—इति भरतपाठान्तरम्।

भयत्रासकारिणो वस्तुनो या शङ्का यदाशङ्कनं स विद्रवः। विद्रवति विलीयते हृदयं येनेति। यथा—रत्नावल्यां प्रियेत्यादि राजवाक्यम्। अन्ये तु शङ्काभयत्रासैः कृतो य इति पठन्ति। तत्र विशेष्यपदमन्वेष्यम्। समुदाय एव विशेष्य इति शङ्कुकः। उदाहरति कृत्यारावणे षष्ठाङ्कात् मन्दोदरीवाक्यम्। अत्र रावणस्य शङ्का प्रतिहार्यास्त्रासभये। अभिनवः

विद्रुमा—श्रुतिः

तारगान्धारस्य द्वितीया श्रुतिः। पार्श्वदेवः

विधानम्—मुखसन्ध्यङ्गम्

सुखदुःखकृतो योऽर्थः तद्विधानं। भरतः

व्यामिश्रतया सुखदुःखे अभिधीयेते यत्रेति विधानम्। यथा—वेण्यां द्रौपदीवाक्यं—मा अनपेक्षितशरीराः सञ्चरथ। अत्र द्रौपद्याः प्रहर्षो भयं च मिश्रतया विहितमिति विचित्रत्वाद्रसवत्ता। अभिनवः

द्वयोस्सुखदुःखयोः एकत्रानेकत्र वा पात्रे प्राप्तिः एकस्यैव वा सुखस्य दुःखस्य वा प्राप्तिर्विधानम्।

यथा—एकत्र प्राप्तेः मालतीमाधवे यद्विस्मयेति माधववाक्यम्। अनेकत्र प्राप्तेः तापसवत्सराजे राज्ञो वाक्यं दृष्टिं प्रेमभरेति। तत्र वासवदत्तायाः प्रवासाभ्युपगमाद्दुःखम्। वत्सराजस्याविदितविप्रवासवृत्तान्तस्य सुखम्।

सुखस्य सुखहेतोश्चान्वेषणरूपा प्राप्तिः। सन्निहितसुखात्मकं विधानमिति तयोर्भेदः॥

रामचन्द्रः

विधिः—वाक्यार्थः

प्रवृत्तिनिवृत्त्योर्विधायकोऽर्थवादादिभिरुपक्रियमाणो लिङ्लोट्तव्यादिवाच्यः शब्दव्यापारो विधिः, तेन हि भावनायां पुरुषः प्रवर्त्यते निवर्त्यते वा।

भोजः

विधितालः—देशीतालः

षड्द्रुतालः षड्द्रुतालो लगौ च विधितालके।

११ मात्राः तालप्रस्तारः

विधुतम्—प्रतिमुखसन्ध्यङ्गम्

विधूतस्य नामान्तरम्।

—वहनम्

विधुतं तिर्यगायामि नैवमित्यादि वारणे।

अशोकः

—शिरः

द्रुतगत्या तदेव स्याद्विधुतं तत्प्रयुज्यते।
शीतार्ते ज्वरिते भीते सद्यः पीतासवे तथा॥
तदेव = धुतमेव शार्ङ्गः

धुतमेव भवेच्छीघ्रभ्रमणाद्विधुतं शिरः।
भीते शीते ज्वरग्रस्ते सद्यः पीतासवेऽपि तत्॥

विप्रदासः

विधुतः—वर्णालङ्कारः (सञ्चारी)

एकान्तरेण युगलं द्वियदा गीयते बुधैः।
एकान्तरापरारम्भेऽलङ्कारे विधुतेऽकथि॥
सग सग रिम रिम गप गप मध मध पनि पनि।

जगद्दरः

विधूतम्—प्रतिमुखसन्ध्यङ्गम्

कृतस्यानुनयस्यादौ विधूतं ह्यपरिग्रहः। भरतः

आदौ प्रथमतः कृतस्यानुनयस्य सामवचसो नाङ्गीकरणं विधूतम्। पश्चात्पुनरङ्गीकरणमिति। आदिशब्दादुपरोधः।

यथा—शकुन्तलावाक्यं—"अयि किं अंतःपुरा" इत्यादि।

अभिनवः

साम्नि अनुनयेऽनादरो मनागनादृतिः नवोल्पार्थत्वात्। यथा—पार्थविजये—भीमं प्रति युधिष्ठिरवाक्यं अयं स काल इति वाक्यमनुनयः। भीमसेनेन यदनादृतं तद्विधूतम्।

रामचन्द्रः

अरतिर्मनसो या स्याद्विधूतं कथ्यते यदा।

अमृतानन्दी

विधूतमरतिः प्रोक्ता। सर्वेश्वरः

नायकादेरीप्सितानामर्थानामनवाप्तितः।
अरतिर्या भवेत्तद्धि विद्वद्भिर्विधुतं मतम्॥

सिङ्गः

विधृता—पुष्करवाद्य जातिः

विगलिताशब्दं पश्यत।

विधेया—मूर्छना (सुभद्रग्रामे षष्ठी मूर्छना)

विधेया संभवत्येव मूर्छना योषितां प्रिया।
*तृतीयग्राममासाद्य धैवतो मूर्छते यदा॥

*तृतीयग्रामः सुभद्रग्रामः। वादिमत्तः

इयं उत्तरायतेति नारदशिक्षायां नाम दृश्यते।

विनतम्—दर्शनम्

विनतं तदिति ख्यातमृज्वायतमधोगतम्।

शारदातनयः

विनतः—तानः

गान्धारग्रामे नारदीयतानः।
ग म प ध नि? नान्यः

विनता—प्राकृते मात्रावृत्तम्

चतुर्मात्रिक एकः जः चतुर्मात्रिकः जः
चतुर्मात्रिकः जः पञ्चमात्रिकः गः

विरहाङ्कः

विनायकतालः—चित्रतालः

गगगा ललपा गश्च ललपं तु समायुतम्।
सर्वविघ्नोपशान्त्यर्थं भवेत्तालं विनायकम्।
दशमात्रा त्रिकला अन्यवर्णं विषमयतिः॥
ऽ ऽ ऽ ॥ ऽ́ ऽ ॥ ऽ́

तालक्षणे

विनायकभरतम्

अतिनवीनोयं ग्रन्थः अज्ञातकर्तृकः। अभिनयविषये अधुनातनसंप्रदायः सम्यक् निरूप्यते।

विनिकीर्णम्—दर्शनम्

अन्तर्बाष्पस्फुरत्तारं त्रिनिकीर्णमुदाहृतम्।

शारदातनयः

विनिगूहनम्—शृङ्गारचेष्टा

प्रवेशो विनिगूहनम्। भोजः

विनिगूहितः—अधरः

मुखान्तर्निहितः प्राणोऽधरस्स्याद्विनिगूहितः।
रोषेर्ष्ययोस्सुन्दरीणां बलाच्चुम्बति वल्लभे।
आयासे च प्रयोज्योऽयं इति नैधिकरं मतम्॥
निधिकरपुत्रस्य विप्रदासस्य मतम्। विप्रदासः

विनिवर्तकम् }
विनिवृत्तम् } —वदनम्

व्यावृत्तं विनिवृत्तं तद्रुषीर्ष्यासूययोरपि।

अशोकः

विनिवृत्तं तु तत्प्रोक्तं यत्परावृत्तमाननम्।
रोषेर्ष्यासूयिते चार्थे...नृत्तविदो विदुः॥

कुम्भः

विनिवर्तितम्—स्थानकम्

तस्यैवाङ्गपरावृत्त्या पृष्ठतो विनिवर्तितम्।

वेमः

तद्भेदः स्यादमुष्यापि विनियोगस्तु पूर्ववत्॥

ज्यायनः

तस्येति वलितस्येत्यर्थः। तद्भेदः, वलितोक्ताभिनयस्य व्यत्यासः।

विनिवृत्तम्—करणम्

पार्ष्णिभागे यदन्याङ्घ्रेस्सूच्या स्वस्तिकमाचरेत्।
विवृत्य त्रिकमेकत्र पर्यावृत्यैव पार्श्वतः॥
ऊर्वोर्वलनमादध्याद्रुद्ध्या रेचितौ करौ।
विनिवृत्तं तदाम्नातमुद्धतस्य परिक्रमे॥

"आनन्दपरिवर्तने" इति लक्ष्मणः।

विनिष्क्रान्तम्—दर्शनम्

बहिस्तारविनिष्क्रान्तिः विनिष्क्रान्तमुदाहृतम्।

शारदातनयः

विनोदः—गीतालङ्कारः (रासकभेदः)

एक एव लघुर्यत्र आदितालः स कथ्यते ।
विनोदो रासकस्तेन श्रोतॄणां च सुखावहः ॥

स.ीतसारः

विन्यासः

यो गीतिखण्डद्वयस्यान्ते तिष्ठति स स्वरः विन्यासः

तुलजः

—भाणिकाङ्गम्

निर्वेदवाक्यं विन्यासः । यथा—पुष्पभूषितके गृहवृक्षवाटिकाङ्के, तत्किं मे दौर्भाग्यकलङ्कमलिनितेन हतशरीरेणेति नन्दयन्तीवचनम् ।

सागरः

विपञ्ची—वीणा

समश्च वर्तुलाकारो व्रणग्रन्थ्यादिवर्जितः ।
रक्तचन्दनजो यद्वा खादिरो वंशसंभवः ॥

रक्तचन्दनजः श्रेष्ठो वीणादण्डः प्रकीर्तितः ।
दशमुष्टिमितो दैर्घ्ये कचिल्लक्ष्याधिको मतः ॥

परिणाहे यथायोग्यः कर्तव्यो लक्ष्यवेदिभिः ।
दण्डस्य ककुभस्याधः संधौ तुम्बं निवेशयेत् ॥

तृतीयतुर्ययोस्सार्योर्मध्येऽधस्तु द्वितीयकम् ।
पूर्वतः परतुम्बं तु किंचिद्विस्तारतोऽधिकम् ॥

दण्डाग्रे अङ्गुले यद्वा चतुरङ्गुलतोऽप्यथ ।
रन्ध्रं कृत्वा क्षिपेच्छंकुं गलरन्ध्रयुतं चलं ॥

तस्मादङ्गुलतोऽधस्तादङ्गुलोत्सेधमोटकम् ।
शरपुंखसमं कृत्वा तस्माच्च किञ्चिदग्रतः ॥

निवेशयेत् स्थिरं शङ्कुं लक्ष्यलक्षणपण्डितः ।
ततो लोहमयीं तन्त्रीं गजकेशोपमां समाम् ॥

तैलाक्तां वर्तुलां श्लक्ष्णां बध्नीयात्ककुभाद् दृढम् ।
सारिकामूर्ध्नि विन्यस्तामानीतां मोटकोपरि ।
द्वितीयप्रान्तसंलग्नां चलकीले च वेष्टयेत् ॥

तावत्तं भ्रामयेच्छङ्कुं यावत्तन्त्री भवेद्दृढा ।
विपरीतिः भ्रमिदशङ्कोस्तन्त्री शैथिल्यकारिणी ॥

तन्त्री दार्ढ्येति दार्ढ्यार्थं चलशङ्कोर्गलस्थिते ।
रन्ध्रे न्यास्यायसं कीलं स्थिरशङ्कौ निवेशयेत् ॥

मषीमिश्रेण वस्त्रस्य विशुद्धेनाग्निना भृशम् ।
इष्टिकाचूर्णमिश्रेण दृढार्थं मर्दितेन वा ॥

मधूच्छिष्टेन संश्लिष्टाःसार्यः कार्याश्च धीमता ।
दण्डे तिष्ठति माधवोर्णवसुता तन्त्र्यां च तुम्बे विधिः,
भूतेशः ककुभे गिरीन्द्रतनया पत्र्यां गिरादेवता ।
नाभौ नागपतिर्गुणे ग्रहपतिः सार्यां तु जीवे विधुः,
देवौ काल्युनेश्विनौ सुरपतिर्मेरौ विपञ्च्यां क्रमात् ॥

वीणेयं करसंगता सुरमयी संतोषसंपादिनी,
नानापातकनाशिनी स्वरकलारङ्गप्रमोदस्थली ।
वीणा शङ्करनारदप्रभृतिभिर्देवैरुपास्या मुदा,
नादब्रह्मसमाश्रितागुणमयी केषां भवेन्नो प्रिया ॥

श्रीकण्ठः

एषैव तु विपञ्ची स्याद्विशेषो विनिगद्यते ।
तन्त्रीद्वयस्य स्थित्यर्थं वामभागे तु काकुभे ॥

उच्चोच्चद्वयषडङ्गुलदलं लोहपत्रीसमन्वितम् ।
मन्द्रतन्त्र्यर्थसंसिद्ध्यै दातव्ये पदिके इह ॥

बृहत्यौ सारिके न्यासः तयोरपि च कथ्यते ।
मन्द्रपञ्चकमासाद्योभयतस्तिष्ठतो यथा ॥

रमन्त्यावनुरागिण्यौ कान्तमेकान्तवर्तिनम् ।
इत्यादिलक्षणोपेता रौद्रीवत्तु विपञ्चिका ॥

नारायणः

एषेति । रुद्रवीणा नारायणवर्णिता ।

विपरिणामः

वस्तुनोऽवस्थान्तरगमनं विपरिणामः । तत्र यथा मृदादयो घटादिरूपेण क्षीरादयो दध्यादिरूपेण विपरिणमन्ते तथेदं शब्दब्रह्मापि अविद्योपाधेः तेन तेनार्थरूपेण तथा तथा विपरिणमन्ते ।

भोजः

विपर्यायः—लक्षणम्

विचारस्यान्यथाभावः तथा दृष्टोपदिष्टयोः ।
सन्देहाज्जायते यत्र स विज्ञेयो विपर्ययः ॥

भरतः

विपर्यस्तम्

किन्नर्यां वामहस्तव्यापारः । तत्र द्रष्टव्यम्

विपर्यस्ता—अवनद्धे जातिः

यस्यां भवेत्स्वराणां नानारूपत्वमेकगतिविरहात् ।
मध्यमपुरुषाणां सा ज्ञेया जातिर्विपर्यस्ता ॥

नान्यः

तां घें तां तां दोघे दोह्वां इत्यक्षरस्तु संयुक्ता ।
पर्यस्ता जातिरियं मध्यमपुरुषेषु कर्तव्या ॥

भरतः

विपाथक्री—क्रियाङ्गरागः

स्यात्त्रिणेत्रकृतेरङ्गमल्पमध्यमनिस्वना ।
विपाथक्री कश्चिदेतामुपाङ्गमित्यकीर्तयत् ।।

कुम्भः

विपुलभुजा—भुवावृत्तम् (दशाक्षरम्)

यदि खलु पञ्चममन्त्यं च चरणविधावपि दीर्घं स्यात् ।
भवति तथाष्टममन्त्ये विपुलभुजा भुवि सा ज्ञेया ।।

वणगहणं कुविदो हत्थि । नजयगाः

चत्वारो षड्ता ज्ञेया लघुको च द्रुतो लयः ।
गुरुरन्ते च विपुला भुजा चच्चत्पुटस्य तु ।।
प्रायेण विपुलभुजा मध्यमोत्तमपात्रयोः ।
पञ्चमेन रसे वीरे मदे गेया ध्रुवा तदा ।।

नान्यः

विपुला—प्राकृते द्विपदी

विषमा— स य
समा - एकश्चतुर्मात्रिकः स य

विरहाङ्कः

—गीतालङ्कारः (एकतालोभेदः)

कोकिलप्रियताले तु द्रुतत्रयमुदाहृतम् ।
विपुला चैकताली स्यात्तेन गीतज्ञसम्मता ।।

सङ्गीतसारः

विप्रकीर्णवर्तना

उद्वेष्टितक्रियापूर्वं भ्रमन्तौ विच्युताविमौ ।
स्वस्वपार्श्वगतौ प्रोक्ता विप्रकीर्णाख्यवर्तना ।।

अशोकः

इमाविति विप्रकीर्णहस्तौ विवक्षितौ ।

विप्रकीर्णौ—नृत्तहस्तौ

स्तनाभ्यां पुरतोन्यस्तौ हंसपक्षौ पराङ्मुखौ ।
उन्नताग्रौ च नीचौ वा विप्रकीर्णाविति स्मृतौ ।।

सोमेश्वरः

विच्युतौ स्वस्तिकावेतौ विप्रकीर्णौ करौ मतौ ।
नताग्रावथवोन्नाग्रौ कुचयोरग्रतो गतौ ।।
विप्रकीर्णौ केचिदाहुः हंसपक्षौ पराङ्मुखौ ।

अशोकः

—हस्तः

विप्रकीर्णौ तु तावेव सहसा स्वस्तिके च्युते ।
नीचाग्रावुन्नताग्रौ वा कुचाभ्यां पुरतःस्थितौ ।
पराङ्मुखौ हंसपक्षौ विप्रकीर्णौ जगुः परे ।।

तावेव स्वस्तिकावेव ।

शार्ङ्गः

विप्रदासः

सङ्गीतचन्द्रकर्ता । विप्रदासस्य निधिकरात्मजः, सत्यवाक्, शुक्लपण्डितः, शुक्लः, श्रीकण्ठवल्लभः, शिववल्लभः, करणाग्रणीः, प्रभुसूरिः, विचित्रवाक्, नैधिकरः, इत्यादिनामानि सन्ति । प्राचीनेषु अभिनव, सिङ्गणाचार्य, कीर्तिधर, शङ्कुक, कोहल, भट्टनायकादीनां ग्रन्थाः सूचिता अनेन । अस्य कालः प्रायः १४००.

विप्रमतिः—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि म प ध स .
(अव) स नि ध प म रि स .

मज्ञ

विप्रमन्दारः—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स रि म प ध नि स .
(अव) स ध प म ग रि स .

मज्ञ

विप्रयोगः

ललितजातिनाटके तृतीयस्सन्धिः ।।

शारदातनयः

विप्रलब्धा—नायिका

यस्या दूतीं प्रियः प्रेष्य दत्त्वा संकेतमेव वा ।
नागतः कारणेनेह विप्रलब्धा तु सा भवेत् ।।

भरतः

विप्रलम्भः

ललितजातिनाटके द्वितीयस्सन्धिः ।

शारदातनयः

विप्लुता—दृष्टिः

स्फुरदुत्तम्भितपुटा विच्छायोद्धततारका ।
चापलोन्मादुदुःखार्तिमरणे विप्लुता भवेत् ।।

सोमेश्वरः

विस्तब्धौ स्फुरितौ भूत्वा यस्याः स्तः पतितौ पुटौ ।
उद्वृत्ततारा सा दृष्टिर्विप्लुता चापले गदे ।।
भ्रमणोन्माददुःखादौ विनियोज्येति भारताः ।

विप्रदासः

विबोधः—व्यभिचारिभावः

आहारपरिणामनिद्राछेदस्वप्नान्ततीव्रशब्दस्पर्शश्रवणादयो विभावाः । जृम्भणाक्षिपरिमर्दनशयनमोक्षणादयोऽनुभावाः ।

भरतः

दुस्स्वप्ननिद्राछेदवधादिभिरुत्पद्यते । चमत्कार शय्यापरित्यागादयोऽनुभावाः ।।

सागरः

—निर्वहणसन्ध्यङ्गम्

विबोधः कार्यमार्गणम्। अयमन्यः निरोधः, विरोधः, इति च पठितः।

विभक्तः—वाद्यप्रकारः

नात्यायतस्तथा स्यादिह सस्थानस्थितो विभक्तश्च।
अक्षरपाणिलयेषु व विभक्तकरणे विभक्तस्तु॥

भरतः

पाणीनामक्षराणां च लये यत्र विभक्तता।
स विभक्त इति प्रोक्तोऽलङ्कारो वाद्यजातिषु॥

नान्यः

विभा—मूर्छना

अस्याः विभाता विशालेति च नामान्तरं दृश्यते। नन्द्यावर्तग्रामे द्वितीया मूर्छना।

ऋषभस्तु यदायाति मूर्छा सा च विभा स्मृता।
नारदेन स्वसंगीता गीतज्ञेन मनोरमा॥

वादिमत्तगजाङ्कुशः

इयं चित्ततापापहारिणीति पण्डितमण्डली।

—विभावः

विभाव इति कस्मादुच्यते। विभावो विज्ञानार्थः।
विभज्यन्तेऽनेन वागङ्गसत्त्वाभिनया इत्यतो विभावः।
विभावितं विज्ञातमित्यनर्थान्तरम्।

बहवोऽर्था विभज्यन्ते वागङ्गाभिनयाश्रयाः।
अनेन यस्मात्तेनायं विभाव इति संज्ञितः॥

भरतः

अत्र विभावानुभावौ लोकसिद्धावेव। यदुक्तं
'हेतुकार्यात्मनोस्सिद्धिस्तयोस्सुव्यवहारत' इति। अपिचोक्तं—

लोकप्रभावसंसिद्धा लोकयात्रानुगामिनः।
अनुभावा विभावाश्च ज्ञेयास्त्वभिनये बुधैः॥

इति प्रसिद्धं लोके रत्यादेः स्थायिभावस्य कारणं कार्यं च। तत्र कारणं प्रमदादिः। कार्यं कटाक्षादिः। तावेव काव्यनाट्ययोः विभावादिव्यापाराद्विभावानुभावाभ्यां निर्दिश्येते। तत्र विभावो ज्ञायमानत्वेनैव भावकानां भावं पुष्णाति। यदुक्तं– ज्ञायमानतया तत्र विभावो भावपोषकृदिति॥ इदमेव विभावस्य विभावत्वं नाम यदनेन विभाव्यते उत्कर्षं नीयते भावकानां भावः। अत्र मुनिः—

विभावो नाम विज्ञातार्थः। विभावः कारणं निमित्तं हेतुरिति पर्यायाः। विभाव्यन्तेऽनेन वागङ्गसत्त्वाभिनया इति विभावः। यथा–विभावितं विज्ञातं इत्यनर्थान्तरम्।

बहवोऽर्था विभाव्यन्ते वागङ्गाभिनयाश्रयाः।
अनेन यस्मात्तेनायं विभाव इति संज्ञितः॥ इति

विभावाश्च यथाविधि, आलम्बनविभावः, अनुभावनामको उद्दीपनविभाव इति। आलम्बनविभावो यथा—

विपुलं नितम्बबिम्बे मध्ये क्षामं समुन्नत कुचयोः।
अत्यायतं नयनयोर्मम जीवितमेतदायाति॥

उद्दीपनविभावो यथा–

स्तनदीपविन्दुरपरो दहनः कुसुमेषु रित्रमत्रेर्नयनप्रभवः।

रसविवेकः

विभाषा—रागः

तामाश्रित्य प्रवृत्ताया विभाषा भाषितात्र सा।
तामिति—भाषाम्

कुम्भः

विभाषारागः

तामाश्रित्य प्रवृत्ताया विभाषा भाषितात्र सा।
तां भाषां (रागम्)

कुम्भः

विभासः—मेलरागः

मस्तु तीव्रतरो यस्मिन्गनी तीव्रौ रिधौ मतौ।
कोमलौ न्यासधोपेते विभासे गादिमूर्छने।
आरोहे मनिवर्ज्यत्वं गपांशस्वरसंयुते॥
प्रातर्गेयः।
मेलकर्ताऽयं रागः

अहोबिलः

विभासिकारागध्यानम्

स्वच्छन्दसम्मानितपुष्पचापा
प्रियाधरास्वादरसाभितृप्ता।
पर्यङ्कमध्या शयनोपवेशा
...स्थिता हेमरूचिर्विभासा॥

संगीतसरणिः

विभूतिः—प्राकृते मात्रावृत्तम्

चतुर्मात्रिकः एकः जः चतुर्मात्रिकः पञ्चमात्रिकः।

विरहाङ्कः

—श्रुतिः

मध्यमस्य चतुर्थी श्रुतिः।

विभूषणा—मात्रावृत्तम्

ल ल ज ग ग ज ग.

विरहाङ्कः

विभ्रमः

विविधानामङ्गानां वागङ्गाहार्यसत्त्वयुक्तानाम्।
मदराजहर्षजनितो व्यत्यासो विभ्रमो ज्ञेयः॥

भावविवेकः

—व्यभिचारिभावः

अयं सर्वेश्वरेणैवोक्तः ।

विभ्रमः कथ्यते श्लाघ्यैरात्मश्लाघा क्रमोदयः ।

हृद्यकालक्रान्त कलापैरुपजायते । तत्रानुभावा रोमाञ्चस्वेद-मन्दस्मितादयः ।

सर्वेश्वरः

—अनुभावः

क्रोधस्मितं च कुसुमाभरणादियाच्ञा
तद्वर्जनं च सहसैव विडम्बनं च ।
आक्षिप्य कान्तवचनं लपनं सखीभि-
र्निष्कारणोत्थितगतं बत विभ्रमं तत् ॥

पद्मश्रीः

विविधानामर्थानां वागङ्गाहार्यसत्त्वयुक्तानाम् ।
मदरागहर्षजनितो योऽतिशयो विभ्रमस्स मतः ॥

भरतः

अनिमित्तमासनादुत्थायान्यत्र गमनं, प्रियप्रारब्धकथामाक्षिप्य सख्या आलपनं, मुधैव हसितक्रोधौ पुष्पादीनां वाञ्छा, तस्य सहास्यैव परित्यागः वस्त्राभरणमाल्यानां अकारणतः खण्डनं मलनं विभ्रमः ।

अन्यस्त्वन्यथा लक्षणमाह । योषितां यौवनविकारो विभ्रम इति ।

सागरः

साङ्गभङ्गविकारेण सकटाक्षविलोकनैः ।
केशसंयमनव्याजाद्बाहुमूलप्रदर्शनैः ॥
मेखलोरुप्रकटनैः स्तननाभिप्रदर्शनैः ।
अभिलाषप्रकटनैर्विभ्रमः परिकीर्तितः ॥

शिंगिः

यश्चित्तवृत्तेरवनिश्चितत्वं
शृङ्गारजं तत्खलु विभ्रमः स्यात् ।
भेदाश्रयस्तस्य मदानुबन्ध-
कार्कश्यसंज्ञाः कथिता विदग्धैः ॥
रागे प्रवृद्धे दयितेऽनुकूले
याते प्रवृद्धिं परमां प्रमोदे ।
उन्मार्गगा या मनसः प्रवृत्तिः
सख्यान्मदो मन्दवशेन कार्यः ॥
अचिराय गते कुमारभावे
हृदि याते मदने च मुग्धभावम् ।
कुरुते रतिचेष्टितानुबन्धं
हृदये सोऽत्र मतोऽनुबन्धः ॥

कार्कश्यं स्त्रीणां माने

राहुलकः

भूषणादीनां अस्थानप्रयोगो विभ्रमः । यथा—चकार काचि-दित्यादि रघुवंशे ॥

भोजः

विभ्रष्टप्राकृतम्

ये वर्णास्संयोगस्वरवर्णान्यत्वमूनतां चापि ।
यान्त्यपदादौ प्रायो विभ्रष्टांस्तान् विदुर्विप्राः ॥

यथा—आश्चर्यं अच्चर्यं निश्चयमिच्छन्ति णिच्चयं च यथा
वत्सं वच्छं च यथाप्सरसं तद्वदच्छरयम् ॥

भरतः

विमर्दनः—देशीतालः

प्लुतत्रयं बिन्दुषट्कं लौ प्लुतश्च विमर्दने । १७ मात्राः

तालप्रस्तारः

विमर्शः—सन्धिः

अवमर्श इति चोच्यते ।

गर्भनिर्भिन्नबीजार्थः क्रोधव्यसनजोऽपि वा ।
विप्रलम्भकृतो वापि विमर्श इति संज्ञितः ॥

भरतः

किञ्चिदाश्लेषसंयुक्तस्सोऽवमर्शः प्रकीर्तितः ॥

इति पाठान्तरं

विमलजला—ध्रुवावृत्तम् (अष्टाक्षरम्)

लघुनी गुरुलघुनी लघुनी गुरु च यदि ।
चरणे नियतगतौ कथिता विमलजला ।
बहुणिम्मलसलिले । बहुनिर्मलसलिले ॥

सनलगाः

भरतः

विमलमोहनं—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स ग म प ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

विमला—ध्रुवावृत्तम् (एकादशाक्षरम्)

निधनं षष्ठं स्यादिह गुरुकं त्रिगतं तुर्यं पञ्चमसहितम् ।
लघवोऽन्ये सर्वे चरणविधौ विमला त्रिष्टुब्जा यदि गदिता ॥
चत्वारो लघवः कार्याः चत्वारोऽपि द्रुतांस्ततः ।
द्रुतः पादो लघुश्चान्ते विमला चतुरस्रजा ॥
जलक्रीडासु विमला तथा गजविहारिणाम् ।

समनलगाः

नायकानां प्रयोक्तव्या रागे मालवकैशिके ।
नलिनीसंडे छप्पदमुहले नलिनीषंडेषट्पदमुखरे ।

नान्यः

चतुरस्रजेति । चच्चत्पुटभङ्गतालयुक्ता विमला ॥
लघुनी चतुर्थचरणे तु यस्या
भवतीह सा वै विमला तु नाम्ना ॥
(उदा) विहङ्गाण वन्ती (छाया) विहगानां पङ्क्तिः ।
भरतः

लक्षणम्—सयगणौ

विमुक्तकम्—स्थानकम्
भूमौ अपतनात् स्थानं विमुक्तमिति कथ्यते ।
तदाक्रन्दादिषु व्याधौ हावे मोट्टायितादिषु ॥
विप्रदासः

विमुक्तम्—
भूमिपातो विमुक्तं स्याद्विनिपक्रन्दादिपु स्मृतम् ।
कुम्भः

विमुक्तः—श्वासः
निरुध्य चिरमामुक्तो विमुक्तः कथ्यते मरुत् ।
प्राणायामे तथा योगे ध्याने चैष विधीयते ॥
विप्रदासः

वियुता—श्रुतिः
ऋषभस्य प्रथमा श्रुतिः ।
अनूपः

विरामतालकालः
विरामतालकालोऽत्र स्याद्द्रुतात्किञ्चिदूनितः ।
स तु द्रुते लघौ चेव न्यूनाधिकतया मतः ॥
वेमः

विराममण्ठकः—देशीतालः
विराममण्ठके ज्ञेयं झम्पातालद्वयं मतम् ।
०ं ०ं । ०ं ०ं ।
दामोदरः

विरोधः—प्रतिमुखसन्ध्यङ्गम्
निरोधस्य नामान्तरम् ।
यत्र व्यसनमायाति विरोधस्स निगद्यते ।
सिंगः

—भाणिकाङ्गम्
संशयभ्रान्तिनिवृत्तिर्विरोधः । यथा—शाकुन्तले अनुतापाङ्के षष्ठे दर्शनसुखमित्यादिं दुष्यन्तवचनम् ।
सागरः

विरोधनम् अवमर्शसन्ध्यङ्गम्
संरब्धवचनोल्लासो विरोधनमिति स्मृतम् ।
सर्वेश्वरः

विरोधनं निरोधोक्तिः शब्दानां च परस्परम् ।
सिंगः

कार्यात्ययोपगमनं विरोधनम्
भरतः

यथा—रत्नावल्यां—कथमन्तःपुरेऽग्निः इत्यादि सागरिकोत्सादनपर्यन्तं कार्ये वासवदत्तासागरिकाप्रमविस्रंभस्यात्ययो विनाशमुपगतः
अभिनवः

—प्राप्तः
यथा—कृत्यारावणे सप्तमेऽङ्के । रामस्य मायाशिरोऽवलोक्य नाहं क्लेशयामीति सीतोक्तं कञ्चुकिनाऽनूदितम् । तत्र शशिन इवेति सीतामरणव्यवसायो विरोधनम् ।
रामचन्द्रः

विलम्बनम्—देशीलास्याङ्गम्
यत्र विश्रम्य विश्रम्य लङ्घयन्ती मुहुर्मुहुः ।
वाद्यस्यावयवान्नृत्येत् नर्तकी तद्विलम्बनम् ॥
ज्यायनाशोकौ लङ्घितमित्यूचतुः ।
कुम्भः

विलम्बाष्टतालिका—देशीतालः
दविरामद्रुतद्वन्द्वं लविरामश्च कीर्तितः ।
विराममष्टताली स्यात् लक्ष्यमार्गप्रवर्तकः ॥
० ० । ०
दामोदरः

विलम्बितगतिः—सप्तदशाक्षरवृत्तम्
जसजसयलगाः
भरतः

विलम्बिता—भङ्गतालः
गुरुर्लद्वयं गद्वयं लद्वयं गुरुः ।
ऽ ।। ऽ ऽ ।। ऽ
नान्यः
लद्वयं गद्वयं लद्वयं गुरुः ॥
।। ऽ ऽ ।। ऽ
नान्यः

—ध्रुवा
विवृण्वती बहुविधं प्रकृतीनां मनोगतम् ।
या नाति द्रुतसञ्चारा ध्रुवा सा स्याद्विलम्बिता ॥
वेमः

अपविद्धे तथौत्सुक्ये विषादे परिदेविते ।
श्रमे दैन्ये च चिन्तायां दुःखे प्रत्यभ्रजे तथा ।
स्थिता ध्रुवा प्रयोक्तव्या नाट्यलक्षणवेदिभिः ॥
स्थितेति । विलम्बितलययुक्तेत्यर्थः ॥
वेमः

**विलम्बिनी**—मेलरागः (कामवर्धिनी मेलजन्यः)

(आ) स म ग म प नि ध नि स.

(अव) स नि ध नि प म ग स.

मञ्ज

**विलम्भः**—प्रबन्धः

लम्भकलक्षणे द्रष्टव्यम्.

**विलम्भकः**

................ लम्भकः।

अतालालापयुक्तः प्राक् ध्रुवा भोगे च तालयुक्।
विलम्भकः परिज्ञेयो ध्रुवन्यासेन संयुतः ॥
पदैर्नानाविधैर्यस्त्यादेकगीति पुनः पुनः।
उद्ग्राहे वा ध्रुवे वापि द्वयोर्वा भोगवर्जितः ॥
उपलम्भ इति प्रोक्तः, ।

जगन्नाथः

**विलापः**—शिल्पकाङ्गम्

शोकसमुत्थमापदि परिदेवनं विलापः। यथा—कृत्यारावणे षष्ठ्यङ्के,

"वैदेहि देहि कुपिते दयितस्य वाचं" इत्यादि।

सागरः

**—विरहावस्था**

इह स्थित इहासीन इह चोपगतो मया।
इति तैस्तैर्विलपितैर्विलापं संप्रयोजयेत्।
उद्विग्नात्यर्थमौत्सुक्यादधृत्या च विलापिनी।
ततस्ततश्च भ्रमति विलापस्थानमाश्रिता।

भरतः

**विलासः**

ललितजातिनाटके प्रथमा सन्धिः.

शारदातनयः

**—प्रतिमुखसन्ध्यङ्गम्**

रत्युत्कर्षो विलासः स्यादाङ्गिको वाऽथ मानसः।

सर्वेश्वरः

समीहा रतिभोगार्थो विलास इति संज्ञितः।

भरतः

रतिलक्षणस्य भावस्य हेतुभूतो यो भोगो विषयः प्रमदा पुरुषो वा तदर्थो या समीहा स विलासः। कामफलेषु रूपकेषु प्रतिमुख एव ह्यास्थाफलत्वेन रतिरूपेण भाव्यम्। यथा—शाकुन्तले—कामं प्रियेति राजवाक्यम्। वेणीसंहारे भानुमत्या सह दुर्योधनदर्शितो विलासः तादृशेऽवसरेऽनुचित इति चिरंतनाः। रसबन्धव्यपेक्षयैव विलासो निवेशनीय इति ध्वनिकारः। इह रतिग्रहणं पुमर्थोपयोगि स्थायिभावोपलक्षणं रूपकेषु आस्थारूपेणोत्साहं घटयति। लस श्लेषणेऽपि पठ्यते।

अभिनवः

**विलासः**—

विलासो गमनादि स्याच्चेष्टाऽऽश्लिष्टाङ्गया कृता ॥

शार्ङ्गः

धीरसञ्चारिणी दृष्टिः गतिश्च वृषभाञ्चिता।
स्मितं दन्तप्रभालक्ष्यं विलास इति कीर्तितः ॥

स्थानासनशयनानां हस्तभ्रूनेत्रकर्मणां चैव।
उत्पद्यते विशेषो यः श्लिष्टस्स तु विलासः स्यात् ॥

भावविवेकः

**—अनुभावः**

नेत्रभ्रूवक्त्रपाणीनां पादयोश्च विशेषतः।
यत्संविलसनं सद्भिर्विलासस्स उदीरितः ॥

कुम्भः

स्थानासनगमनानां नेत्रभ्रूवक्त्रकर्मणां चैव।
उत्पद्यते विशेषो यः श्लिष्टस्स तु विलासः स्यात् ॥

भरतः

प्रियोपगमने यत्स्थानासनगमनविलोकितेषु विकारोऽकस्मात्क्रोधस्मितचमत्कृतिर्मुखस्य विकूणनं स विलासः ॥

सागरः

यो वल्लभासन्नगतौ विकारो गत्यासनस्थानविलोकनेषु।
वृथा स्मितक्रोधचमत्कृतिश्च विकूणनं चाऽऽस्यगतं विलासः ॥
आस्यगतं विकूणनं मुखसङ्कोचनम्।

पद्मश्रीः

नेत्रभ्रूवक्त्रकर्मणां विशेषेण लसनं विलासः। यथा—सभ्रूविलासमथ (मालतीमाधवे। १- २८)

भोजः

**विलासिनी**-- प्राकृते मात्रावृत्तम्

षट् चतुर्मात्रिकः एकः पञ्चमात्रिकः गः

विरहाङ्कः

द्वौ पञ्चमात्रिकौ तयोरन्त्यो गुरुः
जः गः।

विरहाङ्कः

**विलीनः**—श्वासः

लीनस्स्यान्मूर्छिते मरुत्।

विप्रदासः

**विलुलितम्**—दर्शनम्

परिक्लिष्टपुटं म्लायत्तारं विलुलितं भवेत् ।

शारदातनयः

**विलोकितम्**—दर्शनम्

पृष्ठतो वीक्षणं यत्स्यात् तद्विलोकितदर्शनम् ।

विप्रदासः

**विलोकितः**—देशीतालः

गौं द्रौं विलोकिते पुश्च ऽ ऽ ० ० ऽ मदनः

**विलोभनम्**—मुखसन्ध्यङ्गम्

गुणनिर्वर्णनं चैव विलोभनम् ।

भरतः

ततस्तदेव गुणवदिति श्लाघ्यते, श्लाघैव विलोभनहेतुत्वात् विलोभनम् । विक्रमोर्वश्यां "अस्याःसर्गविधौ" इत्यादि ।

अभिनवः

अर्थस्य गुणनिर्वर्णनं विलोभनम् ।

सागरः

**विलोभितम्**—दर्शनम्

अन्तर्विस्तद्द्रहो यत्र लोहितं स्याद्विलोभितम् ।

शारदातनयः

**विवक्षा**—भक्तिः

विवक्षा वक्तुमिच्छा स्यात्समसंक्षिप्तविस्तृतः ।
शब्दैरर्थस्य तत्पूर्वं लोके शब्दप्रवर्तनम् ॥
विवक्षा बहुधा चात्र भेदाभेदादिगोचरा ।
संहत्यार्थाभिधायीनि पदान्याहुर्विपश्चिताः ॥
वाक्यं विशिष्टा-वाक्यार्थः क्रिया सर्वत्र कारकैः ।
नीलमुत्पलमित्यादावपि वाक्यार्थदर्शनात् ॥
क्रियाकारकनिर्बन्धमाद्रियन्ते न केचन ।
वर्तते यत्परः शब्दः स शब्दार्थ इति स्थितिः ॥

भोजः

**विवक्षितम्**

योऽर्थो बुद्धिस्थिताभीष्टो वक्तृवाक्येन गम्यते ।
ताद्विवक्षितमित्युक्तं दर्पणादौ मुखादिवत् ॥

शारदातनयः

**विवर्तः**—(शब्दव्यापारः)

एकस्य तत्त्वादप्रच्युतस्य सन्निवेशविशेषादिभिः असत्यप्रविभक्तान्यरूपोपग्राहिता विवर्तः । तत्र यथा—जलादयः कल्लोलादिरूपेण, स्वर्णादयः कुण्डलादिरूपेण विवर्तन्ते तथा शब्दतत्त्वमविद्योपाधेः तेन तेनार्थरूपेण विवर्तते ।

भोजः

**विवर्तितौ**—पुटौ

विवर्तितौ समुद्भ्रान्तौ क्रोधे प्रोक्तौ मनीषिभिः ।

अशोकः

**विवर्तनम्**—ओष्ठकर्म

गायते यत्तिरश्चीनं तद्विवर्तनमुच्यते ।
वेदनानादरासूयासम्मुखप्रमुखं मतम् ॥

ज्यायनः

—देशीलास्याङ्गम्

वाद्यप्रबन्धवर्णानां यत्र साम्येन नर्तनम् ।
रचयेद्धस्तकैः पात्रं चारीभिः करणैरपि ।
भ्रमरीभिश्च संप्रोक्तं विवर्तनमिदं बुधैः ॥

अशोकः

—देशीनृत्तम्

विवर्तनाख्यनृत्तं च चतुर्विंशतिभिस्तथा ।
विवर्तनाभिर्गदितं सर्वनृत्येषु कोविदैः ॥

वेदः

—तारा

कटाक्षस्तु विवर्तनम् ।
शृङ्गारे च रसे हास्ये...... ॥

कुम्भः

**विवर्तितम्**—करणम्

हस्तमाक्षिप्तपादं च त्रिकं यत्र विवर्तयेत् ।
रेचयेदपरं हस्तं कीर्तितं तद्विवर्तितम् ॥

ज्यायनः

प्रयोज्यं बालवेश्यानां विलासे गर्वसंयुतम् ।

लक्ष्मणः

—नृत्तकरणम्

शिरस्समं समा दृष्टिः स्थानकं स्वस्तिकं तथा ।
शुकतुण्डकरः प्रोक्तः त्र्यस्रः स्वस्तिकचालकः ।
यत्रेत्थं वर्तते नृत्तं करणं तु विवर्तितम् ॥

नन्दी

त्र्यस्रस्वस्तिकचालकलक्षणम्—

प्रथमं स्वस्तिकीभूय कुञ्चितावूर्ध्वगौ पुनः ।
ततो वामांसपर्यन्तं पर्यायाच्चेद्रुतौ करौ ।
तत्स्वस्तिकत्र्यस्रसंज्ञं क्षेमराजेन भाषितम् ॥

—दर्शनम्

उद्वृत्तान्तः पुटक्षिप्ततारं यत्तद्विवर्तितम् ।

शारदातनयः

—देशीस्थानम्

अधोवक्त्रं तु यत्सुप्तं स्थानं तत्स्याद्विवर्तितम् ।
एतस्य विनियोगस्तु प्रोक्तश्शस्त्रक्षतादिषु ॥

वेमः

—स्थानकम्

अधोवदनमादाय संविशेद्यत्र तत्स्मृतम् ।
विवर्तिताभिधं तदङ्गैरोगशस्त्रादिपीडिते ॥

ज्यायनः

—पार्श्वम्

विवर्तितं परावृत्तौ भवेत्त्रिकविवर्तनात् ।

अशोकः

परिवृत्तावङ्गमोटे विवर्तितमुदाहृतम ।

सोमेश्वरः

—शयनस्थितिः

अधोमुखस्थितं चैव विवर्तितमिति स्मृतम् ।
शस्त्रक्षतमृतोत्क्षिप्तमत्तोन्मत्तेषु कारयेत् ॥

भरतः

विवर्तितः—अधरः

तिर्यक् सङ्कुचितो यस्यादधरस्स विवर्तितः ।
असूयावज्ञयोर्हास्यवेदनादिषु कीर्तितः ॥

अशोकः

तिर्यक् संकुचितश्चोष्ठपुटः प्रोक्तोविवर्तितः ।

कुम्भः

विवर्तिनी—प्रबन्धः

प्रतितालादयः पञ्च तालास्युर्वर्जिता इह ।
तालहीनस्वरालापः शेषः पूर्ववदिष्यते ।
विवर्तनी भवेदेवं...... ॥ हरिपालः

अत्र प्रतितालादयः पूर्ववत् इति च वर्तिनीलक्षणं निर्दिशति ॥

विवर्धिनी—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि म प ध प स.
(अव) स नि ध प म ग रि स.

मज

विवायक्री—उपाङ्गरागः

स्यात्तु णेत्रकृतेरङ्गं विवायक्र्यल्पमध्यमा ।

भट्टमाथवः

विवृतम्—वदनम्

विश्लिष्टोष्ठं च विवृतं हास्यशोकभयादिषु ।

विप्रदासः

—जानु

जानुद्वयं बहिर्भूतं विवृतं जानु सम्मतम् ।
नियुज्यते वाजिगजारोहणादिषु सूरिभिः ॥

अशोकः

आरूढे च गजादीनां नृत्ते च विवृतं भवेत् ।

सोमेश्वरः

विवृत्ता—कटी

विवर्तितामभिमुखं नर्तकः प्रत्यगानतः ।
कुरुते या कटी सोक्ता विवृत्ता शुक्लपण्डितैः ॥
विवर्तने प्रयोगोऽस्याः । विप्रदासः

शुक्लपण्डितो विप्रदासः

पृष्ठतो वलनात्पूर्वकाये सति पराङ्मुखे ।
नरस्याभिमुखी या सा निवृत्ता वर्तने मता ॥

ज्यायनः

विवृत्तैव निवृत्ता ।

विशाखाभिनयः

पद्मकोशहस्तस्यैकाङ्गुलिकम्पनेन कर्तव्यः ।

महाराष्ट्रे

विशाखाहस्तः

(विशाखा कुलालचक्रवत्पद्म)
पद्मकोशो विशाखर्क्षे तत्खेटोऽचितरूपकः ।

शृङ्ग

विशाखिलः

अस्य ग्रन्थो नाद्याप्युपलब्धः । अयं सङ्गीतपरिष्कारविषये प्रामाणिक इति तन्नामग्रहणाद् ज्ञायते । ध्रुवाणामुदाहरणकर्तेति नान्यदेवो वदति ।

विशारदहस्तः

नाभिदेशे सर्पशीर्षौ संयुक्तौ तु विशारदः ।
कुक्षिस्थले तु यो हस्तः बृहत्तुन्दिलदर्शने ॥

विनायकः

**विशालः—गीतालङ्कारः (निसारुकभेदः)**

लघुत्रयं विरामान्तं ताले द्वितीयसंज्ञके ।
अनेनैव हि तालेन विशालश्च निसारुकः ॥

संगीतसारः

**विशालमण्ठकः—देशीतालः**

द्वितीयस्त्रिपुटश्चैव विशालो मण्ठको भवेत् ।
। ० ० । ० ० ।

दामोदरः

**विशाला—मूर्छना**

ग्रामेषु त्रिषु सर्वत्र मध्यमो नैव लुप्यते ।
मध्यमस्य विशालत्वाद्विशाद्वै विष्णुदेवता ॥

नान्यः

**—श्रुतिः**

षड्जद्वितीया

जग

**विशाला—मूर्छना (गान्धारग्रामे द्वितीया)**

(आ) म प ध नि स रि ग ।
(अव) ग रि स नि ध प म ।

नान्यः

**—मालावृत्तम्**

द्विपदी—

एकादश चतुर्मात्रागणाः । तेषु सम गणाः जो वा नलौ वा ।
ओजगणास्तु द्विलघुकचतुर्मात्रागणाः ।

विरहाङ्कः

**विश्रृङ्गाटकबन्धनम्—चालकः**

प्रातिलोम्यानुलोम्याभ्यां क्रिया वैरुधबन्धनी ।
कृता कराभ्यां यत्रैषा विश्रृङ्गाटकबन्धकः ॥

वेमः

वैरुधबन्धनीति वीरुधबन्धनामके चालके प्रोक्ता क्रिया ।

**विशेषः—मालावृत्तम्**

तिस्रो गाथाः—

विरहाङ्कः

**—भङ्गतालः**

गद्वयं लग लद्वयं गुरुः ।
ऽ ऽ । ऽ । । ऽ

नान्यः

**विशेषणम्—लक्षणम्**

सिद्धान्बहून्प्रधानार्थानुक्त्वा यत्र प्रयुज्यते ।
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥

भरतः

यथ—तापसवत्सराजे—वृत्तिर्मूलेति विदूषकं प्रति राजवाक्यम्.

**विशेषशब्दचिन्तामणिः**

नामलिङ्गानुशासनस्य व्याख्यारूपोऽयं ग्रन्थः मामिडि वेङ्कनार्येण गोदावरीदेशीयेन वैद्येन प्रणीतः । तत्र नाट्यसङ्गीतविषया बहवरसन्ति । कालः १८५० ।

**विशोधनम्**

ललितजातिनाटके चतुर्थः सन्धिः ।

**विश्रुतहस्तः**

अङ्गुल्यो विरलास्सर्वाः प्रसृता विश्रुताख्यकः ।
शिरः पार्श्वे विश्रुतश्चेत् केशमध्ये स्थितो यदि ।
केशानां दर्शने चैव चालनाद्धरणीतले ॥

विनायकः

**विश्लिष्टम्—दर्शनम्**

विश्लिष्टं शून्यविषयं प्रवृत्तं क्रोधवेगतः ।

शारदातनयः

**विश्लिष्टवर्तितम्—चालकः**

प्रथमं स्वस्तिकीकृत्य पाण्योर्विश्लिष्टयोर्द्वयोः ।
एको विलोलितस्तिर्यगपरः पार्श्वदेशयोः ॥
अथश्चोर्ध्वं च पर्यायाद्व्रजते लुठनं यदि ।
विश्लिष्टवर्तितं नाम चालकः परिकीर्तितः ॥

वेमः

**विश्लिष्टा—देशीचारी**

पार्ष्णिपीडामिधं स्थानमास्थाय चरणौ यदा ।
विश्लिष्यै वोपसर्पेतामथवा चापसर्पतः ।
यत्र सा कथिता चारी विश्लिष्टाख्या विचक्षणैः ॥

वेमः

**विश्लोका—ध्रुवावृत्तम् (एकादशाक्षरम्)**

आद्ये चतुर्थमपि चाष्टमाक्षरं चैकादशं यदि भवेत्तु गुरुः ।
सा त्रैष्टुभे भवति पादविधौ विश्लोकजातिरवकृष्टगता ॥
चन्दो णहम्मि रअणी सहियो । चन्द्रो नभसि रजनीसहितः ।

भरतः

**विश्वजित्—तानः**

(रिलोपः. षाडवः)
ग स नि ध प म .

कुम्भः

विश्वनारायणी—मेलरागः (चक्रवाकमेलजन्यः)
(आ) स ग म प ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

विश्वप्रदीपः

भुवनानन्दकृतः सर्वशास्त्रसङ्ग्रहरूपः। सङ्गीते सहस्रत्रयग्रन्थभागो वर्तते। कालः १३५०.

विश्वभृता—मूर्छना
(जीमूतग्रामे द्वितीया मूर्छना)
द्वितीयस्वरमूर्छा या यत्र विश्वभृता भवेत्।
तस्यास्तुष्यन्ति मुनयो याज्ञिका विज्ञसंसदि ॥

वादिमत्तः

विश्वम्भरी—मेल (कर्ता) रागः
स रि ग ० ० ० म प ० ध ० ० नि स.

मञ्ज

विश्वमूर्तिः—वंशः

विश्वेदेवास्त्रयोदश। फूत्कारताररन्ध्रयोरन्तरालं यत्र त्रयोदशाङ्गुलमानं भवेत्स विश्वमूर्तिः।

यूकाभिः पञ्चभिर्युक्तं स्यात्सप्तत्रिंशदङ्गुलम्।
विश्वमूर्तौ दण्डमानं तस्मिन् स्यादङ्गुलद्विकम् ॥
शिरोदेशे जातिवक्त्रं विदधीत विधानवित्।
अन्तरालस्यमानं स्याद्वक्त्रताराख्यरन्ध्रयोः ॥
त्रिभिरभ्यधिकं मेयमङ्गुलैर्दशभिस्तथा।
मनुदण्डवदत्रापि रन्ध्राष्टकमितिर्मता ॥
अङ्गुलद्वितयं यूकाद्वयेनाभ्यधिकं भवेत्।
रन्ध्राणामन्तरालस्य प्रत्येकं प्रमितिस्ततः ॥
पञ्चयूकायवद्वन्द्वमङ्गुलानि चतुर्दश।
प्रमाणं परिविज्ञेयं सम्भूयान्तरसप्तके।
प्रान्तोऽङ्गुलद्वयी चास्य वंशविद्भिरुदाहृता ॥

कुम्भः

विषण्णा—श्रुतिः
तारर्षभस्य तृतीया श्रुतिः।

पार्श्वः

—दृष्टिः
मनाक् निष्टब्धतारा या स्रस्तापाङ्गनिमेषिणी।
विषादविस्तीर्णपुटा विषादे सा विषादिनी ॥

सोमेश्वरः

विस्तारितोभयपुटा नेत्रान्तार्नीततारका।
निमेषिणी स्तब्धतारा दृष्टिरुक्ता विषादिनी।
विषादे विनियोगोऽस्याः कथितश्शुक्लसूरिणा ॥

विप्रदासः

विषमम्—काव्यदोषः
वृत्तभेदो भवेद्यत्र विषमं नाम तद्भवेत्।

भरतः

—नृत्तम्
तद्विषमं मतम्। यदभ्यासवशाद्रज्जुभ्रमणादि प्रदर्श्यते

कुम्भ.

—रञ्जनगुणः
अत्युच्चस्थानकं गीतं तालपातैरलक्षितम्।
प्रयोगबहुलं रूक्षं विषमं वादिवल्लभम् ॥

सोमेश्वरः

विषमः—हस्तपाटः
पताकहस्तचलनान्मणिबन्धस्य कम्पनात्।
पादकम्पाच्च विषमः पाटस्सञ्जायते तदा ॥
दह्लें दह्लें खुं खुं दह्लें खुं खुं दह्लें ततरी ततरी

वेमः

हस्तवैषम्यघातेन विषमो जायते यथा।
खें द धरिधो धिकिगिध रिखेदो धिगिधरि खें खरकट खरकठ.

वेमः

—देशीतालः
विषमो वस्तुभिर्द्रुतैः। युगाभ्यां विद्वयं चात्र ० ० ० ० ० ०

मदनः

चत्वारो द्विविरामान्ता द्रुताः स्युर्विषमे पुनः ०́ ०́ ०́ ०́

वेमः

वेदद्रुतविरामान्तं द्वौ वारे विषमे मता ० ० ० ०́ ० ० ० ०́

जग

विषमकङ्कालः—देशीतालः
ताले विषमकङ्काले लघोरूर्ध्वं गुरुद्वयम्। S S

वेमः

विषमकर्तरी—हस्तपाटः
व्यत्ययेन भवेदस्य संज्ञा विषमकर्तरी।
अस्य—समकर्तर्याः

सोमेश्वरः

कर्तर्योरुभयोर्घातात्क्रमाद्विषमकर्तरी ।
टिरि टिरि थों दिगिदटिरि टिरि गिद ॥

वेमः

विषमकुम्भकः—देशीतालः

गत्रयं मोनदौ पश्च ताले विषमकुम्भके ।

21½ मात्राः तालप्रस्तारः

विषमगलिता—मात्रावृत्तम्

विषमा—एकश्चतुर्मात्रिकः ज चतुर्मात्रिक एकः ग.
समा—द्वौ चतुर्मात्रिकौ य ग.

विरहाङ्कः

विषमगोलककला—कला.

नटीद्वयं यत्र परस्परेण क्षिप्तं द्विः खे गोलकपञ्चकं च ।
अन्योसितं यत्र दधाति चान्या करद्वयेनासमगोलकेति ॥

नागमल्लः

विषमग्रहकला—कला

जानुद्वयांकौ विनिवेश्य कांस्य-
पात्रं दधाना शिरसा सतोयम् ।
पृथक्पृथक् गोलकचक्रलीलां
कुर्यात्कराभ्यां विषमग्रहेयम् ॥

नागमल्लः

विषमपाणिः—हस्तपाटः

व्यत्ययेन व्यापृतयोः करयोरुभयोः क्रमात् ।
साङ्गुष्ठाङ्गुलिघातेन भवेद्विषमपाणिकः ॥
दां दां गिड गिड दां दां. वेमः

विषमशेखरः—देशीतालः

सगणो नगणद्वन्द्वं गुरुश्चाथ द्रुतत्रयम् ।
लघुर्गुरुश्च कर्तव्यस्ताले विषमशेखरे ॥

16½ मात्राः तालप्रस्तारः

विषमसञ्चरः—पादचारः

वेष्टयित्वा दक्षिणेन वामं वामेन दक्षिणम् ।
क्रमेण पादं विन्यस्य भवेद्विषमसञ्चरः ।

नाट्यदर्पणे

चरणस्यैकदेशस्य गतिर्विषमसञ्चरः ॥

हरिपालः

विषमसूचि—देशीस्थानम्

समसूचिगतौ पादौ पुरः पश्चात्प्रसारितौ ।
युगपद्यत्र कथितं स्थानं विषमसूचि तत् ॥

विषमा—अवनद्धे जातिः

घें तां कें तां खें तां दीर्घकृतैरक्षरैः कृता या च ।
राज्ञां स्वभावगमने सा विषमा नामतो जातिः ॥

भरतः

दीर्घाक्षरैकरूपा गुरुलघुयुग्मापि वा स्वभावगतौ ।
राज्ञां प्रयोगकुशलैर्ज्ञेया विषमेति नामतो जातिः ॥

नान्यः

—पुष्करवाद्ये जातिः

घेंतां केंतां खेंतां दीर्घकृतैरक्षरैः कृता या च ।
राज्ञां स्वभावगमने सा विषमा नामतो जातिः ॥

अभिनवगुप्तपाठः

घेंतां क्रेंतां केंतां एभिर्यात्वक्षरैस्समायुक्ता ।
जातिर्देशानुरूपा राज्ञां कार्या वितस्तायाम् ॥

नेपालपाठः (भरतः)

विषमाक्षरा—चतुष्पदागीतम्

विषमाक्षरमात्रा च पदैर्वर्णैश्च तादृशैः ।
लघुतालैश्च विषमैर्विज्ञेया विषमाक्षरा ॥

वेमः

विषादः—चित्ताभिनयः

नेत्रस्थाने तु हंसास्यं बध्वा तु तदनन्तरम् ।
पार्श्वभागे पताकौ तु चलितौ तु विलोकने ॥
नेत्रस्थाने मयूरं तु निश्वासोच्छ्वासपूर्वकम् ।
मुखं वक्रत्वमाप्नोति ह्यधमे तु विषादके ॥

विनायकः

प्रारब्धकार्यानिर्वाहादिष्टाप्राप्तेर्विपत्तितः ।
अपराधपरिज्ञानादनुतापस्तु यो भवेत् ॥
विषाद इति विख्यातो भरतागमवेदिभिः ।
स विषादस्त्रिधा ज्येष्ठमध्यमाधमसंश्रयात् ॥
पार्श्वभागे तु सूची स्यादन्यार्थस्य निरूपणे ।
पताकार्धः पुरोभागे मिलितस्तु सहायके ॥
हंसास्यस्तु पुरोभागे चलितोऽन्वेषणे भवेत् ।
हनुस्थले पताकस्तु चिन्तार्थस्य निरूपणे ॥
हृदि स्थाने तु मुकुलं पुरोभागे तु कर्तरी ।
चालितोत्साहशून्ये तु दर्शयेद्भावकोविदः ॥
नेत्रान्ते बाणहस्तं तु दुःखभावनिरूपणे ।
मुखस्थाने तु मुकुलं पार्श्वभागे पताककम् ।
चालयेत् ज्ञानशून्ये तु तत्तद्भावानुसारतः ॥

—व्यभिचारिभावः

कार्यानिस्तरणदैवव्यापत्तिसमुत्थः। अनुभावास्तु सहायान्वेषणोपायचिन्तनोत्साहविघातवैमनस्यनिश्वसितादय उत्तममध्यमानाम्। नीचानां तु परिधावनालोकनमुखशोषणसृक्वपरिलेहननिद्रानिश्वसितध्यानादयः।

भरतः

विषाद कथ्यतेऽस्माभिः सत्त्वस्यैवेह संक्षयः।
प्रारब्धवस्तुभङ्गादेरुत्पत्तिस्तस्य दृश्यते।
निश्वासोच्छ्वाससन्तापसहायान्वेषणादयः॥

सर्वेश्वरः

विष्कम्भम्—करणम्

सव्यं सूचीमुखं वृत्तहस्तोपगमपूर्वगम्।
वामं वक्षःस्थितं दध्यात्तद्विकेङ्घ्रिर्निकुट्टितः॥

एवमङ्गान्तरे भूयः सूचीपादोऽलपल्लवः।
निकुट्टितो दक्षिणः स्यात्करो वामो यथा पुरा।
इत्थं मुहुः क्रिया यत्र तद्विष्कम्भं प्रकीर्तितम्॥

ज्यायनः

विष्कम्भः—अङ्गहारः

निकुट्टकनिकुञ्चिताञ्चितोरूद्वृत्तार्धनिकुट्टकभुजङ्गत्रासितभ्रमरकरिहस्तकटिछिन्नानां नवानां करणानां प्रयोगे विष्कम्भाङ्गहारः।

शार्ङ्गः

—अर्थोपक्षेपकः

वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः।
संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः॥
अत्र संक्षेपशब्दो यः स प्रयोजनवाचकः।
द्विधा भवेत्स विष्कम्भः शुद्धसङ्कीर्ण इत्यपि॥
शुद्धोनेकैरनेकेन मध्यपात्रेण योजितः।
नीचमध्यमपात्रेण सङ्कीर्णस्तादृशेन च॥
अङ्कान्तरे मुखे वा प्रकरणमाश्रित्य नाटकं वापि।
विष्कम्भकस्तु नियतः कर्तव्यो मध्यमैरधमैः॥

शारदातनयः

प्रकरणनाटकयोर्विष्कम्भ इत्याह चारायणः। प्रवेशकस्थानीय एव विष्कम्भः। परमियांस्तु विशेषः। कुतोऽपि स्वेच्छया प्राप्तः संबद्धो नोभयोरपि। विष्कम्भकस्सविज्ञेयः कथार्थस्यापि सूचकः॥ कुतोऽपि हेतोः स्वयमेवागतः नायकतद्विपक्षयोरपि न प्रतिबद्धः हर्षाद्विष्कम्भेन विष्कम्भक उच्यते। यथा—नागवर्माङ्के यज्ञसोमः 'कुलपतिरेव न केवलमहमपि हर्षाज्जडीभूतः' इति। द्विविधो विष्कम्भः, शुद्धस्संकीर्ण इति। शुद्धस्संस्कृतभाषी। यथा—सौदामनी मालतीमाधवे। नीचेनानुगतस्तथाविधस्संकीर्णः। यथा—रामानन्दे क्षपणककापालिकौ।

सागरः

विष्कम्भधारा—भङ्गतालः

लघुश्च गुरुरन्ते च धारा विष्कम्भजा मता।

नान्यः

विष्कम्भा—अवनद्धे जातिः

गुरुयुग्मं लघुयुग्मं गुरुयुग्मं तोटकं तथा वाद्यम्।
नित्यं यत्र तु वाद्ये विष्कम्भा नाम सा जातिः॥

भरतः

या तोटकेन विद्धा गुरुलघुगुरुयुगलबद्धबन्धा वा।
विष्कम्भितेति विद्यात्तां विद्धां नामजातिं तु॥
त्वरितगतावपि राज्ञांमुत्तमनाथकरतौ या भवेन्नियता।
विष्कम्भो माधुर्यं ज्ञेया विष्कम्भितेति सा जातिः॥

नान्यः

अत्र गुरुयुग्मं लघुयुग्मं गुरुलघुयुग्मं च तोटकमथान्यत्" इति भरतग्रन्थपाठो नान्येन नोदाहृतः। स एव समञ्जसः स्यात्।

—पुष्करवाद्ये जातिः

गुरुयुग्मं लघुयुग्मं गुरुयुग्मं तोटकं तथा वापि।
नित्यं यत्र तु वाद्ये विष्कम्भा नाम सा जातिः॥

अभिनवपाठः

गुरुयुग्मं लघुयुग्मं गुरुलघुयुग्मं तथैव वाद्यं चेत्।
ज्ञेया गतिप्रचारे विष्कम्भानाम जातिरियम्॥

नेपालपाठः

"विष्कम्भाख्या जातिः शृङ्गारे चोत्तमस्त्रीणाम्" इति प्राचीनपाठः।

भरतः

विष्कम्भापसृतः—अङ्गहारः

निकुट्टकार्धनिकुट्टकभुजङ्गत्रासितभुजङ्गत्रस्तरेचिताक्षिप्तोरोमण्डलकटिछिन्नानां सप्तानां करणानां प्रयोगे विष्कम्भापसृताङ्गहारः।

शार्ङ्गः

विष्कम्भितम्—स्थानकम्

ऊरू भुजद्वयाश्लिष्टौ अङ्घ्री विस्तारिताञ्चितौ।
नेत्रे निमीलिते न्यस्तं चिबुकं जानुमूर्धनि॥
यत्र विष्कम्भिताख्यं तत् स्थानकं परिकीर्तितम्।
एतदेवापरे प्राहुरवहित्थसमाख्यया।
एतस्य विनियोगस्तु योगध्यानादिषु स्मृतः॥

वेमः

विष्णुः—देशीतालः
विष्णुताले तु नगणः ततस्तु भगणो भवेत् ।
ततो जगणको ज्ञेयः तगणस्सगणस्तथा ।
रगणो यगणो ज्ञेयः प्रान्ते तु मगणो भवेत् ॥
।।।ऽ।।।ऽ।ऽऽ।।।ऽऽ।ऽ।ऽऽऽऽऽ
दामोदरः

—तानः
मध्यमग्रामे नारदीयतानः.
स ग म प नि नान्यः
विष्णुपर्यायशब्दैः चतुःश्रुतिकरिधौ अन्तरगान्धारः कैशिकनिषादश्चोच्यन्ते ॥

विष्णुकरः—तानः
मध्यमग्रामे नारदीयतानः ।
प नि स ग म नान्यः

विष्णुक्रान्तम्—करणम्
यत्रोर्ध्वं प्रसरत्यग्रे चरणश्चलनोन्मुखः ।
कुञ्चितोऽथ यदा स्यातां हस्तकौ रेचितौ सदा ।
विष्णुक्रान्तमिदं प्रोक्तं विष्णुक्रमणगोचरम् ॥
अशोकः

विष्णुक्रान्तः—तानः
षड्जग्रामे नारदीयतानः
प नि स ग म नान्यः
प—लोपः षाडवः.
म ग रि स नि ध .
कुम्भः

विष्णुतालः—देशीतालः
.........विष्णौ द्रुतचतुष्टयम्
लघु द्रुतौ गुरुः प्रान्ते विद्वद्भिः परिकीर्तितः ० ० ० ० । ० ० ऽ
श्रीकण्ठः

—तालः
नतौ जतौ सोलयमैस्तु विष्णुः ।
वेदः

विष्णुविक्रमः—तानः
मध्यमग्रामे रिधहीनौडुवः
म ग स नि प . कुम्भः

विसन्धि—काव्यदोषः
अनुपश्लिष्टशब्दं यत्तद्विसन्धीति कीर्तितम् ।
भरतः

विसंस्थुलम्—दर्शनम्
भ्रूपक्ष्मताराविक्षेपाद्विसंस्थुलमितीरितम् ।
वेमः

विसर्गः—शृङ्गारचेष्टा
विनिष्क्रमो विसर्गः । यथा–मुहुरङ्गुलिसंवृताधरोष्ठं, (शाकु)
भोजः

—स्वराङ्गम्
विसर्गो नाम वाक्यापन्यासः ।
नान्यः

विसर्जनम्—संगीतशृङ्गाराङ्गम्
रिरंसातिशयात्सख्यादीनामनवेक्षणादिभिरुत्थापनं विसर्जनम् ।
भोजः

विसर्जिता—क्रिया (तालाङ्गम्)
क्रियाशब्दे द्रष्टव्यम् ।

विसर्पः—नाट्यालङ्कारः
रभसोक्तमनिष्टफलं स्यात् । यथा–दशरथाङ्के साम्रान्येन वरं दत्तमित्यादि । सागरः

विसृष्टम्—अधरकर्म
विसृष्टं स्याद्विनिष्क्रान्तिः या चालक्तकरञ्जने ।
बिब्बोके चञ्चलाक्षीणां संभोगे वल्लभार्पणे ॥
ज्यायनः

विसृष्टः—अधरः
विनिष्क्रान्तो विसृष्टस्स्याद्व्येणालक्तकादिना ।
रञ्जने सविलासेऽपि बिब्बोकेऽपि च सुभ्रुवाम् ॥
अशोकः

विस्तारः—वीणायां धातुः
स चतुर्दशविधः, विस्तारजः, सङ्घातजः, समवायजः, अनुबन्धः, द्विरुत्तरः, द्विरधरः, अधराद्युत्तरान्तः, उत्तराद्यधरान्तः, द्विरुत्तरान्तः, द्विरधराद्युत्तरान्तः, उत्तरादिद्विरधरः, अधरादिद्विरुत्तराधरान्तः, मध्योत्तरद्विरधरः, अधरमध्यद्विरुत्तरः, त्रिरुत्तरः त्रिरधर इति विभक्तः ।
कुम्भः

अत्रोत्तरशब्देन मन्द्रस्वरः । अधरशब्देन तारस्वरश्च विवक्षितः । शारीरवीणावाद्ययोरुत्तराधरशब्दौ विपर्यस्तार्थौ । शरीरेऽधरो मन्द्रः । तार ऊर्ध्वभागे । वीणायां स्थाने विपर्ययो भवतः ।

—वीणायां धातुः
विस्तीर्णो नादभेदत्वाद्विस्तारस्येह धातुता ।
यत्र शैघ्र्यात्प्रहारस्य स्वरानेकीकृतानिव ॥

कृत्वा वैचित्र्यतः क्वापि विश्रान्तिं रचयेत्स्वरे ।
असौ विस्तारजो नाम धातुरित्यपरे जगुः ॥

कुम्भः

अयं धातुरलङ्कारशब्दवाच्यतामपि भजने इति शार्ङ्गदेवः ।

**विस्तारजः—धातुः**

विस्तीर्णनादभेदत्वाद्विस्तारो धातुरुच्यते ।
प्रहारलाघवात्कृत्वा स्वरानेकीकृतानिव ॥
वैचित्र्यात्क्वापि विश्रान्तस्स्वरो विस्तारजो भवेत् ।
एकविस्तारसंज्ञं तमपरे सूरयो जगुः ॥

शार्ङ्गः

**विस्तारि—दर्शनम्**

आश्लिष्टो येन विषयः तद्विस्तारीति कथ्यते ।

शारदातनयः

**विस्तारिणी—श्रुतिः**

निषादस्य प्रथमा श्रुतिः ।

**विस्तीर्णः—वर्णालङ्कारः (अवरोही)**

नी धा पा मा गा री सा .

**—(आरोही)**

स्वरादारोहणं यत्र मूर्छनादेर्भवेत्क्रमात् ।
विलम्बिभिः स्वरैर्दीर्घैः तं विस्तीर्णमुदीरयेत् ।
सा री गा मा पा धा नी इति विस्तीर्णः ॥

पण्डितमण्डली

**—वर्णालङ्कारः**

स्थित्वा स्थित्वादितश्चेत्स्वान् मूर्छनारोहणान् क्रमात् ।
त कृत्य स्वरान्सर्वान्विस्तीर्णो निरणायि सः ॥

जगद्धरः

**विम्पष्टा—श्रुतिः**

तस्य प्रथमा श्रुतिः ।

पार्श्वः

**विस्फारितम्—दर्शनम्**

विस्फारितं तु विज्ञेयं विस्फुरत्तारमायतम् ।

वेमः

**विस्पुटा—श्रुतिः**

तारनिषादस्य प्रथमा श्रुतिः ।

पार्श्वः

**विस्मयः—शिल्पकाङ्गम**

यथैव कुलपत्यङ्के दोर्दण्डाः केति विस्मयः ।

शारदातनयः

अकृतार्थदर्शनोद्भवोऽर्थविशेषो विस्मयः । यथा—दोर्दण्डा इति ।

सागरः

दोर्दण्डा इति कृत्यारावणे कुलपत्यङ्के रावणन्नाक्यम् ।

उपलब्धौ विष्य...पूर्वकल्पनया नृणाम् ।
अहो खल्वेतदिति यो भावो विस्मय एव सः ॥

भावविवेकः

**—स्थायिभावः**

विस्मयोनाम मायेन्द्रजाल मानुष्यकर्मातिशयचित्रपुस्तशिल्पविद्यातिशयादिभिरुत्पद्यते । तस्य नयनविस्तारानिमेषप्रेक्षितभ्रूक्षेपरोमहर्षणशिरःकम्पसाधुवादादयोऽनुभावाः ।

कर्मातिशयनिर्वृत्तो विस्मयो हर्षसंभवः ।
सिद्धिस्थाने त्वसौ साध्यः प्रहर्षपुलकादिभिः ॥

भरतः

**विस्मितः**

अहो धन्योऽस्मि सुकृती संपदो न तु मे चलाः ।
इति स्मेरमुखो नित्यं नरो भवति विस्मितः ॥

भावविवेकः

**—श्वासः**

प्रयत्नेन विना यस्याश्चिचल्यान्यप्रसक्तितः ।
स विस्मितोऽद्भुते कार्यैः चिन्ताविस्मययोरपि ॥

अशोकः

**विस्मिता—दृष्टिः**

उन्नम्य तारकामग्रपुटद्वन्द्वविकासिनी ।
समा दृष्टिस्समाख्याता विस्मये विस्मिताभिधा ॥

सोमेश्वरः

**विस्रंभः—संगीत शृङ्गाराङ्गम्**

परिचयाभ्यासात्साध्वसाभ्युपगमो विस्रंभः ।

भोजः

यद्वयस्तचित्ते स्फुरति तत्तत्परिचितान्प्रति ।
निश्शेषं बोधयन्भावो विस्रंभ इति कीर्तितः ॥

भावविवेकः

**विस्रंभणं—संगीत शृङ्गाराङ्गम्**

समागतायाः संप्रयोगार्थं प्रश्वासनापूर्वरङ्गो विस्रंभणम् ।

भोजः

**विहगाधिपजृम्भितम्—नृत्तकरणम्**

गारुडं स्थानकं हस्तौ पताकौ पुरतो गतौ ।
प्रक्षिप्तं तु शिरोदृष्टिरुल्लोकितसमाह्वया ।
उत्कुञ्चिता भवेच्चारी विहगाधिपजृम्भितम् ॥

नन्दी

गारुडं, स्थानम्। उत्कुञ्चिता, गतिः। यथा,
उत्क्षिप्य कुञ्चितौ यत्र चरणौ पुरतः क्रमात्।
निक्षिप्येते मुहुः प्रोक्ता चारीह्युत्कुञ्चितामिधा॥

विहङ्गः—रागः
रिपोज्झितः सभूयिष्ठो विहङ्गो रागजस्तथा।
ग्रहांशन्यासाः षड्जे। मदनः

विहङ्गडः—मेलरागः
विहङ्गडे गनी तीव्रावरोहे तु रिवर्जिते।
गान्धारोद्ग्राहसम्पन्ने न्यासांशो रिस्वरो मतः॥
अहोबिलः

यद्यस्मिन्पञ्चमोद्ग्राहः स्यादारोहे गवर्जनम्।
मूर्छनामध्यमे चापि पराहित्यं सदा भवेत्॥
सायं गेयः

विहङ्गपक्षहस्तः
करपृष्ठौ तु संयुक्तौ वक्रिताश्चतुरङ्गुलाः।
अङ्गुष्ठाङ्गुष्ठसंयोगे विहङ्गपक्षहस्तकः॥
पुरोमुखः पुरोभागे गृध्रे घूके प्रदर्शयेत्।
पक्षिणां पक्षभावेऽपि विहङ्गपक्षहस्तकः॥
विनायकः

विहङ्गलरागध्यानम्
विधुकरगौरस्सुरभिः सुमनःकृतभूषणाम्बरेषुधनुः।
विरहिजनमनोमोही विहङ्गलः कीरवाही सः॥
सोमनाथः

विहसितम्—दर्शनम्
पु(स्फु)रत्तारं निर्निमेषं समं विहसितं भवेत्।
वेमः

अनिमेषस्फुरत्तारं समं विहसितं विदुः।
शारदातनयः

—हास्यरसभेदः
हास्यशब्दे द्रष्टव्यम्.

विहसी—देशीलास्याङ्गम्
स्मितवक्त्रस्य विहसी पद्मस्येव मनोहरम्।
ज्यायनः

विहसी तु तदा ज्ञेया यदा स्यात्सुन्दरं मतम्।
अशोकः

विहसी स्यात् स्मितं वक्त्रं पद्मसौन्दर्यपेशलम्॥
कुम्भः

विहृतम्
प्राप्तानां प्रतिवचसां क्रियते यद्भाषणं स्त्रीभिः।
व्याजात्स्वभावतो वा ह्येतरसमुदाहृतं विहृतम्॥
भावविवेकः

—मण्डलम्
दक्षिणो जनितां कुर्यात् उद्वृत्तां च तथाऽपरः।
चरणः स्पन्दितां कुर्यादुद्वृत्तां दक्षिणस्तथा॥
वामोऽलातां दक्षिणस्तु सूचीं कुर्यादतःपरम्।
पार्श्वक्रान्तां तु वामाङ्घ्रिमाक्षिप्तां दक्षिणः पुनः॥
कृत्वापसव्यसव्याभ्यां विधाय भ्रमरीं ततः।
चारीं कुर्याद्दण्डपादां वामस्सूचीं तथैव च॥
भ्रमरीं चाथ दक्षस्तु भुजङ्गत्रासितां ततः।
वामः कुर्यादतिक्रान्तां यत्र तद्विहृतं भवेत्॥
वेमः

विह्वलम्—दर्शनम्
अविश्रान्त्या चलत्तारं तद्विह्वलमुदाहृतम्।
वेमः

अनवस्थिततारं यत्तद्विह्वलमुदाहृतम्।
शारदातनयः

वीची—ध्रुवावृत्तम्
वीथीति नान्यदेवेन पठितम्।
यत्र स्युश्चरणे त्रीण्यादौ निधनं दीर्घाणीह तु सा।
वीथ्याख्या कथिता—यथा—गज्जन्तो जलआ (छाया) गर्जन्ते जलदाः॥

मध्यमोत्तमपात्राणां पञ्चवक्त्रेण वीथिका।
सदा मालवकैशिक्यां शृङ्गारे हर्षवत्तथा॥
नान्यः

पञ्चवक्त्रेणेति। ईश्वरस्य मुखपञ्चकभवैस्तालैः चञ्चत्पुटादिभिः।

वीणाः—अलब्धलक्षणाः
रावणवीणा, अम्बिकावीणा, बाणवीणा, काश्यपवीणा, स्वयंभुः, भोञ्चिवीणा, मनोरथा, गणनाथा, कौमारी, अणिवाणि, अधिकचित्रिका, नटनागरिका, कुम्भिका, मल्लरि, यकुलाष्टि (?), घोषावती, तन्त्रीसागरः, अम्बुजवीणा— पा—सोमनाथेन स्मृताः

वीणाः
वीणारूपं ततोऽत्रैव प्रोच्यते सादरं मया।
वीणाघोषैकतन्त्र्या स्यात्तन्त्रीभ्यां नकुलाभिधा॥

त्रितन्त्रीभिस्त्रितन्त्र्याख्या चित्रा सप्तभिरेव च ।
विपञ्ची नवभिः ख्याता रम्या स्यान्मत्तकोकिला ।
तन्त्रीणामेकविंशत्या स्थानत्रयविभूषिता ॥

श्रीकण्ठः

## वीणा

वीणाशब्देन स्वरमण्डलापरनाम्नी मत्तकोकिलावीणोक्ता ।

नारायणः

## वीणाप्राणाः

कत्रवाडो वीडवाडः छन्दो धारा च कौक्कुटी ।
कक्कलो हांफगुंफेति तिरपो वह्णिर्वलिः ॥
वयणिः कोमलिस्तीषिश्चोषिर्भरितपूरितौ ।
तुहरः प्रहरत्राणः प्राणाद्या वैणिका मताः ॥

सुधाकलशः

## वीणाभेदाः

वाद्यं ततेति वीणा स्यादष्टधा सा निरूप्यते ।
रुद्रवीणा ब्रह्मवीणा तौम्बुरं स्वरमण्डलम् ।
पिनाकी किन्नरी दण्डी रावणस्य करोऽपरः ॥

अहोबिलः

विपञ्ची वल्लकी चित्रा हस्तिका परिवादिनी ।
शततन्त्री जया ज्येष्ठाऽऽलापिनी त्रसरा तथा ॥
नकुलोष्ठी घोषवती किन्नरी मत्तकोकिला ।
निश्शङ्कवीणा सारङ्गी कूर्मा...... ॥
औदुम्बरी पिनाकी च ततो रावणहस्तकः ।
षट्कर्णेत्यादिभिर्भेदैस्ततं प्रोक्तं मनीषिभिः ॥

हम्मीरः

वक्रा कूर्मास्त्वलाबूश्च वीणाद्या त्रिविधा मता ।
विपञ्ची वल्लकीमत्तकोकिलैन्द्री सरस्वती ॥
गान्धर्वी ब्रह्मिका सप्त वक्रास्तन्त्र्यः कला नव ।
संवादिनी वितन्त्री च किन्नरी परिवादिनी ॥
वध्यासक्ता पञ्च कूर्माः ।
वितानो नकुलश्चेति द्विधालाबूः प्रकीर्तिता ।
वितन्त्रिका विशोकेति चेश्वरी परिवादिनी ।
सदाशिवागमाद्ज्ञेया यथागमनिदर्शनम् ॥

नान्यः

सप्तभिश्च भवेच्चित्रा विपञ्ची नवभिस्तथा ।

भरतः

एकविंशतितन्त्रीभिः महती नारदीति च ।

नान्योदाहृतम्

एकविंशतितन्त्रीभिः महावीणाः प्रकीर्तिताः ।
सप्ततन्त्री भवेच्चित्रा नवतन्त्री विपञ्चिका ॥
वल्लकी षड्गुणा चैव तथा धूसरिकेति च ।
द्वितन्त्रीकास्तु विज्ञेया अलाबूपात्रसंज्ञिताः ॥
(किन्नरी, पिनाकी, सारवी, इत्यलाबूभेदाः)

नान्यः

एकविंशतितन्त्रीकां नारदोऽवादयन्मुनिः ।
चित्रां मतङ्गः स्वातिश्च विपञ्चीमिति तद्यथा ॥
त्रिग्रामस्वरसंख्याभिस्तन्त्रीभिर्महतीति (२१) या ।
नारदो वादकस्तस्या नापरो दिवि विश्रुतः ॥
अत्र व्यक्तास्त्रयो ग्रामाः स्फुटास्सप्त स्वरा अपि ।
प्रतिस्वरं प्रतिग्रामं मूर्छनास्त्वेकविंशतिः ॥
तानास्त्वेकोनपञ्चाशद्गणितास्सप्तभिः स्वरैः ।
चित्रोक्ता सप्ततन्त्रीभिः वक्तिसप्तस्वरान्स्फुटान् ॥

नान्यः

विपञ्ची—मतङ्गो वादकस्तस्याश्चैत्रिको नाम नापरः ।
स्वातिर्वैपञ्चिकः ख्यातो निर्ममे पुष्कराणि यः ॥
विपञ्च्यां नवतन्त्रीषु स्वरास्सप्त तथापरौ ।
काकल्यन्तरसंज्ञौ च द्वौ स्वराविद्यमानि च ।
एवं मतङ्गः स्वे शास्त्रे प्रोक्तवान् यन्निदर्शितम् ॥
अष्टौ द्वादश तन्त्र्यश्च यासां तन्त्र्यश्शतं तथा ।
तास्सर्वा यज्ञयोगिन्यो वीणा वीणादनामिका ? ॥

नान्यः

आलावणी ब्रह्मवीणा किन्नरी लघुकिन्नरी ।
विपञ्ची वल्लकी ज्येष्ठा चित्रा घोषवती जया ॥
हस्तिका कुब्जिका कूर्मा सारङ्गी परिवादिनी ।
त्रिसरी शततन्त्री च नकुलैन्द्री च कर्तरी ? ॥
औदुम्बरी पिनाकी च निबद्धः पुष्कलस्तथा ।
तथा रावणहस्तश्च रुद्रोऽथ स्वरमण्डलः ॥
कपिलासी मधुस्यन्दी घोणेत्यादि ततं भवेत् ।
सिद्धैषां घटना लोके पारम्पर्योपदेशतः ॥

नारायणः

रागांस्तु मेलप्रभवांस्तु तत्तद्रागप्रसङ्गेऽपि निरूपयामः ।
निरूपितानामपि मेलकानां स्फुटा विपञ्च्यां भवति प्रतीतिः ॥
निरूप्यते तेन तथाऽत्र वीणा सा चापि वीणा त्रिविधा विभाति ।
तत्रादिमा स्यात्किल शुद्धमेलवीणा च सा सर्वजनैकहृद्या ॥
ततो द्वितीया खलु मध्यमेलवीणा च सा सर्वजगत्प्रसिद्धा ।

स्यादच्युतश्रीरघुनाथभूपमेलाख्यवीणा कथिता तृतीया।
विज्ञोऽपि वीणाः प्रतिपादयामो यथाक्रमं वैणिकबोधहेतोः॥

रघुनाथः

ततो वीणादिके वीणाः पिनाकी किन्नरीमुखाः।
पिनाकी सधनुस्तुम्बा किन्नर्यो द्वित्रितुम्बलाः॥
वीणासु देववीणाद्या विज्ञेया नादपूरिता।
शिवस्य वीणाऽनालम्बी सरस्वत्यास्तु कच्छपी॥
विश्वावसोश्च बृहती महती नारदस्य च।
कलावती तुम्बुरोस्तु गणानां च प्रभावती॥
तथा कोशवती वीणा विपञ्ची कण्ठकूणिका।
वल्लकी ब्रह्मवीणेति वीणाभेदा ह्यनेकशः॥
एकतन्त्री द्वितन्त्री च त्रितन्त्री सप्ततन्त्रिका।
एकविंशतितन्त्री चेत्युत्तमा मध्यमाऽपरा॥
भजते सर्ववीणासु एकतन्त्री प्रधानताम्।

सुधाकलशः

तालस्थापनम् (आधुनिकायां वीणायाम्)

तर्जन्या स्फोटनं सर्वस्वरेषु परिकल्पितम्।
ऊर्ध्वं पूर्वमधः पश्चादित्येवक्रमशो भवेत्॥
कनिष्ठास्फोटनख्यातस्फोटस्स द्रुतबोधकः।
प्रवर्तते च तालादावित्येवं स्फोटलक्षणम्॥
ध्रुवेथत्रिपुटे सप्तचतुर्दशह्ठे ध्रुवे।
आदावष्टचतुस्त्वेके मट्ठे झम्पे कला दश॥
नास्त्यधस्ताडने स्फोट ऊर्ध्वस्फोटानुगो भवेत्।
क्षिप्रं स्फोटद्वयं झम्पद्रुताऽनुद्रुतबोधकम्॥
संयुक्ताक्षरकाले समध्यमाङ्गुलिताडनम्।
एकस्वरस्य द्वित्वादौ तत्तत्संख्यं स्वताडनम्॥

परमेश्वरः

—अङ्गुलिचमत्कारः

तर्जन्या स्फोटनं सर्वस्वरेषु परिकल्पितम्।
ऊर्ध्वं पूर्वमधः पश्चादित्येव क्रमशो भवेत्॥
कनिष्ठास्फोटना ख्यातः स्फोटस्सद्रुतबोधकः।
प्रवर्तते च तालादावित्येवं स्फोटलक्षणम्॥
ध्रुवे च त्रिपुटे सप्त चतुर्दश ह्ठे ध्रुवे।
आदावष्ट चतुस्त्वेके मट्टे झम्पे कला दश॥
नास्त्यधस्ताडने स्फोट ऊर्ध्वस्फोटानुगो भवेत्।
क्षिप्रं स्फोटद्वयं झम्पे द्रुतानुद्रुतबोधकम्॥
संयुक्ताक्षरकाले तु मध्यमाङ्गुलिताडनम्।
एकस्वरस्य द्वित्वादौ तत्तत्संख्यं स्वताडनम्॥

वीणायां गमकानां तु भेदो दशविधस्ततः।
होन्नुस्थानेषु तर्जन्या स्तम्भनं मध्यमोत्प्लवः॥
अवरोहे प्रतीहासं मध्यमोत्प्लवनं विदुः।
मध्यमोत्प्लवनेऽप्येवमेकस्थानापसर्पणम्॥
सिंहावलोकनं नाम तद्वदेवावरोहणे।
क्षिप्रापसर्पणं जारुरारोहे शोभने स्फुटम्॥
अवरोहापसर्पस्तु विटिरित्युच्यते तथा।
तन्त्र्यां तु मध्यमाङ्गुल्या स्फोटो नोकुर्विदुस्स चेत्॥
स एव चेद्दृढास्फोटः पट्टुः पटुरवो भवेत्।
आरिकास्वरभेदाय स्थाने तन्त्र्यपकर्षणम्॥
स्थाने तु गमकं नाम तन्त्रीकम्पः पुनः पुनः।
स्फुरितं तर्जनीस्तम्भो मध्यमोत्प्लवनं तदा॥
किञ्चिच्च मध्यमास्फोटो होन्नुनोक्कूभयोपमः।
इत्येवं तु चमत्कारो रागालापे प्रवर्तते॥
तत्र तत्र विशेषस्तु कल्पनीयस्सुबुद्धिभिः।
स्वरक्रमस्स्यादारोहे व्युत्क्रमस्त्ववरोहणम्॥
केषां चित्तत्र रागाणां वक्रानाम गतिर्यथा।
कश्चित्स्वरमुपक्रम्य तद्द्वितीयं प्रताड्य च॥
पुनश्च प्रथमं प्राप्य तृतीयमनुधावति।
श्रुतिरित्युच्यते मेलस्त्वन्यतन्त्री स्वरान्तरे।
युक्तं नाम दृढस्पर्शः किञ्चित्कर्षणपूर्वकः॥

परमेश्वरः

—स्वरस्थानानि

स्वरस्य हेतुभूताया वीणायाश्चाक्षुषत्वतः।
तत्र स्वरविबोधार्थं स्थानलक्षणमुच्यते॥
ध्वन्यवच्छिन्नवीणायां मध्ये तारकसंस्थितः।
उभयोष्षड्जयोर्मध्ये मध्यमं स्वरमाचरेत्॥
त्रिभागात्मकवीणायां पञ्चमः स्यात्तदग्रिमे।
षड्जपञ्चमयोर्मध्ये गान्धारस्य स्थितिर्भवेत्॥
सपयोः पूर्वभागे च स्थापनीयोऽथ रिस्वरः।
सपयोर्मध्यदेशे तु धैवतं स्वरमाचरेत्॥
तत्रांशद्वयसंत्यागान्निषादस्य स्थितिर्भवेत्।

अथ विकृतस्वराणां स्थानानि—

भागत्रयान्विते मध्ये मेरो रिषभसंज्ञितात्।
भागद्वयोत्तरं मेरोः कुर्यात्कोमलरिस्वरम्॥
मेरुधैवतयोर्मध्ये तीव्रगान्धारमाचरेत्।
भागत्रयविशिष्टेऽस्मिंस्तीव्रगान्धारषड्जयोः॥

पूर्वभागोत्तरं मध्ये मं तीव्रतममाचरेत् ।
भागत्रयान्विते मध्ये पञ्चमोत्तरषड्जयोः ॥
कोमलो धैवतः स्थाप्यः पूर्वभागे मनीषिभिः ।
तथैव धसयोर्मध्ये भागत्रयसमन्विते ॥
पूर्वभागद्वयादूर्ध्वं निषादं तीव्रमाचरेत् ।
रिषभश्शुद्ध एवासौ पूर्वगान्धार इष्यते ॥
गान्धारश्शुद्ध एवासौ रिस्तीव्रतर इष्यते ।
अतितीव्रतमो गः स्यान्मध्यमश्शुद्ध एवहि ॥
धैवतश्शुद्ध एवासौ निषादः पूर्वसंज्ञकः ।
निषादश्शुद्ध एवासौ धस्तीव्रतर इष्यते ।
एवं स्यात्सर्वयन्त्रेषु स्वरस्थानस्य लक्षणम् ॥

अहोबिलः

अहोबलस्य स्वरस्थापनोक्ततन्त्र्यन्वरमानं सुन्दरय्यर् नाम्ना विदुषा अङ्गलभाषायां सम्यक् बीजगणितविस्तरयुक्त्या श्रीवेङ्कटेश्वर मासिकपत्रिकायां चतुर्थसंपुटे चर्चितमस्ति । तत्राङ्लेयमतसंवादोऽपि परामृष्टः ।

—स्वरस्थापनक्रमः (अद्यतनकाले)

सङ्ग्रहीष्यामि वीणाया लक्षणं शास्त्रसम्मतम् ।
सुषुम्नानाडिसदृशे वीणादण्डे फणायिते ॥
तन्त्रीसप्तकमेतासां मध्ये त्रिकमधोगतम् ।
चतुष्कमूर्ध्वभागस्थं तासां संज्ञां विवृण्महे ॥
आरभ्य पित्तलातन्त्री मन्द्रमध्यमतारकाः ।
अनुमन्द्रो विशेषः स्यान्नादकारविभेदने ॥
मन्द्रस्तु मन्दरं ब्रूते मध्यमो मध्यमस्वरः ।
तारस्तूच्चस्वरं ब्रूयादनुमन्द्रोऽतिमन्दरः ॥
अधो गतं त्रिकं तालज्ञानार्थमुपयुज्यते ।
चतुर्विंशतिसंख्याकास्सार्थस्तत्र स्वरान्तरे ॥
एतास्त्वष्टाष्टभेदेन त्रिस्थायिध्वनिभेदतः ।
तत्र तन्त्रीचतुष्केऽपि स्थानं षण्णवतिस्फुटम् ॥
द्वात्रिंशत्स्थानमधिकं लीनं तत्रैव सारिषु ।
षड्जर्षभगान्धारमध्यपञ्चमधवताः ॥
निषादश्चेत्यमी सप्तवीणालयगताः स्वराः ।
तन्त्रीनादस्तु षड्जः स्यात्स्थानेषु ऋषभादिकाः ॥
ऋषभस्त्रिविधः प्रोक्तो द्विचतुष्षट्छ्रुतिक्रमात् ।
गान्धारोऽपि त्रिधा शुद्धान्तरसाधारणक्रमात् ॥
चतुःश्रुत्यृषभे शुद्धः षट्छ्रुतावन्तरः स्थितः ।
साधारणाख्यगान्धारः पृथगात्मतया स्थितः ॥

पृथगेव द्विधा शुद्धमध्यमप्रतिमध्यमौ ।
पञ्चमोऽथ त्रिधा धैवं द्विचतुष्षट्छ्रुतिक्रमात् ॥
निषादस्त्रिविधः शुद्धकैश्यकाकल्यभेदतः ।
चतुःश्रुतिधैवते तु निषादश्शुद्ध इष्यते ॥
षट्छ्रुतौ धैवते कैश्यनिषादोऽन्यः पृथक्स्थितः ।
तारषड्जस्वरश्चेति द्वादशामी विभेदतः ॥
एते स्वराः क्रमेणैव द्वादशाधोमुखार्धिताः ।
सप्तस्वराणां भेदेन वीणायां षोडशस्वराः ॥
प्रक्रमद्वयभेदेन द्वात्रिंशद्भेद उच्यते ।
तन्त्रीचतुष्केऽपि षड्जपञ्चमावष्टभेदिनौ ॥
मध्यमः षोडशविधः चतुर्विंशतिभेदिनः ।
निषादर्षभगान्धारधैवता इति वैणिकैः ।
अष्टाविंशोत्तरशतमाहत्येति प्रकीर्तितः ॥

परमेश्वरः

| | | | | | |
|---|---|---|---|---|---|
| स भेदा | ८ | म | १६ | नि. | २४ |
| रि. | २४ | प | ८ | आहत्य | १२८ |
| ग. | २४ | ध | २४ | | |

—हस्तव्यापारः

घातः पातश्च संलेख उल्लेखश्चावलेखकः ।
भ्रमरस्सन्धितश्छिन्नो नखकर्तरिकेत्यमी ॥
व्यापारा वैणिकैः ख्याता नवदक्षिणहस्तजाः ।
स्फुरितः खसितश्चेति द्वयं स्याद्वामहस्तजम् ॥
घोषो बिन्दुश्च रेफश्च मूर्छना शुकवक्त्रकः ।
निष्कोऽटितोर्धचन्द्रश्च स्खलितश्चार्धकर्तरी ॥
प्रसारः कुहरश्चैव तलहस्तश्च कर्तरी ।
उभयोः करयोरेते व्यापारास्तु त्रयोदश ॥

कुम्भः

एते व्यापाराः केवलमेकतन्त्रीवीणायां प्रसिद्धा इत्यस्मामेवोदाहृताः लक्षणज्ञैः ।

## बीणारहस्यम्

लघुः ग्रन्थः । केवलं रेखाकोष्ठरीत्या रागस्थानानि निर्णीयन्ते । अद्यतनकालरागप्रस्थानमत्र दीयते ।

## वीणालक्षणम्

परमेश्वरकृतम् । परिच्छेदत्रयवत् । अत्र पञ्चदशमेला विचारान्ते रागाणां अद्यतनकालवादनप्रकारो निरूपितः । कालः १७००

**वीणावादनप्रकाराः**—अलब्धलक्षणाः

पा—सोमनाथेन स्मृताः—

दण्डिय, चित्रं, मृदुः, ललिः, माधुर्यं, सयठाणं, मोगसालः, मुकलः, अयगणः, करहरणं, पोट्टवणिगः, तिरुपुः, पत्तिताडः, षट्टिकर्तरी. जन्यजनकरचना.

**वीणावादनप्राणः**

अयं वीणावाद्यमिति, वादनविन्यास इति च बहुधा बहुभिरुच्यते ।

**वीणावाद्यभेदाः**

छन्दो धारा कैकुटी च कङ्कालो वस्तुतूर्णकौ ।
गजलीलाभिधानं च तथैवोपरिवादनम् ॥
दण्डकं च तथा ज्ञेयं वाद्यं पक्षिरुताभिधम् ।
एतद्दशविधं नाम्ना वीणावाद्यं समीरितम् ॥

पार्श्वदेवः

**वीथी**—मात्रावृत्तम्

चतुर्मात्रिकात्रयः, र ग ।

विरहाङ्कः

—रूपकम्

सा च त्रिभिः पात्रैः प्रयोक्तव्या । यथा—वकुलवीथिका । उत्तमाधममध्यमनायिका भूषिता त्रिप्रकृतियुता बीजबिन्दुकार्यैरर्थप्रकृतिभिर्युक्ता सन्धिद्वययुक्ता मुखनिर्वहणयुता नानारसभावसंहिता अङ्गत्रयोदशका । उद्घात्यकादीनि वीथ्यङ्गानीत्युच्यन्ते । उदाहरणम्—राधाख्या वीथी । सागरनन्दी

मुखनिर्वहणे सन्धी वीथ्यां वृत्तिस्तु कैशिकी ।
द्वाभ्यां प्रयोज्या पात्राभ्यां कचिदेकेन वा भवेत् ॥
अङ्गी सर्वरसस्पर्शी शृङ्गारोऽस्याः प्रधानतः ।
युक्ता लास्याङ्गवीथ्यङ्गैः सम्यगुद्घात्यकादिभिः ॥
भवेयुर्वा न वेत्यस्यां लास्याङ्गान्याह कोहलः ।
वीथ्यां शृङ्गाररूपत्वाद्विधेयानीति भोजराट् ॥
एकाङ्केव भवेद्वीथी रससूच्योऽत्र संभृतः ।
यथा वकुलवीथी स्यादिन्दुलेखादयो यथा ॥

शारदातनयः

**वीरः**—तानः

मध्यमग्रामे रिधहीनौडुवः

स नि प म ग. कुम्भः

—रसः

उत्साहः स्थायिभावो यः स वीरो रस उच्यते ।
अयं मोहोऽविषादश्च व्यवसायः पराक्रमः ॥
अविस्मयप्रतापाद्या विभावा अस्य हेतवः ।
आक्षेपवाक्यप्रमुखैरनुभावैः प्रकाशयेत् ॥
वीरहृष्टधाद्यो भावा भवन्ति व्यभिचारिणः ।
युद्धवीरो दानवीरो दयावीर इति त्रिधा ॥
पुरुषेपूत्तमेषु स्यात्तद्योग्यव्यभिचारिमान् ॥

विप्रदासः

अथ वीरो नामोत्तमप्रकृतिरुत्साहात्मकः । स चासम्मोहाध्यवसायनयविनयबलपराक्रमशक्तिप्रतापप्रभावादिभिरुत्पद्यते । स्थैर्यधैर्यशौर्यत्यागवैशारद्यादिभिः अनुभावैः प्रयोक्तव्यः । धृतिमतिगर्वावेगौग्र्यामर्षस्मृतिरोमाञ्चप्रतिबोधाद यस्सञ्चारिणः ।

भरतः

उत्तमवर्णानां हि सर्वत्रोत्साहाभ्यङ्गो भवति । अत एव चतुर्ष्वपि नायकेषु वीरत्वमनुयायित्वेन वक्ष्यते धीरोदात्त इत्यादि । असंम्मोहेनाध्यवसायो हि वस्तुतत्त्वनिश्चय इति मन्त्रशक्तिर्दर्शिता । वस्तुनो ह्यत्रोदाहरणं सर्वमेव रामादिचरितम् । वैशारद्यमिति सामाद्युपायचतुष्कस्य, एकद्वित्रिचतुरादिभेदः यथाविषयं नियोजनम् ।

अभिनवः

प्रस्वेदरक्तवदननयनत्वादिक्रोधानुभावरहितो युद्धवीरः । अन्यथा रौद्रः—इत्यनयोर्विवेकः ॥

रसविवेकः

वीररसे च युद्धादिभावेऽपि न रौद्रत्वम् । रत्साहन्यायप्रधानात् । रौद्रे तु मोहाहङ्कारापन्यायप्राधान्यमित्यनयोन साङ्कर्यम् ॥

रामचन्द्रः

रा दान इति यो धातुर्दाने छेदे च वर्तते ।
ला दान इत्ययं धातुर्ज्ञानखण्डनयोरपि ॥
रलयोरविशेपोऽपि कथितश्शब्दवेदिभिः ।
विरुद्धान् राति हन्तीति वीरशब्दस्य निर्वहः ।
विविधं च विरुद्धं च लाति जानाति कृन्तति ॥
एवं वा वीरशब्दार्थः कथितः पूर्वसूरिभिः ।
प्रेरयत्यत्र विद्विष्टानिति वीरो निरुच्यते ॥

शारदातनयः

**वीरघण्टारवः**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स म प ध नि स.

(अव) स नि ध प म ग रि ग म स मञ्ज

**वीरनादः**—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि ग म नि स.

(अव) स ध प म रि स. मञ्ज

वीरप्रताप:—मेलराग: (धीरशङ्कराभरणमेलजन्य:)
(आ) स ग म प ध स.
(अव) स नि ध प म ग रि स. मञ्ज

वीरमति:—मेलराग: (मायामालवगौलमेलजन्य:)
(आ) स रि म प ध स.
(अव) स ध म रि ग रि स. मञ्ज

वीरलीला—मेलराग: (शुभपन्तुवरालीमेलजन्य:)
(आ) स ग म प ध नि स.
(अव) स नि ध म ग रि ग स. मञ्ज

वीरवर्तितम्—नृत्तकरणम्
पार्ष्णिविद्धं धुतं शिर: पताकशिखरौ क्रमात् ।
वीरा दृक् वीरचारी च भवेत्तद्वीरवर्तितम् ॥ नन्दी

वीरचारी,
उद्धतोत्क्षिप्तपादाढ्या गम्भीरा युद्धगोचरा ।
दूरस्थापितपादा च वीरा गतिरुदीरिता ॥

वीरवसन्त:—मेलकर्ता (वरुणप्रियामेलजन्य:)
(आ) स रि ग म प ध नि प स.
(अव) स नि ध प म ग रि स. मञ्ज

वीरविक्रम:—देशीताल:
वीरविक्रमताले तु लघुद्रुतयुगं गुरु । । ० ० ऽ वेम:
वीरविक्रमताले तु लौ द्रुतौ च गुरु: स्मृत: । । ० ० ऽ नन्दी

था गा दा धा धा (जग) । । ० ० ऽ
वीरविक्रमताले तु लौ द्रुतश्च गुरु: स्मृत: ॥
। । ० ऽ. जगदेक:

वीरशेखर:—देशीताल:
मभौ नलगपाश्चैव वीरशेखरसंज्ञके ।
19 मात्रा: तालप्रस्तार:

वीरसङ्काशिनी —मेलराग: (मायामालवगौलमेलजन्य:)
(आ) स ग म रि ग म ध नि ध म प ध नि स.
(अव) स नि ध प म ग रि स. मञ्ज

वीरहास:—राग:
न्यासांशग्रहपञ्च...... प्रान्तस्फुरन्मध्यमो
गान्धारर्षभनिस्वनेन रहितोपन्यस्तषड्जध्वनि: ।
शृङ्गारे मकरध्वजाधिपतिको यो नन्दयन्तीभवो
गन्धर्वालुमताल्यतानविततस्त्वाद्वीरहास: स्तु स: ॥ नान्य:

पञ्चमांशो मध्यमान्त: षड्जापन्यासस्संयुत: ।
गान्धारर्षभहीनश्च वीरहास इहेष्यते ॥ मतङ्ग:

वीरा—दृष्टि:
क्षुब्धा विकसिता दीप्ता गम्भीरा मध्यतारका ।
उत्फुल्लमध्या दृष्टिस्तु वीरा वीररसे स्मृता ॥ सोमेश्वर:

अक्षुब्धा समतारा या गम्भीरोत्फुल्लमध्यभाक् ।
दीप्ता विकासिता दृष्टिर्वीरा सा वीरगोचरा ॥
माधुर्यधैर्यगाम्भीर्यौदार्याणि तु विवृण्वती ।
शोभा तेजोविशेषादीन्सत्वभेदांश्च सा किल ॥ अशोक:

—गति:
वामे तु शिखरं धृत्वा दक्षिणेन पताकिकम् ।
दूरादागमनं यत्तु वीरा गतिरुदीरिता ॥ नाट्यदर्पणे

—श्रुति:
मध्यमस्य प्रथमा श्रुति: ।

वीरुधबन्धनम्—चालक:
त्रिपीणं भङ्गलुठनं पार्श्वयो: पुरतस्तथा ।
कृतं चेन्मण्डलावृत्या भवेद्वीरुधबन्धनम् ॥ वेम:

वृत्तम्—प्रबन्ध:
छन्दोनुसारितालेन ललितं येन केनचित् ।
स्वरैर्युक्तं वियुक्तं वा वृत्तं गायन्ति कोविदा: ॥ जग-मल्ल:

पाटतेन्नगतालैश्च विरुदैर्विषयोचितै: ।
गीयते निखिलैरागैरिति वृत्तं निरूपितम् ॥ हरिपाल:

वृत्तबन्धनी—डेङ्कीप्रबन्ध:
निबद्धै: केनचिद्वृत्तबन्धेन वृत्तबन्धनी । मोक्षदेव:

वृत्तमाला—डेङ्कीप्रबन्ध:
ग्रथिता बहुभिर्वृत्तै: वृत्तमाला स्मृता बुधै: । मोक्षदेव:

तिस्र: कोट्यो दश तथा सहस्राणां शतानि तु ।
चत्वारिंशत्तथा द्वे च सहस्राणि दशैव तु ॥

सप्तामिस्सहितान्येव सप्त चैव शतानि च।
षड्विंशतिरिहान्यानि व्याख्यातानि समासतः।
समानि गणनायुक्तिमाश्रित्य कथितानि वै ॥

134217726

भरतः

वृत्तिः—वृत्तिः त्रिविधा
चित्रा, वार्तिकं (वृत्तिः), दक्षिणा, इति।

—प्रबन्धे

शब्दोपबृंहितार्थानां धर्मः संग्राहकोऽस्त्रियः।
तस्य वृत्तित्वमुदितं कालसेनेन भूभुजा ॥

कुम्भः

गुणप्रधानभावेन प्रवृत्तिर्गीतवाद्ययोः।
वृत्तिरित्युच्यते सा तु त्रिविधा लक्ष्यतो यथा।
चित्राद्या तत्परा वृत्तिः दक्षिणा च तृतीयका ॥

कुम्भः

—(वार्तिकम्) वृत्तिः

समभावेन वर्तेते गीतवाद्ये यदा तदा।
चित्तवृत्तिविदा सा तु वृत्तिर्वृत्तिरुदाहृता ॥
चित्तवृत्तिविदेति। कुम्भकर्णेनेत्यर्थः।

कुम्भः

उभयोरसमभावेन वृत्तिर्वृत्तिरुदाहृता।

शार्ङ्गः

गुणप्रधानभावेन प्रवृत्तिर्गीतवाद्ययोः।
वृत्तिरित्युच्यते सा तु त्रिविधा लक्ष्यते यथा ॥

कुम्भः

गुणेति। गुणप्रधानत्वरूपा प्रवृत्तिरित्यत्र गुणप्रधानात् ग्रहणसामर्थ्यात् गीतवाद्ययोः व्यवहार इति गम्यते। कथम्—प्रकृतत्वेन वाद्यस्यैवोपादाने एकस्यैकदा गुणप्रधानभावयोगाद्वयोरुपादानं कर्तव्यम्। तत्र प्रकृतसाहचर्येण गीतं नृत्तं च प्रसक्तम्। तयोर्मध्ये नृत्तापेक्षया वाद्यं प्रति गीतस्यैवान्तरङ्गत्वात् तदेवोपादेयं भवति। तेन गीतवाद्ययोः प्रवृत्तिरिति।

कल्लिनाथः

वृत्तिः—वृत्तिविशेषः

सम एव तु यत्र स्यात्प्रयोगो गीतवाद्ययोः।
साम्येन वर्तनाद्वृत्तिं तद्विदस्तः प्रचक्षते ॥

नान्यः

प्रकृष्टगुणतः स्यात्तु यः समो गीतवाद्ययोः।
तत्र साम्यगुणोत्कर्षात् वृत्तिरित्यभिधीयते ॥

विशाखिलः

वृत्तिः—

वृत्तिर्गुणप्रधानत्वरूपा व्यवहृतिर्मता।
चित्रा वृत्तिर्दक्षिणा च तिस्रस्स्युरिति वृत्तयः ॥

शार्ङ्गः

मुखादिसन्धिषु च व्याप्रियमाणा नायकोपनायकादीनां मनोवाक्कायकर्मनिबन्धनाः पञ्च वृत्तयो भवन्ति। भारती, आरभटी, कैशिकी, सात्त्वती, विमिश्रा चेति।

भोजः

मिश्रा वृत्तिर्भरतेनानङ्गीकृता। उद्भटस्तु अर्थवृत्तिं पञ्चमीमाह। हरिपालस्तु त्राह्मीं वृत्तिं पञ्चमीमाह।

वृत्तिः—शक्तिः

वृत्तिः पदानां व्यापारः पदार्थप्रतिपादने।
सा मुख्या लक्षणा गौणीत्येवं त्रैविध्यमाश्रिता ॥

अर्थमव्यवधानेन स्पृशन्ती मुखवर्तिनी।
मुख्या वृत्तिर्वदन्त्येनामभिधेति विपश्चितः ॥

अभिधेयाविना भूतं स्पृशन्ती लक्षणोच्यते।
स्पृशत्यर्थान्तरं गौणी लक्ष्यमाणगुणान्वयात् ॥

वृत्तिः कार्यवशादेवं कक्ष्यात्रितयचारिणी।
केवलस्याप्रयोगित्वात्पदस्यार्थनिरूपकैः ॥

एतद्वृत्तित्रयं वाक्यकाल एव निरूप्यते।
तस्मिंश्छिजातिसारूप्यं प्रशंसालिङ्गभूमभिः ॥

वृत्तिः परत्र शब्दस्य प्रवृत्तिर्जैमिनीरिता।
वृत्तिः ऽप्यक्षपादोक्ता साहचर्यादिहेतुका।
वृत्त्योर्जघन्ययोरन्तर्दृष्टव्या सकलापि सा ॥

साहित्यमीमांसा

वृत्तिषु रसविभागः—

हास्यशृङ्गारबहुला कैशीकी परिचक्षिता।
सात्त्वती चापि विज्ञेया वीराद्भुतशमाश्रया ॥

रौद्रे भयानके चैव विज्ञेयारभटी बुधैः।
बीभत्से करुणे चैव भारती संप्रकीर्तिता ॥

भरतपाठान्तरम्

शृङ्गारे चाङ्गहास्ये च कैशिकी वृत्तिरिष्यते।
वीरे चाप्यद्भुते चैव वृत्तिः स्यात्सात्वतीमता ॥

भयानके च बीभत्से रौद्रे चारभटी भवेत्।
भारती चापि विज्ञेया करुणाद्भुतसंश्रया ॥

भारती चापि विज्ञेया वीरहास्याद्भुताश्रया।
सर्वेषु रसभावेषु भारती संप्रकीर्तिता ॥

भरतः

वीराद्भुतप्रहसनैरिह भारती स्या-
त्सात्त्वत्यपीह गदिताद्भुतवीररौद्रैः।
शृङ्गारहास्यकरुणैरपि कैशिकी स्या-
दिष्टा भयानकयुतारभटी सरौद्रा ॥

कोंहलः

वाक् प्रधाना तु भारती।
तथा वीररसप्राया विज्ञेया सात्त्वती नृप।
तथा रौद्रप्रचारा च भवत्यारभटी सदा।
शृङ्गारहास्यबहुला तथा भवति कैशिकी ॥

विष्णुधर्मोत्तरे

**वृद्धाः**
पूर्वराजनयाभिज्ञास्सर्वराजप्रपूजिताः।
पूर्वराजोपचारज्ञास्ता वृद्धा इति संज्ञिताः ॥

भरतः

**वृद्धिः—श्रुतिः**
मध्यमस्य चतुर्थी श्रुतिः। मतङ्गः

**वृन्तः—देशीतालः**
लचतुष्कं गुरुद्वन्द्वं लद्रुतौ वृन्ततालके।
9½ मात्राः। तालप्रस्तारः

**वृश्चिकम्—करणम्**
अतीव नमितं पृष्ठं पादो वृश्चिकपुच्छवत्।
क्रमात्करिकरो यत्र वृश्चिकं तदुदाहृतम्।
इदमिन्द्रगजेन्द्रादिगतौ स्याद्गगनाङ्गणे ॥

ज्यायनः

विनियोगं गजानां यत्पूर्ववारोहणे भवेत्।

लक्ष्मणः

**वृश्चिककुट्टितम्—करणम्**
यदा वृश्चिकमादाय स्वबाहुशिरसोः करौ।
निकुट्टितौ विधीयेते पर्यायेणालपल्लवौ।
यदा तदा समाख्यातं बुधैर्वृश्चिककुट्टितम् ॥

ज्यायनः

प्रासादारोहणे चापि विशेषे विस्मये भवेत्।

लक्ष्मणः

**वृश्चिकरेचितम्—करणम्**
हंसपक्षद्रुतभ्रान्त्या रेचितौ भवतः करौ।
स्वस्तिकौ विप्रकीर्णौ च यत्र पादस्तु वृश्चिकः।
व्योमयाने प्रयोक्तव्यमेतद्वृश्चिकरेचितम् ॥

ज्यायनः

छिन्ने घने व्योमयाने वर्षजासिन्धुरार्तिते ?।

लक्ष्मणः

**वृश्चिकहस्तः**
पूर्वोक्तकर्कटे हस्ते मध्यमापसृता यदि।
किञ्चिद्रेचितकश्चेत्तु वृश्चिको वृश्चिके भवेत् ॥

शृङ्गार

तर्जन्यनामिके श्लिष्टे उपर्यङ्गुष्ठमध्यमे।
वृश्चिकामिधहस्तोऽयं कीर्तितो भरतादिभिः ॥
पृष्ठभागे तु चलिते वेण्यां चैव प्रदर्शयेत्।
वक्राकारं पुरो भागे चलितस्सर्पयानके ॥
पुरोभागे स्थितौ तौ चेद्वृश्चिकस्य प्रदर्शने।
वृश्चिकामिधहस्तोऽयं करटीकाविचक्षणैः ॥

विनायकः

**वृश्चिकापसृतः—अङ्गहारः**
लतावृश्चिकनिकुञ्चितमत्तल्लिनितम्बकरिहस्तकटिच्छिन्नानां षण्णां करणानां प्रयोगे वृश्चिकापसृताङ्गहारः नितम्बकरणस्थाने भ्रमरकरणं प्रयोक्तव्यमिति केचिद्वदन्ति।

शार्ङ्गः

**वृषभः—स्वरजातिः**
सप्ताधिकैः स्वरैः पञ्चाशद्भिर्वृषभ उच्यते।

औमापतम्

**वृषभक्रीडितम्—करणम्**
अलातां कुर्वतश्चारीं करौ कुर्वीत रेचितौ।
व्यावृत्तकरणेनाथ कुञ्चितौ मणिबन्धगौ ॥
अलपद्मतलौ बाह्वोश्शिरसौ रेचितौ स्थितौ।
वृषभक्रीडितेऽत्राहुः पताकावपरे करौ ॥

ज्यायनः

**वृषभवाहिनी—मेलरागः (सुवर्णाङ्गीमेलजन्यः)**
(आ) स रि म प ध नि स.
(अव) स नि ध म ग रि स.

मञ्जः

**वृषभहस्तः**

शिखरौ स्पृष्टवदनौ योज्यौ वृषभराशिके ।

शृङ्गारः

**वृषभासनम्**—देशीस्थानम्

चरणौ भुवि जानुभ्यां स्थितौ सौष्ठवान्वितौ ।
संयुतौ विच्युतौ वापि यत्र तद्वृषभासनम् ॥

वेमः

**वेगमध्यमः**—रागः

न्यासांशग्रहपञ्चमध्वनिधरो गान्धारषड्जस्वर-
त्यक्तस्तोकनिषादकादविहृतस्तारस्फुरन्मध्यमः ।
प्रान्तोल्लासितदध्वनिर्जिनमनोहारी च शेषे समो
गीतज्ञैरिह वेगमध्यम इति प्रोक्तो महारञ्जनः ॥

नान्यः

पञ्चमांशग्रहन्यासो धान्तस्सगविवर्जितः ।
निषादाल्पश्रुतिस्तारमध्यमो वेगमध्यमः ॥

मतङ्गः

**वेगरञ्जिका**—रागः

पञ्चमं धैवतं मुक्त्वा स्वरैरन्यैश्च पञ्चभिः ।
निषादस्यापि गीतज्ञैः विज्ञेया वेगरञ्जिका ॥

नान्यः

सरिगमनिरवैश्चित्रैर्मधुरस्वा वेगरञ्जिका चतुरा ।
वेसरनिषादरुचिरा पधहीना भवति गीतविन्महिता ॥

कश्यपः

टक्करागसमुद्भूता भाषेयं वेगरञ्जिका ।
षड्जांशग्रहविन्यासा धपहीना मतारभाक् ।
रिनिभ्यां बहुला पूर्णा युद्धे वीरे नियुज्यते ॥

जगदेकः

**वेगरञ्जी**—रागः

सरिगमैनिषादेन भूयसी मृदुसप्तमा ।
धपाभ्यां विहृता गेया वेगरञ्जी विशारदैः ॥

मोक्षः

अनन्तरं भवेद्वेगरञ्जिका तारमध्यमा ।
षड्जग्रहांशन्यासा च हीनधैवतपञ्चमा ॥
पूर्णा बहुत्वसंयुक्ता निषादर्षभयोस्तथा ।
अङ्गं च टक्करागस्य भाषा चोक्ता मनीषिभिः ॥

हरिः

**वेगरञ्जी**—भाषारागः

टक्करागोद्भवा भाषा वेगरञ्जी विधा यथा ।
अनल्पा सरिगा भूरिनिका मन्द्रनिषादिनी ।
ग्रहांशन्यासषड्जेयं मानेषु विनियुज्यते ॥

भट्टमाधवः

अत्र आपञ्चमान्मन्द्रनिपादपर्यन्तं गेयेति रघुनाथ आह ।
षड्जग्रामे टक्कभाषा वेगरञ्जीति ॥
षड्जस्वरग्रहांशान्ता मन्द्रस्थाननिपादयुक् ।
औडुवा पधहीनत्वादितरैर्भूयसीस्वरैः ॥
विलम्बिता तदा प्रोक्ता रसे शृङ्गारनामनि ।
ननूक्रमविनाशित्वं धैवतस्य महर्षिणा ॥
षड्जग्रामे कथं लोपशासनं धैवतस्य ते ।
तस्या षाडवकारीति तत्रोत्तरमिदं शृणु ॥
उपरागजमार्गत्वादासु लोपो न दुष्यति ।
यतो न लोपनियम उपरागेषु दृश्यते ॥

कुम्भः

**वेगवती**—ध्रुवावृत्तम्

पञ्चमं द्वादशं चैव दीर्घमन्त्यं त्रयोदशम् ।
उत्कृत्यं तु भवेत्पादे वृत्तं वेगवती यथा ॥
युवदिजणाणं सुरुचिररूपो सुखिदयितजणमदणकरो ।
युवतिजनानां सुरुचिररूपस्सुखितदयितजनमदनकरः ।

भरतः

**वेगवाहिनी**—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स ग म प ध नि ध स .
(अव) स नि ध प ग रि स .

मञ्जः

**वेगवाहीनी**—मेलकर्ता

स्यान्नीलकण्ठविधिधेनुहराजशुद्ध-
मध्यं पिकाच्युतहयाच्युतकुञ्जरं च ।
आरोहणे गजमपास्य तु वेगवाहि-
न्याख्यानराग इह षाडवपूर्णजातिः ॥

सरिगपाः शुद्धाः । साधारणो गः चतुःश्रुतिधैवतः । कैशिकी-निषादः ।

परमेश्वरः

**वेगिनी**—पादचारः

पार्ष्णिना वा पदाग्रेण द्रुतं गत्वा तु चालनम् ।
कराभ्यान्त्वलपद्मौ च त्रिपताकौ यथाक्रमम् ।
धृत्वा नटेद्यदि भवेद्वेगवत्त्वेन वेगिनी ॥

नाट्यदर्पणे

## वीणालक्षणकाराः

### वेङ्कटमखी

अयं तञ्जापुरीमन्त्रिवरस्य गोविन्ददीक्षितस्य पुत्रः। महाकवेः यज्ञनारायणदीक्षितस्यानुजः। चतुर्दण्डिप्रकाशिकेति दशप्रकरणात्मको ग्रन्थः अनेन रचितः। रागाणां द्विसप्ततिमेलकर्तृविभागविषये अयमेव प्रथमो निरूपक इति ज्ञायते। तत्पूर्वं रामामात्येन विंशतिमेलाः स्थापिताः। रामामात्यमते बहवो दोषाः मखिनोद्घटिताः। परेषां वीणा दूषिताः। रघुनाथभूपालेन परिपोषितोऽपि तं गोपालकमिति पयति। तन्त्रवार्तिकव्याख्यामपि चकार। अनेन नूतनसर्वदोषहीना कल्पिता वीणा तज्जीवितकाल एवोच्छन्नाभूत्। चतुर्दण्डीगानशैलीं सुष्ठु निरूपितवान्।

तेनैकोनविंशतिमेलाः कल्पिताः। तेषु मुख्यतया पञ्चपञ्चाशद्रागाः ठायालापगीतप्रबन्धोपयोगिन इति लक्षिताः। तेषु सिंहरवोऽनेनैवोन्नीत इति स्वयमेवाह। नागध्वनिः शङ्कराभरणमेलजन्यस्सामश्च अन्धाली श्रीरागजः। उपाङ्गभैरवी, सिंहरवः, कल्याणीपन्तुवराल्यो एते रागाः रघुनाथोपेक्षिता लक्षिता मखिना।

### तुल्जोजीमहाराजः (तुलजा)

अस्य मते एकविंशतिमेलाः। कल्याणदायिनः श्रीरागस्य मेलः प्रथमः। समपाः शुद्धाः। रिधौ पञ्चश्रुतिकौ। गनी साधारणकैशिक्यौ। एतन्मेलजन्याः शुद्धदेशी, माधवमनोहरी, मध्यमग्रामरागः, सैन्धवी कापिः, हुसेनी, श्रीरञ्जनी, देवमनोहरी, मणिरङ्गु प्रभृतयः। जयन्तिसेनरागो रघुनाथेन भैरवीजन्य इत्युक्तम्। तुलजस्तु श्रीरागमेले पठितवान्। द्वितीयो मेलः शुद्धनाटः (तुलजामते) समपाश्शुद्धाः। रिधः षट्छ्रुती। अन्तरः काकली च गनी। उदयरविचन्द्रिका रागो नाटजन्यः। मालवगौलस्तृतीयो मेलः। आन्ध्रदेशा, छायागौल, ठक्क, फलमञ्जरी, मङ्गलकैशिक, मागधी, गौरीमनोहरी, मारुवा, गौलपन्तु, पूर्णपञ्चम, मेघरञ्जी, मालवीरागाः, तृतीयमेलजा इत्याह।

वेलावली चतुर्थो मेलः। अयं रघुनाथमते श्रीरागजः। समपाश्शुद्धाः। रिधौ पञ्चश्रुती। गनी साधारणकाकल्यौ। वराली पञ्चमो मेलः। शुद्धरामक्रो षष्ठो मेलः तज्जन्यो दीपकरागः। अस्य सपरिधाः शुद्धाः। गोऽन्तरः। निषादः काकली। विकृतपञ्चममध्यमः।

शङ्कराभरणस्सप्तमो मेलः। अत्र काकली निषादः। तज्जन्याः शुद्धवसन्त, सरस्वतीमनोहरी, सामन्त, कुरञ्जी, पूर्णचन्द्रिका, सुरसिन्धु, जुलावू, बिलाहुरी, गौडमल्हारक, केदार, प्रभृतयः।

काम्भोज्यष्टमो मेलः। तज्जन्याः बलहंस, नागध्वनि, तरङ्गिणी लक्ष्मनोहरी, यदुकुलकाम्भोजी, नाटकुरञ्जी, कन्नड, नट्टनरायण, षाडवान्धाली, साम, मनोहरा, देवक्री, मोहनकल्याणी, प्रभृतयः।

भैरवी नवमो मेलः। समपदाश्शुद्धाः। रिः पञ्चश्रुतिः। गनी साधारणकैशिक्यौ। तज्जन्या आहरी, इन्दुघण्टारव, आनन्दभैरवी, नागगान्धारी, प्रमुखाः। वीणालक्षणे भैरवीरागस्य चतुःश्रुतिको धैवतः।

मुखारी दशमो मेलः। सर्वे शुद्धस्वराः। तज्जन्यः शुद्धसाधारित इत्युक्तम्। अयं भरतमते सप्तशुद्धरागेष्वन्यतमः।

वेगवाहिन्येकादशो मेलः। सरिमपाः शुद्धाः। धः पञ्चश्रुतिः। अन्तरकैशिक्यौ गनी। अयं रघुनाथेन नोक्तः।

सिन्धुरामक्री द्वादशो मेलः। सपरिधाः शुद्धाः। निगौ काकलीसाधारणौ। मध्यमो विकृतपञ्चमः। एतन्मेलजन्यः पन्तुवरालीत्युक्तम्। अयं वेङ्कटमखिना प्रत्येकमेलत्वेनोक्तः।

हेज्जुजिस्त्रयोदशो मेलः। यस्मिन्निषादः काकलिस्तदन्ये शुद्धाः। गान्धारपञ्चममिन्नपञ्चमौ तज्जन्यरागौ।

वसन्तभैरवी पञ्चदशो मेलः। तज्जन्यो ललितपञ्चमः।

भिन्नषड्जष्षोडशो मेलः। सरिमपधाः शुद्धाः। निगौ काकलीसाधारणौ। अयं रघुनाथेन भैरवीमेले गणितः। भिन्नषड्जमेलजन्यो भूपालः।

देशाक्षी सप्तदशो मेलः। छायानाटोऽष्टादशो मेलः।

सारङ्ग एकोनविंशतितमो मेलः। सपौ शुद्धौ। रिः पञ्चश्रुतिकः। ध षट्छ्रुतिकः। निषादः काकली। शुद्धमध्यमगान्धार इति तुलजेन निर्मिता नूतनसंज्ञा। उक्तं च तेन—

> शुद्धस्य मध्यमस्यात्र गान्धारत्वेन कीर्तनात्।
> शुद्धमध्यमगान्धारसंज्ञास्यैव मया कृता ॥

तोडी विंशो मेलः। यस्मिन् सरिमपधाः शुद्धाः। गः साधारणः। निषादः काकलिः। वीणारहस्ये तोडिरागस्य कैशिकीनिषाद उक्तः। कल्याणी एकविंशो मेलः। सपौ शुद्धौ। रिधौ पञ्चश्रुतौ। गोऽन्तरः। प्रतिमध्यमः। निः काकलिः।

### श्रीकण्ठः

अनेनैकादश मेला अङ्गीकृताः। तेषु प्रथमो मुखारिमेलः। मालवगौलो द्वितीयः। शुद्धास्सरिमपधाः। गनी अन्तरकाकली। श्रीकण्ठेनान्तरकाकली स्वरौ प्रत्येक सार्योरभावात्पतषड्जमध्यमाविति संज्ञाद्वयं कृतम्। उक्तं च—

अन्तरे कथिता नैव सारी काकलिनि स्वरे।
साङ्कर्यं जायते यस्मान्नानुकूल्यं भवेत्ततः ॥
अन्तरस्य स्वरस्यापि सूक्ष्मः काकलिनो ध्वनिः।
विचार्यो विज्ञवर्येण पतादिष्षड्जमध्ययोः ॥
पतादिसमयो (षड्जमध्ययोः) स्सार्यावेकैकश्रुतिवर्जिते।
अन्तरः काकली स्यातां तयोः प्रतिनिधी च तौ ॥

इति तन्मेलजन्याः मल्हारी, पाडी, बङ्गालप्रमुखाः। श्रीरागमेलः तृतीयः। समपास्तत्र शुद्धाः। रिधौ चतुःश्रुती। निगौ कैशिकिसाधारणौ। तज्जन्याः मालवश्री, धन्यासी, भैरवी, देवगान्धारादयः।

चतुर्थो नट्टमेलः। सपौ शुद्धौ। निगौ त्रिश्रुतिकौ च (रिधौ) पतसंज्ञकषड्जमध्यमौ। तथाहि निः काकली। गान्धारोऽन्तरः। चतुःश्रुती। शुद्धनट्टादयस्तन्मेलजन्याः।

पञ्चमः कर्णाटगौडमेलः। समगपाः शुद्धाः। निः कैशिकी। रिधौ पञ्चश्रुतिकौ स्याताम्। एतस्माज्जन्याः कर्णाटबङ्गालसामन्ताः, तोडीवसन्तभूपालघण्टारवादयः।

षष्ठः केदारमेलः। समपगाः शुद्धाः। रिधौ पताद्यौ। (श्रुत्याधिकौ) निश्शुद्धः। वेलावलीनट्टनारायणशङ्कराभरणादयस्तदुद्भवाः।

सप्तमो मल्हारः। सगमपौ शुद्धौ। रिधौ श्रुत्यधिकौ। निषादः काकली। गौडकामोद्याद्य उत्पद्यन्ते।

अष्टमो देशाक्षीमेलः। सनौ पतसंज्ञौ। गान्धारस्त्रिश्रुतिः। समपाः शुद्धाः।

नवमः कल्याणीमेलः। सपौ शुद्धौ। श्रुत्याधिकौ। गान्धारस्साधारणः। कामोदहम्मीरप्रभृतयस्तद्भवाः।

दशमः सारङ्गमेलः। सगमपाः शुद्धाः। निषादः कैशिकी। समौ पतसंज्ञौ।

परमेश्वरः (वीणालक्षणकारः)

अस्य वीणालक्षणनामके ग्रन्थे प्रथमाध्याये वीणालक्षणमुक्तम्। स्वरविन्यासानुसार्येव मेलानां रागाणां च लक्षणमुक्तम्। तद्वीणालक्षणं वीणाप्रसङ्गे दत्तम्। रागलक्षणे गृहीतां संज्ञां वक्ति। यथा—

ये स्वरास्त्रिविधास्तेस्युर्ब्रह्मविष्णुशिवान्विताः।
एवं भेदाय सर्वत्र पर्यालोच्यं मनीषिभिः ॥ इति

ब्रह्मा शुद्धस्वरः। विष्णुः अन्तरगान्धारः कैशिकनिषादश्च चतुःश्रुतिः। शिवः षट्छ्रुतिः साधारणगान्धारः काकलिनिषादश्च।

मालवगौलो मेलः प्रथमः। लक्षणं तु।

षड्जादिधेनुहरमेषसुमध्यपञ्च-
ब्रह्माश्वरुद्रगजषड्जमथावरोहे।
तद्व्युत्क्रमो भवति मालवगौलरागे
संपूर्णनाम बहुकल्पनयानुरागः ॥

अत्र धेनुः ऋषभः। मेषो गान्धारः। गजः निषादः। धेनुहरेति षट्छ्रुतिर्षभः। सगमपाः शुद्धाः। रुद्रगजेति काकलीनिषादः। एतज्जन्याः, नादरामक्रिया, रेगुप्ति, राममनोहरी, सौराष्ट्रमालव्यः।

द्वितीयो नाटमेलः—

बर्हीशधेनु गिरिशाजसुमध्यपञ्च-
काकल्यमल्पहरिरेवमथावरोहे।
गान्धारवर्जमपि राजति नाटरागे
सम्पूर्णषाडवगणे गणितस्तु पूर्वैः ॥

षड्जः शुद्धः। रिः षड्श्रुतिः। गः साधारणः। अल्पो धैवतः। निषादः काकली।

तृतीयः श्रीरागमेलः।

षड्जश्चतुःश्रुतिवृषोऽन्तरमेषशुद्ध-
मध्यः पिकस्तदनु कैश्यनिषाद एव।
श्रीराग एवमथ वक्रगतिस्तु मेषे
धैकेन वर्जिततया स तु षाडवाख्यः ॥

अयमर्थः। सः शुद्धः। चतुःश्रुतिरिः। अन्तरा गः। मपौ शुद्धौ। निषादः कैशिकी। धो लुप्तः।

चतुर्थः कल्याणीमेलः।

बर्ही चतुर्वृषहराजविरुद्धमध्य-
पञ्चाच्युताश्वहरकुञ्जर एवमेव।
कल्याणिराग इति रम्यमनेकभङ्ग्या
सम्पूर्णमेव परिनन्दति याज्ञवल्क्यः ॥

अस्यार्थः। षड्जः शुद्धः। ऋषभश्चतुःश्रुतिः। साधारणो गान्धारः। प्रतिमध्यमः। शुद्धः पञ्चमः। धैवतः चतुःश्रुतिः। निषादः काकली।

पञ्चमश्शङ्कराभरणमेलः। शुद्धः षड्जः। ऋषभश्चतुःश्रुतिः। साधारणो गान्धारः मपौ शुद्धौ। धैवतश्चतुश्श्रुतिः। निषादः काकली।

षष्ठो भैरवीमेलः। षड्जः शुद्धः। चतुःश्रुतिरिषभः। गान्धारोऽन्तरः। शुद्धौ पञ्चममध्यमौ। धैवतश्चतुःश्रुतिः। निषादः कैशिकी।

सप्तमः काम्भोजीमेलः। सश्शुद्धः। रिषभश्चतुःश्रुतिः। गान्धारस्साधारणः। शुद्धौ मध्यमपञ्चमौ धैवतश्चतुःश्रुतिः। अवरोहे कैशिकिनिषादः।

अष्टमः पन्तुवरालीमेलः। रिसपधाः शुद्धाः। गस्साधारणः। प्रतिमध्यो मः। निः काकली। चित्रसेन एवं गायति।

नवमो मुखारिमेलः। सः शुद्धः। रिश्चतुःश्रुतिः। गोऽन्तरः। मश्शुद्धः पश्च। धश्चतुश्श्रुतिः। निः कैशिकी आरोहे निगलोपः। अयं रघुनाथोक्ताद्भिन्नः। स तु शुद्धसर्वस्वरः।

दशमो वरालिमेलः। शुद्धः सः। रिगौ च शुद्धौ। प्रतिमध्यमः पधौ च शुद्धौ। निषादः काकली।

पूर्णाभिधे बहुलकल्पनया वराली
रागे चमत्कृतिमनेकविधां वदन्ति।
बर्हादिषेषु विधिमेष विरुद्धमध्य-
पञ्चादिधैवशिवदन्ति तदोऽभयत्र ॥

आदीति। शुद्ध इत्यर्थः।

तोडीमेल एकादशः। सरी शुद्धौ। गस्साधारणः। मश्शुद्धो धैवतश्च। कैशिकी निषादः। पस्यलोपः। स च कादाचित्कः।

त्रयोदशो वेगवाहिनीमेलः। सरिग पाश्शुद्धाः। गस्साधारणः। धैवतश्चतुःश्रुतिः। निः कैशिकी। आरोहणे निलोपः।

त्रोदशो भूपालमेलः। धसरिपाश्शुद्धाः। गोऽन्तरः। औडुवो सगः।

चतुर्दशस्सामन्तमेलः। समपाः शुद्धाः। रिष्षट्छ्रुति.। गस्साधारणः। धैवतश्चतुःश्रुतिः। काकली निषादः।

पञ्चदशो गौलमेलः सरिमपाश्शुद्धाः। गस्साधारणः। निः काकली। अवरोहे गलोपः। धस्सर्वधा लुप्तः।

अन्ते परमेश्वर आह—

प्रसिद्धा मेलकर्तारो रागराजा इमे पुनः।
एतेषु मिलितान् कांश्चिद्रागान् वक्ष्याम्यनन्तरम् ॥ इति

अस्य मते जन्यरागाः। मालवगौलजाः, नादनामक्रिया, रेगुप्तिः, गमांमनोहरी, सौराष्ट्रा, मालवी एते पञ्च। भैरवीमेले-रीतिगौलानन्दभैरवीजयन्त्याः जाताः। जयन्त्यां निर्वक्रः काम्भोजी जन्यास्सप्तरागा। नाटकुरञ्जी द्विजवन्ती सुरठी-शुद्धसावेरीमोहनयदुकुलकाम्भोजीकेदारगोलाः।

श्रीरागजाः पञ्च। कापीमध्यमावत्युशान्यठाणावसन्ताः। तेषां लक्षणम्।

कापिरागे छागगजौ श्रुतियुक्तौ विशेषदः।
ततस्तु मध्यमावत्या गान्धाराश्चविवर्जनम् ॥ गधलोपः।
उशानिरागे गान्धारे वक्रवर्ज्यौ विशिष्यते।
अठाणायां धैवते तु श्रुतियुक्तत्वमिष्यते।
वसन्तरागे वक्रस्तु निषादस्स्वर उच्यते।

तोडिजाः। आभीरीपुन्नागवराली। कल्याणीजन्यस्सारङ्गः। वेगवाहिनीजन्या वेलावली। शङ्कराभरणमेलजः दशमः। नीलांबरी नवरोज् व्यागडाविलहरीकेदारकुरञ्जीकन्नडामनोहरोदय-चन्द्रिकापूर्णचन्द्रिकाः। नीलाम्बर्यामारोहे रिधौ लुप्तौ। अवरोहे गधौ वक्रौ। व्यागडायामारोहे रिलोपो धोवक्रः। बिलहर्यां मनी वर्ज्यौ। केदारे धलोपः। कुरञ्ज्यामवरोहे धलोपः। कन्नडायां रिलोपः। मनोहरे आरोहे पो वक्रः। अवरोहे मो वक्रः। उदय-चन्द्रिकायामारोहे गनी लुप्तौ। अवरोहे रिर्लुप्तः। पूर्णचन्द्रि-कायामवरोहे गनी लुप्तौ।

## वीणारहस्यकारः

अस्य ग्रन्थस्य प्रणेता क इत्येतावत्पर्यन्तं न ज्ञातम्। ग्रन्थनामापि पुस्तके न दृश्यते। वीणारहस्यमिति नामास्माभिर्व्यवहाराय कल्पितम्। अस्य कर्ता प्रायशः सार्धशतवत्सरात्पूर्वं स्यादि-त्यूह्यते। ग्रन्थेऽस्मिन् षोडशमण्डलानि वर्तन्ते। तानि द्विसप्तति-मेल कर्तृमण्डलानामसंपूर्णभागः प्रथमादिषोडशमण्डलपर्यन्तमेव लिखितमासीदिति चोह्यते। तत्रापि धीरशङ्कराभरणनठभैरवादि मेलसंख्यां निश्चेतुं प्रयुक्तकटपयादिसंज्ञाविशेषाः कुत्रापि न दृश्यन्ते। तस्मात्तत्कटपयादिविशिष्टद्विसप्ततिमेलनाम्नामज्ञात-त्वात् ग्रन्थस्य कर्तुर्जीवितकालः तन्मेलकर्तृनिर्माणकालात्प्राचीनः इति चोह्यते। ग्रन्थरीतिं सम्यक् ज्ञातुं द्वे रागलक्षणे उदाह्रियेते। यथा—

श्रीरागः। मेलाधिकारी। सम्पूर्णः। षड्जग्रहः। रागाङ्गजातिः। मूर्छना सरिगमपधनिस सनिधपमगरिस। मालवश्रीः। श्रीराग-मेलजः। रिहीनः। षाडवः। षड्जग्रहः। मूर्छना सगमपधनिसा। सनिधपमगस। अन्यत्र मालवगौलस्य। शुद्धो रिः। गोऽन्तरः। इयं ग्रन्थधोरणी। तस्मादुद्धृत्य लिख्यन्ते विषयाः—

श्रीरागो मेलाधिकारी। तज्जन्या रागाः, मालवश्रीः कन्नडगौलः मणिरङ्गः हुशेनिः कापिः मुखारी सैन्धवी च। मालवगौलमेलो द्वितीयः तस्मान्नादरामक्रिया मेचबौलिः गौलः मलकरी (मलहरी) सालङ्गनाटः, फाडी, गुण्डक्री, सौराष्ट्रः बौली, शुद्धसावेरी, गौलपन्तुः, गमकावैक्रिः—एते जाताः ॥

तृतीयः काम्भोजिमेलः। एतस्मात् केदारगोलनारायणगौल-बलकंसनीलाम्बरीसामान्धालीमोहनयदुकुलकाम्भोजीनाटकुरञ्जी विलाकरांकन्नडाः—एतस्माज्जाताः। नाटीवरालीवसन्तभैरव्यः

पञ्चमषष्ठसप्तममेला:। अष्टमो भैरवीमेल:। तज्जा आहरीरीतिगोलदेवगान्धरीहिन्दोलघण्टारवानन्दभैरवीशुद्धधन्यासीधन्यास्य:। नवमस्तोडीमेल:। तज्जे भूपालीपुन्नागवराल्यौ। दशमस्सान्तमेल:। एकादश: पन्तुवराली। सारङ्गो द्वादशो मेल:। त्रयोदश: कल्याणीमेल:। आहत्य त्रयोदशमेलेषु षट्पञ्चाशद्रागा लक्षिता:। केषाञ्चिल्लक्षणानि दीयन्ते—

भैरव्या: रिश्चतु:श्रुति:। साधारणो ग:। शुद्धा मपध:। नि: कैशिकी। काम्भोग्या: रिश्चतु:श्रुतिर्ध:। काकली नि:। तोड्या: शुद्धो रि साधारणो ग:। मधौ शुद्धौ। कैशिकी नि:। कल्याण्या: रिश्चतु: श्रुति:। काकली नि:। वसन्तभैरव्या: शुद्धो रि:। अन्तरो ग:। शुद्धमधौ। कैशिकी नि:। वरालीमेलस्य शुद्धो रि: चतु:श्रुतिगान्धार:। म: प्रतिमध्य:। धश्शुद्ध:। काकली निषाद:। एषु लक्षणेषु सपनामापि नास्ति। षड्जस्तु तन्त्रीवादन एव लब्ध:। वीणायां न तस्य स्थानमस्ति। पञ्चम एक एव। तस्य विकारो नास्ति। अनन्तरं मण्डलानि सन्ति। तानि द्विसप्ततिमेलानुसारीणि। विशेषस्तु एकैकस्यां पङ्क्तौ त्रयोदश कोष्ठानि सन्ति:। त्रयोदशं ग्रहं तारसूचि। शिष्टेषु द्वादशकोष्ठेषु षड्जस्यैकं कोष्ठम्। ऋषभस्य त्रीणि। गान्धारस्यापि त्रीणि। मध्यमस्य द्वे पञ्चमस्यैकम्। धस्य त्रीणि। नेस्त्रीणि। वीणायामिव परस्परलीनत्वेन द्वादशैव स्थानानि। प्रस्तारविवरणं वीणायामिव द्रष्टव्यम्। केषाञ्चिद्रागाणां श्रुतिस्थानविपर्ययाद्रागान्तरजन्यत्वं विवृतमस्ति। यथा—

मोहनस्य यदि षश्रुति: तदा मध्यमावती स्यात्। तत्र चक्रं लिखितम्। त्रयोदशकोष्ठानि

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स | | रि | | ग | | | प | | ध | | | स |

अयं मोहनराग:। मध्यमावतीकरणं यथा—

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| नि | | स | | रि | | | म | | प | | | निं |

मोहनस्य गान्धारश्रुति: कृता चेत् हिन्दोलो भवति—

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ध | | नि | | स | | | ग | | म | | | ध |

अत्र मोहनस्य गकारस्थाने षड्ज:। षड्जमारभ्य हिन्दोलजनकस्वरा: मोहनस्य गकारस्थानेषु पठिताश्चेद्धिन्दोलस्स्यादित्यूह्यम्।

हिन्दोलस्य धैवतश्रुतीकरणं मोहनं भवति। मोहनस्य पञ्चमे शुद्धसावेरी। शुद्धसावेर्या मध्यमे मोहनम्। मोहनस्य धैवते शुद्धधन्याशी। गान्धारे मोहनम्। इदमौडवचक्रम्।

| | | |
|---|---|---|
| शङ्कराभरणस्य | रिश्रुतीकरणे | हुशेनि: |
| हुशेनि: | नि:— | शङ्कराभरणम् |
| शङ्कराभरणस्य | ग:— | तोडी |
| तोडी | ध— | शङ्कराभरण: |
| शङ्कराभरणस्य | म— | कल्याणी |
| कल्याणी | प— | काम्भोजी |
| काम्भोजी | म— | शङ्कराभरण: |
| शङ्कराभरणस्य | धै— | भैरवी |
| भैरवी | ग— | शङ्कराभरण: |
| शङ्कराभरणस्य | निषादश्रुतीकरणे | रागो नास्ति |

इदं शङ्कराभरणचक्रम्।

भैरवी चक्रं यथा—

| | | |
|---|---|---|
| भैरव्या: | रिषभश्रुतीकरणे | रागो नास्ति |
| भैरवी | ग— | शङ्कराभरण: |
| शङ्कराभरण: | धै— | भैरवी |
| भैरवी | म— | हुशेनी |
| हुशेनी | प— | भैरवी |
| भैरवी | प— | तोडी |
| तोडी | म— | भैरवी |
| भैरवी | ध— | कल्याणी |
| कल्याणी | ग— | भैरवी |
| भैरवी | नि— | काम्भोजी |
| काम्भोजी | नि— | भैरवी |

तोडीचक्रं यथा—

| | | |
|---|---|---|
| तोड्या: | रिश्रुतौ | कल्याणी |
| कल्याणी | नि— | तोडी |
| तोडी | गा— | काम्भोजी |
| काम्भोजी | ध— | तोडी |
| तोडी | म— | भैरवी |
| भैरवी | प— | तोडी |
| तोडी | प— | रागो नास्ति |
| तोडी | ध— | शङ्कराभरणम् |
| शङ्कराभरण | ग— | तोडी |
| तोडी | नि— | हुशेनी |
| हुशेनी | रि— | तोडी |

मेलभेदनक्रम: स्वराणां स्थानान्तरगमनेन उक्त:। यथा—

केदारगौलमेले मिन्ने कृते (व्यत्यस्ते) गौलपन्तुरागस्स्यात्। गौलपन्तौ मिन्नेकृते केदारगौल:

केदारगौलः गौलपन्तुः

| | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| स़ | | रि | | | म | | प | | | नि | | स |
| स़ | रि | | | | म | | प | | | | नि | स |

औडुवरागः औडुवरागः

अत्र रि निस्थाने चालिते ?

तथा यरुकुलकाम्भोजी सावेरी यदिरिधयोःस्थानचलने न परिवर्तितस्यात्। यथा–शुद्धरिः चतुःश्रुतिरिः। शुद्धधः चतुःश्रुतिधः। बिलाहरिगुम्मकाम्भोजीरागयोः प्रावर्तनम्। बिलाहरेः रिधौ चतुःश्रुती–अन्यस्य रिधौ शुद्धौ।

भैरवीशङ्कराभरणयोः गधनिस्वराणां परिवर्तनं भवति शुद्धो गः पूर्वस्मिन्। अन्यस्मिन्नन्तरः। शुद्धधः चतुः श्रुतिधश्च। शुद्धनिः कैशिकीनिः!

तथैव कल्याणीतोडीरागयोः। रिगमधनीनां कल्याण्यां पूर्वस्थानचलने तोडी भवति। यथा चतुःश्रुतिरिः शुद्धो भवति, प्रतिमध्यमः शुद्धो भवति। चतुः श्रुतिधः शुद्धो भवति। कैशिकिनिः शुद्धः। एवं मोहनरेगुप्तिरागयोः नाटीसारङ्गयोः नाटीमञ्जर्योः गौलान्धाल्योः वरालीमालवगौल्योः वौलीजलक्रीडयोः, सारङ्गनाटारभ्योः श्रीरागसुरसिन्ध्वोः आरभ्यन्धाल्योः आरभीसारङ्गनाटयोः साममलहर्योः धन्यासिवेगडयोः काम्भोजीबिलाहरयोः परिवर्तनक्रम उक्तः। ग्रन्थोऽयमसमग्रः।

वेङ्कटाध्वरिवीणा

अथास्मत्कल्पितं वीणाद्वयं संदर्शयामहे।
निरूपितायां वीणायामुपरिद्वे प्रसारयेत्॥

तन्त्रिके पित्तलमयी त्वाद्या लोहमयी परा।
आद्यायां तन्त्रिकायांतु मन्द्रषड्जं प्रयोजयेत्॥

तस्यां सरिगनामानः संगृह्यन्ते त्रयस्स्वराः।
तन्त्रिकायां द्वितीयस्यां योजयेन्मन्द्रमध्यमम्॥

तन्त्रीरित्थं द्वितीयैव शिष्टैस्त्रिस्थानपर्वभिः।
योजनीया भवेन्मन्द्रवरालीमध्यमादिभिः॥

एषा द्वितन्त्रिका वीणा वेङ्कटाध्वरिकल्पिता।
एकतन्त्र्याख्यवीणायां यादृशं पूर्वमीरितम्॥

परिमाणं प्रवालस्य तादृशं चात्र कीर्तितम्।
पूर्ववच्छ्रुतितन्त्रीषु स्वरसंयोजनादिकम्॥

अस्यामेव द्वितन्त्र्याख्यवीणायामुपरिस्थयोः।
तन्त्र्योः प्रथमतन्त्र्यां हि मन्द्रषड्जो निवेशितः॥

तस्यां सरिगमाभिख्यां शृणुयाम चतुःस्वरान्।
तन्त्रिकायां द्वितीयस्यां योजयेन्मन्द्रपञ्चमम्॥

द्रष्टव्यमवशिष्टं तु पूर्ववत्सर्वमत्र च।
द्वितन्त्रिका च वीणैवं वेङ्कटाध्वरिकल्पिता॥

तदेवमेकतन्त्र्येका द्वितन्त्र्यौ द्वे ततः परम्।
शुद्धमेलाह्वयैकाऽथ मध्यमेलाभिधापरा॥

तृतीया रघुनाथेन्द्रमेलाख्या परिकीर्तिता।
आहत्य षड्विधा वीणा जाता सामान्यतः पुनः॥

तत्सर्वरागमेलैकरागमेले त्वभेदतः।
प्रत्येकं द्विविधा तस्माद्वीणाद्वादश कीर्तिताः॥

एकतन्त्री द्वितन्त्र्यादि व्यवहारस्त्वसौ पुनः।
उर्ध्वतन्त्रीरपेक्ष्यैव न तिस्रः श्रुतितन्त्रिकाः॥

द्वादशेति कथं भेदाः स्फुटं निर्धार्यते त्वया।
शुद्धमेला मध्यमेला रघुनाथेन्द्रमेलकाः॥

इति वीणात्रयेऽप्यस्मिन् मन्द्रपञ्चमसंगताः।
तन्त्रिकास्सन्ति यास्तिस्रस्तासु मन्द्रस्थमध्यमाम्॥

निवेश्य वीणात्रितयं शक्यं कल्पयितुं पुनः।
तिसृणामपि वीणानां भवेद्भेदत्रयं पुनः॥

सर्वरागैकरागत्वभेदस्यैवाथ योजने।
षड्वीणास्साकमेताभिर्भवन्त्यष्टादशेति चेत्॥

सत्यमेव भवन्त्येताष्षड् वीणास्स्युर्न रक्तिदाः।
ततो वीणा द्वादशैवेत्यस्माकं जयदुन्दुभिः॥

द्वादशस्त्वपि वीणासु मिथन्ते याः खलूपरि।
तन्त्रिकास्तासु सर्वासु चतुःश्रुतिकतां गताः॥

निवेश्यन्ते स्वराष्षड्जशुद्धमध्यमपञ्चमाः।
नापरे संभवत्यर्हा विनिवेशयितुं स्वराः।
तथा त्वेवं न लभ्येत स्थानत्रितयसंभवः॥

वेङ्कटमखी

वेङ्कोलम्—उत्प्लुतिकरणम्

कपालघूर्णनं कृत्वा यत्रोत्तानतया स्थितम्।
उरश्च लोलितं कुर्वन्नन्तरालगवत् स्थितः।
तद्वेङ्कोलं भवेदेतन्नतपृष्ठं परे विदुः॥

वेमः

वेणिः—प्रबन्धः

वृत्तैरुत्कलिकाभिश्च चलितं च विचित्रकम्।
एभिर्विरचितं वृत्तं वेणिरित्यभिधीयते॥

नान्यदेवः

**वेणिः**—वर्णालङ्कारः

कलयोस्तु स्वराणां चेत्त्रिरावृत्तिर्भवेत्पृथक् ।
तदाहुर्वेणिनामानमलङ्कारं मनीषिणः ॥

ससस रिरिरि गगग ममम पपप धधध निनिनि .

—अवरोही

निनिनि धधध पपप ममम गगग रिरिरि ससस.

पण्डितमण्डली

**वेणी**—गीताङ्गम्

द्वाभ्यां त्र्यश्रतालाभ्यां चूलिका भवति । यथा—

शशिगुणमकुटं त्रैलोक्यतनुं स×र्वा×ती×तम्× ।
स×र्वा×का×रं×सूक्ष्मा×चि×न्त्यं । स×र्वं×स्वं×

नान्यः

**वेणुः**—वर्णालङ्कारः (सञ्चारी)

आद्यस्वरं द्विरुच्चार्य द्विचतुर्थतृतीयकान् ।
कलैकान्यास्तथैकैकत्यागाद्वेणुः प्रकीर्तितः ॥

सासरिमागा, रीरिगपामा, गागमधापा, मामपनीधा

मोक्षदेवः

मन्द्रो द्विर्यस्य गायेत युग्मं तुर्यं तृतीयकम् ।
सकृदेकैकहीनास्स्युरन्या वेणौ कलाः किल ॥

जगद्धरः

**वेणुवाद्यलक्षणम्**

सजीवश्चैव मिश्रश्च निर्जीव इति च त्रिधा ।
रागो भवति तत्राद्यौ सजीवो नरकण्ठजः ॥
मिश्रः स्याद्वेणुसञ्जातो निर्जीवो वैणिको भवेत् ।
मूलशक्त्या द्रुता प्रोक्ता वेणुदेशकृताह्वया ॥ ?
शिरस्येकाङ्गुलं त्यक्त्वा मुखद्वारं विधीयते ।
मुखद्वारादधस्तात्तु चतुष्षष्ट्यङ्गुलावधि ॥
अष्टरन्ध्राणि वेणौ स्युः चतुष्पष्ट्यङ्गुलान्तरे ।
यवमानमधरत्याख्यं सर्वरन्ध्रविधिस्त्वयम् ॥
देशषष्ट्यङ्गुलो ज्ञेयो द्रुतो न्यूनशतार्धकः ।
कृष्णस्य वंशः षट्त्रिंशो मोह इत्यभिधीयते ॥
त्रिंशदङ्गुलको वंशः कुष्टस्य स्यान्महोदरः ।
चतुर्विंशाङ्गुलो मुक्तो वैरिकोऽष्टादशाङ्गुलः ।
इति सप्तविधाः प्रोक्ताः यथावद्देवि वेणवः ॥

**वेणीधम्मिल्लः**—शिरः

वेणीकृतास्तथा मुक्ताः बद्धाः स्तब्धकचा मताः ।
मोटको जूटको वीरगन्धर्थिफलकस्तथा ॥
नारङ्गी चैव धम्मिल्लकुन्तलस्सन्निवृत्तकः ।
यावग्रन्थिः कुशग्रन्थिः ब्रह्मग्रन्थिश्च गुम्भितः ॥
मूलग्रन्थिस्तथा मध्यप्रान्तग्रन्थिस्तथैव च ।
इत्याद्यनेकशश्चैव ज्ञातव्याः संयताः कचाः ॥

कुम्मः

**वेणीबन्धनिकम्**—नृत्तकरणम्

एकपार्श्वेस्थानकं स्याच्छिर उद्वाहितं मतम् ।
तिलकस्तु तदा हस्तः दृष्टिरुल्लोकिता भवेत् ।
ऊरुवेणी भवेच्चारी वेणीबन्धनिकं हि तत् ॥

नन्दी

तिलको हस्तः यथा—ऊरुवेणी गतिः ।

कुर्वोर्वोस्स्वस्तिकं पादपार्श्वाभ्यां कुरुते यदा ।
चरणं घर्षणं भूमेरूरुवेणी भवेत्तदा ॥
त्रिपताकाह्वयौ हस्तौ ललाटहृदयस्थितौ ।
अन्योन्याभिमुखौ प्राज्ञैः तिलकाख्यः समीरितः ॥

**वेणुकारवः**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि म ग म प नि स.
(अव) स नि ध प म ग म रि स.

मज

**वेणूनां सवनप्रयोजनम्**

प्रातः सवनं यत्र स्यान्मध्यग्रामाभिधे वेणौ ।
तन्माध्यन्दिनमिति च ज्ञेयं षाड्जे सदा वंशे ॥
माध्यन्दिनाभिधानं स्थानं स्याद्यत्र मध्यमे ग्रामे ।
ज्ञेयं तृतीयसवनं तं षड्जग्रामिके वेणौ ॥
माध्यन्दिनं तु मध्यग्रामाङ्कितवेणुगोचरं सततम् ।
प्रातस्सवनमिहोच्चैर्गान्धारग्रामिके वेणौ ॥
गान्धारग्रामकमपि तृतीयसवनं द्वयोस्तु न भवति ।
अनयोः प्रातस्सवनं गान्धारग्रामवेणुषु न भवेत् ॥

नान्यः

| षड्जग्रामवेणुः— | मध्यमग्रामवेणुः— | गान्धारग्रामवेणुः— |
| --- | --- | --- |
| प्रातःसवनम्— | — | — |
| माध्यंदिनसवनं— | प्रातःसवनम् | — |
| तृतीयसवनं— | मध्यंदिनं— | प्रातःसवनं |
| — | — | तृतीयसवनं |

नान्यः

**वेतिका**—अङ्गुलिभूषणम्

सूक्ष्मकटकरूपा ।

**वेदः**

सङ्गीतमकरन्दकर्ता । प्रसिद्धशिवाजीमहाराजस्य पितुः षाह-महाराजस्यास्थानकविः । तस्य वंशस्तस्य ग्रन्थान्ते वर्णितः । १६०० कालः

**वेदाब्जिनी**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स ग म प म ध नि स.

(अव) स नि ध प ध म ग रि स.

मज

**वेदाम्बरी**—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि ग रि म ग म नि ध प नि स.

(अव) स नि ध नि ध प म ग रि ग रि स.

मज

**वेनकतुलम्**—देशीनृत्तम् (उडुपाङ्गम्)

हृदये शिखरद्वन्द्वं स्थानके चतुरश्रके ।
सूलं कृत्वा विशिष्टां च चारिकां तु ततश्चरेत् ॥

वेष्टनेनालपद्माभ्यां सौष्ठवेन सहाचरेत् ।
मध्यमानेनादितालात्तिर्यग्गमनसुन्दरम् ॥

भयाचकितया दृष्ट्या पार्श्वयोर्गतया भवेत् ।
एवमङ्गान्तरेणैवं दक्षिणं पादकुट्टनम् ॥

विधाय मण्डले स्थाने स्थापयेद्धृदयस्थले ।
वामं च शिखरं हस्तं प्रसार्य दक्षिणं करम् ॥

दक्षपार्श्वे कुञ्चितं स्याच्छिखरद्वितयं हृदि ।
विश्लिष्टं पूर्ववत्तत्र चारीं कुर्यान्नटेश्वरः ॥

एवमङ्गान्तरे कार्यं ततस्सम्मुखमाचरेत् ।
दक्षपार्श्वे पताकस्य प्रसारो हृदये तथा ॥

वामं च शिखरं न्यस्य तत ऊर्ध्वं पताककम् ।
कृत्वा वामं दक्षिणं च प्रसार्य त्रिपताककम् ॥

पुरतो दक्षपादस्य सूचीं कृत्वैकपादतः ।
दक्षिणावर्ततः पश्चात्तिरिपं तु समाचरेत् ॥

दक्षपार्श्वे प्रसार्याऽथ दक्षिणं च पताककम् ।
हृदये वामशिखरमेवं कृत्वा चकारणम् ।
स्याद्वेनकतुलं तत्सङ्गीतज्ञैः पुरातनैः ॥

वेदः

**वेपथुः**—चित्ताभिनयः

आलोलिताख्या दृष्टिश्च परावृत्तं धुतं शिरः ।
पार्श्वोभयोर्मुष्टिहस्तचलनं वेपथुर्भवेत् ॥

विनायकः

**वेपथुव्यञ्जकम्**—चालकः

एकस्मिन्नाभिदेशस्थे हस्ते तिर्यग्विलोलिते ।
तस्यापराङ्गे वलनं भावातिशयबृंहितम् ॥
करोऽन्यः कुरुते यत्र तथैवाङ्गान्तरेण च ।
क्रियते यदि तत्प्रोक्तं वेपथुव्यञ्जकं बुधैः ॥

वेमः

**वेमभूपालः**

सङ्गीतचिन्तामणिकारः । अयं कोण्डवीटिनगराधीश्वरः । रेड्डिवंशीयः । अनेन, अमरुकशतकव्याख्या, गाथासप्तशत्यामेक-शतकस्य व्याख्या, साहित्यचिन्तामणिः, इत्येते ग्रन्थाश्च कृताः । अस्य दिग्विजयप्रशंसनारूपं वीरनारायणचरितं वामनभट्टबाणेन रचितमस्ति । संस्कृतान्ध्रप्राकृतादिकवीनां वेमः पोषकः । क्रि-प- १४००

**वेलाउलः**—रागः

युज्जितो धन्नयो रागात् गेयो वेलाउलश्शुभे ।

**वेलावलिः**—हस्तः

करोऽयं श्लिष्टमुकुलो वेलावल्यां प्रयुज्यते ।

शुङ्गा

—रागः

धैवतांशग्रहन्यासा सर्वदा षड्जकम्पिता ।
मन्द्रगान्धारसंयुक्ता निषादबहुला तथा ॥
स्वरैश्च सप्तभिः पूर्णा तारपञ्चमपीडिता ।
वेलावलीति विख्यातो रागस्सोममहीभुजा ॥

सोमेश्वरः

**रागः**—स्तम्भतीर्थः

वेलावली स्तम्भतीर्थो त्रिधा चोप पवर्जितः ।

त्रिधेति ग्रहांशन्यासेषु धकारः ।

मदनः

**वेलाकुली**—रागः

धांशन्यासग्रहा पूर्णा धतारा मन्द्रमध्यमा ।
अङ्गं च भोगवर्धन्या भाषायाष्षड्जकम्पितः ।
वेलाकुलीति विख्याता वीराद्भुतरसादिषु ॥

सोमराजः

मुख्या वेलाकुली भाषा त्रिधा धैवतसंयुता ।

मदनः

वेलाधूली—रागः

अथ भोगवतीनाम्ना ककुभप्रभवोच्यते ।
वेलाधूली तदङ्गं स्यात् संपूर्णा ससमस्वरा ॥
धैवतांशग्रहन्यासा तारधैवतसंयुता ।
मध्यमेमन्द्रतां प्राप्ता तथा षड्जे प्रकम्पिता ।
वेलाधूलीलक्ष्म…निर्णीतं दत्तिलादिभिः ॥

हरिः

ककुभप्रभवा भाषा या प्रोक्ता भोगवर्धनी ।
वेलाधूली तदङ्गं स्यात्परिपूर्णा समस्वरा ॥
धैवतांशग्रहन्यासा नितारा मन्द्रमध्यमा ।
षड्जेनाकम्पिता चेयं विप्रलम्भे नियुज्यते ॥

जगदेकः

अस्मिन् रागे तारत्वं धैवतस्येति हरिपालः ।

वेलावली—मेलरागः (गौरीमनोहरीमेलजन्यः)

(आ) स रि ग म प ध स.
(अव) स नि ध प म ग रि स.

मञ्जः

—मेलरागः (केदारमेलजः)

प्रातर्वेलावली पूर्णा यदांशन्यासधैवता ।
प्रयुज्यते रसे वीरे रिपाभ्यां वा विवर्जिता ॥

श्रीकण्ठः

—मेलरागः

वेलावल्यां गनी तीव्रौ मूर्छना चाभिरुद्गता ।
आरोहे मनिहीनायामंशः षड्जो बुधैः स्मृतः ।
अवरोहे गवर्ज्यायां क्वचिद्गान्धारमूर्छना ॥
प्रातर्गेया ।

अहोबिलः

—रागः

गान्धारावधितारा मन्द्रा पूर्णा समस्वराभोगा ।
वेलावलिका धैवतसांशन्यासग्रहैर्भवति ॥

नान्यः

समस्वरा च पूर्णा च ग्रहांशन्यासधैवता ।
तारमन्द्रा च गान्धारं यावद्वेलावली भवति ॥

मतङ्गः

धैवतांशग्रहन्यासा समन्द्रा च समस्वरा ।
शृङ्गारे करुणे चैव गेया वेलावली बुधैः ॥

नारायणः

—मेलरागः

वेगवाहिनी मेलजोऽयं रागः ।

वेलावल्यामजो वक्रः स्यादत्र त्ववरोहणे ।
सदृशी वेगवाहिन्या गीयते वैणिकोत्तमैः ॥

परमेश्वरः

—रागः

धैवतांशग्रहन्यासा पूर्णा वेलावली मता ।
पौरवी मूर्छना यस्यां रसे वीरे प्रयुज्यते ॥

दामोदरः

—प्रथमरागः

भाषायां ककुभोद्भवा निगदिता प्राग्भोगवर्धन्यहो
तस्या अङ्गमिदं समस्वरकृतं वेलावलीनामतः ।
न्यासांशग्रहतारधैवतगता पूर्णा गमन्द्रा बुधै-
र्गातव्या किल विप्रलम्भविषया षड्जप्रकम्पान्विता ॥

मोक्षः

—भाषाङ्गरागः

ककुभ्या भोगवर्धन्या जाता वेलावली त्रिधा ।
तारषड्जा कम्पषड्जा पूर्णा शरदि गीयते ।
वेलावल्या मध्यमः स्यान्मन्द्र इत्यपरे जगुः ॥

ककुभ्या—ककुभजा भाषायाः । वर्धनीविशेषणम् । त्रिधेति त्रिषु अंशग्रहन्यासेषु धैवतम् ।

भट्टमाधवः

—रागः

अङ्गं च भोगवर्धन्या वेलावल्यभिधा च सा ।
विप्रलम्भे धतारा च गमन्द्रा च समस्वरा ॥

हम्मीर

—प्र. रागः

या सा वेलावली प्रोक्ता वेलावल्या समुत्थिता ।
धैवतांशग्रहन्यासा मन्द्रकम्पितमध्यमा ॥

मोक्षः

—रागः (वंशे वादनक्रमः)

धैवतं स्थायिनं कृत्वा द्विःपरं लघु वादयेत् ।
तं च भूयो वादयित्वा ततः प्राक्च समुच्चरेत् ॥
तस्यार्धं वादयित्वाऽथ पूर्वं पूर्वं स्वरं व्रजेत् ।
तं विलम्ब्य तदर्धं च प्रकम्प्याहत्य तं मुहुः ॥
कम्पयित्वा च तत्पूर्वं तस्यार्धं द्राघयेत्ततः ।
अधे स्वरं समासाद्य तदूर्ध्वं स्थायिनं तदा ॥

द्वावूर्ध्वप्ररितौ कृत्वा द्वितीयं स्वरमेत्य च ।
ग्रहं स्पृष्ट्वा परं चोत्तया तृतीयं च प्रकम्पयेत् ॥

ग्राह्याधस्त्यं ग्रहं चापि वादयेच्च मुहुर्मुहुः ।
कम्पयित्वा तृतीयं चेत्तदधस्त्यं विलम्बयेत् ॥

ईषद्विलम्ब्य तदनु स्वरं स्पृष्ट्वा द्वितीयकम् ।
ग्रहे यदा भवेन्न्यासो वेलावल्यास्तदा भवेत् ।
स्वस्थानमाद्यं चंशेपु तृतीयोऽस्या ग्रहो मतः ॥

वेमः

**वेलावलीरागध्यानम्**

विधाय सङ्केतमियं प्रियेण
हेम्नोल्लसद्भूषणमुद्वहन्ती ।
स्मरं स्मरन्ती स्मरकामिनीभा
वेलावली श्यामतनुर्विभाति ॥

श्रीकण्ठः

सङ्केतदीक्षां दयितस्य दत्त्वा
वितन्वती भूषणमङ्गयष्टेः ।
मुहुः स्मरन्ती स्मरमिष्टदैवं
वेलावली नीलसरोजकान्तिः ॥

संगीतसरणिः

अस्या वेलाहुरी, वेलवलीति च नामनी दृश्येते ।

पीठस्थिताया निजनायिकायाः
समीपदेशे जलपात्रधारिणीम् ।
चित्राम्बरां निम्नगताङ्गरेखां
वेलाहुरीं मे मनसा स्मरामि ॥

रागसागरः

**वेल्लितभ्रमरी—भ्रमरी**

चरणौ स्वस्तिकीकुर्वन् परितो वेल्लयन् करौ ।
भ्राम्येद्यत्र च तामाहुः वेल्लितभ्रमरीं बुधाः ॥

वेमः

**वेषभीत्यपराश्रयि—नर्मः**

वेषावलोकनोत्पन्नभीत्या यत्र रसान्तरम् ।
याति नर्म तदेवात्र वेषभीत्यपराश्रयि ॥

सर्वेश्वरः

**वेषव्यतिकरम्—नर्म**

नैपथ्यसंविधानेन प्रणयावेशभाषणम् ।
करोति यत्तदेवात्र वेषव्यतिकरं स्मृतम् ॥

सर्वेश्वरः

**वेष्टनम्—पादपाटः**

वेष्टनं स्यात्स्थितस्याङ्घ्रेः पादेनान्येन वेष्टनात् ।

वेमः

**वेष्टिमः—पुस्तः**

वेष्टिते चैव यद्रूपं वेष्टिमस्स तु संज्ञितः ।

भरतः

**वेसरषाडवः—रागः**

षड्जमध्यमजात्याऽसौ सृष्टो वेसरषाडवः ।
ग्रहेंऽशे मध्यमो न्यासे काकल्यन्तरसंयुतः ॥
सावरोही प्रसन्नान्तो मध्यमादिकमूर्छना ।
संपूर्णो लक्षितश्चायमेवं वेसरषाडवः ॥

हरिः

मध्यमांशो मध्यमान्तो द्विश्रुतिस्वरवर्जितः ।
शुद्धषड्जविधायुक्तो विष्णुकारण (दैवतः) ॥
षड्जस्वरस्य संवादात् तस्य न्यासांशयोगतः ।
शृङ्गारे षड्जमध्यायां ज्ञेयो वेसरषाडवः ॥

नान्यः

मध्यमांशस्तदन्तश्च षड्ज़मध्यासमुद्भवः ।
द्विश्रुतिस्वरहीनश्च भवेद्वेसरषाडवः ॥

कश्यपः

मध्यमांशग्रहन्यासः षड्जमध्यमिकाभवः ।
द्विश्रुतिस्वरहीनोऽपि काकल्यन्तरसंयुतः ॥
वेसरषाडवो रागो मतङ्गमुनिदर्शितः ।

सोमः

**वैकुण्ठः—गीतालङ्कारः (निसारुकभेदः)**

द्रुतद्वन्द्वं गुरुद्वन्द्वं भवेत्ताले मुकुन्दके ।
अनेन गेयो वैकुण्ठो ह्ययो वैकुण्ठको भवेत् ॥

सङ्गीतसारः

**वैकुण्ठविलासः—चालकः**

विधाय लुठनं पूर्वं वामदक्षिणपार्श्वयोः ।
पश्चाद्विदिक्षु विलुठन कुरुते चेद्गतागतम् ॥
एकः करस्तथान्योऽपि पर्यायेण भवेद्यदि ।
वैकुण्ठकविलासाख्यश्चालकस्तद्विदां मतः ॥

वेमः

अयं चालकः अशोकमल्लिनाथाभ्यां "कुण्डलिचार" इति पठितः, लक्षणं तु समानमेव ।

वैजयन्ती—मेलरागः

षड्चश्रुतिर्मध्यमो यत्र धैवतः कोमलो भवेत् ।

निषादस्तीव्र आख्यातो वैजयन्ती रिपूर्विका ।
आरोहणेऽवरोहे च कादाचित्कौ गधौ मतौ ॥

द्वितीयप्रहरोत्तरगेया ।

अहोबिलः

पूर्विकेति । श्रुतिद्वयपरित्यागात् पूर्वः ।

वैणिका—श्रुतिः

पञ्चमस्य द्वितीया श्रुतिः । मण्डलीमते तारपञ्चमस्यैव ।

वैणुकी—श्रुतिः

तारर्षभस्य प्रथमा श्रुतिः । पार्श्वः

वैतालीयम्—मात्रावृत्तम्

विषमं—षण्मात्रिकगणः एकः र ल ग.
समं—अष्टमात्रागण एकः र ल ग.

विरहाङ्कः

वैदर्भी—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) स रि ग म प ध नि प स.
(अव) स नि ध म ग रि स.

मत्रः

वैद्योतम्—देशीनृत्तम्

इदं वैपोतमिति कचिदुक्तम् ।

विधुतं कम्पितं यत्र स्याद्रेचकचतुष्टयम् ।
शिरोग्रीवाहस्तपादकम्पनं रेचकं विदुः ॥

क्षांन्ध्रकर्णाटभाषादिध्रुवधातुं च नृत्यति ।
मध्ये कैलमुरुनृत्तं रञ्जकं लास्यसुन्दरम् ।
वैद्योताख्यं तदा नृत्तं रसजं दृष्टिसौख्यदम् ॥

वेदः

वैनतेयः—तानः

षड्जग्रामे रिपहीनौडुवः ।
ग स नि ध म. कुम्भः

वैरिञ्चकपालगानम्

रागे तथेष्टतालेन गीयते करुणे रसे ।
वैरिञ्चं पञ्चमं गानं शुद्धसाधारिताभिधे ॥

त्रिपुरयुवतीत्यादिगानम् । कुम्भः

वैवर्ण्यम्—सात्त्विकभावः

शीतक्रोधभयश्रमरोगक्लमतापजं च वैवर्ण्यम् ।
मुखवर्णपरावृत्या नाडीपीडनयोगतः ।
वैवर्ण्यमभिनेतव्यं प्रयत्नात्तद्धि दुष्करम् ॥

भरतः

वैवर्ण्यं शीततापभयक्रोधशोकैरुत्पद्यते ।
तन्मुखच्छायाविपर्ययेण दर्शयेत् ।

सागरः

वैवर्ण्यमातपक्रोधव्याधिशीतभयक्लमैः ।
अङ्गकार्श्याङ्गसौन्दर्यविप्लवाद्यैः स वर्ण्यते ॥

भावप्रकाशः

—चित्राभिनयः

आलोलिताख्यशीर्षं च समा दृष्टिर्विधीयते ।
विकृतः कर्तरीस्वस्तिः पुरोभागे तु कर्तरी ॥

सूचीहस्तं चालयेच्च वैवर्ण्यस्य प्रदर्शने ।

विनायकः

वैशाखम्—स्थानकम्

चरणौ त्र्यश्रपक्षस्थौ सार्धतालत्रयान्तरौ ।
ऊरू निषण्णौ गगने सार्धतालत्रयान्तरे ॥
यत्रैतत्स्थानकं ज्ञेयं वैशाखं स्कन्धदैवतम् ।
विनियोगस्तुरङ्गाणां युद्धादौ प्रेरणे तथा ॥

रङ्गप्रवेशे स्थूलानां खगानामपि दर्शने ।
वाहने वेगदाने च वाजिनां कथितो बुधैः ॥

विप्रदासः

व्यायामे निर्गमे स्थूलभङ्गे वाहनवाहने ।

ज्यायनः

एकारत्निमितान्तरालसरलायष्टीवमीषद्बहिः
पार्ष्णिः प्राञ्जलपादसादरकृतं स्थैर्याऽविवृत्तस्फिचम् ।
मध्ये वर्तितमूर्तिनाकुलचलत्संपूर्णपूर्वापरं
स्थानं स्थानधृतोन्नतस्थिरमुखं वैशाखमाहुर्बुधाः ॥

कोदण्डमण्डने

वैशाखरेचितम्—करणम्

वैशाखस्थानकं कुर्वन् ग्रीवापादकटीक्रमात् ।
रेचयेच्चत्र तद्धीरैः प्रोक्तं वैशाखरेचितम् ।
वैष्णवं स्थानमत्रादौ प्रोक्तं कीर्तिधरादिभिः ॥

ज्यायन

**वैशाखरेचितः—अङ्गहारः**

वैशाखरेचितनूपुरभुजङ्गत्रासितोन्मत्तमण्डलस्वस्तिकनिकुट्टकोरूद्वृत्ताक्षिप्तोरोमण्डलकरिहस्तकटीछिन्नानामेकादशानां करणानां क्रमात्प्रयोगे वैशाखरेचितः।

शार्ङ्गः

**वैशुक्री—मेलरागः (विश्वम्भरामेलजन्यः)**

(आ) स रि ग म प ध नि स.

(अव) स नि ध नि प म ग म रि स.

मञ्जः

**वैष्णवम्—दर्शास्थानम्**

समस्थितस्य पादस्य पुरोऽङ्घ्रिः कुञ्चितोऽपरः।
मनाक् प्रसारितस्तिर्यगङ्गुलिस्पृष्टभूतलः।
स्थानं तद्वैष्णवं ज्ञेयं विष्णुरूपनिरूपणे॥

वेमः

**वैषम्यम्—लक्षणम्**

प्रत्यक्षमिति यत्रैकः परोक्षमिति चापरः।
मन्यतेऽभिमतं वस्तु तद्वैषम्यमिति स्मृतम्॥

यथा—उत्तरचरिते, एष खलु स्वप्न एव स्यादिति रामवाक्यम्।

भोजः

**वैष्णवम्—स्थानकम्**

एकः पादसमो यत्र स्वपक्षे त्र्यश्रितः परः।
सार्धद्वितालान्तरितो जङ्घा किञ्चिन्नता स्थिता॥
विष्णुदैवतमेतस्याद्वैष्णवं सौष्ठवाञ्चितम्।
उत्तमैर्मध्यमैः पुंभिः प्रयोज्यं मुनिसम्मतात्॥
प्रकृतिस्थस्य संलापेनैके कार्यान्तरान्विते।
प्रयोज्यं प्रतिशीर्पेण विष्णोरित्यपरेऽभ्यधुः।
अपरे नाट्यकर्तेति सूत्रधारादिना जगुः॥

कुम्भः

**वैष्णवाञ्चितम्—नृत्तकरणम्**

वैष्णवं स्थानकं तिर्यक् नतोन्नतशिरस्तदा।
इङ्गिता दृक् तदा प्रोक्ता करावुत्तानवञ्चितौ।
कुञ्चिता च भवेच्चारी करणं वैष्णवाञ्चितम्॥

नन्दी

इङ्गिता दृष्टिर्यथा, सहर्षेङ्गिता दृष्टिस्यात्कटाक्षचलनक्रमात्।

**वैष्णवीचर्तना**

नाममात्रप्रसिद्धा।

कल्लिनाथः

**वैसारः—वाद्यप्रबन्धः**

खण्डशः पृथगातोद्यवाद्यैर्वैसार उच्यते।

वेमः

**वैहायसम्—गीताङ्गम्**

विहायसां पक्षिणामुभाभ्यां गमनमिव भुजाभ्यां गमनं ह्रस्वाभ्यां शम्यातालभेदेन स्थापनम्। यथा—शिव भसगाव सितभुजगहार श्रितवृषभगमनशतबुद्धिनमितनिरुपमसुर्तिमनुपमकान्ति—इति द्वादशगणं भवति।

मान्यः

**व्यंसितम्—करणम्**

आलीढं स्थानकं हस्तौ स्यातां वक्षसि रेचितौ।
सहोद्वेष्टापवेष्टाभ्यां मूर्धन्यधौमुखौ क्रमात्॥
विप्रकीर्णत्वमापन्नो यत्र तद् व्यंसितं मतम्।
मारुतिप्रमुखप्रौढप्लवंगसपरिक्रमे॥

ज्यायनः

पाणिमुद्वेष्ट्य यत्रैकोऽधोगतो विप्रकीर्णितः।
परावृत्य परस्ताद्दक् ऊर्ध्वं हृदयगस्ततः॥
उत्तानितो रेचितस्स्यादेकोन्योऽधोमुखस्तथा।
स्थानमालीढसंज्ञं चेत्तत्तदा व्यंसितं मतम्।
नियोज्यं वायुसूनवादिवृद्धकपिपरिक्रमे॥

अशोकः

**व्यक्तः—गीतगुणः**

क्रियाकारकसंयुक्तं सन्धिदोषविवर्जितम्।
व्यक्तस्वरसमायुक्तं व्यक्तं पण्डितसम्मतम्॥

सोमेश्वरः

**व्यक्तिः—वंशे फूत्कारगुणः**

व्यक्तः प्रौढोऽश्लथश्चैव, कुम्भः

**व्यञ्जनः—वीणायां धातुः**

दशविधोऽयं, पुष्पं, कलं, तलं, बिन्दुः, अनुस्वनितं, निष्कोटितं, उन्मृष्टं, अवमृष्टं, अनुबन्धनं, व्यञ्जनं—इति॥

भिन्नाङ्गुलिप्रहारेण धातुर्व्यञ्जनसंज्ञकः।

कुम्भः

अयं दशविधः।

**व्यतिकरः—रसगतिः**

समकालसमुत्पन्नैस्त्रिभिर्द्वाभ्यामथापि वा।
रसश्चेद्व्यतिकीर्येत स तु व्यतिकरः स्मृतः।

शारदातनयः

**व्यत्यासताडितम्**—पादमणिः

अङ्गुलीपृष्ठभागेन पादस्यैकस्य यत्र च ।
अपरस्य तलेनाऽपि पादं व्यत्यासितक्रमात् ॥
तिष्ठन् सा दिक् च गच्छन् वा महीं सन्ताडयेन्मुहुः ।
व्यत्यासताडितं तत्तु नृत्तज्ञैः परिकीर्तितम् ॥

वेमः

**व्यथा**

दुःखाविष्टतया स्थानं व्यथा नाम शरीरिणाम् ।
कार्याक्षमत्वं चित्तस्य विषादादुरुपीडनात् ॥

भावविवेकः

**व्यपेक्षा**—भक्तिः

परस्परं पदार्थानामाकांक्षा स्याद्व्यपेक्षणम् ।
तत्राभिधानिकी नैयायिकी नैषेधिकी च सा ॥

तत्र श्रुतिसमाख्या समुच्चयातिदेशादिभिरभिधीयमाना आभिधानिकी । ऊहविपर्ययविपरिणामाध्याहारवाक्यशेषव्यवहितकल्पनादिभिरुपकल्प्यमाना नैयायिकी । निषेधवचनतो नैषेधिकी ।

भोजः

सा व्यपेक्षा पदार्थानां आकांक्षा या परस्परम् ।
या च क्रिया कारकादिभावेनान्वययोग्यता ।

शारदातनयः

**व्यभिचारिणः**

व्यभिचारिण इति कस्मात् । उच्यते । वी—अभि—इत्येतावुपसर्गौ । चरतौ धातुः विविधमाभिमुख्येन रसेषु चरन्तीति व्यभिचारिणः । चरन्ति नयन्तीत्यर्थः । कथं नयन्ति यथा सूर्य इदं नक्षत्र अमुं वासरं नयतीति । न च तेन बाहुभ्यां स्कन्धेन वानीयते । किन्तु लोकप्रसिद्धमेतत् । यथेदं सूर्यानक्षत्रमिदं वा यवमेतेव्यभिचारिणः

भरतः

**व्यभिचारिभावः**

व्यभिचारिणो हि लोके रत्यादेः स्थायिभावस्य सहकारित्वेन प्रसिद्धाः । कथमेषां स्थायिभावस्य सहकारित्वमिति चेत् ब्रूमः । ते खलु तस्य तस्य स्थायिभावस्यानुभावान् यथास्वमनुप्रविशद्भिः समानधर्मैरात्मीयानुभावैः वृद्धिस्समानैस्सर्वेषामिति न्यायादभिवर्धयन्तः तैरप्यनुप्रविष्टाः आत्मीयानुभावानां आत्मनैवोन्नीयन्तः स्थाय्यनुकूलविभावोत्पन्नतया स्थायिभावतामेव स्थायिन एवार्थे वर्तमानाः तथा तथा तं तं रसमुपचिन्वाना विविधेन प्रकारेण रसं प्रत्यभिमुखीभूय चरन्ति । यथोक्तं—

विविधं ह्याभिमुख्येन चरन्तो व्यभिचारिणः ।
स्वधर्मस्यार्पणेनैव पुष्णन्ति स्थायिनं तदा ॥
यथास्वं निविशन्त्येते स्थायिनो व्यभिचारिणः ।
अतस्सुखानुबन्धाः स्युर्ग्लानिप्रभृतयो रतौ ॥

शोके दुःखानुविद्धाः स्युरिति सर्वत्र चिन्त्यताम् — इति । अपि चोक्तम्—

विशेषादाभि मुख्येन चरन्तो व्यभिचारिणः ।
स्थायिन्युन्माननिर्मग्नाः कल्लोला इव सागरे ॥

अयमाशयः – यथायथं तैस्तैर्विभावैर्लब्धात्मभावाः मुखादिलक्षणैर्धर्मैरनुबद्ध्यमानाः स्वानुकूलविभावोत्पन्नैर्जलतरङ्गन्यायादात्मनस्त्वभिन्नैरेवात्मविवर्तैं निर्वेदादिभिः समानधर्मैरेव बहुलीक्रियमाणैः तैस्सहैकत्वं पृथक्त्वं चावहन्तः स्वधर्मान् तेषु विक्षिपन्तः तद्धर्मैरत्यात्मानमप्याप्याययन्तः स्वभावबलासारितोत्कर्षद्वारेण रसतामापाद्यमानाः लोके स्थायिभावाः परिदृश्यन्ते । तस्मात् 'स्थायिनोऽर्थे प्रवर्तन्ते भावास्सञ्चारिणो यथा' इति स्मृतेश्च । स्थायिसहकारित्वं व्यभिचारिणामुत्प्रेक्षामहे । अत्र मुनिः वि अभि इत्येतावुपसर्गौ । चरगतौ धातुः । वागङ्गसत्वोपेतानां प्रयोगे विविधानां रसानामाभिमुख्येन चरन्तीति व्यभिचारिणः । तान्नयन्तीत्यर्थः ।

रसविवेकः

**व्यवसायः**—अवमर्शसन्ध्यङ्गम्

व्यवसायोऽर्थ्यहेतुयुक्—युगिति योजनम् । अर्थनीयस्य फलस्य हेतुः तद्योगो व्यवसायः । अन्ये तु व्यवसायः स्वशक्त्युक्तिः इति पठन्ति । यथा—वेण्यां—नूनं तेनाद्य—इत्यादि । एतच्च संरम्भाङ्गेन सङ्गृहीतम् ।

सागरः

व्यवसायः स्वसामर्थ्यप्रख्यापनमुदीर्यते ।

सिंगः

व्यवसायः स्वशक्त्युक्तिः पुरतः कस्यचित्कृता ।

सर्वेश्वरः

व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसंभवः ।

भरतः

प्रतिज्ञातस्याङ्गीकृतस्यार्थस्य हेतवो ये तेषां संभवः प्राप्तिः व्यवसायः । यथा—रत्नावल्यां ऐन्द्रजालिकप्रवेशाद्यौगन्धरायणेन यत्कर्तुमङ्गीकृतं तस्यैव हेतुः प्राप्तिः ।

अभिनवः

प्रतिज्ञाहेतुसंश्लिष्टं वाक्यं व्यवसायः । यथा—वेण्यां जानाति सुयोधनो जलस्तम्भनीं विद्यामिति ।

सागरः

व्यवसायी

सदोषेषु पुनः कार्यमालोच्य गुणवत्तरम् ।
व्यवसत्याशु कर्ता यो व्यवसायी स कथ्यते ॥
किञ्चिदाचरितं कार्यं व्यवसायसमुत्थितम् ।
आकार्यसिद्धेरजडो यश्च सोऽपि तदाह्वयः ॥

भावविवेकः

व्यवहारः

गुणप्रधानभावेन यासौ व्यवहृतिर्मता ।

कुम्भः

व्यस्तोत्प्लुतनिवृत्तम्—चालकः

आकुञ्चत्कूर्परौ पार्श्वाभिमुखौ निर्गतौ करौ ।
ततश्चान्योन्यसंश्लिष्टौ तथैवोर्ध्वचलन्मुखौ ॥
भूतलाभिमुखौ यत्र क्रियेते रेखयान्वितौ ।
व्यस्तोत्प्लुतनिवृत्तं तदाचक्षत विचक्षणाः ॥

व्याक्षेपि—दर्शनम्

पश्चादपाङ्गसञ्चारात् दूरे व्याक्षेपि कथ्यते ।

वेमः

व्याख्या-द्विपदी—(मात्रावृत्तम्)

प्रथमो गणः द्विमात्रः, त्रिमात्रः, पञ्चमात्रो वा, साकल्येन दशमात्रः ।

विरहाङ्कः

व्याघ्रः—हस्तः

अङ्गुल्यः कुञ्चितास्सर्वाः व्याघ्रहस्तो विधीयते ।
पुरोमुखः पुरोभागे पञ्चास्यस्य निरूपणे ॥
पार्श्वभागे स्थितौ तौ चेत्कपौ व्याघ्रे च दर्शयेत् ।
अधोमुखस्तु विन्यस्तो व्याघ्रपादनिरूपणे ॥
स्त्रीणां स्तने मुखं बध्वा नखक्षतनिरूपणे ।
व्याघ्रहस्तो विधीयेत तत्तत्कर्मानुसारतः ॥

विनायकः

—स्वरजातिः

चतुर्युता तु सप्तत्या व्याघ्र इत्यभिधीयते ।

औमापतम्

व्याघ्रनन्दनः—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स रि ग प ध स.
(अव) स नि ध नि ध प म ग रि स.

मज

व्याघ्रमञ्जरी—मेलरागः (सुवर्णाङ्गीमेलजन्यः)

(आ) स रि म प नि स.
(अव) स नि ध प म ग रि स.

मज

व्याजः—शृङ्गारचेष्टा

सत्यभीष्टार्थसंप्राप्तावौत्सुक्योत्तरलं मनः ।
गोपितुः क्रियते यान्या चेष्टा व्याजस्स कीर्तितः ॥

यथा—'इति वादिनि देवर्षौ'। कुम्भः

अनुरागतः प्रवृद्धीक्रियते स्त्रीभिर्यदन्यदपदिश्य ।
चुम्बनमाश्लेषो वा व्याजस्स तु कीर्तितः कृतिभिः ॥
प्रियायाः प्रथमालोके यदा प्रियतमस्य च ।
तत्क्षणोद्भूतमदनः विकाराकारसंवृतौ ।
क्रियते यान्यमाश्रित्य चेष्टाव्याजस्सविश्रुतः ॥

शिङ्गिः

व्याजिमः—पुस्तः

व्याजिमो नाम विज्ञेयो यन्त्रेण क्रियते तु यः ।

भरतः

व्यादीर्णम्—चिबुकम्

जृम्भालस्यादिषु भवेद्व्यादीर्णं दूरनिर्गतम् ।

वेमः

व्यादीर्णा—हनुः

व्यादीर्णात्यर्थविवृता जृम्भायां भाषणे इमे ? ।
स्थूलवस्त्वनुगारेच हनुस्तज्ज्ञैः प्रयुज्यते ॥

सोमेश्वरः

व्याधिः—चित्ताभिनयः

दोषाधिक्येन जनितः शीतज्वर इतीर्यते ।
वियोगादेव जनितः तापज्वर इतीर्यते ॥
पताकाधो मुखस्थाने बद्धस्तु तदनन्तरम् ।
किञ्चित्सूची तु तस्मिंश्च चलितस्तु पुनः पुनः ॥
मृगशीर्षो हस्तमूले नाड्यां चैव स्थितो यदि ।
शीतज्वर इति प्रोक्तो भरतागमवेदिभिः ॥
कर्तरी च पुरोभागे चलिता तदनन्तरम् ।
अधोमुखः पुरोभागे चलिता तु विशेषतः ।
ज्वरे वियोगजनिततापाख्ये विनियुज्यते ॥

विनायकः

**व्याधिः**—व्यभिचारिभावः

वातपित्तकफसन्निपातप्रभवः। तस्य ज्वरादयो विशेषाः। ज्वरस्तु द्विविधः, सशीतस्सदाहश्च। तत्र सशीतस्य प्रवेपित-सर्वाङ्गोत्कम्पननिकुञ्चनाग्न्यभिलाषरोमाञ्चहनुवलननासाविकूण-नमुखशोषणपरिदेवितादयोऽनुभावाः। सदाहस्य विक्षिप्ताङ्गकर-चरणभूम्यभिलाष आनुलेपनशीतलाभिलाषपरिदेवनमुखशोष-णोत्क्रुष्टादयोऽनुभावाः। अन्यव्याधयो मुखविकूणनगात्रस्तम्भ-स्रस्ताक्षिनिश्वसनस्तनितोत्क्रुष्टवेपनादिभिरभिनेयाः।

भरतः

धातुक्षोभेण शोकेन वा तमङ्गविक्षेपादिभिरभिनयेत्।

सागरः

**व्याधिः**—विरहावस्था

सामदानार्थसंभोगैः काम्यैस्संप्रेपणैरपि।
सर्वैर्निराकृतैः पश्चाद्व्याधिस्समुपजायते॥

मुह्यति हृदयं क्वापि प्रयातिशिरसश्च वेदना तीव्रा।
न धृतिं चाप्युपलभतेह्यष्टममेवं प्रयुञ्जीत॥

भरतः

**व्यापकम्**—गीताङ्गम्

स्वरकालाङ्गभेदैः व्याप्तं व्यापकमुच्यते। यथा—शशिकल-धवलमित्यादिगणैर्द्वादशभिर्भवति।

नान्यः

**व्यापकश्रुतिभूषणः**—वाद्यप्रबन्धः

दशखण्डाभिधायादौ भिन्नभिन्नसुवाद्यकात्।
शेखराख्यो भवेद्वाद्यो रञ्जको भिन्नपाठकः॥

एकपाटस्तु खण्डानां दिशानामन्ततो भवेत्।
विलम्बितलयोऽप्यत्र ततो मध्यलयात्मकौ॥

यमलाभिधकौ खण्डौ स्यातां द्वौ भिन्नवाद्यकौ।
पूर्ववच्चैतयोरन्ते शेखरं संप्रयोजयेत्॥

ततः प्राग्दशखण्डानां पृथग्भावचतुष्टयम्।
प्रत्येकं तु द्विरभ्यस्तं सकृद्वा पुनरुच्चरेत्॥

शेखरं त्वन्ततो युञ्ज्यात् पूर्ववन्मध्यमो लयः।
कलासाख्यं ततः खण्डं शुद्धपाटविमिश्रितम्॥

धीगत भूरिवाद्याढ्यं कुर्याद्द्रुतलयात्मकम्।
सर्वत्र स्वेप्सितस्ताल एक एव प्रकीर्तितः॥

तदेनं मुनयः प्राहुः व्यापकश्रुतिभूषणम्।
ताण्डिकाव्याप्तिमित्याहुः श्रीकर्णाटकभूषणाः॥

श्रीकण्ठः

**व्याभुग्नम्**—वदनम्

यन्मनागायतं वक्त्रं तद्व्याभुग्नमितीरितम्।
औत्सुक्यचिन्तानिर्वेदगम्भीरालोकनादिषु॥

अशोकः

**व्यायोगः**—रूपकम्

प्रख्यातनायकविषयः। ऋषिकन्यापरिणययुतः सम्भोगमुक्तो वा एकाङ्कः। नियुद्धयुद्धबहुलः दीप्तवीररौद्ररसः विदितकथः, संस्फोटवान्मुखनिर्वहणसन्धियुक्तः, नातिकरुणशृङ्गारः कथ्यते सद्भिः।

सागरनन्दी

व्यायोगस्तत्र बुधैः कार्यः प्रख्यातनायकशरीरः।
अल्पस्त्रीजनयुक्तः स्यादेवं हि प्रयोज्यश्च॥

बहवस्तत्र तु पुरुषाः व्यायच्छन्ते कथाशरीरवशात्।
न च तत्प्रमाणनियमः किंचैकाङ्को विधातव्यः॥

न स दिव्यनायककृतः कार्यो राजर्षिनायकनिबन्धः।
युद्धनियुद्धाधर्षणसङ्घर्षयुतश्च कर्तव्यः।
एवं विधस्तु कार्यो व्यायोगो दीप्तकार्यरसयोनिः॥

भोजः

व्यायोगस्तु डिमस्यैव दोषभूते दिव्यनायकाभावात्। केवल-मत्रोदात्तस्य राजादेर्नायिकता। अपि त्वमात्यसेनापतिप्रतेर्दीप्त रसस्य। दिवैर्देवैर्नृपैऋषिभिश्च नायकैः न निबद्धोऽयं भवती-त्यर्थः। ननु कस्मादयं व्यायेग इत्याह। युद्धनियुद्धेति। व्याया-मे युद्धप्राये नियुद्धन्ते पुरुषा यत्रेति व्यायोग इत्यर्थः। सङ्घर्षेति। शौर्यविद्याकुलरूपादिकृता स्पर्धा। दीप्तेति। दीप्तं काव्यमोजोगुण-युक्तम्। दीप्तरसाद्याः वीररौद्राद्याः। तदुभयं योनिः कारणमस्य।

अभिनवगुप्तः

व्यायोगस्येतिवृत्तं यत्तत्प्रख्यातमितीरितम्।
धीरोदात्ताश्च विख्याताः देवा राजर्षयोऽथवा॥

नायकास्त्रिचतुः पञ्च भवेयुर्न दशाधिकाः।
दिव्ययोनिरथाल्पस्त्रीपरिवारस्त्रिसन्धिकः॥

गर्भावमर्शरहितो विष्कम्भादिसमन्वितः।
एकाहचरितैकाङ्को भारत्यारभटीयुतः॥

युद्धाधर्षणसंफेटविद्रवादिनिरन्तरः।
काचित्कः स्वल्पशृङ्गारः षड्दीप्तरसनिर्भरः।
अस्त्रीनिमित्तसङ्ग्रामो व्यायोगः कथितो बुधैः॥

शारदातनयः

यथा—परशुरामविजयः, धनञ्जयविजयः, वीरविक्रमः। षडिति। शृङ्गारहास्यशान्तरहिताः नव रसाः। डिमस्येति शेषः।

**व्यालशीला—स्त्री**

मानावमानयोस्तुल्या परुषा कटुकाक्षरा।
शठानृतोद्धतकथा पिङ्गद्व्यालवंशजा॥

भरतः

**व्यावर्तकः—हस्तप्राणः**

वक्रतः पार्श्वभागो यो हस्तो व्यावर्तको मतः।

मल्लः

**व्यावर्तितम्—हस्तकरणम्**

व्यवर्तने कनिष्ठाद्या यत्राऽङ्गुल्यः क्रमाद्यदि।
अभ्यन्तरेण तत्प्रोक्तं सद्भिर्व्यावर्तितं तदा॥

अशोकः

**व्याविद्धम्—दर्शनम्**

ऊर्ध्वाधःक्षिप्रसंचारो व्याविद्धमिति कथ्यते।

शारदातनयः

**व्याकीर्णपदा—गतिः**

व्याकीर्णपदसञ्चारा साव्यक्तान्वर्थलक्षणा।

देवणः

**व्यावृत्तः—वर्णालङ्कारः (सञ्चारी)**

मूर्छनाद्यस्वराङ्कस्वतृतीयं तदनन्तरम्।
द्वितीयात्तुरीयमभ्यस्य पुनः प्रथममाश्रयेत्॥
चतुःस्वरे एवमाद्याः स्याद्रिगमाद्याः कलास्ततः।
चतुःस्वराः प्रोक्तरूपाश्चेद्व्यावृत्ताभिधस्त्वसौ॥

पण्डितमण्डली

सगरिसस, रिमगपरि, गपमधग मधपनिम।

**व्यासङ्गि—दर्शनम्**

व्यासङ्गि ज्ञेयमन्यत्र सोत्कमन्यत्र च स्थितम्।

वेमः

**व्याहारः—अवमर्शसन्ध्यङ्गम्**

प्रत्यक्षवचनं यत्तु स व्याहार इति स्मृतः

भरतपाठान्तरम्

**—वीथ्यङ्गम्**

प्रत्यक्षवृत्तिरुक्तो व्याहारो हास्यलेशार्थः।

भरतः

**अथवा—**

प्रत्यक्षं नायकस्यैव यद्वै दृष्टवदुच्यते।
आशङ्कितं तथा योगाद्व्याहारस्सोऽभिधीयते॥

भरतः

प्रत्यक्षशब्देन भावी प्रत्यक्ष उच्यते। तदयमर्थः-भाविनि प्रत्यक्षेऽर्थे दैववशाद्वृत्तिर्यस्य स व्याहारः। विविधोऽर्थोऽभिनीयते येन। यथा—उद्दामोत्कलिकामित्यादि रत्नावल्याम्।

अभिनवः

अन्यार्था भाविदृष्टिर्वा व्याहारो हास्यलेशगीः। यथा—मालविकाग्निमित्रे लास्याङ्के नायकस्य विस्रब्धनायिकादर्शनार्थं प्रयुक्तो हास्यलेशकारित्वाद्व्याहारः। भाविदृष्टिर्यथा उद्दामोत्कलिकामित्यादि.

रामचन्द्रः

प्रत्यक्षानुभवारूढो व्याहारो हास्यलेशकृत्।

कृतसंभोगं राजानं सोपहासमिव भूप तवकार्येषु मे जिह्वा पल्लवयत्येव। गुडदध्ना जडायितुम्।

सागर

**व्रीडा—चित्राभिनयः**

हंसास्यस्तु पुरोभागे ऊर्ध्वाधश्चलितो यदि।
संयुक्तार्धपताकौ द्वौ पुरोभागे स्थितौ यदि॥
नवसङ्गमभावे तु दर्शयन्ति मनीषिणः।
मुखस्थाने तु मुकुलः तिर्यक् चालः पताकिकः॥
पताकश्चोर्ध्वभागे तु मूढस्तोले विधीयते।
पुरोमुखः पुरोभागे पताकश्चलितो यदि॥
तिर्यग्घंसास्यचलनं पताकं तदनन्तरम्।
अधोमुखं चालयित्वा अकार्यकरणे भवेत्॥

विनायकः

**—व्यभिचारिभावः**

अकार्यकरणात्मिका। सा च गुरुव्यतिक्रमणावज्ञानप्रतिज्ञानिर्वहण पश्चात्तापादिभिरुत्पद्यते। तां निगूढवदनाधोमुखविचिन्तनोर्वीलेखनवस्त्राङ्गुलीयकस्पर्शन नखनिकृन्तनादिभिरनुभावैरभिनयेत्।

भरतः

अकार्यकरणज्ञानात् गुर्वाज्ञादिव्यतिक्रमात्।
अनिर्वाहात्प्रतिज्ञायाः त्यागाद्भूयोनुतापतः।
व्रीला तदनुभावाः स्युरुर्वीलेखनचिन्तने।
मुखावनम्रताऽव्यक्ते वचनं नखकर्तनम्।
वस्त्राङ्गुलीयकस्पर्शो दूरादेवावकुण्ठनम्।
अनिर्गमो बहिः कापि सर्वत्राप्यनवस्थितिः॥

शारदातनयः

## श

**शकः—रागः**

जातष्षड्ज्यास्सधैवत्याः षड्जांशन्याससंयुतः।
पीडनं पञ्चमस्यात्र शकरागः प्रकीर्तितः॥

मोक्षः

जातष्षड्ज्याश्च धैवत्याश्शकसंज्ञो निरूप्यते ।
षड्जस्यान्तांशसंयुक्तः पञ्चमाल्पो भवेदयम् ॥
युक्तारोहिप्रसन्नान्तो मध्यमश्रितमूर्छनः ।
शकसंज्ञ इति प्रोक्तो नारदेन महात्मना ॥

हरिः

शकटः—हस्तः

भ्रमरे मध्यमाङ्गुष्ठप्रसाराच्छकटो भवेत् ।
पुरो भागे तु शकटः राक्षसे शकटार्थके ॥

विनायकः

शकटघ्नः—देशीतालः

शकटघ्ने विरामान्तः द्रुतत्रयमथ गुरुः ० ० ० ऽ

लक्ष्मणः

शकटहस्तिनी—मेलरागः (मेचकल्याणी मेलजन्यः)

(आ) स म ग म प नि ध म प ध नि स.
(अव) स नि ध प म ग रि स.

मज्ञ

शकटहस्तः

अर्धचन्द्राख्यकरयोस्सम्मुखं मेलनं कृतम् ।
स्वस्तिकेनाङ्गुलीस्सर्वा व्याकुञ्चेच्छकटाभिधे ।
सूर्याचन्द्रमसावस्य देवते सूर्यमण्डले ।
चन्द्रस्य मण्डले चापि शकटे विनियुज्यते ।

गौरीमतम्

शकटास्यम्—मण्डलम्

जनितां च स्थितावर्तां शकटास्यां तथैव च ।
एलकाक्रीडितां वृत्ताङ्कितां च जनितां पुनः ॥
समोत्सरितमत्तल्लीं शकटास्यामपि क्रमात् ।
कुरुते दक्षिणो वामश्चरणः स्पन्दितां तथा ॥
ततश्च शकटास्यां च यावन्मण्डलपूरणम् ।
क्रियते यत्र तत्प्रोक्तं शकटास्यं तु मण्डलम् ॥

वेमः

—करणम्

पादे तु शकटास्याधः समं हस्तं प्रसारयेत् ।
तद्विक्रमपरं कुर्याद्वक्षस्स्थं खटकामुखम् ॥
यत्र स्याच्छकटास्यं तत्क्रीडागोपालखेलने ।
अभ्यधाच्च करावत्र भट्टतण्डुस्तु रेचकौ ॥
पादावादाय हस्ताभ्यां द्विरिः कुर्याद्गतागतम् ।
शकटाकारतां बिभ्रदिति कैर्तिधरं मतम् ॥

ज्यायनः

शकटास्या—चारी

निषण्णदेहं संधार्य पूर्वकायं प्रयत्नतः ।
समुन्नमय्य वक्षश्च यदाग्रतलसंचरम् ।
पादं प्रसारयेच्चारी शकटास्या तदा भवेत् ॥

वेमः

शकतिलकः—रागः

मध्यमापञ्चमीजातस्तिलकश्शकपूर्वकः ।
पञ्चमांशग्रहष्षड्जहीनो मध्यममूर्छनः ॥
सञ्चारिवर्णसंयुक्तः काकलीकलितस्तथा ।
सप्रसन्नान्त एव स्यात्तिलकश्शकपूर्वकः ॥

हरिः

नैषादीपञ्चमीजात्योः शकाद्यस्तिलकाह्वयः ।
निषादांशो भवेदेष पञ्चमन्याससंयुतः ॥

मोक्षः

शकवलिता—रागः

गान्धारषड्जहीना पांशन्यासग्रहा धरिमर्दीर्घा च ।
सस्फुरिता शकवलिता पुष्यकताना च नन्दिनीमूर्छा ॥

नान्यः

पंचमांशग्रहन्यासा षड्जगान्धारवर्जिता ।
शकवलिता दीर्घैस्स्यद्धारिमैः स्फुरितान्वितः ॥

मतङ्गः

सांशन्यासनिषादा धापन्यासा च तिरिपगमकाद्या ।
क्रममन्द्रतारमध्यमषड्जा ज्ञेया शकवलिता ॥

नान्यः

षड्जांशा सप्तमन्यासाप्यपन्यासस्थधैवता ।
विज्ञेया शकवलिता सतारामन्द्रमध्यमा ॥

याष्टिकः

अस्याश्च यथोक्तविशेषवेदितो मालवकैशिकवाङ्गालिकयोरिवालापकरूपकविधिर्वेदितव्यः ।

शक्तिः—अवमर्शसन्ध्यङ्गम्

विरोधिप्रशमो यश्च सा शक्तिः ।

भरतः

विरोधिनः कुपितस्य प्रशमः प्रसादनम् । शक्तिः । बुद्धिविभवादि शक्तिकार्यत्वात् । यथा—सव्याजैः शपथैरिति राजवाक्यं रत्नावल्याम् ।

अभिनवः

विरोधप्रशमः शक्तिः । यथा—नागानन्दे अज्ञानेत्यादिगरुडवचनम् ।

सागरः

कृद्ध्रप्रमादनं शक्तिः ! प्रसादनं अनुकूलनम् । अथवा । छिषतः प्रकर्षेण सादनं विनाशनं शक्तिः। यथा—कृत्यारावणे रामेण प्रलयेनेव दशशिराः पातित इति रावणस्य विनाशनम्। विरोध-प्रशमनं शक्तिरिति पाठे प्रसादने प्रसक्तेरपि भावान् एतदप्यन्त-र्भूतम्। अथवा—प्रकृताभिप्रायविरुद्धाचरणहेतुरभिप्रायो भावा-न्तरमङ्गम्। अत्रान्ये मन्यन्ते। यथा—तापसवत्सराजे षष्ठेऽङ्के वासवदत्तां मरणाध्यवसायान्निवर्तयितुं यौगन्धरायणस्य भावः तद्विरुद्धाचरणं भावान्तराच्छनमिति च शक्तिः। अन्ये तु शक्ति-स्थाने आज्ञां पठन्ति। कृत्यारावणे दारुणिकाया रावणस्याज्ञा।

सागरः

क्षमातिरस्कृतो रोषः शक्तिरुच्यते।

सर्वेश्वरः

उत्पन्नस्य विरोधस्य शमनं शक्तिरुच्यते।

सिंगः

विरोधशमनाच्छान्तिः।

**शक्तिमुद्रिका**—अङ्गुलीयकम्

अङ्गुलीवलयैर्वज्रैर्वेष्टिता शक्तिमुद्रिका।

सोमेश्वरः

**शक्करीछन्दोवृत्तानि**

शतानि त्रीण्यशीतिश्च सहस्राण्यपि षोडश।
वृत्तानि चैव चत्वारि शक्कर्याः परिसंख्यया ॥ १६३८४

भरतः

**शक्त्यङ्कणपुराधिपः**—देशीतालः

ततश्शक्त्यङ्कणपुराधिपताले प्लुतश्शरौ।
प्लुतश्शरौ प्लुतबाणौ प्लुत बाणौ द्रुतास्त्रयः॥

ऽ॥ऽ॥ऽ॥ऽ॥०००

गोपतिप्पः

**शङ्करप्रिया** मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि म प नि ध प स.
(अव) स नि ध म ग रि स.

मल्ल

**शङ्करानन्दः**—मेलरागः

शङ्कराभरणो रागः शङ्करानन्दको भवेत्।
रिगपास्तत्र चांशास्स्यू रिन्यासेन सुशोभितः।
स्वस्वसंवादिनां योगाद्यत्र स्याद्गहुकम्पनम॥
सर्वदा गेयः।

अहोविलः

**शङ्कराभरणं**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स ध प म ग रि स.

मल्ल

**शङ्कराभरणः**—मेलरागः

शङ्कराभरणे प्रोक्तौ गनी तीव्रौ तु सादिमे।
गन्यासे मध्यमांशे च ढाल्कम्पसुशोभिते॥
प्रातःकालगेयः।

अहोबिलः

—रागः

वीरे निशि निषादांशः शङ्कराभरणः सदा।

नारायणः

**शङ्कराभरणः**—रागः

मन्द्रस्वरं मुद्रयित्वा वांशिकैः क्रियते यदा।

जय-मल्लः

छायान्तरेण रागोऽन्यः शङ्कराभरणस्तथा॥

जगदेकः

**शङ्कराभरणः** उपाङ्गरागः

मुद्रयित्वा स्वरं मन्द्रं अन्यछायेन वांशिकैः।
क्रियते मध्यमादिश्चेच्छङ्कराभरणो ह्यसौ॥

भट्टमाधवः

—मेलकर्ता

यश्शङ्कराभरणरागमिहापि षड्ज-
युक्ताच्युतोक्षशिवगान्धरशुद्धमध्यम्।
पञ्चार्थयुक्तहरिधैवतरुद्रदन्ती
एवं क्रमाक्रमसमं कथयन्ति पूर्णम्॥

समपाः शुद्धाः। रिश्चतुः श्रुतिः। गस्साधारणः धश्चतुश्रुतिः काकलिर्निषादः। पञ्चमोऽप इत्यर्थशब्देन द्योत्यते।

परमेश्वरः

—मेलरागः (केदारमेलजः)

शङ्कराभरणो रागः षड्जत्रयमनोहरः।
गेयस्सूर्योदये नित्यं मुद्रितामिधभूषितः॥

श्रीकण्ठः

—रागः

सैव मुद्रितमन्द्राचेद्वंशवादनकर्मणि।
छायान्तरेण गानेन शङ्कराभरणो भवेत्॥
सैवेति मध्यमादिः।

हरि

शङ्कराभरणरागध्यानम्

महेशमौलीन्दुसुधातितृप्तः
स्फुरत्फणास्थूलमणिप्रदीपः ।
भुजङ्गमूर्तिः कमनीयकीर्ति-
विराजते शङ्करभूषणाख्यः ॥

श्रीकण्ठः

वीणाङ्कितकरां चन्दनागमूलनिवासिनीम् ।
शङ्कराभरणं ध्याये सर्पावृतशरीरिणम् ॥

रागसागरः

शङ्का—व्यभिचारिभावः

सन्देहात्मिका स्त्रीनीचप्रभवा चौर्याभिग्रहणनृपापराधपापकर्मकरणादिभिर्विभावैरुत्पद्यते । सा मुहुर्मुहुरवलोकनावकुण्ठनमुखशोषण जिह्वापरिलेहनमुखवैवर्ण्यस्वरभेदवेपथुशुष्कोष्ठकण्ठायास साधर्म्यादिभिरनुभावैः प्रयोक्तव्या । अत्राकारसंवरणमपीच्छन्ति केचित् । तच्च कुशलैरुपाधिभिरिङ्गितैश्चोपलक्ष्यम् ।

भरतः

सा च कदाचित्स्वस्मिन् । यदा समापराधयोरात्मपरयोः परो राजादिना दण्ड्यते । कदाचित् परस्मिन् । यदा विकाराकुलतया कृतदोषत्वेन परस्संभाव्यते ।

हेमचन्द्रः

अनर्थप्रतिभा शङ्का परक्रौर्यात्स्वदुर्नयात् ।

स्वदुर्नयाद्यथा—रत्नावल्यां सागरिकां प्रतिह्रिया सर्वस्वेति राजवाक्यम् ।

अल्लराजः

शृङ्गारे शङ्कामुत्तमोप्यवलम्बत इति केचित् । तद्यथा—शङ्के भानुमतीमिति दुर्योधनो विदूषकमाह ।

सागरः

शं सुखं कुत्सयति या सा शङ्केत्यभिधीयते ।
आत्मोत्था च परोत्थेति सा पुनर्द्विविधा मता ।
आत्मोत्था तु परिज्ञेया दीनदृष्टिविलोकनैः ।
परोत्थात्वङ्गचेष्टाभिर्विज्ञेया भावकोविदैः ।

शारदातनयः

'परोत्था यथा—
प्रीते पुरा पुररिपौ परिभूय मर्त्यान्
वव्रेऽन्यतो यदभयं स भवानहंयुः ।
तन्मर्मणि स्पृशति मा मतिमात्रमथ
ह्यावत्स शान्तमथवा दशकन्धरोऽसि ॥

अत्र गर्वितरावणकृतेन मर्त्येतराभयवरणेन माल्यवतश्शङ्का मर्मणि स्पृशतीत्यादिना वागारम्भेण प्रतीयते ।

नरसिंहः

शङ्का

वाक्यार्थविषयाद्बुद्धिं विषये सति वा न वा ।
शङ्कां नाम विदुः स्वार्थव्यभिचारनिमित्तजाम् ।
तामेवानिष्टविषयां भिया शोकेन वान्विताम् ।
निवर्तनीं च तद्धेतोराहुश्शङ्केति भूयशः ॥

भाववियेकः

--चित्ताभिनयः

पताकार्धं पुरोभागे चलितं तस्करार्थकं ।
पुरोभागे कर्तरी तु चलिता चापराधके ॥
पुरोभागे तु सन्दंशे हृदये मुकुलं तथा ।
चालयेच्चापि शङ्कायां करटीकाविचक्षणः ॥

विनायकः

शङ्कारवः—मेलरागः (हैमवतीमेलजन्यः)
(आ) स ग रि ग म प ध नि स.
(अव) स नि प म ग रि स.

मज

शङ्किता—दृष्टिः

किञ्चिच्चला स्थिरा किञ्चिदुन्नता तिर्यगायता ।
गूढा चकितताराच शङ्किनी दृष्टिरिष्यते ॥

शारदतनयः

दृश्याद्द्रुतनिवृत्ता च मुहुर्लोला स्थिरोन्नता ।
तिरश्चीना यथा गूढा तथा चकिततारका ।
सा दृष्टिश्शङ्किता प्रोक्ता शङ्कायां पूर्वसूरिभिः ॥

अशोकः

नातिस्थिरा निवृत्ता द्रागीक्षणाद्बहिरुन्मुखी ।
व्यामूढेवायता तिर्यङ्मुहुश्चकिततारका ।
दृष्टिरस्याच्छङ्कितानां च शङ्कायां मेनिरे बुधाः ॥

विप्रदासः

शङ्कुकः

नाट्यशास्त्रव्याख्याता एषः मयूरकवेः पुत्र इति कैश्चिदुक्तम् । काश्मीरराज्ये अयं मन्त्री आसीत् । अभिनवगुप्तः श्रीशङ्कुक इति बहुमानोपपदेन स्मरति । रससूत्रव्याख्याने अनूदितमस्य मतम् । क्रैस्तवे 800

शङ्खः—हस्तः
शिखरान्तर्गताङ्गुष्ठ इतराङ्गुष्ठसङ्गतः ।
तर्जन्याद्या यतश्श्लिष्टा शङ्खहस्तः प्रकीर्तितः ।
अंसभागेत्वयं हस्तः विष्णोश्शङ्खनिरूपणे ॥

विनायकः

—गीतालङ्कारः (अठतालभेदः)
लघुर्गुरुश्च भवति लघुशेखरतालकं ।
शङ्खश्च मद्रतालेन गीयते गीतकोविदैः ॥

सङ्गीतसारः

—शुषिरवाद्यम्
शङ्खं निर्दोषमादाय नाभिं तस्य समुद्धरेत् ।
एकादशाङ्गुलायामं कर्तव्यं शिखरं ततः ॥
क्रमशो हीयमानं च धातुशिक्थकनिर्मितम् ।
अर्धाङ्गुलं मुखे रन्ध्रमन्तरा माषमात्रकम् ॥
विधार्य करयुग्मेन श्वासेनापूरितोदरः ।
वद्यः कराक्षरैः पाटै हुं भुं पाटसमन्वितैः ॥

सोमेश्वरः

उत्खातनाभेश्शङ्खस्य शुद्धस्यैकादशाङ्गुलम् ।
सुषिरं धातुनिष्पन्नं मधुसिक्तकनिर्मितम् ॥
हीयमानाकृतिरयं शिखरस्य प्रदेशतः ।
सुषिरस्य मुखे रन्ध्रं दधदर्धाङ्गुलोन्मितम् ॥
मध्ये माषप्रमाणेन रन्ध्रेण समलङ्कृतः ।
धृतः कुलीरहस्तेन भूरिश्वासभृतोदरः ।
भुं भुं धुं धुं गतिभिरित्येतत्कर्णे बोधविधायकः ॥

कुम्भः

शङ्खः
सुषिरे स्वरपाटाख्ये प्रधानं शङ्ख उच्यते ।
यतः प्रथमतः शङ्खध्वनिस्सर्वत्र साध्यते ॥
यद्वासि मङ्गले शान्तौ कर्मण्यपि च पौष्टिके ।
बिभर्त्ति नीलजलसपलाशश्यामलो हरिः ॥
पुण्डरीकेक्षणः सम्यक् शङ्खं सव्येन पाणिना ।
विष्णोर्लक्ष्मीमुखाम्भोजचुम्बितेनाननेन यः ।
चुम्ब्यते तद्गुणान् वक्तुं शक्तः को नाम मानवः ॥
प्रोद्धुरैः पृथिवीभारकारिसैन्यसमन्वितैः ।
इज्यतेऽद्यापि शङ्खस्य स्वरसंज्ञाभिराहवे ॥
पूर्वं हि संयुगे चासन् क्षोणीन्द्रा ये महारथाः ।
तेषु किन्नाम न धृतः संख्ये शङ्खः स्वसंज्ञया ॥

नान्यः

—अङ्गुलिभूषणम्
—(वर्णालङ्कारः)
सासा निधानिनिधप, धाधापमपापामग, मामागरि, गागारिस, ।

प्रतापसिंहः

—हस्तः
धृत्वाङ्गुष्ठं करे वामे कुर्वतीं शिखराकृतिम् ।
शाखायोगस्तदङ्गुष्ठो कृतश्शङ्खो विधीयते ॥

नागमल्लः

शङ्खम्—करणम्
स्थानं ब्राह्मं करौ यत्र सन्दंशौ रेचितौ पुनः ।
आदेशपादात्पादोक्तसङ्गतौ शङ्खनाम तत् ॥

हरिपालः

शङ्खचूडः—तानः
मध्यमग्रामे रिधहीनौडुवः ।
नि प म ग स .

कुम्भः

शङ्खतालः—देशीतालः
शङ्खो द्रौ लघुसंयुतौ ।
० ० । ऽ

मदनः

शङ्खहस्तः
शिखरान्तः कनिष्ठाग्रं विधायाङ्गुष्ठकाग्रतः ।
आच्छादयेत्तथा सर्वाः शाखाः शङ्खोऽस्य देवता ।
विष्णुस्स कथितश्शङ्खे विनियोग उदीरितः ॥

गौरीमतम्

शङ्खिनी—श्रुतिः
मन्द्रगान्धारद्वितीया श्रुतिः ।

मण्डली

शङ्खिनीहस्तः
शङ्खिनी पञ्चमामिख्या मध्यमं चापि वाञ्छति ।
अपवेष्टितरूपश्चेत् हंसपक्षाभिधः करः ।
शङ्खिन्यां युज्यते साक्षात् करोऽभिनयवेदिभिः ॥

शृङ्गारः

**शङ्खिन्यभिनयः**

अलपल्लवमृगशीर्षहस्तयोः नाभिधारणेन कर्तव्यः ।

महाराष्ट्रे

**शठः**

अयं ऋषिः तालशास्त्रविधाता वेममूपालेन सङ्गीतचिन्तामणौ स्मर्यते ।

**शठछत्रौ—ऋषीः**

जातानि सप्त सामभ्यो मद्रकादीनि सप्त च ।
गीतकानि प्रयुक्तानि भरताद्यैर्महर्षिभिः ॥
एतेभ्यस्सर्वगीतानामुद्भवः परिकीर्तितः ।
आचार्ययोश्शठछत्रसंज्ञयोरुपदेशतः ॥
गीतेष्वेतेषु मार्गौ द्वौ शठछत्राभिधौ मतौ ।
गीताङ्गानां तु संक्षेपाच्छठमार्ग उदाहृतः ॥
छत्रमार्गस्तु विज्ञेयो गीताङ्गैरङ्गविस्तरात् ।
सप्तस्वेतेषु गीतेषु लयमार्गानुसारतः ।
विकल्पा बहवो ज्ञेयाः गीतविद्याविशारदैः ॥

वेमः

सप्तसाम प्रस्तारादयः । गीतकानि लौकिकगीतानि । सर्वगीतानां शुद्धाभिन्नादिपञ्चजातीनां ।

**शतक्रतुः—देशीतालः**

प्रतिलोमाच्छतक्रतुः । लक्ष्मणः

**शतघ्नी—अष्टतालप्रमाणमायुधम्**

**शतभिषगभिनयः**

इतस्ततः सूचीहस्ताङ्गुलिचालनात् कर्तव्यः ।

महाराष्ट्रे

**शताभिषग्हस्तः**

सूचिरुद्वेष्टितः ख्यातो नाम्ना शतभिषक्कृतः ।

शृङ्गारः

**शत्रुशल्यः—देशीतालः**

शत्रुशल्याभिधे ताले लो द्रुतौ लः प्लुतद्वयम् ।
। ० ० । ऽ ऽ श्रीकण्ठः

(शत्रुशल्यः श्रीकण्ठकवेराश्रयो गूर्जराधिपः)

**शब्दः**

नादादिहेतुको यः स्यादक्षराणां समुच्चयः ।
आनुपूर्वीसमुल्लेखः स शब्दव्यपदेशभाक् ॥

कुम्भः

**शब्दगुणाः**

अधिष्ठानं स्वभावश्च गुणाः कार्यान्वयस्तथा ।
तादात्म्यं चेति शब्दस्य तद्गुणाः पञ्च कीर्तिताः ॥

कुम्भः

**शब्दचालिः—देशीनृत्तम्**

प्राग्वत्कृत्वा स्थानहस्तौ मध्यसञ्चेन नर्तकः ।
यत्र स्थित्वैकपादेन शब्दवर्णानुगामिनीम् ॥
गतिं नयेद्द्वितीयेन दक्षिणाध्वनि शोभनम् ।
तद्वत्पादान्तरेणाथ क्रमेणैतद्द्वयोर्यदा ॥
पर्यायेण गतिं कुर्याद्वार्तिकादिषु पञ्चसु ।
मार्गेष्वसौ शब्दचाली पण्डितैश्च निरूपिता ॥

**अथवा**

मार्गतालैः क्रमेणैव रासतालेन नर्तनम् ।
शब्दचालिस्तथा प्रोक्ता लक्ष्यदृष्टया विचक्षणैः ॥

दामोदरः

प्राग्वत् यतिनृत्तवत् । पञ्चस्विति । दक्षिणवार्तिकध्रुवकचित्रचित्रतरचित्रतमेषु—इत्यर्थः ।

**शब्दच्युतम्—काव्यदोषः**

शब्दच्युतं च विज्ञेयमवर्णस्वरयोजनात् ।

भरतः

**शब्दपाकः**

यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् ।
तं शब्दपाकनिष्णाताः शब्दपाकं प्रचक्षते ॥

रसिकरयायने

**शब्दार्थसंबन्धः**

अयं कैश्चिद्भक्तिरित्युच्यते

वृत्तिर्विवक्षा तात्पर्यं प्रविभागो व्यपेक्षणम् ।
सामर्थ्यमन्वयैकार्थ्ये अष्टौ वृत्त्यादयः स्मृताः ।
दोषहानं गुणादानमलङ्कारो रसान्वयः ॥

इति द्वादशसंबन्धाः । भोजः

**शनिहस्तः**

श्लिष्टचन्द्रे मध्यमादित्रिकितातलमाश्रिता ।
रेखा चन्द्रकरस्सोयं सौरार्थे संप्रयुज्यते ॥

शृङ्गारः

**शबरीरागध्यानम्**

श्रीकण्ठशैलशिखरे शिखिबर्हवासा
मातङ्गमौक्तिककृतोत्तमहारयष्टिः ।

आकृष्यते वनतरोश्शबरीभुजङ्ग-
माबन्धती वलयमुज्वलनीलकान्तिः ॥

सङ्गीतसरणिः

इयमेवाशात्ररीति कैश्चिद्वदिता । षाडवाचेयम् ।

शम्भुतालः

द्रुतप्लुतौ शम्भुताले ।

3½ मात्राः तालप्रस्तारः

शम्भुक्रिया—(धीरशङ्कराभरणमेलजन्यः)

(आ) स ग रि म प नि स.

(अव) स नि प नि म ग रि स

मञ्ज

शम्भुराजीयम्

नाट्यशास्त्रव्याख्यानम् । क्रैस्त-1350 काले शम्भुराजेनकृतम् पण्डितमण्डल्यामुदाहृतोऽयं ग्रन्थः । अयं राजा काञ्चीपतिः ।

शम्भुविजृम्भितम्—नृत्तकरणम्

स्थानं शैवं समाख्यातं तदा स्यादञ्जलिः करः ।
प्रकम्पितं कं दृग्वीरा चारी च कृतविच्युतिः ॥
करणं दत्तिलप्रोक्तं नाम्ना शम्भुविजम्भितम् ॥

नन्दी

अत्र कं शिरः । कृतविच्युतिः. गतिः । यथा,

भूमौ पादेन निहतिश्चाग्रयोश्चलनं जवात् ।
पार्श्वे विच्युतसंयुक्तौ यत्र सा कृतविच्युतिः ॥

शम्या—तालक्रिया

वामपाणितले पातो दक्षिणस्य करस्य यः ।
शम्येति सा निगदिता —

वेमः

शयनकर्माणि—षट्

आकुञ्चितं समं चैव प्रसारितविवर्तने ।
उद्वाहितं नतं चैव शयने कर्म कीर्त्यते ॥

भरतः

शय्यागतम्—अवनद्धे त्रिसंयोगः

शय्यां निद्राङ्ग विश्रान्ति गतं शय्यागतं विदुः ।

नान्यः

—अवनद्धे वर्णसंयोगः

यतिः । गोपुच्छः । लयः विलम्बितः अर्धपाणिः ।

भरतः

—पुष्करवाद्ये लययतिपाणिसंयोगः

अर्धपाणिस्तु यत्र स्यात्तथाचैव स्थितो लयः ।
यतिश्चैव तु गोपुच्छा वाद्यं शय्यागतं तु तत् ॥

भरतः

शरद्युतिः—मेलरागः (माररञ्जनीमेलजन्यः)

(आ) स रि ग म प ध स.

(अव) स नि ध प म ग स.

मध

शरपञ्जरहस्तः

कर्कटाभिधहस्तोऽयं तिर्यग्बद्धश्च पूर्वकं ।
शरपञ्जरहस्तः स्यादिति प्राहुर्मनीषिणः ॥
पुरोभागेत्वयं हस्तः शरपञ्जरदर्शने ।
प्रलये व्यासपीठे च द्वन्द्वयुद्धनिरूपणे ।
भीष्मनिर्याणसमयशयने विनियुज्यते ॥

विनायकः

शरभध्वजः—मेलरागः (गमनश्रममेलजन्यः)

(आ) स रि ग म प ध नि स.

(अव) स नि ध प ग रि स.

मध

शरभबन्धः—नृत्तबन्धः

कोणेषु पात्रमेकैकं मध्ये पात्रचतुष्टयम् ।
इत्यष्टौ यत्र कुर्वन्ति भुवां विनिमयं मिथः ।
तमाह शरभं बन्धं पाण्ड्यकुञ्जरकेसरी ॥

वेमः

शरभललिता—चतुर्दशाक्षरवृत्तम्

मभनतगगाः । भरतः

शरभलीलः—प्रबन्धः

अष्टौ रागाः पदान्यष्टछन्दश्शरभलीलकः ।
मध्ये मध्ये स्वराः पाटा गातव्या गीतकोविदैः ।
तालगानद्वयन्यास एवं शरभलीलकः ॥

हरिपालः

स्वरपाटान्वितान्यष्टौ पदकानि भवन्ति चेत् ।
अष्टौ रागास्तथा तालास्स्युः स्याच्छरभलीलकः ॥

सोमेश्वरः

—देशीतालः

लौ द्वौ चतुर्द्रुती लौद्वौ ताले शरभलीलके ।

॥ ० ० ० ० ॥ वेमः

स नि स रि स रि ग रि स. जग-मल्लः

**शरभलीलकः**—प्रबन्धः

तालमानद्वयो न्यांसो गीतज्ञैरस्य कल्पितः ।
द्वितीयोऽस्य भवेद्भेदः तस्य रूपं निरूप्यते ॥
तालश्शरभलीलस्स्याच्छन्दसाऽपि तदाख्यया ।
स्वराः पाटास्तदा न्यासो भवेदेतस्य पूर्ववत् ॥

जग-मल्लः

शरभलीलाछन्दोलक्षणम् । इह हि शरभलीला कंकजजगैः ।

**शरभलीलातालोडुपम्**—देशीनृत्तम्

भवेच्छरभलीलस्य तालोडुपमलङ्कृतम् ।
॥ ० ० ० ० ॥ ० ०

वेदः

**शरमोचनी**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग म प ध स.
(अव) स नि ध प म ग रि ग स.

मञ्ज

**शरसन्धानम्**—चालकः

एकस्मिन्नंसपर्यन्ते पराचीने विलोलिते ।
करोऽन्यः पार्श्वतो मौलिपर्यन्तं चेद्गतागतम् ॥
कुरुते लीलया यत्र पराचीनः करः पुनः ।
तत्रैवाऽभिमुखस्स्याच्चेत् शरसन्धानमुच्यते ॥

वेमः

**शर्वरी**—मेलरागः

गौरी मेलसमुद्भूता षड्जोद्ग्राहाऽथ शर्वरी ।
सन्यासा पञ्चमांशाया सा निन्यासेन शोभिता ॥
सर्वदा गेया

अहोबिलः

**शशः**—स्वरजातिः

पञ्चत्रिंशत्स्वरैर्जाता शश इत्यवगम्यताम् ।

भौमापतम्

**—हस्तः**

तर्जन्यौ भ्रमरे हस्ते योजयेत्स शशाह्वयः ।
शशहोमप्रकरणशोधनादिषु शस्यते ॥

गौरीमतम्

**शशप्लुतः**—देशीतालः

लघुद्वयं द्रुतद्वन्द्वं लघुद्वयं द्रुतद्वयम् ।
गुरुर्गुरुर्गुरुर्गुरुश्शशप्लुताख्यतालके ॥
18 मात्राः

तालप्रस्तारः

**शशाङ्ककलिता**—ध्रुवावृत्तम् (दशाक्षरम्)

आद्यचतुर्थे नैधनकौ द्वौ पञ्चमषष्ठौ दीर्घविधौ स्युः ।
यत्र शशाङ्के कलिताख्या गीतकविधिपङ्क्तिरिहैषा ॥
भमसगाः ।

धावदि हत्थी रुक्खवणम्मि । भरतः

द्वितीयश्च तृतीयस्तु सप्तमे चाष्टमे द्रुतः ।
शेषाष्षड् लघवः प्रोक्ताः द्रुतेयं चतुरश्रजा ॥
मध्यमोत्तमपात्राणां युद्धयोगपरिक्रमे ।
टक्करागेण गातव्या शशाङ्ककलिता ध्रुवा ॥

नान्यः

**शशाङ्कदृक्**—देशीतालः

शशाङ्कदृक् तु दलगमिश्रलः परिकीर्तितः ।
० । ऽ ।

लक्ष्मणः

**शशिका** –भाषाङ्गरागः

गन्यासग्रहणा न तारगतिका षड्जस्वरांशाङ्किता
मन्द्रस्थानगषड्जिका समरवा शेषस्वरैर्वैणिकैः ।
विज्ञेयः परिपापपापविलसत्साम्राज्यभागुक्तितः
स्वस्थानैः शशिका चतुर्भिरमितः गीतिप्रदा श्रीपतेः ॥

कुम्भः

**शशिनी**—श्रुतिः

तारमध्यमस्य द्वितीया श्रुतिः ।

पार्श्वः

**शशिभास्करः**—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स रि ग प नि स.
(अव) स नि प ग रि स.

मञ्ज

**शशिमञ्जरी**—मेलरागः (सेनावतीमेलजन्यः)

(आ) स ग म प ध नि — स.
(अव) स नि ध प ग रि — स.

मञ्ज

**शशिलेखा**—ध्रुवावृत्तम्

यदि खलु पञ्चममन्त्ये चरणविधौ तु गुरूणि भवन्ति ।
सा शशिलेखा भुवि बृहती प्रथिता सा ॥
गिरिवरवारणरूपं क्षुविदमहण्णवनादं ।
गिरिवरवारणरूपं क्षुभितमहार्णवनादम् ।

भरतः

पञ्चमं लघुकर्तव्यमष्टमो गुरुरिष्यते ।
शेषास्तु पद्द्रुता ज्ञेया भङ्गश्चाचपुटे मतः ॥
मध्यमोत्तमपात्राणां संग्रामविनिवर्तने ।
टक्करागेण गातव्या शशिलेखा ध्रुवा सदा ॥

नान्यः

शङ्खः—तानः
नि—लोपः, षाडवः
प म ग रि स ध ·

कुम्भः

शहना—मेलरागः
(आ) स ० रि ० ग म ० ० ० ध नि ० स.
(अव) स ० नि ध ० प म ० ग ० रि ० स.

मेललक्षणे

शाकामुखी—मेलरागः (हनुमत्तोडीमेलजन्यः)
(आ) स रि म ग म ध नि स ·
(अव) स नि ध प म रि म ग स .

मञ्ज

शाखा—अभिनयः
शाखास्यान्नृत्यहस्तानां वैचित्र्यात्मविवर्तना ।

जायनः

—करव्यापारः
व्यापाराः करयोर्येऽत्र विचित्रार्थावबोधकाः ।
ते स्मृता वर्तनास्तज्ज्ञैस्ताः शाखाः परिकीर्तिताः ॥

कुम्भः

शाठ्यम्
ग्राह्यं किञ्चन निश्चित्य तत्साधनपरिग्रहे ।
सुहृत्स्वपि स्वधीगुप्तिः शाठ्यमित्यभिधीयते ॥

भावविवेकः

शातवाहनी—भाषाङ्गरागः
धैवतांशग्रहन्यासा निसङ्गा तारवर्जिता ।
संवादिसंगतियुता भाषाङ्गं शातवाहनी ॥

कुम्भः

शतानन्दकपालगानम्
शतानन्दस्य सम्बन्धि कपालेन यदीरितम् ।
तद्गानं पञ्चपाणौ स्याद्रागे स्यात् षड्जकैशिके ।
वर्णः सञ्चारि संज्ञः स्यात्प्रस्तारोऽथ प्रदर्श्यते ॥
वरसुरमुकुटेत्यादिगानम् ।

कुम्भः

इदं बीभत्सरसे विनियुज्यते ।

शान्तः—रसः

अथ शान्तो नाम शमस्थायिभावात्मको मोक्षप्रवर्तकः । स तु तत्त्वज्ञानवैराग्याशयशुद्ध्यादिभिर्विभावैस्समुत्पद्यते । तस्य यमनियमाध्यात्मध्यानधारणोपासनसर्वभूतदयालिङ्गग्रहणादिभिरनुभावैः प्रयोक्तव्यः । व्यभिचारिणस्तु निर्वेदस्मृतिधृतिसर्वाश्रमशौचस्तम्भरोमाञ्चादयः ।

स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्तते ।
पुनर्निमित्तापाये स शान्त एवोपलीयते ॥

भरतः

शान्तरसविभावादिविषये विस्तरेण वक्तव्यं यत् तत्सर्वममिनवभारत्यां द्रष्टव्यम् ।

आभ्यन्तराश्च बाह्याश्च विकारा यत्र संयताः ।
यस्य भावस्य शाम्यन्ति स शान्त इति कथ्यते ॥

शारदातनयः

—अङ्गहारः
जानुयुग्मयुतौ हस्तौ करुणा दृष्टिरेव च ।
पादयोश्शैवबन्धाख्या चारी नटनभावना ॥
एवं प्रकारनटनं प्रथमे शान्तिजस्य तु ।
हस्तावुत्सङ्गनामानौ पादावूरुप्रवर्तकौ ॥
चारी स्यान्नटनं व्याप्तौ चक्षुषोरवलोकितम् ।
एतादृशनृतिः कुर्यात् शान्तिजस्य द्वितीयके ॥

नन्दीश्वरः

शान्ता—नायिका
सुखिनी नित्यसन्तुष्टा समा मानावमानयोः ।
अनसूया ह्यहंमाना हीना विगतमत्सरा ॥
उपकारपरा नित्यमपकारपरेष्वपि ।
गम्यानुपचरत्येव या सा शान्तेति कथ्यते ॥

शारदातनयः

—श्रुतिः
धैवतस्य प्रथमा श्रुतिः ।

शान्तिकृत्—तानः
षड्जग्रामे रिपहीनौडुवः ।
म ग स नि ध

कुम्भः

**शाम्बरी—रागः**

ककुभोत्थभवत्यंशा या सा मध्यग्रहांशका।
गतारा स्वल्पषड्जा च पञ्चमेन विवर्जिता।
ममन्द्रा स परिज्ञेया कर्तव्या करुणे रसे॥

जगदेकः

भाषाव्याख्यायां एतल्लक्षणं सावेरीरागस्येत्युक्तम्। ग्रन्थकर्तुरुद्देशे शाम्बर्या इति सूचितम्।

**शारदः—तानः**

मध्यमग्रामे नारदीयतानः।
प नि स ग म

नान्यः

**—रागः**

अंशो धैवतकस्वरः स्फुरतिचेदन्ते च षड्जस्वरः,
मापन्यासकमध्यमोयदि भवेत्सा मूर्छना नन्दिनी।
गान्धारेण च पञ्चमेन रहितश्चेद्भीमसेनप्रिय-
स्तानः स्यात्......भयानकरसे रागस्तदा शारदः।

नान्यः

धैवतांशश्चाषड्जान्तोऽपन्यासस्थितमध्यमः।
गान्धारपञ्चमापेतः शारदस्तारसप्तमः॥

मतङ्गः

**शारदातनयः**

भावप्रकाशनकारः। अयं मेरूत्तराख्यमाठरपूज्यग्रामवासी। कृष्णभट्टतनयः। अनेन भावप्रकाशनशारदीयाख्यग्रन्थौ विरचितौ। काव्यप्रकाशोऽप्यस्यैवेति भावप्रकाशव्याख्याकारो वक्ति। काव्यप्रकाशाभिनवभारती शृङ्गारप्रकाशाभिलषितार्थचिन्तामणिग्रन्थकारानुदाहरति। सोऽयं शारदादेव्याः प्रसादाद्दिवाकरोपाध्यायात्त्रिंशद्रूपकलक्षणं नाट्ये सर्वमतानि च अधीतवानिति तेनैवोक्तम्। क्री. ११५० कालीनः

**शारदाभरणः—देशीतालः**

शारदाभरणे पञ्चतालाश्चचत्पुटादयः।
आदौ विन्दुद्वयेनान्ते निश्शब्देन समन्विताः॥
—

लक्ष्मणः

(चचत्पुटादयः पञ्च चचत्पुटः, चाचपुटः, षट्पितापुत्रकः, संपक्वेष्टाकः, उद्घट्टः। एते मार्गतालाः)

**शारदामतिः—मेलरागः (मेचकल्याणीमेलजन्यः)**

(आ) स रि म प ध नि स.
(अव) स नि प म ग रि स.

मञ्ज

**शारीरम्**

अभ्यासेन विना यत्तु रागाणां व्यक्तिकारकम्।
शरीरेण सहोत्पन्नं शारीरं तत्प्रचक्षते॥
चम्पकेषु यथा गन्धः कान्तिर्मुक्ताफलेष्विव।
यथेक्षुदण्डे माधुर्यं शारीरे स्निग्धता तथा।
अन्यजन्मकृताभ्यासाद् ज्ञानाद्योगाच्छिवार्चनात्।
शारीरं प्राप्यते पुण्यैरभ्यासान्नैव लभ्यते॥

सोमेश्वरः

अन्तरेण तदभ्यासं रागव्यक्तिनिबन्धनम्।
शरीरेण सहोत्पन्नं शारीरं तत्समीरितम्॥

पार्श्वदेवः

**शारीरभेदाः**

चतुर्विधं भवेत्तच्च काडडं मधुरं तथा।
पौशलं बहुभङ्गीति चैषां लक्षणमुच्यते॥

पार्श्वदेवः

**शार्ङ्गदेवः**

सङ्गीतरत्नाकरकारः। अयं देवगिरीश्वरस्य यादवकुलाभरणस्य सिङ्गणदेवस्यास्थानकविः। अस्य पिता काश्मीरादागत इति रत्नाकरपरिचयादनुमीयते। अयमभिनवगुप्ताचार्यमतं नाट्यशास्त्रव्याख्यानादगृहीत्वैव रत्नाकरं रचितवान्। कालः क्रै.प.1235.

**—देशीतालः**

शार्ङ्गदेवे द्रुतद्वन्द्वं गप्लुतौ गद्वयं लघुः।
००ऽऽऽऽ।

हम्मीरः

**शार्ङ्गपाणिर्मण्टपकारकः—देशीतालः**

ताले चानन्तरं शार्ङ्गपाणिमण्टपकारके।
पर्यङ्कविद्युतौ पञ्चकृत्वोऽथ लोप्यशब्दकौ॥
।ऽं।ऽं।ऽं।ऽं।ऽं

गोपतिप्पः

**शार्ङ्गमणिः—मेलरागः (कामवर्धिनीमेलजन्यः)**

(आ) स रि ग म ध स.
(अव) स नि ध प म ग रि स.

मञ्जः

**शार्ङ्गरवा—श्रुतिः**

पञ्चमस्य चतुर्थी श्रुतिः।

जगदेकः

**शार्ङ्गी—वीणा**

नकुलादिवीणालक्षणे द्रष्टव्यम्।

**शार्दूलमञ्जरी—मेलरागः (हरिकाम्भोजीमेलजन्यः)**

(आ) स रि म प नि स.
(अव) स नि प म ग रि स.

मज

**शार्दूलरवः—मेलरागः (हनुमत्तोडीमेलजन्य)**

(आ) स रि प म ध स.
(अव) स नि ध नि प म ग रि स.

मज

**शार्दूलविक्रीडितम्—एकोनविंशत्यक्षरवृत्तम्**

मसजसततगाः

भरतः

**शार्दूली—रागः**

धांशन्यासधरा रिबहुला सन्यासमध्यस्वरा
प्रान्तोदञ्चितपञ्चमारिनिपरित्यक्ता मताराञ्चिता।
दूरान्दोलितशेषनिस्वनयुता शृङ्गारशेपा पुनः
शार्दूलीति महर्षिभिर्निगदिता पुष्पायुधो देवता ॥

नान्यः

सांशन्यासग्रहापन्यासमध्या धैवतोच्चका।
मतारा निपरित्यक्ता शार्दूली परिकीर्तिता ॥

वृद्धकाश्यपः

**शार्मिला—मेलकर्ता (खरहरप्रियामेलजन्यः)**

(आ) स रि ग म रि म प नि ध नि प ध नि स.
(अव) स नि ध नि प म ग रि ग रि म ग स.

मज

**शाल्मिकः—मेलरागः (झङ्कारध्वनीमेलजन्यः)**

(आ) स रि ग म प ध नि स.
(अव) स नि ध प म ग स रि स.

मज

**शालिनी—ध्रुवावृत्तम्**

आद्यश्चतुर्थको यत्र पञ्चमष्षष्ठ एव च।
गुरुर्भवति सा ज्ञेया विद्वद्भिः खलु शालिनी ॥

नायिकासु प्रयोक्तव्या संहितप्रियदर्शने।
तालः पाटाक्षरेण स्याच्छालिनी मालवे मता ॥

(उदा) कौमुदिचन्दोसौ (छाया) कौमुदी चन्द्रोऽसौ
राग नाम।

नान्यः

**—पादे एकादशाक्षरवृत्तम्**

मततगगाः :

भरतः

**शावरी—रागः**

मध्यग्रहांशा धन्यासा ममन्द्रा ककुभोद्भवा।
रङ्गस्याङ्गं च तारा च शावरी स्यात्पवर्जिता ॥

सोमराजः

**शास्त्रकाव्यम्—श्रव्यकाव्यम्**

शास्त्रं यत्र कवीनां रहस्यमुपकल्पयन्त्यनल्पधियः।
तद्रतिविलास कामन्दकीयवच्छास्त्रकाव्यं तु ॥

भोजः

**शिखरः—हस्तः**

शक्तितोमरयोर्मोक्षे धनुर्भङ्गाङ्कुशग्रहे।
अलक्तोत्पीडने मुष्टिः कार्यस्सोऽप्यस्य लोकतः ॥

शार्ङ्गः

**शिखरकपित्थसूचीमुखवर्तना**

शिखरस्य कपित्थस्य तथा सूचीमुखस्य तु।
भवन्ति वर्तना मुष्टिवर्तनश्च प्रकारतः ॥

अशोकः

**शिखरखटकहस्तः**

तिर्यग्बध्वा तु शिखरं तन्मुखे खटकामुखः।
शिखरखटकस्वकिहस्तोयं प्रोच्यते बुधैः।
पुरोभागेत्वयं हस्तं पुंपुंरत्यां नियोजयेत् ॥

विनायकः

**शिखरिणी—सप्तदशाक्षरवृत्तम्**

यमनसमलगा।

भरतः

**शिखा—श्रुतिः**

ऋषभस्य प्रथमा श्रुतिः।

**—ध्रुवावृत्तम्**

द्वितीयं नैधनं चैव यत्र दीर्घाणि सर्वतः।
सुप्रतिष्ठाकृते पादे शिखा ज्ञेया तु सा यदा ॥

(उदा) वलाहऐहिं — वलाहकैः

भरतः

नायकस्यागमे सज्जा स्वाधीनपतिका च या।
शिखा मालवकैशिक्या तालः पाटाक्षरेण तु॥

तालश्चाचपुटः। नान्यः

—ध्रुवावृत्तम् (सप्ताक्षरम्)

आद्यमन्त्यपञ्चमे स्यात्तृतीयमेव च।
पादतो गुरूणि वै यस्य सा शिखा तु वा।

कामिनीवृत्तमेव शिखायां पठन्ति।

भरतः

शिखापदम्

अङ्कैरेकस्य पर्यन्ते त्रयाणामथवा द्वयोः।
यत्पदं च तृतीयाङ्कितं स्यात्तच्छिखापदम्॥

मोक्षदेवः

कर्णाटैलायां तस्य प्रयोग इति मोक्षदेवः।

ताल्लपाकतिरुवेङ्कटस्तु शिखापदं पल्लवीत्याह संकीर्तनलक्षणे।

—(प्रबन्धे)

वाक्यार्थपूर्णतां नेतुमाधातुं प्रच्युतामथ।
एकस्यान्ते द्वयोर्वान्ते त्रयाणामथवा ततः॥
यत्पदं रच्यते तज्ज्ञैरंघ्रीणामधिकं क्वचित्।
शिखापदमिति प्राहुस्तस्य नाम पुराविदः॥

कुम्भः

शिखापाशम्—शिखाव्यालः

देवानां पार्थिवानां च शिरोभूषणम्।

नागः ग्रन्थिभिरुपनिबद्धो मध्ये कर्णिकास्थानीयः।

शिखिपत्रम्

वेणीभूषणम्। मयूरपिञ्छाकारविचित्रवर्णमणिरचितम्।

शिखिसारिणी—दशाक्षरवृत्तम्

मयूरसारिणीत्यप्युच्यते।

रजरगाः। भरतः

—दशाक्षरच्छन्दः

द्वितीयं च चतुर्थं च षष्ठमष्टममेव च।
ह्रस्वं दशाक्षरे पादे यत्र सा शिखिसारिणी॥

मयूरसारिणीति नामान्तरम् (रजरगाः)

(ड–म्)–किं मयूरसारिणीत्वमेवम्।

भरतः

शितिकण्ठः—देशीतालः

गद्वयं पञ्च बिन्दवो लगौ च शितिकण्ठके।

13 मात्राः। तालप्रस्तारः

शिथिलम्—हनुः

एकाङ्गुलमधरस्त्रस्ता शिथिला हनुरुच्यते।
निद्रायां भोजने श्रान्तौ युज्यतेऽद्भुतदर्शने॥

सोमेश्वरः

शिरः

आकम्पितं कम्पिताख्यं धुतं विधुतमञ्चितम्।
परिवाहितमाधूतमवधूतं निहञ्चितम्॥
अधोमुखं परावृत्तमुत्क्षिप्तं लोलितं शिरः।
त्रयोदशविधं प्रोक्तं मुनिना समुदीरितम्॥

ज्यायनः

प्राकृतमिति चतुर्दशतमं अन्ये प्राहुः।

सममारात्रिकं नैराजितं तिर्यङ्नतोन्नतं।
पार्श्वाभिमुखमुन्नीतं सकम्पपरिवाहितम्॥
सकम्पधुतनामान्यदुद्धतं पार्श्वकम्पितम्।
पार्श्वाकम्पितमित्येकादशभेदाः प्रकीर्तिताः॥

ज्यायनः

तिर्यङ्नतोन्नतं स्कन्धानतमारात्रिकं समम्।
पार्श्वाभिमुखमित्यन्यान्भेदान्पञ्चापरे जगुः॥

शार्ङ्गदेवः

—अभिनयः

त्रयोदश कर्माणि भरतमते। तद्व्याख्यातृमते चतुर्दश। नन्दिमते नव। नन्द्यनुयायिनः पञ्चापराणि च प्राहुः। भरतस्य त्रयोदशकर्मभिर्मतज्ञः पुनः एकादशकर्माण्यधिकान्याह।

शिरःकम्पः—वांशिकदोषः

शिरसः कम्पनं मिथ्याप्रयोगस्यापि वादनम्।
इष्टस्थानानवाप्तिश्च,

एते वांशिदोषाः

शिरस्थवर्तना

नाममात्रप्रसिद्धा। कल्लिनाथः

शिरोभ्रमरी—उत्प्लुतिकरणम्

मस्तकेन महीभागे स्थित्वाऽथ चरणद्वयम्।
ऊर्ध्वीकृत्य यदातिर्यक् परिभ्रमणमाचरेत्॥
तदा शिरोभ्रमरिकाकथिता नृत्तकोविदैः।
अथवा निश्चलं तिष्ठन् भ्रमयेत् केवलं शिरः॥
त्वरितं पाणियुगलं भ्रमितोत्फुल्लपद्मवत्।
एषाऽपि कथिता तज्ज्ञैश्शिरोभ्रमरिकेति च॥

वेमः

शिलामुखः—देशीतालः

लगौ दोलश्शिलामुखे ।

4½ मात्राः तालप्रस्तारः

शिल्पकारिका

नानाकलाविशेषज्ञा नानाशिल्पविचक्षणा ।
गन्धपुष्पविधानज्ञा लेख्यालेख्यविशारदा ॥
शयनासनयानज्ञा चतुरा मधुरा तथा ।
दक्षा चित्रस्फुटा श्लक्ष्णा निभृता शिल्पकारिका ॥

भरतः

शिल्पकः—नृत्तरूपकम्

पिङ्गकः, पिङ्ग, इत्यादिनामभिरप्युच्यते ।

शिल्पकश्चतुरङ्कः स्याच्चतुर्वृत्तिविराजितः ।
हास्यं विना रसैः पूर्णः स्वतो ब्राह्मणनायकः ॥

हीनोऽपि नायकः क्वापि श्मशानादिसमाकुलः ।
ऊढः पुनर्भूः कन्या वा ताः स्युरत्रचित्रविप्रजाः ॥

मालती माधवस्येव कमलस्य कलावती ।
अङ्गानि सप्तविंशः स्युरुत्कण्ठादीनि च क्रमात् ॥

उत्कण्ठा चावहित्था च प्रयत्नाशंसने अपि ।
तर्कश्च संशयस्ताप उद्वेगो मौर्ख्यमेव च ॥

आलस्यकम्पातुगतिविस्मयास्साधनं तथा ।
उच्छ्वासश्च तदातङ्कशून्यता च प्रलोभनम् ॥

नाट्यसंफेट आश्वासः सन्तोषातिशयस्तथा ।

प्रमदश्च प्रमादश्च युक्तिश्चापि प्ररोचना ।
प्रशस्तिश्चेति कथितान्यङ्गान्यत्रैव शिल्पके ॥

शारदातनयः

सागरस्तु अङ्गानां सप्तविंशतिरिति केषांचिन्नामानि भिन्नतया पठितवान् । यथा—प्रथनं, अप्रतिपत्तिः, विलापः, वाम्यं, चमत्कारः, बोधनं—इति भिन्नतया पठति ।

अमृतानन्दिनाऽपि सप्तविंशतिरङ्गानीत्युक्तम् । तेषु विलक्षणानि निधनं, प्रतिपत्तिः, चमत्कृतिः, प्रबोधनं, एतानि चत्वारि पठितानि । शिष्टाङ्गानि शारदातनयोक्तान्येव ।

शिवः—देशीतालः

रसौ लघुद्रुतौ गश्च शिवताले प्रकीर्तितः ।

13 मात्राः

लघुप्लुतौ द्रुतौ गोलः प्लुतश्च शिवसंज्ञके ।

11 मात्राः । तालप्रस्तारः

शिवः

शिवपर्यायशब्दैः षट्च्छुतिरिधौ साधारणगान्धारः ।
काकलिनिषादश्चोच्यन्ते ॥

शिवकाम्भोजी—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म नि स.
(अव) स नि प म ग रि स.

मञ्जः

शिवक्रिया—रागः

अंशग्रहधृतपञ्चममध्यमताराततिरिपगता या ।
रिन्यासा सगदध्वनिरहिता शिवकृतिरिति प्रोक्ता ॥

मान्यः

रिन्यासापग्रहा चैव मतारा तिरिपान्विता ।
सगदध्वनिनिर्मुक्ता सतां शिवकृतिर्मता ॥

याष्टिक

शिवक्री—क्रियाङ्गरागः

न लक्षितेऽप्रसिद्धत्वात्कुमुदक्रीशिवक्रिये ।

कुम्भः

शिवतत्वरत्नाकरः

केलदि—बसवभूपरचितः । कालः 1700 अत्र सर्वशास्त्रसारो वर्तते ।

शिवतालः—देशीतालः

शिवेऽनुद्वितयं दद्यात् ।

। ० श्रीकण्ठः

अन्विति – अनुद्रुतः ।

शिवप्रियनृत्तम्—देशीनृत्तम्

आतोद्यैर्वाद्यमानेषु यतिप्रहरणादिषु ।
रुद्रभक्ता स्त्रियो यद्वा पुमांसः सौष्ठवान्विताः ॥

रुद्राक्षप्रणया भस्मत्रिपुण्ड्राः शिवरूपिणः ।
कोणान्दक्षिणवामेन सर्पान् कांस्यादिनिर्मितान् ॥

बहुसङ्गमिनो हारिगायन्त्यः श्रेणिभिश्शिवम् ।

कदाचित्सम्मुखीभूय लास्याङ्गैरुपबृंहितम् ।
यत्र नृत्यन्ति तत्प्रोक्तं शिवप्रियमिह स्फुटम् ॥

कुम्भः

शिवरञ्जनी—मेलरागः (वाचस्पतिमेलजन्यः)
(आ) स रि ग म ध प ध नि स,
(अव) स नि ध प ध म ग रि स.

मञ्ज

शिववल्लभा—मेलरागः
मुखारीमेलसंभूता नहीना शिववल्लभा ।
न्याभावोद्ग्राहगान्धारा पांशन्याससुशोभिता ।
अवरोहणवेलायां निषादेन सुशोभिता ॥
द्वितीयप्रहरोत्तरगेया ।

अहोबिलः

शिवपादः—देशीतालः
लद्वयं द्रुतयुग्मं पो गप्लुतौ शिवपादके ।
11 मात्राः ।

तालप्रस्तारः

शिवा—श्रुतिः
मध्यमस्य द्वितीया श्रुतिः ।

जगदेकः

—स्वरजातिः
स्वरैस्त्रिचत्वारिंशद्भिः शिवा संकीर्त्यते बुधैः ।

औमापतम्

शिक्षकः—गायकभेदः
कृतं वाग्गेयकारेण द्रुतं गृह्णात्यलुप्तकम् ।
अविस्मरत्सावधानः शिक्षाकारस्स कथ्यते ॥

सोमेश्वरः

शीर्षकी—ध्रुवा
श्रृङ्गाररससंपूर्णा मृदुवर्णपदान्विता ।
या चोत्तमाश्रया सेयं शीर्षकी परिकीर्तिता ॥

वेमः

शीर्षजोलकम्—शिरोभूषणम्
खेलाप्रायं शीर्षतः जोलकं भूषणम् ।
सर्पपस्येव वा शिरस एकमेव सुवर्णमुक्तामणिना चित्रितम् ।

शीर्षदोलः—हस्तः
चिबुके शिखरो न्यस्तो ह्यरालस्तिर्यगीरितः ।
ततो डोलयते शीर्षं शीर्षदोलः करो मतः ॥

नागमल्ल

शीलावलिः—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स रि ग म प ध नि स.
(अव) स नि प म ग स.

राज

शुकचञ्चुः—प्रबन्धः
गमकैस्सुस्वरैः पाटैर्देशभाषाः पृथक् पृथक् ।
गीयन्ते यत्र तालेन न्यासस्तालद्विमानतः ॥
शुकचञ्चुरिति प्रोक्ता,

हरिपालः

शुकतुण्डः—हस्तः
अरालस्य यदाद्यन्तवक्रे तर्जन्यनामिके ।
शुकतुण्डस्तदा स स्यात्प्रेमकोपेन वेर्ष्यया ॥
नत्वं नाहं न मे कृत्यं त्वयेति वचने तथा ।
द्यूताक्षपातनादौ स्यात्सावज्ञे तु विसर्जने ।
आह्वाने च बहिश्चान्तः क्रमाक्षिप्ताङ्गुलिर्भवेत् ॥

शार्ङ्गः

शुकतुण्डवर्तना
आविद्धाधोमुखो यत्र वक्षसश्शुकतुण्डकः ।
वर्तितश्चोरुपृष्ठे सा शुकतुण्डाख्यवर्तना ॥

अशोकः

शुकरञ्जिनी—मेलरागः (गानमूर्तिमेलजन्यः)
(आ) स रि ग प ध नि – स.
(अव) स नि ध प म ग रि – स.

मञ्ज

शुकवक्त्रः—वादनम् (उभयहस्तव्यापारः)
तन्त्रीकर्षोऽङ्गुष्ठतर्जन्यग्राभ्यां शुकवक्त्रकः ।

शार्ङ्गः

—(वीणायामुभयहस्तव्यापारः)
सकरश्शुकवक्त्रः स्याद्यत्र तन्त्र्यः प्रतन्यते ।
तर्जन्यङ्गुष्ठयोः क्षिप्रमग्रभागेन कर्षणम् ॥

कुम्भः

शुकसारिकः—प्रबन्धः
तालद्वयसमायुक्तः पदपाटोपशोभितः ।
पदैः प्रश्नोत्तरैर्युक्तः स प्रोक्तश्शुकसारिकः ॥
गद्ये वा पद्यबन्धे वा तालद्वयनियोजितः ।
प्रश्नोत्तरपदैः पाटैः गेयस्स्याच्छुकसारिकः ॥

सोमेश्वर

उक्तिप्रत्युक्तिबहुला पादैः पाटैस्समन्विता ।
तालद्वयमिहेष्टं स्यान्न्यासस्तालद्विमानतः ॥

प्रश्नोत्तरे विधातव्यौ ठक्ककर्णाटभाषया ।
यः कश्चिदपि रागस्स्यात्प्रोक्तेयं शुकसारिका ॥

हरिपालः

अन्ते विभूषितः पादैः प्रश्नोत्तरपदान्वितः ।
तालमानद्वयं न्यासः प्रोच्यते शुकसारिकः ॥

श्रीकण्ठः

शुकसारिका—प्रबन्धः

कर्णाटलाटभाषाभ्यां प्रश्नोत्तरपदैर्युता ।
गीयते यातु गीतज्ञैः सा भवेच्छुकसारिका ॥

सोमेश्वरः

शुकहस्तः

कबन्धस्योदरे ह्यर्धचन्द्राङ्गुष्ठमधस्तलात् ।
कृत्वा तौ स्वस्तिकौ कुर्याच्छुकहस्तस्स विश्रुतः ॥

मदनस्याधिदेवः स्याच्छुकेष्वपि पिकेषु च ।
पारावतेष्वप्यन्येषु विनियोग उदाहृतः ॥

गौरीमतम्

शुक्तिः—तालवाद्यम्

स्याल्लोहजा कांस्यभवाऽथ शुक्तिः सर्पाकृतिस्त्र्यङ्गुलविस्तरा च ।
अध्यर्धहस्तद्वितयप्रमाणाऽधस्ताद्विभिन्ना च विराजिता च ॥
तिर्यक्स्थरेखाभिरिहैतदीयं कोणेन लोहेन सुरेखितेन ।
मृगस्य शृङ्गाकृतिनार्जुना च विघर्षणाद्वादनमाहुरार्याः ॥
पाटास्तदोक्ताः किरिकीटिवर्णा यक्षास्तथास्या अधिदैवतानि ।
रुद्राधिदैवं किरिकिट्टकं तु लोके पुनः केचिदिमां गृणन्ति ।
प्रयोजनं स्याद्यतिमात्रमन्त्रावबोधकं बुद्धिमतामभीष्टम् ॥

कुम्भः

शुक्तितरङ्गिणी—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स रि म ग रि पं म ध नि स.
(अव) स नि ध प म रि ग म ग स.

मज

शुक्रज्योतिः—मेलरागः (चारुकेशीमेलजन्यः)

(आ) स ग म प ध नि ध प स.
(अव) स नि ध प म ग रि स.

मज

शुक्रप्रभा—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध नि प म रि ग रि म ग स.

मज

शुक्रमतम्

शुक्राचार्योऽस्य कर्तेति शृङ्गारशेखरकृतादभिनयभूषणादवगम्यते। बहुषु स्थलेषु तन्मतं स्मृतम्। शारदातनयोऽप्युदाहरति।

शुक्रवर्धनः—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) स रि ग म ध नि स.
(अव) स नि ध नि प ध म प म रि ग रि म ग स.

मज

शुक्रहस्तः

हस्ते चार्धपताकाख्ये यद्यङ्गुष्ठः प्रसारितः ।
श्लिष्टचन्द्रकरस्सोयं शुक्रार्थे संप्रयुज्यते ॥

शृङ्गारः

शुक्लकर्णाटा—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स ध प म रि प म ग स.

मज

शुण्डाहुरुमयी—लागनृत्तम्

कुर्यात्पदो धावनं च स्यादग्रे दक्षिणं पदम् ।
वामेन कुट्टनं कृत्वा लाघयेद्दक्षजानुनि ॥

देहस्य लवनं कृत्वा वामपादेन भूतले ।
पतेच्छुण्डादिना प्रोक्ता बुधैर्हुरुमयी तदा ॥

वेदः

शुद्धकरणसमुद्धारकः—देशीतालः

ताले तु शुद्धकरणसमुद्धारकसंज्ञिते ।
चतुर्गल्लगास्तेषामादावन्ते च दद्वयम् ॥
० ० ऽ ॥ ऽ ऽ ॥ ऽ ऽ ॥ ऽ ऽ ॥ ऽ ० ० गोपतिप्पः

शुद्धकान्तः—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म प नि स.
(अव) स ध प ग रि स.

मज

शुद्धकैशिकः—रागः

कार्मारव्याश्च कैशिक्यास्तारषड्जग्रहांशकः ।
पन्यासः काकलीयुक्तो विज्ञेयश्शुद्धकैशिकः ।
वीररौद्राद्भुतरसः संपूर्णस्वरको मतः ॥

मोक्षः

**शुद्धकैशिकमध्यमः—रागः**

कैशिकी षड्जमध्यामाभ्यां तारषड्जग्रहांशकः।
मन्यासस्स्यात् रिपत्यक्तो गान्धाराल्पस्सकाकलिः।
रसे वीरेऽद्भुते रौद्रे शुद्धकैशिकमध्यमः॥

मोक्षः

**शुद्धक्रिया—मेलरागः (मायामालवगौलमेलजन्यः)**

(आ) स रि म प ध प नि स.
(अव) स नि ध प न रि ग म रि स.

मञ्ज

**शुद्धगान्धर्वी—मेलरागः (सूर्यकान्तमेलजन्यः)**

(आ) स रि ग म प ध नि स.
(अव) स ध प म रि स.

मञ्ज

**शुद्धगान्धारिका—मूर्छना (गान्धारग्रामे पञ्चमी)**

(आ) नि स रि ग म प ध.
(अव) ध प म ग रि स नि.

नान्यः

**शुद्धगान्धारी—मूर्छना**

गान्धारयति शब्देन गान्धारस्येति वा पुनः।
निषादे शुद्धगान्धारी गावश्चात्राधिदैवतम्॥

नान्यः

**—मेलरागः (हरिकाम्भोजीमेलजन्यः)**

(आ) स रि ग रि ग म प ध प नि ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

**शुद्धगुर्जरी—मेलरागः (मायामालवगौलमेलजन्यः)**

(आ) स ग रि ग प नि ध स.
(अव) स नि ध म ग रि स.

मञ्ज

**शुद्धघण्टारवः—मेलरागः (सूर्यकान्तमेलजन्यः]**

(आ) स रि ग म प नि ध नि स.
(अव) स नि प म ग रि स.

मञ्ज

**शुद्धतानः**

तानशब्दे द्रष्टव्यम्।

**शुद्धधन्याशी—मेलरागः (नटभैरवीमेलजन्यः)**

(आ) स ग म प नि स.
(अव) स नि प म ग स.

मञ्ज

**शुद्धनट्टा—रागः (वंशे कदनक्रमः।**

द्विगुणे षड्जमाय भाय स्थायिनं तत्र चाहनम्।
तदार्धेन स्थिरीकृत्य द्विस्त्रिर्वोच्चारयेच्च तम्॥

द्वितीयं कम्पयित्वाथ तस्मिन्नेव विलम्ब्य च।
तत्परं द्विश्चतुर्वाथाहत्य कुर्याद्ग्रहं लघुम्॥

दीर्घीकृत्य ग्रहार्धं तु प्राञ्चमुक्त्वा ग्रहे यदा।
न्यस्यते शुद्धनट्टायाः स्वस्थानं स्यात्तदादिमम्।
वंशे वंशविदः प्राहुः ग्रहमस्या द्वितीयकम्॥

कुम्भः

**—रागः**

धग्रहन्यासषड्जांशा संपूर्णा च समस्वरा।
गतारा च समन्द्रा च शुद्धनट्टाभिधीयते॥

सोमराजः

**शुद्धनाटरागध्यानम्**

तुरङ्गमस्कन्धनिषक्तबाहुः
स्वर्णप्रभः शोणितशोभिगात्रः।
सङ्ग्रामभूमौ विचलत्प्रताप-
नाटोऽयमुक्तः किल रङ्गमूर्तिः॥

दामोदरः

**शुद्धनाटी—मेलरागः (चलनाटमेलजन्यः)**

(आ) स ग म प नि ध नि स.
(अव) स नि ध प म रि स.

मञ्ज

**—रागः**

मध्यमांशग्रहन्यासा स्वस्थाने ताडिता भवेत्।
निषादषड्जबहुला शुद्धा नाटी प्रकीर्तिता॥

सोमेश्वरः

**शुद्धनेपालः—मेलरागः (खरहरप्रियामेलजन्यः)**

(आ) स रि ग म प ध स.
(अव) स नि ध म ग रि ग स.

मञ्ज

शुद्धनेरिः—देशीनृत्तम्

शुद्धैरेव पताकाद्यैः शुद्धनेरिरिहोच्यते।
संहतस्थानके स्थित्वा हृदये शिखरद्वयम्॥

दामोदरः

कृत्वा सूडं च शनकैः सव्यपादेन तत्परम्।
चारीमध्यर्धिकां कृत्वा सह व्यावर्तनेन च॥
पताकद्वितयस्याथ मोचने पार्श्वदेशयोः।
चमत्कारेण रचयेन्नर्तको वाऽथ नर्तकी॥
मण्डलस्थानके स्थित्वा तौ पताकौ शनैश्शनैः।
हृदिस्थौ शिखरौ कृत्वा पयायात्पार्श्वदेशयोः॥
चमत्कारेण रचयेन्नर्तको वाऽथ नर्तकी।
मण्डलस्थानके स्थित्वा तौ पताकौ शनैश्शनैः॥
हृदिस्थौ शिखरौ कृत्वा पर्यायात्पार्श्वदेशगौ।
पताकौ तौ हृदिस्थौ च शिखरद्वयतां नयेत्॥
ततः कुञ्चितके स्थाने मण्डलाकारयोजितौ।
पुनः पताकौ हृदये पुनश्शिखरतां नयेत्॥
ततः स्पन्दितया चार्या सह वामः पताककः।
पुरः प्रसार्य सव्यस्तु पताकः पार्श्वदेशगः॥
प्रसृतोऽङ्गान्तरेणैवं गृह्णीयान्नटनायकः।
पताको दक्षिणो हस्तः तत्तद्देशे प्रसारितः॥
स्थानकं चतुरश्रं स्याद्वामे गारुडमाश्रयेत्।
अञ्जलिं हृदि बध्नीयात्ततः कुञ्चितमाश्रयेत्॥
ऊर्ध्वे वामः पताकस्तु दक्षिणोऽधः पुरो भवेत्।
उभयोर्लोलनं कृत्वा चारीमङ्गीकृतां चरेत्॥
एवमङ्गान्तरेणैव ह्युरोमण्डलमाचरेत्।
रथचक्राभिधां चारीं चतुर्वारं नयेत्पुरः॥
पार्श्वदेशे प्रसारस्तु भवेत्तत्र पताकयोः।
स्वस्तिकं तु ततः कुर्यात्पुरो हस्तकपादयोः॥
पताको मोटिते चोर्ध्वे वामोऽधस्स्थो लताकरः।
दक्षिणः चतुरस्थाने चमत्कारपुरस्सरम्॥
हृदये शिखरद्वन्द्वादादितालाद्विलम्बतः।
शुद्धनेरिरियं प्रोक्ता भरतेन तथेतरैः॥

वेदः

मोटितमिति स्थानकम्।

शुद्धपञ्चमः—रागः

वीरश्रृङ्गारयोर्दीप्ता मध्यमश्रुतिभाविते।
हृदि सप्तमगान्धारस्वरयोरपि चाल्पयोः॥
पञ्चमे चांशके न्यासे षड्जे संवादिनि स्वरे।
मूर्छायां हृष्यकाख्यायां विष्णुक्रान्ते च तानके॥
त्रिदिवावासकन्दर्पदेवताद्वितयाश्रिते।
मध्यमापञ्चमीजात्योर्जायते शुद्धपञ्चमः॥

नान्यः

मध्यमापञ्चमीजात्योस्संभूतश्शुद्धपञ्चमः।
अंशोऽस्य पञ्चमो न्यासस्स्वल्पद्विश्रुतिकस्स्वरः॥

कश्यपः

मध्यमापञ्चमीजात्योः संभूतश्शुद्धपञ्चमः।
स्वल्पद्विश्रुतिकश्चासौ न्यासांशग्रहपञ्चमः॥
पञ्चम्या पञ्चमन्यासात् मध्यायाः पञ्चमांशतः।
जातोऽयं गनिलोपाच्च तस्मात्स्वल्पगतिर्मतः।
भीमात्मजेन संदिष्टो हास्यश्रृङ्गारपोषकः॥

मोक्षः

शुद्धपाञ्चालिकम्—मेलरागः (वागधीश्वरीमेलजन्यः)

(आ) स ग म प ध नि ध स.
(अव) स नि ध प म ग म स.

मञ्ज

शुद्धबङ्गालः—रागः

रागोऽथ शुद्धबङ्गालो देशीहिन्दोलसंभवः।
न्यासोहि मध्यमस्सोयं रागज्ञैः परिगीयते॥

हरिः

—मेलरागः (कर्णाटगौडमेलः)

मध्यमांशग्रहन्यासो बङ्गालश्शुद्ध ईरितः।
संपूर्णो गीयते प्रातस्सर्वरागविचक्षणैः॥

श्रीकण्ठः

—प्रथमरागः

शुद्धाङ्कितात्षाडवतः प्रसूतं
स्याच्छुद्धबङ्गालकसंज्ञमङ्गम्।
मध्यग्रहांशान्तमिदं रसौ तु
श्रृङ्गारहास्यैः सपकम्पयुक्तम्॥

मोक्षः

—रागाङ्गरागः

शुद्धषाडवमन्यासा ग्रहांशे मध्यमस्वरः।
गातव्यस्सर्वदा शुद्धबङ्गालः सर्वकम्पितः॥

मट्टमाधवः

—रागः

शुद्धषाडवरागाङ्गं शुद्धबङ्गालसंज्ञिकः।
न्यासांशौ मध्यमेनास्य ग्रहर्पे विनियुज्यते॥

जगदेकः

शुद्धवङ्गाला—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि म प ध स.

(अव) स नि ध प म रि ग रि स. मञ्ज

--रागः

न्यासांशमध्यमश्शुद्धवङ्गालश्शुद्धषाडवात् ।
बहुत्वाल्पत्वर्हीनस्तु तारे मन्द्रे च पञ्चमः ॥

सोमराजः

शुद्धभाषा—भाषारागः

शुद्धभाषा भिन्नषड्जे ग्रहांशन्यासधैवता ।
गापन्यासा धभूयिष्ठा रिहीना मृदुषड्जिका ।
धतारा पञ्चमेनापि रहिता याष्टिके मते ॥

कुम्भः

—रागः

षड्जमन्द्रा रिहीना च गतारा स्वरसाम्यभाक् ।
धैवतांशग्रहन्यासा भाषा शुद्धाऽभिधीयते ।
भिन्नषड्जसमुद्भूता गुर्वाज्ञादौ नियुज्यते ॥

जगदेकः

शुद्धभैरवः—रागः

धैवतांशग्रहन्याससंयुतः स्यात्समस्वरः ।
तारमन्द्रोपमौ षड्जगान्धारश्शुद्धभैरवः ॥

तदुद्भवा भैरवी हम्मीरः

—प्रथमरागः

धांशग्रहान्तो मुनिभिः प्रदिष्टः समस्वरैर्भैरव एष शुद्धः ।
आषड्जगान्धारसतारमन्द्रः स च श्रुतौ भूतपतेः प्रयोज्यः॥

मोक्षः

शुद्धभैरवी—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स ग रि म प नि ध नि स.

(अव) स नि ध प म ग रि स. मञ्ज

शुद्धमञ्जरी—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म प ध प नि स.

(अव) स नि ध प म ग म रि स. मञ्ज

शुद्धमध्या—मूर्छना मध्यमग्रामे चतुर्थी

(आ) स रि ग म प ध नि.

(अव) नि ध प म ग रि स.

पण्डितमण्डली

मध्यदेशे समुत्पन्ना षड्जे स्याच्छुद्धमध्यमा ।
मध्यमोऽत्र स्वरः शुद्धा गन्धर्वश्चाधिदैवतम् ॥

नान्यः

शुद्धमुखारी—मेलरागः (कनकाङ्गीमेलजन्यः)

(आ) स ग रि ग म प नि ध – स.

(अव) स नि ध म ग रि – स.

मञ्ज

शुद्धमुरुया—रागः

भिन्नषड्जसमुद्भूता शुद्धाख्या स्याद्रिरंजिता ।
स्वल्पपञ्चमसंयुक्ता समन्द्रा मृदुधैवता ॥

मोक्षः

शुद्धमेलवीणा

यथेच्छमाकल्पितवल्लकी च स्वरव्यवस्था च यथेच्छमुक्ता।
वीणोपरि स्थानगताश्चतस्रः ता लोहतन्त्रीः परिकल्प्य पश्चात् ॥
पार्श्वे तु तन्त्रीत्रितयं प्रकल्प्य कार्या च सा द्वादशपर्वयुक्ता।
स्वरक्रमेण स्वरसन्निवेशः प्रकाश्यते वैणिकबोधहेतोः ॥
षड्जो भवेत्केवलयापि तन्त्र्या तत्पर्वणि स्पर्शनमन्तरेण।
आद्ये च पर्वण्यृषभो निवेश्यः स्याच्छुद्धगान्धार इह द्वितीये ॥
गान्धारकः पर्वणि तत्तृतीये साधारणः पर्वणि तच्चतुर्थे ।
गान्धारकः स्यात् च्युतमध्यमादिस्ततः परं पञ्चमपर्वणि स्यात् ॥
शुद्धारिमो मध्यमको निवेश्यस्ततः परं पर्वणि चापि षष्ठे ।
स्यान्मध्यमोऽयं च्युतपञ्चमादिरेवं स्वरान्पर्वसु षट्सु युञ्ज्यात् ॥
स्यात्पञ्चमः पर्वणि सप्तमे च तथाष्टमे पर्वणि धैवतः स्यात् ।
निवेशनीयो नवमे निषादः कैशिक्यभिख्यो दशमे निषादः ॥
एकादशे काकलिकानिषादः स्याद्द्वादशे तारकषड्ज एव ।
शिष्टेषु पर्वस्वपि सूक्ष्मभूतेष्वेवं निवेश्याः सकलाः स्वरास्ते ।
पर्वक्रमेण स्वरसन्निवेशं निरूप्य तन्त्रीक्रमतो वदामः ॥
तत्रादिमायामनुमन्द्रषड्जतन्त्र्यां निवेश्यस्तदनन्तरं तु ।
द्वितीयतन्त्र्यामनुमन्द्रपूर्वः स्वारपञ्चमश्चापि निवेशनीयः ॥
तृतीयतन्त्र्यामपि मन्द्रषड्जो मन्द्रादिमो मध्यमकश्चतुर्थ्याम्।
तन्त्रीत्रयेऽधो विनिवेशिते तु ततो वदामः स्वरयोजनं च ॥
मध्यस्थषड्जेन समाननादा भवेदिह प्राथमिकी तु तन्त्री ।
द्वितीयतन्त्री त्वपि पञ्चमेन मन्द्रस्थितेनापि समाननादा ॥
तृतीयतन्त्रीरपि मन्द्रषड्जसमाननादा कथिता प्रवीणैः ।
एताश्च तिस्रः श्रुतिपूर्वतन्त्र्यो नान्ये स्वरश्चापि भवन्ति तत्र।
एवं निरुक्ता खलु शुद्धमेलवीणा प्रवीणव्यवहारयोग्या ॥

रघुनाथः

शुद्धमेलवीणायां स्वरस्थापनम्

स्थाप्या मेरोरूर्ध्वं चतस्र इह तन्त्रिका मिथो विषमाः ।
दक्षिणपार्श्वे दण्डे तिस्रश्चतसृषु च वामाद्याः ॥

अनुमन्द्रषड्जमहेंदनुमन्द्रे पं द्वितीयका तन्त्री ।
मन्द्रं सं च तृतीया चतुर्थिका मध्यमं मन्द्रम् ॥
पार्श्वे तूपरि गात्रा मन्द्रं सं मध्यमा च मन्द्रं पम् ।
अन्त्या मध्यं षड्जं श्रुत्याख्यास्तिस्र एताः स्युः ॥
सति वा षड्जे श्रुतयो मन्द्रे मध्ये क्रमात्सकृद्द्विश्च ।
यद्वा षड्जे मन्द्रे मध्ये तारे तथा तारस्युः ॥
अनुमन्द्रषड्जतन्त्र्यां षट्सारीः स्थापयेद्यथास्युरिमे ।
शुद्धरिशुद्धगसाधारणमृदुमशुचिमम्रृदुपसंज्ञाः ॥
अनुमन्द्रपस्य तन्त्र्यां स्युरिमे तास्वेव षट्सु सारीपु ।
शुद्धधशुद्धनिकैशिकमृदुसशुचिसशुद्धरिपभाख्याः ॥
शुद्धौ सरी इमौ न ग्राह्यौ तन्त्र्या तृतीयया जननात् ।
अनुमन्द्रसतन्त्रीवमन्द्रसतन्त्र्यां स्वरास्तेपु ॥
त्याज्यौ शुद्धममृदुपाविमौ चतुर्थ्यां समुद्भवाद् भूयः ।
मन्द्रमतन्त्र्यां स्थित्थं सारीपु स्युः स्वरास्तासु ॥
आद्या द्वितीययोस्तौ मृदुपोऽप्यलपौ तृतीयिकां त्यक्त्वा ।
तुर्यायां शुद्धोधः शुद्धोनिःस्याच्च पञ्चम्याम् ॥
षष्ठयां च मृदुष्षड्जः कैशिक्यर्थं परान्तरा सारी ।
मेरौ च प्रतिसारि स्वरस्थितिरियं प्रमाणं हि ॥

सोमनाथः

## शुद्धमेला

वीणा विशुद्धमेलाख्या मध्यमेला च सद्द्विधा ।
सर्वैकरागमेलाख्ये प्रत्येकं भवतो द्विधा ॥

वक्ष्यामि लक्षणं तत्र यदुक्तं रागवेदिभिः ।
या मन्द्रमध्यतारेपु स्थानेपु निखिलैस्स्वरैः ॥

युक्तं यदि तदा सर्वरागमेलाभकीर्तिता ।
मध्ये तारे तथैवैकरागे स्यात् सर्वमेलनम् ॥

एषैकरागमेलोक्ता वीणावादनतत्परैः ।
ऊर्ध्वं सप्ताङ्गुलवीणायां लोहतन्त्रीचतुष्टयम् ॥

दक्षिणेऽधस्त्रयं तन्त्र्या वध्नीयाल्लक्ष्यवेदिभिः ।
ऊर्ध्वतन्त्रीपु या वामे तस्यां (संचरः) मनुमन्द्रकम् ॥

पञ्चमं चानुमन्द्राख्यां द्वितीयायां निवेशयेत् ।
मन्द्रषड्जं तृतीयायां चतुर्थ्यां मन्द्रमध्यमम् ॥

प्रथमाधस्य तन्त्रीपु मध्यमेन समश्रुतिः ।
मन्द्रपेन द्वितीयापि तृतीया मन्द्रसेन च ॥

कर्तव्या ताः पुनर्नाम्ना निगद्या श्रुतयो बुधैः ।
सारीनिवेशनं युक्त्या क्रमतः प्रतिपाद्यते ।
अनुमन्द्रसतं चाद्या शुद्धो रि स्याद्यथा तथा ॥

निवेश्या प्रथमा सारी तया तन्त्र्या द्वितीयका ।
शुद्धगांधारसिद्ध्यर्थं तया तन्त्र्या तृतीयका ॥

साधारणाख्यगान्धारसिद्ध्ये क्रमशस्ततः ।
तया तन्त्र्यैव तुर्यापि च्युतमध्यमहेतवे ॥

शुद्धमध्यमसिद्ध्यर्थं सारिका पञ्चमी तथा ।
तन्त्र्या तया पुनष्षष्ठी पतपञ्चमसिद्धये ॥

शेषाभिश्च त्रितन्त्रीभिरुक्तसारीपु ये स्वराः ।
वर्ण्यन्ते ते क्रमेणैव गुरुणा मे यथोदिता ॥

पञ्चमेनानुमन्द्रेण या तन्त्री समुपाश्रिता ।
तया द्वितीयया तन्त्र्या जायते शुद्धधैवतः ॥

ततश्शुद्धो निषादाख्यो निषादः कैशिकी पुनः ।
ततपरस्तात्पतष्षड्जः शुद्धष्षड्जस्ततःपरम् ॥

तस्याः स्यादृषभश्शुद्धष्षड्जतो गदितास्स्वराः ।
जातौ द्वितीयया तन्त्र्या विशुद्धौ यौ सरी स्वरौ ।
स्थाप्यौ नैकप्रयोगे तौ यतस्तन्त्र्या तृतीयया ॥

जायेते तौ पुनर्मन्द्रौ शुद्धौ वीणाविदोदितौ ।
एतेऽनुमन्द्रजाः प्रोक्ता कथ्यंते मन्द्रजाः क्रमात् ॥

तन्त्र्या तृतीयया मन्द्रसस्य सारीपु तास्वपि ।
तथैव स्युः क्रमादेते स्वरा जनमनोहराः ॥

तत्र तावत्तया तन्त्र्या विशुद्धो मध्यमो भवेत् ।
पतपञ्चमकः पश्चाद्प्रयोगौ पुनस्स्वरौ ॥

सञ्जायेते यतस्तन्त्र्यां चतुर्थ्यामिति निर्णयः ।
चतुर्थ्यापि पुनस्तन्त्र्या मन्द्रमध्यमयुक्तया ॥

षट्सु तास्वपि सारीपु भवेयुः क्रमशस्स्वराः ।
पतपः प्रथमं शुद्धपञ्चमस्तदनन्तरम् ॥

शुद्धोधश्शुद्धनिः पश्चान्निषादः कैशिकी ततः ।
षड्जः पतादिरित्येते प्रोक्ता मन्द्रस्वरा मया ॥

पुरोदितासु सारीपु तन्त्रीभिश्च चतसृभिः ।
अनुमन्द्रास्तथा मन्द्राः प्रोद्दिष्टास्ते स्वयंभुवः ॥

स्वीयकल्पनया नोक्ताः प्रामाण्यं तेषु विद्यते ।
गुरुणा मे यथोद्दिष्टा वीणायां सुप्रपञ्चिताः ॥

अत एवाऽन्यथाकर्तुं भाविको भवति क्षमः ।
संवादिनौ स्वरौ योज्यौ सर्वत्रापि परस्परम् ॥

मध्ये तारेऽतितारेऽपि योजनीया यथाक्रमम् ।
सारिकास्सुदृढं तस्यां लक्ष्यज्ञानविशारदैः ॥

मध्यादिस्थानसारीषु तुर्यतन्त्र्युद्भवा ग्रहाः ।
प्रयोक्तव्याः स्वरा नैव भिन्नतन्त्रीभवा बुधैः ।
अन्तरे कथिता नैव सारिकाकलिनि स्वरे ॥

सांकर्यं जायते यस्मान्नानुकूल्यं भजेत्ततः ।
अन्तरस्य स्वरायापि सूक्ष्मः काकलिनो ध्वनिः ॥

विचार्यो विज्ञवर्येण पतादि षड्जमध्ययोः ।
पतादि समयोस्सार्यावेकैकश्रुतिवर्जिते ॥

अन्तर काकली स्यातां तयोः मतिनिधी चस्तौ ॥

शुद्धमेला मया प्रोक्ता—

श्रीकण्ठः

वीणालक्षणम्

तत्रादौ शुद्धमेलाख्यवीणाया लक्ष्म चक्ष्महे ।
लक्ष्यज्ञेन प्रवीणेन निर्मितायां तु शिल्पिना ॥

वीणायामुपरिस्थाने चतुस्तन्त्रीः प्रसारयेत् ।
पित्तलारचिते चाद्यद्वितीये लोहजे परे ॥

पार्श्वोपरिस्थितन्त्रीणां वामेऽचतसृणामपि ।
आद्यायां मन्द्रषड्जाख्यं स्वरं तन्त्र्यां नियोजयेत् ॥

ततः पञ्चमनामानं द्वितीयायां निवेशयेत् ।
तृतीयायां तु झल्लिकायां मध्यषड्जं निवेशयेत् ॥

मध्यमध्यमनामानं तुरीयायां निवेशयेत् ।
तिसृणां पार्श्वतन्त्रीणां स्वरयोजनमुच्यते ॥

आद्या टीप्यभिधा तारषड्जतुल्यध्वनिर्भवेत् ।
द्वितीया तन्त्रिका ज्ञेया मध्यपञ्चमसंमिता ॥

तृतीया मध्यषड्जेन संमिता झल्लिकाभिधा ।
तिसृणामपि चैतासां श्रुतिसंज्ञा प्रकीर्तिता ॥

पर्वणां संनिवेशोऽथ वक्ष्यते लक्ष्यसंमतः ।
मेरोः पुरस्तात्पर्वाणि षट् क्रमेण निवेशयेत् ॥

षट्सु तेष्वाद्यया तन्त्र्या मन्द्रषड्जाभिधानया ।
क्रमेण शुद्धरिषभः शुद्धगान्धारकस्तथा ॥

साधारणाख्यगान्धारे गान्धारोऽन्तरसंज्ञकः ।
शुद्धमध्यमनामा च वराली मध्यमस्तथा ॥

इति स्वराः प्रजायन्ते तन्त्र्या चाथ द्वितीयया ।
मन्द्रपञ्चमनादिन्या षट्सु तेष्वेव पर्वसु ॥

शुद्धश्च धैवतश्शुद्धो निषादश्च ततःपरम् ।
कैशिक्याख्यनिषादश्च काकल्याख्यनिषादकः ॥

षड्जर्षभौ च जायन्ते व्यक्तमेते स्वराः क्रमात् ।
मध्यषड्जनिनादिन्या तन्त्र्या चाऽथ तृतीयया ॥

सर्वेष्वेतेषु ये जातास्तान्स्वरान्कथयाम्यहम् ।
शुद्धावृषभगान्धारौ तथा साधारणाभिधः ॥

गान्धारोऽन्तरसंज्ञश्च शुद्धमध्यम एव च ।
वरालीमध्यमश्चेति जायन्ते क्रमशस्स्वराः ॥

मध्यमध्यमनादिन्या तन्त्र्या चाथ तुरीयया ।
षट्सु पर्वसु चैतेषु स्वरान्सममिदध्महे ।
वरालीमध्यमः पूर्वः पञ्चमश्शुद्धधैवतः ॥

ततश्शुद्धनिषादश्च कैशिक्याख्यनिषादकः ।
काकल्याख्यनिषादश्चेत्येते स्युः क्रमशस्स्वराः ।
अस्यां तुरीयतन्त्र्यां यः काकली षष्ठपर्वजः ॥

तदग्रे सप्तपर्वाणि यथायोगं निवेशयेत् ।
तेषां प्रवाले दीर्घाणि त्रीणि पर्वाणि विन्यसेत् ॥

सरिगाख्यास्त्रयस्तत्र प्रजायन्ते स्वराः क्रमात् ।
शुद्धमध्यमदं ह्रस्वं पर्वपीठे यथा भवेत् ॥

तथा प्रवाले पीठं च वैणिकैर्विनिवेश्यताम् ।
एकं सर्वोत्तरं ह्रस्वं पर्वपीठे निवेशयेत् ॥

तत्रातितारषड्जाख्यो द्वाविंशोऽपि स्वरो भवेत् ।
लक्ष्यज्ञैर्गृह्यते सोऽयं रक्तिलाभैकलोभतः ॥

शुद्धमेलाख्यवीणायामेतत्पर्वाष्टके पुनः ।
द्वौ षड्जौ पञ्चमश्चेति ध्रुवं पर्वत्रयं सदा ॥

अन्यानि पञ्चपर्वाणि तत्तद्रागानुसारतः ।
क्रमाद्रिगमधन्याख्यस्वरोत्पादनसिद्धये ॥

उत्पाट्योत्पाट्य वेश्यानि यथायोगं विचक्षणैः ।
सर्वाण्याहृत्य दीर्घाणि नव ह्रस्वानि पञ्च च ॥

एवैकरागमेलाख्यवीणेयं सति जायते ।
अस्यां तुरीयतन्त्र्यां यः काकली षष्ठपर्वजः ॥

तदग्रे शुद्धविकृतस्वराणां द्वादशात्मनाम् ।
सिद्ध्यै द्वादशपर्वाणि विनिवेश्यानि वैणिकैः ॥

अतितारारव्यषड्जार्थं ह्रस्वं चान्यत्त्रयोदशम् ।
तेषु प्रवाले दीर्घाणि पञ्चपर्वाणि विन्यसेत् ॥

अष्टपर्वाणि पीठेषु ह्रस्वानि विनिवेशयेत् ।
अस्यां दीर्घाणि पर्वाणि मिलित्वैकादशाभवन् ॥

अष्टौ ह्रस्वाणि पर्वाणि समजायन्त तत्र तु ।
तत्सर्वरागमेलाख्यवीणैवं सति जायते ॥

लक्षितैवं शुद्धमेलवीणा भेदद्वयान्विता ।
एतस्यामेव वीणायां स्वराणामेकविंशतेः ॥

निरूपयामः स्थानानि स्वरांस्त्रेधा विभज्य च ।
तत्रोपरिस्थितानां तु वामे चतसृणामपि ॥

आद्याया मन्द्रषड्जाख्यतन्त्र्या तावच्चतुः स्वराः ।
संग्राह्याः षड्जरिषभौ तथा गान्धारमध्यमौ ॥

पञ्चमाद्या न गृह्यन्ते तस्यां जाता अपि स्वराः ।
मन्द्रपञ्चमनामा यो द्वितीयायां निवेशितः ॥

यस्यां त्रयः स्वरा ग्राह्याः पञ्चमो धैवतश्च निः ।
षड्जादयो न गृह्यन्ते जाता अपि ततः परम् ॥

तदेवं मन्द्रके स्थाने स्वरा सप्त प्रदर्शिताः ।
अथ मध्यस्थानके तु तृतीयायां त्रयः स्वराः ॥

तुरीयायां तु चत्वारः सत्येवं स्थानगास्स्वरा ।
तत्र स्युर्मध्यषड्जायां मध्यषड्जादयस्त्रयः ॥

जाता अपि न गृह्यन्ते तदूर्ध्वे स्थानसिद्धये ।
मध्यमध्यमनादिन्यां तुरीयायामपि स्वराः ॥

चत्वार एव गृह्यन्ते मपधन्यभिधाः स्वराः ।
मध्यस्थानगता एवं स्वरास्सप्त प्रदर्शिताः ॥

तस्यामेव तुरीयायां मध्यस्थाननिषादतः ।
अग्रे षड्जादयस्सप्त तारस्थानगताः स्वराः ॥

संग्राह्या इति सम्प्रोक्तास्तारस्थानगतास्स्वराः ।
तन्मन्द्रमध्यताराख्यस्थानानां त्रितये स्वराः ॥

प्रतिस्थानं सप्तसप्तेत्येकविंशतिरीरिताः ।
द्वाविंशमतिताराख्यं चतुर्थमपि षड्जकम् ॥

लक्ष्यज्ञाः परिगृह्णन्ति रक्तिलाभैकलोभतः ।
स्थानप्रसङ्गे वैकाररामो बभ्राम तद्यथा ॥

उपरिस्थचतुस्तन्त्रीष्वाद्यायां विनिवेशिते ।
अनुमन्द्राख्यषड्जेऽस्मिन् स्वरास्सरिगमाभिधाः ॥

चत्वारस्समुपादेयास्त्वनुमन्द्राख्यपञ्चमः ।
द्वितीयायां निवेश्योऽत्र पधनीति त्रयः स्वराः ॥

ग्राह्यास्ततोनुमन्द्राख्यस्थानगास्सप्त दर्शिताः ।
स्वरास्तन्त्र्यां तृतीयायां मन्द्रषड्जो निवेश्यते ॥

तस्यां सरिगनामानः संगृह्यन्ते त्रयस्स्वराः ।
तुरीयायां तन्त्रिकायां निवेश्यो मन्द्रमध्यमः ॥

तस्यां तु मपधन्याख्याः संगृह्यन्ते चतुस्स्वराः ।
मन्द्रस्थानस्स्वरास्सप्त तदेवं दर्शिता इति ॥

नैतत्संगच्छते मन्द्रमध्यताराभिधानि हि ।
त्रिस्थानानीति सकलसांगीतिकमतस्थितिः ॥

आद्यद्वितीययोस्तन्त्र्योस्स्वरास्सप्त स्वथेरिताः ।
अनुमन्द्राभिधे स्थाने तृतीयकतुरीययोः ॥

मन्द्रस्थानगतास्सप्तस्वरास्तावदमी पुनः ।
मध्यस्थानगताः किं वा तारस्थानगता उत ॥

न तावदाद्यस्ताराख्यस्थानभङ्गप्रसङ्गतः ।
न द्वितीयोऽपि मध्याख्यस्थानाभावे कथं पुनः ।
तारस्थानं प्रजायेतानुपनीतविवाहवत् ॥

तस्मादस्माभिरुक्तैव रीतिस्स्थानविभाजने ।
मन्द्रादिष्वनुमन्द्रादिव्यवहारस्तु लौकिकः ॥

गतानुगतिकन्यायाद्भ्रान्तिमात्रविजृम्भितः ।
लक्षितेयं शुद्धमेलवीणा लक्ष्यानुसारतः ॥

वेङ्कटमखी

**शुद्धरागः**

स्वजात्युद्योतकत्वे येऽनुवर्तन्ते तु तामिह ।
अन्यजातिविरूपा ये ते शुद्धा राजसंमताः ॥

कुम्भः

**—मेलरागः (सिंहेन्द्रमध्यमेलजन्यः)**

(आ) स रि ग म प नि स.
(अव) स नि प म ग स.

मञ्ज

**शुद्धलाक्षणिकः—(अभिनयः)**

उच्चार्य तत्तन्नामानि करैश्च प्रकटीकृतः ।
स स्यादभिनयो नाम्ना शुद्धलाक्षणिको मतः ॥

भरत

**शुद्धवराटिका—रागः**

सौवीराङ्गं शुद्धवराटी बहुकी धनिपादिका ।
सन्यासांशग्रहा तारा सदा शान्ते नियुज्यते ।
प्रयोज्या पश्चिमे यामे शान्ते रौद्रेऽद्भुते रसे ॥

**शुद्धवराटी—प्रथमरागः**

सौवीरी मुनिपुङ्गवैर्निगदिता भाषा च सौवीरजा
तस्या अङ्गमिदं वदन्ति.. ...शुद्धा वराटयेव सा ।
न्यासांशग्रहषड्जशोभिततनुः शान्ते रसे गीयते
पूर्णा धैवनतारका च धनिपप्राचुर्यैर्द्वयया सदा ॥

मोक्षः

—भाषाङ्गरागः

सौवीरे गदितास्ति या प्रथमतः सौवीरिकाभाषिका
तस्यामङ्गमिमां वदन्ति सुधियः शुद्धां वराट्याह्वयाम्।
षड्जांशग्रहणावसानकलितां तारस्थलोद्यत्सधां
योज्यां शान्तरसे दिनस्य विरतौ सप्तस्वरै रञ्जिताम् ॥

कुम्भः

—मेलरागः

अथ शुद्धवराट्यां तु रिगौ कोमलपूर्वकौ ।
गस्तु तीव्रतरो धः स्यात्कोमलस्तीव्रनिस्वरः ।
धैवतोद्ग्राहयुक्तास्यां निमौ न्यासांशकौ स्मृतौ ॥
द्वितीयप्रहरोत्तरगेया ।

अहोबिलः

—रागः (वंशे वादनक्रमः)

तारषड्जं ग्रहं कृत्वा स्वरं तस्मात्तृतीयकम् ।
द्विस्त्रिश्चतुर्वा हन्याच्च तदनु स्थायिनं स्पृशेत् ॥
ततस्तं प्राक्तनं प्रोच्य कम्पिते स्थायिनि स्वरे ।
न्यासांच्छुद्धवराट्याः स्यात्स्वस्थानं प्रथमं तदा ।
अस्याः द्वितीयो वंशेषु स्वरः स्थायी निरूपितः ॥

वेमः

—रागः

सौवीरकस्य सौवीरी मुख्या भाषा च या स्मृता।
तदङ्गं चन्द्रकी नाम्ना सैव शुद्धा वराटिका ॥
अस्याः न्यासांशयोः षड्जः प्रचुरादधिकस्तथा।
संपूर्णेयं रसे शान्ते प्रयोगोऽस्याः प्रदर्श्यते ॥

जगदेकः

षड्जादिः कम्पितस्थाना मन्द्रधैवतकम्पिता ।
गान्धारनादबहुला संपूर्णा सप्तभिः स्वरैः ॥
निषादुर्बला कार्या षड्जगान्धारतारभाक् ।
शुद्धा वराटी विज्ञेया रागलक्षणवेदिभिः ॥

सोमेश्वरः

अङ्गं सौवीररागस्य सौवीरीत्यभिविश्रुता ।
प्राप्ताङ्गत्वं ततस्तस्या नाम्ना शुद्धवराटिका ॥

हरिः

—भाषाङ्गरागः

सौवीरभाषा सौवीरी तज्जा ज्ञेया वराटिका ।
तारधैवतषड्जांशा ग्रहन्यासेषु सस्वरा ॥
गातव्या पश्चिमे यामे संपूर्णा करुणे रसे ।
अनल्पधनिपा सैव बहुकीर्त्यमिधीयते ॥

भट्टमाधवः

शुद्धवसन्तः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध म ध म ग स.

मञ्ज

शुद्धषड्जा—मूर्छना (षड्जग्रामे चतुर्थी मूर्छना)

(आ) प ध नि स रि ग म.
(अव) म ग रि स नि ध प.

पण्डितमण्डली

—मूर्छना

शुद्धः स्यात्तत्र षड्जस्तु शुद्धषड्जा ततस्मृता ।
पञ्चमेन स्वरेणेयं देवता स्यात्पितामहः ॥

नान्यः

शुद्धषाडवः—रागः

यदांशकन्यासकश्च मध्यमाख्यस्वरो भवेत् ।
नैधनस्थानगामी च षड्जो गान्धारदुर्बलः ॥
तानधारी स सौवीरी शुद्धमध्याख्यमूर्धनः ।
अजाक्रान्तेन तानेन शृङ्गाररसधैवतः ।
मध्यमायास्तथा जात्यः जायते शुद्धषाडवः॥

नान्यः

षड्जान्ते मध्यमाजातेः संभूतश्शुद्धषाडवः।
न्यासश्च पञ्चमोंऽशश्च गान्धारेण च दुर्बलः ॥

कश्यपः

... ... ...पञ्चमोत्पन्नः शुद्धषाडवसंज्ञकः ।
न्यासांशमध्यमा माल्पस्तारमध्यग्रहस्तथा ॥
काकल्यन्तरसंयुक्तो हास्यशृङ्गारकारकः ।
लक्षणेनेह केनेयं विकृता मध्यमा भवेत् ॥
तारमन्द्रावधिर्यस्मात् तदंशाभ्यामुदाहृतः ।
तस्मान्मध्यग्रहेणैव गातव्यं जातयो यतः ।
तारमध्यग्रहेणेत्थं विकृता मध्यमा मतः ॥

मोक्षः

शुद्धसाधारितः—रागः

सांशग्रहो निगाल्पः स्यात् षड्जमध्यमया कृतः ।
संपूर्णो मध्यमन्यासः शुद्धसाधारितो मतः ॥

मोक्षः

शुद्धसामन्तम्—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) स रि ग म प ध स,
(अव) स नि ध प ध म ग रि स.

मञ्ज

शुद्धसारङ्गः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स रि ग म प ध नि ध म.
(अव) स ध प म रि ग रि स.

मञ्ज

शुद्धसावरी मेलरागः (काम्भोजीमेलजोऽयं रागः)
शुद्धसावेरिरागे तु गान्धाराश्चविवर्जनम्।
नगौ वर्ज्यौ।

परमेश्वरः

—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स रि म प ध स.
(अव) स ध प म रि स.

मञ्ज

शुद्धसीमन्तिनी—मेलरागः (हनुमत्तोडीमेलजन्यः)
(आ) स रि म प ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

शुद्धसेना—मेलरागः
(आ) स ० रि ० ग म ० प ० ० ० ० ० स.
(अव) स नि ० ० ध प ० म ० ग रि ० स.

मेललक्षणे

शुद्धा पुष्कर गद्ये जातिः
एकाक्षरकृतं वाद्यं यद्भवेत्सार्वमार्गिकम्।
नित्यं करणयोगेन सा शुद्धा नामतो यथा॥

अभिनवगुप्तभरतपाठः

एकाक्षरे दयक्षरे वा वाद्यं यत्सर्वमार्गिकम्।
भवेत्कारण (क) योगेन सा शुद्धा जातिरुच्यते॥

नेपालपाठः

अयमेवपाठः प्राचीनकोशेऽपि।
यथा— धं धं द्रं द्रं क्लाखो खो खो हेति विहितवाक्या।
सा शुद्धा विज्ञेया मध्यस्त्रीणां सदा जातिः॥

भरतः

-अवनद्धे जाति
यत्रैकस्याक्षरस्य स्यादावृत्तिर्वाद्यभाण्डजा।
रसभावापेक्षया च मार्गेष्वपि चतुर्षु च।
मध्यस्त्रीणां प्रचारेषु जातिं शुद्धां विनिर्दिशेत्॥

नान्यः

एकाक्षरकृतं वाद्यं यद्भवेत्सार्वमार्गिकम्।
नित्यं करणयोगेन सा शुद्धा नामतो यथा।
सा शुद्धा विज्ञेया मध्यस्त्रीणां तथा जातिः॥

भरतः

सार्वमार्गिकमिति अङ्गितालिप्तवितरतागोमुखीषु शृङ्गाराद्यष्ट-रसेषु भवति। मध्यस्त्रीणामिति।

शुद्धाभीरी—रागः
अतःपरं भवेद्रागः शुद्धाभीरीति संज्ञितः।
भिन्नषड्जसमुद्भूतः तारो गान्धारसंज्ञके॥
ऋषभेण परित्यक्तो मन्द्रषड्जरसमस्वरः।
धैवतांशग्रहन्यास इत्ययं प्रतिपादितः॥

हरिः

शुभङ्करः
सङ्गीतदामोदर- हस्तमुक्तावलीकारः। सङ्गीतदामोदरे पञ्च परिच्छेदा वर्तन्ते। तत्रोद्दिष्टा विषयाः निरुक्तिनिष्कृष्टतया सङ्ग्रह-रूपेणापि अविरम्यं निरूपितास्सन्ति। अलङ्कारनाट्यलक्षणेषु पौरस्त्यपाश्चात्यभेदेन द्वे मते वर्तेते। उभयोरपि मतयोः अनेन विचारः कृतः।

शुभपन्तुवराली—मेलकर्ता
स रि ग ० ० ० म प ध नि ० ० स.

मञ्ज

शुभवराली—मेलरागः (शुभपन्तुवरालीमेलजन्यः)
(आ) स ग म प ध नि स.
(अव) स नि प ध प म ग रि म ग स.

मञ्ज

शुभवाहिनी—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स रि ग म प नि ध नि स.
(अव) स नि ध म ग म स.

मञ्ज

शुभा—मात्रावृत्तम्
द्विमात्रिक एकः चतुर्मात्रिक एकः।
जः चतुर्मात्रिकः जं द्विमात्रिका॥

विरहाङ्कः

—श्रुतिः
मध्यमस्य द्वितीया श्रुतिः।

सुधा

शुभामतिः—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स रि ग म नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

शुभ्रवाहिनी—मेलरागः (खरहरप्रियामेलजन्यः)
(आ) स रि ग म प नि ध म प नि ध नि स.
(अव) स नि ध प म ग म स.

मञ्ज

शुष्कम्—दर्शनम्
अन्तःप्रौढाग्निसंशुष्यत्प्रभं शुष्कमुदाहृतम्।

शारदातनयः

—वाद्यम्
गीतनृत्तविहीनत्वाद्वाद्यं शुष्कमिति स्मृतम्।

ज्यायनः

शुष्कावकृष्टा—पूर्वरङ्गाङ्गम्
अत्र शुष्काक्षरैरेव ह्यवकृष्टा ध्रुवा यतः।
तस्माच्छुष्कावकृष्टेयं जर्जरश्लोकदर्शिका॥

भरतः

शूत्कारः—फूत्कारदोषः
शूत्कारोऽन्वर्थनामात्र,

कुम्भः

—वंशे फूत्कारदोषः
शूत्कारोऽन्वर्थनामात्र केषाञ्चिद्दशमो मतः।

कुम्भः

शून्यता—शिल्पकाङ्गम्
यथा सीताऽपि तत्रासेत्यादावपि च दृश्यते।
शून्यता विस्मृतिस्सर्वकर्मणां न कदा स्मृता॥

शारदातनयः

विस्मरणं शून्यत्वम्। यथा—प्रावृडङ्के वत्सेत्यादि।

सागरः

शून्यमध्यमः—मेलरागः (वाचस्पतीमेलजन्यः)
(आ) स रि म प नि ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

शून्या—दृष्टिः
निष्कम्पा समतारा च बाह्यार्थग्राहिणी च या।
शून्या दृष्टिस्समाख्याता चिन्तायां व्यभिचारिणी॥

सोमेश्वरः

धूसरा मलिनापाङ्गनिष्कम्पा पुटतारयोः।
शून्यावलोकिनी दृष्टिः शून्या चिन्ताप्रकाशिनी॥

विप्रदासः

शूलिनी—मेलरागः (खरहरप्रियामेलजन्यः)
(आ) स रि ग रि म ध म प ध नि स.
(अव) स नि प म रि स.

मञ्ज

—मेलकर्ता
स ० ० रि ग म ० प ० ध ० नि स.

मञ्ज

शृङ्खला—नृत्तम्
भाणादौ प्रयुक्ता शृङ्खलान्योन्यबन्धिनी। सा लयान्तरे प्रयुज्यते। लयान्तरम्, लयविशेषः।

शृङ्खलासङ्गिनी—गतिः
शृङ्खलासङ्गिनी चापि उद्बन्धगतिसन्निभा।

देवणः

शृङ्खलिका—कण्ठभूषणम्

शृङ्खली—वर्णालङ्कारः
ह्रस्वदीर्घस्वरयुगं समुच्चार्यान्त्यमादिमम्।
कृत्वैवं सकला यत्र कलाः प्रोक्तास्सशृङ्खली॥

यथा—सस्सर सरिगम्म रिरिरिगरिगप्प इत्यादि। व्युत्क्रमेण मम्मग्गमग्गरिस्स इत्यादि। आरोहश्चावरोहश्च शृङ्खल्येव। अस्य निस्सारुतालानुगतत्वेनानुपूर्वीविशिष्टत्वादलङ्कारत्वम्।

सङ्गीतसरणिः

शृङ्गम् सुषिरवाद्यम्
शृङ्गं च माहिषं श्लक्ष्णं सर्वदोषविवर्जितम्।
फूत्कारसुषिरक्षिप्तं दन्तिदन्तोपशोभितम्॥
धोंकारनादगम्भीरं तत्थुकारविराजितम्।
कृष्णेन निर्मितं वाद्यं शृङ्गं गोपालवल्लभम्॥
हस्ताङ्गुलप्रमाणेन तूर्यवत्कथितं पुरा।
पाटवर्णाश्च ये तत्र तत्र ये वाद्यकोविदाः॥
तानाहूय महीपालः सुसन्तुष्टः प्रियावृतः।
उत्सवे च तथोद्याने कुर्याद्वाद्यविनोदनम्॥

सोमेश्वरः

करेणुवदनाकारवदनं दधतं शुभम्।
निर्दोषं माहिषं शृङ्गं श्लक्ष्णं स्निग्धं सुसंस्कृतम्॥
धुत्तूरकुसुमाकारं शृङ्गस्यानुरुहस्य च?।
अष्टाङ्गुलायतं खण्डं मूलेऽस्य ध्वनिसिद्धये॥
न्यसेद् द्व्यङ्गुलकं तस्य छित्वाग्रं रन्ध्रमेककम्।
कृत्वा फूत्कारजनकं भुङ्कारेणानुवादयेत्।
विविधध्वनिगम्भीरं प्रायो गोपालकेषु च॥

कुम्भः

शृङ्गारः—रसः

मधुराः सुकुमाराश्च रूपयौवनशालिनः ।
शृङ्गारालम्बना भावाः तरुणीतरुणादयः ॥
लतागृहाणि चित्राणि हर्म्यप्रासादमालिकाः ।
शृङ्गारोद्दीपना भावाश्चन्द्रिकाचन्दनादयः ।
कटाक्षभुजविक्षेपगोप्या लास्याङ्गमर्दनम् ॥
मन्दस्मितादयः शृङ्गारानुभावाः प्रकीर्तिताः ।
आलस्यौग्र्यजुगुप्साख्यैस्त्रिभिर्भावैर्विवर्जिता ॥
निर्वेदाद्याः सर्व एव शृङ्गारे व्यभिचारिणः ।
विभावैस्तत्वसामर्थ्यात्साक्षात्कारमिवागतैः ॥
आलम्बनोद्दीपनाख्यैर्वरस्त्रीकुसुमादिभिः ।
अनुभावैर्भ्रूसाक्षेपकान्तदृष्टिस्मितादिभिः ॥
यथायोगं प्रसर्पद्भिरीर्ष्याद्यैर्व्यभिचारिभिः ।
रतिः स्थायी सहृदयैरास्वाद्यत्वमुपागतः ॥
शृङ्गाराख्यो रसः प्रोक्तो विप्रदासेन धीमता ।
संभोगविप्रलम्भाख्यौ तस्य भेदावुभौ स्मृतौ ॥
संयोगे कान्तया यः स्याद्वियोगे स्यात्तया परः ।
परस्परस्वसंवेद्यसुखानुभवनात्मिका ॥
यानुभूतिर्भवेत्सैव संयोगः स्यात्सदा तयोः ।
सङ्गमोत्सर्पिमुख्ययोरुत्कृष्टगुणयोगिनोः ॥
नवयौवनयोः श्लाघ्यप्रकृत्योः श्रेष्ठरूपयोः ।
नारीपुरुषयोस्तुल्यं परस्परविभाविका ॥
स्पृहाह्वया चित्तवृत्तिर्विप्रलम्भो वियुक्तयोः ।
आलस्यौग्र्यजुगुप्सानां विप्रलम्भोऽपि संभवः ॥
संभोगस्य यथाचिन्ता स्मरणावेगितादयः ।
सञ्चारिणो भवन्त्येवं भवन्त्येते भयानके ॥
करुणेऽपि विबोधस्तु त्रयाणामपि सुग्रहः ।
विषादग्लानिनिर्वेदबोधमल्पादयो यथा ॥
शान्ते सञ्चारिणो दृष्टाः विप्रलम्भेऽपि ते तथा ।
विबोधश्चानयोर्व्यक्तः शान्तशृङ्गारयोर्द्वयोः ॥
इति सञ्चारिसाङ्कर्यादमीषां नियमः कृतः ।
उच्यतेऽत्र यदा रत्युद्रेकजन्मा भवन्त्यमी ॥
संभोगस्य तदा नूनं भवन्ति व्यभिचारिणः ।
यदा तु राजद्रोहादिनिमित्ताद्युद्भवस्तदा ।
भयानकस्य जायन्ते चिन्ताद्याः व्यभिचारिणः ॥
यद्दुःखितस्य लोकस्य दर्शनात्संभवन्त्यमी ॥
करुणस्य तदाङ्गत्वं भजन्ते व्यभिचारिणः ।
यदाङ्गनायाः प्राप्त्याशामिश्रिता स्याद्वियोगिनः ॥
साकाङ्क्षस्य तदोत्पन्ना भावा निर्वेदपूर्विकाः ।
भजन्ते विप्रलम्भाख्यशृङ्गारव्यभिचारिताम् ॥
यदा तु निश्चितः कान्ताप्राप्त्याशाविरहस्तदा ।
सञ्चारिणः स्युश्शान्तस्य निराकाङ्क्षस्य धीमतः ॥
यथा हरीतक्येकैव तत्तदौषधयोगतः ।
विविधं कुरुते कार्यं बन्धनस्रंसनादिकम् ॥
एवमन्यैरुपकृता जायन्ते भिन्नशक्तयः ।
तस्मात्सञ्चारणा ज्ञेया सहकारिपदस्थितिः ॥
नन्वयं विप्रलम्भः स्यान्नीचप्रकृतिको यदा ।
तदा चन्दनमाल्यादि विभावानामदर्शनात् ॥
रत्यभावे विप्रलम्भः शृङ्गारो जायते कथम् ।
संभोगोऽपि न नीचे स्याद्विभावानामदर्शनात् ॥
इतिचेत्तत्र तत्रासौ नारीमात्रविभावजः ।
यद्येवं जायते वापि शब्दानुकृतिदर्शितात् ॥
विभावात्कामिनीरूपाद्विप्रलम्भेऽप्यसौ रतिः ।
ननु संभोगशृङ्गारे स्थायी भावो रतिर्भवेत् ॥
सुखात्मकत्वाद्विरहजन्यदुःखात्मके कथम् ।
रतिः स्थायी भवेद्भावो विप्रलम्भे तदुच्यते ॥
न वयं नायकगतौ सुखदुःखावकृत्रिमौ ।
संभोगविप्रलम्भाख्यौ ब्रूमः किं ननु कुर्वते ॥
नटेन येऽभिनीताः स्युः अनुभावाः पुरोदिताः ।
तैरुद्बुद्धा वासनात्मा सूदस्य स्वान्तमन्दिरे ॥
यो रतिः स्याल्लक्षणया स्थायी भावो रतिर्भवेत् ।
तच्चित्तसत्वोद्रेको यः प्रकाशानन्दलक्षणः ॥
संभोगस्यानुकरणाद्वियोगानुकृतेरपि ।
संभोगो विप्रलम्भश्च भण्यते भावचिन्तकैः ॥
करुणाद्विप्रलम्भस्य स्थायिभेदात्स्फुटा भिदा ।
विप्रलम्भस्तु संभोगफलः स्यात्करुणः पुनः ।
स्यान्निर्धिफलस्तस्मादपि भेदस्तयोः स्फुटः ॥ विप्रदासः

शृङ्गारस्य हि प्रीतिः स्थायिभावः । वादिजङ्घालदेव

देशकालवयोद्रव्यगुणप्रकृतिकर्मणाम् ।
भावानामुत्तमं यत्तु तच्छृङ्गं श्रेष्ठमुच्यते ।
इयर्ति शृङ्गं यस्मात्तु तस्माच्छृङ्गार उच्यते ॥ शारदातनयः

शृङ्गारतिलकः—देशीतालः

पद्वयं लो द्रुतो लौ च शृङ्गारतिलके क्रमात् ।

९१ मात्राः तालप्रस्तारः

शृङ्गारप्रकाशः

भोजदेवविरचितः। काव्यालङ्कारग्रन्थः। षट्त्रिंशत्प्रकाशात्मकः। प्रथमादिद्वादशप्रकाशपर्यन्तं शब्दार्थशक्तिरूपाः काव्यभक्तयो विचारिताः। त्रयोदशाच्चतुर्विंशतिषु प्रकाशेषु शृङ्गार एक एव रस इति शृङ्गारविभागाः, तदवान्तर विभागाश्च प्राचीनग्रन्थोदाहरणपूर्वकं अतिसूक्ष्मेक्षिकया निरूपिताः। त्रिंशत्सहस्रपरिमितोऽयं ग्रन्थः। पूर्वार्धे महाभाष्य-वाक्यपदीय-व्याडिग्रन्थानां सारभूतविचारः क्रियते। विदुषामतिसहायकारी।

शृङ्गारललिता—मेलरागः (हेमवतीमेलजन्यः)
(आ) स ग म ध नि स.
(अव) स नि ध म ग रि स. मञ्ज

शृङ्गारवर्धिनी—मेलरागः (खरहरप्रियामेलजन्यः)
(आ) स रि ग म प ध नि स.
(अव) स ध नि प म रि ग म रि स. मञ्ज

शृङ्गारशेखरः

अभिनयभूषणकर्ता। अयं वीरभल्लटनामानं कविशेखरं प्रतापरुद्रसभासदं देशिकत्वेन स्मरति। अतः प्रतापरुद्रात् (1330) नात्यर्वाचीनः। अभिनयभूषणे अभिनये चित्रवराः. गुरुशुक्रयाज्ञवल्क्यमतोक्ताः निरूपिताः।

शृङ्गारहारः

हम्मीरकृतः। सङ्गीतनाट्यविषयकोऽय ग्रन्थः। आरम्भे भोज, विक्रम, जगदेक, केशि सिङ्गण गणपति जयसिंहादयो नृपाः स्मृताः। तेषु केशिसिङ्गणयोः नृपयोः ग्रन्था नोपलभ्यन्ते। अरालहस्तलक्षणे सिङ्गणस्य नाम दृश्यते। सोमराजदेवः सङ्गीतरत्नावलीकारः। हम्मीरेणातिबहुमानेन "नाट्यवेदविरिञ्चिना" इति उक्तः। उदाहृतश्लोकस्तु सङ्गीतरत्नावल्यां दृश्यते। शृङ्गारहारे कश्यपविशाखिल रम्भार्जुनयाष्टि त्रावण दुर्गेशक्तिवायुजैत्रसिंहरुद्रटमतानि उक्तानि। कालः क्रै. प. 1290

शृङ्गिका—सुषिरवाद्यम्

छिन्नाग्रं घटितं शृङ्गं श्लक्ष्णं मृगसमुद्भवम्।
शृङ्गिका सा निगदिता तारनादविधायिनी॥
कुम्भः

शृङ्गी—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि म प ध नि स.
(अव) स प म ग रि स. मञ्ज

शेखरः—देशीतालः

—गीतालङ्कारः (ध्रुवभेदः)

द्वादशाक्षरपादोऽन्यो भोगैकफलकप्रभोः।
हंसके च रसे वीरे गीयते शेखराह्वयः।
लघुर्गुरुर्लघुर्यत्र स तालो हंसकः स्मृतः॥
सङ्गीतसारः

शेषभूषणम्—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स रि ग प नि ध स.
(अव) स नि ध प म ग म रि स. मञ्ज

शेषनादः—मेलरागः (सिंहेन्द्रमध्यममेलजन्यः)
(आ) स रि ग म प ध स.
(अव) स नि ध प म ग रि स. मञ्ज

शेषप्रभा—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स ग म प ध स.
(अव) स नि ध प म ग रि स. मञ्ज

शेषफणौ—नृत्यहस्तौ

करं सूर्यमुखं कृत्वा चोर्ध्वं शाखाः पृथक् पृथक्।
पृष्ठे योज्या द्वितीयस्य शाखाः शाखान्तरे पुनः।
प्रान्तयोस्तत्तदङ्गुष्ठौ ततः शेषफणौ मतौ॥
नागमल्लः

शेषवाहिनी—मेलरागः (मायामालवगौलमेलजन्य)
(आ) स रि ग म नि स.
(अव) स नि म ग रि स. मञ्ज

शेषशायी—देशीतालः
गगाष्टकः शेषशायी।
S S S S S S S S S S S S S S S S लक्ष्मणः

शैवम्—देशीस्थानम्

प्रकृतिस्थस्य पादस्य जानूत्सङ्गसमोऽपरः।
समुद्यतः कुञ्चिताङ्घ्रिर्गमने चेन्निवेशितः।
स्थानकं शैवमाख्यातं शम्भोस्ताण्डवदर्शने॥
वेमः

—करणम्

आयतं स्थानकं यत्र करौ कलशसंस्थितौ।
ऊर्ध्वप्रसारितौ भूयो रेचितौ तत्क्रियानुगौ।
निरुपभ्रमरीयुक्तौ पादौ शैवं तदीरितम्॥
हरिपालः

शैवरागाः

मध्यमं वेलतत्वाख्यं वराटं कुञ्जरं तथा ।
भैरवीदेशिकश्चैव मकुटं मालवी तथा ।
देशिकं रागभेदादि मेघरागं तथैव च ॥
गान्धारं कोल्लसं विद्यात्कौशिकं नट्टरावकम् ।
श्रीकामरं च टक्केशी तकोख्यं तालपाणिना ॥

अन्यच्च—

अन्दालीकामरं चैव गान्धारं पञ्चमं तथा ।
तक्केशी त्वश्रुणी चैव गोली च मेघनादकम् ।
तक्केशी सन्ध्यरागं च मेघरागं च कौशिकम् ॥
एते रागाः कारणागमे उत्तरभागे दृष्टाः ।
श्रीकामरतक्केघरागयोर्लक्षणं कुत्रापि न दृष्टम् ।

शोकः—स्थायिभावः

इष्टजनवियोगविभवनाशवधबन्धदुःखानुभवनादिभिर्विभावैरुत्पद्यते । तस्याश्रुपातपरिदेवितविलपितवैवर्ण्य स्वरभेद भूमिपतनसस्वनरुदिताक्रन्दित दीर्घनिश्वसितजडतोन्मादमोह मरणादयोऽनुभावाः । रुदितमत्र त्रिविधं आनन्दजमार्तिजं ईर्ष्यासमुद्भवं चेति ।

हर्षोत्फुल्लकपोलं सानुस्मरणादपाङ्गविसृतास्रं ।
रोमाञ्चगात्रमनिभृतमानन्द समुद्भवंभवति ॥
पर्याप्त विमुक्तास्रं सस्वनमस्वस्थगात्रगतिचेष्टम् ।
भूमिनिपातनिवर्तितविलपितमित्यार्तिजं भवति ॥
प्रस्फुरितोष्ठकपोलं सशिरःकम्पं तथा सनिश्वासम् ।
भ्रुकुटीकटाक्षकुटिलं स्त्रीणामीर्ष्याकृतं भवति ॥
स्त्रीनीचप्रकृतिष्वेष शोको व्यसनसंभवः ।
धैर्यणोत्तममध्यानां नीचानां रुदितेन च ॥

भरतः

शोकः

उपलब्धावनिष्टस्य चित्तं यदभिहन्यते ।
दुःखात्मा सम्मतश्शोकः मोहरोदनभावनः ॥

भावविवेकः

शोकवराटी—मेलरागः

अथ शोकवराट्यां तु रिगौ कोमलपूर्वकौ ।
मश्च तीव्रतरः प्रोक्तः कोमलो धैवतः स्मृतः ।
न्यासांशौ च सनी यत्र मूर्छना च पपूर्विका ॥
द्वितीयप्रहरोत्तरगेया ।

अहोबिलः

शोकवरालिः—मेलरागः (नाटकप्रियमेलजन्यः)

(आ) स रि म ग म प म ध रि ग म प ध नि ध स
(अव) स नि ध म ग रि स.

मल्ल

शोकवरालीरागध्यानम्

कपोलयुगले न्यस्तहस्तपृष्ठाङ्गुलोज्ज्वलाम् ।
जानुकूर्परसंयुक्तां ध्याये शोकवरालिकाम् ॥

रागसागरः

शोभनः—रसगतिः

विरोधिमित्रशत्रूणां रसानां सङ्करेऽपि च ।
महिम्ना शोभते स्वेन यस्स शोभन ईरितः ॥

शारदातनयः

शोभा—लक्षणम्

सिद्धैः प्रयोजनैः असिद्धस्य शुभसङ्घटनं यत्र निर्णीयते सूच्यते वा श्लेषवक्रोक्तिध्वनिविशेषमहिम्ना चमत्कृतोऽर्थः शोभा ।

शोभा प्रभावप्राकट्यं यूनोरन्योन्यमुच्यते । यथा—रत्नावल्यां सागरिकावत्सराजयोरन्योन्यरूपातिशयप्रकटनम् ।

सिंगः

सिद्धैरर्थैस्समीकृत्य शोभाऽसिद्धस्य भाषणम् ।

सर्वेश्वरः

सिद्धैरर्थैस्समं कृत्वा ह्यसिद्धोऽर्थः प्रयुज्यते ।
यत्र श्लिष्टा विचित्रार्था सा शोभेति विधीयते ॥

भरतः

सिद्धैः प्रयोजनैः असिद्धस्य शुभसङ्घटनं यत्र निर्णीयते सूच्यते वा श्लेषवक्रोक्तिध्वनिविशेषमहिम्ना चमत्कृतोऽर्थः शोभा । केचित्स्वभावस्य प्रकटनं शोभेत्याहुः । अपरे तु यूनोः प्रभावप्रकटनमित्याचक्षते । अर्थप्रधाने वस्तुनि एषा परं शोभते । यथा—द्वीपादित्याद्युक्तिप्रत्युक्ती रत्नावल्याम् ।

सिद्धैरर्थैस्समं कृत्वा ह्यसिद्धोऽर्थः प्रसाद्यते ।
यत्र श्लक्ष्णा विचित्रार्था सा शोभेत्यभिसंज्ञिता ॥

भरतः

मेदच्छेदकृशोदरं इत्यत्र पादत्रयेण प्रसिद्धा एवार्थाः अभ्यसनीयत्वेन शोभमानास्तैस्समविकलं मृगयालक्षणमर्थं कृत्वा अप्रसिद्धोऽनुचितोऽपि सोऽर्थ उचितो विचित्रश्च निरूपितः । अशोभनोऽप्यर्थश्शब्दार्थव्यापारेणैव शोभत इति शोभा ।

अभिनवः

शोभा

रूपयौवनलावण्यैः रूपभोगोपबृंहितैः ।
अलङ्करणमङ्गानां यत्तु शोभेति सा स्मृता ॥

दाक्षिण्यं शौर्यमुत्साहो नीचार्थेषु जुगुप्सतः ।
उत्तमैश्च गुणैस्सार्धं यतश्शोभेति सा स्मृता ॥

भावविवेकः

शोभस्विनी—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स रि म प म ध नि स .
(अव) स ध नि प म रि म ग स .

मञ्ज

शौचम्—व्यभिचारिभावः

उत्तमानां श्रुतिशास्त्रविवेकैरुत्पद्यते । तद्दमशमसत्यादिभिरभिनीयते । यथा—दान्तोऽहमित्यादिजनकवाक्यम् ।

सागरः

शौरिविलासिता—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) नि ध नि स रि ग म प म प ध नि .
(अव) ध प म ग रि स नि ध नि स .

मञ्ज

शौर्यचन्द्रिका—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स ग रि ग म प ध प स .
(अव) स नि ध म ग रि ग स .

मञ्ज

शौर्यवर्धिनी—मेलरागः (हेमवतीमेलजन्यः)

(आ) स रि म प ध नि स .
(अव) स नि ध प म ग रि स .

मञ्ज

श्यामः—मुखरागः

श्यामो दूर्वादलनिभः बीभत्से च भयानके ।

वेमः

श्यामो नीलघनच्छविः ।
भयानके च बीभत्से रागश्श्यामो मुखे भवेत् ।

सोमेश्वरः

श्यामकल्याणी—मेलरागः

(आ) स ० रि ० ग ० ० प ० ध ० ० स .
(अव) स नि ० ध ० प म ० ग ० रि ० स .

मेललक्षणे

—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि ग म प नि स .
(अव) स नि प ध प म ग रि स .

मञ्ज

श्यामलवसन्तः—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स नि ध नि प रि ग म प ध .
(अव) प म ग रि स नि ध नि .

मञ्ज

श्यामला—मेलरागः (श्यामलाङ्गीमेलजन्यः)

(आ) स ग रि ग म प ध नि ध स .
(अव) स नि ध प म ग रि स .

मञ्ज

श्यामलाङ्गी—मेलकर्ता (रागः)

स रि ग ० ० ० म प ध ० नि ० स .

मञ्ज

श्यामा—प्राकृते मात्रावृत्तम्

द्वौ पञ्चमात्रिकौ द्वौ चतुर्मात्रिकौ यः ।

विरहाङ्कः

—श्रुतिः

गान्धारस्य प्रथमा श्रुतिः ।

कुम्भः

धैवतस्य तृतीया श्रुतिः ।

मतङ्गः

श्यामान्दोलिका—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म ध नि प नि स .
(अव) स नि प ध प म ग रि स .

मञ्ज

श्येनः—तानः

षड्जग्रामे सपहीनौडुवः ।
म ग रि नि ध .

कुम्भः

—वर्णालङ्कारः

श्येनो भवेत्स्वरद्वन्द्वं कलासु त्रिकलात्मकः ।
आदौ स पञ्चमौ नीत्वा पूर्वपूर्ववियोगतः ।
तथाऽन्ये तु कले स्यातां एवं संवादियुग्मकाः ॥
कलास्तु: प स रि ध इति ।

लक्ष्मीनारायणः

—वर्णालङ्कारः (सञ्चारी)

श्येनस्संवादियुग्मकैः ।
क्रमात्सरिमगमाद्यैः स्यात्—
सप रिध गनि मस

शार्ङ्गदेवः

श्येनस्संवादिनोर्गणैः ।

जगद्धरः

**श्येनी**—ध्रुवावृत्तम्

आद्यमन्त्यं तृतीयं च पञ्चमं सप्तमाष्टमे।
गुरूणिस्युश्च पादे तु सा श्येनी तु कृतौ यथा ॥
सागरं समुद्दुपं तो रह इव लवु गदिरमिभवदि।
सागरं समुद्धारणात् रह इव लघुगतिरमिभवति।

भरतः

**श्रमः**

व्यापारजः श्रमो नाम सादयन्नङ्गमात्मनः
गुरुत्वं बलहानिं च कुर्वन्भाव उदाहृतः ॥

भावविवेकः

**श्रमानुभवः**—सङ्गीतशृङ्गाराङ्गम्

वनविहारायासमूचकोऽवस्थाविशेषः श्रमानुभवः।

भोजः

**शुद्धावराटी**—रागः

शुद्धावराटिका भाषा त्रिधापड्जसमन्विता।

मद

**श्रमः** –व्यभिचारिभावः

अध्वव्यायामसेवनादिभिः विभावैरुत्पद्यते। गात्रपरिमर्दन-संवाहननिश्वसितविजृम्भितमन्दपदोत्क्षेपण नयनवदनविकूणन-सीत्कारा अभिनयाः।

भरतः

श्रमो व्यायाननृत्ताध्वमैथुनादिनिषेवणैः।

भावप्रकाशः

आदिशब्देन भारवाहनादयः कन्दुकादिक्रीडाविशेषाश्च गृह्यन्ते।

नरसिंहः

शृणाति हन्ति योऽङ्गानि स श्रमः परिकीर्तितः।

शारदातनयः

—चित्राभिनयः

श्रमो मानमखेदस्स्यादध्वनृत्तरतादिभिः।
त्रिपताकः पुरोभागे चालितो रतिदर्शने ॥
कण्ठस्थाने सूचिहस्तः चक्राकारं च चालितः।
रतिश्रमापनोदाय दर्शयन्ति मनीषिणः ॥
चतुरश्रपताकौ द्वौ पुरो भागे त्वधोमुखम्।
चालितौ नृत्तभावेऽपि दर्शयन्ति मनीषिणः।
पताकः पार्श्वभागे तु चलितो गमनार्थके ॥

विनायकः

**श्रवणगर्भितम्**—(कामवर्धिनीमेलजन्यः)

(आ) स रि ग म प ध स.
(अव) स नि ध प म ग रि स.

मख

**श्रवणमल्लिका**—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) स ग म प ध नि स.
(अव) स नि ध प म ग रि स.

मख

**श्रवणाभिनयः**

मयूरहस्तस्य कम्पनेन कर्तव्यः।

महाराष्ट्र

**श्रवणाहस्तः** (श्रवणा आराकृतिस्त्रीणि)

मयूरो योजितस्तूर्ध्वं रेचितश्श्रवणार्थके।

शृङ्गारः

**श्रविका**—श्रुतिः

गान्धारस्य द्वितीया श्रुतिः।
हनुमन्मतेऽष्टादशैव श्रुतयः।

**श्रान्ता**—दृष्टिः

सशैथिल्याञ्चितपुटा क्षामा पतिततारका।
श्रान्ता दृष्टिः प्रकर्तव्या श्रमाभिनयकर्मणि ॥

सोमेश्वरः

क्षामेति क्षामत्वमविकासिता इति शारदातनयः।
परिम्लानपुटा क्षामा न क्षामा दूरदर्शने।
अलसालससञ्चारा निपतत्तारका मनाक्।
श्रान्ता दृष्टिरियं खेदे श्रमेऽपि च निरूप्यते ॥

वेमः

**श्रावकः**—ध्वनिभेदः

दूरस्थः श्रूयते यस्तु वृन्दमध्यस्थितोऽपि वा।
माधुर्यादिगुणोपेतः श्रावकोऽसौ ध्वनिर्वरः ॥

सोमेश्वरः

**श्रावकत्वम्**—वंशे फूत्कारगुणः

सुदूरं श्रूयते यस्तु स श्रावक इहेष्यते।

कुम्भः

दूरतः श्रूयते यस्तु स्वरोऽविच्छिन्नफूत्कृतिः।
तं तु श्रावकमित्याह कर्णाटकुलभूषणः ॥

नान्यः

श्रीः—ध्रुवावृत्तम्

उ—एकाक्षरं छन्दः

उदाहरणम्— या श्रीः सा ह्रीः ।

एक एव गुरुर्यत्र प्रतिपादं व्यवस्थितः ।
ध्रुवाख्या सा तु मन्तव्या हस्ताङ्गुलिविकल्पनात् ॥

मात्रा चतुष्टयेनासौ गमनीया प्रयोक्तृभिः ।
लयो विलम्बितश्चास्मिन्नावापादिचतुर्विधः ।
चच्चत्पुटेन तालेन रागश्चात्र रसाश्रितः ॥

नान्यः

—प्राकृते मालावृत्तम्

सः सः सः सः सः — विरहाङ्कः

श्रीकण्ठः—प्रबन्धः

मधुमाधवमल्हारभूपालीरागभूषितम् ।
खण्डत्रयं प्रगातव्यं षडङ्गं पदपूर्वकम् ॥
चित्रवर्णस्वरप्रान्तं दिव्यभाषामनोहरम् ।
रसैस्तु वीरशृङ्गारकरुणाख्यैर्विराजितम् ॥
नारायणविरिञ्चीशयशसो वर्णनं क्रमात् ।
अनेनैव प्रकारेण श्रीकण्ठाख्यो भवेत्स्फुटम् ॥

श्रीकण्ठः

—देशीतालः

लघुर्गुरुर्लघुद्वन्द्वं श्रीकण्ठे तु प्रतिष्ठितम् ।
। ऽ ॥ — श्रीकण्ठः

(अयं तालः श्रीकण्ठेन निर्मितः)

श्रीकण्ठः

रसकौमुदीकारः । अयं घूर्जरदेशस्थनन्दानगरपत्तनाधीशस्य शत्रुशल्यस्य राज्ञः सभायामासीदिति कविना उक्तम् । शत्रुशल्यस्तु जामवंशीयः क्षत्रियः । कवेर्गुरुरूपदेवपूर्णानन्दौ । कालः 1580 क्रैस्तवः

—देशीतालः

लोदौ लगौ गः श्रीकण्ठे ।

7 मात्राः — तालप्रस्तारः

श्रीकण्ठी—रागः

अतःपरं स्याच्छ्रीकण्ठी भिन्नषड्जसमुद्भवा ।
धैवतांशग्रहन्यासा मन्द्रासौ मध्यमे स्वरे ॥
पूर्णा गान्धारतारा च समस्वरविभूषिता ।
गान्धारे रिषभे षड्जे बहुत्वं समुपेयुषी ॥

हरिः

परिन्यस्तर्षभा धांशग्रहारिबहुला तथा ।
श्रीकण्ठा पञ्चमत्यक्ता तारध्वनिरुदीरिता ॥

नान्यः

आद्यं तु धैवतांशं पञ्चमरहिता च तारता युक्ता ।
ऋषभापन्यासयुता श्रीकण्ठी ऋषभपेशला भवति ॥

कुम्भः

श्रीकण्ठी भिन्नषड्जोत्था गहीना षाडवा भवेत् ।
धांशन्यासग्रहोपेता तथा धैवतभूयसी ।
गुर्वाज्ञाकरणे तस्या विनियोगः प्रकीर्तितः ॥

जयदेवः

—भाषारागः

धैवतांशग्रहन्यासा त्यक्तपा धैवताल्पिका ।
गतारा मन्द्रधा चापन्यासेनर्षभ भूषिता ॥
श्रीकण्ठी भिन्नषड्जोत्था भवेदुत्कण्ठिते जने ।
याष्टिकः पुनराचष्ट रिलोपात् षाडवामिमाम् ॥

कुम्भः

—मेलरागः (षड्विधभार्गिणीमेलजन्यः)

(आ) स ग म प ध नि स
(अव) स नि ध प म ग स. — मख

श्रीकामरः—रागः

लक्षणमस्य न दृश्यते । श्रीकामरस्तु शृङ्गारे इति अस्य शृङ्गारे प्रयोगमात्रं दृश्यते ।

श्रीकीर्तिः देशीतालः

गौद्वौलौद्वौ क्रमादुक्तौ ताले श्रीकीर्तिनामनि ।
श्रीकीर्तिसंज्ञकेताले गुरुद्वन्द्वं लघुद्वयम् ॥
ऽ ऽ ॥ — जगदेकः

श्रीकीर्ति द्वौ लघूगुरू ।
॥ ऽ ऽ — शार्ङ्गधरः

अत्र शार्ङ्गमते मुद्रितपुस्तके पाठो दुष्टः स्यात् ।
सुधाकलशस्त्वस्य तालस्य—लघ्वोर्मध्ये गुरुद्वयं पठति । । ऽ ऽ ।
पाटवर्णाश्च—तकिथिकिरथौं थकधिट्टिमिथरु—निर्दिशति ।

श्रीखण्डः—देशीतालः

भसौ जसौ नकारश्च द्रुचतुष्कं लघुद्वयम् ।
द्रुतद्वयं गुरुश्चैव ताले श्रीखण्डनामनि ॥

26 मात्राः — तालप्रस्तारः

श्रीगदितम्—नृत्तरूपकम्

नव स्त्री करुणमासीना पठति एकाङ्कमुदात्तवचनकृतं भारती-वृत्तिप्रधानं प्रख्यातवस्तु नायकं। यथा क्रीडारसातलम्।

सागरः

करुणं स्त्रीसमासीना गायेद्यत्र पठेदपि।
एकाङ्कं भारती प्रायं तच्छ्रीगदितमुच्यते ॥
गर्भावमर्शरहितं प्रख्यातोदात्तनायकम्।
प्रसिद्धनायकं ज्ञेयं यद्वत्क्रीडारसातलम् ॥

अमृतानन्दी

अथ श्रीगदितं विद्यात्प्रसिद्धोदात्तनायकम्।
भारतीवृत्तिबहुलं उदात्तवचनान्वितम ॥
गर्भावमर्शसन्धिभ्यां शून्यं प्रख्यातनायकम्।
एकाङ्कं विप्रलम्भाख्यरसप्रायं कचित्कचित् ॥
यस्मिन्कुलाङ्गनापत्युः शौर्यधैर्यादिकान् गुणान्।
सखीनामग्रतोवक्ति तानुपालभतेऽथ वा।
विप्रलब्धा च तेनैव यदि तत्सङ्गमाशया ॥
आसीना यत्र चरितं प्रियायोग विभूषितम्।
उत्कण्ठिता पठेद्गायेत्पाठ्यं वा गीतमेव वा।
एवं विधं श्रीगदितं रामानन्दं यथाकृतम ॥

शारदातनयः

तत्र श्रीरिव दानवशत्रोर्यस्मिन्कुलाङ्गनापत्युः।
वर्णयति शौर्यधैर्यप्रभृतिगुणानग्रतस्सख्या ॥
पत्या च विप्रलब्धा गातव्ये ता क्रमादुपलभन्ते।
श्रीगदितमितिमनीषिभिरुद्दिष्टौऽसौ पदाभिनयः ॥

भोजः

अत्र पदाभिनयः पदार्थाभिनयः। तद्विलक्षणो वाक्यार्थाभिनयः।

एकाङ्कं भारतीप्रायं ख्याततनायकनायिकम्।
यत्रासने तनोति स्त्री करुणं गानपाठ्योः ॥
गर्भावमर्शसन्धिभ्यां शून्यं ख्यातोदात्तनायकम्।
एतच्छ्रीगदितं प्राह भरतो मुनिसत्तमः ॥

शुभङ्करः

श्रीघनः—देशीतालः

नगणो लद्वयं बिन्दुद्वितयं च गुरुर्लघुः।
द्वौ लघुर्द्वौलघुः द्वौ गो गुरुश्च श्रीघनाह्वये ॥

18 मात्राः। तालप्रस्तारः

श्रीधरा—सप्तदशाक्षरवृत्तम्

भनततगगाः। भरतः

श्रीनन्दनः—देशीतालः

भपौ श्रीनन्दने प्रोक्तो।
ऽ॥ऽ́ कुम्भः

श्रीनन्दनताले तु भगणात्प्लुत इष्यते।
ऽ॥ऽ́ जगदेकः

श्रीमणिः—मेलरागः (रत्नाङ्गीमेलजन्यः)
(आ) स रि ग प ध — स.
(अव) स नि ध प ग रि — स.

मत्र

श्रीमण्ठः—तालः

लद्वयं दचतुष्कं तु श्रीमण्ठे गद्वयं तथा।
॥००००ऽऽ वेदः

—देशीतालः

लद्वयं दचतुष्कं स्यात् श्रीमण्ठे गद्वयं तथा।
॥००००ऽऽ दामोदरः

श्रीरङ्गः—प्रबन्धः (पञ्चभङ्गीभेदः)
प्रस्तारेण स्वरादीनां यदि प्रान्ते पदादिकाः।
रागैस्त्रिभिस्त्रिभिस्तालैः श्रीरङ्गः कथितस्तदा ॥

जग-मल्लः

—प्रबन्धः

चतुर्भिस्तालरागैः स्याच्छ्रीरङ्गोऽन्ते पदान्वितः।

श्रीकण्ठः

—देशीतालः

श्रीरङ्गताले विज्ञेया लघुनी गलपाः क्रमात्।
॥ऽ।ऽ́ वेमः

श्रीरङ्गः सगणो लपौ। सार्ङ्गः

नी पा गा सा री मा धा सा जगदेकः

श्रीरङ्गद्रोहिसप्ताङ्गहरणः—देशीतालः

श्रीरङ्गद्रोहिसप्ताङ्गहरणाख्ये तु तालकं।
प्लुतो गुरुः प्लुतो ह्रस्वौ प्लुतो वक्रः प्लुतौ गुरुः ॥
ऽ́ऽऽ́॥ऽ́ऽऽ́ऽ́ऽ गोपतिप्पः

श्रीरङ्गमण्ठः—तालः

सगणो लघुर्दीर्घश्च श्रीरङ्गो मण्ठको भवेत्।
॥ऽ।ऽ́ वेदः

श्रीरङ्गराजः

अयं नाट्यशास्त्रव्याख्यातेत्यच्चुतरायेण तालाब्धौ स्मृतः। अस्य ग्रन्थनाम नाट्यभाष्यम्।

श्रीरञ्जनी—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म नि स.

(अव) स नि प म ग रि स.

मल

—मेलरागः

(आ) स ० रि ग ० म ० ० ० ध नि ० स.

(अव) स ० नि ध ० ० ० म ० ग रि ० स.

मेललक्षणे

श्रीरागः—रागाङ्गरागः

केचिदेनं गौरवर्णमष्टबाहुं चतुर्मुखम्।
पद्मपाशाङ्कुशचरीवीजपूरकपुस्तकान्॥
बिभ्राणं पाणिषट्केन वीणासक्तकरद्वयम्।
ब्रह्माणमिव हंसेन गच्छन्तं जगदुर्बुधाः॥

कुम्भः

अथान्यष्टकरागाङ्गः श्रीरागो मध्यतारकः।
गान्धारमन्द्रः ऋषभपञ्चमाभ्यां विवर्जितः।
न्यासग्रहांशवान्षड्जे समस्वरविभूषितः॥

हरिः

—मेलकर्ता

चतुःश्रुतिरिधौ यत्र भवेतां नियतस्वरौ।
साधारणोऽपि गान्धारो निषादः कैशिकी पुनः॥
वीणिकाविषये शुद्धाष्षड्जमध्यमपञ्चमाः।
श्रीरागस्यापि मेलोऽयं कथितो गायकोत्तमैः॥
दिनान्ते गीयते षड्जग्रहांशन्याससशोभितः।
आद्यमूर्छनया पूर्णः श्रीरागो वाथ गोझितः॥

श्रीकण्ठः

षड्जश्चतुःश्रुतिवृषोऽन्तरमेषशुद्ध-
मध्यौपिकस्तदनुकैश्यनिषाद एव।
श्रीराग एवमथ वक्रगतिस्तु मेषे
धैवेन वर्जिततया स तु षाडवाख्यः॥

समपाः शुद्धाः। रिश्चतुःश्रुतिः। गोऽन्तरः। निःकैशिकः। धो वर्जितः। वक्रगतिः।

परमेश्वरः

—रागः

षड्जांशन्याससंयुक्तः संपूर्णस्सप्तमिस्स्वरैः।
आन्दोलितस्तु स्वस्थाने प्रविष्टऋषभान्वितः॥
अवरोहेऽपि गान्धारः क्वापि क्वापि प्रयुज्यते।
गान्धारो दुर्बलश्चायं श्रीरागः परिकीर्तितः॥

सोमेश्वरः

न्यासांशकग्रहपदस्थितषड्जतान-
षड्जीभवत्स्वलघु पञ्चमकश्च पूर्णः।
गान्धारतारधृतमध्यममन्द्रभावः
श्रीराग इत्यमिहितः समशेषनादः॥

नान्यः

अयं पूर्णः औडुवितश्चेति द्विविधः,

षड्जांशग्रहनिन्यासष्टकरागसमुद्भवः।
मतारो मन्द्रगान्धारः श्रीरागो रिपवर्जितः।
समशेषस्वरो ज्ञेयो रसे वीरे नियोजयेत्॥

—ग्रामरागः

रागमङ्गम्। (गजमन्द्रतार ईषत्) ग्रहांशन्यासमध्यमम्।

समेतरस्वरं षड्जग्रामे षादिसमुद्भवम्।
श्रीरागं पूर्वमिच्छन्ति वीरे वर्षासु सर्वदा॥

अयं पाठोऽसाधुः। आमन्द्रतारर्षभं इति स्यात्।

भट्टमाधवः

—रागाङ्गरागः

श्रीरागष्टकसंभूतः पञ्चमर्षभवर्जितः।
ग्रहांशन्यास गान्धारः करुणे प्रावृषि स्मृतः॥

भट्टमाधवः

—रागः

श्रीरागष्टकरागाङ्गं मतारो मन्द्ररिस्तथा।
रिपञ्चमविहीनोऽयं समशेषस्वराश्रयः।
षड्जन्यासग्रहांशी च रसे वीरे नियुज्यते॥

जगदेकः

—रागः (वंशे वादनक्रमः)

षड्जं द्विगुणमास्थाय स्थायिनं तदधस्तनम्।
स्थायिनं च विधायाथ द्वितीयं च तुरीयकम्॥
तृतीयं स्थायिनं स्पृष्ट्वा द्वितीयं तु विलम्ब्य च।
स्थायिस्वरे यदान्यासः श्रीरागः स तदा भवेत्।
स्वस्थानमाद्यं वंशेऽस्य द्वितीयो दृश्यते ग्रहः॥

वेमः

—रागः

जातिन्यासग्रहग्रासांशेपु षड्जोऽल्पपञ्चमः ।
शृङ्गारवीरयोर्ज्ञेयः श्रीरागो गीतकोविदैः ॥

नारायणः

—मेलरागः

रित्रयोद्ग्राहसंयुक्तः षड्जोद्ग्राहोऽथवा मतः ।
श्रीरागस्तीव्रगान्धार आरोहे गधवर्जितः ॥
सायं गेयः ।

अहोबिलः

—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि म प नि स.
(अव) स नि प ध नि प म रि ग रि स.

मल्ल

—पुंरागः

श्रीरागस्य च विख्यातस्सत्रयेण विभूषितः ।
प्रथमा मूर्छना यत्र पूर्णस्सर्वगुणैर्युतः ।
केचित्तु कथयन्त्येनमृषभत्रयसंयुतम् ॥

दामोदरः

—रागः

मतारो मन्द्रगो वीरे षड्जन्यासग्रहांशकः ।
श्रीरागष्टक्करागाङ्गं पूर्णो वा सप्तभिस्स्वरैः ॥
व्यवहारे रिपवर्जितः ।

सोमराजः

—प्रथमरागः

ग्रहांशषड्जं सुधियस्तदन्तं
गमन्द्रकं टक्कभवं यदङ्गम् ।
श्रीरागसंज्ञं जगदुर्मतारं
समानशेषस्वरमल्पमं तत् ॥

मोक्षः

—हस्तः

श्रीरागे कर्तरीहस्तो तथा चेष्टागुणान्वितः ।

शृङ्गारः

—रागः

षाड्जे षाड्जीसमुद्भूतं श्रीरागं स्वल्पपञ्चमम् ।
सन्यासांशग्रहं मन्द्रगान्धारं तारमध्यमम् ।
समशेषस्वरं वीरे शास्ति हम्मीरभूपतिः ॥

हम्मीरः

श्रीरागस्यात् त्रिगान्धारः परिवर्जश्च रागजः ।

मदनः

श्रीरागध्यानम्

लीलाविहारेण वनान्तराले
चिन्वन्प्रसूनानि वधूसहायः ।
विलासवेषो सितदिव्यमूर्तिः
श्रीराग एषः प्रथितः पृथिव्याम् ॥

अयमेव दक्षिणश्रीरिति सम्प्रदायः ।

संगीतसरणिः

वीरासनं सिंहमुखाग्रहस्तं माणिक्यकोटीरविभासितं सदा ।
पार्श्वद्वयस्थाब्जमुखीकदम्बं श्रीरागदेवं भजतां तनो मे ॥

रागसागरः

कन्दर्पमूर्तिस्तरुणोऽरुणाम्बरः
कर्णावतंसीकृतनव्यपल्लवः ।
षड्जादिसेव्यः क्षितिपालसुन्दरः
श्रीरागनामा नितरां विभाति ॥

श्रीकण्ठः

अष्टादशाब्दः स्मरचारुमूर्तिः
धीरो लसत्पल्लवकर्णपूरः ।
षड्जादिसेव्योऽरुणवस्त्रधारी
श्रीरागराजः क्षितिपालरूपः ॥

दामोदरः

श्रीललिता—मेलरागः (गमनश्रममेलजन्यः)

(आ) स रि ग रि म प नि ध प स.
(अव) स नि ध प म ग रि स.

मल्ल

श्रीवर्धनः—प्रबन्धः

बध्यते विरुदैः पाटैः पदैरेषस्वरैरपि ।
पदैरन्यैरिहाभोगो न्यासस्तालद्विमानतः ॥

हरिपालः

तालमानद्वयन्यासो विरुदैः पाटवर्णकैः ।
पदैः स्वरैर्यत्क्रियते स श्रीवर्धन उच्यते ॥

पण्डितमण्डली

श्रीविलासः—पञ्चभङ्गीप्रबन्धभेदः

प्रस्तारेण स्वरादीनां यदि प्रान्ते स्वरादिकः ।
रागपञ्चकसंयुक्तस्तालैः पञ्चभिरन्वितः ।
श्रीविलासस्तदा ज्ञेयः प्रबन्धो गीतवेदिभिः ॥

जग-मल्लः

—प्रबन्धः

स्वरान्तः श्रीविलासः स्याद्रागैस्तालैस्तु पञ्चभिः ।

श्रीकण्ठः

## श्रुतिः

त एव ध्वनतस्तत्र श्रवणाच्छ्रुति संज्ञकाः।

शृणोतेः श्रवणार्थस्य भावे क्तिप्रत्यये श्रुतिः।
श्रूयन्त इति वा कर्मसाधनोऽयमिहेष्यताम् ॥

कुम्भः

वीणायां पार्श्वस्थतन्त्रीणां तिसृणां नाम।

अन्यतन्त्री स्वरान्तरे किञ्चित्कर्षणपूर्वको दृढस्पर्शरूपा क्रिया श्रुतिरित्युच्यते।

श्रुतिर्नाम भवेन्नादविशेषः स्वरकारणम्।

वेङ्कटमखी

## श्रुतिजातिः

ततः श्रुतीनामपि पञ्चजातिर्वक्ष्यामि शार्दूलमतानुसारात्।
दीप्तायता स्यात्करुणा मृदुश्च मध्येति नामानि च कीर्तितानि ॥

रघुनाथः

## श्रुतिनिधिः

श्रुतीनां संख्या द्वाविंशतिः। यत्र मुखतारारन्ध्रान्तरमानं द्वाविंशत्यङ्गुलं स श्रुतिनिधिः।

## श्रुतिनिदर्शनम्

तत्र द्वाविंशतिश्रुतयः।

तिस्रो द्वे च चतस्रश्च चतस्रस्तिस्र एव च।
द्वे चतस्रश्च षड्जाख्ये ग्रामे श्रुतिनिदर्शनम् ॥
मध्यमग्रामे तु श्रुत्यपवेष्टः पञ्चमः कार्यः।
पञ्चमश्रुत्युत्कर्षादपकर्षाद्वा यदन्तरम्।

मार्दवादायतत्वाद्वा तत्प्रमाणश्रुतिः। निदर्शनं त्वासां अभिव्याख्यास्यामः। यथा—द्वे वीणे तुल्यप्रमाणतन्त्र्युपवादनदण्डमूर्छने षड्जग्रामाश्रिते कार्ये। तयोरेकतरस्यां मध्यमग्रामिकीं कृत्वा पञ्चमस्यापकर्षे श्रुतिं तामेव पञ्चमवशात् षड्जग्रामिकीं कुर्यात्। एवं श्रुतिरपकृष्टा भवति। पुनरपि तद्वदेवापकर्षाद्गान्धारनिषादवन्तौ। इतरस्यां धैवतर्षभौ, प्रविशतो द्विश्रुत्यधिकत्वात्पुनस्तद्वदेवापकर्षाद्धैवतर्षभावितरस्यां पञ्चमषड्जौ प्रविशतः। श्रुत्यधिकत्वात्। तद्वत्पुनरपकृष्टायाम्। यस्यां पञ्चममध्यषड्जाः। इतरस्यां मध्यमगान्धारनिषादवन्तः प्रवेक्ष्यन्ति। चतुःश्रुत्यधिकत्वात्। एवमनेन श्रुतिनिदर्शनेन द्वौग्रामिक्यो द्वाविंशतिश्रुतयः प्रत्यवगन्तव्याः।

भरतः

वीणैव श्रुतिसंख्याय लाभे मानं यतो मतम्।
तदभिव्यक्तये कुर्वे विपञ्चीद्वन्द्वमादरात् ॥

यत्किञ्चिज्जायते तच्च सर्वं तन्त्र्यां प्रतिष्ठितम्।
तन्त्री कोणादिवैगुण्ये प्रमाणं वंशजाः स्वराः ॥

अत्र नादसमत्वार्थं द्वे वीणे सदृशाकृती।
श्रोतुर्यथैकवीणावद्वादने स्यान्मतिस्तथा ॥

कार्ये निरन्तरे साक्षाद्द्वाविंशतिकतन्त्रिके।
तयोरेका ध्रुवा कार्या द्वितीया च चला भवेत् ॥

मध्ये तन्त्रिकयोः न स्याद्यथाध्वन्यन्तरं तथा।
स्थाप्याः द्वाविंशतिस्तन्त्र्यः प्रत्येकं तासु वादिनः ॥

अतिमन्द्रध्वनेः किञ्चिदुच्चोच्चतरतायुजः।
उत्तरोत्तरगास्तन्त्र्यं स्थापनीयाः परा अपि।
उत्तरोत्तरतीव्राः स्युरधराधरवेशिता ॥

तासु यो जायते नादः स ज्ञेयः श्रुतिसंज्ञकः।
इतःपरं तयोः स्थाप्याः सप्तषड्जादयः स्वरा ॥

तत्रादितो गणनया स्थाप्यः षड्जः चतुःश्रुतिः।
तुरीयायां तु सप्तम्यां ऋषभस्त्रिश्रुतिः स्मृतः ॥

नवम्यां द्विश्रुतिर्गैस्तु त्रयोदश्यां चतुःश्रुतिः।
मध्यमः सप्तदश्यां तु पञ्चमोऽथ चतुःश्रुतिः ॥

विंशति प्रमितायां धः त्रिश्रुतिद्विश्रुतिस्ततः।
द्वाविंशतितमायां निर्निवेश्यास्ते यथाक्रमम् ॥

श्रुतेर्निदर्शनार्थं तु स्याद्ध्रुवैका पराचला।
चलायां सारयेत्तन्त्रीः स्वरश्रुतिगताः क्रमात् ॥

आनेयाः प्रथमं सात्र स्वराः स्वोपान्त्यतन्त्रिकाम्।
तत्र ध्रुवाः स्वरेभ्यस्ते चलवीणागताः स्वराः ॥

स्युः श्रुत्यैकतया हीनां प्रथमे सारणे कृते।
प्रथमे च द्वितीयायां श्रुतिद्वयलयादिमे ॥

श्रुतिद्वयापकृष्टाः स्युः गनी यत्र चलागतौ।
द्विश्रुती ध्रुववीणायारिधयोः विशतः क्रमात् ॥

त्रिश्रुती तु तृतीयायां सपयोर्विशतो रिधौ।
चतुर्थ्यां समपास्तद्वत् निगमेषु विशन्ति हि ॥

एवं स्युर्विकृतास्सर्वे ध्रुवाः स्वरव्यपेक्षया।
प्रथमायां सारणायां चलवीणा गताः स्वराः ॥

द्वितीयस्यां सारणायां चलवीणा गताः स्वराः।
तृतीयस्यां सारणायां चतस्रः श्रुतयः स्फुटाः ॥

तृतीयस्यां षडेवं तु चतुर्थ्यां द्वादशैव तु।
लभ्यन्ते श्रुतयः पूर्णाः द्वाविंशतिरिति स्फुटम्।

चतस्रः सारणाः प्रोक्ताः स्वराणामिह तत्त्वतः ।
अतःपरतरं नास्ति संभवं श्रुत्यभावतः ॥

श्रुतिपतिः—वीणा
नकुलादीनां लक्षणे द्रष्टव्यम् ।

श्रुतिभास्विनी—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स नि ध स रि ग म प ध नि .
(अव) ध प म ग रि स नि ध स .

मञ्ज

श्रुतिरञ्जनी—मेलरागः (कान्तामणिमेलजन्यः)
(आ) स रि ग म प ध नि स .
(अव) स नि ध प म ग स रि स .

मञ्ज

श्रुतिवाद्यम्
अतःपरं प्रवक्ष्यामि श्रुतेः सर्वार्थदं नृणाम् ।
लक्षणं तत्प्रकारं च गदतो मे निबोधत ॥
अष्टाङ्गुलं तु विस्तीर्णं कनिष्ठाङ्गुलिमानकम् ।
एकविंशतिमानेन सुषिरं नातिविस्तृतम् ॥
मध्यमामध्यसंयुक्तं वामहस्तेन रेचितम् ।
कनिष्ठाङ्गुलिवर्ज्यं स्याद्वामदक्षिणहस्तयोः ।
धृत्वा चैकेन हस्तेन मुखेन श्रुतिमीरयेत् ॥
मुखवाद्यमिदं प्रोक्तं भाण्डकूटमितीति च ।
सर्वेषां भाण्डवाद्यानामुत्तमोऽयं विचक्षणैः ॥

विप्रः

श्रुतिविभागः
द्वाविंशतिरिति प्रोक्ताः श्रुतयो भरतादिभिः ।
ताश्च वीणाप्रसिद्धेषु सुस्पष्टं विभजामहे ॥
स्वरेषु शुद्धविकृतभेदाभ्यां द्वादशात्मसु ।
तथाहि शुद्धर्षभे तु श्रुतयस्तिस्र ईरिताः ॥
ततोऽपि शुद्धगान्धारे श्रुती द्वे समुदाहृते ।
चतस्रश्श्रुतयः शुद्धमध्यमे समुदाहृताः ॥
स्यात्साधारणगान्धारः तस्याद्यां श्रुतिमाश्रितः ।
तस्यैव समुपादाय द्वितीयकतृतीयके ॥
श्रुती द्विश्रुतिकः प्रोक्तो गान्धारोऽन्तरनामकः ।
दत्वा साधारणाख्याय गान्धारायादिमांश्रुतिम् ॥
द्वितीयां च तृतीयां चान्तरगान्धारसंज्ञिने ।
तत्रैकश्रुतिको जातो मध्यमोऽयं चतुःश्श्रुतिः॥

चतस्रश्श्रुतयः प्रोक्ताः पञ्चमे गीतवेदिभिः ।
आदायाद्यां द्वितीयां च तृतीयामपि तच्छ्रुताम् ॥
वरालीमध्यमः प्रोक्तः श्रुतित्रयसमन्वितः ।
वरालीमध्यमाय त्रिश्रुतीर्दत्वा तु पञ्चमः ॥
श्रुत्यैकया युतो जातो भवन्नपि चतुश्श्रुतिः ।
तिस्रः साङ्गीतिकैः प्रोक्ताः श्रुतयः शुद्धधैवते ॥
स्वरे शुद्धनिषादाख्ये द्वे श्रुती समुदाहृते ।
चतस्रः श्रुतयः षड्जे तस्याद्यामादिगां श्रुतीम् ॥
कैशिक्याख्यनिषादोऽयमेकश्रुतिरुदाहृतः ।
द्वितीयकतृतीयाभ्यां तच्छ्रुतिभ्यां समन्वितः ॥
काकल्याख्यनिषादोऽयं द्विश्रुतिः कथ्यते बुधैः ।
तत्कैशिकनिषादाय श्रुतिमेकां श्रुतिद्वयीम् ।
काकल्यै च प्रदायास्ते षड्ज एकश्रुतिरव्ययम् ।
द्वाविंशतिर्विभज्यैवं श्रुतयो लक्षिता मया ॥

वेङ्कटमखी

श्रुतिसंख्या
ऊर्ध्वमुद्यन्हृदाकाशे पुंयत्नप्रेरितो ध्वनिः ।
नानास्थानोपाधिभेदाद्यो नाना प्रतिभासते ॥
तं मतङ्गः श्रुतिं प्राह मेचेऽहर्पतिरश्मिवत् ।
स्वरान्तरविभागेन द्विधा विश्वावसोर्मते ॥
वातादिदोषसंभिन्नामेके प्राहुश्चतुर्विधाम् ।
द्वन्द्वजत्वात्तदानन्त्यं केचित्सूक्ष्मदृशो जगुः ॥
चतुस्त्रिद्विश्रुतित्वेन स्वराणां नवधा परे ।
द्वाविंशतिं परे प्राहुरन्ये षट्षष्टिमेत्र ताः ॥
विचारस्यासहत्वेन पूर्वेषां पक्षसन्त :।
द्वाविंशतिं समाधत्ते कुम्भकर्णो धराधिपः ॥

कुम्भः

श्रुतिस्वरभेदः
ननु नास्ति स्वरश्रुत्योः भेदो नादैकरूपयोः ।
विद्यते परिणामत्वपरिणामित्वसंभवः ॥
अस्ति भेदस्तयोर्यद्वत्स्वर्णटङ्ककिरीटयोः ॥

वेङ्कटमखी

श्रेयः—विमर्शसन्धौ द्वितीयमङ्गम्
कार्यसिद्धौ सविघ्नमपि किञ्चिदानुकूल्यं श्रेयः। यथा—मायामदालसे राजानं प्रति तरभितुः तपःफलं यद्वृद्धश्चकथितं तच्छ्रेयः । सागरनन्दी

**श्लाघा**

अधरभ्रूविभङ्गेन वक्ति सस्मितमीक्षते ।
स्वौ भुजौ सततं येन भावः श्लाघाह्वयस्तु सः ।

भावविवेकः

**श्लिष्टसिंहमुखः—हस्तः**

दक्षिणस्सिंहवक्त्रः स्यात् सुस्पृष्टे वामहस्तकः ।
पताकरूपमाश्रित्य चलः प्रविरलाङ्गुलिः ।
श्लिष्टसिंहमुखः सोऽयं सिंहार्थे संप्रकल्पितः ॥

शृङ्गारशेखरः

**श्लिष्टारालः—हस्तः**

तर्जन्यौ वैष्णवे हस्तौ शिष्टारालौ स इष्यते ।
गोमायौ कीर्तितस्सोयं श्लिष्टारालो गुरोर्मते ॥

शृङ्गारशेखरः

**श्लेषः—काव्यगुणः**

ईप्सितेनार्थजातेन संबद्धानां परस्परम् ।
श्लिष्टताया पदानां स श्लेष इत्यभिधीयते ॥

भरतः

विचारगहनं यत्स्यात्स्फुटं चैव स्वभावतः ।
स्वतःसुप्रतिबद्धं तु श्लिष्टं तत्परिकीर्तितम् ॥

भरतः

अर्थभागानां कविसमुत्प्रेक्षितया परस्परसंबद्धया योजनया संपन्नं यदीप्सितमर्थजातं तेनोपलक्षितार्थस्योपपद्यमानस्य उपपद्यमानतास्मा गुणः श्लेषः । यथा—वामनोदाहृतं "दृष्ट्वैकासन संस्थिते" इत्यादौ मनोरथातीतोऽपि एककालनायिकायुगलहृदयग्रहणलक्षणार्थः तथोपपादितो येनासंभावनास्पदं न भवति तेन कुटिलोऽप्ययं क्रमो न हृदये उल्बणत्वं भजते । मसृणत्वं श्लेष इति वामनेन उक्तम् । नित्यार्थे पदानां श्लिष्टता परस्परं योनिः सन्धिबन्धनतया अनेकमेकपदमिव भाति । तदेव मासृण्यमुच्यते । तथा सन्धीयमानयोः तथा सन्धेः साजात्यं सावर्ण्यं च संपद्यते वज्रखण्डयोरिव सखस्येव । यथा—अस्त्युत्तरस्यां दिशि देवतात्मा इत्यादि । अन्ये पठन्ति विचारगहनमित्यादि पूर्वार्धे ऽर्थश्लेषः सुप्रतिबद्ध इति पदश्लेषः ।

अभिनवः

श्लेषस्त्वर्थस्य रचनाचातुरी च सुचित्रता ।
उमाकपालं सोऽचुम्बच्छम्भुर्गङ्गास्यबिम्बनात् ॥

साहित्यसारः

अत्र गङ्गेत्यादि गङ्गामुखप्रतिफलनादित्यर्थः ।
केवलं दीर्घबहुलैर्यद्वा बहुविसर्जनैः ॥
द्वित्र्यक्षरपदैर्बद्धैरल्पप्राणाक्षरोत्तरैः ।
शैथिल्यं नाम जायेत तस्मात्तत्परिवर्जयेत् ॥
ह्रस्वसंयोगदीर्घाणां पद्यं कुर्याद्विमिश्रणम् ।
श्लेषस्सुशाङ्गधर्जायेत प्राणाक्षरविमिश्रणात् ॥

भिन्नानामपि पदानां एकपदप्रतिभासहेतुः अनतिकोमलो बन्धविशेषः श्लेषः ।

यत्रैकपदवद्भावः पदानां भूयसामपि ।
अनालक्षितसन्धीनां स श्लेषः परमो गुरुः ।

साहित्यमीमांसा

**श्लोकवल्ली—मेलरागः (लताङ्गीमेलजन्यः)**

(आ) स रि ग म ध नि स.
(अव) स ध नि प म ग रि स.

मञ

**श्वसितम्—चिबुकम्**

अधस्तादङ्गुलं त्वग्रे श्वसितं वीक्षितेऽद्भुते ।

कुम्भः

**श्वसिता—धनुः**

श्वसिताद्भुतवीक्षायां एकाङ्गुलमथश्लथम् ।

ज्यायनः

**श्वशीला—स्त्री**

उद्बन्धगात्रनयना विजृम्भणपरायणा ।
दीर्घाल्पवदना स्वल्पपाणिपादविभूषिता ॥
उच्चैःस्वना स्वल्पनिद्रा क्रोधना सुकृतप्रिया ।
हीनाचारा कृतज्ञा च श्वशीला परिकीर्तिता ॥

भरतः

**श्वा—श्वाजातिः**

चत्वारिंशत्स्वरैरेकाधिकैः श्वा भवति ध्रुवम् ।

मौमापत्यम्

**श्वासः—(वायुः)**

प्रबद्धस्खलितश्चैव निरस्तो विस्मितस्तथा ।
उल्लासितो विमुक्तश्च प्रसृताल्यश्चलौ परौ ॥
सुखाविति नवोच्छ्वासनिःश्वासौ कोहलोदितौ ।
समोद्भ्रान्तो विलीनश्चान्दोलितः क्रमितः परः ॥
स्तम्भितोच्छ्वासनिश्वासाः सूत्कृतस्सीत्कृतस्तथा ।
एवं दशविधः प्रोक्तो मारुतः कैश्चिदाहृतैः ॥

कुम्भः

एते हेत्वर्थलक्ष्माणो विनियोगस्तु कथ्यते । निप्रदासः

एते इति दशमारुताः ।

नासानिलेन व्याख्यातो मारुतो वदनोद्भवः ।
विनियोगान्तराण्यत्र सुविज्ञेयानि लोकतः ॥ कुम्भः

श्वेता—प्राकृते द्विपदी
विषमा—एकश्चतुर्मात्रिकः एकः पञ्चमात्रिकः लः गः ।
समा—द्वौ चतुर्मात्रिकौ जः गः । विरहाङ्कः

श्वेताम्बरं—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि म प नि ध स .
(अव) स ध प म रि ग म रि स . मञ्ज

श्वेताम्बुधिः—मेलरागः (कामवर्धिनीमेलजन्यः)
(आ) स रि ग म प स.
(अव) स नि ध प म ग रि स . मञ्ज

ष:

छन्दसि षण्मात्रागणः ।

षट्करणम्—(त्रिपुष्करे)
रूपं कृतं प्रतिकृतं, प्रतिभेदः, रूपशेषः, ओघः, प्रतिशुष्का चेति । भरतः

करणानि षडेतानि पिण्डीप्रतिसरादिषु ।
नियमो यत्र युक्तश्चेत्तत्रैव विनियोजयेत् ॥ नान्यः

षट्कोणम्—पादमणिः
आदौ कृत्वा समोद्वृत्तं पादाङ्गुलिकपृष्ठतः ।
पृष्ठोन्मुखीभूततलौ तिष्ठन्तौ पुरतस्समौ ॥
तदा मध्ये समोद्वृत्तं विधाय पुरतो यथा ।
पृष्ठभागेऽपि तिष्ठेतामेवं यत्र क्रिया मुहुः ।
षट्कोणमेतदाख्यातं नृत्तविद्याविशारदैः ॥

षडश्रमिति ज्यायन आह । वेमः

षट्तालः—देशीतालः
षट्तालेतु प्रयोक्तव्या द्रुताः षट्तालवेदिभिः ।
० ० ० ० ० ० वेमः

षट्पदी—प्रबन्धः
कर्णाटभाषया गेया प्राणाक्षरसमन्विता ।
षट्पदी तालरहिता सानुप्रासा कथात्मिका ॥
गणानां कामसंज्ञानां चतुर्णां पुरतो गुरुः ।
अष्टानां लघवस्तद्वद्गणाष्षोडश बाणजाः ॥
पादे पादे च कर्तव्यौ द्वौ गणौ मान्मथौ त्रिषु ।
अन्ते बाणस्तु षट्पद्यां उत्तरार्धे तदेव च ॥ सोमेश्वरः

गातव्या भाषया देश्या तालनादविवर्जिता ।
विचीत्रयतिसङ्कीर्णा पदैष्षड्भिर्विराजिता ॥
पादाष्षडत्र विख्याता गणाश्चापि चतुर्दश ।
तृतीयस्त्रिगणस्तत्र षष्ठश्च चरणस्तथा ।
द्विगणश्चरणाश्लिष्टा षट्पदीति समीरिता ॥ हरिपालः

षट्पितापुत्रकः—मार्गतालः
षट्पितापुत्रके ताले प्लुताश्च मगणप्लुतौ ।
ऽ̇ ऽ ऽ ऽ ऽ ऽ̇ सुधा

षडक्षरी—मेलरागः (शुभपन्तुवरालीमेलजन्यः)
(आ) स ग रि ग म प ध नि स .
(अव) स नि ध म ग रि स . मञ्ज

षडङ्गगुणवर्धनः—देशीतालः
षडङ्गगुणवृद्धाख्ये मगणो भगणोऽथवा ।
ऽ ऽ ऽ — ऽ।। लक्ष्मणः

षडभिङ्गः—देशीतालः
षडभिङ्गेमिश्रलोल त्र्यश्रलश्च मरश्चलः ।
ऽ ।। ऽ ।। लक्ष्मणः

षडश्रम्—पादमणिः
षडश्रमेव षट्कोणमिति वेम आह लक्ष्णं तु षट्कोणस्थले द्रष्टव्यम् ।

षड्र्मिंजतिः—देशीतालः
षड्र्मिंजाति ताले तु क्रमात् चच्चत्पुटादयः ।
पूर्वं कीर्तिधरेणोक्तो लक्ष्मीनारायणोदितः ॥

आदिशब्देन शिष्टा मार्गताला गृहीतव्या चाचपुटसंपक्वेष्टाक-षट्पितापुत्रक तालेषु लक्ष्मणः

षड्गुणः—देशीतालः

षड्गुणे स्युर्गलगपाः ।

ऽ। ऽऽ́ लक्ष्मणः

षड्जः

प्रकार्थस्य शुयत्वेःहि गत्यर्थेषड्जेः कृति ।

टिलोपे षड्जइत्युक्तः स्वरेषूत्कर्षकारकः ॥ कुम्भः

चतस्रः शुक्लवर्धन्यः तासु कन्दसमाश्रयः ।

तद्भवत्वात् षड्जस्य चतुश्श्रुतित्वम् ॥

कन्दः, मूलाधारः । षड्जो विप्रः । पद्मपत्रप्रभः । ब्रह्मदैवत्तः अग्निनाप्रथमं गीतः । वीररोद्राद्भुतेषु प्रवर्तते । कण्ठादुत्तिष्ठते । सनकः ऋषिः सुप्रतिष्ठा छन्दः गौरी अधिदेवता । ऋषभे राशौ विश्रामः । मयूराः ब्रुवते । शुक्लस्त्वग्निजो नादःस्वरःषड्जः चतुःश्रुतिः । जगदेकः

वायुः सम्मूर्छतो नाभेर्नाड्याश्च हृदयस्य च ।

पार्श्वयोर्मस्तकस्यापि षण्णां षड्जः प्रजायते ॥ नारायणः

अतिस्वारात्समुत्पन्नो षड्जोऽयं प्रथमः स्वरः । जगदेकः

अतिस्वारः । सामसु सप्तस्वन्यतमः ।

नासा कण्ठमुरस्तालुजिह्वादन्तांश्च चालयन् ।

षड्भिस्सञ्जायते यस्मात्तस्मात् षड्जोऽयमुच्यते ॥ पुरुषोत्तमः

—स्वरहस्ताः

अपविद्धमयूरश्च षड्जस्वरनिरूपणे । शृङ्गारः

—देशीतालः

षड्जास्ये पाद्लौ स्मृतौ ।

ऽ́ ऽ। लक्ष्मणः

षड्जकैशिकः—रागः

बहुसौपर्णिकतानो हरिणाश्वामूर्छनोदयोदारः ।

षड्जांशग्रहयुक्तो गान्धारान्तो सप्तमोच्चः ॥

रिषभस्वरेण हीनो जात्या जनितस्सदैव कैशिक्याः ।

षड्जापन्यासयुतो विज्ञेयष्षड्जकैशिको रागः ॥ नान्यः

गान्धारान्तश्च.......षड्जांशष्षड्जकैशिकः ।

रिषभेणविहीनस्तु कैशिकीजातिसंभवः ॥ कश्यपः

कैशिकीजातिसंभूतः षड्जकैशिक उच्यते ।

षड्जर्षभग्रहांशोऽयं रिषभोऽल्पो भवेदयम् ॥

न्यासौ निषादगान्धारौ मन्द्रौ गान्धारषड्जकौ ।

प्रसन्नादिरलङ्कारो वर्णोऽस्मिन्नयरोहितः ।

षड्जादिर्मूर्छनश्चैव कथितष्षड्जकैशिकः ॥ हरिः

कैशिकीजातिसंभूतः षड्जांशष्षड्जकैशिकः ।

न्यासौ निषादगान्धारौ स्वल्पता रिषभे पुनः ॥ मोक्षः

षड्जकैशिकी—जातिः

षड्जकैशिक्याः षड्जगान्धारपञ्चमा ग्रहा अंशाश्च ।

पञ्चस्वरपरस्तारः न्यासपरस्ततपरो वा मन्द्रः ।

नित्यसंपूर्णा धैवतनिषादमध्यमानामल्पत्वं ऋषभस्याल्पतरत्वम् । शेषाणां बहुलत्वम् । न्यासस्तु गान्धारः । चञ्चत्पुटस्तालः एककलश्चित्रे । मागधी गीतिः । वार्तिकमार्गे द्विकलः संभाविता गीतिः । चतुष्कले दक्षिणमार्गे पृथुला गीतिः । रसश्च करुणः । प्रथमप्रवेशगीते द्वितीयप्रेक्षणिके विनियोगः । मतङ्गः

कथ्यते षड्जकैशिक्या लक्षणं तु सविस्तरम् ।

तत्र पूर्वं विधेयास्युः षड्जगान्धारपञ्चमाः ।

अपन्यासो निषादोऽत्र पञ्चमष्षड्ज एव वा ॥

अल्पत्वमृषभस्यैव न्यासो गान्धार इष्यते ।

संपूर्णेयं स्वरैस्सर्वैस्स्यादेवं षड्जकैशिकी ॥ हरिपालः

गान्धारीषाड्जीभ्यां संयोगात् षड्जकैशिकी जातिरिति सूत्रम् (भरतस्य) अस्याःषड्जगान्धारौ मध्यमपञ्चमौ धैवतश्च निषादश्च षडंशाः । अपन्यासश्चैत एव । न्यासौ गान्धारसप्तमौ । पर्यायेण भवन्त्येते न्यासापन्यासयोः स्वराः । षाडवं षड्जलोपेचौडुवम् । जातिद्वयोद्भवत्वात् तद्धर्मो ग्रह इष्यते । अस्यां षोडशकलाः । प्रतिकलमेवांशापन्यासाः । गीतकान्तस्थितौ निषादगान्धारौ । मध्यमग्रामे गान्धारपञ्चमी देशी वेलावली मोटपूव हिन्दोलैः गीयते । नान्यः

षड्जग्रामः—रागः

षड्जमध्यमिकाजातेः तारषड्जग्रहांशकः ।

मन्यासस्वरसंपूर्णः काकल्यन्तरभूषितः ।

रसे वीरेऽद्भुते रौद्रे षड्जग्रामाभिधानतः ॥ मोक्षः

शृङ्गाराद्भुतवीररौद्रविषये दीप्तायता मन्यमा
मृद्वीति श्रुतिभिश्श्रितो यदि भवेत् षड्जो ग्रहांशः स्थितिः।
न्यासस्थो यदि मध्यमस्स ऋषभो ... विदारीस्वरः
शेष्ःश्चेदनुवादिनो यदि भवेत्तानस्तथा जीवनः॥

मूर्छनोत्तरमन्द्रा च गान्धारश्चाधिकध्वनिः।
मीनध्वजसुरज्येष्ठरुद्रदेवेन्द्रदैवतः॥

षड्जिका षड्जमध्याच्च पूर्णकम्पितधैवतः।
सप्तमालपस्तथा रागः षड्जग्रामस्तु जायते॥

नान्यः

षड्जांशो मध्यमन्यासः स्यात् षाड्जीषड्जमध्ययोः।
षड्जग्राम इति प्रोक्तः सम्पूर्णस्वरकस्तथा॥

कश्यपः

ईषत्स्पृष्टो निषादस्स्यात् गान्धारश्चाविलध्वनिः।
धैवतः कम्पितो यत्र षड्जग्रामं विनिर्दिशेत्॥

नारदः

अस्य ग्रामस्य छायालापादिः कुडुमियामलैशिलाशासने दत्त एव विस्तरेण। नान्यशार्ङ्गदेवौ आलापरूपकौ दत्तौ।

### षड्जग्रामः

ईषत्स्पृष्टो निषादस्तु गान्धारश्चाधिको भवेत्।
धैवतः कम्पितो यत्र षड्जग्रामं तु निर्दिशेत्॥

नारदः

ग्रामशब्दे द्रष्टव्यम्।

### षड्जमध्यमा—जातिः

तत्र सूत्रम्। स्यात्षाड्जीमध्यमाभ्यां संयोगात् षड्जमध्यमा जातिरिति। षड्जर्षभगान्धारमध्यमनिषादाः अंशः। एत एवा पन्यासाः। न्यासौ मध्यमषड्जौ। निषादलोपे षाडवम्। मध्यमनिषादलोपे औडुवितम् निषादोऽल्पः।

नान्य

षड्जमध्यमाया ग्रहा अंशाश्च सप्तैव स्वराः। पञ्चस्वरपरस्तारः। न्यासपरस्तत्परो वा मन्द्रः। निषादहीना षाडवा। निषाद-गान्धारहीना औडुविता। ग्रामाविरोधेन यथेष्टं सञ्चारः। पूर्णा-वस्थानां निगयोरल्पत्वम्। समौ न्यासौ। सप्तस्वरा अपन्यासाः। दशविधलक्षणमस्ति। मध्यमादिर्मूर्छना। तालःपञ्चपाणिः। एककलद्विकलचतुष्कलैः चित्रवार्तिकदक्षिणमार्गैः क्रमान्मागधी संभाविता पृथुला गीतयः। सर्वरसात्मिका ध्रुवागाने द्वितीय-प्रेक्षणिके विनियोगः।

मतङ्गः

लक्ष्मात्र चांशाः सकलास्स्वराश्च
मिथश्च तेषामपि विंशतिः स्यात्।
अलो निषादोऽभिमतः प्रयोगे
गान्धारकेंशे सति तद्बहुत्वम्॥

भवेत्तु संवादितया द्वयोश्च वादित्वपक्षेऽपि निषादकस्य।
बहुत्वमेवास्ति नचाल्पभावः।
निषादगान्धारकयोरिहांशभावेन तेषां सपतौडुवत्वे।
स्यान्मध्यमादिःकिल मत्सरीकृतसा मूर्छना ग्राम इहादिमे स्यात्।
न्यासौ मतौ षड्जकमध्यमौद्वौ नैष्क्रामिकाया भवति ...वायाः।
गाने पुनर्नाटकपूर्वकाङ्के कलाभवन्त्यष्ट गुरुस्वरूपाः।
जाताविह द्वादशरांभवन्ति गाने वराली परिदृश्यतेऽस्याः।

रघुनाथः

### षड्जषाडवः—रागः

नौषधिकतावयुक्तः सौवीरीमूर्छनाश्रितैकसोदर्यः।
ऋषभापन्यासधरो निधनस्थितमध्यमध्वनिकः॥
अंशन्यासस्थापितमध्यमको विकृतमध्यमोद्भवः।
गान्धारस्वरहीनो विज्ञेयष्षड्जषाडवो रागः॥

नान्यः

मध्यमांशो मध्यमान्तो गान्धारेण च वर्जितः।
विकृतमध्यमोद्भूतो विज्ञेयष्षड्जषाडवः॥

कश्यपः

### षड्जस्वरमन्त्रः

षड्जग्रामः हृदयाय नमः। मध्यमग्रामः शिरसे स्वाहा। गान्धारग्रामः शिखायै वषट्। षाडवः कवचायहुम्। औडुवः नेत्रत्रयाय वौषट्। संपूर्णः अस्त्राय फट्। सनकऋषिः सुप्रतिष्ठा छन्दः गौरी देवता। ऐं श्रीं गीं संनमः।

जगदेकः

### षड्जाभिनयः—अभिनयः

दक्षिणेनालपद्मेन वामेन चतुरेण तु।
परिमण्डलितेनाथ मयूरललितेन च।
एवं विनिर्दिशेत् षड्जं कोविदो नाट्यनृत्तयोः॥

दामोदरः

### षड्जोदीच्यवती—जातिः

षड्जोदीच्यवत्याः षड्जमध्यमधैवतनिषादाः ग्रहा अंशाश्च: पञ्चस्वरपरस्तारः। न्यासापरस्तत्परो वा मन्द्रः। ऋषभहीनं षाडवम्। ऋषभपञ्चमहीनमौडुवितम्। पूर्णावस्थायां गान्धार-पञ्चमयोरल्पत्वम्। गान्धारस्यांशत्वे प्राप्तौ बाहुल्यम्। षाडवे पञ्चमस्याल्पत्वम्। औडुविते न कस्याप्यल्पत्वम्। अशेषाणां बहुत्वमेव। मध्यमो न्यासः। ऋषभधैवतावपन्यासौ। अंशानां

परस्परगमनं दशविधलक्षणमस्ति। सप्त पूर्णभेदाः। पञ्चषाडवाः पञ्चऔडुवाः। गान्धारमूर्छना। तालः पञ्चपाणिः। एककलेन चित्रेण मागधी। द्विकलेन वार्तिकेन संभाविता। चतुष्कलेन दक्षिणेन पृथुला। रसौ शृङ्गारहास्यौ। ध्रुवागाने द्वितीयप्रेक्षणिके विनियोगः।

मतङ्गः

स्यात् षड्जोदीच्यवत्यंशैः षड्जमध्यमधैवतैः।
सनिषादैरपन्यासौ विज्ञेयौ षड्जधैवतौ॥

ऋषभेण विहीनेयं द्वाभ्यां चेत्पञ्चमेन च।
मन्द्रगान्धारभूयस्त्वमस्या न्यासस्तु मध्यमः॥

दत्तिलः

गान्धारीषड्जीभ्यां धैवत्यां अंशसद्भावे षड्जोदीच्यवती। इति सूत्रम् (भरतस्य) मध्यमषड्जनिषादा धैवतसहिता भवन्ति वांशांशाः। षड्जश्च मध्यमस्वरश्चापन्यासः। मध्यम एव न्यासः। ऋषभस्य लोपात्। ऋषभपञ्चमलोपादोडुवितम्।

नान्यः

परस्परं सङ्गतिरत्र तेषां स्यान्मन्द्रगान्धारबहुत्वमत्र।
षड्जर्षभौ भूरितरौ रिलोपात्स्यात्पाडवं तत्र न धैवतांशे॥
रिधौ हि संवादितया प्रतीतौ संवादिनोर्नास्ति यतो विलोपः।
गान्धारकाद्यः किल मूर्छनांश्चक्रान्तादिमग्रामगताऽत्र वेद्या॥

रघुनाथः

## षड्रागचन्द्रोदयः

पण्डरीकविट्ठलकृतः। अत्र रागमेलकर्तृविभागो विचारितः। क्री. १५७०.

## षड्विधमार्गिणी—मेलकर्ता (रागः)

स रि ग ० ० ० म प ० ध ० नि ० ० स.

मञ्ज

## षण्मण्ठः—तालः

दीप्तमेकं भवेद्यत्र षण्मण्ठः स तु कथ्यते।
ऽ

वेदः

## षण्मण्टकः—देशीतालः

गुरुद्वन्द्वं लघुद्वन्द्वं निःशब्दलचतुष्टयम्।
षण्मण्ठके विजानीयात् रसिकैर्नृत्यवेदिभिः॥
ऽ ऽ ॥ । । । ।

दामोदरः

## षण्मुखः—देशीतालः

सगणानां त्रयं गश्च ताले षण्मुखसंज्ञके।
14 मात्राः।

तालप्रस्तारः

षण्मुखो द्रुतषट्केन विरामान्तेन भूषितः।
० ० ० ० ० ०̒

लक्ष्मणः

## षण्मुखप्रिया—मेलकर्ता (रागः)

स रि ग ० ० ० म प ० ध ० नि स.

मञ्ज

## षण्मुखवंशः

यूकात्रयं यवश्चैकोऽङ्गुलान्येकोनविंशतिः।
षण्मुखाख्यस्य वंशस्य दण्डमानमिहेष्यते॥
षडङ्गुलो मध्यदेशो मुखतालाख्यरन्ध्रयोः।
सप्तकान्तरमानं तु प्रत्येकं पुनरीरितम्॥
त्रियवी पञ्चभिर्युक्ता यूकाभिर्मानवेदिना।
समातीतान्तरालस्य मानमेको यवस्तथा॥
यूकात्रितयसंयुक्ताङ्गुलानां स्याच्चतुष्टयी।
लक्ष्मशेषं विजानीयान्मुनिवंशवदस्य तु॥

कुम्भः

## षाडवरागगानफलम्

संग्रामे वीरतारूपलावण्यगुणकीर्तनम्।
गाने षाडवरागाणां गदितं पूर्वसूरिभिः॥

नारायणः

## षाडवा—मूर्छना

मूर्छनाभेदे द्रष्टव्यम्।

## षाड्जी—जातिः

पञ्चस्वरास्तत्र भवन्ति षाड्जयां अंशो निषादर्षभवर्जनेन।
निषादलोपादिह षाडवत्वं गान्धारकांशेन निषाद लोपः॥
संवादिनौ तौ हि निगौ प्रदिष्टौ विवादिसंवादिगतोऽस्तिलोपः।
गान्धारकेंशे सति पूर्णतास्यात्कचिन्निषादस्य च काकलीत्वम्॥
स्यात्सङ्गतीरागविवक्तिहेतुः सङ्गः कृतरस्यात्सगयोर्विरोधात्।
अत्रान्तरत्वांशतया तयोस्तु समप्रधानत्ववसेन सङ्गः॥
षाड्जयां भवेन्मूर्छनिकाऽत्र षड्जग्रामोत्तरायायतिकैव मेलः।
नैष्क्रामिकाया भवति ध्रुवाया गानं पुनर्नाटकपूर्वकाङ्के॥
जाताविह द्वादश संभवन्ति रागो वराटी परिदृश्यते स्याः।

रघुनाथः

षड्जग्रामसंबन्धाया अंशाग्रहाः पञ्च भवन्ति। तद्यथा—षड्जगान्धारमध्यमपञ्चमधैवता ग्रहा अंशाश्च। गान्धारपञ्चमावपन्यासौ। निषादहीना षाडवी। षड्जो न्यासः। षड्जगान्धारयोः षड्जधैवतयोश्च सङ्गतिः। पञ्चस्वरपरा तारगतिः।

षड्जस्वरपरा मन्द्रगतिः। षड्जधैवतयोश्चौडुवितत्वं च सर्वथैव नास्ति। संपूर्णा षाडवा। यदा संपूर्णं गीयते तदा रिषभपञ्चमयोः निषादपञ्चमयोश्चाल्पत्वं कार्यम्। यदा षाडवा गीयते तदा रिषभस्याल्पत्वं कार्यम्। शेषाणां स्वराणां बहुत्वम्। अस्य धैवतादिमूर्छना। पञ्चपाणिः। चित्रे मार्गे मागधीगीतिः, पञ्चपाणिर्द्विकलः, वार्तिकमार्गे संभाविता गीतिः। चतुष्कलः पञ्चपाणिः दक्षिणे मार्गे, पृथुला गीतिः। वीररौद्राद्भुता रसाः। प्रथमप्रेक्षणिके ध्रुवागाने विनियोगः।

मतङ्गः

## षाड्जीकपालम्

वदामि षाड्जी जनितं कपालमंशो ग्रहश्चात्र तु षड्ज एव।
इहर्षभो न्यासतया प्रतीतोऽपन्यासगान्धारकनामधेयः॥
महत्त्वगान्धारणमध्यमौ द्वावल्पे निषादर्षभपञ्चमाश्च।
सधैवतालङ्घ्य इहर्षभः स्यात्कलाः किल द्वादश संप्रदिष्टाः॥

रघुनाथः

यत्र खलु षड्ज एव ग्रहस्तथांशोऽप्यपन्यासः।
गान्धारो न्यासः स्यादतिबहुलत्वं तथा मगस्वरयोः॥
पञ्चमनिषादधैवतरिषभाणामत्र चाल्पतारा च।
ऋषभस्तु लङ्घनीयः काले काले च।
द्वादशकलंकपालं पूर्णं षाड्जयास्तयाह नान्यपतिः॥

नान्यः

## षाड्जीकपालगानम्

यस्मिन्नंशो ग्रहष्षड्जोऽपन्यासश्च तथा बहू।
गान्धारपञ्चमौ चाथ निषादर्षभधैवताः॥
पञ्चमश्चाल्पकालङ्घ्यश्चर्षभश्च तथोदितः।
करा द्वादशसंख्याका गान्धारे न्यसनं तथा॥
षाड्ज्या जातेः कपालं तद्ब्रवीति स्वरकोविदः।
खट्वाङ्गधरमित्यादि द्वादशसु कलासु द्वादशपदानि॥

कुम्भः

## षाड्जीध्यानम्

वीणाकणश्रवणजातकुतूहलेन
देवेन कामरिपुणा परिरभ्यमाणाम्।
पाशाङ्कुशाङ्कितकरामरुणावभासां,
षाड्जीं समस्तजननीमनिशं नमामि॥

जगदेकः

षाण्मातकं—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म प ध नि स.

(अव) स नि ध नि प म रि स.

मल्ल

## पिड्डम्

सख्यास्समक्षं भर्तुर्यदुद्धतं वृत्तमुच्यते।
मसृणं च कचिद्वृत्तंचरितं षिड्जडस्तु सः।
अत्राल्पसुकुमारमुद्धतप्रचुरनृत्तं विधातव्यम्॥

अयं शब्दः षिड्गः, षिद्गकः, सिङ्गटः, सिङ्गडः, सिङ्गकः, इत्यादि नानाप्रकारमादर्शेषु दृश्यते।

## षोडशाक्षरम्—अवनद्धाङ्गम्

आङ्किके—क ट ढ त थ र
वामे —घ म ह
ऊर्ध्वे —ग द
आलिङ्गे—ख ठ ण ध ल. इति षोडशाक्षराणि।

स्वरव्यञ्जनसंयोगेनाक्षरा व्याङ्गिकादौ वाकरणानि भवन्ति। संयोगस्तु स्वरव्यञ्जनयोगेन द्विधा। स्वरास्तु— अ आ इ ई उ ए ओ अं इति। ककारस्तु स्वरसंयोगेन क कि कु के को कं भवन्ति।

खकारस्तु खि खु खो
गस्तु गु गे
घस्तु घ घि घु घो
टस्तु ट टा टि टौ टं
ठस्तु ठ ठा ठि ठो ठं
ढ कारस्तु ढे ढौ
णस्तु ण णा णे णौ
तस्तु त ता ति ते
थस्तु थ था थि थे
दस्तु द दु दे दो
धस्तु ध धा धि धे
रेफस्तु र रि रे
लस्तु ल ली ले
हकारमकारौ शुद्धौ
रेफानुबन्धाः क्र भ्र घ्र त्र द्र ध्र
ळकारानुबन्धाः ककारस्य क्ल क्ले क्लं
णानुबन्धो हकारस्य ह्ण
थानुबन्धः तकारस्य त्थ
धानुबन्धः दकारस्य द्ध द्धे इति

तेषामुत्पत्तिः। आङ्किके द्विपुष्करे समहस्तनिपाताद्धकारः। तत्रैवाङ्गुलीप्रचलनाद्धकारः। तत्रैवावष्टम्भाद्धकारः। तत्रैवार्धनिगृहीतात्थकारः। तत्रैव दक्षिणमुखे पार्ष्णिनिपीडितात् ढकारः। तत्रैव वाङ्गुलिकुञ्चनात्कुकारः। ऊर्ध्वकवामयोरसम-

हस्तनिपातनाद्धंकारः। प्रदेशिन्या चालिङ्गे ङ्कंकारः। समपाणिप्रहतो मकारः। सनिगृहीतः ग घ द् धाः। अर्धनिगृहीताः क ख ट ढकाराः। पार्श्वपाणिप्रहताः त थ कारौ। अर्धार्धपाणिप्रहतावर्धनिगृहीतौ आलिङ्गे ढकारणकाररेफयुक्तदकारा द्विहस्तप्रहताः। ध्रु द्रों क्ले इति मुक्तपार्श्वप्रहताः। घि क्रा अर्धपाणिप्रहतौ निगृहीतौ। एतेष्वक्षरेषु प्रयोगवशेन प्रहाराः कार्याः। एतदक्षरकरणं वाक्करणमित्युच्यते।

भरतः

वाक्करणं केवलं ध्वनिरेव। अथवाऽनुहारः, न तु स्पष्टतया स्वभावतो वा वर्णाः। तथापि ते ध्वनयः मनोनन्दनहेतवः।

—(त्रिपुष्करवाद्याक्षराणि)

मृदङ्गे, क ख ग घ ट ठ ड ढ त थ द ध म र ल ह। षोडशाक्षराणीह पुष्करादौ नियतं संविधेयानि।

भरतः

**षोडशी**—तानः (षाडवषड्जलीपः)

म ग रि नि ध प

कुम्भः

**षोणावती**—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म ध नि प ध नि स.

(अव) स नि म ग रि स.

मञ्ज

## स

**स**—षड्जस्वरः

**सकण्ठः**—गायकभेदः

स्वरं वर्णं च तालं च युक्तं यो घटयेत्त्रयम्।
शोभनध्वनिसंयुक्तः सकण्ठो गायको हि सः॥

सोमेश्वरः

**सकम्पधुतम्**—शिरः

सकम्पधुतमप्येवं चतुरै रञ्जकैः कृतम्।

ज्यायनः

एवमिति कम्पितधुतसमायोगेन।

**सकम्पपरिवाहितम्**—शिरः

कम्पितेन समायोगं संप्राप्ते परिवाहिते।
लास्ये ताललये प्रोक्तं सकम्पपरिवाहितम्॥

ज्यायनः

**सकलम्**—एकतन्त्रीवाद्यभेदः

तदुक्तं सकलं वाद्यं यतः स्थूलो भवेद्ध्वनिः।
असंस्पर्शेन तर्जन्या दोरिकापत्रिकावधि।
सार्यते तन्त्रिकास्थाने कम्बिकेति पाठान्तरम्।
तन्त्रिका यत्र सकलं तदपि स्मृतम्॥

पार्श्वदेवः

—वाद्यम्

तन्त्रीसंलग्नजीवातुः स्थूलो यत्र ध्वनिर्भवेत्।
तदुक्तं सकलं वाद्यमपरेत्वन्यथा जगुः॥
आदोरिकं पवित्रं चेत्तर्जनीस्पर्शवर्जितम्।
सार्यते काम्बिकावाद्य तदाहुः सकलाभिधम्॥

शार्ङ्ग

**सकलकलावर्धिनी**—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग म प ध नि.

(अव) ध प म ग रि स नि ध नि स.

मञ्ज

**सकला**—श्रुतिः

षड्जस्य प्रथमा श्रुतिः। पा. सोमः

षड्जस्य चतुर्थी श्रुतिः। सुधा

षड्जस्य चतुर्थी श्रुतिः—मण्डलीमते तारषड्जस्यैव।

**सक्रमम्**—रञ्जनगुणः

सुस्थानं सरलं श्राव्यं शुद्धकाकुविराजितम्।
सप्रमाणं क्रमयुतं गीतं प्रौढजनप्रियम्॥

सोमेश्वरः

**सकक्षकम्**—मात्रावृत्तम्

चतस्रो गाथाः— विरहाङ्कः

**सगर्वम्**—दर्शनम्

सगर्वं तद्यदुत्फुल्लतारं स्थिरकनीनिकम्।

शारदातनयः

**सङ्कीर्णनेरिः**—देशीनृत्तम्

स्थानैस्संहतकादिषोडशमुखैः चारीभिरासप्तभिः
त्रिंशत्सप्तमितैर्युतैर मिलितैरन्यैस्त्रिभिर्हस्तकैः।
दृग्भेदैः करणैर्वरैरथशिरोभेदाङ्गहारैः स्फुटा
सङ्कीर्णा गदिता बुधैर्नटमुदे नेरिर्मनोहारिणी॥

अत्र चतुर्विंशतिभेदा भरतोक्ता असंयुतहस्ताः। अञ्जल्यादयः संयुतास्त्रयोदश। आहत्य सप्तत्रिंशत्। अन्यैस्त्रिभिरिति गोमुख, त्रिशूल, दर्दुरः, इति कोहलोक्ताः।

वेदः

**सङ्कीर्णशिखरहस्तः**

पूर्वोक्तमुष्टिहस्ते तु किञ्चिदङ्गुष्ठ एव च।

प्रसारितश्च चलितः सङ्कीर्णशिखरः करः।
चटके चलचित्तेऽपि सङ्कीर्णशिखरो भवेत् ॥
अत्र चटकशब्दः ग्रन्थस्याप्युपलक्षकः।

शृङ्गारशेखरः

**सङ्कीर्णालपल्लवहस्तः**

पूर्वोदितालपद्मोऽपि सर्वाङ्गुल्यस्तु कुञ्चिताः।
अधोमुखश्च विज्ञेयो संकीर्णाख्यालपद्मकः।
अधोमुखो रेचितश्चेत्कर्कटे वृश्चिके भवेत् ॥

शृङ्गारशेखरः

**सङ्कीर्णमण्टकः**—देशीतालः

आदिवालो द्वितीयश्च दद्वयं च लघुस्ततः।
यतिलमद्वयं यत्र द्वितीयद्वयकं तथा ॥
वेदद्रुतास्तु विज्ञेया तथा शरचतुष्टयम्।
अशब्दं च क्रमाद् ज्ञेयं सङ्कीर्णो मण्ठको भवेत् ॥

दामोदरः

।००।००।०।००।००।००००।।।।

**सङ्कीर्णमकरः**—हस्तः

पूर्वोक्तमकरे हस्ते दक्षिणः कुञ्चितश्चलः।
अन्याङ्गुल्यः प्रविरलाः पञ्चसंख्या यथाक्रमम्।
युज्यते स्तब्धरोमार्थे सङ्कीर्णमकरः करः ॥

शृङ्गारशेखरः

**सङ्कीर्णगजदन्तहस्तः**

गजदन्तौ श्लिष्टमुखौ सङ्कीर्णगजदन्तकः।
सङ्कीर्णगजदन्तोऽयं उलूकार्थे प्रयुज्यते ॥

शृङ्गारशेखरः

**सङ्कीर्णहंसहस्तः**

तर्जन्यङ्गुष्ठसंयोगो मध्यमानामिकापि च।
प्रसारिता कनिष्ठा च वक्रितातलमाश्रिता ॥
नाम्ना सङ्कीर्णहस्तोऽयं शुक्राचार्यमतोदितः।
बकार्थे मन्द्रभेदेषु योज्यस्सङ्कीर्णहंसकः ॥

शृङ्गारशेखरः

**सङ्कृतिछन्दोवृत्तानि**

तथा शतसहस्राणि सप्तषष्टिश्च सप्ततिः।
सप्त चैव सहस्राणि षोडश द्वेशते ततः।
कोटिश्चैवेह वृत्तानि सङ्कृतौ कथितानि तु ॥

भरतः

**सङ्केतः**—हस्तप्राणः

ऊहाविधानरचनां विना स्थूलोऽतिपूर्वकः।
यो हस्तनियमः प्रोक्तः ससङ्केतः प्रकीर्तितः ॥

शृङ्गारः

**सङ्कोचमृगशीर्षः**—हस्तः

पूर्वोक्तसर्पशीर्षाख्ये कनिष्ठाङ्गुष्ठकौ तदा।
ईषदूर्ध्वश्रितौ नाम्ना सङ्कोचमृगशीर्षकः ॥

शृङ्गारशेखरः

**सङ्गता**—प्राकृतेमात्रावृत्तम्

षट्भगणाः गुरुश्च। विरहाङ्कः

**सङ्गतकम्**—मात्रावृत्तम्

भ भ ग ग भ भ ग अन्ते गाथा च।

विरहाङ्कः

**सङ्गतम्**—भङ्गतालः

गद्वयं लगौ लद्वयम्।
ऽऽ।ऽ॥ नान्यः

**सङ्गीतम्**

गीतं वाद्यं तथा नृत्यं त्रयं सङ्गीतसंज्ञकम्।
तद्द्विधा भिद्यते मार्गदेशीभेदेन तत्त्वतः ॥

कुम्भः

गीतवाद्ये उभे एव सङ्गीतमिति केचन। पुरुषो
गीतं वाद्यं तथानृत्यं त्रयं सङ्गीतमुच्यते।

कुम्भः

**सङ्गीतकल्पद्रुमः**

केनचिद्राज्ञा स्वैपञ्चवृत्यात्मकं रचितः। अयं ग्रन्थः संगीतशिरोमणावुदाहृतः। 1429 कालात्पूर्वं विरचित इति ज्ञायते। अन्यः स गणेशस्तु वङ्गदेशप्रभुः सुल्तासाहिना 1400 काले पराजित इति संगीतशिरोमणो उक्तम्। अयमेव सङ्गीतकल्पवृक्षनामकं ग्रन्थमपि चकारेति चोह्यते।

**सङ्गीतकल्पवृक्षः**

गणेशनामकराज्ञाकृतः।

**सङ्गीतकौमुदी**

अस्यैकदेशभाग एवोपलब्धः। तस्मिन् कर्तृनाम क्वापि न दृश्यते। अस्य कर्ता ओढ्रदेशीयः स्यादिति ओढ्रदेशीयग्रन्थपरिशीलनादनुमीयते।

### सङ्गीतचन्द्रः

विप्रदासकृतः। अत्र नृत्तभाग एवोपलभ्यते। ग्रन्थकर्ता गीतभागमपि चकार इति ज्ञायते। एष नृत्तभागः कुम्भकर्णीयनृत्तरत्नकोशस्य मूलग्रन्थ इव भाति उभयोरपि भेदोऽस्वल्प इव। अस्य ग्रन्थस्य नेपालभाषायां व्याख्याकारः जगज्ज्योतिर्मल्लनामा तद्देशाधीश्वरः। जगज्ज्योतिर्मल्लस्य कालः 1625.

### सङ्गीतचन्द्रिका

भट्टमाधव रचिता। रघुनाथेन स्मृता। भट्टमाधवः वाराणसीवासीति तत्रैवोक्त्या ज्ञायते। क्रै. प. 1400.

### सङ्गीतचिन्तामणिः

वेमभूपालकृतः। अत्र वाद्यनृत्यखण्डावेवलब्धौ। तौ खण्डौ षट्सहस्रग्रन्थरूपौ। मध्ये मध्ये गीतखण्डस्मरणात्। गीतखण्डस्य इदानीमनुपलंभात् गीतखण्डः नष्टप्रायः। लब्धो भागः अतिप्रौढोऽपि बालानामपि सुबोधः। निष्कृष्टः विषयः। प्रायेण रत्नाकरानुसारी। अन्यः सङ्गीतचिन्तामणिः दृश्यते। तत्र प्रथमाध्यायस्यैवोपलम्भात् केन विरचित इति न ज्ञायते। तृतीयः सङ्गीतचिन्तामणिः कमललोचनकृतः गीतगोविन्दजातीयः पञ्चदशाश्वासात्मकः कृष्णगानविषयः। केवलं प्रबन्धरूपः। कमललोचनस्य सङ्गीतामृतमपि गानरूपप्रबन्ध एव।

### सङ्गीतचूडामणिः

जगदेकमल्लकृतः। अत्र शक्त्यागमस्वयम्भूच्छन्दः परमर्दिसोमेश्वर पाण्डुसूनुमालतीमाधवकामरूपेश्वरदत्तबृहद्देशी प्रभृतय उदाहृताः[१]। तेषु परमर्दी जगदेकस्य पितामहः।

१ अत्र पञ्चाध्यायाः। प्रबन्धतालरागवाद्यनृत्तानि एकैकस्मिन्नध्याये प्रतिपाद्यन्ते वाद्यनृत्ताध्यायावसमग्रौ। अस्माद्बहवो लक्षणश्लोकाः पार्श्वदेवेन सङ्गीतसमयसारे मूलकारनामानिर्दिश्य उदाहृताः। स्वयंभूः प्राकृतछन्दस्कारः। स जगदेकात्प्राचीनः।

### सङ्गीतचूडामणिसारः

केरलदेशे अस्योपलम्भादस्यकर्ता केरलीयस्यादित्यूह्यते।

### सङ्गीतदर्पणः

अपरौ द्वौ ग्रन्थौ एकस्तु दामोदरकृतः। कालः 1550

नाट्ये नवीनसम्प्रदायं निरूपयति।

### सङ्गीतदामोदरः

श्रीलशुभङ्करकृतः। अत्र नाट्यलोचनद्वय, नाट्यदर्पणद्वय, सङ्गीतसर्वस्व, नटोरगी, मुक्तावली, शारदीय, नारदीय, रत्नकोश, चूडामणि, कल्पवृक्ष, तुम्बुरुनाटक, नागरसर्वस्व, धूर्तसमागमादयोग्रन्थाः स्मृताः। शारदीयग्रन्थः शारदातनयकृतः। धूर्तसमागमः—नेपालमहाराजस्य नृसिंहराजस्य सभायां स्थितेन ज्योतिरीश्वरेण रचितः। तस्य कालः 1480। अतः शुभङ्करोऽपि तदर्वाचीनः। एकं नाट्यलोचनं अभिनवगुप्तरचितम्। अपरं त्रिलोचनेन कृतम्।

### सङ्गीतनारायणः

किमिडि नारायणदेवरचितः। अत्र विषयाः सम्यक् परिष्कृताः। कालः 1600

### सङ्गीतपारिजातः

अहोबिलकृतः। 1600 काले स्यात्

वीणायां सारिका स्थापनप्रमाणे सम्यगत्र निरूपिते।

### सङ्गीतभास्करः

नेपालेश्वरजगज्ज्योतिर्मल्लकृतः। सङ्गीतचन्द्रस्य व्याख्यारूपः।

### सङ्गीतमकरन्दः

नारदप्रोक्तः एकः। अन्यो वेदप्रणीतः। आहत्य द्वौ ग्रन्थौ वर्तेते। नारदप्रणीतः सप्तपरिच्छेदात्मकः। सङ्गीतरत्नाकरानन्तरं तज्जातीय एव लघुग्रन्थो शिष्यसौकर्यार्थं प्रमाणभूतनारदवाक्यात् लिखितःस्यात्। सङ्गीतरत्नाकरमकरन्दयोर्बहवः श्लोकाः समानाः। मध्ये महामहेश्वर (अभिनवगुप्तः) नामग्रहणात् अस्यातिप्राचीनत्वं कैश्चिदुक्तं विहतमेव।

अयं वेदकविप्रणीतः। शिवाजीपितुः शाहराजस्य मकरन्दः इति नामान्तरं आसीत्। अतः तन्नाम्ना, तदास्थानविद्वत्कविवेदेन विरचितः। ग्रन्थेऽस्मिन् बहवो नवीनसम्प्रदायाः विस्तरेण निरूपिताः यथा—रूपकनृत्तं, ध्वजनृत्तं, सप्ततालनृत्तं इत्यादीनि। कालः 1600 महाराष्ट्रदेशीयः।

### सङ्गीतमहोदधिः

अयं ग्रन्थः काश्मीरेषु जम्मूनगरे रघुनाथनिलयभाण्डागारे एव वर्तते। अस्य कर्ता रणसिंहदेवः काश्मीरपतिः स्यात्।

### सङ्गीतमुक्तावलिः

देवणभट्टकृता। अस्माद्ग्रन्थात् देवेन्द्रेण गतिलक्षणे बहुवः श्लोका उदाहृताः। अतः देवेन्द्रात् देवणः पूर्व इति निश्चीयते। कालः क्रै. प. 1400. समीचीनोऽयं ग्रन्थः।

देवेन्द्रभट्टकृता। अत्र नृत्ते नूतनप्रक्रिया सम्यग्विचारिता। अङ्गाद्यभिनयेषु लक्ष्यश्लेका इदाहृताः। आन्ध्र कर्णाटमहाराष्ट्रनृत्तपद्धतय उदाहृताः। 1450

### सङ्गीतमुद्रा

तनुसुखरामस्य ग्रन्थभाण्डागारे अयं ग्रन्थ आसीदिति केन चिद्ग्रन्थान्वेषकेणोक्तम्। एतावत्पर्यन्तं न लब्धम्।

### सङ्गीतमेरुः—सङ्गीतनाट्यग्रन्थः

अयं कल्लिनाथेन रत्नाकरव्याख्यायां स्मृतः।

### सङ्गीतरत्नमाला

अयं ग्रन्थः मम्मटकृत इति सङ्गीतनारायणो वक्ति। बहवः श्लोका सङ्गीतरत्नमालातः उदाहृताः। काव्यप्रकाशकारो वा न वेति संशयः। अयं ग्रन्थोऽद्यापि न लब्धः।

### सङ्गीतरत्नाकरः

शार्ङ्गदेवकृतः। सङ्गीतशास्त्रे उपलब्धग्रन्थेषु प्राचीनसङ्गीत लक्षणमावेदितुं मुकुटायमानोऽयम्। अस्य सिङ्गभूप, केशव कल्लिनाथैः कृताः व्याख्यास्सन्ति। बहवो ग्रन्था अस्यानुवादरूपा एव। कुम्भस्य सङ्गीतराजोऽपि रत्नाकरस्य विस्तृता व्याख्यैवेत्युक्तिः नातिशयो भविष्यति। तञ्जापुररघुनाथेन शार्ङ्गदेवस्तत्र तत्र दूषितः। तथापि स रघुनाथोऽपि रत्नाकरमेवानूद्य पठति कुम्भो रत्नाकरं दूषयित्वा मातान्तराभावाद्वीणवेणुवादनसन्दर्भे विनातन्मतमवानुचकार। रत्नाकरीयविषयो केवलं विद्वद्भिः स्मर्तव्या एव, आधुनिकलक्ष्येषु तेषां विषयाणामनुपलम्भात्।

### सङ्गीतरत्नावलिः

सोमराजदेवकृता। अत्राष्टावध्यायाः। क्री 1200.

### सङ्गीतवल्ली

जगद्धरेण सङ्गीतसर्वस्वे स्मृतम्। अद्यापि नोपलब्धोऽयं ग्रन्थः।

### सङ्गीतविद्याविनोदः

एकस्त्रोकस्य विवरणरूपोऽयं ग्रन्थः। नाट्यसङ्गीतविषयाः सङ्ग्रहेण प्रतिपाद्यन्ते। अस्य कर्ता न ज्ञायते। ग्रन्थान्ते अनूपसिंहनामस्मृतम्।

### सङ्गीतशिरोमणिः

पण्डितमण्डली विरचितः। क्री. 1420.

### सङ्गीतशेखरः

अस्य कर्ता न ज्ञायते। वङ्गदेशेऽयं ग्रन्थो वर्तते। युद्धसंक्षोभात्र तस्यादर्शः संपादितः। जगद्धरेण सङ्गीतसर्वस्वे शृङ्गारशेखर उदाहृतः।

### सङ्गीतसमयसारः

पार्श्वदेवकृतः। दशपरिच्छेदात्मकः। कालः क्रै. प. 1300 काले स्यादित्यूह्यते। "अस्माद्ग्रन्थाद्बहवो विषयास्सङ्गीतसुधायां प्रबन्धाध्याये संसूचिताः।

### सङ्गीतसरणिः

पुरुषोत्तममिश्रपुत्रेण रचितोऽयं ग्रन्थः। पुरुषोत्तमः किमिडिमण्डलेशस्य नारायणदेवस्य सभायां आसीत् इति सङ्गीतनारायणाद्विज्ञायते। ग्रन्थेऽस्तिन् पञ्चपरिछेदाः। समीचीनो विषयः। 1600 कालीनः।

### सङ्गीतसर्वस्वम्

जगद्धरकृतम्। अस्मिन्ग्रन्थे सुङ्गीतवल्ली, सङ्गीतशेखर, नाट्यलोचन, रत्नकोशं, नाट्यदर्पणादीनां प्रशंसाऽस्ति।

### सङ्गीतसारः

एवन्नामानः ग्रन्थाः पञ्च विद्यन्ते। एको विद्यारण्यकृतः। स नोपलभ्यते। रघुनाथेनस्मृतः। अन्यः सङ्गीतविद्याविनोदनाम्नो ग्रन्थस्य पूर्वभाग एव। उत्तरभागे अनूपसिंहस्य नामोच्चारणात् पूर्वभागोऽपि 1600 कालात्पूर्वं रचित इति ज्ञायते। अपरः कर्तृनामहीनं एव अस्मिन्प्रधानतया ध्रुवादिप्रबन्धविचारः कृतः। तत्र रामार्चनचन्द्रिका, महेशस्यलक्ष्मीस्तोत्रं, अद्भुतरामायणम्, सङ्गीतदामोदरः, रायमुकुटः, राघवरायकृत नाट्यरत्नाकरः, तुम्बुरुनाटकं, नारदनाटकं, इत्यादिग्रन्थाः निर्दिष्टाः। कालः1550

परःस्वल्पभागी कर्तृनिर्देशशून्यः। पात्रलक्षणगीतगुणनादरागगमक प्रशंसध्रुवाप्रबन्धादयो अत्र उक्ताः। ग्रन्थस्य लेखकः विक्रमशके 1563 वर्षे श्रीकर्णकुण्डलनगरीमध्ये लिलेखेति; वक्ति। अन्यो न ज्ञातः।

### सङ्गीतसारकलिका

मोक्षदेवकृता। गीतवाद्यनृत्तरूपाः परिच्छेदाः सन्ति। अत्र भरतटीका, विशाखिल कश्यपनन्दीश धनञ्जयकम्बलाश्वतर तुम्बुरुसोमेश्वरप्रभृतीनां नामानि सूचितानि। प्रायशः सङ्गीतरत्नाकरस्यायं ग्रन्थः प्रतिविम्बमेव। कालः क्रै. प. 1300.

### सङ्गीतसारदुग्धाब्धिः

रङ्गनाथकृतः। प्राचीनमतानां सारोऽत्र निरूप्यते। शतद्वयवर्षपूर्वकालीनः।

### सङ्गीतसारोद्धारः

कीकराजकृतः। पुण्यनगरस्य भण्डारकर कोशालये वर्तते। तुलजा महाराजकृतः। कालः 1729—1735।

### सङ्गीतसारार्णवः

गौरीसूनुकृतः। अत्र गीततालनृत्तवाद्यप्रकरणानि अष्टशत्युत्तरसहस्रग्रन्थपरिमिते उक्तानि। कालः क्रै. प. 1600 स्यात्।

### सङ्गीतसुधा

तञ्जापुराधीश रघुनाथकृता। कालः 1600—30

### सङ्गीतानुगः—मार्दङ्गिकः

शुद्धानां सालगानां च गीतानामक्षराणि तु।
कठिनानि च हृद्यानि समानि विषमाणि च ॥
मन्द्रं मध्यं तथा तारं प्रौढं चापि मनोहरम्।
नादं सम्यङ्मर्दलस्य वादनादनुगच्छति।
सङ्गीतानुग इत्युक्तो विदुषा वेमभूभुजा ॥

वेमः

### सङ्गीतसुधाकरः

सिंगभूपालकृतः। सङ्गीतरत्नाकरव्याख्या। अयं ग्रन्थः लघुरपि अर्थतोगुरुः। अयं ग्रन्थः केषुचिदादर्शेषु नर्मदानदीतीरवास्तव्येन गोपीनाथेन कृत इति दृश्यते। को वा गोपीनाथ इति न ज्ञायते। सिंगभूपालस्थाने पण्डितो भूत्वा अस्य ग्रन्थस्य निर्माणे सहायं कृतवानिति केचिदभिप्रयन्ति।

हरिपालकृतः। अस्माद्ग्रन्थाद्बहवः श्लोकाः भरतार्णवे उदाहृताः। तेषु हरिप्रियः, विचारचतुर्मुखः इत्यादिनामानः सन्ति। तस्माद्भरतार्णवग्रन्थो हरिपालग्रन्थानन्तरं केनचिद्रचितः स्यात्।

### सङ्गीतसूर्योदयः

लक्ष्मणाचार्यकृतः। कृष्णदेवरायस्यास्थानसङ्गीतविद्वान्। ग्रन्थारम्भे कृष्णरायविजयप्रशस्तिरस्ति। नूतनतालानां स्वरनामकल्पितानां निर्माता लक्ष्मणः। (1520 कालः) करणनिरूपण प्रकरणे गङ्गावतरणमिति करणस्य नाम्नः प्रतिनाम कृष्णावतरणमिति कल्पितवान्।

### सङ्गीतार्णवः

भोजदेवकृत इति श्रूयते। गीतार्णवाख्यः अन्यो ग्रन्थः भगवद्गीताविवरणविषयो दृश्यते। सङ्गीतार्णवादच्युतरायात्ताललक्षणे बहवः श्लोका उदाहृताः। ते भोजादर्वाचीना इति विषयादवगम्यते।

### सङ्गीतालोकः

विश्वप्रदीपे सङ्गीतभागस्य नाम, भुवनन्दकृतः।

### सङ्गीतोत्पत्तिः

श्रुतिस्मृत्यादिसाहित्यनानाशास्त्रविदोऽपि च।
सङ्गीतं ये न जानन्ति ते द्विपादमृगाः स्मृताः ॥
त्रिवर्गफलदास्सर्वे दानयज्ञादिसत्क्रियाः।
एकं सङ्गीतविज्ञानं चतुर्वर्गफलप्रदम् ॥
पुरा चतुर्णां वेदानां सारमाकृष्य पद्मभूः।
तदन्ते पञ्चमं वेदं सङ्गीतं समकल्पयत् ॥
ऋग्भ्यः पाठ्यमभूद्गीतं सामभ्यस्समपद्यत।
यजुर्भ्योऽभिनया जाता रसाश्चाथर्वणाः स्मृताः ॥

पुरुषोत्तम

### सङ्गीतोपनिषत्सारः

सुधाकलशकृतः। कालः क्रै. प. 1340.

### सङ्गीतोपनिषत्सारोद्धारः

सुधाकलशकृतः। कालः क्रै. प. 1340। अत्र ग्रन्थे, भोज, तालरत्नाकर, भिमतगौरीमतविश्वावसु तुम्बुरु वसिष्ठपुत्र पालक भूपाल नामानि सूचितानि। विश्वावसोः शिष्योऽर्जुन इत्युच्यते भवेत्सभूपाल इति परिच्छेदान्त श्लोकस्य भवेशभूपाल इति पाठान्तरं लभ्यते। भवेशस्तु मिथिलेश्वरः। तस्य दानशासनं क्रै. प. 1330 काले लिखितं मुद्रितमस्ति। तस्मादयं सुधाकलशो भवेशास्थानकविरित्यपि कैश्चिदूह्यते।

### सङ्ग्रहः—गर्भसन्ध्यङ्गम्

सामदानादिसंपन्नः सङ्ग्रहः परिकीर्तितः। भरतः

सान्त्वसङ्केतादिवार्ताः श्रुत्वा राज्ञाविदूषकाय कटकस्य दानं रत्नावल्यां। अभिनवः

सामदाने भेददण्डयोरुपलक्षणम्। आदिशब्देन मायेन्द्रजालादि सङ्ग्रहः। रामचन्द्रः

सङ्ग्रहः सामदानार्थसंयोगः प्रकीर्तितः। सिंगः

### सङ्ग्रहचूडामणिकारमते श्रुतीसारीव्यवस्था

| प्रथमायां सार्यो | श्रुतिः | | स्वरा |
|---|---|---|---|
| ,, | तीव्रा | कुमुद्वती | प्रतिशुद्धरिः शुद्धरिः |
| २ | मन्दा | छन्दोवती | प्रतिचतुश्रुत्यृषभः |
| | | | चतुश्रुत्यृषभः |
| | | | प्रतिशुद्धगान्धारः |
| | | | शुद्धगान्धारः |
| ३ | दयावती | रञ्जनी | प्रतिषड्डिः षड्डिः |
| | | | प्रतिसाधा – गः |
| | | | साधा – गः |

| प्रथमायां सार्यां | श्रुतिः | | स्वरा |
|---|---|---|---|
| ४ | रक्तिका | रौद्री | प्रत्यन्तरगः अन्तरगः |
| ५ | क्रोधा | वज्रिका | प्रतिशुद्धमः शुद्धमः |
| ६ | प्रसारणी | प्रीतिः | प्रतिमः प्रत्यन्तरमः |
| ७ | शान्ता | मार्जनी | पञ्चमः |
| ८ | क्षितिः | रक्ता | प्रतिशु-धः शुद्धधः |
| ९ | सन्दीपिनी | आलापिनी | प्रति चयधः चतुशुधः<br>प्रतिशु.निः शु.निः |
| १० | मदन्ती | रोहिणी | प्रतिषट् धः षट्धः<br>प्रति.कैनिः कैनिः |
| ११ | रम्या | उग्रा | प्रतिकाकलिनिः<br>काकलिनिः<br>शुद्धस्वरस्थानानि। |
| १२ | उद्दीपिनी | क्षोभिणी | तारसः |

| रि | ग | म | प | ध | नि | स |
|---|---|---|---|---|---|---|
| 1, 2, 3 | , 3, 4 | 5, 6 | 7 | 8,9,10 | 9,10,11 | 12 |

| रि | ग | म | प | ध | नि | स |
|---|---|---|---|---|---|---|
| 1 | 2 | 5 | 7 | 8 | 9 | आधार स्वरः |

## सङ्ग्रहचूडामणौ स्वरव्यवस्था

ऋषभष्षड्विधः। यथा—शुद्धर्षभः, प्रतिशुद्धर्षभः, चतुश्श्रुत्यृषभः, प्रतिचतुश्श्रुत्यृषभः, षट्छ्रुत्यृषभः, प्रतिषट्छ्रुत्यृषभश्चेति।

गान्धारष्षड्विधः। यथा—शुद्धः, प्रतिशुद्धः, साधारणः, प्रतिसाधारणः, अन्तरः, प्रत्यन्तरश्चेति।

मध्यमः शुद्धमध्यमः, प्रतिशुद्धमध्यमः, प्रत्यन्तरमध्यमः, प्रतिमध्यमः इति चतुर्विधः। पञ्चम एक एव।

धैवतष्षड्विधः शुद्धप्रतिशुद्ध चतुश्श्रुतिक, प्रतिचतुश्श्रुतिक-षट्छ्रुतिक, प्रतिषट्छ्रुतिकभेदात्। निषादोऽपि शुद्ध, प्रतिशुद्ध, कैशिक, प्रतिकैशिक, काकली, प्रतिकाकली भेदात् षड्विधः।

सङ्गमः—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि म ध नि प स.

(अव) स नि ध ग रि स.

मञ्ज

संघट्टिता—देशीचारी

स्थान विषमसूच्याख्यमास्थायाङ्घ्री समुत्प्लुतौ।
पतन्तौ घट्टितौ यत्र मिथस्संघट्टिता च सा॥

वेमः

सङ्घातः—श्रव्यकाव्यम्

एकप्रघट्टके यस्त्वेक कृतो भवति सूक्तिसमुदायः।
सङ्घातस्सनिगदितो वृन्दावनमेघदूतादि॥

भोजः

सङ्घात्यका—सात्वत्यङ्गम्

मन्त्रार्थवाक्यशक्त्या दैववशादात्मदोषयोगाद्वा॥
सङ्घातभेदजननः तद्ज्ञैस्सङ्घात्यको ज्ञेयः॥

(अथवा)

बहुकूटसंश्रयाणां परोपघाकाशयप्रयुक्तानाम्।
कूटानां सङ्घातो विज्ञेयः कूटसङ्घात्यः॥

भरतः

सङ्घातस्य भेदं जनयति यो युधि स सङ्घात्यकः। सम्यक् घात्यः शत्रुवर्गो येन सङ्घातकविषयाद्वा सङ्घात्यकः सङ्घातभेदश्च परेण सामाद्युपायबलेन वा क्रियते। यथा—भीमो युधिष्ठिरेण साम्ना भेदितः। दैवात्संपद्यते यथा-द्रोणेनोक्तं सुते शास्त्रं त्यक्ष्यामीति। आत्मदोषे वा स्वकपटलक्षणेन यथा—कर्णकलहेऽश्वत्थामा शस्त्रत्यागं करोति। अत्र सत्त्वाधिक्यमपराद्ध्यति।

अभिनवः

मन्त्रार्थकार्यसंसक्तो दोषाद्दैवस्य चात्मनः।
सङ्घातभेदजननः साङ्घात्यः कूट उच्यते॥

यथा—रामं वञ्चयितुं जालिनी नाम राक्षसी सीताकृतिमनुकरोति।

सागरः

सञ्चः

स्कन्धकूर्परयोस्तद्वदङ्गुष्ठमणिबन्धयोः।
वामस्य चरणस्यापि कम्पः सञ्चोऽभिधीयते॥

श्रेष्ठः पाटहिकस्सञ्चादङ्गुष्ठमणिबन्धयोः।
स्कन्धकूर्परसञ्चात्तु नीचः पटहवादकः॥
वरो हौडुक्किकोऽङ्गुष्ठकूर्परस्कन्धसञ्चतः।
सञ्चाभ्यां मणिबन्धोत्थकौर्पराभ्यां तु मध्यमः।
असौ वामाङ्घ्रिसञ्चेन वादनादधमो भवेत्॥

शार्ङ्गदेवः

स्कन्धादिकम्पः सञ्चः स्यात्।

कुम्भः

—हस्तपाटः

सञ्चाख्योऽलगपाटः स्यादङ्गल्यग्राधेताडनात् ।
धरकरधरकर गिगणंदिगणंदि ।

वेमः

—देशीतालः

सञ्चो द्रुद्रुलैः समाख्यातः ।
(सञ्चश्चिलैः— इति शुद्धपाठः स्यात्) ॥। मदनः

सञ्चारी—वर्णः

आरोहमवरोहं च स्वराः प्राप्ताः परस्परम् ।
सञ्चारिणः प्रगीयन्ते तद्द्गानक्रियेदृशाम् ॥
सञ्चारी वर्ण इति ।

पण्डितमण्डली

ईदृशां — मूर्छनाक्रमवर्तिनाम् ।

सञ्चारिका

नानाकक्ष्यादि चारिण्यः तथोपवनसञ्चराः ।
देवतायतनक्रीडा प्रासादप्रतिसञ्चराः ॥
यामेषु च नियुक्तायास्तथा च विविधाश्रये ।
सञ्चारिकास्तु ता ज्ञेया नाट्यज्ञैरुपचारतः ॥

भरतः

सञ्चारिता—देशीचारी

तलसञ्चरपादेन यत्र तिर्यक्प्रसर्पता ।
अपरं कुञ्चितं शश्वदुत्क्षिप्योत्क्षिप्य योजयेत् ।
सैषा सञ्चारिता चारी कीर्तिता नृत्तकोविदैः ॥

वेम

सञ्जीवः—(नेपथ्यम्)

देवदानवगन्धर्वयक्षराक्षसपन्नगाः ।
प्राणिसंज्ञाः स्मृताह्येते जीवबन्धाश्च येऽपरे ॥
शैलप्रासादयन्त्राणि चर्मवर्मध्वजास्तथा ।
नानाप्रहरणाद्यश्च तेऽप्राणिन इति स्मृताः ।
अथवा कारणेपेता भवन्त्येते शरीरिणः ॥

भरतः

सञ्जीविनी—मेलरागः (कीरवाणीमेलजन्यः)

(आ) स ग रि ग म प ध नि स ·
(अव) स नि ध प म ग रि स .

मञ्ज

सट्टकम्—रूपकम्

तच नाटिकाप्रतिरूपकं कैशीकीभारतीप्रधानं, रौद्रवीरभयानकबीभत्सं, अवमर्शसन्धिशून्यं । यथा—कर्पूरमञ्जरी। अन्तर्यवनिकान्तं यथाङ्के यवनिकया अवच्छेदा भवन्ति तथात्रापि शौरसेनी प्राच्या महाराष्ट्रीयुक्तं स्त्रीवद्राज्ञोऽपि प्राकृतपाठः । यद्यपि बादरायणप्रभृतिभिरुक्तं राज्ञः संस्कृतपाठः कार्यात्प्राकृतपाठः । रूपकमेवेदं कार्यमिति राज्ञापि प्राकृतपाठः कर्तव्यः ।

सागरनन्दी

सैव प्रवेशकेनापि विष्कंभेन विना कृतम् ।
अङ्कस्थानीयविन्यस्तचतुर्यवनिकान्तरम् ।
प्रकृष्टप्राकृतमयं सट्टकं नामतो भवेत् ॥
सैवेति । नाटिकेत्यर्थः ।

शारदातनयः

सट्टकं नाटिकावत्स्यात्किन्त्वेतत्प्राकृतैः कृतम् ।
प्रवेशकविहीनं च शृङ्गाराद्भुतभूषितम् ।
चतुर्यवनिकं कार्यं वयस्यन्ते प्रकीर्तिता ॥

अमृतानन्दी

सट्टकं नाटिकाभेदः कैशिकीभारतीयुतम् ।
सर्वसन्धिविहीनं च दीनं रौद्ररसादिकम् ॥
शूरसेनमहाराष्ट्रप्राच्यभाषादिकल्पितम् ।
अङ्कस्थानीयविच्छेदचतुर्यवनिकान्तरम् ॥
न वदेत्प्राकृतीं भाषां राजेति कतिचिज्जगुः ।
मागध्या शौरसेन्या च वदेद्राजेति केचन ।
एषां वा प्राकृतीं मन्ये यथा कर्पूरमञ्जरी ॥

कविकामधेनुः

शाटकमित्यप्युच्यते ।
चतुर्यवनिकायुक्तं शृङ्गारेणाद्भुतेन च ।
प्रवेशकविहीनं च प्राकृतैरपि निर्मितम् ॥
अवमर्शविहीनं च शाटकं कथितं बुधैः ।
प्राकृतश्लोकमयत्वाच्छाटकम् । यमनिकाः परिच्छेदविशेषाः ।
कर्पूरमञ्जरीचात्रदृष्टान्तेन तु कीर्तिता ।
शाटकं नाटिकावत्स्यादित्युक्तं भरतेन च ॥
शाटः स्यादिह नाटिका समगुणः शृङ्गारभेदोज्वली,
रम्यप्राकृतभाषया विरचितो नित्यं चतुस्संधिकः ।
किन्त्वेकोऽत्र विशेष एव भवति प्रायेण विष्कम्भको ।
नो वा स्यादिह हि प्रवेशकविधिः कार्यो मनागद्भुतः ।

शुभङ्करः

सन्तोषातिशयः—शिल्पकाङ्गम्

शपे सत्येन ते देवि क्षिप्रमेष्यति राघवः ।
चमूं प्रकर्षन् जवनीमित्यादि हनुमद्वचः ।
सन्तोषातिशयो हर्षाद्वचापारो निरूपाभरः ॥
इदमङ्गं प्रहर्ष इत्याह सागरः ।

शारदातनयः

सन्तापः—शिल्पकाङ्गम्

विशेषेऽनुशयोक्तिर्यः सन्ताप इति कथ्यते ।
तं विना कैकयी पुत्रमिति रामेण भाषितम् ॥

शारदातनयः

अनुशयविशेषस्तापः। यथा—कुलपत्यङ्के सुभूर्यास्यतीति।
कुलपत्यङ्कः – कृत्यारावणे प्रथमाङ्कः। सागरः

सदानन्दः—(वर्णालङ्कारः)

सरिगम, (१) रिगमप, (२) गमपध, (३) मपधन, (४) पधनिस, (५) प्रतापसिंहः

सत्यकौशिकः—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म प नि स.
(अव) स नि ध प म ध म ग रि स·

मञ्ज

सत्वमञ्जरी—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म प ध स.
(अव) स नि ध प म नि ध म रि स.

मञ्ज

सत्कलितम्—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स ग म प नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

सदृशोपमा—अलङ्कारः

(ल-म्) यत्त्वयाद्यकृतं कर्म परचित्तानुरोधिना ।
सदृशं तत्तवैव स्यादिति मानुषकर्मणः ॥

भरतः

सन्दष्टः—वंशे फूत्कारदोषः

जलपशब्द इवाभाति योऽसौ सन्दष्ट उच्यते ।

कुम्भः

सन्दष्टयमकम्—अलङ्कारः

आदौ द्वे यत्र पादे तु भवेतामक्षरे समे ।
सन्दष्टयमकं नाम

(ल-म्) पश्य पश्य रमणस्य मे गुणान् ।

भरतः

सन्दष्टकम्—शृङ्गारचेष्टा

दन्तैर्ग्रहणं सन्दष्टकम् । भोजः

सन्दष्टः—अधरः

दन्तैर्दष्टस्तु सन्दष्टः सक्रोधे रतिसंभ्रमे ।

विप्रदासः

सन्दंशः—हस्तः

अरालाङ्गुष्ठतर्जन्यौ लग्नाग्रे निम्नतां गतः ।
किञ्चिच्चेत्तलमध्यः स्यात्तदा संदंश उच्यते ॥
स त्रेधा स्यादग्रजश्च मुखजः पार्श्वजः क्रमात् ।
प्राङ्मुखः सम्मुखः पार्श्वमुख इत्यस्य लक्षणम् ॥
कण्टकोद्धरणे सूक्ष्मकुसुमावचयादिषु ।
प्रयोक्तव्योऽग्रसन्दंशो धिगित्युक्तौ तु रोषतः ॥
वृन्तात्पुष्पोद्धृतौ वर्तिशलाकाञ्जनपूरणे ।
कर्तव्यो मुखसन्दंशः सन्दंशः पार्श्वजः पुनः ॥
गुणनिक्षेपणे मुक्ताफलानां वेधने तथा ।
निरूपणे च तत्वस्य सद्वितीयोऽथ भाषणे ॥
जरोषे वामहस्तेन किञ्चिदग्रविवर्तनात् ।
अलक्तकादिनिष्पेषेऽप्येष श्रीशार्ङ्गिणोदितः ॥

शार्ङ्गः

सन्दानितम्—मात्रावृत्तम्

द्वे गाथे विरहाङ्कः

सन्दीपनी—श्रुतिः

पञ्चमस्य तृतीया श्रुतिः ।

सन्धिः

अथैतदुपायैः-कथाशरीरभागानां मुखादयः पञ्चव्यपदेशा भवन्ति। मुखं प्रतिमुखं गर्भो विमर्शो निर्वहणमिति । ते च बीजबिन्द्वादीनां अर्थप्रकृतीनां सन्धानात्सन्धय उच्यन्ते ।

भोजः

—गीताङ्गम्

माषघातस्यार्धमात्रया सन्धीयत इति सन्धिः ।
त्र्यश्रचतुरश्रतालाभ्यां गणैः पञ्चभिरष्टभिर्वा भवति ।

नान्यः

—निर्वहणसन्ध्यङ्गम्

बीजप्रापणमेवात्र सन्धिरित्यभिधीयते ।

सर्वेश्वरः

मुखबीजोपगमनं सन्धिः । भरतः

यथा—रत्नावल्यां बाभ्रव्य सदृशीयं इत्यादिवसुभूतिवाक्येन मुखे यदुक्तं तदिह निकटीभूत सन्धानं सन्धिः।

अभिनवः

मुखसंधौ न्यस्तस्य प्रारम्भावस्थाविषयीकृतस्य बीजस्य फलागमावस्थायां ढौकनं सन्धिः।

रामचन्द्रः

**सन्धिः**

नाटके पञ्चसन्धयः, मुखप्रतिमुखगर्भविमर्शनिर्वहणाख्याः।

**सन्धितः**—वादनम् (दक्षिणहस्तव्यापारः)

मध्यमानामिकाभ्यां तु त्रीहि(?)र्घातोऽत्र संधितः।

शार्ङ्गः

—वीणायां दक्षिणहस्तव्यापारः

मध्यमानामिके तन्त्री बहिर्येद्याहतः क्वचित्।
यदा वैदिकब्रह्मदेशः सन्धितं वक्ति भूपतिः॥

कुम्भः

**सन्धिप्रछादनः**—वर्णालङ्कारः (अवरोही)

नी ध प पा म ग गा रि स.

पण्डितमण्डली

**सन्धिप्रच्छादनः**—वर्णालङ्कारः

त्रिस्वरा प्रथमा यत्र द्वे कले त्रिस्वरे परे।
पूर्वपूर्वान्तिमा चेत्सः सन्धिप्रच्छादनस्त्वयम्॥
सरिगा, गमपा, पधनी

पण्डितमण्डली

**सन्धिबन्धः**—श्रव्यकाव्यम्

योऽपभ्रंशनिबन्धो मात्राछन्दोभिरभिमतोऽल्पधियाम्।
वाच्यरस सन्धिबन्धः चतुर्मुखोक्ताब्धिमथनादिः॥

सन्धिरिति परिच्छेदस्य नाम। चतुर्मुखकृतपद्यानि स्वयम्भुना प्राकृतछन्दस्युदाहृतानि।

भोजः

**सन्धिमः**—पुस्तः

किलिञ्जचर्मवस्त्राद्यैः यद्रूपं क्रियते बुधैः।
सन्धिमो नाम विज्ञेयः पुस्तो नाटकसंश्रयः॥

भरतः

किलिञ्जेति। भूर्जवेणुदलादि।

अभिनवः

**सन्ध्यङ्गानि**

पञ्चानां सन्धीनां चतुष्षष्टिरङ्गानि।
इष्टस्यार्थस्य रचना वृत्तान्तस्यानुपक्षयः।
रागप्राप्तिः प्रयोगस्य गुह्यानां च निगूहनम्॥
आश्चर्यवदभिख्यानं प्रकाश्यानां प्रकाशनम्।
अङ्गानां षड्विधं ह्येतदृष्टं शास्त्रे प्रयोजनम्॥
तस्मात्सन्धिप्रदेशेषु यथायोगं यथारसम्।
कविनाङ्गानि कार्याणि सम्यक्तानि निबोधत॥

भरतः

**मुखसन्धौ**

उपक्षेपः परिकरः परिन्यासो विलोभनम्।
युक्तिः प्राप्तिस्समाधानं विधानं परिभावना।
उद्भेदः करणं भेदः द्वादशाङ्गानि॥

**प्रतिमुखसन्धौ**

विलासः परिसर्पः विधूतं तापनं नर्म नर्मद्युति प्रगयणं विरोधः पर्युपासनं पुष्पं वज्रं उपन्यासः वर्णसंहारः एतानि त्रयोदशाङ्गानि।

**गर्भसन्धौ**

अभूताहरणं मार्गः रूपं उदाहरणं क्रमः सङ्ग्रहः अनुमानं प्रार्थना आक्षिप्तिः तोटकं अधिबलं उद्वेगः विद्रवः एतानि त्रयोदशाङ्गानि।

**विमर्शसन्धौ**

अपवादः संफेटः विद्रवः शक्तिः व्यवसायः प्रसङ्गः द्युतिः श्रमः खेदः प्रतिषेधः निरोधनं आदानं छादनं प्ररोचना एतानि त्रयोदशाङ्गानि।

**निर्वहणसन्धौ**

सन्धिनिरोधः ग्रथनं निर्णयः परिभाषणं धृतिः प्रसारः आनन्दः समयः उपगूहनं भाषणं पूर्ववाक्यं काव्यसंहारः प्रशस्तिः एतानि चतुर्दशाङ्गानि।

एतेष्वङ्गेषु केषांचिन्नामलक्षणयोर्भेदा दृश्यन्ते। क्रमविपर्यासोऽप्यङ्गानां दृश्यन्ते। यथा—रामचन्द्रेण षष्ठाङ्के विपदां शमनमित्युच्यते। एकादशाङ्के गूढभेदनमिति च। प्रतिमुखसन्धौ द्वितीयतृतीयचतुर्थेष्वङ्गेषु अरतिः रोधः सान्त्वनमिति। त्रयोदशाङ्गेऽनुसर्पणमिति चोक्तम्। गर्भसन्धौ द्वितीयचतुर्थाष्टमदशमेष्वङ्गेषु चित्रार्थं वचः अभ्यर्थनासंभ्रमः कपटस्यान्यथाभावः इति पठितम्। विमर्शसन्धौ द्रवाप्रस्तुतार्थवचनावमानछलनतर्जनाधर्षणबन्धविचलनाज्ञासत्कारादेशनानि पठितानि। निर्वहणसन्धौ परिभाषणोपास्तिकृतिपूर्वभावः—इति च पठितम्।

सर्वेश्वरेण—तापनस्थाने शमः, प्रार्थनास्थाने संभ्रमः व्यवसायस्थाने विचलनं, निरोधस्थाने प्रथा, कार्यदृष्टिरद्भुतप्राप्तिः कृतिः इत्युक्तम्।

सिङ्गभूपालेन—प्रगयणस्थाने प्रगमनं, विद्रवस्थाने संभ्रमम, पूर्ववाक्यस्थाने पूर्वभावः, काव्यसंहारस्थाने उपसंहारः—इत्युक्तम्।

रूपगोस्वामी तु चतुर्थपञ्चमसन्ध्यो रङ्गेषु नामभेदान् बहून् वक्ति। निर्वचनस्थलेषूच्यन्ते तानि।

**सन्ध्यन्तम्**

सन्धीनामेषैकविंशति प्रदेशा अर्थवशाद्भवन्ति। प्रयोजनवशाद्यावन्त एते प्रदेष्टुं शक्यन्ते तावन्तस्सन्धिषु प्रदर्शयितव्याः।

सागरः

सन्ध्यन्तराणि सन्ध्यङ्गेष्वेवान्तर्भूतानीति प्रत्येकं न लक्षितानि बहुभिः।

**सन्ध्या—सङ्गीतशृङ्गाराङ्गम्**

अहर्निशावयोः सन्धिः सन्ध्या।

भोजः

**सन्नम्**

सौष्ठवशब्दनिर्वचनावसरे द्रष्टव्यम्।

**सन्नतम्—करणम्**

हरिणप्लुतयोत्प्लुत्य पादयोः स्वस्तिकं पुनः।
यत्र कुर्वीत हस्तौ तु डोलौ तत्सन्नतं मतम्॥
एतन्नोचस्वभावानामुपसर्पणगोचरम्।
भट्टतण्डुरिति ब्रूते पादवत्स्वस्तिकौ करौ।
देहनत्या भुवं प्राप्ताविति कीर्तिधरोऽभ्यधात्॥

ज्यायनः

**सन्नितालः—तालः**

द्रुतत्रय लघुश्चैको द्वद्वयं च लवुद्वयम्।
सन्नितालो क्रमाद्ज्ञेयं सर्वनृत्येषु सम्मतम्॥
०००।००॥ दामोदरः

**सन्नितालोड्डुपम्—देशीनृत्तम्**

अनेन सन्नितालेन सन्नितालोड्डुपं भवेत्।

वेदः

**सन्निपातः—क्रिया (तालाङ्गम्)**

क्रियाशब्दे द्रष्टव्यम्।

**—तालक्रिया**

उभयोर्हस्तयोः पातः सन्निपात इतीरितः।

वेमः

**सन्निविष्टा—तन्त्रीसारणा**

सङ्गं तन्त्र्याः परित्यज्य संसर्पेद्यत्र सारणा।
सन्निविष्टाभिधाना सा सारणा कथिता बुधैः॥

पार्श्वदेवः

**—वीणासारणा**

तन्त्र्यन्तरेण स्पृष्टे च तन्त्री यत्रापसर्पति।
सा सन्निविष्टा भणिता सारणा कुम्भभूभुजा॥

कुम्भः

**सन्निवृत्तप्रवृत्तकः—वर्णालङ्कारः (सञ्चारी)**

गत्वांशं पञ्चमं भूयो द्वितीयान्तं निवर्तयेत्।
क्रमेणैवं भवन्त्यन्याः सन्निवृत्तप्रवर्तके॥

सपामगरी, रिधापमगा, गनीधपमा।

मोक्षदेवः

**सन्यासः**

सन्यासो नाम गीताद्यखण्डभागस्समाप्तिकृत्।

तुलजः

**सन्यासविन्यासान्तर्भावः**

एतौ सन्यासविन्यासौ भरतादिभिः।
अन्तर्भूतावपन्यासस्वर एवेति कीर्तितौ।

तुलजः

**सप्तकवर्धनी—(सुवर्णाङ्गीमेलजन्यः)**

(आ) स रि ग रि म प ध प नि ध नि प ध नि स.
(अव) स नि ध प म ग रि स.

मञ

**सप्तगीतानि**

यानि प्रकरणाख्यानि तालैस्तैस्तु पञ्चभिः।
गीयन्ते तानि गीतानि क्रमादाचक्ष्महे वयम्॥
आदौ तु मद्रकं ज्ञेयं ततः स्यादपरान्तकम्।
उल्लोप्यं प्रकरी चाथ भवेदोवेणकं ततः॥
रोविन्दकं चोत्तरं च गीतकानीति सप्त च।
छन्दकं तदनु ज्ञेयमासारितमतःपरम्।
वर्तमानकसंज्ञं स्यात्पाणिका तु ततःपरम्॥
ऋचो गाथाश्च सामानि गीतान्येतानि सप्त च।
युतान्येतानि सर्वाणि गीतान्याहुश्चतुर्दश॥
गीतान्येतानि सर्वाणि प्रशस्तानि शिवस्तुतौ।
विनियुक्तानि विधिना निश्श्रेयसफलाप्तये॥

वेमः

## सप्तगीतपादविभागः

षष्ट्यष्टगुणपर्यन्तं द्वात्रिंशच्चतुरादितः।
ऋग्गाथा च ब्रह्मगाथा कपालं तु त्रयोदश।
षण्णवतिपादं साम तदर्धेनापि च क्वचित्॥

नान्यः

## सप्तगीतोत्पत्तिः

ऋचो वै ब्रह्मणा गीता ब्रह्मणेऽभिहिताः किल।
दक्षेण पाणिकाश्चापि गाथा वै कश्यपेन च॥
मातृभिश्च कपालानि सामान्युक्तानि नन्दिना।
गीतकानि तु सप्तैव नारदेनोदितानि वै॥

गीतकानीति। मद्रकादिसप्त गीतानि। नान्यः

## सप्ततालप्रदीपिका

अर्जुनकृतोऽयं ग्रन्थः। ध्रुवादिसप्ततालस्वरूपं विराटपुत्र्यै न्यरूपयदर्जुनः।

## सप्तलोकद्युमणिः—कला

परस्परासक्ततलोन्नतेषु धृत्वेत्युरस्सप्तविलासकेषु।
योत्क्षिप्यपादौ खलु पृष्ठभागे ततो विधत्तेऽथ च तौ शिरोधः॥
नीत्वा ततः कांस्यमयं च ताभ्यां पात्रं सतोयं कुरुते च मूर्ध्नि।
पुरास्थितं यत्र च चक्रकानि विधुन्वती हस्तपदाम्बुजैश्च॥
निराश्रया नृत्यविधिप्रवीणा विलासयन्ती च दिशश्चतस्रः।
मुहुः स्वनन्ती मधुराक्षराणि सा सप्तलोकद्युमणिः प्रदिष्टा॥

नागमल्लः

## सबलम्

षोडशाङ्गुलविस्तीर्णं घण्डिकायुतमायुधम्।

## सभापतिः

सङ्गीतरीतिविदुषां भावभेदविचक्षणः।
कामशास्त्रकलावेदी धर्मसङ्ग्रहविग्रहः॥
कविः काव्यप्रबन्धानां निर्माता वित्तदानवित्।
सम्भूय स्वररूपश्च सभामध्यमुपस्थितः॥

देवेन्द्रः

## सभारचना

संसन्मध्यस्थितो भूपः शास्त्रसङ्गीतकोविदः।
दक्षिणेऽस्य प्रधानेन सहिता रसिकाः किल॥
पित्राद्या वामतः प्रोक्ताः पृष्ठतस्सुखसेवकाः।
ज्योतिर्विद्दक्षिणे भागे वामतो वैद्य इष्यते॥
अन्तःपुरं पृष्ठभागे केचित्स्युर्नृपपृष्ठतः।
विलासिनो विलासिन्यः पुरतःपार्श्वतोऽस्य च।
सरन्ध्रजवनीमध्यं घातयन्ती विभूषणैः॥

देवेन्द्रः

## सभाविग्रहः—मेलरागः (षड्विधमार्गिणीमेलजन्यः)

(आ) स रि म प ध नि स.
(अव) स नि ध प म ग रि स.

मत

## सभासाधारणः—चालकः

यत्र हस्तौ कटिन्यस्तौ युगपन्मण्डलक्रमात्।
अन्तर्बहिर्वा तिर्यञ्चौ ससाधारण उच्यते॥

वेदः

## समः—कपोलः

प्राकृतौ तु समानौ च शेषभावेषु निर्दिशेत्।

विप्रदासः

समस्स्वाभाविकश्शेषभावेषु विनियुज्यते।

ज्यायनः

## —गीतगुणः

उच्चनीचस्वरोपेतं न द्रुतं न विलम्बितम्।
पदतालैस्समं गीतं सममाचार्यवल्लभम्॥

सोमेश्वरः

## —दन्तः

समयुक्तं मनाक् श्लेषस्तस्यात्सहजकर्मणि।

अशोकः

## —देशीतालः

समताले लघुद्वन्द्वं विरामान्तं द्रुतद्वयम्।
पा पा मा मा ।।० ० जगदेकः

## —पादः

स्थितौ स्थितस्वभावेन समः पादः प्रकीर्तितः।
स्थिरः स्वभावाभिनये रेचकोऽसौ चलो मतः॥

अशोकः

## —मणिबन्धः

ऋजुस्समो धारणे तु पुस्तकस्य प्रनिग्रहे।

अशोकः

सरले च समः प्रोक्तो योज्यः पुस्तकधारणे।

सोमेश्वरः

—रसगतिः

समकालसमुत्पत्तेः समकालानुभूतिभिः ।
स्थायिनस्सात्विकादीनां साम्याच्च सम ईरितः ॥
शारदातनयः

—वर्णालङ्कारः

स्थानत्रयेऽपि सदृशध्वनिः सप्तस्वरोच्चारणः समः । एतदुक्तं भवति । यस्य यावत्यः श्रुतयः स्वस्थानत्रितयेषु तावच्छ्रुतिकमेव कार्याः ।

यथा—सरिगमपधनीति द्वयोर्द्वयोः स्वरयोः संवादिनोरुच्चारणात्समः ।

तद्यथा—सम सप रिध गनि एवं मध्यमग्रामेऽपि ।
मतङ्गः

—वर्णालङ्कारः (सञ्चारी)

तुल्यारोहावरोहाभ्यां समे चातुस्स्वरी कला ।
रघुनाथः पञ्चकला आह । मोक्षदेवः

समारोहावरोहेण कला चातुस्स्वरी भवेत् ।
समेऽष्टौ कलाः प्रोक्ताः क्रमादेकैकहानतः ॥

सरिगम, मगरिस, रिगमप, पमगरि, गमपध, धपमग, मपधनि, निधमप ।
जगद्धरः

—वाद्यालङ्कारः

दर्दरपणवमृदङ्गैः नानाकरणैस्समं समनुयातः ।
तालाङ्गवेणुयुक्तः स तु विज्ञेयः समो नाम ॥
तालाङ्गवेण्विति । तालनृत्तवंशवाद्यैः । भरतः

—वाद्यप्रबन्धः

नृत्तगीतानुगं वाद्यं यत्र स प्रोच्यते समः ।
वेमः

गीतनृत्तसमो माने प्रबन्धः प्रोच्यते समः ।
शार्ङ्गः

—वाद्यालङ्कारः

तालेनाङ्गेन वंशेन गीतायां समतास्त्विह ।
वाद्यजातिरसालङ्कारः सम इत्यभिशब्दितः ॥
अत्र साम्यं यदेतेषां तालादीनां परस्परम् ।
राजनारायणः प्राह तमलङ्कारगं समम् ॥
नान्यः

—श्वासः

— अन्वर्थः ।

समस्सहजकार्येषु । अशोकः

समकङ्कालः—देशीतालः

समकङ्कालताले तु गुरू द्वौ लघुरन्तिमः ।
ऽ ऽ । वेमः

गुरुयुग्मं लघुः समे ।
सोमराजः

समकर्तरी—मृदङ्गे हस्तपाठः

हस्तद्वयेन संहतः समकर्तरिसंज्ञकः ।
सोमेश्वरः

समकर्तर्यञ्चितम्—उत्प्लुतिकरणम्

समपादाञ्चितं कृत्वा परिवृत्य ततःपरम् ।
चरणौ स्वस्तिकीकृत्य तिष्ठेद्यदि महीतले ।
समकर्तर्यञ्चिताख्यं करणं तदुदाहृतम् ॥
वेमः

समकर्तरिलोहडी—उत्प्लुतिकरणम्

समाङ्घ्रिलोहडीं कृत्वा तदन्ते स्वस्तिकीकृतौ ।
चरणौ यत्र सा प्रोक्ता समकर्तरिलोहडी ॥
वेमः

समकर्तरी—हस्तपाटः

समघातेन कर्तर्योः करयोस्समकर्तरी ।
झिन्नकिट कनकिड किटझेंघों दिगीद तिरिटिकि ।
वेमः

समग्रम्—नाटकभेदः (सुबन्धूक्तः)

सर्ववृत्तिविनिष्पन्नं सर्वलक्षणसंयुतम् ।
समग्रं तत्प्रतिनिधि महानाटकमुच्यते ॥
सर्वेषां यत्र रूपाणि दृश्यन्ते विविधानि च ।
नाटकं नृत्तपाराख्यं तत्समग्रमितिस्मृतम् ॥
शारदातनयः

समग्रहः—हस्तपाटः

तलघातस्तदाङ्गुष्ठकरशाखाक्रमेण चेत् ।
लगन्ति सममानेन तदा पाटस्समग्रहः ॥
सोमेश्वरः

— तलद्वयेन करयोः समं पटहपुष्करम् ।
सन्ताड्यते यदि तदा हस्तपाटस्समग्रहः ॥
तकिट किटतक । वेमः

तले केचिदिह प्राहुरवुष्टाङ्गुलिवर्जिते ।

शार्ङ्गदेवः

पाटोऽसावष्टमात्राभिः शब्दैर्दहतरित्यपि ।
पुनरुक्तकुकुरिक्या च संयुतेऽसौ जमग्रहः ॥
दहतरि रकिर किर तकुतरि

पार्श्वदेवः

समनखः—हौडुक्किकहस्तपाटः

पाटाक्षराणां जातानामङ्गुलीनखताडनात् ।
समत्वं यत्र पाटोऽसौ भवेत्समनखाह्वयः ॥

रह रह तरकिट दिकिकिट धकाधिगितिकाधिगिटें हें टें हें सः

वेमः

समनखा—देशीचारी

यत्राङ्घ्रिस्समपादेन स्थित्वा तिर्यक्प्रसारितः ।
सैषा समनखा ज्ञेया चारी देशीविदां मता ।
प्रसर्पणं चेत्पर्यायादेषैव द्विसरा भवेत् ॥

वेमः

समनखम्—करणम्

श्लिष्टौ समनखौ पादौ करौ चापि प्रलम्बितौ ।
देहः स्वाभाविको यत्र भवेत्समनखं तु तत् ॥

भरतः

देहः स्वाभाविको यत्र पादौ समनखौ युतौ ।
लताहस्तौ समनखं स्यात्प्रवेशे तदादिमे ॥
चार्यां विद्धाञ्चितपदे पर्यायाद्रेचितः करः ।
यत्रोन्मत्तं तु तद्वर्वे सौभाग्यादिसमुद्भवे ॥

शार्ङ्गदेवः

समता—काव्यगुणः

नातिचूर्णपदैर्मुक्ता न च व्यर्थाभिधायिभिः।
दुर्बोधनैश्च न कृता समत्वात्समता मतः ॥

भरतः

अन्योन्यसदृशा यत्र तथाह्यन्योन्यभूषणा ।
अलङ्कारा गुणाश्चैव समाः स्युस्समता मता ॥

भरतपाठान्तरम्

शब्दानां समत्वात्समः । चूर्णपदैरसमासरचना यत्र सातिशया न भवति । अतिशयश्च प्रतियोगिनमपेक्षते इति दीर्घसमासो अत्यन्तसमासश्च विषमता । तद्विपर्ययेण समता । उपक्रान्तमार्गापरत्यागरूपा इत्युक्तं भवति । यथा गाहन्तां महिषा इत्यादि । सेयं समता शब्दगुणा । अर्थेऽपि समत्वात् किं तत्समत्वं आह व्यर्थाभिधायिभिरिति । निष्प्रयोजनमर्थं ये अभिधति शब्दानां न त्वेतदवैमल्यमिति प्रसादेन निरस्तम् । न हि सर्वथा निष्प्रयोजनता । अपि तु सदपि प्रयोजनं दुर्बोधं तदाह दुर्बोधनैरिति ।

मार्गाभेदः समता इति वामनः ।

अभिनवः

अवैषम्येण भणनं समता साभिधीयते ।
केवलैर्मृदुभिर्वर्णैः यदि वा केवलैः स्फुटैः ॥
न्यस्यमानैरवैषम्यं बन्धस्य समता भवेत् ।
प्रतिपादं प्रतिश्लोकमेकमार्गपरिग्रहः ।
दुर्बन्धो दुर्विभावश्च समतेति मतो गुणः ॥

साहित्यमीमांसा

शब्दार्थौ समतान्योन्यं सालङ्कारौ सुसंस्कृतौ ।

सर्वेश्वरः

पादौ समनखश्लिष्टौ स्यातां यत्र लताकरौ ।
स्वभावावस्थितं कार्यं तत्स्यात्समनखाभिधम् ॥
नृत्तप्रवेशनारम्भे विनियोगोऽस्य सम्मतः ।
जपादिविषये प्रोक्तो बिचारविमुखैः परैः ॥
प्रलम्बिताविति प्रोक्तौ भरतेनात्र यौ करौ ।
तौ डोलाविति मन्यन्ते यत्तत्केचिन्न साम्प्रतम् ।
शौकैकविषयावेताविति मन्यामहे वयम् ॥

ज्यायनः

"प्रयोज्यं प्रथमागमे" इति लक्ष्मणः ।

समन्मथा—दृष्टिः

सस्मितापाङ्गसञ्चारवती दृष्टिस्समन्मथा ।

शारदातनयः

समन्मथम्—दर्शनम्

यद्दर्शने विरक्तोऽपि क्षुभ्यत्येतत्समन्मथम् ।

शारदातनयः

समपादनिकुट्टिता—मुडुपचारी

निकुट्टितौ समौ पादौ स्थितावङ्गुलिपृष्ठयोः ।
यदा तदा मताध्वर्या समपादनिकुट्टिता ॥

अशोकः

समपादा—चारी

यत्र पादौ समनखौ निरन्तरकृताङ्गुली ।
स्थानकं समपादाख्यमास्थाय धरणौ क्रमात् ॥
संहत्य चरतस्सेयं समपादेति कथ्यते ।
अजानानो मुनिमतं केचिदुत्तानबुद्धयः ॥

एतस्यां समपादायां अभ्यधुः केवलां स्थितिम्।
तदङ्गानस्य सामान्यं यतस्तेषां मते पुनः॥
अस्याश्चर्यास्समनखकरणस्य च का भिधा।
चारीयोग्यत्वमात्रेण भेदश्चेदुभयं समम्॥
किंचात्र समपादायां क्रियायोगममन्यत।
पादैरिति प्रयुञ्जानो बहुत्वं भरतो मुनिः।
स्थित्वादौ समापादायां सर्वचारीं प्रयोजयेत्॥

वेमः

समपादाञ्चितम्—उत्प्लुतिकरणम्
कृत्वोर्ध्वास्यौ समौ पादौ स्कन्धेनाक्रम्य भूतलम्।
पादावुल्लालयन्यत्र परिवर्तनमाचरेत्।
तिर्यक्क्रमादिदं प्रोक्तं समपादाञ्चितं बुधैः॥

अशोकः

एवमेव कुम्भोपि निर्वक्ति। वेमजायनयोर्मते इदमेव स्कन्धान्ताञ्चितमिति दृश्यते।

वेमोक्तं लक्षणम्। यथा,
यत्राञ्चितं विधायैव स्कन्धेनैकेन भूतलम्।
आश्रितः परिवृत्याङ्घ्री तिर्यगुल्लालयेत्क्षणात्।
उक्तिष्टेयत्र तत्वज्ञैः स्कन्धान्ताञ्चितमुच्यते। इति

समपादम्—देशीस्थानम्
यत्र पादावृजू न्यस्तौ वितस्त्यन्तरमानतः।
स्वाभाविकं वपुश्चापि समपादं तदुच्यते॥

वेमः

—स्थानकम्
यन्मीलत्सरलीकृतोरुयुगलं युक्ताङ्घ्रियुग्मस्थिति-
प्रौढप्राञ्जलमूर्तितिर्यगपरा पूर्वास्यमालीढवम्।
यत्पूर्वाञ्चितचारुचापलतिकालीनाङ्गयष्टिस्थिरं
स्थानं तत्समपादसंज्ञकमिह प्राज्ञास्समाचक्षते॥

कोदण्डमण्डने

एकतालान्तरौ पादौ समं चाङ्गं च सौष्ठवम्।
समपादं च तद्ज्ञेयं चतुराननदैवतम्॥
एतच्चोर्ध्वनिरीक्षायां स्वीकारेणाशिषां तथा।
हरिस्तुति विमानस्थस्यन्दनस्थेषु युज्यते।
मथ्यमानां विहङ्गानां कन्यावरकुतूहले॥

कुम्भः

विमानस्यन्दनस्थानां व्रतलिङ्गस्थितेषु तत्।
विवाहे पक्षनिर्देशे विप्रमङ्गलवाचने।
अधिदैवतमेतस्य कीर्तितः कमलासनः॥

जायनः

समपाणिः—हस्तपाटः
उभयोः करयोर्यत्र साङ्गुष्ठाङ्गुलिसञ्चयः।
पीडयेत्पुष्करद्वन्द्वं समपाणिरसौ यथा॥

नकि गुण नकिगुण

वेमः

—हौडुक्किकहस्तपाटः
समपाणिरविश्रान्तविरलाङ्गुलिताडनात्।
ननगिन हगिदों गिथं गिनं हनहन झें नहझें करझें।

वेमः

समपाणिकः—हस्तपाटः
अङ्गुल्यः संहतास्सर्वाः साङ्गुष्ठाश्च प्रसारिताः।
यदा लगन्ति वेगेन तदासौ समपाणिकः॥

सोमेश्वरः

समप्रकोष्ठवलनम्—चालकः
समप्रकोष्ठौ युगपत्पुरोहस्तौ प्रसारितौ।
शोभातिशयसम्पन्नौ लुठनं कुरुतो यदि।
समप्रकोष्ठवलनं प्राह वेममहीपतिः॥

वेमः

समप्रहारः—पाटवाद्यम्
समप्रहारः पाणिभ्यां युगपद्वादनाद्भवेत्।

वेमः

मात्राभिः षोडशैर्वापि वाद्यं समप्रहारजम्।

पार्श्वदेवः

समम्—चिबुकम्
मनाक् संश्लेषणं दन्तपङ्क्त्योस्स्वाभाविके समम्।

ज्यायनः

—जानु
स्वभावावस्थितं जानु सममित्यभिधीयते।
स्तम्भे कार्ये समं जानु नाट्यस्याभिनये बुधैः॥

सोमेश्वरः

—दर्शनम्
विषयाभिमुखं कर्म ताराया दर्शनं स्मृतम्।
मध्यस्थतारं यत्सौम्यं दर्शनं तत्समं मतम्॥

विप्रदासः

वीक्षणं सुरनारीवत्समं समभिधीयते।

हरिपालः

—देशीस्थानम्
वक्त्रमुत्तानितं यत्र पादहस्तं प्रसारितम्।
स्थानकं तत्समं ज्ञेयं स्वस्थस्य शयने भवेत्॥

वेमः

—रञ्जनगुणः

उच्चनीचस्वरैपेतं न द्रुतं न विलम्बितम् ।
पदतालैः समं गीतं सममाचार्यवल्लभम् ॥

सोमेश्वरः

—वक्षः

यद्वक्षस्सौष्ठवोपेतं चतुरस्राङ्गसंयुतम् ।
स्वभावस्थं समं प्रोक्तं स्वभावस्य निरूपणे ॥

अशोकः

—शिरः

प्रकृतिस्थं समं प्रोक्तं यतो भेदाविति स्मृतौ ।
तस्मात्समं जपध्यानस्वभावाभिनयादिषु ॥

इदमेव प्राकृतमिति विप्रदासः ज्यायनः

स्वाभाविकं समं शीर्षं स्वभावाभिनये मतम् ।

शार्ङ्गः

स्थानकम्

वक्त्रमुत्तानितं यत्र पादहस्तप्रसारितम् ।
स्थानकं तत्समं ज्ञेयं स्वस्थस्य शयने भवेत् ॥

वेमः

—शयनस्थितिः

उत्तानितमुखं चैव प्रत्यञ्चुक्तकरं तथा ।
समं नाम प्रसुप्तस्य स्थानकं संविधीयते ॥

भरतः

समः—वाद्यप्रकारः

दर्दुरपणवमृदङ्गैर्नानाकरणैस्समनुयातः ।
तालाङ्गवेणुयुक्तः स तु विज्ञेयस्समो नाम ॥

भरतः

समत्वं—पुष्करवाद्ये

अक्षरसमं अङ्गसमं तालसमं यतिसमं ग्रहसमं न्यासापन्याससमं पाणिसमं च इति पुष्करवाद्ये समत्वं वेद्यम् ।

भरतः

सममुखारी—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स ध नि ध म प म ग स. मज

समयः—निर्वहणसन्ध्यङ्गम्

दुःखस्यापगमो यस्तु समयस्स निगद्यते ।

भरतः

अपगमनमपगमः । रत्नावल्यां दूरे खल्वित्यादिवासवदत्तावचनं रत्नावल्याम् ।

अभिनवगुप्तः

विरोधप्रशमनं समयः । सागरः

दुःखनिर्गमयुक्तः कालः समयः । यथा—मृच्छकट्यां-दिष्ट्या भो इत्यादि शर्विलकवाक्येन चारुदत्तस्य दुःखापगमः सूचितः ।

रामचन्द्रः

समरः—गीतालङ्कारः (निसारुकभेदः)

लघुद्वयं विरामान्तं ताले कन्दुकनामनि ।
समरो गीयते तेन मध्यमश्च लयो भवेत् ॥

सङ्गीतसारः

समर्पणम्—भाणिकाङ्गम्

कोपविद्धाया उपालम्भवचनम् । यथा—चन्दनलतागृहे मलयवती वाक्यं "भगवन्कुसुमायुध" इति ।

सागरः

समलेखः—वाद्यालङ्कारः

कृत्वोपरिगतं वाद्यं पणवो दर्दरोऽपि वा ।
प्रयाति मुरजं यत्र समलेखस्स कीर्तितः ॥

भरतः

प्रथमं पणवेनैव दर्दरेणैव वा पुनः ।
वाद्यतेऽनन्तरं भूयो मुरजेन समं तदा ।
समानवर्णस्यालेखात्समलेखः प्रकीर्त्यते ॥

नान्यः

समवस्थाः

ताः पञ्चविधाः । प्रार्थना लाभसंयोगौ नाशः संप्राप्तिरेव च । इति । अत्र लाभनाशयोर्दैवस्य प्राधान्यम् । प्रार्थनासंयोगयोः पौरुषस्य संप्राप्तौ दैवपौरुषयोः । न सर्वत्र प्रकर्षवाचो प्रोपसर्गयोगो भवति ।

भोजः

समवकारः—रूपकम्

स च देवासुरवीर्यकृतः । यथा—शक्रानन्दः । द्वादशनायकान्वितः । तस्मिंस्त्रयो विद्रवाः । अग्निसमीरकृतः युद्धकृतः पुरोपरोधश्च । तत्राद्यः पलिसङ्के अन्तःपुराग्निसंभ्रमः । द्वितीयः मल्लाभ्यां कंसयुद्धार्थं कृष्णस्य क्रीडापर्वतारोहणम् । शेषो मृच्छकटिकायामार्यकानुसरणे पुरोपरोधः । त्रयश्च कपटाः । एको वस्तुक्रमजः । अन्यो दैवकृतः अपरोऽन्यकृतः सुखदुःखसंभवः ।

तत्राद्यः चित्रशालाङ्के विदूषकस्य तत्प्रवेशे दन्तकाष्ठासादनक्रमः। द्वितीयो वध्यशिलायां दैवागतरक्तपटासनाज्जीमूतवाहनस्य शिलावरोहणं शेषोऽपि पुंसवनाङ्के सुमायचितामुखयोः कैकेयी मन्थरामायाचरणं। इति त्रयः कपटाः।

शृङ्गाराश्च त्रयः, धर्मार्थकामसम्बन्धिनः । आत्महितहेतुः धर्महेतुप्रापकः धर्मशृङ्गारः। स्वेच्छया बहुविधोपायसंयुतोऽर्थ शृङ्गारः। स्त्रीसंयोगभूतरसोन्मादः कामशृङ्गारः। तत्राद्यो यथा-कामकायनाङ्के (पुष्पभूषितके) नन्दयन्त्या ब्राह्मणभोजनम्। स्वदेशमात्मसात्कर्तुरुदयनस्य पद्मावतीपरिणयः अर्थशृङ्गारः। तस्यैव वासवदत्तापरिणयः कामशृङ्गारः। कैशिकीवृत्तिरत्र न कर्तव्या तत्कथं शृङ्गारः। शुद्धा कैशिकी कर्तव्या। अस्याश्चत्वार्यङ्गानि नर्म नर्मस्फञ्जादीनि न कर्तव्यानि। संयोयविहितं नर्म मात्रं कर्तव्यम्।

शृङ्गारोद्दीपनो यस्तु परिहासः सविभ्रमः।
भयेच्छाहासभेदेन नर्मात्र त्रिविधं भवेत्॥

त्रयोऽप्यङ्काः। तत्र प्रथमोऽङ्कः वीथ्यङ्गविद्रवकपटशृङ्गार-युक्तश्चसप्रहसनः द्वादशनालिकः द्वितीयोऽङ्कः चतुर्नालिकः तृतीयस्तुसमानकृतः।

सागरनन्दी

मृद्धी स्यात्कैशिकी वृत्तिरङ्गी वीररसो भवेत्।
प्रख्यातोदात्तचरितमिलिता देवदानवैः॥

अङ्गान्यन्ये रसास्तत्र सात्वत्याद्यास्तु वृत्तयः।
अष्टादश स्युरेतस्मिन्नायकाः समुदायतः॥

मुखप्रतिमुखाभ्यां च प्रथमाङ्को द्विसन्धिकः।
द्वितीयाङ्कश्चतसृभिः नालिकाभिश्रितो भवेत्।
मुखं प्रतिमुखं गर्भः सन्धयोऽस्य त्रयोऽपिच॥

तृतीयाङ्कस्य कालोपि नालिकाभ्यां प्रकल्प्यते।
सन्धयो निर्विमर्शाश्च चत्वारः सम्भवन्ति च॥

मुहूर्तस्य तुरीयांशं नालिका घटिकाद्वयम्।
कपटस्य स्वरूपं तु भ्रमो मोहात्मकः स्मृतः॥

वस्तुस्वभावकपटः क्रूरसत्त्वादिसंभवः।
दैविकः कपटो वह्निवर्षोत्पातादिसंभवः॥

शत्रुजः कपटस्तत्र संभ्रमादिसमुद्भवः।
जीवग्राहोऽथ मोहो वा कपटेन प्रकाश्यते॥

विद्रवस्य फलं तत्तद्धेनेस्तस्मात्पलायनम्।
शृङ्गारो धर्मकामार्थभेदेन त्रिविधो भवेत्।
व्रतनियमतपोयोगाद्यस्मिन्बहुधा निवेशितः कामः॥

पुत्रादिभोगसुखकृत्सज्ञेयो धर्मशृङ्गारः।
अर्थोवाप्यर्यस्मिन्कामेन निवेशितेन संभवति।
तदधीनविभवभोगः स ज्ञेयश्चार्थशृङ्गारः।
परदारद्यूतसुरामृगयाद्यास्वादविनिविष्टः॥

तत्तद्विषयास्वादनसुखललितः कामशृङ्गारः।
इत्थं समवकारस्य लक्षणं दर्शितं बुधैः।
उष्णिग्गायत्र्याद्यान्यन्यानि च यानि बन्धकुटिलानि।
वृत्तानि समवकारे कविभिस्तानि प्रयोज्यानि॥

शारदातनयः

**समवायकृतः—**वाद्यालङ्कारः

विभक्तरूपैर्नागैस्तु समाहृत्य परस्परम्।
कृतो वाद्यविधिर्यः स्यात्समवायकृतस्तु सः॥

नान्यः

**समवायितः—**वाद्यप्रकारः

सर्वमार्गगतो यस्तु सर्वपाणिलयाश्रयः।
विचित्रश्च विभक्तश्च तत्समं समवायितम्॥

भरतः

**समविषमा—**अवनद्धे जातिः

यस्यां तूपरिपाणिः द्रुतलयं प्रथमतः स्यात्।
भूयः स्थितो लयः स्याद्गुर्वक्षरसद्द्रुतलयश्च॥

समविषमाक्षरपाणिः प्रहतिविशेषादियं जातिः।
समविषमाख्या ज्ञेया नाट्येऽधमपात्रयोगेषु॥

नान्यः

कृत्वोपरि पाणिकृतं वाद्यं यद्द्रुतलयं समारूढम्।
पुनरेव समलयं स्यात्समविषमा नाम सा जातिः॥

भरतः

नेपालमातृकायां सैवार्धविकीर्णेत्युच्यते।

**समसम्भाषणम्**

समैस्संभाषणं कार्यं येन नाम्ना स संज्ञितः।
हीनैस्सपरिवारं तु नाम्ना संभाष्य उत्तमः॥

भरतः

**समसूची—**देशीमण्डलम्

पादाग्राभ्यां च जानुभ्यां भूतलं संस्पृशेयदि।
मण्डलं समसूचीति कथितं पूर्वसूरिभिः॥

नाट्यदर्पणे

—देशीस्थानकम्

पार्श्वजङ्घोरुभिस्सम्यक् स्पृशन्तौ धरणीतलम् ।
चरणौ यत्र तिर्यञ्चौ प्रसृतौ समसूचि तत् ॥

वेमः

**समस्खलिता**—पादपाटः

अग्रतः पृष्ठतः पादौ भवेतां पार्श्वतोऽथवा ।
युगपत्स्खलितौ यत्र सा समस्खलिता मता ॥

ज्यायनः

**समा**—ग्रीवा

प्रकृतिस्था समा ग्रीवा सा स्याद्धयानजपादिषु ।

वेमः

**समाधिः**—काव्यगुणः

अभियुक्तैर्विशेषस्तु योऽर्थस्येहोपलक्ष्यते ।
तेन चार्थेन सम्पन्नः समाधिः परिकीर्तितः ॥

भरतः

उपमाद्युपदिष्टानां अर्थानां यत्नतस्तथा ।
प्राप्तानां चापि संक्षेपात् समाधिर्निर्णयो यतः ॥

पाठान्तरम्

यस्यार्थस्य द्वितीयस्यार्थस्याभियुक्तियुक्तैः प्रतिभातिशयवद्भिः विशेषोऽपूर्वः स्वोल्लिखित उपपद्यते । ससमाहितमनसः संपाद्यविशेषत्वात् विशिष्टः समाधिः । शब्दगुणश्च समाधिः । तदाह तेन चेति । समाधिशब्दस्य योऽर्थः परिहारलक्षणः तेन यः परिकीर्तितः परितः समन्तात् आक्रान्त्या उच्चारणे सम्पन्नः स च समाधिः । आक्रान्त्या उच्चारणे आरोहावरोहक्रममेव । आक्रमणेन गतितुल्यम् ।' उच्चत्वं स्थानकरणवशात् । बाह्याभ्यन्तरप्रयत्नवशाच्च ।

अभिनवः

अन्यावलम्बनं यत्स्यात्स समाधिरिति स्मृतः ।
आरोहावरोहक्रमः समाधिरिति केचित् । तथाहि
आरोहन्त्यवरोहन्ति क्रमेण यतयो हि यत् ।
समाधिर्नाम सगुणः पूता तेन सरस्वती ॥

अतिगाढबन्धरसात्मकावोजप्रसादौ तद्रूपत्वादारोहावरोहयोः गुणसंप्लवोऽयं समाधिः ।

साहित्यमीमांसा

**समाक्षरपदा**—चतुष्पदागीतम्

समपदवर्णसमेता समगुरुलघुमात्रिका समायुक्ता ।
समताललया तद्ज्ञैः चतुष्पदेयं समाक्षरपदा स्यात् ॥

वेमः

**समाङ्कः**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि म प नि ध नि प ध नि स.
(अव.) स ध प म ग रि स.

मख

**समाङ्घ्रिकम्**—नृत्तकरणम्

समपादस्थानकं स्यादवधूतं शिरस्तथा ।
हर्षा दृष्टिर्भवेदत्र हंसास्यो दक्षिणः करः ॥
सन्दंशो वामहस्तस्तु उन्मेषा चारिका भवेत् ।
कृतेत्वङ्गान्तरेणैवं करणं स्यात्समाङ्घ्रिकम् ॥

नन्दी

उन्मेषगतिस्तु,

समाङ्घ्रिविच्युतः पार्श्वस्थितिः पूर्वं प्रसारयेत् ।
ताडनं भ्रमितोऽग्राभ्यां चारीतून्मेषका भवेत् ।

**समानः**—प्रबन्धे नादः

मध्यस्थानस्थितैर्वर्णैः किपद्भिर्यैर्व्यञ्जितो ध्वनिः ।
मन्द्रतारान्तरगतः समानः सद्भिरुच्यते ॥

कुम्भः

**समानशब्दप्राकृतम्**

पाठ्यमेकं तु विज्ञेयं संस्कृतं प्राकृतं यथा ।
कमलामलरेणुतरङ्गलोलसलिलादिवाक्यसंपन्नम् ।
प्राकृतबन्धेष्वेवं संस्कृतमपि योगमुपयाति ॥

भरतः

**समाधानम्**—मुखसन्ध्यङ्गम्

बीजार्थस्योपगमनं समाधानम् । भरतः

यस्मिन्बीजं तदिदानीं प्रधाननायकानुगतत्वेन सम्यगाहितं भवतीति । यथा—वेण्यां, प्रथमे, यत्सत्यव्रतेति श्लोके यौधिष्ठिरमित्यनेन समाधानं दर्शितम् । अभिनवः

पुनर्न्यासः समाहितिः । संक्षिप्योपक्षिप्तस्य स्पष्टता प्रतिपादनार्थं पुनर्न्यासो भणितिवैचित्र्यं सम्यगासमन्ताद्धानं पोषणं समाहितिः । वेण्यां—स्वस्था भवन्तीति यद्बीजं तद्यत्सत्यव्रतेति श्लोकेन सम्यक्पोषं नीतम् ।

समाधानं प्रियोदयः । सर्वेश्वरः

**समाप्तिः**—अवस्था

अभिप्रेतं समग्रं च प्रतिरूपं क्रियाफलम् ।
इतिवृत्ते भवेद्यस्मिन्समाप्तिरिति भण्यते ॥ मोक्षः

**समाहितः—प्रबन्धे नादः**

न पौनरुक्त्यमाशङ्क्यं तारस्थानगसान्द्रतः ।
यतोऽत्र गाढबन्धस्य नियमो नाक्षराश्रयः ।
संमूर्छन् स्थायिवर्गेषु नादः प्रोक्तः समाहितः ॥

कुम्भः

**समाहितिः—मुखसन्ध्यङ्गम्**

समाधान शब्दे द्रष्टव्यम् ।

**समित्—तानः**

मध्यमग्रामे गहीनषाडवः ।
नि ध प म रि स .

कुम्भः

**समुदायः—वाद्यप्रबन्धः**

अस्य पैसार इति नामान्तरम् ।
सर्वातोद्यनि वाद्यन्ते यत्र पाटैर्निजैर्निजैः ।
समुदायो भवेदेष वैसारश्चैत्यसौ मतः ॥

वेमः

समुदायो निजैः पाटैस्समस्तातोद्यवादनात् ।

शार्ङ्ग

**समुद्गः—अधरः**

यो दधात्युन्नतावोष्ठसंपुटस्स समुद्गकः ।
चुम्बनेष्वनुकम्पायां पूत्कारेष्वभिनन्दने ॥

अशोकः

**समुद्गका—मात्रावृत्तम्**

चतुर्मात्रिक एकः द्वौ पञ्चमात्रिकौ त्रयश्चतुमात्रिकाः, ग, ग,

विरहाङ्कः

**समुद्गमः—शृङ्गारचेष्टा**

संहितोद्गमः ।

भोजः

**समुद्गयमकम्—अलङ्कारः**

अर्धनैकेन यद्वृत्तं सर्वमेव समाप्यते ।

समुद्गयमकं वस्तु—

(उ-म्) केतकी कुसुमपाण्डुरदन्तः शोभते प्रवरकाननहस्ती ।
(उत्तरार्धमप्येवमेव)

भरतः

**समुद्वृत्तम्—तारा**

समुद्वृत्तमथोन्नतिः । रसे वीरे ज रौद्रे च ।

कुम्भः

**समोद्वृत्तम्—पादमणिः**

पादौ युगपदुत्प्लुत्य स्वाङ्गुलीपृष्ठभागगौ ।
अन्योन्याभिमुखीभूतौ तलौ यत्र स्थितौ भुवि ॥
मध्ये मध्ये तुलाभ्यां च ताडयेतां धरातलम् ।
तत्समोद्वृत्तमाख्यातं देशीनृत्तविशारदैः ॥

वेमः

**समोत्सरितम्—मण्डलम्**

समपादस्थानके तु स्थित्वा हस्तौ निरन्तरम् ।
ऊर्ध्वप्रसारितावेतावावेष्ट्योद्वेष्ट्य च क्रमात् ॥
निपातयेत्कटी देशे ततोङ्घ्री वामदक्षिणौ ।
भ्रामयित्वा क्रमेणाऽथ पुरो वामं प्रसारयेत् ॥
पर्यायेण विधायैवमाशासु चतसृष्वपि ।
मण्डलभ्रमणं कुर्याद्यत्र तत्परिकीर्तितम् ।
समोत्सरितसंज्ञं तन्मण्डलं नृत्यवेदिभिः ॥

वेमः

**समोत्सरितमत्तल्ली—चारी**

पादस्यैतस्यान्तरालपादेऽग्रतलसञ्चरे ।
पादे जङ्घास्वस्तिकतां प्राप्ते तदनु तावुभौ ॥
संश्लिष्य घूर्णमानौ चोवसृतिं चापसर्पणम् ।
क्रमेण कुरुतो यत्र सा चारी परिकीर्तिता ॥
समोत्सरितमत्तल्ली संज्ञिता मध्यमे मदे ।
यद्वा स्वस्तिकभङ्गेन पादयोर्घूर्णमानयोः ॥
वदन्ति केचिदाचार्या एतस्यामुपसर्पणम् ।
अपरे पुनरेतस्यां पादयोः क्रमशः पुरः ॥
अन्योन्यं स्वस्तिकं चैषोस्तलसंचरसंज्ञयोः ।
उपसर्पणमाचख्योर्मदवैवर्ण्यसूचकम् ॥

वेमः

**समौ—पुटौ**

स्वभावाभिनये प्रोक्तौ पुटौ स्वाभाविकौ समौ ।

वेमः

स्वाभाविकमवस्थानं पुटयोस्समुच्यते ।

विप्रदासः

**संपक्वैष्टकः—मार्गतालः**

मगणस्य प्लुताद्यन्तं संपकेष्टाकसंज्ञके ।
ऽ̇ ऽ ऽ ऽ ऽ̇

जगदेकः

संपा—(झंपा) प्रबन्धः

इहोद्ग्राहध्रुवपदे झंपातालसमन्विते ।
आभोगे नामविरुदे गातव्ये नायकस्य च ।
संपाख्याता भवेदेवं । हरिपालः

सम्पिण्डितगलिता—मात्रावृत्तम्

द्वौ पञ्चमात्रिकौ द्वौ चतुर्मात्रिकौ ल ग. विरहाङ्कः

संपिष्टकम्—गीताङ्गम्

विदलवत्संपिष्टमानमिश्रतालाश्रितं गणैर्द्वादशभिर्यथा।
भुजगशतरौद्र × रक्षो × नरेन्द्रमुनि × लोकपालबहुवचननिशि-×त निरूपमवररथ × मृग × गमनं । नान्यः

संपुटचारिणी—गतिः

अर्धमण्डलसञ्चारः पदोस्संपुटचारिणी । नेवणः

संपुटहस्तः

कुञ्चिताग्राङ्गुलिश्चक्रे संपुटः कर ईरितः ।
पुरोभागे स्वयं हस्तः रहस्ये वस्तुगोपने ॥
अन्तरङ्गेच पेट्यां च अन्धकारनिरूपणे।
संपुटाख्यकरस्सोऽयं विनियोज्यो बुधोत्तमैः ॥ विनायकः

संप्लुता—अवनद्धे जातिः

सर्वाङ्गुलिचलनकृता सर्वमृदङ्गप्रहारसंयुक्ता ।
भीतनभो मार्गगतौ संप्लुतजातिर्विधातव्या ॥ भरतः

संप्रदानम्—वर्णालङ्कारः (सञ्चारी)

अन्त्यस्वरद्वयायोगात्संप्रदानमवीवदत् ।

ससरिरि सस रिरिगगरिरि गगममगग ममपपमम पपधध पप धधनिनिधध । जगद्धरः

अन्त्यस्वरद्वयं, आवर्तकोक्तस्वरेषु अन्त्यस्थस्वरद्वयम् ।

संफेटः—अवमर्शसन्ध्यङ्गम्

केचित्तु स्फोटा अनादरे इति धातुं मनस्कृत्य संस्फोटः इति पठन्ति । अभिनवः

रोषग्रथितवाक्यं तु संफेटः। भरतः

यथा—रत्नावल्यां वासवदत्तावचनम् । आर्यपुत्र सदृशं युक्तं इत्यादि । अभिनवः

परस्परं क्रोधजन्मोत्तरप्रत्युत्तररूपः संलापः संफेटः । यथा—वेण्यां, पञ्चानामित्यादि भीमदुर्योधनयोर्वाक्यम् । रामचन्द्रः

—आरभट्यङ्गम्

संरंभसंप्रयुक्तो बहुयुद्धनियुद्धकपटनिर्भेदः ।
शस्त्रप्रहारबहुलः संफेटो नाम विज्ञेयः ॥ भरतः

संफेटस्योदाहरणं जटायुयुद्धादिसर्वं कृत्यारावणे । अभिनवः

वीररौद्राद्भुतप्रायैर्युक्तं संभ्रममयः युद्धबहुलः कपटमयः शस्त्रप्रपातविषमः संफेटः। यथा—समुद्रमथने देवासुराणां।

—शिल्पकाङ्गम्

तद्रामोऽहं यदीत्यादिमहानाटककल्पितम् ।
संफेटः कथितस्सद्भिः क्रोधादिभिरतिक्रमः ॥ शारदातनयः

क्रोधेनातिक्रमस्संफेटः। यथा—मृच्छकट्यामष्टमे मोटकाइं ओदरेत्यादि । सागरः

संभाविता—गीतिः

संभाविता लक्षणमत्र वक्ष्ये
संक्षेपितैश्चात्र पदैश्चतुर्भिः ।
गुर्वक्षरैर्भूरिभिरन्विता च
कलादिमा स्यात्सविलंबिता च ॥
तथैव मध्यस्थपदद्वयस्य
प्रत्येकमुच्चारणतो द्विवारम् ।
आद्यान्तिमे चापि पदे विहाय
परा कला मध्यलयान्विता स्यात् ॥
पदैश्चतुर्भिस्सहिता द्रुतेन लयेन
युक्ता तु कला तृतीया ।
एतत्त्रयं यत्र चकास्ति चैषा
संभाविता गायकसम्मता स्यात् ॥

शिष्टं मागधीलक्षणे द्रष्टव्यम् । रघुनाथः

संभोगः—गर्भसन्धौ प्रथममङ्गम्

फलेप्सायोग्यता। यथा—मायामदालसे कण्ठे इति मदालसां प्रति कुवलयाश्वस्य वाक्यम् । सागरनन्दी

संभ्रमः—गर्भसन्ध्यङ्गम्

विद्रवस्य नामान्तरम् ।

संभ्रान्तः अङ्गहारः

विक्षिप्ताञ्चितगण्डसूची गङ्गावतरणार्धसूचीदण्डपाद चतुरभ्रमरनूपुराक्षिप्तार्धस्वस्तिकनितम्बकरिहस्तोरोमण्डलकटीछिन्नानां पञ्चदशकरणानां प्रयोगे सम्भ्रान्तः।

शार्ङ्गः

—हस्तपाटः

संभ्रान्तः स्यात्तु विलुठन् सर्वाङ्गुल्यग्रताडनात्।

यथा—दरकिट गिरिगिड दगिरिगिड ददोणकिट मदडकु।

वेमः

संभ्रान्ता—ध्रुवावृत्तम्

अन्त्यं च पञ्चमं षष्ठं सप्तमं दशमं परम्।
वृत्ते सङ्कृतिसंज्ञे तु संभ्रान्ता नामतो यथा॥

गहगणबन्धूलोकपदीओ उडुगणगहगण समणुगदो।
ग्रहगणबन्धुर्लोकप्रदीप उडुगणग्रहगणसमनुगतः।

भरतः

अत्र पञ्चमादिषु गुरुरित्यर्थः। परमित्येकादशस्थानम्।

संभ्रान्तम्—करणम्

सममाविद्धया चार्या व्यावर्त्य परिवर्तितम्।
ऊरुपृष्ठतले यत्र निदध्याद्दलपल्लवम्॥

संभ्रान्तं कथयन्त्येतत्ससंभ्रमपरिक्रमे।
पद्मकोशोऽथवात्र स्यादिति कीर्तिधरोऽब्रवीत्॥

ज्यायनः

सम्मुखीनरथाङ्गम्—चालकः

अन्योन्याभिमुखौ त्र्यस्रकरौ विततरेचितौ।
पार्श्वः प्रदेशगावन्तरावृत्या द्विगुणीकृतौ॥

आकुञ्चेत्कूर्परौ चाथ कटीवलनशालिनौ।
यदा तदा सम्मुखीनरथाङ्गं समुदीरितम्॥

वेमः

सरघा—श्रुतिः

गान्धारस्य प्रथमाश्रुतिः।

जगदेकः

सरणम्—पादचारः

चलनं तु जलूकावदेकेनान्यस्य पार्ष्णिना।
तिर्यक् चाघर्षयेद्भूमिं कराभ्यां तु पताकिकौ॥

धृत्वा तु गमनं यत्तु सरणं तदुदीरितम्।

नाट्यदर्पणे

अपरित्यक्तभागश्च पादश्चेत्सञ्चरेद्द्रुतम्।
सरणं नाम तत्प्रोक्तं हरिपालमहीभुजा॥

हरिपालः

सरणी—श्रुतिः

गान्धारस्य तृतीया श्रुतिः।

हनुमन्मतेऽष्टादशैव श्रुतयः।
अस्मन्मते गान्धारश्चतुश्श्रुतिः।

सरलः—वर्णालङ्कारः

क्रमादष्टममारुह्य हित्वा सप्तस्वरान्पुनः।
मूलं स्पृष्ट्वा समारोहेद् यत्र सरलस्स्मृतः॥

यथा—सरिगमपधनिस इति क्रमेणारोहात् सनिधपमगरिस इति व्युत्क्रमावरोहात् उभावपि सरलावेव।

आदितालानुगत्वादलङ्कारत्वम्।

संगीतसरणिः

—बाहुः

अधस्तात्पार्श्वयोरूर्ध्वं यस्याद्बाहुः प्रसारितः।
तमाहुस्सरलं भूस्थनिर्देशेऽनुकृतौ तथा।
पक्षाणां पौरुषे माने विनियोज्यः क्रमादसौ॥

विप्रदासः

अधश्चोर्ध्वं पार्श्वयोश्च प्रसृतस्सरलो भवेत्।
पक्षानुकरणे माने भूनिर्देशे च स स्मृतः॥

वेमः

पुरतः पार्श्वतो वापि सरलस्स्यात्प्रसारितः।
पक्षानुकरणे माने स्पन्दनालिङ्गने भवेत्॥

सोमेश्वरः

सरला—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि प ध नि स.
(अव) स नि ध प म स.

मत

सरसकल्याणी—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि ध प म ग म रि स.

मत

सरसचिन्तामणिः—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग प म ध नि स.
(अव) स नि ध प म ध म ग रि स.

मत

सरसमङ्गला—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स ग म नि ध स.
(अव) स ध प म ग रि स.

मङ्ग

सरसमण्ठः—देशीतालः
द्वद्वयं तगणश्चैव नगणः सरसे मतः ।
०० ऽ ऽ ॥ ॥

दामोदरः

सरसवती—मेलरागः (वाचस्पतिमेलजन्यः)
(आ) स रि म प ध स.
(अव) स नि ध म ग रि स.

मङ्ग

सरसवाहिनी—मेलरागः (कीरवाणीमेलजन्यः)
(आ) स रि ग रि म प ध नि स.
(अव) स ध प म ग रि स.

मङ्ग

सरसाङ्गी—मेलकर्ता (रागः)
स ० रि ० ग म ० प ध ० ० नि स.

मङ्ग

सरसाननं—मेलरागः (सरसाङ्गीमेलजन्यः)
(आ) स रि ग म ध नि स.
(अव) स नि ध म ग रि स.

मङ्ग

सरसी—देशीतालः
सरसी सरसा एव ।

लक्ष्मणः

सरसीरुट्—मेलरागः (भवप्रियामेलजन्यः)

सरसीरुहम्
(आ) स रि ग म ध नि स.
(अव) स नि ध प म ग रि स.

मङ्ग

सरस्वती—प्राकृतेमात्रावृत्तम्
चतुर्मात्र एकः, द्वौ पञ्चमात्रिकौ लः गः ।

विरहाङ्कः

—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि ग म प नि ध नि स.
(अव) स नि प ध म ग रि ग स.

मङ्ग

सरस्वतीकण्ठाभरणः—देशीतालः
ताले सरस्वतीकण्ठाभरणे गौ लघू द्रुतौ ।
ऽ ऽ ॥ ० ०

वेमः

सरस्वतीमनोहरी—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि ग म ध स.
(अव) स ध नि प म ग रि स.

मङ्ग

सरस्वतीहृदयालङ्कारः

नान्यदेवकृतः । अत्र वाचिकांशे केवले, सप्तदशाध्यायपरिमिते पञ्चादशाध्याया एवोपलब्धाः । तेप्यतीव लेखकदोषसहस्रदुष्टाः । तथापि ग्रन्थस्य प्रौढित्वे विषयविचारसमग्रतायां चोत्कृष्टोऽयं ग्रन्थः । सङ्गीतविषये अतिविस्तरतया नान्यत्र विचारः कृतः । अत्र पाणिनयपिशलि विशाखिल मतङ्गकश्यप देवराजयाष्टिकशातातपरत्नकोशकृत शिष्टादयछन्दोऽधिकं उदाहृताः । कृतशिष्टं विरहलाञ्छनस्य प्राकृतग्रन्थः । स्वयंभूरपि ध्रुवाध्याये सूचितः ।

सरिका—पादपाटः
पादस्यैकस्य पुरतः सरणात्सरिका मता ।

वेमः

सरूपः—वाद्यप्रकारः
विशुद्धवाद्यप्रकृतिः समतालकृतस्तथा ।
स्वरूपोपगतश्चैव सरूप इति स स्मृतः ।

भरतः

वाद्यसंश्रय इति पाठान्तरमभिनवादिभिर्गृहीतम् ।

सरूपानुगतः—वाद्यप्रकारः
मुरजान्पणवो वापि पणवान् दर्दरोऽपि वा ।
यथानुयायादातोद्यं सरूपानुगतस्तु सः ॥

भरतः

एष अभिनवगुप्तपठितानुगतस्यैव नामान्तरं ॥

सर्गबन्धः—श्रव्यकाव्यम्
यस्मिन्नितिहासार्थानपेशलान्पेशलान्कविः कुरुते ।
स हयग्रीववधादि प्रबन्ध इव सर्गबन्धः स्यात् ॥
मेण्ठराजविरचितं हयग्रीववधाख्यं काव्यम् ।

भोजः

सर्पगान्धारी—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स रि म प ध स.
(अव) स नि ध म ग रि स.

मङ्ग

सर्परञ्जनी—मेलरागः (नटभैरवीमेलजन्यः)
(आ) सरिगपधनिस.
(अव) सनिधमपमगरिस.

मङ्ग

सर्पवती—मेलरागः (सुचरित्रमेलजन्यः)
(आ) सरिमपधनिधस.
(अव) सनिधपमगमरिस.

मङ्ग

सर्पशिराः—पुतः
पताको निम्नमध्यो यः स तु सर्पशिराः करः।
देवेभ्यस्तोयदानऽस्यांवुत्तानोऽधो मुखःपुनः॥
भुजङ्गमगतौ स स्यादास्फाले करिकुम्भयोः।
भुजास्फोटे च मल्लानां नियुद्धादिषु कीर्तितः॥

शार्ङ्ग

सर्पानामयनः—तानः
मध्यमग्रामे षड्जहीनषाडवः।
पमगरिनिध कुम्भः

सर्पिणी—क्रिया तालाङ्गम्
क्रियाशब्दे द्रष्टव्यम्।

सर्पितम्—करणम्
अञ्चितं पातमन्यस्य समीपादपसर्पयन्।
तद्दिक्करेचितं हस्तं शिरश्च परिवर्तयित्तम्॥
कृत्वा यत्र प्रकुर्वीत पुनरङ्गान्तरेण च।
सर्पितं तद्भवेत्पादं कर्षितं मत्तगद्रदे॥

ज्यायनः

"उपसृत्यापसरणं मत्तस्य परिकीर्तितम्" इत्यशोको विनियोगमाह। "उन्मत्तक्रमणे मतम्" इति लक्ष्मणः।

सर्वकलामञ्जरी—मेलरागः (रत्नाङ्गीमेलजन्यः)
(आ) सरिगपधनि–स.
(अव) सनिधमगरि–स.

मङ्ग

सर्वकुन्तला—मेलरागः (गमनश्रममेलजन्यः)
(आ) सरिमपनिस.
(अव) सनिधपधमरिस.

मङ्ग

सर्वगण्डः—काडनृत्ताङ्गम्
अधस्तादूर्ध्वमारभ्य पत्रान्ते पिण्डमालिखेत्।
द्विशतादष्टपञ्चाशत्सम्मितां वलयावलिम्॥
कृत्वो दक्षिणवामाभ्यां तालपङ्क्तिं तु योजयेत्।
वामे प्रोक्तं तालषट्कं तस्य नामान्यनुक्रमात्॥
शरभलीलः कुम्भाख्यस्ततश्चक्रामिधः स्मृतः।
ब्रह्मतालो विष्णुतालः तत्र मात्रः कुकुण्डली॥
सव्यभागे मण्टकानां त्रिसप्तकमुदीरितम्।
विजयाख्यश्च सारङ्गः प्रथमस्सरसस्तथा॥
कीलकः पञ्चमष्षष्ठो षण्मण्ठः सप्तमः पुनः।
धनञ्जयाख्यमण्ठश्चाष्टमो भाति जयप्रियः॥
श्रीमण्ठोरङ्गमण्ठश्च ततो गीर्वाणमण्ठकः।
कमलो वल्लभश्चित्रताराख्यः प्रतिमण्ठकः॥
श्रीरङ्गो भिन्नमण्ठश्च कल्याणस्त्वेकविंशतिः।
तथैव वामभागे स्यात्तालषट्कस्य मात्रिकाः॥
चतुरङ्गप्रमाणेन पिण्डद्रुतिनियोजनम्।
वामदक्षिणतालानां कार्यमङ्गविभागशः॥
मिलनाद्दृश्यते यत्र वामदक्षिणभागयोः।
ससर्वगण्डः काडः स्यात्तालज्ञानां तु सम्मतः॥

वेदः

सर्वज्ञः—देशीतालः
क्रमात्सर्वाङ्गसंयुक्तः सर्वज्ञः परिभाषितः।

लक्ष्मणः

सर्वतोभद्रः—तानः
षड्जग्रामे नारदीयतानः
पधसरिम? नान्यः
मध्यमग्रामे षड्जहीन षाडवः।
निधपमगरि कुम्भः

—नृत्तबन्धः
स्थानक्रमेण पात्राणां चतस्रो यत्र पङ्क्तयः।
चरणं चरणाम्भोजरणन्माणिक्यनूपुरः॥
पङ्क्त्योर्मध्यमयोर्योगान्मध्यमाद्यन्तयोरपि।
सबन्धस्सर्वतोभद्रो भावितो वेमभूभुजा॥

वेमः

सर्वमतिः—मेलरागः (गौरीमनोहरीमेलजन्यः)
(आ) समगधनिस.
(अव) सनिधपमगरिस.

मङ्ग

**सर्वमानपतिः**—मेलरागः (चिताम्बरीमेलजन्यः)
(आ) स म ग म प नि ध नि प ध स.
(अव) स नि ध नि प ग म ग रि ग स.

मज

**सर्वरतिः**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स रि ग म प ध नि स.
(अव) स नि प ग रि स.

मज

**सर्वरत्ना**—श्रुतिः
पञ्चमस्य चतुर्थी श्रुतिः।

**सर्वरागमेला**
शुद्धमेलामध्यमेलावीणयोरवान्तरभेदौ सर्वरागमेलैकरागमेलेति तत्र सर्वरागमेला तु।
या मन्द्रमध्यतारेषु स्थानेषु निखिलैः स्वरैः।
युक्ता यदि तदा सर्वरागमेला प्रकीर्तिता॥

श्रीकण्ठः

**सर्वरेचितम्**—नृत्तहस्तप्राणः
हस्तगुणेषु एकाङ्गैरेककालरेचितत्वं सर्वरेचितम्।

श्रृङ्गारः

**सर्ववाहिनी**—मेलरागः (चक्रवाकमेलजन्यः)
(आ) स रि ग म प नि स.
(अव) स नि ध प म ग रि स.

मज

**सर्वव्याप्तिः**—श्रुतिः
निषादस्य द्वितीया श्रुतिः।

पाल्कुरिकिसोमः

**सर्वसङ्गीतसारः**
अस्य कर्ता कल्याणकरशुक्लः। नड्यादपत्तनस्थदधिलक्ष्मीसंस्कृतग्रन्थालये अयं ग्रन्थो वर्तते।
रूपसङ्गीतसारः—इत्यपि नामान्तरमस्ति।

**सर्वसहा**—श्रुतिः
मध्यमस्य द्वितीया श्रुतिः।

**सर्वस्वदक्षिणः**—तानः
मध्यमग्रामे गान्धारहीनषाडवः।
रि स नि ध प म. कुम्भः

**सर्वाङ्गभ्रमरी**—चारी
लुण्ठनाकूर्पराधारा सर्वाङ्गेण यदा भ्रमिम्।
कुरुते भूगता यत्र सर्वाङ्गभ्रमरी मता॥

नागमल्लः

**सर्वाङ्गी**—मेलरागः (सिंहेन्द्रमध्यममेलजन्यः)
(आ) स रि म प नि स.
(अव) स नि ध म ग स.

मज

**सर्वेश्वरी**—मेलरागः (गमनश्रममेलजन्यः)
(आ) स रि ग म प ध प नि स.
(अव) स नि ध प म ग रि स.

मज

**सलिलप्रिया**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स ग म प म ध प नि ध स.
(अव) स नि ध प म ग रि स.

मज

**सल्लापः**—नृत्तरूपकम्
सल्लापस्येति वृत्तं यत्स्यात् वोत्पाद्यमेव वा।
मिश्रं वा तत्र श्रृङ्गारहास्यौ नैवार्हतः क्वचित्॥
शबलौ वीररौद्राभ्यामङ्गान्यन्ते रसाः स्मृताः।
प्रायस्सपत्नशान्तश्च क्रुद्धपाषण्डनायकः॥
दैवारिजन्यकपटयुद्धस्थानोपरोधवान्।
सात्त्वत्यारभटीवृत्तिसहितश्च सविद्रवः॥
अङ्कास्त्रयो द्वितीयेऽङ्के तालप्राचुर्ययुग्भवेत्।
तृतीयोऽङ्कस्सकपटः प्रथमोऽङ्कस्सविद्रवः॥
(चतुस्सन्धिः प्रतिमुखशून्यस्सल्लापको भवेत्।)
सल्लापको प्रतिमुखरुत्र्यङ्कस्सन्धिचतुष्टयी॥
इति कामधेनुक्तपाठः। शारदातनयः

अत्र कपटस्त्रिविधः, देवजः, शत्रुजः, विद्रवजश्चेति। तत्तच्छब्देषु द्रष्टव्यम्। प्रतिमुखस्सन्धिः।
अयं दशरूपकेषु पठितः कैश्चित्।

**सवर्णक्रिया**—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि ग प नि ध स.
(अव) स नि प ग रि स.

मज

सवर्णदीपिका—मेलरागः (शुभपन्तुवरालीमेलजन्यः)
(आ) स रि म ग म प ध नि स.
(अव) स ध प म ग रि स.
मञ्ज

सव्यग्रम्—दर्शनम्
विषयालोकनव्यग्रं सव्यग्रमिति कीर्तितम्।
शारदातनयः

सव्यथम्—दर्शनम्
व्यथते विषयं द्रष्टुं यत्तत्सव्यथमुच्यते।
शारदातनयः

सशब्दा—क्रिया (तालाङ्गम्)
क्रियाशब्दे द्रष्टव्यम्।

ससंभ्रमम्—दर्शनम्
अनवस्थितिरेकत्र यस्य तच्च ससंभ्रमम्।
शारदातनयः

ससिकः—हस्तपाटः
अभिवादप्रकारे तु यथैकस्मिन्पुटे करौ।
लगतः स तु विख्यातः ससिको नामतो बुधैः॥
सोमेश्वरः

सस्पृहम्—दर्शनम्
पुनर्यत्र स्पृहा......तत्सस्पृहं भवेत्।
वेमः

भूयोभूयः स्पृहा यत्र दृष्टे तत्सस्पृहं भवेत्।
शारदातनयः

सहकारभञ्जिका—सङ्गीतशृङ्गाराङ्गम्
सहकारकुसुमपल्लवादिभञ्जनं सहकार भञ्जिका।
भोजः

सहजः—पादाङ्गुष्ठः
सजहश्च स्वभावस्थः प्रस्थितौ परिकीर्तितः।
ज्यायनः

मुखरागः
सहजो निजवर्णस्स्यात्।
सहजो विनियोक्तव्यस्स्वभावाभिनयं प्रति।
अयमेव स्वाभाविकः। सोमेश्वरः

सहजा—भ्रूः
स्वाभाविकी तु सहजा भवेत्सा स्यादकृत्रिमे।
वेमः

भ्रुवोस्स्वभावावस्थानं सहजं कर्म कथ्यते।
भावेष्वनुल्बणेष्वेतद्विधेयमिति तद्विदः॥
विप्रदासः

निजस्थानस्थिता प्रोक्ता सहजेत्यभिधीयते।
रसाभिनयहीनेषु भावेषु सहजा मता॥
सोमेश्वरः

(स?) शहना—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स रि ग म प म ध नि स.
(अव) स नि ध प म ग म ग रि स.
मञ्ज

सहर्षम्—दर्शनम्
भाषमाणमिवाभाति यत्सहर्षं तदुच्यते।
शारदातनयः

सहायव्यापारः—सङ्गीतशृङ्गाराङ्गम्
सख्यादीनां कर्मणि सहायः सहायव्यापारः।
भोजः

सहेतुः—लक्षणम्
बहूनां भाषमाणानां त्वेकस्यार्थविनिर्णयम्।
सिद्धोपमानवचनं हेतुरित्यभिसंज्ञितः॥
भरतः

बहून्भाषमाणाननादृत्यैकस्यासाधारणस्यार्थस्य निर्णयः कर्तव्यत्वेनावलम्ब्य सिद्धस्य प्रमाणोपमानवचनमुपक्षेपवचनं मम तावदेवं प्रतिभासते इति सहेतुः।

यथा—भट्टेन्दुराजस्य एके वारिनिधीति श्लोकः। 'एकमसाधारणं डुमिङ् प्रक्षेपणे इत्यस्योपमानम्।

यत्प्रयोजनसामर्थ्याद्वाक्यं शिष्टार्थसाधनम्।
समासोक्तं मनोग्राहि सहेतुरिति संज्ञितः॥

सम्यगस्यते हृदि क्षिप्यते येन स समासः। उपपत्तिस्तयोक्ता
अभिनवः

साकांक्षपुण्डरीकाक्षभ्रमररुतम्—सूडप्रबन्धः
तालो वर्णयतिर्यत्र रागः केदारसंज्ञकः।
पदानि कविनामाङ्कात् गीत्वा द्वित्राणि गीयते॥
स्वराणां सन्ततिः पाटा आलापास्तेन का अपि।
ततस्त्रिचतुराणि स्युः पद्यानि प्रीतये विभोः॥
विप्रलम्भाख्यशृङ्गारे शृङ्गारिजनतुष्टये।
साकाङ्क्षपुण्डरीकाक्षभ्रमरादिरुताभिधः।
प्रबन्धः कृष्णभूभर्त्रा राजराजेन निर्मितः॥ कुम्भः

साकूतम्—दर्शनम्

साकूतं तद्यथा भावो हृद्गतोऽपि विभाव्यते।

वेमः

साकूतं तद्यत्नभावः कोऽप्यमीष्टो विभाव्यते।

शारदातनयः

सागरदुर्गविपाटः—देशीतालः

ताले सागरदुर्गादौ विपाटे व्यञ्जनं शरः।
धनुषी तद्वितोर्मध्ये पुनः पुञ्जो द्रुतद्वयम्॥

०।ऽऽ।ऽऽ।००

गोपतिप्पः

सागरनन्दी

नाटकरत्नकोशकर्ता। अनेन नाट्यरत्नकोशः, निघण्टुरत्नकोशः इत्यादिग्रन्थाः निर्मिताः। अस्य नाम सुभूतिचन्द्रेणामरव्याख्याने, कुम्भेन सङ्गीतराजे च गृहीतमस्ति। नाटकरत्नकोशे राजशेखरकृताः श्लोकाः सन्ति। तस्मात् क्रिस्तु ९८० कालेऽयमासीदित्यूह्यते। अस्य सिद्धान्तमभिनवगुप्तो दूषयति। तस्मादस्मात्पूर्व इति ज्ञायते। नाटकरत्नकोशे नागरसर्वस्वे च बहवः श्लोकाः समाना वर्तन्ते। पद्मश्रीसागरयोः पौर्वापर्यं चाद्यापि न निर्णीतम्।

सांबसंभवः—देशीतालः

॥ ऽऽ ऽऽ ऽ ॥॥॥

हम्मीरः

साचि—दर्शनम्

तिर्यक् पक्ष्मगता तारा यत्र तत्साचि दर्शनम्।

विप्रदासः

स्वस्थानस्थापितमुखं साचि तिर्यग्विलोकितम्।

हरिपालः

साचिका—ध्रुवावृत्तम्

यदि खलु चत्वार्यादौ लघूनि पादे चतुर्थषष्ठौ जौ।
अतिधृतिमात्ते च स्याद् गुरूणि शेषाणि साचिका नाम्ना॥

भरतः

उत्तमानां प्रयोक्तव्या साचिका नामकध्रुवा।
युग्मायुग्मप्रभेदेन वनक्रीडाभिमञ्जने॥
चित्रपादाक्षराणां तु लघुस्थाने द्रुतं न्यसेत्।
गुरोःस्थले द्रुतं कुर्याद्युग्मायुग्मेऽन्तगो गुरुः॥
जलहरणादुंभन्तो गलं ददाणोवणं पमद्दंतो।
जलभरेण मज्जनतो गलं दधद्वनं प्रमर्दयन्।

नान्यः

साची—गतिः

पार्श्वचारी च साची स्यात्।

देवणः

साचीकृतः—वाद्यप्रकारः

चित्रं हि करणं यत्र वाद्येनैकेन वाद्यते।
वृत्ताङ्गहारानुकृतो ज्ञेयस्साचीकृतस्तु सः॥

अत्र नृत्ताङ्गहार इति पाठान्तरं।

भरतः

सात्त्वतः—न्यायप्रविचारः

प्रविचारः सात्त्वतेऽपि कार्यो भारतवद्बुधैः।
किन्तु खड्गभ्रमः कार्यः केवलं पृष्ठभागतः।
खड्गपातश्चरणयोः कर्तव्योऽत्र विचक्षणैः॥

वेमः

सात्त्वती—वृत्तिः

या सात्त्वतेनेह गुणेन युक्ता न्यायेन वृत्तेन समन्विता च।
हर्षोत्कटा संहृतशोकभावा सा सात्त्वतीनाम भवेत्तु वृत्तिः॥
वागङ्गाभिनयवती सत्त्वोत्थानवचनप्रकरणेषु।
सत्त्वाधिकारयुक्ता विज्ञेया सात्त्वती वृत्तिः॥
वीराद्भुतरौद्ररसा निरस्तशृङ्गारकरुणनिर्वेदा।
उद्धतपुरुषप्राया परस्पराधर्षणकृता च॥
उत्थापकश्च परिवर्तकश्च सल्लापकश्च सङ्घात्यः।
चत्वारोऽस्या भेदाः विज्ञेया नाट्यतत्त्वज्ञैः॥

भरतः

सात्त्वतो गुणः मानसो व्यापारः। सत्त्वं प्रकाशः। तद्विद्यते तत्र तत्सत्त्वं मनः तस्मिन् भवः। सत्सत्त्वोत्थानस्य सत्त्वाधारस्य वचनं येषु प्रकरणेषु काव्यखण्डेषु तेषु वागङ्गाभिनययुक्ता सती सत्त्वस्य सात्त्विकाभिनयस्याधिकारे आधिक्यक्रियया सात्त्वतीवृत्तियुक्ता भवतीति संबन्धः। शृङ्गारे विषयनिमग्नं मनः। करुणे कान्दिशीकम्। निर्वेदं मूढमिति तद्व्यापारो भवन्नपि क्रोधविस्मयोत्साहेष्विव सातिशयं परिस्फुरतीति दर्शयति वीराद्भुतेति। आधर्षणं वाचान्यक्कारः।

अभिनवः

सात्त्वता गुणाः। गुरुशुश्रूषादिसद्वृत्तयः। त्यागेन शौर्येणेतिपाठो गृहीतः। हर्षोत्तरेति। आः किं शोचाम्यहमित्यादि। रौद्रेऽपि सैव। राघवाभ्युदये रावणं प्रति जटायुवाक्यम्। अद्भुते अहोलाघवमिति रावणवाक्यम्। अल्पकरुणाल्पशृङ्गारा परस्पराधर्षणकृता। यथा—कर्णाश्वत्थामभाषणं (वेण्यां)।

सागरः

इयं भोजदेवेन मोक्षशृङ्गारस्याङ्गतयोक्ता। यथा—मोक्षशृङ्गारे सात्त्वती वृत्तिः। आवन्त्या प्रवृत्तिः। लाटीया रीतिः। स्वकीया नायिका। धीरप्रशान्तश्च नायकः। तेषु सात्त्वती वृत्तिः। तदनुरूपस्वरूपाङ्गत्वात्। तथाहि—

या सत्त्वतेनेह गुणेन युक्ता-
त्यागेन वृत्तेन समन्विता च।
हर्षोत्कटा संहृतशोकभावा
सा सात्त्वती सत्त्ववतीह वृत्तिः॥

तदङ्गानि—उत्थापकः, परिवर्तकः, सल्लापकः, संघात्यकः इति। सा तु या सात्त्वतेनेह गुणेन युक्तेत्यनेन सत्त्ववतः सत्कारवतो धीरप्रशान्तादेर्नायकस्य मोक्षशृङ्गाराधिकारिणो ये गुणास्तदुपलक्षितां चेष्टामाचष्टे। सत्त्ववन्तो हि सत्कारवन्तो मोक्षशृङ्गाराधिकारिण एवोच्यन्ते। त्यागेन वृत्तेन समन्विता चेत्यनेन सात्त्वतेन त्यागेन सात्त्वतेन वृत्तेन च समन्वितेति व्याख्या। यस्यैव द्रव्योत्सर्गसत्कारपूर्वकत्वफलनिरपेक्षमवृथादानं च सूचयति। सत्कारपूर्वो हि त्यागः। सत्कारपूर्वकं च वृत्तं इति। चकारात्तु लौकिकाचारपरित्यागमपि कथयति। हर्षोत्कटसंहृतशोकभावेत्यनेन ब्रह्मानन्दोपलम्भात्—अशेषदुःखक्षयमुपलक्षयति। सा सत्त्वती सत्त्वतीह वृत्तिरित्यनेनात्यर्थसंज्ञायोगं विशुद्धसत्त्वनायकाश्रयं च द्योतयति। अङ्गेषूत्थापकेन तत्त्वजिज्ञासुभिः सन्धाय संभाषया विवादं बोधयति। परस्परस्पर्धया अर्थेपूत्थापनं ह्युत्थापकः परिवर्तकेन कुपथपरित्यागात् सन्मार्गग्रहणमभिधत्ते। प्रस्तुतार्थपरित्यागादन्यार्थस्य भजनं हि परिवर्तकः। संलापेन विगृह्य परिभाषया चाल्पकथायां परपक्षदूषणमुपदिशति। साऽसिद्धानां वाक्यैः मिथोऽधिक्षेपको हि संलापकः। संघात्यकेन साधकबाधकप्रमाणोपपत्तिभिः स्वपक्षस्थापनया परपक्षं प्रतिक्षिपति। कार्यमन्त्रार्थप्रभावदैवादिभिर्हि संघातभेदः सङ्घात्यकः। सेऽयं चतुरङ्गा सात्त्वतीवृत्तिः। या सात्त्वतेनेह गुणेन युक्ता त्यागेन वृत्तेन समन्विता च। हर्षोत्कटा संहृतशोकभावा सा सात्त्वती नाम भवेत्तु वृत्तिः॥

भोजः

## सात्त्विकभावाः

स्तम्भस्तु निष्क्रियाङ्गत्वं प्रलयो नष्टसंज्ञता।
रोमाञ्चो रोमनिर्भेदः स्वेदश्शीकरनिर्गमः॥
वैवर्ण्यं वर्णनाशः स्याद्वेपथुर्गात्रकम्पनम्।
अश्रु नेत्राम्बुवैस्वर्यं विस्वरत्वमुदाहृतम्॥
सत्त्वादेव समुत्पत्तेः सात्त्विका इति संज्ञिताः।
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभेदोऽथ वेपथुः।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकामताः॥ सर्वेश्वरः

इह हि सत्त्वं नाम मनःप्रभवं। तच्च समाहितमनस्त्वादुच्यते। मनसस्समाधौ सत्वनिष्पत्तिर्भवतीति। तस्य च योऽसौ स्वभावो रोमाञ्चाश्रुवैवर्ण्यादिलक्षणो यथाभावोपगतः स न शक्योऽन्यमनसा कर्तुमिति। लोकस्वभावानुकरणाच्च नाट्यस्य सत्त्वमीप्सितम्। को दृष्टान्तः। इहहि नाट्यधर्मीप्रवृत्ताः सुखदुःखकृताभावाः, तथा सत्त्वविशुद्धाः कार्याः यथास्वरूपा भवन्ति। दुःखन्नाम रोदनात्मकं, तत्कथमदुःखितेन। सुखं च प्रहर्षात्मकमसुखितेनाभिनयेत्। एतदेवास्य सत्वं दुःखीतेन प्रहृष्टेन वाऽश्रुरोमाञ्चौ प्रदर्शयितव्याविति कृत्वा सात्त्विका भावा इत्यभिव्याख्याताः।

भरतः

सीदत्यस्मिन्मन इति व्युत्पत्तेस्सत्त्वगुणोत्कर्षात्साधुत्वाच्च, प्राणात्मकं वस्तु सत्त्वम्। तत्र भवाः सात्त्विकाः। ते च प्राणभूमिप्रसृतरत्यादिसंवेदनवृत्तयो बाह्यजडरूपभौतिकनेत्रजलादिविलक्षणा विभावेन रत्यादिगतेनैवातिचर्वणागोचरेणाहृता अनुभावैश्च गम्यमाना भावा भवन्ति। तथाहि—पृथ्वीभागप्रधाने प्राणे सङ्क्रान्तचित्तवृत्तिगणः स्तम्भो विष्टम्भचेतनत्वं, जलभागप्रधाने तु बाष्पः, तैजसस्तु प्राणनैकट्यादुभयथा तीव्रातीव्रत्वेन प्राणानुग्रह इति द्विधा स्वेदो वैवर्ण्यं च, तद्धेतुत्वाच्च तथा व्यवहारः। आकाशानुग्रहे गतचेतनत्वं प्रलयः। वायुस्वातन्त्र्ये तु तस्य मन्द्रमध्योत्कृष्टावेशात् त्रेधा रोमाञ्चवेपथुस्वरभेदभावेनस्थितिः।

अभिनवगुप्तः

सात्त्विका आङ्गिकेष्वेव पर्यवस्यन्ति तत्त्वतः।
नटस्यातत्स्वरूपस्य किं तादात्म्यमतो न हि॥
स्तम्भादीनां सात्त्विकत्वं केवलानामिहोदितम्।
अथ प्रयत्ननिर्वर्त्याः सात्त्विकाश्चेद्भवन्मते॥
कथमेवं वचोभङ्गिरङ्गीकारोचितास्विह।
एत एव प्रयत्नेन निर्वृत्यास्सर्व एव वा॥
स्तम्भाद्या उत रत्यादिस्थायिनो व्यभिचारिणः।
तथाहि विवदन्तयत्र सत्त्वे प्राचाटुका यथा॥
विकाराद्धातुसंरोधनिर्मितात्सात्त्विकान् जगुः।
भट्टोद्भटादयःश्वासोच्छ्वासादेर्वासनामयान्॥
चिदंशो वायुसंरोधात्सिद्धासंवेद्यलक्षणः।
चिराचिरस्वरूपेण सत्त्वमित्यभिधीयते॥
शिक्षाभ्यासाच्चिरतरमङ्गाद्यैर्नाट्यकर्मणि।
वासनाभिनयैर्नैतद्भट्टलोल्लटसम्मते॥
भावस्य सुखदुःखाभ्यां के भेदाश्चेन्न कश्चन।
लयतालावसानस्य विषयेष्वप्रधानतः॥

प्रणीतस्य प्रयोगत्वात्संभावाल्लौकिकाः स्मृताः।
स्तम्भादीनां तु बाह्यानां हेतवो नान्तराः क्वचित्।
अतस्सविषयत्वं नो सहमाना इमे स्फुटम् ॥

कुम्भः

## सात्त्विकाभिनयभेदाः

चाक्षुष्यो व्यञ्जकश्चेति सात्त्विकः परिकीर्तितः।

शृङ्गारः

## सात्त्विकारेखा—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि म प नि स.
(अव) स नि ध प म ग रि म ग स.

मञ

## सादृश्यम्—लक्षणम्

अभिमानमेव सादृश्यं वदन्ति। अभिमानशब्दे द्रष्टव्यम्।

## साधनम्—शिल्पकाङ्गम्

प्राणैस्तपोभिरित्यादि यद्वचस्साधनं भवेत्।

शारदातनयः

व्याहारविशेषस्साधनम्। यथा—क्षपणककापालिके भवतु मन्त्रेण वशीकरोमि।

सागरः

## साधारणम्

शिशिरस्य वसन्तस्य मध्यस्थस्समयो यथा।
साधारणस्तयोरेव गते साधारणः स्वरः ॥
तद्वद्द्वेधा भवेदाद्यं स्वरसाधारणं परम्।
जातिसाधारणमिति तयोराद्यं चतुर्विधम् ॥
काकल्यन्तरषड्जैश्च मध्यमेन विशेषणात्।
यदा श्रुतिसमुत्कर्षात्स्वनोलुप्त इवास्फुटः ॥
गीतज्ञैर्गीयते गेयं स्वरसाधारणं तदा।
अत्युत्कर्षस्तु सपयोः न भवेद्द्विधयोरपि ॥
वैस्वर्याद्ध्रुवधानाच्च श्रुतीनां तेन जायते।
गन्योस्ताभ्यां तु साङ्कर्ये स्वरव्यक्तिर्न लभ्यते ॥
पारिशेष्यादतो गन्योः श्रुत्युत्कर्षः स्फुटो भवेत्।
गान्धारो वा निषादो वा विकृतो यत्र गीयते ॥
तत्र श्रुतिसमुत्कर्षाद्गातव्योऽसौ मनीषिणा।
काकलीसंयुतो यश्च यश्च स्यादन्तरान्वितः ॥
सगन्योरप्रयोगोऽपि प्रोक्तो वेसरषाडवः।
मतङ्गेनास्वरत्वेऽपि प्रयोगोऽस्त्यनयोस्ततः ॥
निषादः काकलीरूपो गान्धारश्चान्तरात्मकः।
षड्जस्याद्ये श्रुती क्रामन् निषादः काकली भवेत् ॥
निषादषड्जयोरेष यतः साधारणः स्मृतः।
अस्याऽसाधारणत्वं स्याद्धर्मः साधारणं हि तत् ॥
मध्यमाद्ये श्रुती क्रामन् गान्धारस्त्वन्तरो भवेत्।
साधारणोऽयं गमयोरस्य धर्मस्य यो भवेत् ॥
साधारणं तु तद्ज्ञेयं अत्र साधरणं बुधैः।
पूर्वं षड्जं समुच्चार्य काकली धैवतौ ततः ॥
प्रयोक्तव्यौ क्रमेणैव सम्यग्गानविशारदैः।
उच्चार्य मध्यमं तद्वत् प्रयुञ्जीतान्तरर्षभौ ॥
षड्जं काकलिनं यद्वा गीत्वा षड्जं व्रजेत्पुनः।
तत्परान्यतमं चेत्थं मध्यमं चान्तरस्वरम् ॥
प्रयुज्य मध्यमो ग्राह्यो यद्वा तत्परतः स्थितः।
स्वल्पप्रयोगः सर्वत्र काकली चान्तरस्वरः ॥
निषादः प्रथमां षाड्जीं ऋषभस्त्वन्तिमां श्रुतिम्।
षाड्जीमालम्बते चेत्स्यात् षड्जसाधारणं तदा ॥
गान्धारो मध्यमस्याद्यां अन्तिमां पञ्चमः श्रयेत्।
श्रुतिं यदि तदा मध्यसाधारणमिहोच्यते ॥
एते साधारणे साक्षाद्गीयेते कैशिकी इति।
ग्रामसाधारणे केचिदेत एवावभाषिरे ॥
एकग्रामसमुत्पन्नास्वेकांशास्वपि जातिषु।
यत्समं गानमापुस्तज्जातिसाधारणं विदुः।
रागानेवोचुरपरे जातिसाधारणं बुधाः ॥

पण्डितमण्डली

अत्र साधारणं षड्जं षड्जग्रामेऽनुसंभवि।
साधारणं मध्यमस्य मध्यमाम एव हि ॥
षड्जग्रामे काकली हि विद्यते नान्तरस्वरः।
सचेदत्रापतेत्तर्हि काकलीस्वरसंश्रयात् ॥
अन्तरो मन्यमग्रामे नित्यमेवावतिष्ठते।
तत्र चेत्काकली क्वापि दृश्यते सान्तराश्रयात् ॥
अत औडुवकृत षड्जग्रामे काकलवान्स्वरः।
मध्यमे त्वौडुवाशंसी काकली नैव कर्हिचित् ॥
तनोति षट्स्वरं गीतमिति गीतविदो विदुः।
एवं काकल्यन्तरे द्वे षड्जग्रामे यदा तदा ॥
षड्जसाधारणं प्रोक्तं भरतज्ञेन भूभुजा।
तथैवान्तरकाकल्यौ द्वौ मध्यमगतौ यदि ॥
तदा मध्यमपूर्वं स्यात्साधारणमिह स्फुटम्।
जातिसाधारणमथो यथोद्देशं प्रतन्यते ॥

एकांशोपचितास्वेकग्रामजेषु च जातिषु ।
बहूनां समतामाप्तं जातिसाधारणं तु तत् ॥
दत्तिलाद्याः पुनरिदं रागानेव प्रचक्षते ।
पण्डितं मन्यमानैश्च कैश्चिदत्रोपवर्णितम् ।
तानसाधारणं तत्र युक्तिलेशो न विद्यते ॥

कुम्भः

सानन्दगोविन्दरामश्रेणिकुसुमास्तरणं—सूडप्रबन्धः

क्रमेण नट्टा केदारः श्रीरागः स्थानगौडकः ।
धरिणी मालवीयश्च वराटी मेघरागकः ॥
मालवश्रीर्देवशाखा गौण्डकृतिश्च भैरवा ।
धन्नासिका वसन्तश्च गुर्जरी च मल्हारकः ॥
ललितस्सप्तदशमे रागास्तावन्ति च क्रमात् ।
पदानि तेषु तालाः स्युरिमे तन्नाम कीर्त्यते ॥
आद्यस्त्रिस्सप्तदशमः द्वादशे द्रुतमण्ठकाः ।
तृतीये नवमे चैकादशे चैव त्रयोदशे ॥
पदे पञ्चदशे सप्तदशे रूपक ईरितः ।
चतुर्थे मण्ठतालश्चाड्डतालः पञ्चमे स्मृतः ॥
त्रिपुटष्षष्ठाष्टमयोः स्याद्द्रुतप्रतिमण्ठकः ।
चतुर्दशे षोडशे च तेनाः स्युः प्रतितालकम् ॥
मध्यमादौ पुनर्मुक्तिः शृङ्गारः साभिलाषयोः ।
स्त्रीपुंसोरुत्तमस्यात्र नायकस्योपवर्णनम् ॥
कैशिकीरीतिमाश्रित्य पदानां रचना मता ।
छन्दः स्वेच्छाविरचितं रूपके यत्र दृश्यते ॥
सोयं सानन्दगोविन्दरामश्रेणीपदात्पुरः ।
कुसुमास्तरणोनाम प्रबन्धः प्रीतिकृद्धरेः ॥ कुम्भः

साधारणा—मूर्छना

मूर्छनाभेदे द्रष्टव्यम् ।

साधुनाटरागध्यानम्

शिबिकारोहिणं खड्गहस्तमुष्णीषधारिणम् ।
श्वेतवस्त्रधरं साधुनाटरागमजं भजे ॥

रागसागरः

साध्वसः

गात्रभङ्गश्च साध्वसः । भावविवेकः

साध्वसम्—भाणिकाङ्गम्

अभूतस्य भूतोदाहरणम् । तदेव मिथ्याख्यानं साध्वसम् ।
शकुन्तले पष्ठेङ्के—चूतानां चिरनिर्गतेत्यादि ।

सागरः

सान्द्रः—(प्रबन्धे). नादः

तारस्थानगतो गाढबन्धवर्गगणाश्रयः ।
प्राणामिधो रवो ज्ञेयः स सान्द्रश्च मनीषिभिः ॥

कुम्भः

—देशीतालः

सान्द्रस्त्रिचन्द्रसंमिश्रद्रुतत्रयमधो लघुः ।
SSS००० । लक्ष्मणः

साम

तत्र सामलक्षणम् । यथाहि साम्नां हूमादिलमन्त्रः स्तोभेऽभिधीयते । यथाकलानामत्रापि पूरकस्तोभ उच्यते ।

यानि हि ऋगक्षरेभ्योऽभ्यधिकानि विवर्णभूतानि ।
यानि च तानि स्तोभाक्षराणि मुनिराह जैमिनिश्शास्त्रम् ।
ओङ्कारश्चहकारश्च स्वरव्यञ्जनसंयुतः ।
स्तोभो विधेयो वोक्तव्यः सामगीतिषु सर्वदा ॥
ब्रह्मोदितानि यान्यत्र दश स्तोभपदानि तु ।
कलानां पूरणार्थाथ मन्त्र सतानि तान्यपि ॥

झंटुं, जगतिपवलितक, कुचझल गितिवल पशुपति दगिदिगि दिग्गे गणपति चेत्येवं ब्रह्मोक्तान्यत्र दशपदात्मकस्तोभाश्च प्रस्तारोद्गीथौ द्वौ प्रतिहारोपद्रवौ सहिङ्कारैः ओंकाराङ्गानि । अथ साम्नां चान्यत्र तान्यपि विदध्यात् इति—सूत्रं

| | | |
|---|---|---|
| उद्ग्राहः | प्रस्तारः | शुद्धा |
| अनुद्ग्राहः | उद्गीथः | भिन्ना |
| संबोधः | प्रतिहारः | गौडी |
| ध्रुवकः | उपद्रवः | केसरा |
| आभोगः | निधनं | साधारणी |
| रूपकम् | ओङ्कारः | ,, |

नान्यः

सङ्गीतरत्नाकरे—प्रस्तारोद्गीथकप्रतीहारोपद्रवनिधन हिङ्कारोङ्कारौ कलापूरक सामाङ्गानि ।

आद्यः प्रस्तार उद्गीथः प्रतिहारस्ततःपरम् ।
उपद्रवोऽथ निधनं हिङ्कारोङ्कारकौ तथा ॥
इति सप्तसमाचष्ट सामाङ्गानि पितामहः ।
उद्ग्राहानुद्ग्राहकश्च सबोधो ध्रुवकस्तथा ॥
आभोगश्चेति नामानि क्रमादाद्येषु पञ्चसु ।
कलापूरकता प्रोक्ता हिङ्कारोङ्कारयोरिव ॥

—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म प ध स.
(अव) स ध प म ग रि स.

—सन्ध्यन्तरम्

मधुरवचनैरनर्थान्निवर्तनं वाक्यं साम। यथा—कुम्भाङ्के साम्रणवाक्यम्। यथा—"ज्ञाता यस्य कृहरपतिः" इत्यादि।

सागरः

पार्थविजये—क्षीरोदादमृतच्युतिः—इति वासुदेववाक्यम्।

भोजः

सामगूर्जरी—उपाङ्गरागः

द्राविडगूर्जर्या नामान्तरम्।

सामन्तः—मेलकर्ता

सामन्तनामनि मयूरषड्जुक्षरुद्र-
गान्धारशुद्धतरमध्यमकोकिलाख्यम्।
गोविन्दवाजिपुरमिद्रजमेव तुल्यं
संपूर्णजातिरिति गायति तुम्बुरुस्सः॥

समपाःशुद्धाः। षट्श्रुति रिः। साधारणो गः। चतुश्रुतिर्धः। काकलिर्निषादः।

परमेश्वरः

—मेलरागः (कर्णाटगौडमेलजः)

सामान्तरस्त्वन्वयेनाप्तः सप्तस्वरविभूषितः।
गेयः प्रभात कालेऽसौ काकल्यन्तरराजितः॥

श्रीकण्ठः

—मेलरागः

रिस्तु तीव्रतरः प्रोक्तः तीव्रगान्धारशोभिते।
सामन्तसंज्ञके रागे न्यासोद्ग्राहांशषड्जके॥
सायंगेयः।

अहोबिलः

सामन्तमल्लः—देशीतालः

सामन्तमल्ले प्लुतयोरन्तरे सप्तबिन्दवः।
ऽ००००००० ऽ

गोपतिप्पः

सामन्तमल्हारीरागध्यानम्

कामाक्षिदेवी सुधामाधिवासां
श्यामां द्वितन्त्रीस्थवीणाङ्कितां ताम्।
सेवन्तिका दामभास्वत्सुचेलां
सामन्तमल्लारिकां चिन्तयामि॥

रागसागरः

सामन्तरागध्यानम्

करधृतकरवालः शत्रुसन्दोहकालः
प्रथनमधिकरालः प्रौढकीर्त्या विशालः।
हृदयनिहितमालः कुङ्कुमव्याप्तफालः
स्फुरति धरणिपालः ख्यातसामन्तरागः॥

श्रीकण्ठः

सामर्थ्यम्—भक्तिः

सामर्थ्यं च पदार्थानां भवेत्सम्बन्धिरूपता।
भेदस्संसर्ग उभयमित्येतत्त्रिविधं मतम्॥

भोजः

वाक्ये पदपदार्थानां तस्मात्सामर्थ्यमीरितम्।

शारदातनयः

सामवसन्तः—मेलरागः (हनुमत्तोडीमेलजन्यः)

(आ) स रि ग म प नि स.
(अव) स नि ध प म ग रि स.

मल्ल

सामवीरीगूर्जरी—रागः

गूर्जरी च परा रागात् सामगानी समाश्रिता।
अस्य रागस्य रूपके अंशन्यासग्रहाः ऋषभ एवेति वृत्तः।

मदनः

सामाङ्गानां गीताङ्गत्वम्

प्रस्तार उद्ग्राहो भवति। स एव शुद्धा जातिरित्युच्यते। तथैव क्रमादुद्गीथ, प्रतिहार, उपद्रव, निधन, रूपसामाङ्गानि अनुद्ग्राह संबोध ध्रुवक आभोगरूपगीतकाङ्गानि भवन्ति। रागजातिषु भिन्नगौडीवेसरा साधारण्ये भवतः।

सामान्या—नायिका

शृङ्गारनिष्पन्दिनि नाटके तु स्वीयेष्यते दिव्यनृपाश्रये च।
रक्ता विरक्ता गणिकात्र सैषा चेटी सखीव क्वचिदुत्तमायाः॥
रक्ताह्वया प्रहसनादितरत्रवर्ण्या
सा नाटकेऽपि विहिता क्वचिदप्रधाना।
वर्ण्या भवेत्प्रहसनप्रभृतिष्वथान्या
हास्यैकहेतुवचसो गणिका विरक्ता॥
यथाग्निमित्रस्य नृपालमौलेरिरावती सागरिकैव रक्ता।
वसन्तसेनापि च चारुदत्तस्योक्ता तथा मृच्छकटे प्रसिद्धा॥
रक्ता गणिकैव स्यादिरावतीत्वग्निमित्रनृपमौलेः।
स्यान्मृच्छकटिकायां वसन्तसेनाहि चारुदत्तस्य॥

नीलकण्ठः

साधारण स्त्रीगणिका सा वित्तं परमिच्छति।
निर्गुणेऽपि न विद्वेषो न रागोऽस्या गुणिन्यपि॥

शृङ्गाराभास एव स्यान्न शृङ्गारः कदाचन ।
इति द्विषन्तमुद्दिश्य प्राह श्रीरुद्रटः कविः ॥
रागशृङ्गारनिर्मुक्ता इति स्युर्गणिकाः स्वतः ।
योषित्सामान्यतो जातः स्मरः किं भक्षितः श्वभिः ॥
किन्तु तासां कलाकेलिकुशलानां मनोरमम् ।
विस्तारितापरस्त्रीकं सुरतं जायते नृणाम् ॥
कुप्यत्पिनाकिनेत्राग्निज्वालाभस्मीकृतः पुरा ।
उद्दीपितः पुनः कामो मन्ये वेश्याविलोकितैः ॥
कलाविलास वैदग्ध्यवसतिर्गणिकाजनः ।
पुंसां सौभाग्यवैदग्ध्यनिकषः केन निर्मितः ॥
ईर्ष्याकुलस्त्रीषु न नायकस्य निश्शङ्ककेलिर्न पराङ्गनासु ।
वेश्यासु चैतद्वितयं प्ररूढं सर्वस्वमेतास्तदहो स्मरस्य ॥

रुद्रटः

शान्तिं याति शनैर्महौषधिबलादाशीविषाणां विषं
शक्यो मोचयितुं मदोत्कटकटादात्मा गजेन्द्राद्वने ।
ग्राहस्यापि मुखान्महार्णवजले मोक्षः कदाचिद्भवेत्
वेशस्त्रीबडबामुखानलगतो नैवोत्थितो दृश्यते ॥

वररुचिः

सामान्यवनिता वेश्या प्रगल्भैव स्वभावतः ।
न च रागवती कापि कचिद्रागोपि दृश्यते ॥
तस्यां पुंसोऽनुरागो यः शृङ्गाराभास एव सः ।
किन्तु केलिकलास्फीतं तद्रतं मूढमोहनम् ॥

कुम्भः

सामुद्रः—गीताङ्गम्

त्र्यश्रतालस्थदक्षिणमानेन यथा—झंटुं जगतिप दिगदिग इत्यादि चतुरश्रतालेन दक्षिणमानेन द्वादशगणं भवति। यथा ओङ्काराक्षर हृदयमयं सुरभिकुसुमवासितं—इत्यादी ।

नान्यः

सामोददामोदरभ्रमरपदः—सूडप्रबन्धः

यस्य स्याद्गुर्जरीरागस्तालो झम्पेति भागशः ।
यथाशोभं प्रयोगोऽपि गद्यपद्यान्तरान्तरः ॥
आभोगान्ते स्वराः पाटाः पुनः पद्यानि कानिचित् ।
सामोददामोदराख्यिप्रबन्धो भ्रमरपदम् ॥

कुम्भः

साम्यम्—तत्त्वगताक्षरादिसाम्यम्

अक्षरसदृशं वाद्यं इत्युक्तं तत्त्वस्य लक्षणे । तत्र साम्यं (सादृश्यं) अक्षरसमं, अङ्गसमं,ताललययतिसमं, न्यासापन्यासमं, पाणिसमं, इति ।

भरतः

साम्या—प्राकृते मात्रावृत्तम्

पञ्चमात्रिकः एकः गुरुः ।
चतुर्मात्रिकः एकः गुरुः जो वा रो वा ।
इयं संस्कृत एव दृश्यते न तु प्राकृतभाषायां ।

विरहाङ्कः

सायंगेया—रागः

शुद्धनट्टा सालगा च नाटा शुद्धवराटिका ।
वराटिका द्राविडी च देशी नागवराटिका ॥
छाया वराटिका च स्यादाहर्यन्धालिका मता ।
मल्लारिका तदा छाया गौडी कर्णाटिकाह्वया ॥
गौडो मालवगौडश्च रामक्री रीतिरुत्तरा ।
छाया रामकृतीरङ्गछाया स्वरवराटिका ॥
कर्णाटाह्वयबङ्गालसहिताश्चन्द्रमोऽशुजाः ।
सायमेते प्रगातव्यास्तस्य श्रीरतुला भवेत् ॥
एतान्प्रातः परित्यज्येद्वृद्धिकामीह मानवः ।
अनिरुक्ते तु रागाणां न वेलानिर्णयः कचित् ॥

जगदेकः

सारङ्गः—मेलकर्ता

विशुद्धौ षड्जगान्धारौ तथा मध्यमपञ्चमौ ।
पताग्नौ च समौ यत्र निषादः कैशिकी पुनः ॥
सारङ्गो गीयते पूर्णः षड्जत्रयविराजितः ।
मध्याह्नकालतः पश्चाद्गीतश्चित्तरञ्जकः ॥

श्रीकण्ठः

—मेलरागः (मेलकल्याणीमेलजन्यः)

(आ) स रि ग म प ध नि स .
(अव) स ध प म रि ग म रि स .

मञ्ज

सारङ्गः—मेलरागः

अतितीव्रतमो गः स्यान्मस्तु तीव्रतरो मतः ।
धस्तु तीव्रतरो निः स्यात्तीव्रः षड्जादिमूर्छने ।
सन्यासें मध्यमांशे च रागे सारङ्गसंज्ञके ॥

द्वितीयप्रहरोत्तरगेया ।

अहोबिलः

—मेलरागः (कल्याणीमेलजोऽयं रागः)

सारङ्गेऽजश्रुतिस्तद्वदवरोहेऽजवर्जनम् ।
संपूर्णषाडवस्तस्मात्कल्याणीरागवद्भवेत् ॥

परमेश्वरः

**सारङ्गगौलः**—मेलरागः

सारङ्गगौल आख्यातः सारङ्गस्वरसंभवः।
सन्यासो मध्यमांशश्च गधहीनोऽथ सादिमः ॥
तृतीयप्रहरोत्तरगेयः। अहोबिलः

—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि ग म प नि स.
(अव) स ध नि ध प म ग रि स.

मञ्ज

**सारङ्गद्रुमः**—मेलरागः (खरहरप्रियामेलजन्यः)
(आ) स रि ग म ध नि स.
(अव) स नि ध म ग स.

मञ्ज

**सारङ्गनाटः**—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि म प ध स.
(अव) स नि ध प म रि म ग रि स.

मञ्ज

**सारङ्गनाटा**—रागः

सारङ्गनाटा संपूर्णा सत्रयोत्तरमन्द्रजा।

दामोदरः

**सारङ्गनाटरागध्यानम्**

नामान्तरं सारङ्गा।

करधृतवीणासख्या सहोपविष्टा च कल्पतरुमूले।
दृढतरनिबद्धकबरी सारङ्गाऽसौ सुरारिणा प्रोक्ता ॥

दामोदरः

**सारङ्गमण्ठः**—तालः

लघुर्द्रुतत्रयं चैव लघुस्सारङ्गमण्ठके।
। ० ० ० । वेदः

**सारङ्गरागध्यानम्**

कुन्तलजितसारङ्गामन्तिकतालीमुखोत्थसारङ्गाम्।
मदनाहितसारङ्गां मनसि ध्यायामि सन्ततं सारङ्गाम् ॥

रागसागरः

प्रसूनमाली परिबद्धकेशो
वीणां दधानो लसदंसदेशे।
सह प्रियामित्सहकारमूले
सारङ्गरागो रसिको विभाति ॥

श्रीकण्ठः

**सारङ्गवीणा**—(किन्नरी)

किन्नरीभाषया देश्या वीणा सारङ्गपूर्विका।
अध्यर्धेन वितस्तीनां त्रयेणायतत्रान्पुनः ॥
दण्डः कार्यो दृढः श्लक्ष्णो वेणुना खदिरेण वा।
पञ्चाङ्गुलः स्यादानाहः ककुभस्तत्प्रमाणवान् ॥
कूर्मपृष्ठाकृतिस्स्थाप्या पत्रिका लोहनिर्मिता।
अस्योर्ध्वभागे बध्नीयादधस्ताल्लोहतुम्बकम् ॥
अग्रमष्टाङ्गुलं त्यक्त्वा स्थापयेत्पृथुतुम्बकम्।
उपरिस्थस्य तुम्बस्य सविधेरन्ध्रयुग्मकम् ॥
कुर्वीतकीलकौ तत्र स्थाप्यौ सकलशावुभौ।
ऊर्ध्वं तन्निश्चलं कुर्यात्कीलकं चरमं चलम् ॥
चरमे लोहरहिता वक्रा कल्प्या शलाकिका।
निश्चले कीलकं लक्ष्ये विदध्याद्रन्ध्रपञ्चकम् ॥
तन्त्रीप्रवेशयोग्यं च विदध्यात्सुषिरं चले।
कीलादुपरिदण्डस्य दृढं तन्त्रीं प्रवेशयेत् ॥
तन्त्रीं तेनैवरन्ध्रेण प्रवेश्य चलकीलके।
प्रथयेच्चरमं भागममुष्यां ककुभस्य तु ॥
छिद्रे प्रवेश्य बध्नीयाद्दृढं वीणाविचक्षणः।
भ्रमणाच्चलकीलस्य पश्चात्तन्त्री दृढा भवेत् ॥
प्रविधाय च कीलस्य वक्त्रं लोहमयं पुनः।
निश्चले कीलके गाढं कुशेन विनिवेशयेत् ॥
यद्वा लोहमयी तन्त्री गजकेशोपमा भवेत्।
जीवाञ्जीवा विधानज्ञः ककुभे तत्र निक्षिपेत् ॥
वस्त्रकज्जलमिश्रेण मधूच्छिष्टेन निर्मिता।
कनिष्ठाङ्गुलि विस्तारा भित्तयस्युश्चतुर्दश ॥
पूर्वेत्वेकाङ्गुलोत्सेधाच्चरमाद्यङ्गुलोन्नताः।
मध्यस्था भित्तयः कार्या क्रमादेवं समुच्छ्रया ॥
गृध्रपादास्थिसदृशा सारिका दोरकल्पिताः।
सर्वेषामपि भित्तीनां निदध्यादूर्ध्वभागके ॥
स्वरसप्तकयुग्मस्य भित्तयस्स्युः प्रमाणतः।
एवं किन्नरवीणाया वादनं समुदीरितम् ॥
कैलासवीणाप्रभृति वाद्यं स्यात्सकलं बहु।
ग्रन्थस्य विस्तरधिया नोदीरितमतःपरम् ॥

हरिपालः

**सारङ्गी**—वीणा

सालजा पनसी वापि सारदारुभवापि वा।
त्रिवितस्तिमिता दैर्घ्ये शिरः पञ्चदशाङ्गुलम् ॥

तत्तु सर्पफणाकारं तन्मध्ये शिखरो भवेत् ।
गलभागे क्रमान्न्यूनं तस्मादुद्वृत्तकर्णिका ॥

अस्या अधस्थितो दण्डो दैर्घ्ये सप्तदशाङ्गुलः ।
स्थूलमूलः कृशाग्रश्च क्रमेण वलितो भवेत् ॥
दण्डस्य शिरसश्चैव गर्भशून्यं तु कारयेत् ।
दण्डस्य पृष्ठदेशे तु शिरसः क्रोडतस्तथा ॥
सारीगृहं भवेदस्याः सारङ्गयाश्चतुरश्रकम् ।
दैर्घ्ये षडङ्गुलं प्रोक्तं प्राशस्त्ये चतुरङ्गुलम् ॥
शून्यो गर्भश्च तस्याथ गाम्भीर्ये चतुरङ्गुलः ।
तिस्रस्तत्रैव मोटिन्यो विन्यस्यास्तद्विलत्रये ॥
अग्रतस्तत्र चूडं स्याद्यथा देवकुले तथा ।
अस्याश्शिरः पिधातव्यं कच्छप्या इव चर्मणा ॥
स्थाप्या मकरिका तत्र त्रिरेखाङ्गुष्ठनिर्मिता ।
दशाग्रे कलिका देया साचिरेकास्थिता भवेत् ॥
तिस्रस्तन्त्र्यः पट्टसूत्रभवा स्थाप्या अनुक्रमात् ।
निर्मायैवं धनुर्वंशपृष्ठस्य विंशदङ्गुलम् ॥
अश्वपुच्छसमाकृष्टैः वालैरस्य गुणो मतः ।
तं घृष्ट्वा सालनिर्यासैः तेन तन्त्रीस्तु वादयेत् ।
एषा सारङ्गिका वाद्या तद्ज्ञानामुपदेशतः ॥

नारायणः

**साङ्गी**—रागः (सङ्कीर्णः)

साङ्गी स्यात्तोडिधन्यासिकाभ्यां ।

नारायणः

इयं साङ्गवीणा किन्नरीवीणेति च कथ्यते ।

**सारमती**—मेलरागः नटभैरवीमेलजन्यः

(आ) स रि ग म प ध नि स.
(अव) स नि ध म म ग रि स.

भज

**सारम्भत्वम्**

आवेग एव विषये प्रतिभाति निरोधनात् ।
अनुबन्धी च भूयोऽपि सारम्भत्वं प्रचक्षते ॥

भावविवेकः

**सारवाहिनी**—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग रि म प नि स.
(अव) स नि ध प म रि ग रि स.

भज

**सारविलम्बी**—(हरिकाम्भोजीमेलजन्यः)

(आ) स ग म प नि स.
(अव) स नि ध प म ग रि स.

भज

**सारवी**—रागः

स्वल्पतरषड्जमन्द्रा पञ्चमरहिता च तारगान्धारा ।
न्यासांशग्रहधैवतसारवी सारवी भवति ॥

नान्यः

षड्जाल्पा तारगान्धारा पञ्चमेन च वर्जिता ।
सारवी सहिता न्यासग्रहांशैर्धैवतात्मकैः ॥

मतङ्गः

**सारसः**—देशीतालः

सारसो लघुनो दानां त्रयाल्लद्वयतो भवेत् ।
॥ ० ० ० ॥

कुम्भः

लघुर्द्रुतानां त्रितयं लघौद्वौ सारसः स्मृतः ।
। ० ० ० ॥

दामोदरः

सारसो द्रैर्लघुद्वन्द्वात् ।
० ० ० ॥

मदनः

**सारसतालोडुपम्**—देशीनृत्तम्

लघुर्द्रुतानां त्रितयं लघू द्वौ सारसो मतः ।
तालेनानेन विहितं ।

वेदः

। ० ० ० ॥

**सारसिका**—प्राकृते द्विपदी

विषमा— स स स ग.
समा— भ भ भ ग ग.

विरहाङ्कः

**सारस्वतभरतम्**

मुडुम्बि नरसिंहाचार्यकृतस्य भरतसारसङ्ग्रहस्य नामान्तरम् ।

**सारीचन्द्रकला**—नृत्ते बन्धः

यत्र मध्यचतुष्केऽपि कोणस्थहरिणेक्षणाः ।
अर्धचन्द्रानुकारेण चरन्त्यन्यास्तु योषितः ॥
भ्रमन्ति चक्राकारेण चारुविभ्रमभूषिताः ।
सारी चन्द्रकलाख्यासौ बन्धो नयनबन्धुरः ॥

वेमः

**सारी**—नृत्ते बन्धः

चतस्रस्सर्वबन्धेषु प्रायशः पात्रपङ्क्तयः ।
ऋज्वीगतिः पात्रपङ्क्तिः ओरेति परिभाषिता ।
चतुष्करूपबन्धेषु वृत्तिस्सारीति सम्मता ॥

वेमः

**सारूप्यम्**—लक्षणम्

दृष्टश्रुतानुभूतार्थकथनादिसमुद्भवम्।
सादृश्यं क्षोभजननं सारूप्यमिति संज्ञितम्॥

भरतः

आदिशब्देन दर्शनश्रवणानुभवनान्युपलक्षितानि। अत्र रूपविभ्रान्त्या न क्षोभजननमेव लक्षणस्य चमत्कृतिः। यथा—उत्तररामे हिरण्मयीं सीतां दृष्ट्वा लवस्य वाक्यम्—कथमियमम्बेति। अनन्तरं काञ्चनमयीति लज्जित उपविशति।

अपदेशस्तु परोक्षो यस्मादुत्पद्यतेऽनुकरणेन।
लक्षणसमानकरणात्सारूप्यं तत्तु विज्ञेयम्॥

सैन्दूरीकृतसान्द्रेति श्लोके यदिति निर्देश्यं परोक्षवस्तुतत्वस्यापरिज्ञानादनुकरणेन प्रच्छायमात्रेणापदेश्यमालोच्यमिति लक्षणेन सैन्दूरीकृतेत्यादिना समानं सप्रमाणकं करणदर्शनक्रिया यस्य तादृशे वस्तुनि सारूप्यं लक्षणम्। पौर्णमास्यामपि वक्ररेखेवेन्दोर्भागो लक्ष्यते। उदयाचलान्तरितत्वात्सन्ध्यासमये।

अन्यत्र पाठः—

यथादेशं यथाकालं यथारूपं च वर्ण्यते।
यत्प्रत्यक्षं परोक्षं वा दृष्टं तद्वर्णतोऽपि च॥

भरतः

प्रत्यक्षं वस्तु परोक्षमिव देशकालरूपानुसारेण वर्ण्यते।

अभिनवगुप्तः

**सालगः**—गीतिजातिः

रागतालग्रहलयरचनाधातुमातुभिः।
अलङ्कारैस्तु भिन्नेषु यत्स्वैवान्नस्य वतुनः॥
छायेन लगतिच्छायां रक्तिमाधुर्ययोगतः।
तस्माच्छायालगानि स्युस्तानि गीतानि तत्त्वतः॥

कुम्भः

—प्रबन्धः

शुद्धश्चेदङ्गरहितः सालगः।

अङ्गैःस्वरपाठैस्तेनकैर्विरहितः शुद्धसालगो भवति। वाक्यं तु सालगेऽपि भवति। तेन विनतादृशी रञ्जकता जायते। मातृकप्रबन्ध सूडप्रबन्धादिषु जात्या वैलक्षण्यविधानात्तु सालगव्यवहारः। शुद्धस्य छाया लगतीति सालग इत्यस्य नाम्नो लगतीति व्युत्पत्तिः प्राचीनैः प्रदर्शिता। सूडकल्पितः रञ्जको नवमिस्तालैः गीतवाद्यो च नर्तने। यद्यप्यन्येऽपि सूडकल्पिता मुक्तकाश्च सालगाः सन्ति। तथा सूडो नवतालात्मकः।

कृष्णदासः

**सालगगौडः**—रागः

गौडस्सालगनामश्च नित्रि अपर्युक्चरः।

मदनः

**सालगगौलः**—उपाङ्गरागः

अयं सालगगौलः स्यान्निषादस्वरकम्पितः।

अयमिति द्राविडगौलनिर्देशः।

भट्टमाधवः

**सालगमण्ठकः**—देशीतालः

द्रुतो लघुर्दत्रयं च लघुस्सालङ्गमण्ठके।
० । ० ० ० ।

दामोदरः

**सालङ्गः**—मेलरागः

गान्धारोद्ग्राहसालङ्गे रिगौ कोमलतीव्रकौ।
धन्यासो मध्यमांशश्च सर्वत्र बहुकम्पनम्॥

सर्वदा गेयः।

अहोबिलः

**सालङ्गनाटः**—मेलरागः

शङ्कराभरणोत्पन्ने गान्धारस्वरवर्जिते।
अथ सालङ्गनाटेऽस्मिन् सन्यासांशसमन्विते।
षड्जोद्ग्राहेण सम्पन्ने मधावारोहिते स्मृतौ॥

सायंगेयः।

अहोबिलः

**सालङ्गनाटरागध्यानम्**

रथाधिरूढमाखेटशरचापसमन्वितम्।
हरिद्वर्णं च सालङ्गनाटरागमहं भजे॥

रागसागरः

**सालङ्गनेरिः**—देशीनृत्तम्

सालङ्गनेरिस्सञ्ज्ञेयो युतायुतकरैः कृतः।

वेदः

**सालभञ्जिका**—मात्रावृत्तम्

चतुर्मात्रिकास्त्रयः पञ्चमात्रिक एकः ल ग।

विरहाङ्कः

**सालवाहनी**—रागः

ऋषभांशं धैवतान्तं संपूर्णा सालवाहनी।
ककुभात्तु समुद्भूता रिमाभ्यां सङ्गता तथा।
एतस्या विनियोगस्तु कथितः करुणे रसे॥

जगदेकः

**सालवाहिनी**—रागः

अंशर्षभकनिषादग्रहसहितापन्यासधैवतकयुक्ता।
आन्दोलितगमकाद्या... ... सालवाहिनिका॥

नान्यः

निग्रहा धैवतन्यासा रिषभांशा च याति सा ।
आन्दोलितेन संयुक्ता समन्तात्सालवाहिनी ॥

मतङ्गः

सालवाहनिका—रागः

अनन्तरं भवेद्रागः सालवाहनिकाभिधः ।
संपूर्णो धैवतन्यासः संगतर्षभमध्यमः ।
ऋषभांशसमुद्भूतः ककुभादुदितो बुधैः ॥

हरिः

साल्वमुखारी—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स नि प म रि स.

मञ्ज

साल्वः—मेलरागः (साल्वगमेलजन्यः)

(आ) स रि ग म प ध नि ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

साल्वगः—मेलकर्ता (रागः)

स रि ग ० ० ० म प ध नि ० ० स.

मञ्ज

सावधानता—वंशे फूत्कारगुणः

सावधानत्वमुदितं फूत्कारान्तरवर्जनम् ।

कुम्भः

यद्वंशे फूत्कृतः कण्ठतुल्य एव विदुर्बुधाः ।
अन्यूनोऽनतिरिक्तश्च फूत्कारस्तत्रवधानवान् ।
कथितो नारदेवेन सर्वगान्धर्ववेदिना ॥

नान्यः

सावधानत्वम्—फूत्कारगुणः

सावधानत्वमुदितं फूत्कारान्तरवर्जनम् ।

कुम्भः

न्यूनाधिकत्वराहित्यं फूत्कृतेस्सावधानता ।

वेमः

सावरराजपौत्रः—देशीतालः

ततः सावरराजादौ पौत्रताले पगौ चतुः ।
ऽऽऽऽऽऽऽऽऽऽ

गोपतिप्पः

सावरराजः—देशीतालः

ताले सावरराजे त्रिः गपपव्योमखानि दः ।
ऽऽऽ०० ऽऽऽ००ऽऽऽ०००

गोपतिप्पः

सावरी—प्रथमरागः

भाषा रगन्ती ककुभेऽपि मुख्या
तदुद्भवा सावरिका प्रगीता ।
मध्यग्रहांशात्वपपाल्पषड्जा
धान्ता गतारा करुणे ममन्द्रा ॥

मोक्षः

—भाषाङ्गरागः

रगन्ती ककुभा तज्जा सावरी तत्समुद्भवा ।
षड्जग्रहा धैवतान्ता (गतारा मन्द्रमध्यमा) ॥
करुणे पञ्चमोज्झिता ।

भट्टमाधवः

—रागः

ततः ककुभसंभूता रङ्गन्तीति समीरिता ।
सावरी तु तदङ्गं स्यात् षड्जान्ता धैवतांशका ॥
मध्यमांशग्रहा तारगान्धारे स्वल्पषड्जका ।
पञ्चमेन परित्यक्ता मध्यमे मन्द्ररूपिणी ।
लक्षणैरिति निर्दिष्टा सावरीत्यभिधीयते ॥

हरिः

सावित्रः—तानः

षड्जग्रामे नारदीयतानः ।
रि म प ध स ?

नान्यः

सावित्री—तानः

मध्यमग्रामे षड्जहीनष्षाडवः ।
ग रि वि ध प म

कुम्भः

सावेरी—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि म प ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

—मेलरागः

सावेरी तीव्रगान्धारा धैवतोद्ग्राहसंभवा ।
मध्यमांशा निहीना चारोहगे गनिवर्जिता ॥
सर्वदा गेया ।

अहोबिलः

—रागः

धैवतांशा च तन्न्यासा स्वस्थाने स्यात्प्रकम्पिता ।
निषादे मध्यमे नित्यं तिरिपा कम्पसंयुता ॥
तारमध्यमषड्जाद्या पञ्चमेन विवर्जिता ।
षड्जदेशी निजस्थाने सावेरी सर्वकम्पिता ॥

सोमेश्वरः

## सावेरीरागध्यानम्

कुसुमावृतधम्मिल्लां चन्द्रकिपिच्छावतंसितप्रकोष्ठाम् ।
सावेरीं ध्यायामि प्रकटितवीणाधरां सितवसनाम् ॥

रागसागरः

## साहसम्—सन्ध्यन्तरम्

स्वजीवितनिराकाङ्क्षो व्यापारस्साहसं भवेत् ।

सिंगः

सहसैव शरीरमनपेक्ष्य कार्ये प्रवृत्तिः साहसम् । सहसाजातम् । यथा—श्मशानाङ्के मालतीदर्शनार्थं माधवस्य महामांसविक्रयः ।

सागरः

## साहसः—रागाङ्गरागः

ग्रहांशन्यासषड्जः स्यान्ममन्द्रो मध्यतारगः ।
हिन्दोलसंभवो रागो साहसो गीयतेऽह्निसि ॥

कुम्भः

## साहसिकः

आलोचनं तु कार्येषु मन्वानो दीर्घसूत्रताम् ।
अध्यवस्यति यः शीघ्रमसौ साहसिकः स्मृतः ॥

भावविवेकः

## साहाय्यम्—नाट्यालङ्कारः

सङ्कटेऽनुगुणभावः । यथा—कुलपत्यङ्के कुलपतिवेषधरस्य रावणस्य मित्रत्वसुरूपापत्तेः चित्रमायस्यानुगुणभावः । (उदात्तराघवे)

सागरः

## साहित्यप्रकाशः—श्रव्यकाव्यम्

यस्मिन्नशेषविद्यास्थानार्थविभूतयः प्रकाशन्ते ।
संहित्य ससाहित्यप्रकाश एतादृशो भवति ॥

एतादृशः । शृङ्गारप्रकाश सदृशः ।

भोजः

## साहुली—मेलरागः

(आ) स रि ० ० ग म ० प ० ० नि ० स .
(अव) स ० नि ० ० प ० म ० ० ० रि स .

मेललक्षणे

## —मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स ग म प नि स .
(अव) स नि ध प म ग रि स .

मज

## साहुलीरागध्यानम्

नवशङ्खोपलनीलां प्रविमलवसनां प्रवालमणिभूषाम् ।
शिवपूजापरतन्त्रीमविरलमनसा च साहुलीं ध्याये ॥

रागसागरः

## सिङ्गणार्यः

भरतमितिकर्ता । अन्यस्सिङ्गणार्यः विप्रदासवेमभूपहम्मीरशोकमल्लादिभिरराल्हस्तसन्दर्भे स्मृतः । हम्मीरकालः क्री. प. 1300 इति कृत्वा तत्पूर्वमेवायं सिङ्गण इति निश्चयः ।

## सिङ्गभूपालः

सङ्गीतसुधाकरग्रन्थनिर्माता । अयं संगीतसुधाकरस्तु सङ्गीतरत्नाकरव्याख्यारूपः । अत्र सङ्गीतसमयसार नन्दिकेश्वर, मतङ्ग, नैषध, वेदान्तकल्पतरु, बिचारचिन्तामणि, प्रयोगस्तबकनामकदत्तिल ग्रन्थव्याख्या, वाचस्पत्यप्रभृतिग्रन्थेभ्य उदाहरणानि सन्ति । नृत्ताध्यायव्याख्याने करप्रचारपञ्चकलक्षणे भट्टशब्दस्यः भट्टनायक इति अनेन व्याख्यातम् । भट्टशब्देनात्र भट्टाभिनवगुप्त इति ग्रन्थकर्ता वस्तुतस्तूद्दिष्टः ।

## सिद्धत्वम्—निर्वहणसन्धौ (द्वितीयमङ्गम्)

साद्धयस्य सिद्धसूचकवाक्यम् । यथा—मायामदालसे असुरसंहारः ।

सागरनन्दी

## सिद्धा—श्रुतिः

षड्जस्य प्रथमाश्रुतिः । इयमेव सिद्धिरिति केचित् ।

## सिद्धावली—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि ग म प ध नि स .
(अव) स नि प म रि स .

मज

## सिद्धिः—निर्वहणसन्धौ प्रथममङ्गम्

अभिप्रेतार्थस्य अपूर्णप्राप्तिः सिद्धिः ।
यथा—सुबाहोः मदालसायाश्च समागमः मायामदालसे ।

सागरनन्दी

## —प्राकृते मात्रावृत्तम्

त्रयश्चतुमात्रिकगणाः अथवा पञ्चमात्रिका त्रयः । लः गः

विरहाङ्कः

## —लक्षणम्

बहूनां तु प्रधानानां नाम यत्राभिकीर्त्यते ।
अभिप्रेतार्थसिद्ध्यर्थं सा सिद्धिरभिधीयते ॥

भरतः

प्रधानानां स्पृहणीयानां प्रयोजनान्तराणामतर्कितोपलब्धानां परिकीर्तनम् ।

बहूनां च प्रधानानां मध्ये यत्रामकीर्त्यते ।
एकार्थसाधनकृतं सा सिद्धिरिति कीर्तिता ॥

भरतः पाठान्तरम्

प्रसिद्धानां मध्ये एकमित्यप्रसिद्धं यन्नाम कीर्त्यते तस्यासाधारण्यस्य प्रयोजनस्य संपत्तये करणं तत्र निवेशनम्। यत्र तादृक् तत्कीर्तनम्। सिद्धिर्हेतुत्वादिसिद्धिः। यथा—भद्रेश्वर इत्यादि श्लोके भवानहं चेत्प्रसिद्धमध्ये उपात्तसाधारण्यसिद्धिं विधत्ते।

अभिनवगुप्तः

सिन्धुः—मेलरागः (सूर्यकान्तमेलजन्यः)
(आ) स ग रि म प ध नि स·
(अव) स ध प म ग रि ग स.

मञ्ज

सिन्धुतरङ्गिणी—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि ग म ध नि स.
(अव) स नि प ध म ग रि स.

मञ्ज

सिन्धुदेश्यं—मेलरागः (जलार्णवमेलजन्यः)
(आ) स रि ग म प नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

सिन्धुधन्याशी—मेलरागः (खरहरप्रियमेलजन्यः)
(आ) स ग म प नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

सिन्धुमठ्यः—देशीतालः
गुरुद्वयं प्लुतद्वन्द्वं लप्लुतौ सिन्धुमठ्यके।

14 माषाः तालप्रस्तारः

सिन्धुरामक्रिया—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि म प ध नि ध स.
(अव) स नि प म रि ग रि स.

मञ्ज

सिन्धुवलिता—रागः
पधहीना मध्यांशान्यासामन्द्रस्वसंप्रमा तारा।
निरुपाख्यगमकवाना रिषभाल्पा षड्जबहुला च॥
किन्नरप्रियतानाख्यकुञ्चिता मूर्छनान्विता।
स्वरादिदेवता ता तु सा सिन्धुवलिता मता॥

नान्यः

सांशन्यासग्रहा मन्द्रसप्तमा पधवर्जिता।
ऋषभाल्पा सबहुला या सिन्धुवलिता तु सा॥

मतङ्गः

सिंहकः—देशीतालः
सिंहकेपलघुप्लुतं। गुरुलघुप्लुतो गोलो गुरुप्लुतलघुप्लुताः।
।ऽ́ ऽ।ऽ́ ऽ।ऽ́ (?)

मदनः

सिंहचारितम्—नृत्तकरणम्
चतुरश्रं शिरस्तिर्यक् त्रिपताकौ यदा भवेत्।
अद्भुता दृक् च चारीस्यात्करणं सिंहचारितम्॥

नन्दी

अत्र चतुरस्रं, स्थानं। शिरःतिर्यक्।
पार्श्वद्वयेप्यूर्ध्वभागे चलनात्तिर्यगीरितम्।
अद्भुता चारीलक्षणं।
इतस्ततःकृतपदा पादोक्षेपसमाकुला।
विकासिताक्षिसंयुक्ता गतिरेहाद्भुता मता॥

सिंहध्वनिः—मेलरागः (हेमवतीमेलजन्यः)
(आ) स रि स ग म प ध नि स.
(अव) स नि ध प म ग स.

मञ्ज

सिंहनदः—देशीतालः
स्युस्सिंहनदके गौलः पलगा द्वयं गुरुः।
लपौ लपौ गलद्वन्द्वं निश्शब्दं लचतुष्टयम्॥
ऽ ऽ।ऽ́।ऽ ० ० ऽ।ऽ́।ऽ́ ऽ॥+॥॥ गोपतिप्पः

सिंहनन्दनः—देशीतालः
तपौ लगौ द्रुतौ लौलः पलपा गश्च लद्वयम्।
निश्शब्दं लचतुष्कं च ताले स्यात्सिंहनन्दने॥
ऽ ऽ।ऽ́।ऽ ऽ ० ०।।ऽ́।ऽ́ ऽ॥॥॥ जगदेकः

सिंहनादः—देशीतालः
सिंहनादे लघुद्वौगौ लघुर्गुरुरिति क्रमात्।
।ऽ ऽ।ऽ नेमः
सा री गा ग म प ध नि सा जगदेकः

—मेलरागः (नीतिमतीमेलजन्यः)
(आ) स रि म प ध नि स.
(अव) स नि ध मि प म रि स.

मञ्ज

सिंहपदः—प्रबन्धः
गेयस्सिंहपदाख्येन तालेन छन्दसाऽपि च।

हरिपालः

सिंहपदछन्दसा शक्टाख्यतालेन गीयते सिंहपदः स नकार-युगलजयसजलगैः गदितस्तमनुयाति सिंहपदम्। तालमान-द्वयेनाङ्घ्रया न्यासः कार्यो विचक्षणैः।

जगमल्लः

**सिंहम्—करणम्**

स्थानके नागबन्धाख्ये देहं यत्र निषीदति।
निवेशितौ हृदि करावरालौ सिंहनाम तत्॥

हरिपालः

**सिंहमध्यहस्तः**

बाहुमूले व्याघ्रहस्तः पुरोभागे तु मुष्टिकः।
सिंहमध्याख्यहस्तोऽयं नाट्यशास्त्रविशारदैः।
मध्यभागे सिंहमध्यः मध्यभाग निरूपणे॥

विनायकः

**सिंहमुखः—हस्तः**

मध्यमानामिकाग्राभ्यामङ्गुष्ठो मिश्रितो यदि।
शेषे प्रसारिते यत्र स सिंहमुख ईरितः॥
पुरोमुखः पुरोभागे गोमुखस्य निरूपणे।
अधोमुखस्तु चलितो होमे दर्भस्य चालने॥
ऊर्ध्वभागे तु चलितो वैद्यपाकनिरूपणे।
उभयोः पार्श्वचलितौ पद्ममालाविधारणे॥
पुरोभागे चोर्ध्वमुखं चलितश्चुम्बनार्थके।
एवमर्थेषु युज्येत करटीकाविचक्षणैः॥

विनायकः

**सिंहमुखवर्तना**

नाममात्रप्रसिद्धा। कल्लिनाथः

**सिंहरवः—मेलरागः**

भैरवीमेलसंभूतो गान्धारेण विवर्जितः।
आरोहे तु निवर्ज्यः स्यात्पादिः सिंहरवः स्मृतः॥
सार्वगेयः। अहोबिलः

—मेलरागः (हेमवतीमेलजन्यः)

(आ) स रि म प नि स.
(अव) स नि प म रि ग रि स.

मध

**सिंहलः—मेलरागः (हाटकाम्बरीमेलजन्यः)**

(आ) स रि म प ध नि स.
(अव) स नि ध प म ग रि स.

मध

**सिंहलिकामोदा—उपाङ्गरागः**

आदिकामोदिकोपाङ्गकामोदा सिंहली मता।
धैवतस्फुरिता मन्द्रमध्यमा स्यात्त्रिधैवता॥

मदनधवः

**—रागः**

सिंहलाख्याथ कामोदा पूर्वकामोदिका समा।
इयंमिदा षड्जमन्द्रा धैवता कम्पिता भवेत्॥

हरि

**सिंहली—रागः**

धैवतांशग्रहन्यासा पञ्चमेन च कम्पिता।
संपूर्णा च स्वरैस्तज्ज्ञैः कामोदी सिंहली स्मृता॥

सोमराजः

**सिंहलीकामोदा—प्रथमरागः**

कादयस्य भयेदङ्गं कामोदा सिंहलीत्वसौ।
तल्लक्षणा धैवतांशा समन्द्रा कम्पधैवता॥

मोक्षः

**—उपाङ्गरागः**

आदिकामोदिकोपाङ्गं कामोदा सिंहली मता।
भाषाङ्गसिंहली कामोदिकातुल्या विलोक्यताम्॥

कुम्भः

**—रागः**

कामोदासिंहली भाख्या तथैवोपाङ्गिका मता।

मदनः

**सिंहलीलः—देशीतालः**

सिंहलीले तु विज्ञेयं लघ्वोर्मध्ये गुरुद्वयम्।
। S S । नेमः

सिंहलीले विधातव्यं लघ्वाद्यन्तद्रुतत्रयम्।
।००० । स रि ग म प जगः

लघ्वन्ये द्रुत्रयं सिंहलीलः।

।००१ ।

शार्ङ्गः

बातुगधुगिधिद्धि। सुधा

**—प्रबन्धः**

स्वरैः पाटैश्च बिरुदैः तेन कार्यो न विद्यते।
सिंहलीलेन तालेन सिंहलील इहोच्यते॥

पण्डितमण्डली

कीर्त्यते सिंहलीलेऽथ विरुदस्वरपाटकैः।
सिंहलीलेन तालेन युतस्स्यात्सिंहलीलकः॥

हरिपालः

स्वरैः पाटैश्च विरुदैः तेन्नकैर्यन्निबध्यते।
तालेन सिंहलीलेन सिंहलीलस्ससम्मतः॥

जगमल्लः

**सिंहलीला**—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि ग म ध नि स.
(अव) स नि ध प म प म ग रि स.

मञ्ज

—रागः
पूर्वोक्तलक्षणोपेता समन्द्रा तेन कम्पिता।
कामोदा सिंहलीलेयं ख्याता कर्णाटमण्डले॥

जगदेकः

पूर्वोक्तेति कामोदालक्षणं सूचयति।

**सिंहलेखा**—अष्टाक्षरवृत्तम्
रजगगाः।

भरतः

**सिंहवराली**—मेलरागः (मायामालवगौलमेलजन्यः)
(आ) स रि म प ध नि स.
(अव) स नि ध प म रि ग रि स.

मञ्ज

**सिंहविक्रमः**—देशीतालः
सिंहविक्रमताले गत्रयं लपलगाश्च पः।
ऽ ऽ ऽ । ऽ । ऽ ऽ

वेमः

सिंहविक्रान्तं पश्यत।

—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि ग रि म प ध प नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

प्रबन्धः
सिंहविक्रमनामाथ पदैः पाटैश्च संयुतः।
सिंहविक्रमतालेन गेया गद्येन वा बुधैः॥
पद्येन वा तथाभोगः पदैरन्यैः प्रकल्प्यते।
न्यासः पाटैर्विधातव्य इति स्यात्सिंहविक्रमः॥

हरिपालः

आदितालेन संयोज्यो यत्र खण्डचतुष्टयम्।
पदपाटाष्टकाढ्यैः सिंहविक्रान्तसंज्ञकः॥
सानुप्रासपदद्वन्द्वखण्डमेकं प्रगीयते।
पदान्ते पाटविन्यासैः सिंहविक्रान्तसंज्ञके॥

सोमेश्वरः

**सिंहविक्रान्तः**—देशीतालः
सिंहविक्रान्तताले तु गास्त्रयो लपला गपै।
ऽ ऽ ऽ । ऽ । ऽ ऽ

वेमः

अयमेवसिंहविक्रमः।

—प्रबन्धः
अस्य तालचतुष्टेऽपि मात्रतालः प्रकीर्तितः।
पदान्यष्ट तथापाटाः आभोगस्तु पदान्तरैः।
न्यासस्तालद्विमानेन सिंहविक्रान्त ईरितः॥

हरिपालः

**सिंहविक्रीडितम्**—करणम्
अलातांघ्रिपुरः कुर्यादूर्णनाभमपि द्रुतम्।
यदाङ्गान्तरमप्येवं सिंहविक्रीडितं तदा॥
विषयोऽस्य विनिर्दिष्टो रौद्रप्रायः परिक्रमः।
तुल्यकालौ करावत्र स्यातां कैर्विधरे मते॥

ज्यायनः

पुरस्कृत्वाऽलातपादं यत्र हन्तुमिवोद्यतः।
पाणिस्तथापराङ्गं स्यात् सिंहविक्रीडितं तदा॥
रौद्रगत्यामिदं प्रोक्तं सुतविद्याविशारदैः॥

अशोकः

ऊर्णनाभस्थाने" च पेटवत्कृतोहस्तः " इति कुम्भः पठति।

**सिंहविक्रीडितः**—देशीतालः
सिंहविक्रीडिते ताले लप्लुतो गलपास्ततः।
गलगाः पलपाश्चेति क्रमेण परिकीर्तिताः॥
। ऽ ऽ । ऽ ऽ । ऽ ऽ । ऽ

वेमः

द्वौलघू पलगौ पश्च सिंहविक्रीडिते लपौ।

जगदेकः

सिंहविक्रीडितःपुनः। लपौगपौपगौ लाद्रःपलेपिश्च।
। ऽ ऽ ऽ ऽ ऽ । ऽ ऽ । ऽ

शार्ङ्गः

सिंहविक्रीडिते ताले लेलुगो यगणात्पुनः।

**सिंहसूनुः—देशीतालः**

सिंहसूनु र्लगौ लगुः ।

। ऽ ऽ । ऽ

मदनः

गुसंज्ञो गुरुः ।

**सिंहहस्तः**

सिंहराशौ विधेयस्स्यात् करस्सिंहमुखाभिधः ।
अपवेष्टितरूपेण ज्ञेयो नक्षत्रवेदिभिः ॥

मञ्जारः

**सिंहाकर्षितम्—करणम्**

वृश्चिकं चरणं कृत्वा मणिबन्धनिकुञ्चितौ ।
स्वस्तिकेन समायुक्तौ पद्मकोशौ यदा करौ ॥
विदध्याद्घूर्णनाभौ वा वर्तनावशतः पुनः ।
अपसार्य क्रियामेतां कुर्यादङ्गान्तरं तथा ॥
सिंहाकर्षितमाख्यातं सिंहव्याघ्रादिदर्शने ।
आवेष्टय स्पन्दितां चारीमञ्चितौ मकरौ करौ ।
अत्र कीर्तिधरो भट्टतण्डुर्नूपुरपादिकाम् ॥

ज्यायनः

**सिंहाक्रान्ता—ध्रुवावृत्तम्**

दीर्घाण्यादौ यदि चरणे चत्वारि स्युर्निधनमपि ।
प्रोक्ता नाम्ना तत इह सा सिंहाक्रान्ता खलु बृहती ॥
चत्वारो लघवः पूर्वं चत्वारोऽथ द्रुतास्ततः ।
गुरुरन्ते भवत्येषा सिंहाक्रान्ता तु युग्मजा ॥
मध्यमोत्तमपात्राणां समरारंभकर्मणि ।
टक्करागेण गातव्या सिंहाक्रान्ता ध्रुवा सदा ।
आकम्पन्तो धरणितलं—आकंपयन् धरणितलम् ।

नान्यः

**सिंहालितम्—देशीतालः**

सिंहालिते विधातव्यं लघ्वाद्यन्तं द्रुतद्वयम् ।

। ० ० ।

नन्दी

**सिंहावलोकनम्**

तन्त्रीस्फोटनेऽङ्गुलिचमत्कारः ।
एकस्थानापसर्पणम् ।

**सिंही—गतिः**

पादाग्राभ्यां भुवि स्थित्वा पुर उत्प्लुत्य वेगतः ।
कराभ्यां शिखरं धृत्वा भवेत्सिंहीगतिस्तदा ॥

नाट्यदर्पणे

**सिंहेन्द्रमध्यमः—मेलकर्ता (रागः)**

स रि ग ० ० ० म प ० ध ० नि स.

मञ्ज

**सिंहोन्नतः—चतुर्दशाक्षरवृत्तम्**

वसन्ततिलकवृत्तमेव काश्यपा सिंहोन्नतेत्याह ।

**सीत्कृतः—श्वासः**

शीतक्लेशे गुह्यवायौ शब्दानुकरणेऽपि च ।
नखक्षते मृगाक्षीणां निर्दयाधरखण्डने ॥

कुम्भः

**सीमन्तिनी—मेलरागः (सिंहेन्द्रमध्यममेलजन्यः)**

(आ) स रि ग म प ध नि स .
(अव) स प म ग रि स रि स .

मञ्ज

**सीरः—वर्णालङ्कारः**

सरि, सरिग, सरिगम, (१) रिग, रिगम, रिगमप, (२) गम, गमप, गमपध, (३) मप, मपध, मपधनि (४) पध, पधनि, पधनिस (५)

प्रतापसिंहः

**सुकलासम्—देशीलास्याङ्गम्**

विधाय चारीं लास्याङ्गपाटादीनां तु चालनम् ।
मेलनं गीतवाद्याभ्यां विदधात्यन्तरान्तरा ।
प्रतिभा नर्तकी यत्र सुकलासं तदुच्यते ॥

वेमः

**सुकुमारम्**

व्यायामेनाधिभिर्वापि प्रवालवदुपाश्नुते ।
ग्लानिं यदधिकं वस्तु सुकुमारं तदुच्यते ॥

भावविवेकः

**सुकुमारः—कवित्वरचनामार्गः**

अम्लानप्रतिमोद्भिन्ननवशब्दार्थबन्धुरः ।
अयत्नविहितस्वल्पमनोहारि विभूषणः ॥
भावस्वभावप्राधान्यन्यक्कृताहार्यकौशलः ।
रसादिपरमार्थज्ञमनस्संवादसुन्दरः ॥
अविभावितसंस्थानरामणीयकरञ्जकः ।
विधिवैदग्ध्यनिष्पन्ननिर्माणातिशयोपमः ॥
यत्किञ्चनापि वैचित्र्यं तत्सर्वं प्रतिभोद्भवम् ।
सौकुमार्यपरिस्पन्दस्यन्दि यत्र विराजते ॥
सुकुमाराभिधस्सोयं येन सत्कवयो गताः ।
मार्गेणोत्फुल्लकुसुमकाननेनेव षट्पदाः ॥

कुन्तकः

—(प्रबन्धे) नादः
वर्णेषु मूर्छनायां च यः कोमलमतः स्वनः ।
तमाह सुकुमाराख्यं कुमारसमविक्रमः ॥
कुम्भः

सुकुमारप्रयोगः
नाटकं सप्रकरणं भाणो वीथ्यङ्क एव च ।
सुकुमारप्रयोगाणि मानुषेष्वाश्रितानि तु ॥
भरतः

सुकुमारा—ध्रुवावृत्तम् (षोडशाक्षरम्)
आद्यचतुर्थकसप्तममन्त्यं दशमपरे
यत्र गुरूण्यथ सा सुकुमारेत्यभिगदिता ।
मध्यमोत्तमपात्राणां विमानरथगामिनाम् ।
पादद्वयं कुमाराख्ये रागस्तालस्तु पूर्ववत् ॥

भभभतनगाः ।

मेहसमूहणिबद्धविदाणं जलभरिदं—
मेहसमूहनिबद्धवितानं जलभरितं

कुमुदवल्लीध्रुवावृत्ते उक्तवत् ।
पूर्ववदिति ।
इयं कुसुमवतीत्यप्युक्ता । नान्यः

सुखतिः—श्रुतिः
पञ्चमस्य चतुर्थी श्रुतिः : अनूपः

सुखकेसरी—मेलरागः (कामवर्धिनीमेलजन्यः)
(आ) स रि ग म ध नि स ·
(अव) स नि ध प ध म ग रि स नि ध नि स .
मज

सुखा—मूर्छना
नन्द्यावर्ते षष्ठी मूर्छना ।
मूर्छनां धैवतो याति नन्द्यावर्ते यदा तदा ।
ग्रामे सुखा सुविज्ञेया मूर्छना यमिनां प्रिया ॥
मृगकुलप्रिया । पण्डितमण्डली । नादिमत्तगजाङ्कुशे

सुगतिः चारी
यत्राङ्घ्रिर्दक्षिणो यत्र तालमात्रं प्रसार्यते ।
मुहुस्सव्यापसर्पी च वामः सा सुगतिर्मता ॥
नागमल्लः

सुगन्धमारुतम्—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि ग म नि ध म प ध नि स ·
(अव) स नि ध प म ग म प ग रि स . मज

सुघोषणी—मेलरागः (नवनीतमेलजन्यः)
(आ) स रि स म प ध नि ध स .
(अव) स ध नि प म ग म स . मज

सुचरित्रम्—मेलकर्ता
स रि ग ० ० म प ० ध नि स .

सुजनप्रिया—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स रि ग म प ध नि स .
(अव) स ध नि प म ग म रि ग रि स . मज

सुदर्शनः—नृत्तबन्धः
अथाष्टौ पङ्क्तयः कार्याः त्रिभिरष्टाभिरेव च ।
चतुष्षष्टिश्च मिलिताः नर्तक्यः परिकीर्तिताः ॥
तत्र मध्ये भ्रमीमेव कुर्यात्पात्रचतुष्टयम् ।
विहाय कोणपात्राणि चत्वार्यष्टौ च लासिकाः ॥
कैवारक्रमयोगेन खेलन्त्यालोलकालकाः ।
एवं मण्डलमेकस्थमथ मध्ये तु मण्डले ॥
चतस्रःकोणगास्त्यक्त्वा क्रमात्पात्राणि षोडश ।
चक्रक्रमेण खेलन्ति चक्रवाकोपमस्तथा ॥
ततश्च मण्डले बाह्ये प्राग्वन्मध्ये च कोणगाः ।
द्वात्रिंशदथ पात्राणि चरेयुर्मण्डलक्रमात् ।
अत्र कोणगतास्सर्वाः मिथो विनिमयान्विताः ॥
कुर्वन्त्यो मण्डले बाह्ये कूजत्कङ्कणनूपुराः ।
प्रातिलोम्यानुलोम्याभ्यां पात्राणां यत्र नर्तनम् ॥
मध्यस्थपात्रयुग्मानामत्र सर्वासु पङ्क्तिषु ।
सह मध्ये चतुष्कोणक्रमाद्विनिमयो भवेत् ।
वीरनारायणेनैवं प्रोक्तो बन्धस्सुदर्शनः ॥
वेमः

—देशीतालः
द्रुतषट्कं गुरुश्चैकः कथितश्च सुदर्शने ।
० ० ० ० ० ० ऽ दामोदरः
सुदर्शने द्रुषट्कं गुः । ० ० ० ० ० ० ऽ
(द्रुषट्कं गुः—स्यात्) मदनः

—प्रबन्धः
पदैर्बिरुदतेनैश्च प्रबन्धस्स्यात्सुदर्शनः ।
जग-मल्लः
पदैश्च बिरुदैस्तेनैः गीयते यस्सुदर्शनः ।
श्रीकण्ठः

सुदर्शनम्—करणम्

स्थानकं पार्ष्णिविद्धं स्यादङ्गुलीपृष्ठसञ्चरौ ।
पादौ कुट्टनसंयुक्तौ पक्षवञ्चितकौ करौ ।
चक्रभ्रमर्या सहितं देहं चेत्तत्सुदर्शनम् ॥ हरिपालः

सुधाकलशः

सङ्गीतोपनिषत्सारः, सङ्गीतोपनिषत्सारोद्धारः, एतौ द्वौ अनेन कृतौ । राजशेखरगुरोः जैनाचार्यस्यायं शिष्यः ।

सुधातुमान्—देशीतालः

सुधातुमान् गलौपश्च ।
ऽ । । ऽ́ लक्ष्मणः

सुधाब्धिः—संगीतग्रन्थः

अयमशोकमल्लेन स्मृतः ।

सुधामनोहरी—(धीरशङ्कराभरणमेलजन्यः)

(आ) स ग म ग रि म प ध नि स.
(अव) स नि ध प ध नि म ग रि स. मञ्ज

सुनन्दा—ध्रुवावृत्तम्

त्रीण्यादौ यदि स्युरन्ते द्वे च दीर्घे ।
ज्ञेया सा विधिज्ञैः नाम्नावै सुनन्दा ॥

एदे गज्जमाणा—एते गर्जमानाः ।

मध्यमाधमपात्राणां स्त्रीणां चैव विशेषतः ।
तालः पादाक्षरेण स्यात्ककुभेन भयानके ॥ नान्यः

सुन्दरः—गीतालङ्कारः (मठ्यभेदः)

द्रुतद्वन्द्वं लघुद्वन्द्वं ताले त्रिपुटसंज्ञके ।
सुन्दरो गीयते तेन वीरे चाप्यद्भुते रसे ॥ सङ्गीतसारः

—देशीतालः

मद्वयं सुन्दरः प्रोक्तो ।
ऽ ऽ ऽ ऽ ऽ ऽ कुम्भः

—वर्णालङ्कारः

द्विर्गीत्वादिस्वरयुगं पुनः क्षिप्रस्वरत्रयम् ।
गीयते यत्र तद्विद्भिः सुन्दरः स निगद्यते ॥

यथा—सरिसरिसरिग इत्याद्यारोहः । व्युत्क्रमस्तु गरिगरिगरिस इति अवरोहश्च आरोहावरोही च सुन्दरः । त्रिपुटतालानुगत्वा-दलङ्कारत्वम् । संगीतसरणिः

सुन्दरम्—करणम्

उद्वेष्टतः क्रियापूर्वं कर्णक्षेत्रेऽलपल्लवौ ।
अन्योन्यपार्श्वसंयुक्तावुत्तानौ बलितं वपुः ।
शिरस्त्वपार्श्ववलितं सुन्दरं केतुदर्शने ॥ देवनः

वामपादस्थितान्यस्तु कुञ्चिते जानुमस्तके ।
हस्तौ च चतुरौ सम्यङ्मुखीनौ पार्श्ववेशिनौ ।
भवेतां यत्र करणे सुन्दरं तदुदाहृतम् ॥ हरिपालः

सुन्दरवनम्—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि ग म प नि स.
(अव) स नि ध प म रि स. मञ्ज

सुन्दराम्बुधिः—मेलरागः (कामवर्धिनीमेलजन्यः)

(आ) स रि प ध नि स.
(अव.) स ध म ग रि ग स. मञ्ज

सुन्दरी—ग्रीवा

तिर्यक् चञ्चलिता ग्रीवा सुन्दरीति निगद्यते ।
स्नेहारम्भे तथा यत्ने सम्यगर्थे च विस्मृते ।
सरसत्वेऽनुमोदे च सा ग्रीवा सुन्दरी मता ॥ नन्दी

सुपुष्टा—श्रुतिः

तारपञ्चमस्य चतुर्थी श्रुतिः । पार्श्वदेवः

सुप्तम्—व्यभिचारिभावः

निद्राभिभवः सुप्तम् । इन्द्रियविषयोपगमनमोहनक्षितिवक्षशयनप्रसारणानुकर्षणादयो विभावाः । उच्छ्वासितसन्नगात्राक्षिनिमीलनसर्वेन्द्रियसम्मोहनोत्स्वप्नायितादिभिरभिनयेत् । भरतः

इदं मातृगुप्तसर्वेश्वरादिभिः व्यभिचारित्वेन नोक्तम् । मातृगुप्तस्तु सुप्तस्थाने शौचमाह । शौचलक्षणमन्यत्रोच्यते । विभ्रम इति सर्वेश्वर आह ।

सुप्तिः—चित्ताभिनयः

उद्रेक एव निद्रायास्सुप्तिस्स्यात् ।
ऊर्ध्वभागे पताकौ द्वौ बद्धौ तु तदनन्तरम् ॥
शिरसः पार्श्वभागे तु पताकस्तु स्थितो यदि ।
सुप्तिभावे दर्शयन्ति भरतागमवेदिनः ॥ विनायकः

सुप्रकेतनः—(सूर्यकान्तमेलजन्यः)

(आ) स रि ग प नि स.

(अव) स नि ध प ग रि स. मञ्ज

सुप्रतिष्ठा—ध्रुवावृत्तम्

चतुरक्षरा। भगणगुरू। हंसवहू (छाया) हंसवधूः। विनियोगस्तु प्रतिष्ठावत्। नान्यः

सुप्रभा—प्राकृते मात्रावृत्तम्

चतुर्मात्रिकः पञ्चमात्रिकः द्वौ चतुर्मात्रिकौ।

लः गः विरहाङ्कः

—श्रुतिः

षड्जस्य चतुर्थी श्रुतिः। 

सुप्रसन्ना—श्रुतिः

मन्द्रनिषादप्रथमा श्रुतिः। पण्डितमण्डली

सुबला—मूर्छना

नन्द्यावर्ते सप्तमी मूर्छना।

सम्मूर्छेति स्वरश्रान्त्यो यदा स्यात्सुबला तदा।

मृगाणां वल्लभा नित्यं तथा विरहिणामपि॥

वादिमत्तः

अस्या बलेति नाम नारदशिक्षायां दृश्यते। आलेपेति नान्यदेवः नाम आह।

सुभगम्

यथा च लक्षणस्थानैः श्लाघ्यैरवयवैर्युतम्।

सुन्दरं तैस्तु संभूतशोभं सुभगमुच्यते॥

भावविवेकः

सुभगा—श्रुतिः

निषादस्य द्वितीया श्रुतिः। मण्डलीमते तारनिषादस्यैव।

सुभद्रः—ग्रामः

ग्रामशब्दे द्रष्टव्यम्।

सुभद्रा—ध्रुवावृत्तम् (सप्ताक्षरम्)

द्वितीयं च चतुर्थं च अन्त्योपान्त्ये तथैव च।

यत्र पादे तु दीर्घाणि उष्णिक् सातु विलम्बिता॥

विलम्बितेति सुभद्राया नामान्तरम्।

वणंमि सुक्करुक्खे—वने शुष्कवृक्षे। जरगाः।

भरतः

सुभाण्डीरागध्यानम्

शिरोप्रविन्यस्तसुवर्णकुम्भां सव्येच हस्ते गजपुष्पमालाम्।

द्वितीयहस्तेन सखीं गृहीतां सदाभजेऽहंमनसासुभाण्डीम्॥

रागसागरः

सुमङ्गला—प्राकृते मात्रावृत्तम्

चतुर्मात्रिकाः चत्वारो गणाः गः

विरहाङ्कः

सुमनाः—प्राकृते मात्रावृत्तम्

चतुर्मात्रा गणास्त्रयः एको गुरुः।

ललगस्य गगस्य च न प्रवेशः॥

4+4+4+ग= विरहाङ्कः

सुमनोज्वली—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग प ध म ध प नि स.

(अव) स नि ध प ग रि स.

मञ्ज

सुमुखः—देशीतालः

सुमुखेति विरामान्त द्रुतद्वन्द्वाल्लगौ लपौ।

० ० । ऽ । ऽ । ऽ́ लक्ष्मणः

सुमुखी—प्राकृते द्विपदी

विषमा—द्वौ चतुर्मात्रिकौ गः।

समा — द्वौ चतुर्मात्रिकौ यः॥

विरहाङ्कः

—श्रुतिः

षड्जतृतीया श्रुतिः। जगमल्लः

सुमैत्री—मूर्छना

जीमूतग्रामे षष्ठी मूर्छना।

धैवतस्य प्रमूर्छत्वाज्जीमूताख्ये प्रजायते।

सुमैत्री मूर्छना नाम ज्ञेया मित्रसमागमे॥

वादिमत्तः

सुमोहनम्—नृत्तकरणम्

अश्वक्रान्ते स्थितिःपूर्वं शिरस्तु परिवाहितम्।

स्निग्धा दृष्टिस्तदा प्रोक्ता त्रिपताकस्तु दक्षिणः॥

वामस्त्वर्धपताकस्स्याच्चारीप्रोक्ता सुमोहना।

एवमश्वक्रान्तरे यत्र करणं स्यात्सुमोहनम्॥

नन्दी

सुरकेतकी—मेलरागः (षण्मुखप्रियामेलजन्यः)
(आ) स रि ग म प ध नि स.
(अव) स ध म ग रि स.

मञ्ज

सुरटारागध्यानम्
तुम्बुरुवीणाहस्तां शम्बररिपुसन्निभे समासीनाम्।
सुरटां स्वरगुणसुरटां कवचोष्णीषकधारिणीं स्मरामि ॥

रागसागरः

सुरटी—मेलरागः (काम्भोजीमेलजोऽयंरागः)
सुरटीराग आरोहे छागधैवतवर्जनम्।
छागो गान्धारः।

परमेश्वरः

—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि म प नि स.
(अव) स नि ध प म ग प म रि स.

मञ्ज

सुरतलीलः—प्रबन्धः
पदेपदे भवेद्रागस्तालस्त्वान्यः पदे पदे।
यदान्ते स्वरपाटाभ्यां गेयस्सुरतलीलकः ॥

सोमेश्वरः

सुरतारम्भचन्द्रहासः—सूडप्रबन्धः
जयमङ्गलतालेन पदैः शृङ्गारनिर्भरम्।
गीत्वा पाटाःस्वरास्तेनारच्यन्ते यत्र रूपके ॥
देवशाखाभिधे रागे सुरतारम्भनामतः।
चन्द्रहासप्रबन्धोऽयं प्रीतिकृत्कमलापतेः ॥

कुम्भः

सुरदयिता—ध्रुवावृत्तम्
आद्यचतुर्थे परनिधने यत्र गुरूणि प्रति चरणम्।
गीतविधाने भवति हि सा पङ्क्तिकृता वै सुरदयिता।
हंसजुवानो परिभविदो—हंसयुवा परिभ्रमंति ॥

भरतः

सुरभिः—देशीतालः
सुरभिः कथ्यते घनाः। चतुर्भिर्लघुभिर्मिश्रैः।
ऽऽऽऽ ॥।॥

लक्ष्मणः

सुरभिप्रिया—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि ग प नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

सुरभिमुखी—ध्रुवावृत्तम्
आद्ये चतुर्थदशमाष्टमस्तथान्ये च यत्र गुरुचरणे।
एकादशाक्षरगते च सा प्रकृत्याश्रयाद्धि सुरभिमुखी ॥
पच्चूसकालसुहसीदलेण फुल्लारविंदसुरभिमुही।
प्रत्यूषकालसुखशीतलेन फुल्लारविंदसुरभिमुखी ॥

भरतः

ध्रुवायथाक्षरस्थाने तालदेशस्तु पूर्ववत्।
हिन्दोले सुरभिमुखी नायकानां प्रवेशजे ॥

नान्यः

सुरवराली—मेलरागः (शुभपन्तुवरालीमेलजन्यः)
(आ) स रि म प ध स.
(अव) स नि ध प म ग रि स.

मञ्ज

सुरवसैन्धवं—मेलरागः (खरहरप्रियामेलजन्यः)
(आ) स रि म ग म प नि ध नि स.
(अव) स नि ध प म ग रि स.

मञ्ज

सुरालयः—मेलरागः
गोरीमेलसमुद्भूतो धैवतस्वरवर्जितः।
अरोहणे रिहीनः स्यान्निषादादिः सुरालयः ॥
सायंगेयः।

अहोबिलः

सुरुली—सुषिरवाद्यम्
हस्तद्वयाधिका दीर्घा तारन्ध्रचतुष्टया।
मुखरन्ध्रेण संयुक्ता सुरुली श्रुतिशोभना ॥
अस्या मुरलीति नामन्तरम्।

सोमेश्वरः

सुरेश्वरः—मेलरागः (ऋषभप्रियामेलजन्यः)
(आ) स रि ग प ध नि स.
(अव) स नि ध प म प ग रि स.

मञ्ज

सुललिता—श्रुतिः
तारगान्धारस्य प्रथमा श्रुतिः।

पार्श्वदेवः

—ध्रुवावृत्तम्
आद्यचतुर्थे च त्वन्त्यमुपान्त्यं च यत्र गुरूणि स्युः।
सुललिता ज्ञेया— पेंछसि सब्भावं। प्रेक्षसि सद्भावम्।

भरतः

सुवक्त्रा—मूर्छना
अस्याः सुमुखीति नाम नारदशिक्षायां दृश्यते।
गान्धारमूर्छनादेव सुवक्त्रा मूर्छना भवेत्।
सर्वपापहरा सा तु प्रगीता हरसन्निधौ ॥
(नन्द्यावर्तग्रामे तृतीया मूर्छना)

वादिमत्तगजाङ्कुशः

इयं नागवल्लभा (पण्डितमण्डली)

सुवदना—विंशत्यक्षरवृत्तम्

मरभनयभलगाः । भरतः

सुवर्णनाटरागध्यानम्

हारी गौरोऽरुणदृक् हिमसितवसनोऽच्छपाटलोष्णीषः ।
छायानाटवराख्यः सुवर्णनाटो भटो रसिकः ॥

छायानाट इति नामान्तरम् । सोमनाथः

सुवर्णाङ्गी—मेलकर्ता (रागः)

स रि ग म प ध नि स. मञ्ज

सुवसन्तकः—सङ्गीतश्रृङ्गाराङ्गम्

सन्तापकारको दिवसः । भोजः

सुषिरम्

सुषिशब्दान्मत्वनिप्प्रत्यये सति जायते ।

सुषिरं नाम—

सुषिरमेकमाकाशं तद्गुणश्शब्द उच्यते ।
आकाशवासी पवनो व्यञ्जकश्शब्दसंहतेः ॥
पवनेनाहते रन्ध्रे सुषिराणां ततस्ततः ।
स्वरपाटात्मकाश्शब्दाः व्यक्तिमायान्ति सर्वशः ॥

नान्यः

सुषिरवाद्यानि

वंशः पावः पाविकाथो मुरली मधुकर्यथ ।
काहला तुण्डकिन्यौ च बुक्का श्रृङ्गमतःपरम् ।
शङ्खादेश्च सुषिरवाद्यभेदाः समीरिताः ॥ कुम्भः

भेदाः सुषिरवाद्यस्य वंशः पावश्च पाविका ।
मुरली मधुकर्याख्या ततोऽसक्ता च काहला ।
तथा डुणुकिनी शङ्खः श्रृङ्गश्चेत्यथ लक्षणम् ॥ वेमः

वंशः पावः पावकी च बुक्का श्रृङ्गोऽथ श्रृङ्गिका ।
सिंहनादश्च शङ्खाद्याः सुषिरस्य भिदा मताः ॥

हम्मीरः

वंशः पावः पाविका च मुरली मधुकर्यपि ।
वक्रा शङ्खं तित्तिरी च श्रृङ्गं च काहलादयः ॥

श्रीकण्ठः

सुषिरवाद्योत्पत्तिः

पूर्वं किल निजोद्याने क्रीडासक्तः शचीपतिः ।
अश्रौषीच्छ्रुतिसंह्लादनिदानं मधुरस्वरम् ॥

ततो वदनमुन्नम्य चलन्नयननीरजैः ।
कुर्वन्नपूर्वमाकाशकासारं विस्मितस्तदा ॥

एतच्चोद्यानमुद्दामपिकस्वरमनोहरम् ।
पुष्पन्धयैर्मदेनान्धैरन्धकारीकृतद्रुमम् ॥

विकासिकुसुमोत्पीडचूडाभातरुसञ्चयम् ।
प्रसरन्मधुनिष्यन्दसारिणीभिर्विभूषितम् ॥

परागपटलोद्भासिसिकतालङ्कृतानिलम् ।
चलन्मलयशैलेन्द्रमन्दमारुतवत्स्थितम् ॥

तत्रापश्यदसावेकदेशे वंशाननेकशः ।
पवनापूरितैरन्ध्रैः स्वरपाटान् पटुध्वनीन् ॥

तेषामाकर्ण्य वेणूनां......मर्मदध्वनीन् ।
हर्षाश्चर्यरसावेशः प्रोवाचाहूय गायनान् ॥

श्रृणुध्वं मधुरस्निग्धमुच्चरत्स्वरमण्डलम् ।
कारयध्वं तु तस्याङ्गान्गान्धर्वस्याखिलस्य च ॥

क्रियतां सुषिरातोद्यमिदमद्य मनोहरम् ।
हरप्रीतिकरं सर्वं सुपर्वश्रवणामृतम् ॥

ततस्तुम्बुरुमुख्यैश्च गन्धर्वपतिभिस्तदा ।
अकारि सुषिरातोद्यमुत्पाटस्वरकारकम् ॥

ततः शब्दादिभिः पाटान्स्वरान्वंशादिभिस्तथा ।
अनुकृत्याभ्यगायुस्ते सन्ततानन्दनिर्भरम् ॥

तेषां गीतरसास्वादमुदितश्च शचीपतिः ।
प्रादात्तदा......तान् मनः प्रीतिकरानथ ॥

एवमेतत्पुरावृत्तं सुषिरातोद्यमुत्तमम् ।
प्रवर्तितं च मर्त्येऽखिन्मुनिभिर्भरतादिभिः ॥

नान्यः

सुषिरातोद्यम्

वंशशब्दे द्रष्टव्यम् ।

सुषिरोत्पत्तिः

पूर्वं किल निजोद्याने क्रीडासक्तः शचीपतिः ।
अश्रौषीच्छ्रुतिसंह्लादनिदानं मधुरस्वरम् ॥

ततो वदनमुन्नम्य चलन्नयननीरजैः ।
कुर्वन्नपूर्वमाकाशकासारं विस्मितस्तदा ॥

एतच्चोद्यानमुद्दामपिकस्वरमनोहरम् ।
पुष्पन्धयैर्मदेनान्धैरन्धकारीकृतद्रुमम् ॥

विकासिकुसुमोत्पीडचूडाभतरुसञ्चयम् ।
प्रसरन्मधुनिष्यन्दसारिणीभिर्विभूषितम् ॥

षरागपटलोद्भासिसिकतालङ्कृताननम् ।
चलन्मलयशैलेन्द्रमन्दमारुतवीजितम् ॥
तत्रापश्यदसावेकदेशे वंशाननेकशः ।
पवनापूरितैरन्ध्रैः स्वरपाटान्पटुध्वनीन् ॥
तेषामाकर्ण्य वेणूनां कुर्वतां मर्मरध्वनीन् ।
हर्षात् कर्णरसादत्र प्रोवाचाहूय गायनान् ॥
शृणुध्वं मधुरस्निग्धमुच्चरत्स्वरमण्डलम् ।
क्रियतां सुषिरातोद्यमिदमद्य मनोहरम् ॥
हरप्रीतिकरं सर्वं सुपर्वश्रवणामृतम् ।
ततस्तुम्बुरुमुख्यैश्च गन्धर्वपतिभिस्तदा ॥
अकारि सुषिरातोद्यमुत्पाटस्वरकारकम् ।
ततः शब्दादिभिः पाटान्स्वरान्वंशादिभिस्तदा ॥
अनुकूल्याभ्यगायुस्ते सन्ततानन्दनिर्भरम् ।
तेषां गीतरसास्वादमुदितश्च शचीपतिः ।
प्रादात्तदा............मनः प्रीतिकरानथ ॥

नाट्य:

**सुषुम्ना—श्रुतिः**

मन्द्रर्षभस्य तृतीया श्रुतिः । पण्डितमण्डली

**सुसन्धिः — देशीलास्याङ्गम्**

तालात्तालान्तरस्यापि वाद्याद्वाद्यान्तरस्य च ।
यथा तद्दृश्यते सन्धिः तथैव यदि नर्तकी ॥
नर्तनं कुरुते यत्र सुसन्धिस्सोऽभिधीयते ।

वेमः

भाण्डवाद्यात्पृथक् भाण्डवाद्यप्राप्तं विचक्षणम् ।
तालात्तालान्तरप्राप्तौ यथा सन्धिर्न लक्ष्यते ।
तथा चेन्नर्तकी नृत्येत्सुसन्धिस्सोऽभिधीयते ॥

ज्यायनः

**सुस्निग्धा—श्रुतिः**

तारर्षभस्य द्वितीया श्रुतिः ।

पार्श्वदेवः

**सुस्वरा—श्रुतिः**

धैवतस्य प्रथमा श्रुतिः । मण्डलीमते तारपञ्चमस्य चतुर्थी श्रुतिः ।

सोमः

**सूकरः—स्वरजातिः**

पञ्चाशद्भिश्चतुर्भिश्च स्वरैस्सूकर उच्यते ।

औमापतम्

**सूकरसत्त्वा—स्त्री**

दीर्घपृष्ठोदरमुखी रोमशाङ्गी बलान्विता ।
सुसंक्षिप्तललाटा च कन्दमूलफलप्रिया ॥
कृष्णादंष्ट्रोत्कटमुखी पीवरोरुशिरोरुहा ।
हीनाचारा बह्वपत्या सौकरं सत्त्वमाश्रिता ॥

भरतः

**सूक्ष्मः—रसगतिः**

आलम्बनगुणस्थैर्यात्संस्कारस्यानुवर्तनात् ।
अनुयाति विहीनो यः स सूक्ष्म इति कथ्यते ॥

शारदातनयः

**सूक्ष्मा—श्रुतिः**

तारपञ्चमस्य द्वितीया श्रुतिः । पार्श्वदेवः

**सूचकाभिनयः**

प्रत्यक्षं वा परोक्षं वा लोके स्थावरजङ्गमम् ।
हस्तैर्वा पादभेदैर्वा विना सम्भाषणादिकम् ।
संसूचितं जनैर्नाम्ना सूचकाभिनयो मतः ॥

शृङ्गारः

**सूची — करणम्**

कुञ्चितं पादमुत्क्षिप्य स्थापयेद्भूमिमस्पृशन् ।
तद्दिक्कः खटको हस्तो वक्षसि स्यात्तथा परः ॥
शिरःक्षेलेऽलपद्मश्च तथैवाङ्गान्तरं क्रमात्
करणं सूचिसंज्ञं तद्वदितं विस्मये विदा ॥

कुम्भः

**—चारी**

जङ्घाकुञ्चितपादस्य समुत्क्षिप्य प्रसार्य च ।
जान्वन्तमूरुपर्यन्तमपि वा धरणीतले ।
अग्रेण पातयेत्पादं यत्र सूची भवेदसौ ॥

वेमः

**—देशीचारी**

एकस्य चरणस्योरुपृष्ठपार्श्वेन संस्पृशन् ।
तीक्ष्णाग्रप्रसृताङ्घ्रिश्चेदग्रे सूची भवेत्तदा ॥

वेमः

**—करव्यापारः**

स एव सूचीसंज्ञः स्याद्भाविवाक्योपजीवकः ।

कुम्भः

—देशीमण्डलम्

स्थित्वा पादाग्रयुग्मेन जानुनैकेन पार्श्वतः ।
संस्पृशेद्भूतलं पार्श्वे सूचीमण्डलमीरितम् ॥

नाट्यदर्पणे

—पादः

उत्क्षिप्तपार्ष्णिभागस्सन् अङ्गुष्ठाग्रेण संस्थितः ।
दक्षिणश्चरणो यत्र वामस्स्वाभाविकस्थितः ।
असौ सूची प्रयोगोऽस्य दृष्टो नूपुरबन्धने ॥

विप्रदासः

नृत्ते विलासावस्थितावपि । ज्यायनः

तुङ्गवस्तु समाकर्षे मुखचुम्बिजले भवेत् । सोमेश्वर.

सूचीग्रहणकला—कला

तत्र पूर्वरचनिका

अञ्जनग्रहणेनापि यन्मुहूर्तं न वीक्ष्यते ।
लोचनं जगतां सारं किं पुनस्सूचिकाग्रहे ॥

निधाय पाणी भुवि यत्र कृत्वा
पृष्ठाध्वनोत्क्षिप्तवदा मुखाग्रे ।
वेत्रेण गृह्णाति धरानिषण्णां
सूचीं स सूचीग्रह एष उक्तः ॥

नागमल्लः

सूचीमुखः—हस्तः

ऊर्ध्वं प्रसारिता यत्र खटकामुखतर्जनी ।
हस्तस्सूचीमुखस्सस्यादभिनेयमिहोच्यते ॥

शङ्खे चक्राभिधे कुम्भकारोपकरणे तथा ।
रथाङ्गे जनसंघाते भ्रमन्ती तर्जनी भवेत् ॥

ऊर्ध्ववक्त्राधोमुखी च निजपार्श्वगता तथा ।
पार्श्वान्तरान्निजं पार्श्वं आयन्तीं च क्रमाद्भवेत् ॥

पताकायां भवेदूर्ध्वा साधुवादे च दोलिता ।
एकत्वे तर्जनी चेर्ध्वा नासास्था श्वासवीक्षणे ॥

अधस्तले पार्श्वयुक्ते संयुक्ते विरहे पुनः ।
वियुक्ते च विधातव्ये शार्ङ्गदेवेन कीर्तिते ॥

शार्ङ्गः

सूचीवक्रः—हस्तः

तर्जनी वक्रिता चैव सूचीवक्रो विधीयते ।
पार्श्वभागे तु यो हस्तः तिंत्रिणीफलदर्शने ॥
पिककाकबकादीनां पक्षिणां च निरूपणे ।
नासापार्श्वे तु यो हस्तः नासिकाभरणे स्मृतः ॥

कर्णस्थले तु यो हस्तः कर्णभूषणदर्शने ।
पुरोमुखः पुरोभागे चोष्ट्रस्य मुखदर्शने ।
सूचीवक्राख्यहस्तस्य विनियोगो नियुज्यते ॥

विनायकः

सूचीवक्रस्वस्तिकहस्तः

करद्वयेन सूच्याख्यौ किञ्चिद्वक्रौ च संयुतौ ।
सूचीवक्रस्वस्तिकाख्यो भरतादिभिरुच्यते ॥

भ्रूयुग्मस्थानके बध्वा सूचीवक्राख्यस्वस्तिकम् ।
भ्रूयुग्मार्थे दर्शयन्ति भरतार्णववेदिनः ॥

विनायकः

सूचीविद्धः—अङ्गहारः

अर्धसूची विक्षिप्तावर्तनिकुट्टकोरूद्वृत्ताक्षिप्तोरोमण्डलकरिहस्तकटिछिन्नानां नवानां करणानां क्रमात्प्रयोगे सूचीविद्धाङ्गहारः ।

शार्ङ्गः

सूचीविद्धम्—करणम्

सूचीपादोऽन्यपार्ष्णिस्थः वक्षःस्थः खटकामुखः ।
पक्षवञ्चितकोऽन्योऽर्धचन्द्रो वा कटिमाश्रितः ॥
हस्तस्स्यात्तत्र चिन्तादौ सूचीविद्धं तदिष्यते ।

ज्यायनः

सूचीविद्धं तदाश्लिष्टं अन्यासक्तस्वनायकम् ।
सखीमुखात्तदा श्रुत्वा स्थितायां विनियोजयेत् ॥

लक्ष्मणः

—मण्डलम्

वामस्तु चरणस्सूचीं भ्रमरीं चाथ दक्षिणः ।
पार्श्वक्रान्तां तु वामाङ्घ्रिरतिक्रान्तां ततःपरम् ॥

दक्षिणोऽङ्घ्रिस्तथा सूचीमन्योपक्रान्तचारिकाम् ।
पार्श्वक्रान्तां दक्षिणस्तु चरणः कुरुते यदा ।
तदा तु सूचीविद्धाख्यं मण्डलं तद्विदो विदुः ॥

विप्रदासेन चारीः पादाव्यत्यासेनोक्ताः ।

वेमः

सूच्यन्तरम्—उत्प्लुतिकरणम्

करणे यत्र यत्रान्ते समसूच्यादिसूचिषु ।
एकं कुर्यात्तदा तत्तत्सूच्यन्तमिति कथ्यते ॥

वेमः

आहुर्विषमखण्डादिसूचीनां चात्र केचन।
यस्य यस्य विरामे तु सूचीं रच्येत किञ्चन।
तत्तत्सूच्यन्तमित्युक्तं करणं नृत्तकोविदैः॥

ज्यायनः

**सूच्यास्यौ**—नृत्तहस्तः

संलग्नमध्यमाङ्गुष्ठौ तिर्यक्प्रसृततर्जनी।
चतुरश्राकृतिं यद्वा स्वस्तिकाकारतां गतौ।
सूच्यास्यौ सर्पशीर्षौ वा प्राहुस्सूचीमुखौ करौ॥
मध्यप्रसारिताङ्गुष्ठौ करौ भुजगशीर्षकौ।
विच्युतस्वस्तिकौ केचिदूचुस्सूचीमुखाविति॥
कृत्वा पताकौ प्रथमं व्यावृत्तपरिवर्तितौ।
यद्वा प्रसारितौ भ्रान्त्वा ततस्सूचीमुखौ करौ।
कुर्यादिति विशेषज्ञाः केचिदत्र प्रचक्षते॥

विप्रदासः

**सूडप्रबन्धः**

तालास्सञ्चारिका यत्र पाटादिरहिता यदि।
आद्यन्तयोः पाटवे तु युतास्ताला यदृच्छया॥
सूडमध्यप्रबन्धोऽयं ख्यातो दत्तिलसम्मतः।
ताला नवादिका यत्र बद्धाः पाटादिवर्जिताः।
सूडप्रबन्धः कथित एकरागनिवेशितः॥

कृष्णदासः

**सूडादिगीतनृत्तम्**

कृता वाग्गेयकारैस्तु ये गीतास्सूडतालतः।
तेषां भावानुसारेण नृत्तं स्यात्संप्रदायतः।
सूडादिगीतनृत्तं तत्कथितं पूर्वसूरिभिः॥

वेदः

**सूत्कृतः**—श्वासः

वेदनादौ सूत्कृतस्स्यात्। अशोकः

उत्कृतं वेदानादिषु। शब्दानुहरणे वक्त्रास्त्याख्ये वायौ च, इति निकृकृतस्सूत्कृतभेदः।

कुम्भः

**सूत्रकम्**

तलकस्याप्यधः कटिभूषणम्।

—कण्ठभूषणम्

गुच्छग्रीवा सूत्रादितया प्रसिद्धम्।

**सूत्रधारः**

सूत्रं धारयतीति सूत्रधारः। सूत्रमिति प्रयोगस्यानुष्ठानं।

सागरः

नर्तनीयकथासूत्रं प्रथमं येन सूच्यते।
रङ्गभूमिं समाक्रम्य सूत्रधारस्स उच्यते॥

शुभङ्करः

**सूनलीला**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि म प नि ध नि स.
(अव) स नि ध प म रि ग स.

मञ्ज

**सूरवाली**—रागः

सूरवाली च देशाख्या मालवा पहुता ह्यपा।

मदनः

**सूरविक्रमः**—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि ग म प म ध नि स.
(अव) स नि ध म ग स.

मञ्ज

**सूर्यकान्तः**—मेलकर्ता (रागः)

स रि ० ० ग म ० प ० ध ० नि स.

मञ्ज

**सूर्यक्रान्तः**—तानः

प—लोपः — षाडवः।
म ग रि स नि ध. कुम्भः

**सूर्यप्रकाशः**—प्रबन्धः

खण्डैर्द्वादशभिस्सूर्यप्रकाशः परिकीर्तितः।
रागैस्तालैः स्वरैः पाटैर्बिरुदैस्तेन्नकैः पदैः।
सूर्यदेवस्तवैर्युक्तो गातृनेतृविभूषितः॥

श्रीकण्ठः

**सूर्यमणिः**—मेलरागः (सूर्यकान्तमेलजन्यः)

(आ) स रि म ग म प ध नि स.
(अव) स नि ध म ग रि स.

मञ्ज

**सूर्यहस्तः**

उद्वेष्टितप्रपञ्चश्च भ्रमणात्सूचिकाकरः।
सूर्यार्थे संप्रयुज्येत कचिल्लोकेषु युज्यते॥

शृङ्गारः

**सूलू**—देशीनृत्तम्

एकः समस्थितः पृष्ठे द्विवितस्तिः पुरःपुरः।
सूलुस्थानकमेतत्स्यादेवं चरणरक्षणा॥

पुरतः परिवो वामः पताकोऽन्यस्तु पार्श्वतः ।
दक्षिणभ्रमणात्सूड्डं द्वित्रिवारं चरेत्ततः ॥

इति ध्वाडनृत्ते सूड्डुलक्षणम् ।

—स्थानकम्

मन्दानिलचलद्दीपशिखेवाङ्गस्य चालनम् ।
सूळूशब्देन तत्त्वज्ञैर्नटैस्तत्प्रतिपाद्यते ॥

देवेन्द्रः

सूळूपम्—देशीनृत्तम्

किन्नरीतालसंयुक्तं तेनशब्देन नर्तनम् ।
मृदङ्गादियुतं यस्मात् सूळूपं तन्निगद्यते ॥

दामोदरः

सृक्कानुगा—रसना

या जिह्वालेढि सृक्कां सा प्रोक्ता सृक्कानुगा रुषि ।
स्वादुभक्ष्ये चैव मन्ये ज्ञेया अभिनया अपि ॥

अशोकः

सेनाग्रणीः—मेलरागः (सेनावतीमेलजः)

(आ) स रि ग म ध नि – स.
(अव) स ध प म ग रि – स.

मञ्ज

सेनापतिः

शीलवान्सत्यसंपन्नः सत्कालज्ञः प्रियं वदः ।
परस्त्रविधिज्ञश्च यात्राकालविशेषवित् ॥
अर्थशास्त्रार्थतत्वज्ञो ह्यनुरक्तः कुलागतः ।
देशवित्कालविच्चैव भवेत्सेनापतिर्गुणैः ॥

सेनारवः—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स म ग म प ध नि स.
(अव) स नि ध प म ग रि स.

सेनावती—मेलकर्ता (रागः)

स रि ० ग ० म ० प ध नि ० ० स

मञ्ज

सेलुका

षड्त्रिंशत्यङ्गुलायामा त्रिंशदङ्गुलवेष्टना ।
समाङ्गा सेलुका प्रोक्ता बीजदारुविनिर्मिता ॥
तर्जनी मात्रके कुर्याद्वल्लमण्डलके दृढे ।
तद्वली चर्मणानद्धद्वादशाङ्गुलविस्तृते ॥
षड्रन्ध्रे रज्जुभिर्बद्धे वामतन्त्री सुगर्भितम् ।
वामास्य वामहस्तेन सव्यं कोणेन वादयेत् ॥
घिकारो दक्षिणे तुन्दे झिकारो वामवक्त्रके ।
देववानर्तने यस्यावादनं परिकीर्तितम् ॥

सोमेश्वरः

—अवनद्धवाद्यम्

सेलुका बीजवृक्षोत्था दैर्घ्ये षट्त्रिंशदङ्गुला ।
परिधौ सन्निभा कार्या विद्वद्भिस्त्रिंशदङ्गुला ॥
समा दशाङ्गुले वक्त्रे मितंवैकादशाङ्गुलैः ।
नद्धव्ये तद्वलीभ्यां तेऽधिकाभ्यामङ्गुलेन तु ॥
वल्लीजं वलयद्वन्द्वं तर्जनीस्थौल्यसंयुतम् ।
सरन्ध्रषट्कं बिभ्राणा वक्त्रयोस्तत्र रज्जुभिः ॥
रन्ध्रक्षिप्तैर्दृढं बध्वा वाद्यवादनकोविदैः ।
सेलुकावामवदने तन्त्रिकागर्भिते सति ॥
वाद्या वामकरेण स्याद्दक्षिणे वदने तथा ।
दक्षिणेन सकोणेन खिकारो वामवक्त्रगः ।
घिकारो दक्षिणे वक्त्रे मुख्यपाटविभूषिता ॥

कुम्भः

सैकतरञ्जनी—मेलरागः (वकुलाभरणमेलजन्यः)

(आ) स ग म प ध स·
(अव) स नि ध म ग रि स.

मञ्ज

सैन्धवः—मेलरागः

शुद्धमेलोद्भवः पूर्णो धैवतादिकमूर्छनः ।
आरोहे गनिवर्जस्स्याद्रागः सैन्धवनामकः ।
आम्रेडितस्वरैर्युक्तः स्फुरितेन च शोभितः ॥

अहोबिलः

शुद्धमेल इति । सर्वेश्वराः शुद्धा इत्यर्थः । आम्रेडितस्वर इति । अलङ्कारविशेषः । स्फुरितेनेति । तन्नाम्ना गमकेन । सर्वकालगेयः ।

सैन्धववराटी—उपाङ्गरागः

समन्द्रा बहुगान्धारा षड्जधैवतकम्पिता ।
वराटी सैन्धवी तद्ज्ञैः शृङ्गारे संप्रयुज्यते ॥

भट्टमाधवः

—रागः

भाषा स्यात् सैन्धवी नाम जाता मालवकैशिकात् ।
तदङ्गं गायकैर्ज्ञेया सैन्धवीयं वराटिका ॥
षड्जांशन्याससंयुक्ता समन्द्रा सपकम्पिता ।
गान्धारबहुला तज्ज्ञैः शृङ्गारे विनियुज्यते ॥

जगदेकः

तत्र सैन्धवपूर्वासौ वराटीति निगद्यते।
अंशन्यासी भवेत्षड्जाज्जाता मालवकैशिकात् ॥
षड्जमन्द्रा कम्पिता च षड्जधैवतयोस्तथा।
गान्धारस्वरभूयिष्ठा रागविद्भिरुदीर्यते ॥

हरिः

सैन्धविका—रागः

षड्जांशकग्रहन्यासा त्यक्तपञ्चमसप्तमा।
मध्यमस्वरबाहुल्या सैन्धवी कैशिकाश्रया ॥

नान्यः

नैषादस्वरसहिता पञ्चस्वरपेशला तु सैन्धविका।
मालवकैशिकजनिता सांशन्यासग्रहा भवति ॥

कश्यपः

सैन्धवी—रागः

ततस्स्यात्सैन्धवी नाम भिन्नषड्जसमुद्भवा।
औडुवा धैवतन्यासग्रहांशपरिशोभिता।
स्वरेण पञ्चमेनापि ऋषभेण विवर्जितः ॥
अथस्यात्सैन्धवीरागः टक्करागसमुद्भवा।
षाड्जान्ता मध्यमांशा च मन्द्रस्थानसमाश्रया।
औडुवा हीनतारासौ गान्धारे परिकीर्तिता ॥

हरिः

धैवतांशग्रहन्यासा पञ्चमर्षभवर्जिता।
गान्धारमध्यमोत्तारा सैन्धवी परिकीर्तिता ॥

सोमेश्वरः

अपरा सैन्धवी ख्याता शुद्धपञ्चमसंभवा।
अपन्यासग्रहांशेषु तथा षड्जस्वरात्मिका ॥
तारर्षभा षड्जमन्द्रा निषादेन विवर्जिता।
ऋषभे सैन्धवे दीप्ता सैन्धवी ख्यापिता बुधैः ॥

हरिः

पञ्चमांशग्रहन्यासा पन्यासा त्यक्तसप्तमा।
महाव्रतिकतानाद्या हृष्यकामूर्छनान्विता ॥
कम्पितैर्गमकैर्युक्ता स्वरमाधुर्यबन्धुरा।
रिषभस्वरबाहुल्या सैन्धवीत्यभिधीयते ॥

नान्यः

रिषभोत्कटेन रम्यापन्यासांशेन संयुक्ता।
त्यक्तनिषादैर्गमकैस्सैन्धविका सा सदा तु स्यात् ॥

कश्यपः

परिहीना तारमन्द्रो मन्द्रषड्जध्वनिस्तदा।
स्वरलङ्घनसंयुक्ता सैन्धवी परिकीर्तिता ॥

नान्यः

पञ्चस्वरा तु गमकैस्स्वरलङ्घनयोजितैः स्संयुक्ता।
रिपहीना सैन्धविकाभवति सदागमकरवा ॥

कश्यपः

सैन्धवी पञ्चमाज्जाता ग्रहांशन्यासपञ्चमा।
मध्याह्नादूर्ध्वतो गेया शृङ्गारे करुणेऽपि च ॥

सैन्धवी सिन्धुजेति प्रसिद्धा। नारायणः

भिन्नषड्जस्य भाषाया सैन्धवी सैन्धवी श्रुता।
धैवतांशग्रहोपेता धैवतन्यासभूषिता।
औडुवा रिपहीना च देशीरागस्तु सैन्धवी ॥

जगदेकः

षड्जग्रहांशकन्यासा पूर्णा सैन्धविका मता।
मूर्छनोत्तरमन्द्रा च कैश्वि......त्रया मता।
रिहीना तु भवेदित्थं रसे वीरे प्रयुज्यते ॥

दामोदरः

उपाङ्गं सैन्धवी चान्या त्रिधा षड्जसमन्विता।

मदनः

—भाषारागः

षड्जग्रहांशकन्यासा षड्जग्रामकृताश्रया।
गनिहीना पभूयिष्ठा पमन्द्रा तारपञ्चमा ॥
सर्वभावनियोगार्हा जाता मालवकैशिकात्।
औडुवा सैन्धवी भाषा कालसेनेन वर्णिता।
एतामाचष्ट संपूर्णां याष्टिको मुनिपुङ्गवः ॥

कुम्भः

— मेलरागः (खरहरप्रियामेलजन्यः)

(आ) नि ध नि स रि ग म प ध नि.
(अव) ध प म ग रि स नि ध नि स.

मत्र

सैन्धवीरागध्यानम्

षड्जग्रहांशकन्यासा पूर्णा सैन्धविका मता।
मूर्छनोत्तरमन्द्राद्या कैश्चित् षड्जत्रया मता।
रिहीना तु भवेदित्थं रसे वीरे प्रयुज्यते ॥

त्रिशूलपाणिः शिवभक्तरक्ता रक्ताम्बरा धारितबन्धुजीवा।
प्रचण्डकोपा रसवीरयुक्ता सा सैन्धवी भैरवरागिणीयम् ॥

दामोदरः

उन्नततुङ्गतनुरतनुर्जघने शोणांशुका त्रिशूलाङ्का।
गौरी करिगतिरभिमतयुता सैन्धव्यतिक्रुद्धा ॥

सोमनाथः

**सैन्धवीदेशा**—रागः
समन्द्रा रिपहीना स्यात्सैन्धवी...... ।
टक्करागोद्भवा सान्द्रैर्गमकैर्ललितस्वरैः ॥
भिन्नषड्जसमुद्भूता रिपहीना च सैन्धवी ।
निषादपेशला ज्ञेया मन्द्रधैवतभूषिता ॥ मोक्षः

**सैन्धवीवराटी**—रागः
वराटी सैन्धवी भूरिगान्धारा सधकम्पिता ।
श्रीहम्मीरेण कथिता शृङ्गारे मन्द्रमध्यमा ॥ हम्मीरः

—प्रथमरागः
सैन्धवी भूरिगान्धारा षड्जधैवतकम्पिता ।
सन्यासांशान्युपाङ्गानि वराट्याः कथितानि षट् ॥ मोक्षः

**सोच्छ्वासा**—नासिका
योत्कृष्टमारुता नासा सा सोच्छ्वासोदिता बुधैः ।
उच्छ्वासैस्सौरभेष्वेष दीर्घोच्छ्वासविधायिषु ।
निर्वेदा दिष्वतिशयभावेषु विनियुज्यते ॥ अशोकः

**सोत्कम्**—दर्शनम्
सोत्कं तद्यत्र दूरेण दृश्यमुद्दिश्य धावति । वेमः

दूरं धावति यत्प्रेम्णा तत्सोत्कमिति कथ्यते ॥ शारदातनयः

**सोत्कम्पम्**—दर्शनम्
सोत्कम्पं तद्यदुल्लोलतारा भ्रूपक्ष्म सर्वतः । शारदातनयः

**सोत्प्रासम्**—दर्शनम्
परौत्सुक्यं विभाव्येन यत्र सोत्प्रासमेव तत् । शारदातनयः

**सोत्साहम्**—गीतगुणः—रञ्जनगुणः
गाढताऽऽरभटीवृत्त्या वीरसञ्चरवर्णनम् ।
ध्वनीचस्वरं गीतं सोत्साहं शूरवल्लभम् ॥ सोमेश्वरः

**सोत्सुकम्**—दर्शनम्
दृष्टे तु भूयो भूयोऽपि दर्शनं सोत्सुकं मतम् ॥ वेमः

**सोपानकम्**—मात्रावृत्तम्
पञ्च भाः, म. गाथा च । विरहाङ्कः

**सोमः**—तानः
मध्यमग्रामे गहीनषाडवः ।
स नि ध प म रि . कुम्भः
मध्यमग्रामे रिवर्जितषाडवः ।
नि ध प म ग स . कुम्भः

—रागः
सोमरागोऽथ षड्जांशग्रहन्याससमन्वितः ।
मध्यमे मन्द्रतारोऽयं संपूर्णस्सप्तभिस्स्वरैः ।
गान्धारे च निषादे च बहुत्वं समुपागतः ॥ हरिः

निषादहीनः षड्जादिः...मध्यमकम्पितः ।
अवरोहे सगान्धारः सोमरागस्तु षाडवः ॥ सोमेश्वरः

जातिन्यासग्रहांशेषु षड्जो वीरे घनागमे ।
नितारपञ्चिबाहुल्यः सौमरागोऽत्रगीयते ॥
अस्य मूर्तिस्तु चन्द्रिकायाम्
निजाङ्गनां वक्षसि शाययित्वा
कलङ्कदम्भात्सुरतश्रमार्ताम् ।
स्खलत्करः सालसलोचनश्रीः
कामात्सुधापाण्डर एष सोमः ॥ नारायणः

षड्जे षाड्जीभवः षड्जग्रहान्तो निर्गोत्कटः ।
सोमरागस्मृतो वीरे तारमध्यस्थमध्यमः ॥ हम्मीरः

**सोमकीर्तिः**—देशीतालः
सोमकीर्तिः प्लुतो (गुरुलघू) द्रुतौ नमगणावपि ।
ऽँ ऽ । ० ० । । । ऽ ऽ ऽ सोमराजः

—प्रबन्धः
वसन्तो गूर्जरी चैव देवशाखा च तोडिका ।
पञ्चमश्च धनाशी च रागो गौडश्च सप्तमः ॥
षड्जादिस्वरयोगः स्यात्पदादौ च स्वराक्षरम् ।
यत्र श्री सोमराजेन सोमकीर्तिस्सकीर्तितः ॥
अत्र चच्चत्पुटस्तालो नन्दीनाम तथापरः ।
सिंहनन्दनसंज्ञस्तु प्रोक्तः प्रतापशेखरः ॥

जयमङ्गल इत्यन्यः सोमवल्लभ एव च ।
सोमकीर्तिः क्रमेणैते वसन्तादिषु सप्तसु ॥

सोमकीर्तिप्रबन्धोऽयं गीयमानो यथाविधि ।
नेतुः श्रोतुश्च गातुश्च जायन्ते सर्वसंपदः ॥

सोमराजः

## सोमनार्यः

नाट्यचूडामणिकर्ता । कालः 1540

## सोमरागः—रागः

षड्जोंशश्च ग्रहन्यासौ मन्द्रतारश्च मध्यमः ।
निगोत्कटश्च पूर्णश्च सोमरागोऽभिधीयते ।
श्रीरागाङ्गं भवेच्चासौ वीरे च विनियुज्यते ॥

जगदेकः

अंशन्यासग्रहधृतषड्जः पूर्णस्य षड्जिकाजातः ।
यस्तारमन्द्रमध्यो गनिषड्जः सोमरागोऽसौ ॥

नान्यः

अंशे न्यासे ग्रहे षड्जः मध्यमस्तारमन्द्रयोः ।
भवेत्पञ्चमसमः पूर्णः सोमरागो निगोत्कटः ॥

मतङ्गः

ग्रहांशन्याससन्मन्द्रतारसो निगयोर्बहुः ।
श्रीरागाङ्गं सोमरागः पूर्णो वा वीरसंश्रयः ॥

सोमराजः

—ग्रामरागः

निषादर्षभगान्धारबहुषड्जग्रहांशवान् ।
सोमरागो रसे वीरे तारं मध्यस्थमध्यमम् ।
षड्जे षाड्जी समुद्भूतः सदा प्राज्ञैः प्रगीयते ॥

भट्टमाधवः

## सोमनाथः

षष्ट्युत्तरनवशतमेलान् शुद्धविकृतस्वरभेदप्राधान्येन प्रस्तारं कृत्वा जगाद । तेषु त्रयोविंशतिमेला एव गायकलोके प्रचारे वर्तन्त इति तेषामेव लक्षणमवोचत् । मुखारीमेलः प्रथमः । सर्वेस्वराः शुद्धाः । रेवगुप्तिमेलो द्वितीयः । गोऽन्तरः । (औडुवः) सपौ लुप्तौ । तृतीयस्सामवरालीमेलः काकली निषादः । शिष्टाश्शुद्धाः । चतुर्थस्तोडीमेलः । गस्साधारणः । निःकैशिकी । शिष्टाश्शुद्धाः । नादरामक्री चतुर्थमेलः । गस्साधारणः । निर्मृदुषड्जः । (सोमनाथेनाङ्गीकृतो विकृतनिषादभेदः) षष्ठो भैरवमेलः । गोऽन्यरः निःकैशीकी । शिष्टाश्शुद्धाः । वसन्तमेलस्सप्तमः । गोऽन्तरः । काकलीनिः । शिष्टाःशुद्धाः । वसन्तभैरवी मेलोऽष्टमः । गोमृदुमध्यः । अयं भेदोऽपि सोमनाथकल्पितः) निकैशिकिः । पो लुप्तः । शिष्टाः शुद्धाः । नवमो मालवगौलमेलः । गोमृदुमध्यः । निःमृदुषड्जः ।

दशमोरीतिगौलमेलः । घस्तीव्रतरः ।

निःकैशिकी ।

एकादशो मेल आभीरनाटः । रिस्तीव्रतरः । गस्साधारणः । निर्मृदुषड्जः । अन्ये शुद्धाः । हम्मीरो द्वादशो मेलः । रिस्तीव्रतरः । गोमृदुमध्यः । निर्मृदुषड्जः । अन्ये शुद्धाः ।

शुद्धवराटी त्रयोदशो मेलः । गस्साधारणः । मस्तीव्रतमः । निर्मृदुषड्जः । अन्ये शुद्धाः । शुद्धनामक्री चतुर्दशो मेलः । गोमृदुमध्यः । मस्तीव्रतमः । निर्मृदुषड्जः । अन्ये शुद्धाः ।

श्रीरागः पञ्चदशो मेलः । रिस्तीवः । गस्साधारणः । धस्तीव्रः । निःकैशिकी । अन्ये शुद्धाः । कल्याणीमेलः षोडशः । रिस्तीव्रतरः । गस्साधारणः । मोमृदुपञ्चमः । निर्मृदुषड्जः । अन्ये शुद्धाः । काम्भोजीमेलस्सप्तदशः । रिस्तीव्रतरः । गोऽन्तरः । धस्तीव्रतरः । निःकाकली । अन्ये शुद्धाः । मल्लारिमेलोऽष्टादशः । रिस्तीव्रतरः । निर्मृदुषड्जः । अन्ये शुद्धाः । रिधौ तीव्रतरौ ।

सामन्त एकोनविंशो मेलः । रिस्तीव्रतमः । गोऽन्तरः । धस्तीव्रतरः । निषादः काकली । अन्ये शुद्धाः । कर्णाटगौलमेलो विंशः । रिस्तीव्रतमः । गो मृदुमध्यः । धस्तीव्रतरः । निःकैशिकी । अन्ये शुद्धाः । देशाक्षीमेल एकविंशः । रिस्तीव्रतमः । गो मृदुमध्यः । धस्तीव्रतरः । निर्मृदुषड्जः । अन्ये शुद्धाः । शुद्धनाटो द्वाविंशः रिस्तीव्रतमः । गो मृदुमध्यः । धस्तीव्रतमः । निर्मृदुषड्जः । अन्ये शुद्धाः । सारङ्गमेलस्त्रयोविंशः । रिस्तीव्रतरः । गस्तीव्रतमः । मो मृदुपञ्चमः । धस्तीव्रतमः । निर्मृदुषड्जः । अन्ये शुद्धाः ।

एतेभ्यो जन्याः प्रधानरागाश्चतुःपञ्चाशत् सोमनाथलक्षिताः तत्तद्रागप्रसङ्गे लक्षणं दत्तम् । वीणालक्षणेऽस्य स्वरश्रुतिस्थापनाक्रमो वर्णितः । अहोबिल

## सोमरागः

सोमरागश्च रागाङ्गो निषादैः परिपूरितः ।

—मेलरागः (धेनुकमेलजन्यः)

(आ) स ग म प नि स .

(अव) स ध प म ग म रि ग रि स़ . मध

## सोमराजदेवः

सङ्गीतरत्नावलिकारः । चापोत्कटवंशीयः क्षत्रियः स्यात् । सौराष्ट्रदेशाधिपत्योः अजयपालभीमदेवयो र्वेत्राधिपतिरासीत् कालः क्रै. प. 1177 नाट्यवेदविरिञ्चिरिति बिरुदमस्ति । अयं

द्विजानां विदुषां दारिद्र्यापहारीति असकृदुक्तम्। अस्य पिता जगद्देवः। सः सिन्धुदेशाधीशं समरे जिगायेति ज्ञायते।

**सोमवल्लभः**—देशीतालः

मगणो नगणश्चैव द्रुतौ ह्रस्वो गुरुः प्लुतः।
उक्तः श्रीसोमराजेन तालोऽयं सोमवल्लभः।
ऽ ऽ ऽ । । । ० ० । ऽ ऽ̇ — सोमराजः

—प्रबन्धः

स्वरास्सपाङ्गपाटाश्च मालिनी छन्दसा परम्।
सोमवल्लभतालश्च त्रितालस्तोभको अपि॥
गातृनेतृप्रबन्धानामाभोगे नाम सूत्रिणि।
सोमवल्लभसंज्ञे स्यात्प्रबन्धे बन्धहारिणि॥ — सोमराजः

**सोमविलासितः**—मेलरागः (चक्रवाकमेलजन्यः)

(आ) स रि ग म ध नि स.
(अव) स नि ध प म ग स. — मञ्ज

**सोमेश्वरः**

अभिलषितार्थचिन्तामणिकारः। त्रिभुवनमल्लस्य पुत्रः। अनेन विक्रमाङ्काभ्युदय इति त्रिभुवनमल्लदेवचरितं वर्णितम्। अयं नाट्यसङ्गीतयोः महाप्रमाणिक इति अनेक ग्रन्थकारवचनैः स्मृतते। कुण्डलीनृत्तस्य कश्चिद्भिन्नरूपं नृत्तविशेषं स्वयमेव निर्माय लोके गोण्डलीनाम्ना प्रकटितमिति ज्यायसेनापतिना उक्तम्। कल्याणनगरी अस्य राजधानी। कालः क्रै.प. 1127—1134। अयं देशचरित्रे भूलोकमल्ल इति नाम्ना प्रसिद्धः।

**सोम्पटः**—प्रबन्धः

सोम्पटाख्येन तालेन छन्दसाऽपि च गीयते।
सोम्पटोपि भवत्येवं, — हरिपालः

**सोरठी**—मेलरागः

श्रीरागमेलसंभूता सोरठी रिस्वरोद्ग्रहा।
पञ्चमाद्दुंफितोपेता रिपर्यन्तं पुनस्तथा।
सहुंफिता मपर्यन्तमग्रस्थानषड्जगा॥
प्रथमप्रहरोत्तरगेया। — अहोबिलः

—रागः

सोरठी षाडवगेया पञ्चमत्रयसम्मता।
रिहीना च समाख्याता कैश्चित् षड्जत्रयामता॥ — दामोदरः

**सोरठीरागध्यानम्**

सौराष्ट्रिकेति नामान्तरम्।

पीनोन्नतस्तनमनोहरहारवल्ली
कर्णोत्पलभ्रमरनादविदग्धचित्ता।
याति प्रियान्तिकमथ श्लथबाहुवल्ली
सौराष्ट्रिकास्मरवधूललिताङ्गयष्टिः॥ — दामोदरः

**सौकुमार्यम्**—काव्यगुणः

सुखप्रयोज्यै यच्छब्दैर्युक्तं सुश्लिष्टसन्धिभिः।
सुकुमारार्थसंयुक्तं सौकुमार्यं तदुच्यते॥ — भरतः

कचित्पदस्य स्वयं पारुष्यं भवति। कचित्संहिता। तदुभयरहितत्वं सौकुमार्यं शब्दगुणः। परुषेऽपि चार्थे सुकुमारेणार्थेन या सम्पत्तिः तदर्थगुणः सौकुमार्यमपारुष्यरूपम्। — अभिनवः

अजरठत्वं सौकुमार्यम्। पदैर्मृदुभिराकीर्णं सुकुमारसिद्धोदितम्। — सर्वेश्वरः

अकठोराक्षरन्यासः सौकुमार्यमुदाहृतम्। — प्रकाशवर्षः

**सौकुमार्यम्**—वंशे फूत्कारगुणः

सौकुमार्यं कोमलता! — कुम्भः

**सौत्रामणिः**—तानः

नि लोपः षाडवः।
ग रि म ध प स. — कुम्भः

**सौदामिनी**—मेलरागः

रिधौ च कोमलौ ख्यातावतितीव्रतमश्च गः।
मश्च तीव्रतरो यत्र निषादस्तीव्रसंज्ञकः।
सौदामिन्यां तु गान्धारः स्वरोद्ग्राहः सतां मतः॥
सायंगेया। — अहोबिलः

**सौन्दरम्**—शिरः

ऊर्ध्वाधोमुखविन्यासात्पश्चाद्भागे तु चालनात्।
सौन्दराख्यं शिरः प्रोक्तं सर्वनाट्ये प्रशस्यते॥ — नन्दी

**सौन्दर्यम्**

वयोऽवस्थादिसंभूतमौज्ज्वल्यं रामणीयकम्।
भूषणालेपनाद्यत्र शोभा सौन्दर्यमिष्यते॥ — भावविवेकः

**सौभाग्यकृत्**—तानः
षड्जग्रामे रिपहीनौडुवः।
नि ध म ग स.
कुम्भः

**सौम्यम्**
भूयिष्ठं तेज एवाङ्गिबहुलाभिर्मृदूकरम्।
चक्षुरानन्दजननं तत्सौम्यमिति कथ्यते॥
भावविवेकः

**सौम्यमनोहरी**—मेलरागः (नटभैरवीमेलजन्यः)
(आ) म प ध नि स रि ग म प ध.
(अव) स म ग रि स नि ध स म.
मञ्ज

**सौम्या**—प्राकृते मात्रावृत्तम्
द्वौ पञ्चमात्रिकौ द्वौ चतुर्मात्रिकौ लः गः।
विरहाङ्कः

—श्रुतिः
मन्द्रर्षभद्वितीया श्रुतिः।
पण्डितमण्डली

**सौवर्णः**—तानः
षड्जग्रामे नारदीयतानः।
ध स रि म प ?
नान्यः

**सौवीरः**—रागः
षड्जांशन्याससंयुक्तः षड्जमध्यमया कृतः।
स्वल्पौ निषादगान्धारौ सौवीरः काकलीयुतः॥
मोक्षः

षड्जमध्यमया जात्या सृष्टस्सौवीर उच्यते।
षड्जग्रहांशस्स्वल्पत्वं स्याद्गान्धारनिषादयोः।
निषादे काकलीयुक्तः पूर्णस्सौवीर इष्यते॥
हरिः

**सौवीरकः**—रागः
न्यासांशविस्फुरत्षड्जः स्वल्पगान्धारसप्तमः।
षड्जोक्तमूर्छनातानश्रुतिसन्तानसुन्दरः॥
षड्जमध्यासमुद्भूतः शृङ्गारे स्मरदैवतः।
जितसौवीरवीरेण सौवीरक उदीरितः॥
नान्यः

षड्जन्यासांशसंयुक्तः करणं षड्जमध्यमा।
सौवीरकस्य गान्धारो निषादश्चापि दुर्बलः॥
कश्यपः

**सौवीरं**—मेलरागः (सुवर्णाङ्गीमेलजन्यः)
(आ) स रि ग रि म प ध नि स.
(अव) स नि प ध म ग रि स.
मञ्ज

**सौवीरी**—भाषारागः
सौवीरसंभवा षड्जग्रहन्यासाल्पमध्यमा।
सौवीरी गीयते भाषा सधयो रिधयोरपि।
संवादशालिनी तद्ज्ञैः भूयसी वाद्यमेव च॥
मट्टमाघवः

—मूर्छना (मध्यमग्रामे प्रथमा मूर्छना)
(आ) म प ध नि स रि ग.
(अव) ग रि स नि ध प म.
पण्डितमण्डली

—मूर्छना (सुभद्राग्रामे चतुर्थी मूर्छना)
सौवीरी मूर्छना नाम जायते मध्यमूर्छनात्।
ग्रामे सुभद्रसंज्ञे तु प्रवासे गीयते बुधैः॥
इयं पुत्रदा
वादिमत्तः
पण्डितमण्डली

—मूर्छना
.................. ब्रह्माधिदेवता चास्यां।
...... मध्यमस्वरमूर्छना।
नान्यः

**सौरभः**—तानः
षड्जग्रामे निगहीनौडुवः।
स ध प म रि
कुम्भः

**सौराष्ट्रः**—मेलरागः (मालवगौलमेलजोऽयं रागः)
सौराष्ट्रराग आरोहे निषादस्वरवर्जनम्।
धैवते श्रुतियुक्तत्वं ततष्षाडवपूर्णकः॥
अत्र धैवतश्चतुःश्रुतिः।
परमेश्वरः

—मेलरागः (सूर्यकान्तमेलजोऽयं रागः)
(आ) स रि म ग म प ध नि स.
(अव) स ध प म ग रि स.
मञ्ज

**सौराष्ट्रगुर्जरी**—रागः
अथ सौराष्ट्रपूर्वा तु गुर्जरी कम्पितर्षभा।
स्वरसप्तकसंपूर्णा कथिता रागवेदिभिः॥
हरिः

**सौराष्ट्रगूर्जरी**—उपाङ्गरागः

इयमेव विकम्पाढ्या सौराष्ट्रीगूर्जरीमता ।

इयं महाराष्ट्रगूर्जरी । भट्टमाधवः

**सौराष्ट्रिका**—रागः

मतङ्गस्य मतं भाषा योक्ता मालवपञ्चमे :
सौराष्ट्रिका तदङ्गं स्यात् पन्यासांशा च षाडवा ।
ख्याता सौराष्ट्रिका लोके ऋषभेण विवर्जिता ।।

जगदेकः

**सौराष्ट्री**—मेलकर्ता रागः (मालवगौलजन्यः)

पूर्णा सौराष्ट्रका षड्जलयेण समुपाश्रिता ।
गायकैर्गीयते सायं क्वचित्पलयभूषिता ।।

श्रीकण्ठः

—**रागः**

सषड्जांशग्रहन्यासा निषादेन च वर्जितः ।
मध्यमेन विहीना स्यात् सौराष्ट्री नित्यकम्पिता ।।

सोमेश्वरः

सरिगमधनिनादैस्तारमेव प्रपन्नै-
वैलवति च निषादे पञ्चमे प्राप्तलोपे ।
स्फुटविरचितषड्जाहांशके मन्द्रमध्या
भवति भुवनरम्या हन्त सौराष्ट्रिकाख्या ।।

नान्यः

सरिगमधनिशब्दैर्मध्यतरा मन्द्रमध्यमरवा ।
बलवन्निषादयुक्ता सौराष्ट्री भवति पञ्चमेन विना ।।

कश्यपः

अंशन्यासग्रहबहुलसत्पञ्चमा......
तारस्थानप्रथितसगधा मन्द्रमध्यध्वनी च ।
सौराष्ट्री स्यादृषभरहिता षट्स्वरत्वैकगम्या
लीनाक्षिप्तैर्गमकनिचयैरन्विता पञ्चमांशा ।।

नान्यः

रिषभविहीना भवति पञ्चमगीत्युत्कटा च सौराष्ट्री ।
पञ्चमजनितख्याता षट्स्वरगमकैश्च संयुक्ता ।।

कश्यपः

समन्द्रां सपभूयिष्ठां न्यासांशग्रहपञ्चमाम् ।
अरिं तारसगधां च सौराष्ट्रीमपरे विदुः ।।

सोमराजः

धतारमन्द्रा पबहुसौराष्ट्रीरिपवर्जिता ।
षड्जन्यासग्रहांशा च शुद्धनट्टामिधीयते ।।

सोमराजः

ततःपरं स्यात्सौराष्ट्री जातामालवपञ्चमात् ।
न्यासांशपञ्चमात्यक्तरिर्पभा षाडवा भवेत् ।।

हरिः

—**गूर्जरीरागः**

गूर्जर्येव रिकम्पाढ्या सौराष्ट्रीगूर्जरी भवेत् ।

हम्मीरः

**सौराष्ट्रीगूर्जरी**—प्रथमरागः

महाराष्ट्री च सौराष्ट्रीगूर्जरी विबुधैर्मता ।
परिपूर्णा भवेदेषर्षभकम्पन संयुता ।।

मोक्षः

—**रागः**

सौराष्ट्रीगूर्जरी प्रोक्ता रिषभाद्या ह्युपाङ्गिका ।

आद्या—अंशन्यासग्रहेषु । मदनः

**सौराष्ट्रीगूर्जरी**—रागः

ऋषभे कम्पिता पूर्णा सौराष्ट्रीगूर्जरी भवेत् ।
मध्यकम्पितपूर्णा च सर्वेष्वन्येषु ताडिता ।।

जगदेकः

**सौराष्ट्रीरागध्यानम्**

मदालसविलोचनां मधुरवेणुनादाञ्चितां
पुरस्थितरमाधवां जलजमण्टपावासिनीम् ।
गुडासवघटाञ्चितप्रतिनिवेशिनीं सर्वदा
भजामि हृदयांबुजे सुवसनां च सौराष्ट्रिकाम् ।।

रागसागरः

उत्तुंङ्गपीनस्तनलोलहारा
कर्णोत्पलालिध्वनिदत्तचित्ता ।
प्रियान्तिकं याति विलोलबाहुः
सौराष्ट्रिका कुङ्कुमलिप्तगल्ला ।।

श्रीकण्ठः

**सौष्ठवम्**

उरः समुन्नतं यत्र कूर्परांसशिरस्समम् ।
कटीजानुसमासन्नं गात्रं तत्सौष्ठवं मतम् ।।
अङ्गस्य स्थानविश्रान्तं सन्नमित्यभिधीयते ।
अचलस्थितिसंयुक्तं निषण्णमिति कीर्त्यते ।।
सौष्ठवाङ्गमनत्युच्चमचंचलमकुब्जकम् ।
तलपादं च तत्कार्यं नृतिरुत्तममध्यमैः ।।

कुम्भः

—देशीलास्याङ्गम्

यत्पुरा दर्शितं मार्गे स्थानके वैष्णवाभिधे।
तदेव सौष्ठवं ज्ञेयं विशेषस्त्वत्र कथ्यते ॥
सौष्ठवे खर्वता त्रेधा नर्तक्या अङ्गुलैर्निजैः।
चतुर्भिरष्टभिर्यद्वा तथा द्वादशभिश्च वा ॥
जानुवङ्क्षणयोर्नत्वा कार्या देशानुसारतः।
नृत्ते शोभां न पुष्णाति खर्वत्वं चेत्ततोऽधिकम् ॥

वेमः

**स्कन्दः**

अयमगस्त्याय महर्षये नाट्यशास्त्रमुपदिदेशेति कस्मिंश्चिदुद्र-मिडग्रन्थे लिखितमस्ति। स च ग्रन्थोऽदृष्टपूर्वः।

—देशीतालः

स्कन्दोऽथ रादूद्रुतौ गुरू चेति प्रकीर्तितः।
S I S o o S S

कुम्भः

**स्कन्धः**

लोलितावुच्छ्रितौ स्रस्तावेकोच्चौ कर्णलग्नकौ।
नत्रैव व्यक्तलक्ष्माणौ स्कन्धौ पञ्चविधौ स्मृतौ ॥

कुम्भः

उच्छ्रितस्स्रस्त एकान्तस्संलग्नो लोल एव च।
स्कन्धः पञ्चविधः प्रोक्तो नृत्ते नाट्ये च कोविदैः ॥

सोमेश्वरः

**स्कन्धानतम्—शिरः**

स्कन्धानतं तदाख्यातं स्कन्धे यन्निहितं शिरः।
तन्निद्रामदमूर्छासु चिन्तायां च प्रयुज्यते ॥

शार्ङ्गः

**स्खलद्गतिः—ध्रुवावृत्तम् (चतुर्दशाक्षरवृत्तम्)**

पञ्चत्वादौ यत्र गुरूण्यष्टमनवमो-
पान्त्ये ज्ञेयं दीर्घकृतं चेद्भवति सदा।
शक्वर्येतच्छन्दसि नित्यं नयविहिता
नाम्ना भूतलतन्वीस्खलितगतिः ॥

इयं नवमालेति, भूतलतन्वीत्यप्युच्यते।

भरतः

उत्तमानां स्खलद्गतिर्गुणरूपादिवर्णने।
चच्चत्पुटद्वयं चाचपुटो मालवकैशिके।
तारामध्ये भेद विमुक्तो विमलकरे ॥

भतयनलगा।

नान्यः

**स्खलितः—वर्णालङ्कारः (सञ्चारी)**

आद्यं तृतीयं तदनु द्वितीयं द्विस्तुर्यकं किञ्च ततो द्वितीयम्।
तृतीयमाद्यं च पुनश्च गायेदष्टस्वरासौ प्रथमा कलेष्टा ॥
द्वितीयतुर्यौ तु ततस्तृतीयं तं पञ्चमं द्विश्च तृतीयतुर्यौ।
गायेद्द्वितीयं च यदा द्वितीया कलेयमष्टस्वरमेलनेन।
तृतीयमादावपि पञ्चमं च तुर्यं पुनः षष्ठमनन्तरं द्विः ॥
तुर्यं पुनः पञ्चमकं तृतीयं भवेत्कलाष्टस्वरयुक्तृतीयम्।
तुरीयषष्ठावथ पञ्चमं च द्विस्सप्तमं पञ्चमषष्ठतुर्याम् ॥
गायेद्यदेयं तु कलाचतुर्थी तं पञ्चमं सप्तमषष्ठकौ च।
द्विरादिमं षष्ठकसप्तमौ च तं पञ्चमं गायति सा कलान्त्या।
एवं विधाः पञ्चकलाश्च यत्रालङ्कार एष स्खलिताभिधानः ॥

सगरिम, मरिगस, रिगमप पगमरि, गपमध धमपग, मधपनि निपधम, पनिधस सधनिप।

रघुनाथः

—वंशे फूत्कारगुणः

स्वस्थानस्खलितादुक्तः स्खलितः।

कुम्भः

—वादनम् (उभयहस्तव्यापारः)

उत्क्षिप्तया सारणया वामस्तन्त्रीं द्रुतं यदा।
निहन्ति कर्तरीतुल्यो दक्षिणः स्खलितस्तदा ॥

शार्ङ्गः

—वीणायामुभयहस्तव्यापारः

हन्ति वामकरस्तन्त्रीं क्षिप्रमुत्क्षिप्य कम्रिकाम्।
कर्तरी दक्षिणः पाणिः यत्रासौ स्खलितो भवेत् ॥

कुम्भः

—श्वासः

निष्क्रान्तो योऽतिदुःखेन स्खलितोऽसौ समीरणः।
भवेद्दशायामान्तायां व्याधौ प्रवसितेषु च ॥

विप्रदासः

अन्त्यावस्थासु सव्याधेः प्रवासे विनिमयेऽपि च।

कुम्भः

**स्खलितता—फूत्कारदोषः**

स्वस्थानस्खलितादुक्त स्खलितः।

कुम्भः

**स्खलितम्—करणम्**

गमनागमने डोला पादात्पादं समाचरेत्।
तद्वद्बाहुश्च तद्विको हंसपक्षोपलक्षितः।
एवमङ्गान्तरं यत्र स्खलितं तदुदाहृतम् ॥

ज्यायनः

—ध्रुवावृत्तम्

आद्यमन्तं चतुर्थं च सप्तमं दशमं तथा ।
गुरूण्येकादशं चैव सङ्क्रुतौ वृत्तसंश्रयम् ॥

लघून्यन्यानि शेषाणि पादे यस्मिन्भवन्ति तु ।
तद्ज्ञेयं शर्पकं तद्ज्ञैः स्खलितं नामतो यथा ।
षट्कजरेणु परागपिशंगे लुलितकमलकुवलयदले ॥

भरतः

**स्खलितविक्रमा**—ध्रुवावृत्तम् (अष्टादशाक्षरम्)

तृतीयं च चतुर्थं च सप्तमं चाष्टमं तथा ।
नवमं द्वादशं चैव नैधनं सत्रदोदशम् ॥

यत्र दीर्घाणि पादे तु धृतिच्छन्दस्समाश्रये ।
सा ज्ञेया गीतकविधौ ध्रुवा स्खलितविक्रमा ॥

भरतः

उदिदो दीसदि एसोप्पणविंबाकिदिसदिसो।

सभमसभसः ।

**स्तब्धः**—ऊरुः

यो भवेन्निष्क्रियस्स्तब्धस्ससाध्वसविषादयोः ।

अशोकः

**स्तब्धम्**—दर्शनम्

निष्पन्दमानपक्ष्माग्रतारा स्तब्धमुच्यते ।

शारदातनयः

**स्तब्धाः**—पादाङ्गुल्यः

काष्ठवन्निश्चलाः स्तब्धा मतास्तम्भेङ्गमोटने ।

ज्यायनः

**स्तम्भः**

स्यात्तु निष्क्रियता स्तम्भो नवोढाप्रियसङ्गमे ।

शार्ङ्गः

—सात्विकभावः

हर्षभयरोगविस्मयविषादरोषादिसंभवस्तम्भः ।
निस्संज्ञो निष्प्रकम्पश्च स्थितश्शून्यजडाकृतिः ।
स्कन्नगात्रतया चैव स्तम्भं स्वभिनयेद्बुधः ॥

भरतः

हर्षव्याधिमदत्रासरोषशोकादिभिस्तम्भ उत्पद्यते । स्तब्धनिश्चेष्टगात्रत्वशून्यादिभिर्निर्दिशेत् ।

सागरः

स्तम्भो गदमदक्रोधहर्षविस्मयगर्वजः ।
तथा हर्षविषादादेर्जायते नीचमध्ययोः ॥

शारदातनयः

**स्तम्भतीर्थिका**

गान्धारगतिकाया नामान्तरम् ।

कुम्भः

—रागः

मध्यमेव निषादेनांदोलिता ककुभोद्गता ।
न्यासांशधैवता पूर्णा कथिता स्तम्भतीर्थिका ॥

सोमराजः

**स्तम्भक्रीडनिका**—देशीचारी

पार्श्वप्रसारि यस्याङ्घ्रिस्तलेन बहुशो यथा ।
स्थितोङ्घ्रिस्ताड्यते सा स्यात्स्तम्भक्रीडनिका तथा ॥

वेमः

**स्तम्भपतिका**—रागः

षड्जांशग्रहणधरा संपूर्णा न्यस्तधैवतध्वनिका ।
रिनिपाढ्या गमकयुता ककुभोत्था स्तम्भपत्रिकाभिहिता ॥

नान्यः

षड्जांशधैवतन्यासा संपूर्णा सप्तभिस्स्वरैः ।
कविभिः ककुभोत्था च कथ्यते स्तम्भपत्रिका ॥

मतङ्गः

**स्तम्भाः**

देवस्तम्भो नरस्तम्भः स्थिरस्तम्भस्त्वतःपरम् ।
स्थावराणां स्तम्भ इति मुनिस्तम्भश्च पञ्चमः ॥

शृङ्गारः

**स्तम्भितः**—श्वासः

स्तम्भितश्शश्रमोक्षणे ।

अशोकः

**स्तिमितं**—दर्शनम्

स्वगोचरान्न चाल्येत यत्तत् स्तिमितमुच्यते ।

शारदातनयः

**स्त्रीकला**—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग रि म प नि स .
(अव) स नि ध प ध म ग रि ग स . मज

**स्त्रीभेदः**—(अवस्थाकृतः)

ते च भेदा अष्टौ ।

तत्र वासकसज्जा च विरहोत्कण्ठितापि वा ।
स्वाधीनभर्तृका चापि कलहान्तरितापि वा ।
खण्डिता विप्रलब्धा वा तथा प्रोषितभर्तृका ।
तथाभिसारिका चैव ज्ञेयास्त्वष्टौ तु नायिकाः ॥

भरतः

**स्तोकः**—वंशे फूत्कारदोषः

स्तोककः पुनः । रन्ध्रापूरणतः प्रोक्तः—

कुम्भः

**स्तोकता**—फूत्कारदोषः

स्तोककः पुनारन्ध्रापूरणतः प्रोक्तः ।

कुम्भः

**स्तोत्रम्**—रञ्जनगुणः

देवत्वात्स्तुतिसंयुक्तं तत्प्रभावप्रबोधनम् ।
आस्तिक्योत्पादनं गीतं स्तोत्रं भक्तजनप्रियम् ॥

सोमेश्वरः

**स्तोभः**

ऋकसामादिषु कलापूरकः ।
यथा साम्नां धूमादिमन्त्रः स्तोभोऽभिधीयते।
यथा कलानामत्रापि पूरकः स्तोभ उच्यते॥
यानि हि ऋगक्षरेभ्योऽभ्यधिकानि विवर्णभूतानि ।
यानि च तानि स्तोभाक्षराणि मुनिराह जैमिनिश्शास्त्रे ॥
ओंकारश्च हकारश्च स्वरव्यञ्जनसंयुतः ।
स्तोभो निधेयो वोक्तव्यः सामगीतेषु सर्वदा ॥
ब्रह्मोदितानि यान्यत्र दश स्तोभपदानि तु।

कलानां पूरणार्थाय चोक्तानि— यथा-झंटुं, जगतिप, वलितक, कुचझलगितिकल, पशुपत्ति, दिगिनिगि, दिग्रे, गणपति, तिचा—इति ।

नान्यः

जैमिनिरिति। मीमांसासूत्रे ९, २, ३९। अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वादिति सूत्रमत्र सूचितम् ।

**स्थानकम्**

प्रविश्य रङ्गं स्थित्वाऽत्र चार्यादीः कुर्वते क्रियाः ।
नर्तका येन तत्रादौ स्थानकानभिदध्महे ॥
निष्पद्यते स्थागतिनिवृत्तावित्यस्मात्कृते ल्युटि ।
भावेऽयं स्थानशब्दोऽतः स्वार्थे कः प्रत्ययो भवेत्॥
अङ्गानां यस्सन्निवेशो विशेषो निश्चलो भवेत् ।
तदुच्यते स्थानमिति भिद्यते तदपि त्रिधा ॥
ऊर्ध्वोपविष्टसुप्ताख्याविशेषणनियोजनात् ।
तत्रोर्ध्वस्थानकं मार्गदेशीभेदाद्विधास्थितम् ॥
स्थानकं तूपविष्टं यत्सुप्तं चैतद्वयोः समम् ।
स्थानं स्थितिः स्थानकमित्येते नान्यार्थवाचकाः ॥

मित्रदासः

करणाधारभावेषु स्थानशब्दो निरुच्यते ।
भाविगत्यनुकूलेन स्थानकेन हि केनचित् ॥
स्थिता गच्छति गन्तापि तिष्ठेदित्यत्र कश्चन ।
प्रयोगो न विना येन तस्मादेतन्निरूप्यते ॥
शरीरस्याङ्गविन्यासविशेषो भावपोषकृत् ।
नेत्रयोः सहजः कोऽपि निश्चयः स्थानमुच्यते ॥

ज्यायनः

प्राचां चतुर्णामेतेषां प्रयोगो नाट्यनृत्तयोः ।
नाट्यैकगोचरस्तद्वैरन्त्ययोः परिदृश्यते ।
नर्तने स्थानषट्कस्य केचित्पञ्चविधां जगुः ॥

कुम्भः

चतुर्णामिति, वैष्णवसमपादवैशाखमण्डलानां अन्त्ययोः, आलीढप्रत्यालीढयोः ।

**स्थानकविनियोगविधिः**

स्वस्तिकं, वर्धमानं, नन्द्यावर्तं, चतुरस्रं, परावृत्तं, पार्ष्णिपार्श्वगतं, पृष्ठोत्तानतलं, एकजानुनतं, एकपार्श्वगतं, चेति नव स्थानानि नृत्तमात्रोपयोगीनि । सूचीनि खण्डविषमसमादीनि, कूर्मासनं, नागबन्धं, इति षड्ढुद्धतनर्तने उपयोगीनि । स्वस्तं, मदालसं, विष्कम्भितं, क्लान्तं, उत्कटं, स्रस्तालसं, जानुगतं, मुक्तजानुः, विमुक्तकमिति नवोपविष्टस्थानानि, समं, आकुञ्चितं, नतं, प्रसारितं, उद्वाहितं, विवर्तितं इति षट् सुप्तस्थानानि च नाट्यकर्मण्युपयुज्यन्ते । अवशिष्टानि नृत्तनाट्ययोरिति वेमभूपालेनोक्तम् ।

**स्थानकशोभनः**

स्थानत्रयेऽपि यः श्राव्यः शोभनो लक्षणान्वितः ।
ध्वनीनामुत्तमः प्रोक्तो ध्वनिः स्थानकशोभनः ॥

सोमेश्वरः

**स्थानकानि**

वैष्णवं समपादं च तथा वैशाखमण्डले ।
आलीढं च तथा प्रत्यालीढं स्थानानि पुंसि षट् ।
आयताख्यावहित्थाख्ये तथाश्वक्रान्तसंज्ञकम् ॥
स्त्रीणां त्रीणि स्युरेतानि स्थानानीति मुनेर्मतम् ।
अथापि चेति स्वग्रन्थे भवन्नन्योन्यसूचि यत्॥
मुनिस्तु यानि चत्वारि तानि स्थानान्यहं ब्रुवे।
गतागतं च वलितं मोटितं विनिवर्तितम् ।
अत्रैव केचिदिच्छन्ति पञ्चमं प्रोन्नताभिधम् ॥

अशोकः

स्वस्थं विष्कम्भितं क्रान्तमुत्कटं च मदालसम् ।
स्रस्तालसं जानुगतं मुक्तजानु विमुक्तकम् ॥

एवं नवोपविष्टस्य स्थानान्यूचे मुनिस्स्वयम् ।
सममाकुञ्चितं चैव प्रसारितविवर्तिते ।
नतमुद्वाहितं चेति स्युः सुप्तस्थानकानि षट् ॥

षट् पुंसां सप्त नारीणां त्र्युत्तराविंशतिर्द्वयोः ।
स्थानकान्युपविष्टस्य नव सुप्तस्य षट् क्रमात् ।
एवं स्युर्मिलितान्येकपञ्चाशदखिलान्यपि ।
वैष्णवं समपादं च पुनरुक्तेन युज्यते ॥

देशीये द्वितयं नोचुः तन्नमनोहरम् ।
वैष्णवं समपादं च देशीस्थानेषु यत्स्थितम् ॥

स्त्रीपुंसयोस्तत्समानं मार्गस्थानस्थितं पुनः ।
पुंसामेवेति युक्तैव पुनरुक्तिर्व्यवस्थितेः ॥

विनियोगवती नैते विनियुक्ते तु ते उभे ।
भिन्नं तयोर्लक्ष्म चेति कथनं पुनरर्थवत् ॥

सर्वेषां लक्षणं वच्मि विप्रदासो विदां वरः ॥

विप्रदासः

द्वापञ्चाशदिमानीति मिलितान्वेत्र तान्यपि ।

त्रयोविंशतिरिति देशीस्थानानि । अशोकः

## स्थानम्

त्रीणि स्थानानि ।

कन्दादूर्ध्वं चरन् प्राणः तत्तत्स्थाने ध्वनिं दधत् ।
हृत्कण्ठमूर्धसंज्ञानि त्रीणि स्थानानि तस्य च ॥

कुम्भः

द्वाविंशतिप्रकारेणैककस्य स्युर्भिधावशात् ।
षट्षष्टिस्थानकान्येवं कैश्चिदुक्तानि योगतः ॥

द्वाविंशतिविधो मन्द्रो नादः सञ्जायते हृदि ।
यथोत्तरमसौ तारः पूर्वपूर्वाभिकाङ्क्षया ॥

ध्वनिः सञ्जायते देहे वीणायां तद्विपर्ययात् ।
स एव द्विगुणो मध्यः कण्ठस्थाने यथाक्रमम् ।
स एव मस्तके तारः स्यान्मध्याद्द्विगुणः क्रमात् ॥

कुम्भः

## स्थानवराटी—रागः

स्थानवराटिकाचोपा षड्जैरेव विभूषिता ।

षड्जैरिति बहुवचनेन अंशन्यासग्रहाः उक्ताः ।

## स्थानिकमण्डलम्—देशीमण्डलम्

कटिं स्पृष्ट्वार्धचन्द्राख्यपाणिभ्यां समपादतः ।
समरेखतया तिष्ठेत् तत्स्यात्स्थानिकमण्डलम् ॥

नाट्यदर्पणे

## स्थापकः

नान्द्यन्ते सूत्रधारो वा सूत्रधारगुणाकृतिरन्यो वा यो रङ्गं प्रविश्य प्रस्तावनां करोति सः स्थापकः ।

## स्थापना—देशीलास्याङ्गम्

स्थितिर्या रेखयारभ्य मुखरागानुरञ्जिता ।
नृत्ताभिनययोरन्ते सा प्रोक्ता स्थापना बुधैः ॥

वेमः

## —पूर्वरङ्गाङ्गम्

सूक्तिमुक्ताकलापेन सूत्रेणैकस्य वस्तुनः ।
क्रियते सूचना नाट्ये या सा प्रस्तावना स्मृता ॥

आमुखस्थापनाभेदात्सा पुनर्द्विविधा भवेत् ।
सूत्रधारो नटीयुक्तो वस्तुप्रस्तावनाविधिम् ॥
कुरुते यत्र सद्वृत्तैः तदामुखमुदाहृतम् ।
पारिपार्श्वकसंयुक्तो वा विदूषकसंयुतः ।
वस्तु विस्तारयेत्सूत्री यत्र सस्थापना स्मृता ॥

सर्वेश्वरः

सूत्रधारो वा सूत्रधारगुणाकृतिरन्यो वा नान्द्यन्ते रङ्गं प्रविश्य अभिनेयं वस्तु प्रस्तावयेत् । तत्र वीथ्यङ्गैर्वा भारत्यङ्गैर्वा उपक्षेपं कृत्वा प्रथमं पात्रं प्रवेशयेत् । तदामुखं भवेत् । स्थापनायां तु केवलं वस्तुसूचनानंतरं पात्रप्रवेशः । यथा—भासनाटकेषु ।

## स्थायिनी

रूपयौवनसंपन्ना कर्कशा ललिता तथा ।
रतिसंभोगकुशला प्रतिपक्षेऽभ्यसूयिका ॥
दक्षा स्फुटा ह्युदात्ता च गन्धमाल्योज्वला तथा ।
नृपतिच्छन्दवृत्ता च सर्वत्रेर्ष्या विवर्जिता ॥
उपस्थिता चाप्रमत्ता त्यक्तालस्या ह्यनिष्ठुरा ।
मान्यामान्यविशेषज्ञा स्थायिनी संप्रकीर्तिता ॥

भरतः

## स्थायिभावः

यदि काव्यार्थसंश्रितैर्विभावानुभावव्यञ्जितैः एकोनपञ्चाशद्भावैस्सामान्यगुणयोगे नाभिनिष्पद्यन्ते रसांस्तत्कथं स्थायिन एव भावाः रसत्वमाप्नुवन्ति । उच्यते यथाहि समानलक्षणाः

तुल्यपाणिपादोदरशरीराः समानाङ्गप्रत्यङ्गा अपि पुरुषाः कुलशीलविद्याकर्मशिल्पविचक्षणत्वाद्राजत्वमाप्नुवन्ति । तत्रैव चान्येऽल्पबुद्धयस्तेषामेवानुचरा भवन्ति । तथा विभावानुभावव्यभिचारिणः स्थायिभावानुपाश्रिता भवन्ति । बह्वाश्रयत्वात्स्वामिभूताः स्थायिनो भावाः । तद्वत्स्थानीयपुरुषगुणभूता अन्ये भावाः तान् गुणतयाश्रयन्ते । परिजनभूता व्यभिचारिणो भावाः । भरतः

## स्थायिभावाः

भावयन्ति चित्तवृत्तय एवालौकिका वाचिकाद्यभिनयप्रक्रियारूढतया स्वात्मानं लौकिकदशायामनास्वाद्यमप्यास्वाद्यं कुर्वन्ति । यद्वा भावयन्ति व्याप्नुवन्ति सामाजिकानां मन इति भावाः । स्थायिनो व्यभिचारिणश्च । तत्र स्थायित्वमेतावतामेव । जात एव हि जन्तुरियतीभिस्संविद्भिः परीतो भवति । तथाहि—दुःखद्वेषी सुखास्वादनलालसः । सर्वो रिरंसया व्याप्तः स्वात्मन्युत्कर्षमानीतया परमुपहसति । उत्कर्षापायशङ्कया शोचति । विनिपाताद्बिभेति । किञ्चिदयुक्ततयाऽभिमन्यमानो जुगुप्सते । ततश्च परकर्तव्यवैचित्र्यदर्शनाद्विस्मयते । किञ्चिज्जिहासुस्तत्र वैराग्यात्प्रशमं भजते । न ह्येतच्चित्तवृत्तिवासनाशून्यः प्राणीभवन्ति । केवलं कस्यचित्काचिदधिका भवति चित्तवृत्तिः काचिदूना, कस्यचिदुचितविषयनियन्त्रिता । कस्यचिदन्यथा । तत्काचिदेव पुरुषार्थोपयोगिनीत्युपदेश्या । हेमचन्द्रः

## स्थायिरसयोर्भेदः

ननु शङ्कुकादिभिरभ्यधीयत स्थाय्येव विभावादिप्रत्याय्यो रस्यमानत्वाद्रस उच्यत इति । एवं हि लौकिकेऽपि किं न रसः, असतोऽपि हि यत्र रसनीयता स्यात्तत्र वस्तुसतः कथं न भविष्यति । तेन स्थायिप्रतीतिरनुमितिरूपा वाच्या न रसः । अत एव सूत्रे स्थायिग्रहणं न कृतम् । तत्प्रत्युत शल्यभूतं स्यात् केवलमौचित्यादेवमुच्यते स्थायी रसीभूत इति । औचित्यं तु तत्स्थायिगतत्वेन कारणादितया प्रसिद्धानामधुना चर्वणोपयोगितया विभावादित्वावलम्बनात् । तर्हि लौकिकचित्तवृत्त्यनुमाने का रसता । तेनालौकिकचमत्कारात्मा रसास्वादः स्मृत्यनुमानलौकिकस्वसंवेदनविलक्षण एव । नात्र लौकिकप्रत्यक्षादिप्रमाणव्यापारः । किञ्च लौकिकविभावादिसंयोगबलोपनतैवेयं चर्वणा । सा च प्रत्यक्षानुमानागमोपमानादि लौकिकप्रमाणजनितस्वावबोधतः तथा योगिप्रत्यक्षजतटस्थपरसंवित्तिज्ञानात्सकलवैषयिकोपरागशून्यशुद्धपरयोगिगतस्वानन्दैकघनानुभावाच्च विशिष्यते । अत एव विभावादयो न निष्पत्तिहेतवो रसस्य । तद्बोधापगमेऽपि रससंभवप्रसङ्गात् । अलौकिक एवायं चर्वणोपयोगी विभावादिव्यापारः । अभिनवः

## स्थायी

एक एव स्वरो यस्तु स्थित्वा स्थित्वा पुनःपुनः ।
प्रयुज्यते स तु स्थायी । पात्रे कुम्भः

यथा नराणां नृपतिः शिष्याणां च यथा गुरुः ।
एवं हि सर्वभावानां भावः स्थायी न हानिकृत् ॥
भरतः

—वर्णः

स्थाय्यादिभिश्चतुर्थोऽसौ वर्णो गानक्रिया मतः ।
एक एव स्वरोयस्तु स्थित्वा स्थित्वा पुनःपुनः ॥
प्रयुज्यते स तु स्थायी । कुम्भः

## स्थायिवर्णः

स्थित्वा स्थित्वा स्वरा यस्मिन् एक एव प्रयुज्यते ।
तादृशं गानमुदितं स्थायीवर्णो मनीषिभिः ॥
पण्डितमण्डली

## स्थावरस्तम्भः

स्वस्थानं विहाय वायुवेगादचलत्ववर्जितानां । सौधाग्रादिषु स्थापितानां तरुलतानां निश्चलत्वं स्थावरस्तम्भः ।
शृङ्गारः

## स्निग्धता—वंशे फूत्कारगुणः

स्निग्धोऽरूक्ष उदाहृतः । कुम्भः

## स्निग्धा—दृष्टिः

हृष्टा प्रफुल्ला मधुरा सेरताराभिकाङ्क्षिणी ।
स्निग्धेयं कथिता दृष्टिः रतिभावसमाश्रया ॥
सोमेश्वरः

स्मिततारा साभिलाषेक्षितभ्रूर्या विकासिनी ।
कटाक्षिणी सहर्षा सा दृष्टिः स्निग्धोदिता बुधैः ।
उत्क्षेपः केचिदुभयोर्भ्रुवोराहुर्मनीषिणः ॥
अशोकः

## स्थितम्—गीताङ्गम्

स्थायिवर्णपदोपेतं त्र्यश्रतालोद्भवं यथा—सः सामयाजुरग्वेदेषु वरिपठितदिव्यमूर्तिः ।
नान्यः

—दर्शनम्

दूरीभूतेऽपि विषये स्थितं यत्तत्स्थितं भवेत् ।
वेमः

तदस्थितं यत्तु विषये दूरेप्यन्तर्हिते स्थिते ।
शारदातनयः

**स्थितावर्ता**—चारी

अन्तर्जानुस्वस्तिकता दक्षिणस्तदसंचरः ।
प्राप्तवानन्यपादस्य पार्श्वं संश्रयते यदा ॥
वामः पादस्तु विश्लिष्य स्वकीयं पार्श्वमश्नुते ।
स्थित्वा स्थित्वा चरणयोर्भवेदावर्तनं यतः ।
स्थितावर्ता तदा चारी कथिता नृत्यवेदिभिः ॥

वेमः

**स्थिरस्तम्भः**

व्याधवागुरिकाद्या मुष्टिककादि भटदर्शनमात्रेण ।
गन्तुमशक्तानां मृगपक्षिणां कातर्यं स्थिरस्तम्भः ॥

शृङ्गारः

**स्थिरहस्तः**—अङ्गहारः

निकुट्टकोरूद्वृत्तस्वस्तिकाक्षिप्तकनितम्बकरिहस्तकटीछिन्नाख्यानां करणानां क्रमात्प्रयोगे स्थिरहस्ताख्याङ्गहारः ।

शार्ङ्गः

**स्थिरः**—रसगतिः

आविर्भूय तिरोभूय रसमध्ये क्वचिद्रसाः ।
आपादयन्ति प्रथमे स्थैर्यं चेति स्थिरः स्मृतः ॥

शारदातनयः

**स्थिरा**—ध्रुवावृत्तम्

गुरुयुग्मं भवेत्तत्र प्रतिपादं चतुर्ष्वपि ।
विलम्बितलयः प्रोक्तो रागस्थानसमन्वितः ॥

यथा— देवं वन्दे रुद्रं नाथम् ।

नान्यः

**स्थूलवारिधिः**—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग प ध स.
(अव) स नि ध प म ग रि स.

मल

**स्थूलहस्तः**—हस्तपाटः

आदौ कृतोर्ध्वघातौ द्वौ पटहस्य पुटद्वयम् ।
वाद्यते चलहस्तेन स्थूलहस्तो भवेत्तदा ॥
दों दों गण्दों ।

वेमः

**स्थैर्यम्**

धर्मार्थकामसंयुक्ताच्छुभाशुभसमन्वितात् ।
व्यवसायादचलनं स्थैर्यमित्यभिधीयते ॥

भावविवेकः

**स्निग्धः**—ध्वनिभेदः

उच्चस्थानेऽपि यः श्रव्यः स्निग्धो ध्वनिरसौ मतः ।

सोमेश्वरः

**स्निग्धता**—फूत्कारगुणः

स्निग्धोऽरूक्ष उदाहृतः ।

कुम्भः

**स्निग्धमधुसूदनरासावलयः**—सूडप्रबन्धः

मालवश्रीः स्मृतो रागस्तालो निस्सारुसंज्ञकः ।
वाग्गेयकारनामाङ्कातपदतस्तेनसन्ततिः ॥
ततः पाटाः पदानि स्युः पञ्चषाणि रसोऽत्र च ।
शृङ्गारो वासुदेवस्य क्रीडनं रासकादिभिः ॥
छन्दोऽपि रासको ज्ञेयं स्वेच्छयाविष्कृतं भवेत् ।
स्निग्धमधुसूदनोऽयं रासावलयनामकः ।
प्रबन्धः पृथिवीभर्ता प्रबन्धः प्रीतये हरेः ॥

कुम्भः

**स्नेहः**

वस्तुसिद्धिं प्रतिप्राहुरुद्भूतां कारणैः स्वकैः ।
सुखावहां च तत्सिद्धौ स्नेहाख्यामात्मविक्रियाम् ॥

भावविवेकः

**स्फीतम्**—दर्शनम्

उच्छ्वसत्पक्ष्मताराभ्रु स्फीतमित्यभिधीयते ।

शारदातनयः

**स्फुटम्**—वीणावादने गुणः

पद्मपत्रपतद्वर्षाबिन्दुवच्चल घातनम् ।
तत्स्फुटं गदितं वाद्यं श्रोतृचित्तसुखावहम् ॥

कुम्भः

**स्फुरिका**—पादपाटः

पुरस्समाभ्यां पादाभ्यां सरणं स्फुरिका भवेत् ।
कैश्चिदस्याश्चरणयोरङ्गुलीपृष्ठभागतः ।
पुरः पश्चात्पार्श्वयोर्वा गतिरुक्ताऽथवा स्थितिः ॥
कैश्चिदिति ज्यायनादयः ।

वेमः

**स्फुरितः**—वादनम् (वामहस्तव्यापारः)

स्फुरिते कम्पिता तन्त्रीः पृष्ठलग्नेव सारणाः ।

शार्ङ्गः

—वीणायां वामहस्तव्यापारः

तन्त्रिकापृष्ठसंश्लिष्टा सारणा यत्र कम्पते ।
तदा स्फुरित इत्युक्तो विस्फुरन्मतिशालिना ॥

कुम्भः

**स्फुरिता—भ्रूः**

एकैव ललितोत्कम्पा स्फुरिता भ्रूरुदाहृता।
एतेष्वेव प्रयोक्तव्या स्फुरिता भ्रूलता बुधैः।
एतेष्विति मोट्टायिते कुमितविलासेषु॥ सोमेश्वरः

**—देशीचारी**

स्फुरिता पादपार्श्वाभ्यां सरणं सत्वरं पुरः।

वेमः

**—हनुः**

स्फुरिता वेपिता प्रोक्ता शीतशीतज्वरादिषु।

ज्यायनः

**स्फुरितौ—पुटौ**

स्फुरितौ स्पन्दितौ प्रोक्तावीर्ष्यायां विनियोजितौ।

कुम्भः

**स्फुरितम्**

तन्त्री कम्परूपेण चमत्कारः।—
कम्पनं च पुनःपुनः क्रियते।

**—चिबुकम्**

स्फुरितं कम्पनादुक्तं शीते शीतज्वरेऽपि च। अशोकः

**स्पृहा—नाट्यालङ्कारः**

अभीष्टार्थे प्रवर्तनम्। श्मशाने तत्पदयेयमिति माधवोक्तिः।

सागरः

(श्मशाने—माल ५, ९)

**—लक्षणम्**

दृष्टे श्रुतेऽनुभूते वा वस्तुनो रामणीयके।
अभिलाषो भवेद्यस्तु सा स्पृहेति प्रकीर्तिता॥

यथोत्तरचरिते—कुवलयदलेत्यादि (४-१९) जनवाक्यं।

भोजः

**स्फोटः**

तन्त्रीष्वङ्गुल्या प्रहारः।

**—देशीतालः**

द्रुतो जगणयुग्मं च दपौ च स्फोटसंज्ञके।

12 मात्राः। तालप्रस्तारः

**स्मयः**

स्मितहेतावपि प्राप्ते योऽतिहासयति स्फुटम्।
कांश्चिदेव नरानन्या स भावः स्मयसंज्ञकः॥

भावविवेकः

**—व्यभिचारिभावः**

अयं गर्वस्थाने सर्वेश्वरेण पठितः।

स्मयस्सर्वजनोन्मादी गर्व एवेह कथ्यते।
ऐश्वर्यबललावण्यरूपेभ्यस्तत्समुद्भवः।
अत्रावज्ञाविलासाङ्गविभापालटहादयः॥

सर्वेश्वरः

**स्मितम्—हास्यरसभेदः**

हास्यशब्दे द्रष्टव्यम्।

**स्मृतिः—चिन्ताभिनयः**

समानवस्तु सन्दर्शे स्मरणं भूतपूर्वकम्।
शिरःकम्पमपस्मारभ्रूविक्षेपस्मितादयः॥
पार्श्वभागे तु सूची स्याद्धृदये मुकुलः करः।
पताकस्तु पुरोभागे तिर्यग्भावेन चालितः।
नेत्रस्थाने तु हंसास्यं बध्नीयात्स्मृतिरूपणे॥

विनायकः

**—व्यभिचारिभावः**

स्मृतिर्नाम सुखदुःखकृतानां भावानामनुसरणम्। सा च स्वास्थ्यजघन्यरात्रिनिद्राछेदसमानदर्शनोदाहरणचिन्ताभ्यासादिभिरुत्पद्यते। शिरः कम्पनावलोकनभ्रूसमुन्नमनादयोऽनुभावाः।

भरतः

सदृशज्ञानचिन्ताद्यैः संस्कारात्स्मृतिरत्र च।

सदृशज्ञानाद्यथा—मैनाकः किमित्यादिजटायुवर्णनम्।

संस्काराद्यथा—

स्मर्यते स हि वामोरु यश्च्युतो हृदयाद्बहिः।
मच्चित्तभित्तौ भवति सालभञ्जीव राजते॥

मल्लराजः

स्मृतिचिन्तनयोर्लक्षणसाङ्कर्यशङ्का न कार्या।
वितर्कात्मा भवेच्चिन्ता स्मृतेरन्या प्रतीयते इत्युक्तत्वात्।
चिन्तायाः स्मृतिं प्रति करणत्वात्।
कार्यकारणभावश्च भेदेन विना न घटते॥

नरसिंहः

**स्मेरम्—दर्शनम्**

स्मेरं तु तद्भवेद्यत्र स्फुरद्भ्रूपक्ष्मतारकम्।

वेमः

स्फुरद्भ्रूपक्ष्मतारं यत् तत्स्मेरमिति कथ्यते।

शारदातनयः

स्यन्दिता—चारी

वामस्समो निषण्णोरुर्दक्षिणश्चेत्प्रसारितः।
पञ्चतालान्तरं तिर्यक् प्रसारस्स्यन्दिता मता॥

वेमः

स्रग्धरा—एकविंशाक्षराक्षरवृत्तम्

मरभनययया:।

भरतः

स्रस्तालसम्—देशीस्थानम्

वेम इदं स्थानकं स्रस्तोल्लासमित्याह।

—स्थानकम्

शरीरमलसं नेत्रे मन्थराकारधारिणी।
हस्तौ स्रस्तौ विमुक्तौ च स्थानं स्रस्तालसं मतम्।
व्याधिमूर्छामदग्लानिहानिभीतिषु तन्मतम्॥

कुम्भः

शरीरमलसं यत्र स्रस्तमुक्तौ करावपि।
श्रान्ता दृष्टिश्च तत्स्थानं स्रस्तोल्लासमुदीरितम्॥

वेमः

स्रस्तोल्लासम्—देशीस्थानम्

शरीरमलसं यत्र स्रस्तमुक्तौ करावपि।
श्रान्ता दृष्टिश्च तत्स्थानं स्रस्तोल्लासमुदीरितम्।
व्याधिमूर्छामदग्लानिहानिभीतिषु तद्भवेत्॥

वेमः

स्रस्तौ—स्कन्धौ

स्रस्तयोर्विनियोगःस्यान्मदे दुःखे श्रमे तथा।

विप्रदासः

अधोगतो भवेत्स्कन्धः स्रस्त इत्यभिधीयते।
श्रमे मदे च मूर्छायां दुःखे स्रस्तः प्रयुज्यते॥

सोमेश्वरः

स्रुवा—देशीलास्याङ्गम्

यथा मन्दानिलाघाताच्चलद्दीपशिखा तथा।
चलेयुर्यत्र गात्राणि सा स्रुवा परिकीर्तिता॥

अशोकः

स्वगीतवाचिकः

स्ववाद्या(द्री)गीतमाश्रित्य पूर्वोक्तनियमान्वितः।
करोति नाट्याभिनयं स्वगीतो वाचिको भवः॥

शृङ्गारः

स्वयंभुवः स्वराः

चतुर्थतन्त्र्या संभूतः शुद्धोऽयं मन्द्रपञ्चमः।
द्वितीयायां सारिकायां स्वयंभूरिति कथ्यते॥
तस्माद्द्वितीयसार्यां ये जातास्सर्वेऽपि ते स्वराः।
स्वयंभुवः प्रमाणस्थाः कर्तुं शक्या न चान्यथा॥
द्वितीयसार्यां जातस्य तन्त्र्या चापि द्वितीयया।
अनुमन्द्रस्य शुद्धस्य निषादस्य प्रमाणतः॥
चतुर्थसार्यां सञ्जाते तन्त्र्या चापि तुरीयया।
मन्द्रे शुद्धनिषादाख्ये सप्रमाणे कृते सति॥
चतुर्थसार्यां सञ्जाताः स्वरास्सर्वे स्वयंभुवः।
प्रमाणयुक्ताः केनापि न शक्याः कर्तुमन्यथा॥
तुरीयसार्यां तन्त्र्या तु सञ्जातस्य द्वितीयया।
च्युतषड्जनिषादस्य चानुमन्द्रप्रमाणतः॥
षष्ठसार्यां तन्त्रिकया चतुर्थ्यां जनिते स्वरे।
च्युतषड्जनिषादाख्ये मन्द्रे मानयुते कृते॥
षष्ठसार्यां समुत्पन्नाः स्वरास्सर्वे स्वयंभुवः।
पञ्चम्यां सारिकायां तु षड्जमध्यमसंभवात्॥
तज्जानां प्रविभागाश्च ते सर्वे स्युस्स्वयंभुवः।
पञ्चम्यां सारिकायां तु तन्त्र्या जातस्य तुर्यया॥
मन्द्रस्य कैशिकाख्यस्य निषादस्य प्रमाणतः।
तृतीयायां सारिकायां जाते तन्त्र्या द्वितीयया॥
अनुमन्द्रे कैशिकाख्ये निषादे मानसंयुते।
कृते सति तदुद्भूताः स्वरास्सर्वे स्वयंभुवः॥

तृतीयायां सारिकायां सञ्जातस्य तुरीयया।
तन्त्र्या मन्द्रस्य शुद्धस्य धैवतस्य प्रमाणतः॥
आद्यसार्यां समुद्भूते तन्त्र्या चापि द्वितीयया।
अनुमन्द्राभिधे शुद्धे धैवते मानयोधिनि॥
कृते सति समुत्पन्नाः सर्वे प्रामाणिकाः स्वराः।

रामामात्यः

स्वयंभुवो नाम स्वराः लोहमयीष्वेव तन्त्रीषु जायन्त इति मन्यन्ते। स्नायुमयीषु नोत्पद्यन्ते। स्नायुमयी तन्त्रीलक्षणकारैः प्राचीनैर्मतङ्गादिभिः स्वयंभूस्वरोद्गमनं नोक्तम्।

किञ्च स्वभुवः सपमाः नियतश्रुतयोऽपि कल्पिता नो तु।
वच्मि स्फुटमिह हेतुं सारीतन्त्र्यो र्विनाश्लेषम्॥
अपरस्तुरीय तन्त्र्यां द्वितीयसार्यूर्ध्वमणुरवोऽस्ति समः।
तन्मन्द्रपः स्वयंभूर्मध्ये च समध्यमौ स्वभुवौ॥

अष्टम्येकादश्योस्सार्योरूर्ध्वं समापरध्वनितः।
तत्रैस्समास्सपसमाः स्वयंभुवो मुक्ततन्त्रीजाः॥
ये रिधरिसमृदुपमुख्यास्तन्मूलं स्थापिता यथाशास्त्रम्।
तेषु स्वयंभुव इवाष्टम्यूर्ध्वं तिसृषु तन्त्रीषु॥
पूर्ववदपराचरवात्-पदपैस्ततोचितैस्समात्क्रमतः।
श्रुत्यैकयाधिकत्वं न्यूनत्वं वा न दोषाय॥
अनुमन्द्रमन्द्रतारेष्विति स्थितिरपि स्वरस्वरूपविदाम्।
स्वधिया मयेति गदितं तत्प्रामाण्यं निजानुभवात्॥

सोमनाथः

## स्वरवर्तनम्

अश्वरत्नशशाङ्कं च स्वराणां कीर्तितं कथम्।
प्रत्येकं वर्तनं लोके समाचक्ष्व महेश्वर॥

ईश्वर उवाच।

एतेषां स्वरभेदं हि जानीत गानबान्धव।
कतिस्वरेण जानन्ति गन्धर्वाः पन्नगाः किल॥
सर्वस्वरमविज्ञाय मनुष्याः स्वरसप्तके।
वर्तन्ते साम्प्रतं देवि दुर्बोधं स्वरभेदनम्॥
स्वरत्रिपञ्चकं षड्जे षोडशं वृषभस्वरे।
दश सप्तान्तरं गान्धे त्रिषट्कं मध्यमस्वरे॥
एकोनविंशतिश्चेति पञ्चमे विंशतिस्तथा॥
धैवते च निषादे च स्वराणामेकविंशतिः।
एकं शतं त्रयस्त्रिंशत्सहितं च चतुष्टयम्॥
मन्द्रं मध्यं च तारं चानुतारं चतुर्विधम्।
मन्द्राख्यत्रिगुणं मध्यं मध्यात्तारं तु षड्गुणम्॥
तारतोऽष्टादशगुणं अनुतारं प्रकीर्तितम्।
इत्येवं वर्तते लोके मध्ये चोर्ध्वे रसातले॥

उमापतिः

## स्वरमण्डलिका—वीणा

खादिरी चान्दनी रक्तचान्दनी सारदारुजा।
गाम्भीरी पानसी चैव स्वरमण्डलिका मता॥
सप्ताङ्गुलाधिका दैर्घ्ये वितस्तित्रितयान्विता।
प्राशस्त्ये तूनविंशत्यङ्गुलिका परिकीर्तिता॥
लाबुको दक्षिणे भागे वामभागे तु काकुभः।
कोलम्बकस्तयोर्मध्ये श्रुतितन्त्री स्थितः पुनः॥
सप्तविंशत्यङ्गुलास्मा तारतन्त्रीन्त्योस्थितास्ततः।
अङ्गुष्ठेचोल्लाबुकः स्यात्करभस्तु यवाधिकः॥

स स्यात्करभकाकारः क्रमेण वलितो भवेत्।
तद्वामेद्व्यङ्गुलं सारी ग्रहं च चतुरश्रकम्।
दक्षिणेऽलाबुकस्य स्याद्दशतन्त्री निबन्धिनी॥
मध्यभागे मिता सा तु सार्धं द्व्यङ्गुलविस्तृता।
पूरकत्वेऽङ्गुलिमिता क्रमात्सुवलिता भवेत्॥
कार्यस्तत्पूरकत्वे स्यात्पञ्चाङ्गुल उदाहृतः।
शून्यगर्भस्तु कर्तव्यः सपिधानाभिमण्डितः॥
लाबुकः सपिधानः स्यात्पिधान रहितोऽपि वा।
क्रोडस्तु द्विदलः कार्यः तस्य स्यादन्तिमे दले॥
कोष्ठत्रयसमानत्वे तस्य दक्षिणतः पुनः।
चतुरङ्गुलकं शून्यं गाम्भीर्ये विस्तृतावपि॥
तन्मध्ये सारिका न्यस्या वर्तुलेषु बिलेष्वथ।
ऊर्ध्वाधः पङ्क्तियुग्मेषु समभागविनिर्मिताः॥
दशरन्ध्रैस्सारिगृहरन्ध्रैस्सारभटैरपि।
रन्ध्रैर्यथैकता तत्तु तथा कार्यं विनिर्मितः॥
एवं विनिर्मितायां तु वीणायामिह वैणिकः।
तन्त्रीस्संस्थापयेदत्र पट्टकाख्सिरा अपि॥
एकैकगुणतो न्यूनाश्शस्ताश्शुद्धा विपञ्चिकाः।
अङ्गुल्यग्रप्रमाणं तु तन्त्रीणामन्तरा मिथः॥
करभस्तासु तन्त्रीषु प्रत्येकं कलिकां न्यसेत्।
वंशुपृष्ठभवा सूक्ष्मा यथानुरणनं भवेत्॥
लाबुकोपरि दातव्या विश्रान्तिनालिका पुनः।
खादिर्येन्यभवा चापि वृद्धाङ्गुलिसमाश्रिता॥
सारी सम्मोटनाख्यं च मोटनासार...... सा।
नवाङ्गुलमिता दैर्घ्ये मुष्टिग्राह्या स वर्तुला॥
चतुरश्रं बिलं तस्याः सारीवृत्तप्रमाणतः।
नवाङ्गुलमिता सार्धा स्थूलमूलाग्रसूक्ष्मकाः॥
मुख्येयं सर्ववीणानां त्रिस्थानैस्सप्तभिः स्वरैः।
अस्यास्तु वादनोपायाः ज्ञातव्या उपदेशतः॥

त्रिस्थानैरिति वचनादेकविंशतितन्त्र्यः। ताः एकसरा, द्विसरा, त्रिसराः पट्टजाः।

इदानीं रञ्जकतालाभाय पट्टजाः सप्त लोहजाः सप्त पित्तलजाः सप्त एव तन्त्रीः।

नारायणः

स्वरमण्डलमिति मत्तकोकिलवीणाया नामान्तरम्॥

**स्वप्नः— सन्ध्यन्तरम्**

निद्रायां चित्तगतार्थालापः। यथा—कीचकभीमाङ्के—एतां सतीमिति भीमवाक्यम्।

सागरः

स्वप्नो निद्रान्तरे मन्त्रभेदकृद्वचनं मतम्। यथा—मालविकायां इरावतीमतिक्रमन्ती भवथ इति विदूषकस्वप्नायितवाक्यम्।

सिंगः

अत्र स्वप्नशब्देन इह स्वापो वा स्वप्नदर्शनं वा स्वप्नायितं वा विवक्षितम्। सर्वत्रेदमेवोदाहरणं सर्वेषां संभवात्। यथा—स्वप्नवासवदत्ते स्वप्नायमानो वत्सराजः वासवदत्तामावभाषे इति।

भोजः

**स्वभावः—शब्दगुणः**

मुख्यतागौणतादिभेदः स्वभावः।

**स्वभावकृतिः – उपाङ्गरागः**

षड्जग्रहन्यासवती स्यात्स्वभावकृतिः स्फुटा।
सिंहलीति प्रसिद्धेयं लोके मन्द्रविवादिनी॥

वादिनीति विवादिभूतनिषादो यस्यां इत्यर्थः।

भट्टमाधवः

**—रागः**

षड्जांशस्समग्रहन्यासा मध्यमेन विवर्जिता।
धैवतोत्का निमन्द्रा च स्वभावकृतिरुच्यते।
निषादादियुतस्तस्मात् करुणे विनियुज्यते॥

जगदेकः

**स्वभावक्रिया—रागः**

न्यासांशग्रहपड्जरावरुचिरा मन्द्रा निषादस्वरैः
युक्ता पञ्चमधैवतेन बहुला मध्यध्वनौ सर्वतः।
अभिष्टोमिकतानवत्यपि तथा या शुद्धमध्यान्विता
ज्ञेयाभावकृतिस्स्व(पूर्वपरगा) सा तारमध्यध्वनिः॥

नान्यः

सांशन्यासग्रहातारा मध्यापधबहुध्वनिः।
मन्द्रा निषादे विज्ञेया सा स्वभावकृतिर्बुधैः॥

कश्यपः

स्वभावकृतिकायाश्च पदालापकरूपकम्।
तदस्यामपि विज्ञेयं.........मनोहरम्॥
स्वभावपूर्वाऽथकृतिष्षड्जन्यासग्रहांशका।
त्यक्ता मध्यम......................षोदिता॥

हरिः

न्यासांशग्रहषड्जा सप्तममन्द्रा च मध्यबहुला च।
धैवतपञ्चमहीना सललितगमका स्वभावकृतिरुक्ता॥

नान्यः

निमन्द्रा मध्यमव्याप्तिः मुक्तपञ्चमधैवता।
न्यासांशग्रहषड्जश्च स्वभावकृतिरिष्यते॥

मतङ्गः

**स्वयंगमनम्—सङ्गीतशृङ्गाराङ्गम्**

निमित्तविशेषात्प्रियायां गमने स्वयं वा तत्र गच्छेदिति स्वयं वा गमनम्।

भोजः

**स्वयम्भूः**

स्वयम्भूश्छन्दो नाम्नो ग्रन्थस्य कर्ता। प्राकृतछन्दः अधिकृत्य प्रणिनाय। अस्य मतं हेमचन्द्रेण गृहीतम्। नान्यदेवजगदेकमल्लौ स्वयम्भुनाम्नो ग्रन्थादुदाहरतः। तस्मात्तयोः प्राचीनोऽयमिति गम्यते। प्रायः अयं दशमशतके स्यात्।

**स्वयंभुवः स्वराः**

पुरोदितासु सारीषु तन्त्रीमिश्च चतसृभिः।
अनुमन्द्रास्तथा मन्द्राः प्रोद्दिष्टास्ते स्वयंभुवः॥
पुरोदितासु सारीषु प्रामाण्यं तेषु विद्यते।
गुरुणा मे यथोद्दिष्टाः वीणायां सुप्रपञ्चिताः।
अत एवान्यथा कर्तुं भुवि को भवति क्षमः॥

श्रीकण्ठः

पुरोदितास्विति। शुद्धमेलवीणालक्षणे।

**स्वरः**

स्वरयन्ति मनांसीह श्रोतॄणां स्वार्थतो यतः।

कुम्भः

राजृदीप्ताविति धतोः स्वशब्दपूर्वकस्य च।
स्वयं यो राजते यस्मात्तस्मादेषः स्वरः स्मृतः॥
आत्मेच्छाया महितलाद्वायुरुद्यन्निधार्यते।
नाडीमित्तौ तथाकाशे ध्वनिरुक्तस्स्वरः स्मृतः॥

मतङ्गः

स्वतो रञ्जयति श्रोतुश्चित्तं सस्वर उच्यते।

सोमः

स्वर इति। स्वृशब्दोपतापयोः। स्वर आक्षेप इत्यनयोः स्वरशब्दः। तेन शब्दस्वभावाःचित्तवृत्तिं मध्यस्थतारूपस्वाध्यावस्था-परित्याजनेनोपतापयन्तो हृद्यतातिशयवशात् स्वतामाक्षिपन्तः स्वविषयेऽभिरञ्जनं कुर्वन्तः स्वरा इत्युक्ताः। अथवा स्वयं स्वेच्छेव जातिरागभाषाभेदेषु राजन्त इति स्वराः।

अभिनवगुप्तः

स्वयमात्मानं रञ्जयति निपातनात् इति स्वरनिरुक्तिः।

नान्यः

श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः।
योगाद्वा रूढितो वापि स स्वरः श्रोतृरञ्जकः॥

कुम्भः

—तालप्राणः

मार्गशब्दे द्रष्टव्यम्।

स्वरकरणम्—प्रबन्धः

स्वरकरणं जगदेकमल्लेन उद्ग्राहादिधातुभेदेन मङ्गलारम्भक, कीर्तिलहरी, आनन्दवर्धनेति त्रिधाभेदे दर्शितः।

उद्ग्राहेण प्रमुच्येत स्वराख्यं करणं तु तत्।

सोमेश्वरः

वर्णनामाङ्किता भोगैस्स्वरैरेव तु केवलैः।
गीयते करणतालेन स्वराद्यं करणं हि तत्॥

नान्यदेवः

अस्य भेदस्सप्तधा वर्ण्यते जगदेकमल्लेन —

लक्ष्यते करणस्याथ स्वरपूर्वस्य लक्षणम्।
धातुद्वयं स्वरैरस्य नैरन्तर्येण गीयते॥
द्रुतशेखरनामात्र तालः प्रमथ ईरितः।
ततःकरणतालस्स्यादिष्टैरेवस्वरैर्ग्रहः॥
अंशैर्न्यासस्तथाभोगो नेतृगात्राह्वयाङ्कितः।
पदद्वितयमस्यांशः प्रथमो गीयते बुधैः॥
द्वितीयोंशस्तृतीयश्च गीयते सकृदेव हि।
ध्रुवं गीत्वा ततोन्यासः उद्ग्राहेणैव कारिते॥
एवमेव भवेत् षट्कं करणानामतः परम्।
भेदेऽपि किञ्चिदस्यास्ति कथ्यते तदधःक्रमात्॥

हरिपालः

स्वरचातुर्विध्यम्

वादी विवादी संवादी चानुवादीति संज्ञिताः।
चतुर्विधास्स्वरास्ते च, कुम्भः

स्वरपञ्चमी—रागः

सपगमैस्तारतरा षड्जान्ता बहुपञ्चमा।
मृदवो मपगाश्चात्र रिहीना पञ्चमी मता॥

मोक्षः

स्वरपदकरणम्—प्रबन्धः

............पश्चात्स्वरपदादिके।
करणे धातु युगलं गीयते मधुरैस्स्वरैः॥ हरिपाल

स्वरभेदः—चिन्ताभिनयः

आलोलिताख्या दृष्टिस्तु परावृत्तशिरस्तदा।
मुखस्थाने तु हंसास्यः पुरोभागे तु कर्तरी॥

विनायकः

—सात्त्विकभावः

स्वरभेदो भयहर्षक्रोधजरारौक्ष्यरोगमदजनितः।
स्वरभेदोऽभिनेतव्योभिन्नगद्गदनिस्वनैः।

भरतः

स्वरभेदो भयक्रोधमदहर्षशोकैरुत्पद्यते।
गद्गदालापोऽनुभावः स्वरभेदो गदमदक्रोधहर्षभयज्वरैः॥

सागरः

स्थानभ्रष्टैः स्वरैर्भूयः स्खलिते गद्गदैरपि।
दर्शयेदिति शेषः। शारदातनयः

स्वरमेलकलानिधिः

रामामात्यकृतः। अत्र एकोनविंशतिमेलकर्तार उपन्यस्ताः। तेषु पञ्चदश मुख्याः भिन्नलक्षणा भवन्ति। चत्वारोऽन्ये ग्रहांश-न्याससंवादिविवादिभेदेन तद्भिन्ना भवन्ति। अयं ग्रन्थः वेङ्कट-मखिना बहुधा दूषितः। वीणातन्त्रीसारणासु स्वयंभुव इति ख्यातानां नादानां स्थितिं निरूपयति। यथैव रूपदेव श्रीकण्ठ-विट्ठलादिभिरपि स्वयंभूनादस्वरूपमुक्तम्। कालः क्रै. प. 1550.

स्वरमङ्गलारागध्यानम्

नीराजनकराग्रस्थां मारतान्तस्य सन्निधौ।
श्वेताम्बरां नीलदेहां चिन्तये स्वरमङ्गलाम्॥

रागसागरः

स्वरश्रुतिकार्यत्वम्

स्वराणां श्रुतिकार्यत्वमिति केचिद्वदन्ति हि।
मृत्पिण्डदण्डकार्यत्वं घटस्येव यथा भवेत्॥
कार्यकारणभावस्तु स्वरश्रुत्योर्न संभवेत्।
श्रुतीनामिह सद्भावे प्रमाणं नैव विद्यते॥
अर्थापत्या यदि वा व्याप्तिग्रहपूर्वकं प्रमाणबलात्।
सिद्धस्वरजनकानां गगनगुणानां स्वरो भेदः॥

सत्यम्।

कार्यकारणभेदोऽस्ति यद्यपि स्फुटमेव हि।
तथापि कारणत्वं च श्रुतीनां नैव संभवेत्॥
कार्येषु विद्यमानेषु कारणस्योपलम्भनात्।
घटादौ विद्यमानेऽपि मृत्पिण्डोऽप्युपलभ्यते॥

## स्वरश्रुतितादात्म्यम्

विशेषस्पर्शशून्यत्वाच्छ्रवणेन्द्रियग्राह्ययोः ।
स्वरश्रुत्योस्तु तादात्म्यं जातिव्यक्त्योरिवानयोः ॥
भेदस्य लक्षणानां सामान्येनान्यवस्तुवत्सिद्धः ।
तद्धि विशेषैस्तु भवति पुनः खपुष्पसङ्काशम् ॥
नानाबुद्धिगृहीतत्वात्स्वरश्रुत्योस्तु भिन्नता ।
आश्रयाश्रयिभेदाच्च तादात्म्यं नैव सिद्धयति ॥

मतङ्गः

## स्वरश्रुतिपरिणामिता

श्रुतयः स्वररूपेण परिणामं भजन्ति हि ।
परिणमेद्यथाक्षीरं दधिरूपेण सर्वथा ॥
परिणामो ह्यभिव्यक्तिः न्याय्यः पक्षस्सतां मतः ।

मतङ्गः

## स्वरश्रुतिविवर्तत्वम्

नराणां तु मुखं यद्वद् दर्पणे तु विवर्तितम् ।
प्रतिभान्ति स्वरास्तद्वच्छ्रुतिष्वेव विवर्तिनः ॥
यदभाणि विवर्तत्वं श्रुतीनां तदसङ्गतम् ।
विवर्तत्वात्स्वराणां हि भ्रान्तिज्ञानं प्रसज्यते ॥

मतङ्गः

## स्वरश्रुतिसंबन्धः

तादात्म्यं च विवर्तत्वं कार्यत्वं परिणामिता ।
अभिव्यञ्जकताचापि, मतङ्गः

## स्वरसमूहनाम

एकस्वरस्त्वार्चिकाख्यो द्विस्वरो गाथिकाभिधः ।
त्रिस्वरा सामिको नाम चतुर्थोऽयः चतुःस्वरः ।
सस्वरान्तरनामान्यौ ज्ञेयावौडवषाडवौ ॥

पूर्णस्सप्तस्वरः । पण्डितमण्डली

## स्वरसैन्धवी—रागः

षड्जांशग्रहपन्यासा तारे मन्द्रे रिधान्विता ।
रिधदीना निहीना च शुद्धपञ्चमसंभवा ।
सैन्धवीयं समाख्याता अमर्षे विनियुज्यते ॥

जगदेकः

## स्वराख्या—भाषारागः

स्वरनाम्ना स्वराख्या तु कुम्भः

## स्वराङ्कः—प्रबन्धः

स्वैरेकः पदैरेको विरुदैश्च तथाऽपरः ।
एवं खण्डत्रयं कार्यं स्वराङ्के तालसंयुतम् ॥
एवं पदैश्च विरुदैः दर्शितं खण्डयुग्मकम् ।
खण्डमाद्यं स्वरैर्गेयं एवं खण्डत्रयं भवेत् ॥
अभोष्टं नायकं कृत्वा देवं वा वसुधाधिपम् ।
तालेन सङ्गतेगेयः स्वराङ्को जयकारकैः ॥

सोमेश्वरः

## स्वराङ्गः—प्रबन्धः

स्वरैः पाटैरिहोद्ग्राहो गीयते विरुदैरपि ।
तालेनैकेन वा द्वाभ्यां त्रिभिर्वा गीयते पुनः ।
गीत्वा गीत्वा स्वरे न्यासः स्वराङ्ग इति लक्षितः ॥

हरिपालः

अयं स्वरांशः, स्वराङ्कः, इति च कोशेषु दृश्यते ।

## स्वराङ्गानि

विच्छेदोऽर्पणो विसर्गोऽनुबन्धोद्दीपनं प्रसङ्गमिति षडङ्गानि ।

नान्यः

## स्वरार्थः—प्रबन्धः

यत्राभीष्टस्वरैरर्थः सप्तमिः प्रतिपाद्यते ।
स स्वरार्थो द्विधा ज्ञेयः शुद्धमिश्रकभेदतः ॥
क्रमव्युत्क्रमभेदाभ्यां तद्द्वयं स्यादवश्यतः ।
धिया रागश्रुतिस्थानान्वितया तत्प्रवक्ष्यते ॥
केवलैस्सप्तभिर्येन स्वरैरर्थः प्रवक्ष्यते ।
स शुद्ध इति विज्ञेयः स्वरशास्त्रानुसारतः ॥
स्वराणां वाजिसंख्यानामेकैकं प्रथमाक्षरम् ।
कृत्वा यत्रार्थसंयुक्तं गीयते स च मिश्रकः ॥
एकादिस्वरभेदेन स्वरार्थस्सप्तधा मतः ।
पादैरन्यतरैरस्याभोगास्संबध्यते बुधैः ॥

सोमराजः

## स्वरावली—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स म ग म प नि ध स.
(अव) स नि प म ग रि ग रि स.

मक्ष

## स्वरीती—श्रुतिः

निषादे द्वितीया श्रुतिः ।
हनुमन्मतेऽष्टादशैव श्रुतयः

स्वरूपानुगतः—वाद्यालङ्कारः
विशुद्धवाद्यप्रकृतिः समपाणिकृतस्तथा ।
स्वरूपानुगतश्चैव विज्ञेयो वाद्यसंश्रयः ॥
भरतः

स्वरोत्पत्तिः
उदात्तश्चानुदात्तश्च स्वरितप्रचिते तथा ।
निघातश्चेति विज्ञेयः स्वरभेदश्च पञ्चधा ॥
अन्ये तु क्रुष्टादिस्वरेभ्यो सह सप्तसामगाः परिकल्पयन्ति ।
क्रुष्टस्य मूर्धनि स्थानं ललाटे प्रथमस्य तु ।
भ्रुवोर्मध्ये द्वितीयस्य तृतीयस्यास्यकण्ठयोः ॥
कण्ठःस्थानं चतुर्थस्य मन्द्रस्योरसि चोच्यते ।
अतिस्वरस्य नीचस्य हृदिस्थानं विधीयते ॥
अनुदात्तस्य परस्य संभूतिरिति । अनेन प्रकारेण निषादगान्धारषड्जमध्यमपञ्चमरिषभधैवता यथायथं सप्तस्वरा विभक्ता जायन्ते । तथा च नारदः—
उच्चैर्निषादगान्धारौ नीचे वृषभधैवतौ ।
स्वरितप्रभवा ह्येते षड्जमध्यमपञ्चमाः ॥
नान्यः

स्वर्णचूडामणिः - मेलरागः (खरहरप्रियामेलजन्यः)
(आ) स रि म ग म प ध नि स.
(अव) स नि प ध नि ध प म ग रि ग स.
मत्र

स्वर्णमेरुः—देशीतालः
लगौद्रुतत्रयं त्रिःस्याल्लौदौ लपगदादलौ ।
पगौदौलपगाः प्रोक्ता गारुगिश्च तृतीयकः ।
द्रुतो लघुर्गश्च स्वर्णमेरुरयं मतः ॥
।ऽ००।ऽ००।ऽ००।००। ऽ̇ ऽ००। ऽ̇ ऽ००ऽ̇ ऽ००००̇ ०० ०̇ ० ॥ ऽ॥
अथवानुचतुष्कं स्यात् क्रीडा गारुगिका तथा ।
अनुद्रुतास्तु चत्वारो दविरामो लघुद्वयम् ॥
गपौ गारुगिलौ दश्च ह्रस्वोऽनुद्रुतयुग्मकम् ।
सविरामस्तु विज्ञेयः स्वर्णमेरुर्निगद्यते ॥
ᴗᴗᴗ० ०̇ ०००० ᴗᴗᴗ० ॥ ऽऽ̇ ०००० ॥ ०।ᴗ ०̇ इति वा
दामोदरः

स्वल्पचिन्दम्—देशीनृत्तम्
आभोगसहितं वेदखण्डैश्चातिमनोरमम् ।
भिन्नतालं पिञ्जमूरूमानाभ्यां च विराजितम् ॥
सविलासचमत्कारं चारिकाभिरलङ्कृतम् ।
स्वल्पचिन्दं तदेव स्यान्नाम्ना च कलचारिका ।
द्राविडी भाषया बद्धमथवा सुरभाषया ॥
वेदः

स्वशब्दवाचिकः
शब्दं स्ववचसाचार्यो नर्तकेन समं नटी ।
शृङ्गारः

स्वस्तिकः—पादपाटः
स्वस्तिकीकृतयोरङ्घ्र्योः कुट्टनात्स्वस्तिको भवेत् ।
वेदः

—बाहुः
पार्श्वे व्यस्तासतोऽलग्नौ बाहू स्वस्तिक ईरितः ।
रवेर्मेवेदुपस्थाने प्रणामे परिरम्भणे ॥
अशोकः

—हस्तः
अरालौ वा पताकौ वा यद्वा तौ खटकामुखौ ।
अन्योन्यमणिबन्धस्थावुत्तानौ वामपार्श्वगौ ॥
हृदयक्षेत्रगौ स्यातां यद्यसौ स्वस्तिकः करः ।
विच्युतः स्वस्तिकः कार्यो गमने सागरे घने ॥
विस्तीर्णे भूतले स्त्रीभिरेवमस्त्विति भाषणे ।
विधेयौ मण्डलाकारौ यथा स्यातां स्वपार्श्वगौ ॥
विप्रदासः

उत्तानौ वामपार्श्वस्थावन्योन्यमणिबन्धकौ ।
अरालो यत्र हस्तोऽसौ स्वस्तिकः परिकीर्तितः ॥
विच्युतस्वस्तिकस्सोऽयं अधोदेशप्रसारितः ।
विस्तीर्णदेशनिर्देशे सरस्सङ्गररूपणे ॥
तथैव मध्यदेशस्थो दिक्पुरारण्यदर्शने ।
ऋजुजीमूतगगनादीनामभिनये पुनः ।
यथोचितं प्रयोक्तव्यस्तद्ध्नैरूर्ध्वप्रदेशगः ॥
वेमः

स्वस्तिकाधोमुखौ रात्रौ विच्युतोत्तानितौ दिने ।
मेघप्रच्छादिते तस्मिन्विच्युताधोमुखाविमौ ॥
अशोकः

एकस्य मणिबन्धेऽन्यमणिबन्धस्थितौ करौ ।
देहस्य वामपार्श्वस्थावुत्तानौ स्वस्तिको मतः ॥
अत्रारालौ पताकौ वाऽभिनये वशगौ करौ ।
विच्युतःस्वस्तिकः स्त्रीभिरेवमस्तीति भाषणे ।
गगने सागरादौ च विस्तीर्णे संप्रयुज्यते ॥
सार्ङ्गः

—हस्तपाटः

हस्तौ तु स्वस्तिकाकारावेकं पटहपुष्करम् ।
ताडयेतां यदा तद्वैः तदा स्वस्तिक उच्यते ॥

वेमः

धों धों धों नकिट नकिट धो नकिट
यत्र षोडशमात्राभिः युक्तोऽयं स्वस्तिको भवेत् ॥

पार्श्वदेवः

स्वस्तिकचन्द्रकहस्तः

मणिबन्धसमाश्लिष्टावर्धचन्द्रावधोमुखौ ।
सर्वाङ्गुल्यश्च विरला नाम्ना स्वस्तिकचन्द्रकः ।
शतपक्षाख्यविहगो योज्यस्स्वस्तिकचन्द्रकः ॥

शतपक्षः गण्डभेरुण्डः । शृङ्गारशेखरः

स्वस्तिकचारिणी—गतिः

मुहुस्स्वस्तिकयोगेन गतिस्स्वस्तिकचारिणी ।

देवपः

स्वस्तिकताडितम्—पादमणिः

एकरूसमस्थितस्याङ्घ्रेः पश्चात्स्वस्तिकबन्धनम् ।
आचरन्नङ्गुलीपृष्ठे तिष्ठेदन्यस्य पार्श्वतः ॥
पूर्वस्तु चरणो भूमौ तलेन यदि ताडनम् ।
विदधात्येवमेव स्याद्यदि पादान्तरेण च ।
तदा नृत्तविशेषज्ञैः प्रोक्तं स्वस्तिकताडितम् ॥

वेमः

स्वस्तिकत्र्यस्रम्—चालकः

प्रथमं स्वस्तिकीभूय कुञ्चितावूर्ध्वगौ पुनः ।
ततो वामांसपर्यन्तं पर्यायाद्वेल्लितौ करौ ।
तत्स्वस्तिकत्र्यस्रसंज्ञं क्षेमराजेन भाषितम् ॥

नन्दीश्वरः

स्वस्तिकत्रिकोणम्—चालकः

हस्तौ प्राक्स्वस्तिकीभूय कुञ्चितावूर्ध्वगौ तदा ।
उद्वृत्तौ यदि वामांसपर्यन्तचलदङ्गुलि ।
तत्स्वस्तिकत्रिकोणाख्यं चालकं तं प्रचक्षते ॥

वेमः

स्वस्तिकभ्रमरी—तिरिपनृत्ताङ्गम्

तस्मिन्नेव स्थितः स्थाने पूर्ववत्करयोजनम् ।
पदयोः स्वस्तिकं कृत्वा शिखरौ च स्तनोपरि ।
दक्षिणावर्ततो भ्रान्त्वा स्वस्तिकभ्रमरी भवेत् ॥

वेमः

तस्मिन्, पूर्ववदिति । प्रपदीभ्रमरी लक्षणे रेवेत्यर्थः ।

स्वस्तिकम्—करणम्

निष्क्रमय्य करौ यस्मिन् उद्वेष्टितपुरस्सरौ ।
व्यावर्तने सहोत्प्लुत्य करयोः पादयोरपि ॥
स्वस्तिकौ युगपत्कुर्युः तत्स्वस्तिकमुदाहृतम् ।
अपरान्वेषणे वेगान्निषेधेन प्रयुज्यते ॥

ज्यायनः

स्वस्तिकाख्यं नियोज्यं तच्चित्रयुक्तिपरिक्रमे ॥

लक्ष्मणः

—देशीमण्डलम्

दक्षिणोत्तरतः कुर्यात्पादे पादं करे करम् ।
व्यत्यासेन तदा प्रोक्तं स्वस्तिकं नाम मण्डलम् ॥

नाट्यदर्पणे

—देशीस्थानम्

मञ्जीरधात्रि संबद्धस्वस्तिकौ कुञ्चिताङ्गुलि ।
मिथःसंश्लिष्टकानिष्ठौ भवेतां चरणौ यदा ।
तदा स्वस्तिकसंज्ञं तु स्थानकं कथितं बुधैः ॥

वेमः

—हस्तः

अन्योन्यं पाणिना बाहूरन्योन्यं यत्तु गृह्यते ।
तत्स्वस्तिकमिति प्रोक्तं रम्यमेतद्वरानने ॥

उमापतिः

स्वस्तिकरेचितम्—करणम्

चतुरस्रौ करौ कृत्वा ततो रेचककर्मणि ।
धृतभ्रमौ हंसपक्षौ कृत्वा व्यावर्तनेन तु ॥
प्रापय्य मस्तकादूर्ध्वमधस्तु परिवर्तनात् ।
आनीय च तथाविद्धवक्रवर्तनया करौ ॥
वक्षसि स्वस्तिकीकृत्य विप्रकीर्णौ ततःपरम् ।
पक्षवञ्चितकौ हस्तौ कटीतटनिवेशितौ ॥
परिवर्तौ ततःकुर्यात्पक्षप्रद्योतकावपि ।
कृत्वा करानुगां चारीमन्ते चेदवहित्थके ॥
स्थाने तिष्ठेच्च करणं तत्स्यात्स्वस्तिकरेचितम् ।
प्रयोगोऽस्य प्रहर्षादौ नृत्ताभिनयनेऽपि च ॥

वेमः

स्वस्तिकरेचितः—अङ्गहारः

वैशाखरेचितवृश्चिकवृश्चिकनिकुट्टककटीछिन्नानां करणानां क्रमात्प्रयोगे स्वस्तिकरेचिताङ्गहारः ।

स्वस्तिकरेचितम्—करणम्

स्वस्तिकौ रेचिताविद्धौ विश्लिष्टौ कटिसंस्थितौ ।
यत्र तत्करणं ज्ञेयं बुधैः स्वस्तिकरेचितम् ॥

भरतः

चतुरस्रः स्थितः कृत्वा हंसपक्षौ द्रुतभ्रमौ ।
व्यावृत्तिपरिवृत्तिभ्यामधश्चोर्ध्वं शिरःस्थलात् ॥
आनीयाविद्धवक्रौ चेद्वक्षसि स्वस्तिकौ कृतौ ।
विप्रकीर्णौ ततः कार्यौ पक्षवञ्चितकौ करौ ।
पक्षप्रद्योतकौ पश्चाच्चारी तद्वङ्गगा भवेत् ॥
अन्तेऽवहित्थकं स्थानं तदा स्वस्तिकरेचितम् ।
नृत्ताभिनयने तच्च प्रहर्षादौ नियुज्यते ॥

स्वस्तिकवर्तना

व्यावर्तनक्रियापूर्वं क्रियेते स्वस्तिकौ यदा ।
तदा सद्भिस्समादिष्टा वर्तना स्वस्तिकाभिधा ॥

अशोकः

स्वस्तिकविच्युतम्—पादमणिः

स्थितावङ्गुलिपृष्ठेन चरणावुत्प्लुतौ तदा ।
स्वस्तिकं तस्य विश्लेषं कुर्वाते युगपन्मुहुः ।
यत्र तन्नृत्ततत्त्वज्ञैरुक्तं स्वस्तिकविच्युतम् ॥

वेमः

स्वस्तिकहस्तः

पताकयोस्सन्नियुक्तकरयोर्मणिबन्धयोः ।
संयोगेन स्वस्तिकाख्यः करटीकाविचक्षणैः ॥
पुरोमुखः पुरोभागे बद्धस्तु भयदर्शने ।
विवादे कीर्तने चैव स्वस्तिकाख्यकरो भवेत् ॥

विनायकः

स्वस्तिकाम्बुजः—हस्तः

स्वस्तिकावपि संयुक्तौ नर्तनान्तौ विघट्टितौ ।
पद्मकोशौ यमौ कार्यौ स्वस्तिकौ स्वस्तिकाम्बुजे ॥

नागमल्लः

स्वस्तिकाश्लेषः—चालकः

संप्राप्तयोस्स्वस्तिकत्वं हस्तयोरंसदेशतः ।
वलनं चेद्विलासेन स्वस्तिकाश्लेष उच्यते ॥

वेमः

स्वस्तिकोद्वृत्तम्—पादमणिः

उत्प्लुत्य स्वस्तिकाकारौ विन्यस्तौ चरणौ मिथः ।
पराङ्मुखीकृततलावङ्गुलीपृष्ठभागतः ॥
तिष्ठन्तो धरणीपृष्ठे तलाभ्यां ताडनं मुहुः ।
कुरुतो यत्र तत्प्राज्ञैः स्वस्तिकोद्वृत्तमुच्यते ॥

वेमः

स्वस्तिकौ—नृत्तहस्तौ

स्वस्तिकौ मणिबन्धान्ते भूत्वैवैतौ सलक्षणौ ।
एताविति हंसपक्षकरौ ।

ज्यायनः

—हस्तः

आश्लिष्टहंसपक्षाभ्यां स्वस्तिकास्वस्तिकौ करौ ।

शार्ङ्गः

स्वस्थम्—देशीस्थानम्

वक्षस्समुन्नतं यत्र पादौ विस्तारिताञ्चितौ ।
हस्तावूरुकटिन्यस्तौ स्थानं तत्स्वस्थमुच्यते ॥

वेमः

—वीणावादने गुणः

तत्स्वस्थं स्वरनिष्पत्तिर्यथावद्यत्र दृश्यते ।

कुम्भः

—स्थानम्

वक्षस्समुन्नतं यत्र पादौ विस्तारिताञ्चितौ ।
हस्तावूरुकटीन्यस्तौ स्थानं तत्स्वस्थमुच्यते ॥

वेमः

स्वस्थः—श्वासः

स्वभावजाविमौ वायू स्वस्थौ स्वस्थक्रियायुतौ ।

विप्रदासः

स्वागता—एकादशाक्षरवृत्तम्

रनभगगाः ।

भरतः

स्वात्यभिनयः

कटकावर्तहस्तेन कर्तव्यः ।

महाराष्ट्रः

स्वातिहस्तः (स्वातिर्माणिक्यवत्)

खटकामुखहस्ते तु तर्जनीशिरसा यदा ।
अङ्गुष्ठपर्वसन्धेस्स्यात् श्लिष्टा च परियुज्यते ॥
रत्नाख्यकटकावर्तः कोहलोक्तमतोदितः ।
स्वास्थ्ये च प्रलापे च योज्यो नक्षत्रभाविभिः ॥

भरतः

**स्वाधीनभर्तृका**—नायिका

सान्द्रामोद्गुणप्राप्ता भवेत्स्वाधीनभर्तृका ।

भरतः

स्वाधीनपतिका सा तु यां न मुञ्चति वल्लभः ।
आमोदगुणो हर्षः सौभाग्याभिमानश्च ॥

रसकलिका

**स्वाभाविकः**—मुखरागः

सहजो मुखरागस्तु स्वाभाविक इति स्मृतः ।
अनुकूलेषु भावेषु प्रयोज्योऽसौ मनीषिभिः ॥

अयमेव सहज इत्यप्युच्यते । वेमः

**स्वाभाविकी**—नासिका

अनाविष्टेषु भावेषु नासा स्वाभाविकी स्थिता ।

विप्रदासः

**स्वामिनी**

सेनापतेरमात्यानां दण्डिनां तत्पराश्च या ।
तनया नामतश्चैव स्वामिनीत्यभिसंज्ञिता ॥
शीलरूपगुणैर्या तु संयुक्ता नृपवल्लभा ।
स्वामिसत्कारसंपन्ना स्वामिनीति हि संज्ञिता ॥

भरतः

**स्वायम्भुवकपालगानम्**

स्वयंभुवःकपालेन षष्ठं गानं समीरितम् ।
तालश्चञ्चत्पुटस्तत्र रागो वेसरषाडवः ॥

करतलविलसनेत्यादिगानम् । कुम्भः

**स्वाहाकारः**—तानः

मध्यमग्रामे गहीनषाडवः ।

ध प म रि स नि. कुम्भः

**स्विष्टकृत्**—तानः

मध्यमग्रामे गनिहीनौडुवः ।

प ध म रि स. कुम्भः

—तानः (रि - लोपषाडवः)

नि ध प म ग स. कुम्भः

**स्वीया**—नायिका

समानकुलशीलेन येनोढा वह्निसाक्षिकम् ।
सा स्वीया तस्य—

शारदातनयः

तत्र स्वामिन्येवानुरक्ता स्वीया । न च परिणीतायां परगामिन्यामतिव्याप्तिः । अत्र पतिव्रताया एव लक्ष्यत्वात् । तस्याश्च परगामितया परकीयात्वमपि समायाति । अस्याश्चेष्टाः । भर्तृशुश्रूषा शीलसंरक्षणं आर्जवं क्षमा चेति ।

शारदातनयः

भोगेप्सवस्तुस्त्वीयाः ।
न मुञ्चति प्रियं स्वीया संपत्स्वपि विपत्स्वपि ।
शीलसत्यार्जवोपेता रहस्संभोगलालसा ।

शारदातनयः

—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग रि म प नि ध नि स.

(अव) स नि प नि ध प म ग म रि ग म रि ग स.

मञ्ज

**स्वीयागुणाः**—(नायिकागुणाः)

संपत्सु चापत्सु च या न मुञ्चत्यात्मेश्वरं सा रमणी स्वकीया ।
शीलार्जवाद्यैः स्वगुणैरुपेता स्वेनैव चोढा हि पतिव्रता स्यात् ।
स्वच्छत्वं नखदन्तकेशवसनादीनां समस्तक्रिया
चातुर्यं स्मितपूर्वमल्पमकटुप्रव्यक्तं च संभाषणम्
दाक्षिण्यं विनयस्सुशीलविभवौ वक्रादिवाक्यज्ञता
प्रायोऽमी कुलपालिकासु विहिताः कल्याणनित्यागुणाः ।

नीलकण्ठः

**स्वेदः**—सात्त्विकभावः

क्रोधभयहर्षलज्जादुःखश्रमरोगतापघातेभ्यः ।
व्यायामक्लमधर्मैः स्वेदस्सम्पीडनाच्चैव ॥
व्यजनग्रहणाच्चापि स्वेदापनयनेन च ।
स्वेद एवाभिनेतव्यः तथा वाताभिलाषतः ॥

भरतः

स्वेदो धर्मः लज्जाश्रमक्रोधसंबाधैरुपपद्यते ।
व्यजनालिक सम्मार्जनवातेच्छाभिरभिनयेत् ॥

सागरः

स्वेदः सम्पीडनात्क्रोधरतिव्यायामभीतिभिः ।
धर्महर्षज्वरग्लानि सुखलज्जादिभिर्भवेत् ॥

शारदातनयः

धर्म, ग्रीष्मादिजनितोष्मा । हर्षः पुत्रजन्मादिजनितसन्तोषः । ज्वरः शीतोष्णादिभेदभिन्नः देहपीडाकरो रोगः । ग्लानिः अभीप्सितकार्यासिद्धिरतिक्षुधादिजनिता मनश्शरीरव्यापिनी निष्प्राणता । नरसिंहः

—चिन्ताभिनयः

आलोलितशिरो बध्वा साची दृष्टिस्तथैव च।
रतिश्रमापनोदार्थं सूचीहस्तः प्रचालितः॥

कण्ठस्थले पताकस्तु व्यजनार्थनिरूपणे।
खेदभावं दर्शयन्ति करटीकाविचक्षणाः॥

विनायकः

संक्षिप्तकः—आरभट्यङ्गम्

अन्वर्थशिल्पयुक्तो बहुपुस्तोत्थानचित्रनेपथ्यः।
संक्षिप्तवस्तुविषयो ज्ञेयस्संक्षिप्तको नाम॥

भरतः

संज्ञयाक्षिप्तानि वस्तूनि विषयो अस्येति संक्षिप्तकः। तानि वस्तूनि दर्शयति अन्वर्थेति। अर्थेन प्रयोजनेन अनुगताः शिल्पयुक्ताः कुशलशिल्पिविरचिताः अर्थाः यत्रेति।

अत्रैव दिशं दर्शयति। बहुविपुलं। पुस्तस्योत्थापनं प्रकटत्वम्। विचित्रं च नेपथ्यम्। खड्गचर्मवर्मादि यत्र पुस्तयोगे। यथा—मायाशिरोनिक्षेपे रामाभ्युदये चित्रं नैपथ्यं। यथा वा अश्वत्थाम्नः वेण्याम्।

अभिनवः

संक्षिप्तवस्तुविषयः प्रयोगाश्रितशिल्पवान्।
बहुपुस्तोत्थानकृतैः वेषैस्संक्षिप्तको मतः॥

नाट्ये यानि रथचर्मवर्मध्वजादीनि क्रियन्ते तानि पुस्त इति कीर्तितानि। यथा—नारदेन शिल्पमादर्श्य नरकः क्षयं नीतः। यथा वा—सैषस्नामायेन कन्या मायावती कृता। अन्ये पुनरन्यथैव संक्षिप्तकमिच्छन्ति। पूर्वनायकनाशेनापरनायकसंभवः संक्षिप्तकः। यथा—रामेण रावणमपनीय विभीषणस्य राज्ये कृतमभिषेचनम्।

सागरः

संख्या—तानः

नि – लोपः षाडवः।

ध प म ग रि स.

कुम्भः

संप्लुता—पुष्करवाद्ये जातिः

सर्वाङ्गुलिचलनकृता सर्वमृदङ्गप्रहारसंयुक्ता।
भीतनभोयानगतौ संप्लुतजातिर्विधातव्या॥

अभिनवगुप्तपाठः

नानाकरणैर्बहुभिर्जातिः करणाश्रितैर्या तु।
विक्षिप्ताञ्चितमिश्रा संप्लवसंज्ञा तु जातिरियम्॥

नेपालपाठ भरतः

## संभोगशब्दार्थविचारः

अथातो विप्रलम्भापादितप्रकर्षसम्पदः संभोगस्य स्वरूपमुपदेक्ष्यामः। कः पुनरयं सङ्गमो नाम। ननूक्तं—नायकयोः प्रागसङ्गतयोः सङ्गतवियुक्तयोर्वा मिथस्समागमे प्रागुत्पन्नस्तदानींतनो वा रत्याख्यस्थायिभावोऽभिलषणीयालिङ्गनादीनामवाप्तौ सत्यां समुपजायमानैर्हर्षधृतिस्मृतिमतिभिर्व्यभिचारिभावैस्संसृज्यमानः ऋतूद्यानोपगमनजलक्रीडा क्रीडापर्वतोपवेशप्रसाधनग्रहणमधुपानेन्दूदयादिभिरुद्दीपनविभावैरुद्दीप्यमानः सविभ्रमभ्रूकटाक्षविक्षेपालापासंभ्रमतादिभिरनुभावैरभिव्यज्यमानः ईप्सित मासादयन् जिहासितजिहानः प्राप्तप्राप्यप्रकर्षावस्थः संभोगशृङ्गाराख्यां लभते इति।

स चतुर्धा, प्रथमानुरागानन्तरो, मानानन्तरः, प्रवासानन्तरः, करुणानन्तर इति चोक्तम्। संज्ञा तु नैषा परिभाषिक्येव। प्रकृतिप्रत्ययोपसर्गविभागकल्पनायां अन्वर्थस्यापि विद्यमानत्वात्। तथाहि—संक्षेप सङ्करसंपूर्णत्व सम्यक्त्वद्योतकसमुपसर्गपूर्वस्य पालनकौटिल्याभ्यवहारानुभवकर्मणो भुजेः भावे कर्तरि अकर्तरि च कारके संज्ञायां सर्वकालेषु घञि संभोग इति रूपं भवति। कः पुनरिह प्रकृत्यर्थः। क उपसर्गार्थः। कः प्रत्ययार्थः। कोवा प्रत्ययोत्पत्तिकाल इति। उच्यते—संज्ञाशब्दानां यथाकथञ्चिद्व्युत्पत्तिरिति दर्शने संज्ञानुरोधादेव योऽर्थो यत्रोपपद्यते स तत्रैव व्यवह्रियते इति। तत्र प्रकृत्यर्थविभागे चत्वारो धात्वर्थाः पालनादयः। चत्वारश्चोपसर्गार्थाः। संक्षेपार्थादयः। यथा—संप्रीयते कथा गाथकेन। संसृज्यते सूपो लवणेन। संह्रियते याग उपकरणैः। संप्रयुज्यते दयितः कान्तयेति। प्रत्ययार्थविभागेषु पुनरष्टौ प्रत्ययार्थाः। भावो, हेतुः षट् च कारकाणि। प्रत्ययोत्पत्तिकालाः भूतो वर्तमानो व्यक्तो भूतविशेषो वर्तमानविशेषो भविष्यद्विशेषो व्यक्तविशेष इति। अथैतेषां मिथस्समवायोपादानापेक्षित प्रथमानुरागाद्यानन्तर्यार्थः तिर्यगादिसाधारणः सामान्येनैव पालनसंक्षेपाङ्गार्थविषयः संभोग शब्दार्थो विवक्ष्यते। यथा चतुर्णामपि भुज्यर्थानां चतुर्णामपि समुपसर्गार्थानां चतुर्ष्वपि प्रथमानुरागानन्तर्यादिषु संभोगेषु चतुर्ष्वपि संभोगावस्थासु सर्वैरपि प्रत्ययार्थैरविशेषेण सार्वकालिकस्संबन्धो भवति। तत्रोदाह्रियते—

मधुद्विरेफः कुसुमैकपात्रे पपौ प्रियां तामनुवर्तमानः।
शृङ्गेण संस्पर्शनिमीलिताक्षीं मृगीम कण्डूयत कृष्णसारः॥

ददौ सरः पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः।
अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा॥

गीतान्तरेषु श्रमवारिलेशैः किंचित्समुच्छ्वासितपत्रलेखम्।
पुष्पासवाघूर्णितनेत्रशोभि प्रियामुखं किंपुरुषश्चुचुम्ब॥

संप्राप्तपुष्पस्तम्बकस्थलीभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः।
लतावधूभ्यस्तरवोऽप्यवापु विनम्रशाखाभुजबन्धनानि॥

अत्र च प्रियावृत्तविषाणकण्डूयनपानोपच्छन्दनस्वादाहारदान-चुम्बनचाटुपरिष्वङ्गप्रीतिदायी सरीसृपमृगपशुपक्षिपुमानाभास-तरुविशेषाणां अविशेषेण सर्वसाधारणः प्रेमपालनार्थो गम्यते। अयमेव च प्रयोज्य रञ्जनाय बुद्धिपूर्वकं प्रयुज्यमानः कौटि-ल्यार्थोऽपि प्रथते। स्वामिप्रार्थानिवृत्यर्थं उपकल्प्यमानोऽभ्यवहा-रार्थं संपद्यते। प्रेमपारवश्यात्तु स्वयमुपजायमानोऽनुभवशब्द-वाच्यो भवति।

उपसर्गोऽपीह पालनार्थमुपकल्प्यमाने संक्षेपार्थमालम्बते। प्रयोज्यरञ्जनाय बुद्धिपूर्वकं प्रयुज्यमाने संकरार्थः स्पृशति। प्रयोज्याः कथमनुरज्येरन् इति बुद्धयः संकीर्यन्ते। स्वामिप्राय-निवृत्यर्थं प्रवर्तमाने संपूर्णत्वमवगाहते। अयं चेह संपूर्णतार्थो मदुभयेषामपीन्द्रियाणां आनुकूल्येषु स्वेषु स्वेषु विषयेषु श्रद्धाति-शयात्प्रवृत्तिः। प्रेमपारवश्यात्स्वयमुपजायमाने सम्यक्त्वार्थ-मभिनिवेशते। तत्र सम्यक्त्वं नाम येयमालिङ्गनादिष्वनुपदेश-पूर्विका स्वाभाविकी स्त्रीपुंसयोरन्योन्यमनुकूलाभ्युपपत्तिरिति चतुर्षु श्लोकेषु पालनादिनियमः। मधुद्विरेफ इत्यादि। इयं हि सा प्रेमपालनोपनिषत्। यद्यदन्योन्यानुवृत्या एकत्र पानभोजनं आनुकूल्यतश्च परिचर्येति द्वितीयश्लोके कौटिल्यं यथा—ददौ सरः पङ्कजमित्यादि। इदं च तद्गतेः स्वभावकुटिलत्वं असि-व्यक्तावस्थायामुन्मिषति यदेवं नाम प्रेमपरीक्षा प्रवर्तते यद्यहं ते प्रिया तन्मदुच्छिष्टं भुङ्क्ष्व, यद्यहं ते दयितः तद्भुक्तशेषमुपभुङ्क्ष्व। तृतीयश्लोकेऽभ्यवहारार्थो यथा गीतान्तरेष्विति। सोऽयं रते-रभ्यवहारो नाम येऽयमिन्द्रियाणां विषयेषु गन्धातिशयात्प्रवृत्तिः। सा चेह गीतध्वनिमनोहरे मदवशनयनेन्दीवरे परिपाण्डुगण्ड-मण्डले पत्रवल्लीविशेषाहरणे सुधायमानोष्ठपल्लवास्वादे मधुर-विशेषकषायिते पुष्पासवसुरभिवदनेन्दौ किंपुरुषेणाभ्यनुज्ञाय-माना सर्वेन्द्रियाह्लादमाज्ञापयति। चतुर्थश्लोकेऽनुभवार्थो यथा—इयमेव स रतेरनुभवप्रकर्षसीमा यदासादितप्रकृष्टयौवना यथोक्तगुणवती युवतिः उन्मिषत्सात्त्विकभावा स्वयंग्रहणे दयितमानन्दयति। स्तवकस्तनीति उपारूढयौवनत्वं लक्षयति। अथैतेष्वेवोपसर्गार्थसंक्षेपादयः प्रतिपद्यन्ते। तेषु क्रमेण पालनसंक्षेपः पालनसङ्करः पालनसंपूर्णत्वं पालनसम्यक्त्वं च व्यज्यन्ते। एकत्र पालनसम्यक्त्वे उदाहरणं-योऽयं त्यक्तलज्जाया इव योषितः स्वयंग्राहेण पाणिग्रहणोपगूहनप्रकारेष्वभिनिवेशः स चेह लतावधूनां लतावेष्टितक वृक्षाधिरूढायालिङ्गनप्रकार-विधानेनानुमीयते। तज्जघनोपगूहनमिति उपरिलङ्घनं इति।

अनया दिशा कौटिल्यस्य संक्षेपसांकर्यसंपूर्णत्वसम्यक्त्वानि चतुर्षु श्लोकेषु व्यज्यन्ते। तथैवाभ्यवहारस्य संक्षेपादयश्चत्वारः। अनुभवस्यापि तथैव। एवं पालनकौटिल्याभ्यवहारानुभूतिभिः। दर्शिता कालिदासेन प्रेमप्रस्थानपद्धतिः। भोजः

प्रकृतिप्रत्ययार्थानामपि भोजेन शृङ्गारप्रकाशे एकोनत्रिंशे विपुलं विवरणं दत्तम्।

## संभोगशृङ्गाराङ्गानि

उक्तं च प्रथमानुरागानन्तर मानानन्तरप्रवासानन्तरकरुणा-नन्तराः संभोगशब्दवाच्या इति। तत्र प्रथमानुरागानन्तरे रतिप्रकर्षनिमित्तामिलषणीयायालिङ्गनादीनां अवाप्तिहेतवो वि-श्रम्भशयनोपक्रमादयः, समागमो नायकयोः परिजनादेश्च चेष्टाविशेषाः संभोगशब्दवाच्या भवन्ति। के पुनर्विस्रंभणादयः। विस्रंभः, प्रेक्षोदीक्षणं, परिहारः, परिहारविज्ञासाः, कन्दुकक्रीडा, केलिद्यूतानि, ऋतूपचयसमाचारः, समायातकालावस्थानुभवः, पूर्वाह्णिकं, माध्याह्निकं, अपराह्णिकं, अस्तमयं, सन्ध्या, तमः, चन्द्रोदयः, ज्योत्स्ना, प्रादोषिकं, निशीथः, रात्रिपरावृत्तिः, प्राभातिकं, वनविहारगमनं, वनविहारः, पुष्पापचयः श्रमानु-भवः, प्रच्छाया दिवसे जलक्रीडानेपथ्ययोगा क्रीडापर्वतविहारः एकशाल्मली, नवलतिका, पञ्चालानुयातं, नवमल्लिका, कदम्ब-युद्धानि, विशाखखादिका, इन्द्रोत्सवः, कौमुदीप्रचारः, यक्ष-रात्रिः, अष्टमीचन्द्रकः, कुन्दचतुर्थी, सुवसन्तः, सहकारभञ्जि-का डोलाविलासः, उदकक्ष्वेडिका, मदनोत्सवः, गृहप्रत्यागमनं, सहायव्यापारः, प्रसाधनग्रहणं, गोष्ठीविहारः, वासगृहोपगमनम्, अभिसारिकाप्रतीक्षणं, दूतीविसर्जनं, स्वयंआगमनं, आगतोप-चारः, परिचरणं, तद्विसर्जनं, कञ्चुकादिमोक्षः, रतारम्भः रतं, रतावसानं, निद्रानुभवः, इति चतुष्षष्टिः।

भोजः

## संभोगभेदः

प्रश्नः। गते तु कोपे प्रथमे समागमे
प्रवासकाले पुनरागमे तथा।
वदन्ति चत्वारि रतानि कामुका-
स्ततोभवान् किन्त्वधिकं व्यवस्यति॥

अत्र ब्रूमः—यत्तावत्प्रथमसमागमे रतं तदप्यलब्धविस्रम्भायां कामिन्यां अज्ञातगाधमिव सरः शङ्कावगाहं भवति। यदपि प्रवासकाले रतं तदपि तच्छोकाभिभूतत्वान्मन्दरागायास्साक्षा-विलाक्षमुपोह्यमानहृदयोद्वेगकरणं अरम्यं करुणं प्रदोपसृष्टं चन्द्रमण्डलमिव न मां प्रीणयति। यदपि प्रवासादागते रतं तदप्यकृतप्रतिकर्मतया प्रियया व्रीलितया व्यञ्जितं दुर्दिनगान्धर्व-

मिवु मन्द्रागं भवति । यत्पुनःकोपापगमादागतं तस्सुरासुरा-विद्धमन्दरपीडिते सर्वौषधिप्रक्षेपाप्यायितवीर्ये भगवति सलिल-निधौ यदुत्पन्नममृतसंज्ञकं किमपि श्रूयते आयुर्वयोऽवस्थापनं रसायनं तदप्यत्र वर्तते । ईश्वरदत्तः

**संभ्रमः**

संभ्रमो न कचित्स्थानम् । भावविवेकः

**संभ्रमलीला**—मेलरागः (कीरवाणीमेलजन्यः)

(आ) स रि प ध स.

(अव) स नि ध प म ग रि स. मप

**संयुक्ता**—पुष्करवाद्ये जातिः

धं के टां के टकिणा मेभिर्यतिक्षरैस्तु संयुक्ता ।
संयुक्तकृता जातिः सा स्याच्चेटगतौ विधातव्या ।। अभिनवगुप्तपाठः

धं धं कंटां कंटां एभिर्यात्वक्षरैस्समायुक्ता ।
सा गोमुखीति चेटकरातौ विधातव्या ।। नेपालपाठ भरतः

—अवनद्धे जातिः

धं के टां के टकिणामेभिर्धात्वक्षरैस्तु संयुक्ता ।
संयुक्तकृता जातिः सास्याच्चेटगतौ विधातव्या ।। भरतः

एकाङ्किकमुखे योगादक्षराणां प्रयोक्तृभिः ।
चेटानां च गतौ जातिः संयुक्ता सा प्रकीर्त्यते ।। नान्यः

**संयुता**—श्रुतिः

षड्जस्य चतुर्थी श्रुतिः । मनपः

**संयोगः**

लययतिपाणीनां संयोजनम् । संयोगस्तु राद्धं विद्धं पर्यागतं च । भरतः

**संयोगमेरुः**

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | ० | ० | ० | | | | | | | | | | | |
| १ | १ | ० | ० | ०। | | | | | | | | | | |
| १ | ० | ० | ० | २ | | | | | | | | | | |
| १ | १ | १ | ० | ३ | ०ऽ | | | | | | | | | |
| १ | ० | ० | ० | ७ | २ | ०ऽ।ऽ | | | | | | | | |
| १ | १ | ० | १ | ११ | ३ | ० | ० | ।ऽऽऽ०।ऽ | | | | | | |
| १ | ० | ० | ० | २० | ४ | २ | २ | ० | ० | ६ | ०।ऽऽ | | | |
| १ | १ | १ | ० | ३२ | ५ | ३ | ० | २ | ० | १२ | ६ | ।।ऽ | | |
| १ | १ | ० | ० | ५४ | ९ | ४ | ३ | ० | ० | ३२ | | ०।ऽऽ | | |
| १ | १ | ० | .० | ८७ | १३ | ५ | ७ | ३ | २ | ५० | १२ | ६ | ०।ऽऽ | |
| १ | ० | ० | ० | १४३ | १८ | ५ | ० | ० | ० | १३४ | ३२ | ६ | | |
| १ | १ | १ | १ | २३२ | २४ | ७ | ११ | ४ | ० | २५१ | ६० | १२ | ६ | ०।ऽऽ |
| १ | ० | ० | ० | ३७५ | ३५ | ११ | ० | ० | ० | ५०० | १२२ | २० | ० | २४ |
| १ | १ | ० | ० | ५१८ | ४८ | १५ | २० | ८ | ३ | ८२१ | २२१ | ३० | १२ | ६० |
| १ | ० | ० | ० | ८८६ | ६८ | २० | ० | ० | ० | १८५४ | ४२२ | ५४ | ० | १८० |
| १ | १ | १ | ० | १५८५ | ८३ | २६ | ३८ | १२ | ३ | ३१०६ | ७६८ | ८६ | ३२ | ३८० |

कुम्भः

**संयोगमेरुः**—तालप्रस्तारः

संयोगमेरुनिर्माणमथ ब्रूते धराधिपः ।
येन विज्ञायते रूपं द्रादिसंयोगसंभवम् ॥
ऊर्ध्वाधस्तस्रः कर्तव्याः श्रेणयः कोष्ठभूषिता ।
इष्टतालद्रुतमितैः कोष्ठैर्युक्तास्ततःपरम् ॥
पङ्क्तिद्वयं स्वस्वपूर्वाऽवलेः कर्तव्यमत्र तु ।
द्विद्विकोष्ठोमितं षष्ठ आवलौ श्रेणिकाद्वयम् ॥
कोष्ठगैकोनितं कार्यं ततः स्यादावलित्रयम् ।
अष्टम्याः कोष्ठकैकेन न्यूनं तस्मात्परावली ॥
द्विद्विकोष्टैककन्यूनं स्वस्वपूर्वावलेः स्मृते ।
ततः स्यादावलिद्वन्द्वं स्वस्वपूर्वावलेः पुनः ॥
एकैककोष्ठके न्यूनं एवं पञ्चदश भवेन् ।
अथ संयोगविधिनोपरिष्टादङ्कनं यथा ॥
आद्ये दलगपा न्यस्येन् क्रमाच्छ्रेणि चतुष्टये ।
ततः क्रमात्परामूर्ध्वं दलौ दगौ दपौ लगौ ॥
लपौ गपौ च दलगा दलपा इति ...... ।
लगपाथो दलगपा न्यस्तव्यास्तालभेदगाः ॥
दपङ्क्तो सर्वकोष्ठाः स्यु रकैकाङ्केन संयुताः ।
एकान्तराः ततःपङ्क्तौ गुरोः कोष्ठत्रयं भवेत् ॥
लयुक्तं तुर्यकोष्ठे स्यादेक एवं परा अपि ।
प्लुतपङ्क्तौ पञ्चकोष्ठाः लयुजोरूपवान् परः ॥
एवं सर्वावलिस्साध्याऽभीष्टद्रुतपदावधिः ।
अस्मिंश्च सर्वलघवः सर्वगा अपि सर्वशः ॥
प्लुताश्चतुर्योगभेदाभेदा ये स्युर्द्वियोगजाः ।
त्रियोगसंभवा भेदाः चतुर्योगभवा अपि ।
संख्यायन्ते यदुक्तस्तन्मेरुसंयोगपूर्वकः ॥

कुम्भः

**संलग्नाः**—चरणाङ्गुल्यः

साङ्गुष्ठास्तु मिथोलग्नास्संलग्नाः कर्पणे मताः।

अशोकः

**संलापः**—(सल्लापकः) सात्त्वत्यङ्गम्

साधर्पजो निराधर्वजोऽपि वा रागवचनसंयुक्तः।
साधिक्षेपालापो ज्ञेयः सल्लापकः सोऽपि ॥

अथवा—

धर्माधर्मसमुत्थं यत्र भवेद्रागदोपसंयुक्तम्।
साधिक्षेपं च वचो ज्ञेयस्संलापको नाम ॥

भरतः

सहाधर्षणेन यद्वाक्यं साधर्षम्। तद्विरहितं निराधर्षम्। तेन खलीकारकाद्वचनादन्यतोऽपि वासत्, अनन्तरमधिक्षेपं वचनममिभावकं मानसं कर्म तत्सल्लापकशब्दवाच्यम्। यथा—वेण्यां अश्वत्थामा हत इति श्लोके सत्यवाचेति शब्दः।

अभिनवः

अन्यस्त्वाह नाधीतं न श्रुतं सार्धं त्वया सह मया कश्चित्। इत्यधिक्षिप्तवद्वाक्यं एकोऽन्यस्य क्षमायुत इति।

सागरः

**संलेखः**—वादनम् (दक्षिणहस्तव्यापारः)

संलेखोऽन्तस्तथाऽहतिः । शार्ङ्गः

वीणायां दक्षिणहस्तव्यापारः

अन्तर्यदा समाहन्ति तर्जनी तन्त्रिकामिह ।
तदा वैणिकवर्येण संज्ञा संलेख ईरिता ॥

कुम्भः

**संवरणम्**—सन्ध्यन्तरम्

संवृतिस्स्वयमुक्तस्य स्वयं प्रच्छादनं भवेन्।

यथा—शाकुन्तले, दुष्यन्तेन स्वयमुक्तस्य शकुन्तलाप्रसङ्गस्य—क वयं क परोक्षेत्यादि दुष्यन्तवाक्यम।

सिंगः

कथान्तरं अनिरूप्यमाणे यथाकार्यापेक्षितया संहरणं तत्संवरणम्। यथा—अनुतापाङ्के चितामुखवाक्यम्।

सागरः

**संवादिप्रयोगः**

यस्मिन् गीते योंऽशत्वेन परिकल्पितः षड्जस्तस्य स्थाने मध्यमः क्रियमाणो रागः न भवेत्। यस्मिन् स्थाने मूर्छनाव शान्मध्यमः प्रयुक्तः अस्मिन् स्थाने क्रियमाणः षड्जो जातिरागनाशको न भवेत्। षड्जपञ्चमयोः स्थाने प्रयुज्यमानौ जातिकरहानिकरौ न भवतः। एवं ऋषभधैवतयोः स्थाने धैवतर्षभौ जातिरागनाशकरौ न भवतः। एवं गान्धारनिषादयोः स्थाने निषादगान्धारौ। मतङ्गः

चतस्रेते तयोः श्रुत्योः स्वरौ मध्ये तयोरिह ।
श्रुतयो द्वादशाष्टौ वा तौ स्थः संवादिनौ मिथः ॥
स्वरौ निषादगान्धारावन्येषां स्तौ विवादिनौ ।
ऋधयोः वादिनी प्रोक्तौ गन्योर्वा स्तो ऋधाविह ।
शेषाणामनुवादित्वं कुम्भभूपस्य सम्मतम् ॥
समानश्रुतिकालेन संवादित्वेन सम्मतौ ।
षड्जग्रामेऽह्यविकृतौ यथा संवादिनौ सपौ ॥

तथा निषादगान्धारौ तद्वदृषभधैवतौ ।
मसौ संवादिनौ यद्वत् मध्यमग्राम ईरितौ ॥
तद्वत्र षड्जयो त्यागात्पञ्चमस्यान्तिमश्रुतेः ।
पञ्चमस्त्रिश्रुतित्वाच्च संवादी ऋषभेण तु ॥
केषाञ्चिदन्यथा ज्ञेयः संवादस्तद्यथोच्यते ।
यथाहि मध्यमग्रामे मन्योश्च ऋधयोस्तथा ॥
विषमश्रुतिकत्वेऽपि मिथः संवादनं मतम् ।
षड्जग्रामेतु ऋधयोः षड्जसाधारणे तथा ॥
श्रुत्युत्कर्षापकर्षाभ्यां अष्टश्रत्यन्तरत्वतः ।
समश्रुतिकतायां तु संवादः स्यादनेकधा ॥
षड्जग्रामे तु संवादो समश्रुतिकयोरपि ।
धैवतान्तरयोस्तद्वत् काकल्यन्तरयोरपि ॥
मध्यमेत्वसमश्रुत्योः संवादः कैश्चिदिष्यते ।
अष्टश्रुत्यन्तरत्वेऽस्य साम्यात्तत्रोभयत्र च ॥
काकल्यन्तरयोर्यत्रान्यतरः केवलो भवेत् ।
समौ संवादिनौ तत्र विषमश्रुतिकावपि ॥
साधारणे तु षड्जस्य विषमश्रुतिकौ सपौ ।
मध्यमग्रामकौ ज्ञेयौ किञ्चित्संवादिनौ मिथः ॥
काकल्यन्तयोर्यत्रान्नतरः केवलो भवेत् ।
न संवादो मिथो मन्योर्गन्योर्वा तत्र सम्मतः ॥
साधारण्ये तु षड्जस्य षड्जग्रामे सपौ समौ ।
न च संवादिनौ स्यातां मिथः संवादिनावपि ॥
काप्यसंवादिता प्रोक्ता स्वतः संवादिनामपि ।
असंवादजुषां क्वापि संवादोऽप्यत्र दर्शितः ॥
एकस्थानसमुद्भूतस्वराणां भूयसां परैः ।
समानं स्थानमुदितं संवादत्वेन तद्यथा ॥
उत्पद्यन्ते स्वरा यत्र पीडनात्सरिगादयः ॥
पधनित्वं श्रयन्त्येते तदूर्ध्वं पीडने कृते ।
क्रमेणान्योन्यमेतेऽतः स्यातां संवादिनौ मिथः ॥
तस्मादेकस्थानवादेः संवाद इति तन्मतम् ।
अस्मादेव तु संवादी नैव लोप्यः कदाचन ।
न लोप्यो मध्यमः क्वापीत्येवमाचार्यसंम्मतम् ॥ कुम्भः

## संवादी—स्वरः

संवादिनस्तु समश्रुतिकत्वे सति त्रयोदशनवान्तरत्वेनावबोद्धव्याः । किं तत्संवादित्वं नाम । यद्वादिस्वरेण रागस्वरेण रागत्वं जनितं तन्निर्वाहकत्वं नाम संवादित्वम् ।

मतङ्गः

## संवृत्तिः—शृङ्गारचेष्टा

प्रियसंभाषणं लोके परोद्वेगादिशङ्कया ।
स्वाकारगोपनं यत्तु सा बुधैः संवृत्तिः स्मृता ॥

कुम्भः

## संशयः—लक्षणम्

अपरिज्ञाततः स्वार्थं यत्र वाक्यं समाप्यते ।
सोऽनेकत्वाद्विचाराणां संशयः परिकीर्तितः ॥
परप्रशंसावचनं प्रयुक्तं योऽभ्यसूयते ।
पूर्वोत्तरार्थव्याघातः संशयस्स तु कीर्तितः ॥

भरतः

तिष्ठेत्कोपवशादिति श्लोके—आद्यो भागः संशयोदाहरणं उत्तरभागस्तूपपत्युदाहरणम् ।

अभिनवः

अपरिज्ञाततत्वार्थं वाक्यं यत्र समाप्यते ।
अनेकत्वाद्विचारणां स संशय इति स्मृतः ॥

भरतः

असमाप्तवाक्यत्वात् साधनीयविषयस्वरूपे सन्दिग्धावस्था । एषोऽर्थकामप्रधानेषु रूपकेषु निपुणं प्रयुज्यते । यथा—कुन्दमालायां रामायणकथावाचकौ कुशलवौ सीतावृत्तान्तं पठन्तौ, ततः प्राणैः परित्यक्ता निराशा जनकात्मजा इति तूष्णीं भवतः । रामलक्ष्मणौ किमितः कल्याणमावेदयतीत्यत्र संशयः ।

—शिल्पकाङ्गम्

किमेषा कौमुदी किं वा लावण्यसरसीसखे ।
इत्यादि नाम राधायां संशयः कृष्णभाषिते ॥

शारदातनयः

कोटिद्वयावलम्बने अर्थसंशयः । यथा—सालभञ्जिकायाम्—उपप्राकारेत्यादि ।

सागरः

अत्र कृष्णभाषितं – प्रेङ्खलकृते राधाविप्रलम्भाख्यनाटके कृष्णवाक्यम् । सालभञ्जिका—विद्धसालभञ्जिका १–३१.

—निर्वहणसन्ध्यङ्गम्

उपगूहनस्य नामान्तरम् ।
अद्भुतावाप्तिरधिका संभ्रयः कथ्यते बुधैः ।

सर्वेश्वरः

## संस्कृतपाठ्यम्

धीरोद्धते सललिते धीरोदात्ते तथैव च ।
धीरप्रशान्ते च तथा पाठ्यं योज्यं तु संस्कृतम् ॥

एतेषामपि सर्वेषां नायकानां प्रयोगजम् ।
कारणव्यपदेशेन प्राकृतं संप्रयोजयेत् ॥
परिव्राण्मुनिशाक्येषु चोक्षेषु श्रोत्रियेषु च ।
शिष्टा ये चैव लिङ्गस्थाः संस्कृतं तेषु योजयेत् ॥
राज्ञ्यश्च गणिकायाश्च शिल्पकार्यास्तथैव च ।
कलावस्थान्तरकृते योज्यं पाठ्यं तु संस्कृतम् ॥
सन्धिविग्रहसंपन्नं तथा च प्राप्तवाग्गतिम् ।
ग्रहनक्षत्रचरितं खगानां रुतमेव च ॥
सर्वमेतत्तु विज्ञेयं काव्यबन्धे शुभाशुभम् ।
नृपपत्न्या स्मृत तस्मात्काले पाठ्यं तु संस्कृतम् ॥
क्रीडार्थं सर्वलोकस्य प्रयोगे च सुखाश्रयम् ।
कलाभ्यासाश्रये चैव पाठ्यं वेश्यासु संस्कृतम् ॥
कलोपचारज्ञानार्थं क्रीडार्थं पार्थिवस्य च ।
निर्दिष्टं शिल्पकार्यास्तु नाटके संस्कृतं वचः ॥
आम्नायसिद्धं सर्वासां शुभमप्सरसां वचः ।
संवर्गाद्दैवतानां च तद्धि लोकोऽनुवर्तते ॥

भरतः

**संस्तुत्यः—तानः**

गान्धारग्रामे नारदीयतान. ।
ग म प नि रि

नान्यः

**संस्थाः**

पौरुषप्राधान्ये संस्था भवन्ति । तासां तु पञ्च पर्वाणि । यथा—

प्रारम्भश्च प्रयत्नश्च तथा वै प्राप्तिसंभवः ।
नियता तु फलप्राप्तिः फलयोगश्च पञ्चमः ॥

अत्र प्रत्येकं प्रोपसर्गयोगात्पौरुषप्रकर्षोऽवभासते । पुरुषव्यापारेण बलात्कार्यसिद्धिः संस्थाप्यते । इतीमाः संस्था उच्यन्ते ।

भोजः

**संस्फोटः—अवमर्शसन्ध्यङ्गम्**

सम्फोटस्य नामान्तरम् ।

**संहतम्—जानु**

लग्नान्तर्जानु यज्जानु संहतं तद्बुधैर्मतम् ।
तदीर्ष्याकोपलज्जादिरतिभावेषु योषिताम् ॥

अशोकः

जानुद्वयस्य संश्लेषाज्जानु संहतमीरितम् ।

सोमेश्वरः

**—चिबुकम्**

संवृतास्यं निश्चलं च मौनं संहतमुच्यते ।

वेमः

**—देशीस्थानम्**

अन्योन्यसंमिलद्गुल्फाङ्गुष्ठावावसंयुतौ ।
चरणौ यत्र गात्रं च स्वभावस्थितिशोभनम् ।
तत्संहताख्यं स्थानं स्यात्पुष्पाञ्जलिविसर्जने ॥

**संहता—हनुः**

संहता मिलिता मौने हनुस्तम्भे च योज्यते ।

सोमेश्वरः

निश्चलाद्या यदा सैव संहता मौनतो वरा ।
सेति चलसंहता हनुः ।

ज्यायनः

**संहारः—माणिकाङ्गम्**

यथामिलषितावाप्तिः संहार इति कथ्यते ।

शारदातनयः

**संहिता—श्रव्यकाव्यम्**

यस्यां सन्धीयन्ते मनीषिभिर्विप्रकीर्णवृत्तान्ताः ।
सा संहितेति निगदिता यदुवंशदिलीपवंशादि ॥

भोजः

## ह

**हठतालः**

अट्टतालस्य नामान्तरम् ।
परमेश्वरेण वीणालक्षणे प्रयुक्तोऽयं शब्दः ।

**हतः—वीणावादनप्राणः**

सोमेश्वरो द्रुतमित्याह ।

क्रमेण कर्तरी यत्र खसितः कुहरस्तथा ।
रेफश्च भ्रमरो घोषः तद्वाद्यं हतमुच्यते ॥

कुम्भः

**हतस्वरवराटिका—रागः**

मन्द्रधैवतसंयुक्ता पञ्चमाहतकम्पिता ।
पञ्चांशन्यासंसंयुक्ता हतस्वरवराटिका ॥

जगदेकः

**हतस्वरवराटी—उपाङ्गरागः**

कम्पितश्चाहतश्चाद्य यत्नादौ पञ्चमस्वरः ।
मन्द्रश्च धैवतस्सोक्ता हतस्वरवराटिका ॥

महाराणः

—रागः

अतःपरं हतस्वरवराटी नामको भवेत् ।
षड्जांशन्याससंसक्ता धैवताख्यस्वरे पुनः ।
मन्द्रस्थानमनुप्राप्ता पञ्चमाहतकम्पिता ॥

हरिः

हतस्वरा धमन्द्रा स्यात्कम्पिताहतपञ्चमा ।

हम्मीरः

हतस्वरा—प्रथमरागः

हतस्वरवराटी स्यात्पञ्चमाहतकम्पिता ।
षड्जांशन्याससंयुक्ता मन्द्रधैवतभूषिता ॥

मोक्षः

हनुः

व्यादीर्णा शिथिला वक्रा संहता चलसंहता ।
प्रचला प्रस्फुरा चैव लोला चेत्यष्टधा हनुः ॥

सोमेश्वरः

हनुमत्क्रिया—रागः

गान्धारर्षभपञ्चमहीना षड्जग्रहांशसंयुक्ता ।
धैवततारा सप्तममन्द्रा स्याद्धनुकृतिर्नाम ॥

जन्यः

धैवतांशग्रहन्यासषड्जा मन्द्रश्च सप्तमः ।
पञ्चमर्षभगान्धारहीना हनुकृतिर्मता ॥

याष्टिकः

हनुमच्चालः—चित्रतालः

द्वावर्धबिन्दू लदौ चार्धबिन्दूललदौ दलौ ।
बिन्दवो लदलाः प्रोक्ता हनुमच्चित्रनामके ॥
००UU। ००UU॥ ०००।०००।०। ताललक्षणे

हनुमत्तोडी—मेलकर्ता (रागः)

स रि ० ग ० म ० प ध ० नि ० स.

मख

हनुमत्संहिता

हनुमत्कृता । आञ्जनेयसंहितेत्युक्तं रघुनाथभूपेन ।

हनुमान्

हनुमत्संहिताकारः ।

हन्तालिकः—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म प नि स.
(अव) स नि ध म ग रि स. मख

हम्मीरः

शृङ्गारहारकर्ता । अयं शाकम्भरीदेशप्रभुः । दिल्ली चक्रवर्तिना अल्लावुद्दीन् प्रभुणा महासमरे कश्चिद्धम्मीरो हत इति ज्ञायते । अयमेव स इति वक्तुं न किमपि बाधकमस्ति । कालः क्रै. प. १२९०.

हम्मीररागध्यानम्

रसिको युवा सहासोऽरुणवसनो दण्डकन्दुकी कुतुकी ।
ताम्बूलरुचां रुचिरो गौरो वीरस्तु हम्मीरः ॥

सोमनाथः

हमीरुकल्याणी—मेलरागः

(आ) स ० रि ग ० ० ० ० प ध ० ० स.
(अव) स नि ० ध ० प म ० ग ० ० रि स.

मेललक्षणे

—मेलरागः (मेलकल्याणीमेलजन्यः)

(आ) स रि ग म प ध नि प ध प स.
(अव) स नि ध प म ग रि स

मख

हयक्रान्तः—तानः

मध्यमग्रामे नारदीयतानः ।
रि म प ध नि स ! नान्यः

हयलीलः—देशीतालः

हयलीलस्तरङ्गलीलः ।
हयलीले विरामान्तद्रुतद्वन्द्वादुभौ द्रुतौ ।
ँ ँ ० ० ०

वेमः

हयलीला—प्रबन्धः

हयलीला द्विधा प्रोक्ता गद्यजा पद्यजा तथा ।
हयलीलेनं तालेन पद्यजा स्याच्चतुर्विधा ॥
यत्र पूर्वार्धमार्यायाः सताले परिगीयते ।
सतालमुत्तरार्धं तु हयलीला निगद्यते ॥

श्रीकण्ठः

हयसत्त्वा—स्त्री

स्थिरा विभक्तपार्श्वोरुकटीपृष्ठशिरोऽधरा ।
सुरूपा दानशीला च ऋजुस्थूलशिरोऽधरा ॥
कृशा चञ्चलचित्ता च स्निग्धवाक् शीघ्रगामिनी ।
कामक्रोधपरा नित्यं हयसत्त्वा प्रकीर्तिता ॥

भरतः

हरः—देशीतालः

कुम्भो गुरुद्वयं लौ दौ हरः ।
ऽ ऽ ॥ ० ०

कुम्भः

हरमनोहरी—मेलरागः (मेचकल्याणीमेलजन्यः)

(आ) स रि ग रि म प नि ध नि प ध नि स.
(अव) स नि ध प म ग म रि स

मञ्ज

हरविलासः—प्रबन्धः

पदैश्च विरुदैस्तेनैः पाटैरपि विरच्यते ।
पादान्तरैरिहाभोगः पाटैर्न्यासोऽपि दृश्यते ॥

हरिपालः

पदैस्सविरुदैः पाटैस्तेनकैर्यो विरच्यते ।
तथैवान्यपदाभोगः पाटन्याससमन्वितः ।
मतङ्गमुनिना प्रोक्तो नाम्ना हरविलासकः ॥

जगन्नाथः

हारेः—देशीतालः

द्रुतौ लश्च द्रुतौ लश्च षद्द्रुता यगणो लगौ ।
हरिताले ।

तालप्रस्तारः

हरिकाम्भोजी—मेलकर्ता (रागः)

म ० रि ० ग म ० प ० ध नि ० स.

मञ्ज

हरिणः—स्वरजातिः

षष्टिसंख्यैः स्वरैः प्रोक्तो हरिणः पूर्वसूरिभिः ।

भैमापतम्

हरिणत्रासितः—देशीचारी

कुञ्चिते वलितान्ते च तले चरणयोर्यदा ।
स्वस्तिकीकृत्य चोत्प्लुत्य संहते यदि पातिते ।
हरिणत्रासितां चारीं तां वदन्ति विपश्चितः ॥

वेमः

हरिणप्लुतम्—उत्प्लुतिकरणम्

यत्रोत्प्लुत्य विवृत्यैकां चारीं कृत्वा विवृत्य च ।
निपतन्नुत्कटस्थाने तिष्ठेद्धरिणप्लुतं तु तत् ॥

वेमः

—करणम्

चार्या तदाख्यया ज्ञेयं करणं हरिणप्लुतम् ।
करौ सामान्यतः प्रोक्तौ वक्षःपादानुगाविह ।
चार्ययेव द्विरावृत्य भट्टतण्डुरिदं जगौ ॥

ज्यायनः

—नृत्तकरणम्

गतागतं शिरः पार्श्वकम्पितन्तूर्ध्वमण्डली ।
भयानके च स्कन्धचार्यौ यत्र तद्धरिणप्लुतम् ॥

नन्दी

अत्र गतागतं स्थानकं, भयानकचारी भयानकगतिः ।
भयानका तस्तगतिः पुरः पश्चाच्च चारिणी ।
पलायनपराक्षिभ्यां कातराभ्यां समन्विता ॥

हरिणप्लुतः—देशीतालः

हरिणप्लुतविख्याते पादभागचतुष्टयात् ।
विरामदो लयत्रयं द्रुतो मिश्रलघुर्भवेत् ॥

० ० ० ० ० । । । ० ।

लक्ष्मणः

हरिणप्लुता—द्वादशाक्षरवृत्तम्

नभभराः ।

भरतः

हरिणाश्वा—मूर्छना

मध्यमग्रामे द्वितीया ।

(आ) ग म प ध नि स रि.
(अव) रि स नि ध प म ग.

पण्डितमण्डली

हरिदेहसमुत्पन्ना गान्धारस्वरसंभवा ।
मूर्छना हरिणाश्वा स्यादिन्द्रश्चात्राधिदैवतम् ।

कान्यः

हरिणी—सप्तदशाक्षरवृत्तम्

नसमरसलगाः ।

भरतः

इदं वृत्तं ऋषभचेष्टितं, ऋषभललितं—इत्युच्यते ।

हरितवर्णः

पीतनीलप्रयोगाद्धरितो नाम जायते ।

भरतः

हरिदर्पः—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि ग म प ध नि स.
(अव) स ध प म रि स.

मञ्ज

हरिदश्वः—देशीतालः

अम्बरं हरिदश्वः स्यात् ।

लक्ष्मणः

हरिपालः

सङ्गीतसुधाकरकर्ता । अयं सौराष्ट्रदेशाधिपः । श्रीरङ्गे कावेरीतीरे नाट्यविद्यावतीनां स्त्रीणां प्रयोजनमुद्दिश्य सङ्गीतसुधाकरं रचयामासेति ग्रन्थावतारे आह । विचारचतुर्मुख इति अस्य बिरुदमासीत् । कालः क्रै. प. 1175.

**हरिप्रकाशः**—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स रि ग रि ग प नि स.
(अव) स नि ध प म ग रि स. मञ्ज

**हरिप्रियः**—देशीतालः
पृथक्त्रिश्चिर्दलगपास्ताले प्रोक्ता हरिप्रिये।
० ० ० । । । ऽ ऽ ऽ ऽ ऽ ऽ कुम्भः

**हरिप्रीतः**—देशीतालः
हरिप्रीतो रमाङ्कितः।
ऽ । ऽ ऽ ऽ ऽ लक्ष्मणः

**हरिरमितचम्पकशेखरः**—सूडप्रबन्धः
श्रीरागो यत्र रागः स्यात्तालस्तु द्रुतमण्ठकः।
वर्णनं वासुदेवस्य रतिस्तद्विषये त्रिधा॥
पदेभ्यः पाटसन्तानं स्वरास्तेनास्तथैव च।
प्रयोगश्च भवेद्यत्र स प्रबन्धवरः स्मृतः।
हरिरमितचम्पकवर्णेभ्यः शेखराभिधः॥
कुम्भः

**हरिरसमन्मथतिलकः**—सूडप्रबन्धः
द्रुतमण्ठेन तालेन द्रुतेनैव लयेन च।
मल्हारे रसरागे स्यात्पदानां सन्ततेः पुरः॥
स्वरग्रामस्तथा पाटास्तेनापि च यथाक्षरम्।
हरिरसमन्मथाद्यस्तिलकस्सप्रबन्धराट्॥ कुम्भः

**हरिवक्त्रः**—देशीतालः
हरिवक्त्रे विरामान्तलपञ्चकमुदीरितम्।
॥॥ । लक्ष्मणः

**हरिवल्लभाशोकपल्लवः**—सूडप्रबन्धः
प्रतिमण्ठेन तालेन रागे देशाख्यसंज्ञके।
पदात्तुर्यास्स्वरैर्युक्तः पदात्सप्तमतस्तथा॥
आकारोपचितालापगमकाकुत्ववि्ग्रहः।
हरिवल्लभपूर्वोऽयमशोकपल्लवः स्मृतः॥ कुम्भः

**हरिविलासः**—प्रबन्धः
पदैर्विरुदसंबद्धैः पाटैस्तेनैश्च शोभितः।
नाम्ना हरिविलासोऽयं पदेऽत्र न्यास इष्यते॥
सोमराजः

**हरिविजयमङ्गलाचारः**—सूडप्रबन्धः
छन्दसा मङ्गलाख्येन रचनं गद्यपद्ययोः।
आलापश्च प्रतिपदं नानागमकपेशलः॥
ध्रुवः प्रतिपदं रागो ललितस्ताल इष्यते।
आदितालस्स्वरास्तेनाः प्रबन्धास्ते प्रतिष्ठिताः।
सहरिविजयाद्यश्च मङ्गलाचार उच्यते॥
कुम्भः

**हरिशरणकदलीपत्रम्**—सूडप्रबन्धः
रागः स्यात्स्थानगौडाख्यो तालो वर्णयती रसः।
शृङ्गारो विप्रलम्भाख्यः प्रमदामदनाकुलः॥
पदानामवधेः पाटाः गुम्भिता यत्र गीतके।
तद्गीतं हरिशरणकदलीपत्रसंज्ञकम्॥
कुम्भः

**हरिसमुदयगरुडपदम्**—सूडप्रबन्धः
निस्सारुतालरुचिरो रागो केदारसंज्ञके।
कविनामाङ्कितपदैः पादैः स्वरतैश्चितः॥
ततः पद्यं विलासेनोल्लासितं जगतीपतेः।
इत्थं हरिसमुदयात् गरुडपदसंज्ञकः।
प्रबन्धः पृथिवी भर्त्रा हरिभक्तेन वर्णितः॥
कुम्भः

**हरिहरतालराजीजलधरविलासितः**—सूडप्रबन्धः
आदितालः प्रथमतः प्रतिमण्ठस्ततःपरम्।
चतुर्मात्राह्वमण्ठश्च तुर्यः स्याद्द्रुतालकः॥
तालो वर्णयतिः पश्चान्नवमात्रिकमण्ठकः।
निस्सारुश्च तथा झम्पा द्रुतमण्ठश्च रूपकः॥
प्रतितालस्त्रिपुटक एकतालीति संज्ञया।
त्रयोदशक्रमात्तालाः प्रतितालं पदानि च॥
यथा शोभालमियुञ्जि तावन्त्येव ततःपरम्।
काहला तुण्डिकान्यौ च भुकंच शृङ्गशङ्खकौ॥
पटहश्च हुडुक्का च मुरजः करटापि च।
रुञ्जा च डमरू डक्का पाटा एतत्समुद्भवः॥
निस्सारो पटहो डक्का मर्दलस्त्रिवली तथा।
करटेति तथैतेषां प्रधानाक्षरयोजना॥
एकताल्यां डक्कुली च त्रिवली दुन्दुभिस्तथा।
घट्टसश्च चतुर्णां स्यादधिका पाटसन्ततिः॥

प्रतिताळप्रयोगोऽपि रागा नट्टा निगद्यते ।
शृङ्गारो विप्रलम्भाख्यो रस उत्तमनायकः ॥
दूतीसंवादकथनं नायिकायामिहेष्यते ।
एतत्स्याल्लक्षणं यत्र प्रबन्धरसनिगद्यते ।
हरिहारतालराजीजलधरविलासितः ॥

कुम्भः

हर्षः

हास्यवस्तूपलब्धेस्तु मनसो यस्सुखात्मकः ।
विकारो जायते हर्षः स उक्तो हासकारणम् ॥

भावविवेकः

—चित्राभिनयः

मनोरथस्य लाभेन सिद्धियोग्यस्य वस्तुनः ।
मित्रसङ्गाच्च दैवादिप्रसादेन च कल्पितः ॥

मनः प्रसादो हर्षः स्यात् ।

ऊर्ध्वभागे पताकन्तु देवतानां निरूपणे ।
अञ्जलिं हस्तकं बध्वा देवतानां निरूपणे ॥
पताकार्धस्य संयोगं चालयेत्तदनन्तरम् ।
पुरोभागे कीलकं च पार्श्वे तु शिखरं तथा ॥
प्रियसङ्ग इति प्रोक्तं तत्तच्चिह्नानुसारतः ।
हृदये मुकुलं बध्वा चतुरे चतुरं तथा ।
वस्तुनीष्टे दर्शयन्ति करटीका विशारदाः ॥

विनायकः

—व्यभिचारिभावः

हर्षोनाम मनोरथलाभेष्टजनसमागमनमनःपरितोषदेव गुरुराजभर्तृप्रसादभोजनाच्छादनलाभोपभोगादिभिर्विभावैरुत्पद्यते । नयनवदनप्रसादप्रियभाषणालिङ्गनकण्टकितपुलकिताश्रुस्वेदादिभिरभिनयेत् ।

भरतः

अभिरूपोपभोगाच्च बन्धुतृप्तेस्सुभोजनात् ।
अचिन्त्येष्टार्थसम्पत्तेः जायते सर्वदा नृणाम् ॥

हर्षः

मनःप्रसादो हर्षः । नरसिंहः

सर्वाङ्गीणः प्रमोदस्य व्यापारो हर्ष उच्यते ।
अभिप्रेतोत्सवादिभ्यः तस्य जन्मोपलभ्यते ।
तस्मिन्नेवोपजायन्ते सस्वेदा गद्गदा गिरः ॥

सर्वेश्वरः

हर्षकम्—कण्ठभूषणम्

समुद्गकं सर्पादिरूपतया प्रसिद्धम् । अभिनवः

हर्षपुरी—रागः

दूराद्धंसति धैवतध्वनिविहीना पुनस्सप्तमे,
तारोदीरितमध्यमा च पदवी गान्धारकोद्दीपिता ।
न्यासांशग्रहसंग्रहीतविलसत्षड्जाभिरम्या मनो
हर्षं हर्षपुरी न कस्य कुरुते श्रोतुर्जगद्वर्णिता ॥

नान्यः

धैवतरहिता भवतिगमपतारसमुज्ज्वलात्तु हर्षपुरी ।
षड्जस्वरगमकयुता षड्जन्यासग्रहांशका भवति ॥

कश्यपः

षड्जांशा षड्जबहुला षड्जन्यासेन शोभिता ।
नादाढ्या च निरालम्बा ख्याता हर्षपुरी वरा ॥

सोमेश्वरः

यद्यस्य मूर्छनामध्या तदा हर्षपुरी भवेत् ।
अस्येति मालवश्रीः । हरिः

मूर्छना शुद्धमध्या चेत् सैव हर्षपुरी मता ।
शृङ्गारे विनियोगस्स्यादनयोरुभयोरपि ॥

जगदेकः

सेति मालवश्रीः । उभयोरिति मालवश्रीहर्षपुर्योः ।

—(देशीया) रागः

अधैवता हर्षपुरी तारमध्यमपञ्चमा ।
मालवकैशिकोत्पन्ना मन्द्रषड्जविभूषिता ॥

मोक्षः

हर्षपुरीरागध्यानम्

निपात्य तल्पे सुदृढानुरागा
कान्तं रते सुप्तमवेत्य मुग्धा ।
प्रौढाङ्गना पौरुषमाचरन्ती
मनोहरा हर्षपुरी प्रदिष्टा ॥ संगीतसरणिः

हर्षवर्धनम्—नृत्तकरणम्

नन्द्यावर्ते स्थितिर्सिंहमुखश्चैवालपल्लवः ।
द्रुता दृष्टिश्शिरस्तत्र सकम्पपरिवाहितम् ।
नन्द्यावर्तसमुद्भूता चारी तद्धर्षवर्धनम् ॥

नन्दी

अत्र, नन्द्यावर्तं स्थानं। सिंहमुखो हस्तः। नन्द्यावर्ता गतिः। सिंहमुखो यथा, मध्यमानामिकाभ्यां अङ्गुष्ठमेलनं, शिष्टाङ्गुष्ठस्य प्रसारणम्।

नन्द्यावर्ता गतिः—दक्षिणोंऽघ्रिः समः वामस्य तिर्यग्गमनम्।

हर्षवर्धनः—प्रबन्धः

इष्टाभ्यां रागतालाभ्यां पदैस्सबिरुदैः स्वरैः।
पादैरेवं क्रमैर्यस्य भवेद्बन्धस्य कल्पना।
सपञ्चाङ्गप्रबन्धः स्यात्प्रशस्तो हर्षवर्धनः॥

पण्डितमण्डली

पदश्च विरुदैस्तेन्नैस्स्वरैः पाटैश्च संयुतः।
चित्रतालाश्रित इति ख्यापितो हर्षवर्धनः॥

हरिपालः

यः पदैर्बिरुदैरसवैंस्स्वरैः पाटैश्च संयुतः।
ताभ्यां चित्रगुतालाभ्यां विज्ञेयो हर्षवर्धनः॥

जग-मल्लः

पदैस्सविरुदैर्हर्षवर्धनस्स्वरपाटकैः।

श्रीकण्ठः

हर्षः—दृष्टिः

हर्षे निश्चलतारत्वं। शारदातनयः

हलायुधः—देशीतालः

हलायुधे दलौपः स्यात्।
० । ऽ लक्ष्मणः

हल्लीसकम्

मण्डलेन तु यन्नृत्तं हल्लीसकमितिस्मृतम्।
एकस्तत्र तु नेता स्याद्गोपस्त्रीणां यथा हरिः॥
अत्र प्रविश्य नर्तक्यः चर्चर्यामिव युग्मशः।
गोपाङ्गना यथैकेन माधवेन समन्विताः॥
तद्वदेकेन सहिता नायकेन सविभ्रमम्।
महोत्सवेषु नृत्यन्ति मण्डलाकारलीलया॥
हल्लीसकं तदाचष्ट वीरनारायणो नृपः।
तदेव कैश्चिच्चतुरैरुक्तं मण्डलरासकम्॥ वेमः

—नृत्तरूपकम्

हल्लीसकं तु सप्ताष्टदशस्त्रीजनसुङ्कुलम्।
संप्रयोज्यैकपुरुषं कैशिकीवृत्तिभूषितम्॥
एकाङ्कं स्यादुदृभ्रुतोक्तिबहुताललयात्मकम्।
निदर्शनं भवेदस्य केलिरैवतकं मतम्॥

अमृतानन्दी

अथ हल्लीसकं सप्त नवाष्टदशनायिकम्।
सानुद्धृतोक्ति चैकाङ्कं कैशिकीवृत्तिभूषितम्॥
एकाङ्कं वा भवेद्वयङ्कं विमर्शमुखसन्धिमत्।
सगेयलास्यं यतिमत्खण्डताललयान्वितम्।
एकविश्रामसहितं यथा स्यात्केलिरैवतम्॥

शारदातनयः

हस्तपाटाः

नागबन्धः स्वस्तिकश्चालगश्शुद्धिस्तथैव च।
समस्खलित इत्येते हस्तपाटास्तु पञ्च च॥
सद्यो जाताद्वामदेवात्तथाऽघोराभिधादपि।
ततस्तत्पुरुषाख्याच्च तत्श्चैशानसंज्ञितात्॥
एभ्यो मुखेभ्यः पञ्चभ्यो जाता गौरीपतेः क्रमात्।
ब्रह्मविष्णुमहेशार्कचन्द्रास्तेषां च देवताः॥
एते च सर्वपाटानां मुख्यत्वेन प्रकाशिताः।
नागबन्धे नागबन्धः पत्रनश्च ततःपरम्॥
एकश्चैव सरश्चैव ततो दूसरसंज्ञिणः।
सञ्चारश्चाथ विज्ञेय इति सप्तमिदा मताः॥
अथ स्वस्तिकभेदास्तु स्वस्तिको बलिकोहलः।
तथा च फुल्लविक्षेपः सञ्चारविलिखी ततः॥
कुण्डली विक्षेपकश्च पूरकाख्यस्ततःपरम्।
खण्डपूर्वो नागबन्ध इति सप्त स्मृताः क्रमात्॥
अलगश्च तथाऽऽसारो विश्रामाख्यस्तथैव च।
ततःपरं स्याद्विषमखिलीस्फुरणकस्तथा॥
सरिः स्फुटी च सप्तस्युरलगस्य भिदा इमाः।
शुद्धस्वरः स्फुरणकश्चाङ्कुलिर्वलितकाभिधः॥
ततोऽवघटसंज्ञश्च तकाराख्यस्ततःपरम्।
माणिक्यवल्लीका चेति सप्त शुद्धैर्भिधा मताः॥
समस्खलितसंज्ञश्च विघटस्सदृशस्तथा।
खली चाङ्कखली चैवानुत्फुल्लो खुत्तसंज्ञकः॥
समस्खलितकस्यैते सप्तभेदाः प्रकीर्तिताः।
पञ्चत्रिंशदमी पाटास्तलपाटा इति स्मृताः॥
विषमोऽर्धसमः कोणाहतस्संभ्रान्त इत्यपि।
हस्तपाटास्तु चत्वारो नन्दिकेश्वरसम्मताः।
उत्फुल्लः कलकश्चैव पाण्यन्तरनिकुट्टकः॥

दण्डहस्तः पिण्डहस्तो युग्महस्तोऽग्रहस्तकः ।
स्थूलहस्तोऽर्धार्धहस्तः पार्श्वपाणिस्ततःपरम् ॥
समपाणिश्च विषमपाणिश्चैवार्धपाणिकः ।
पाणिहस्तः कर्तरी च स्तम्भ समकर्तरी ॥
विषमाद्या कर्तरी च नागबन्धस्तथैव च ।
ततोऽवघटसंज्ञश्च स्वस्तिकश्च समग्रहः ॥
पटहादिष्वमी हस्तपाटा इत्येकविंशतिः ।
उल्लोदश्चैव निर्घोषः ततः स्यात्खण्डकर्तरी ॥
पाटान्तरो दण्डहस्तः तथा समनखाभिधः ।
विन्दुर्यमलहस्तश्च रेचितो भ्रमरस्तथा ॥
विद्युद्विलासो लम्बाख्यस्ततस्स्यादर्धकर्तरी ।
रेफश्च समपाणिश्च परिवृत्तस्तथेत्यमी ॥
पटहादौ हुडुक्कायामपि षोडश कीर्तिताः ।
तलप्रहारसंज्ञश्च प्रहारो खिलितस्तथा ॥
अर्धसञ्चसिसञ्चश्च तथैव गुरुगुञ्जितः ।
विषमोऽभ्यस्त इत्यष्टौ पाटास्तु विषमा मताः ॥
त एव वाद्यतत्त्वज्ञैरपाटा इति कीर्तिताः ।
सव्यो विच्छुरितश्चेमौ स्यातामलगपाटकौ ॥
भ्रमरः कुञ्चितश्चैव चित्रपाटौ प्रकीर्तितौ ।
अष्टाशीतिरिमे हस्तपाटास्सर्वे तु मिश्रतः ।
एषामुत्पादका हस्ताः लक्षणीयास्तु लोकतः ॥

वेमः

हस्ताः

पताकस्त्रिपताकश्च तथावै कर्तरीमुखः ।
अर्धचन्द्रो ह्यरालश्च शुकतुण्डस्तथैव च ॥
मुष्टिश्च शिखराख्यश्च कपित्थः खटकामुखः ।
सूच्यास्यः पद्मकोशः सर्पशिरा मृगशीर्षकः ॥
काङ्गूलकोऽलपद्मश्च चतुरो भ्रमरस्तथा ।
हंसास्यो हंसपक्षश्च सन्दंशो मुकुलस्तदा ॥
ऊर्णनाभस्ताम्रचूडश्चतुर्विंशतिरीरिताः ।
असंयतास्संयुताश्च गदतो मे निबोधत ॥
अञ्जलिश्च कपोतश्च कर्कटस्स्वस्तिकस्तथा ।
खटकावर्धमानश्च ह्युत्सङ्गो निषधस्तथा ॥
दोलःपुष्पपुटश्चैव तथा मकर एव च ।
गजदन्तोऽवहित्थश्च वर्धमानस्तथैव च ॥
एते तु संयुता हस्ता मया प्रोक्तास्त्रयोदश ।
नृत्तहस्तानतश्चोर्ध्वं गदतो मे निबोधत ॥

चतुरश्रौ तथोद्वृत्तौ तथा तलमुखौ स्मृतौ ।
स्वस्तिकौ विप्रकीर्णौ चाप्यरालः खटकामुखौ ॥
आविद्धवक्रौ सूच्यास्यौ रेचितावर्धरेचितौ ।
उत्तानवञ्चितौ चैव पल्लवौ च तथा करौ ॥
नितम्बावपि विज्ञेयौ केशबन्धौ तथैव च ।
लताख्यौ च तथा प्रोक्तौ करिहस्तस्तथैव च ॥
पक्षवञ्चितकौ चैव पक्षप्रद्योतकौ तथा ।
ज्ञेयौ गरुडपक्षा च दण्डपक्षावतःपरम् ॥
ऊर्ध्वमण्डलिनौ चैव पार्श्वमण्डलिनौ तथा ।
उरोमण्डलिनौ चैव उरःपार्श्वार्धमण्डलौ ॥
मुष्टिकस्वस्तिकौ चापि नलिनीपद्मकोशकौ ।
अलपल्लवोल्बणौ च ललितौ वलितौ तथा ॥
चतुष्षष्टिकराह्येते नामतोऽभिहिता मया ।

भरतः

हरिपालस्तु, अर्धपताक, मयूर, बाण, सिंहमुख, अपवेष्टित, उद्वेष्टित, व्यावृत्त, परिवृत्त, डमरु, वर्तनैरसंयुतहस्तैः कर्तरी-स्वस्तिक, चतुरस्वस्तिक, पताकस्वस्तिक, कलश, उत्सङ्ग, तिलक, नागबन्ध, वेष्णवैः, संयुतहस्तैः, दण्डहस्ताख्यनृत्तहस्तेन चाधिकतया, केषांचित्प्रसिद्धहस्तानां त्यागेन च हस्तानां सप्ततिरिति प्राह ।

विप्रदास कुम्भौ तु, उपधान, सिंहमुख, कदम्ब, निकुञ्चकैरसंयुतैर्योगप्रद, आलिङ्गन, द्विशिखर, कलापक, किरीट, चषक, लेखनैस्संयुतहस्तैश्च, वरदाभयेन नृत्तहस्तेन च, क्रमादशीतिरेव स्युः सर्वे संभूयहस्तका इत्यूचतुः । सोमेश्वरस्तु चतुर्विंशतिरसंयुतान्, त्रयोदश संयुतान्, सप्तविंशतिनृत्तहस्तान्, संभूय चतुष्षष्टिकरान् लक्षितवान् । स च भरतस्य ललितवलिताभिधनृत्तहस्तद्वयं मुक्त्वा चतुष्षष्टिकरानाह । ललितवलिताभिधौ पताकस्य नामान्तरेण निर्दिष्टौविति मन्यते ।

शार्ङ्गदेवस्तु अलपल्लवावुल्बणौ इति भरतोद्देशं पठित्वा ललितवलिताभ्यां मिलित्वा सप्तषष्टिकरान् वक्ति ।

ज्यायनः

"यद्येवं मिलितास्सर्वे षट्षष्टिस्त्रिविधा अपि ।
"चतुष्षष्टिकराह्येते नामतोऽभिहिता मया" ॥
इत्युक्तं ब्रह्मपुत्रेण भरतेनापि तत्कथम् ।
अयुक्तेषु च सूच्यास्यः स्वस्तिकस्संयुतेष्वपि ॥

तावेवात्र समानाख्यौ नृत्तहस्तौ प्रकीर्तितौ ।
यत्तु नामत इत्याह मुनिस्सत्यं न चान्यथा ॥

पल्लवावेव कलितौ लताख्यौ वलिताविति ।
निश्चित्य नृत्यहस्तेषु हित्वा तद्वितयं पुनः ।

सोमेश्वरादयः केचित्सप्तविंशतिमूचिरे ॥

स्वस्तिकौ विप्रकीर्णौ च रेचितावर्धरेचितौ ।
नामभेदान्मिथो भिन्नौ तद्वदत्रापि मन्यताम् ॥

स्यातां येषां मते भिन्नावुल्बणावलपल्लवौ ।
मण्डलानां च सामान्यमण्डलत्वमिति ध्रुवम् ॥

सन्त्यज्य त्रितयं तेषु नृत्तक्रियाविशारदैः ।
एवं चेन्न पृथक् स्यातां रेचितावर्धरेचितौ ॥

उल्बणावलपद्मौ च भिन्नौ यदि मुनेर्मते ।
बहुत्वं प्राप्नुतश्चेतावलपद्मोल्बणाविति ॥

अञ्जल्यादेः करद्वन्द्वप्रयोज्यस्य कथं मुनिः ।
उक्त्वैकवचनं नृत्तहस्ते द्विवचनं व्यधात् ॥

संयुक्तयोस्तयोस्सिद्धिः हस्तत्वे सततं भवेत् ।
नृत्तहस्तेषु हस्ताभ्यां हस्तेनैकेन वा भवेत् ।
हस्तत्वसिद्धिरित्यस्मात्कारणे उभयोरपि " ॥

ताम्रचूडाद्वर्धमानाल्ललिताख्यात्परे कराः ।
ये प्रोक्तास्त्रिविधास्तेभ्यः पूर्वे ये कथिताः कराः ॥

तेष्वर्धचतुरश्राख्यं विहाय मिलिताः किल ।
चतुष्षष्टिर्भवन्तीति केचिदूचुर्विपश्चितः ॥

सप्तषष्टिर्भवन्तीति रत्नाकरकृदभ्यधात् ।
चतुष्षष्टित्वमेतेषां शास्त्रयुक्तिबहिष्कृतम् ॥

सप्तषष्टित्वमाश्रित्य चतुष्षष्टित्वसिद्धये ।
उपपत्तिमवोचद्यां निश्शङ्कस्सापि निष्कला ॥

पल्लवाख्यावुल्बणयोस्स्वस्तिकौ विप्रकीर्णयोः ।
पार्श्वमण्डलिनोर्हस्तौ उरोमण्डलिनौ तथा ॥

स्यातां विशेषणं तेन न भिन्नाः पल्लवादयः ।
विशेषणविशेष्ये हि न स्यातां भिन्नगामिनी ॥

नीलमुत्पलमित्यत्र न हीष्टं पङ्कजाविति ।
यथा लोके देवदत्तदण्डौ सिद्धौ पृथक्स्वतः ॥

पृथक् प्रतीतो भजतो विशेषणविशेष्यताम् ।
दण्डः पुरुषवानेषः पुरुषो दण्डवानिति ॥

तथैते विप्रकीर्णाद्याः स्वस्तिकाद्यास्त्रयस्तथा ।
पृथक्सिद्धाः पृथक्ज्ञाताः कर्मबुद्धिव्यपेक्षया ॥

विशेषणविशेष्यत्वे प्राप्नुवन्ति परस्परम् ।
विप्रकीर्णस्वस्तिकाख्यावन्यावुल्बणपल्लवौ ॥

एवमन्यत्तृतीयोऽपि विपर्यस्तविशेषणः ।
एवमेते त्रयो हस्ताः तदुक्तैश्च जह त्रिभिः ॥

एवं सति षडन्ये स्युः विशिष्टा हस्तकाः क्रमात् ।
रूपभेदप्रसिद्धोऽयमविशिष्टविशिष्टयोः ॥

वैशिष्ट्योऽपि पुनस्सप्तषष्टित्वे पर्यवस्यति ।
विशेषणविशेष्यत्वे कृतमैक्यं न युज्यते ॥

हस्तेष्वतिप्रसङ्गस्स्यात्तथा सति दुरुत्तरः ।
सप्तषष्टित्वसंख्याऽपि नेयमैकान्तिकी मता ॥

आनन्त्यादभिधेयानां न च लोकानुसारतः ।
उत्पन्ना अनयारीत्याप्येतच्छास्त्रेण कथ्यते ॥

आचार्यैश्च तथैवेत उद्दिष्टा लक्षिताः पृथक् ।
तस्मादस्माभिरुक्तैव संख्यास्तु ज्यायसी सताम् ॥

.........................................

अञ्जनश्चन्द्रकान्तोऽथ जयन्तश्चेति हस्तकाः ।
त्रयोऽन्ये दर्शितास्ते च प्रदर्श्यन्ते क्रमादिह ॥

नृत्तहस्तेषु नैतेषां संभवो दृश्यते यतः ।
तस्मादेतान्विप्रदासो हस्तकान्नानुमन्यते ॥

विप्रदासः

हहोरी—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि ग रि म प ध नि ध स.

(अव) स नि ध म ग रि स.

मख

हसितम्—हास्यरसभेदः

हास्यशब्दे द्रष्टव्यम् ।

हसितः—वर्णालङ्कारः

सप्तस्वरसमारोहे यत्रैकद्वयादिवृद्धितः ।
भवेत्समेन हसितः सोऽलङ्कारः प्रकीर्तितः ॥

जगदेकः

एकोत्तरप्रवृत्ताभिरावृत्तिभिरुदीरितैः ।
स्वरैरारोहणं यत्र हसितं तं प्रचक्षते ॥

सरिरि गागागा मामामामा पापापापापा धधधधधध निनि-निनिनिनिनि ।

—वर्णालङ्कारः (अवरोहि)

नीनीनीनीनीनीनीमा धाधाधाधाधाधा पापापापापा मामामामा गागागा रीरी स ।

पण्डितमण्डली

हस्तः—(हस्तःपाणिपादाकृतिः)

हस्तक्षेस्य पताकस्त्वादूर्ध्वं चलितरूपकः ।

शृङ्गारः

—पाटवाद्यम्

द्वे वा चत्वारि खण्डानि यत्राष्टौ षोडशाथवा ।
दंकारादीनि वाद्यन्ते स हस्तः स्याच्चतुर्विधः ।
चतुरश्रत्र्यश्रमिश्रखण्डतालैः प्रकीर्तितः ॥

वेमः

हस्तकरणानि

आवेष्टिताभिधं पूर्वमुद्वेष्टितमतः परम् ।
व्यावर्तितं तदा ज्ञेयं परिवर्तितमित्यपि ।
चतुर्धैवं तदाख्यातं तल्लक्ष्म व्याहरे क्रमात् ॥

अशोकः

हस्तकर्माणि

मोक्षणं रक्षणं क्षेपो निग्रहश्च परिग्रहः ।
धूननं श्लेषणं स्फोटो विश्लेषो मोटनं तथा ॥
तोलनं ताडनं छेदोत्कृष्टथाकृष्टिविकृष्टयः ।
विसर्जनं तथाह्वानं तर्जनं भेद इत्यपि ।
संज्ञया ज्ञातलक्ष्माणि करकर्माणि विंशतिः ॥

अशोकः

हस्तक्षेत्राणि

शिरो ललाटं श्रवणं स्कन्धोरःकटिशीर्षकम् ।
नाभीपार्श्वद्वयं तस्मादूर्ध्वं चाधः पुरस्ततः ।
ऊरुद्वयं च हस्तानां क्षेत्राणीति त्रयोदश ॥

अशोकः

हस्तनेरिः—देशीनृत्तम्

चतुर्विंशतिहस्तैश्च संयुतैस्संहतादिभिः ।
दशभिस्स्थानकैश्चारीषट्केण च विनिर्मिता ॥
हस्तनेत्रशिरोभेदचमत्कारेण योजिता ।
विलम्बादादितालेन दिक्चक्राभिमुखा गतिः ।
हस्तनेरिरियं प्रोक्ता भरतादिमुनीश्वरैः ॥

वेदः

चतुर्विंशति हस्ताः असंयुता भरतोक्ताः । दशस्थानानि—संहतं मण्डलं, स्वस्तिकं, चतुरश्रं कुञ्चितं वैशाखं समपादं अश्वक्रान्तं वैष्णवं उत्कटं—इति । षट्चार्यः—स्तम्भक्रीडनिका, अर्ध्यर्धिका, अड्डिता, ऊरुस्खलितका, पुराटी, करिहस्ता इति ।

हस्तपत्रम्—अङ्गुलिभूषणम्

हस्तपाटः

ये पाटाः पटहे प्रोक्ताः तेषां विविधगुम्भनात् ।
हस्तोद्भवाः पाटभेदाः हस्तपाटाः प्रकीर्तिताः ॥

शार्ङ्गदेवः

हस्तप्रचाराः

उत्तानोऽधोमुखः पार्श्वगतः पाणिरिति त्रिधा ।
प्रचारं भरतो मेने पञ्चधात्वपरे जगुः ॥
अग्रगोऽधस्तलश्चेति द्वौ त्रयश्च पुरामताः ।
तत्रत्वग्रगमुत्तानेऽधोमुखेऽधस्तलं करम् ॥
अन्तर्भूतं वदन् भट्टस्त्रित्वमेव समादधे ।
उत्तानोऽधस्तलः पार्श्वतलो हस्तोऽग्रतस्तलः ॥
स्वसम्मुखतलश्चोर्ध्वमुखोऽधोवदनस्तथा ।
पराङ्मुखस्संमुखश्च हस्तोन्यः पार्श्वतो मुखः ॥
ऊर्ध्वगोऽधोगतः पार्श्वगतो हस्तोऽग्रगोऽपरः ।
सम्मुखे गत इत्येतान् प्रचारान् दश पञ्च च ॥
लाक्ष्यलक्षणतत्त्वज्ञः शार्ङ्गदेवोऽभ्यभाषत ।
उत्तानोऽधः पार्श्वतलौ त्रिप्रकारा इमे कराः ॥
परे तदोर्ध्वपार्श्वाधोमुखा इति करास्तु षट् ।
अन्ये त्वग्रतलाद्या ये ऊर्ध्वगाधोगतादयः ॥
उत्तानादिप्रचारेषु भवन्त्यन्तर्गता इति ।
निर्णीय विप्रदासेन प्रचाराष्षडुदीरिताः ॥

भट्ट इत्यभिनवगुप्ताचार्यः स तु नाट्यशास्त्रव्याख्याने नवमेऽध्याये उत्तानशब्दार्थाख्यायां त्रैविध्यं वक्ति ।

विप्रदासः

हस्तप्राणाः

प्रसारणं कुञ्चितं च रेचितं चापि पुञ्जितम् ।
अपवेष्टितकं चापि प्रेरितोद्वेष्टिते अपि ॥
व्यावृत्तः परिवृत्तश्च सङ्केतस्तदनन्तरम् ।
चिह्नं पदार्थटीकेति प्राणा द्वादश हस्तजाः ॥

शृङ्गारः

हस्तमुक्तावली

शुभङ्करकृता। हस्तमुक्तावलीसमुद्धृतिका इति काचन व्याख्यापि नेपालेषु लभ्यते। कालः 1520.

हस्तमुक्तावलीसारसमुद्धृतिका

घनश्यामकृता अयं ग्रन्थः शुभङ्करकृतहस्तमुक्तावलीव्याख्यारूपः अतिविपुलः। कालः क्रै. प. 1618.

हस्तली—बाहुभूषणम्

हस्ताभिनयः

पताकहस्तस्याग्राङ्गुलीनां वैरल्येन कर्तव्यः।

महाराष्ट्रे

हस्तिनीहस्तः

हस्तिन्यामर्धचतुरो रेचितौ ह्यपवेष्टितौ।
गान्धाराख्यस्वरश्चापि हस्तिनी स्वर इष्यते॥

अस्कारः

ललाटस्याग्रभागेऽपि स्वांसदेशेऽपि वक्षसे।
नाभौ च मृगशीर्षाख्यो ह्यलपल्लववेष्टितः॥

पद्मिन्यामपि चित्रिण्यां हस्तिन्यां च विशेषतः।
शङ्खिन्यां च क्रमेणैव संयोज्यास्तु नृतिक्रमे॥

एतन्नन्दीश्वरमतम्

कूचिमारस्तु,

ललाटेंसेषुरस्सीम्नि कुक्षेरग्रेच निश्चलः।
हस्तिन्यामपि शङ्खिन्यां चित्रिण्यां च नृतिक्रमे॥
पद्मिन्यां च क्रमेण स्यात् मृगशीर्षमिधः करः॥

हस्तिन्या अभिनयः

अलपल्लवमृगशीर्षयोरुरःस्थलधारणेन कर्तव्यः।

महाराष्ट्रे

हस्तिशीला—स्त्री

महाहनुललाटाच मांसलोपचयान्विता।
पिङ्गाक्षी रोमशाङ्गी च गन्धमाल्यासवप्रिया॥

कोपनास्थिरसत्त्वा च जलोद्यानवनप्रिया।
मधुरामिरता चैव हस्तिसत्वा प्रकीर्तिता॥

भरतः

हाटकवराली—मेलरागः (हरिकाम्भोजीमेलजन्यः)

(आ) स रि म प ध स.
(अव) स नि ध प म ग रि ग स. लक्ष्य

हाटकाभरणम्—मेलरागः (कीरवाणीमेलजन्यः)

(आ) स रि ग म प ध नि स
(अव) स नि प म रि म ग स लक्ष्य

हाटकाम्बरी—मेलकर्ता (रागः)

स रि ० ० ग म ० प ० ० ध नि स. लक्ष्य

हारः—व्यालम्बिमुक्तालता

वक्षोभूषणम्।

हारदामविलासः—चालकः

अंसमध्यगतौ चारुलुठदङ्गुलिपल्लवौ।
पततो युगपद्यत्र हस्तौ विभ्रमशालिनौ।
हारदामविलासाख्यः रसे चालक उच्यते॥

वेमः

हावः—अनुभावः

अङ्गजोऽनुभावः। भावहेलाशब्दौ पश्यत।
भावात्समुत्थितो हावो हावाद्धेला समुत्थिता॥
भावस्याधिकृतं सत्त्वं व्यतिरिक्तं च योनिषु।
नैकावस्थान्तरकृतं हावं तमिह निर्दिशेत्॥

भरतः

बहुविकारात्मा भ्रूतारकचिबुकग्रीवादेर्धर्मैः स्वचित्तवृत्तिं परम् जुह्वतीं ददतीं कुमारीं हावयातीति हावः। सा चाद्यापि स्वयं रतेः प्रबोधं न मन्यते। केवलं तत्संस्कारबलात्तथा विकारान्करोति। यैर्द्रष्टा तथा कल्पयति। स्मितं किञ्चिन्मुग्धमित्याद्युदाहरणम्।

अभिनवः

सबाष्पगद्गदालापः सस्मितापाङ्गवीक्षितम्।
प्रेमदाक्षिण्यवृत्तिश्च तरुण्या हाव इष्यते॥

पद्मश्रीः

स्मिताक्षिभ्रूविकारो यः शृङ्गाराकारसूचकः।
मन्मथावेशको ज्ञेयो हावश्चित्तसमुत्थितः॥

शारदः

प्राप्तेषु शृङ्गारसमाह्वयेषु तन्व्यास्तु कामाङ्कुरचिह्नभूतम् ।
उत्पद्यते यस्मितवीक्षितं च यदोपवक्तुं कथितस्स हावः ॥

शिंगि:

दूरविलोचनानलज्वलितमदनतापनिर्वापणसुधासारसोदरस्मितं, प्रतिपदभङ्गिविदग्धवचनं, अपाङ्गगमागसिकलोकितं, स्नेहनिष्पन्दिप्रेमानुबन्धिकुलपालिकाचरणसूचिदाक्षिण्यानुवर्तिबाष्पभररुद्धकण्ठकुटीदुःखनिर्वापवाष्पगद्गदमालपितं यत्तरुण्याः स हावः ।

सागरः

हासः—स्थायिभावः

हासो नाम परचेष्टानुकरणकुहकासंबद्धप्रलापपौरोभाग्यमौर्ख्यादिभिरुत्पद्यते । तमभिनयेत्पूर्वोक्तैर्हसितादिभिरनुभावैः । पूर्वोक्तैः हास्यरसोक्तैरनुभावैरित्यर्थः ।

भरतः

हास्यः—रसः

हास्यो नाम रसो हास्यस्थायिभावात्मको भवेत् ।
वचनालङ्कारगात्रैर्विकृतैः स्वपराश्रितैः ॥
नटेनानुकृतरेषविभावैरुपजायते ।
अनुभावा भवन्त्यस्य स्पन्दो नासाकपोलयोः ॥
तथौष्ठचलनं स्वेदो दृष्टिव्याकोशकुञ्चने ।
मुखरागः पार्श्वपीडेत्याद्यास्तैरभिनीयते ॥
अवहित्थालसतन्द्रानिद्राग्लान्यादयः स्मृताः ।
सञ्चारिणो द्विधा चायं स्वपराश्रयतो भवेत् ॥
स्त्रीनीचप्रकृतावेष भूयिष्ठो दृश्यते रसः ।
षड्भेदाश्चास्य विज्ञेयाः त्रिविधां प्रकृतिं श्रिताः ॥
स्मितं च हसितं च स्यादुत्तमप्रकृतौ नरे ।
भवेद्विहसितं चोपहसितं मध्यमे नरे ॥
नीचेऽपहसितं चातिहसितं च प्रवर्तते ।
ईषद्विहसितैर्गण्डैः कटाक्षैरप्यनुल्बणैः ॥
अलक्षितद्विजं धीरं स्मितमित्युच्यते बुधैः ।
उत्फुल्लाननेत्रं यद्गण्डैर्विकसितैर्युतम् ॥
किञ्चिल्लक्षितदन्तं च हसितं तत्प्रकीर्तितम् ।
आकुञ्चिताक्षिगण्डं यत्सुस्वरं मधुरं तथा ॥
कालागतं स्वास्यरागं तद्वै विहसितं स्मृतम् ।
निकुञ्चितांसशीर्षं यज्जिह्मदृष्टिनिरीक्षणम् ॥
उत्फुल्लनासिकं यत्स्यात्तत्रोपहसितं तु तत् ।
अस्थानप्रभवं साश्रुनेत्रमुत्कम्पितांसकम् ॥
शिरः कम्पयुतं यच्च तच्चापहसितं स्मृतम् ।
संरब्धसाश्रुनयनं विक्रुष्टस्वरमुद्धतम् ॥
करोपगूढपार्श्वं यत्तच्चातिहसितं भवेत् ।
वाङ्नेपथ्याङ्गिकात्मायं शृङ्गारश्च त्रिधा स्मृतः ॥
यद्यत्प्रहसनं वाक्यं सहासो वाचिकः स्मृतः ।
विपर्यासेन विक्षेपो माल्याभरणवाससाम् ॥
यस्सनेपथ्यजो हास्य इति निर्णीयते बुधैः ।
विकटाभिनयत्वं च यदाङ्गानां विलोक्यते ।
स्वभावाद्वाऽथ कपटात्स हास्यस्त्वाङ्गिको भवेत् ॥

विप्रदासः

सावहित्थैस्सविकृतैर्नेपथ्यैर्व्यङ्गदर्शनैः ।
असंबद्धैस्तथालापैर्हासः स्यात्कुहकादिभिः ।
स्वप्नावहित्थालस्याः स्युस्तन्द्राद्या व्यभिचारिणः ॥

सागरः

हास्यरसो हासप्रभवः । तस्य विकृताकृतिविश्लेषाद्यो विभावाः । गण्डोल्लसननयनविकासदर्शनप्रकाशा अनुभावाः । निद्रालस्यश्रमादयो व्यभिचारिणः । द्विविधश्चायं आत्मस्थःपरस्थश्च । यथा—स्वयं हसति तदात्मस्थः । यदा तु परं हासयति तदा परस्थः । आत्मस्थो यथा—पाणौ कङ्कणमुत्फणः पशुपतेर्हासोद्गमः पातु वः; इति । परस्थो यथा—भिक्षो मांसनिषेवणमित्यादि । स्मितादयो भेदाः षट् । एषां च स्वपरस्थविभावभेदाद्द्वादश भेदाः । उत्तममध्यमाधमभेदात्पुनस्त्रिधा ।

रसविवेकः

अप्प्रत्ययान्तशब्दोऽयं हास इत्यभिधीयते ।
घञन्तो हासशब्दस्तु द्वयोः प्रत्यययोरपि ॥
विकृताङ्गवयोरूपभाषालङ्कारकर्मभिः ।
जनान्हासयतीत्येवं तस्माद्धास्यः प्रकीर्तितः ॥

शारदातनयः

हास्यम्

हास्यानि तेन वस्तूनि यद्दृष्टौ दुःखितोऽपि तत् ।
सहसा हसति स्पष्टसुखीवं विगतज्वरः ॥

भावविवेकः

हास्यकरणम्—नृत्तकरणम्

स्थानकन्त्वेकजान्वाख्यं मस्तकन्तु प्रकम्पितम् ।
अवहित्थकरौ हास्यदृष्टिश्चार्यपि हास्यका ।
यत्रैवं क्रियते नृत्तं तद्धास्यकरणं मतम् ॥

हास्यचारीलक्षणम् ।

विकटा हास्यहेतुश्च विदूषककृता यथा ।
हास्या गतिरिति ख्याता तदङ्गोपाङ्गसङ्गता ॥

हास्यरसः

सोऽयं हास्यो रसो नाम परिहासनिमित्ततः ।
यत्किञ्चिच्चेष्टयत्येव पुरुषानपि धीमतः ॥

भावविवेकः

हास्या—दृष्टिः

क्रमशः कुञ्चितपुटा विभ्रान्ता स्वल्पतारका ।
हास्या दृष्टिः प्रयोक्तव्या कुहके हास्यकर्मणि ॥

सोमेश्वरः

किञ्चिदभ्यन्तरालीनं विचित्रभ्रमणोज्ज्वलम् ।
दधती तारकायुग्ममाकुञ्चितपुटद्वयम् ॥
लोकानुसारतो मन्दमध्यतीव्रतयान्वितम् ।
मनो विनोदिनी दृष्टिर्हास्या हास्ये प्रशस्यते ॥

वेमः

हास्या दृष्टिरसावुक्ता सद्भिर्विस्मापने मता ।

अशोकः

अव्यक्तसञ्चारवती दृष्टिर्हास्या प्रकीर्तिता ।

शारदातनयः

हिन्दुघण्ठारवः—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स रि म प ध नि ध स.
(अव) स नि ध नि प ध म ग रि ग स.

मज

हिन्दोलः—मेलरागः

हिन्दोलेऽथ रिपौ त्याज्यौ कोमलो धैवतो भवेत् ।
द्वितीयप्रहरोत्तरगेयः ।

अहोबिलः

—रागः

हिन्दोलको रिधत्यक्तः सत्रयो गदितो बुधैः ।
मूर्छना शुद्धमध्या स्यादौडवः काकलीयुतः ॥

दामोदरः

स्वरनामप्रसिद्धासु सप्तजातिषु धैवतीम् ।
आर्षभीं च परित्यज्य हीन्दोलो नाम जायते ॥

धैवतर्षभसंत्यक्तः षड्जन्यासग्रहांशकः ।
आद्यालङ्कारवर्णोऽसौ शुद्धमध्यममूर्छनः ॥
काकलीसङ्गसुभगो हिन्दोलो लक्षितस्ततः ।
मार्गहिन्दोलजातोऽथ हिन्दोलस्तारमध्यमः ॥
षड्जन्यासग्रहांशश्च षड्जपञ्चमकम्पितः ।
अयमेव वसन्तस्याद्देशीहिन्दोल एव च ॥

हरिः

न्यासांशग्रहसंध्वनिश्च सुरभोगश्शुद्धमध्यान्वितः
शृङ्गारे स्फुटकोकिलप्रियलसत्तानस्स्मरैकाधिपः ।
धैवत्यार्षभिकाख्यजातिरहितस्सर्वस्वजातिष्वसौ
हिन्दोलो रिधवर्जितश्च हृदयस्यान्दोलिताज्जायते ॥

नान्यः

षड्जन्यासांशसंभूतो धैवतर्षभवर्जितः ।
आर्षभीधैवतीवर्जः हिन्दोलस्सर्वजातिजः ॥

कश्यपः

—रागः (औडुवः)

षड्जन्यासग्रहांशोयं हिन्दोलो रिधवर्जितः ।
अधैवत्यार्षभाज्जातो वीरशृङ्गारयोस्सदा ॥
धैवतीमार्षभीं विना अन्यजात्युत्पन्नोऽयमित्यर्थः ।

नारायणः

—रागः

धैवत्यार्षभिकावर्जं शुद्धजातिसमुद्भवः ।
षड्जन्यासग्रहांशस्स्यात् हिन्दोलो रिधवर्जितः ॥
निमन्द्रः काकलीयुक्तो वसन्ते गीयते बुधैः ।
सांशत्वं मध्यमाषाड्जानिषादिन्या निमन्द्रता ।
पञ्चम्या काकलीत्वं च गान्धार्या रिधहीनता ॥

मोक्षः

—मेलरागः (नटभैरवीमेलजन्यः)

(आ) स ग म ध नि स.
(अव) स नि ध म ग स.

मज

—रागः

देशी वसन्तसदृशो हिन्दोलो रागजो मतः ।

मदनः

**हिन्दोलकः—रागः**

रिषभेण निषादेन समष्षड्जो विराजितः ।
अन्दोलितो निजस्थाने मध्यमादौ विलम्बितः ॥
पञ्चमे मध्यमे चैव नित्यं भवति नान्यतः ।
एष पूर्णः स्वरैस्सर्वैः ख्यातो हीन्दोलको वरः ॥

सोमेश्वरः

**हिन्दोलवसन्तः—मेलरागः (नटभैरवीमेलजन्यः)**

(आ) स ग म ध नि स.
(अव) स नि ध प म ध म ग रि ग स.

मञ्ज

**हिन्दोलरागध्यानम्**

नितम्बिनी मन्दतरङ्गितासु डोलासु खेलासुखमादधानः ।
खर्वःकपोतद्युतिकामयुक्तो हिन्दोलरागः कथितो मुनीन्द्रैः ॥

सङ्गीतसरणिः

न्यग्रोधाग्रजटाग्रबद्धकनकप्रद्योतडोलासने
श्रीकृष्णे कमलैश्च पूजनपरां भक्तिप्रयुक्तात्मकाम् ।
गौराङ्गीं मणिभूषणां मुरलिकागानप्रियां मे मनो
हिन्दोलां वरचित्रवस्त्रलसितां तुङ्गस्तनीं ध्यायति ॥

रागसागरः

**हिन्दोली—हस्तः**

हिन्दोल्यामर्धचतुरम् ।

भ्ङ्गारः

**हिमक्रिया—रागः**

सप्तमकांशन्यासा धैवतषड्जेन सर्वथा त्यक्ता ।
गापन्यासगतारा हिमकृतिरत्रोदिता कविभिः ॥

नान्यः

निषादांशग्रहन्यासा षड्जधैवतवर्जिता ।
गापन्यासा गतारा च सदा हिमकृतिर्मता ॥

मतङ्गः

**हिमजः—मेलरागः (शुभपन्तुवरालीमेलजन्यः)**

(आ) स रि ग म ध म प ध नि स.
(अव) स नि ध प म रि ग रि स. मञ्ज

**हिमवर्धिनी—मेलरागः (हनुमत्तोडीमेलजन्यः)**

(आ) स रि म प नि स.
(अव) स नि ध प म ध म ग रि स.

मञ्ज

**हिमवन्तिकः—मेलरागः (गमनश्रममेलजन्यः)**

(आ) स रि ग प ध नि स.
(अव) स नि ध प म प ग रि स.

मञ्ज

**हिरण्यक्रिया—मेलरागः (मायामालवगौलमेलजन्यः)**

(आ) स म ग म प ध स.
(अव) स नि ध प म ग म स.

मञ्ज

**हिरण्यलता—मेलरागः (हनुमत्तोडीमेलजन्यः)**

(आ) स रि ग रि म प ध नि स.
(अव) स ध प म ग रि स.

मञ्ज

**हुङ्कारः—वर्णालङ्कारः (सञ्चारी)**

गतप्रत्यागतत्वेन समन्द्रा द्विस्वरा कला ।
अन्यास्त्वेकैकवृद्धाः स्युर्हुङ्कारे षट्कलाः स्मृताः ॥

जगदेकः

स्वरमेकैकमारुह्य प्रत्यागच्छेत्पुनः पुनः ।
विदधीत कलाच्छेदं हुङ्कारे प्रथमे स्वरे ॥

सरिसा, सरिगरिसा, सरिगमगरिसा, सरिगमपमगरिसा
सरिगमपधपमगरिसा, सरिगमपधनिधपमगरिसा ।

मोक्षदेवः

**हुडुक्का—अवनद्धम्**

एकहस्ता हुडुक्का स्यान्मध्येऽष्टाङ्गुलसम्मता ।
सप्ताङ्गुलापि मुखयोः पिण्डे त्वेकाङ्गुला मता ॥
सपादाङ्गुलिनेन वल्लीवलयनिर्मितम् ।
षट्छिद्रवेष्टितं सूत्रैः तत्र स्यात्कुण्डलीद्वयम् ॥
प्रान्ते तिस्रोऽर्गला ...... एतास्तु कलशा मताः ।
गर्भे च रज्जुमध्यस्थां कुर्यादुदरपट्टिकाम् ॥

विस्तारे त्र्यङ्गुला तस्यां वामतस्तन्तु निक्षिपेत् ।
रज्वा समञ्चिते पक्षद्वयेप्युत्कक्षयोस्तयोः ॥
योजनार्थं विधातव्या द्विगुणा स्कन्धपट्टिका ।
हुडुक्कायाश्चतुर्थांशे छिद्रं पादाङ्गुलं मतम् ॥
कुर्यान्नादार्थमेतस्याश्चाक्षराणि प्रचक्ष्महे ।
टवर्गश्च तवर्गश्च कवर्गः पञ्चमं विना ॥
रकारश्च हकारश्च प्रोक्तान्येतानि षोडश ।
सर्वेषामक्षराणां तु क्षकारोऽत्र प्रशस्यते ॥

सोमराजः

चतुर्विंशाङ्गुलायामाष्टाविंशति वेष्टना ।
पिण्डेऽङ्गुलमिता सा स्यादष्टाङ्गुलमितान्तरा ॥
एकादशाङ्गुले कार्ये वल्लीमण्डलिके शुभे ।
उद्दलीपिहिते कार्ये षड्रन्ध्रे सूत्रगुम्भिते ॥
अर्गलानि पुरस्त्रीणि द्वे पार्श्वे कलशानि च ।
पश्चाद्देऽथ विधातव्ये तद्वत्कलशसंयुते ।
मध्ये सूत्रान्तराले च भवेदुदरपट्टिका ॥
तदन्तर्वाद्यकाले तु वामहस्तं विनिक्षिपेत् ।
रज्वा समं ...... पक्षद्वयेप्युत्कक्षकौ तयोः ॥
तद्योजनाय द्विगुणा कर्तव्या स्कन्धपट्टिका ।
अङ्गुलस्य चतुर्भागं छिद्रमेकं प्रकल्पयेत् ॥
कृतं भूलोकमल्लेन स्कन्धवाद्यस्य लक्षणम् ।
झेङ्कारोऽत्र हुडुक्कायां प्रधानः परिकीर्तितः ॥

सोमेश्वरः

लक्ष्यते हरिपालेन वाद्यं स्कन्धावजाभिधम् ।
लेयामो हस्तमात्रः स्यान्मध्योऽष्टाङ्गुलसम्मितः ॥
पिण्डोऽङ्गुलमितः कार्यो मुखं सप्ताङ्गुलं मितम् ।
पादाङ्गुलप्रमाणेन कल्पयेद्वलयद्वयम् ॥
सूत्रवेष्टनमात्रेषु रन्ध्रषट्कं च कारयेत् ।
पूर्वोक्तेन प्रकारेण कल्पनीया तथोद्दली ॥
द्वे द्वे सकलशे कार्ये पार्श्वयोर्वलयद्वयोः ।
मध्यरज्वन्तरालेच कुर्यादुदरपट्टिकाम् ॥
पट्टिकायां करं वामं वादनावसरे क्षिपेत् ।
हुडुक्कायां चतुर्थांशे नादहेतोश्च वादकः ॥
अङ्गुलस्य चतुर्भागं छिद्रमत्र तु कारयेत् ।
असुष्यरुचिरां श्लक्ष्णां कुर्वीत स्कन्धपट्टिकाम् ॥

स्कन्धायुजस्य वाद्यस्य वामहस्तस्त्रिधा भवेत् ।
स्कन्धश्च कूर्परः पश्चान्मणिबन्धनमित्यपि ॥
सूचीपूर्वोकर्तरी च तथा डमरुकर्तरी ।
बोल्लवणी वर्णकश्च वाद्या दक्षिणहस्तकः ॥

हरिपालः

—वादः

प्रोच्यतेऽथ हुडुक्काया लक्षणं सूरिसम्मतम् ।
वितस्तियुगदैर्घ्येऽष्टाविंशत्युङ्गलका पुनः ॥
परिणाहेऽङ्गुलं मात्रा पिण्डे सप्ताङ्गुले मुखे ।
वल्लीनिर्मितकुण्डल्यावेकादशाङ्गुलके मते ॥
सपादाङ्गुलकाः स्थौल्ये उद्दलीकृतबन्धने ।
मुखाभ्यां भवतो रन्ध्रे द्विगुणैस्त्रिभिरन्वितैः ॥
कर्तव्यं तत्र कलशमग्रभागेऽर्गलात्रयम् ।
अर्गलायुगलं पृष्ठे बन्धरज्वन्तरे ततः ॥
अङ्गुलत्रयविस्तारां सुशुक्लोदरपट्टिकाम् ।
बध्वा पक्षद्वये गाढं तत्र चोत्कक्षकावुभौ ॥
तयोर्द्विगुणितां स्कन्धपट्टिकां सुदृढां न्यसेत् ।
छिद्रमङ्गुलतुर्यांशसम्मितं नादबोधकम् ॥
भवेद्यस्यां हुडुक्का सा प्रोच्यते वाद्यवेदिभिः ।
वामं वादनकाले च करं स्यात्पट्टिकान्तरे ॥
क्षिप्त्वा स्कन्धे तदास्कन्दपट्टिकां दक्षिणेन तु ।
पाणिना वादनं कुर्याद्वादको नियतस्सुधीः ॥
देङ्कारवर्जितान्वर्णान्भवन्ति पटहानिह ।
झेङ्कारश्च हुडुक्कायां तदुद्वैर्मुख्यतया मतः ।
इमां स्कन्धावजं केचिल्लक्ष्म ज्ञात्वावजं जगुः ॥

मोक्षदेवः

हुदामतिः—मेलरागः (धीरशङ्कराभरणमेलजन्यः)

(आ) स रि म प ध स.

(अव) स नि ध प म ध म ग स.

मज

हुरुमयीध्वांडः—देशीनृत्तम्

सूत्रपूर्वं वामपादं कुट्टनादुत्प्लुतिर्यदा ।
संलग्नो दक्षपादस्य जानुमूर्ध्नि पदेतरः ॥
तिर्यक्प्रसारितो दक्षो वलनाद्वामपादगः ।
उक्ता हुरुमयी सद्भिर्ध्वाडविद्या विशारदैः ॥

वेदः

हुल्लम्—देशीनृत्तम् (उडुपाङ्गम्)

स्थानके चतुरश्रे च शिखरद्वितयं हृदि।
कुर्याल्लताकरौ तत्रोत्तानौ नम्रतया वपुः॥
अलातां चारिकां कृत्वा चतुरश्रं समाश्रयेत्।
एवमङ्गान्तरं कृत्वा पुनः पार्श्वद्वये तथा॥
अलाता दक्षिणे द्विःस्याद्वामपार्श्वे तथैव च।
हृदि स्यात्सव्यशिखरो वामपार्श्वे प्रसारितः॥
दक्षपार्श्वमुखो भूत्वा गारुडं स्थानकं चरेत्।
पुनःप्रसारणं वामपताकस्य समाचरेत्॥
दक्षिणः प्रसृतः पार्श्वे भ्रमरीं वामतश्चरेत्।
एवमेव विधातव्यं वामदक्षिणयोर्नटैः॥
सम्मुखं गारुडं प्रोक्तं यथापूर्वं पुरातनैः।
वामवर्तेन तिरिपं ततश्चरणकुट्टनम्॥
पुरोऽलपद्मद्वितयं पर्यायेण व्रजेदधः।
हृदये वामशिखरो दक्षः पार्श्वे प्रसारितः॥
तकारलक्षणं प्राहुः सङ्गीतज्ञविचक्षणाः।
लघुशेखरतालेन हुल्लोडुपमुदीरितम्॥

वेदः

हुसेनी—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म प नि ध नि स.
(अव) स नि ध म प म ग रि ग स.

मञ्ज

हृच्छिका—रागः (षाडवः)

आन्दोलितसपा धान्तग्रहा मध्यमवर्जिता।
गेया यामद्वयादूर्ध्वं शृङ्गारे हृच्छिका बुधैः॥

नारायणः

हृदयोन्मूलिनी—श्रुतिः

धैवतस्य तृतीया श्रुतिः।

हृष्टा—दृष्टिः

हासगर्भा विशत्तारा चञ्चला च निमेषिणी।
किञ्चिदाकुञ्चिता दृष्टिर्हृष्टा हासे नियुज्यते॥

सोमेश्वरः

स्मिताकृतिर्विशत्तारा फल्गुल्लयुगात्रला।
मनागाकुञ्चितप्रान्ता दृष्टिर्या च निमेषिणी।
सा हृष्टा दृष्टिरादिष्टा हासे नृत्तविचक्षणैः॥

अशोकः

हृष्टयका—मूर्छना (मध्यमग्रामे सप्तमी)

(आ) प ध नि स रि ग म.
(अव) म ग रि स नि ध प.

पण्डितमण्डली

हृष्यका—मूर्छना

हृष्यन्त्यप्सरसश्चास्यां गान्धर्वाश्चैव सा यतः।
मूर्छना पञ्चमस्येयं हृष्यका चार्कदेवता॥

नान्यः

ऋषिकाशब्दे द्रष्टव्यम्।

हेज्जुज्जि—मेलरागः (गायनप्रियमेलजन्यः)

(आ) स रि ग रि म ग म प नि ध स.
(अव) स नि ध प म रि स.

मञ्ज

हेणावली—मेलरागः (खरहरप्रियामेलजन्यः)

(आ) स रि ग म ध स.
(अव) स नि प म ग रि ग स.

मञ्ज

हेतुः—लक्षणम्

यत्प्रयोजनसामर्थ्याद्वाक्यमिष्टार्थसाधनम्।
समासोक्तं मनोग्राहि स हेतुरिति संज्ञितः॥

भरतः

फलसाधनशक्तियुक्तं मितशब्दार्थं विचित्रभङ्गयुक्तं वचनं हेतुः। यथा—तापसवत्सराजे-षष्ठेऽङ्के कृतमरणनिश्चयां वासवदत्तां परिबोधयन्यौगान्धारायण आह। आसृष्टेः प्रतिपार्थिवमित्यादि। अत्र देव्या यत्कृतं तदिष्टार्थसाधनमेव। अचिरेणैव शुभफलमनुभवसीति।

हेतुचिन्तनम्—सन्ध्यङ्गम्

मातृगुप्तमते मुखसन्ध्यङ्गम् (द्वितीयं)

प्रार्थनाविषये कार्यकारणविचारः।
गालवराजसंवादो मायामदालसनाटके।

सागरनन्दी

हेत्ववधारणम्—सन्ध्यन्तरम्

निश्चयो हेतुनार्थस्य मतं हेत्ववधारणम्। यथा—शाकुन्तले स्त्रीणामशिक्षितेत्यादि दुष्यन्तवाक्यम्। अत्र परभृतनिदर्शनोपबृंहितेन स्त्रीत्वहेतुना मृषाभाषणस्यार्थस्य निश्चयो हेत्ववधारणम्।

सिंगः

हेतोर्मिथ्याकल्पना हेत्ववधारणम्। सागरः

यथा— मुद्राराक्षसे— राक्षस भोः दृश्यते जागर्ति खलु कौटिल्यः-इति चाणक्यवाक्यां राक्षसप्रयुक्ते हेतौ अवधारणम्। भोजः

हेमक्रिया—मेलरागः (नटभैरवीमेलजन्यः)
(आ) स रि ग म प ध नि स.
(अव) स ध प म रि ग म रि स.

मञ्ज

हेमक्री—उपाङ्गरागः
धैवत्यङ्गं तु हेमक्री पग्रहन्यासमन्द्रगा।

भट्टमाधवः

हेममन्दारः—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) नि ध नि स रि म ध म प ध नि.
(अव) स प म ग म रि स नि ध स.

मञ्ज

हेमवती—मेलकर्ता (रागः)
स रि ग ० ० ० म प ० ० ० ध नि स.

मञ्ज

हेमसारङ्गः—मेलरागः (हरिकाम्भोजीमेलजन्यः)
(आ) स रि ग म प ध नि प ध प स.
(अव) स प म ग रि स.

मञ्ज

हेमार्णवः—मेलरागः (कामवर्धिनीमेलजन्यः)
(आ) स ग म प ध नि स.
(अव) स नि ध म ग रि स.

मञ्ज

हेमा—मूर्छना (जीमूतग्रामे चतुर्थी मूर्छना)
मूर्छना मध्यमस्यैव हेमा नाम प्रजायते।
प्रातस्संकीर्तिता सा तु नूनं वित्तप्रदा भवेत्॥

नादिमत्तः

हेलप्रभातं—मेलरागः (धीरशङ्कराभरणमेलजन्यः)
(आ) स रि ग म प ध नि ध स.
(अव) स नि ध प म रि ग रि स.

मञ्ज

हेला—भङ्गतालः
लचतुष्कं गुरुद्वयं पुनर्लचतुष्कं गुरुद्वयम्।
।।।। ऽ ऽ ।।।। ऽ ऽ

तुम्बुरु नोऽन्यश्च

—अनुभावः (अङ्गजो विकारः)
य एव हावास्सर्वेषां शृङ्गाररससंभवाः।
समाख्याता बुधैर्हेला ललिताभिनयात्मिका॥

भरतः

यदा तु रतिवासनाप्रबोधात्तां प्रबुद्धां रतिमभिमन्यते केवलं समुचितविभावोपग्रहविरहान्निर्विषयतया स्फुटीभावं न प्रपद्यते तदा तज्जनितबहुतराङ्गविकारात्मा हेला हावस्य संबन्धिनी क्रिया प्रसरत्वावेगवाहित्वमित्यर्थः। वेगेन हि गच्छन् हेलतीत्युच्यते लोके। एवं चोद्भिद्योद्भिद्य विश्राम्यन् हावः। स एव प्रसरणैकस्वभावो हेला। यथा—कुरङ्गीवाङ्गानीत्यादि। अत्र ह्यन्तर्गतरतिप्रबोधमात्रमुक्तं, न स्वाभिलाषशृङ्गार इति मन्तव्यम्। भावहावहेलात्रितयं ब्राह्मणस्योपनयनमिव भविष्यत्पुरुषार्थसब्रपीठबन्धत्वेन योषितामामनन्ति।

अभिनवः

शृङ्गाररसप्रवृद्धौ या रत्यभिनिवेशनिष्ठा सा हेला।

सागरः

प्रौढेच्छा यामिरूढानां नारीणां सुरतोत्सवे।
शृङ्गारशास्त्रतत्त्वज्ञैः हेला सा परिकीर्तिता॥

पद्मश्रीः

स एव हावः कार्यरूपेण हेलाकारेण परिणमते। सुकुमारशृङ्गारचेष्टात्मिका मनोगता नानाप्रकारेणाभिव्यक्तशृङ्गाररसं सूचयन्ती हेला।

नरसिंहः

हैरण्यगर्भकपालगानम्
हैरण्यगर्भं तार्तीयं शुद्धपञ्चमरागतः।
त्रिपुरयुवतीत्यादि गानम्।

कुम्भः

हैरम्बम्—करणम्
पादौ चाषगतिर्यत्र पार्श्वमण्डलिनौ करौ।
वामदक्षिणयोश्शीघ्रं देहं तदनुगं भवेत्।
एतद्धैरम्बकरणं प्रोक्तं हरिमहीभुजा॥

हरिपालः

होन्मुः

वीणातन्त्री प्रहारेचमत्कारः।
तन्त्रीचमत्कारशब्दे द्रष्टव्यम् ॥

होय्लूहुरुमयी—स्थललागनृत्तम्

होयलं प्रथमं कृत्वा ततो हुरुमयी भवेत्।
तिर्यगूर्ध्वं पदा यत्र कुट्टनेन विना यदा।
होय्लाख्या हुरुमयी तण्डुना प्रतिपादिता ॥ वेदः

होय्लोडुपम्—देशीनृत्तम्

ऊर्ध्वसञ्चे मण्डले स्याद्वामोर्ध्वं च प्रसारितः।
पताको दक्षिणं तत्र लताहस्तं च कारयेत् ॥
उत्थाप्य दक्षिणं पादं वामाङ्गे नम्रतां चरेत्।
जान्वन्तिकं वामपार्श्वे शिरः स्थाप्य हृदम्बुजे ॥
शिखरद्वन्द्वमास्थाय दक्षिणावर्ततस्ततः।
कृत्वा भ्रमरिकां चारीं भवेत्पृष्ठमुखो नटः ॥
पताकयोः प्रसरणं पार्श्वयोः कारयेत्तदा।
उत्थाप्य वामजानुं च सव्यवद्धृदये तथा ॥
शिखरद्वितयं कृत्वा दक्षिणावर्ततस्ततः।
पूर्ववत्सम्मुखो भूत्वा वलनद्वितयात्मिकाम् ॥
भण्डिभ्रमरिकां कुर्यादेवमङ्गान्तरेण तु।
वामदक्षिणयोः पार्श्वे पूर्ववत्सर्वमाचरेत् ॥
वामपार्श्वमुखे दक्षपताकस्य प्रसारणम्।
दक्षपार्श्वे विधायाशु तमेव शिखरं हृदि ॥
कृत्वा पश्चान्मुखो भूत्वा गारुडं स्थानमाचरेत्।
प्रसारितपुरस्तत्र दक्षिणस्तु पताककः ॥
तथैवाङ्गान्तरेणापि पश्चाद्वक्त्रस्तु नर्तकः।
सम्मुखे चतुरश्रेऽत्र प्रसारितपताककः ॥
दक्षपार्श्वे दक्षिणस्तु वामं शिखरमाचरेत्।
हृदये दक्षिणावर्तभ्रमरीं द्रुतमानतः ॥
वलनद्वितयां चान्ते मूर्छं कृत्वा तकारणम्।
क्रियते यत्र तत्प्रोक्तं द्वादशं होय्लोडुपम् ॥ वेदः

ह्रादः—करणधातुः

अष्टौ प्राग्लघवो यत्र नवमेऽन्ते गुरुर्भवेत्।
तन्त्र्यामाहन्यमानायां स धातुर्ह्रादसंज्ञकः ॥ नान्य

ह्रादोऽष्टलघुरन्त्यगः। पार्श्व

ह्रादमानः—वर्णालङ्कारः (सञ्चारी)

मन्द्रात्तृतीयकं गच्छेद्द्वितीयं पुनरादिमम्।
तद्वदेकैकहीनाच्च ह्रादमाने कलाः पराः ॥
सगरिसा रिमगरी गपमगा मधपमा पनिधपा

मोक्षदेवः

ह्रीः—सन्ध्यन्तरम्

यथा—तापसवत्सराजे पद्मावती लज्जावनतमुखी स्मितं करोति। पुंसोऽपि ह्रीः—पार्थविजये चित्रसेनबद्धं दुर्योधनं प्रति अर्जुनवाक्यम्। यथा—स्वैवैरित्यादि तच्छ्रुत्वा दुर्योधनः। अण्ण धीं इति ह्रियं पठन्ति। भोजः

ह्रादि—दर्शनम्

ह्रादि तद्दृष्टमात्रे यच्छोकादिव्यपनोदनम्।

शारदातनयः

ह्रादिनी—श्रुतिः

गान्धारस्य प्रथमा श्रुतिः।

हंसः—तानः (षड्जग्रामे नारदीयतानः)

ग म प ध नि स रि ? नान्यः

—देशीतालः

हंसे सविरती लघू। कुम्भः

—मेलरागः

गनिभ्यां वर्जितो हंसो रिधकोमलसंयुतः।
द्वितीयप्रहरोत्तरगेयः। अहोबिलः

हंसकलासः

हस्तौ विधाय हंसास्यौ यत्र हंसीव नर्तकी।
अतिरम्याङ्घ्रिविन्यासैः नानागतिमनोहरम्।
यदा नृत्यति हंसाद्यः कलासस्स तदोदितः ॥

अशोकः

ललितैश्चरणन्यासैः यत्र हंसीव हस्तकौ।
हंसास्यौ संविधायाथ विचित्रगतिपेशलम्।
यत्र नृत्यति स प्रोक्तः कलासो हंससंज्ञकः ॥

कुम्भः

—(प्रथमः)

मकरं दक्षपार्श्वस्थं पताकं वामहस्तकम् ।
पुरतो यत्र हंसीव यायाद्भेदस्स आदिमः ॥

कुम्भः

—(द्वितीयः)

मुकुलं हस्तमारभ्य पादाभ्यां पृष्ठतो व्रजेत् ।
विचित्रलास्यभेदज्ञा हंसीवासौ द्वितीयकः ॥

कुम्भः

—(तृतीयः)

हस्तं हंसास्यमाधाय पार्श्वयोर्ललितां गतिम् ।
आलापवर्णतालानां क्रमतो यत्र नृत्यति ।
हंसीवासौ तृतीयोऽयं भेदः प्रोक्तः पुरातनैः ॥

कुम्भः

हंसध्वनिः—मेलरागः (धीरशङ्कराभरण.मेलजन्यः)

(आ) स रि ग प नि स.
(अव) स नि प ग रि स.

मञ्ज

हंसनादः—देशीतालः

हंसनादे लपौ द्वौदौ प्लुतश्चान्ते प्रकीर्तितः ।
।ऽं००ऽं

वेमः

ससारीगाधपमा ।

जगदेकः

ततकट धिकटथहिं थहिं कधुगततथिद्धिद्रैं गणगणटैं ।

सुधाकलशः

हंसपक्षः—हस्तः

यदि किञ्चिन्नमन्मूलं तर्जन्याद्यङ्गुलित्रयम् ।
पताकस्य तदाहस्तं हंसपक्षं प्रचक्षते ॥
अयमाचमने कार्यश्चन्दनाद्यनुलेपने ।
हनुदेशगतस्तु स्याद्दुःखजे हनुधारणे ॥
मण्डलीकृतबाहू तौ महास्तम्भप्रदर्शने ।
आलिङ्गने च प्रत्यक्षे परोक्षे स्वस्तिकीकृतौ ॥
रोमाञ्चाद्यनुभावैस्तु रसेष्वेव यथारसम् ।
अनुभावा रसवशात्कार्या हस्तान्तरेष्वपि ॥

शार्ङ्गः

हंसपदः—प्रबन्धः

उद्ग्राहो देवभाषाभिः ध्रुवो मानुषभाषया ।
आभोगश्च तयोऽप्येते सानुप्रासमनोहराः ॥
यत्र हंसपदस्स स्यादस्य तालो यथेप्सितः ।

पण्डितमण्डली

हंसपदी—देशीतालः

ततो हंसपदी भवेत् । सविरामैश्चतुर्भिर्लैरन्त्यनिःशब्दसंयुतैः ।
।।।ॅ

लक्ष्मणः

हंसपादः—तालाक्षरम्

तालाक्षरशब्दे द्रष्टव्यम् ।

हंसमञ्जरी—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि ग प ध स.
(अव) स नि प म रि स.

मञ्ज

हंसमुखः—देशीतालः

मगणो भगणश्चैव गुरुश्चाथ प्लुतत्रयम् ।
सगणश्च प्लुतश्चेति ताले हंसमुखाह्वये ॥

28 मात्राः ।

तालप्रस्तारः

हंसलीलः—देशीतालः

हंसलीले तु संप्रोक्तं सविरामं लघुद्वयम् ।

वेमः

स रि ग रि

जगदेकः

—प्रबन्धः

पदैः पाटैश्च रचिता यस्योद्ग्राहादयः परम् ।
हंसलीलेन गीयन्ते हंसलीलस्स उच्यते ॥
हंसलीलेनेति । हंसलीलाख्यतालेनेत्यर्थः ।

पण्डितमण्डली

हंसलीला—गतिः

हंसस्येवगतिर्मन्दा मन्दव्यावर्तनान्तरा ।
हंसलीलागतिस्सा प्रोच्यते नटैः ॥

देवेन्द्रः

—नृत्ते बन्धः

आद्यपङ्क्तौ द्वितीयेऽस्मिन्स्थित्वा स्थाने तु नर्तकी।
स्वपदाचालिता गच्छेत्तत्पङ्क्तेः प्रथमं पदम्॥
प्रथमा च द्वितीयं च तृतीयास्यात्पदक्रमात्।
तृतीया स्यात्तृतीयं च चतुर्थं च व्रजेत्पदम्॥
तुर्यपङ्क्तेस्तुरीयं च तृतीयं च द्वितीयकम्।
प्रथमं च पदं प्राप्य तृतीयः स्यात्तथादिमम्॥
द्वितीयं च द्वितीयं स्यात्तृतीयं च चतुर्थकम्।
क्रमात्प्राप्य यदाद्यायाः चतुर्थस्य तृतीयकम्॥
व्रजेदन्या तु तत्पङ्क्तेः तृतीयं स्थानमाश्रिता।
चरेत्तत्प्रातिलोम्येन चञ्चच्चरणविभ्रमाः।
यत्रासौ हंसलीलाख्यो बन्धो बन्धुरविभ्रमः॥

वेमः

हंसवक्त्रः—हस्तः

लग्नाग्रेताग्निसंस्थानास्तर्जन्यङ्गुष्ठमध्यमाः।
शेषे यत्रोर्ध्व विरले हंसास्यः सोमिधीयते॥
अयं मृदुनि निस्सारे श्लक्ष्णेऽल्पे शिथिले लघौ।
मर्दितं मथितं क्षिप्तं दधदग्रं विधूनितम्।
औचित्याच्युतयुक्तं तु कुसुमावचयादिषु॥

शार्ङ्गः

हंसवधूः—प्राकृतगाथा

त्रिपञ्चाशल्लघव द्वौ गुरू।

विरहाङ्कः

हंसवारिधिः—मेलरागः (मायामालवगौलमेलजन्यः)

(आ) स रि म प ध स.
(अव) स नि ध प म रि स.

मज

हंससूनुः—देशीतालः

हंससूनुर्गपुद्रौपुः।
ऽ ऽ̇ । ० ऽ̇

मदनः

पुरिति प्लुतो मदनपालग्रन्थे।

हंसास्यम्—ध्रुवावृत्तम्

दशमं सप्तमं यत्र चतुर्थकमथ षष्ठम्।
तृतीयं निधनं गुरु कथितं मर्कटं जगतीगतम्॥

णलिनी पत्तमझे परिहिंडिदगमणा आसखिण्णभमरावली।
नलिनीं पत्रमध्ये परिहिंडितगमनायासखिन्ना भ्रमरावली।

भरतः

हंसास्यस्वस्तिकहस्तः

करद्वयेन हंसास्यौ श्लिष्टौ स्यातां तथा पुनः।
तर्जनी वक्रितास्याच्चेद्धंसास्यस्वस्तिको भवेत्॥
पुरोभागेत्वयं हस्तः रमायां नासिकार्थके।

विनायकः

हंसिनी—मात्रावृत्तम्

र् य ल ग

विरहाङ्कः

हंसी—गतिः

परावृत्ततनूपार्श्वं वितत्यनतरितं शनैः।
एकैकं तत्पदं न्यस्य कपित्थं करयोर्वहन्।
हंसवद्गमनं यत्तु सा हंसीगतिरीरिता॥

नाट्यदर्पणे

—प्राकृते मात्रावृत्तम्

चतुर्मात्रिकः एकः पञ्चमात्रिक एकः।
चतुर्मात्रिकः पञ्चमात्रिकः गः।

विरहाङ्कः



## अ

### अक्षराडम्बराः

श्रोतसां वेगवत्कम्पो यत्स्वरेषु वहस्तु सः ।
यत्राक्षराणां दृश्येत स्फूर्तिराडम्बराकृतिः ।
मुख्यास्ते परिविज्ञेया अक्षराडम्बरोद्भवाः ॥

कुम्भः

### अक्लेशकेशवकुञ्जरतिलकप्रबन्धः

गीतो भैरवरागेण तालो वर्णयतौ तथा ।
आभोगान्तस्थितैः पाटै सर्वैः पद्यांचितस्ततः ।
अक्लेशकेशवादिमकुञ्जरात्तिलकाभिदः ॥

कुम्भः

### अगुरुवाद्यलक्षणम्

समभूमौ परिस्थाप्य ताम्रं कुम्भाधरे मुखम् ।
अङ्गुलीभिः समुद्राभिः कुर्यादगुरुवादनम् ॥

सोमराजदेवः

### अङ्गविधिः

स्थितं प्रवृत्तं च तथा माहाजनिकमेव च ।
व्यङ्गोऽन्तः स्यादथ व्यङ्गो माहाजनिकवर्धितः ॥
एकाङ्गोऽपि विधातव्यो माहाजनिकसंयुतः ।
एवं व्याससमासाभ्यां बहुधाङ्गविधिः स्मृतः ॥

नाट्यशास्त्रे

### अङ्गहारः

अङ्गहारान् सविष्कम्भान्नैव चात्र प्रयोजयेत् ।
केवलं पौरुषैर्भावैर्वाक्यं नाट्यायितेन तन् ॥

नाट्यशास्त्रे

### अङ्गहारविनियोगः

अङ्गेषु पूर्वरङ्गस्य विघ्नैरुत्थापनादिषु ।
वर्धमानासारितेषु मद्रकाद्यासु गीतिषु ॥
पणवैरुरुभिर्भासैर्भैरीपटहडिण्डिमैः ।
मृदङ्गै गोमुखाद्यैश्च वाद्यैस्ताललयानुगैः ।
अङ्गहाराः प्रयोक्तव्याः परं कल्याणमीप्सुभिः ॥

विप्रदासः

### अङ्कुरः

भूतवाक्यार्थमाश्रित्य चित्तवृत्त्यर्पणक्षमाः ।
दृष्टिप्रधानव्यापाराः कथ्यन्तेऽङ्कुरसंज्ञया ॥
सूच्याः स्युरङ्कुरा एव भाविवाक्यार्थसूचनात् ।
आरभट्यां स्थिता शाखा सात्त्वत्यामङ्कुरः स्थितः ॥
कैशिक्यां वर्तते नृत्तं त्रयोऽप्येते तिसृष्वपि ।
वर्तते तत्त्वतो भेदो भावकैरेव भाव्यते ॥
देशकालवचोऽवस्थावेषभूषणशक्तितः ।
आङ्गिकोऽभिनयो वृत्तित्रयवाचिकसंश्रितः ॥

विप्रदासः

### अङ्कुराभिनयः

सूचेव केवलैरङ्गैर्वचनैर्हृदयस्थितैः ।
भूतार्थस्यानुसारेण कृतश्चेदङ्कुरो भवेत् ॥

वेमः

### अङ्घ्रचारिणीलक्षणं तद्भेदाश्च

वाञ्छितेनैव तालेन विविधैर्विरुदैर्युता ।
स्यादङ्घ्रचारिणी सा तु षट्प्रकाराः प्रकीर्तिताः ॥
वासवी कलिका चैव वृत्ता वारावती तथा ।
वेदोत्तरा जातिमती विज्ञेया भिन्नलक्षणा ॥
वसुचन्द्रकला दन्तैर्वीरैर्जलधिखेन्दुभिः ।
विरुदैः पञ्चभिस्तालैरेकाद्यैश्च यथाक्रमम ॥
जातिमत्यां न नियमस्तालेषु विरुदेषु च ।
पदान्तरः स्यादाभोगो न्यासस्तालद्विनामकम् ॥

सोमराजदेवः

### अङ्गभ्रमरी

वितस्त्यन्तरितौ पादौ कृत्वाङ्गभ्रमणं तथा ।
तिष्ठेद्यदि भवेदङ्गभ्रमरी भरतोदिता ॥

अशोकः

### अन्तर्भ्रमरी

अस्या एव त्रिपर्यासादन्तर्भ्रमरिका भवेत् ।

कुम्भः

### अङ्गरचना

देशं कालं च जातिं च भूमेरुद्देशमेव च ।
समवेक्ष्याङ्गरचनां प्रयुञ्जीत यथोचिताम् ॥
देवाश्चाप्सरसो गौरवर्णाहार्ये निरूपिताः ।
सोमः समुद्रो हिमवान् शिवः शुक्रो बृहस्पतिः ॥
वरुणो नारदश्चैव बलभद्रः सरस्वती ।
गङ्गा च श्वेतवर्णास्त्यु श्यामौ नारायणार्जुनौ ॥

वासुकिः पर्वतश्चैव दैत्यदानवराक्षसाः ।
कृतान्तश्च पिशाचाद्या मेचकाः परिकीर्तिताः ॥
विद्याधरा मातरश्च गन्धर्वा गुह्यकास्तथा ।
नानावर्णा विधातव्या नाट्ये नाट्यविचक्षणैः ॥
ब्राह्मणाः क्षत्रियाश्चैव कार्या गौरास्तु वर्णतः ।
नाट्ये वैश्याश्च शूद्राश्च श्यामाः कार्याः प्रयोक्तृभिः ।
किरातजर्जराद्यास्तु म्लेच्छाः कृष्णप्रभा मताः ॥

वेमः

## अङ्गरचनालक्षणम्—(आर्याभिनयः)

सा भवेदङ्गरचना यदङ्गे रङ्गवर्तनम् ।
ते च वर्णाः सितश्यामरक्तपीतस्वभावजाः ।
एतेषां सङ्कराद्भेदा जायन्ते बहुशः पुनः ॥

नृत्तरत्नावली

## अङ्गलक्षणम्

शोभा सर्वैव नित्यं स्यात् सौष्ठवं समुपाश्रिता ।
नैव सौष्ठवहीनाङ्गं शोभते नाट्यनृत्ययोः ॥

कुम्भः

## अङ्गहाराः

अङ्गप्रयोगयोगेन ये हारा हरिनिर्मिताः ।
मध्यस्थपदलोपेन तेऽङ्गहाराः स्मृता बुधैः ॥

कुम्भः

अङ्गानामुचिते देशे प्रापवा सर्वलासनम् ।
करणोत्करसंपाद्यमङ्गहारोऽभिधीयते ॥
हरेणारचिताहाराः प्रयोगपदलोपनात् ।
अर्चाप्रयोगा ये हाराः तेऽङ्गहारा इति स्मृताः ।
यद्वा हारोऽङ्गस्यायं प्रयोगोऽङ्गैरिति स्मृतः ॥

सङ्गीतनारायणे

अङ्गानामुचिते देशे प्रापणं सविलासकम् ।
मातृकोत्करसम्पाद्यमङ्गहारोऽभिधीयते ॥

हम्मीरः

## अङ्गहारकरणं

औचित्यान्मेलनेऽङ्गानां प्रयोगः क्रमपेशलः ।
करणं कीर्त्यते तज्ज्ञैस्तद्द्वयं मातृका स्मृता ॥
त्रिभिः कलापकश्चैव चतुर्भिः खण्डको मतः ।
सङ्घातः पञ्चमश्चैव संज्ञाभेदा इतीरिताः ॥

तत्समूहविशेषाश्चाङ्गहारस्तत्परः स्मृतः ।
तिसृभिः पञ्चभिर्वा स्यान्नवभिर्वा यथोदितम् ।
अङ्गहारो मातृकाभिरेकः स्यान्मुनिनोदितात् ॥

कुम्भः

## अङ्गहारप्रयोजनम्

त्रिभिः कलापकरणैः चतुर्भिः खण्डकैरिति ।
संघातः पञ्चभिस्तस्य संख्याभेदान्तरे जगुः ॥
करणन्यूनताधिक्यं न दोषायेह जायते ।
द्वाभ्यां त्रिभिश्चतुर्भिर्वा नवभिर्वेति कीर्तनात् ॥

## दामोदरस्तु—

षडादि दशपर्यन्तैरङ्गहारास्तु तैं भवेत् ।
तत्रादौ षोडशोच्यन्ते अङ्गहारा हरिप्रियाः ॥

सङ्गीतनारायणे

## अङ्गहारलक्षणम्

अथाङ्गहारान् वक्ष्यामि दृष्टादृष्टफलाप्तये ।
पूर्वरङ्गे प्रयोगार्हान् चित्रे मुनिसमाश्रयान् ॥
अङ्गानां सविलासं यत्प्रदेशमुचितं प्रति ।
प्रापणं करणोत्पन्नमङ्गहारः स उच्यते ॥
शाकप्रियादिपाठाद्वा प्रयोगपदलोपनात् ।
हरस्याङ्गप्रयोगायैतेऽङ्गहारा इति स्मृताः ॥
उभाभ्यां करणाभ्यां स्यान्मातृका करणैस्त्रिभिः ।
कलापः स्याच्चतुर्भिस्स्यात्खण्डकः पञ्चभिः पुनः ॥
सङ्घात इति सङ्घातसंज्ञाभेदान् परे जगुः ।
तिसृभिर्मातृकाभिः स्यात्पञ्चभिर्वा प्रवर्तते ॥
एकाङ्गहारः करणं न्यूनाधिक्यं मुनिः स्वयम् ।
अमन्यताङ्गहारेषु नवभिर्वेति कीर्तनात् ॥
करणोऽन्यत्समानत्वधर्मसामान्ययोगतः ।
सर्वेऽप्येते कलापाद्या अङ्गहाराः प्रकीर्तिताः ॥

निःशङ्कः

## अङ्गहारभेदः

मल्लिका कथिता ताभ्यां कलापः करणैस्त्रिभिः ।
चतुर्भिः करणैः खण्डं सङ्घातं पञ्चभिस्तथा ॥
षड्भिः सप्तभिरष्टाभिर्नवभिर्वा यथारुचि ।
करणैरङ्गहारः स्यात्तल्लक्षणमथोच्यते ॥

हम्मीरः

## अङ्गहाराः

सारसा केकिहंसौ च स्खलानन्यांश्च पक्षिणः ।
रेचकैरंगहारैश्च निर्दिशेन्नाट्यकोविदः ॥

अश्वेभोष्ट्रखरव्याघ्रसिंहांश्च महिषादिकान् ।
अंगैर्गतिप्रकारैश्चाभिनयेन्निपुणो नटः ॥

ये यक्षा राक्षसा दैत्याः पिशाचाद्यास्तथापरे ।
परोक्षास्तेऽभिनेतव्या अङ्गहारैः प्रयोक्तृभिः ॥

अशोकः

## अङ्गानि

घर्घरो विषमं गीतं कविवाचस्तथैव च ।
भावाश्रयश्च व्याचष्टे पञ्चाङ्गानि नृपोत्तमः ॥

कुम्भः

## अङ्गुलिगुणाः

प्रयुक्तश्चाप्रयुक्तश्च युक्तिश्चेत्यङ्गुलेर्गुणाः ।

सङ्गीतनारायणः

## अङ्गोपाङ्गानां पादानुगामित्वम्

हस्तः पादोऽथवा यत्रायं प्राधान्येऽन्ववर्तते ।
स भवेत्प्रथमं पश्चादन्यस्तदनुगो भवेत् ॥

(अत्र पौर्वापर्यं एकक्षणस्पन्दनाद्भिप्रायेण द्रष्टव्यं न तु क्रियान्तव्यवधानेन)

प्रथमं पश्चादन्यस्तदनुगो भवेत् ।

तथान्यमुभयोर्यत्र तत्र स्यात्समकालता ।
पादे यतस्ततो हस्तो यत्र हस्तस्ततस्त्रिकम् ।
तस्मात्पादानुगान्याहुरङ्गोपाङ्गानि तद्विदः ॥

वेमः

## अङ्घ्रिताडिता

पादौ स्वस्तिकमावर्त्य तिर्यगूर्ध्वं यदोत्क्षिपेत् ।
यत्र प्रस्तारितावङ्घ्री प्लुतं कृत्वा परस्परम् ।
गगने तावेतां चेत्तद्भवेत्तत्राङ्घ्रिताडिता ॥

कुम्भः

## अञ्चितलक्षणम्

स्थानके समपादे तु संस्थितोत्तानमुत्प्लुतम् ।
क्रियते यत्र करणं तद्भवेदञ्चिताह्वयम् ॥

हम्मीरः

## अञ्जनः

अञ्जनश्चन्द्रकान्तश्च जयन्तश्चेति नामभिः ।
ललितं वक्षसः क्षेत्रे कपोतं कर्णदेशगम् ।
सन्दंशविधिनैवं स्यादञ्जनो नाम हस्तकः ॥

कुम्भः

## अञ्जनादित्रयहस्तकाः—तलाञ्जनलक्षणम्

अञ्जनश्चन्द्रकान्तोऽथ जयन्तश्चेति हस्तकाः ।
त्रयोऽन्ये दर्शितास्ते च प्रदर्श्यन्ते क्रमादिह ॥
स्तनयोर्ललितं वक्षो देशे चेद्वलितं करम् ।
कपोतं कर्णयोर्नेत्रक्षेत्रे सन्दंशनामकम् ।
रचितं जगदुः केचिदञ्जनं नाम हस्तकम् ॥

विप्रदासः

## अटतालः—तालः

लघुद्वन्द्वं द्रुतद्वन्द्वं मात्रा द्वादश यत्र सः ।
चतुरश्रोऽटतालः स्यादिति तालविदो विदुः ॥

भरतकल्पलतामञ्जरी

## अट्टहासः

असंवृतमुखं हास्यं ललज्जिह्वान्निरीक्षितम् ।
प्रचण्डाट्टरवं भूयानट्टहास उदाहृतः ॥

जगद्धरः

## अड्डस्खलतिका

अड्डस्खलितिका तिर्यक् स्खलिते चरणे भवेत् ।

कुम्भः

## अड्डिता

शृङ्गाररससम्भूता तद्भूतगुणशालिनी ।
सापेक्षभावा हृद्या या सा भवेदड्डिता ध्रुवा ॥

## अणुविषये मुनिमतम्

द्रुतार्धमणुरेवं स्यात्प्रमाणं मुनिसंमतम् ।

कुम्भः

### अतिक्रान्ता

पादं कुञ्चितमुत्क्षिप्य गुल्फक्षेत्रे द्वितीयके ।
प्रसार्य पुरतः किंचित् पात्रप्रकृतिभेदतः ॥

### अतिक्रान्तस्य लक्षणम्

यत्र चारीमतिक्रान्तां प्रयोगानुगतौ करौ ।
कुर्वीत तदतिक्रान्तां प्रयोगानुगतौ करौ ।
हस्तौ गरुडपक्षाख्यौ भट्टतण्डुरिहाब्रवीत् ॥

### अर्थक्रिया

लोकेषु स्थावराणां च जङ्गमानां तथैव च ।
नामजन्मोक्तनक्षत्रा हस्तैरर्थक्रिया भवेत् ।
एवं काव्यस्य च गुरोः सम्मतिः पूर्वसंमता ॥

शृङ्गारशेखरः

### अद्भुतन्द्रुतम्

अड्डतालेन तालेन यदोद्ग्राहादिधातुषु ।
गीयमानेषु नृत्तेषु विलम्बितलयाश्रयैः ॥
गीयमाने ध्रुवे कैश्चित्करैरतिमनोहरैः ।
तदा द्रुताख्यनृत्तं स्यात्सामाजिकमनोहरम् ॥

### अद्भुतरसः

काञ्चनच्छविरधीरलोचनो सुन्दरो हि परमेष्ठिदैवतः ।
पञ्चविंशतिकहायना स्मृतो वैश्यवंशज इहाद्भुतो रसः ॥

जगद्धरः

सुदुर्घटपदार्थानां दर्शनश्रवणादिभिः ।
स्तम्भसंभ्रमरोमाञ्चजडतागदितादिभिः ॥
अभिव्यक्तगतैर्भावैरेभिर्ये व्यभिचारिभिः ।
चित्तविस्ताररूपोऽयं चर्वणीयत्वमागतः ।
विस्मयस्थायिभावोऽसौ तज्ज्ञैरुक्तोऽद्भुतो रसः ॥

हम्मीरः

### अधमनायिकालक्षणम्

अकस्मात्कुप्यति रूपं प्रार्थितापि न मुञ्चति ।
सुरूपं वा विरूपं वा गुणवन्तमथागुणम् ॥
स्थविरं तरुणं वापि या वा कामयते द्रुतम् ।
ईर्ष्याकोपविषादेषु नियता साधमा मता ॥

भरतकल्पलतामञ्जरी

### अनवधानकः

स्थायिस्वरादीं त्यक्त्वा यो गायेत्सोऽनवधानकः ।

भरतकल्पलतामञ्जरी

### अनाशी स्वरः

पञ्चमं मध्यमग्रामे षड्जग्रामे तु धैवतम् ।
अनाशिनं विजानीयात् सर्वत्रैव तु मध्यमम् ॥

दत्तिलः

### अनाहतः—नादः

आकाशसंभवो नादो यः सोऽनाहतसंज्ञितः ।
तस्मिन्ननाहते नादे विरामं प्राप्य देवताः ॥
योगिनोऽपि महात्मानः तदानाहतसंज्ञके ।
मनो निक्षिप्य संयान्ति मुक्तिं प्रयत्नमानसाः ॥

सङ्गीतमकरन्दे

### अनिर्युक्तम्

वस्तुमात्रमनिर्युक्तमिदानीं विधिरुच्यते ।

दत्तिलः

### अनिष्टम्

उद्वेष्टितपरावृत्त्या करयोर्जिह्मया दृशा ।
नतेन शिरसाऽस्पर्शमनिष्टं दर्शयेद्बुधः ॥

पताकेन तु हस्तेन तिरोधाय निजं मुखम् ।
पयःपांसुपतङ्गानां भ्रमिभ्रमणतेजसः ।
उष्णस्य पवनस्यापि वारणं संप्रदर्शयेत् ॥

वेमः

### अनिष्टुराक्षरपदम्

अनिष्टुराक्षरपदं गान्धारीजातिमाश्रितम् ।
चञ्चत्पुटेन योक्तव्यं त्रिमूढं द्विकृतेन तु ॥

नाट्यशास्त्रे

### अनुकूलः—नायकः

एकस्यामेव रमते सदा त्यक्तपराङ्गनः ।
सीतायां रामवत्सोऽयमनुकूलः स्मृतो यथा ॥

शुभङ्करः

### अनुनासिकः

गायेद्यो नासिकायां तु सोऽयं स्यादनुनासिकः ।

भरतकल्पलतामञ्जरी

अनुबन्धा—ध्रुवा

यतिं लयं वाद्यगतिं पदं वर्णमथाक्षरं।
विभावांश्चानुभावांश्च भावांश्च व्यभिचारिणः॥
गीते रसे च नियतमनुबध्नाति या क्रमात्।
सा ध्रुवा चानुबन्धाख्या नाट्यविद्भिर्निरूपिता॥

वेमः

अनुभावः

भावानां यानि कर्माणि नाट्यान्ते कुशलैर्नटैः।
तेऽनुभावा हेतवस्ते स्वहेत्वनुभवे यतः॥

हम्मीरः

विस्मृतां बोधयन्त्येवमनुभावाः प्रकीर्तिताः।
रसतां गच्छति स्थायी कार्यं यदुपलभ्यते।
अनुभावः स विज्ञेयो भावसंस्थानसूचकः॥

अनुभावलक्षणम्

काव्येषु कविभिर्नाट्ये नटैः साक्षादिवार्पिताः।
अनुभावा इति प्रोक्ता भावानामनुभावनात्॥

विप्रदासः

नटनलीलां विलोक्य सभापतिसामाजिकैः
कम्पनरवमनुभावः। शृङ्गारशेखरः

अनुभावसारस्यम्

श्रव्यं श्रवणयोगेन दृष्टं दृष्टिविचालनैः।
आरम्भस्थं वा मध्यस्थं हि मध्यस्थं च विनिर्दिशेत्॥
एवमन्येष्वपि तथा नानाकार्यार्थदर्शनात्।
विभावो वानुभावो वा विज्ञेयोऽर्थवशाद्बुधैः॥

कुम्भः

अनुमन्द्रजाः

एकैकरागमेलोक्त्या वीणावादनतत्परैः।
ऊर्ध्वं मञ्जुलवीणायां लोहतन्त्रीचतुष्टयम्॥
दक्षिणेऽधस्त्रयं तन्त्र्या बध्नीयाल्लक्ष्यवेदिभिः।
ऊर्ध्वतन्त्रीषु या वामे ते तस्यामनुमन्द्रकं॥
पञ्चमं वानुमन्द्राख्यां द्वितीयायां निवेशयेत्।
मन्द्रषड्जं तृतीयायां चतुर्थ्यां मन्द्रमध्यमम्॥
प्रथमाधस्थतन्त्रीषु मध्यमेन समश्रुतिः।
मन्द्रसेन द्वितीयापि तृतीया मन्द्रसेन च॥

कर्तव्यास्ताः पुनर्नाम्ना निगद्याः श्रुतयो बुधैः।
सारीनिवेशनं युक्त्या क्रमतः प्रतिपाद्यते॥
अनुमन्द्रसतामाद्या शुद्धो रिः स्याद्यथा तथा।
निवेश्या प्रथमा सारी तया तन्त्र्या द्वितीयका॥
शुद्धगान्धारसिध्यर्थं तया तन्त्र्या तृतीयिका।
साधारणाख्यगान्धारसिद्धये क्रमशस्ततः॥
तया तन्त्र्येव तुर्यापि च्युतमध्यमहेतवे।
शुद्धमध्यमसिध्यर्थं सारिका पञ्चमी तया॥
तन्त्र्या तया पुनः षष्ठी पतपञ्चमसिद्धये।
शेषाभिश्चित्ततन्त्रीभिरुक्ताः सारीषु ये स्वराः॥
वर्ण्यन्ते ते क्रमेणैव गुरुणा मे यथोदिताः।
पञ्चमेनानुमन्द्रेण या तन्त्री समुपाश्रिता॥
तया द्वितीयया तन्त्र्या जायते शुद्धधैवतः।
ततःशुद्धो निषाधाख्यो निषाधः कैशिकी पुनः॥
तत्पुरस्तात्पतः षड्जः शुद्धषड्जस्ततःपरं।
ततःस्याद्दृषभः शुद्धः षडेते गदिताः स्वराः॥
जातौ द्वितीयया तन्त्र्या विशुद्धौ सौ सरीस्वरौ।
स्थाप्यौ नैकप्रयोगे तौ यतस्तन्त्र्या तृतीयया॥
जायेते तौ पुनर्मन्द्रौ शुद्धौ वीणाविनोदितौ।
एतेऽनुमन्द्रजाः प्रोक्ताः कथ्यन्ते मन्द्रजाः क्रमात्॥

कुम्भः

अनुराधा—नक्षत्रहस्तः

पूर्वोक्तौ मुष्टिहस्तौ तु तर्जन्यो ... प्रसारितौ।
मुष्टिसूचिरथ प्रोक्तोऽप्यनुराधानिरूपणे॥

शृङ्गारशेखरः

अनुलोमविलोमे

चारात्रिकोणचाराये अनुलोमविलोमगा।
स्वस्थाने स्थापितपदा ततस्तत्रापि कुट्टिता।
तदा निगदितासद्भिरनुलोमविलोमाका॥

विप्रदासः

अनुवृत्तदृष्टिः

ऊर्ध्वाधो वीक्षणं वेगादनुवृत्तनिरीक्षणम्।

भरतकल्पलतामञ्जरी

अनुश्रवणिका—पाटः

पुनःपुनर्यदा पाटः श्रूयते वा तदक्षरम्।
अनुश्रवणिका नाम तदा वाद्यं निगद्यते॥ कुम्भः

अनङ्गाङ्गमोदनम्

यदा मण्डलतो हस्तो लुठित्वा स्कन्धदेशयोः ।
तद्वयत्वशिरःक्षेत्रे नयनानन्ददायकैः ।
लोडितौ तदनङ्गाङ्गमोटनं कीर्तितं तदा ॥

विप्रदासः

अनङ्गोद्दीपनम्

विलोक्योरः स्थले हस्तौ क्रमादादत्तमण्डलौ ।
विलासेनांसपर्यन्तं गत्वाभ्यन्तरभागगौ ॥
उद्वेष्टितक्रियापूर्वं यत्राधोसदनौ यदा ।
विद्वद्भिस्तत्समादिष्टमनङ्गोद्दीपनं तथा ॥

विप्रदासः

अन्तःकरणम्

बाह्यवस्तुविशेषाभिमुख्यापेक्षा विना कृतम् ।
इत्यादिरूपसापेक्षमन्तःकरणमुच्यते ॥ कुम्भः

अन्तःप्राणाः—पात्रस्य

जवस्थिरत्वं रेखा च भ्रमरी दृष्टिरश्रमः ।
मेधा श्रद्धा च चोरीतिरन्तःप्राणा दश स्मृताः ॥

भरतकल्पलतामञ्जरी

अन्तरधातुः

आभोगः पूर्वकाले स्यात्संगीतान्ते निगद्यते ।
ध्रुवाभोगान्तरे जातः धातुरन्योऽन्तराह्वयः ।
तस्यान्तरं मध्यस्थतयेत्याहुरपरेबुधाः ॥

सङ्गीतसूर्योदयः

अन्तरमार्गः

स्वराणां तानवैचित्र्यात्कारुण्यां शान्तिसङ्गतौ ।
स स्यादन्घ्रिरहीनत्वादीषत्स्पर्शैनयोगतः ॥
यदारोह्यवरोहिभ्यां शक्तियुक्तो भवेद्यदि ।
स एवान्तरमार्गः स्यात् विकृतास्वेव जातिषु ॥

सङ्गीतसूर्योदये

अन्तरा—ध्रुवा

प्रयोगगतदोषाणां प्रच्छादनपटीयसी ।
विच्छेदे वान्तरालस्य तत्सन्धानविधायिनी ।
मध्ये मध्ये प्रयोज्या या सा विज्ञेयान्तरा ध्रुवा ॥

वेमः

अन्तरा ध्रुवा

विषण्णे मूर्छिते भ्रान्ते वस्त्राभरणसंयमे ।
दोषप्रच्छादना या च गीयते सान्तरा ध्रुवा ॥

नाट्यशास्त्रे

अन्तराक्रीडः—तालः

विरामान्ता द्रुतत्रया । स भवत्यन्तराक्रीडः ।
० ० ०̀

कुम्भः

अन्तविधिः

व्यङ्गमेकाङ्गमपि वा स्थितं कार्यं समासतः ।
तत्र युग्मं भवेद्व्यङ्गं त्र्यश्रमेकाङ्गमेव च ॥
प्रवृत्तमपि विज्ञेयं व्यङ्गमेकाङ्गमेव वा ।
माहाजनिकमेकाङ्गं त्र्यङ्गं संहरणं स्मृतम् ।
सितादिकः प्रवृत्तान्तः एवमन्तविधिर्बुधैः ॥

नाट्यशास्त्रे

अन्तश्छाया—करणम्

प्रसारितस्तदा प्रोक्तमन्तश्छायाभिधं बुधैः ।

सङ्गीतमुक्तावली देवेन्द्रकृता

अन्तरन्तरः

ध्रुवकाभोगयोरन्तरन्तरः परिगीयते ।

कुम्भः

अन्यकाकुः

रागे रागान्तरच्छाया काकुः स्यादन्यरागजा ।

कुम्भः

अपकृष्टा—(ध्रुवा)

नातिदीर्घैर्युता वृत्तैर्विलम्बितलयान्विता ।
अपकृष्टाक्षरा ज्ञेयाऽपकृष्टा करुणाश्रया ॥

वेमः

अपक्षेपा

ऊरुपृष्ठं स्पृशेदङ्घ्रिबाह्यपार्श्वेन यत्सदा ।
अन्यो नितम्बनिकटमपक्षेपा तदा स्मृता ॥

कुम्भः

अपत्याभिनयः

हस्तेन हंसपक्षेण शिरसोद्वाहितेन च ।
अपत्याभिनयं कुर्यादुच्छादुच्छं यथोचितम् ॥

उद्वाह्य वामतो हस्तमरालं मूर्धदेशतः ।
भ्रान्तं गतं निवृत्तं च ध्वस्तं चाभिनयेद्बुधः ॥

वेमः

## अपभ्रंशः

संयुक्तायुक्तयो दीर्घह्रस्वयोर्वैपरीत्यतः ।
उच्चारभङ्गिवर्णानामपभ्रंश उदाहृतः ॥

शुभङ्करः

## अपविद्धम्

लुवनं मण्डलाकारं नाभिकण्ठप्रदेशयोः ।
वामदक्षिणतो यत्स्यादपविद्धमितीरितम् ॥

## अपवेष्टितः—हस्तप्राणः

अधस्तान्नमनं यस्य हस्तो नाम्नापवेष्टितः ।

भरतकल्पलतामञ्जरी

## अपवेष्टितम्—हस्तप्राणः

अधस्तान्नमनं यत्तु हस्तानामपवेष्टितम् ।

शृङ्गारशेखरः

## अपस्थानम्

स्थानं वदपस्थानमेतद्गुणविपर्ययात् ।
तद्यत्र विद्यते छायास्तेऽपस्थानसंमताः ॥

कुम्भः

## अपस्मारः—व्यभिचारिभावः

मृतावेशादिकृतचेतनानाशोऽपस्मारः ।

शुभङ्करः

## अपस्वरः

गानकाले स्वरैर्हीन अपस्वर इति स्मृतः ।

भरतः

## अपस्वराभासाः

प्रसन्नमृदुरित्युक्तो रागेष्टः स तु कथ्यते ।
रागेष्टः स्वरपूर्त्यर्थं यः स्थायो गेयकर्मणि ।
स स्यादपस्वराभासो योऽपस्वरवदीक्ष्यते ॥

कुम्भः

## अपाङ्गिकः

अपाङ्गिकस्तु विज्ञेयः स्वराणामथ सञ्चरात् ।

नाट्यशास्त्रे

## अपाटाख्यहस्तपाटाः

तलप्रहारः प्रथमः प्रहारो वलितस्तथा ।
गुरुगुम्फितसंज्ञश्चार्धसञ्चरितसंचकः ।
विषमोऽभ्यस्त इत्यष्टावपाटा हस्तपाटकाः ॥

कुम्भः

## अपार्थस्वरलक्षणम्

अर्थहीनमपार्थं च गतिक्रम इतीरितः ।

भरतः

## अपेक्षितः

स्थायं स्थायेन पूर्वेण पूर्त्यर्थं योऽभिकांक्षति ।
अपेक्षितस्तु स ज्ञेयः .................. ॥

कुम्भः

## अभिनयलक्षणम्

अभिपूर्वान्निधातोरर्चि कर्तरि योजिते ।
प्रयोगमाभिमुख्यं यन्नयत्यभिनयस्ततः ॥
शाखोपाङ्गैरुपाङ्गैश्च प्रयोगेण विभावयन् ।
अर्थान् बहुविधान् प्रापयत्येवाभिनयो मतः ॥

नृत्तरत्नावली

नातिद्रुतं नातिमन्दं भ्रमरीप्रचुरं तथा ।
अङ्गहारोऽङ्गविक्षेपः सूच्योऽर्थोऽभिनयः स्मृतः ॥

हम्मीरः

## अभिनयाः

वक्ष्यन्तेऽभिनयानादौ वर्णयामि सविस्तरम् ।
लघूपायानभिज्ञेन शक्यो पेयात्रधारणा ॥
रत्यादिकानभिव्यक्तिं नयन्ते वासनामयान् ।
रसावसाना व्यापाराः कथ्यन्तेऽभिनया इति ॥

विप्रदासः

## अभिनेयः

स्तम्भेन गात्रस्य मुखशोषैरुरः कम्पेन च रोमहर्षैः ।
संस्वेदहृद्भीलनदुर्विलापैः स्वभावजोऽयं कृतिनाभिनेयः ॥

जगद्धरः

## अभिनयभेदाः

आङ्गिको वाचिकाहार्यौ सात्त्विकश्चेत्यसौ पुनः ।
चतुर्धा कलितो यत्र सर्वं नाट्यप्रतिष्ठितम् ॥

नृत्तरत्नावली

## अभिनवगुप्ताचार्यमतम्

अथाभिनवगुप्तार्यभट्टानामप्युदीर्यते ।
विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः ॥

स्वीयान्यदीयसंबन्धविशेषप्रविहाणतः ।
साधारणैरभिव्यक्तो वासनात्मतया स्थितः ॥

रत्यादिकः स्थायिभावो वेद्यान्तरविनाकृतः ।
वाङ्मनोगोचरानेकविद्वत्साधारणीकृतः ॥

स्वीयाकार इवाभिन्नस्सर्वैः स्वविषयीकृतः ।
विभावादिविभाव्यत्वात्तद्भावावधिजीवितः ॥

चर्व्यमानाः पानकवदन्यत्सर्वं विलुप्य च ।
मानसैक्यमिवागच्छत्सर्वाङ्गीणां भवत्स्वयम् ॥

अलौकिकचमत्कारकारी कोऽपि रसः स्मृतः ।
सा कापि परिहारेणालौकिको ज्ञाप्यकार्ययोः ॥

व्यञ्जितैश्च विभावाद्यैश्चर्वणीयैः स्मृतो बुधैः
लोकोत्तरस्स्वसंवेद्यः प्रत्ययोऽप्युपपद्यते ॥

उपचारिककार्यत्वमाहुरस्तस्य भूषणम् ।
लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम् ॥

प्राक् द्वयापेक्षयात्स्यादनुमानप्रमाणता ।
दृष्टश्रुतार्थावगतस्यार्थस्य प्रतिपादनात् ॥

धर्माधर्मसाधकत्वेन रसभावोपदेशिनम् ।
यथा कवीनां हृदये याऽभूद्रामादिवासना ॥

तद्वासितान्तःकरणान्नर्तकाद्भावदर्शनम् ।
तत्काव्यार्थगम्यमानरसादेर्भाजनं जनाः ॥

सामाजिका यथा रामः सुखी दुःखी तथा पुनः ।
रामावस्थां भावयन् सोऽहमस्मीति नर्तकः ॥

अनुभावी भवन् भावो भवति प्रेक्षकान् प्रति ।
तद्वासनावासितान्तःकरणं नर्तकस्य तौ ॥
दृष्ट्वा स राम एवायमनुभावविभावनात् ।
तद्भावभावितस्वान्तःस्यू रसास्वादभाजनम् ।
अनुमेयो रसो जात इत्याचार्यमते स्फुटम् ॥

कुम्भः

## अभिसारिका—नायिका

उद्दाममन्मथमहाज्वरवेपमाना
रोमाञ्चकण्टकिततलोकतलं वहन्ती ।
निःशङ्किनी व्रजति या प्रियसंगमोत्का
सा कामिनी किल भवेदभिसारिकेति ॥ शुभङ्करः

## अभिसारिकाद्वैविध्यम्

शुक्लपक्षे कृष्णपक्षे द्विधा स्यादभिसारिका ।
मल्लिकामाल्यधारिण्यः सर्वाङ्गेणार्द्रचन्दनाः ॥

क्षौमदंत्यो न लक्ष्यन्तेऽस्तमये समभिसारिका ।
कालागुरुविलिप्ताङ्गी नीलरागरदान्विता ।
चन्द्रोदयपरिभ्रष्टा कृष्णपक्षाभिसारिका ॥

शुभङ्करः

## अभ्यस्तः—पाटः

ज्ञायतेऽभ्यस्तसंज्ञोऽत्र पाटः पाणिनिवर्तनात् ।
यथा– गणगिणणं गिथागिणणंगि तडिहिकि घिकिव ।

कुम्भः

## अभ्यासः

अल्पत्वमेव शब्देऽस्मिन्नभ्यास इति कीर्तितः ।
तदाल्पतरता...बलंघनंचेति कथ्यते ॥

पूर्णत्वादिव्यवस्थानां जातीनां यदि संभवेत् ।
षोडवोत्र समोत्तत्तेत्वनभ्यासलंघने (?) ।
क्रमात्स्यातां पञ्चमी स्यादभ्यस्याः परितोषिताः ॥

सङ्गीतसूर्योनयः

## अमर्षः—व्यभिचारिभावः

अधिक्षेपावमानजनिताभिनिवेशोऽमर्षः ।

शुभङ्करः

## अयुतहस्तभेदाः

पताको मध्यमा मूलरुग्नाङ्गुष्ठो निकुञ्चकः ।
स स्वल्पाभिनये वेदाध्यायने च प्रयुज्यते ॥

हम्मीरः

## अयोगविप्रलंभश्शृङ्गारः

प्रागसन्ततयोर्यूनोरनुरागेऽपि जाग्रति ।
अयोगः पारतन्त्र्याद्यविप्रलम्भोऽभिलाषजः ॥

प्रवेशनिर्गमौ तूर्णीं तद्दृष्टिपथगामिता ।
रागप्रकाशनपरा चेष्टा स्वात्मप्रकाशनम् ॥

व्याजोक्तयश्च विजने स्थितिरित्यादयोऽपि च ।
तत्र सञ्चारिणो ग्लानिः शंकासूयाश्रमो भयम् ॥

निर्वेदौत्सुक्यदैन्यानि चिन्तानिद्रे प्रबुद्धता ।
विषादजडतोन्मादा मोहो मरणमेव च ॥

तत्तत्सञ्चारिभावानामुचितापि दशा भवेत् ।
प्रायेण प्राप्तनैरस्यदशावस्थास्समासतः ।
प्रोक्तास्तदनुसारेण भरतेन महात्मना ॥

भरतकल्पलतामञ्जरी

## अरालखटकामुखयोर्लक्षणम्

पताकस्वस्तिकं कृत्वा व्यावृत्तपरिवर्तितौ ।
ऊर्ध्वस्थौ पद्मकोशौ च व्यावृत्तपरिवर्तितौ ॥

क्रमात्कृत्वा यत्र नाममुत्तानारालमाचरेत् ।
खटकामुखमन्यं वाधोमुखं चतुरस्रतः ॥

स्वस्तिकेनाथ वा यद्वा कृत्वारालौ करौ कृतौ ।
खटकामुखसंज्ञौ तावराळखटकामुखौ ॥

वणिजां सविवादानां वितर्केऽसौ प्रयुज्यते ।
अन्ये त्वाहुः सरोमस्थः प्राङ्मुखः खटकामुखः (?) ॥

आरालप्रोन्नताग्रोऽन्यस्तिर्यगीषत्प्रसारितः ।
पार्श्वव्यत्ययतो यद्वा स्वपार्श्वे च करौ स्थितौ ।
तालान्तरौ यदा स्यातामरालखटकमुखौ ॥

हम्मीरः

## अर्जुनभाणाभिधरूपम्

दक्षिणे चेतकरे तालो अष्टवारं समागतः ।
वामे करे चतुर्वारं तदर्धं द्विपरित्यजेत् ॥
षट्द्रुता दक्षिणेऽङ्के च हत्वा वारद्वयं भवेत् ।
चतुर्दिशः द्रुतान् हत्वा वामेऽङ्के एकवारतः ॥
एकेनैव हि तालेन चैवं रूपेण नर्तकः ।
नृत्यतत्स्थानसंचारी भेदेन लयभेदतः ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## अर्धकर्तरी—पाटः

मात्रार्धकर्तरी प्रोक्ता यत्रानामिकया सह ।
प्रदेशिनी मध्यमा च घ्नन्ति वाद्यपुटं लघु ॥
दा खुं खु द । खुं खुं में ह हडे हें गि धों टें । कुम्भः

—हौडुक्कपाटः

यत्रार्धकर्तरी प्रोक्ता यत्रानामिकया सह ।
प्रदेशिनी मध्यमा च घ्नन्तिमध्यपुटं लघु ॥

कुम्भः

## अर्धनिगृहीतम्—मृदङ्गप्रहारभेदः

सार्धनिगृहीतं तु करस्यैकस्य मोक्षगम् । सङ्गीतनारायणे

## अर्धपाणिः—हस्तपाटः

त्र्यश्रेणैकस्य हस्तस्य घातात्स्यादर्धपाणिकः ।
दग दडगड धरगड दरगड । कुम्भः

## अर्धपार्श्वमण्डली—हस्तः

एकं वक्षस्तले स्थाप्य अन्यःपार्श्वे प्रसारितः ।
व्यावर्तितं चालपद्ममर्धमण्डलिकामिधः ।
नारिकेले चूतफले कृष्णे पर्वतधारणे ॥

भरतकल्पलतामञ्जरी

## अर्धपुराटिका

उद्वृत्तस्यैकपादस्य चरणेन निकुट्टनम् ।
उद्वृत्तेन निकुट्टेन सा स्यादर्धपुराटिका ॥

कुम्भः

## अर्धमण्डलिका

पादौ यदा बहिर्नीतौ भूमिघर्षणतः शनैः ।
आवर्त्येते तदा प्राहुरर्धमण्डलिकां बुधाः ॥

कुम्भः

## अर्धमागधी—गीतिः

अर्धकालनिवृत्तैस्तु वर्णाद्यार्चार्धमागधी ।

दत्तिलः

## अर्धमुष्टिः—हस्तः

निपीड्याङ्गुष्ठमध्यान्तं मध्यपर्वद्वयेन तु ।
प्रदेशिनी मध्यमयोरर्धमुष्टिः करोत्तमः ।
दोहने स्यान्महिष्योष्टयां शङ्खचापापकर्मणे ॥

संगीतनारायणे

## अर्धरेचितलक्षणम्

एकेन चतुरस्रेण तौ स्यातामर्धरेचितौ ।

हम्मीरः

## अर्धसञ्चः—पाटः

दक्षिणानामिकाङ्गुष्ठवलनाभ्यसनक्रमात् ।
तथा रामकरोल्लासाज्जायते गुरुगुम्फितः ॥

—अपाटः

नितम्बचलनाद्वामचरणस्य प्रकम्पनात् ।
तथा पाणिवलोच्छ्रासादर्धसञ्चः प्रजायते ॥
यथा— खें दें दरि खें खें दरि खें खें ट खें ट कुम्भः

अर्धसमः

पूर्वलक्ष्मविपर्यासाद्भवेदर्धसमो यथा ।
दधगिदगगिरिगिड दद्दगि देधां गिधों गिद ।

कुम्भः

अर्धस्वस्तिकलक्षणम्

चरणौ स्वस्तिकौ हस्तः करिणो यत्र दक्षिणः ।
अपरो वक्षसःस्थाने तदर्धस्वस्तिकं विदुः ॥

नृत्तरत्नावली

अर्धार्धपाणिः—हस्तपाटः

यत्र प्रहन्यते वाद्यमर्धार्धे हस्तयोर्द्वयोः ।
अर्धार्धपाणिमाचष्ट दिगष्टस्पष्टजैत्रवान् ॥
खुं दां २

कुम्भः

अलङ्कृतम्

त्रिस्थानसम्भवं यत्स्यात्तद्विज्ञेयमलङ्कृतम् ।
व्यक्तं ज्ञेयमभिव्यक्तैः प्रकृतिप्रत्ययाक्षरैः ।
प्रसन्नं कर्कटार्थं स्याद्वैदर्भीरीति संस्मृतम् ॥

कुम्भः

अलगपाटौ

सञ्चो विच्छुरितश्चेति पाटावलगसंज्ञकौ ।
अर्धाङ्गुलाग्रघातेन तत्र सञ्चः प्रजायते ॥

शुद्धेन करसञ्चेन घातेनाङ्गुष्ठहेतुना ।
क्रमादुत्पद्यते पाटोऽलगो विच्छुरिताभिधः ॥

कुम्भः

अलगभ्रमरी

वैष्णवस्थानकं कृत्वा तिष्ठेत्सव्याङ्घ्रिणा ततः ।
देहं भ्रामयते तिर्यगलगभ्रमरी भवेत् ॥

कुम्भः

अवकृष्टा

बद्धे निरुद्धे पतिते व्याधिते मूर्छिते मृते ।
अवकृष्टा ध्रुवा कार्या भावे च करुणाश्रये ॥

नाट्यशास्त्रे

अलगभ्रमरीलक्षणम्

वैष्णवं स्थानमास्थाय कुर्याद्वामाङ्घ्रिणा यदि ।
तिर्यग् देहपरिभ्रान्तिरलगभ्रमरी तदा ॥

हम्मीरः

अलगवाडः

क्रमेण पादयोर्व्योम्नि कोमलं यत्प्रकम्पते ।
स ह्यलगवाडः स्यादित्युक्तं नृत्यकोविदैः ॥

कुम्भः

अलग्नः—पाटः

अस्पृष्टाकुण्डली कोणघातेनालग्नको भवेत् ।

कुम्भः

—हौडुक्किकपाटः

तमलग्नं जगुर्यत्र कुण्डाभ्यां जायते करः ।
अलग्नन् सन् ....................॥

कुम्भः

अलपद्मः—हस्तः

वक्त्रान्तकेऽलपद्मोयं स एवोर्ध्वं प्रचालितः ।
उत्साहप्रभुशक्त्यर्थे युज्यते नाट्यमर्मगैः ॥

भरतकल्पलतामञ्जरी

अलातचक्राख्यम्

कश्चिदन्तर्बहिश्चक्रचरो हस्तः पराङ्मुखः ।
अन्यो विडम्बनां धत्तेऽलातचक्रस्य चेत्तदा ।
अलातचक्रमाख्यातं सद्भिरन्वर्थनामकम् ॥

अलङ्कारः

यथा रात्रिश्चन्द्रहीना यथा स्त्री त्यक्तभूषणा ।
अलङ्कारैर्विरहिता तथा गीतिर्न शोभते ॥

एकान्तरैस्स्वरैर्यत्र स्यादारोहः क्रमाच्च तैः ।
अभ्युच्चयमलङ्कारं मेनिरे तं पुराविदः ॥

अवकुञ्चिता

क्रमतोऽङ्घ्रिभ्यां कुञ्चिताभ्यां तु पृष्ठतः ।
गत्यावकुञ्चिता ज्ञेया ।

कुम्भः

अवघटः

दुष्करोऽवघटो मतः ।

कुम्भः

—हस्तपाटः

पुटमेकैकपाणिश्चेत् साङ्गुलीभिः क्रमाद्यदा ।

तलेन हत्वा प्रहरेत् पाटः सोऽवघटो मतः ॥
नन गिड गिडदगिटनगिन गिन गिन नगि कुम्भः

## अवतरणलक्षणम्

ततोऽवतरणं तत्र गायकानां निवेशनम् ।
रङ्गस्योत्तरदिग्भागे गायकाः स्युरवाङ्मुखाः ॥
ततो यवनिका धार्या मध्ये रङ्गमनोहरा ।
अष्टहस्तायतहस्तैः पञ्चषड्भिश्च विस्तृता ॥
मध्ये महेश्वरं तस्य पार्श्वयोर्ब्रह्मकेशवौ ।
त्रयाणां पार्श्वयोश्चन्द्रः सूर्यो दक्षिणसव्ययोः ॥
परितः कालिकं चक्रं देवीः कोणेषु लेखयेत् ।
सरस्वतीं वायुकोणायाम्नेये तारकामथ ॥
ऐशाने भैरवीं चैव नैर्ऋते कामगामिनीं ।
गोरक्षं दक्षिणे भागे सिद्धनाथं तु पश्चिमे ॥
मीननाथं पूर्वभागे चतुरङ्गं तयोत्तरे।
पूर्वयोः पूजयेदेताः स्थानेष्वेतेषु देवताः ।
तृतीयस्यां यथा स्थानमेता मूर्तीः प्रपूजयेत् ॥ विप्रदासः

## अवधानच्छायाः

चित्तस्यैकाग्रभावेन ग्राह्यास्तेऽवधानजाः । कुम्भः

## अवनद्धवाद्यभेदाः

तत्रादौ पटहः प्रोक्तो हुडुक्का मुरजस्ततः ।
करटापटवाद्यं च भेरी त्रिवलिदर्दुरौ ॥
डक्कुली डमरुर्डक्का ढक्का धमस एव च ।
निस्वानस्तांम्रकीरुञ्जा कटुवालश्च सेलुका ।
उच्यते च प्रसिद्धानां लक्षणं क्रियतामपि ॥ सोमराजदेवः

## अवन्तीदेशाः

प्रोक्ता प्रवृत्तिर्याऽवन्ती बुधैर्नाट्यप्रयोक्तृभिः ।
सौराष्ट्रा यवनाश्चैव शकावेदिशिकास्तथा ॥
अनर्ता माळवाश्चैव सौवीरा अपि सैन्धवाः ।
दशार्णास्त्रैपुरास्तद्वदाबुवेया अवन्तयः ॥
एते चान्ये च ये देशा अवन्तीमाश्रितास्तुते ।
सात्त्वत्यारभटा वा या प्रयोगं स्वल्पमाश्रिता ॥ वेमः

## अवन्त्यादीनां प्रवेशवर्णनम्

अवन्त्या दाक्षिणात्याया: प्रदक्षिणपरिक्रमः ।
प्रवेशोऽपि तयोर्नाट्यमुत्तरद्वारतो भवेत् ॥
पाञ्चाल्याश्चोढ्रमागध्याः प्रचारः स्वप्रदक्षिणः ।
प्रकीर्तितः प्रवेशोऽपि दक्षिणद्वारतो भवेत् ॥ वेमः

## अवपातः

भयहर्षसमुत्थानो विनिपातससम्भ्रमः ।
प्रवेशनिर्गमोद्युक्तः सोऽवपात इति स्मृतः ॥ कुम्भः

### प्रकीर्णम्

अवपातस्तु सम्भ्रान्तविद्रुतानेत्रभूषणः (?) ।
क्षिप्रप्रवेशनिष्क्रामो भयहर्षसमुद्भवः ॥ वेमः

## अवमृष्टम्

कनिष्ठाङ्गुष्ठकाभ्यां तु दक्षिणाभ्यामधोमुखम् ।
तन्त्रीषु त्रिप्रकारं चाप्यवमृष्टं प्रकीर्तितम् ॥ नाट्यशास्त्रे

## अवरोहिणः

विधूतश्च त्रिवर्णस्य तथोद्वाहित एव च ।
उद्गीतश्च तथा वेणुर्विज्ञेया ह्यवरोहिणः ॥ नाट्यशास्त्रे

## अवरोही

अवरोहन्ति स्वरा यत्रैकेनैव क्रमेण तु ।
स चावरोही शब्दे तु समनन्तरगः स्वरः ॥ मतङ्गः

## —स्वरः

यत्र चैवावरोहन्ति सोऽवरोहीति भाष्यते । नाट्यशास्त्रे

## अवस्खलितः

यो मन्द्रादप्यधो याति योऽवस्खलित उच्यते । कुम्भः

## अवहित्था—व्यभिचारिभावः

विकारगोपनादन्यविक्रि[illegible]वहित्था । सुधाकरः

**अव्यक्तः**

गद्गदध्वनिना युक्तः सोऽव्यक्त इति कथ्यते ।

भरतकल्पलतामञ्जरी

**अव्यवस्थितः**

अव्यवस्थित इत्युक्तः स्थानैरव्यवस्थितः ।

भरतकल्पलतामञ्जरी

**अष्टौ ध्रुवाः**

जयन्तश्च तथोत्साहो नन्दनश्चन्द्रशेखरः ।
कामदो विजयाख्यश्च कन्दर्पजयमङ्गलौ ।
अष्टौ ध्रुवाः समाख्याता राजयोग्या सदा बुधैः ॥

गान्धर्ववेदे

**अष्टबन्धविहाराख्यम्**

वामदक्षिणपार्श्वौ ... ... त्परोदेशेषु सर्वदः ।
मण्डलस्वस्तिकौ यत्वा... ...क्रमो स विलासकौ ॥

आज्ञास्वष्टासु चे......लुठितौ यत्र यत्तदा ।
अष्टपन्धविहाराख्यमादिष्टं नृत्तकोविदैः ॥

**असमः—तालः**

असमे लेगुरुद्वन्द्वं ।
। S S

कुम्भः

**असंयुतहस्ताः**

लिरद्दामोदरेणोक्ता अमी हस्ता असंयुताः ।
असंयुता अर्थवशादेते स्युः संयुता अपि ॥

सङ्गीतनारायणे

**अहृद्यं वस्तु**

दृष्ट्वाकेकरया शश्वदुपरिष्टाद्विलोकयन् ।
अस्पशच तथोद्वेगान्मुखस्य च विकूणनात् ।
अहृद्यमभिनेतव्यं वस्तु नाट्यविचक्षणैः ॥

वेमः

**अंशलक्षणम्**

रागश्च यस्मिन् वसति यस्माच्चैव प्रवर्तते ।
मन्द्रतारविषण्या च पञ्चस्वरपरागतिः ॥

अनेकस्वरसंयोगे योऽत्यर्थमुपलभ्यते ।
अन्यश्च बलिनो यस्य संवादी चानुवाद्यपि ॥

ग्रहापन्यासविन्याससन्याससंन्यासगोचरः ।
परिचार्य स्थितो यस्तु सोंऽशः स्याद्दशलक्षणः ॥

नाट्यशास्त्रे

## आ

**आक्रमणः**

आक्रमणस्य ते ज्ञेया ये गीते गायनैः सदा ।

कुम्भः

**आक्षिप्तिकिका**

सूत्रभृन्नर्तकी वद्वत्सूत्रधारस्य चार्चयेत् ।
तदाक्षिप्तिकिका ज्ञेया ध्रुवामात्रं यथा भवेत् ॥

कुण्डलमण्डितगण्डयुगं भूधरकन्दरकृतवसतिम् ।
सुन्दरचन्द्रकलाकलितं शम्भुमहं प्रणमामि विभुम् ॥

कुम्भः

**आक्षेपिकी**

वृत्तान्योजकृतानि स्युर्दुःखे यानि भवन्ति हि ।
तानि द्रुतासु योज्यानि लघुयुग्मकृतानि तु ॥

यानि चाल्पाक्षराणि स्युरल्पच्छन्दः कृतानि तु ।
तानि स्थितावकृष्टासु कार्या ह्याक्षेपिकीषु च ॥

गुर्वादिस्तु गुरुः कार्यो लघ्वादिश्च लघुस्तथा ।
ये त्वोजच्छन्दसां युक्ता ज्ञेयास्त्वाक्षेपिकी तथा ॥

यान्योजयुग्म छन्दांसि ज्ञेयान्याक्षेपिकी तथा ।
लघुयुग्मकृता या स्यात्स्थिता साक्षेपिकी भवेत् ॥

विषमांशाक्षराणिः स्युः पदैरर्थवशानुगाः ।
शक्या तालेन ता योज्या वर्णनाकर्षितेन तु ॥

क्रममुल्लङ्घ्य विविधैः क्रियते या द्रुतलयेन नाट्यविधौ ।
आक्षेपिकी ध्रुवाऽसौ द्रुता स्थिता वापि विज्ञेया ॥

नाट्यशास्त्रे

**आङ्गिकनृत्यक्रमः**

वेणीकृतास्तथा मुक्तावद्धास्तेष्ववमताः (?) ।
मीटको जूटको वीरग्रन्थिर्द्विफलकस्तथा ॥

नारङ्गी चैव धम्मिल्लकुन्तलः सन्निवृत्तकः ।
यावग्रन्थी कुसुमग्रन्थी व्रणग्रन्थीश्च गुम्फिताः ॥

मूलग्रन्थीस्तदा मध्यप्रान्तग्रन्थीस्तथैव च ।
इत्याद्यनेकशश्चैव ज्ञातव्याः संयुताः कचाः ॥

इति वेणीधम्मिल्लपरिपूर्ण इत्याङ्गिकनृत्यक्रमः । कुम्भः

### आङ्गिकसात्त्विकः

संस्तुतो सत्यशब्देनाङ्गिकोऽप्यत्राभिधीयते ।
लक्षणावृत्तिमाश्रित्य नाट्यशब्दोऽपि वर्तते ॥

कुम्भः

### आङ्गिकादीनामभिनयानां लक्षणानि

अङ्गैः शिरःप्रभृतिभिर्निर्वृत्त्या आङ्गिका मताः ।
वाग्भिर्ये रचिता गीतप्रबन्धाद्यास्तु वाचिकाः ॥

आहार्यं भूषणादि स्यादाहार्यास्तत्प्रदर्शिताः ।
सत्त्वं मनोभाविताः स्युस्तेन ये सात्त्विकास्तु ते ॥

यद्यप्यलङ्कार्यशेषा अलङ्कारास्तथाप्यमी ।
प्राधान्येन विभावादीनानयन्ति यदा तदा ।
विवक्षितप्रधानत्वाद्भवन्त्यभिनयाभिधाः ॥

विप्रदासः

### आङ्गिकाभिनयः

अर्थप्रतीत्युपायत्वाद्वाचिकोऽपि न मुख्यता ।
वाचिकोपकृतस्तस्मादाङ्गिको मुख्य उच्यते ॥

आङ्गिकोऽपि पुनस्त्रेधा शाखानृत्ताङ्कुरैर्भवेत् ।
करप्रधानो व्यापारस्तेषु शाखेति कीर्त्यते ॥

स्थानकाद्यैरुपक्रान्तं हस्तकाद्यैः प्रवर्तितम् ।
करणैरङ्गहारैश्च निष्पन्नं नृत्तमुच्यते ॥

विप्रदासः

### आङ्गिकलक्षणम्—अभिनयः

तत्राङ्गिको भवेदङ्गैर्निर्वर्त्यः स पुनस्त्रिधा ।
शारीरो मुखसञ्जातश्चेष्टया च विनिर्मितः ॥

शाखा याङ्गैरुपाङ्गैश्च प्रत्यङ्गैश्च प्रदर्शितः ।
शारीरस्तत्र मुखजः केवलो वाङ्गनिर्मितः ॥

चेष्टाकृतस्तु चेष्टाभिः सासासनगतादिभिः (?) ।
शाखा याङ्गैरुपाङ्गैश्च रचितः परिकल्पितः ॥

नृत्तरत्नावली

### आचार्यलक्षणम्

आचार्यः श्रुतिकोविदः पटुमतिर्वाक्ये सुवेषो रसे
ज्ञाता लक्षणलक्ष्यतत्त्वविषयो तूर्यत्रये पण्डितः ।
हास्यज्ञो नृपसंसदि प्रगुणधीरास्योद्भवे वादने
नानादेशविचित्रकाकुरचनाप्रावीण्यविद्याध्वगः ॥

कुम्भः

तौर्यत्रितये लक्ष्यविद्याचार्यः प्रकीर्तितः ।
वाग्मी स्वरूपवेत्तासौ सरसः श्रुतिकोविदः ।
सभासु परिहासज्ञो भवेद्वदनवाद्य वित् ॥

हम्मीरः

### आतोद्यम्

ततं चैवावनद्धं च घनं सुषिरमेव च
चतुर्विधं तु विज्ञेयमातोद्यं लक्षणान्वितम् ।
ततं तन्त्रीकृतं ज्ञेयमवनद्धं तु पौष्करम् ।
घनं तालस्तु विज्ञेयः सुषिरो वंश एव च ॥

नाट्यशास्त्रे

### आत्मार्थः

आत्मानुभावयोग्यार्थ आत्मार्थ इति कथ्यते ।

वेमः

### आत्मोपक्षेपकम्

शृङ्गाररसस्थापकं हास्यं बहुलं करणाञ्चितम् ।
आत्मोपक्षेपकं नर्म विप्रलम्भरसोज्ज्वलम् ॥

कुम्भः

### आदिकूर्मावताराख्यम्

वामदक्षिणयोर्मूर्ध्नौ युगपत्क्रमतोऽथवा ।
ऊर्ध्वाधोमण्डलभ्रान्तौ करौ स्वस्तिकतां गतौ ।
वर्तनास्वस्तिकापार्श्वयुग्मे मण्डलघूर्णितौ ॥

वहन्मण्डलघूर्णौ चेत्पुरोविलुठतस्तदा ।
आदिकूर्मावताराख्यं भणितं पूर्वसूरिभिः ॥

कुम्भः

### आनन्दवर्धनी लहरी

उद्ग्राहध्रुवकौ प्राग्वत् ध्रुवार्धं पश्चिमं ततः ।
आभोगध्रुवकोद्ग्राहाः सकृदानन्दवर्धनी ॥

मोक्षदेवः

### आन्दोलितः

पर्वतारोहणे वनरान्दोलितः (?) ।

कुम्भः

### आपडः

भूमेर्निकुट्टनं पातालाद्यापडयो (?) भवेत् ।

कुम्भः

### अमन्दमुकुन्दमकरन्दप्रबन्धः

नष्टो रागस्तृतीयाख्यः तालो मध्यलयः क्वचित् ।
पदानां शोभयालापगुम्फनं गानहेतुकम् ॥

अन्ते पाटाः स्वरास्तेनास्तदन्ते पद्यगुम्फनम् ।
एषोऽमन्दमुकुन्दाद्यमकरन्दाभिधानवान् ॥

कुम्भः

### आभीरीभाषा

पञ्चमांशग्रहन्यासा शुद्धमध्यमसंभवा ।
प्रचुरैर्यमकैर्युक्ता गान्धारर्षभवर्जिता ॥
सङ्ग्रामे विनियोक्तव्याभीरीवीररसावहा ।
संपूर्णाप्यस्ति भाषेयं याष्टिकाचार्यसंमता ॥

न तु नौडुवतानेषु गान्धारर्षभयोः क्वचित् ।
लोपो विधीयते सद्भिरिह किं तस्य नोदना ॥

उच्यते नैष दोषोऽस्ति भाषात्वादिह भाषणात् ।
आचार्यस्य तदुक्तेर्यत् प्रामाण्यमुररीकृतम् ॥

कुम्भः

### आभोगः

आभोगः सम्भवेद्येन प्रबन्धपरिपूर्णता ।

सोमराजदेवः

### आभ्यन्तरनाट्यलक्षणम्

आभ्यन्तरं बाह्यमिति नाट्यमेतद् द्विधा मतम् ।
सुकुमाराङ्गविन्यासमसम्भ्रान्तविचेष्टितम् ॥

परिस्फुटपदालापं युक्तं वाद्यैरनुद्धवैः ।
असम्प्रदायशिक्षावन्नाट्याचार्यप्रयोजितम् ॥

लयतालकलापातप्रमाणनियमान्वितम् ।
हस्तसञ्चारललिताभिनयं लक्षणान्वितम् ।
रसभावसमायुक्तं नाट्यमाभ्यन्तरं स्मृतम् ॥

वेमः

### आयतम्

स्वरा मन्द्रादिके स्थाने पृथग्व्याप्ताः पुनः पुनः ।
आयतं चैवमाख्यातम् भरतकल्पलतामञ्जरी

### आरभटीवृत्तिः

आरं स्याच्छात्रवं तस्य योगायोधा भटाः स्मृताः ।
तद्वृत्तिरिव या वृत्तिर्भवेदारभटी तु सा ॥

कुम्भः

आरं शत्रुसमूहोत्तमोद्योगाः पुरुषा भटाः ।
तेषां वृत्तिसमां वृत्तिं विदुरारभटीं बुधाः ॥

विप्रदासः

### आरम्भः

ततः स्वल्पेष्ववहितेष्वङ्गमारम्भसंज्ञितम् ।
तद्यत्र गायकाः साक्षात्सप्तस्वरपरिग्रहम् ॥

कृत्वा कुर्युस्तालयुक्तं गीतं तत्तद्ध्रुवा पुनः ।
सप्तस्वरोद्भवास्ताः स्युः सङ्गतिश्च सुगन्धिनी ॥
रौद्री पाञ्चतनी तद्वत्पाञ्चालिन्यथ दैवती ।
अश्विनीति क्रमादाभिर्ग्रहणं स्यात्प्रसादनम् ॥

चतुरश्राभिधास्तिस्रस्सुगत्याद्यासु तत्पराः ।
तिस्रस्त्र्यश्राभिधास्त्वेत्रं दैतिनी (दैवती वदिह्यश्विनी ।
एतद्गाथाभिरातोद्यवादनं राजशिक्षया ॥

कुम्भः

दीर्घाण्यादावष्टौ द्वादश च लघूनि नैधनं चैव ।
चत्वारि गुरूणि तथा ह्रस्वान्यष्टौ च दीर्घे च ॥

लघुसंज्ञानि चतुर्धानिधनं द्विगुणीकृतानि दीर्घे द्वे ।
अष्टौ लघूनि नैधनमित्यारम्भेऽक्षरविधानम् ॥

नाट्यशास्त्रे

### आरम्भादयः

वस्तूत्थापनसम्फोटौ संक्षिप्तकावपातकौ ।
एते भेदास्तु चत्वार आरंभाद्याः प्रकीर्तिताः ॥

कुम्भः

### आरोहिणः

निष्कम्पोऽभ्युच्छ्रयश्चैव हसितो बिन्दुरेव च ।
प्रेङ्खोलिवस्तथाक्षिप्तो विस्तीर्णो ललितस्तथा ॥

ह्रादमानः संप्रदानः सन्धिः प्रच्छादनस्तथा ।
प्रसन्नादिः प्रसन्नान्त इति चारोहिणः स्मृताः ॥

नाट्यशास्त्रे

### आरोही—स्वरः

आरोहन्ति स्वरा यत्र आरोही स तु संज्ञितः ।

नाट्यशास्त्रे

### आलवणी

नवमुष्टिर्वेणुदण्डस्त्वङ्गुलद्वयविस्तरः ।
अङ्गुलद्वयविस्तारः ककुभो वक्त्र उन्मुखः ॥

मेषान्त्रनिर्मिता तन्त्री सूक्ष्मा श्लक्ष्णा समा दृढा ।
दशाङ्गुलानाह तुम्बं वेदाङ्गुलाननम् ॥

दन्तनामिसमायुक्ता दोरीबन्धनवर्जिता ।
पत्रिकाकर्परहीना भवेदालवणी शुभा ॥

निष्कलस्य प्रकारेण वाद्यालावणिका सदा ।
बिन्दुनादसमोपेता तुम्बेर्निक्षिप्य वक्षसि ॥

## आलप्तिः

गायेदसौ रूपकभञ्जनीति प्रोक्ता पदालप्तिरियं पुराणैः ।
वर्णैरलङ्कारगुणैः सुपूर्णा स्थायाश्च नानागमकैर्विचित्रा ।
आलप्तिरुक्ता मुनिभिः पुराणैश्चित्राद्यभङ्गी प्रगुणा मनोज्ञा ॥

कुम्भः

## आलप्तिलक्षणम्

रागालपनमालप्तिः प्रकटीकरणं मतम् ।
सा द्विधा गदिता रागरूपकाभ्यां विशेषणात् ॥

रागालप्तिस्तु सा या स्यादनपेक्ष्य च रूपकम् ।
स्वस्थानैः सा चतुर्भिः स्यादिति गीतविदो विदुः ॥

यत्रोपवेश्यते रागः स्वरे स्थायी स कथ्यते ।
आद्यस्वरद्वये वाद्यो मुख्यस्तादुपजायते ॥

स्वस्थानं प्रथमं ख्यातं नारदेन मनीषिणा ।
चतुर्भिस्तु द्वितीयं स्यादर्धस्थं तत्प्रकीर्तितम् ॥

स्वरैश्चतुर्भिर्द्वाभ्यां वा यद्भवेत्तत्तृतीयकम् ।
चतुर्भिर्द्विगुणैः प्रोक्तं चतुर्थं स्थानकं बुधैः ॥

स्तोकस्तोकैः सदा स्थायैर्विचित्रैर्बहुभङ्गिभिः ।
जीवस्वरव्याप्तिमुख्यै रागस्य स्थापना भवेत् ॥

एभिश्चतुर्भिः स्वस्थानै रागालप्तिर्मता सताम् ।
वक्ष्यते रूपकालप्तिः सर्वशास्त्रेषु संमता ॥

रूपकस्थेन रागेण तालेन च विधीयते ।
या सोक्ता रूपकालप्तिः सा पुनर्द्विविधा भवेत् ॥

प्रतिग्रहणिकैकान्या भञ्जनीत्यभिधीयते ।
विधाय स्थायमालप्तै रूपकावयवो यदि ॥

प्रतिगृह्यते चान्यथा गायेदसौ रूपकभञ्जनी ।
वर्णालङ्कारसंयुक्ता गमकस्थायचित्रता ।
आलप्तिरुच्यते तज्ज्ञैर्भूरिभङ्गिमनोहरा ॥

मोक्षदेवः

स्थाय्यादिवर्णादाह नानालङ्कारधारिणी ।
स्वस्थाननयनाप्रौढिनिर्गूढाजनरञ्जनी ॥

स्तद्गमभीदाने वीणी संयुता गमकाञ्चिता(?) ।
समस्तगीतवस्तूनामालप्तिः प्रथमं मता ॥

सोमराजदेवः

## आलम्भनभावः

मण्डलादिवाद्यघोषाश्च यवनिकान्तरे बहुरूपमादाय
स्थितिश्च आगामिरूपकशङ्काशब्दप्रकटनं चालम्भनभावः ।

शृङ्गारशेखरः

## आलातलक्षणम्

दक्षिणेनाङ्घ्रिणालातां कुर्वंस्तेनैव पाणिना ।
नितम्बं चतुरश्रं च विधाय क्रमशः करम् ॥

वामेन चरणेनोर्ध्वजानुचारीं प्रकल्पयेत् ।
वामाङ्गेनापि कुर्वीत भूयोऽलातादिदिक्क्रमम् ॥

यस्मिन्निदमलाताख्यं ललिते नृत्य इष्यते ।
हित्वा नितम्बमत्राह डोलं कीर्तिधरः करम् ॥

नृत्तरत्नावली

## आलापचारिका

करोति स्वेष्टरागेण शुष्कालापं तु गायकः ।
नर्तकीनृत्तकाले तु सा प्रोक्तालापचारिका ॥

भरतकल्पलतामञ्जरी

## आलापिनीलक्षणम्

आलापिनीगतं लक्ष्म वक्ष्ये लक्ष्मविदां मतम् ।
नवमुष्टिमितो दैर्घ्ये वैणवः सुषिरोऽन्तरः ॥

अङ्गुलद्वन्द्वपरिधिः प्राग्वद्ग्रन्थ्यादिवर्जितः ।
श्लक्ष्णः समस्तवृत्तश्च दण्डः स्यात्ककुभं दधत् ॥

अङ्गुलद्वयविस्तारमङ्गुलार्धायतं तथा ।
तदर्धपिण्डसंयुक्तमुन्मुखं पत्रिकाऽभिधम् ॥

एकदण्डमधो भागे शङ्कुना च विराजितम् ।
चतुरङ्गुलदैर्घ्येण बहिर्मध्योन्नतेन च ॥

हम्मीरः

## आलापिनीभेदाः

आलापिन्यामने दण्डः शुषिरो वेणुसम्भवः (?) ।
त्र्यङ्गुलपरिधौ वृत्तौ भवेदानवमुष्टिकः (?) ॥

स्यादस्यास्तु प्रमाणेन प्रोन्नतः ककुभः शुभः ।
बध्नीयाच्चुम्बकं दन्तचारुचुम्बिकयान्वितम् ।।
तेषां त्रिसूत्रिता तन्त्री कंस्यामपधनिस्वराः ।
अमीषामेव भेदेन वाद्यन्ते रसिका अपि ।।

सोमराजदेवः

## आलिङ्गनोद्भवः

किञ्चिच्छ्लिष्टभुजावेव पताकौ स्वस्तिकीकृतौ ।
आलिङ्गनोद्भवो हस्त आलिङ्गनविधौ मतः ।।

कुम्भः

## आलिप्ता

आलिप्ता द्विविधा ज्ञेया स्वरसंयोजने तथा ।
रागलिप्ता रूपलिप्ता द्विविधा परिकीर्तिता ।।

भरतकल्पलतामञ्जरी

## आलेखनः

चलत्सन्दंशहस्तश्चेत्करस्यालेखनस्तदा ।
लेखने विनियोज्योऽयं नृत्याभिनयगोऽपि च ।।

कुम्भः

## आवजलक्षणम्

या हस्तसम्मिता दैर्घ्येऽष्टाविंशत्यङ्गुला पुनः ।
परिघोऽर्धाङ्गुलमिता पिण्डे सप्ताङ्गुले मुखे ।
मण्डल्यौ वक्त्रयोर्वल्लीमष्टावेकदशाङ्गुले ।।

हम्मीरः

## आवापः—कलामानम्

आवापसंज्ञकं ज्ञेयमुत्तानाङ्गुलिकुञ्चनम् ।

दत्तिलः

## आविद्धः—धातुः

क्षेपः प्लुतोऽतिपातोऽतिकीर्णमनुबन्धसंज्ञितश्चैव ।
आविद्धो विज्ञेयो धातुर्वै पञ्चविध एव ।।
द्विकत्रिचतुष्कनवकैः प्रहारैः क्रमशः कृतैः ।
आविद्धधातुर्विज्ञेयः सानुबन्धविभूषितः ।।

नाट्यशास्त्रे

## आविद्धवक्रलक्षणम्

भुजाग्रयोः कूर्परयोरंसयोः सविलासयोः ।
सतोः पताकौ व्यावृत्तिं विधाय भवतोऽद्भुतम् ।।
अधस्तलौ चेदाविद्धवक्रौ हस्तौ तदोदितौ ।
विक्षेपवलने प्राहुः प्रयोगे कृतिनस्तयोः ।।

हम्मीरः

## आवेगः—व्यभिचारिभावः

वातवेगाग्निकुञ्जरोद्भ्रमणप्रियाप्रियश्रवणव्यसनाभिघातादि-जनितसम्भ्रम आवेगः ।

शुभङ्करः

## आवेद्यम्—भूषा

आवेद्यं भूषणं तत्स्यात् श्रवणाभरणादि यत् ।
अत्रादिशब्देन तथा नानाभरणमुच्यते ।।

वेमः

## आश्रावणलक्षणम्

एवमातोद्य विन्यासं सारम्भं विनियुज्य तु ।
आश्रावणादीन्यङ्गानि प्रयुञ्जीत यथाक्रमम् ।।
ईषदादौ क्रियमाणं मृदङ्गपरिमार्जनम् ।
फणित्रयक्रमादेतदाश्रावणमिति स्मृतम् ।।
अस्याक्षराणां विन्यासो विप्रदासेन भण्यते ।
आदौ गुरुद्वयं पश्चाल्लघ्वष्टकमथो गुरुः ।।
लघुद्वयं गुरुद्वन्द्वं लघ्वष्टकमथो गुरुः ।
एवमाद्यो भवेत्खण्डो द्वितीयोऽप्येवमिष्यते ।।
तृतीये तु तृतीयः स्याद्गुरुर्लघुचतुष्टयम् ।
अष्टमोऽथ गुरुः पश्चाल्लघुषट्कं ततो गुरुः ।
एवं खण्डत्रयात्मेयं त्रिषष्ट्यक्षरनिर्मिता ।।

विप्रदासः

## आश्लिष्टा—चारी

पार्ष्णिविद्धस्य यौ पादौ चेद्विश्लिष्योपसर्पतः ।
यदापसर्पतः प्रोक्ता साश्लिष्टा गतिरुद्धते ।।

सङ्गीतमुक्तावली देवेन्द्रकृता

## आसारिता

आपूर्वात्सरतेर्धातो रूपे पाताः पुरोदिताः ।
आसार्यन्त इति प्रोक्ता बुधैरासारिताभिधाः ।।

कुम्भः

## आसारिताङ्गानि

मुखं प्रतिमुखं चैव देहं संहरणं तथा ।
अङ्गान्येतानि चत्वारि सर्वेष्वासारितेषु च ।।

उपोहनं मुखं तेषां युग्मं प्रतिमुखं भवेत्।
ओजःशरीरसंहारावयमङ्गविधिः क्रमः ॥
इत्येवं चतुरङ्गानि ज्ञेयान्यासारितानि तु ।
चतुरासारितैर्बद्धं विज्ञेयं वर्धमानकम् ॥

नाट्यशास्त्रे

**आहतः—नादः**

सोऽप्याहतः पञ्चविधो नादस्तु परिकीर्तितः ।
नखवायुजचर्माणि लोहशारीरजास्तथा ॥
नखं वीणादयः प्रोक्ताः वंशाद्या वायुपूरकाः ।
चर्माणि च मृदङ्गाद्या लोहास्तालादयस्तथा ।
देहनादेन ते युक्ता नादाः पञ्चविधाः स्मृताः ॥

सङ्गीतमकरन्दे

**आहार्याभिनयः**

नैपथ्यस्य निधानं स्यादाहार्यः स्वचतुर्भुजः ।
पुस्तभूषाङ्गरचनासजीवः परिकल्पितः ॥

नृत्तरत्नावली

आहार्याभिनयो नाम नैपथ्यविधिरुच्यते ।
यत्र नित्यं प्रयत्नस्तु कार्यो नाट्यप्रयोक्तृभिः ॥
नाट्यप्रयोगः सर्वोऽपि यतस्तस्मिन् प्रतिष्ठितः ।
नाट्यस्य योग्यालंकारो नैपथ्यमिति कथ्यते ॥
नानावर्णाः प्रकृतयः पूर्वमाहार्य सूचिताः ।
आङ्गिकाद्यैरभिनयैर्व्यज्यन्ते तदनन्तरम् ॥
आहार्याभिनयस्तज्ज्ञैश्चतुर्धा परिकीर्तितः ।
पुस्तो भाषाङ्गरचना सञ्जीवश्चेत्यनुक्रमात् ॥

वेमः

इ

**इष्टवस्तु**

परावृत्य च शिरसो नाम्ना नेत्रनिकुञ्चनात् ।
अदर्शनादपि स्पष्टमिष्टेष्टं वस्तु निर्दिशेत् ॥

वेमः

ई

**ईहामृगः—रूपकम्**

ईहामृगस्तु विज्ञेयश्चतुरङ्कस्त्रिसन्धिकः ।
बलात्कारांशशाठ्यं च नरविद्याधराश्रयः ॥
दिव्यस्त्रीकारणाद्यत्र संग्रामः कैशिकीयतः ।
नायकैः षड्भिः सञ्ज्ञातो विख्यातपुरुषान्वितः ॥
शान्तशृङ्गारहास्यैस्तु वर्जितो हृदयङ्गमः ।
वधप्राप्तस्य कुर्वीत वधं तैरसाह्यतः ॥
संरम्भं परमानीय युद्धव्याजान्निवारयेत् ।
अनन्यां नायिकामस्मिन्नायको मृगवदीहते ।
एष ईहामृगोऽयं तन्मुनीन्द्रभरतोदितः ॥
देवानामर......जार्थचरितो चौरक्रियाद्यन्वितो
दैव्यादिः प्रतिनायको न च वधः प्राप्तस्तथातोरणे ।
सात्त्वत्त्यारभटी च यत्र सकला वृत्तिर्विना कैशिकी-
गर्वामर्षविहीन एष कथितो वेदाङ्क ईहामृगः ॥

शुभङ्करः

उ

**उक्तप्रत्युक्तकलक्षणम्—लासः**

साधिक्षेपैः पदैर्युक्तं चित्रगीतार्थयोजितम् ।
कोपप्रसादजनितमुक्तप्रत्युक्तकं विदुः ॥

नृत्तरत्नावली

**उग्रता—व्यभिचारिभावः**

क्रोधान्निर्दयचित्तत्वमुग्रता । शुभङ्करः

**उग्रम्**

मध्यमादिस्वरापक्वमुग्रं च परिकीर्तितम् ।

भरतकल्पलतामञ्जरी

**उचितः**

..............तदेवोचितसंज्ञकः ।
योग्यतामापितो गीते गीतज्ञेन विपश्चिता ॥

कुम्भः

**उचितभ्रमरी**

देहस्य तिर्यग्भ्रमणात्समपादादनन्तरम् ।
उचितभ्रमरीं नाम ब्रूते शङ्करकिङ्करः ॥

कुम्भः

**उचितभ्रमरीलक्षणम्**

समपादानन्तरं चेत्तिरश्चीं भ्रामयेत्तनुम् ।
क्रियते यत्र तामाहुरुचितभ्रमरीमिह ॥

हम्मीरः

### उच्छ्वासः

उच्छ्वास आघ्राणे कुसुमादिनः ।

कुम्भः

### उद्धुवः—पाटः

उद्धुवस्तु सकोणेन ललितेन प्रवादनात् ।
तलहस्तेन वामेन पाणिना दक्षिणेन तु ॥

कुम्भः

### उत्कटम्

समौ पादावासनं च समस्पृष्टन्तु भूतलम् ।
स्थानं तदुत्कटं योगध्यानसन्ध्याजपादिषु ॥

कुम्भः

वैष्णवं स्थानकं यत्र समुन्नतमुरस्थलम् ।
कटिनाभिपरौ हस्तौ युगपत्क्रमशोऽथवा ॥
चतुरश्रमिदं प्रोक्तं अङ्गं नेत्रसुखावहम् ।
अंसैर्युद्धे यथान्याय्या धनुषःकरणं तथा ॥
परिमार्जनमादानं ...... मुत्कटमुदाहृतम् ।
देवादितर्पणे सन्ध्या जपहोमादिषु स्मृतम् ॥

ज्यायनः

### उत्कण्ठिता—नायिका

नैवागतः समुचितेष्वपि वासरेषु
प्राणेश्वरोऽतिगुरुकार्यवशेन यस्याः ।
दुर्वारमन्मथमहाज्वरवेपिताङ्गी-
मुत्कण्ठितां वदति तां भरतः कवीन्द्रः ॥

शुभङ्करः

### उत्क्षेपः

पादमाकुञ्चितं पृष्ठपुरतो वाक्षिपेद्यदि ।
जानुपर्यन्तमुत्क्षेपस्तदा चारी प्रकीर्तिता ॥

कुम्भः

### उत्प्रविष्टः

उत्प्रविष्टः स विज्ञेयो यत्तारोहे स्वरो घनः ।

कुम्भः

### उत्प्लवनकर्तरी

उत्प्लुत्य पार्श्वयुगलं कटिदेशे तु विन्यसेत् ।
बध्वा कराभ्यां शिखरे अलंगोत्प्लवनं भवेत् ॥
उत्प्लुत्य प्रपदैः सम्यक्पादस्यैकस्य पृष्ठतः ।
कर्तरीविन्यसेदेषा स्यादुत्प्लवनकर्तरी ॥

अशोकः

### उत्प्लुतभ्रमरी

स्थित्वा समाभ्यां पादाभ्यां उत्प्लुत्य भ्रामयेद्यदि ।
सप्तांगमन्तर......स्यात् उत्प्लुतभ्रमरीत्यसौ ॥

अशोकः

### उत्प्लुतिभेदाः

अञ्चितं चैककरणाञ्चितं स्यादूरवाञ्चितम् ।
दण्डप्रमाणाञ्चितं च कर्तर्यंचितमेव च ॥
तिर्यगञ्चितकं तद्वत्समपादाञ्चितं तथा ।
भ्रान्तपादाञ्चितं च करणं स्यात्ततः परम् ॥
अलगं कूर्मालगं चोर्ध्वालगं चान्तरालगं ।
लोहडी च तथा चान्यैकपादलोहडी तथा ॥
कर्तरी लोहडी चैव स्यादृपेसरणं तथा ।
जलादिशयनं नागबन्धं कपालघूर्णनम् ॥
नतपृष्ठं तथा मत्स्यकरणं च प्रकीर्तितम् ।
करस्पर्शनसंज्ञं च तथा चैणप्लुतं मतम् ॥
तिर्यक्करणसंज्ञं च तिर्यक्स्वस्तिकमेव च ।
स्कन्धभ्रान्तं खण्डसूचि समस्तं च ततःपरम् ॥
ततो विषमसूचीति बाह्यभ्रमरिका ततः ।
अन्तर्भ्रमरिका चैवचोर्ध्वभ्रमरिका तथा ॥
तिरिपभ्रमरी चाथालगभ्रमरिकेति च ।
चक्रभ्रमरिका नामोचितभ्रमरिका तथा ॥
शिरोभ्रमरिका चैव तथा दिग्भ्रमरीति च ।
एषामुत्प्लुतिपूर्वाणि षट्त्रिंशत् संहितानि च ॥

कुम्भः

### उत्फुल्लः—हस्तपाटः

अलपद्मेन हस्तेन स्यादुत्फुल्लो नखाहतेः ।

कुम्भः

### उत्तमनायिकालक्षणम्

विदधत्यप्रियं पत्यौ प्रियमाचरति स्वयम् ।
वल्लभे सापराधेऽपि तूष्णीं तिष्ठति सोत्तमा ॥

भरतकल्पलतामञ्जरी

उत्तमपाठ्यलक्षणम्

गुणैरोजःप्रसादाद्यैर्विविधैरुपशोभितम् ।
अनुप्रासोपमाद्यैश्च शब्दार्थोभयसंश्रयैः ।
अलङ्कृतमलङ्कारैः पाठ्यमुत्तममुच्यते ॥

वेमः

उत्तमपात्रम्

पात्रं स्यान्नर्तनाधारो नर्त्ते स्यात्सैव वर्णका ।
ललितैर्गात्रविक्षेपैः लयतालसमन्वितैः ॥
गीतवाद्यगतान् वर्णान् समुद्गिरदिव स्फुटम् ।
गीतवाद्यध्वनिं श्राव्यमपि चातोषतां नयेत् ॥
अङ्गैश्च रसनं पूर्णैर्मनोधर्मोपबृंहितैः ।
यन्नृत्यति मनोहारि ज्ञेयं तत्पात्रमुत्तमम् ॥

वेमः

उत्तमोत्तमकलक्षणम्—लासः

विचित्रश्लोकबन्धं यन्नानारससमाश्रयम् ।
उत्तमोत्तमकं तत्स्याद्धीलाहावमनोहरम् ॥

नृत्तरत्नावली

उत्तमोत्तमकम्

मुखप्रतिमुखोपेतं तथा चाचपुटाश्रयम् ।
यथाक्षरैः सन्निपातैस्तथा द्वादशभिर्युतम् ॥
नैकयुक्तिविचित्रार्थं पौरुषं भावमाश्रितम् ।
एकाङ्गं शीर्षकं गत्वा द्विमूढं परिकीर्तितम् ॥
उत्तमोत्तमकेत्वादौ नर्कुटं संप्रयोजयेत् ।
श्लोकं विचित्रार्थपदं तथा चैवोपपादयेत् ॥
ततस्तु वस्तुकं कार्यमपरान्तकशाखया ।
यथाक्षरेण कार्यं तु शीर्षकं पञ्चपाणिना ।
उत्तमोत्तमकं प्रोक्तं हेलानृत्तविभूषितम् ॥

नाट्यशास्त्रे

उत्तरा—नक्षत्रहस्तः

उत्तरायां च शिखरः किञ्चिद्वलितरूपकः ।

शृङ्गारशेखरः

उत्तानः

उत्तानो वामहस्तश्चेत्पताकस्तदुपर्यपि ।

कुम्भः

उत्तानवञ्चितलक्षणम्

कपोलांसललाटानां क्षेत्रे ह्यन्यतमे स्थितौ ।
त्रिपताकौ करौ किञ्चित्तिर्यञ्चौ संमुखौ मिथः ॥
अंसकूर्परयोः किञ्चिच्चलतोरूर्ध्वतस्तलौ ।
क्षणं भूत्वा प्रचलितौ ज्ञेयावुत्तानवञ्चितौ ।
अंसकूर्परयोः किञ्चित्प्लवनं मन्वते परे ॥

हम्मीरः

उत्सवः—तालः

लप्लुतावुत्सवे प्रोक्तौ ।
। ऽ

कुम्भः

उद्ग्राहः

अनेनोद्ग्राह्यते गीतमित्युद्ग्राहः प्रकीर्तितः ।

सङ्गीतसूर्योदयः

उद्ग्राहः प्रथमे पादे भवेत्पूर्वं पदद्वयम् ।
पल्लवस्य त्रयं पश्चादेवं पञ्चविधानि हि ॥
एवमेव द्वितीयेऽपि तृतीये पल्लवं विना ।
पदद्वयं भवेत्तस्मादुद्ग्राहे द्वादश स्फुटम् ॥
ध्रुवे त्रीणि तथा भोगे पदमेकं प्रकीर्तितम् ।
एवमेलाप्रबन्धे स्युः पदानां षोडश क्रमात् ॥

कुम्भः

गीतमुद्ग्राह्यते पूर्वं येनोद्ग्राहः स उच्यते ।

सोमराजदेवः

उद्धतजातयः

पङ्क्तिस्त्रिष्टुप्सजगती तथातिजगती पुनः ।
शक्वरी चेति निर्दिष्टा उद्धतानां तु जातयः ॥

नाट्यशास्त्रे

उद्घुष्टः

उद्घुष्टो विरसो घोषात् ज्ञानतो गायनः स्मृतः ।

कुम्भः

उद्घुष्टः—गायकः

उद्घुष्टो विरहाद्दुष्टो गायेद्वीररसं च यः ।

भरतकल्पलतामञ्जरी

## उद्दली

बाह्यं शरीरजं चर्म कवलं परिकीर्तितम् ।
आन्तरं जाठरं चर्म नाम्नः स्यादियमुद्दली ॥

सोमेश्वरः

## उद्दीपनभावलक्षणम्

यवनिकामपनीय तत्तद्रसोचिताङ्गचेष्टाप्रकटनत्वम् ।

शृङ्गारशेखरः

## उद्धतयोर्लक्षणम्

पराङ्मुखौ हंसपक्षौ व्यावृत्तपरिवर्तितौ ।
जयशब्दे प्रयोक्तव्यावुद्धतौ मेनिरेऽपरे ॥

हम्मीरः

## उद्घृष्टम्

प्रहारो वामतर्जन्या उद्घृष्टमिति संज्ञितम् ।

नाट्यशास्त्रे

## उद्वाहितम्

कूर्पराधिष्ठितश्रोणिस्कन्धान्यस्यशिरस्तदा ।
सुप्तमुद्वाहितं प्रोक्तं प्रभोर्लीलाव्यवस्थितौ ॥

कुम्भः

## उद्वेष्टनम्

उद्वेष्टनं वेष्टयित्वा पृष्ठतोऽङ्घ्रौ प्रसारिते ।

कुम्भः

## उपधानः—हस्तः

पताकखण्डविन्यासादुपधान इतीरितः ।
निद्रायामथ चिन्तायामुपधाने प्रयुज्यते ॥

सङ्गीतनारायणे

## उपधानहस्तकः

पताकगण्डविन्यासादुपधानकरो भवेत् ।
निद्रायामथ चिन्तायामुपधानो विवर्तते ॥

विप्रदासः

## उपनायकाः

नायकस्य गुणोत्कर्षकथका उपनायकाः ।
वचोभङ्गीषु चतुराः सखायाः कार्यसाधने ।
पीठमर्दो विटश्चैव विदूषक इति त्रिधा ॥

शुभङ्करः

## उपपत्तिलक्षणम्

प्रलोभ्यान्यवधूं भुङ्क्ते उपायैर्विविधैरपि ।
स तूपपत्तिरित्युक्तः विद्वद्भिरिह शास्त्रतः ॥

भरतकल्पलतामञ्जरी

## उपविष्टस्थानानि

स्थानानि चोपविष्टस्य तानीदानीं प्रचक्षते ।
स्वस्थं विष्कम्भितं क्रान्तं मुकुटं च मदालसम् ।
अस्तालसं जानुगतं मुक्तजानुनि मुक्तकम् ॥

सङ्गीतनारायणे

## उपहसितम्

दन्तानामवलोकनं प्रचलिता गात्रे विकाशो दृशोः
प्राफुल्लोऽपि च नासिकाथ जठरः खेलः सकम्पो भवेत् ।
वक्रं स्याद्विकृतं शिरः प्रचलितं तद्वत्तनौ पीनता
तत्पूर्वं कथितं पुरोपहसितं लिङ्गं मतङ्गादिना ॥

जगद्धरः

## उपाङ्गलक्षणम्

कविच्छायानुकारित्वादुपाङ्गमिति कथ्यते ।

सङ्गीतदर्पणः

## उपाङ्गेषु अपस्थानवराटी

अपस्थानवराटी स्यान्मनिधैर्मन्द्रभूषिता ।
षड्जांशन्याससंयुक्ता गीयते शुचिहासयोः ॥

मोक्षदेवः

## उपाध्यायः

रूपवान्नृत्यतत्वज्ञो वाद्यवादनवेदिता ।
वाद्यप्रबन्ध नेर्माणकुशलो लयतालयोः ॥
कोविदो मुख्यवाद्येषु शिष्यलक्षणदक्षिणः ।
प्रतिष्ठांपयिता गीतनृत्यवाद्यव्यवस्थितः ।
रञ्जकः स्यादुपाध्यायो नृत्यदोषविधानवित् ॥

सङ्गीतनारायणे

## उपाध्यायस्वरूपम्

भूयस्त्वं निजसंप्रदायधिषणो मोहग्रहैः क्रूरै-
र्मेधावान् ध्वनिवस्त्वविद्सु निपुणस्ताले लये कोविदः ।
शिष्यं शिक्षयितुं नवीनरचना वाद्यप्रबन्धे सुधी-
रुद्वेत्ताखिलनृत्तभङ्गिभणितैर्नाट्यागमे पारगः ॥

श्यामानामधिको नतो सुकुशलो माधुर्यविस्तुर्ध्वनो
वाद्येऽधोमुखवाद्यजे निपुणधीः स्यान्नृत्यगीतादिनः।
साक्षात्स्थापयता स्थितौ जनमनोहारी स्वयं रञ्जकः
पात्रस्यापि हृदेव रूपकविधौ निर्माणकर्मोद्धुरः ॥

नृत्यस्याखिलनृत्यवित्समसुखप्रायाग्रणीरग्रणीः
दोषाणामपिधानवित्स्वयमसौस्यान्नृत्यगीतादितः।
प्राग्प्रौढिसुशस्तवाक्यविधुरो धीरो गुणोल्लासको
नाम्ना शुद्धगुणार्णवो निगदितस्तज्ज्ञैरुपाध्यायकः ॥

कुम्भ·

## उपोहनानां वर्णसङ्ग्रहः

यान्यक्षराणि तान्यत्र वक्ष्यन्ते गणकृत्तये।
लघवः षोडशाद्ये स्युर्भानुसङ्ख्या द्वितीयके ॥
लघवोऽष्टौ तृतीयस्य चतुर्थे वेदसम्मिताः।
उपोहने क्रमादेषामादावन्ते च विन्यसेत् ॥
आदौ दिग्ने युगं प्रान्ते झण्ठमित्यक्षरद्वयम्।
दिग्नझण्ठान विन्यासः कलामानानुसारतः।
उपोहनानां पञ्चानामित्युक्तो वर्णसङ्ग्रहः ॥

विप्रदासः

## उमातिलकः—तालः

उमातिलकताले तु द्रुतौ लघुगुरू स्मृतौ।
वाराख्यस्त्वडतालः स्याद्विद्विद्विस्तेन गीयते ॥

गान्धर्ववेदे

## उरःपार्श्वमण्डली—हस्तः

पद्मकोशाभिधौ हस्तावुरोदेशसमाश्रितौ।
व्यावृत्तचलिताकारावुरः पार्श्व इति स्मृतः ॥
नाले च पद्मयुगले मर्मोक्त्यां च विशेषतः।
मुखनाट्यानुयोगेऽपि युज्यते पूर्वसूरिभिः ॥

भरतकल्पलतामञ्जरी

## उरःपार्श्वार्धमण्डलिलक्षणम्

एकशोऽरःस्थितोत्ताने ऽन्यस्मिन् पार्श्वप्रसारितौ।
व्यावर्त्तितरालपद्मीकृत्योरस्थो यदा करः ॥
तदेवारालतां प्राप्य यत् पुरा मण्डलाकृतिः।
स्वपार्श्वे नीयतेऽन्यस्तूद्वेष्टितक्रियया गतिः।
अन्येऽप्येवं करो न्यासादुरःपार्श्वार्धमण्डलौ ॥

हम्मीरः

## उरभ्रमसंबाधम्

स्वस्तिकाकृतितां नीत्वा निभ्रन्तौ बहिरेव तत्।
करौ निवृत्तौ वेगेन मिथस्सांमुख्यधारिणौ ।
यत्रोरोभ्रमसंबाधचालयं तत्तुदीरितम् ॥

## उरुलः

विंशत्यङ्गुलदीर्घो स्यात्सप्ताङ्गुलमिता मुखे।
मुष्टिप्रविष्टमध्यासा त्रिवलीलोहमण्डली ॥
कवचानद्धवदना सप्तरन्ध्रैः सुयन्त्रता।
मध्ये च वेष्टिता रज्वा सूत्रनिर्मितया दृढः ॥
कृच्छास्कन्धे विधायैषा सव्यदक्षिणपाणिना।
तदाह्लादाक्षरैः पाटैर्वादनीया विचक्षणैः ॥
मधुपानप्रमत्तानां योषितां लास्यनर्तने।
वादनीया विशेषेण उरुलोः ध्वनिसंयुता ॥

सोमेश्वरः

## उल्वणौ—करौ

उल्वणौ तु करौ कृत्वा नन्द्यावर्तकुलीरकौ।
वलितात्रलपद्मौचेदुल्वणौ कथितौ तदा ॥

सङ्गीतमुक्तावली देवेन्द्रकृत।

## उल्लालः

क्रमेणोल्लालयेद्यत्र चरणौ गगने नटः।
उल्लालः स तु विज्ञेयः चारिका मूर्धसंस्थितः ॥

कुम्भः

## उल्लासितः

यः क्रन्दुकवदु................ह्यते।
प्रतिगृह्योल्लासितोऽसौ स्थाय उक्तो मनीषिभिः ॥
प्रतिगृह्याविलम्बेन क्रियते यो विलम्बितः ।
गीततत्त्वविदा यत्र स्यादालम्बविलम्बकः ।
प्रसृताकुञ्चितः स स्याद्यः प्रसार्यावकुञ्चितः ॥
वेगेनोर्ध्वं स्वरा यत्र प्रेर्यन्ते गीतकोविदैः ।
उल्लासितो भवेत्स्थायस्तत्र संप्रतिपत्तितः ॥
घ्राणेन मन्दमापीतो मरुदुल्लासितो मतः ।
हृद्यगन्धे च सन्दिग्धेष्वर्थेपूक्तो विचक्षणैः ॥

कुम्भः

## उद्भ्रान्ता

स्थानीया याः स्थितस्तासां संप्रवक्ष्याम्यहं गतिम् ।
कृत्वावहित्थं स्थानं तु वामं बाह्य कटीतटे ॥
आद्यं चारालमुत्तानं कुर्यान्नाभिस्तनान्तरे ।
न निषण्णं न च स्तब्धं न चापि परिवाहितम् ॥
कृत्वा गात्रं ततो गच्छेत्तेनैवेह क्रमेण तु ।
प्रेष्याणामपि कर्तव्या गतिरुद्भ्रान्तगामिनी ॥
किंचिदुन्नमितैर्गात्रैराविद्धभुजविक्रमा ।
स्थानं कृत्वावहित्थं चा वमं चाधोमुखं भुजम् ॥
नाभिप्रदेशे विन्यस्य सव्यं च खटकामुखम् ।
अर्धनारीगतिः कार्या स्त्रीपुंसाभ्यां विमिश्रिता ॥

भरतः

## उल्लोलः—हौडुक्किकपाटः

दक्षिणः प्रतिलोमेन व्यवस्थेन युतो यदि ।
अङ्गुष्ठेन तदा वामः सोच्छ्रासो यत्र कर्मणि ॥
करस्थं पाटमाचख्युरुल्लोलं पाद्यवेदिनः ।
दक्षिणोल्लोलहस्तेन सान्तराङ्गुष्ठयोगिना ॥
सोल्लासेन तु वामेन केचिदुल्लोलमूचिरे ।
मध्ये पुटं परे प्राहुर्दक्षिणाङ्गुष्ठघाततः ॥

कुम्भः

ऊ

## ऊरुताडिता

एकपादे स्थिरे स्थाने स्थितो भूम्याङ्घ्रिणा तु चेत् ।
ऊरू ताडयति प्रोक्ता तदोरुताडिता बुधैः ॥

कुम्भः

## ऊरुवेणी

पार्श्वाभ्यां यत्र चरणावूरुभ्यां स्वस्तिकाकृती ।
क्षितिं संघर्षतश्चारीमूरुवेणीं तदादिशत् ॥

कुम्भः

## ऊरूद्वृत्ता—चारी

यद्वास्य पादपार्ष्णिस्तु तलसञ्चारसंश्रितः ।
अङ्घ्रेः पाण्युन्मुखी सञ्चार्यूरूद्वृत्तेति कथ्यते ॥

वेमः

## ऊर्ध्वजानुः—चारी

कुञ्चितोत्क्षिप्तपादस्य जानुस्तनसमं यदा ।
न्यस्तस्तब्धीकृतोऽन्योंघ्रिरूर्ध्वजानुस्तदा भवेत् ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## ऊर्ध्वमण्डली—हस्तः

अरालाख्यकरौ चोर्ध्वभागे चेत्प्रसृतौ च तौ ।
ऊर्ध्वमण्डलिकाहस्तः प्रोच्यते भरतादिभिः ॥

भरतकल्पलतामञ्जरी

## ऊर्ध्वमण्डलिनौ

अरालौ हंसपक्षौ च ललाटं प्राप्य वक्षसः ।
तत्रस्थावेव तौ भालपार्श्वदेशमुपागतौ ॥
मण्डलावृत्तिविततावूर्ध्वमण्डलिनौ करौ ।
नाभिं प्राप्यात्र विततभ्रान्तावित्यपरे जगुः ।
चक्रवर्त्तिनिकेत्येतौ नृत्तज्ञाः संप्रचक्षते ॥

विप्रदासः

## ऊर्ध्वमण्डलिलक्षणम्

भालस्थलपुरोदेशात्प्राप्य तत्पार्श्वमागतौ ।
मण्डलभ्रान्तिविततावूर्ध्वमण्डलिनौ करौ ॥
ललाटप्राप्तिपर्यन्तमन्ये लक्ष्मानयोर्जगुः ।
चक्रवर्त्तिनिकेत्येतौ प्रसिद्धौ नृत्तवेदिनः ॥

हम्मीरः

## ऊर्ध्वहस्तः—हस्तपाटः

यदोर्ध्वघातः क्रियते दक्षिणेन तलेन हि ।
तदोर्ध्वघातो विज्ञेयो द्यां त्रयेण गिडद्वयात् ॥

गिड गिड दां दां दां

## ऊर्ध्वालग्नम्

तिर्यग्यत्र क्रमादेतत्समपादाञ्चितं विदुः ।
दक्षिणाङ्घ्रिं भ्रामयित्वा तदीयतलपृष्ठतः ॥
वामाङ्घ्रिजङ्घामध्यं चेदवष्टभ्याञ्चितं ततः ।
कृत्वा धरित्रीस्कन्धाभ्यामधिष्ठाय विवर्तनम् ॥
विधायोल्लालयेत्पादौ भ्रान्तपादाञ्चितं तदा ।
उत्प्लुत्याधोमुखोऽग्रे च पतित्वा मर्कटासनम् ॥
यत्र बध्नाति तत्प्रोक्तमलग्नं करणोत्तमम् ।
यदि स्यादलग्ने कूर्मासनं कूर्मालग्नं भवेत् ॥

कुम्भः

## ऋ

**ऋतुः**

यद्यस्य चिह्नं वेषो वा कर्म वा रूपमेव वा ।
निर्देश्यः स ऋतुस्तेन त्विष्टानिष्टार्थदर्शनात् ॥

कुम्भः

**ऋषभः**

नर्दन्ति ऋषभा यस्मात् तस्मादृषभ उच्यते ।

संगीतसारः

**ऋषभासनम्**

जानुनी भूमिसंलग्ने संयुते वियुते तथा ।
सोष्ठवाधिष्ठिताचाङ्गं तदा स्यादृषभासनम् ॥

कुम्भः

## ए

**एकचरणाञ्चितम्**

एकपादाञ्चितं तथा । यद्येकपादेन निर्मितम् ।

कुम्भः

**एकजानुनतम्**

समपादाग्रतः किञ्चिदपरश्चरणो यदा ।
बाह्यपार्श्वगतस्तिर्यक् स्यादेकपार्श्वगतं तदा ॥

समस्य चरणस्यान्यश्चतुरङ्गुलमानतः ।
तिर्यक्कुञ्चितजानुः स्यादेकजानुनतं भवेत् ॥

कुम्भः

**एकतालः—तालः**

लघुरेकश्चतुर्मात्रश्चतुरश्रस्तथैव च ।
यत्रैकतालः भरतकल्पलतामञ्जरी

**एकताली—तालः**

एकताली द्रुतकेन । कुम्भः

**एकपदकुट्टिता**

कुट्टितश्च स्वपार्श्वे च स्थापितोऽङ्गुलिपृष्ठतः ।
पुनर्निकुट्टितस्थाने सा चैकपदकुट्टिता ॥

कुम्भः,

**एकपादम्**

समस्यैकस्य पादस्य जानुमूर्ध्नि यदीतरः ।
बाह्यपार्श्वेन लग्ने हि बाह्यपार्श्वौ तदादिशत् ।
एकपादं मुनिश्रेष्ठः स्थानकं स्थानवित्तमः ॥

कुम्भः

**एकपादाञ्चितकर्तव्यलक्षणम्**

तदेवैकाङ्घ्ररचितमेकपादाञ्चितं मतम् ।
अञ्चितं स्वस्तिकाङ्घ्रिभ्यां कर्तव्याञ्चितमुच्यते ॥

हम्मीरः

**एकमौलिका**

बाह्वोःपताकौ सन्यस्य भ्रमणादेकमौलिका ।
शिरः पल्लविका चाथ द्वितीया कथ्यतेऽधुना ॥

कुम्भः

**एकांशः**

सदृशांशो यथा नट्टावराल्योः शुद्धयोर्मिथः ।
परस्परसदृशयोरेकांशः परिवर्तते ॥

कुम्भः

**एकोनः**

अर्थहीनं तु यो गायेदेकोन इति कथ्यते ।

भरतकल्पलतामञ्जरी

**एणप्लुतम्**

कृत्वोत्प्लवनं सूचीमन्यतमां खे विधाय चेद्व्रजते ।
भूमावूर्ध्वस्थाजं यदोत्कटासनं तदाप्लुतं चैणवम् ॥

कुम्भः

**एलाः**

तदा जयन्तस्य रसे च ताले ध्रुवः पदं वाधिकमक्षरेषु ।
दृष्टं तदा स्यात्स जयन्त एलः प्रोक्तोऽत्र हम्मीरनरेश्वरेण ॥

स्याद्वर्णनियमः सर्वखण्डे खण्डद्वये तथा ।
तदा खण्डानि चान्यानि भवन्ति नियमं विना ॥

पदद्वये यदा वर्णनियमः क्रियते बुधैः ।
तदा पदानि चान्यानि भवन्ति नियमं विना ॥

अन्येऽपि चैव ध्रुवकाः स्युरत्र यथोक्ततालेषु रसेषु सर्वे ।
दूष्यानते सूरिभिरक्षराणां दोषादिभिः प्राह नरेन्द्रवर्यः ॥

हम्मीरः

एलागणः

पृथ्वी यत्र गुरुत्रयादिलघवस्त्वापो नलो मध्यलो।
वातः प्रीतगुरुः नभोऽन्तलघुभृत्प्रद्योतनो मध्यगुः ॥
चन्द्रश्चादिगुरुः पुरन्दरपुरी सर्वत्र ला सर्वतो।
वक्तयेलागणसंहृतिं हृतरिपुः श्रीसोमराजो विभुः ॥

सोमराजदेवः

एलानां संख्या

हंसावत्यादियुग्मस्य विकारा एवमेव तु।
सर्वे त्रिनवतीभेदा एलात्रयसमुद्भवाः ॥

मोक्षदेवः

एलापदानां नामानि

कामी च मघवान् शान्तिजितोमन्त्रो विकारवान्।
मांधाता सुमतिः शोभी सुशोभी गतिकोऽश्चितः ॥
विचित्रो वासवोमृदुः सुचित्र इति षोडश।
नानान्येलापदानां स्युः षोडशानामनुक्रमात् ॥

मोक्षदेवः

एलावर्णेषु देवताः

अकारे देवता विष्णुरिकारे मकरध्वजः।
लकारे लक्ष्यते लक्ष्मीरेलावर्णेषु देवताः ॥

मोक्षदेवः

ओ

ओता

उद्ग्राहो द्विस्ततःखण्डं यस्यां द्विर्भूरिवाद्यकम्।
तत्किञ्चिदधिकं वारे द्वितीयेऽथ तृतीयकम् ॥
कियद्दीर्घं सकृत्तच्च कैश्चित्पाटैर्विमिश्रितम्।
प्रयोक्तव्यं ततो दीर्घखण्डं वर्णस्वरात्मकम् ॥
ततोऽल्पं बहुपाटाद्यं ततोऽन्ते छण्डणो भवेत्।
उद्धतो ध्वनिरत्रस्यात्प्रायोमानं विलम्बितम्।
ओता सोक्ता परे प्राहुः खण्डचालिं मनोहरम् ॥

कुम्भः

औ

औडवरागग्रहस्वराः

धन्यासी औडवः प्रोक्तः सावेरी धविवर्जितः।
औडवो गुर्जरी प्रोक्तः सादिर्वर्ज्यौ रिधौ तथा ॥
रिधौ वर्ज्यौ मध्यमादिरौडवा मधुमाधवी।
मेघरञ्जी मध्यमादि धनिवर्ज्यौ तथौडवः ॥
वेलावल्यौडवः स्यात्तु मादिर्वर्ज्यौ सरीस्वरौ।
रामकृत्यौडवः स्यात्तु गादिर्वर्ज्यौ रिधौ स्वरौ ॥
नारायणी निषादादिरौडवो धपवर्जितः।
पालिरौडवः षड्जादिवर्ज्यौ मध्यमपञ्चमौ ॥

सङ्गीतमकरन्दे

औड्रमागधी

प्रयोगं यादृशं प्राप्ता प्रवृत्तिश्चोड्रमागधी।
अङ्गा वङ्गाः कलिङ्गाश्च गौला उड्राश्च मागधाः ॥
पौण्ड्राः प्लवङ्गमास्तद्वदन्तर्बहिर्गिरस्ततः।
परं च नेपालवत्सप्राग्ज्योतिषास्तथा ॥
कामरूपाः पुलिन्दाश्च वैदेहास्ताम्रलिप्तकाः।
ये चान्ये किल ये प्राच्यास्ते भजन्त्यौढमागधीं ॥
एतासां तु प्रवृत्तीनां रङ्गपीठपरिक्रमा।
साव्यापसव्यरूपेण विज्ञेया विविधा क्रिया ॥

वेमः

औदार्यम्—पौरुषः

औदार्यं सुमहद्दानं प्रियभाषणपूर्वकम्।

वेमः

औडुवशब्दनिष्पत्तिः

उडवो यान्ति गच्छन्ति तस्मिन् तदुडवं नभः।
भूतसंख्यामितं निष्ठा भूतानां पञ्चमं हितम् ॥
औडवीपञ्चसंख्यासा येषां ते ह्यौडवा सतः।
तस्मात्पञ्चस्वरात्मानस्तानाद्या औडवाः स्मृताः ॥

अं

अंशः

नेता च तारमन्द्राणां योऽत्यर्थमुपलभ्यते।
ग्रहापन्यासविन्याससंन्यासन्यासगोचरः।
अनुवृत्तश्च यश्चेह सोंऽशः स्यादंशलक्षणः ॥

मतङ्गः

अंशच्छाया

येष्वंशो दृश्यते छायास्तेंऽशस्य परकीर्तिताः।

कुम्भः

## अंशभेदाः

रागान्तरस्य यो रागेऽवयवोंऽशस्य उच्यते ।
स सप्तधा करणांशः कार्योंऽशोंश एव च ॥
सजातीयांशको मध्यस्थांशकोऽसदृशांशकः ।
सदृशांशश्च यो रागे कार्यांशः करणोद्भवः ।
कारणांशो यथा रामकृतौ कोलाहलांशकः ॥ कुम्भः

## अंशांशः

अंशांशः स तु यत्रांऽशोंशान्तरः सञ्चरेदिह । कुम्भः

## अंसपर्यायनिर्गतम्

बध्वातु स्वस्तिकं पूर्वं कलाससमये यदा ।
निर्गतावंसदेशाच्च पर्यायात्कटिदेशगौ ।
करौ यत्र तदोक्तं तदंसपर्यायनिर्गतम् ॥

## अंसवर्तनिकम्

मणिबन्धप्रकोष्ठां सवर्तनाबलितोद्धृतौ ।
किंचित्सामिनतं शीर्षं विधायोपविलोडनैः ॥
परागाधोमुखत्वेन लुठितैरुरसः पुरः ।
ततश्चेबलितैः पाण्योः कुटिलैः पार्श्वयोर्द्वयोः ॥
युगपत्क्रमतो यद्वा भूयते यत्र तत्तदा ।
अंसवर्तनिकं प्रोक्तं.........लक्ष्यविशारदैः ॥

क

## कक्ष्याविभागः

भरतोक्तप्रकारेण रचिते नाट्यमण्डपे ।
नगरार्णवशैलादेः स्वर्गादेर्भुवनस्य च ॥
नानाविधानां देशानां मनुष्याणां दिवौकसां ।
सिद्धकिन्नरगान्धर्वयक्षपन्नगरक्षसां ॥
स्थानप्रवेशयोरेषां व्यवस्थापरिकल्पनम् ।
यन्नाट्ये क्रियते कक्ष्याविभागः सोऽभिधीयते ।
अस्य प्रमाणो विज्ञेयो भरतोक्तेन वर्त्मना ॥ वेमः

## कटिरेचकः

भ्रमणमिह करोति सर्वदिक्कं
यदिह कटिकटिरेचकं तमाहुः ।
प्रसृविविरलिताङ्गुले स्तिरश्च
भ्रमणलयेन गलस्य शीघ्रा ॥ कुम्भः

## कटिरेचकम्

भ्रमणं सर्वतः कट्याः प्रोच्यते कटिरेचकः ।

मोक्षदेवः

## कटीसमलक्षणम्

यत्राक्षिप्तापक्रान्तां चारीं कुर्वन् क्रमात्ततः ।
स्वस्तिकीभूय विश्लिष्टौ करौ नाभिकटीचरौ ॥
खटकाख्यार्धचन्द्राख्यौ समुन्नतनते क्रमात् ।
पार्श्ववैष्णवमादध्युस्तथावेवं पुनर्विधिः ॥
भवेदङ्गान्तरेणापि कीर्तितं तत्कटीसमं ।
सूत्रधारप्रयोक्तव्यो जर्जरस्यामिसंभ्रमः ॥

नृत्तरत्नावली

## कट्टरिः

वाद्याक्षरं निर्मितं च नृत्यं तद्धृतमानतः ।
पुनःपिल्लमूलपश्चान्नृत्तं च विधिपूर्वकम् ॥
पुनःशब्दाक्षरैर्नृत्यं सूलूयेन यथोचितम् ।
रचयेदथशब्देन द्विरावृत्तपदेन च ॥
विधाय नर्तनं चारु शब्दे न्यासं समाचरेत् ।
एवं कट्टरिनृत्यं स्याद्यथायोगं समाचरेत् ।
नियमात्कट्टरि ज्ञेया रसिकानां सुखप्रदा ॥

सोमेश्वरः

## कडकडु—नाट्याङ्गम्

प्रायेण श्लिष्टवर्णश्च दीं दकादि समन्वितः ।
आदिमध्यावसानेषु तवर्णोन्ते च बन्धकः ॥

भरतकल्पलतामञ्जरी

## कण्ठगुणाः

माधुर्यं श्रावकत्वं च स्निग्धत्वं घनता तथा ।
त्रिस्थानशोभा पञ्चैते प्रोक्ताः कण्ठगुणा बुधैः ॥

सोमराजदेवः

## कण्ठगुणानां लक्षणानि

मनःप्रह्लादकं कुर्यान्माधुर्यमिति सूरयः ।
श्रावणं च ध्वनिर्दूराच्छ्रावकत्वं प्रकीर्तितम् ॥
तारल्यरूप्यता यस्या स्निग्धता सामिधीयते ।
घनता तु तथा प्रोक्ता सुस्वरा ध्वनिसान्द्रता ॥

शिरस्युरसि कण्ठे च त्रिषु चेन्मधुरो ध्वनिः।
त्रिस्थानशोभा कथिता तदा गीतविशारदैः॥

सोमराजदेवः

## कण्ठरेचकः

अथवा स्यादसौ पाणेर्विरलप्रसृताङ्गुलेः।
तिर्यग्भ्रान्तिरथो यस्स्यात्कण्ठस्य विधुतभ्रमः।
स कण्ठरेचकः प्रोक्तः कण्ठरेचककोविदैः॥

अशोकः

## कण्दुकः—तालः

चारोऽष्टादशवर्णाङ्घ्रियशोहर्षप्रदो ध्रुवः।
फणिभाषायुते वीरे रसे कन्दुकतालुके।
लघुद्वयं विरामान्तं ताले कण्दुकसंज्ञके॥

गान्धर्ववेदे

## कदम्बः

संहिताङ्गुलयो यत्र सन्त्यो वर्तुलतात्मताम्।
कदम्बोऽसौ रसास्वादे हस्तके विनियुज्यते॥

कुम्भः

संहतानामङ्गुलीनां वर्तुलाकारमेलनम्।
कदम्बहस्तकं प्राहु रसास्वादेष्वसौ भवेत्॥

विप्रदासः

## कनिष्ठासारितविधिः

स्फुटं रक्तं विभक्तं च समं शुद्धप्रहारजम्।
नृत्यानुगं वर्धमाने वाद्यवादनमिष्यते॥
कनिष्ठासारितन्यायविधिरुक्तः सविस्तरः।
अन्येष्वासारितेष्वेष विज्ञातव्यो विधिर्बुधैः॥

कुम्भः

## कपालगीतम्

महाकल्पविभेदेन नामान्तरजुषो विधेः।
कपालैरष्टभिर्गीतं प्रथमामित्यगात्ततः॥

कुम्भः

## कपालघूर्णितम्

समपादस्थितो भूमौ शीर्षैःस्पृश्य च भूतलम्।
नागवृत्तिं वितनुते कपालघूर्णितं हि तत्॥

कुम्भः

## कपिलः

न्यूनाधिकश्रुतिर्गायन् स्वरान् कपिल ईरितः।

कुम्भः

## —गायकः

कपिलस्वरसन्दर्भक्रमान्न्यूनाधिको भवेत्।

भरतकल्पलतामञ्जरी

## कमलः—मण्ठकः

लघुद्वयं गुरुश्चैकस्तालोऽयं दर्पणः स्मृतः।
यस्मिन्ताले रसः शान्तः कमलो मण्ठको भवेत्॥

दर्पणतालः ॥ S

गान्धर्ववेदे

## कम्पताललक्षणम्

कम्पताले विरामान्तं द्रुतद्वन्द्वं लघुस्ततः।
० ०।

सोमराजदेवः

## कम्पितः

कम्पितस्तु सुरते।

कुम्भः

## —गायकः

त्वस्या गानकाले तु कम्पनात्कम्पितो मतः।

भरतकल्पलतामञ्जरी

## कम्पितम्

त्रिस्थानेषु स्वराश्चैव वेगोक्ताः कम्पितं विदुः।

भरतकल्पलतामञ्जरी

## कम्बलनागगीतम्

यत्कम्बलाख्यनागेन प्रीतये पार्वतीपतेः।
गीतं स्वरपदैर्युक्तं प्रदेशे कुण्डलस्य च॥
स्थितेन पञ्चमीजातिमुपजीव्य लयान्वितम्।
तद्गानं कम्बलं नाम प्रसिद्धं मार्गवर्त्मनि॥
पञ्चमांशग्रहं पञ्चजन्यासं बहुलमीश्वरम्।
अल्पमध्यमगांधारं धमपन्यास पञ्चमम्॥
स्वराणां बह ...... धैरल्पता बहुतावशात्।
अन्वितं कम्बलं गानमीरितं मार्गवेदिभिः॥
कर्णोपान्तनिविष्टेन कम्बलेनेदमीरितम्।
श्रुत्वा कम्बलनागाय वरं प्रादान्महेश्वरः॥

प्रीणयिष्यति यो नित्यं गीतेनानेन भक्तितः ।
सम्पूज्य तेन कृतं मे तोषणं कल्पकोटिभिः ॥

नन्द्यादिभ्योऽधिको मे स इत्याह भगवान् शिवः ।
इति कम्बलनागस्य गीतं सम्यगुदीरितम् ।
प्रत्यर्थिवनितादत्तवैधव्येन महीभृता ॥

कुम्भः

## करकर्माणि

विंशतिः करकर्माणि न तु लक्ष्माणि लक्ष्यते ।
धूननं श्लेषविश्लेषौ चाक्षेपो क्षणमोक्षगे ॥

परिग्रहो निग्रहो उत्कृष्ट्याकृष्टिविकृष्टयः ।
ताडनं तोलनं छेदभेदौ स्फोटनमोटने ।
विसर्जनमथाह्वानं तर्जनं चेति विंशतिः ॥

कुम्भः

## करचारणा—पाटः

केवलैर्हस्तपाटैर्या वाद्या स करचारणा ।

कुम्भः

## करटालक्षणम्

एकविंशत्यङ्गुला या दैर्घ्येहस्तमिताथवा ।
सार्धहस्तमितं मानं चतुरङ्गुलकामिधम् ॥

परिधौ दधती वक्त्रे द्वादशाङ्गुलकेऽथवा ।
चतुर्दशाङ्गुले चर्मबन्धनैस्तत्र वेष्टिते ॥

मण्डल्यौ लोहजौ चैव दधती परिधौ पुनः ।
तौ च तौ च समौ श्लक्ष्णा द्वाचत्वारिंशदङ्गुलौ ॥

ततश्चतुर्दशच्छिद्रं वलयद्वितयं तथा ।
मुखयोः कवलव्याप्तं तन्त्रीवितययुक्तयोः ॥

निक्षिपेद्विम्रिकास्तत्र रन्ध्रेष्वेवान्तरक्रमात् ।
द्वाभ्यां द्वाभ्यां ततस्तासां विम्रिकाभ्यां यथाक्रमम् ॥

मत्स्याकृतं दृढं स्कन्धं कृत्वा कच्छामकल्पयेत् ।
प्रान्तयोः संयुतप्रान्तं स्कन्धे वापि कटीतटी ॥

धृत्वा तां वादयेत् विद्वान् कोणाभ्यां बीजवृक्षजाम् ।
खदिरद्रुमजं वापि चर्चिकाद्वयदेवताम् ॥

करटेति पदुप्रायं पाटवर्णविराजितम् ।
टिकरीपि कटीरीति पाटद्वन्द्वं यदुक्तिगम् ॥

कुम्भः

## करटा

कैंकारस्तत्र मुख्यस्स्यादेवता स्तोमहेतवे ।
अन्ये पाटाः प्रयोक्तव्याः पटहे ये प्रकीर्तिताः ॥

वितस्तिमात्रकर्तव्यः सोऽष्टाङ्गुलमुखद्वयः ।
त्रिवली वर्त्मनाकक्षा मधो डमरुको भवेत् ॥

मुखयोश्चर्मणो नद्धो मण्डलिद्वयमण्डितः ।
बद्धः सूत्रगणैर्गाढं मध्ये चैव निपीडितम् ॥

अष्टाङ्गुलायतावन्यौ कार्यौ वचनगोळकौ ।
मध्येविदार्य हस्ताभ्यां वाद्यो डवडवाक्षरैः ॥

चत्वारिंशाङ्गुलावेष्ठा एकविंशाङ्गुलायता ।
द्वादशाङ्गुलवक्त्राच बीजवृक्षोद्भवा समा ॥

वलयेन च कर्तव्यो लोहजे सूत्रवेष्टिते ।
तयोर्वेष्टनमुद्दिष्टं त्रिचत्वारिंशदङ्गुलम् ॥

करटास्यविधातव्या तिस्रस्त्र्यंशसमावृता ।
वलये कवलच्छन्ने मुखयोरुभयोर्न्यसेत् ॥

रन्ध्राणि तत्र कुर्वीत समभागैश्चतुर्दश ।
वभ्रिके तत्र संयोज्ये रन्ध्रेष्वेकान्तरेषु च ॥

सम्मुखे तेन बध्नीयान्मध्ये मत्स्याकृतिर्भवेत् ।
कच्छया वेष्टयेत्प्रान्तं शेषं स्कन्धिकयैर्न्यसेत् ॥

करटास्यविनिर्दिष्टा वक्त्रद्वयनिनादिनी ।
ककारश्च टकारश्च रिकारो रेफमस्तकः ॥

उत्सवे च विवाहे च यात्रायां नृपमन्दिरे ।
इत्यादिसर्वकार्येषु करटा विनियुज्यते ॥

सोमेश्वरः

## करणः—धातुः

रिमितोच्चयनीरिंमितो ह्रादस्तु तथानुबन्धः स्यात् ।
पञ्चविधो विज्ञेयो वीणावाद्ये करणधातुः ॥

नाट्यशास्त्रे

## करणमातृका

स्थानानां नृत्तहस्तानां चारीणां यः समागमः ।
उचितानां समाख्यातं सेयं करणमातृका ॥

नृत्तरत्नावली

## करणनृत्यम्

मुहुःप्रसारिताविद्धबाहू तदनुसारिणौ ।
चरणावादितालेन प्रसरन् मध्यमानतः ॥

उत्पत्त्याद्यैर्यथानृत्येत्करणैस्तालसंमितैः।
तदोत्पद्याद्यकरणं नृत्तं नृत्तविदो विदुः॥

## करणानि

स्वराद्यं पाटपूर्वं च बन्धाद्यं पदपूर्वकम्।
तेनाद्यं विरुदाद्यं च चित्राद्यं मिश्रकं तथा।
इत्यष्टधा स्यात्करणं लक्ष्माणं ब्रूमहेऽधुना॥

मोक्षदेवः

## करणनेरिः

करणैः पञ्चदशभिर्युक्तः करणनेरिकः।
सिंहाकर्षितमादौ स्यात्ततस्तलविलासितम्॥
वृश्चिकं च ततः प्रोक्तमन्यद्वृश्चिककुट्टितम्।
लतावृश्चिकसंज्ञं स्याद्दण्डरेचितकं ततः॥
दन्तपक्षं चोर्ध्वजानु तलसंस्फोटिताभिधम्।
विद्युत्भ्रान्तं दण्डपादं ललाटतिलकाभिधम्।
एतानि द्वादशोक्तानि पूर्वेषां मततो यथा॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## करणेषु क्रमः

प्रायोपक्षःस्थितः कार्यो वामस्तु करणे करः।
दक्षिणस्तु करस्तत्र करणस्यानुगः स्मृतः॥
तलपुष्पपुटस्यादौ प्रयोगात् ज्ञायते किल।
पुष्पैः स्याद्देवतापूजा मङ्गलार्थतयेति च॥
गङ्गावतरणस्यान्ते कीर्तनान्मङ्गलं ततः।
सर्वकार्येषु विज्ञेयः सोऽवदद्भरतो मुनिः॥

कुम्भः

## करणोपसंहारः

वामः करोऽत्र करणः प्रायो वक्षःस्थितो भवेत्।
दक्षिणस्तु करस्तत्र करस्यानुगतः स्मृतः॥
तलपुष्पपुटस्यादौ करणस्य प्रकीर्तनात्।
प्रारम्भे देवतापूजा पुष्पैः कार्येति सूच्यते॥
मङ्गलं सर्वनृत्यानां समाप्तौवाचरेदिति।
गङ्गावतरणस्यान्ते कीर्तनादवदन्मुनिः॥

विप्रदासः

## कररेचकः

स भवति कररेचकः क्रमाद्या भ्रमणततिः परितोऽतितूर्णजाता।
विरचितवरहंसहंसपक्षाकृतित इति प्रचुरोपसत्यकर्त्री॥

कुम्भः

## कररेचितरत्नम्

पार्श्वयोः प्रथमं यान्त्या विदिश्यपि ततो नुप।
संयातस्वस्तिकौ स्यातां कटिमूर्धगतौ मिथः॥
वालव्यजनपालाख्यक्रियां प्राग्वत्समाश्रितैः।
वर्तनास्वस्तिकं कृत्वा ततो भूतलसंमुखौ॥
उद्धृतौ मण्डलाकारं स्वस्तिकावितताविधः।
विधायैकं नितम्बाग्रमपरं रथचक्रवत् (?)॥
भ्रामयित्वा विलासेन कर्मणां दोलनेन च।
सरलोत्सारितोद्वेष्टप्रसारितविनम्रकैः॥
अंसांते लुठितौ स्वैरमेकैकं मण्डलोर्ध्वगौ।
निर्गताभिमुखौ स्यातां भुजौ पर्यायतो यदि॥
पतितोत्पतितौ शीर्षोत्कटिक्षेत्रावसानकम्।
पश्चात्स्वस्तिकबन्धेन रमणीयेषु केष्वपि॥

कुम्भः

## करहीनः

करहीनः कम्पयुक्तशिरः सन्नीय गायति।

भरतकल्पलतामञ्जरी

## कराणां भिन्नगामिता

करौ हि स्वस्तिकीभूय विच्युतौ विप्रकीर्णकौ॥
ऊर्ध्वमण्डलिभावेऽथ पार्श्वमण्डलिनाविह।
विशेषणे चोल्बणयोः कर्तव्यावलपल्लवौ॥
विशेषणविशेष्ये च स्यातां तौ भिन्नगामिनौ।
नालमुत्पलमित्यत्र नहीष्टं पङ्कजद्वयम्॥
प्रसिद्धैरुपपत्त्यर्थं युक्तिरेता मयोदिताः।
आचार्याणां तु सर्वेषां पृथगुद्देशलक्षणम्॥

हम्मीरः

## करालः—नायकः

गानेन गर्वितो यस्तु करालेत्यभिधीयते।

भरतकल्पलतामञ्जरी

## करिहस्तलक्षणम्

स्पृशन् करिकराकारः पार्श्वयोश्चेलताकरः।
उन्नतो दोलितोऽन्यस्तु कर्णस्थः खटकामुखः॥

त्रिपताकोऽथ वा यत्र करिहस्तममुं विदुः ।
नन्वन्यहस्तवत् कस्मान्नात्र द्विवचनं कृतम् ॥
ब्रूमो यत्रैकशब्देन सजातीयावुभौ करौ ।
उक्तौ तत्र द्विवचनं घटवच्चतुरस्रवत् ॥
भिन्नशब्दौ विजानीयो यौ वा द्विवचनं तयोः ।
यथा घटपटौ स्यातामरालखटकामुखौ ॥
करिहस्ताकृतिस्त्वेको दृश्यतेऽत्र लताकरः ।
इति कर्तव्यतात्वन्या स्यादेकवचनं ततः ॥
न चात्र करिहस्तत्वमेकैकत्र पटत्ववत् ।
न चात्रैकः करिहस्तशब्दवाच्योऽपरः करः ॥
नैकशेषो न च द्वन्द्वो यतो द्विवचनं भवेत् ।
आम्रेडितं चैकवचनं मुनिना सर्वदर्शिना ॥

हम्मीरः

संहितस्थानमास्थाय चरणो यत्र घर्षति ।
धरणीं पार्श्वदेशाभ्यां करिहस्ता तु सा स्मृता ॥

कुम्भः

—चारी

संहतस्थानके स्थित्वा पार्श्वाभ्यां घर्षतः क्षितिम् ।
चरणौ यत्र सा चारी करिहस्ता प्रकीर्तिता ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

करिहस्तालक्षणम्—देशीचारी

संहतं स्थानमाश्रित्य घर्षतश्चरणौ भुवं ।
पार्श्वद्वयेन यत्रैषा करिहस्ता प्रकीर्तिता ॥

मोक्षदेवः

करुणः—तालः

करुणे गुरुणैकेन ।          ऽ          कुम्भः

करुणस्थायाः

करुणायाश्च ते स्थाया येषु स्यात्करुणो रसः ।

कुम्भः

करौ—शरीराङ्गम्

असंयुताः कियन्तोऽपि कियन्तः संयुताः परे ।
नृत्यहस्ताः कियन्तः स्युरित्थं हस्तास्त्रिधा मताः ॥
हस्तेनैकेन कर्माणि येषां ते स्युरसंयुताः ।
येषां हस्तद्वयेनैव कर्माणि ते तु संयुताः ॥

नृत्यमात्रास्थिता ये तु न किञ्चिद्वस्तुवाचकाः ।
अङ्गहारेण सहिता-नृत्यहस्तास्तु ते मताः ॥

शुभङ्करः

कर्णयुग्मप्रकीर्णकम्

उपकर्णं यदातिर्यग्लुठितौ क्रमतः करौ ।
निजे पार्श्वे पुरोदेशपर्यन्तं यत्र तत्तदा ।
कर्णयुग्मप्रकीर्णाख्यं चालयं कथितं बुधैः ॥

कर्णाटः

निपधत्रितयं यत्र संपूर्णो वा रिधोज्झितः ।
दिनान्ते गीयते नित्यं कर्णाटोऽयं सुखावहः ॥

कुम्भः

कर्तरी—हस्तपाटः

कर्तरी वामहस्तेन चञ्चलाङ्गुलिनाहतैः ।
तिरिटि रिटिरि किटथो डिगिदतरकिरि किडडेंडें किटट

कुम्भः

कर्तरीलोहडी

एकः पादलुठितं वा ।
लोहड्यैव स्वस्तिकाङ्घ्रि रचिता लोहडी मता ।

कुम्भः

कर्तव्याञ्चितम्

यदाञ्चितवदुत्प्लुत्य दण्डवन्नृत्यकोविदः ।
खण्डप्रमाणाञ्चितकं कर्तव्याञ्चितमेव च ।
चरणाभ्यां स्वस्तिकाभ्यामञ्चिते परिकीर्तितम् ॥

कुम्भः

कर्तम्

ऊरुवेणीगतिर्यत्र तालः स्याल्लघुशेखरः ।
ऊरुवर्तनिका युक्तं तत्कर्त्रमभिधीयते ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

कलरवः

....................तथा कलरवस्य च ।
माधुर्यं यत्र बाहुल्यात् ध्वनौ ॥

कुम्भः

## कलविंकविनोदः

मुष्टिर्विलुठितस्यैकस्तदूर्ध्वं .........।
गतागतः पार्श्वयोश्च पश्चात्तु पुरतो गतः॥
एवं सति पुनर्यत्र व्यत्यासात्करयोः क्रियाः।
चालयश्चैस्समाख्यातं मण्डलाममिदं तदा॥

## कलम्

अङ्गुष्ठाभ्यां समं तन्त्र्योः स्पर्शनं च कलं तु तत्।

नाटयशास्त्रे

## कलशः—हस्तः

अन्योन्याभिमुखौ चार्धचन्द्रौ कलशसंज्ञिकः।
भूचारी नटने पूर्णवस्तुनिर्देशभावने।
जलावगाहे कलशे युज्यते कलशः करः॥

भरतकल्पलतामञ्जरी

## कलहान्तरिता—नायिका

चाटुकारमतिजीवितनाथं कोपतः समुदीर्य पुनर्वा।
तप्यतेऽनुशयमन्मथभावैः कथ्यतेऽत्र कलहान्तरिता सा॥

शुभङ्करः

## कला

त्रिविधा सा च विज्ञेया त्रिमार्गनियताद्बुधैः।
चित्रे द्विमात्रा कर्तव्या वृत्तौ सा द्विगुणा स्मृता॥
चतुर्गुणा दक्षिणे स्यादित्येवं त्रिविधा कला॥

नाटयशास्त्रे

अष्टमात्रा कला ज्ञेया मार्गे दक्षिणसंज्ञके।
वार्तिकस्य चतुर्मात्रा कला चित्रा द्विमात्रिका॥
द्रुतां चित्रतरे तस्या लघुश्चित्रतमो मतः।
अतिचित्रतरो मार्गः कलाश्च द्रुतसंज्ञिकाः॥

सङ्गीतमकरन्दे

## कलाः

कलाः पञ्च तथा सप्त पुनर्नव च कीर्तिताः।
दशैकादश चैवैते सङ्कीर्णाः समुदीरिताः।
न ह्येषामुपयोगोऽस्ति सप्तरूपे ध्रुवासु वा॥

नाट्यशास्त्रे

## कलापः

परस्परमुखं हस्तं कृत्वोर्ध्वे विरलाङ्गुलिः।
पृष्ठतोऽस्य द्वितीयोऽपि तदङ्गुल्यन्तराङ्गुलिः॥
निवेश्यः करयोः प्रान्ते यथाङ्गुष्ठौ बहिर्गतौ।
स्यातां तथाविधमिमं कलापं हस्तकं विदुः।
कश्चिच्छेपफलं प्राहुरभिनेयेऽत्वहीश्वरे॥

विप्रदासः

## —मण्ठकः

रङ्गतालेषु विज्ञेयो लघुश्चैको गुरुद्वयम्।
कलापो मण्ठकस्तेन रसे रौद्राभिधानके॥

रङ्गतालः । S S

गोन्धर्ववेदे

## कलाभेदाः

सूची च नागबन्धश्च मुखबन्धोऽम्बुजासनम्।
सम्मुखावाङ्मुखी चैव पुनश्चैव हसन्मुखी॥
पादास्फाली विलम्बीच ह्रद्गतोऽनुगतस्तथा।
चिरं विलोकितश्चेति कला द्वादश कीर्तिता॥
चित्रका पत्रका रूढेत्येवैष त्रिविधोदिता।
सर्वगात्रेषु शिथिलो यथा नृत्यति केवलम्।
चक्षुषा श्लाध्यते वाद्यं रेखा स्याच्चित्रवादनात्॥

कुम्भः

## कलासकः

चकितेव निरीक्षन्ती पश्चाद्वामेतरं मुहुः।
प्रचारं धृतखङ्गे च तन्वती विविधं द्रुतम्॥
प्लुतमानादसंबाधं विदधती करानपि।
यत्रार्धचन्द्रप्रभृतीन् स खङ्गाद्यः कलासकः॥

कुम्भः

## कविचारकः

नायको वर्ण्यते यत्रोत्तमः स कविचारकः।

कुम्भः

## कलासभेदाः

विद्युत्खङ्गौ मृगबकसंज्ञौ प्लवसंज्ञमपरमपि द्वितीयम्।
एते हि षट्प्रभेदाः पृथग्विभिन्नाः कलासकरणस्य॥
विद्युत्खङ्गौ प्लुततो गुरुणा द्वौ मृगबकौ च मण्डूकः।
लघुता द्रुतेन हंसः परिमीयन्ते क्रमात् षडमी॥

विद्युत्कलास इष्टः षोढा खड्गश्चतुर्विधः कृतिभिः ।
एको मृगककलासो बकसंज्ञः स्याच्चतुर्धात ॥
दुर्दुर एकोऽपि चतुर्धा हंसकलासतु त्रिधा ज्ञेयः ।
एवं द्वाविंशतिधाः कलासभेदाः समासेन ॥

कुम्भः

स्वस्तिकं कर्कटं चैव मुष्टिकं च पताककम् ।
चतुरः क्रमतः कुर्यात्करान् यत्र तु नर्तकी ॥
धृतौ मोहे तथा घाते पाते स स्याच्चतुर्थकः ।
घातस्तत्र चतुर्धा स्यादूर्ध्वाधः पार्श्वयोर्द्वयोः ।
खड्गपूर्वकलासस्य भेदा एते चतुर्विधाः ॥

कुम्भः

## कलासिका—नाट्याङ्गम्

झंकारादिस्वरैःश्लिष्टं दीर्घकैर्वाक्षरैर्युतम् ।
प्रायेण दृश्यते यत्र कीर्तिता सा कलासिका ॥

भरतकल्पलतामञ्जरी

## कलिहस्तः

तर्जन्यो तिर्यगाकारे मिथुनं मध्यपर्वणि ।
ईषच्च कुटिले स्वच्छो तदोक्तः कलिहस्तकः ।
कलहे निग्रहे द्वेषे प्रयोज्यः शत्रुतर्जने ॥

सङ्गीतनारायणः

## कलोद्भवाः

तालस्य यैः कलापूर्वैः क्रियते ते कलोद्भवाः ।

कुम्भः

## कल्यतालविधिः

उत्तानवञ्चितायन्तु नलिनी पद्मकोशकम् ।
अथेमाने विधायैतद्धस्तषोडशकं परम् ॥
संयुतैर्वियुतैर्वाथ करैर्नृत्यं समाचरेत् ।
मध्ये मध्ये भ्रमरिकां गीतान्ते च प्रदक्षिणम् ॥
निस्सारुरासधं वाद्यस्तालः स्वेच्छाकरःकरः ।
आलापोऽपि स हस्तः स्याल्लयो हस्तानुगः स्मृतः ॥
दूरे पादप्रचारः स्याज्झंपायामिति तद्विदः ।
झाम्बडे हस्तको ज्ञेयः स्वेच्छया तु लयाश्रयः ॥
षट्स्वेतेषु च गीतेषु कलासः स्याद्विकल्पतः ।
कल्यतालविधिर्ज्ञेयो मण्ठकस्येव सूरिभिः ॥

कुम्भः

## कल्याणनाटरागः

कल्याणनाटो विज्ञेयः संपूर्णो रित्रयो मतः ।
षड्जत्रयेऽपि कैश्चित्तु संप्रदिष्टो मनीषिभिः ॥
कृपाणपाणिर्गजदन्तपत्रसुवीरवेषः समरे प्रविष्टः ।
प्रचण्डमूर्तिः किल रक्तवर्णःकल्याणनाटःकथितोमुनीन्द्रैः ॥
रि ग म प ध नि स रि    स रि ग म प ध नि स

सङ्गीतदर्पणः

## कंबुजः—रासकः

राजविनोदे ताले स्याद्गुरुद्वन्द्वमथ प्लुतः ।
रासकः कंबुजस्तेन गीयते गीतकोविदैः ॥

गान्धर्ववेदे

## काकलीसाधारणम्

साधारणं भवेत्तच्च द्विप्रकारतया द्विधा ।
स्वरसंयोगतो जातिसंयोगात्तत्पुनर्मतम् ॥
चतुर्धाद्वयं निसगौ मध्यमाश्रयतो भवेत् ।
श्रुतिद्वयस्य ग्रहणान्निसयोः स्वरयोरिह ॥
काकलीसाधारणं स्यात् षड्जसाधारणं पुनः ।
निषादर्षभाभ्यां च षड्जाद्यन्तश्रुतिद्वयम् ॥

कुम्भः

## काकी—गायकः

गानं क्रूरतरं यस्य स काकीत्यभिधीयते ।

भरतकल्पलतामञ्जरी

## काकुभेदाः

स्वरजाता रागजाता चान्यजा देशसम्भवा ।
क्षेत्रजा यन्त्रजा चेति तासां लक्षणमुच्यते ॥

कुम्भः

## काण्डारुणा

काण्डारुणा तु कथिता तारस्थाने सुशीघ्रता ।
गमकैर्विविधैर्युक्ता कौशल्येन विभूषिता ॥

सङ्गीतदर्पणः

## काण्डारणाः

स्तम्भादिषु यथालोके पश्चाद्यत्करणं तथा ।
यत्र काण्डारणा रागे स्थायास्तेस्युः समुद्भवाः ॥

कुम्भः

### कातरः—निःसारुकः

लघुद्वयं विरामान्तं ताले कन्दुकनामनि ।
द्रुतं लयेन गातव्यं कातरो भवति स्फुटम् ॥

गान्धर्ववेदे

### कान्तालक्षणम्

जाता हर्षविषादाभ्यां दृष्टिः कान्ता समन्मथा ।
साभ्रूक्षेपकटाक्षा च रसे शृङ्गारसंज्ञके ॥

हम्मीरः

### कान्ता—शृङ्गारोपदर्शनम्

भोक्ता प्रधाने भोग्ये तु कान्ता तदुपदर्शनम् ।
अतोऽन्तरान्तरा शक्तिस्तस्याः शृङ्गारभङ्गिकृत् ॥

हम्मीरः

### कामगणाः

अत्युक्तायास्तु चत्वारो भेदा रतिगणा मताः ।
किन्तु लपूर्वा ये तेष्वादावधिको लघुः (?) ।
एवं मध्यभवा भेदा अष्टौ कामगणाः स्मृताः ॥

हम्मीरः

ब्रह्मणः पूर्ववदने ऋग्वेदात्सम्भवो मतः ।
ब्रह्माणी देवता यस्या ब्राह्मीशम्भुर्गणाधिपः ॥
प्रथमेन्द्रो द्वितीयेन्द्रो वद्ये मासे भवेद्यदि ।
कामद्वयं रतिश्चैकः प्रत्येकं च तृतीयकः ॥
रत्यन्तश्च चतुःकामो मध्याद्यप्राससंयुतः ।
नादावती सुरेखेयं कर्णाटैः परिगीयते ॥
दक्षिणास्ये यजुर्वेदात्संमूर्तिः क्षत्रिया मता ।
सावित्री देवता यस्या गोविन्दोऽथ गणाधिपः ॥
आद्या चन्द्री चतुःकामौ सप्रासावाद्यमध्ययोः ।
क्रमात्ततस्तृतीया ह्निरष्टाभिर्मान्मथैर्गणैः ॥

मोक्षदेवः

### कामतालः

दद्वयं च गुरुः कामे ।

कुम्भः

### कामलेखा

अन्ये द्वाविंशतिर्मात्रा द्वितीयेऽपि च तन्मिताः ।
तृतीये विंशतिर्मात्रा कामलेखा तु मान्मथैः ॥

मोक्षदेवः

### कालनियमः

अधुना कालनियमः पादोत्क्षेपस्य कथ्यते ।
चतुष्कलो भवेत्पादोत्क्षेपस्तु पतनावधिः ॥
उत्तमानां मध्यमानां द्विकलः परिकीर्तितः ।
अयमेककलस्तज्ज्ञै रधमानामुदीरितम् ॥

वेमः

### कालनियमेऽपवादः

रङ्गभूमौ नृपाज्ञायां कालदोषो न विद्यते ।

शुभङ्करः

### कावोदः

कावोदो गायते पूर्णो निशादौ सत्रयान्वितः ।
ईषद्भेदो बुधैः प्रोक्तः कल्याणाख्यहम्मीरयोः ॥

कुम्भः

### कावोदी

उभयोर्गौडमल्हारमल्हारासिधयोर्मतः ।
किञ्चिद्विभेदो भेदज्ञैरन्योन्यं रसपुञ्जयोः ॥
पूर्णा धत्रयसंयुक्ता मल्हारनिकटस्थिता ।
गेया प्रत्यूषकाले सा कावोदी कामदीपनी ॥

कुम्भः

### काव्यनाटकभेदेन पाठ्यद्वैविध्यम्

काव्यनाटकरूपेण पाठ्यमेतत्प्रवर्तते ।
तदवान्तरभेदानां गुणादीनां च लक्षणम् ॥
ग्रन्थेऽस्मदीये साहित्यचिन्तामणिसमाह्वये ।
प्रपञ्चितमशेषं तत्तस्मादेवावगम्यताम् ॥

वेमः

### काष्ठानृत्यम्

काष्ठानृत्यं प्रभवति कृतस्वरितकमण्डलम् ।

सङ्गीतनारायणे

### कांस्यताललक्षणम्

पद्मिनीदलसंकाशं युगलं कांस्यतालयोः ।
त्रयोदशाङ्गुलं वक्त्रे कुर्वीत त्र्यङ्गुलं तले ॥
निम्नत्वमङ्गुलेनान्तस्तयोः शेषं च तालवत् ।
वर्णाश्चात्र विनिर्दिष्टाः शिष्टे संनकटाःस्फुटम् (?) ॥

सोमराजदेवः

### किन्नरीवाद्यम्

किन्नरी द्विविधा प्रोक्ता मार्गे देश्यां तु सा त्रिधा।
मार्गस्थाने कृतौ कार्यौ देशीस्थाने तु यद्द्वयम्॥

तद्वर्तते मध्यमायास्तासां लक्षणमुच्यते।
मध्यमाया दण्डदैर्घ्यं त्रिचत्वारिंशदङ्गुलम्॥

परिधिर्दृश्यते तत्र द्व्यस्तेन षडङ्गुलम्।
साधंत्र्यङ्गुलविस्तारं विदैर्घ्यं काकुभं शिरः॥

मध्यकूर्मोन्नतां लौहपत्रिकां शिरसि क्षिपेत्।
परितोऽर्धाङ्गुलन्यूना शिरसोऽसौ प्रकीर्तिता॥

क्षिपेत् ककुभदण्डस्य वीणादण्डेऽङ्गुलद्वयम्।
तावांश्च परिशोष्योऽसौ यावन्तः परिशोषिणे॥

हम्मीरः

### किरिकिच्चालक्षणम्

ऊर्द्धस्फाटितसद्वेणुपर्वाद्राकृतिरायसी।
दन्तुरा किरिकिच्चा स्याद्वाद्या लोहशलाकया॥

सोमराजदेवः

### किरिकिटालक्षणम्

भवेद्व्यङ्गुलविस्तारं दैर्घ्ये च द्वादशाङ्गुलम्।
वंशादिकाष्ठघटितं मसृणं कम्रिकाद्वयम्॥

मणिबन्धप्रकम्पेन प्रत्येकं हस्तयोर्द्वयोः।
धृत्वा तद्वादयेदत्र वली किरिकिटादयः॥

सोमरजदेवः

### किलिकिञ्चितः—सात्त्विकभावः

क्रोधहर्षोदभीत्यादिसाङ्कर्यं किलिकिञ्चितः। यद्वा :—

रुदितं हसितं कोपं कारणेन विनापि यत्।
कामिनीहर्षमाश्रित्य कुरुते किलिकिञ्चितम्॥

शुभङ्करः

### किलिकिञ्चितलक्षणम्

रोषाभिलाषरुदितः स्मितभीत्यादिसङ्करः।
हर्षेण रचितो यस्तु तद्भवेत्किलिकिञ्चितम्॥

वेमः

### कीर्तिः—तालः

कीर्तौ लगपाललपाः।
।ऽऽ॥ऽ

कुम्भः

### कीर्तिधराचार्यमतम्

अत्युत्पन्नमिदं सूत्रमिति कश्चिदनूनुदत्।
अहेतुत्वेन भावानां हेतुत्वस्यानुकीर्तनात्॥

प्रमाद्यं लोल्लटोऽत्राह घटेतेदं यदा भवेत्।
षष्ठीसमासः किन्त्वत्र समासोऽयं तृतीयधा॥

विभावाद्यैः स्थायिनोऽत्र संयोगस्तन्मते मतः।
अर्थाक्षिप्तस्थायिनोऽत्र भवेत्सापेक्षिता ततः॥

सापेक्ष्यमसमर्थं स्यात्सामर्थ्याभावतस्ततः।
समासाभावतः षष्ठीसमासः संमतस्त्विह।
इति कीर्तिधराचार्यमतस्यानुमतेन हि॥

कुम्भः

### कीर्तिलहरी

उद्ग्राहस्यान्तिमो भागो ध्रुवार्धस्थानके यदि।
शेषं च पूर्ववत्सर्वं स्यात्कीर्तिलहरी तदा॥

मोक्षदेवः

### कीलकः—हस्तः

कनिष्ठे कुञ्चिते शिष्टे मृगशीर्षे तु कीलकः।
स्नेहे च नर्मालापे च विनियोगः प्रकीर्तितः॥

भरतकल्पलतामञ्जरी

### कीलस्वरूपम्

पद्मपत्रशतैकैक भेदकालः क्षणः स्मृतः।
लवः क्षणैरष्टभिः स्यात्काष्ठा स्यादष्टभिर्लवैः॥

स्यान्निमेषो सकाष्ठाभिर्निमेषैरष्टभिः कला।
कलाद्वयी चतुर्भागः स एव त्रुटिरुच्यते॥

चतुर्भागद्वयेनैव विद्वद्भिः परिकीर्तितः।
अणुद्वयं द्रुतः प्रोक्तो लघुस्तद्द्वयमुच्यते॥

### कुचुम्बिनी—पाटः

स्वस्तिकेन तु हस्तेन खाकारबहुलाश्रितम्।
चहलीपिहितं वक्त्रं वाद्यते सा कुचुम्बिनी॥

कुम्भः

### कुञ्चिता

एकैकमग्रतः पादौ न्यस्येदुरिक्षप्य कुञ्चितौ।
यस्यां सा कुञ्चिता नाम।

कुम्भः

एकाङ्घ्रिं कुञ्चितं कृत्वा द्वितीये पार्श्वतः स्थिते ।
यथोल्लासं करौ तस्माद्भ्रमणात्कुञ्चिता मता ॥

कुम्भः

## कुट्टमितम्—सात्त्विकभावः

सानङ्गं रोदनाख्यं यत्तत्तु कुट्टमितं विदुः। यद्वा :—
रक्ष निर्दय मामित्थं किं झोपढयसि प्रभो ।
दुःखाविष्करणं सौख्यादिति कुट्टमितं विदुः ॥

शुभङ्करः

## कुट्टमितलक्षणम्

केशस्तनाधरादीनां ग्रहणे हर्षसम्भ्रमात् ।
सञ्जातस्य सुखस्यापि दुःखवन्नटनं तु यत् ।
तत्कुट्टमितमाचष्टे.................. पतिः ॥

वेमः

## कुडुपचारणा—पाटः

कुडुपादुद्भवा यत्र पाटा ये वाद्यसंश्रयाः ।
तद्वाद्ये वाद्यमाचख्युराद्याः कुडुपचारणाम् ॥

कुम्भः

## कुण्डलीनृत्तम्

अथ वेमनृपो वक्ति देवमार्गोक्तचारिकाः ।
एकस्मिन् कुण्डलीनृत्ते सूडद्वयमुदाहृतम् ॥

प्रथमं वाद्यसूडः स्याद्गीतसूडस्ततो भवेत् ।
नवतालश्च झङ्कारो रिगोणि तुडुकस्तदा ॥

पल्लवश्च चमत्कारः प्रहारश्चेत्यनुक्रमात् ।
प्रबन्धाः सप्त विज्ञेया वाद्यसूडे मनीषिभिः ॥

एषु वाद्यप्रबन्धेषु नृत्तं स्यादुचिताङ्गकम् ।
एषां सुसन्धिरुचिरः पद्धतिक्रम उच्यते ॥

तत्रादौ देवताप्रीत्यै रङ्गविघ्नोपशान्तये ।
शुष्कवाद्यं विधातव्यं गम्भीरध्वनिबन्धुरम् ॥

ततः सभायाः कुण्डल्या मध्ये यवनिकात्रयम् ।
पादपाटविशेषाणां वैचित्र्यालोकसिद्धये ॥

कर्त्तव्यं तत्र नीरन्ध्रं स्निग्धा यवनिकादिमा ।
अपरे द्वे यवनिके नीहारावरणोपमे ॥

येन यवनिकास्तिस्रः क्रमाद्धार्या यथोचितम् ।
सकञ्चुकाभ्यां नारीभ्यां प्राग्धृतं चापसारयेत् ॥

आद्ये धृते तु नैपथ्ये नृत्ताचार्यस्तदन्तरे ।
स्थितो गणेश्वरं वाणीं रुद्राणीं च महेश्वरम् ॥
स्तुत्वा सभां सभानाथमाशीर्वादपुरःसरः ।
पाद्यैः प्रसाद्य तदनु पुष्पविक्षेपमाचरेत् ॥
ततः सौन्दर्यलावण्यसौकुमार्यतरङ्गिता ।
पादपाटैर्बहुविधैर्द्वयमानैर्मनोहरैः ॥
प्रेक्षकाणां वितन्वानां नयनानन्दकन्दली ।
नैपथ्योत्तालिता भूत्वा नर्त्तकी नृत्तमाचरेत् ॥
तत्रादौ नवतालः स्यादुद्ग्राहपरिवर्जितः ।
ध्रुवखण्डानि षट् तत्र त्रयस्त्वाभोगखण्डकाः ॥
चच्चत्पुटश्चैकतालो द्वितीयश्च ततःपरम् ।
पञ्चतालो रूपकश्चाड्डुतालश्चाथ मट्टकः ॥
प्रतिमट्टश्चेति तालाः खण्डेषु नवसु क्रमात् ।
तालाः प्रोक्तास्ततस्तेषु कथ्यते नर्तनक्रमः ॥
आद्यायां प्रतिसीरायां तालश्चच्चत्पुटो भवेत् ।
मानश्च दक्षिणः प्रोक्तो गोपुच्छश्चलनिर्मितः ॥
वितालोच्चालनश्चाचकारस्त्वादौ भवेदिह ।
ततो विलम्बिते माने गुरुकालौ प्रयोजयेत् ॥
मात्राद्वयं चित्रमाने द्रुते मात्राद्वयं तथा ।
एवं मानत्रयेऽप्यस्य तत्तन्मात्रानुसारतः ॥
यथोचितं प्रयुञ्जीत पाटाक्षरकदम्बकम् ।
पार्श्वोद्वृत्ताभिधं पाटं चाचकारे प्रयोजयेत् ॥
पाटाः स्थित्वा प्रयोक्तव्याः पार्श्वयोरुभयोरपि ।
तलताडिकमादौ स्यात्सरिकावेष्टने ततः ॥
उद्वेष्टनं निकुट्टश्च पुराटी तदनन्तरम् ।
कुत्तोरुताडितं पृष्ठोत्क्षेपः स्वस्तिकताडितम् ॥
त्रिताडितं ततश्चार्थस्खलितोत्क्षेप एव च ।
पर्यायताडितं पार्श्वोरुताडितसमाह्वयं ॥
ततश्चार्द्धपुराटी च क्रमताडितमेव च ।
ततः परं लताक्षेपः पार्श्वताडितसंज्ञितम् ॥
समः स्खलितका चेति पाटा विंशतिरीरिताः ।
एते पुनःपादपाटाश्चारुसन्धि समुज्ज्वला ॥
पूर्वविधाद्विसाराणां तस्यान्ते च यथोचितम् ।
चतस्रष्वाद्यमात्रासु योज्यमाने विलम्बिते ॥
अवशिष्टासु मात्रासु पादानेकान् यथोचितम् ।
अञ्चितं चरणं कृत्वा पूर्वं माने तु मध्यमे ॥
त्रिताडितं कृते माने पूर्वं कृत्वा यथाक्रमम् ।
सम्भवेन प्रयुञ्जीत शोभातिशयनिर्भरम् ॥

सम्पूर्णासिनयस्ताले जोडना कथ्यतेऽधुना ।
संधायकं वर्तमानं भविष्यत्यान्तयो मिथः ॥
नानापाटमनोहारि यद्वाद्यं सा तु जोडना ।
तालश्चच्चत्पुटोऽत्रापि जोडनायां प्रकीर्तितः ॥
अत्र वाद्याक्षरोद्धारं ताला वृत्तिसमन्वितम् ।
यथोचितं प्रयुञ्जीत बुध्या युक्तिविशारदः ॥
पाटतालोद्धृतिश्च समोद्वृत्तस्त्रिवाडितम् ।
स्वस्तिकश्चापि पाटाङ्गान्युक्तदिस्तु ततःपरम् ॥
सरिकालुटितश्चैव पार्श्वोद्वृत्तो यथोचितम् ।
पाटाश्च जोडनायाश्च क्रमे कार्या यथोचितम् ।
एवं नृत्तं विधायाग्रे प्रपञ्चमपसारयेत् ॥

## कुण्डविचारकम्

विलोड्यते यत्र करो वामदक्षिणयोर्यदि ।
गतागतेददद्दिक्षु तिर्यग्व्यावर्तिता पुनः ।
कुटितोस्समकुतपदिष्टं तदाकुण्डविचारकम् (?) ॥
........................................ ।
ततः कुतपविन्यासो गायनः सपरिग्रहः ।
वैपञ्चिको वैणिकश्च वंशवादस्तथैव च ॥
मार्दङ्गिकः पाणविकस्तथा दार्दरिकोऽपरः ।
अवनद्धविधावेष कुतपः समुदाहृतः ॥

नाट्यशास्त्रे

## कुन्तलः—तालः

वर्णैः षोडशभिः पादः कुन्तलो लघुशेखरे ।

गान्धर्ववेदे

## कुन्दः—प्रतिमण्ठः

द्रुतमेकं भवेद्यत्र स तालः खण्डसंज्ञितः ।
द्रुतैर्लयेन गातव्यः कुन्दश्च प्रतिमण्ठकः ॥

गान्धर्ववेदे

## कुम्भः—राशिहस्तः

पद्मकोशाभिधौ हस्तौ स्पृष्टाङ्गुष्ठकनिष्ठिकौ ।
कुम्भराशौ प्रयुज्येत भरतार्णववेदिभिः ॥

शृङ्गारशेखरः

## कुरङ्गिनृत्यम्

शाबरी वेषयोर्गुञ्जापुञ्जभूषणयोः स्त्रियोः ।
नित्यं कुरङ्गीति विदुः गायन्त्योश्च स्वभाषया ॥

सङ्गीतनारायणे

## कुलीरिका

नन्द्यावर्तस्थितावङ्घ्री पादौ तिर्यक् सृतौ तदा ।

सङ्गीतमुक्तावली देवेन्द्रकृता

## कुलीरिका

नन्द्यावर्तस्थितावङ्घ्री तिर्यग्भूम्यां प्रसर्पतः ।
कुलीरिकेति सा प्रोक्ता चारी नृत्यविशारदैः ॥

कुम्भः

## कुविन्दः—तालः

लो द्रौ गपौ कुविन्दः स्यात् ।
। ० ० ऽ ऽ̇

कुम्भः

## कुहरः

कण्ठे निरुद्धपवनः कुहरो नाम जायते ।

नाट्यशास्त्रे

## कूटमानम्—नाट्याङ्गम्

धिरक्तकतकं चादौ धीगुणांगं तु मध्यमे (?) ।
कूटमानमिदं प्रोक्तं पाठाक्षरविचक्षणैः ॥

भरतकल्पलतामञ्जरी

## कूर्मः—हस्तः

कुञ्चिताग्राङ्गुलिश्चक्रेत्यक्ताङ्गुष्ठकनिष्ठिकः ।

भरतकल्पलतामञ्जरी

## कूर्मासनम्

समोऽग्रे कुञ्चितः पश्चादन्यः पादस्तु जानुना
पृथिवीं संश्रितो यत्र गारुडं स्यात्तदासनम् ॥
वामः समः परो जानुबाह्यगुल्भमिलत्क्षितिः ।
चरणो विद्यते यत्र तत्कूर्मासनमीरितम् ॥

कुम्भः

## केशबन्धलक्षणम्

पार्श्वदेशौ स्थितौ पार्श्वमस्पृशन्तौ गतौ शिरः ।
तदा नितम्बवत्केशान्निष्क्रम्य च पुनःपुनः ।
पृथगुत्तानितौ यौ तौ केशबन्धौ करौ मतौ ॥

हम्मीरः

**कैव्यड्डु—नाट्याङ्गम्**

कैव्यड्डादिस्तु वकतोधिकत्तो धिगतेधि च।
शिरोभेदसमायुक्तदृष्टिस्थानकसंयुतः।
नृत्तहस्तानुगामी च पादचार्यैस्तु कैव्यड्डुः ॥

भरतकल्पलतामञ्जरी

**कैशिकम्**

मध्यमग्रामेऽपि साधारणत्वम्। अस्य तु प्रयोगसौक्ष्म्यात्कैशिकमिति नाम निष्पद्यते।

नाट्यशास्त्रे

**कैशिकी—भाषा**

मध्यमग्रामगान्धारा शुद्धमध्यमसंभवा।
पञ्चमांशग्रहन्यासा मध्यपञ्चमभूयसी ॥
सापन्यासा तारषड्जस्वरगान्धारमध्यमा।
पञ्चमांशग्रहन्यासा सेर्ष्यायां विनियोजिता ॥
समसप्तस्वरा सा तु तारर्षभविराजिता।
मन्द्रमध्यमसंयुक्ता नियोज्योत्सवकर्मणि ॥
कैश्चिदेताः पुनः प्रोक्ता भाषाङ्गमिह सूरिभिः।
एवामेव विभाषेति याष्टिको मुनिरन्वशात्।
निखिलेषु च भावेषु विनियोगस्तथाब्रवीत् ॥

कुम्भः

**कैशिकीवृत्तिः**

केशानां वृत्तिरिव या वृत्तिः सा कैशिकी मता।

विप्रदासः

उज्ज्वलभूषणरुचिरा नानाविधललितनादगीता च।
कामोपचारचतुरा सुगन्धकुसुमाभिरामवेषा च ॥
निर्भरशृङ्गाररसा नित्यं स्त्रीभिः प्रयोक्तव्या।
सौन्दर्यजीविता या सा वृत्तिर्भवति कैशिकी नाम ॥

वेमः

**कैशिक्यङ्गानि**

नर्म च नर्मस्पन्दो नर्मस्फोटश्च नर्मगर्भश्च।
कथितानि नाट्यचतुरैः कैशिक्यङ्गानि चत्वारि ॥

वेमः

**कैशिक्यादिष्वभिनयाः**

वाचिकाभिनयाः सर्वे भारत्यां सुप्रतिष्ठिताः।
आङ्गिकाभिनयाः सर्वे तिसृष्वन्यासु वृत्तिषु ॥
आमुखाद्यास्तु ये भेदाः भारत्याद्यास्तु वृत्तिषु।
ते विस्तारभयाद्विप्रदासेनात्र न लक्षिताः ॥
आङ्गिकाभिनयेष्वेव पर्यवस्यन्ति सात्त्विकाः।
यस्मान्मुख्यावभिनयौ ज्ञेयावाङ्गिकवाचिकौ ॥

विप्रदासः

**कैशिक्यादीनां वेदप्रभवत्वम्**

ऋग्वेदाद्भारती जाता यजुर्वेदात्तु सात्त्वती।
आथर्वणादारभटी सामवेदात्तु कैशिकी ॥

विप्रदासः

**कोकिलप्रियः—तालः**

गलपाः स्युः। ऽ । ऽ́

कुम्भः

**कोणाहतः—हस्तपाटः**

कनिष्ठाङ्गुष्ठयोगेन शेषाङ्गलिविवर्तनात्।
कोणाहतो हस्तपाटः परिज्ञेयो बुधर्यथा ॥
खुं खुं धरि खु खुं धरि करगित करिगित।

कुम्भः

**कोमलः**

कोमलोऽकर्कशः प्रोक्तो।

कुम्भः

**कोमला कान्तिः**

कोमला दृश्यते कान्तिर्येषु तैः स्युः छवेरिह।

कुम्भः

**कोलाहलबृन्दलक्षणम्**

अधिकं दृश्यते यस्मिन्नुत्तमोत्तमबृन्दतः।
बृन्दं विद्यावतां प्रोक्तं तच्च कोलाहलाभिधम् ॥

सोमराजदेवः

**कोह्लाटिकः**

भ्रमर्यादिषु वंशादौ रज्जुसंचारचञ्चुकः।
भारस्य भूयसोवोढा बुधैः कोह्लाटिकः स्मृतः ॥

कुम्भः

**कौतुकं—नाट्याङ्गम्**

पाठाक्षरेण संयुक्तं देवताविषयात्मकम्।
नानार्थचित्तसंयुक्तं कृतं कौतुकमुच्यते ॥

भरतकल्पलतामञ्जरी

कौलुः

पार्श्वदंशोत्थपवनैरभवः कौलुरुच्यते ।
येन वायायुधा वायमायेवा महःहवे (?) ॥
न विभेषति वचनं गीतं कौलुरिति स्मृतम् (?) ।
पूरवस्फुल्लमाभोगो पदं चेद्द्विगुणं भवेत् ॥
न्यासस्तदावृत्तिरत्र भारतीत्यायुधः करः ।
नर्तयेत्पात्रमिथुनं मध्यमानेन धीमता ।
आभोगनर्तने पुष्पस्तबकायुधगौ करौ ॥

सङ्गीतसूर्योदयः

क्रमः

परान्स्वरयुगान्कुर्यादान्दोल्यप्रेंखितो भवेत् ।
सरी रिगा गमा मपा पधा धनीति प्रेंखितः ।
केचिदेनमलंकारं क्रममाचक्षते बुधाः ॥

क्रान्तम्

किञ्चिद्बाष्पाकुले नेत्रे बाहुशीर्षगतं शिरः ।
चिबुकक्षेत्रगौ हस्तौ क्रान्तमेतदुदीरितम् ।
शोके ग्लाने निर्जिते च निगृहीते नियुज्यते ॥

कुम्भः

क्रमपादनिकुट्टिता

पादद्वयकृता सैव क्रमपादनिकुट्टिता ।
सैवेति—पादस्थितिनिकुट्टिता । कुम्भः

क्रियाङ्गलक्षणम्

करणोत्साहसंयुक्ता क्रियाङ्गस्तेन हेतुना ।

सङ्गीतदर्पणः

क्रियापरः

यथा शास्त्रप्रयोगेण मार्गे देशीयमेव च ।
यो गायति क्रियादोषात्कथ्यतेऽसौ क्रियापरः ॥

कुम्भः

क्रीडातालः

क्रीडाताल ध्रुवः स स्यात्पक्षैर्वर्णांगनिर्मलः ।
शृङ्गाररससंयुक्तः श्रोतुस्तेजोविवर्धनः ।
एक एव प्लुतो यस्मिन् क्रीडातालः स कथ्यते ॥

गान्धर्ववेदे

क्रोधः

अवज्ञादिकृताच्चित्ते विकृतिर्या भवेत् खलु ।
स्वल्पा च न भवेत्क्रोधो भावविद्भिरुदाहृतः ॥

क्लेशनिर्वाह्याः

प्राणाः सौष्टवतो क्लेशनिर्वाह्याः स्युः सुखस्वते ।

कुम्भः

क्ष

क्षत्रियवर्णहस्तः

वामेन शिखरं तिर्यक् धृत्वान्येन पताककः ।
धृतो यदि क्षत्रियाणां हस्त इत्यभिधीयते ॥

भरतकल्पलतामञ्जरी

क्षिप्तः

ऊर्ध्वमूर्ध्वं प्रसारः स्याद्यस्यासौ क्षिप्त उच्यते ।

कुम्भः

क्षेत्रकाकुः

रागे नानाविधच्छाया प्रतिक्षेत्रं निसर्गजा ।
सा क्षेत्रकाकुर्विज्ञेया क्षेत्रं देहो यतः स्मृतम् ॥

कुम्भः

क्षेत्रच्छाया

रागस्योत्पत्तिभूःक्षेत्रं शरीरं जगदुर्बुधाः ।
तस्यैवानुकृतिरवाच क्षेत्रच्छायेति सा मता ॥

कुम्भः

ख

खञ्जरीटा—चारी

तत्र उत्कटसंस्थित्या चलद्द्विपताककम् ।
द्रुतमानेन सा चारी खञ्जरीटाभिधा स्मृता ॥

देवेन्द्रः

खटकः—हस्तपाटः

क्रमेण प्रसृताङ्गुष्ठशुकतुण्डेन वाद्यते ।
विरलाङ्गुलिभिर्वाद्यं प्राहुस्तं खटकं बुधाः ॥
दोंगिड दांगिड दां

कुम्भः

खटकामुखः—हस्तः

करं द्विशिखरं कृत्वा कुञ्चितं च समं नयेत् ।
शिखरश्च कपित्थश्च खटकामुखसंज्ञिकः ॥

देवेन्द्रः

परशुरामसंहितायां तु शराभ्यासप्रकरणे—

तर्जनीमध्यमामध्यपुङ्खोऽङ्गुष्ठेन पीड्यते ।
तस्मिन्ननामिकायोगात्स हस्तः खटकामुखः ॥
उत्तानोऽसौ स्रुगादौ स्याधस्तश्चामरधारणे ।
कुसुमापचये छत्त्रस्त्राममधारणे तथा ॥
शरमन्थाकर्षणे च सम्मुखे दर्पणग्रहे ।
कस्तूरिकादिवस्तूनां पेषणेऽधिस्तनौ करौ ॥
ताम्बूलवीटिकावृन्तच्छेदनादौ स्वयं स्मृतः ।
वल्गात्रजनपात्राणां ग्रन्थेदां शुकदर्भयोः (?) ।
स्तुवस्तुचो धारणे च नीवीमोक्षे च बन्धने ।

सङ्गीतनारायणे

## खड्गः

ऊर्ध्वं कपोतमाधायाधस्तान्मुष्टिलरं तथा ।
पताकं तिर्यगादाय ततः खड्गभिधा पुरा ॥

कुम्भः

## खड्गकलासः—प्रथमः

सव्यापसव्यतो यत्र नर्तकी चकिता मुहुः ।
विलोक्य च परा पश्चाद्धुतखड्गलतेव सा ॥
आचरन्नप्रचारं चे द्विचित्रमथ हस्तकान् (?) ।
प्लुतमानकृतानर्थं चन्द्रादीन् रचयेत्स्फुटम् ।
तदा खड्गकलासोऽसौ विद्वद्भिः परिभाषितः ॥

अशोकः

—द्वितीयः

वामं करं कटौ न्यस्य परं खड्गकृतं करम् ।
कृत्वा सकंपं चेदर्धचन्द्रमास्ते तदादिगः ॥
कृत्वा कपोतमूर्ध्वंचेदधोमुष्टिं करं ततः ।
यत्र तिर्यक्पताकाख्यं करं कुर्यात्तदामिधा ।
द्वितीया खड्गपूर्वस्य कलासस्य निरूपिता ॥

अशोकः

—तृतीयः

विधाय त्रिपताकौ द्वौ यस्य यश्चरणः पुरः ।
घातयन्निव तत्रैतं योजयेत्स तृतीयकः ॥

अशोकः

— चतुर्थः

स्वस्तिककर्कटमुष्टिकपताक पाणीन्यथाचतुरः ।
धृतिमोहघातपातक्रियां कुर्याच्चतुर्धा सः ॥

तत्र धाच्चतुर्धोर्ध्वमधःपार्श्वद्वयोपि च (?) ।
एवं खड्गकलासस्य भेदाश्चत्वार ईरिताः ॥

अशोकः

## खण्डकर्तरी—पाटः

अङ्गुष्ठेन करो दक्षे विरलाङ्गुलिसंहतिः ।
हन्ति वाद्यपुटं यत्र वामहस्तो निपीडयेत् ॥
तत्र संपद्यते पाटः खण्डकर्तरिसंज्ञकः ।

यथा—दां खुं खुं द्रा खुखग्रहे थें टें डें (झें) हं डें (झें) टें णिथों टें

कुम्भः

—हौडुक्किकपाटः

अङ्गुष्ठेन करो दक्षे विरलाङ्गुलिसंहतिः ।
हन्तिवाद्यघटं यत्र वामहस्तो निपीडयेत् ।
तत्र संपद्यते पाटः खण्डकर्तरिसंज्ञकः ॥

कुम्भः

## खण्डतालः

विजयाख्यो ध्रुवः.........स्याद्विंशत्यक्षरांघ्रिकः ।
सन्निपातेन संयुक्तः शृङ्गाराभीष्टदे रसे ॥
एक एव गुरुर्यत्र सन्निपातः स कथ्यते ।
यथा विंशतिवर्णाघ्रिर्ध्रुवः कन्दर्पसंज्ञकः ॥
वीरे वा करुणे वा स्यात्खण्डताले विधीयते ।
द्रुतमेकं भवेद्यत्र तालोऽयं खण्डसंज्ञितः ॥

गान्धर्ववेदे

## खण्डयतिः

खण्डपाटयुतं कृत्वा यतिवाद्यदि (?) वाद्यते ।
आवर्तनेन च तदा बुधैः खण्डयतिः स्मृता ॥

कुम्भः

## खण्डयतिलक्षणम्

गलपाः स्युर्विरामान्तौ लघू निःसारुको भवेत् ।

हम्मीरः

## खण्डसूची

भूमिलग्नोरुपार्ष्णिः स्यादेकस्तिर्यक् प्रसारितः ।
अन्योऽङ्घ्रिः कुञ्चितो यत्र खण्डसूचिमतं तदा ॥

कुम्भः

**खण्डिता**—नायिका

उन्निद्रताजनितरागविलोमिताङ्गः
कान्तानखक्षतविशेषविचित्रिताङ्कः ।
यस्याः कृतेऽपि गृहमेति पतिः प्रभाते
सा नायिका निगदिता खलु खन्डितेति ॥

शुभङ्करः

**खरासनः**

खरवद्यस्समश्नाति स जनः स्यात्खराशनः ।
तद्देशजं गीतंनामागर्जरुः परिकीर्तिता ॥
नायकं नायकां वादात्याख्यमानितायदि (?) ।
गर्जेत्या रोदकं येन स गर्जरुरिति स्मृतः ॥
एकमात्रादि षण्मात्रा पर्यन्ते तालवर्त्मनि ।
तालै च तद्द्येनैव पल्लवाख्यमुद्गं भवेत् ॥
तत्तद्गुणकशायुक्तं पदं नामार्थसंभवम् (?) ।
चतुरावृत्ततालेन आभोगो युग्मनामकः ॥
पुनः पल्लवकेनाद्यं वृत्तिरारभटी भवेत् ।
आयुधो दन्त एव स्यात् चार्युतप्रेरणसंभवः ॥
युग्मपात्रं नामिनयभूनैंकस्यायुधपाणिना ।
द्रुतेन गतिना दूतीनयिका तु तदन्ययोः (?) ॥

सङ्गीतसूर्योदयः

**खलकः**—हस्तपाटः

क्रमेण स्फुरिताङ्गुष्टशुकतुण्डेन वाद्यते ।
विरलाङ्गुलिभिर्वाद्यं प्राहुस्तं खलकं बुधाः ॥
दोङ्गिड दाङ्गिड दाम् ।

कुम्भः

**खुत्ता**

भूम्यां चरणाग्रेण घाततः ।
खुत्ता निगद्यते ।

कुम्भः

—उत्फुल्ला

खुत्ता चैव तथोत्फुल्ला तयोर्लक्षणमुच्यते ।
विवन्त इव दृश्यन्ते यस्यासन्नखरास्तु सा ।
खुत्तेति परिविज्ञेया सोत्फुल्लेत्युदिता पुनः ॥

कुम्भः

**खुलुहुलुः**

प्रपदस्थितवामाङ्घ्रेः पाष्ण्योर्यत् कुट्टनं मुवः ।
तद्वत् स्थितस्य चाङ्गस्य भ्रमः सव्यापसव्यतः ।
योऽसौ खुलुहुलुः प्रोक्तो घर्घरो नृत्तकोविदैः ॥

कुम्भः

## ग

**गडप्पाणी**—वाद्यम् (झडप्पाणिः)

सा स्यात् गडप्पाणी यस्यामादौ मध्येऽवसानके ।
वाद्यन्ते सर्ववाद्यानि नानावाद्यैरनेकधा ॥

कुम्भः

**गणना**,

एकं द्वे त्रीणि चत्वारि पञ्च षट् सप्त चाष्ट च ।
तथा नव दशेत्येवं गणनाऽङ्गुलिभिर्भवेत् ॥
या च संख्या दशशतसहस्राद्याप्रकीर्तिता ।
तामिमां तु पताकाभ्यां विरलाभ्यां प्रदर्शयेत् ॥

वेमः

**गतक्रमस्वरलक्षणम्**

हीनस्वरेण सञ्जाता स्वरश्रुतिविवर्जिता ।

भरतकल्पलतामञ्जरी

**गतयः**

हंसहंसगजाश्वाश्च मीनखंजकनर्कुटाः ।
कुरङ्गास्तित्तिरो लावो गतयो ता दशोदितम् ॥

कुम्भः

**गतिप्रचारः**

उत्तमे मध्यमे तद्वदधमे च प्रयुज्यताम् ।
गतिप्रचारो द्विविधः प्रकृतिर्विकृतिस्तथा ॥
प्रकृते तूत्तमगते जानुकार्यं कटीसमम् ।
विकृते युद्धचार्यग्रगमने स्तनसम्मतम् ॥

वेमः

**गतिभेदाः**

भानवी मैनवी चैव गजलीला तुरङ्गिणी ।
हंसी भृङ्गी खञ्जरीटी सप्तैता गतयो मताः ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

उत्तमा मध्यमास्तद्वदधमाश्चेत्यनुक्रमात् ।
गतिर्भेदा निरूप्यन्ते संश्रित्यप्रकृतीरिमाः ।
ते च पात्रैः प्रयुज्यन्ते प्रविष्टे रङ्गमण्डलम् ॥

वेमः

**गद्यप्रबन्धः**

द्रुता विलम्बिता मध्या द्रुतमध्या तथापरा ।
गतिर्द्रुतविलम्ब्या स्यात् षष्ठी मध्यविलम्बिता ॥

इति गद्यस्य षट् प्रोक्ता गतयः पूर्वसूरिभिः।
लघुभिर्बहुलैरल्पैः समैराद्यं त्रयं क्रमात् ॥
पृथक् सलागमिश्रैस्तु लागैस्तद्वत्परं त्रयम्।
प्रत्येकं गतिषट्केन षट्त्रिंशद्गद्यजा भिधाः ॥

हम्मीरः

## गद्यलक्षणम्

अष्टाभिर्यदि वा षड्भिः पदैः प्राससमन्वितम्।
प्रणवाद्यमतालं च बुधैर्गद्यं निगद्यते ॥
कार्योऽनुयायिनो गद्ये गीतस्य नियमो बुधैः।
मध्ये मध्ये तु गद्यस्य स्वुर्वर्णा गमकोत्तराः ॥
स्वरप्रान्तेऽथवा स्यातामविलम्बविलम्बकौ।
ततः प्रबन्धनामाङ्कं तालयुक्तं षदद्वयम् ॥
ततस्तालान्वितं गातुर्नामनेतुश्च गीयते।
कृत्वा यतिं ततो गद्ये न्यासं तालं यदृच्छया ॥
गाने गद्यप्रबन्धस्य सर्वास्तृप्यन्ति देवताः।
वर्धन्ते वर्णनीयस्य मङ्गलानि बलानि च ॥

सोमराजदेवः

## गमकभेदाः

तिरिपः स्फुरितो लीनः कम्पितान्दोलितौ वलिः।
प्लावितोल्लासितौ चैव त्रिभिन्नकुरुलाहताः ॥
घुम्फितो मुद्रिताश्चैव नामतो मिश्रितस्तथा।
एते पञ्चदश प्रोक्ताः प्रसिद्धगमका बुधैः ॥

कुम्भः

## गरुडः—हस्तः

तिर्यक् प्रसारितौ चार्धचन्द्रावङ्गुष्ठयोगतः।
गरुडाख्यस्सविज्ञेयः गरुडार्थे नियुज्यते ॥

भरतकल्पलतामञ्जरी

## गाढालिङ्गनगुणः

मदे दुःखे श्रमे स्रस्तौ एकेच्छौ मुष्टिकुन्तयोः।
प्रहारे कर्णलग्नौ स्तः शिशिराश्लेषयोरपि ॥

कुम्भः

## गात्रछाया

ये गात्रयैव दृश्यन्ते छाया गात्रस्य ते मताः।

कुम्भः

## गात्रसंहतलक्षणम्

स्वभावसुन्दरे देहे पार्श्वाङ्गुष्ठाश्च संयुताः।
अन्योन्यं संहतं तत्स्यात्प्रणामादौ विधीयते ॥

देवेन्द्रः

## गाथालक्षणम्

गाथाप्रबन्धे लक्ष्म स्यादार्यायां यदुदीरितम्।
आर्या संस्कृतया वाचा गाथोक्ता प्राकृतेन तु ॥

सोमराजदेवः

## गान्धर्वः

मार्गं देशयं च यो वेत्ति स गान्धर्वोऽभिधीयते।

सङ्गीतमकरन्दे

## गानम्

यत्तु वाग्गेयकारेण रचितं लक्षणान्वितम्।
देशीरागादिभिः प्रोक्तं तद्गानं जनरञ्जनम् ॥

तुलजः

गानं चतसृभिः कुर्याद्वृत्तिभिर्मार्गभेदतः।
मागध्या चार्धमागध्या गानं चित्रे प्रशस्यते ॥
स्यात्सम्भावितया मिश्रे गानं पृथुलया पुनः।
पूर्वरङ्गे भवेच्छुद्धे वृत्तीनां लक्ष्यदर्शितम् ॥

विप्रदासः

प्रवेशाक्षेपनिष्क्रामप्रासादिकमथान्तरम्।
गानं पञ्चविधं विद्याद् ध्रुवायोगसमन्वितम् ॥

नाट्यशास्त्रे

## गानलक्षणम्

सर्वलक्षणसंयुक्तं देशीरागादिभिः कृतम्।
यच्च वाग्गेयकारेण तद्गानं मुनयो जगुः ॥ मोक्षदेवः

## गाने स्वरनिर्णयः

यो यदा बलवान्यस्मिन्स्वरो जातिसमाश्रयः।
तत्प्रवृत्तं रसे कार्यं गानं गेये प्रयोक्तृभिः ॥
मध्यपञ्चमभूयिष्ठंगानं शृङ्गारहास्ययोः।
षड्जर्षभप्रायकृतं वीररौद्राद्भुतेषु च ॥
गान्धारः सप्तमप्रायं करुणे गानमिष्यते।
तथा धैवतभूयिष्ठं बीभत्से सभयानके ॥
एकैव षड्जमध्या ज्ञेयात्तु सकलरसाश्रया जातिः।
तस्या ह्यंशाः सर्वे स्वराश्च विहिताः प्रयोगविधौ ॥

नाट्यशास्त्रे

### गान्धर्वम्

अनादिसंप्रदायं यद् गन्धर्वैः संप्रयुज्यते ।
नियतं श्रेयसे हेतु तद्गान्धर्वं जगुर्बुधाः ॥

### गान्धर्वलक्षणम्

न गायति मनुष्योक्तं गीतं ये शिवतत्पराः ।
गायन्ति मन्त्रगीतानि ते गन्धर्वाः प्रकीर्तिताः ॥

यत्र जात्यादि गन्धर्वैर्गीयतेऽभ्युदयाश्रये ।
सर्वदा सन्निधौ शम्भोस्तद्गान्धर्वं बुधैः स्मृतम् ॥

मोक्षदेवः

### गान्धारः

गान्धारस्याश्च गायन्ते तस्माद्गान्धार उच्यते ।

सङ्गीतसारः

पञ्चादिकौ समौ यत्र गान्धारस्त्रिश्रुतिर्भवेत् ।
विशुद्धासमपानिस्युर्मेलदेशाक्षिकोद्भवे ॥

पूर्णा देशाक्षिको ज्ञेया भूषिता गत्रयेण च ।
वीरे रसे प्रयोज्या सा प्रातःकाले प्रगीयते ॥

कुम्भः

### गान्धारग्रामः

यदाधस्त्रिश्रुतिः षड्जे मध्यमे तु चतुःश्रुतिः ।
रिमयोः श्रुतिरेकैका गान्धारस्य समाश्रया ॥

पञ्चमश्रुतिरेकैका निषादश्रुतिसंश्रया ।
गान्धारग्राममाचष्टे तदा तं नारदोऽब्रवीत् ॥

सङ्गीतमकरन्दे

लक्ष्मीनारायणाख्योऽयं सुङ्गीताम्भोधिपारगः ।
गान्धारमूर्छनाग्रामं व्यवहारक्षमं यथा ॥

करोति लक्ष्ययोगेन पूर्वलक्षणयोगतः ।
गान्धारो रिमयोर्यस्मिन् एकैकां शुद्धमेलने ॥

श्रुतिं भजति भेदस्तु पञ्चमस्य श्रुतिं ततः ।
निषादा पश्रुतिं पश्येत् तत् श्रुतिं स्वीकरोति च ॥

तथा गान्धारविख्यातो ग्रामोऽयं नारदोदितः ।
अस्यापि मूर्छनाः सप्त तन्नामान्यधुनोच्यते ॥

नन्दा विशाला सुमुखी चित्रा चित्रवती शुभा ।
आलापा चेति गान्धारग्रामे स्युः सप्तमूर्छनाः ॥

अस्यापि मध्यगान्धारमूला प्रथममूर्छना ।
ततः षण्मूर्छनाः पूर्वक्रमेण परिभाषिताः ॥

सङ्गीतसूर्योदयः

### गान्धारमेलः

चतुःश्रुतिरिधौ यत्र भवेतां नियतं स्वरौ ।
साधारणोऽपि गान्धारो निषाधः कैशिकी पुनः ॥

वीणिकाविषये शुद्धाः षड्जमध्यमपञ्चमाः ।
श्रीरागस्यापि मेलोऽयं गदितो गायकोत्तमः ॥

कुम्भः

### गाम्भीर्यम्—पौरुषः

गाम्भीर्यं शोकहर्षादाविङ्गिताकारगोपनम् ।

वेमः

### गायकभेदाः

यकलो यमलो वृन्दो गायकास्त्रिविधाः स्मृताः ।

भरतकल्पलतामञ्जरी

उत्तमं पुनरिहापि मध्यमं तत्कनिष्ठमिति लक्षितं पुरा ।
तत्र गायकचतुष्टयं वरं गायकाद्द्विगुणितास्तु तत्समाः ॥

द्वादशाङ्गचतुरास्तु गायकास्तत्रवांशिकचतुष्टयं वरम् ।
वेदनामितमृदङ्गवादिभिर्युक्तमुत्तममिदं निवेदितम् ॥

कुम्भः

### गायकश्रेष्ठः

त्रिस्थानालापदक्षो गमकलयकला काकुविज्ञोऽतिधीरो
नव्योक्ती रोषरिक्तः सकलजनमनोरञ्जकः सावधानः ।

शुद्धच्छायालगज्ञः श्रमरहिततनुः कोकिलप्रख्यकण्ठ-
स्तालाभिज्ञो ग्रहज्ञः स भुवि निगदितो गायकानां वरेण्यः ॥

कुम्भः

### गायकलक्षणम्

षाडवौडुवसम्पूर्णगायने जनरञ्जकाः ।
काकुवर्जितशारीरा गायका राजवल्लभाः ॥

सङ्गीतमकरन्दः

विविधालापचतुरो ग्रहे मोक्षे च शिक्षितः ।
स्थानत्रयविशेषज्ञो गम्भीरमधुरध्वनिः ॥

नानारागविशेषज्ञस्तालभेदप्रयोगवित् ।
वशी जितश्रमो रक्तः कण्ठस्वरविधानवित् ॥

पुनःपुनश्च राज्ञस्तु प्रौढचित्तोपरञ्जित. ।
शिक्षितः सदुपाध्यायात्स्वरसप्तकभेदवित् ।
अकाकुर्लिपिभावज्ञः गायकः परिकीर्तितः ॥

भरतकल्पलतामञ्जरी

नानालप्तिकरोऽवधारणपरो रागाङ्गरागग्रह-
न्यासांशाखिलवस्तुगाननिपुणस्त्रिस्थानकृत्तालवित् ।
गम्भीरो मधुरध्वनिः शमयुतः स्वाधीनकण्ठस्थिरः
सद्यो रागविशेषवेद्यविबुधः स्यादुत्तमो गायकः ॥
सोमराजदेवः

## गायनलक्षणम्

प्रबन्धगात्रनिष्णातो विविधालयकारकः ।
रागरागाङ्गभाषाङ्गक्रियाङ्गेयोऽङ्गकोविदः ।
गायनो गीतशास्त्रज्ञैर्भण्यते सर्वसम्मतः ॥
गान्धर्ववेदे

## गायनी

तारुण्यप्रतिमप्रपञ्चचतुरा माधुर्यधुर्योक्तयो
लावण्यामृतदुग्धसागरकला रूपौघरत्नाकराः ।
नानाभावकलाकलापकलिताकृद्धावितार्थप्रिया
गायन्यो गदिता हि गायनवरैः तुल्या नृपेणामुना ॥
कुम्भः

## गायनीलक्षणम्

लयतालकलाभिज्ञाः स्वभावमधुरप्रियाः ।
शुद्धछायालगालप्तिप्रगल्भा नवयौवनाः ॥
गीतवाद्यविदः श्यामा रूपसम्पदलङ्कृताः ।
गायन्यश्च प्रशस्यन्ते मूर्ता स्वरजयश्रियः ॥
मोक्षदेवः

## गारुडी

तिर्यक्प्रसार्यैकपादं पश्चाज्जानु भुवि क्षिपेत् ।
सम्यक्प्रसार्य बाहू द्वौ भ्रामयेद्गारुडी भवेत् ॥
अशोकः

## गार्ग्यः—तालः

गार्ग्यतालेन गीयेत कारुण्ये मधुरो ध्रुवः ।
अङ्घ्रिर्द्विसप्तभिर्वर्णैरानन्दफलदः सदा ।
चतुर्द्रुतो विरामान्तस्तालोऽयं गार्ग्यसंज्ञकः ॥
गान्धर्ववेदे

## गीतम्

गीतं स्वरसमूहस्तु गीतमित्यभिधीयते ।
तदेव कैश्चिद्विद्भिर्द्धातुरित्यभिधीयते ॥
ध्रुवादिधातुरचितं विद्याद्यैरलङ्कृतम् ।
पदेन विरुदेनाथ तालेन च विराजितम् ।
गीतमित्युच्यते तद्ज्ञैः सामान्यं गानमात्रकम् ॥
सङ्गीतसूर्योदये

## गीतगुणाः

व्यक्तं पूर्णं प्रसन्नं च सुकुमारमलङ्कृतम् ।
समं सुरक्तं मधुरं श्लिष्टं विक्षिप्तमेव च ॥
गीतं स्याद्दशधा तत्र सुव्यक्तं व्यक्तमिष्यति ।
दिश्यते पूर्णं सम्पूर्णं छन्दोरागसुपस्वरैः ॥
तत्प्रसन्नं स्फुटार्थं यन्निःसन्देहमगद्गदम् ।
सुकुमारं पुनर्गीतं कण्ठस्थानमृतं मतम् ॥
स्थानत्रितयनिष्पन्नमलङ्कृतमिहोच्यते ।
वर्णस्थाने लये सम्यक् साम्येन सममुच्यते ॥
सुरक्तवल्लकीवंशः कण्ठध्वन्येकता मता ।
मृदुलावण्यसंयुक्तं मधुरं श्रुतिसौख्यदम् ॥
श्लक्ष्णं च प्लुतत्तीचोच्चद्रुतमध्यविलम्बितैः ।
विकृष्टं कथ्यते गीतमुच्चैरुच्चारितं सदा ॥
सोमराजदेवः

## गीतदोषाः

गीतमव्यक्तमुद्घुष्टं शङ्कितं सानुनासिकम् (?) ।
विरसं काकस्वरं ... स्थानवर्जितम् ॥
व्याकुलं तालहीनं च विषमाहतमेव च ।
शिरोगतं च विश्लिष्टं गीतदोषाश्चतुर्दश ॥
सोमराजदेवः

## गीतनृत्तगम्

गीतपात्रानुवग यं तद्भवेद्गीतनृत्तगम् ।
सोमेश्वरः

## गीतनृत्तानुगम्

गीतेन संगतं यत्तु तद्गीतानुगमुच्यते ।
नृत्तेन सहितं यच्च तन्नृत्तानुगमीरितम् ॥
सोमेश्वरः

## गीतनृत्यादिषु प्रौढिः

यथा गीते सदा भोगः शिखरत्वे निरूपितः ।
तथा नृत्ये च तासां तु वर्तनं कलशोपमम् ॥
आभोगनर्तने प्रोक्ता भ्रमण्या मुख्यता बुधैः ।
विशेषाद्भ्रमकादीनां सुप्रभास्ताः प्रकीर्तिताः ॥ कुम्भः

### गीतप्रयोगः

यानि वस्तूनि वाक्येषु वक्तव्यानीह नाटके ।
तानि सर्वाणि गीतेन प्रयोज्यानि प्रयोक्तृभिः ॥

वेमः

### गीतप्रशंसा

सर्वस्य दानस्य किलास्ति सङ्ख्या
गायन्ति ये भक्तियुता ममाग्रे ।
तेषां तु गीतोद्भवपुण्यसङ्ख्या
चेत्युक्तमीशेन पुरो भवान्याः ॥
यो वृत्तिलोभेन सुखेन चापि
शाठ्येन वा गायति गीतमालम् ।
सञ्जायते वर्षसहस्रमीश-
पुरोगणः सर्वगणाग्रणीपः ॥

हम्मीरः

### गीतभेदाः

निबद्धमनिबद्धं च मिश्रं गीतं त्रिधा भवेत् ।

सोमराजदेवः

### गीतमाहात्म्यम्

वनेचरस्तृणादोऽपि कुरङ्गोऽप्यनुरागतः ।
श्रुत्वा गीतमतन्त्रश्रीर्दत्तेऽसून् सुखलालसः ॥

सोमराजदेवः

### गीताङ्गानि

अतःपरं प्रवक्ष्यामि गीतानां वस्तुकेष्वपि ।
विवधैककवृत्तानि त्रीण्यङ्गानि समासतः ॥
सर्वेषामेव गीतानां वस्तुष्ववयवेष्वपि ।
विवधैककवृत्तानि त्रीण्यङ्गानि भवन्ति हि ॥
एकैकं तु विदार्यैका त्रीण्योजे विवधः स्मृतः ।
षट्परं त्र्यपरं वृत्तं त्र्यङ्गं संहरणं च तत् ।
विवधैककयोः प्रायो मन्द्रके तु प्रयोजनम् ॥

नाट्यशाले

### गीतलक्षणम्

अष्टभाषा पदैर्युक्तं शब्दझंकारसंयुतम् ।
स्वररागैः प्रगायन्ति गीतमित्यभिधीयते ॥

भरतकल्पलतामञ्जरी

### गीतिभेदाः

प्रथमा शुद्धगीतिः स्यात् द्वितीया भिन्नका भवेत् ।
तृतीया गौडिका चैव रागगीतिश्चतुर्थिका ॥
साधारणी तु विज्ञेया गीतिज्ञैः पञ्चमी तथा ।
भाषागीतिस्तु षष्ठी स्यात् विभाषा चैव सप्तमी ॥
सप्तगीत्यो मया प्रोक्ता इदानीं भेद उच्यते ।
गीतयः पञ्च विज्ञेयाः शुद्धा भिन्नाथ वेसरा ।
गौडा साधारिता प्रोक्ता याष्टिकेन महात्मना ॥

इति दुर्गाशक्तिमतम् ।

प्रथमा मागधी ज्ञेया द्वितीया चार्धमागधी ।
संभाविता तृतीया च चतुर्थी पृथुला स्मृता ॥

इति भरतमते ।

भाषा चैव विभाषा च तथा चान्तरभाषिका ।
तिस्रस्तु गीतयः प्रोक्ता याष्टिकेन महात्मना ॥
भाषागीतिर्विभाषा च मतङ्गेनाप्युदाहृता ।
भाषागीतिस्तथैकैव शार्दूलमतसम्मता ॥

मतङ्गः

### गीतेन देवताप्रीणनम्

रराज वस्तुध्वनिना रमेशो गीतेन देवो मुदुरेति शम्भुः ।
रतो विरिञ्चिः किल सामगीत्यः सक्ता सरस्वत्यपि वीणिकायाम् ॥

कुम्भः

### गुरुगुम्फितः—अपाटः

दक्षिणानामिकाङ्गुष्ठवलनाभ्यसनक्रमात् ।
तथा रामकरोल्लासाज्जायते गुरुगुम्फितः ॥

कुम्भः

### गुरुतालः

सदद्वयगुरोर्द्वन्द्वं गुरुताले गुरोर्मतम् ।

कुम्भः

### गूर्जरीचतुष्कलक्षणम्

अपञ्चमा महाराष्ट्री गूर्जरी ताडितस्वरा ।
ऋषभांशन्यासयुक्ता निमन्द्रा गीयते बुधैः ॥
महाराष्ट्री च सौराष्ट्री गूर्जरी विबुधैर्मता ।
परिपूर्णा भवेदेषार्षभकम्पनसंयुता ॥
मध्यस्फुरणसंयुक्ता संपूर्णा ताडितस्वरा ।
ऋषभांशग्रहन्यासा दाक्षिणात्या च गूर्जरी ॥

सम्पूर्णद्राविड़ी ज्ञेया गूर्जरी हर्षदायिनी ।
एतस्यां तारमन्द्राख्यां ऋषभस्फुरणं भवेत् ॥

मोक्षदेवः

## ग्रहस्वराः

संपूर्णरागो देशाक्षी मध्यमादिः प्रकीर्तितः ।
वसन्तभैरवी शुद्धभैरवी मादितः क्रमात् ॥

संपूर्णमालवीरागो गान्धारादिः प्रकीर्तितः ।
नाटरागश्च सम्पूर्णः सषड्जादिरुदाहृतः ॥

मुखहारी च सम्पूर्णो धैवतादिर्निगद्यते ।
संपूर्णश्चाहरी प्रोक्तो मध्यमादिरुपक्रमः ॥

बलहंसश्च संपूर्णो गान्धारादिः प्रकीर्तितः ।
वसन्तः शुद्धसंज्ञश्च सषड्जादिरुदाहृतः ॥

रामक्रिया शुद्धसंज्ञा सषड्जादिरुदाहृता ।
वराटिका शुद्धसंज्ञा सषड्जादिरुदाहृता ।
एवं संपूर्णरागाणां ग्रहस्वर उदाहृतः ॥

सङ्गीतमकरन्दे

## गेयपदम्

अतोऽन्यवनितारतं रमणमप्रियेऽपि स्थितम् ।
व्रजामि सखि रोदिनीमपनयामि लज्जामपि ॥

यत्रासने सुखासनस्तं श्याभ्यातोद्यादने (?) ।
गायन्ति गायकाः स्वैरमाहुर्गेयपदं हि तत् ॥

चिन्ताशोकाकुलत्वेन वाक्ये चाभिनयेऽपि च ।
विमूढाः खण्डिताः कान्तास्तदासनमिहोच्यते ॥

प्रसरति दिनमणितेजसि विगलिततमसि प्रकाशिते नभसि ।
अपनीताधररागं पश्य वयस्यं समागते रमणम् ॥

कुम्भः

## गोण्डली

वाद्यः प्रबन्धैः कठिनैस्त्यक्तमेलादिभिस्तथा ।
गीतैः सालगसूडस्थैः प्रबन्धैश्च ध्रुवादिभिः ॥

लास्याङ्गैरन्वितं यत्र नृत्तं यद्द्रुतमानतः ।
स्वयं गायति वाद्यं च त्रिवलीं वादयेत्स्वयम् ॥

त्रिवलीधारणं स्कन्धे ग्राम्यत्वं कुरुते स्त्रियः ।
अगायन्तीत्वशारीरा सैव स्यान्मूककुण्ली ।
गोण्डल्यां मण्डनं प्रोक्तं तज्ज्ञैः कर्णाटदेशजम् ॥

गीतं सालगमस्य स्याद्यदुक्तं गोण्डलीविधौ ।

कुम्भः

## गोरी

पञ्चभिर्लघुभिर्गौरी । कुम्भः

## गौडचतुष्टयलक्षणम्

सन्यासांशग्रहो गौडः कर्णाटपदलाञ्छितः ।
गानं स्याद्वीरशृङ्गारस्वस्थाने ताडितस्वरः ॥

षड्जांशन्यास संयुक्तो देशावालो रिपोज्झितः ।
गेयो वीररसे विद्भिः षड्जेनान्दोलितस्वरः ॥

एष प्रसिद्धिमगमत्पूर्वीयो गौड इत्यपि ।
निग्रहांशो रिपत्यक्तो गो बहुमन्द्रताडितः (?) ॥

तुरुष्कगौडी वीरे स्यान्मालवीयः स्मृतो जनैः ।
द्राविडो निग्रहांशस्तु स्फुरितौ षड्जपञ्चमौ ।
गान्धारतिर...... .....स्तोके सौमालिगो मतः (?) ॥

मोक्षदेवः

## गौडमल्हारः

शुद्धौ सगौ मपौ शुद्धौ पत्नादिकौ मपौ पुनः ।
त्रिश्रुतिस्त्यान्निषाधोऽपि मल्हारस्यापि मेलने ।
अत्रैव गौडमल्हारकौ तोडीप्रियस्वामितः (?) ॥

पुण्डरीकः

## गौडी

सत्रधा धगरिक्ता स्याद्गौडी सर्वाङ्गमञ्जुला ।
गायकैर्गीयते सायं गम्भीरगुणगुम्फिता ॥ कुम्भः

## ग्रन्थोक्तविषयाणां प्रतिज्ञा

नाट्यदर्पणसंगीतवल्लीसङ्गीतशेखरम् ।
नाट्यलोचनसङ्गीतकल्पवृक्षौ निरूपयन् ॥

दशरूपं रत्नकोशं भरतोक्तादिकं तथा ।
सङ्गीतसर्वस्वमिदं तनोति श्रीजगद्धरः ॥

जगद्धरः

## ग्रहः

तत्र ग्रहस्तु गीतादिस्वरोंऽशं पूर्वकीर्तितः ।
पञ्चस्वरपरस्तार उद्धैरंशाद्विहेष्यते ॥

दत्तिलः

## ग्रहाः

ग्रहास्तु सर्वजातीनामंशवत्परिकीर्तिताः ।
यः प्रवृत्तौ भवेदंशः सोंऽशो ग्रहविकल्पितः ॥

नाट्यशास्त्रे

ग्रहास्त्रिधा समातीतास्तथानागत इत्यपि ।
तल्लक्षणं च वक्ष्यामि नारदो मुनिपुङ्गवः ।
ग्रहातीते त्वतीतस्य तालातीते त्वनागतः ।
समः समग्रहः प्रोक्तस्तालज्ञैः पूर्वसूरिभिः ॥

सङ्गीतमकरन्दे

## ग्रामः

समूहवाचिनौ ग्रामौ स्वरश्रुत्यादिसंयुतौ ।
यथा कुटुम्बिनस्सर्वे एकीभूत्वा वसन्ति हि ॥
सर्वलोकेषु स ग्रामो यत्र नित्यं व्यवस्थितः ।
षड्जमध्यमसंज्ञौ तु द्वौ ग्रामौ विश्रुतौ किल ॥
गान्धारं नारदो ब्रूते स तु मर्त्यैर्न गीयते ।
सामवेदात् स्वरा जाताः स्वरेभ्यो ग्रामसंभवः ।
द्वावेतौ च इमौ ज्ञेयौ षड्जमध्यमलक्षितौ ॥

मतङ्गः

## ग्रामाः

नन्द्यावर्तोऽथ जीमूतस्सुभद्रो ग्रामकास्त्रयः ।
षड्जमध्यमगान्धारास्त्रयाणां जन्महेतवः ॥

भरतकल्पलतामञ्जरी

## ग्रामस्वरूपम्

स्थाने यावतिथे यस्यां भवेतां षड्जमध्यमौ ।
तावतिथ्येदसौ ज्ञेया मूर्च्छना ग्रामयोः क्रमात् ॥

| | |
|---|---|
| म प ध नि स रि ग | सौवीरी |
| ग म प ध नि स रि | हरिणास्वा |
| रि ग म प ध नि स | कलोपनता |
| स रि ग म प ध नि | शुद्धमध्या |
| नि स रि ग म प ध | मार्गी |
| ध नि स रि ग म प | पौरवी |
| प ध नि स रि ग म | हृष्यका |

इति मध्यमग्राम मूर्छनाः ।

## ग्रामौ

षड्जग्रामो मध्यमग्रामश्चेति ।

नाट्यशास्त्रे

तत्र यो यदंशः स तदा वादी । ययोश्च नवकत्रयोदशकमन्तरं तावन्योन्यं संवादिनौ । तद्यथा :— षड्जपञ्चमौ, ऋषभधैवतौ, गान्धारनिषादवन्तौ, षड्जमध्यमाविति षड्जग्रामे । मध्यमग्रामेप्येवमेव । षड्जपञ्चमवर्जं पञ्चमर्षभयोश्चात्र संवादः ।

अत्र श्लोकः :—

संवादो मध्यमग्रामे पञ्चमस्यर्षभस्य च ।
षड्जग्रामे तु षड्जस्य संवादः पञ्चमस्य च ॥

नाट्यशास्त्रे

## ग्राम्यलक्षणम्

नादस्संबन्धश्रुतिको ग्राम्यं च कठिनस्वरैः ।

भरतकल्पलतामञ्जरी

## ग्लानिः—व्यभिचारिभावः

तपोनियमनिन्दायासोपवासव्याधिक्षुत्पिपासासाधुसेवादि जन्तोर्ग्लानिः ।

शुभङ्करः

## ग्रीवारेचकलक्षणम्

ग्रीवाकटिकराङ्घ्रीणां चतुरो रेचकान् ब्रुवे ।
पृथङ्मुग्धविबोधाय करणान्तर्गतानपि ।
प्रोच्यते विबुधभ्रान्तिर्ग्रीवायाः कण्ठरेचकः ॥

मोक्षदेवः

## ग्रीष्मकालाभिनयः

वायोरुष्णस्य नास्पर्शात् व्यजनग्रहणादपि ।
स्वेदप्रमार्जनाच्चापि ग्रीष्मकालं निरूपयेत् ॥

वेमः

# घ

## घटलक्षणम्

महोदरः स्वल्पवक्त्रः सुपक्वो मञ्जुलो घनः ।
चर्मनद्धाननो वाद्यः कराभ्यां वादकैर्घटः ।
पुष्करत्रितयप्रोक्तपाटवर्णविराजितः ॥

कुम्भः

## घटसलक्षणम्

हुडुक्कातः प्रायभेदो यो घटः स विविच्यते ।
एतस्य तूहली नद्धा दक्षिणास्यस्य मण्डली ॥
कर्नेव्या वामवक्त्रस्य मण्डली रज्जुयन्त्रिता ।
गोंकारपाटवर्णाद्यो वाद्यते वादकोत्तमैः ॥
मुहुर्दक्षिणहस्तस्य मध्यमाङ्गुष्ठयोस्तथा ।
मदनाक्तप्रदेशाभ्यां घटनं घर्षणं तथा ॥

सर्वाभिर्वामहस्तस्याङ्गुलीभिः परिवाद्यते।
वामाङ्गुष्ठेन निष्पीड्यात्युक्तोऽयं घटसो मया॥

कुम्भः

घटिता—मार्दलवादनमार्गः

घटिता करमूलस्य विकृष्टाङ्गुलिमूलतः।

सङ्गीतनारायणे

घत्ता—पाटः

वाद्यतेऽर्धं निबन्धं चेत् झंकाराद्यं ततोऽर्धकम्।
वादयेदनिबद्धं चेत् स्वबुद्धया करयुग्मतः।
पुनराद्यं निबन्धं चेत् वाद्यं घत्ता तदा भवेत्॥

कुम्भः

घननखः—पाटः

पाटैर्निरन्तरैर्द्वाभ्यां पाणिभ्यां पाणिनाथवा।
कुर्याद्घननखं वाद्यं निरन्तरघनस्वनम्॥

कुम्भः

घनभेदाः

करतालः ......... जयघण्टा च शुक्तकः।
अम्बिकापणवाद्यं च घण्टा तोद्यं च घर्घरम्॥
झम्पातालश्चमभिरकर्त्तियुङ्गर पवच (?)।
द्वादशैते मुनीन्द्रेण कथिता घनसंज्ञिताः॥
तत्र करसुपलक्षणम्।

संगीतनारायणे

घनवाद्यभेदाः

इदानीं घनवाद्यस्य ब्रूमो नामानि लक्ष्म च।
तालश्च कांस्यतालश्च जयघण्टा च भल्लरी॥
वगुरुः किरिकिट्टश्च कम्रा घर्घरिका तथा॥

सोमराजदेवः

घनम्—वाद्यं

वाद्यं तु यद्घनं प्रोक्तं कलापातलयान्वितम्।
कालस्तस्य प्रमाणं हि विज्ञेयं तालयोगतः॥

नाट्यशास्त्रे

घर्घरिकाभेदाः

तत्र घर्घरिकावाद्ये वहनिर्घर्घरो मतः।
तस्य भेदाः षडेवात्र पडिवाडस्तदादिमः।
ततश्च पडवापश्च शिरपिस्त्यपि संज्ञिता॥
तलश्चालगपाठः स्यात्ततः शिरिभिराह्वयः।
ततस्तुलहरश्चैति तल्लक्ष्म व्याहरेऽधुना॥

कुम्भः

घुत्ता—वाद्यं

वाद्यतेऽर्धं निबन्धं चेत् घोंकाराद्यन्ततोऽर्धकम्।
वादयेदनुबन्धं चेत् स्वबुध्या करयुग्मतः।
पुनराद्यं निबन्धं चेत् वाद्यं घुत्ता तदा भवेत्॥

कुम्भः

घुलम्बिताः

जलं दोलायते यद्वदर्धभृतार्थभृते घटे।
गीते लुठन्ति ये तद्वत्ते स्थाया स्युर्घुलम्बिताः॥

कुम्भः

घुल्लरीलक्षणम्

अष्टादशाङ्गुलो यस्याः परिधिर्द्वादशाङ्गुला।
दैर्घ्ये सा घुल्लरी पञ्चविंशत्या निर्मिला पलैः॥
कण्ठे सूत्रद्वयोपेता सुषिरद्वयसंयुता।
चर्मणा नद्धवदना सुसमा यमदैवता।
वाद्या दक्षिणहस्तेन धृत्वा वामेन पाणिना॥

कुम्भः

च

चक्रकुट्टनिका

कुट्टितं चरणं पश्चाद्भ्रामयित्वा च विन्यसेत्।
कुट्टयेच्च ततः स्थाने चक्रकुट्टनिका मता॥

कुम्भः

चक्रकुट्टिता

कुट्टयित्वा तु विन्यस्य भ्रमितो लुठितो यदि।
कुट्टितोऽङ्घ्रिः पुनःस्थाने तदोक्ता चक्रकुट्टिता॥

चक्रबन्धकम्

दक्षिणाङ्गं समारभ्य वामाङ्गक्रमतो यदा।
आवर्जिते पुनस्तालाश्चक्रवच्चक्रबन्धकम्॥

सङ्गीतमुक्तावली देवेन्द्रकृता

चक्रबन्धरूपम्

संहतस्थानभेदे तु लक्ष्यलक्षणसंविदा।
देवेन्द्रेण नटानन्दहेतुनेदं प्रदर्शितम्॥

यत्र बन्धाभिधं रूपं नटानामतिदुस्तरम् ।
चक्रबन्धान्तरेणैवमङ्गानि मतिवित्तमैः ॥

वाङ्गीतमकरन्दे

चक्रभ्रमरी

खण्डसूच्यभ्रमाद्यैश्चक्रचक्रभ्रमरी भवेत् ।

कुम्भः

चक्रभ्रमरीलक्षणम्

खण्डसूचीं विधायादौ यत्र भ्राम्यति चक्रवत् ।
सा चक्रभ्रमरी प्रोक्ता देशीशास्त्रविशारदैः ॥

हम्मीरः

चक्रवर्तिनी

प्रसार्य बाहुयुगलं समे चाङ्घ्रिद्वये स्थिता ।
तत्र वेगभ्रमणतो विज्ञेया चक्रवर्तिनी ॥

कुम्भः

चतुष्कोणनिकुट्टिता

यत्राङ्घ्रिः कुट्टितः पूर्वं पुरःपश्चान्निवेशितः ।
अंगभावात्पुनश्चापि पुरःपश्चात्तदान्यथा ।
स्थाने च कुट्टिता सा स्याच्चतुःकोणनिकुट्टिता ॥

चतुःपत्तार्थम्

ऊर्ध्वं विलुठितः पूर्वं पश्चान्मण्डलवद्भ्रमः ।
विलासेन चतुर्दिक्षु हस्तो यत्र प्रवर्तते ॥

नाभिदेशसमीपस्थे लुठत्यन्यकरे सति ।
पर्यायाश्चेत्तयदोक्तं चतुःपत्तार्थचालयम् ॥

चतुरश्रम्

अन्तरं चतुरं प्रोक्तं चतुरश्रं मनोहरम् ।

कुम्भः

चतुरश्रः—तालः

तथा योनिद्वयं चात्र कीर्त्यमानं निबोधत ।
चच्चत्पुटश्च विज्ञेयस्तथा चाचपुटो बुधैः ।
चतुरश्रस्तु विज्ञेयस्तालश्चचत्पुटो बुधैः ॥

नाट्यशास्त्रे

चतुरश्रध्रुवा

ध्रुवेयं चतुरस्रा स्यात्सन्निपातचतुष्टया ।
शम्यात्रैककलाकार्या तालश्चैककलः पुनः ॥

शम्यैककलया प्रान्ते सन्निपातः कलात्रये ।
लयः स्यान्मध्यमे गानं तदुदाहरणं यथा ॥

आदिनटं धर्षितमदनमदं नागाजिनवाससमीशानम् ।
गङ्गाजलधौतजटाभारं तं दानवनाशकरं वन्दे ॥

अस्यां तु गीयमानायां ध्रुवायां सूत्रधृक् स्वयं ।
शृङ्गारवारीं सश्लोकां प्रयुञ्जीत प्रसन्नधीः ॥

विप्रदासः

चतुरस्रलक्षणम्

अङ्गहारोपयोगित्वादियत्ता मुनिना कृता ।
नर्तनादौ समीपादौ प्रायशस्तौ लताकरौ ।
चतुरस्रो भवेदङ्गं विशेषः प्रोच्यतेऽधुना (?) ॥

मोक्षदेवः

स्थितौ वक्षःपुरो देशे वक्षसोऽष्टाङ्गुलान्तरे ।
चतुरस्रावितिप्रोक्तौ खगाद्याकर्षणे करौ ॥

हम्मीरः

चतुरस्रा

सन्निपातैरष्टकलैश्चतुर्भिरुपशोभिता ।
चतुरस्रा द्रुतलया पादैरष्टभिरङ्किता ॥

त्रैष्टुभिः पदनिर्माणे वक्ष्ये गुरुलघुक्रमम् ।
आद्यो गुरुश्चतुर्थश्च सप्तमो दशमस्तथा ।
एकादशश्च लघवः शेषाः वर्णाः क्रमस्थिताः ॥

विप्रदासः

चतुर्थपताकम्

केशबन्धौ करौ कृत्वालिके सव्येतरं करम् ।
वामं कृत्वा मूर्ध्नि कुर्यात्पताकौ च चतुर्थके ॥

कुम्भः

चतुर्थप्लवः

पुरतः पृष्ठतश्चैव व्युत्क्रमक्रमयोगतः ।
वामदक्षिणयोर्नृत्यं चतुर्धा यत्र जायते ।
मण्डूकस्य तदा भेदश्चतुर्थः कीर्तितो बुधैः ॥

कुम्भः

चतुर्दन्त्यम्

शृङ्खलाद्यमा भवेद्गुल्मे लताजालस्वरूपिणी ।
सन्देशो वाचको रूपं चतुर्दन्त्यमिदं मतम् ॥

कुम्भः

**चतुर्दशशिरांसि**

धुतमञ्चितमाधूतमवधूतं निकुञ्चितम् ।
विधुतं कम्पितं मध्ये मुखमाकम्पितं तथा ॥
परिवाहितमुत्क्षिप्तं परावृत्तं विलोलितम् ।
प्राकृतं चेति विज्ञेयं चतुर्दशविधं शिरः ॥

विप्रदासः

**चतुर्मुखः—तालः**

चतुर्मुखो जगणतः प्लुतेन परिकीर्तितः।
।ऽ।ऽ̇

कुम्भः

**चतुर्विधमध्यनायिका**

विचित्रसुरता प्रकटस्मरयौवना क्रोधे प्रगल्भवचना मध्यमव्रीडा चेति।

शुभङ्करः

**चतुर्विधं स्मश्रु**

ततश्चतुर्विधं स्मश्रु वक्ष्ये नाट्योपकारकम् ।
शुद्धं विचित्रं श्यामं च तथा रोमशमित्यपि ॥
तत्र शुद्धं विधातव्यं पुरोघोऽमात्यलिङ्गिनाम्।
दिव्यानां च नृपाणां च तथा राजोपसेविनाम् ॥
शृङ्गारिणां कुमाराणां विचित्रं स्मश्रु कल्पयेत् ।
तपस्विदुःखितादीनां कर्तव्यं स्मश्रु रोमशम् ॥

**चतुर्विधस्वराः**

चतुर्विधत्वमेतेषां विज्ञेयं श्रुतियोगतः ।
वादी चैवाथ संवादी ह्यनुवादी विवादपि

**चतुस्कलः**

कनिष्ठाङ्गुलि निष्कामः प्रवेशश्च
कनिष्ठानामिकास्थानं ततस्ताल...
शम्याताळश्चतुर्थी तु निष्कामो पञ्चमीक...
षष्ठस्तालस्ततो ज्ञेयो निष्कामस्तर्जनीकृतः ॥
शम्याष्टमी ततस्तालो नवमी तु कला स्मृता ।
कनिष्ठिकाप्रवेशस्तु दशमी तु कला भवेत् ॥
निष्कामश्चैव तर्जन्या तदनन्तरमिष्यते ।
सन्निपातस्तथान्ते च कलाद्वादशको भवेत् ॥

एष स्वावापविक्षेपव्यवधानेन पण्डितैः ।
विधिश्चतुष्कलो ज्ञेयः प्रागुक्ताङ्गुलिभिः कृतः ॥

नाट्यशास्त्रे

**चतुष्कोणः**

कुट्टितश्चरणं पूर्वं पुरःपश्चान्निवेशितः ।
मिश्रभावात्पुनश्चापि पुरः पश्चात्तदन्यथा ।
कुट्टितश्चलितस्थाने चतुष्कोणाख्यकुट्टिता ॥

कुम्भः

**चन्द्रः—चालकः**

द्रुत्रयं लद्वयं ताले चन्द्रसंज्ञे प्रकीर्तितम् ।
० ० ० ॥

कुम्भः

**—नवग्रहहस्तः**

अर्धचन्द्रकरः सोऽयं चन्द्रार्थे संप्रयुज्यते ।

शृङ्गारशेखरः

**चन्द्रकला—तालः**

मगणं पत्रयं लघुः । ताले चन्द्रकला संज्ञे ।
ऽ ऽ ऽ ऽ̇ ऽ̇ ऽ̇ ।

कुम्भः

**—वाद्यम्**

प्रवर्द्धन्ते प्रलीयन्ते मात्राश्चन्द्रकला इव ।
तालश्चन्द्रकलासंज्ञो यदि चन्द्रकला तदा ॥
केचिच्चन्द्रकलां प्रोचुर्द्वात्रिंशन्मात्रिकं ततः ।
द्विमात्रा षोडशकला वृद्धिह्रासयुता यदि ॥
तादृशी मिश्चतुःषष्टींकलाभिर्दक्षिणे पथि ।
प्राहुश्चन्द्रकलां नाम वाद्यं वाद्यविशारदाः ॥

कुम्भः

**चन्द्रकान्तः**

अर्धचन्द्रं विधायादावथो मकरमाचरेत् ।
शुकास्यदण्डपक्षाख्यौ करौ जानुललाटयोः ।
कुर्यादेतैश्चतुर्भिः स्याच्चन्द्रकान्ताभिधः करः ॥

विप्रदासः

**चन्द्रकान्तजयन्तौ**

अर्धचन्द्रं करं कृत्वा ततो मकरमाचरेत् ।
शुकस्य दण्डपक्षौ च जानुदेशललाटयोः ॥
चतुर्भिर्हस्तकैः प्रोक्तश्चन्द्रकान्ताभिधः करः ।
वामे विधाय मकरं दक्षिणे चारुचन्द्रकं ॥

भ्रामयित्वा समं कुर्यात्पताकं दक्षपार्श्वके।
त्रिपताकं तथाऽस्पन्दे जयन्तो हस्तको भवेत्॥

कुम्भः

**चन्द्रिका—एकताली**

गुरुद्वयं भवेद्यत्र तालो ललितसंज्ञकः।
चन्द्रिका चैकताली स्यात्तेन सौभाग्यदायिनी॥

गान्धर्ववेदे

**चपलता—व्यभिचारिभावः**

रागद्वेषमात्सर्यादिजनितं चलत्वं चपलता।

शुभङ्करः

**चरणोद्भवः**

स भवति चरणोद्भवः प्रयत्ना-
न्नमनमथोन्नमनं झटित्युपेतः।
अतिचलचरणाग्रदेशभूत्वे
य इह चलाचलपार्ष्णिभागजातः॥

कुम्भः

**चर्चरीनृत्यम्**

द्विपद्या वर्णतालेन चर्चर्या वा मनोहरैः।
सलास्यैर्गतिभेदैश्च मण्डलीभूय सर्वशः॥
यत्र नार्यः प्रनृत्यन्ति प्राप्ते वासन्तिकोत्सवे।
तालिकाभिरलंकृष्टा देशभाषाविभूषिता।
तदुक्तं चर्चरीनृत्यं रसरागलयानुगम्॥

कुम्भः

**चलौ**

उष्णावुच्छ्वासनिश्वासौ सशब्दौ वक्त्रनिर्गतौ।
चलावुक्तौ तु तौ चिन्तौत्सुक्यशोकेषु कीर्तितौ॥

कुम्भः

**चल्लावणी—पाटः**

चल्लावणी तु सा यत्र मण्डली वाद्यते यदा।

कुम्भः

**चपकः**

कूर्परौ पार्श्वलग्नौ चेत्स्यातां पुष्पपुटाभिधे।
तदा स्याच्चपको हस्तः पाणिप्रान्ते नियुज्यते॥

कुम्भः

**चारी**

स्थानं स्थितिर्गतिश्चारी स्थानमाद्यन्तयोर्गतेः।
तत्रैकपाद्यनिष्पाद्या चारीशब्देन कथ्यते॥
पादद्वयेन करणं तन्नृत्तकरणात्पृथक्।
करणैस्त्र्यात्त्रिभिःखण्डो मण्डलं भाणकैस्त्रिभिः।
चतुर्भिर्वा क्रमात्ताले त्र्यश्रे च चतुरस्रके॥

**चारीभेदाः**

पुरःपश्चात्सरा चारी तथा पाश्चात्पुरस्सरा।
त्रिकोणचारी पश्चाच्च तथैकपदकुट्टिता॥
क्रमपादनिकुट्टा च पार्श्वद्वयचरी तथा।
चारी डमरुकुट्टाख्या डमरुद्वयकुट्टिता॥
पुरःक्षेपनिकुट्टा च पश्चात्क्षेपनिकुट्टिता।
पार्श्वक्षेपनिकुट्टा च चतुष्कोणाख्यकुट्टिता॥
मध्यस्थापनकुट्टा च तिरश्चीनाख्यकुट्टिता।
चारी च पृष्ठलुठिता पुरस्ताल्लुठिता तथा॥
अनुलोमविलोमा च प्रतिलोमानुलोमिका।
समपादनिकुट्टा च नखकुट्टनिका ततः॥
मध्यचक्रतला मध्यलुठिता वक्रकुट्टिता।
पञ्चविंशतिसंख्याश्च कीर्तिता ह्यर्थयोगतः॥

कुम्भः

**चारीलक्षणम्**

नृत्ते तु चारीप्राधान्यादेवं स्यादङ्गयोजना।
नाट्ये तु हस्तमुख्यत्वात्तान्येषाङ्गान्युपासते॥
अथवा चरणं चार्यश्चारं चारं बहिः क्रियेत्।
तथा हस्तोऽप्यभिनये कारंकारं व्रजेत्कटीम्॥
अर्धचन्द्रकरो नाट्ये कटीप्रान्ते कटीयते।
पक्षवञ्चितको यद्वा पक्षप्रद्योतकः करः।
कटीनिकटमध्यस्थौ हस्तौ नर्तनकर्मणि॥

वेमः

**चारीसङ्ख्यायां मतभेदः**

देशीप्रसिद्धाः सन्त्यन्याश्चतुःपञ्चाशदूचिरे।
मार्गदेशगतत्वेन षडशीतिरिमा मताः॥

हम्मीरः

**चारुश्रवणिका—पाटः**

बोल्लावणीव विज्ञेया चारुश्रवणिका बुधैः।
क्रमाद्वा युगपत्पाटैः पाणिभ्यां सूरिभिः कृतैः॥

स्याद्वृथक्क्रमतो ज्ञेया पाटोपाधिवशाद्यथा ।
शुद्धैः पाटैः कृता शुद्धा चित्रैश्चित्रा मता सताम् ॥

कुम्भः

## चार्यः

आदौ समनखा तिर्यङ्मुखा च रथचक्रिका ।
ततो नूपुरविद्धा च मराला च कुलीरिका ॥

करिहस्ता कातरा च विशिष्टा पार्ष्णिरेचिता ।
ऊरुवेणी तलोद्वृत्ता ततश्चाप्यूरुताडिता ॥

हरिणत्रासिता तिर्यक्कुञ्चिताऽप्यपकुञ्चिता ।
सञ्चारितोत्कुञ्चिता च स्फुरिता च मदालसा ॥

अर्धमण्डलिका स्तम्भक्रीडनी तलदर्शनी ।
सङ्घट्टिता परावृत्ततला लङ्घितजङ्घिका ॥

इति देशीगता भौम्यश्चार्यः षड्विंशतिर्मताः ।
विद्युद्भ्रान्ता च विक्षेपा पुरक्षेपा मृगप्लुता ॥

भ्रमरी दण्डपादा च जङ्घावर्ताङ्घ्रिताडिता ।
अवक्षेपा तथालाता जङ्घालङ्घनिका तथा ॥

रिद्धा चान्दोलिता सूची भ्रमरी चेत्यनुक्रमात् ।
आकाशिक्यः पञ्चदशश्चार्यस्तज्ज्ञैः प्रकीर्तिताः ॥

ताः सर्वा मिलिता एकचत्वारिंशदुदीरिताः ।
मार्गदेशीगताश्चार्यो मिलिताः स्युस्त्रिसप्ततिः ॥

वेमः

चारीयं च चरेर्धातोरणूयुटाङिषि जायते ।
भावे तत्साधकतमं चरणो हस्तकाञ्चितः ॥

समाचरणजङ्घोरुकटिनिष्पादिता क्रिया ।
चारीति कथ्यते तज्ज्ञैस्तद्भेदानमिदध्महे ॥

अङ्घ्रिणैकेन निष्पन्ना चारी चार्ये च कथ्यते ।
चरणद्वयनिष्पन्ना चारी करणमुच्यते ॥

एतच्च करणं नृत्तकरणेभ्यः पृथग्मतम् ।
करणत्रयनिष्पन्ना चारी खण्डमिति स्मृतम् ॥

खण्डैस्त्रिभिश्चतुर्भिर्वा चारीमण्डलमुच्यते ।
खण्डैस्त्रिभिर्भवेत्त्रासे चतुर्भिश्चतुरस्रके ॥

सेयं चारी द्विधा ज्ञेया भौमीत्याकाशकीति च ।
मार्गे षोडश भूम्यः स्युराकाशिक्योऽपि षोडश ।
देश्योऽपि द्विविधा भौम्य आकाशिक्य इति क्रमात् ॥

नित्रदासः

## चार्यङ्गविनियोगः

नृत्ये नाट्यगतौ वेषः प्रयोक्तव्यो मनीषिभिः ।
प्रधानं यो यदा यत्र हस्तपादोऽथवा भवेत् ॥

सोऽग्रे तदनुगोऽन्यः स्यात्साम्ये तु समकालता ।
यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकः ॥

चरणानुचराण्याहुरङ्गानि किलसूरयः
एवं चारी प्रधानत्वे स्यादङ्गविनियोजनम् ॥

प्राधान्ये हस्तकानां तु हस्तमङ्गान्युपासते ।
वारं वारं यथा ह्यार्यां चरणाः श्रयते महीम् ॥

कारं कारं करद्वन्द्वे चाश्राम्यति कटीतटे ।
अर्धचन्द्रः करो नाट्ये संश्रयेत कटीतटम् ।
पक्षप्रद्योतको नृत्ये पक्षवञ्चितकोऽथवा ॥

नित्रदासः

## चार्यादिव्यायामभेदाः

चारी च करणं खण्डो मण्डलं चेत्यनुक्रमात् ।
चारी भवेदेकपादनिष्पाद्या गतिसन्ततिः ॥

करणं नाम तत्प्रोक्तं या चेष्टा पादयोर्द्वयोः ।
व्यायाम एव संक्षिप्तस्स नृत्यकरणात्पृथक् ॥

खण्डस्त्रिभिः स्यात्करणैर्व्यायामो मध्यमस्त्वसौ ।
त्रिभिश्चतुर्भिर्वा खण्डैर्मण्डलं पण्डितैः स्मृतम् ॥

एष प्रोक्तस्तु विस्तीर्णव्यायाम इति कोविदैः ।
खण्डैस्त्रिभिर्यतश्चैतत्त्र्यश्रताले प्रयुज्यते ॥

चतुःखण्डं मण्डलं तु ताले स्याच्चतुरश्रके ।
अधिकैरपि वा खण्डैर्मण्डलं तद्विदो विदुः ।
तन्मण्डलं मिश्रताले प्रयोज्यं मानवेदिभिः ॥

वेमः

## चार्युपाङ्गानि

यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकम् ।
पादयोर्निर्गमो यत्र तत्रोपाङ्गानि योजयेत् ॥

चारीं विधाय चरणः श्रयते भूतलं यथा ।
तथा हस्तेप्यभिनयं विधायश्रयते कटी ॥

अर्धचन्द्राभिधो हस्तो [illegible]
परवञ्चितको नृत्ते पक्षप्रद्योतकोऽथव

मुख्यत्वेऽङ्गानि चारीणां चरणौ सम
हस्तकानां तु मुख्यत्वे हस्तमङ्गान्युपा

चरणो वाथवा हस्तो यो यदा मुख्यतां व्रजेत् ।
तं कुर्यात्पुरतस्तस्यानुगम्य तु योजयेत् ।
लक्षणानि क्रमात्तासां चारीणामभिदध्महे ॥

विप्रदासः

## चालिभेदाः

यतिरोता च गजरो व्यापकः श्रुतिभाषणः ।
पाटचालिस्तथा रुद्रभाषणाः क्रमशो मताः ॥

कुम्भः

## चालिसंभवाः

रम्यविश्रान्तिनिर्वाहस्तद्युताश्चालिसम्भवाः ।

कुम्भः

## चित्रम्

गतिस्तिर्यङ्मुखा यत्र करश्च त्रिपताककः ।
तालश्च मल्लिकामोद एतच्चित्रं प्रकीर्तितम् ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## चित्रकरणम्

स्वरैः सहस्तपाटैश्च मुरजाक्षरजैः पदैः ।
उद्ग्राहध्रुवकौ स्यातां तच्चित्रकरणं मतम् ॥

मोक्षदेवः

## चित्रतालः

चित्रेऽणुः स्यात् ।

कुम्भः

## चित्रनटलक्षणम्

प्रोक्तश्चित्रनटो नटी च रचने भाषादिवित्तस्ववित् ।
चित्तज्ञश्च चतुर्विधाभिनयविन्नाट्यागमे पारगः ॥

कुम्भः

## चित्रपदम्

आकारमपि कान्तस्य पश्यन्ती कामपीडिता ।
यत्र खिद्यति दुश्चित्ता प्रिया चित्रपदं हि तत् ॥

यथाः—

कान्तं चित्रपटे विरच्य विदधेयावत्तदालापनम्
लब्धो जीवनवासरैः कतिपयैस्त्यक्ष्यामि न त्वामिति ।
तावन्मज्जनतालवाष्पसलिलैः संभिन्नचित्राक्षरम्
क्षोदस्वेदकपाटकोटिघटितं कण्ठे विशीर्षं वचः ॥

कुम्भः

## चित्रपदलक्षणम्—लास:

यत्र प्रियाकृतिं दृष्ट्वा विनोदयति मानसम् ।
मदनानलतप्ताङ्गी तच्चित्रपदमुच्यते ॥

नृत्तरत्नावली

## चित्रपाटः

भ्रमराकुञ्चितश्चेति चित्रपाटद्वयं परम् ।
तत्र स्याद्भ्रमरो नाम घातो वलितभेदतः ।
तलेन क्रियते यत्र चित्रपाटो मनीषिभिः ॥

कुम्भः

## चित्राभिनयः

अङ्गाद्यभिनयस्यैव यो विशेषः कचित्कचित् ।
अनुक्त उच्यते चित्रः सचित्राभिनयः स्मृतः ॥

कुम्भः

## चिन्ता—व्यभिचारिभावः

अभीष्टाप्राप्तिजनितध्यानं चिन्ता ।

शुभङ्करः

## चिबुकारोपणा—कला

कृत्वा पञ्चविलासकेषु चिबुकं वक्रंच सीत्कुर्वती
हस्तांघ्रिद्वयजां च पृष्ठपदवी यानेन नीत्वा पदौ ।
आस्याग्रं पुनराकलय्य सजलं पात्रं च ताभ्यां शनैः
या मूर्ध्नि न्यसतीति यत्र निपुणं प्रोक्ता कला चैबुकी ॥

नागेन्द्रसंगीते

## चूर्णिका

गीर्वाणवाक्यरूपेण गेया वै चूर्णिकेरिता ।

भरतकल्पलतामञ्जरी

## चोक्षस्थायः

स्निग्धो रूक्षत्वरहितो ध्वनिर्यैध्वत्र दृश्यते ।
स्निग्धाः स्थायास्तु ये प्रोक्ताः चोक्षस्थाया प्रकथ्यते ॥

कुम्भः

# छ

## छण्डणलक्षणम्

कुर्यादाद्यविमुक्तिं तु येन तच्छण्डणं मतम् ।

सोमराजदेवः

## छन्दस्वती—एला

अथ छन्दस्वतीमेतां वक्ष्ये लक्षणसंयुताम् ।
पञ्च कामगणाश्चैको रतेरन्ते च मान्मथः ॥

एवं पादत्रयं यस्याः सोक्ता छन्दस्वती बुधैः।
सर्वास्वेलासु सौभाग्यशौर्यधैर्यादिवर्णनम्।
गणादेरूनताधिक्यादेलाभासा इमे मताः॥

मोक्षदेवः

## छान्दसः

छान्दसः स तु विज्ञेयो ग्रामीणजनवल्लभः।

कुम्भः

## छायाः

रागछायाः स्मृताः ये ते रागे छायान्तरं श्रिताः।
अन्यच्छायाप्रवृत्तौ हि नित्यं रागांशवेदिभिः॥

कुम्भः

गाम्भीर्यं चैव माधुर्यं घनत्वं येषु दृश्यते।
मन्द्रस्थाने स्वरस्तैते छायाः पूर्वैरुदीरिताः॥

कुम्भः

## छेवाडी भाषा

याष्टिकः पुनराचष्ट पूर्णामेतां समस्वराम्।

कुम्भः

## ज

## जक्करि

कोमलाङ्गैर्यदा नृत्यं भ्रमर्यादि विरानितम्।
सशब्दा च क्रिया यत्र ध्रुवसंपादिभेदतः।
यत्र चेष्टाविरहितं तन्नृत्यं जक्करिर्मता॥

## जगडीनृत्यम्

पुच्छपुच्छकरौपान मतौ गीतं स्वभाषया।
तुरुष्कौ नृत्यतो यत्र तन्नृत्यं जगडीति च॥

सङ्गीतनारायणे

## जङ्घालङ्घनिका

ईषदाकुञ्चितं पादमन्यपादेन लङ्घयेत्।
गगने चेत्तदा प्रोक्ता जङ्घालङ्घनिका बुधैः॥

कुम्भः

## जङ्घावर्ता

बहिर्भ्रमस्य चरणस्याङ्घ्रेरन्तर्भ्रमस्य च।
तलं क्रमाज्जानुपार्श्वे जानुपृष्ठे च निक्षिपेत्।
जङ्घावर्ता तदा प्रोक्ता चारी चानर्तचञ्चुना॥

कुम्भः

## जयः—मण्ठकः

लघुर्गुरुर्लघुर्यत्र स तालो हंसकः स्मृतः।
तालश्चायं रसे वीरे कर्तव्यो जयमण्ठकः॥
हंसकतालः । ऽ ।

गान्धर्ववेदे

## जयघण्टाभल्लरीलक्षणम्

कार्या कांस्यमयी प्रान्तछिद्रद्वयगुणान्विता।
पिण्डे त्वेकाङ्गुलवृत्ता जयघण्टाकरायता॥
कोणेन वादयेतां देङ्कारबहुलध्वनिम्।
एवैव निम्नपर्यन्ता पिण्डे न्यूना च भल्लरी॥

सोमराजदेवः

## जयन्तः

विधाय वामे मकरमर्धचन्द्रश्च दक्षिणे।
युगपद्भ्रमयित्वैतौ पताकं दक्षपार्श्वके॥
त्रिपताकं तथा स्कन्धे रचयेद्यत्र नर्तकी।
तत्रोक्तो नृत्ततत्त्वज्ञैर्जयन्तो नाम हस्तकः॥

विप्रदासः

## जयश्रीः—तालः

जयश्रीः रगणाल्लोगः।
ऽ । ऽ । ऽ

कुम्भः

## जर्जरपूजा

ततो विघ्नविनाशार्थं जर्जरं परिपूजयेत्।
पञ्चपर्वयुतो वंशो जर्जरः परिकीर्तितः॥
ऊर्ध्वपर्वणि शुक्लः स्यात् तदधो नीलवर्णकः।
ततः पीतस्ततो रक्तश्चित्रवर्णस्ततःपरम्॥
सर्ववर्णपताकाभिः सर्वतः समलङ्कृतः।
अत्र विघ्नविनाशार्थं पितामहमुखैः सुरैः॥
निर्मितस्त्वं महावीर्यो वज्रीमारो महातनुः।
शिरस्ते रक्षतु ब्रह्मा सर्वैर्देवगणैः सह॥
द्वितीयश्च हरः पर्व तृतीयञ्च जनार्दनः।
चतुर्थं च कुमारस्ते पञ्चमं पन्नगोत्तमः॥

सङ्गीतसर्वस्वम्

## जर्जरलक्षणम्

अथेदानीं जर्जरस्य लक्षणं तु मयोच्यते।
चेतक्षितौ समुत्पन्नपुष्यनक्षत्र योगतः॥

वेणुमाद्यं प्रयत्नेन जर्जरार्थं प्रयोक्तृभिः ।
षडङ्गुलं भवेदस्य मानमष्टोत्तरं शतम् ॥

पर्वाणि पञ्च चत्वारि ग्रन्थयस्तालमात्रतः ।
कीटादि ................ रव्यावर्त्तुलस्तथा ॥

गन्धमाल्योपचाराद्यैरुपास्यो जर्जरो बुधैः ।
पूर्वरङ्गे सूत्रधारधार्योऽयं विघ्नशान्तये ॥

दण्डकाष्ठं भवेत् वैल्वं कापित्थं वंशमेव वा ।
त्रिभागचक्रकीडादिसर्वदोषविवर्जितम् ।
धार्यं विदूषकेणेदं प्रयोगे नाटकाश्रये ॥

वेमः

## जर्जरश्लोकः

पुनरन्यं पठेत् श्लोकं देवतायाः प्रसादकम् ।
आनयं जर्जरं दण्डं तदुदाहरणं यथा ॥

अभिनवमृगमदतिलकः करकृतकमनीयवेणुमुखः ।
मधुरं व्रजेषु गायन्नव्यादव्याजसुन्दरः शौरिः ॥

विप्रदासः

## जर्जराख्या नान्दी

नान्दीपदार्थविस्तारश्लोका जर्जरसंज्ञकाः ।
गदित्वा जर्जरश्लोकं पठच्छुष्कापकृष्टकम् ॥

विप्रदासः

## जलक्लिन्ना

कामपि भ्रमरीं कृत्वा संहितस्थानमाश्रिता ।
करौ कृत्वालपद्माख्यावलातौ यत्र पादयोः ॥
नीत्या क्रमेणैकदा चाकम्पयेदच्युताविव ।
जलक्लिन्नावघाताख्यः पार्णि मुकलसंज्ञिकम् ॥

अशोकः

## जलशयनम्

जलशायिपदे तत्स्यादासनं जलशायनम् ।

कुम्भः

## जातयः

तास्त्वहं वर्तयिष्यामि न्यासापन्याससंयुताः ।
षाड्जी चैवार्षभी चैव धैवती सनिषादिनी ॥

षड्जोदीच्यवती चैव तथा वै षड्जकैशिकी ।
षड्जमध्या तथा चैव षड्जग्रामसमाश्रयाः ॥

अत ऊर्ध्वं प्रवक्ष्यामि मध्यमग्रामसंश्रयाः ।
गान्धारी मध्यमा चैव गान्धारोदीच्यवा तथा ॥

पञ्चमी रक्तगान्धारी तथा गान्धारपञ्चमी ।
मध्यमोदीच्यवा चैव नन्दयन्ती तथैव च ।
कार्मारवी च विज्ञेया यथान्ध्री कैशिकी तथा ॥

नाट्यशास्त्रे

खराशनः पार्श्वजश्च मूलत्राणाऽथ लाटकः ।
अवशीयधनश्चेति जातयः षडुदीरिताः ॥

सङ्गीतसूर्योदयः

चतुरस्रस्तथा त्र्यश्रः खण्डो मिश्रस्तथैव च ।
सङ्कीर्णाः पञ्च विज्ञेया जातयः क्रमशो बुधैः ॥

कुम्भः

## जातिः करुणे रसे

निषादोंऽशे तु नैषादी गान्धारे षड्जकैशिकी ।
करुणे तु रसे कार्या जातिर्गानविशारदैः ॥

नाट्यशास्त्रे

## जातिक्रमः

द्व्यङ्गे तारावली जातिः प्रोक्ता त्र्यङ्गेषु पावनी ।
दीपनी चतुरङ्गे स्यात्पञ्चाङ्गेषु प्रमोदिनी ।
षडङ्गेऽन्तरगर्भा स्यादिति जातिक्रमो गतः ॥

सोमराजदेव

## जातिः बीभत्से भयानके च

धैवती धैवतांशे तु बीभत्से सभयानके ।
ध्रुवाविधाने कर्तव्या जातिर्गाने प्रयत्नतः ॥

नाट्यशास्त्रे

## जातिलक्षणम्

स्यात्षड्जमध्यमाभ्यां निर्वृत्ता षड्जमध्यमा जातिः ।
गान्धारीषाड्जीभ्यां संयोगात्षड्जकैशिकी चापि ॥

षाड्जीगान्धारीभ्यां धैवत्या चापि या विनिष्पन्ना ।
संसर्गाद्विज्ञेया सा षड्जोदीच्यवाजातिः ॥

षाड्जी गान्धारी पञ्चमी तथा धैवती च खलु जातिः ।
गान्धारोदीच्यवतीं जातिं निर्वर्तयन्त्येताः ॥

गान्धारपञ्चमाभ्यां मध्यमया विरचिता च धैवत्या ।
जातिः सा मध्यमोदीच्यवती सद्भिः सदा ज्ञेया ॥

गान्धारीपञ्चमयोः सप्तम्याश्चैव रक्तगान्धारी ।
गान्धार्यार्षिकाभ्यां सञ्जायते जातिः ॥

योनिस्तु नन्दयन्त्यास्त्वार्षभिका पञ्चमी सगान्धारी ।
कार्मारवीं निषादी सार्षभिका पञ्चमीं कुर्युः ।
धैवत्यार्षिकाभ्यां हीनं खलु कैशिकीं कुर्युः ॥

नाट्यशास्त्रे

## जातिः - वीररौद्राद्भुतेषु रसेषु

षाड्जात्वार्षभिका चैव स्वस्वराशिपरिग्रहात्।
वीररौद्राद्भुतेष्वेते प्रयोज्ये गानयोक्तृभिः॥

नाट्यशास्त्रे

## जातिसाधारणम्

जातिसाधारणमेकांशानां विशेषाज्जातीनां तु समवायात्
प्रत्यक्षेण संज्ञा इति।

नाट्यशास्त्रे

## जातीयांशकः

गोहत्वाद्यं जमां जातिं समाश्रित्य प्रवर्तिता।
कर्णाटाद्याः सजातीयास्तेष्वेकांशोपरत्र यः।
स जातीयांशको सोऽत्र विज्ञेयो रागवेदिभिः॥

कुम्भः

## जातेर्लक्षणम्

बालेनानुगतज्ञानकृत्वष्टादशधास्थितम्।
महासामान्यमित्येता जातयः परिकीर्तिताः॥

शुद्धत्वविकृतत्वाख्यविभेदेनात्मनैव हि।
जन्यत्वं जनकत्वं च भवन्त इति सम्मतिः॥

शुद्धानां तत्र शुद्धत्वं विकृतत्वं च सम्मतम्।
अन्यासां विकृतत्वं हि तद्वै विप्रियते स्फुटम्॥

षड्जयां तु धस्य मन्द्रत्वमादृतं हि पुरातनैः।
मृदुत्वान्मोदकत्वाच्च मन्द्रो यन्मोदने मुदे॥

तारेयंत्प्लावनार्थस्य तारस्तारयति स्वरान्।
आप्लावयति तत्पूर्णे मध्यो मिश्रस्वरूपवान्॥

षाड्जधाभेदास्तेषु चाष्टौ पूर्णता परिवर्जितौ।
सामान्यलक्षणैर्हीनाः षाड्जया षाडवमेव तत्॥

षाडवौडुवभेदेनार्षभ्यादिषु च षट्स्वपि।
प्रतिस्वमष्टावधिकास्त्रयोविंशातिरिक्तः।
एवं ते विकृता भेदा वह्निबाणभुवः स्मृताः॥

कुम्भः

## जानुगतम्

जानुनी भूमिसंस्थे चेत्स्थानं जानुगतं तदा।
हासे देवार्चने दीनयाचने मृगदर्शने।
क्रुद्धप्रसादने चैतत्कुसत्त्वत्रासने तथा॥

कुम्भः

## जारुमानम्

क्रीडातालानुगं बालक्रीडासाधनचक्रवत्।
गतीनां यत्र संकोचप्रस्तारौ नेमिरीरितम्॥
समा च विषमा सूची शुक्लं स्यान्मध्यमानतः।
आदितालेनचेद्विज्ञैः जारुमानं तदोदितम्॥

आदितालः—

दक्षिणं पादमेकं चेद्दोल येच्चलितं वपुः।
लघुशेखरतालेन मुहुर्मुहुः तदुच्यते॥

## जारुमानकम्

उत्कटस्थानके स्थित्वा खण्डसूच्याख्यमाव्रजेत्।
ततो मण्डिभ्रमरिकां कृत्वा दक्षिणवामतः।
चतुर्दिक्षु गतिर्यत्र तदुक्तं जारुमानकम्॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## जामातृहस्तः

मयूरो दक्षिणे हस्ते भ्रमरो वामहस्तके।
जामातरि नियुज्येत करकर्मविशारदैः॥

भरतकल्पलतामञ्जरी

## जुगुप्सा

अहृद्यवस्तुश्रवणाद्दर्शनादपि जायते।
या चित्ते विकृतिः स्वल्पा जुगुप्सा सा निवेदिता॥

## जोडणी—पाटः

अनुलोमविलोमाभ्यां तदर्धार्धविभेदतः।
खण्डतालाश्च पाटाश्च योज्यन्ते जोडणी तु सा॥

कुम्भः

## ज्येष्ठः

द्विमात्रान्मध्यमस्यैव ज्येष्ठमित्यभिधीयते।
मध्यमस्य विधानेन न्यासाश्च द्विगुणाः कलाः।
सन्निपातैर्निपातैश्च तेषां वस्तु प्रकीर्तितम्॥

नाट्यशास्त्रे

# झ

## झडप्पणी—पाटः

सा स्यात् झडप्पणी यस्यामादौ मध्येऽवसानके।
वाद्यन्ते सर्ववाद्यानि नानावाद्यैरनेकधा॥

कुम्भः

झम्पकः—तालः

द्विगुद्वादशवर्णाङ्किस्तालो वै झंपको भवेत्।

वीरशृङ्गाररसयोर्जपकृज्जपमङ्गलः।

द्रुतद्वयं विरामान्तर्लघुनैकेन झम्पकः॥

गान्धर्ववेदे

झम्पातालः

द्रुतद्वयं विरामान्तं लघुनैकेन संयुतम्।

झम्पातालो भवेत्तेन गेयः शान्तो बुधोत्तमैः॥

गान्धर्ववेदे

झम्पानृत्तम्

झम्पाताले गीयमाने मध्यमानेन नर्तकः।

यदि नृत्येत्समं देवं दूरपादप्रसारणम्॥

लसत्कलसैर्लास्यांगै यो नटः पाणिमिस्तदा।

झम्पातालादिनृत्तं स्यात्कलसैरन्तरान्वितम्॥

झल्लरी

अष्टादशाङ्गुलो यस्याः परिधिः द्वादशाङ्गुला।

दैर्घ्ये सा झल्लरी पञ्चविंशत्या निर्मिता पलैः॥

कण्ठसूत्रद्वयोपेतसुषिरद्वयसंयुता।

चरणानद्धवदना सुसमा यमदैवता।

वाद्या दक्षिणहस्तेन धृत्वा वामेन पाणिना॥

कुम्भः

झंकृतिः—तालः

लपाभ्यां झंकृतिः प्रोक्ता।

। ऽ

कुम्भः

झंपा—तालः

लघुरेकोऽनुद्रुतं च द्रुतमेकं च यत्र वै।

चतुरश्रस्सप्तमात्रा झंपातालस उच्यते॥

भरतकल्पलतामञ्जरी

ट

टम्मकी

चर्मणाकृतदण्डेन वाद्यते वैरिभीषणम्।

एवं विधा च या लघ्वी टम्मकी सा प्रकीर्तिता॥

सोमेश्वरः

टाकणी—वाद्यः

कर्तव्या टाकणी वादौ तयोर्भेदद्वयं मतम्।

जौडा चैकसरा चेति तयोर्लक्षणमुच्यते॥

टाकिण्येकसरा चेति तथैकसरटाकिणी।

जौडैकसरजोडा च तथैकसंरजोडकः॥

जोडावाद इमे भेदाः पृथक् च द्वयगोचराः।

तत्र सा टाकणी ज्ञेया यत्तालेषु कलादिके।

भ्रमरस्य वहनीं कृत्वाभीष्टताललयानुगः॥

कुम्भः

ड

डक्का

द्वादशाङ्गुलदैर्घ्या च मनाङ्मध्ये कृशा च या।

अर्धाङ्गुलमिता पिण्डे स्यातामष्टाङ्गुले मुखे॥

वदने प्रतिविस्तारशङ्कवस्ताम्रनिर्मिताः।

तन्त्रीभ्यां द्वावधःशङ्कूद्वावूर्ध्वं यन्त्रणाय च॥

तन्त्र्यो न्यस्येत्तथा पुष्टये तृणनिर्मिताम्।

शेषमत्र हुडुक्कावत् पाटवर्णादिकं मतम्॥

कोणोऽस्या वादने प्रोक्ते द्वादशाङ्गुलदैर्घ्यभाक्।

अस्याः करेण कोप्पेन केचिदूचुः प्रवादनम्॥

झंकृतिः करघातेन जायते कुडुपेन तु।

घटस्तडोडगिश्चेति मुख्याः प्रोक्ताः पुरव तु॥

निगो कखरटाश्चेति देवता विन्ध्यवासिनी।

त्रिधा सा भिद्यते तत्रोत्तमाद्यं भेदमाश्रिता॥

उत्तमा तूक्तमानेनाङ्गुलोना मध्यमा स्मृता।

अङ्गुलद्वितयेनोना डक्का प्रोक्ता कनीयसी॥

कुम्भः

डक्कुलीलक्षणम्

कांस्येन दन्तिदन्तेन गोविषाणेन वा भवेत्।

डक्कुली दैर्घ्यमानेन मिता पञ्चमिरङ्गुलैः॥

भवेतां वदने तस्याः सम्मिते चतुरङ्गुलैः।

मेषायाप्युद्धलीमध्ये स्वल्पवक्त्रसमन्विते॥

कांस्यजे लोहजे वाथ ताम्रजे वाथ ते पृथक्।

पञ्चरन्ध्रे तथोद्धल्या छिद्रविन्यस्तदोरकैः॥

निबध्यते दृढं सूत्रैस्तथा......।

नातिश्लथं नातिगाढं मध्यसूत्रे स्वनामिकम्॥

विन्यस्य मध्यतर्जन्यौ निवृत्ते वक्त्रसंयुते।
अन्यस्मिन् वदनेऽङ्गुष्ठं विन्यस्य मदनान्वितम्॥
निधायाङ्गनिकामेकां डक्कुलीं वादयेद्बुधः।
धुं धुं धुं धुपाटवर्णसंयुतां मर्दलोदितैः।
पाटवर्णैर्युतामेतां वाद्यमित्यपरे जगुः॥

कुम्भः

## डमरुः

वितस्तिद्वितयायामो वितस्तित्रितयं तथा।
सत्र्यङ्गुलं तु परिधौ वल्लीवलयसंयुते॥
द्वादशाङ्गुलके वक्त्रे प्रत्येकं कवलद्वये।
निबद्ध...............मण्डलीयुतमेव च॥
दधानः क्षाममध्यश्च निबद्धस्तत्र दोरकैः।
दधानो वादनस्यार्थं मञ्जुलं गोलकद्वयम्॥
अञ्जनीप्रान्तसंबद्धसिक्थकेन विनिर्मितम्।
मध्ये विधृत्य हस्ताभ्यां वाद्यो डबडबाक्षरैः।
वर्णैः कखरटैर्वाथ डमरुर्वाद्यते जनैः॥

कुम्भः

## डमरुः

द्वादशाङ्गुलका दैर्घ्येमुख्येस्याष्टांगुले मते।
मण्डलीयुगलोपेते नद्धव्ये श्लक्ष्णचर्मणा।
मध्ये तु गाढतां नीतैः सुदृढैः सूत्रदोरकैः।
मध्ये स्याद्दोरकद्वन्द्वं दृढवादनहेतवे॥
स्यातां तत्प्रान्तसंलग्नौ सम्यङ्मदनगोलकौ।
धृत्वा डमरुकं मध्ये हस्ताभ्यां वादयेद् बुधः।
पाटवर्णौ डुबौमुख्यौ जगुः कखरटान्परे॥

मोक्षदेवः

## डमरुकुट्टिता

वाद्यश्चेत्कटितः पूर्वं लुठितोऽङ्गुलिपृष्ठतः।
पश्चान्निकुट्टितस्थाने तदा डमरुकुट्टिता॥

## डमरुद्वयकुट्टिता

पादयुग्मकृता सैव डमरुद्वयकुट्टिता।

## डालम्

गुल्फं बध्वा तदोत्प्लुत्य चरणं पक्षिपक्षवत्।
भ्रमित्वान्निपतेद्भूमौ तदा डालमितीरितम्॥

## डिमः—रूपकम्

गन्धर्वामरदैत्त्यराक्षसगणप्रेताहियदाद्यो (?)
नेतारः कपटेन्द्रजालसमरक्रोधान्विताः शोभनाः।
हास्यो यत्र न कैशिकी न च भवेच्छृङ्गारमङ्गो रसो
ज्ञातव्यश्चतुरङ्क एव सुबुधैर्य........ मर्थो डिमः॥

शुभङ्करः

## डेङ्की

पादौ समौ यदान्यस्मिन् पार्श्वे स्वपरपार्श्वतः।
उत्प्लुत्य पातयेच्चित्रं तदा डेंकीति कथ्यते॥

## डोम्बिकादिकाव्यानि

यो कोहलमतज्ञाद्यैः कृतो मार्गावलम्बनः।
तन्मतस्यानुसाराच्च तथा लोकानुसारतः॥
आचार्यैरपरंर्व्याचोत् प्रेक्षवद्भिर्विचक्षणैः।
प्रपञ्चिता च बहुधा सा देशीति निगद्यते॥
अथ देशीनृत्यकाव्यप्रभेदा डोम्बिकादयः।
कथ्यन्ते डोम्बिका भाणः प्रस्थानं षिद्गकोऽपि च॥
भाणिका प्रेरणं चाथ रामक्रीडं तथैव च।
रागकाव्यं च हल्लीशः रसकं चेत्यमी दश।
कोहलोनोक्तमेवात्र तेषां लक्षणमुच्यते॥

वेमः

## डोल्लकताललक्षणम्

प्रतिमट्ठः स्मृतः प्राज्ञैः भगणः सगणोऽथवा।
तालविद्भिरसौ कैश्चित्कथ्यते डोल्लकाभिधः॥

सोमराजदेवः

ढ

## ढेङ्कीभेदाः

ढेङ्की चतुर्विधा मुक्तावली स्याद्वृत्तबन्धिनी।
युग्मिनी वृत्तमाला च तासां लक्ष्मामिदध्महे॥

मोक्षदेवः

## ढेंकीलक्षणम्

मेलापको झतालो वा ढेङ्कीतालेन वा युतः।
अन्यो लयस्तथा तालो ध्रुाभवकोगयोरिह (?)॥
सानुप्रासे प्रगीयेते द्वे दण्डे समधातुनी।
तृतीयमुद्ग्राहकं यः स्यादाभोगस्तु सकृत्ततः॥

ध्रुवं गीत्वा पुनर्न्यासो ढेङ्किकायां सदा भवेत्।
उद्ग्राहश्चैव मेलापो ढेङ्कीतालो भवेद्यतः।
तस्मादस्य प्रबन्धस्य नाम ढेङ्कीति कीर्तितम्॥

मोक्षदेवः

## त

### ततभेदाः

आलावणी ब्रह्मवीणा किन्नरी लघुकिन्नरी।
विपञ्ची वल्लकी ज्येष्ठा चित्रा घोषवती जया॥

हस्तिका कुब्जिका कूर्मा सारङ्गा परिवादिनी।
त्रिसरी गतचन्द्रा च नकुली चाचचम्सरी (?)॥

औदुम्बरी पिनाकी च निबद्धः पुष्कलस्तथा।
गदा रावणहस्तश्च रुद्रोऽथ स्वरमण्डलः।
कपिलासो मधुस्यन्दी घोणेत्यादिततं भवेत्॥

सङ्गीतनारायणे

### तम्बरी

निःस्वानवत्तम्बरीस्यात् ततोल्पो गात्रवादयोः।
वाद्यते सद्वितीयोऽसौ दमामेति निगद्यते॥

कुम्भः

### तन्नाकारः

पञ्चन्यर्थे स्वरैर्युक्तं तन्नाकारं समुद्भवेत्।

भरतकल्पलतामञ्जरी

### तरङ्गितः

चलाचला उल्ललन्ति स्वरा यत्र तरङ्गवत्।
तरङ्गितः स विज्ञेयः............... ॥

कुम्भः

### तलम्

वामेन पीडनं कृत्वा दक्षिणेनाहतिस्तलम्।

नाट्यशास्त्रे

### तलम्

पश्चात् क्षिप्यमुरः क्षेत्राद्यत्र स्यातां लताकरौ।
तिर्यक्कुञ्चितयोपेतं तत्तलमिति कीर्तितम्॥

सङ्गीतमुक्तावली देवेन्द्रकृता

### तलदर्शनी

स्वस्तिकौ चरणौ यत्र संहतस्थानकौ स्थितौ।
तिर्यक् पृथग्गतौ बाह्यपार्श्वाभ्यां भूतलं यदा।
स्पृशतस्तत्र सा प्रोक्ता चारिकातलदर्शनी॥

कुम्भः

### तलदर्शिनी

स्थित्वा चैकाङ्घ्रिणा चान्यं दण्डवच्च प्रसारयेत्।
यदा भ्रमति सा तस्माद्विज्ञेया तलदर्शिनी॥

कुम्भः

### तलप्रहारः—पाटः

तलप्रहारः पाटः स्यात् वामस्कन्धस्य चालनात्।
वामेन पाणिना वामपुटमध्यनिपीडनात्॥

यथा—देथों हें दिगितकि तकिटकि जों धिथरिधि थरित।

कुम्भः

### तलपुष्पपुटलक्षणम्

प्रायशो नर्तनारम्भे समपादौ लताकरौ।
चतुरस्रं भवेदङ्गं विशेषस्त्वयमुच्यते॥

चार्याध्याधिकया पादैः विनिष्क्रामति दक्षिणे।
व्यावर्तनात्करयुगे दक्षिणं पार्श्वमागते॥

परिवर्तनतो वामपार्श्वे सन्नतमाश्रिते।
तत्कुचक्षेत्रसंविष्टो यस्य पुष्पपुटः करः।
तलपुष्पपुटं तत्स्यादग्रे तु तलसञ्चरे॥

यद्यनन्तरमेतत्स्यात्करणं करणान्तरात्।
तदा करक्रिया तत्र त्याज्या ग्राह्या करानुगा।
एतत्पुष्पाञ्जलिक्षेपे लज्जायां च नियुज्यते॥

हम्मीरः

### तलपाटाः

उत्फुल्लः खलकश्चैव पाण्यन्तरनिकुट्टकः।
दण्डहस्तः पिण्डहस्तो योगहस्तोऽर्धहस्तकः॥

स्थूलहस्तोऽर्धार्धपाणिः पार्श्वपाण्यर्धपाणिकौ।
कर्तरीसमकर्तर्यौ तथा विषमकर्तरी॥

समपाणिश्च विषमपाणिः स्यात्पाणिहस्तकः।
नागबन्धावघटकौ स्वस्तिकश्च समग्रहः।
इत्येकविंशतिर्हस्तपाटाः स्युर्मुरजादिषु॥

कुम्भः

### तलमुखयोर्लक्षणम्

भूत्वा वृत्तौ स्थितौ त्र्यस्तौ हंसपक्षौ स्वपार्श्वयोः।
जातौ मिथःसंमुखस्थतलौ तलमुखौ मतौ॥

हम्मीरः

## ताण्डवम्

मृदङ्गहारकरणे चारी चरणकोमलः ।
ताण्डवं तद्भवेद्यत्तु प्राधान्येन प्रवर्तितम् ॥
करणैरङ्गहारैश्च प्रयोगैरुद्धतैरिह ।
तण्डुना निर्मिते नृत्ये प्राहुर्भेदत्रयं परे ॥
विषमं विकटं लध्वित्यत्र तद्विषमं मतम् ।
यदभ्यासवशाद्रज्जुभ्रमणादि प्रदृश्यते ॥
विरूपवेषावयवव्याहारं विकटं (विषमं) मतम् ।
करणैरश्चितैर्यस्य प्रयुक्तं तद्भवेल्लघु ।
सङ्कीर्णं तद्भवेन्नृत्यं यदेतत्त्रयसङ्करात् ॥

कुम्भः

वर्धमानासारिताद्यैः गीतैस्तत्र ध्रुवायुतम् ।
करणैरङ्गहारैश्च प्राधान्येन प्रकीर्तितम् ।
तण्डूक्तमुद्धतप्रायं प्रयोगं ताण्डवं विदुः ॥

सङ्गीतनारायणे

## ताण्डिका

विचित्रवाद्यसंपन्नं दीर्घं कलशखण्डकम् ।
अन्तस्तदाहुर्मुनयो...रुद्रभाषणम् ॥
तमेव ताण्डिकां सर्वे तत्रश्रृङ्गारकं जगुः ।
श्रोतोवह्वा यतिश्चात्र तालस्तु प्रेप्सितो मतः ॥

कुम्भः

## तामक्लसम्

एकवक्त्रं तामक्लृप्तं अधोह्रस्वं मुखे बृहत् ।
खरचर्मनिबद्धास्यं वध्रीबद्धं समानतः ॥

सोमेश्वरः

## तारः

यस्य कण्ठे स्वरोऽधः स्यात्स तु तारः प्रकीर्तितः ।

नाट्यशास्त्रे

—प्रतिमण्ठकः

विरामान्तं द्रुतद्वन्द्वं गुरुश्चैकस्ततःपरम् ।
सुरङ्गतालो गीतव्यस्तारश्च प्रतिमण्ठकः ॥
सुरङ्गतालः । ० ० S

गान्धर्ववेदे

## तारलक्षणम्

भवेच्चतुः स्वरारोहो मध्यसप्तप्रवर्तिनः ।
अंशकाः सह लुप्तैश्च तारेऽसौ परमावधिः ॥
कामचारमिदं प्राहुरून्नतायां विपश्चितः ।
आषड्जं नन्दयन्त्यास्यात्तारो नातःपरं व्रजेत् ॥
पञ्चस्वरान् समारोहेदंशादूर्ध्वं च यन्मते ।
विरोधस्तन्मते षड्जयां तारषड्जस्य दर्शनात् ॥

अत्रोदाहरणम्

धा धा धनि सनि धपा सा सा सा ।

मोक्षदेवः

## ताराविधिः (?)

यस्मिन् ग्रामे यः स्वरोंऽशः षड्जो वा मध्यमोऽथवा ।
तस्मात्स्वराणां चतुरः क्रमादारोहयेत्तदा ॥
ताराविधिरिति प्रोक्ता सुखदैर्हितकोविदैः ।
विशेषं ब्रूमहे तत्र मध्यमग्रामवेशने ॥
कृत्वांशं मध्यमस्थाने ताल (तारे) च भावयेत् ।
मध्यमस्वरमारभ्य निषादान्तं चतुःस्वरान् ॥
क्रमादारोहयेत्तस्य निषादःपरमो विधिः ।
स्थानाभावात्स्वराभावादप्रयोगो नान्यतःपरम् ॥
षड्जग्रामे तदाकारा षड्जमंशं विधाय तान् ।
स्वरान् चतुर आरोहेत् षड्जं त्यक्त्वा स्वरस्थितान् ॥
पञ्चमान्तान् स एवात्र ताराविधिरितीरितः ।
आधारषड्जग्रामेऽथ निश्शेषौ तावरक्तिकौ ॥
यदारोहणसंख्यायां वर्ज्यो भवति यः स्वरः ।
स गण्यस्तेषु सर्वत्र रूपेषु चतसृष्वलम् ॥

सङ्गीतसूर्योदयः

## तालः

तालः काल इति ज्ञेयः स कालश्शम्भुरुच्यते ।
शम्भोरुत्पद्यते नादो नादादुत्पद्यते मनः ।
मनसो जायते कालः सकालस्तालसंज्ञिकः ॥

भरतकल्पलतामञ्जरी

तालशब्दस्य निष्पत्तिः प्रतिष्ठार्थेन धातुना ।
गीतं वाद्यं च नृत्यं च भाति ताले प्रतिष्ठितम् ॥
संयोगे च वियोगे च वर्तते च तयोर्द्वयोः ।
स्थापितोऽपि दशप्राणैः स कालस्तालसंज्ञिकः ॥

सङ्गीतमकरन्दे

पञ्चलध्वक्षरोच्चारकालो मात्रा तु तालगा ।
कालश्च सप्तधा पातः तत्र चावापनिष्क्रमौ ॥

विक्षेपश्च प्रवेशः स्यात्तालः स्यात्सन्निपातयुक् ।
लयश्च त्रिविधो ज्ञेयो द्रुतो मध्यो विलम्बितः ॥

सोमराजदेवः

त्र्यश्रश्च चतुरश्रश्च स तालो द्विविधः स्मृतः ।
द्विविधस्यापि तालस्य त्वेका प्रकृतिरिष्यते ॥

नाट्यशास्त्रे

काश्मीरादिसमुद्भूतं तालमाहुर्मनीषिणः ।
सुनादं दक्षिणं तालं ततो हीनं च वामकम् ॥

शुभङ्करः

## तालम्

त्रयोदशयवव्यामवक्त्रपिण्डं यवान्वितम् ।
यवपञ्चकपल्लीरं मध्ये च यवसप्तकम् ॥

विस्तृतं वर्तुलं निम्नं यवत्रयमितं ततः ।
पृष्ठतो मध्यदेशश्च शिवलिङ्गं समावृतम् ॥

मध्ये गुञ्जासमच्छिद्रं पट्टसूत्रादिगुम्भितम् ।
अयत्नपैष्टिकस्निग्धशुद्धकांस्यविनिर्मितम् ।
तत्स्मरादिसमुद्भूतं तालमाहुर्मनीषिणः ॥

सङ्गीतनारायणे

## तालः

लयो लयास्तु विज्ञेया द्रुतमध्यविलम्बिताः ।
यस्तत्र तु लयो मध्यस्तत्प्रमाणा कला भवेत् ।
कलाकालप्रमाणेन ताल इत्यभिसंज्ञितः ॥

नाट्यशास्त्रे

## तालकूटम्

एकतालयुते चान्ये तालकूटं तदाभिधम् ।
चक्रबन्धाभिधं चैवार्जुनबाणाभिधं तथा ॥

हारबन्धाभिधं तद्वत् ज्ञातव्यमिति भेदतः ।
तालकूटाभिधं चैव देवेन्द्रो बहुधाभ्यधात् ॥

तत्रैकतालसंयुक्तं यत्र तद्बहुतालकम् ।
लदौ लादौलंयुर्धास्युस्त्रयो लोष्टकतालकम् (?)॥

यथा—।०।००।०००।एवंविधताले पञ्चवारं सप्तवारं नववारं एकादशवारं वा समाहृत्य गतयो यत्र बध्यन्ते तदेकतालयुततालरूपम् ।

सङ्गीतमुक्तावली देवेन्द्रकृता

## तालपाटलक्षणम्

पाटश्च मलपश्चैव वाद्यते यत्र मिश्रितौ ।
तमाहुस्तालपाटं तु नन्दिकेश्वरसूत्रितम् ॥

सोमराजदेवः

## तालप्रकरणं घनताललक्षणम्

कलापातलयैर्युक्तस्तालो घन इति स्मृतः ।
स च ... क्रियामानं ज्ञातव्यश्च चतुर्विधा ॥

सोमराजदेवः

## तालप्राणाः

कालमार्गक्रियाङ्गानि ग्रहजातिकलालयाः ।
यतिप्रस्तारकं चैव तालप्राणा दश स्मृताः ॥

सङ्गीतमकरन्दे

## तालभेदाः

ध्रुवो मठ्यो रूपकश्च झंपा त्रिपुट एव च ।
अटतालश्चैकतालः सप्ततालाः प्रकीर्तिताः ॥

भरतकल्पलतामञ्जरी

## तालभेदाः तेषां लक्षणानि

बद्धस्तथा गदैर्हीन यतिश्चलिर्वटिर्भवेत् ।
वाद्यगीतप्रबन्धादौ कचित्स्वङ्गतया यदा ॥

तद्विदो वादयन्त्यैनां वदन् पुटवणं तदा ।
परेऽपि रुद्रं प्राहुरन्त्येर्धोंकारभूषितम् (?) ॥

तस्मिन् प्रौढत्वमापन्ने कैमुरुः कथ्यते जनैः ।
यदापिलुनुरुनाल्पो न प्रौढोऽपि कलासकः (?) ॥

प्रबन्धे बहवो भेदा विहिताः स्वच्छया परे ।
तत्तत्तालाभिधाः सर्वे बुधैरप्यूहतां धिया ॥

कुम्भः

## ताललक्षणम्

अर्धमात्रं तथा व्योम व्यञ्जनं बिंदुकं द्रुते ।
लघुनि व्यापकं ह्रस्वं मात्रिकं सरलं तथा ॥

द्विमात्रं च कला वक्रं दीर्घं गुरुणि कीर्तितम् ।
प्लुते अङ्गं त्रिमात्रं च दीप्तं सोमोद्भवे तथा ॥

द्रुते बिन्दुविरामान्तैरुक्तो मात्रायुता लिपिः ।
प्लुते मात्रायुते वक्रो लिपौ श्रीहम्मीरसम्मतम् ।
तालानां लक्षणं वक्ष्ये तेषां सूरिमताश्रितम् ॥

हम्मीरः

## तालवाद्यलक्षणम्

तालयुग्मं तु कांस्यस्य कुर्यादन्योन्यसन्निभम् ।
वर्तुलमङ्गुलमुखं मध्ये निम्नं च कीर्तितम् ॥

अङ्गुलद्वयविस्तीर्णं तलेव्यङ्गुलमात्रकम् ।
गुञ्जाप्रमाणविवरं पिण्डिकायां यवप्रभम् ॥

पटवस्त्राञ्चला त्रीणि रन्ध्रे प्रक्षिप्य तत्र च ।
न निर्यान्ति यथा रन्ध्राद्ग्रन्थिं दद्यात्तथाग्रतः ॥

गुरुलघ्वादिभिर्मानैस्तालश्चच्चपुटादयः ।
साध्यन्ते मार्गदेशीयास्तालयुग्मेन सर्वतः ॥ सोमराजदेवः

## तालवृन्ताख्ययोर्लक्षणम्

चतुरस्रीकृत्य पाणीकुतपोर्हंसपक्षयोः ।
उत्तानोर्ध्वं व्रजत्येको वक्षोऽन्यो यात्यधोमुखः ॥

यदा स्यातां तदा वृत्तौ तालवृन्तनिरूपणे ।
तावेव तालवृन्ताख्यावावदन्नृत्तकोविदाः ॥

हम्मीरः

## तालाः

आदितालो द्वितीयश्च तृतीयः प्रतिमण्ठकः ।
मण्ठरूपकझम्पाश्च ध्रुवोऽड्डुस्त्वेकतालिका ॥

चेक्कोऽमातिलकौ कामो विष्णुर्ब्रह्मशिवा जयः ।
चित्रनारायणौ लक्ष्मी गुरुर्गौरी कलध्वनिः ॥

शलुशल्यामिधो रङ्गःश्रीकण्ठः कनकप्रभः ।
अभङ्गो जयमाला च वसन्तो राघवो रतिः ।
सर्वेऽपि मिलितास्तालाः सप्तत्रिंशन्मयेरिताः ॥

कुम्भः

## तालाङ्गानि

विरामं च द्रुतं चैव लघुर्गुरुप्लुते तथा ।
काकपादं तथा प्रोक्तं तालाङ्गमिति षड्विधम् ॥

भरतकल्पलतामञ्जरी

अनुद्रुतो द्रुतश्चैव लघुर्गुरुस्ततःपरम् ।
प्लुतश्चेति क्रमेणैव तालाङ्गानि च पञ्चधा ॥

द्रुतस्य देवता शम्भुः लघोश्चाद्रिपतेःसुता ।
गौरी च श्रीश्चापि गुरोः प्लुते ब्रह्मादयस्त्रयः ॥

सङ्गीतमकरन्दे

## तिरश्चीनकुट्टा

कुट्टितश्चरणं पूर्वं स्वपार्श्वेऽप्यन्यपार्श्वके ।
निक्षिप्तश्चापि मध्ये च तत्रापि च निकुट्टितः ।
सा तिरश्चीनकुट्टाख्या प्रोक्ता साधप्रचारिका ॥ कुम्भः

## तिरिपभ्रमरी

तिरिपभ्रमरी सैव भ्रमाङ्घ्रिस्वस्तिकात्परे ।

सङ्गीतमुक्तावली देवेन्द्रकृता

## तिरिपभ्रमरीलक्षणम्

कृत्वा स्वस्तिकमंघ्रिभ्यां तिर्यग् भ्रमणमाचरेत् ।
सप्रयोगौ यदा हस्तौ तिरिपभ्रमरी तदा ॥

हम्मीरः

## तिरिपादिलक्षणम् (?)

वहाक्षराडंजरजघुलम्बित तरङ्गितः ।
वहाक्षराडंजरजत्रोटितोल्लासितो तथा ॥

अविलम्बविलम्बोत्प्रविष्टा निस्सारणः परः ।
घुलम्बितावस्खलन्तत्रोटितोल्लासितस्तथा ॥

दीर्घकम्पितसूक्ष्मान्तस्थायकश्च तथापरः ।
त्रोटितः संप्रविष्टोत्प्रविष्टनिस्सारणाह्वयः ॥

प्रतिगृहीतोल्लासितश्च संप्रविष्टघुलम्बितः ।
त्रिभिन्नलीनस्फुरिताविलम्बकविलम्बकः ॥

ढालशब्दोत्थयन्त्रोत्थवाद्यशब्दभवः परः ।
त्रिभिन्नतिरिपस्फुरितवाद्यशब्दरुहःपरः ॥

चतुर्योगभवा एते मिश्रभेदा दशोदिताः ।
त्रिभिन्नलीनस्फुरितप्लावितोल्लासिताह्वयः ।
ढालच्छाया यन्त्रवाद्यशब्दः स्फुरितसंज्ञकः ॥

तीक्ष्णप्रेरितसूक्ष्मान्तत्रिभिन्नस्वरलङ्घितः ।
त्रिभिन्नलीनस्फुरितकम्पिताहतसंज्ञकः ॥

प्रतिगृहीतोल्लासितभ्रमिताहतहुम्फितः ।
पञ्चयोगभवाः पञ्चमिश्रभेदाः प्रकीर्तिताः ॥

तिरिपान्दोलितत्रिभिलकुरुलाहतः ।
तीक्ष्णप्रेरितसूक्ष्मान्तहस्वदीर्घप्लुताह्वयः ॥

यन्त्रछायावाद्यशब्दतीक्ष्णप्रेरितहुम्फितः ।
ढालना… यन्त्रोत्थस्थिराकुञ्चितहुम्फितः ॥

दीर्घकम्पितसूक्ष्माग्रप्रमितस्थायकाहतः ।
तिरिपान्दोलितक्षिप्तकुरुलाहतहुम्फितः ॥

… … …

कुम्भः

## तिरूरूपम् (?)

विचित्रभ्रमरी युक्तं तालः स्यात् पुण्ड्रनामकः ।
चतुरश्रादिहस्ताभ्यां तिरूरूपमुदीरितम् ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## तिर्यक्करणम्

तिरश्चैकेन पादेन समुत्प्लुत्य निपात्यचेत् ।
एकपादेन पृथ्वीं चेत्तिष्ठेत्तिर्यक्कृतिः सदा ॥

कुम्भः

## तिर्यक्कुञ्चिता

तिर्यञ्चं पादमाकुञ्च्य यत्र तं प्रक्षिपेन्मुहुः ।
सा तिर्यक्कुञ्चिता चारी गदिता नृत्यकोविदैः ॥

कुम्भः

—चारी

यत्राकुञ्च्य तिरश्चीनं चरणं प्रक्षिपेन्मुहुः ।
तां तिर्यक्कुञ्चितां चारीं प्राहुस्संगीतकोविदाः ॥

देवेन्द्रः

## तिर्यक्कृते

घूर्णयन्ती करौ स्वीयौ पादयोः कुञ्चिताग्रयोः ।
न्यञ्चं तिर्यग्गयोः कुर्यान्मुहुस्तिर्यक्कृते मते ॥

कुम्भः

## तिर्यगञ्चितम्

समपादात्परं तिर्यगुत्प्लुते तिर्यगञ्चितम् ।

कुम्भः

## तिर्यग्गतस्वस्तिकाग्रम्

प्रसृतौ पार्श्वयोः पूर्वं हस्तकौ तदनन्तरम् ।
मिथोभिमुखतां प्राप्य जातस्वस्तिकबन्धनौ (?) ॥
पुरताधावतो यस्मिन् सविलासं यदा तदा ।
तिर्यग्गतस्वस्तिकाग्रं ततसमन्तुरभाषत ॥

## तिर्यक्ताण्डवम्

पूर्वमूर्ध्वं विधायैकं तिर्यग् नाभिप्रदेशगम् ।
अपरं करमारभ्य तिर्यक्पार्श्वान्तरं गतम् ।
यायते (?) यं क्रिया तत्स्यात्तिर्यक्ताण्डवचालयम् ॥

## तिर्यङ्मण्डलिका

तिर्यक् स्यात्फालनेनैव भ्रमणत्वं च हस्तयोः ।
तिर्यङ्मण्डलिका नाम द्वितीयेऽयं प्रकीर्तिता ॥

कुम्भः

## तिर्यङ्मुखा

वर्धमानं समास्थाय पादौ चेद्द्रुतमानतः ।
सव्यापसव्यं सरतस्तदा तिर्यङ्मुखा भवेत् ॥

कुम्भः

## तिर्यङ्मुखौ—पादौ

वर्धमाने स्थितौ स्थाने वामदक्षिणयोर्यदा ।
सरतौ द्रुतमानेन पादौ तिर्यङ्मुखौ तदा ॥

देवेन्द्रः

## तिर्यक्स्वस्तिकम्

तिर्यक्स्वस्तिकमुत्प्लुत्य स्यात्तिर्यक्स्वस्तिके कृते ।

कुम्भः

## तिलकः—हस्तः

त्रिपताकाह्वयौ हस्तौ ललाटे हृदयेऽपि च ।
अन्योन्याभिमुखं श्लिष्टौ तिलकाख्य इतीरितः ॥

भरतकल्पलतामञ्जरी

## तुङ्गनम्रम्

संहतस्थस्य वपुषः तालमानक्रमेण हि ।
तुङ्गत्वं नम्रता देहे तुङ्गनम्रं तदा भवेत् ॥

देवेन्द्रः

## तुङ्गसूतम्

मुखुके वाद्यमानेतु यत्र नृत्ते धृतांचलम् ।
रङ्गं प्रविश्य तदनु नान्दीमभिनयेत्ततः ॥
नृत्येच्छन्देन लास्यांगयुक्तेन तदनन्तरम् ।
आलापेन लसत्तुङ्गसूतलास्याङ्गसुन्दरम् ॥
विचित्रकरणं साक्षाद्रागं मूर्तमिवाङ्गकैः ।
दर्शयन् विविधं नृत्यं लास्यलीलामनोहरम् ॥
ततः पिल्लमुरून्नृत्यं मध्येमध्ये यथोचितम् ।
सूळूभिर्हावभावाद्यं लयतालानुसंगतम् ।
कोमलांगैरन्वितं च नर्तनं तनुयात्ततः ॥

## तुरगलीलः—तालः

द्रुतद्वयं विरामान्ते ताले तुरगलीलके ।
विजयो गीयते तेन गीतनृत्यविशारदैः ॥

गान्धर्ववेदे

## तुरुपुः—नाट्याङ्गम्

तत्ताधित्तादिपूर्वंतु दं दं दिं धाधिमध्यमे ।
एवं पाठाक्षरं यत्र स नाम्ना तुरुपुर्भवेत् ॥

भरतकल्पलतामञ्जरी

### तुरीययौवनलक्षणम्

यौवनं तुर्यमप्यस्ति मदोत्साहं मनोभवम् ।
म्लानाधरस्तनाभोगकपालजघनं च तत् ॥

हम्मीरः

### तुल्लम्

सपादेनादितालेन धृत्वा सव्यापसव्ययोः ।
स्वस्तिकीकृत्य जंघेचेद् भ्राम्येतां कर्तरीं जगुः ॥

राजतालेन तालेन नर्तनं सर्वदिङ्मुखम् ।
सौष्ठवाधिष्ठितं यत्र तत्तुल्लमभिधीयते ॥

### तुला—राशिहस्तः

कलशाभिधहस्तौ तु स्पृष्टाङ्गुष्ठौ परस्परम् ।
तुलाराशौ चन्द्रसूर्यसङ्गमे युज्यते क्रमात् ॥

शृङ्गारशेखरः

### तृतीयकलासः

सव्ये तदितरे भागे वामे वामेतरं यदि ।
आपादयेद्द्रुतं जानु सवेगं चरणौ भुवि ॥

विदधती तदा प्रोक्ता मण्डिका नृत्यकोविदैः ।
मुकुलं हस्तकं कृत्वा शनैः पश्चाद्द्रुतं पुरः ॥

गच्छन्ती प्रस्खलत्येव यद्वत्यमपदं यथा ।
धृतमुक्ते बलेमत्स्ये सुपदं हस्तकानपि ॥

अलिपद्ममरालं च मुकुलं वापि तन्वती ।
चित्रं नृत्यति यत्रैव भेदः प्रोक्तस्तृतीयकः ॥

कुम्भः

### तृतीयतालनृत्तम्

तृयीयाख्येन तालेन द्रुतमानेन यो नटः ।
तदाभिनेयवशगैः करैरतिमनोहरैः ॥

लास्यांगैरन्वितैः कैश्चित्कलसैरपि नृत्यति ।
तदा तृतीयनृत्तं स्यान्नृत्तवेदिसुखावहम् ॥

### तृतीयपताकम्

अञ्जलिं हस्तमाधाय समदृष्टिस्तदङ्गुली ।
प्रसार्य शिखरं कृत्वाग्रे भुजौ प्रसरेत्पुरः ॥

कुम्भः

### तृतीयपरिवर्तम्

तृतीये परिवर्ते च तत्र मन्त्रमिमं जपेत् ।
नक्षत्रेऽभिजिति त्वन्तु प्रसूतः शत्रुकर्शनः ॥

जयं चाभ्युदयं चैव पार्थिवाय प्रयच्छ वै ।
चतुर्थे परिवर्तेऽथ सूत्रभृत्कुतपोन्मुखः ॥

विक्षेपवेधो रचयन् पदैः पञ्चपदीं व्रजेत् ।
शशताशासन्निपाते पातत्र्यश्रध्रुवागता ॥

द्वादशैतर्द्विगुणितैः परिवर्तद्वयं भवेत् ।
परिवर्तद्वयं चात्र कलाद्वादशकं भवेत् ॥

आदावन्तेऽष्टमे तुर्येगाःपरे चलाः (?) ।
इयमुत्थापिनी त्र्यश्रापातास्ताऽऽदिका इह ॥

चतुरश्रात्पादहना अथ स्यात्परिवर्तिनी ।
सूत्रभृत्प्रमुखा अस्यां परिवर्त्य चतुर्दिशम् ॥

कुर्वन्ति लोकपालानां वन्दनानि यतस्ततः ।
परिवर्तिनो ध्रुवा स्यात्तु सर्वे ला अन्तिमो गुरुः ।
चत्वारश्चरणाश्छन्दो जगतीचालपूर्विका (?) ॥

यथा—त्रिनयनमसिनवमृषभगतिं अनपरटनवदनकलनम् ।
मदनकदनकरनयनवरम् भजत भुवनभयशमनशिवम् ॥

त्र्यश्रमाद्यश्चतस्रः स्युः कला गुरुचया (?) ।
चतुर्लाःस्युःपरा इत्थं कलाः षोडश कीर्तिताः ॥

तामिरष्टौ सन्निपातः सन्निपातद्वयं तथा ।
भवेत्प्रतिदिशं कुर्याद्दिग्नाथेभ्यो नमः क्रमात् ।
विक्षेपवेधो रचयन् पूर्वोक्तक्रमतो सुधीः ॥

कुम्भः

### तृतीयप्लवः

त्रिपताकौ करौ कृत्वा समं वा विषमासनम् ।
स्थित्वा स्थित्वा समुत्प्लुत्य चरणौ दधती क्षितौ ॥

पुरो गच्छति पश्चाच्च लघुमानेन चेत्तदा ।
पश्यन्तीं धरणीं प्रोक्तः प्लवभेदस्तृतीयकः ।

कुम्भः

### तृतीयहंसः

हस्तं हंसास्यमाधाय पार्श्वयोर्ललितां गतिम् ।
आलापवरतालानां क्रमतो यत्र नृत्यति ।
हंसीवासौ तृतीयोऽयं भेदः प्रोक्तः पुरातनैः ॥

कुम्भः

## तृतीयं नृत्यम्

एवं तृतीयाभिनये तृतीयं वस्तु रङ्गगा ।
षट्पितापुत्रकेण द्वे कुर्यातामङ्गहारतः ॥

नर्तक्यो मिलिताः पश्चाल्लताबन्धमुपाश्रिताः ।
अङ्कुरेण पुनः कुर्युरुपोहनमथ स्फुटम् ॥

अन्योन्यं मिलिताः प्रागवत्तृतीया प्रथमान्विता ।
तृतीयं वस्त्वभिनयेन्नृत्यं कुर्याद्द्वितीयिकम् ॥

## तेजः—पौरुषः

तेजः स्यात्प्राणसंरोधेऽप्यवज्ञाद्यसहिष्णुता ।

वेमः

## तेनकरणम्

स्यातां यत्र ध्रुवोद्ग्राहौ स्वरैश्च तेनसंयुतैः ।
तत्तेनकरणं प्रोक्तं लक्ष्ये लक्षणवेदिभिः ॥

मोक्षदेवः

## तोडीलक्षणम्

छायातोडी बुधैः प्रोक्ता मध्यमांशग्रहान्विता ।
पञ्चमर्षभहीना च गीयते गीतकोविदैः ॥

मोक्षदेवः

## त्रयोदशजातिलक्षणानि

इति त्रिषष्टिर्जात्यंशा ग्राहाः स्युरिति केचन ।
नैतद्यतो नन्दयन्त्यां पञ्चमोंशः समः ग्रहः ॥

ग्रहत्वं तत्र गान्धारस्वरस्यैव हि सम्मतम् ।
केषांचन मते तेंशा दशैवेति न संगतम् ॥

वदुच्चप्रायिकत्वेन दृश्यते सर्वजातिषु ।
ग्रहस्य विकृतिः सा तु रागभाषादिषु स्फुटाः ॥

रागाध्याये विशेषेण बाहुल्येन विलोक्यते ।
यस्मिन्नुच्चारिते सम्यग्रागव्यक्तिः प्रजायते ॥

यस्यानुवादी संवादी स्वरास्तोयोंशतां व्रजेत् ।
प्रबन्धान्तर्वर्तिनीषु विदारीषु व्यपेक्षया ॥

तारमन्द्रे व्यवस्था स्यात् नहुत्वान्यव्यपेक्षया ।
प्रयोगे ग्रहतां न्यासापन्यासत्वस्वरूपता ॥

सन्यासः स्याच्च विन्यासो महिम्नान्यः स्वरान् जयेत् ।
स्वरस्यांशत्वमेभिस्तु लक्षणैर्दशभिः स्मृतम् ॥

ग्रहांशौ तारमन्द्रौ च न्यासापन्यासकौ तथा ।
तथा सन्यासविन्यासावल्पतावहुते ततः ॥

तथैवान्तरमार्गस्तु षाडवौडुविते क्वचित् ।
क्वचिद्ग्रहणतो नित्यपूर्णाजातिं विहाय च ॥

षाडवौडुवितत्वे स्त इति तद्विद्यसंगथा (?) ।
प्रोक्तानि जातिष्वेतानि लक्षणानि त्रयोदश ॥

कुम्भः

## त्रवणाभाषा

मध्यमांशग्रहा हीनपञ्चमा षड्जविश्रमा ।
निषादवद्धैवतयोः षड्जधैवतयोः क्रमात् ॥

सङ्गत्या सहताटक्के त्रवणा याष्टिके मते ।
रसे वीरे प्रयोक्तव्या मध्यमग्रामसंश्रया ॥

कुम्भः

## त्रासलक्षणम्

अस्पर्शनसमुद्वेगैस्तथा मुखविकूणनैः ।
विद्युदुल्का घनरवा विस्फुलिङ्गार्चिषस्तथा ।
त्रस्ताङ्गाक्षिनिमेषैश्च दर्शनीयानियोक्तृभिः ॥

कुम्भः

## त्रिकोणचारी

निवेशिताभिधः पादः स्थापितोऽङ्गुलिपृष्ठतः ।
निकुट्टितः पुरस्ताच्च पार्श्वे पृष्ठे निवेशितः ॥

चरणाङ्गुलिपृष्ठेन पुनः स्थाने च कुट्टितः ।
त्रिकोणचारी सोद्दिष्टा चारी चान्वर्थसंज्ञिता ॥

कुम्भः

## त्रिकोणस्वस्तिकम्

विधाय स्वस्तिकौ पश्चादाकुञ्च्य पुनरूर्ध्वगौ ।
वामांसक्षेत्रपर्यन्तं करौ यदि गतौ तदा ।
तत्स्वस्तिकत्रिकोणाख्यमवदन् पूर्वसूरयः ॥

## त्रिगताङ्गलक्षणम्

त्रिष्वेकत्र स्थितेषु स्यादङ्गं त्रिगतसंज्ञकम् ।
विदूषके सूत्रधारे तथा शृङ्गारधारके ॥

वर्तमानं वाक्यमाहुस्त्रिगतं वर्णयामि तत् ।
विदूषको हास्यकरीं वाचं सूत्रकृतो वदेत् ॥

कस्तिष्ठति जितं केनेत्येवं रूपा समं गताम् ।
अकस्मात्किमिदं ब्रूषे हसन्त्येते महाजनाः ॥

आचक्ष्व सङ्गतां वाचमिति शृङ्गारधारकः ।
विवादो युवयोरास्तां प्रकृतं साधयन्त्विति ।
सूत्रधारो वदेत्कुर्यादथ प्रस्तावनामसौ ॥

विप्रदासः

## त्रिगुणा—पाटः

भवन्ति त्रीणि खण्डानि वाद्यते यत्र चैककम्।
त्रिगुणं त्रिगुणा सा तु भणिता त्रिविधा बुधैः॥

त्रैगुण्यादादिमध्यान्तखण्डानां सा पुनर्द्विधा।
क्रमव्युत्क्रमयोगेन खण्डानां तद्यथोच्यते॥

खण्डत्रयं प्रयुञ्ज्याद्यौ द्वयमध्यं प्रयोजयेत्।
पुनराद्यं ततःप्रोक्तमेवं त्रैगुण्यमादिमे॥

इत्यादि त्रिगुणा प्रोक्ता यो मध्यत्रिगुणोच्यते।
द्वेधा सा मध्यखण्डस्य त्रैगुण्याद्द्विप्रकारतः॥

खण्डत्रयं वादयित्वा ततः प्राद्यद्वयं तथा।
ततो मध्यमिति प्रोक्तः प्रकारः प्रथमो मया॥

अथ खण्डत्रयं पूर्वं पश्चात्स्यादन्तिमत्रयम्।
ततो मध्यममित्येष प्रकारः स्याद्द्वितीयकः॥

अथोक्तं त्रिगुणा तत्र खण्डत्रितयवादनात्।
आद्यमन्तद्वयं पश्चादन्तिमं वाद्यते पुनः॥

एवमष्टविधा प्रोक्ता त्रिगुणा पृथिवीभुजा।
चतुरश्रत्र्यश्रमिश्रखण्डतालेषु वा क्वचित्॥

ताले कृतैकखण्डस्य मानेनाथ दलद्वयम्।
अथवा चतुरश्रादि मध्यादेकेन केनचित्॥

चतुरश्रखण्डमेकं त्र्यश्रखण्डद्वयं ततः।
मिश्रे खण्डत्रयं वाद्यमेवं तु त्रिगुणां परे॥

अत्र वाद्यैश्चतुर्भिः स्याद्वादेनैकेन निर्मितम्।
कलामिश्र तथाष्टाभिः खण्डमेकं तु लक्ष्यगम्॥

कुम्भः

## त्रिपताकः

पताकस्य यदा वक्राऽनामिका जायते तदा।
त्रिपताकं विजानीयाद्विनियोगोऽस्य कथ्यते॥

एष दध्यादिमङ्गल्यद्रव्यस्पर्शे प्रयुज्यते।
प्रणामे मस्तकगतः कर्त्तव्यः पार्श्वतस्तलः॥

अश्रुप्रमार्जने नूनमधोगच्छदनामिकः।
आह्वानेऽङ्गुलियुग्मस्य कुञ्चनात्स्यादवाङ्मुखः॥

उत्तानाङ्गुलियुग्मः स्याद्वदनोन्नमने त्वसौ।
अङ्गुल्यौ संशयेरवस्य पर्यायेण नतोन्नते॥

अधस्तलो बहिःक्षिप्तांगुलिद्वन्द्वस्त्वनादरे।
अधोमुखं भ्रमन् शीर्षप्रान्त उष्णीषधारणे॥

तादृशे मस्तकादूर्ध्वं कार्यो मकुटधारणे।
तिलकः स्याद्भ्रुवो मध्यादूर्ध्वमेष ललाटगः॥

अलकस्यापनयने ललाटादलकाश्रितः।
गन्धवाक् छुद्धविकृतौ नासास्पर्शोत्तरोऽधरः॥

पक्षिष्वल्पेष्वथ लघुप्रवाहे मन्दमारुते।
कटिक्षेत्रगतस्यास्य चलेऽङ्गुल्यावधोमुखे।
तिर्यक्तले प्रकर्तव्ये शेषं लोकादिहोन्नयेत्॥

विप्रदासः

## त्रिपदी नान्दी

एतस्यामपि चाक्षिप्तवेधौ प्राग्वदिहोदितौ।
अस्याः प्रयोगसमये श्लोकं रौद्ररसं पठेत्॥

विप्रदासः

## त्रिपुटः—तालः

लघुरेको द्रुतद्वन्द्वं मात्राश्चाष्टौ च यत्र सः।
त्रिपुटश्चतुरश्रः स्यादिति प्राहुर्महर्षिणः॥

भरतकल्पलतामञ्जरी

## त्रिपुटतालः

कल्याणादौ भवेद्वीरे ध्रुवकश्चन्द्रशेखरः।
द्विदिग्वर्णपदं यत्र त्रिपुटे च विधीयते।
द्रुतद्वन्द्वं लघुद्वन्द्वं ताले त्रिपुटसंज्ञके॥

गान्धर्ववेदे

## त्रिभङ्गितालक्षणम्

त्रिभङ्गिस्तु लघू गुरू। ।।ऽऽ

सोमराजदेवः

## त्रिभङ्गीवर्णसलकम्

पूर्वेपार्श्वे ततः पश्चाद्विदिक्ष्वपि पदक्रिया।
करयो.................. युगपत्रमतोथवा।
त्रिभङ्गीवर्णसलकं चालयं तदुदीरितम्॥

## त्रिवली

त्रिवली हस्तदैर्घ्ये स्यात्सप्ताङ्गुलमुखद्वया।
मुष्टिनिर्ग्राह्यो मध्यास्यात्कवला वक्रवृत्तका॥

आयस्यौ ताम्रमण्डल्यौ सप्तरन्ध्रान्विते पृथक्।
दोरकैरन्ध्रनिक्षिप्तैः कवलानद्धयोर्द्वयोः॥

वक्त्रयोर्गाढमाबद्ध्य कार्यं मध्ये प्रवेशनम्।
तत्र हस्तमिता कच्छास्तत्र रज्जुविनिर्मिता॥

स्कन्धावलम्बिनी कार्या करयुग्मेन वादनम् ।
ते दों दें ति दि वर्णाः स्युः त्रिपुरा चात्र देवता ॥
इयमेव त्रिकुल्यान्यैर्विंशत्यङ्गुलदैर्घ्यभाक् ।
एकादशाङ्गुलमुखी मध्यदेशेषु निर्मिता ॥
अङ्गुलैः पञ्चभिस्सार्धैः मध्ये चांचनिका युता ।
तदर्धे पाटवर्णाद्या वाद्यन्ते तद्विदां वरैः ॥

कुम्भः

**त्रिविधवेषः**

शुद्धो विचित्रो मलिन इति वर्णप्रसारितः ।
वेषस्तु त्रिविधो ज्ञेयः स तु लोकानुसारतः ।
नाट्यप्रयोगसमये कर्तव्यो नाट्यकोविदैः ॥

वेमः

**त्रिशिखा—हस्तः**

पताकस्य तु हस्तस्य यदि वक्रा कनीयसी ।
तदा स्यात्त्रिशिखो योऽयस्त्रिसख्यावतिहस्तनी ॥

संगीतनारायणे

**त्रिसञ्चः—पाटः**

त्रिसञ्चो जायते सव्यहस्ताङ्गुष्ठविघट्टनात् ।
त्रिकस्य वलनात्स्कन्धसञ्चादपि मनोहरः ॥

यथा—खें ट खें द खें द खें द .

कुम्भः

**त्रोटितः**

स त्रोटितः प्रतिष्ठः स्याद्यत्रैकं मन्द्रतारयोः ।
त्रोटयित्वा तयोरेकः प्रतिगृह्येत कश्चन ॥
कचित्स्वरे स्थिरं स्थित्वा तारं स्पृष्ट्वाग्रिवत्परम् ।
प्रत्यागच्छति यो वेगात्त्रोटितः स उदाहृतः ॥

कुम्भः

**त्र्यश्रो लयः**

आदौ गुरुद्वयं कार्यं चत्वारस्तु द्रुताः पुनः ।
अन्ते च लघुरेकः स्याल्लयस्त्र्यश्र उदाहृतः ॥

सङ्गीतनारायणे

## द

**दक्षिणः—नायकः**

सद्भावं गौरवं प्रेमभयं प्रथमयोषिति ।
अन्यस्त्रीसक्तचित्तोऽपि न मुञ्चति स दक्षिणः ।

शुभङ्करः

**दक्षिणो हस्तः**

अङ्गुष्ठो दक्षिणो हस्तो मुहुश्चेत्ताडयेत्पुटम् ।

कुम्भः

**दक्षिणहस्तकर्तरी**

दक्षिणेनैवहस्तेन सघातो नखकर्तरि ।
कर्तरीवद्यदा हस्तो दक्षिणः परिदृश्यते ॥

सोमेश्वरः

**दण्डतरम्**

तां ताण्डमाहुः कर्णाटास्तस्यामेव यदा पुनः ।
मिलितौपरतः पादौ तं दण्डतरमीरितम् ॥

**दण्डपादा—डमर्याम्**

कुञ्चितश्चरणो यत्र वामतो दक्षतः क्रमात् ।
डमरी स्यात्तदा दण्डपादा चारी तदोदिता ॥

कुम्भः

**दण्डरासकः—नृत्यम्**

यत्र राज्ञः पुरो नार्यः स त्रिंशोऽष्ठाथ षोडश ।
द्वात्रिंशद्वा चतुष्षष्टिराधाय करपङ्कजैः ॥
दण्डौ सुवृत्तौ मसृणौ सुवर्णादिविनिर्मितौ ।
अरत्निसंमितौ दैर्घ्ये स्थौल्येनाङ्गुष्ठसंमितौ ॥
अथ देशानुरागेण गृहीत्वा दण्डचामरौ ।
दण्डक्षौमाञ्चितौ यद्वाच्छुरिकादण्डकावथ ॥
चतुर्भिः पञ्चभिर्घातैर्यदा खड्गप्रहारजैः ।
सशब्दं घातभेदैश्च युग्मी भूय वियुज्य च ॥
अग्रतः पृष्ठतो वापि पार्श्वसंगतयापि च ।
धातुभेदान्वितन्वन्त्यश्चारीभ्रमरिकादिभिः ॥
चित्रै स्तस्योपसत्येन मुहुर्मण्डलसंस्थया ।
लयतालानुगं यत्र प्रनृत्यन्ति वराङ्गनाः ।
तदुक्तं नृत्ततत्त्वज्ञैर्दण्डरासकनर्तनम् ॥

कुम्भः

**दण्डहस्तः**

परघट्टनमङ्गुष्ठादङ्गुल्याग्रैश्च पीडने ।
वामेन पीडनाद्वाद्यैर्दण्डहस्तो भवेदसौ ॥

कुम्भः

—पाटः

हस्ताभ्यां क्रमतो द्वाभ्यां मृदुना दक्षिणेन च।
वाद्यते तादृशैः पाटैः दण्डहस्तः स उच्यते॥

अङ्गुल्यग्रैर्विनिष्पीड्य पुटमङ्गुष्ठताडनात्।
वामनिष्पीडनाच्चापि दण्डहस्तः प्रजायते॥

यथा—खुं डें ड२.ट रि ३ कुम्भः

—हस्तपाटः

पताकरेफहस्ताभ्यामूर्ध्वघातः क्रमाद्यदा।
क्रियते दण्डहस्तोऽसौ पाटः पाटविदोदितः॥
दां धयकटदां खरिखरिदां।

कुम्भः

## दन्तिलमते तालस्य नियमहेतुत्वम्

तत्र ज्ञेयाः कलापातकलामार्गास्तथैव च।
मात्रा च परिवर्तश्च वस्तु चैव विशेषतः॥

हम्मीरः

## दर्पणताललक्षणम्

दर्पणो खद्वयं दीर्घः। ००ऽ

सोमराजदेवः

## दर्पसरणम्

दर्पसरणं प्रोच्यतेऽधुना।
वैष्णवस्थानमास्थाय पृथिव्यां पार्श्वतः पतेत्॥

कुम्भः

## दशप्राणाः

समानो मधुरः सान्द्रः कान्तो दीप्तः समाहितः।
अग्राम्यो सुकुमारश्च प्रसन्नौजस्विनाविति॥

मान्धातादिपदेषु स्युः प्राणा दश दशस्विमे।
समानोऽल्पाक्षरो नादो मधुरः स्वल्पमूर्छनः॥

सान्द्रः स्यान्निविडैर्वर्णैः कान्तस्तारमनोहरः।
तारः प्रकाशको दीप्तः स्थायिस्थस्तु समाहितः॥

ध्वनिरग्राम्य इत्युक्तः सञ्चारी वर्णसंश्रितः।
सुकुमारो ध्वनिः प्रोक्तो मूर्छना वर्णमार्दवात्॥

पदस्थानस्वरादीनां प्रसक्के तु प्रसन्नकः।
ऊर्जःप्रचुर ऊर्जस्वी दशानामिति लक्षणम्॥

मोक्षदेवः

## दशलास्याङ्गानां लक्षणानि

यदोरुकटिबाहूनां यौगपद्येन चालनम्।
चालिः साशैघ्र्यसांमुख्यप्राया चालिवढो भवेत्॥

सुकुमारं तिरश्चीनं विलासरसिकं च यत्।
युगपत् कटिबाहूनां चालनं सा लढिर्मता॥

कर्णयोर्हावबहुलं लसल्लीलावतंसयोः।
विलम्बेनाविलम्बेन कृतं तल्लयचालनम्॥

विलम्बेनाविलम्बेन कुचयोर्भुजशीर्षयोः।
ललितं चालनं तिर्यक् तज्ज्ञाः प्राहुरुरोऽङ्गणम्॥

धसकं स्यात्सुललितं स्तनाधोनयनं लयात्।
सताला ललितोपेता क्रमात्कार्या द्वयोन्नतिः।
धनुर्वदङ्गहारः स्याद्धम्मीरनृपसंमतम्॥

हम्मीरः

## दशलेताललक्षणानि

द्वितीयाद्यतृतीयानां विकारात्कोमला मता।
द्वितीयाद्यतुरीयानां विकृतौ विजयोदिता॥

पञ्चमाद्यद्वितीयानां गुरुमध्या विकारतः।
तृतीयाद्यचतुर्थानां विकाराज्जयमङ्गला॥

पञ्चमाद्यतृतीयानां वीरश्रीः स्याद्विकारतः।
रत्नमाल्यं द्वितीयस्यान्यत्वे चतुर्थतृतीययोः॥

द्वितीयपञ्चमे तुर्ये विकृते रतिमङ्गला।
विकृतिस्तनुमध्या स्यात्तृतीयतुर्यपञ्चमैः॥

द्वितीयस्य तृतीयस्य पञ्चमस्य विकारतः।
एला रतिप्रभा ज्ञेया त्रेता स्यादृशधेति च॥

मोक्षदेवः

## दाक्षिणात्या—प्रवृत्तिः

मृदुमधुरललितवृत्तामिनयोपेता च कैशिकीप्राया।
बहुगीतवाद्यरुचिरा प्रवृत्तिरिह भवति दाक्षिणात्या सा॥

वेमः

## दाक्षिणात्यदेशाः

कोसलास्तोसलास्तद्वदान्ध्राश्च द्रमिलास्तथा।
महाराष्ट्राश्च कर्णाटाः कोङ्कणा मलया अपि॥

अन्तराले च विन्ध्यस्य दक्षिणस्य च वारिधेः।
एवमाद्यास्तु ये देशा दक्षिणात्यास्तु ते मताः।
कैशिकीं सात्त्वतीं वृत्तिं तत्प्रयोगश्च संश्रितः॥

## दानवीरः

राज्यं प्रियामपि सुतं स्वशरीरकं वा
दत्वा प्रसन्नवदनो द्विजसत्तमाय ।
क्षुद्भ्रान्तलोचनविषादतिदुःखितोऽपि
प्रोक्तोऽयमेव मुनिना भुवि दानवीरः ॥

हरिश्चन्द्रो बलिः कर्ण दधीचिः पशुनन्दनः ।
एत एव स्मृता लोके दानवीरा मनीषिभिः ॥

मुखप्रसादो हर्षश्च विनयः सत्त्वशालिता ।
धैर्यञ्चाभिनये कार्यं दानवीरस्य सूरिभिः ॥

जगद्धरः

## दिग्भ्रमरी

भ्रामं भ्रामं सकृत्प्राग्वद्यत्र हस्तधृतक्षितिः ।
चतुर्दिक्षु च क्रमात्तिष्ठेत्तदा दिग्भ्रमरी मता ॥

कुम्भः

## दिग्वर्षाभिधचालनम्

दिग्वर्षाख्यमनङ्गांगा मोटनं तोरणाभिधम् ।
अनङ्गोद्दीपनं चाथ तथा मुरजकर्तरी ॥

पञ्चेति चालयानि स्युरधिकानि मतान्तरे ।
पुरस्तात्पार्श्वयोस्तिर्यगूर्ध्वं पश्चाच्च लोडितः ।
करो यत्र तदुद्दिष्टं दिग्वर्षाभिधचालनम् ॥

## दिण्डम्

उत्प्लुत्य चरणद्वन्द्वं वक्षनिष्पीडनोपमम् ।
परि भ्राम्यावनीं याति यदि तद्दिण्डमुच्यते ॥

## दिव्यस्त्रीणां भूषणविधिः

अथाङ्गनानां दिव्यानां स्वस्वरूपोपलब्धये ।
कथ्यते भूषणविधिर्मया नाट्ये यथोचितम् ॥

शिखाबन्धं शिखण्डं च भूषां मौक्तिकभूयसीम् ।
वेषं शुद्धं प्रकुर्वीत विद्याधरमृगीदृशाम् ॥

वेषमप्सरसां कुर्यात्केवलं रत्ननिर्मितम् ।
एष एव भवेद्वेषो यक्षाणामधिकश्शिखा ॥

शुकपक्षप्रतीकाशैर्वस्त्रैर्वैडूर्यमौक्तिकैः ।
अवेषं च प्रयुञ्जीत नाट्ये त्रिदशयोषिताम् ॥

एष एव विधातव्यो वेषः पन्नगयोषिताम् ।
किन्तु तासां फणं कुर्यान्मुक्तामणिविनिर्मितम् ॥

मुक्ताहारैर्मरतकैर्ह्रीरिद्रवसनैरपि ।
विभूषणं विधातव्यं नाट्ये सिद्धमृगीदृशाम् ॥

पद्मरागमणिप्रायं वल्लकीविलसत्करम् ।
जपाकुसुमसंकाशैः कौसुम्भैर्वसनैर्युतम् ॥

एष गन्धर्वयोषाणां कल्पयेन्नाट्यकर्मणि ।
वेषः स्यान्मुनिकन्यानामेकवेणीसमन्विताः ॥

नैव तासां विधातव्यं प्राचुर्येण विभूषणम् ।
इन्द्रनीलमणिप्रायः सितदंष्ट्रासमन्वितः ॥

निशाचराणां वेषः स्यान्नीलैर्निर्वसनैरपि ।
योषितां मानुषीणां तु तत्तद्देशानुसारतः ॥

भूषाकर्म विधातव्यं नाट्यलक्षणवेदिभिः ।
एवं नानाविधं वेषं विधानं नाट्यसंश्रयम् ॥

देशजातिवयोऽवस्थायोगं स्त्रीणां प्रयोजयेत् ।
अतथाकल्पितो वेषो हास्यायैवोपजायते ॥

वेमः

## दीप्तप्रसन्नः

दीप्तप्रसन्नस्तारेपि यः सौकर्यमुपागतः ।

कुम्भः

## दीर्घकम्पितः

स दीर्घकम्पितो यत्र सुचिरं कम्पनो स्वरः ।

कुम्भः

## दुन्दुभिः

दुन्दुभिः स्यान्महागात्रो महानादोऽतिमञ्जुलः ।
ताम्रहेमसमुद्भूतो वलयाभ्यां विवर्जितः ॥

कांस्यभाजनसंभारगर्भो वध्रैः समन्ततः ।
गाढं बद्धश्चर्मनद्धवदनोऽयं प्रवाद्यते ॥

चर्मनिर्मितकोणेन महाप्राणेन दुन्दुभिः ।
मेघगम्भीरनिर्घोषध्वानोध्वांकारपाटभाक् ।
मङ्गले विजये देवमन्दिरे च प्रवाद्यते ॥

कुम्भः

## दूताः

निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः ।
निगूढार्थश्च दुर्जातः दूतदूत्योऽपि तत्समाः ॥

शुभङ्करः

## दूत्यः

सखी धात्री नटी दासी शिल्पिनी प्रतिवेशिनी ।
बाला प्रव्रजिताभीरी मालाकारी च रैहरी ।
मार्गे द्यूतं तपस्विन्या गण्या द्वादश दूतिकाः ॥

शुभङ्करः

## द्रुतछायाः

येषु द्रुतत्वं शब्दस्य छायास्ते द्रुतशब्दजाः ।

कुम्भः

## दृश्यम्

दृश्यं दर्शनयोगेन निर्देश्यं च यथोचितम् ।

वेमः

## दृष्टयः

शून्या च मलिना चैव श्रान्ता लज्जान्विता तथा ।
म्लानाथ शङ्किता चैव विषमा मुकुला मता ॥

कुञ्चिता ह्यभितप्ता च जिह्मा च ललिता तथा ।
वितर्किताधंमुकुला विभ्रान्ता विप्लुता तथा ॥

आकेकरा विशोका च त्रस्ता च मदिरा तथा ।
षट्त्रिंशद्दृष्टयस्त्वेता नामतस्त्वथ लक्षणम् ॥

हम्मीरः

## दृष्टीनां सङ्ख्या

षट्त्रिंशसङ्ख्यया प्रोक्ताः दृष्टयः पूर्वसूरिभिः ।
कान्तादयोऽद्भुतानां स्युः तत्रादौ रसदृष्टयः ॥

स्निग्धाद्या विस्मितान्तास्तु तथाष्टौ स्थायिभावजाः ।
शून्यादयो विकाशान्ताः सञ्चारिण्यस्तु विंशतिः ॥

सोमराजदेवः

## देवानां भूपतीनां च भूषणानि

चूडामणिश्च मुकुटं मुक्ताहारश्च कूसकम् ।
अङ्गदं चापि केयूरमङ्गुलीयकमेव च ॥

भूषणान्येवमादीनि देवानां भूभुजामपि ।
यथोचितं तु धार्याणि तत्तद्देशानुसारतः ॥

वेमः

## देवादिनटनम्

प्रत्यक्षा येऽभिनेयास्ते भयोद्वेगैस्सविस्मयैः ।
स्वभावैश्चेष्टितैर्देवाः प्रणामकरणादिभिः ॥

अप्रत्यक्षा विनिर्देश्याः प्रयोगनिपुणैर्नटैः ।
प्रत्यक्षा देवताः साक्षात्पूजोपकरणादिभिः ॥

निर्दिशेदथ वृक्षादीनचलांश्च समुच्छ्रितान् ।
ऊर्ध्वप्रसारणाद्बाह्वोर्दर्शयेल्लोकयुक्तितः ॥

मञ्जुलैरुज्ज्वलैर्वेषैर्निर्निमेषैर्विलोचनैः ।
मुदितेनापि मनसा दर्शयेद्दिव्ययोषितः ॥

चमूसमूहमम्बोधिविस्तीर्णं वनमेव च ।
विक्षिप्ताभ्यां पताकाभ्यां निर्दिशेन्नाट्यनृत्ययोः ।
कामेन प्रहशापाभ्यां ज्वरेणापि च येऽर्दिताः ॥

अशोकः

## देवोपहारकम्

अरालकपरावृत्तेरुभयोः पार्श्वयोरपि ।
सरलप्रसृतस्याग्रे करस्य लुठति ....... ॥

संप्राप्य कूर्परक्षेत्रं परे लुठति यत्न तत् ।
देवोपहारकं प्रोक्तं तदा नृत्तविचक्षणैः ॥

## देशकाकुः

देशस्वभावजा छाया रागे या वर्तते क्वचित् ।
सा देशकाकुर्विज्ञेया रागकाकुविचक्षणैः ॥

कुम्भः

## देशछाया

देशच्छायोद्भवो रागो देशच्छायोच्यते बुधैः ।

कुम्भः

## देशी

नाट्यमार्गोपाधिभिन्नं द्विधा नृत्यमुदीरितम् ।
नृत्तैः क्षप्रत्यये रूपं देशी नृत्यमिहोदितम् ॥

कुम्भः

देशे देशे नृपादीनां यदाह्लादकरं परम् ।
गानं वाद्यं तथा नृत्यं तद्देशीत्युच्यते बुधैः ॥

सङ्गीतनारायणः

जनानां प्रतिदेशं यन्मनोरञ्जनकारकम् ।
देशीति कथ्यते सर्वैराचार्यैर्भरतादिभिः ॥

कुम्भः

## देशीकरणोपसंहारः

आचार्यनर्तकग्रन्थसंप्रदायानुसारतः ।
षट्त्रिंशत्करणान्येवमुक्तान्युत्प्लुतिपूर्वकम् ॥

अन्येऽपि सन्ति भूयांसो भेदाः करणमार्गगाः।
तान्नावोचद्विप्रदासो ग्रन्थविस्तरकारतः ॥

विप्रदासः

## देशीनृत्तम्

नृत्तेः क्तप्रत्यये रूपं देशीनृत्तमिहोदितम्।

कुम्भः

## देशीनृत्यम्

क्तप्रत्ययान्तादुक्तार्थाद्धातोर्निष्पद्यते पुनः।
नृत्तशब्दो विवक्षायां शोभारूपस्य कर्मणः।
देशीयमेतदेवोक्तं पण्डितैर्नृत्यवेदिभिः ॥

विप्रदासः

## देशीनृत्यविधिः

श्रुतीर्गीतं कलासश्च तालश्चेति चतुष्टयम्।
यालप्त्यादिकभेदेन देशी नृत्यविधिक्रमः ॥

पृथक्प्रदर्शितः कैश्चित्स एवात्रोपदिश्यते।
सङ्गप्रवेशे सञ्जाते पार्श्वयोश्चतुरः करान् ॥

अग्रतः षोडश पञ्च नर्तक्यो गायकैस्ततः।
आलप्तौ क्रियमाणायां नर्तकी वामपाणिना ॥

धृत्वा चेलाञ्चलं दक्षे पताकं दधती करे।
कलासैर्हावभावाभ्यां युतं भ्रमणमाचरेत् ॥

कुम्भः

## देशीपटहः

दक्षिणं वदनं तस्य मितं सप्तभिरङ्गुलैः।
वामं तु वदनं तस्य भवेत्सार्धषडङ्गुलम् ॥

यदान्तरं पशोश्चर्म जठरं तत्प्रकीर्तितम्।
उहलीसंज्ञकस्तेन वामं वक्त्रं विधीयते ॥

यन्मया मार्गपटहे लक्षणं प्रागुदीरितम्।
तदशेषं विधातव्यन्तमस्मिन् पटहे बुधैः ॥

कुम्भः

## देशीयकरणानि

अन्याङ्गेन समायोगो न कार्यश्च नरैः सदा।
उच्चैर्देशीयकरणानि मनोहराणि तत्तत्स्वदेशललनालपनेषु चित्तम्।
तेन त्रिनेत्रपरितोषकरेण राज्ञा देशप्रसिद्धकरणानि विनिर्मितानि॥

कुम्भः

## देशीरागाः तल्लक्षणानि च

देशीरागान् प्रवक्ष्यामः पूर्वशास्त्रानुसारतः।
ते च रागाङ्गभाषाङ्गक्रियाङ्गोपाङ्गसंज्ञकाः ॥

ग्रामरागस्य भाषाङ्गक्रमाच्छायानुकारतः।
ग्रामाङ्गमथ भाषाङ्गमुपाङ्गं त्वनया भवेत् ॥

तन्त्रीतानक्रियायोगात्क्रियाङ्गं जगदुर्बुधाः।
पवनाज्जायते नादो नादतः स्वरसम्भवः ॥

स्वरात्सञ्जायते रागः स रागो जनरञ्जकः।
रञ्जनादागता भाषा रागाङ्गादेरपीष्यते ॥

गीते वाद्ये च नृत्ये च रक्तिः साधारणो गुणः।
सा चेदस्ति किमन्येन दूषणेन गुणेन च ॥

हम्मीरः

## देशीलक्षणम्—अभिनयः

नाट्ये ह्यभिनयश्छिद्रात्प्रच्छादनफलं हि तत्।
एतद्देशीति विख्यातं तत्तद्देशजयेच्छया ॥

नृत्तरत्नावली

## देशैलालक्षणम्

प्रान्तप्रासात्मका लाटी नानारसविभूषिता।
वर्जिता गमकप्रासैर्गौडीत्वेकरसा मता ॥

नानाप्रयोगरागांशरसा भावात्त्युटङ्किका।
भूरिभावरसोत्कर्षा द्राविडी प्रासवर्जिता ॥

मोक्षदेवः

## देहजस्वराः

अतिसूक्ष्मश्च सूक्ष्मश्च पुष्टोऽपुष्टस्तथैव च।
तारश्चेति च विज्ञेयाः पञ्चधा देहजाः स्वराः ॥

सङ्गीतमकरन्दे

## दोलम्

यत्रोऽधोर्ध्वो मुखो त्र्यश्रलीलया लुठितः क्रमात्।
करस्तद्दोलमादिष्टं चालयं प्राक्तैर्बुधैः ॥

## दोषाः

प्रोच्यते गायकप्रीत्यै सर्वभूतानुकम्पिना।
अपथ्यवर्जनाद्दोषाः न खुः प्रायो नृणां यतः ॥

अतस्तद्वर्जनं पूर्वमुच्यते ऽन्यं ततोऽपि च।
गायनो वर्जनक्षारं चान्नं पर्युषितं तथा ॥

आरनालं यवान्नं च वटुकं चापि यद्भवेत् ।
गुरुप्रायमिहाग्रयवन्माहिषक्षीरमूषितः ॥

श्लेष्मकारी च यत्प्रायस्तदश्नीयान्न कर्हिचित् ।
प्रत्यूपे मधुना साकं चूर्णमाहौषधं लिहेत् ॥

कुम्भः

## दोहदभेदाः

प्राकृते दोहदाख्यः स्यात्तद्भेदाः कीर्तिता नव ।
सारसो भ्रमरो हंसः कुररश्चन्द्रलेखकः ॥

कुञ्जरस्तिलको हंसक्रीडोऽप्यथ मयूरकः ।
त्रयोदश युजि समे मात्रा द्वादश सारसे ॥

ऊर्जेह्नौ मनवो मात्रा भ्रमरे रवयः समे ।
मात्रा पञ्चदशायुग्मे समे हंसे त्रयोदश ॥

त्रयोदश युजि कलाः कुररे मनवो युजि ।
ऊर्जे कलाचन्द्रलेखे तिथयो रवयः समे ॥

ऊर्जेत्रयोदशकलाः कुञ्जरे तिथयः समे ।
मात्राः पञ्चदश युग्मे तिलके मनवः समे ॥

त्रयोदश सामहंसक्रीडे युग्मकलाः कलाः ।
यद्येषामर्द्धयोरन्ते पञ्चादिलघुभिः शिखा ।
तं शिखा द्विपथं प्राहुर्मयूरमपि सूरयः ॥

मोक्षदेवः

## दौहित्रनप्तृहस्तः

मृगशीर्षतिर्यगानि वामे हंसास्यहस्तकः ।
दौहित्रनप्त्रोर्युज्येतेत्यगस्त्येन प्रकीर्तितम् ॥

## द्रुता

एतेष्वेव तु भावेषु करुणावेदिनेषु च ।
ध्रुवा द्रुता च कर्तव्या करुणे भावसंश्रयाः ॥

नाट्यशास्त्रे

## द्वन्द्वभेदाः—तल्लक्षणानि च.

उपवीतं समाश्रित्य द्वादशाङ्गविधानतः ।
यथाङ्गिकसमायुक्तः सोऽयमाहार्य ईरितः ॥

स्ववाचिकं समासाध्य शिरोनेत्रादिभिः क्रमात् ।
स स्यादभिनयो नाम्ना भाविकद्वन्द्वसंज्ञिकः ॥

अनुकृत्य परान् शुद्धगीतवाचिकनर्तनान् ।
संभाषणादिभिर्भावाधिक्यः स्यादनुकारिकः ॥

शृङ्गारशेखरः

## द्वात्रिंशत् चारीणां लक्षणानि

बद्धां विधाय चारीं चेदुध्दृत्याङ्घ्रिं च कुञ्चितम् ।
पार्श्वे विनिक्षिपेच्चारीमपक्रान्तां तदादिशेत् ॥

नीत्वोपरि स्वपार्श्वेन कुञ्चितं चरणं ततः ।
पार्श्वयोः पातयेद्भूमौ पार्श्वपादा तदोच्यते ॥

कुञ्चितं पादमुत्क्षिप्योत्प्लुत्य भूमौ निपातिताम् ।
अन्यञ्चिताङ्घ्रिं जघनं पश्चाद्देशे क्षिपेद्यदा ॥

तदा मृगप्लुता ज्ञेया साविर्भूयककर्तृका ।
कुञ्चितोत्क्षिप्तपादस्य जानुस्तन्न समं यदा ॥

न्यस्य तच्चौ कृतोऽन्योऽङ्घ्रिरूर्ध्वं जानुस्तदा भवेत् ।
पृष्ठप्रसारिताङ्घ्रिश्चेदन्योर्वाभिमुखं तलम् ॥

कृत्वा पार्ष्णि स्वपार्श्वे क्ष्मान्यास्तालाता तदोदिता ।
उत्क्षिप्य कुञ्चितं पादं जङ्घामस्य प्रसार्य च ॥

जान्वन्तो चोरुपर्यन्तामग्रयोगेन तं भुवि ।
चरणं पातयेद्यस्यां सा सूचीति निगद्यते ॥

पश्चान्नीत्वाञ्चितं पादं तस्य पार्श्वयां स्फिजं स्पृशेत् ।
तं ततोऽन्वितजङ्घं च भूमावग्रतले न चेत् ॥

निपातयेत्तदा चारी प्रोक्ता नूपुरपादिका ।
पादं कुञ्चितमुद्धृत्य दोलयित्वा च पार्श्वयोः ॥

न्यस्येत् पार्श्वयां स्वपार्श्वे चेद्दोलापादा तदोच्यते ।
नूपुरश्चरणौ न्यस्य पार्ष्णिदेशे निधाय चेत् ॥

स्वदेहक्षेत्राभिमुखं जान्वग्रं तेन वेगतः ।
अग्रे प्रसार्यते चारी दण्डपादा तदोच्यते ॥

पृष्ठतो वलितं स्पृष्ट्वा शिरो भ्रान्त्वा च सर्वतः ।
प्रसृतश्चरणो यत्र विद्युद्भ्रान्ता भवेदसौ ॥

अतिक्रान्तागतं पादं न्यस्तास्योरोर्विवर्तितम् ।
कृत्वा पादान्तरतलभ्रमेण भ्राम्यते तनुः ॥

यत्र सा भ्रमरी चारी हम्मीरेण प्रकीर्तिता ।
अन्योरुमूलक्षेत्रान्तं पादमुत्क्षिप्य कुञ्चितम् ॥

नितम्बाभिमुखी पार्ष्णिः कुर्याज्जानुं स्वपार्श्वगम् ।
यत्रोत्तानं पादतलं कटिजानुविवर्तनात् ॥

अनङ्गत्रासिता सा स्याद्भुजङ्गत्राससूचिका ।
तालत्रयान्तरक्षिप्तं कुञ्चितं पादमानयेत् ॥

पार्श्वन्तरं तु जघनं स्वस्तिकीकृत्य पातयेत्।
धरण्यां पार्ष्णिभागेन यत्राक्षिप्तामम्ं विदुः ॥

विश्लिष्टजङ्घयोः कृत्वा स्वस्तिकं तस्य कुञ्चितम्।
पादः प्रसारितो वक्रः स्वपार्श्वस्थोऽथ पात्यते ॥

पार्ष्ण्यां पार्ष्ण्यन्तरक्षेत्रे पराविद्धा भवत्यसौ।
आविद्धा पादमन्योरुप्रदेशस्थात्तु पार्ष्णिकम् ॥

कृत्वोत्प्लुत्य भ्रमरकं दत्वा यत्र निपातयेत्।
तथान्यं पादमुद्धृत्य सोद्धृत्ताशेषरूपिणी ॥

ललितां च क्रियासाध्याश्चार्यो युद्धनियुद्धयोः।
नृत्ये नाट्यगतौ चैताः प्रयोक्तव्या मनीषिभिः ॥

प्रधानं यो यदा यत्र हस्तः पादोऽथवा भवेत्।
साग्रे तदनुगोऽन्यः स्यात् साम्ये तु समकालता ॥

यतः पादस्ततो हस्तो यतो हस्तस्ततस्त्रिकम्।
चरणानुचराण्याहुरङ्गोपाङ्गानि सूरयः ॥

हम्मीरः

## द्वादशपदानान्द्युदाहरणम्

पैर्द्वादशभिर्यस्यान्नान्दीं तामपि वर्णये।
करेण नीवीं वदनेन लज्जामंसेन धम्मिल्लभवं वहन्ती।
रतावसाने नवकेलितल्पादद्धोत्थिता पातु पिनाकिकान्ता॥

अत्रापि वृत्ते शुद्धेऽपि पूर्ववद्योजना भवेत्।
नान्दीसमाप्तौ गायन्ति ध्रुवां नैष्क्रामिकीं ततः ॥

विप्रदासः

## द्वादशवर्णैला:

वर्णानां नियमादेव वर्णैला परिकीर्त्यते।
लक्ष्म नामानि तासां च क्रमणे ब्रूमहेऽधुना ॥

षडक्षरादिषु पादेष्वेकैकाक्षरवृद्धितः।
वर्णैला द्वादशाप्यत्र यावत्सप्तदशाक्षरम् ॥

आद्या मधुकरी ज्ञेया द्वितीया सुस्वरा मता।
तृतीया करिणा प्रोक्ता चतुर्थी सुरसा ततः ॥

प्रभञ्जनी पञ्चमी स्यात्षष्ठी मदनवत्यथ।
सप्तमी शशिनी ज्ञेया प्रभावत्यष्टमी तथा ॥

नवमी मालती प्रोक्ता दशमी ललिता मता।
एकादशी भोगवती परा कुसुमवत्यपि।
अन्ये च बहवो भेदाः सन्ति ते नात्र कीर्तिताः ॥

मोक्षदेवः

## द्वितीयकलासः

त्रिपताकौ करौ कृत्वा विषयासनमाश्रिता।
मण्डिकौ चरणौ कृत्वा यथालास्यं पदे पदे।
नयन्तीह न कौचित्रं सन्दंशमथ तन्वती ॥

पश्यन्ती पार्श्वयोरेव चकितेव यदा नटी।
कुरुते नृत्यमेषा सा वक्रभेदो द्वितीयकः ॥

कुम्भः

## द्वितीयपताकम्

अर्धचन्द्रं करं कृत्वा दक्षिणं तस्य संमुखम्।
आनीय कार्मुकाकारं जानु कुर्याद्द्वितीयके ॥

कुम्भ.

## द्वितीययौवनलक्षणम्

पीनोरु जघनं पीनं कठिनोरुघनस्तनम्।
जीवितं मन्मथस्योक्तं द्वितीये यौवनं बुधैः ॥

हम्मीरः

## द्वितीयहंसः

मुकुलं हस्तमारभ्य पादाभ्यां पृष्ठतो व्रजेत्।
विचित्रलास्यभेदज्ञा हंसीवासौ द्वितीयकः ॥

कुम्भः

## द्विमूढकलक्षणम् (लासः)

मुखप्रतिमुखोपेतं चतुरश्रपदक्रमम्।
श्लिष्टभावरसं यत्तद्वैचित्र्यार्थं द्विमूढकम् ॥

नृत्तरत्नावली

## द्विशिखरः

शिखरं द्वन्द्वसंयोगात्करयोर्द्विशिखरो मतः।
हृदये तस्य विन्यासो विहितः पूर्वसूरिभिः ॥

संगीतमुक्तावली देवेन्द्रकृता

## द्विशिखरः

श्लिष्टौ मिथश्चेच्छिखरौ करौ द्विशिखरस्तदा।
शयनार्थेऽङ्गुलिस्फोटे नास्तीति कथनेऽपि च ॥

कुम्भः

## ध

## धनुराकर्षणम्

स्वस्तिकीकृतयोः पाण्योर्वेगोत्तिर्यक्च सर्वतः (?)।
पार्श्वेऽथैककरो कस्मान्निवर्त्ती यदि कर्णगः।
धनुराकर्षणं प्रोक्तं तथात्वन्वर्थनामकम् ॥

धनुर्वल्लीविनामकम्

कृत्वोर्ध्वाधोमुखौ हस्तौ विलासात्क्रमतो यदि।
मण्डनाक्रांतिसंक्रान्तौ ततस्तावेव पूर्ववत्।
शीर्षदेशे कटीदेशे पार्श्वयोर्नेति संयुतौ॥
स्यातां तत्र... ।

धातुः

धातुः प्रबन्धावयवः स चतुर्धा प्रकीर्तितः।
निबद्धस्यादिमो भाग उद्ग्राह इति कीर्तितः॥

आदावुद्गृह्यते येन सोच्य उद्ग्राहसंज्ञकः।
द्वितीयभागो मेलाप उद्ग्राहध्रुवमेलनात्॥

ध्रुवत्वाद्ध्रुवसंज्ञस्तु तृतीयो भाग उच्यते।
आभोगस्त्वन्तिमो भागो गीतपूर्णत्वसूचकः॥
ध्रुवाभागान्तरे जातो धातुरन्योऽन्तराभिधः।
स तु सालगसूडस्थरूपकेष्वेव दृश्यते॥

वातपित्तकफा देहधारणाद्धातवो यथा।
एवमेते प्रबन्धस्य धातवो देहधारणात्॥

एष धातुस्सर्वदेहव्यापकोऽङ्गविलक्षणः।
अङ्गानामेकदेशत्वं प्रसिद्धं दृश्यते यतः॥

स द्विधातुस्त्रिधातुश्च चतुर्धातुरिति त्रिधा।
आभोगमेलापकयोः क्वचित्क्वचिद्भूवतः॥

षडङ्गानि प्रबन्धस्य स्वरश्च विरुदं पदम्।
तेन्नकः पाटतालौ च पुंसो नेत्रादिकाङ्गवत्॥

तत्र तेनपदे स्तः पाट बिरुदेक्षरौ (?)।
कराभ्यामुद्भवात्कार्ये कारणत्वोपचारतः॥

प्रबन्धगतिहेतुत्वात्पादे तालस्वरौ मतौ।
सरिगाद्याः सप्तवर्णाः षड्जादिध्वनिवाचकाः॥

स्वराभिव्यक्तिसंयुक्ताः स्वरास्तत्र प्रकीर्तिताः।
संबध्यन्तपदैरेव नेतुर्यदुपवध्यते॥

वर्णनं धैर्यशौर्यादेर्विरुदं नाम तन्मतम्।
क्रियाकारकसंबन्धरूपतो यन्निबध्यते॥

वर्णनं धैर्यशौर्यादे तदेवात्र पदं स्मृतम्।
अतो न संकराशंका विरुदस्य पदस्य च॥

तेन्नवो नामतो नेति शब्दस्य विकृतिर्भवेत्।
विकृतत्वं च भाण्डीरभाषयास्य समागतम्।
सोऽयं तेनेति शब्दश्च तच्छब्दोपनिबन्धकः॥

तुलजः

धातुमाने फलः

अथानक्षरताले तु प्रवृत्ते गीतमानतः।
संदंशनपताकाभ्यां नर्तकीनृत्यमाचरेत्॥

ध्रुवे नृत्ये यथौचित्यं षट् चत्वारोऽथ पञ्च वा।
धातुद्वये द्विताली स्यात्कलासो हस्तकस्तथा॥

स्वेच्छया तु प्रकर्तव्य इति गीतविदो विदुः।
षडुक्ता मण्ठका यत्र त्रिताली तेपु संमिता॥

कुम्भः

धृष्टः (नायकः)

अत्यर्थभाषी दुश्चेष्टस्तार्जितोऽपि न सीदति।
व्यक्तापराधचेष्टो यः स धृष्ट इति कीर्तितः॥

शुभङ्करः

धैर्यम्—(पौरुषः)

सर्वात्मनाप्युपक्रान्तनिर्वाहः स्थैर्यमुच्यते।

वेमभूपालः

ध्यानस्य मुख्यता

ध्यानं विना रागसमूहमेतं गायन्ति रागे निपुणा जना ये।
सङ्गीतशास्त्रोक्तफलानि रागास्तेभ्यः प्रयच्छन्ति कदापि नैव॥

कुम्भः

ध्रुवः

ध्रुवत्वेन प्रबन्धेषु सम्भवात् ध्रुव उच्यते।

सोमराजदेवः

ध्रुवः—तालः

लघुरेको द्रुतं त्वेकं लघुद्वन्द्वं चतुर्दश।
मात्रा यत्र प्रयुज्यन्ते चतुरश्रध्रुवस्स्मृतः॥

भरतकल्पलता

ध्रुवकलक्षणम्

उत्तमः षट्पदः प्रोक्तो मध्यमः पञ्चभिस्तथा।
कनिष्ठस्तु चतुर्भिः स्यादेवं स्युर्ध्रुवकास्त्रिधा॥

एकधातुर्द्विखण्डः स्याद्यत्रोद्ग्राहस्ततः परम्।
यं किञ्चिदुचं ... स्यात्खण्डे गमकशोभनम्॥

ततो द्विखण्ड आभोगस्त्रयस्तस्य च खण्डकम्।
उत्संगमकमुक्तं वै नेव स्वाम्याकृतं च यत्॥

उद्ग्राहस्याद्यखण्डे च न्यासः स ध्रुवको मतः।
एवं हि षट्पदः प्रोक्तमुत्तमो ध्रुवको बुधैः॥

पञ्चपादस्य तूद्ग्राहे पदयुग्मं प्रशस्यते ।
तृतीयं चोपखण्डं स्याद्द्विरभ्यस्तमिदं त्रयम् ॥
आभोगश्चैकखण्डं स्याद्द्वितीयं चोपखण्डकम् ।
तुल्यनामाङ्कितं चैतदिति मध्यमलक्षणम् ॥

गान्धर्ववेदे

## ध्रुवमेघः

एकादशाक्षरात्पादादेकैकाक्षरवर्धितैः ।
खण्डैर्ध्रुवा षोडश स्युः षड्विंशत्यक्षरावधिः ।
रसतालादिवर्णैश्च ध्रुवाणां लक्षणं शुभम् ॥

गान्धर्ववेदे

जयन्तादिक उत्साहो नन्दनश्चन्द्रशेखरः ।
कामोदो विजयाख्यश्च कन्दर्पो जयमङ्गलः ।
अष्टौ ध्रुवाः समाख्याताः राज्ञे च परिगीयते ॥

हम्मीरः

नाट्यवस्तूपयोगिन्यो ध्रुवाः पञ्च प्रकीर्तिताः ।
प्रावेशिकी तु तत्राद्या द्वितीयाक्षेपिका मता ॥
प्रासादिका तृतीयान्या ध्रुवा तुर्यान्तरा भवेत् ।
नैष्क्रामिका पञ्चमी स्यादासां लक्ष्मोच्यते क्रमात् ॥
प्रवेशसूचनीया तु पात्राणामर्थयोगतः ।
नानाभावरसोपेता सा स्यात्प्रावेशिकी ध्रुवा ॥
प्रक्रान्तं वाद्यमुल्लंघ्य गीयते यद्द्रुते लये ।
प्रस्तुतार्थसमाक्षेपात् ज्ञेया साक्षेपकी ध्रुवा ॥
अर्थाक्षेपवशाद्या च रसान्तरमुपेयुषी ।
रङ्गप्रसादं कुरुते सा स्यात् प्रासादकी ध्रुवा ॥
प्रयोगगतदोषाणां प्रच्छादनपटीयसी ।
विच्छेदेऽवान्तरार्थस्य तत्सन्धानविधायिनी ।
मध्ये मध्ये प्रयुज्या या सा विज्ञेयान्तरा ध्रुवा ॥

वेमभूपालः

## ध्रुवा

गौडो गोलीस्त्रयोगश्च लैग एकादशाक्षरैः ।
चतुर्भिश्चरणैः प्रोक्ता ध्रुवा प्रागुक्ततालयुक् ॥

यथा

गङ्गातरङ्गपरिधौतजटं गौरीकुचद्वयनिपिक्तकरम् ।
देवेन्द्रमुख्यसुरपूज्यपदं वन्दामहे शिवममेयपदम् ॥

कुम्भः

अलङ्कारा लयवर्णा यतयः पाणयस्तथा ।
अपरस्परसंबद्धा यतस्तस्माद् ध्रुवा मता ॥

वेमभूपालः

## ध्रुवाः

ध्रुवास्तु पञ्च विज्ञेयाः नानावृत्तसमुद्भवाः ।
यथास्थानरसोपेता ह्युत्तमाधममध्यमाः ॥
कनीयसीग्रहा काचित्सन्निपातग्रहापरा ।
तथाकाशग्रहा काचित् त्रिविधा तु ध्रुवा स्मृता ॥
प्रावेशिकी तु प्रथमा द्वितीया क्षेपिकी स्मृता ।
प्रासादिकी तृतीया च चतुर्थी चान्तरा स्मृता ॥
नैष्क्रामिकी च विज्ञेया पञ्चमी वृत्तकर्मणि ।
आसामेव प्रवक्ष्यामि छन्दोवृत्तसमन्वितम् ॥

नाट्यशास्त्रे

## ध्रुवाङ्गानि

मुखं प्रतिमुखं चैव वैहायसकमेव तु ।
स्थितप्रवृत्ते वज्रं च सन्धिस्संहरणं तथा ॥
प्रस्तारो माषघातः स्यादुपावर्तनमेव च ।
उपाघातः प्रवेणी च चतुरश्रं सशीर्षकम् ॥
सम्पिष्टमन्ताहरणं माहाजनिकमेव च ।
ध्रुवाणामङ्गसंज्ञानि पञ्चानामपि नित्यशः ॥

नाट्यशास्त्रे

## ध्रुवाणां विनियोगः

अपकृष्टा ध्रुवा बद्धे निरुद्धे पतिते तथा ।
व्याधिते स्खलितारा च प्रयोज्या करुणाश्रया ॥
अपविद्धे तथौत्सुक्ये विषादे परिदेविते ।
श्रमे दैन्ये च चिन्तायां दुःखे प्रत्यक्षजे तथा ॥
स्थिता ध्रुवा प्रयोक्तव्या नाट्यलक्षणवेदिभिः ।
आश्चर्यदर्शने रोपे विपादे संभ्रमे तथा ॥
उत्पातविस्मये चैव प्रत्यक्षावेदने तथा ।
वीरे भयानके रौद्रे कुर्याद्द्रुतलया ध्रुवा ॥

वेमभूपालः

## ध्रुवालक्षणम्

यथाङ्गैः करणादिभ्यो न भिन्नं सदिदं पुनः ।
भवेत् तैरेवाङ्गभावं प्रत्याहारादिभिस्तथा ॥

अङ्गैरङ्गा पूर्वरङ्गस्तेभ्यो भिन्नोऽपि गम्यताम्।
अर्थापत्त्याः प्रयोगो वा प्रधानत्वेन योज्यताम्॥

प्रत्याहारादिकं याता प्राच्योदीच्यां गतां तदा।
आश्रावणादिकं मार्गानुसारिता भागवद्धकम्॥

देवस्तुत्यर्थमपदं पदबद्धमिति द्विधा।
अपदं तत्र निर्गीतं पदबद्धं तु गीयते॥

बहिर्गीतमितीदं तु सर्वदेवप्रियावहम्।
पदबद्धं प्रयुञ्जीत तस्मादाश्रावणादिकम्॥

क्रमारूढैरक्षरैः स्यात्पदबन्धः स च क्रमः।
गुरुलघ्वादिभावेन तत्र तत्राभिधास्यते॥

पदात्मैषां प्रयोगेऽसौ ध्रुवेति व्यपदिश्यते।
अत्र वर्णा ह्यलङ्कारा लयाः पाताश्च पाणयः॥

ध्रुवमन्योन्यसम्बद्धा यस्मात्तस्माद्ध्रुवा इमे।
अङ्गस्य च प्रयोगस्य ध्रुवा यश्च विवक्षया॥

लिङ्गत्रयेण निर्देशस्तत्र तत्र भविष्यति।
उद्दिष्टानामथाङ्गानां लक्षणं संप्रचक्ष्महे॥

विप्रदासः

ध्रुवा या सौरसेन्यादिभाषाणां नियमश्च यः।
छन्दसां नियमस्तद्वदौपम्यार्थपरिग्रहः॥

वेमभूपालः

## ध्रुवाविधानम्

तस्य प्रागभिहितं तु लक्ष्यसंज्ञा परीक्ष्यते।
मार्गदेशीविभेदेन सा द्विधा गदिता बुधैः॥

द्विकमाद्यं मार्गसंज्ञं परदेशीति कीर्तितम्।
निःशब्दा शब्दसंयुक्ता तत्राद्यस्य क्रिया द्विधा॥

आवापश्चाथ निःक्रामो विक्षेपश्च प्रवेशनम्।
इमाः कलाश्चतस्रश्च निःशब्दा इति कीर्तिता॥

ध्रुवः शम्या तथा तालः सन्निपात इमाः कलाः।
सशब्दाः पातसंज्ञाश्च चतस्रः परिकीर्तिताः॥

ध्रुवादीनां चतुर्णां तु नित्या पाताभिधा मता।
पाक्षिकी तु कलासंज्ञा क्रमादेषां विविच्यते॥

पातानां पूर्वमुद्देशो युज्यतैककलत्वतः।
ततो द्विकलिकावर्हौ निःक्रामाख्यप्रवेशकौ॥

तत आवापविक्षेपौ चतुःकलतयोचितौ।
सत्यप्येवं परादृष्टसाधनत्वाद्विदां वरैः॥

चतुःकलादेः प्रथममुद्देश्यत्वं समीरितम्।
मद्रकाण्यन्तरत्वादौ निरदिक्षन् महामुनिः॥

अतो प्रधानभागेषु द्विकलादिविधाविह।
निःशब्दाः पूर्वमुद्दिष्टाः पातास्तु तदनन्तरम्॥

सर्वपातानुगामित्वात् तत्र स्यात्प्रथमं ध्रुवः।
शम्यादक्षिणहस्तस्य प्रयोगस्तदनन्तरम्॥

तदनन्तरतस्तालो ततो वामकरोद्भवः।
तथोभयकरोत्पाद्यः सन्निपातस्ततो भवेत्॥

उत्तानस्य करस्यास्याद्वाधायोऽङ्गुलिकुंचनात्।
निःक्रामोऽधस्तलस्य स्यादङ्गुलीनां प्रसारणात्॥

विक्षेपः पार्श्वतः क्षेपात् पाणेरुत्तानितस्य तु।
प्रसारिताङ्गुलीकस्य निर्दिष्टः पृथिवीभुजा॥

पाणेरधस्तलस्य स्यात् प्रवेशोऽङ्गुलिकुंचनात्।
त्रयोरेकतरस्यात्र छोटिकाशब्दपूर्वकम्॥

पाणेः संपातनादुक्तो ध्रुवो विश्लेपवर्जितः।
गातुः पापस्य शमनात् शम्या दक्षिणपाणिना॥

वामपाणितलाघाताद्रक्तप्रत्यर्थिघातिना।
प्रतिष्ठार्थतया धातोरदृष्टस्थापकत्वतः॥

तद्विपर्ययतस्तालं तालवित्कीर्तिनोदितम्।
सन्निपातो मिथः सम्यक् पाणिद्वयनिपातनात्॥

... ... ... ... कलायाः अपरो कलः।
द्विकलत्वविधौ साङ्गैर्नि काम इति कीर्तितः॥

यदा पूर्व ... ... ... ... कला।
तदा विक्षेपसंज्ञा स्यात्तथाभिनययोगतः॥

तत्र चेत्पूर्वपातं तं त्यक्त्वा......गेद्वितीयकौ।
द्वितीयाख्या संप्रवेशो प्रवेशाख्या कला भवेत्॥

अनेनैव विधानेन देशीतालेषु जानता।
कलापातविधिर्ज्ञेयो मिश्रवान्मिश्रितः क्वचित्॥

यतो विधीयते तालो बुधैरेष चतुःकलः।
तदैको गुरुरस्यैव विधातव्यश्चतुःकलः॥

अस्मादेवात्र विज्ञेयः पादभागश्चतुःकलाः।
मुख्यत्वमतरत्वाचावापस्यैव निगद्यते॥

केचिच्छम्यादिशब्देन छोटिकामाहुरञ्जसा।
तावान् किं तन्मते पातोऽथवा पातद्वयं भवेत्॥

पातैक्ये चित्रमार्गेऽस्य द्विमात्रासंभवो भवेत्।
पातद्वये विरुध्येत लक्ष्यमस्य विपश्चितः॥

तथाहि शम्यायुक्तायां गीतोपाते द्विमात्रके ।
गीतसाम्यं न भज्येत कथं तत्तेन कथ्यताम् ॥

तृतीयपक्षाङ्गीकारे शम्यादेर्ध्रुवपालता ।
नैवमेको भवेन्मात्रा ध्रुवे शम्यादिके पुनः ॥

मात्राद्वयं कथं तत्तो नैवमित्यपि सुन्दरम् ।
दत्तो यथाक्षरे चच्चत्पुटे लघ्वंशगोचरः ॥

शम्यादिर्मात्रको दृष्टः ध्रुवोऽप्येककले तथा ।
उपोहने मद्रकादौ द्विमात्रः सद्भिरिष्यते ॥

अथानियतपातोऽत्र ध्रुवः शम्यादिनो तथा ।
तर्हि ध्रुवो किं न भवेत् शम्या चातन्तरञ्च वा ॥

वृत्तिदक्षिणयोर्यद्वदथ वा ध्रुव इष्यते ।
सर्पिण्योर्मध्यमध्ये च छोटिका न तदामता ॥

हस्तपातो व्यवहितः शम्यादिस्तु यथास्थितः ।
पातस्य वक्तुं प्राधान्यं शम्यादौ तु लिलिक्ष्यते ॥

छोटिकां भरताचार्यो न समस्मरदाप्युत ।
यतो दक्षिणहस्तस्य पातः शम्येति कीर्तितम् ॥

चतुर्विधस्य पातस्य सशब्दत्वं यदा दिशेत् ।
तेनैवोदाहृता सम्यक् शम्यादीनां सशब्दता ॥

अन्यथा पातमेवैषामभ्यधान्न सशब्दताम् ।
ध्रुवाण ... ... यदोच्येत मार्गयोर्ध्रुवचित्रयोः ॥

शम्यादिकाः प्रयुज्यन्ते तदा नियतहस्ततः ।
ध्रुवो नियतहस्तः स्यादित्येषा ...... कथी ॥

वृत्तिदक्षिणयोः कैश्चिच्चतुरस्रे यथाक्षरे ।
सर्पिण्याद्याः समादिष्टाः शम्यादिष्वपि तन्मते ॥

ध्रुवस्तेभ्यो भवेद्ब्रूहि कथं पार्थक्यमर्हति ।
नैव शम्याद्यो यस्माच्चतुरस्रादिगामिधः ॥

ध्रुवः शम्याद्यनुगतः स्वातन्त्र्येण विवक्षितः ।
कलामानमिह ज्ञेयं मार्गभेदवशाद्बुधैः ॥

एकमत्र कला ज्ञेयो ध्रुवे चित्रादिके पुनः ।
तत्कान्तमानकलनात् कलाधिद्भिः कलोदिता ॥

मार्गत्रितयहेतुत्वान्मार्गता ध्रुवगामिनी ।
ततोऽन्येषु ध्रुवकला निर्गच्छन्ति विशंति च ॥

अतश्चित्रादिकानां तु त्रयाणां मार्गता मता ।
दृश्यन्ते वार्तिके मार्गे चतस्रो ध्रुवगाः कलाः ॥

विशंत्यो दक्षिणत्वेन चित्रस्तु द्विकलस्ततः ।
मात्रादीनां लक्षणन्तु प्रोक्तं लक्ष्यपरीक्षणे ॥

उत्तरोत्तरतो मार्गत्रितये द्विगुणाः कलाः ।
अष्टानां तत्र मात्राणां नामानि व्याहरामहे ॥

ध्रुवका सर्पिणी कृष्या पद्मिनी च विसर्जिता ।
उत्क्षिप्ताख्या पताका च पतिता चाष्टमी मता ॥

छोटिकाशब्दपूर्वं तु पात आसां प्रकीर्तितः ।
अतः प्रयोगमासां तु ध्रुवपातानुगं विदुः ॥

नावापादिषु तेनेमा प्रयोज्याः स्युः कथं च न ।
अथासां लक्षणं वच्मि पूर्वशास्त्रानुसारतः ॥

करघातात् ध्रुवो ज्ञेयो वामगा सर्पिणी मता ।
दक्षिणे गमनात्कृष्या स्यादधोगा तु पद्मिनी ॥

विसर्जिता बहिःपाता विक्षिप्तांगुलिकुञ्चनात् ।
ऊर्ध्वगात्रपताका स्यात्पतितान्वर्थसंज्ञया ॥

आसारिते मुखाद्यङ्गे ध्रुवपाताङ्किते बुधैः ।
आवापादिक्रियात्राद्ये ध्रुवकाद्याः समीरिताः ॥

सम्यगेतासु मात्रासु प्रयुक्तासु नियोगतः ।
अत्र संधविनाशः स्यादाचार्यस्यानुशासनात् ॥

ध्रुवकापतिते स्यातां चित्रे मार्गे तु वार्तिके ।
ध्रुवकासर्पिणीतद्वत्पताका पतितेति च ॥

चतस्रो मातृका ज्ञेयाः क्रमादष्टौ च दक्षिणे ।
चित्रशब्देन केचित्तु चतुरस्रं यथाक्षरम् ॥

केचिद्गुरुकृतकलं केचित्कालं तु तन्मितम् ।
प्राहुर्गीतिपरिच्छेद्यं नाद्यस्तत्र यतः स्मृतः ॥

लघौ प्लुते द्विमात्रत्वाभावश्चित्रविरोधकृत् ।
द्विमात्रत्वात्स्वभावेन गुरुश्चापि विचित्रता ॥

चित्रस्यैव परिच्छेदात् तृतीयस्य कथा वृथा ।
स्वभावात् गुरवो लोके द्विद्विमात्रास्तथा सति ॥

चित्रमार्गे द्विमात्रत्वं सुवचं न कथं च न ।
मार्गो नाम कलामानभेद इत्याद्यसंकथा ॥

मार्गशब्दः क्रियावाच्यः प्रसिद्धो लोकवेदयोः ।
तथाहि लौकिको मार्गो वैदिकोऽयमिति प्रथा ॥

अत आवापशम्यादेर्या क्रिया कुञ्चनादिका ।
सैवोक्ता मार्गशब्देन मूलभूते ध्रुवे ततः ॥

मार्गे कलैकिकामात्रा ममेवद्विगुणीकृते ।
चित्रयन् चित्र इत्युक्तस्तामेव ध्रुवजां कलाम् ॥

चतुर्गुणां वार्तयैव कुर्वन् वार्तिक उच्यते ।
एकस्यैव लघोर्यत्र चतुर्मात्रत्वकीर्तनम् ॥

तावतैव यतो लोका लघुगुर्वादिकानि च ।
प्रयुंजते नवावर्णान् चतुरालोकमानृकान् ॥

सैवेकत्र ध्रुवकला दक्षिणेऽष्टगुणा भवेत् ।
यतो दक्षिणमार्गस्य प्राप्तिर्लोके क्रियापहा ॥

अतो न दक्षिणे मार्गे कलावृद्धिरतोधिका ।
कैश्चित् कालः परिमितो मार्गशब्देन गीयते ॥

यथा चित्रे भवेत्कालो निमेषैर्दशभिर्मितः ।
विंशत्या वार्तिके तैश्च द्विगुणैर्दक्षिणे भवेत् ॥

ध्रुवो ध्रुवतयैव स्यादेकमात्रक एव सः ।
केचित्सर्वलघुं तालं न किंचिदिह मन्यते ॥

लध्वभावादिके मार्गाः भजन्त कल्पल्पताम् ।
नैवं चच्चत्पुटाद्यास्तु सर्वे स्युर्लघवस्तदा ॥

गुर्वाद्या द्विकलाधाने विश्लेष्यन्ते यदा बुधः ।
नोचेदेवं चित्रलक्ष्म सर्वगेषु वृथा भवेत् ॥

चतुरश्रे लघुगुरुप्लुतात्मनि यथाक्षरे ।
चित्रमानं स्मृतं तज्ज्ञैः कलोधापेक्षयैवहि ॥

द्विमात्रादिकलासाक्षान्न सर्वत्र समीक्षते ।
अतः कलापातमार्गलक्षणं कीर्तितं मया ॥

इति कलापातमार्गः

यः कालो वर्तते मध्ये कलयोर्लय एव सः ।
लीङ् धातोः श्लेषणार्थत्वादिह लघ्वन्तरेण यः ॥

आश्लेषो लयनात्सोऽत्र लयशब्देन गीयते ।
ते लयास्त्रिविधा ज्ञेया द्रुतमध्यविलंबिताः ॥

आदौ प्रयुज्य लघ्वाद्यमध्यं चेत्तत्परं द्रुते ।
विश्रम्य प्रविशेल्लघ्वन्तरे द्रुतलयस्तदा ॥

एवं विश्रान्तिरत्र स्यात् ध्रुवमात्रैव केवला ।
मध्योऽध्यर्धनन्त्रो विश्रांत्या संमतो मतः ॥

विलम्बिते तु विश्रान्तिः सार्धमात्राद्वये भवेत् ।
अर्धमात्रा कृतावत्र मात्रा ज्ञेया चतुर्लघु ॥

तामर्धीकृत्य विश्रान्तिः कर्तव्या पञ्चमे लघौ ।
पीतादिविषये लक्ष्यं सर्वत्रेतल्लयस्य हि ॥

स्वरयोर्वर्णयोर्वापि मध्यकालो लयः स्मृतः ।
अधुना क्रमतो वक्ष्ये लयानेतान् प्रयोगतः ॥

लयः सोऽत्र द्रुतो ज्ञेयो यत्र तालान्तरं ततः ।
गाता प्रयोक्तुं शक्नोति क्षिप्रत्वेन न कर्हिचित् ॥

समध्यमो लयो यत्र गीतं द्रुतलयं परैः ।
द्विर्गीयते यदेवात्र तत्सकृद् गीयते स्फुटम् ॥

यन्मध्येन लयेनात्र द्विर्गीतं सकृदेवतत् ।
चेद्गीयते तदा प्राह विलंबितलयं नृपः ॥

चित्रवार्तिकदक्षेषु मार्गेषु क्रमतो लयान् ।
द्रुतमध्यविलंबाद्यान् दंतिलप्रमुखा जगुः ॥

एवं कश्चित् ध्रुवे मार्गे न लयस्तन्मते भवेत् ।
गान्धर्वसंग्रहान्मार्गो ध्रुवो नास्तीति चेन्न तत् ॥

तदभावे कथं नेयं लघ्वष्टकपरिष्कृतम् ।
मन्द्रकं ह्येककलिकं देशीताला अथ स्फुटम् ॥

मीयन्ते सर्वलघवस्तस्मादेषोऽस्ति गम्यते ।
तत् सद्भावाल्लयोऽप्यत्र कश्चिद्भवति निश्चितः ॥

वर्णे पदे तथा वाक्ये लयस्त्रिविधमिष्यते ।
परस्परं यदैतानि प्रोच्यन्ते कालसाम्यतः ॥

तदेतेषु त्रिधा ज्ञेयो लयोन्तय विचक्षणैः ।
भो भो रे रे विह ज्ञेयो लयोऽक्षरगतो बुधैः ॥

रामचन्द्रपदांभोजमित्यादिपदसंचयः ।
मुरारिचरणाम्भोजं व्रजेऽहं सततं शुभम् ॥

इत्यादि वाक्यगो ज्ञेयो राजराजोपदेशतः । इति लयाः ।
नृत्तांगकर्मणां स्थायिमुखानां गीतिगामिनाम् ॥

तद्वथादीनां च पादानां वाद्यसंगतिचारिणाम् ।
लयस्य किंचित्कालात्तु वृत्तौ नियमनं यतिः ॥

समा श्रोतोगता गोपुच्छिकेत्येषा त्रिधा मता ।
प्रति स्वसा … … … तल्लयसमागतात् ॥

आदिमध्यं गतौ यस्मादेक एव लयो भवेत् ।
लयसाम्येन सर्वत्र समेरा … … शरिता ॥

स्रोतोगता यतिर्यत्र लयव्युत्क्रमतः क्रमात् ।
द्रुतस्थाने यदा मध्यो लयोऽस्यां दृश्यते पुनः ॥

तदा भेदो द्वितीयोऽस्या भुवोर्मत्रा निगद्यते ।
क्रमात्स्रोतो यदा गच्छेदुन्नतत्वं द्रुत चलन् ॥

तद्वदेषापि विज्ञेया द्रुतयोगाद्विलम्बितम् ।
व्रजन्ती क्रमतो लोके स्यातां स्रोतोगता बुधैः ॥

आदौ मध्यलयेनोते तृतीयाख्या विधा भवेत् ।
यदा श्रोतोगता तज्ज्ञैर्विपर्यासो द्विरुच्यते ॥

तदासौ त्रिविधो ज्ञेयो गोपुच्छाख्या यतिर्बुधैः ।
विलम्बितद्रुताभ्यां सा चतुर्धापि परैः स्मृता ॥

सा रक्तिभावाद्गीतज्ञैरुपेक्षापक्ष ईरिता ।
लघुद्वयाल्लघोः पूर्तिं दृष्ट्वा कैश्चिदिहेरितम् ॥

यत्योर्लयद्वयं तच्च मनोराज्यविजृम्भितम् । इति यतिः ।
गीतादिमानं वितधत्तालौ लौकिकतामियात् ॥

स एवात्र लयो नाम यत्सवचिन्नतामितः ।
आवापादिक्रियस्तालो गान्धर्वैर्यस्तु कीर्तितः ॥

गीतादिकं परिछिन्दन् स तालः काल एव हि ।
सर्पिण्यादिक्रियायोगो गान्धर्वे यस्तु कीर्तितः ॥

रक्तिमाधुर्यविरहात् सोऽदृष्टः फलदः परः ।
लौकिके तु पुनर्गीते दृष्टादृष्टफलप्रदे ॥

श्रोतृचित्तप्रसन्नार्थं ध्रुवपातादिका क्रिया ।
चतुरस्रस्तथा त्र्यस्रो द्वौ तालौ मुनिनोदितौ ॥

तत्र चञ्चत्पुटस्यैव गीतसर्वस्वभूमिषु ।
प्रयोगो जातिषु प्रायो बाहुल्येन यदीक्ष्यते ॥

तथोत्तमानां पात्राणां प्रवेशो विधिरीक्ष्यते ।
तत्रायं पूजितप्रायमाचार्याणां श्रितो मतात् ॥

न तु चाचपुटो यस्मादधमानामयं मतः ।
पुरा प्रसन्नवदनः पञ्चवक्त्रः कदाचन ॥

चतुर्भिर्वदनैर्वर्णान् चतुरः समुदीर्य च ।
चञ्चत्पुट इमान् पश्चात् विभ्रान्तः पार्वतीपतिः ॥

ततोऽयं सर्वलोकेषु पूज्यतामगमत् सदा ।
पञ्चवक्त्रस्य तुष्ट्यर्थं पञ्चवक्त्रविनिर्गताः ।
पञ्चतालाः समुद्दिष्टा मार्गे सन्मार्गदर्शिना ॥

कुम्भः

## ध्वन्युपशान्तिः

येषूपशान्तिः क्रियते कृत्वा तीव्रतरं ध्वनिम् ।
रागप्रयोगतत्त्वज्ञः विद्यादुपशमस्य तत् ॥

कुम्भः

## न

## नटः

अभिनेयार्थतादात्म्यपटुः स्फुटतरो नटः ।
पदार्थाभिनयान् चित्तं व्यञ्जयन् स्यात्तदग्रतः ॥

रसाभिधायकं नाट्यशब्दे नाट्येऽपि वृत्तितः ।
लक्षणाया वर्तमानमुभयं दर्शयन् स्फुटम् ॥

तथा च नृत्यशब्दार्थमुभयानुग्रहणं वदन् ।
नृत्ये चाभिनये साक्षाद्वृक्ति लक्षणयान्वयम् ॥

नाट्येनाभिनयं नृत्यशब्देन च रसं पुनः ।
वृत्त्या लक्षणया साक्षादुभयंदर्शयत्पदम् ॥

करणाङ्गहारनिचयैर्नृत्तमत्रोपदर्शयन् ।
रसलभ्ये नडे वास्य विकलस्य जीहीर्षया ॥

स्वात्मानं तन्मयं कुर्वन्निव रङ्गमुपाश्रयेत् ।
ततः कृतपविन्यासाद्रङ्गप्रणयपेशलम् ॥

कुम्भः

## नटलक्षणम्

चतुर्धाभिनयाभिज्ञो नटो भाषाविभेदवित् ।

हम्मीरः

## नटीनां हस्तव्यापाराः

पताकाद्याः कपित्थान्ता रूपकेऽष्टकरा ध्रुवे ।
ध्रुवे लयान्विलम्बादीनुद्ग्राहाभोगयोर्भृतः ॥

उद्ग्राहादिष्वद्रुताले लयः कार्यो विलम्बितः ।
विकल्पतः कलासाः स्युः खटकामुखपूर्वकाः ॥

सूच्यन्ता हस्तकाः द्विता कार्याः सर्वे ध्रुवे पदे ।
यतो लयास्त्रयः प्रोक्ताः हस्तकाः षोडश क्रमात् ॥

पद्मकोशादिडोलान्ताः प्रतिताले तु हस्तकाः ।
कार्याः पुष्पपुटाद्यास्तु चतुरस्रावसानकाः ॥

कुम्भः

## नतम्

सुप्तं स्रस्तकरद्वन्द्वमीषत्प्रसृतजङ्घकम् ।
तत्स्थानकं नतं खेदश्रमालस्यादिषु स्मृतम् ॥

कुम्भः

## नतपृष्ठम्

कपालघूर्णने जाते वक्षस्युत्तानिते नते ।
नतपृष्ठं परैरुक्तं वक्षोलकरणं त्विदम् ॥

कुम्भः

## नतम्—नाट्याङ्गम्

ताद्धिमिद्धिमिवर्णं तु तद्धिक्किटमेव च ।
नाम्ना तु नत्रमित्येवमुच्यते पूर्वसूरिभिः ॥

भरतकल्पलता

### ननान्दाहस्तः

शुकतुण्डो दक्षिणे च मुकुलो वामहस्तके ।
ननान्दायां प्रयुज्येत पार्वत्या परिकीर्तितम् ॥

भरतकल्पलता

### नन्दः—निःसारुकः

प्लुतमेकं भवेद्यत्र क्रीडातालः स कथ्यते ।
अनेन गीयते नन्दो नित्यं निःसारुकोत्तमः ॥

गान्धर्ववेदे

### —रासकः

प्लुतश्च गुरुरेकत्र तालो विद्याधरः स्मृतः ।
यत्रासौ रासको नन्दो गीयतेऽभ्युदये शुभः ॥

गान्धर्ववेदे

### नन्दावतीलक्षणम्

मालवः कोशिको रागस्तालस्तु प्रतितालकः ।
रीतिर्भवति गौडीया सात्त्वतीवृत्तिसंयुता ।
सैज्यावुत्साहवीरौ च वर्णः पीतोऽस्य देवता ॥

मोक्षदेवः

पोलोमी वैश्यजातिश्च खसहस्तकरौ मणौ ।
त्रयः पादाः समं प्रासैर्दृष्टां नन्दावती पुरा ।
पञ्च विष्णुपदान्यस्मिन्नेकस्तिग्मद्युतिर्मतः ॥
ऽऽ। ऽऽ। ऽऽ। ऽऽ। ऽऽ।

सोमराजदेवः

### नन्दावत्याः कामगणाः

एला नन्दावती प्रोक्ता कर्णाटैः स्मरलेखिका ।
उत्तरास्येऽथर्वजाता शूद्रजातिः सदेवता ।
गौरीगणेशगन्धर्वैर्वाणान्ता मन्मथाश्च षट् ॥

मोक्षदेवः

### नन्द्यावर्तम्

नन्द्यावर्तं तदा प्रोक्तं पक्षप्रद्योतके करौ ।

सङ्गीतमुक्तावली देवेन्द्रकृता

### नर्तकः

संप्रोक्तोऽपि च नर्तको निशितधीर्मार्गाख्यनृत्ये परं ।
विख्यातोऽत्र कृतश्रमोऽङ्गचलने दक्षः स्वकीये स्मृतः ॥

कुम्भः

करणेष्वङ्गहारेषु ललितेपूद्धतेषु च ।
देशीनृत्तविशेषेऽपि नृत्तशिक्षस्तु नर्तकः ॥

वेमभूपालः

### नर्तकलक्षणम्

नर्तकः सूरिभिः प्रोक्तो देशीमार्गे कृतश्रमः ।

हम्मीरः

### नर्तकी

नातिदीर्घा न खर्वा च सुपक्ष्मा च सुलोचना ।
सर्वाङ्गसुभगाचारनितम्बजघनस्तनी ॥
लयमानसमायुक्ता यतितालग्रहोत्तमा ।
कन्या सरभसा पुण्या नर्तकी समुदाहृता ॥

सङ्गीतनारायणे

रूपयौवनलावण्यधृतिमाधुर्यसंयुता ।
शिरीषदाममृदुलविलसद्भुजवल्लरी ॥
लयतालकलाभिज्ञा रसभावविचक्षणा ।
या शुद्धकुलजा योग्या कर्तव्या नर्तकी बुधैः ॥

वेमभूपालः

### —प्रवेशः

निष्क्रान्ते सूत्रधारादौ प्रवृत्तौ वाद्यगीतयोः ।
आयतस्थानकेनैव प्रविशेन्नर्तकी ततः ॥
अभिवन्द्यामरानेषा रङ्गे पुष्पाञ्जलिं क्षिपेत् ।
रसोचितानभिनयान् यथाशास्त्रमथाचरेत् ।
रसान्तरोऽप्यभिनयेद्यथाशास्त्रं रसाः पुरः ॥

विप्रदासः

### —प्रवेशनम्

सर्वेष्वासारितेष्वत्र नर्तकीनां प्रवेशनम् ।
वैशाखरेचितेन स्यादिति राजेन्द्रसम्मतम् ॥

कुम्भः

### —लक्षणम्

कृत्वा संपुतमेकहस्तचरणाम्भोजं द्वितीयं करं
नम्रं रेचनितं विधाय मधुरं वाद्यैर्मृदङ्गादिभिः ।
नानाविभ्रमचेष्टिताकुलपदं स्मेरानना नर्तकी
नाट्योक्तैः करणैर्विदग्धगतिभिर्लीलायिता नृत्यति ॥

कुम्भः

रूपयौवनसौभाग्या मध्यवेषविभूषिता ।
नातिदीर्घा नातिह्रस्वा कृशाङ्गी चारुलोचना ॥

प्रगल्भा प्रौढवर्णा च भूरिभावसमन्विता ।
स्मरवक्त्रा तु वेपोधैरङ्गलालित्यशालिनी ॥

तालचारी गतिज्ञानग्रहमोक्षविचक्षणा ।
यथास्थानमविच्छिन्नं भ्रूनेत्राङ्गविवर्तिनी ॥

चतुरस्रा सावधाना नानापाटपटीयसी ।
मलपादौ च निष्णाता गीतवाद्यानुवर्तिनी ॥

कर्णाटलाटसौराष्ट्रमहाराष्ट्रादिदेशजा ।
शिक्षिता सदुपाध्यायादुत्तमा नर्तकी भवेत् ॥

सोमराजदेवः

## नर्तनम्

नर्तनं त्रिविधं नाट्यं नृत्यं नृत्तमिति क्रमात् ।

सङ्गीतनारायणे

## नर्मगर्भः

नायको यत्र कार्यार्थवशाद्गुप्तगुणैरिह ।
नर्मगर्भो भवेदेष रूपसम्भावनादिभिः ॥

कुम्भः

## नर्मलक्षणम् ( कैशिक्यङ्गम् )

वल्लभाभ्यर्थनविधौ चारुवाग्वेषचेष्टितैः ।
सलीलहसितोपेतैः श्रृङ्गाररसपोषणैः ।
विदग्धकलिता क्रीडा नर्मेति परिकथ्यते ॥

वेमभूपालः

## नर्मस्फुञ्जः

नवसङ्गमसम्भोगरतिरागसमुद्भवैः ।
नर्मस्फुञ्जो भवेदत्रावसानभयसम्मुखः ॥

कुम्भः

## नर्मस्फोटः

नानाभावरसैर्युक्तः समग्ररसपेशलः ।
नर्मस्फोटश्च विज्ञेयो विशेषबहुलाकुलः ॥

कुम्भः

## नलिनीपद्मकोशकौ

पद्मकोशाभिधौ हस्तौ व्यावृत्तादिक्रियाकृतौ ।
आश्लिष्टौ स्वस्तिकक्षेत्रे व्यावृत्तपरिवर्तितौ ॥

मिथः पराङ्मुखौ स्यातां नलिनीपद्मकोशकौ ।
मणिबन्धसमाश्लिष्टौ कनिष्ठाङ्गुष्ठसम्मुखम् ॥

श्लिष्टलक्षणसंयुक्तावेता वन्यैरुदाहृतौ ।
एतावन्यतमक्षेत्रे स्कन्धवक्षोजजानुतः ॥

प्रोक्तौ विवर्तितौ कैश्चित् नलिनीपद्मकोशकौ ।
एतौ कीर्तिधराद्यास्तु पद्मवर्तनिकां जगुः ॥

जायनः

## नवरत्नमुखम्

विश्लिष्टवर्णितार्द्यैश्च नवमिर्दशभिश्च वा ।
उत्कैस्संसर्गरूपेण रचितैश्चालयैर्यदि ॥

आकेशबन्धमुत्क्षिप्तैः पश्चात्स्वस्तिकतां गतैः ।
ततोऽन्यां च परावृत्तौ धारासंमुखतां गतौ ॥

मण्डलाकारसंप्राप्तौ तिरश्चीनौ ततः परम् ।
आविद्धावपविद्धौ च युगपत्क्रमतोऽथवा ॥

तत्कालार्हक्रियायोग्यौ तदान्दोलनसंयुतौ ।
करावेवं यत्र तत्स्यान्नवरत्नमुखं तदा ॥

## नवरेखाः

आद्या रेखा पुरः पात्रे वयो रेखा द्वितीयिका ॥
कला तृतीयरेखा स्यात्सौभाग्या च चतुर्थिका ।
पञ्चमीरसरेखा च षष्ठी श्रीः शोभनं वपुः ।

सप्तमी मानरेखा च श्रृङ्गारिजनवीक्षिता ।
एवं हि नव रेखाभी रङ्गभूमिः प्रशस्यते ॥

हम्मीरः

## नवधावंशविभागः—कीर्तिधरस्य

स्थानत्रयस्य निष्पत्त्यै केचित्कीर्तिधरादयः ।
नवैवात्र जगुर्वंशान् व्यवस्थातस्तथोच्यते ॥

आदित्यो विश्वमूर्तिश्च मन्द्रस्वरविधायकौ ।
नाथेन्द्रश्च महानन्दो रुद्रवंश इति त्रयः ॥

मध्यस्वरविधातारस्तथा तारविधायकाः ।
षण्मुखो मुनिवंशश्च वसुवंश इति त्रयः ॥

सर्ववंशमयत्वेन त्रिस्थानस्वरसाधकः ।
वर्णालङ्कारधात्वादिवाद्यसंवेदनत्वतः ॥

नवमो मनुवंशश्च तन्मते प्रवरो मतः ।
एवं वंशा नवैवेति व्यवस्थातः प्रकीर्तिताः ॥

कुम्भः

### नवस्थानकानि

सुस्थं निष्कम्भितं क्रान्तमुत्कटं च मदालसम् ।
स्रस्तालसं जानुगतं मुक्ताजानुविमुक्तकम् ॥
एवं नवोपविष्टस्य स्थानान्यूचे मुनिः स्वयम् ।
सममाकुञ्चितञ्चैव प्रसारितविवर्तिते ॥
नतमुद्वाहितं चेति स्युः सुप्तस्थानकानि षट् ।
षट् पुंसां सप्त नारीणां त्र्युत्तराविंशतिर्द्वयोः ॥
स्थानकान्युपविष्टस्य नव सुप्तस्य षट् क्रमात् ।
एवं स्युर्मिलितान्येकपञ्चाशदखिलान्यपि ॥
वैष्णवं समपादं च पुनरुक्तेन युज्यते ।
देशीये द्वितयं नोचुः केचित्तन्न मनोहरम् ॥
वैष्णवं समपादं च देशीस्थानेषु यत्स्थितम् ।
स्त्रीपुंसयोस्तत्समानं मार्गस्थानस्थितं पुनः ॥
पुंसामेवेति युक्तैव पुनरुक्तिर्व्यवस्थितेः ।
विनियोगवती नैते विनियुक्ते तु ते उभे ॥
भिन्नं तयोर्लक्ष्म चेति कथनं पुनरर्थवत् ।
सर्वेषां लक्षणं वच्मि विप्रदासो विदां वरः ॥

विप्रदासः

### नागबन्धः

तदेव नागबन्धं स्यान्नागबन्धवदासने ।
दक्षिणान्तु यदा जङ्घां वामोरुः पृष्ठदेशगाम् ।
निदध्यादुपविष्टः सन्नागबन्धं तदादिशम् ॥

कुम्भः

—हस्तपाटः

व्याप्रियेते करौ यत्र विपर्यासात्पुटद्वये ।
तन्नागबन्धमाचष्टे प्रत्येकं वा पुटद्वयम् ॥
कराभ्यां ताडयेद्यत्र नागबन्धो भवेदसौ ।
टन गिन गिन गिनन गिड गिड ग गि ॥

कुम्भः

### नागरनृत्यम्

तदेतन्नागरं नृत्यं कुण्डली सूच्यते बुधैः ।
ततो लास्याङ्गकैः कुर्याद्विचित्रं चित्रशोभितम् ।
विषयोद्धतमाधुर्यैस्तद्विचित्रमिहोच्यते ॥

शुभङ्करः

### नाटकम्

चूर्णिकावाक्यश्लोकैश्च तथा गेयं तु नाटकम् ।

भरतकल्पलतामञ्जरी

### नाटकलक्षणम्—पाठ्यम्

नाटकात्मनि पाठ्यं तु ह्रस्वदीर्घप्लुतात्मकम् ।
अक्षरं त्रिविधं योज्यं रसभावानुसारतः ॥
लघ्वक्षरप्रधानं स्यात्पाठ्यं वारादिके रसे ।
करुणादौ रसे पाठ्यं गुर्वक्षरकृतं भवेत् ॥
पठने ब्राह्मणानां च स्मृते च परिदेविते ।
असूयते च पाठ्यं स्यात्प्लुताक्षरसमन्वितम् ॥
ओंकारोऽध्ययनो ज्ञेय ओंकारः परिदेविते ।
असूयिते स्यादूकार आकारस्तु स्मृते भवेत् ॥
यथारसं यथाभावं ह्रस्वदीर्घप्लुतानि तु ।
अक्षराणि प्रयुञ्जीत नाट्यदक्षो यथोचितम् ॥
अगूढशब्दार्थयुतं सुखबोधं मनीषिभिः ।
पदार्थैर्ललितैर्युक्तं बुद्धिमन्नर्तनोचितम् ॥
सन्धिसन्धानरुचिरं नानाविधरसोज्वलम् ।
एवं विधं नाटकं स्यात्प्रेक्षकानन्दकारणम् ॥

वेमभूपालः

### नाटीलक्षणम्

नटधुपाङ्गं निगकम्पा मन्द्रपञ्चमभूषिता ।
छाया नटया च शृङ्गारे सवीरे गीतकोविदैः ॥

मोक्षदेवः

### नाट्यम्

नाट्यं तन्नाटकेष्वेव योज्यं पूर्वकथायुतम् ।

भरतकल्पलतामञ्जरी

सोऽयं स्वभावो लोकस्य नानावस्थान्तरात्मकः ।
सोऽङ्गाभिनयनैर्युक्तो नाट्यमित्युच्यते बुधैः ॥

सङ्गीतनारायणः

नानाविधैर्यथा पुष्पैर्मालां बध्नाति माल्यकृत् ।
अङ्गोपाङ्गै रसैर्भावैस्तथा नाट्यं प्रयोजयेत् ॥

कुम्भः

देवर्षिक्षितिपालपूर्वचरितानालोक्य धर्मोदय-
स्तद्भावाश्रितभूमिकाभिनयने स्यादर्थसिद्धिः परा ।
सङ्गीताङ्कचित्रवृत्तिरचनावश्या भवन्त्यङ्गना
ज्ञानं शंकरसेवयेति कथितं नाट्यं चतुर्वर्गदम् ॥

शुभङ्करः

## नाट्यगृहापूजने दोषकथनम्

अपूजयित्वा रङ्गन्तु न कुर्यात्प्रेक्षणक्रियाम् ।
कुरुते यस्तु मूढात्मा तिर्यग्जातिमवाप्नुयात् ॥

विप्रदासः

## नाट्यधर्मीलक्षणम्

यश्च कक्ष्याविभागोऽपि मुनिभिः शास्त्रचोदितः ।
नानादेशाश्रया रङ्गमण्डपे संप्रयुज्यते ॥
आगम्याभूमिकायाश्च गम्या नरी नियुज्यते ।
आगम्यापि वधूर्यत्र गमाया भूमिकां भजेत् ॥
अपि चैकां भूमिकां तु विधाय चेतुलक्षणम् ।
अपरां भूमिकां प्राप्नोत्यात्मनः कौशलेन तु ॥
इत्यादिनाट्यनिपुणैर्यच्च नाट्यक्रियोचितम् ।
प्रयुज्यते च तत्सर्वं नाट्यधर्मीति कथ्यते ॥

वेमभूपालः

## नाट्यधर्मी

लीलाङ्गहाराभिनयसत्त्वभावरसैर्युतम् ।
अतिवाक्यक्रियायुक्तं नाट्यलक्षणसंयुतम् ॥
स्वरालङ्काररुचिरं वाक्यखण्डमनोहरम् ।
प्राप्य वेषान्तं तैः पात्रैर्विविधैरन्वितं च यत् ।
नाट्यं तन्नाट्यतत्त्वज्ञैर्नाट्यधर्मीति कथ्यते ॥

वेमभूपालः

## नाट्यप्रमाणम्

लोको वेदस्तथाध्यात्मं प्रमाणं त्रिविधं स्मृतम् ।
लोकाध्यात्मपदार्थेषु प्रायो नाट्यं व्यवस्थितम् ॥

कुम्भः

## नाट्यप्रयोगः

मण्डलानां च देशानां पुराणां धरणीभृताम् ।
अन्येषां स्थावराणां च नाम ऋक्षकरक्रमैः ॥
सङ्केतपूर्वैश्चिह्नैश्च क्वचित्क्वचिदुपाश्रितैः ।
नाट्यप्रयोगो विज्ञेयो वायुसूनुमतान्तरे ॥

शृङ्गारशेखरः

अथ नाट्यप्रयोगस्तु द्विविधः परिकीर्तितः ।
सुकुमारस्तथाविद्धस्तयोर्लक्षणमुच्यते ॥
मधुरललिताङ्गहारं महिलाजनसंप्रयोगमभिनीयम् ।
स्वल्पपुरुषानुषङ्गं नाट्यं सुकुमारमीरितं तज्ज्ञैः ॥

नाटकं च प्रकरणं भाणो वीथी च नाटिका ।
अङ्कश्चेत्युपदिष्टानि रूपकाणि पुरातनैः ।
सुकुमारप्रयोगाणि मानुषैराश्रितानि तु ॥
बहुविधयुद्धनिबन्धनमुद्धतविविधाङ्गहारसंपन्नम् ।
मायेन्द्रजालबहुलं पुरुषैर्बहुभिः प्रयोज्यं च ॥
स्वल्पवधूजनविलसितमारभटीसात्त्वतीप्रायम् ।
रक्षोदानवदैत्यैः कलितं नाट्यं तदाविद्धम् ॥
डिमः समवकारश्च व्यायोगेहामृगौ तथा ।
एतान्युक्तानि चाविद्धप्रयोगाणि प्रयोक्तृभिः ॥
एतौ नाट्यप्रयोगौ तु यथाभावं यथारसम् ।
देशीरूपकभेदेष्वप्यूहनीयो विचक्षणैः ॥

वेमभूपालः

## नाट्यफलम्

राज्यसौख्यमपि स्वल्पं भरतस्य मुनेर्मते ।
वराङ्गनाजनैः सङ्गः सन्नाटकविनोदनम् ॥
इतोऽधिकं सुखं किञ्चिन्न लोके विद्यते क्वचित् ।
सुखाय यशसे धीरैर्मतं नाट्यप्रचारणम् ॥

जगद्धरः

## नाट्यभेदाः

शृङ्गारनाट्यमुग्रं च भृंगिनाट्यं च चित्रकम् ।
नारीनाट्यं च चालीयं शुद्धनाट्यं च विश्रुतम् ॥
हस्तचालीयनाट्यं च मार्गनाट्यं च सम्मतम् ।
अङ्गहाराख्यनाट्यं च पादचारी च पार्श्वकम् ॥
मुखचालीयनाट्यं च लवणीनाट्यमीरितम् ।
देशीनाट्यं फेरणी च लीलानाट्यं ततः परम् ॥
ताण्डालिकं च सन्धिश्च प्रान्तनृत्यं प्रकाश्यते ।
भूचारिनाट्यमावृत्तं विद्युद्भ्रमरनाट्यकम् ॥
पुष्पाञ्जलिस्तु नाट्यं च चतुर्विंशतिनाट्यकम् ।
यत्यादिनाट्यभेदाश्च भरतज्ञैरुदाहृताः ॥

भरतकल्पलतामञ्जरी

पेरणी गौण्डली चेति नाट्यं दशविधं स्मृतम् ।

कुम्भः

—कोहलोक्ताः

ततः परं प्रवक्ष्यामि नाट्यनृत्तविकल्पनम् ।
नटस्यातिप्रवीणस्य कर्म वा नाट्यमुच्यते ॥

मार्गो देशीति नाटयस्य भेदद्वयमुदाहृतम् ।
ब्रह्मणा यत्तपस्तप्त्वा मा ... शवयोः पुरा ॥

मार्गनाटयं ततः प्राहुः तच्च विंशतिधोच्यते ।
नाटकं सप्रकरणं बाणः प्रहसनं डिमः ॥

व्यायोगसमवाकारौ वीथ्यङ्केहामृगा इह ।
रूपकाणि दशैतानि शङ्करेणं विभाषिरे ॥

नाटिका प्रकरणिका भाणिका हासिका ततः ।
वियोगिनी च डिमिका कलोत्साहवती पुनः ॥

चित्रा जुगुप्सिता चैव विचित्राचेति दुर्गया ।
एवं मार्गं नाटयमुक्तं शिवाभ्यां ब्रह्मणा पुरा ॥

दत्तिलादिभिरुक्तानि देशीरूपाणि षोडश ।
सट्टकं त्रोटकं गोष्ठी बृन्दकं च ततः परम् ॥

शिल्पकं प्रेक्षणं चाप्युल्लापकं चेत्यतः परम् ।
हल्लीसरासिके उल्लोप्यङ्कं श्रीगदितं तथा ।
नाटयरासकदुर्मल्लीप्रस्थानं काव्यलासिकाः ॥

इति षोडशरूपाणि ।

नृत्तानि द्वादश प्रोक्ता डोम्बिका भाणिका तथा ।
भाणकः प्रस्थानकश्च लासिकारासिकास्तथा ॥

दुर्मल्लिका विदग्धश्च शिल्पिनी हस्तिनी तथा ।
भिन्नकी तुम्बिकी चैव द्वादशोक्तानि सूरिभिः ॥

एषामलङ्कारशास्त्रे लक्षणं बहुशोदितम् ॥

सङ्गीतनारायणे

## नाट्ययुक्तिः

नाट्योपयोगिनः प्रायो विचित्राभिनया मया ।
ते लिख्यन्तेऽभिनेयार्थं व्यंजयन्तीव ते स्फुटम् ॥

सन्निकर्षं विना यस्य न वेत्त्यर्थं कथंचन ।
तस्योक्तो मनसो भावः त्रिधा तान्प्रति कोविदैः ॥

इष्टोनिष्टस्तथामध्यस्तस्याभिनयनं यथा ।
मुखस्यातिविकासेन शरीराह्लादनेऽपि च ॥

तथोल्लुकसितेनेष्टं दर्शयेन्नाट्यकोविदः ।
अप्रदानेन नेत्रस्य संकोचादक्षिणेऽनुयोः ॥

परावृत्ताख्यशेषेणाप्यनिष्टं संप्रदर्शयेत् ।
जुगुप्सया न चात्यन्तं मनसा नातिहर्षणात् ॥

मध्यभावेन मध्यस्थं भावं धीमान्निरूपयेत् ।
कर्णदेशस्थतर्जन्या तथा तिर्यङ्निरीक्षणात् ॥

पार्श्वानतेन शिरसा सुधीः शब्दं प्रदर्शयेत् ।
सभ्रूक्षेपेण नेत्रेण मनायाक्कुंचितेन च ॥

तदा गण्डमुखस्पर्शात्स्पर्शो धीरैर्निरूपितः ।
शिरःस्थितौ पताकौ द्वौ कृत्वेषद्वलितानन: ॥

दृष्ट्या निर्वर्ण्यंयन्त्यापि रूपमेवं विनिर्दिशेत् ।
नयने किंचिदाकुंच्य फुल्लां कृत्वा च नासिकाम् ॥

एकोच्छ्वासेन च प्राज्ञो रसगन्धौ प्रदर्शयेत् ।
नृत्याय देवरंगायाऽशब्दाद्यभिनये मया ॥

निरूपितस्तथा ज्ञेयो इन्द्रियाभिनयो बुधैः ।
विधायोत्तानितौ हस्तौ पताकौ स्वस्तिकौ च्युतौ ॥

शिरसोद्वाहितावेव तथोर्ध्वप्रेक्षणेन च ।
प्रदोषं दिवसं रात्रिं प्रभातं गगनं घनान् ॥

जलाशयान् वनान्तांश्च नक्षत्राणि ग्रहान् दिशः ।
नानादृष्टिषु तं धीरोऽभिनयेन्नाट्यनृत्तये ॥

एताभ्यामेव हस्ताभ्यां सनेत्रशिरसा तथा ।
अधस्तात्प्रेक्षणेनापि भूमिस्थं संप्रदर्शयेत् ॥

दृष्ट्वा मुकुलहस्तेन नतेन शिरसापि च ।
हृदि संदंशहस्तेन सव्येनैकमना नटः ॥

वितर्कितं तथा ध्यानं निर्दिशेन्नाट्यनृत्ययोः ।
विधायोद्वाहितं शीर्षं तथोर्ध्वं हस्तपक्षकम् ॥

दीर्घमानं तथोच्चत्वं प्रासादस्य प्रदर्शयेत् ।
अरालेन तथा वामभागोद्वाहितशीर्षतः ॥

भतध्वान्दनिमित्तानि श्रान्तं वाक्यं च दर्शयेत् ।
परितो गतया दृष्ट्या तर्जन्या भ्रमणेन च ॥

सर्वार्थग्रहणद्द्देश्यं सुधीभिर्नाट्यनृत्तयोः ।
उत्तानितौ पताकौ द्वौ कृत्वा स्वस्तिकविच्युतौ ॥

तथोद्वाहितशीर्षेण चित्रवागवलोकनैः ।
प्रसन्नास्यं तथा स्तब्धसर्वेन्द्रियसमन्वितः ॥

शरदं निर्दिशेन्नाटये पुष्पैरपि तदुद्भवैः ।
कायसंकोचनाद्वक्रे रिक्षयोर्ध्वनिरीक्षणात् ॥

आभ्यामेव कराभ्यां तु पूर्वोक्तशिरसा तथा ।
हेमन्तर्तुं विनिर्दिश्य मानवैर्मध्यमोत्तमैः ॥

दन्तोष्ठशिरसःकम्पाद्गात्रसंकोचनादपि ।
अधमोऽभिनयेच्छीतं क्रन्दितैरपि सीत्कृतैः ॥

उत्तमोऽपि कदाप्येवमवस्थान्तरसंयुतः ।
शीताभिनयनं त्वेवं विदध्याद्वसनोद्भवम् ॥

गन्धघ्राणैः प्रसूनानामृतुजानां तथा बुधः।
संस्पर्शाद्रूक्षवातस्य शिशिरं सन्निरूपयेत्॥

सहर्षोत्पादकारंभै रूपभोगैर्विचित्रितैः।
अभिनेयो वसन्तस्तु नानापुष्पप्रदर्शनात्॥

सवीचीनैः भूमितापैस्तथा स्वेदापमार्जनात्।
संस्पर्शाच्चोष्णवातस्य धीरो ग्रीष्मं विनिर्दिशेत्॥

हस्तौ शिरस्तथा दृष्टिः शरदीव विनिर्दिशेत्।
शिशिरर्तौ वसन्ते च ग्रीष्मेऽपि निपुणो नटः॥

शिखिनां रम्यवाणीभिरिन्द्रगोपैः सशाद्वलैः।
अधोमुखपताकाभ्यां शिरसोद्वाहितेन च॥

तथोर्ध्वप्रेक्षणादेवं प्रावृषं सन्निरूपयेत्।
चिह्नं यद्यस्य रूपं च कर्म वा वेष एव च॥

निर्दिशेत्तमृतुं तेन तथेष्टानिष्टदर्शनात्।
ऋतूनिमानर्थवशात्प्रयुंजीत यथा रसम्॥

सुखितः सुखितेष्वेव दुःखितो दुःखितेषु च।
आविष्टो येन भावेन यः सुखेनापरेण वा॥

सदव्जनितसंस्कारस्तन्मयं वीक्षतेऽखिलम्।
प्रह्लादनेन गात्रस्य स्पर्शस्य ग्रहणात्तथा॥

सुखगन्धरसं वायुं चन्द्रज्योत्स्नां निरूपयेत्।
वासोऽवगुण्ठनाद्घ्रातुं धूलिं धूमधनंजयौ॥

उष्णं च भूमिसंतापं दिशेच्छायाभिवांछया।
दृष्ट्वोर्ध्वमाकेकरया मध्याह्ने दर्शयेद्रविम्॥

सौम्यानि यानि वस्तूनि सुखभावोद्भवान्यपि।
निर्दिशेत्तानि रोमांचैर्गात्रस्पर्शैश्च नाट्यवित्॥

दर्शयेत्तीक्ष्णरूपाणि वस्तून्यौग्र्यकृतानि च।
ससौष्ठवैः साभिमानैर्गात्रैराटोपसंयुतैः॥

गम्भीरार्थानुदात्तार्थान्नाट्यज्ञस्सन्निदर्शयेत्।
ध्वजच्छत्रपताकादीन् दर्शयेद्दण्डधारणात्॥

प्रहरान्निविधांश्चैव नानाशस्त्रग्रहैर्दिशेत्।
विस्फुलिंगान् घनस्वानान् विद्युदुल्कार्चिषस्तथा॥

त्रस्तैरंगै ... स्तद्वक्षिनिमेषैर्निर्दिशेद्बुधः।
उद्वेष्टितौ परावृत्तौ कृत्वा हस्तौ शिरो नतम्॥

जिह्वादष्टयाङ्गसंकोचादास्यप्रच्छादनेन च।
अलिरेणुपतंगानां तोयस्य च निवारणम्॥

नभस्तेजोऽनिलं चोष्णं नाट्यज्ञः सन्निरूपयेत्।
अथ पुंसां तथा स्त्रीणामखिलाभिनयं पृथक्॥

भावानुभावसंयुक्तं कथयाम्यधुना क्रमात्।
आश्लेषणाच्छरीराणां सस्मितान्नयनादपि॥

तथोल्लुकसनेनापि पुमान् हर्षं विनिर्दिशेत्।
शीघ्रमुत्पन्नरोमांचबाष्पसंरुद्धलोचनः॥

भावं विनिर्दिशेदेवं नर्तकः स्मितसंयुतः।
निःश्वासेनांगकम्पेन दशनेनाधरस्य च॥

क्रोधं निरूपयेद्धीमानुद्वृत्तारुणलोचनः।
चिबुकोष्ठप्रकंपेन बाष्पपूर्णेक्षणेन च॥

शीर्षस्य कम्पनेनापि भ्रुकुटीरचनेन च।
अङ्गुलिस्फोटनान्मौनात्स्रगलंकारवर्जनात्॥

आयतस्थानकं धार्यैरोषेर्ष्ये निर्दिशेत् स्त्रियः।
अधिकोच्छ्वासनिःश्वासैरधोमुखविलोकनैः॥

विहाय प्रेक्षणाच्चापि नृणां दुःखं विदर्शयेत्।
शिरोनिघातात्सद्यानै रोदनैरभितापतः॥

भूमिघातादपि स्त्रीणां दुःखं धीमान्नियोजयेत्।
उद्वेगसंभ्रमैः शस्त्रसंपातेनापि साध्वसम्॥

पुंसामभिनयेद्धीमान् धैर्यवेगादिभिस्तथा।
लोलतारकनेत्राभ्यामङ्गस्फुरितकम्पितैः॥

पार्श्वावलोकनैश्चित्रत्रासादाक्रन्दितेन च।
आलिङ्गनेन पुंसोऽपि स्त्रिया भीतिं प्रदर्शयेत्॥

पुंस्कृतः स्त्रीकृतो भावो द्विधेत्यभिनयं प्रति।
तत्राद्यो धैर्यमाधुर्यसंपन्नो ललितो परः॥

कम्पनेन शरीरस्य घूर्णनान्नेत्रयोरपि।
हंसास्याभिधहस्तेन दक्षिणेनेतरेण तु।
कटिस्थेनार्धचन्द्रेण समेन शिरसा तथा।
ब्रह्माख्ये स्थानकेनापि धीमानृषभमादिशेत्॥

शुकतुण्डेन हस्तेन दृष्ट्या करुणया तथा।
अधोमुखेन शीर्षेणाश्वक्रान्तस्थानकेन च।
चार्यार्ध्यचितया धीमान्गान्धारं स्वरमादिशेत्॥

पताकौ स्वस्तिकौ कृत्वा शिरसा विधुतेन च।
शैवाख्यस्थानकेनापि कटीभिन्नेन वा पुनः।
दृष्ट्या च हास्यया धीरोऽभिनयेन्मध्यमं स्वरम्॥

कुतवालपल्लवौ हस्तौ धुतेन शिरसा तथा।
वैष्णवस्थानकेनापि दृष्ट्या कान्ताख्यया तथा॥

परावृत्ताख्यमूर्ध्ना च प्रत्यालीढाभिधेन च।
स्थानकेन विनिर्देश्यो धैवतो निपुणैर्नटैः॥

हस्तेन कटिहस्तेन करिहस्तेन दीनया ।
दृष्ट्वावधूतशिरसा निषादं सन्निरूपयेत् ॥
सुधाब्धिमतमाश्रित्याशोकमल्लेन भूभुजा ।
अभिनीताः स्वराः सप्त षड्जाद्या नाट्यवेदिनः ॥
तं निर्दिशेत्पताकेन द्विकारं चतुरेण च ।
तोंशब्दं त्वर्धचन्द्रेण तथा टेन्त्रिपताकतः ॥
कर्तर्योस्येत्नं पञ्चवर्णा वाद्योद्भवा मया ।
अभिनीता यदौचित्यमभिनेया परें बुधैः ॥
ब्रह्मस्थः शुकतुण्डेन वामेनान्येनपाणिना ।
तिर्यक्स्थितेनोपलाभ्रं सूच्यास्येन विनिर्दिशेत् ॥
तेन शब्दं सुधीरेवमन्यं च विरुदादिकम् ।
यथौचित्यं हस्तकाद्यैरन्यै रभिनयेदिति ॥
प्रसारितभुजो मुष्टिर्वामोऽन्यः खटकामुखः ।
कर्णस्थो धनुराकर्षनियुक्तो नृत्तपण्डितैः ॥
खटकास्यकरस्थाने करः सूचीमुखो यदा ।
तदासौ बाणसन्धाने विद्वद्भिः परिकीर्तितः ॥
श्रव्यं श्रवणयोगेन मुखयोगेन वाचिकम् ।
स्पृश्यमङ्गादियोगेन चक्षुर्योगेन चाक्षुषम् ॥
गन्धाघ्राणस्य योगेन स्वादं जिह्वाभियोगतः ।
एवं योग्येन हस्तेनाभिनयेन्नृत्यकोविदः ॥

अशोकः

## नाट्ययुतम्

ध्रुवास्त्वभिनयो हर्षशोककोपादिभिः स्फुटम् ।
रसभावान्वितस्तत्तत् स्थानेऽन्वर्थानुसारतः ।
क्रियते यस्तु चतुरैस्तच्च नाट्ययुतं भवेत् ॥

वेममूपालः

## नाट्यरङ्गः

संसाध्या भूमिरायामे पूर्वपश्चिमयोर्दिशोः ।
दक्षिणोत्तरविस्तारा प्रतीच्या विभजेच्च ताम् ॥
दण्डैश्चतुर्भिर्द्वाभ्यां च द्वाभ्यामष्टाभिरेव च ।
चत्वारि स्युः क्रमाद्भागास्तेषां पश्चिमतो भवेत् ॥
नेपथ्यस्य गृहं तस्य पुरतो रङ्गशीर्षभूः ।
तदग्रतो रङ्गपीठं तत्पुरस्तात्सभास्पदम् ॥

कुम्भः

## नाट्यं रङ्गप्रवृत्तम्

या या सलीला नियता गतिश्च रङ्गप्रवृत्तस्य विधानयुक्ता ।
तामेव कुर्यादवियुक्तसत्त्वो यावत्तु रङ्गात्प्रतिनिस्सृतः स्यात् ॥

कुम्भः

## नाट्यरासकम्

यत्र स्त्रीभिर्वसन्ततौ नृत्यतेऽभिनयात्मकम् ।
वसन्तरागसंबद्धैर्गीतैरौद्धत्यवर्जितम् ।
चरितैश्चित्रितं राज्ञस्तदुक्तं नाट्यरासकम् ॥

कुम्भः

हास्यशृङ्गारभूयिष्ठं दशलास्याङ्गभूषितम् ।
उदात्तनायकं चैव पीठमर्दोपनायकम् ॥
यत्र वासकसज्ज्यत्र नायिकोदात्तनायकौ ।
नाट्यरासकमेकाङ्कमिदमाह महामुनिः ॥

शुभङ्करः

## नाट्यलक्षणम्

लोकस्य च स्वभावो यः सुखदुःखविमिश्रितः ।
नाट्यं तस्यानुकरणं बिम्बिताभिनयान्वितम् ।
स्पन्दनार्थतया धातोर्नटैः सात्त्विकभूरि तत् ॥

नृत्तरत्नावली

## नाट्यवेश्म

नाट्यवेश्म ततः कुर्याद्वस्तुलक्षणलक्षितम् ।
दोषैरदूषिता भूमिः सामागेरश्मिरादृढा ॥
अनूषरा भूमिदोषैः कीलकाद्यैरदूषिता ।
लाङ्गलोल्लिखिता शस्ता तत्रर्क्षाणिसमासतः ॥
हस्तपुष्यानुराधान्त्यसौम्यचित्रोत्तरासु च ।
द्विदैवत्ये दिगीशस्ते विष्टयादैरपरिप्लुते ॥
पुण्याहवाचनाद्येन नाट्यवेश्म समारभेत् ।
समां कृत्वा मुखं तत्र सितं तन्तुं प्रयत्नतः ॥
कार्पासाद्यन्यतरजं दृढं सूत्रं प्रसारयेत् ।
यथाकृष्टं बलात्पुम्भिर्न त्रुट्यति कदाचन ।
मध्यत्रिभागतुर्यांशे त्रुटिते क्रमतो भवेत् ॥

कुम्भः

## नाट्यवेश्मक्रमः

सद्दिष्टं तत्प्रबोद्धव्यमणुश्चैव रजस्तथा ।
वालो लिक्षा च यूका च यवाश्चैवाङ्गुलं तथा ॥
एकैकोत्तरवृद्ध्या च क्रमादष्टगुणं त्विदम् ।
हस्ताङ्गुलानां विंशत्या चतुरन्वितया मितः ॥
चतुर्हस्तो भवेद्दण्डो नाट्यवेश्मगतो सदा ।
तत्र स्यात्प्राकिनां वेश्म सप्तविंशतिदण्डकम् ॥

दैर्घ्यविस्तरतस्तस्मात्तदर्धेन मितं पुनः।
नृणां षोडशभिर्दण्डैर्मितमायामतो मतम्॥
त्रिरष्टभिस्तु विस्तारे तत्र सूत्रं प्रसारयेत्।
नाट्यवेश्म न कर्तव्यमतथोर्ध्वं कदाचन॥

कुम्भः

## नाट्यवेश्मविभागः

सत्रिधा गदितं वेश्म विकृष्टं चतुरश्रकम्।
त्र्यश्रं चेति पुनर्मध्यं दीर्घं सममिति द्विधा॥
तत्राद्यं देवतागारमतिदीर्घमनुत्तमम्।
चतुरस्रं च यद्दीर्घं भूपतीनां तदीरितम्॥
ब्राह्मणादेर्गृहं प्रोक्तं चतुरस्रं समं बुधैः।
शूद्रादिहीनवर्णानां वेश्म त्र्यश्रमिहोदितम्।
प्रेक्षागृहाणां निर्माणे प्रमाणं विश्वकर्मणा॥

कुम्भः

## नाट्यशाला

भूशुद्धिं बलिकर्मादि कृत्वा भित्तिं प्रयोजयेत्।
भित्तिव्यापारवृत्तौ तु स्तम्भानां स्थापनं भवेत्॥
शुभे दिने सानुकूले स्थिरनक्षत्रलग्नयोः।
स्तम्भानां स्थापनं कुर्यात्रिरात्रोपोषितो गुरुः॥
स्तम्भास्तु खादिराः साजा पानसा अकुचन्दनाः।
अग्रन्थयो ह्यसुषिराः स्थूलाश्चानपिच्छलाः॥

तत्र मन्त्रः –

यथाचलो गुरुर्मेरुः हिमवांश्च यथाचलः।
यथावहो नरेन्द्रस्य तथा त्वमचलो भव॥
एवं मन्त्रं समुच्चार्य स्थापयेत्तत्र ......म्भणम्।
दृश्यते यावदेतेषां तदर्धं विखनेद्भुवि॥
तेषां मूलानि यत्नेन सिकताभिः प्रपूरयेत्।
विदध्याद् दीर्घविस्तारो पात्रनाट्यानुरूपतः॥

दामोदरस्तु–हस्तविंशति विस्ताररङ्गभूमिर्मनोहरा। इत्याह॥

शालामध्येन कर्तव्यं स्तम्भानां स्थापनं बुधैः॥
कुर्यादुपरिभागं तु दारुवृद्धिभिरावृतम्।
गवाक्षौ भित्तयश्चित्रैः सालभञ्जीभिरन्विताः॥
कलशैश्च पताकाभिः वितानैस्तोरणैरपि।
ऊर्ध्वभागो युतः कार्यः पुष्पमाल्यैरलङ्कृतम्॥
अधोभागे कुट्टिमः स्यात् सुधाभिः परिलेपितः।
नातिश्लक्ष्णं स्थलं कुर्यात्पादो न स्खलितो यथा॥

धाम्नास्त्रितयभागेन नेपथ्यं पश्चिमादिशि।
कारयेत्तत्र पात्राणां वेशनातोदका कचः (?)॥

सङ्गीतनारायणे:

## नाट्यशालालक्षणम्

निष्पत्तिर्नाट्यशास्त्रस्य तत्पारम्पर्यकीर्तनम्।
निर्मितिर्नाट्यशालाया निवेशोऽथ सभापतेः॥
सन्निवेशः सभायाश्च सर्वरंगार्थकीर्तनम्।
कीर्तनं पूर्वरङ्गाङ्गं प्रत्याहारादिलक्षणः॥
सम्यग्नान्दीलक्षणञ्च ध्रुवासोपोहना ततः।
पात्रस्याथ प्रवेशश्च तथैवाङ्गनिरूपणम्॥
प्रत्यङ्गलक्ष्मोपाङ्गानां लक्ष्माभिनयलक्षणम्।
हस्तस्याकरणं हस्तक्षेत्रस्यापि च लक्षणम्॥
प्रचारो हस्तयोस्तद्वद्धस्तकर्माण्यनुक्रमात्।
स्थानकानि तथा चार्यो द्विविधा मण्डलान्यपि॥
द्विविधानि तथा नृत्तकरणानि तथैव च।
तानि चोत्प्लुतिपूर्वाणि कलासाश्च सरेचकाः॥
करणैरभिनिर्वृत्ता अङ्गहारा द्विधा ततः।
वृत्तयश्च तथा न्यायाश्चातुर्विध्यमुपाश्रिताः॥
देशीनृत्तविधिर्द्वेधा तथा परिवडिर्मता।
नृत्तं पेरणिनस्तस्य लक्षणं पात्रलक्ष्म च॥
लास्याङ्गानां तथा लक्ष्मोपाध्यायाचार्ययोस्तथा।
नटीनर्तकयोस्तद्वल्लक्ष्म वैतालिकस्य च॥
लक्षणं रेचकस्याथ देशीनृत्ताभिधां तथा।
लक्षणं रासकादीनां लक्ष्म कोल्लाटिकस्य तु॥
नृत्तश्रमविधिस्तद्वत्संप्रदायस्य लक्षणम्।
तद्गताश्च गुणा दोषाः क्रमेणैतत्प्रकाश्यते॥

कुम्भः

## नाट्यं लोकप्रमाणम्

नानाशीलाः प्रकृतयः शीले नाट्यं प्रतिष्ठितम्।
तस्माल्लोकप्रमाणं हि नाट्यं ज्ञेयं प्रयोक्तृभिः॥

कुम्भः

## नाट्यस्य लोकप्राधान्यम्

एतेऽभिनयविशेषाः कर्तव्याः सर्वभावसम्पन्नाः।
अन्येऽपि लौकिका ये तु ते सर्वे लोकतः साध्याः॥

कुम्भः

## नाट्यस्य पृथक्त्वम्

अङ्गेषु मुकुटादीनां शब्देषु यमकादिवत् ।
ससंस्कारविशेषत्वात्पृथक्त्वं कस्यचिन्मतम् ॥

कुम्भः

## नाट्यस्वरूपम्

यानि शास्त्राणि ये धर्मा यानि शिल्पानि याः क्रियाः ।
लोकधर्मप्रवृत्तानि नाट्यमित्यभिधीयते ॥

कुम्भः

## नाट्याङ्गानि

विच्छेदश्चार्पणं चाथ विसर्गश्चानुबन्धकाः ।
दीपनं च प्रशमनं षडङ्गानीति मन्वते ॥

वेमभूपालः

## नाट्यालङ्काराः

उच्चो दीप्तश्च मन्द्रश्च नीचद्रुतविलम्बिताः ।
इत्येते षडलङ्कारा नाट्यविद्भिर्निरूपिताः ॥

वेमभूपालः

## नाट्ये कर्तव्यं भूषणम्

नाट्ये प्रयोगे निपुणैर्न कार्यं भूषणं गुरु ।
यतस्तेन तु पात्राणां खेदः सञ्जायते तदा ।
भूषणं लघु नाट्येषु कर्तव्यं जतुपूरितम् ॥

वेमभूपालः

## नाट्ये प्रमाणम्

यथा धुतादिके मूर्ध्नि क्रियाभेदाद्भवेद्भिदा ।
एवं भूषाविभेदेन भेद इत्येव सुन्दरम् ॥

कुम्भः

## नाट्योचितान्यायुधानि

एवमाहार्यरचना नानादेशसमुद्भवा ।
आचार्यबुद्धया कर्तव्या बहुयुक्तिसमेतया ॥
नाट्ये योग्यान्यायुधानि कोदण्डप्रभृतीनि तु ।
धनुःशास्त्रोक्तमार्गेण कुर्यान्नाट्ये यथोचितम् ॥
छेद्यं भेद्यं प्रहरणं नैव नाट्ये प्रयुज्यते ।
संज्ञामात्रेण कर्तव्यमायुधस्य विमोचनम् ॥
यद्वा शिक्षाविशेषेण विद्यया माययाथवा ।
शस्त्रमोक्षो विधातव्यो रङ्गमध्ये प्रयोक्तृभिः ॥

वेमभूपालः

## नाट्योत्पत्तिः

इहानुभूयते ब्रह्मा शक्रेणाभ्यर्थितः पुरा ।
चकाराकृष्यवेदेभ्यो नाट्यवेदन्तु पञ्चमम् ॥
ऋग्भ्यः पाठ्यमभूद्गीतं सामभ्यः समपद्यत ।
यजुर्भ्योऽभिनया जाता रसाश्चाथर्वणोऽभवन् ॥
इहोपवेदा वेदाश्च चत्वारः कथिताः श्रुतौ ।
तत्रोपवेदो गान्धर्वः शिवेनोक्तः स्वयंभुवे ।
तेनापि भरतायोक्तं तेन मर्त्ये प्रचारितः ॥

सङ्गीतसर्वस्वम्

## नादः

नकारः प्राणमानन्दो दकारमनलं विदुः ।
जातः प्राणाग्निसंयोगात्तेन नादोऽभिधीयते ॥

सङ्गीतमकरन्दः

## नादभेदः

नादोऽतिसूक्ष्मः सूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः ।
इति पञ्चविधा धत्ते पञ्चस्थानस्थिताः क्रमात् ॥

सङ्गीतमकरन्दः

## नादशब्दनिष्पत्तिः

इति पञ्चाभिधं नूनमाविर्भावयति ध्वनिम् ।
नादोऽयं नदतेर्धातोरसौ पञ्चविधः स्मृतः ॥

कुम्भः

## नादावतीलक्षणम्

श्रीरागो यत्र रागः स्यान्मन्द्रतालोऽथ कैशिकी ।
वृत्ती रीतिस्तु पाञ्चाली रसः शृङ्गार एव च ॥
शुक्लस्तु कथ्यते वर्णो ब्राह्मधिष्ठातृदैवतम् ।
ब्राह्मं कुलं समादिष्टा सेयं नादवती बुधैः ॥
पञ्च यत्रैन्दवगुणास्त्वेकस्त्रैविष्टपो गुणः ।
सानुप्रासास्त्रयः पादा भवन्तीति मुनेर्मतम् ॥

ऽ ॥ ऽ ॥ ऽ ॥ ऽ ॥ ॥।

सोमराजदेवः

## नादोत्पत्तिः

नादरूपः स्मृतो ब्रह्मा नादरूपो जनार्दनः ।
नादरूपा पराशक्तिः नादरूपो महेश्वरः ॥
यदुक्तं ब्रह्मणः स्थानं ब्रह्मग्रन्थिश्च यः स्मृतः ।
तन्मध्ये संस्थितः प्राणः प्राणाद्वह्निसमुद्भवः ॥

वह्निमारुतसंयोगान्नादः समुपजायते ।
नादादुत्पद्यते बिन्दुः नादात्सर्वं च वाङ्मयम् ॥

इति केचित् ।

कन्दस्थानसमुत्थो हि स च पञ्चविधो भवेत् ।
सूक्ष्मश्चैवातिसूक्ष्मश्च समीरः सञ्चरन्नधः ।
ऊर्ध्वं च कुरुते सर्वां नादपद्धतिमुद्धताम् ॥

इत्यन्ये वदन्ति ।

नकारः प्राण इत्याहुर्दकारश्चानलो मतः ।
नादस्य द्विपदार्थोऽयं समीचीनो मयोदितः ॥
नादोऽयं नदतेर्धातोः स च पञ्चविधो भवेत् ।
सूक्ष्मश्चैवातिसूक्ष्मश्च व्यक्तोऽव्यक्तश्च कृत्रिमः ॥
सूक्ष्मनादो गुहावासी हृदये चातिसूक्ष्मकः ।
कण्ठमध्ये स्थितो व्यक्तः अव्यक्तस्तालुदेशके ॥
कृत्रिमो मुखदेशे तु ज्ञेयः पञ्चविधो बुधैः ।
इति तावन्मया प्रोक्ता नादोत्पत्तिर्मनोहरा ॥

मतङ्गः

## नादोद्भवक्रमः

नकारः प्राणनामा स्याद्दकारो वह्निरुच्यते ।
जातः प्राणाग्निसंयोगात्तेन नादोऽभिधीयते ॥

हम्मीरः

## नान्दीलक्षणम्

ध्रुवायां गीयमानायामस्यां नान्दीं पठेत्ततः ।
मध्यमस्वरमाश्रित्य सूत्रधारः सलक्षणाम् ॥
स्याद् द्वादशपदा नान्दी यद्वा दशपदी भवेत् ।
अथवाष्टपदी वाक्यं पदशब्देन भण्यते ॥
अथवा सुविभक्तान्तं पदमत्रोक्तलक्षणम् ।
एवां नान्दीं प्रयुञ्जीत तदुदाहारणं यथा ॥

विप्रदासः

## नान्दीश्लोकार्थवर्णनम्

अर्थप्रपञ्चसहितं कुर्यातां पारिपार्श्वकौ ।
अर्थप्रपञ्चवाक्यानि क्रमेण द्वादशस्वपि ॥
वाक्येपूभौ योजयतस्तानि वक्ष्याम्यनुक्रमात् ।
सूत्रधारेण वाक्येऽस्मिन् प्रयुक्ते पारिपार्श्वकौ ॥
शेषमहाहिशयाय नमो दिव्यकिरीटधराय नमः ।
चक्रोदारधराय नमः सागरशयनाय नमः ॥

यैरिदमाद्यै रङ्गशरीरं भूषितमार्यैस्ते विजयन्ताम् ।
कविकुलगीतं गुणपरिवीतं हरिसमलीलं भजत नृपालम् ॥
माधव किन्तव मासिकया पीनकुचद्वयपीडनया ।
इत्युपहसितो राधिकया वारिजलोचन पालय गाः ॥
जितमुरजवरैरभिनवजलदैर्लसतिवसुमती शिखरिवरवती ।
नवजलललितस्वेदापरितः प्रसृमरशस्यरोमाञ्चा ।
कलकृतमयूरशब्दा नृपवरहर्षाय कल्पनामचला ॥

विप्रदासः

## नान्द्युदाहरणम्

श्रीनाथः श्रियमातनोतु जगतामृद्धिं लभन्तां बुधाः
पृथ्वीशः पृथिवीं प्रशास्तु सकलां गावो भवन्त्वक्षयाः ।
काले वर्षतु वारिवाहनिवहो भूरस्तु शस्योत्तरा
भूयात्क्षेमसुभिक्षवाञ्जनपदो रङ्गः सदा वर्धताम् ।
यायात्पापमतिः क्षयं विलसतात् धर्मस्य रक्षाकरो
भक्तिः शूलिनि शाश्वती प्रसरतात्प्रेक्षाकरो नन्दताम् ॥

विप्रदासः

## नामावली

श्रुत्युक्तपदशब्दैश्च गेयं नामावलीरिता ।

भरतकल्पलतामञ्जरी

## नायकः

विशेषज्ञस्तौर्यत्रितयनिपुणः कोऽभिनयवि-
द्रसालंकारज्ञः सकलगुणदेशैकनिकषः ।
पराभिप्रायज्ञो यशसि बहुमाने धृतरुचिः
क्षमादाता वीरो जयति गिदतो नायक इति ॥
पुरो भूपश्च विप्राश्च मण्डलस्य च दक्षिणे ।
अमात्यराजपुत्राश्च उत्तरा वित्तमाश्रिताः ॥
पुरोडाशे नरपतेर्वेश्या स्युः वित्तमाश्रिताः ।
वन्दिनः कवयोऽत्रैव कलानाट्यविदोऽपि ये ॥
नाटयनाम्नो बहिर्योधमुख्यास्तिष्ठन्ति शस्त्रिणः ।
राज्ञोऽङ्गरक्षितैः कार्या यावन्नाटकदर्शनम् ॥
गोष्ठीयात्रादृतिनाट्यपुष्पापचययोषितः ।
राज्ञां विनाशस्थानानि तस्माद्रक्षः सतेः सदा ॥
तत्रोत्सार्या प्रयत्नेन अविज्ञाताश्च शस्त्रिणः ।
अथाम्लेच्छाः पामराश्च तथा पाषण्डधर्मिणः ॥

राजाज्ञया सर्व एवोपविष्टाः स्युः सभासदः ।
अन्यथा पीडिताङ्गानां रसोद्बोधो न जायते ॥

सङ्गीतनारायणे

## नायकस्वरूपम्

भावाश्रयो बुधैर्ज्ञेयो विकृतार्थानुकारवान् ।

कुम्भः

## नायिकाः

चतुर्दशसमा यावद्बालेति परिगीयते ।
ततस्तु विंशतिं यावन्मुग्धा प्रथमयौवना ॥

..........................................

चतुर्थयौवनं केचिदत ऊर्ध्वं वदन्ति च ।
पञ्चचत्वारिंशदन्तं यावद्वृद्धा ततो मता ॥

शुभङ्करः

## निकुञ्चकः

पताकोऽङ्गुष्ठको यत्र मध्यमामूलसंश्रितः ।
निकुञ्चकोऽसौ स्वल्पार्थे वेदस्याध्ययने मतः ॥

कुम्भः

अङ्गुष्ठो मध्यमामूलं पताके यत्र संश्रयेत् ।
निकुञ्चकाभिधं हस्तमूचुः कर्मास्य कथ्यते ।
स्वल्पस्यार्थस्याभिनये वेदस्याध्ययनेऽप्यसौ ॥

विप्रदासः

## निकुट्टकः

अग्रेणाङ्घ्रेः कुञ्चितेन गतिः प्रोक्ता निकुट्टकः ।

कुम्भः

## निकुन्तछाया

अनूनाधिकता रागे येषु स्थायेषु दृश्यते ।
छाया निकुन्तेर्विज्ञेया बलात्संस्थापिता स्थितौ ॥

कुम्भः

## निकुम्भितलक्षणम्

कुञ्चितं पादमन्याङ्घ्रेः पार्ष्णिभागे विनिक्षिपेत् ।
वक्षः समुन्नतं विभ्रत्खटकामुखमध्यमम् ॥
कुर्यात्तिलकवत्काले यत्र तत्स्यान्निकुम्भितम् ।
अनेन करणेन स्यादभिनेयस्त्रिलोचनः ॥

अत्र कीर्तिधरस्त्वाह सूचीमुखमधोमुखम् ।
तस्याभिनयने हस्तौ यस्मादयमुदीरितः ।
एतस्मिन् करणे पादं वृश्चिकं केचिदूचिरे ॥

नृत्तरत्नावली

## निगूढार्थः (दूतः)

उद्देश्यकार्यवादे च विपक्षे नायके स्वयम् ।
वैरमुद्धरते यस्तु निगूढार्थः स उच्यते ॥

शुभङ्करः

## निगृहीतं—मृदङ्गप्रहारभेदः

करयोः पुटयोगेन निगृहीतमुदाहृतम् ।

संगीतनारायणे

## निजाहार्यः

अर्धोरुकादिकक्षैश्च शिरोवेष्टादिभूषणैः ।
निजाहार्य इति प्रोक्तो भरतान्वयवेदिभिः ॥

शृङ्गारशेखरः

## नितम्बलक्षणम्

उत्तानोऽधोमुखत्वाभ्यां क्रमेण स्कन्धदेशतः ।
पताकौ यदि निष्क्रम्य नितम्बक्षेत्रवर्तिनौ ।
रेचकं कुरुते हस्तौ नितम्बावुदितौ तदा ॥

हम्मीरः

## निद्रा—व्यभिचारिभावः

दमश्रमक्लमालस्याच्चक्षुर्निमीलनं निद्रा ।

शुभङ्करः

## निन्दितगायनाः

सन्दुष्टः कपिलः काकी शीत्कारी सानुनासिकः ।
उद्घटो सस्वरोऽव्यक्तो विरसो विनिमीलनः ॥
तुम्बकी बोम्बको वक्री स्थानभ्रष्टो व्यवस्थितः ।
प्रसारी कक्कुभो भीतः सन्दष्टोऽनवधानकः ॥
कम्पितः शङ्कितो मिश्रः कराली च वितालकः ।
पञ्चविंशतिरित्येते गायना निन्दिताः स्मृताः ॥

कुम्भः

## निबद्धस्य नामानि

निबद्धस्य च गीतस्य नामधेयत्रयं मतम् ।
रूपकं च प्रबन्धश्च वस्तु चापि तृतीयकम् ।
उद्ग्राहश्चेति चत्वारः कथ्यन्ते तस्य धातवः ॥

सोमराजदेव

### निबद्धादित्रयाणां लक्षणम्

वर्णान्वितं निबद्धं स्यादालप्त्या त्वनिबद्धकम् ।
मिश्रं तालान्वितैर्वर्णैः जातैश्च पदसंग्रहः ॥

सोमराजदेवः

### निबन्धः

नानाविधविभक्तं वा ध्वानौ यस्य भवेद्रुतम् ।
निबन्धः स तु विज्ञेयो गीततत्त्वविचक्षणैः ॥

कुम्भः

### निमीलकः

निमीलनं तु यो गायेन्निमीलक इति स्मृतः ।

भरतकल्पलता

### निरस्तः

निर्गच्छति मुहुर्वक्त्रान्निरस्तश्शब्दवान् मुहुः ।
शान्ते रोगे च दुःखार्ते विनियुक्तो बुधैरयम् ॥

कुम्भः

### निर्घोषः—हौडुक्किकपाटः

निर्घोषं पाटमाचख्युः कोणाघातेन तद्विदः ।

यथा –

न ख खि थों थों दिगिद थोंदिगि दथो दिगि ।

कुम्भः

### निर्जवनाः

सुकुमारो रक्तियुक्तो वक्ता सूक्ष्मत्वमापितः ।
स्वरा येषु क्रमेणैते ज्ञेया निर्जवनान्विताः ॥

कुम्भः

### निर्युक्तम्

तत्र सर्वैस्तु नियमैर्युक्तं निर्युक्तमिष्यते ।

दत्तिलः

### निर्विकल्पकरसः

सभ्यचेतसि वर्तेत वासनारूपतो रसः ।
दीनेन चालम्बनानामपेक्षी कुरुते रसः ॥
यत्प्रसिद्धालम्बनतास्वयं स्थायिनि दृश्यते ।
निर्विकल्पकमत्रेष्टं प्रमाणं मुनिचोदनात् ॥

कुम्भः

### निर्वेदस्य स्थायित्वव्यभिचारित्वस्थितिः

अमङ्गलमपि ब्रूते पूर्वं निर्वेदमेव यत् ।
मुनिर्मेनेऽस्य तन्नूनं स्थायिताव्यभिचारिते ।
पूर्वापरान्वयो ह्यस्य मध्यस्थस्यानुषङ्गतः ॥

हम्मीरः

### निवृत्तिप्रयोजनम्

वर्णालङ्कारसौभाग्यं विच्छेदं करणस्य च ।
तत्त्वादीनां प्रयोगश्च निवृत्तीनां प्रयोजनम् ॥

नाट्यशास्त्रे

### निवृत्त्यङ्कुरः

अन्येनाभिहितं वाक्यं सूचया योजयेत्पुरः ।
परस्परार्थसंबन्धो निवृत्त्यङ्कुर उच्यते ॥

वेमभूपालः

### निष्कृष्टगुणः

उच्चैरुच्चारणादुक्तं निष्कृष्टं भरतादिभिः ।

भरतकल्पलता

### निसृष्टार्थः (दूतः)

उभयोर्भावमुन्नीय स्वयं वदति चोत्तमम् ।
सुश्लिष्टं कुरुते कार्यं निसृष्टार्थः स उच्यते ॥

यद्वा—

धीरः स्थिरमतिः शूरः स्वामिकार्यविधायकः ।
स्वपौरुषप्रकाशी च निसृष्टार्थः स उच्यते ॥

शुभङ्करः

### निःसारणः

... ... ... ... ... स तु निस्सारणाभिधः ।
निःसरन्त इवाभान्ति स्वरा यत्र क्रमोद्गताः ॥

कुम्भः

### निःसारुकः

कातरः समराख्यश्च वैकुण्ठो वाञ्छितस्तथा ।
विशालश्च तथानन्दः षट्च निःसारुको भवेत् ॥

गान्धर्ववेदे

### निस्वानः

निस्वानस्त्वेकवक्त्रः स्यात् स त्रिधा परिकीर्तितः ।
उत्तमः कांस्यजस्ताम्रनिर्मितो मध्यमः स्मृतः ॥

अधमो लोहघटतो ह्रस्वोऽधस्ताम्मुखे महान् ।
चर्मणा मानुषेणायं गाढं वक्त्रे सुयंत्रितः ॥
वध्रैः सुषिरनिक्षिप्तैर्निवेश्यवलये मुहुः ।
व्यावर्तितैर्नद्धचर्मा मेघगम्भीरनिस्वनः ॥
वैरिवित्रासजनको भीरुहृद्भेदनोपरः ।
शूररोमाञ्चजनको युद्धप्रोत्साहकारकः ॥
घटद्धदेतिशब्देन व्याप्तसर्वरणाङ्गणः ।
चर्मकोणेन वाद्योऽयं सद्वितीयो महाभटैः ॥

कुम्भः

## नूपुरविद्धका

चरणौ स्वस्तिकीकृत्य पार्श्वयोः पादयोस्तथा ।
रेचितौ यत्र सा ज्ञेया चारी नूपुरविद्धका ॥

कुम्भः

## नृत्तम्

रसभावविहीनं तु नृत्तमित्यभिधीयते ।

भरतकल्पलता

गात्रे विक्षेपमात्रं च सर्वाभिनयवर्जितम् ।
आङ्गिनोक्तप्रकारेण नृत्तं नृत्यविदो विदुः ।
एतत्तूयं द्विधा प्रोक्तं मार्गदेशीप्रभेदतः ॥

सङ्गीतनारायणे

## नृत्तधर्मौ

नृत्ते नृत्यैकदेशोऽपि नृत्यशब्दाद्द्वयोर्ग्रहः ।
नाट्यधर्मी लोकधर्मीत्येवं रूपविशेषणात् ॥

कुम्भः

## नृत्तप्रशंसा

आगत्य ब्रह्मलोकादिह भरतमुनिश्शास्त्रमेतन्मदीयं
दृष्ट्वा भूयः कृतार्थः प्रसमरपुलकव्यञ्जितान्तः प्रमोदः ।
आश्चर्यं पश्यतेदं कथमिति गतवानाशयं मे समग्रं
सश्रीमान् जयसेनापतिरिति नियतं वक्ष्यताग्रे मुनीनाम् ॥

नृत्तरत्नावली

## नृत्तभेदाः

नृत्तं चापि त्रिधा प्रोक्तं विषमं विकटं लघु ।
विषमनृत्तं विकटनृत्तं लघुनृत्तं चेति त्रिविधम् ॥

सङ्गीतनारायणे

## नृत्ताचार्यः

कुलशीलगुणैर्युक्तो नानाशिल्पप्रयोगवित् ।
गुरूपदेशनियतो नाट्ययोगविचक्षणः ॥
एवमादिगुणोपेतो नटनाट्यविदां मतः ।
उज्ज्वलो रूपवान् दक्षो दृष्टावतरणक्रियः ॥
चतुर्विधाभिनयविन्मेधावी नट उच्यते ।
रूपवान्नृत्ततत्त्वज्ञः समादिग्रहकोविदः ॥
वाद्यवादनदक्षश्च ग्रहमोक्षविशारदः ।
सम्प्रदायगतज्ञानो लयतालविचक्षणः ॥
कर्ता वाद्यप्रबन्धानां प्रगल्भो मुखवाद्यवित् ।
नानाविधस्थायिभेदविवेचनविशारदः ॥
निर्माता नृत्तभेदानां शिष्यशिक्षाविचक्षणः ।
तूर्यत्रयव्यवस्थायाः प्रतिष्ठापयिता स्फुटम् ॥
नृत्तदोषसमाधानचतुरो रञ्जकस्तथा ।
एवं विधगुणोपेतो नृत्ताचार्यः प्रकीर्तितः ॥

वेमभूपालः

## नृत्यम्

नृत्ते क्यप्प्रत्यये नृत्यशब्दः कर्मविवक्षया ।
भावोपसर्जिते यत्र रसो मुख्यः प्रकाश्यते ॥

कुम्भः

रसभावव्यञ्जकादियुतं नृत्यमितीर्यते ।

भरतकल्पलता

यस्यां भित्तिगतेन्द्रनीलमणिषु प्रोद्दीप्तरत्नावलिं
दृष्ट्वा नूतननीरदोपरिलसद्विद्युल्लताविभ्रमात् ।
गम्भीरं मुरजप्रतिध्वनितमपि श्रुत्वोर्ध्वगेहोद्भवं
प्रोन्मत्तप्रमदासखो वितनुते नृत्यं मयूरव्रजः ॥

कुम्भः

### —दशविधम्

नाट्यनृत्तं ताण्डवं च नृत्तं लास्यमिमाभिधा ।
नर्तनस्याथ नृत्ते तु विषमं विकटं लघु ।
पेरणी गौण्डली चैव नृत्यं दशविधं स्मृतम् ॥

## नृत्यत्रयम्

नाट्यमार्गं च देशीयमुत्तमं मध्यमंतथा ।
अधमो क्रमतो ज्ञेयं नृत्यत्रितयमुत्तमैः ॥

कुम्भः

### नृत्यत्रिगतित्वम्

काचिन्नृत्यविधौ विलम्बितमपि क्षिप्रं च नानाविधं
यत्यादिप्रचुरप्रबन्धरचनां कृत्वा मृदङ्गे मुदा ।
चञ्चत्पाणिचलत्पृथुस्तनयुगं स्वेदार्द्रगण्डस्थलं
तत्तद्भूषणभूषिताङ्गरुचिरा रङ्गस्थले राजते ॥

कुम्भः

### नृत्यदिदृक्षा

पश्चान्मञ्जुलकण्ठगायकजना गायन्ति गीतं मुदा
तार्थैंधोङ्कृति धोङ्कृतिध्वनिभवेन्नृत्ये पराकामिनी ।
दां दां दिं दिमिकि द्रुमि द्रुमिदि दीङ्कारो मृदङ्गे मुहुः
देवा नृत्यदिदृक्षयैव मिलिताः स्वर्गादपि क्ष्मातले ॥

कुम्भः

### नृत्यप्राणः

रेखा च स्थिरताले गो भ्रमरी दृष्टिरश्रमयः ।
प्रीतिर्मेधावचो गीतं नृत्ये प्राणा दशोदिता ॥

कुम्भः

### नृत्यमहिमा

क्षितौ रत्नच्छायाफलनमुदके वीचिललितं
शिखिन्यर्चिः प्रेङ्खा सहजगतिवैचित्र्यमनिले ।
तटित्क्रीडाव्योम्निप्रकटसुभगः पञ्चसु परः
प्रविष्टो भूतेषु प्रभवति हि नृत्तस्य महिमा ॥
अभ्यासाद्भरतोक्तिभङ्गिषु बहुव्याख्यापदेषु श्रमा-
त्संवादाद्गुरुसंप्रदायसुहृदां शम्भोः प्रसादादपि ।
ज्ञात्वा शास्त्ररहांसि निर्मितमिदं व्यक्तं महार्थान्वितम्
न स्यात्कस्यहिताय शाश्वतयशस्संरक्षणं लक्षणम्'॥

नृत्तरत्नावलिः

### नृत्यलक्षणम्

देशरुच्या प्रतीतो यस्तालमानरसाश्रयः ।
अविनाभावविक्षेपो नृत्यमित्युच्यते बुधैः ।

शुभङ्करः

### नृत्यवेला

उदये घटिका पञ्च मध्याह्ने घटिकात्रयम् ।
पराह्णे घटिकाः सप्त नृत्यवेला प्रकीर्तिता ॥

हम्मीरः

### नृत्यशब्दव्युत्पत्तौ—अर्थभेदेन प्रत्ययभेदः

यद्यप्येतौ समानार्थौ तौ कथक्तप्रत्ययौ स्मृतौ ।
तथापि सम्प्रदायज्ञैर्यादृशो यः प्रयुज्यते ॥
तादृगर्थः सविज्ञेयो विवक्षात्र न कारणम् ।
लोके हस्तैकदेशेऽपि हस्तशब्दो यथा तथा ॥
नृत्ते नृत्यैकदेशत्वान्नृत्यशब्दोऽपि वर्तते ।
शोभाया एव मुख्यत्वं विवक्षित्वात्प्रयुज्यते ॥
मार्गनृत्तेऽप्ययं नृत्यशब्दस्तस्माद्द्वयोर्मता ।
स्यान्नृत्यैर्नृत्तशब्दाभ्यां देशीयमार्गयोर्ध्रुवम् ॥
उत्तमं नाट्यनृत्यं स्यान्मार्गनृत्यं तु मध्यमम् ।
देशीयनृत्यमधमं विज्ञेयं काव्यवद्बुधैः ॥

विप्रदासः

### नृत्यस्वरूपम्

मृदङ्गो दण्डिका तालं घर्घरी श्रुतिकाहले ।
गीतनादप्रबोधं च अष्टाङ्गं नृत्यमुच्यते ॥

हम्मीरः

### नृत्यहस्तभेदाः

उपधानः सिंहमुखः कदम्बश्च निकुञ्जकः ।
एते सम्मिलिता भूत्वा स्युरष्टाविंशतिश्च ते ॥

कुम्भः

### नृत्यहस्ताः

नृत्यमात्रस्थिता ये तु न किञ्चिद्वस्तुदर्शिनः ।
अङ्गहारेण सहिता नृत्यहस्तास्तु ते मताः ॥

सङ्गीतनारायणे

### नृत्याङ्गम्

स्थानकानि तथा चारी करणं मण्डलं तथा ।
अङ्गहाराश्च भरते नृत्याङ्गं पञ्चधोदितम् ॥

सङ्गीतनारायणे

### नृत्यानिष्टदर्शनम्

परावृत्तेन शिरसा नेत्रनासावकूणनैः ।
चक्षुषश्च प्रसादेन ह्यनिष्टमभिनिर्दिशेत् ॥

कुम्भः

## नृत्ये विटलक्षणम्

हास्ये विटकृते नृत्ये उच्छ्रितौ हर्षगर्वयोः । कुम्भः

## नृत्योत्पत्तिः

गेयादुत्तिष्ठते वाद्यं वाद्यादुत्तिष्ठते लयः ।
लयतालसमारब्धं ततो नृत्यं प्रवर्तते ॥ शुभङ्करः

## नृपलक्षणम्

सङ्गीतरीतिविदुषो भावभेदविचक्षणः ।
कामशास्त्रकलावेदी धर्मसङ्ग्रहविग्रहः ॥
कविः काव्यप्रबन्धानां निर्माता वित्तदानवित् ।
संभूयसस्वरूपश्च सभामध्यमुपस्थितः ॥

संगीतमुक्तावली देवेन्द्रकृता

## नेपथ्यम्

अखण्डमण्डलं चित्रं विस्तीर्णं दीर्घमंशुकम् ।
विस्तृत्य पूर्वरङ्गेऽस्मिन्नेपथ्यं कल्पयेद्बुधः ।
नेपथ्यान्तरितः पूर्वं रङ्गपूजां समाचरेत् ॥

भरतकल्पलता

पश्चिमाभिमुखीनां च रम्यानां भूषणाम्बरैः ।
नायकाभिमुखीनां च गायन्तीनां परस्परम् ॥
तालैः कृतावधानानां नटीनामुपवेशनम् ।
पार्श्वयोरुभयोस्तासां मृदङ्गानां चतुष्टयम् ॥
दक्षिणे मुरजज्ञानं पृष्ठे जवनिका तथा ।
तन्मध्ये मण्डनस्थानं नेपथ्यं तच्च गीयते ॥

शुभङ्करः

## नेपथ्यभेदाः

नेपथ्यं तु वयःकालदेशजातिविशेषतः ।
नानाविधं तथाप्येतच्चतुर्धा प्रोच्यते बुधैः ॥
पुस्तमाल्यविभूषाङ्गपरिवेदनभेदतः ।
शैलजालविमानानि चर्मवर्मध्वजादयः ॥
शस्त्राणि सर्पविकृतमुखानि च वपूंषि च ।
यानि च क्रियते नाट्ये तत्पुस्तमिति कीर्त्यते ॥

सङ्गीतनारायणे

## नेरिभेदाः

तत्र नेरी भवेत् षोढा शुद्धाख्या नटनेरिका ।
तथा करणनेरिः स्यात् कावनेरिस्ततः परम् ।
सालंगनेरिः सङ्कीर्णनेरिरित्थं समूचिरे ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## नैसर्गिकम्

हस्तकात् भ्रमरीं विद्यादधोऽम्बुजादि पातनम् ।
अङ्घ्रेर्भूमेश्च यो योगः स च नैसर्गिको मतः ॥

कुम्भः

## न्यायलक्षणम्

युद्धे परात्मशस्त्राणां क्रमाद्यो नवपातने ।
विधातुमुचिता गात्रवर्तना न्याय उच्यते ॥
भारतः सात्त्वतो वार्षगण्यकैशिकसंज्ञकाः ।
भेदास्तस्येति चत्वारः क्रमाद्वृत्तिचतुष्टये ॥

विप्रदासः

## न्यासः

गीतकान्त्यस्वरो न्यासः विदारी मध्यगस्तथा ।
न्यासवत्स्यादपन्यासो यथा जाति — ॥
प्रथमाया विदार्याया मध्ये न्यासत्वभाक् स्वरः ।
न चेदंशो विवादी स्यात् सन्न्यासः सोऽभिधीयते ॥

दत्तिलः

## न्यासापन्यासयोर्भेदः

नैव न्यासस्तु जात्यादेरन्त एवावतिष्ठते ।
अपन्यासः पुनस्तत्रान्तराले खण्डितं तु यत् ॥

कुम्भः

## प

## पक्षिशार्दूलः

यदा मण्डीमधिष्ठाय प्रसृतौ भ्रमतः करौ ।
तदा तं नृत्तशार्दूलाः पक्षिशार्दूलमूचिरे ॥

## पक्षीणामुच्चारणम्

तित्तिररटकश्चैव बकचातककोकिलाः ।
वायसः कुक्कुटश्चैव क्रमादुच्चारयन्त्यमी ॥

कुम्भः

## पङ्क्तिः

चतुरश्रमष्टकलां स्थायवर्णा स्थिते लये ।
खद्वयं गद्वयं गोतागाचैवं चरणाङ्किता ॥
पङ्क्तौ षोडशमात्राभिरपकृष्टा ध्रुवा यथा ।
हेलाविदलितकामशरीरं लालानिर्जितदानवराजम् ।
देहार्धीकृतभूधरसुतं वन्दे शम्भुं त्रिभुवननाथम् ॥

कुम्भः

**पञ्चकर्त्तरी—(वाद्यम्)**

पञ्चकर्त्तरिकासंज्ञैः पाटैः स्यात्पञ्चकर्त्तरी ।

कुम्भः

**पञ्चगानस्थानानि**

अथ प्रावेशकाक्षेपप्रासादिकमथान्तरम् ।
नैष्क्रामश्चेति गानस्य स्थानं पञ्चविधं स्मृतम् ॥

वेमभूपालः

**पञ्चतालेश्वरः**

आलापः प्रागतालः स्यात्पृथग् द्विः पदपञ्चकः ।
चच्चत्पुटेन तेनैव स्वराः पाटास्ततःपरम् ॥
द्विचच्चत्पुटमानेन पाटः पटहसम्भवैः ।
कार्येऽन्तरस्ततश्चाचपुटेन पदपञ्चकः ॥
तद्वत्तेन स्वरः पाटास्तद्विमानेन वान्तरः ।
हौडुक्कपाटैस्तदनुषट्पितापुत्रकेण तु ॥
पृथक्पदानि पञ्चद्विस्तेनैव स्वरपाटकाः ।
तद्विमानाच्छङ्कपुटैरन्तरः स्यात्ततस्तु षट् ॥
प्रत्येकं द्विः पदानि स्युः संपक्केष्टकतालतः ।
तत्तालाः स्युः स्वराः पाटाः पाटैर्मुरजसंभवैः ॥
अन्तरः पूर्ववत्पश्चादाभोगश्च विलम्बितः ।
प्रबन्धनाम्ना प्राङ्मानं नेतृनामाथ मङ्गलम् ॥
वाक्यमालापके न्यासः पञ्चतालेश्वरे भवेत् ।
वीरावतारश्रृङ्गारतिलकश्चेति स द्विधा ।
वीरश्रृङ्गारयोस्तेन प्रीयन्ते सर्वदेवताः ॥

हम्मीरः

**पञ्चध्रुवहेतवः**

अथ जातिप्रमाणं च प्रकारं नामकल्पना ।
स्थापनं चेत् ध्रुवाणां स्युर्भेदकाः पञ्च हेतवः ॥
वृत्ताक्षरप्रमाणस्तु जातिरित्यभिधीयते ।
षट्कलाष्टकलैश्चैव प्रमाणे द्वे प्रकीर्तिते ॥
समार्धविषमाणां तु वृत्तानां तु विधीयते ।
... ... नाट्यज्ञैः ... प्रकार इति कथ्यते ॥
कुलाचाराश्रयं नाम यथा नृणां विधीयते ।
तथा स्थानाश्रयोपेता ध्रुवाणां नामकल्पना ।
यद्वा वृत्तविशेषैश्च स्वेच्छया नाम कल्पयेत् ॥

वेमभूपालः

**पञ्चपाणिः (वाद्यम्)**

पाणिहस्ताभिधैः पाटैः पञ्चपाणिः प्रकीर्तितः ।

वेमः

**—पाटः**

हस्तशब्दान्वितैर्हस्तपादैः स्यात्पञ्चहस्तकम् ।
पाणिहस्ताभिधैः पाटैः पञ्चपाणिः प्रकीर्तितः ॥

कुम्भः

**पञ्चमः**

पञ्चप्राणोद्भवो यस्मात् तस्मात्पञ्चम उच्यते ।

सङ्गीतसारः

**पञ्चमपताकम्**

हस्तं पुष्पपुटं कृत्वा विलोक्य च ततः पुनः ।
कृत्वोत्सङ्गं स्पृशेत्पश्चाद्दक्षिणं चरणं नटः ॥
हस्तेन दक्षिणेन द्राग्वामाङ्घ्रिं वामकेन तु ।
इति पञ्चमभेदोऽयं सम्यगत्र प्रदर्शितः ॥ कुम्भः

**पञ्चमरागः**

रागः पञ्चमको ज्ञेयः पहीनः षाडवो मतः ।
रक्ताम्बरो रक्तिविशालनेत्रः श्रृंगायुक्तास्तरुणो मनस्वी ।
प्रभातकाले विजया च नित्यं सदा प्रियः कोकिल-
मञ्जुभाषी ॥

स रि ग म ध नि स — स रि ग म प ध .

सङ्गीतदर्पणः

**पञ्चवाद्यानि**

नखजा वायुजाश्चर्मलोहशारीरजास्तथा ।
वीणादयस्तु नखजाः वंशाद्या वायुजास्तथा ॥
चर्मजाश्च मृदङ्गाद्या लोकजा लोहचर्मजाः ।
शारीरजानि गीतानि वाद्यं पञ्चविधं जगुः ॥

भरतकल्पलता

**पञ्चविधनादावत्याः—एकविधवाणलक्षणम्**

आद्यं त्यक्त्वा चतुर्णां स्याद्विकारादुत्सवप्रिया ।
विना द्वितीयमन्येषां महानन्दा विकारतः ॥
चतुर्णां विकृतौ हित्वा तृतीयं लहरी भवेत् ।
त्यक्त्वा तुर्यं चतुर्णां स्याद्विकाराच्च जयाभिधा ॥
चतुर्णां विकृतौ हित्वा पञ्चमं कुसुमावती ।
चतुरा पञ्चधेति स्याद्वाणा चैकाभिधा पुनः ॥

आद्यपञ्चगणानां स्यादिक्वतेः पार्वतीप्रिया ।
इत्येकत्रिंशदेलाः स्युर्नादावत्या विकारतः ॥

मोक्षदेवः

## पञ्चविधः स्तम्भः

देवस्तम्भनरस्तम्भस्थिरस्तम्भमतः परः ।
स्थावराणां स्तम्भ इति मुनिस्तम्भश्च पञ्चधा ॥

शृङ्गारशेखरः

## पञ्चशिरःप्रकारे आरातिकम्

स्कन्धं तु किञ्चिदाश्लेष्य भ्रान्तमारात्रिकं मतम् ।
विस्मये दृश्यते तच्च पराभिप्रायवेदने ॥

हम्मीरः

## पञ्चसञ्चलक्षणम्

स्कन्धस्य मणिबन्धस्य कूर्पराङ्गुष्ठयोस्तथा ।
वामस्य चरणस्यापि कम्पनं सञ्च उच्यते ॥
ततः स्याद्वादकः श्रेष्ठः पटहेऽङ्गुष्ठसञ्चतः ।
वामाङ्घ्रिसञ्चादधमो वादकस्त्वन्यजो मतः ॥

कुम्भः

## पञ्चस्वरपरा तारगतिः

अंशात्तारगतिं विद्यादाचतुर्थस्वरादिह ।
आपञ्चमात्पञ्चमाद्वा नातःपरमिहेष्यते ॥

नाट्यशास्त्रे

## पञ्चहस्तम्—वाद्यम्

हस्तशब्दान्वितैर्हस्तपाटैः स्यात्पञ्चहस्तकम् ।

कुम्भः

## पटहः

अथावनद्धवाद्यस्य पटहादेर्निरूप्यते ।
लक्षणं द्विविधस्तत्र पटहः परिकीर्तितः ॥
मार्गदेशीविभेदेन तत्रादौ मार्गमुच्यते ।
सवितस्तिकरद्वन्द्वं दैर्घ्ये स्यात्परिधौ पुनः ॥
षष्ट्यङ्गुलो मध्यदेशे पृथुः खदिरदारुजः ।
उत्तमो बीजकाष्ठादिकृतो धातुमयोऽथवा ॥

दक्षिणं वदनं तस्य स्यात्सार्धैकादशाङ्गुलम् ।
वामं तु वदनं कार्यं सार्धैर्दशभिरङ्गुलैः ॥
दक्षिणे वदने तस्य वलयं लोहनिर्मितम् ।
वामे च वलयं वक्त्रे कार्यं वल्लीसमुद्भवम् ॥
षाण्मासिकस्य वत्सस्य मृतस्यादाय पारिकाम् ।
तथावकुण्ठ्य वलयं वामवल्लीसमुद्भवम् ॥
संक्लितं सप्तभिश्छिद्रैः शोन्वभभूतैरदृढम् ? ।
तत्र सप्तसु रन्ध्रेषु निक्षिप्तैः सूक्ष्मदोरकैः ॥
कलशाः सप्त हेमादिधातुभेदविनिर्मिताः ।
नियन्तव्याः श्लथतरदैर्घ्येण चतुरङ्गुलाः ॥
पटहस्य च वामास्यं स्यादं गुलचतुष्टयम् ।
विस्तारतस्त्र्यङ्गुलया स्वर्णदीप्ततया ततः ॥
वेष्टयेत्पटहं कण्ठे तया पत्रिकया दृढम् ।
बाह्यं कायस्य यच्चर्मपशोस्तत्कवलं स्मृतम् ॥
कृतान्तःसुषिरानेन घनेन वदनद्वयम् ।
विदध्यादस्य वदने दक्षिणे कवलं पुनः ॥
सर्वतोऽपि हि तच्छिद्रं पिदध्याद्वाद्यसिद्धये ।
गुणैः सुषिरनिक्षिप्तैः गाढमाकृष्य यत्नतः ॥
वामवक्त्रस्य वलये सप्तरन्ध्रनिवेशितान् ।
गुणानाकृष्य सुदृढं यथास्थानं निवेशयेत् ॥
वामस्य कवलं तत्र सप्तछिद्रनिवेशितैः ।
तैर्गुणैः स्वर्णकलशानावेष्ट्य विधिवत्सुधीः ॥
दक्षिणास्यस्य वलये लोहे प्रक्षिप्य मध्यतः ।
समुत्कृष्टैस्तु सुदृढैः वलयं गाढतां नयेत् ॥
कलशेभ्यो बहिर्वामवल्लीवलयवल्लिके ।
कच्छाकटीवेष्टनाय सांचलाबद्ध्यते दृढा ॥
इत्येवं मार्गपटहो लक्षितः शास्त्रमार्गतः ।
देवता देवतानाथेनोक्तः स्वस्मिन् षडाननम् ॥
दैर्घ्येऽध्यधरो देशीपटहः परिकीर्तितः ।
दक्षिणं वदनं तस्य मितं सप्तभिरङ्गुलैः ॥
वामं तु वदनं तस्य भवेत्सार्धषडङ्गुलम् ।
यदान्तरं पशोश्चर्मजाठरं तत्प्रकीर्तितम् ॥
उद्दलीसंज्ञकस्तेन वामं वक्त्रं विधीयते ।
यन्मया मार्गपटहे लक्षणं प्रागुदीरितम् ॥
तदशेषविधातव्यममुष्मिन्पटहे बुधः ।
उत्तमादिविभेदेन त्रिधासौ द्विविधा भवेत् ॥

तस्मायमुत्तमः प्रोक्तः प्रोक्तमानविनिर्मितम् ।
द्वादशांशे विहीनोऽतो मध्यमः पटहो भवेत् ॥
अधमस्तु भवेदस्मात् षष्ठांशेनोनितस्तु यः ।
देशीपटहमेवेमं जानन्तस्त्वधमं जगुः ॥
उद्दल्यामत्र डेंकारो डेंकारः कवतेऽधिकः ।
अन्येऽनयोः पाटवर्णा उक्ताः पाठ्यपरीक्षणे ॥
वादनाय भवेदस्य कोणस्त्वष्टादशाङ्गुलः ।
पृथुर्मध्ये नतः किञ्चिदग्रे सिद्धकवाससा ॥
मूले प्रस्थापितः कार्यो वादकेन विजानता ।
अथैनं वादयेद्विद्वान् निषण्णः पङ्कजासने ॥
गोष्ठीषु मार्गपटहः स्थाप्य चोरुद्वयोपरि ।
घटवाद्यवदुत्तानवदने नाटकादिषु ।
कोणेन हस्ततो यद्वा वाद्यते पाटपण्डितैः ॥

कुम्भः

## पताकः—हस्तः

अङ्गुष्ठो यत्र वक्रस्सन् तर्जनीमूलसंश्रितः ।
ऋजवोऽङ्गुलयः श्लिष्टाः स पताक इति स्मृतः ॥
लोकप्रयोगमुद्वीक्ष्य नाट्यज्ञमतम् ... ... च ।
तत्तच्चेष्टानुसारेण हस्तकान् सम्प्रयोजयेत् ॥
घर्षताच्छेदनादर्शविभागादौ स्फुटं हि तत् ॥

सङ्गीतनारायणे

## पताकः

पताको विरलाङ्गुष्ठ उपधानः करो भवेत् ।
स्याच्चिन्तानिद्रयोरेष उपधानेऽपि युक्तितः ॥

कुम्भः

उत्पाटने पताकौ द्वौ कार्यावन्योन्यसंमुखौ ।
तरःपल्लवनिर्देशे स्वस्तिकीभूय विच्युतौ ॥
कार्यौ पताकौ विश्लिष्य स्वस्तिकाकारतां गतौ ।
विधेयौ गोप्यनिर्देशे पालनीये पताककौ ॥
नाट्याचार्योपदेशेन लोकयुक्तिमवेक्ष्य च ।
पताकस्यापरेऽप्यर्थाः स्वयमूह्या विपश्चितः ॥

विप्रदासः

## पदम्

वर्णपूर्वकमेतद्धि पदं ज्ञेयं सदा बुधैः ।

मतङ्गः

तावादिस्वरमध्यं तु गीतान्त्यं च पद भवेत् ।

भरतकल्पलता

यत्स्यादक्षरसंबद्धं तत्सर्वं पदसंज्ञितम् ।

नाट्यशास्त्रे

कर्णाटभाषयाबद्धं यदुद्ग्राहादिभिर्युतम् ।
तालेन येनकेनापि युतं तत्पदसंज्ञकम् ॥

## पदकरणम्

उद्ग्राहध्रुवकौ यत्र निबद्धौ तत्पदैः स्वरैः ।
तदुक्तं गीततत्त्वज्ञैः करणं पदपूर्वकम् ॥

मोक्षदेवः

## पदनिर्युक्तम्

छन्दः पादादिनिर्योगात् पदनिर्युक्तसंज्ञितम् ।

दत्तिलः

## पदस्वराः

व्यञ्जनानि स्वरा वर्णाः सन्धयोऽथ विभक्तयः ।
नामाख्योतोपसर्गाश्च निपातास्तद्धिताः कृतः ।
छन्दोविधिरलङ्कारा ज्ञेयः पदगतो विधिः ॥

नाट्यशास्त्रे

## पदार्थटीका—(हस्तप्राणः)

अथासां कथनानां स्यादर्थनिर्वाहता यदि ।
ज्ञेया पदार्थटीकेति पूर्वं या भ्रमतोदिता ॥
चेष्टागुणैश्च नियमैस्तत्तदर्थप्रबोधकैः ।
नृत्तहस्तदशप्राणाः कीर्तिता हस्तवेदिभिः ॥

शृंगारशेखरः

## पद्धतिस्वरूपम्

प्रेक्षार्थं समुपस्थिते बुधगणैः संगीतविद्भिः समं
पूर्णां रङ्गभुवं प्रविश्य निखिलैरङ्गोपहारैः समम् ।
तिष्ठन्तोऽखिलरङ्गकार्यविधुराः सत्संप्रदायान्तराः
वाद्यानां समतां विधाय सकलां नादस्य साम्यं ततः ॥
तच्चिन्ताः परिवादयेयुरतुलं मेलापकं तत्परम्
संपूर्णं गजरं ततो जवनिकामन्तः प्रसूनाञ्जलिम् ।
धृत्वा पात्रमवाप्य सौष्ठवमथोऽधिष्ठाय सुस्थानकम्
अन्तर्धानपटेऽपसारित इहारब्धे विधानानथः ॥
खण्डे चोपशमाह्वये जनमनांस्येकाग्रतामानयन्
प्रान्तं रङ्गभुवं विशोध्य च समन्ताद्वाद्यमाने समम् ।

खण्डे चोपशमाख्यकेन विधिना पुष्पाञ्जलिं मध्यतः
तस्मात्संमदसंभृतं त्वविकलैर्नृत्याङ्गकैः केवलैः ॥

वाद्येनोपशमेन नृत्यति परं पात्रं मनः संयुतं
तावत्संकुलगोपिकाश्च तुडिका स्यात्तत्पदं तत्परम् ।
साङ्गं तं मलपं तथा च कवितं वाद्यप्रबन्धैरिमैः
पर्यायेण च वा क्रमाद्वहिरथो स्वेच्छाकृते वादने ॥

सामस्त्येन लयाश्रितैश्च विषमैर्नृत्याङ्गकैर्नर्तनं
शुद्धैश्चाप्यथ रूपकं रुचिवशैर्जेगीयमानैश्चिरम् ।
पात्रं नैकविधं विधाय निपुणं नृत्यं ततः संत्यजेत्
रङ्गे यत्र न वादयन्ति गजरात्पश्चाचले वादकाः ॥

खण्डं तूपशमामिधं खलु तदा प्राप्तं परं प्राविशेत्
उक्तैः सस्थलपद्धतिः परिवडियां प्रोच्यते तद्विदाम् ।
वृन्दैः साखिलराजराजमुकुटालङ्कारहीरेण हि
वार्ता चासमहस्तमत्र निगदन्त्येके प्रवेशात्पुरः ॥

पाटैर्वा समहस्तकादिभिरिह स्यात्सर्वतो पृष्ठतः
स्थानं वा समपादमत्र निगदन्त्येके प्रवेशे बुधाः ।
केचित्केवलयोः प्रयोगमभणत् तं गीतवाद्यानुगम्
गीतादिरिवाश्रितैः परमसावेकैकशः कैश्चने-
त्येवं पद्धतिरीरितासुविमला शुद्धाभिधा भूभृता ॥

कुम्भः

### परसलक्षणम्

स्थानत्रितयविस्तीर्णः परसः कीर्तितो बुधैः ।

मोक्षदेवः

### पराभिमतः—अरालः

स्त्रीणामरालविहितं त्रिपांकेऽपि व्युज्यते ।
पुंसामरालविहितं त्रिपताके न युज्यते ।
इत्याह सिङ्गणाचार्यो व्याख्यायां भरतस्य वै ॥

विप्रदासः

### पराभिमतनृत्तभेदत्रयम्

नृत्तस्योक्तस्वरूपस्य प्राहुर्भेदत्रयं परे ।
विषमं विकटं लघ्वित्यत्र तद्विषमं मतम् ॥

यद्रज्जुभ्रमणादि स्याद्विकटं तदिहोच्यते ।
विरूपवेषावयवव्यापारं यत्प्रदृश्यते ॥

करणैराश्रितार्यैर्यत्प्रयुक्तं तद्भवेल्लघु ।
एतेषां सङ्करे त्र्यङ्कैः सङ्कीर्णं नृत्यमुच्यते ॥

विप्रदासः

### परार्थः

परानुभावयोग्यार्थः परार्थ इति कीर्तितः ।

वेमभूपालः

### परावृत्ततला

बहिश्चेत्प्रसृतः पाद उत्तानिततलः प्लुते ।
पश्चाद्देशे तदा चारी परावृत्ततला स्मृता ॥

कुम्भः

### परिक्रमः—तालः

परिक्रमाभिधे ताले द्वद्वयाद्यगणो भवेत् । ० ० । ऽ ऽ

कुम्भः

### परिघट्टना

दीर्घाण्यादावष्टौ लघूनि कुर्यात्पुनर्द्विगुणितानि ।
ह्रस्वान्यपि चत्वारि द्विगुणानि स्युः सदीर्घाणि ॥

षोडशलघूनि च स्युः सहनिधनत्नैव कार्याणि ।
एषः परिघट्टनायाः गुरुलघुवस्तुक्रमः प्रोक्तः ॥

नाट्यशास्त्रे

### परिभूमिका

स्निग्धं समतलं स्वच्छं तत्र स्यान्मत्तवारणे ।
दक्षिणोत्तरपार्श्वस्थस्तम्भयुग्मसमाश्रया ॥

साधारकाष्ठरुचिरा वर्णकैरुपभूषिता ।
रत्नानि चात्र देयानि वज्रं पूर्वदिशि स्मृतम् ॥
वैडूर्यं दक्षिणे पार्श्वे पश्चिमे स्फटिकं तथा ।
उत्तरे तु प्रवालं स्यान्मध्ये कनकमीरितम् ॥

एवमेतस्य विदुषा कर्तव्या परिभूमिका ।
चतुःस्तम्भसमायुक्ता सुवर्णकलशोज्ज्वला ।
यथा शैलगुहाकारो जायते नाट्यमण्डपः ॥

कुम्भः

### परिमण्डली

भ्रमन्ती मण्डले या सा त्वराभ्रमणमङ्गतः ।
सपार्ष्णिभ्रमरीत्युक्तो मुहुः सा परिमण्डली ॥

कुम्भः

### परिवर्तोऽग्रिमः

शशताशशसं द्विः समतिपाताः कलाष्टके ।
ध्रुवासिश्चतसृभिः स्यात्परिवर्तोऽग्रिमः पुनः ॥

शेषास्त्रयस्तु तिसृभिस्तत्राद्यपरिवर्तिनी ।
इहाभिदधिरे केचिद्गुणैस्ताण्ड्यादिभिः पृथक् ॥

कुम्भः

### परिवर्तनम्

विधाय पादावूर्ध्वाग्रौ समौ स्कन्धेन भूतलम् ।
आक्रम्योल्लालयेत्पादौ परिवर्तनमाचरेत् ॥

कुम्भः

### परिवाडः

प्रपदेन भुवि स्थित्वा पाष्र्ण्या पार्ष्णिद्वयेन वा ।
क्रमेण कुट्टनं भूमेः परिवाड इति स्मृतः ॥

कुम्भः

### परिवृत्तः—पाटः

पुटद्वयप्रहारेण परिवृत्तः प्रजायते ।
यथा – जें थां ४. गि णि ना ।

कुम्भः

### —हस्तप्राणः

पार्श्वभागे पुरोभागे प्राप्तो यो नटने करः ।
परिवृत्तस्समाख्यातो नाम्ना हस्तविशारदैः ॥

भरतकल्पलता

### परिश्रवणिका—पाटः

परिश्रवणिका सोक्ता वाद्यते यत्र तु क्रमात् ।
कर्तरी समपाणिश्च वाद्या वादनकोविदैः ॥

कुम्भः

### पर्यायपार्श्वोत्प्लवनम्

पर्यायपार्श्वोत्प्लवनं कर्तरीव तु मोदितम् ।
त्रिपताकस्य करयोः कृत्वा शश्वत्प्रकाशनात् ॥
( कपालोत्प्लवनम् )
पार्ष्णिमेकैकपादस्य कटौ पर्यायतो न्यसेत् ।
अर्धचन्द्रकरौ मध्ये न्यस्य यत्स्यात् कपालगम् ॥

अशोकः

### पल्लकौ

वलितौ पल्लकावपि शीर्षगौ ललितौ विदुः ।
अपरे चतुरश्रेण शिरस्स्थावञ्चितौ विदुः ॥
अपरे खटकावत्तौ शिरःप्राप्य शनैः शनैः ;
अन्योन्यस्य विलग्नाग्रौ ललितौ संप्रचक्षते ॥

कुम्भः

### पल्लवलक्षणम्

बाहुल्यावर्तितेनोर्ध्वं प्रसार्य परिवर्तितः ।
स्वस्तिकाकृतितां नीतौ पताकौ पल्लवौ मतौ ॥
प्रशिथिलौ पताकौ तु केचिदत्र प्रचक्षते ।
नतोन्नतौ पद्मकोशौ शिथिलौ मणिबन्धयोः ॥
स्वपार्श्वयोः पुरस्ताद्वा पल्लवावदन् परे ।
पद्मकोशकरस्थाने पताकानपरे जगुः ॥

हम्मीरः

### पश्चात्पुरःसरा

सैव पश्चात्पुरःक्षेपात्प्रोक्ता पश्चात्पुरःसरा ।

कुम्भः

### पाञ्चाली

प्रोक्ता प्रवृत्तिः पाञ्चाली याविद्धभुजविक्रमा ।
पाञ्चालाः शोरसेनाश्च काश्मीरा बाह्लिका अपि ॥
औशीनरा माद्रकाश्च ये देशा एवमादयः ।
भागीरथीं समारभ्य हिमवत्पर्वतावधिः ॥
संश्रितास्ते तु पाञ्चालीं प्रवृत्तिं समुपाश्रिताः ।
भारत्यारभटीप्राया साटोपवचनक्रमा ॥

वेमभूपालः

### पाटाः

अपक्रमकवर्गाख्यष्टतवर्गौ लघौ मतौ ।
रह्वाविति च वर्णानां विंशतिः पाटसंज्ञकाः ॥
सस्वरा सस्वरैर्नानास्तेऽपि स्युः क्रमव्युत्क्रमात् ।
त्रिधा पाटाः पुनर्मिश्रो कूटखण्डविभेदतः ॥
मृदङ्गे थोन्धलां भेर्यां भवत् डमरुके डमम् ।
पटहे दन्त्रिवल्यां दोङ्कटे घडविभेदतः ॥
ढवेटिढे च ढक्कायां शङ्खेधुन्धि च सेल्लुके ।
रुजौरुडुं च डक्कुल्यां तुन्तकौ घनतालके ॥
करटायां तुटमिच्छन्ति मुक्ताष्टाक्षरगेजना ।
समानाः सर्ववाद्येषु शेषः पाटा यथोचिताः ॥

कुम्भः

### पाटकरणम्

स्वरैः सहात्र पाटैश्च यत्रोद्ग्राहध्रुवौ कृतौ ।
क्रमव्यत्यासतो द्वेधा तत्पाटकरणं मतम् ॥

मोक्षदेवः

## पाटभेदाः

उल्लोलः पाण्यन्तरश्च निर्घोषः खण्डकर्तरी ।
दण्डहस्तस्समनखो विदुर्यमलहस्तकः ॥
रेचितो भ्रमरी विद्युद्विलासश्चार्धकर्तरी ।
अलग्नकोसप्तपाणि तु परिव्यस्तकः संज्ञकः ॥
इति षोडशपाटाः स्युः सर्ववाद्योपयोगिनः ।
प्रायेणैतान् प्रयुञ्जन्ते हुडुक्कायां मुनीश्वराः ॥
अथोदाहरणं तेषां वक्ष्ये लक्ष्यपुरस्सरम् ।
रेफश्च भ्रमरः पाण्यन्तरोऽथ दण्डहस्तकः ।
श्रीकण्ठेन समुद्दिष्टं परं पाटचतुष्टयम् ॥

कुम्भः

## पाटवर्णेषु स्वराः

एतेषु पाटवर्णेषु स्वराः सप्त प्रकीर्तिताः ।
अ आ इ ई उ ए ओ च वाद्यविद्याविशारदैः ॥

कुम्भः

## पाटविन्यासभेदाः

विन्यासभेदाः पाटानां वाद्यन्ते मुरजादिषु ।
जोलावणी च चल्ला च रेफवश्च कुचुम्बिनी ॥
चारुश्रवणिकालग्नः परिश्रवणिका ततः ।
समप्रहारः कुडुपं चारणीकरणा तथा ।
दण्डहस्तो घननखस्तानि द्वादशधाऽवदन् ॥

कुम्भः

## पाठभिन्नफूत्कारः

अन्यथैवाभ्यधुः केचित् स्थानत्रितयवर्तिनाम् ।
स्वराणामुद्भवं तेषां मतमत्रोपवर्ण्यते ॥
मध्यमे सप्तमेऽभ्यासवशतः फूत्कृतेरह ।
शरीरवीणासंभूतस्वरसंवादभाजनम् ॥
स्वराः समग्रा जायन्ते तारस्थानगता अपि ।
मुखसंयोगसांकट्यमापिते मुखरन्ध्रके ॥
टीपापटीयसा चक्षुस्तं प्रकारं पुरातनाः ।
तद्वादनप्रकारेण यद्रन्ध्रं वाद्यते बुधैः ॥
तस्मादुत्पद्यते यस्तु स्वरः सिद्धगणो भवेत् ।
विप्रकर्षे तु रन्ध्रस्य मुखसंयोगकर्तृके ॥
मन्द्रस्थानगतानां च स्वराणामुद्भवो भवेत् ।
अभ्यासवशतः केचिद्वंशत्रादनकोविदाः ॥
शैघ्र्याशीघ्रतया वायोस्तीव्रातीव्रतयापि च ।
रन्ध्रस्य पूरणाद्वायोः पूरणेन च वा ध्वनेः ॥
प्राप्तोपचययोगेनापचयेनाथ वा क्वचित् ।
एकस्मिन्नेव रन्ध्रेऽपि चित्रं नानास्वरोदयम् ।
कुर्वन्ति किल तन्नास्ति किमभ्यासस्य दुष्करम् ॥

कुम्भः

## पाठीलक्षणम्

वितस्तिमात्रा पाठी स्याद्यक्षावेशविधायिनी ।
एकच्छिद्रा मुखे पञ्चच्छिद्रा च स्वरसाधने ॥
वेष्टितस्त्रपुपत्रेण लोकं पुष्णाति तद्ध्वनिः ।
नवाङ्गुलस्य वंशस्य पाटः कार्यः प्रमाणतः ॥

सोमराजदेवः

## पाणिरेचकः

पाणिकण्ठकटीपादविशेषेण समुद्भवान् ।
त्वरया परितो भ्रान्तिर्यदा स्याद्धंसपक्षयोः ।
पर्यायेण तदा धीरैरादिष्टः पाणिरेचकः ॥

अशोकः

## पाणिहस्तः—हस्तपाटः

पाणिहस्तो भवेदेष यत्र स्याद्विरलाङ्गुलिः ।
समपाणिः स्फुरन् वाद्ये इति वाद्यविदो विदुः ॥
तरगड दरगड तगड दरगड तगड दगड दगड ।

कुम्भः

## पाण्यन्तरः—पाटः

वक्षोऽङ्गुष्ठविनाभूतैः पौनःपुन्येन पीडयेत् ।
वामस्तु स्वं पुटं हस्तो हस्तपाण्यन्तरस्तदा ॥
अर्धार्धाङ्गुष्ठहननात् संहतांगुलिचालनात् ।
परे पाण्यन्तरं प्राहुरपरे त्वन्यथा जगुः ॥
अङ्गुष्ठो दक्षिणो हस्तो हेतुः पाण्यतरोद्भवे ।
विश्लिष्टाङ्गुलिसञ्चारमङ्गुलाधोर्धताडनम् ।
पाण्यन्तरस्य जनकं सिन्नलक्षणया यथा ॥
नखं २ खें २ नखें २ खेद खुंद ।

कुम्भः

## पाण्यन्तरनिकुट्टकः—हस्तपाटः

तर्जन्यङ्गुष्ठपातेन यत्र दक्षिणहस्ततः ।
सरेफवामहस्तेन क्रमव्युत्क्रमयोगतः ।
वाद्यते वाद्ययुक्तो सौ पाण्यन्तरनिकुट्टकः ॥
दां गिड दां खखिटक दां खरि थुदादां खरिखरिदां गिडदां

कुम्भः

## पात्रगुणाः

सौष्ठवं रूपसम्पत्तिश्चारुविस्तीर्णकर्णता ।
विसारिनेत्रता बिम्बाधरपाकान्तदन्तता ॥
सुकम्बुकण्ठता वेल्लल्लतासरलबाहुता ।
तन्मध्ये न तत्स्थूलनितम्बकरभोरुता ॥
अत्युन्नपीनस्तनता घनोरुजघनोन्नता !
गौरता श्यामता वेति तद्ज्ञैः पात्रगुणा स्मृताः ॥

सङ्गीतनारायणे

रूपयौवनलावण्यमाधुर्याणि च सौष्ठवम् ।
मुखप्रसादः प्रागल्भ्यं विशालायतनेत्रता ॥
कृशावलग्नशोभित्वं तथैव तनुगात्रता ।
एते पात्रगुणाः प्रोक्ताः दोषः स्यात्तद्विपर्ययात् ॥

वेमभूपालः

## पात्रप्रवेशक्रमः

अथेदानीं तु पात्राणां प्रवेशक्रम उच्यते ।
आदावुपोहनं कृत्वा यथा मार्गं यथा रसम् ॥
पुरःस्थितं भाण्डवाद्यैर्गम्भीरध्वनिशालिभिः ।
ध्रुवायां संप्रयुक्तायां प्रस्तुतार्थानुसारतः ॥
अपनीते च नैपथ्ये पात्रैरुत्तममध्यमैः ।
वैष्णवस्थानके स्थित्वा कृत्वा वक्षः समुन्नतम् ॥
नात्युक्षिप्तप्रसन्ने च भुजशीर्षे विधाय च ।
निधाय नाभिनिकटे दक्षिणं खटकामुखम् ॥
तथा वामलताहस्तं विधाय चिबुकं पुनः ।
कृत्वा च वक्षसःक्षेत्राच्चतुरङ्गुलतः स्थितम् ॥
प्रवेशस्तु विधातव्यो नानारससमाश्रयः ।
पादोत्क्षेपस्तु पात्राणां स्वप्रमाणकृतो भवेत् ॥
स पुनश्च चतुस्तालो देवानां भूभुजामपि ।
द्वितालो मध्यमानां तु पादोत्क्षेपः प्रकीर्तितः ।
एकतालप्रमाणोऽसौ कार्यः स्त्रिति च लिङ्गिनाम् ॥

वेमभूपालः

## पात्रप्रशंसा

यत्पात्रं गात्रविक्षेपैः कोमलैर्विलसल्लयैः ।
सुतालैरक्षराणीव प्रोद्गिरुद्गीतवाद्यकैः ॥

हम्मीरः

## पात्रप्रसादनम्

भूषणालेपवसनमाल्याद्यैः परिशोभितः ।
पात्रप्रसादनं कुर्यात्तत्तद्देशानुसारतः ॥

वेमभूपालः

## पात्रप्राणाः

जवत्वं स्थिरता रेखा भ्रमरो दृष्टिरश्रमः ।
प्रीतिर्मेधा वचो गीतिः पात्रप्राणा दश स्मृताः ॥
यत्र मध्येन संचेन नैरन्तर्येण वर्तनम् ।
प्रमाणरेखा उक्ता स्यात् मदनृत्तं प्रचक्षते ॥

## पात्रमण्डनानि

कुङ्कुमैरञ्चितो देहश्चन्दनैर्धूसरोऽथवा ।
पृष्ठतः केशपाशः स्याल्लसत्पुष्पावतंसकाः ॥
ऋज्वी वा त्रितयं वाणी मुक्ताजालविराजिता ।
भाति सिन्दूरकस्तूरिचन्दानाद्यैर्विशेषतः ॥
तत्त्वाञ्जनान्विते नेत्रे कर्णयोस्तालपत्रके ।
कस्तूरीपत्रवल्लयङ्कौ गण्डौ कण्ठविलम्बितम् ॥
ग्रीवायां मौक्तिकाहारावली स्यात्स्तनमण्डले ।
न्यस्तसद्रक्तसौवर्णवलये च प्रसृष्टयोः ॥
सूक्ष्मं कार्पासिकं वस्त्रं कुङ्कुमं वासकञ्चुकम् ।
वलक्ष्यंवासमञ्जीरौ पादौ देशानुसारतः ।
इत्येतन्मण्डनं चान्यत्पात्रे कुर्याद्यथोचितम् ॥

मोक्षदेवः

## पात्रलक्षणम्

नृत्ताधारतया पात्रं नर्तकी प्रोच्यते बुधैः ।
मुग्धं मध्मं प्रगल्भं च तत्पात्रं त्रिविधं मतम् ॥
मुग्धादेः प्रोच्यते लक्ष्म यौवनत्रितयं क्रमात् ।
लीना चारु स्तनाभोगकपोलजघनोरुकम् ॥
प्रायो निम्नवनासं च यौवनं प्रथमं मतम् ।
पीनजङ्घोरुकं पीनकठिनोरुघनस्तनम् ॥
संजीवितं मन्मथस्य द्वितीयं यौवनं बुधाः ।
प्रसन्नोन्मादकरणं श्रीमत्सुरतनैपुणम् ॥
स्मरभावैः समृद्धं च त्रितीयं यौवनं जगुः ।
यौवनं तुर्यमथाहुर्मन्दोत्साहमनोयुतम् ॥
तज्जरामिमुखं शोभाविकलं नादृतं बुधैः ।
बालं मनोविहीनत्वान्न पात्रं जनरञ्जनम् ॥

मोक्षदेवः

अतिप्रगल्भमेतस्माद्यौवनात्पात्रमुच्यते ।
तज्जराभिमुखं शोभाविकलं नादृतं बुधैः ।
बालं मनोविहीनत्वान्न पात्रं जनरञ्जकम् ॥

हम्मीरः

## पादद्वयकुट्टिता

एवं पादद्वयकृता सा पादद्वयकुट्टिता ।
एवमिति पादस्थितिकुट्टितायाः ।

कुम्भः

## पादपाटभेदाः

पाटस्तु षोडशः प्रोक्तः सारिकार्धपुरटिका ।
स्वस्तिकास्फुरिता चैव तालोक्षेपो निकुट्टकः ॥
प्रदुस्खालतिकाखुत्तं पृष्ठोक्षेपपुराटिका ।
समस्खलतिकोल्लालस्तथोद्वेष्टकवेष्टिनौ ।
प्रावृत्तं च लताक्षेप इत्येषां लक्षणं ब्रुवे ॥

सोमराजदेवः

## पादरेचकः

पार्ष्ण्यङ्गुष्ठाग्रयोरन्तः बहिश्च सततं नतिः ।
नमनोन्नमनोपेतः प्रोच्यते पादरेचकः ॥

सङ्गीतमुक्तावली

## पादरेचकलक्षणम्

पार्ष्ण्यङ्गुष्ठयोर्गमनं बहिरन्तश्च सन्ततम् ।
नासानेत्रमनोपेतं कथ्यते पादरेचकः ॥

मोक्षदेवः

## पादलोहडी

एकपादप्रयुक्तेयमेकपादस्य लोहडी ।

कुम्भः

## पादस्थितिकुट्टिता

कुट्टितः प्रथमः पादः स्थितश्चाङ्गुलिपृष्ठतः ।
अन्यस्ततः कुट्टितः स्यात्पादस्थितिनिकुट्टिता ॥

कुम्भः

## पारिपार्श्वकयोरपसरणक्रमः

अस्यां प्रयुज्यमानायां पारिपार्श्वकयोर्भवेत् ।
पश्चिमेनापसरणं तत्प्रयोगक्रमो यथा ॥
अवहित्थस्थानकेन स्थितश्चाञ्चितशिरा मनाक् ।
चतुरस्रमुनेकृत्वा नाभाविन्यस्य जर्जरम् ॥

अलपल्लवहस्ताभ्यां तुलावद्विभृयात्समम् ।
आक्षिप्तचार्यौ विक्षेपवेधौ कुर्वन् पुरोक्तवत् ।
गच्छेत् पञ्चपदीं धीरः सविलासाङ्गचेष्टितैः ॥

विप्रदासः

## पारिपार्श्वकः

सूत्रधारगुणैरेतैः किञ्चिन्न्यूनैः समन्वितः ।
मध्यमः प्रकृतिः पारिपार्श्वकः परिकीर्तितः ॥

वेमभूपालः

## पार्वतीलोचनः—तालः

पार्वतीलोचनः पुनः । लौ दौ लौ दौ तनभका ।
॥ ० ० ॥ ० ० ऽ ऽ । । । । ऽ ॥

कुम्भः

## पार्श्वक्षेपकुट्टिता

पार्श्वतश्च पुरःक्षेपात् पार्श्वक्षेपाख्यकुट्टिता ।

कुम्भः

## पार्श्वपाणिः—हस्तपाटः

पार्श्वपाणौ नखाग्रेण वाद्यं धीरैः प्रवाद्यते ।

कुम्भः

## पार्श्वपाणिः—हस्तपाटः

पार्श्वपाणौ नखाग्रेण वाद्यं धीरैः प्रवाद्यते ।
थ र र गड धर गड दग डदग ।

कुम्भः

## पार्श्वमण्डलिलक्षणम्

तौ पताकाकृती पार्श्वन्यस्तावन्योन्यसंमुखौ ।
पार्श्वमण्डलिनावुक्तोवन्येत्वाहुः स्वपार्श्वयोः ॥
आविद्धभ्रमितभुजौ पार्श्वमण्डलिनाविति ।
कक्षवर्तनिकेत्येतौ मन्यन्ते नृत्तवेदिनः ॥

हम्मीरः

—मतान्तरे

केचित्स्वपार्श्वयोरेवावाविद्धभ्रमितौ भुजौ ।
पार्श्वमण्डलिनावूचुः कक्षवर्तनिकेति च ॥

विप्रदासः

**पार्श्वमण्डली—हस्तः**

एतौ हि पार्श्वद्वितये पर्यायात्समुपागतौ ।
पार्श्वमण्डलिकाहस्तः प्रोच्यते भरतागमे ॥
कपोतानां च गमने नागानां कन्यकासु च ।
पार्श्वमण्डलिकाहस्तः प्रोच्यते भरतादिभिः ॥

भरतकल्पलता

**पार्श्वाक्रान्ता—चारी**

यद्वान्यचरणस्योरुक्षेत्रपर्यन्तमुद्धृतम् ।
चरणं धरणीभागे न्यायोदाहृतकं यदि ।
एषापि पार्श्वाक्रान्ताख्या चारी नृत्तविदां मता ॥

वेमभूपालः

**पार्श्वाभिमुखलक्षणम्**

पार्श्वाभिमुखमन्वर्थं पार्श्वस्थस्यावलोकने ।

हम्मीरः

**पार्षगण्डः(वार्षगण्यः)—न्यायः**

प्रविचारः सात्त्वतवत्पार्षगण्डेऽपि दृश्यताम् ।
किन्तु हस्तोद्वेष्टनं तु स्कन्धे वक्षसि वा भवेत् ॥
अत्राधिकं स्याद्भ्रमणं पृष्ठतः फलकस्य तु ।
अत्र पादः कृपाणस्य क्रियते वक्षसः स्थले ॥

वेमभूपालः

**पार्ष्णिविद्धम्**

पार्ष्णिविद्धे भवेत्पार्ष्णिरङ्गुष्ठक्षेपिणी सदा ॥

कुम्भः

पार्ष्णिरङ्गुष्ठसंश्लिष्टो सदा पादान्तरस्य हि ।
पार्ष्णिविद्धं तदा प्रोक्तं सूरिभिः परिकीर्तितम् ॥

संगीतमुक्तावली

**पार्ष्णी**

यस्याः पार्ष्णी पार्श्वगते स्थाने स्थितश्चाथ रेचयेत् ।

कुम्भः

**पालिका**

षड्जग्रहांशा सन्यासा गरिक्ता पालिका मता ।
गानज्ञैर्गीयते सायं कतिचिद्गमकान्विता ।
पाली ललाटोदितचन्द्रलेखा प्रफुल्लराजीव समन्तिनेत्रा ॥

कुम्भः

**पाशः—हस्तः**

सूच्यां निकुञ्चिते श्लिष्टे तर्जन्यौ पाश ईरितः ।
अन्योन्यकलहे पाशे शृंखलायां नियुज्यते ॥

भरतकल्पलता

**पिण्डविनिर्णयः**

रक्ताधिक्ये पुरन्ध्री स्याद्बीजाधिक्ये तु पूरुषः ।
तयोः साम्ये भवेत्क्लीब इति पिण्डविनिर्णयः ॥

सोमराजदेवः

**पिण्डहस्तः—हस्तपाठः**

व्याप्रियेते समं यत्र रेफहस्तोर्ध्वहस्तकौ ।
स पिण्डहस्तो विज्ञेयो वाद्यविद्याविशारदैः ॥
धरकट धरकट झें झें ।

कुम्भः

**पिण्डीबन्धः**

स चेष्टदेवतारूपानुकारेण स्मृतो बुधैः ।
तस्य चेष्टानुकारेण विधेया चाविपश्चिता ।
पिण्डाकारेण विज्ञेयः पिण्डीबन्धस्तदा पुनः ॥

कुम्भः

**पितामहहस्तः**

सन्दंशस्त्वलिके भागे चलितो विरलो यदि ।
पितामहे नियुज्येत शिवेन परिकीर्तितः ॥

भरतकल्पलता

**पितामहीहस्तः**

अलपद्मः कण्ठदेशे कृत्वापि चलितो यदि ।
पितामह्या नियुज्येत कथितो भरतादिभिः ॥

भरतकल्पलता

**पितृहस्तः**

एतौ तौ विपरीतौ चेत्पित्रर्थे विनियुज्यते ।

भरतकल्पलता

**पिशाचादीनामभिनयः**

पिशाचभूतयक्षाद्या अप्रत्यक्षा भवन्ति ये ।
तेषामभिनयः कार्यः करणैस्तु यथोचितैः ॥

वेमभूपालः

**पीठकम्**—नाट्याङ्गम्

तथाक्षरेण संयुक्तस्ताविगिद्दिगिरेव च ।
आदौ तु समपादश्च हस्तश्चेति लताभिधः ।
समं शिरस्समा दृष्टिः पाठकं चाभिधीयते ॥

भरतकल्पलता

**पीठमर्दः**

कलानामुपदेशेन गोष्टीदेशे च साधयेत् ।
तज्ज्ञानामिति निर्दिष्टः पीठमर्दो मनीषिभिः ॥

शुभङ्करः

—उपनायकः

नायकानुचरो भर्तुस्तुल्यवेषपरिच्छदः ।
पीठमर्द इति प्रोक्तः किञ्चिन्न्यूनस्तु तद्‌द्वयोः ॥

यद्वा—

कार्यमाणोऽत्र निर्वृत्तः प्रत्यागण्यः समासतः ।
मन्त्रिकागुह्यकोपेतः कलासु च विचक्षणः ॥

**पुटतालः**

यः षड्विंशतिवर्णाघ्रिः स स्यात्सर्वार्थसिद्धिदः ।
ललितश्च पुटाख्ये च ताले शृङ्गारपोषकः ।
ताले चैव पुटे ज्ञेयं गुरुद्वन्द्वं लघुप्लुते ॥

गान्धर्ववेदे

**पुत्रीपुत्रहस्तः**

वामहस्ते सर्पशीर्षं मृगशीर्षं तथोपरि ।
विन्यसेत्तत्सुतायां च सुतेऽपि विनियुज्यते ॥

भरतकल्पता

**पुरःक्षेपनिकुट्टिता**

कुट्टितश्चरणः पूर्वं पुरतोऽङ्गुलिपृष्ठतः ।
स्थापितः कुट्टितस्थाने पुरः क्षेपनिकुट्टिता ॥

कुम्भः

**पुरःक्षेपा**

कुञ्चितं पादमुत्क्षिप्य वेगाद्विस्तार्य चेत्पुरः ।
विन्यसेदवनौ प्रोक्ता पुरःक्षेपाभिधा बुधैः ॥

कुम्भः

**पुरस्तात्लुठिता**

पुरस्ताच्च कृता सैव पुरस्तात्लुठिताभिधा ।

कुम्भः

**पुराटिका**

पुराटिका मिथोऽङ्घ्रिभ्यामुद्वृत्ताभ्यां निकुट्टनात् ।

कुम्भः

**पुरुषरागाः**

भूपालो भैरवश्चैव श्रीरागो फलपञ्जरः ।
वसन्तो मालवश्चैव बङ्गालो नाटकस्तथा ।
अष्टौ रागा इमे धीरैः पुरुषा इति सम्मताः ॥

शृङ्गारशेखरः

**पुरोदण्डभ्रमाख्यः**

तिर्यङ्मुष्टिं विधायैकं पार्श्वादस्यैवचेद्बहिः ।
अन्तश्च लीलयान्यस्मिन् लुठिते सेति हस्तयोः ॥
पुरस्तात्रिस्मृतिर्यत्र पर्यायेण तदीरितम् ।
पुरोदण्डभ्रमाख्यं तच्चालयं पूर्वसूरिभिः ॥

**पुष्पाञ्जलिः**

तत्र पुष्पाञ्जलिः पूर्वं मुखचाली ततः परम् ।
रागवाक्यानुगं शब्दनृत्तं शुद्धगतिस्तदा ॥
रूपाणि च तथा ब्वाडः शब्दचालिरतः परम् ।
सूडादिशब्दनृत्तं च शब्दं च जपनर्तनम् ॥
ततः सूडादिगीतानां तदर्थाभिनयोचितम् ।
नृत्तं नानाविधं गीतप्रबन्धानां च नर्तनम् ॥
चिन्दुनृत्तं दरूनृत्तं कन्दराख्यमतः परम् ।
ततो द्रुपदसंचं च नृत्तमेषक्रमोऽत्रहि ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

स्थित्वा पादसरोरुहाग्रविषमे रेखाविभिः प्रोज्ज्वला
संस्थाप्योरुनितम्बबिंबयुगलं संकुञ्च्य जानुद्वयम् ।
हस्ताभ्यां कुसुमाञ्जलिं सुकलितां धृत्वा स्तनाभ्यां मुहु-
र्नम्रीभावमुपागता नरपतेरग्रे नटी राजते ॥

कुम्भः

ततो जवनिकान्तर्धौ दधानौ कुसुमाञ्जलिम् ।
पात्रं तिष्ठेदधिष्ठाय स्थानकं सौष्ठवाञ्चितम् ॥

पुष्पाञ्जलित्यागसमये पठनश्लोकः ।

निषिद्धैरभ्येतं गिलितमकरन्दैर्मधुकरैः ।
करैरिन्दोरन्वः छुरितरवसंभिन्नमुकुलम् ॥

विधत्तं संसिद्धिं नयसुभगामस्य सरसः ।
प्रकीर्णं पुष्पाणां हरिहरयोरञ्जलिरियम् ॥

हम्मीरः

## पुष्पावकीर्णाः

ततो नैकरसं कार्यं किञ्चित्कुर्याद्विचक्षणः ।
वृत्तिर्वापि रसो वापि सभावोऽपि प्रयोगतः ।
पुष्पावकीर्णाः कर्तव्याः चित्रमाल्यानुकारिणा ॥

कुम्भः

## पुस्तलक्षणम्—आहार्याभिनयः

तत्र शैलविमानादिनाट्यं यद्यत्प्रदृश्यते ।
तत्पुस्त इति विज्ञेयं स च त्रेधा विधीयते ॥
आदिमः सन्धिमस्तत्र मध्यमो व्याजिमस्ततः ।
अन्तिमो वेष्टिमस्तेषां क्रमाल्लक्षणमुच्यते ॥
किलिञ्जचर्मवस्त्राद्यसन्धानात्तत्र सन्धिमः ।
सूत्रकर्षादिभिर्व्याजैर्निर्वृत्तं व्याजिमं विदुः ।
जतुसिध्यादिसंबन्धात् कथ्यते यस्स वेष्टिमः ॥

नृत्तरत्नावली

## पुंनृत्यम्

पुंनृत्यं ताण्डवं प्रोक्तम् ।

सङ्गीतनारायणः

## पूजने फलाविष्करणम्

अनेन विधिना यत्र पूज्यते रङ्गमण्डलम् ।
तत्राभिवर्धते राज्यमायुः कीर्तिश्च शाश्वती ॥

विप्रदासः

## पूर्णकूटतानसंख्या

शून्यवेदाक्षिनासत्यवसुनेत्रमिताः स्फुटाः ।
सप्तस्वराणां पूर्णानां पिण्डसंख्योपजायते ॥
(२८२२४०)

## पूर्वरङ्गः

अर्थप्रकृतयः पञ्च चतस्रो वृत्तयस्तथा ।
नाट्योक्तैस्तु समावेशस्तथाभाषाविभाषयोः ।
प्रायशः सर्वनाट्येषु कीर्त्यन्ते संहिता इमे ॥

शुभङ्करः

पदभागाः कथा चैव परिवर्पस्तथैव च ।
यस्मिन् रङ्गे प्रयुज्यन्ते पूर्वरङ्गस्स उच्यते ॥

भरतकल्पलता

## पूर्वरङ्गः

नटेन नटनीयार्थतादात्म्यपटुना स्फुटम् ।
वक्ष्यतेऽभिनयैः सोऽर्थो यत्र तन्नाट्यमुच्यते ॥
अभिधत्ते नाट्यशब्दस्तलामिव्यञ्जकात्पुनः ।
वक्तिलक्षणया न स्यान्नाट्यमेतद्द्वयं मतम् ॥
करणैरङ्गहारः स्यान्नृत्यं तेनानुरञ्जितैः ।
चतुर्विधैरभिनयैर्निष्पन्नं नृत्यमुच्यते ॥
अभिधत्ते नृत्यशब्दोऽभिनयं व्यङ्ग्यमस्य तु ।
आह लक्षणया तस्मादुभयं नृत्यमुच्यते ॥
नाट्यशब्दस्याभिनये नृत्यशब्दस्य सद्रसे ।
वृत्तिलक्षणया तस्मादुभाभ्यामुभयग्रहः ॥
सत्या रसात्मकस्यास्य प्रयोगः प्रचुरेक्षिते ।
विधिना ये च रक्ष्यन्ति पूर्वरङ्गः स उच्यते ॥
रक्ष्यन्ति येन तत्कर्म रङ्गं तौर्यत्रिकाश्रितम् ।
पूर्वोऽस्य भागो विद्वद्भिः पूर्वरङ्गं निगद्यते ॥
सूत्रधारप्रवेशार्थास्तथौत्पत्यादिका ध्रुवाः ।
उपोहनेन रहिताः क्रियास्तेनानुरञ्जिताः ।
पूर्वरङ्गे प्रयुज्यन्त इति पूर्वरङ्गविचारगीः ॥

विप्रदासः

## पूर्वरङ्गभेदाः

चतुरश्रस्त्र्यश्रो मिश्रः स्यादयं भिद्यते त्रिधा ।
शुद्धश्चित्र इति द्वेधा द्विभेदोऽप्ययमिष्यते ॥
करणैरङ्गहारैश्च रहितं शुद्ध उच्यते ।
मिलितस्तैश्चित्रहेतुश्चित्र इत्युच्यते बुधैः ॥

विप्रदासः

## पूर्वरङ्गविधानम्

शतौ द्विद्विकता, शश्चैककलं त्रिकलस्तु शम् ।
प्रत्येकं चरणेष्वत्र लयत्रितयमेव च ॥
परिवर्तास्तु चत्वारस्तेषामाद्यः स्थिते लये ।
द्वात्रिंशता कलानां स्याल्लये मध्ये द्वितीयकः ॥
सोऽपि तावत्कलस्तावान् तृतीयोऽपि कलस्ततः ।
तावानेव चतुर्थस्तु परं स स्याद् द्रुते लये ॥
ध्रुवेयं चतुरश्रस्यादस्यां पालितयं भवेत् ।
सन्निपातैश्चतुर्भिः स्यात्परिवर्त इहैककः ॥
प्रथमे वा द्वितीये वा तृतीये सन्निपातके ।
पूर्वस्मिन्परिवर्तेऽत्र वाद्यभाण्डपरिग्रहः ॥

सूत्रधारप्रवेशोऽत्र द्वितीये परिवर्तके।
तत्पारिपार्श्वकौ स्यातां सभृङ्गारकजर्जरौ ॥
सपुष्पाञ्जलयः शुक्लवस्त्राः सुमनसस्त्रयः।
कृतमङ्गलसंस्कारा वैष्णवस्थानके स्थिताः ॥
प्रविशेयुस्ततः सूत्रधारः पञ्चपदीं व्रजेत्।
दक्षिणं चरणं पार्श्वोक्रान्तचार्यो समाक्षिपन् ॥
तालत्रयं ततस्सूच्या वामं चरणमाक्षिपेत्।
सद्वयः सूत्रधारोऽथ गत्वा पञ्चपदीं शनैः ॥
रङ्गमध्ये पुष्पमोक्षैः पूजयेत्पद्मसम्भवम्।
नमस्कुर्यात्ततो देवं मनोवाक्कायकर्मभिः ॥
कलाभिः स्यात् षोडशभिः पञ्चपद्यां प्रवेशनम्।
पुष्पाञ्जलिविमोक्षे तु कलाषट्कमुदीरितम् ॥
तावतैव तु काले तद्द्वितीयपरिवर्तके।
नमस्कार्यं देवतानां तृतीये परिवर्तके ॥
आक्रमेन्मण्डलं पूर्णं दक्षिणं पादमुद्धरन्।
सूच्यासलये च दक्षं च विद्वद्दक्षिणहेतुकम् ?।
सूच्यैवं च प्रकुर्वीत मण्डलस्य प्रदक्षिणम् ॥

कुम्भः

## पूर्वरङ्गस्थितिः

नृत्यालोकनतत्परे नरपतौ श्रीसूत्रधारः कृती
नीत्वा चीनपटीलसज्जवनिका मध्ये नटीमुत्तमाम्।
रागालापमृदङ्गतालरचनां रम्यां समावेदिनीं
संपाद्यारभटीं द्रुतं किल नयेदन्तः पटीं दूरतः ॥

कुम्भः

## पूर्वरङ्गाङ्गम्

अथाभिधास्यते सम्यक् पूर्वरङ्गाङ्गसङ्ग्रहम्।
प्रत्याहारोऽवतरणमाश्रावणारम्भवक्त्रपाणी च।
परिघट्टनाथ संघोटनाथ मार्गासारितं च।
आसारितोत्थापिन्यौ नान्दीशुष्कावकृष्टाह्वाः ॥
रङ्गद्वारं चारीं सैव महत्पूर्विका त्रिगतम्।
प्रस्तावनेति कथितान्येतान्यङ्गानि भारते पूर्वैः ॥
अङ्गैरेभिरिहाङ्गी निष्पन्नः पूर्वरङ्गोऽयम्।
तेभ्यो नैवाभिन्नो भिन्नोऽपि प्रेक्षते कश्चित्सद्भिः ॥
उत्थापनीप्रयोगे प्राधान्येनोपकल्पते।
प्रत्याहाराद्ययं याता प्राच्योदीच्यां गतामत्र।
अत्राश्रावणकाद्यं यदङ्गषट्कं क्रमेणोक्तम् ॥

देवस्तवार्थमपदं पदबद्धं वा द्विधा तदुद्दिष्टम्।
अपदं तत्र तु गीतं निर्गीतं कीर्तितं तच्च ॥
यत्पदबद्धं गीतं तद्देवप्रीतिदं बहिर्गीतम्।
तस्मात्पदैर्निबद्धं प्रयोज्यमाश्रवणादिस्तु ॥
प्रयाणे तु बहिर्गीतमन्तर्भवनिकागतैः।
तन्त्रीभाण्डकृतं तज्ज्ञैः प्रयोक्तव्यमतन्द्रितैः ॥
ततो जवनिकां हित्वा समस्तकुतपैः सह।
नृत्यपाठ्यकृतानि स्युः पूर्वरङ्गाङ्गकानि तु ॥
ततः पुनः प्रयोक्तात्र मन्द्रकादेस्तु मध्यतः।
प्रयोज्यं किञ्चिदेकं तु वर्धमानमथापि वा ॥
पूर्वरङ्गे प्रयुञ्जीत ततोऽन्याङ्गसमुच्चयम्।

कुम्भः

## पूर्वरङ्गाङ्गभेदाः

प्रयोक्तव्यश्च साङ्गोऽयं तदङ्गान्यभिदध्महे।
प्रत्याहारोऽवतरणं ततश्चाश्रावणा मता ॥
आरम्भः स्याद्वक्त्रपाणिस्ततश्च परिघट्टना।
सङ्घट्टना ततो मार्गासारितासारिते तथा ॥
उत्थापना परीवर्त्तो नान्दी शुष्कापकृष्टका।
रङ्गद्वारं ततश्चारी महाचारीति तं ततः।
प्रस्तावनेति भरतः क्रमादुद्दिशन्मुनिः ॥

विप्रदासः

## पृष्ठलुठिता

कुट्टितश्चरणः पृष्ठे लुठितोऽङ्गुलिपृष्ठतः।
पुनश्च कुट्टितः स्थाने सा पृष्ठलुठिताभिधा ॥

कुम्भः

## पृष्ठोत्तानतलम्

भूलग्नाङ्गुलिपृष्ठोऽङ्घ्रिः पश्चादेकोऽपरः पुरः।
समः पृष्ठोत्तानतलमिति शास्त्रविचक्षणैः ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## पृष्ठोत्तानतलम्

भूमिलग्नाङ्गुली पृष्ठः पश्चात्पादस्तथैककः।
परः समो यत्रपादः पृष्ठोत्तानतलं हि तत् ॥

कुम्भः

## पेरणिः

दक्षः कलासु सर्वासु सभाजनमनोहरः।
सुरेखो नृत्यशास्त्रज्ञश्चण्डः शारीरपेशलः।
सभावरससंयुक्तो यो नृत्येत स पेरणिः ॥

कुम्भः

पेरणिः—ताण्डवम्

पेरणिर्वर्तरूपं च ताण्डवं द्विविधं मतम्।
अङ्गविक्षेप ........स्यं तथाभिनयशून्यता।
एवं सा पेरणिस्तस्याः साङ्गदेशीति लोकतः॥

शुभङ्करः

पेरणिपद्धतिः

अथ पेरणितः सम्यग्वक्ष्ये पद्धतिलक्षणम्।
संप्रदायविदो रङ्गभूमिदेशमुपागताः॥
गोण्डलीविधिवच्चात्र कुर्युर्विधिः धिधीततैः ?।
गम्भीरध्वनिमातोद्यवादनं मिलिताश्च ते॥
ततो विलम्बितलयं रिगोण्यट्टवणाश्रयम्।
पाटत्रयं वादयेयुर्द्विद्विर्निस्सारुताळतः॥
ततो विकृतवाग्वेषभूषो रङ्गभुवं विशेत्।
मोदकः प्राज्यहास्यैकरसस्तस्मिन् प्रनृत्यति॥
रिगोण्योपशमेनाथ प्रनृत्यन् पेरणी विशेत्।
ततः शान्तेषु वाद्येषु सह ताळधरैः परम्॥
गारुगौ वाद्यमानेऽथ ताले निपुणवादकौ।
यद्वा सरस्वतीकण्ठाभरणो मर्दलादितः।
मनोहरे ताळरसे ध्वनौ च व्याप्तिमृच्छति॥
पेरणी प्रारभेन्नाट्यं घर्घरान् पूर्वसूचितान्।
ततो निबद्धे कविते गूढं वर्णसरेण वा॥
निस्सारुणा च तालेन विषमं नृत्यमाचरेत्।
नृत्यन् साळगसूडेन रेखां च स्थापनं तथा।
हस्वा च वह्नीं गीतवर्तनं दर्शयेत्क्रमात्॥
विषमं च प्रहारेणानुगमाभोगवादने।
कविधारान् प्रकुरुते तथा भावाश्रयानपि।
लोकमार्गानुसारेण ततोऽन्यानापि दर्शयेत्॥

कुम्भः

पौरुषभेदाः

अतःपरं सत्त्वभेदात्पौरुषानभिदध्महे।
शोभा विलासो माधुर्यं गाम्भीर्यं धैर्यमेव च।
तेजो ललितमौदार्यमित्येतेऽष्टौ प्रकीर्तिताः॥

वेमभूपालः

पौरुषरसप्रेमविलासप्रबन्धः

विजयानन्दतालेन गौरीरागो विरच्यते।
पद्यं पाटाः स्वरास्तेनाः लीलानायकसंभवाः॥
शृङ्गारो कैशिकीरीतौ कामतृप्तिपुरस्सराः।
कामिनीहासनामायं प्रबन्धः श्रीपतेः प्रियः॥
रागे कर्णाटवंगाळे सपौरुषरसात्परः।
प्रेम्णा विलासनामायं प्रबन्धो माधवप्रियः॥

कुम्भः

प्रकटस्मरयौवना—नायिका

विधाय हृदि या कान्तं कान्तेयं गमयन्त्वितम्।
रमेत जन्मनान्दोलैः प्रकटस्मरयौवना॥

शुभङ्करः

प्रक्षेप्यारोप्ययोर्लक्षणम्

पक्षेप्यमुच्यते तज्ज्ञैर्भूषणं नूपुरादि यत्।
भूषणं यच्च हारादि तदारोप्यमिति स्मृतम्॥

वेमभूपालः

प्रगल्भवचना—नायिका

कान्ते कचाञ्चलमिलत्करपल्लवान्ते
किञ्चित्तिरोऽञ्चितमुखी करमुत्क्षिपन्ती।
मामङ्ग न स्पृश विटेति शठेति कोपा-
दीषत्प्रगल्भवचना वचनं व्यनक्ति॥

शुभङ्करः

प्रचाराः

उत्तानश्च नतः पार्श्वगोऽग्रगोऽधस्तलस्तथा।
स्वसम्मुखं तलश्चोर्ध्वमुखोऽधोवदनस्तथा॥
पराङ्मुखं पार्श्वतलः सम्मुखश्चाप्रतस्तलः।
ऊर्ध्वगोऽधोगतः पार्श्वगतोऽन्यं पार्श्वतो मुखः॥
एते पञ्चदशैवात्र प्रचाराः करसंश्रयाः।
नाम्नैव व्यक्तलक्ष्माणो न ततो लक्षिताः पृथक्॥

कुम्भः

—स्थायकः

स्थित्वा स्थित्वा स्वरेष्वादावेकैकस्मिन् द्वयोर्द्वयोः।
त्रिषु त्रिष्वथवा यस्य प्रचारः स्थायकस्त्वसौ॥

कुम्भः

प्रच्छेदकः—लासः

अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना।
वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः॥

यद्वा—

कान्तेऽन्यनायिकासक्ते पुंसानुपासमर्पितः।
मानमन्युर्मनस्तासकरी प्रच्छेदको मतः॥

शुभङ्करः

प्रच्छेदको भवेद्यत्र ज्योत्स्नासंतापविह्वलाः।
कामिन्यो यान्ति निर्व्रीडाः सापराधानपि प्रियान्।
नाट्यं पुंभावभूयिष्ठं समवृत्तविभूषितम्॥

, नृत्तरत्नावली

### प्रतापललितः

प्रतापललितः प्रोक्त उद्ग्राहे स्थानदर्शनात्।
अनेकगमकोद्भूतः प्रभूतगमको मतः॥
अल्पैस्तु गमकैः क्लृप्तः स्यादल्पगमकाभिधः।
मेलापकेन सन्त्यक्तो ध्रुवखण्डः स्यात्त्रिधातुकः॥
त्रिधातुकाल्पगमकैः सुकरैर्दुष्कराः परे।
सप्तेति कथिता भेदास्ताले गारुगिनामनि॥

मोक्षदेवः

### प्रतापवर्धनलक्षणम्

पाटैः स्वरैः पदैस्तेनैर्विरुदैश्चान्वितो रसैः।
प्रतापवर्धनो वीरे पाटन्यासेन गीयते॥

सोमराजदेवः

### प्रतितालः

लाटदेशोद्भवं गीतं प्रतितालं बुधा विदुः।
ययोरन्योन्यवचनं यथा वादरता न हि॥
पडितालमिति प्रायः प्रवदन्ति बुधा जनाः।
तदादि प्रतितालेन गीतस्संबन्धितालकः॥
तस्यैव प्रतितालेन प्रथमं पल्लवं मतम्।
नातिदीर्घं नातिखर्वं ... ... ... लके॥
मध्ये न्यासस्ततो मन्द्रन्यासः स्यात्पल्लवे पुनः।
भारतीवृत्तिमाश्रित्य पादद्वयसमन्वितम्॥
नर्तनं तु ... ... नामवाद्यं चक्रायुधं भवेत्।
आहु ... ... ... धि पाटवर्णानुवादि च।
व्यतिरिक्तविलम्बाभ्यां लयाभ्यां नयनं भवेत्॥

सङ्गीतसूर्योदयः

### प्रतिमण्ठकाः

तारश्च भ्रमरश्चैव विचारः कुन्दसंज्ञकः।
चत्वारः कथिताश्चैते प्रतिमण्ठास्तु शम्भुना॥

गान्धर्ववेदे

### प्रतिमुखरलक्षणम्

मुखरिणो मनोऽधीनः प्रोक्तः प्रतिमुखरी।

मोक्षदेवः

### प्रतिवृत्तिः

यस्मिन्नानागते पूर्वैरुदीरितमपोहनम्।
प्रतिवस्तु तदावृत्तिरिति केचन मन्वते॥

कुम्भः

### प्रतिशीर्षम्

स्निग्धेन विल्वकाष्ठेन प्रतिशीर्षोपयोगिनी।
द्वात्रिंशदङ्गुला कार्या घटीचीरसमाश्रया॥
न स्थूला न कृशा नैव मृद्वी न कठिना तथा।
आच्छादयेत् विल्वकल्पा द्रवार्द्रैश्चीरकैरिमाम्॥
मृद्वातपने संशोष्योऽसौ पुनर्नाट्यवेदिभिः।
तस्यां ललाटपर्यन्ते कार्यं कोणत्रयं बुधैः॥
ललाटपट्टकोणं तु विदधीत षडङ्गुलम्।
अथाङ्गुलप्रमाणं तु कटयोरुभयोरपि॥
कटान्ते त्र्युङ्गुलं कार्यं तथा स्यात्कर्णरन्ध्रकम्।
अवटौ कोणकं कुर्यात्सुसमं द्वादशाङ्गुलम्॥
तदूर्ध्वं मुकुटः कार्यो नानारत्नविचित्रितः।
प्रवीणशिल्पकश्चित्रो बहुरूपोपशोभितः।
एवं नाट्ये विधातव्यं नाट्यज्ञैः प्रतिशीर्षकम्॥

वेमभूपालः

### प्रत्यक्षाप्रत्यक्षाणामभिनयः

प्रत्यक्षांस्तानभिनयेदुद्वेगभयविस्मयैः।
प्रणामकरणैर्देवान् प्रत्यक्षांस्तु प्रदर्शयेत्॥
अप्रत्यक्षानभिनयेत्चिह्नैरङ्गविचेष्टितैः।
निरूपणीया युज्याश्च गुरवश्च प्रणामतः॥
विटधूर्तजनाश्चैव सुखी परमभाजनं।
परिमण्डलिताख्येन हस्तेनैव प्रदर्शयेत्॥

वेमभूपालः

### प्रत्यन्तरम्

उद्दिष्टकस्तु रागादौ किञ्चिदाधिक्यचिन्तितम्।
तद्धातुमसुनिष्पन्नं प्रत्यन्तरमितीरितम्॥

गान्धर्ववेदे

### प्रत्यायतम्

प्रत्यायतमनाहतम् ।

भरतकल्पलता

### प्रत्याहारलक्षणम्

आतोद्यानां प्रविन्यासः प्रत्याहारः स चेदृशः ।
प्राङ्मुखः स्यान्मौरजिको रङ्गात्पश्चिमदेशतः ॥
गान्धर्वाचार्यको याम्ये रङ्गस्य स्यादुदङ्मुखः ।
मार्गं देशीं च यो वेत्ति स गान्धर्वो विधीयते ॥
गान्धर्वशिक्षाकुशलो गान्धर्वाचार्य उच्यते ।
वामेन वैणिकस्तस्य दक्षे सौवरिको भवेत् ॥

विप्रदासः

### प्रथमकलासः

विधाय भ्रमरीं काञ्चित्संहतस्थानके स्थिता ।
अलपल्लवसंज्ञौ च कृत्वारालकरौ क्रमात् ॥
यत्राङ्घ्री तत्र तौ नीत्वा युगपत्क्रमतोऽपि वा ।
अङ्गं विधुन्वती चित्रं सञ्चारीगुरुताविव ॥
मत्स्यग्रहार्थं बकवत्कृत्वा मुकुलहस्तकम् ।
मन्दं मन्दं पुरस्ताच्च पश्चाच्च प्रपदेन या ।
याति यस्मिन् कलासे सा विज्ञेया प्रथमाभिधा ॥

कुम्भः

### प्रथमकलासभेदः

कट्यां वामं विधायाथ सखड्गं दक्षिणं करम् ।
कृत्वार्धचन्द्रमास्ते चेत्सकम्पं भेद आदिमः ॥

कुम्भः

### प्रथमद्वितीयप्लवौ

त्रिपताकौ पताकौ वा नाभौ कृत्वा करौ ततः ।
प्रयाति पद्भ्यां पश्चाच्चेत्तालस्यानुगुणं यदा ॥
तदायमाद्यभेदः स्यात्प्लवस्य मुनिसंमतः ।
त्रिपताकौ करौ कृत्वा वामपादं पुरःसरम् ॥
हस्तेन वाममेवं स्याल्लघुमानेन वामतः ।
गत्वा तत्रासनं कृत्वा समं विषममेव वा ॥
ततः स्थानात्समुत्प्लुत्य गच्छेच्चेत्तुल्यपादिकाम् ।
मण्डूकस्य द्वितीयोऽयं भेदः प्रोक्तस्तदा बुधैः ॥

कुम्भः

### प्रथमपताकम्

पताकं वामहस्तं तु नीत्वा दक्षिणकर्णगम् ।
दक्षं पुन कटीं वामां वामजङ्घां तथाविधाम् ॥
एतद्विपर्ययाद्धस्तद्वन्द्वं कृत्वा ततोऽनु च ।
मुखसंमुखमानेयो मेत्याद्यो भेद इष्यते ॥

कुम्भः

### प्रथमयौवनस्वरूपम्

लीनाधरस्तनाभोगकपोलजघनोरुकम् ।
सुरतं प्रति सोत्साहं प्रथमं यौवनं मतम् ॥

हम्मीरः

### प्रथमहंसः

मकरं दक्षपार्श्वस्थं पताकं वामहस्तकम् ।
पुरतो यत्र हंसीव यायाद्भेदः स आदिमः ॥

कुम्भः

### प्रधानगुणाः

तालो मृदङ्गस्तन्त्री च क्वचिदेकैकशः क्वचित् ।
युग्मीभूय प्रधानस्य गुणाः सर्वव्यपेक्षया ।
षट् ध्रुवाः क्रमतोऽत्र स्युः प्रधान्ये त्रितयस्य तु ॥

कुम्भः

### प्रबन्धः

चतुर्भिर्धातुभिर्बद्धः षड्भिरङ्गैर्मनोहरः ।
गीतशास्त्रविदग्धेन प्रबन्धः स प्रकीर्तितः ॥

कुम्भः

### प्रबन्धलक्षणम्

चतुर्भिः पञ्चभिः षड्भिः स्वरैरागनिरूपणम् ।

भरतकल्पलता

चतुर्भिर्धातुभिर्यस्मादङ्गैः षड्भिः प्रबध्यते ।
प्रबन्धः प्रोच्यते तस्माद्गीतविद्याविशारदैः ॥

मोक्षदेवः

### प्रबन्धाङ्गानि

प्रबन्धस्य षडङ्गानि स्वरस्तालस्तथा पदम् ।
तेनः पाटश्च विरुदं क्रमाल्लक्ष्मामिदध्महे ॥

कुम्भः

प्रबन्धस्य षडङ्गानि स्वच्छायाविरुदं पदम् ।
तेन्नाकरं च वाक्यं च प्रबन्धः पुरुषो भवेत् ।
भवन्त्येवं षडङ्गानि मङ्गलान्ते प्रयुज्यते ॥

भरतकल्पलता

### प्रबन्धावयवाः

प्रबन्धावयवो धातुः स चतुर्धा निगद्यते ।
उद्ग्राहः प्रथमस्तत्र ततो मेलापकध्रुवौ ॥
आभोगश्चेति तेषां च क्रमाल्लक्ष्मामिदध्महे ।
उद्ग्राहः प्रथमो भागस्ततो मेलापकः स्मृतः ।
ध्रुवत्वाच्च ध्रुवः पश्चादाभोगस्त्वन्तिमो मतः ॥

हम्मीरः

### प्रमोदलक्षणम्

स्वरैः पदैश्च पाटैश्च तेन्नकैस्तालसंयुतः ।
प्रमोदाख्यः प्रबन्धोऽयं प्रमोदजननः सदा ॥

सोमराजदेवः

### प्रयोगः

ध्रुवेन च प्रवेशे स्तः खञ्जनर्कुटकामिधे ।
वस्तुप्रयोगप्रकृतिं रसं भावमृतुं वयः ॥
देशं कालमवस्थां च ज्ञात्वा तत्तद्विधा ध्रुवा ।
प्रयोक्तव्या प्रयोगज्ञैः प्रयोगः पुनरुच्यते ॥

वेमभूपालः

### प्रयोगलक्षणम्

आदौ गीतमथो वाद्यं ततो नृत्तं च योजयेत् ।
एतेषां मेलनं यत्तु स प्रयोग उदाहृतः ॥

वेमभूपालः

### प्ररोचकम्

प्ररोचकं च कर्तव्यं गुरुप्रायोऽक्षरान्वितम् ।
यथाक्षरेण त्र्यश्रेण सन्निपातैस्तथाष्टमिः ।
विविधैककसंयुक्तं कैशिकीजातिमाश्रितम् ॥

नाट्यशास्त्रे

### प्ररोचना

प्रकृतस्यैव कार्यस्य सिद्धत्वस्यानुसूचकम् ।
उपायोपेयभावेन कार्यसिद्धिव्यपाश्रयम् ॥
कविनाम्नालङ्कृतं च वाक्यं यत्र प्रयुज्यते ।
सा स्यात्प्ररोचना नाम वस्तुप्रस्तावनाभिधा ॥

कुम्भः

### प्रविचारलक्षणम्

याः प्रकृष्टा विचित्राश्च गतयस्सपरिक्रमाः ।
त एव प्रविचाराः स्युः शस्त्रमोक्षणगोचराः ॥

विप्रदासः

### प्रविचारविधिः

भारते निगदिताः प्रविचाराः शस्त्रमोक्षणविचारगोचराः ।
वामकेन विभृयात्फलकान्तं दक्षिणेन तु कृपाणमादरात् ॥
तौ करावुपसृतौ विनिधायाक्षिप्यतौ च तत एव शिक्षितः ।
भ्रामणं च फलकस्य विदध्यात्तूभयोराय सपार्श्वयोः ॥
भ्रामयेच्च परितः शिरसस्तत्खड्गिनं त्वथ शिरःकपोलयोः ।
अन्तरा च मणिबन्धतस्तयोर्द्वेष्टयेच्च विधिना प्रयत्नवान् ॥
भ्रामणं च फलकस्य विदध्यात्संभ्रमेदुपरिमस्तकं यथा ।
भारते विधिरयं मुहुर्मुहुः शस्त्रपात उचितः कटीतटे ॥

कुम्भः

### प्रवृत्तयः

नानाविधा देशभाषावेषाचारा यथोचितम् ।
प्रवर्तयन्ति व्यापाराः प्रवृत्तिः सा प्रकीर्तिता ॥

वेमभूपालः

### प्रवृत्तिभेदाः

दाक्षिणात्या तथावन्ती पाञ्चाली चोढ्रमागधी ।
इत्येषा नाट्यचतुरैश्चतुर्धा परिकीर्तिता ॥

वेमभूपालः

### प्रवृत्तिभेदविचारः

न तु देशास्तु बहवो दृश्यन्ते धरणीतले ।
चतुर्विधत्वमेतेषां कथङ्कारं प्रतीयते ॥
अत्रोच्यते बहुविधा देशाः सन्तु तथापि यत् ।
लोकानुकरणं नाट्यं चतुर्वृत्तिसमाश्रयम् ।
अतस्तद्विषयत्वेन चतस्रः स्युः प्रवृत्तयः ॥

वेमभूपालः

### प्रवेशः—कलामानम्

अथ चाकुञ्चनं ज्ञेयं प्रवेशाख्यमधस्तलम् ।

दत्तिलः

### प्रवेशकः

असूचितस्य पात्रस्य प्रवेशो नैव दृश्यते ।
ततः प्रधानपात्राणां सूचकः स्यात्प्रवेशकः ॥

शुभङ्करः

### प्रसन्नः

शृङ्गाराद्भुतहास्येषु प्रसन्नो निर्मलो मतः ।

कुम्भः

**प्रसन्नमध्यः**

प्रसन्नमध्यो मध्ये तु प्रसन्नः स्यादुदाहृतः।

नाट्यशास्त्रे

**प्रसन्नान्तः**

व्यस्तोच्चारित एवैष प्रसन्नान्तो विधीयते।

नाट्यशास्त्रे

**प्रसन्नाद्यन्तः**

प्रसन्नं पूर्वमुच्चार्य शनैः सन्दीपयेत्स्वरम्।
प्रसन्नादीर्भवेदेवं प्रसन्नान्तो विलोमतः।
एवं प्रसन्नमध्यश्च प्रसन्नाद्यन्त एव च॥

दत्तिलः

**प्रसन्नादिः**

क्रमेणोद्दीपितो यः स्यात्प्रसन्नादिः स कथ्यते।

नाट्यशास्त्रे

**प्रसन्नाद्यन्तः**

आद्यन्तयोः प्रसमनात्प्रसन्नाद्यन्त इष्यते।

नाट्यशास्त्रे

**प्रसादः**

प्रसन्नान्तः स्वरो यत्र प्रसादः स तु संज्ञितः।

नाट्यशास्त्रे

**प्रसारितम्—हस्तप्राणः**

प्रसारितमिति ख्यातमङ्गुलीनां प्रसारणात्।

भरतकल्पलता

**प्रसारी**

ग्रीवां तु भ्रामयन् यस्तु प्रसारी कथ्यते बुधैः।

भरतकल्पलता

**प्रसृतः**

दीर्घः सशब्दनिष्क्रान्तो घ्राणतः प्रसृतो मरुत्।
... ... ... ... प्रसृतः प्रसरान्धिदः॥

कुम्भः

**प्रस्तावना**

प्रकृतं यद्भवेत्कार्यं तस्य सिद्धत्वसूचकम्।
सिध्युपायसमायुक्तं कवेर्नामानुकीर्तनम्।
वाक्यं प्रयुज्यते यत्र सा स्यात्प्रस्तावनोदिवा॥

विप्रदासः

**प्रस्थानलक्षणम्**

कैशिकीवृत्तिबहुलं बहुताललयान्वितम्।
दासादिनायकं व्यङ्कं दासीनायिकमेव च॥
सीधुपानादिसंयुक्तं तथा हीनोपनायकम्।
विटशृङ्गारसंयुक्तं प्रस्थानमिति कीर्तितम्॥

शुभङ्करः

**प्रहसनम्—रूपकम्**

शृङ्गारहास्यबहुलं शान्त्यद्भुतरसान्वितम्।
व्यक्तमारभटीहीनं प्राह प्रहसनं मुनिः॥
प्रहस्यते अनेनेति भवेत्प्रहसनं त्विदम्।
शुद्धं च विकृतं चैव संकीर्णमिति तद्द्विधा॥

शुभङ्करः

**प्रहारः—पाटः**

प्रहारपाटनिष्पत्तिस्तलाङ्गुष्ठाभिधा ततः।

यथा —

डें द्रां धोंदिगि धिगिदा – किटधों धो॥

कुम्भः

**प्राकृतजातयः**

दाक्षिणात्या महाराष्ट्री बाह्लीकी चार्धमागधी।
आवन्तिका तथा प्राच्या षोढा प्राकृतजातयः॥

शुभङ्करः

**प्राकृतनृत्तलक्षणम्**

इदानीं प्राकृतं नृत्तं यथालक्षणमुच्यते।
भवेद्भावाश्रयं नृत्यं पदार्थाभिनयात्मकम्॥
गात्रविक्षेपणार्थत्वान्नृत्ते बहुलमाङ्गिकम्।
विविधेन विलासेन क्षेपो विक्षेप उच्यते॥

नृत्तरत्नावली

**प्राकृतपाठ्यभेदाः**

अथ च प्राकृतं पाठ्यं त्रिविधं परिकीर्तितम्।
तद्भवं तत्समं देश्यमिति तल्लक्षणं पुनः।
त्रैविक्रमादिशास्त्रेषु बोद्धव्यं बुद्धिशालिभिः॥ वेमभूपालः

### प्राकृते गुरोः लघोश्च विधानम्

उं इं एहिं पदान्ते च लघुत्वं प्राकृते गुरोः।
पदमध्येऽथापभ्रंशो हुंहे उं ए सदा लघुः॥

मोक्षदेवः

### प्राणसंभवे रत्यादिविकाराः

अथ चेद्व्यतिरेकस्ते तेभ्यस्तेषामिमे यथा।
रत्यादयश्चित्तवृत्तिर्निर्वेदात्पूर्वमेव तु॥
निर्वेदनं प्रकुर्वन्ति ततः प्राणमथान्तरम्।
तन्मांसविश्वरूपाभ्यां सत्यं कलुषयन्त्यतः ?॥
अन्तःकरणसत्यस्य वायुराश्रयतां गतः।
क्रोधाद्या अपि दृश्यन्ते विकाराः प्राणसम्भवाः॥
प्राणसूत्रपरिप्रोते संविदभ्यासचित्रिते।
विकारो जायते देहे तत्र चित्प्रत्ययेन च॥
इत्यादिरप्रसरणस्य विभावः प्राणभूमिकाम्।
अनुद्दिश्याय सहसास्तमेति स यदा पुनः।
परामर्शोल्लक्षणायामवधानधुरं भवेत्॥

कुम्भः

### प्रातरमृताशनम्

या सूचनाय रसभावविशेषवृत्तेः
प्रस्तावनेन पुटतो वितता विभाति।
तौर्यत्रयामृतनिधानपिधानकल्पा
सा सर्वदा जवनिकास्तु मुदे नृपाणम्॥

हम्मीरः

### प्रावृट्कालाभिनयः

शिखण्डिभिस्ताण्डवितैः शाद्वलैः सेन्द्रगोपकैः।
गर्जितैरपि मेघानां धारानिष्पतनैरपि।
मुकुलैरपि नीपानां प्रावृषं संप्रदर्शयेत्॥

वेमभूपालः

### प्रावृतम्

उद्धत्य चरणौ मूर्तिर्ललिता वलिता भवेत्।
यत्र तत्प्रावृतं ज्ञेयं कामकेलिनिबन्धनम्॥

कुम्भः

### प्रावेशिकी

नानार्थरसार्थयुक्ता नृणां या गीयते प्रवेशेषु।
प्रावेशिकी तु नाम्ना विज्ञेया सा ध्रुवा तज्ज्ञैः॥

नाट्यशास्त्रे

—विनियोगः

गाने च रोदने चैव सम्भ्रमप्रेक्षणे तथा।
उत्पाते विस्मये कार्या सैव प्रावेशिकी ध्रुवा॥

वेमभूपालः

### प्रेङ्खोलितः

गतागतप्रवृत्तो यः स प्रेङ्खोलित इष्यते।

नाट्यशास्त्रे

### फूत्कृतिगुणाः

नैवरूर्ध्यपौताचापि सुस्वरत्वं च शीघ्रता ?।
माधुर्यमपि पञ्चामी फूत्कृतेस्तु गुणा मताः॥

सङ्गीतनारायणे

### प्रेरणा—ताण्डवम्

अङ्गबाहुल्यविक्षेपं तथाभिनयशून्यता।
यत्र सा प्रेरणा प्रोक्ता महादेशीति लोकतः।
प्रेरणा बहुरूपं च तदेवं ताण्डवं द्विधा॥

सङ्गीतनारायणे

### प्रेरितः—हस्तप्राणः

पश्चाद्भागे कुञ्चितो वा रेचितो वा प्रसारितः।
यो हस्तः कथितस्सोयं प्रेरितः पूर्वसूरिभिः।

भरतकल्पलता

### प्रेरिता

तियुगूर्ध्वमधस्ताच्च वादकप्रेरितैः स्वरैः।
प्रेरिता नाम विज्ञेया स्थायश्रुतिविशारदैः॥

कुम्भः

### प्रोषितप्रिया—नायिका

चिन्ताकुलां मलिनमंशुकमावहन्तीं
हिण्डीरपिण्डपरिपाण्डुरगण्डभित्तिम्।
निर्भूषणां प्रियवियोगजदुःखतप्तां
तां प्रोषितप्रियतमां प्रवदन्ति सन्तः॥

शुभङ्करः

### प्लवकलासः

त्रिपताकं करं कृत्वोत्प्लुत्योत्प्लुत्य समे पदे।
सर्वतो दधती चित्रं विषमासनमास्थिता।
यत्र नृत्यति स प्रोक्तः कलासः प्लवसंज्ञकः॥ कुम्भः

### बकस्य तृतीयः

विधाय मुकुलं हस्तं क्षिप्रमग्रे शनैस्तु ।
गच्छन्ननुपदं तद्वन्नटी स्खलति खिद्यति ॥
धृतमुक्ते यथा मीने बकेशानुपदं क्रमात् ।
तलपद्मभरालं च मुकुलं यत्र कुर्वती ।
नृत्ते चित्रमसौ भेदो बकस्य स्यात्तृतीयकः ॥

अशोकः

### बककलासतुरीयकम्

उत्तानवञ्चितौ पाणी विद्यादपि च चन्द्रकम् ।
कट्यां करं निवेश्याथ पादाग्राभ्यां नटी यदा ॥
रचयन्ती गता नाना यचत्पुरतोनु च ।
पादाङ्गुष्ठकरस्पर्शान्नृत्येद्वक्राकृतिस्तदा ।
तुर्यो भेदो बकाद्यस्य कलासस्सबुधैर्मतः ॥

अशोकः

### बककलासकः

पार्श्वे विधुन्वती यत्र बकवत्सजलौ हृदौ ।
कुर्वती हस्तकांश्चैव सन्दंशान् मुकुलादिकान् ॥
आननं च ततोत्थानं गुरुमानेन तन्वती ।
नरीनर्ति नटी यत्रानल्परूपविशेषवत् ।
कलासो बकसंज्ञोऽयं विज्ञेयो नृत्यकोविदैः ॥

कुम्भः

### बकी

यो बकी तुम्बिकाकारफुल्लगल्लस्तु गायकः ।

भरतकल्पलता

### बङ्गालः

गत्रयेण मनोज्ञोऽसौ बङ्गालौ रिविवर्जितः ।
पूर्णो मत्रययुक्तो वा कल्लिनाथमतं त्विदम् ॥

कुम्भः

### बन्धकरणम्

स्वरैर्मुरजपाटैश्च यत्रोद्ग्राहध्रुवौ कृतौ ।
तद्बन्धकरणं प्राह भीमदेवतनूरुहः ॥

मोक्षदेवः

### बन्धनापर्याया

मालिकामोहनादीनि प्रसिद्धा लक्ष्यदृष्टितः ।
अर्थौ तुडुकपर्यायौ नृत्तज्ञैः कथितौ यतः ॥
आलापे यत्र नृत्येतद्ध्रुवाणां यत्र नर्तनम् ।
स्वरपाटसयुक्तं सुरूपं पदमेव च ॥
क्रमेण व्युत्क्रमेणाथ नर्तनं परिकीर्तितम् ।
बन्धनापरपर्यायाः कथिता नृत्तवेदिभिः ॥
तत्तत्कारादिभिः पाटैरेकताल्यादिभिर्युतम् ।
धात्वादिरहितं गीतमालापः परिकीर्तितः ॥

### बन्धनीयम् (भूषा)

बन्धनीयं तदाख्यातं काञ्चीदामादिभूषणम् ।

वेमभूपालः

### बन्धरूपकम्

यत्र पात्रे उभे नृत्ये नृत्येते करणैस्तदा ।
यदा मिथो भुजौ हस्तौ पादावपि तथा तयोः ॥
रमणीयाकृतिर्यद्वा त्रीणि चत्वारि वा तथा ।
यद्वा सुन्दररूपाणि पञ्चाङ्गानि च सप्त च ॥
पात्राणि यत्र नृत्यन्ते तन्नृत्यं बन्धरूपकम् ।
बन्धनृत्ये विलासिन्याः प्राधान्यं तु विशेषतः ॥

### बहिः प्राणाः— (पात्रस्य)

मृदङ्गश्चानुतालश्च वेणुगीती ततः श्रुतिः ।
एकवीणा किङ्किणी च गायकश्च सुविश्रुतः ॥
इत्येवमान्वयज्ञेयैः पात्रप्राणा बहिः स्मृताः ॥

भरतकल्पलता

### बहुत्वलक्ष्यम्

संस्पर्शनं स्वराणां यद्बहुत्वं प्रथमं मतम् ।
तदेव लङ्घनमिति प्रवदन्ति पुरातनाः ॥
पुनः पुनः स्वरावृत्तिर्बहुत्वं स्याद्द्वितीयकम् ।
इदमभ्यासनाम्ना च वदन्ति भरतादयः ॥
आद्यं बहुत्वं वादि स्यात्संवादि स्याद्द्वितीयकम् ।
वादिसंवादिनोरंशे बहुत्वं कार्यमेव तत् ॥

संगीतसूर्योदये

### बहुरूपं— ताण्डवम्

छेदनं भेदनं यत्र बहुरूपी मुखावली ।
ताण्डवं बहुरूपं च वारुणिर्नाममुद्धतम् ॥

सङ्गीतनारायणे

## बाह्यस्वरलक्षणम्

असंबद्धस्वरं बाह्यं दोषाणां च उपक्रमः ।

भरतकल्पलता

## बिन्दुः

कचित्स्वरेचिरं स्थित्वा स्पृष्ट्वा तारं ततोऽग्निवत् ।
प्रत्यागच्छेत्तु तत्रैव बिन्दुरेषोऽभिधीयते ॥

दत्तिलः

—पाटः

वामेन पाणिना यस्मिन्नवष्टभ्य पुटं पुनः ।
तर्जनी कुरुते घातं तं पाटं बिन्दुमूचिरे ॥
दें दें गिदें गि (दें) गिरिगिदगिरिगिद ।

—हौडुक्किकपाटः

वामेन पाणिना यस्मिन्नवष्टभ्य पुटं पुनः ।
तर्जनीं कुरुते घातं तं पाटं बिन्दुमूचिरे ॥    कुम्भः

## बिन्दुनृत्तम्

यत्रोद्ग्राहध्रुवपदे बध्रे द्राविडभाषया ।
तद्गीतं बिन्दुसंज्ञं स्यादाभोगेन विवर्जितम् ॥

कुम्भः

## बिव्वोकः

दयितावलोकने तदिष्टाप्टार्थाधिगतोऽपि च ।
अनादरकृतो गर्वात् बिव्वोक इति कथ्यते ॥

वेमभूपालः

## बिरुदः

गाने त्रीणि पदानि स्युरन्ते तु बिरुदं स्वरः ।

भरतकल्पलता

## बीभत्सरसः

मेदोमांसवसामलान्त्ररुधिरक्षोदश्मशानादिभिः
पूतीपायघृणात्मकैरधिगतो जाते जुगुप्साश्रितः ।
स्त्रीबालाधमभूमिकाश्रयमयोऽपस्मारशङ्काश्रयो
बीभत्सोऽयमुदाहृतो रस इह प्रख्यातनानागुणैः ॥

जगद्धरः

स्थायिभावस्वरूपायाश्चित्तवृत्तिर्घृणाकरा ।
जुगुप्सा नाम सा तज्ज्ञैः बीभत्सो रस उच्यते ॥

हम्मीरः

## वृन्दम्

प्रवेशे रथरङ्गोर्व्यां सांप्रदायकवृन्दकम् ।
गातृवादकसंघातं वृन्दमित्यभिधीयते ॥

भरतकल्पलता

## वृन्दकः—गायकः

बहुना सह गीतं तु करोति स च वृन्दकः ।

भरतकल्पलता

ततो हि वाद्ययुक्तेन कर्तव्यं नृत्तकोविदैः ।
चत्वारो मुख्यगातारो द्विगुणास्समगायनाः ॥
असौ च गायिनी प्रोक्ता तालधारिचतुष्टयम् ।
मार्दङ्गिकास्तु चत्वारो वांशिकानां चतुष्टयम् ॥
एषां चोत्तमवृन्दस्य कर्तव्यं च प्रयत्नतः ।
मध्यमं स्यात्तदर्धेन तदर्धेन लघु स्मृतम् ॥

## वृन्दव्यवस्था

वृन्दं विद्यावतां प्रोक्तमुत्तमोत्तममुत्तमम् ।
मध्यमञ्चावराख्यं च कनिष्ठं चेति पञ्चधा ॥
मुख्या द्वादश गातारो द्वादशैव च गायिकाः ।
चितालिका भवन्त्यष्टौ षट् तथा वंशवादकाः ॥
ओताकाराः पुनः पञ्च त्रयः पाटहिका मताः ।
मृदङ्गवादिनो षट् च वृन्दं स्यादुत्तमोत्तमम् ॥
गातारः पञ्चमुख्याः स्युः सामगायनपञ्चकम् ।
गायनी षट् समाख्याता पञ्च स्युर्वंशवादकाः ॥
द्वावोतकारौ चत्वारः प्रोक्ताः पटहवादिनः ।
मार्दङ्गिकाश्च तावन्तो वृन्दं स्यादमिरुत्तमम् ॥
एकस्याद्गायनो मुख्यो त्रयः स्युः पक्षगायनाः ।
तिस्रो भवन्ति गायन्यो वदालश्च चितालिका ॥
यत्र स्यादोतकाराणां वांशिकानां पुनस्त्रयम् ।
भवेत्पाटहिकद्वन्द्वं मार्दङ्गिकचतुष्टयम् ॥
मध्यमं वृन्दमुद्दिष्टं तदेतद्वृन्दवेदिभिः ।
मुख्य एको भवेद्गाता द्वौ पुनः पक्षगायनौ ॥
गायिन्यौ द्वे वांशिकौ द्वावोतकारद्वयं तथा ।
एकः पाटहिको यत्र तथा मार्दङ्गिकद्वयम् ॥
अवरं नाम तद्वृन्दं वृद्धवृन्दारकैर्मतम् ।
मुख्यो गाता समंगाता गायनी वांशिकस्तथा ॥

ओताकारः पाटहिको भवेन्मार्दङ्गिकद्वयम् ।
गीतवेदिभिरुद्दिष्टं वृन्दमेभिः कनिष्ठकम् ॥

सोमराजदेवः

**बृहस्पतिः—नवग्रहहस्तः**

लांगूलतर्जनी वक्रा श्लिष्टा लांगूल इष्यते ।
बृहस्पतेरर्थभावे कथ्यते नाट्यकोविदैः ॥

शृंगारशेखरः

**बोलावणी—पाटः**

आदौ मध्येऽवसाने च प्राचुर्यं यत्र देङ्कृतेः ।
आद्ये खण्डे द्वितीये च तादृगेव यथा भवेत् ।
तत्र बोलावणी प्रोक्ता वाद्यविद्याविशारदैः ॥
दें दें दें धों धों दें दें दें ।
वाद्यान्तरेऽपि वाद्यं स्यादस्याः खण्डद्वयं यदा ।
तत्तद्वाद्यप्रधानार्थैं पार्थक्येन प्रयोजितौ ॥
डें कृतिं दें कृतिस्थाने सचतुष्कायां च मर्दले ।
थों कृतिं तों त्रिवल्यां तु कृति तथा ... ... ॥
टें कृतिः करटायां स्यात्प्रधानाक्षरयोजना ।
एवमेव बुधैर्ज्ञेयाः पाटवाद्यान्तरेष्वपि ॥

कुम्भः

**ब्रह्मग्रन्थिः**

प्रणवो नादरूपः स्यात्तत्र ब्रह्मादयः सुराः ।
नाभिस्थानगतः साक्षाद् ब्रह्मग्रन्थिरिति स्मृतः ॥

कुम्भः

**ब्राह्मणवर्णहस्तः**

कराभ्यां शिखरं धृत्वा यज्ञसूत्रप्रदर्शने ।
दक्षिणेन कृते तिर्यग्ब्राह्मणानां प्रदर्शितः ॥

भरतकल्पलता

**ब्राह्मम्**

समस्थांघ्रिः परः पादः कुञ्चितीकृत्य पृष्ठतः ।
जानुसन्धिसमत्वेनोक्षिप्तं तद्ब्राह्ममुच्यते ॥

कुम्भः

भ

**भगिनीहस्तः**

दक्षिणे हंसपक्षं च वामे लाङ्गूलकं तथा ।
स्वसारं प्रतियुज्येतेत्याज्ञनेयेन चोदितम् ॥

भरतकल्पलता

**भजनम्**

आरोप्यते प्रयत्नेन रागे योऽतिशयो बुधैः ।
तदुक्तं भजनं तेन युक्ताः स्युर्भजनस्य ते ॥

कुम्भः

**भञ्जनलक्षणम्**

रागस्यातिशयाधानं प्रयत्नाद्भञ्जनं मतम् ।

हम्मीरः

**भञ्जावणलक्षणम्**

श्रुतिभिर्भज्यते यत्र द्वित्रिभेदैः स्वरो मतः ।
अछिन्नोरङ्गभिस्सान्द्री बुधैर्भञ्जावणो मतः ॥

मोक्षदेवः

**भट्टनायकमतम्**

न व्यंग्यश्च न तृत्पान्यो न प्रत्याय्योऽपि युज्यते ।
स्वाय्येव भाव्यमानेन व्यापाराद्भावकत्वतः ।
सत्त्वोद्रिक्तप्रकाशेनानन्दप्राचुर्यसंविदः ॥
विश्रान्तिस्थानमातत्य भोगभोज्यो रसोऽथवा ।
इति नायकभट्टानां मतमेतदुदीरितम् ॥

कुम्भः

**भट्टलोल्लटमतम्**

शिक्षाभ्यासाच्चिरतरमङ्गाद्यैर्नाट्यकर्मणि ।
वासनाभिनयैनैतद्भट्टलोल्लटसम्मतम् ॥

कुम्भः

**भद्रावतीलक्षणम्**

ककुभस्तदुपाङ्गं वा तालः कङ्कालसंज्ञकः ।
वैदर्भी भारती चापि जुगुप्साभाव उच्यते ॥
वर्णः कृष्णोऽथ बीभत्सो रसोऽधिष्ठातृदैवतम् ।
वाराही शूद्रजातिश्च गणौ क्षितिजलाभिधौ ॥
सप्रासमङ्घ्रित्रितयं भवेद्भद्रावती तनौ ।
पञ्चकं रत्नगर्भाया एकः पाथोगणो मतः ॥
ऽऽऽ।ऽऽ।ऽऽ।ऽऽऽ।ऽऽऽ।ऽऽ।

सोमराजदेवः

**भद्रावत्याः—कामगणाः**

प्रत्येकं पादयोर्यस्या अष्टौ कामास्तृतीयके ।
आदिमध्यान्तगाः प्रासाः त्रिषु पादेषु सङ्गताः ।
भद्रावती भद्रलेखा कर्णाटैरियमिष्यते ॥

मोक्षदेवः

### भरतशब्दनिर्वचनम्

भकारो भावनैर्युक्तोरेफो रागेण मिश्रितः।
तकारस्तालमित्याहुर्भरतार्थविचक्षणैः॥

शृङ्गारशेखरः

### भाणः—रूपकम्

एकाङ्कस्तु भवेद्भाण एकनायकमायिकः (?)।
कैशिकीवृत्तिसंपूर्णो भूमिपूर्वप्रयोजितः (?)॥
आकाशभाषितैरत्र कुर्यात्संबोधनं बहु।
सूचयेद्वीरशृङ्गारौ शौर्यसौभाग्यसम्भवौ॥
नाट्यालङ्कारसंपन्नो भूयसी तावतीत्विह।
भण्यन्तेऽस्मिन् गुणादेशा इति भाण इहोदितः॥

यद्वा—

धूर्तानां दुश्चरित्रापरिचितमथवा स्वानुभूतं समृद्धा
वीरः शृङ्गारभङ्गी द्विजसचिवविटा यत्र सङ्कीर्तयन्ते।
उक्तिप्रत्युक्तियोग्यो भवति च वचसावस्थितैरत्र शास्त्रैः
सन्ध्यङ्गो वीथिकायाः पुनरिहकथितो भारतीवृत्तिभाणः॥

शुभङ्करः

### भाण्डग्रहाः

अथ ध्रुवाणां वक्ष्यामि ग्रहान् भाण्डसमाश्रयान्।
गातस्य वीरवर्त्तः स्यादेको भाण्डविवर्जितः॥
चतुर्थे सन्निपातेऽथ तज्ज्ञैर्भाण्डग्रहः स्मृतः।
सन्निपातग्रहः कश्चित्कश्चित्स्यात्तर्जनीग्रहः॥
अथाकाशग्रहः कश्चित् ध्रुवा गाने ... ...।
ध्रुवायां तु प्रयोगः स्यात् कलाताललयान्विता॥
भाण्डेन स तु कर्तव्यस्तज्ज्ञैर्गतिपरिक्रमे।
उद्धतायाश्च शीर्षकथ्यास्तर्जन्यास्तु ग्रहः स्मृतः॥
विलम्बिताख्यास्थितयोर्ध्रुवयोः सन्निपातयोः।
कृतिर्यत्तु विधातव्या सम्यग्भाण्डग्रहा बुधैः॥
प्रासादिक्या अड्डिताया नर्कुटस्य तथैव हि।
स्यादाकाशग्रहस्तत्र सन्निपातः प्रकीर्तितः॥
ग्रहो गानसमः कार्यो नैष्क्रामिक्यनुबन्धयोः।
सन्निपातश्च शम्या च तालश्चाकाशजस्तथा।
इति नर्कुटके यद्वा ग्रहाश्चत्वार ईरिताः॥

वेमभूपालः

### भारतन्यायस्य लक्षणम्

फलकं वामहस्तेन खड्गं दक्षिणपाणिना।
गृहीत्वाप्रसृतौ कृत्वा करावप्यन्यकौ ततः॥
फलकभ्रमणं कृत्वा पार्श्वयोरुभयोरथ।
परितः शिरसः शस्त्रं भ्रमयित्वाथ खड्गिनम्।
करं शिरः कपोलान्तरुद्वेष्ट्य मणिबन्धतः॥
फलकस्याप्युपशिरः परिभ्रमणमाचरेत्।
विधिरेष सकृत्कक्ष्यां शस्त्रपातश्च भारतः॥

विप्रदासः

### भारती

भारत्यां वाचिकाः सर्वे वर्तन्तेऽभिनया इह।
तिसृष्वन्यासु वर्तन्तेऽभिनया आङ्गिकाः पुनः॥

कुम्भः

— वृत्तिः

भारत्यन्तर्हिता यत्र सा वृत्तिर्भारती स्मृता।

विप्रदासः

### भार्गवांकः—तालः

पताभ्यां भार्गवांकः स्यात्। ऽ ऽ ऽ।

कुम्भः

### भावदृष्टिलक्षणम्

शून्या स्तम्भेव चिन्तायां लज्जिता च तथा भवेत्।
मलिना खेदवैवर्ण्ये श्रान्ता खेदे समेऽपि च॥
ग्लानापस्माररोगादौ शङ्कायां शङ्किता भवेत्।
विषादिनी विषादे स्यात्स्मृता तर्के च तर्किता॥
मुकुला च मुखस्वप्ननिद्रादौ दृष्टिरिष्यते।
स्यादर्धमुकुलादर्धगन्धस्पर्शसुखादिषु॥
अभिप्लुता तु निर्वेदे अभिघातनिपातयोः।
जिह्मात्वानस्य जाड्यादौ ललिता धृतिहर्षयोः॥
कुञ्चिता सूचितानिष्टदुःखं प्रेक्ष्य यथादिषु।
विभ्रान्ता सम्भ्रमावेगविभ्रमेषु प्रशस्यते॥
करुणोन्माददुःखार्तिचपलादिषु विप्लुता।
आकेकरा दुरालोके विच्छेदे च प्रवक्ष्यते॥
त्रस्ता त्रासे भवेद्दृष्टिर्मदिरा तु मदे मता।
विवेकगर्वमत्युग्रमतिषु स्याच्चिकीर्षिता॥

सोमराजदेवः

### भावलक्षणम्

वागङ्गसत्त्वाभिनयमुखरागोपशोभितैः।
भावयन्नान्तरं भावं व्यापारो भाव उच्यते॥

वेमभूपालः

रसा भाव्यन्तीति भावा भावयन्तीति वा स्मृताः ।
स्थायिनस्तु भवन्तीति भावयन्तीति चेतरे ।
लोके ये हेतवस्तेषां सीताचन्द्रोदयादयः ॥

विप्रदासः

—भाववक्तारश्च

रसान् भावयन्तीति भावाः ।
विरञ्चिर्नारदो रम्भाहूहुर्भरततुम्बुरू ।
षडेते नाट्यभावानां वक्तारो लोकविश्रुताः ॥

शुभङ्करः

भावजलक्षणम्—अभिनयः

एतदेव विना हस्तपादभेदक्रमं दृशा ।
संसूचता शिरोभेदैर्भावजाभिनयो मतः ॥

शृङ्गारशेखरः

भावशब्दः

अन्तर्गतं भावं बहिर्भावयन तद्रूपतामानयन् इति अन्तर्भावशब्दो अभिप्रायवाची भावयन्निति भाव शब्दस्तथावाची।

भावाः

सूलाद्यानामवलितं चूर्णिका नाटकं तथा ।
एवं चतुर्विधा भावा उच्यन्ते पूर्वसूरिभिः ॥

भरतकल्पलता

यथामूलं रसाः सर्वे ततो भावा व्यवस्थिताः ।
आस्वाद्यत्वाद्रसे सिद्धे भावादिव्यापितं भवेत् ॥

कुम्भः

भावानामुपलक्षणता

अस्रादयो बाह्यधूमशीतादिकनिमित्तकाः ।
व्यजनग्रहणाद्येनाभिनयेनोपलक्षिताः ।
असात्विकेऽपि तन्मध्ये गणिता भवभूतिना ॥

कुम्भः

भावानां रसनिर्वृतिः

कुम्भकर्णः समाधत्ते भावेभ्यो रसनिर्वृतिः ।
दृश्यते च रसेभ्योऽपि रसानामुद्भवो यथा ॥
शृङ्गारप्रभवो हास्यः करुणो रौद्रसंभवः ।
अद्भुतो जायते वीराद्बीभत्साच्च भयानकः ॥
शृङ्गारानुकृतिर्या तां स तु हास्यरसो मतः ।
करुणः कथ्यते सद्भिः कर्म रौद्ररसस्य यत् ॥
कर्म यच्चापि वीरस्य सोद्भुतः सद्भिरुच्यते ।
भयानको भवेत्सोऽत्र यद्बीभत्सस्य दर्शनम् ।
एवं रसास्तु चत्वारः कस्यचित् संमते मताः ॥

कुम्भः

भाविकम्

कान्ते स्वप्नोपलब्धेऽपि यत्र कामवशं गता ।
विभावान्विविधान् यत्र कुर्याद्धै भाविकं हि तत् ॥
अद्याकर्ण्य नैशिकं सखि मया कान्तश्चिरं प्रोषितः
नेत्रा मुद्रितनेत्रयापि गमने साक्षादिवालक्षितः ।
सा या सङ्गमभङ्गभीरुतरयेवोन्मज्यलज्जाजलात्
कण्ठग्राहमनिन्दितः परिवृतः प्रोल्लासितो मोदितः ॥

कुम्भः

भावुकः

नीरसं सरसं कुर्यान्निर्भावं भावसंयुतम् ।
ज्ञात्वा श्रोतुरभिप्रायं यो गायेत्स तु भावुकः ॥

कुम्भः

भिन्नध्रुवायोगः

चतुरस्रे तथा त्र्यस्रे चित्रवार्तिकदक्षिणैः ।
मार्गैर्भिन्नध्रुवायोगात्षड्विधं केचिदूचिरे ॥

विप्रदासः

भिन्नशब्दार्थः

भवन्ति भिन्नाः पञ्चापि भिन्नषड्ज इहादिमः ।
भिन्नकैशिकसंज्ञश्च भिन्नकैशिकमध्यमः ॥
भिन्ननाम इति ख्यातः भवान्या भिन्नपञ्चमः ॥

सोमराजदेवः

भिन्नषड्जः

धैवतांशो मध्यमान्तः पञ्चमार्षभवर्जितः ।
षड्जवर्ज्योदीच्यवती भिन्नषड्जः स्मृतो बुधैः ॥

मतङ्गः

भीतकः—गायकः

भयेन सह गानं तु यः करोति स भीतकः ।

भरतकल्पलता

भीमः

विलासादिर्गिरा नृत्तकरणं तदुदाहृतम् ।
भीमसेनाभिधा यद्वद्भीम इत्येकदेशतः ॥

नृत्तरत्नावली

### भूपाली

भूपाली सत्वयेणाढ्या मनोदितोषसि (?)।
रिपहीना मते केषां रसे शान्ते प्रयुज्यते ॥

कुम्भः

### भूपालीरागः

षड्जग्रहांशकन्यासा भूपाली कथिता बुधैः।
मूर्छना प्रथमा यत्र सम्पूर्णा शान्तिके रसे ॥
कैश्चित्तु रिपहीनेयं औडुवा परिकीर्तिता।
गौरद्युतिः कुंकुमलिप्तदेहा तुङ्गस्तनी चन्द्रमुखी मनोज्ञा।
प्रियं स्मरन्ती विरहेण नूनं भूपालिकेयं रसकान्तियुक्ता।
सरिगमपधनिस — सगमधनिस ॥

संगीतदर्पणः

### भूमिकाविभागः

अथ नाट्ये भूमिकानां विभागः क्रियतेऽधुना।
सत्त्वभावसुशीलैश्च गतिवागङ्गचेष्टितैः ॥
सम्यक् परीक्ष्य योक्तव्यं भूमिकानां निवेशनम्।
राक्षसानां देवतानां तथैव च तपस्विनाम् ॥
राजन्यानाममात्यानां कञ्चुकिप्रभृतेरपि।
नायकानां सभानां च वैश्यादीनां यथोचितैः ॥
रूपलीलावयोवेषवर्णवाग्गतिचेष्टितैः।
तत्तद्देशानुसारेण भूमिकाः संप्रयोजयेत् ॥
बहुबाहुमुखा ये च गजाद्याश्च भवन्ति ये।
आचार्यबुध्या ते कार्या मृदा काष्ठेन चर्मभिः ॥
अनुरूपा विरूपा च तथा रूपानुसारिणी।
इति स्वभावगुणिता भूमिका प्रकृतिस्त्रिधा ॥
यत्र स्त्री स्त्रीगते भावे पुरुषोऽपि च पौरुषे।
अनुकार्योचितवयःस्वभावकरणाश्रयाः ॥
नानावस्थाक्रिया नाट्यं समुद्योतयतेतरां।
सा भूमिका तु नाट्यज्ञैरनुरूपेति कथ्यते ॥
बालस्य भूमिकां वृद्धो बालो वृद्धस्य भूमिकाम्।
संप्राप्य तत्तदुचितैर्भावैर्नाट्यं करोति चेत् ॥
सा भूमिका विरूपेति कथिता नाट्यवेदिभिः।
स्त्रीभूमिकां तु पुरुषः स्त्री वा पुरुषभूमिकाम् ॥
प्राप्य स्वच्छन्दतो नाट्यप्रयोगं वितनोति चेत्।
रूपानुसारिणीनामा भूमिका सा प्रकीर्तिता ॥

वेमभूपालः

### भूमिचारीलक्षणम्

गुल्फक्षेत्रेऽन्यपादस्योद्धृत्योद्धृत्याङ्घ्रिं कुञ्चितम्।
किञ्चित्प्रसार्य चोत्क्षिप्य यथा प्रकृतिलोकवत् ॥
चतुस्तालाद्यन्तरेण ततोऽग्रेण निपातयेत्।
यत्र चारीमतिक्रान्तां हम्मीरस्तामकीर्तयत् ॥

हम्मीरः

### भूमिपल्लवा

ताले ताले कुञ्चिता स्यात्तथैवाङ्कस्थिता सती।
कुञ्चिता या धृतस्पर्शा विज्ञेया भूमिपल्लवा ॥

कुम्भः

### भूषणानि

यद्यद्रसोचितविभावादीनां प्रतिपादकाः।
दृश्यन्तेऽवयवाः शब्दास्तेऽपि यद्यदलङ्कृताः ॥
विज्ञेयास्तत्तदाहार्या लोकशास्त्रनिवेशिताः।
तत्तद्रसोचितविभावादीनां प्रतिपादकाः ॥

विप्रदासः

### भूषालक्षणम्—तद्भेदाश्च

यथा तु भूष्यते गात्रं सा भूषेत्यभिधीयते।
एषा पुनश्चतुर्धा स्यादावेध्यं बन्धनीयकम्।
ततः प्रक्षेप्यमारोप्यमित्येषां रूपमुच्यते ॥

वेमभूपालः

### भूषास्वरूपम्—आहार्याभिनयः

येनालं क्रियते देहं सोऽलंकारः प्रकीर्तितः।
स चाभरणमाल्यात्मा चतुराभरणं बुधैः ॥
आवेध्यबन्धनीयाख्यप्रक्षेप्यारोप्यभेदतः।
कर्णभूषणमावेध्यं कुण्डलादिभराकृतम् ॥
बन्धनीयं तु विज्ञेयं श्रोणीसूत्राङ्गदादिकम्।
रुचिकप्रमुखं क्षेप्यं हाराद्यारोप्यमिष्यते ॥

नृत्तरत्नावलिः

### भृङ्गः—मण्ठकः

गुरुर्लघुद्वयं यत्र भृङ्गतालः स कथ्यते।
मङ्गलो मण्ठको ज्ञेयो रसे वाद्भुतसंज्ञके ॥

गान्धर्ववेदे

### भृतच्छाया

भरणं रागरन्ध्राणां यैः स्थायाः स्युर्भृतस्य ते।

कुम्भः

**भृताः**

ते च घनत्वाविज्ञेया येत्रान्तःसारसंभृताः ।

कुम्भः

**भेदः—वाद्यम्**

लयस्त्रेधाखिधा भेदः पाटैः स्यात्सर्ववाद्यजैः ।
कश्चिदन्याङ्गजः पाटः कश्चित्स्यात्तदुपाङ्गजः ।
कश्चिद्योगेन निष्पन्नस्तैर्मिश्रैः पादपूरणैः ॥

कुम्भः

**भेरी**

सार्धहस्तमितायामा वदने हस्तसंमिता ।
ताम्रेण निर्मिता कार्या वक्त्रयोर्वलये पुनः ॥

चर्मनद्धे छिद्रयुक्ते रज्ज्वा गाढं नियन्त्रिते ।
मध्ये बद्ध्वा सूत्रबन्धैर्दक्षिणे वदने पुनः ॥

दक्षिणस्थेन कोणेन वामे वामेन ताडयेत् ।
दकारपाटवर्णाढ्या भेरी भीरुभयंकराः ॥

गम्भीरोद्भटनिस्वाना वाद्या राजेन्द्रशासनात् ।
केचिद्वंबं घटान्पाटानत्रेच्छन्ति महाधियः ॥

कुम्भः

**भैरवः**

यदीयांशग्रहन्यासाः षड्ज एव निगद्यते ।
रिपास्तो भैरवो रागः प्राभाते स प्रगीयते ॥

कुम्भः

धैवतांशग्रहन्यासो रिपहीनो ध सान्तकः ।
भैरवः स तु विज्ञेयो धैवताधिकमूर्छना ॥

विकृतो धैवतो यत्र भैरवः परिकीर्तितः ।
ध नि स ग म ध … … … … … ॥

गान्धारकः शशिकलाकलितस्त्रिनेत्रः ।
सर्वैर्विभूपिततनुर्गजकृत्तिवासाः ॥

भास्वत्त्रिशूलकर एष नृमुण्डधारी ।
शुभ्राम्भरो जयति भैरव आदिरागः ॥

ध नि स ग म म प म. सङ्गीतदर्पणः

**भैरव्यंशः**

कार्ये रागांशको यो वै कारणे दृश्यते क्वचित् ।
स कार्यांशो भैरवेऽस्ति भैरव्यंशो यथार्थतः ॥

**भौमः—नक्रग्रहहस्तः**

मयूराभिधहस्ते तु मध्यमाकुञ्चिता तले ।
नाम्ना श्लिष्टमयूराख्यो भौमार्थे संप्रयुज्यते ॥

शृङ्गारशेखरः

**भौमचारिकाः**

समपादा स्थिरावर्ता शकटीत्यादि … द्विधा ।
अध्यर्धिकाशेषगतिरेलकाक्रीडिता तथा ॥

स्पान्दिता च … वद्या च जनिताभिधा ।
समो सरितमत्तल्लिमतल्युस्यन्दिताधंता ।
उद्वृत्ते चेति कथिता भौम्यः षोडश चारिकाः ॥

सङ्गीतनारायणे

**भ्रमरः**

भ्रमरः सूरिभिः प्रोक्तः समस्ताङ्गुलिताडनात् ।

कुम्भः

**—हौडुक्कपाटः**

भ्रमरो भ्रमभङ्गीभिः सर्वाङ्गुलिसमाहतेः ।

यथा—

भोणं खु खुं णं खद्दणं डें द्र डें द्रण इ ण वाकरें झ

**—प्रतिमण्ठकः**

गुरुरेको भवेद्यत्र सन्निपातः स कथ्यते ।
भ्रमरः प्रतिमण्ठोऽसौ विद्वद्भिस्तेन गीयते ॥

सन्निपाततालः ऽ गान्धर्ववेदे

आक्षिप्ता यत्र कुर्वाणः सममुद्वेष्टयन् करः ।
जङ्घयोः स्वस्तिकं कृत्वा कुर्वीत भ्रमरीं ततः ॥

उल्बणौ वा करावेव द्वितीयाङ्गे पुनर्विधिः ।
भ्रमरं तद्बुधैर्ज्ञेयमुद्धतस्य परिक्रमे ॥

नृत्तरत्नावली

**भ्रमरीलक्षणम्**

भ्रमर्यालक्ष्म चान्यत्र वक्ष्ये लक्ष्यानुसारतः ।
उत्प्लुतभ्रमरीचक्रभ्रमरी गरुडाभिदा ॥

अथैकपादभ्रमरी कुञ्चितभ्रमरी तथा ।
आकाशभ्रमरीचैव तथान्या भूचरीति च ।
भ्रूमध्यक्षिप्तविज्ञेयः नाट्यशास्त्रविशारदः ॥ अशोकः

**अमितः**

विधत्ते यो भ्रमं स्वायं स्वरेषु भ्रमितस्तु सः ।
निगद्यते स सूक्ष्मान्ते यः क्रमेणाल्पतां गतः ॥

कुम्भः

**भ्रातृभगिनीहस्तः**

सूचीहस्तस्त्वंसदेशे कुञ्चितो वीक्षितो यदि ।
भगिन्यां सोदरे चैव युज्यते भरतागमे ॥

भरतकल्पलता

**भ्रान्तः**

भ्रान्तः स भ्रान्तः (?) भ्रमणात्प्रथमे प्रियसङ्गमे ।

कुम्भः

म

**मङ्गलः—तालः**

न द्वयम् ॥।०॥।

कुम्भः

**मङ्गलारम्भलहरी**

सङ्गीयते द्विरुद्ग्राहो ध्रुवाभागौ सकृद्यदि ।
पुंस्त्रीसकृत् ध्रुवोद्ग्राहौ मङ्गलारम्भ इत्यसौ ॥

मोक्षदेवः

**मठताललक्षणम्**

मठे लघुचतुष्कं स्याद्भगणश्चेति चापरे (॥॥ऽ॥
गुरुर्लघु गुरुश्चात्र व्यवहारे तु दृश्यते (ऽ। ऽ)

सोमराजदेवः

**मठ्यः—तालः**

आद्यन्तयोर्लघुर्मध्ये द्रुतं च चतुरश्रकः ।
मात्रा दश जगुर्यत्र स मठ्यः परिकीर्तितः ॥

भरतकल्पलता

**मणिबन्धगतागतम्**

मणिबन्धे यदैकस्य करो विलुठितोऽपरः ।
बहिर्मण्डलतः स्थित्वा तथान्तर्मण्डलैस्तदा ।
यस्मिन् प्रवर्तते तत्स्यान्मणिबन्धगतागतम् ॥

**मणिबन्धासिकर्षाख्यम्**

हस्तावुद्यम्य युगपत्क्रमाद्वा स्कन्धयोर्यदि ।
विलोलनं विधायाथ कूर्परस्वस्तिकात्मना ॥
तत्रैव लोडयित्वाथ बहिरन्तश्च मुष्टितः ।
द्रुतं निविश्य लुठनाच्चक्राकृतिविडम्बिनः ॥
तदन्यस्मिन् क्रमाद्धस्ते ... ... ... ? ।
परस्य लीलया यत्र समुत्क्षेपो विधीयते ।
मणिबन्धासिकर्षाख्यं तदा सद्भिर्निरूपितम् ॥

**मण्ठकतालभेदाः—तल्लक्षणानि च**

जयप्रियः कलापश्च कमलो मङ्गलस्तथा ।
सुन्दरो वल्लभश्चैव मण्ठकाः षट् प्रकीर्तिताः ॥
जगणेन रसे वीरे मण्ठकः स्याज्जयप्रियः ।
कलापे स्याद्रसो हास्यो नगणः सविरामकः ॥
विरामान्तद्रुतद्वन्द्वाल्लघुना कमलो मतः ।
शृङ्गारे मङ्गलो मण्ठो भगणेन प्रगीयते ॥
सुन्दरः सगणेन स्याच्छृङ्गाररससंयुतः ।
करुणे वल्लभः प्राज्ञैः रगणेन प्रगीयते ।
लक्ष्म तन्मण्ठकादीनां शार्ङ्गदेवमतोदितम् ॥

मोक्षदेवः

**मण्ठनृत्तम्**

मण्ठस्य सल्लकुद्दत्येदुद्ग्राहो मण्ठतालतः ।
द्विस्त्रिश्चतुर्वा ध्रुवक आभोगस्त्वसकृत्ततः ॥
विचित्रहस्तकैर्न्यासं ध्रुवादौ पुनराचरेत् ।
योऽयं तदा मण्ठनृत्तं सौष्ठवाधिष्ठितं मनः ॥

**मण्डला**

सकृद्रेचितहस्तश्चेत्त्यक्त्वा स्थानं च सम्भ्रमात् ।
मण्डला सा विनिर्दिष्टा द्विधान्या सा प्रकीर्तिता ॥

कुम्भः

**मण्डलाभरणम्**

अभ्यन्तरप्रवेशेन परिभ्राम्य तु चक्रवत् ।
पश्चाद्विलोड्य दोलावल्क्रियया पार्श्वयोर्यदा ।
प्रातिलोम्येन यद्वेदं मण्डलाभरणं तदा ॥

**मण्डिडका**

मण्डिडका तु डक्केन सायामा षोडशाङ्गुला ।
अष्टाङ्गुलमुखी मध्यपरिधौ षोडशाङ्गुला ॥
वध्रार्गलाभ्यां रहिता भवेदुत्कक्षकं त्विह ।
मध्यमं च किकौ द्वन्द्वमुत्कक्षं चाञ्चलीद्वयम् ॥

धृत्वा वामकराङ्गुष्ठत्र्यङ्गुलीभिर्निपीड्य च ।
तर्जनीमण्डलीप्रान्तन्यस्तं दक्षिणपाणिना ॥
अथवा मणिबन्धोर्ध्वे क्षिप्त्वा कक्षाध्वनीद्वयम् ।
कनिष्ठानामिकाङ्गुष्ठे युक्त्यापीड्यमङ्गुली ॥
तर्जन्या मध्यमाङ्गुल्या करेणान्येन वादयेत् ।
एतस्या वादनं प्राहुर्हस्तेन कुडुपेन च ॥
पाटैर्हुडुक्का डक्कोक्तैः शक्तिपूजासु पूजकैः ।
वादनीया मण्डिडक्केत्यूचुर्वाद्यविदो जनाः ॥

कुम्भः

## मण्डिका

सव्यापसव्यतो यत्र वामं तदितरं तथा ।
जानुसत्वरमासाद्य भूम्यङ्घ्रीस्थापयेद्यदा ।
मण्डिका सातदा प्रोक्ताशोकमल्लेन भूभुजा ॥

अशोकः

## मण्डीडक्का

षोडशाङ्गुलदीर्घ स्यान्मुखे चाष्टाङ्गुलान्तरा ।
मध्यप्रदेशे कर्तव्या षोडशाङ्गुलवेष्टना ॥
शेषं लक्ष्म हुडुक्कावत्कच्छार्गळविवर्जितम् ।
पाटाक्षरं हुडुक्कावन्मण्डीडक्कासुकल्पितम् ॥
मण्डलीमध्यरज्जुं च वामहस्तेन पीडयेत् ।
सव्यजानुगतं वक्त्रं सव्यहस्तेन वादयेत् ॥
शक्तिदैवतपूजायां चर्यागानविधौ तथा ।
वादनीया प्रयत्नेन मण्डीढक्का विचक्षणैः ॥

सोमेश्वरः

## मतङ्गोक्तरागत्रैविध्यम्

शुद्धश्छायालगः प्रोक्तः सङ्कीर्णश्च तथैव च ।

तत्र शुद्धरागत्वं नाम शास्त्रोक्तनियमाद्रञ्जकत्वम्; छायालगरागत्वं नामान्यच्छायालगत्वेन रक्तिहेतुत्वम्; सङ्कीर्णरागत्वं नाम शुद्धच्छायालगमुख्यत्वेन रक्तिहेतुत्वम् ॥

सङ्गीतदर्पणः

## मत्स्यकरणम्

कृत्वोत्प्लवनमावर्त्य मध्यं पार्श्वेन मत्स्यवत् ।
वामेन परिवर्तेच्चेत्तन्मत्स्यकरणं भवेत् ॥

कुम्भः

## मत्तावलिनृत्यम्

मत्तानां च तुरुष्काणामापेयास्वादनान्तरम् ।
यः प्रकारः स्थाननृत्यं विदुर्मत्तावलिं बुधाः ॥

सङ्गीतनारायणः

## मदालसा

मत्तवद्यत्र चरणावितश्चेतश्च विह्वलौ ।
स्थाप्येते यत्र तामाहुश्चारीमेतां मदालसाम् ॥

कुम्भः

## मदालसम्

आसनं संश्रितश्चैकः परः किञ्चित्प्रसारितः ।
शिरः पार्श्वगतं यत्र तन्मदालसमीरितम् ।
विपदौत्सुक्यनिर्वेदमदेषु विरहेषु तत् ॥

कुम्भः

## मधुपः

पादकुट्टनचारी तु लोके मधुपसंज्ञिका ।
तस्यास्तु बहवो भेदा दिङ्मात्रश्चोच्यते मया ॥

कुम्भः

## मध्यमम्

मध्यस्थानोद्भवत्वेन मध्यमः परिकीर्तितः ।

सङ्गीतसारः

## मध्यमग्रामः

सोपान्ते पञ्चमस्त्रिस्रो धैवतस्य चतुः श्रुतिः ।
पञ्चमो धैवतश्चैवर्षभः संवादिरुच्यते ॥

सङ्गीतमकरन्दः

## मध्यमग्रामजातिः—बीभत्से, भयानके

कैशिकी धैवतांशत्वात्तथा गान्धारपञ्चमी ।
प्रयोक्तव्ये बुधैः सम्यग्बीभत्से सभयानके ॥

नाट्यशास्त्रे

## —अद्भुते

कार्मारवी तथा चान्ध्री निषादांशपरिग्रहात् ।
अद्भुते तु रसे कार्ये जातिगाने प्रयोक्तृभिः ॥

नाट्यशास्त्रे

—वीरे रौद्रे

मध्यमोदीच्यवा चैव गान्धारोदीच्यवा तथा।
षड्जर्षभांशोपपत्त्या वीरे रौद्रे च कीर्तिता ॥

नाट्यशास्त्रे

गान्धारीमध्यमा चैव पञ्चमी च तथैव हि।
गान्धारोदीच्यवा चैव तथा गान्धारपञ्चमी ॥

ततश्च रक्तगान्धारी मध्यमोदीच्यवा तथा।
आन्ध्री च नन्दयन्ती च कार्मारव्यथ कैशिकी।
एवमेकादश ज्ञेया मध्यमग्रामसंश्रयाः ॥

मतङ्गः

:करुणे

गान्धारीरक्तगान्धार्यौ गान्धारांशोपपत्तितः।
करुणे तु रसे कार्यौ निषादांशे तथैव च ॥

नाट्यशास्त्रे

## मध्यमग्रामलक्षणम्

त्रिचतुःश्रुतिकौ यत्र पधौ संवादिनौ स्वरौ।
ऋषभस्य तु विद्वद्भिः स ग्रामो मध्यमः स्मृतः ॥

हम्मीरः

## मध्यमग्रामे श्रुतिनियमः

चतुःश्रुतिस्तु विज्ञेया मध्यमः पञ्चमः पुनः।
त्रिश्रुतिर्धैवतस्तु स्याच्चतुःश्रुतिक एव हि ॥

निषादषड्जौ विज्ञेयौ द्विचतुःश्रुतिसंभवौ।
ऋषभस्त्रिश्रुतिश्च स्याद्गान्धारो द्विश्रुतिस्तथा ॥

नाट्यशास्त्रे

## मध्यमनायिकालक्षणम्

पुंसि स्वयंकामयति कामयेद्वा च तं वधूः।
सक्रोधे क्रुध्यति मुहुः सूनृते सत्यवादिनी ॥

सापराधेऽपकर्त्री स्यात् स्निग्धे स्निह्यति वल्लभे।
एवमादिगुणोपेता मध्यमा सा प्रकीर्तिता ॥

भरतकल्पलता

## मध्यमव्रीडा—नायिका

नीवीबन्धोच्छ्वासनेऽच्छ्वोतिच्छ्वार्दीपेत्तत्प्रान्तेऽथमध्यं समीपे।
मन्दं मन्दं पाणिमध्ये व्यनक्ति या मध्या मध्यमव्रीडितेयम् ॥

शुभङ्करः

## मध्यमसाधारणम्

काकल्यन्तरयोस्तत्र लक्षणं ब्रूमहेऽधुना।
प्रथमं षड्जमुच्चार्य काकलीधैवतो ततः ॥

क्रमादुच्चारयेदेवं मध्यमं च ततः परम्।
अन्तरं ऋषभं तद्वत् समुच्चार्याथवा यदि ॥

क्रमाध्वानि समुच्चार्य षड्जमुच्चारयेत्पुनः।
तत्परस्परसंरम्भे लोप्यं त्यक्त्वा प्रवादयेत् ॥

एवं मध्यमगान्धारा क्रमादुच्चार्य मध्यमम्।
पुनः प्रचेत्परं च वर्ज्यं त्यक्त्वा विधानतः ? ॥

व्याप्तिं कुर्यात्प्रयत्नेन संपूर्णादिक्रमात्ततः।
काकल्यन्तरयोः सर्वप्रयोगेष्वल्पता मता ॥

स्वीकरोति निषादो यः षड्जस्याद्यां श्रुतिं यदा।
ऋषभस्त्वन्तिमां तस्य षड्जसाधारणं तदा ॥

तथैव मध्यमस्यापि यथा गान्धारपञ्चमे।
आस्कंदतस्तदा मध्यमाख्यसाधारणं भवेत् ॥

सङ्गीतसूर्योदये

## मध्यमादिरागः

मध्यमादिश्च रागाङ्गं ग्रहांशन्यासमध्यमा।
सप्तस्वरैस्तु गातव्या मध्यमादिकमूर्छना।
संपूर्णा कथिता तज्ज्ञैः रिधहीना क्वचिन्मता ॥

सत्या सहासं परिरभ्य कामा
संचुम्बितास्या कमलायताक्षी।
स्वर्णच्छविः कुङ्कुमलिप्तदेहा
सा मध्यमादिः कथिता मुनीन्द्रैः ॥

म प ध नि स रि ग म — म प ध नि स ग म.

सङ्गीतदर्पणः

## मध्यमादिलक्षणम्

आरुह्य कुतपे काले चावरोहात्क्रमात्स्वरान्।
षड्जान्तारस्थायिपर्यन्तं यद्वा हन्याच्च धैवतम् ॥

मध्यमादेः समाख्यातं स्वस्थानं प्रथमं तदा।
असम्भवे पूर्वपूर्वस्वरस्य तु परस्परम्।
क्रमेण स्वरमारोहेत् सर्वरागेष्विति स्थितिः ॥

हम्मीरः

## मध्यलुठिता

कुट्टयित्वा च विन्यस्य लुठितश्च निकुट्टितः।
सा मध्यलुठिता चेति कीर्तिताश्चर्यनामिका ॥ कुम्भः

कुट्टितो स्थापितोऽङ्घ्रिश्चेल्लुठितश्च निकुट्टिता ।
समादिष्टा तदा मध्यलुठिता नृत्तवेदिभिः ॥

### मध्यवक्रा

कुट्टयित्वा च विन्यस्य भ्रमयित्वा न्यसेत्ततः ।
निकुट्टयेत्ततः स्थाने मध्यवक्रा प्रकीर्तिता ॥

कुम्भः

### मध्यस्थं वस्तु

न चातिमात्रसन्तुष्टो न चान्यं तु जुगुप्सितः ।
मध्यस्थभावमासाद्य मध्यस्थं वस्तु निर्दिशेत् ॥

वेमभूपालः

### मध्यसाधारणम्

साधारणं तु गमयोः श्रुतियुग्मपरिग्रहात् ।
मध्यामाद्यन्तः संश्रित्य श्रुतियुग्मं मपौ स्वरौ ॥
गृहीतं तत्र विज्ञेयं मध्यसाधारणं बुधैः ।
यदत्र मध्यमरयोक्तं बुधाः साधारणं स्फुटम् ॥
तत्र मध्यम एव स्यात्तदिति प्राज्ञसंमतम् ।
स्वस्थानाद्यस्च्युतः स्वीयं स्थानमप्राप्तवान् स्वरः ।
साधारणं तु तद्भावो भावप्राधान्यतः स्मृतम् ॥

कुम्भः

### मध्यस्थापनकुट्टिता

कुट्टितः प्रथमं पादः पुरः पश्चान्निवेशितः ।
मध्ये निवेशितश्चायं पुनस्तत्रैव कुट्टितः ।
मध्यस्थापनकुट्टाख्या चारी चान्वर्थलक्षणा ॥

कुम्भः

### मध्यस्थांशः

परस्परं निरसदृशौ तावेव सदृशौ च यौ ।
मध्यस्थौ तौ तयोरंशो नष्टदेशाख्ययोर्यथा ॥

कुम्भः

### मन्द्रगतिः

मन्द्रस्त्वंशपरो नास्ति न्यासे तु द्वौ व्यवस्थितौ ।
गान्धारे न्यासलिङ्गेतु दृष्टमृषभधैवतम् ॥

नाट्यशास्त्रे

### मन्द्रतारः

तारमन्द्रप्रसन्नस्तु ज्ञेयो मन्द्रगतस्य च ।
लङ्घयित्वा परान्मन्द्रात्परांस्तारगतिं गतः ॥

### मन्द्रस्वराः

चतुर्थ्यापि पुनस्तन्त्र्या मन्द्रमध्यमयुक्तया ।
षट्सु तास्वपि सारीपु भवेयुः क्रमशः स्वराः ॥
पतपः प्रथमः शुद्धपञ्चमस्तदनन्तरम् ।
शुद्धो दः शुद्धनिः पश्चान्निषाधः कैशिकी ततः ॥
षड्जः पतादिरित्येते प्रोक्ता मन्द्रस्वरा मया ।
पुरोदितानुसारीषु तन्त्रीभिश्च चतसृभिः ॥
अनुमन्द्रस्तथामन्द्राः प्रोद्दिष्टास्ते स्वयंभुवः ।
स्वीयकल्पनया नोक्ताः प्रामाण्यं तेषु विद्यते ।
गुरुणा मे यथोद्दिष्टा वीणायां सुप्रपञ्चिताः ॥

कुम्भः

### मन्द्रादिस्थानानि

नृणामुरसि मन्द्रस्तु द्वाविंशतिविधो ध्वनिः ।
स एव कण्ठमध्ये स्यात् तारः शिरसि गीयते ॥
उत्तरोत्तरतारस्तु वीणायामधरोत्तरः ।
इति ध्वनिविशेषास्ते श्रवणाच्छ्रुतिसंज्ञिताः ॥

दत्तिलः

### मन्मथताललक्षणम्

द्रुतद्वन्द्वं गुरुश्चैकस्ताले मन्मथसंज्ञके । (०० ।)

सोमराजदेवः

### मरालः—नाट्याङ्गम्

प्रथमं दुगदिग्गिस्यादन्ते धों गुडुधों गुडुः ।
धीं तक्किटधणं मध्ये मरालस्तु प्रकीर्तितः ॥

भरतकल्पलता

### मराललक्षणम्—देशीचारी

नन्द्यावर्तस्थयोरङ्घ्र्योः पार्ष्णिपादाग्ररेचनम् ।
पुरः प्रसारितो यत्र सा मराला प्रकीर्तिता ॥

मोक्षदेवः

नन्द्यावर्तासनाङ्घ्री चेत्पार्ष्णी प्रपदरेचितौ ।
पुरः प्रसरितौ चारी मराळा साभिधीयते ॥

कुम्भः

### मर्दलभेदाः

वादको मुखरी चान्यः प्रतिमुखरिकस्ततः ।
गीतानुगश्चतुर्थस्तु बुधैर्मार्दलिको मतः ॥

मोक्षदेवः

### मर्दलमुरजयोः भेदः

त्रयोदशाङ्गुलो वामे मुखे स्याद् द्वादशाङ्गुलः।
दक्षिणे तु मुखे धीरैः मर्दलः परिकीर्तितः॥

मुरजोऽष्टाङ्गुलो वामे दक्षे सप्ताङ्गुलो मुखे।
अङ्गयोर्ध्वकालिङ्गथभेदात्सरिसा परिकीर्तितः॥

तदुक्तं भरतेन।

हरीतक्याकृतस्त्वन्ते यवमध्ये तथोर्ध्वकः।
आलिङ्गथश्चैव गोपुच्छसदृशः परिकीर्तितः॥

सङ्गीतनारायणे

### मलयः—तालः

वर्णैश्च सप्तदशभिरंघ्रिः शृङ्गारके रसे।
कमलो मलयाख्ये चैवाद्यं वृद्धिकरः परः।
मलयाख्यो भवेत्ताले गुरुर्लघुरथो गुरुः॥

गान्धर्ववेदे

### मल्लारीरागः

मल्लारी सपहीना स्याद्ग्रहांशन्यासधैवता।
औडुवा पौरवीयुक्ता वर्षासु सुखदा सदा॥
गौरीकृशाकोकिलकण्ठनादा गीतच्छलेनात्मपतिं स्मरन्ती।
आदाय वीणां मलिना रुदन्ती मल्लारिका यौवनदूनचित्ता॥

ध नि स रि ग म ध

सङ्गीतदर्पणः

### मल्हारः

धैवतांशग्रहन्यासः षड्जपञ्चमवर्जितः।
मल्हारो गीयते प्रातर्गानविद्याविशारदैः॥

कुम्भः

### मल्हारी

पञ्चयेण युता प्रातर्मल्हारी रिविवर्जिता।
वर्षास्वपि विशेषेण प्रगेया सुखदायिनी॥

कुम्भः

### मसी

हरितालादिसामग्री मसी चैव तु वर्णिका।
मुख्यता हरितालस्य वर्णिकायाः परिग्रहे॥
हरितालविहीना तु नैव सिद्धप्रदा मसी।
हकारः शङ्करः प्रोक्तो रेफो वह्निसखो मतः॥
इकारश्च तकरश्च सर्वविघ्नविनाशनः।
आकारो द्रुहिणश्चैव लकारो लय उच्यते॥

एते देवगणा नित्यं हरिताले व्यवस्थिताः।
वर्णिकाग्रहणे तस्या हरितालः प्रशस्यते॥
मन्त्रोऽयं कथितो वेदे हरितालाभिमन्त्रणे।
वर्णिकाग्रहणार्थस्त्वं निर्मितोऽसि धरातले॥
सर्वसिद्धप्रदो नाट्ये सर्वदेवैश्च वन्दितः।
सर्वविघ्नोपहः साक्षात्सर्वदेवमयस्तथा।
तस्मात्प्रयच्छ संसिद्धिं हरिताल नमोऽस्तु ते॥

जगद्धरः

### महानादलक्षणम्

निस्साण इति विख्यातं महानादं भयंकरम्।

### मागधी—गीतिः

मात्राभिरष्टभिर्मार्गे वार्तिके सकलः पुनः।
चतुष्कलः तृतीयस्यां कलायां दक्षिणे पथि॥
प्रयोज्या मागधीगीतिरियमुक्ता महीभुजा।
इति पक्षान्तरेणोक्ता मागधीगीतिरुत्तमा॥

कुम्भः

तत्र स्यान्मागधी चित्रे पदैः समनिवृत्तकैः।

दत्तिलः

### मातुः

गीर्वाणमुखभाषाणां पदं मातुरितीरितः।
धातुमातुसमुत्पन्नं गीतमित्युच्यते बुधैः॥

सङ्गीतसूर्योदये

### मातृकालक्षणम्

देशीमार्गगतैस्तालैर्मिश्रा सा गीयते सदा।
निबद्धा चानिबद्धा च द्विविधा स्यात् त्रिधापि सा॥
निबद्धा पद्यबन्धेन गद्यबन्धेन चेतरा।
गातव्या गीतशास्त्रज्ञैर्जन्मद्वयशुभप्रदा॥
वेदान्तन्यायमीमांसापुराणजननी यतः।
अतोऽसौ गीयतेऽशेष मोहप्रत्यूहनाशिनी॥

सोमराजदेवः

### मातृहस्तः

वामे तु शिखरं कृत्वा दक्षिणे मृगशीर्षकम्।
मात्रार्थे विनियुज्येत कीर्तितो भरतादिभिः॥

भरतकल्पलता

**माधवप्रियः**

करणं वलितोरु स्याद्वलितं च ततःपरम् ।
पदापविद्धं च ततो दोलापादं समाश्रयेत् ॥
पार्श्वक्रान्तं परिवृत्तं सिंहविक्रीडितं ततः ।
ललकाक्रीडितं पश्चात्कटिच्छिन्नमतःपरम् ॥
नवभिः करणैरेभिर्निर्मितः कुम्भभूभुजा ।
माधवप्रियसंज्ञोऽयं प्रयुक्तो माधवार्चने ॥

कुम्भः

**माधुर्यम्—(पुरुषस्य)**

निकारहेतौ वहति विद्यमानेऽपि चेतसः ।
स्वाभाविकप्रसादोऽपि तन्माधुर्यमितीरितम् ॥

वेमभूपालः

**मान्मथगणाः**

प्राकृते त्रिगणाः पञ्च षट्चतुस्त्रिद्विमिताः ।
लघुः षट्पंच चतुस्त्रिद्विमिता मात्रायुताः कलाः ॥
चतुष्कायास्तु चत्वारो भेदा रतिगणाः मताः ।
तत्र ये लघुपूर्वाः स्युस्तेषु प्रागधिकं लघु ।
षष्ठी सङ्ख्याभवा भेदाः प्रोक्तास्ते मान्मथा गणाः ॥

मोक्षदेवः

**मारुतः**

प्रवृद्धस्खलितश्चैव निरस्तो विस्मितस्तथा ।
उल्लासितो वियुक्तश्च प्रसृताख्यश्चतुतौ परौ ॥
स्वस्थाविति नवोल्लासोच्छ्वासनिश्वासनोदितौ ।
समौ भ्रान्तो विलीनश्चान्दोलितः कम्पितः परः ॥
स्तम्भितोच्छ्वासनिश्वाससूत्कृतानि च सत्कृतम् ।
एवं दशविधः प्रोक्तो मारुतः कैश्चिदादृतैः ॥
सशब्दवदनाद्यस्तु प्रवृद्धः सन्धिनिर्गतः ।
सप्रवृद्धस्तु निःश्वासः क्षमादिषु नियुज्यते ॥

कुम्भः

**मारुती—(कला)**

चतुर्विलासेषु शिरो निधाय नभोगतैर्यत्र कराङ्घ्रिपद्मैः ।
चक्राणि चोद्भ्रामयतो हि सैव प्रोक्ता कलेयं किल मारुतीति ॥

नागेन्द्रसङ्गीते

**मार्गः**

ब्रह्माद्यैः गदितां शम्भोः प्रयुक्तां भरतादिभिः ।
गान्धर्वं वादनं नृत्यं यन्मार्ग इति स स्मृतः ॥

सङ्गीतनारायणे

निबद्धश्चानिबद्धश्च मार्गोऽयं द्विविधो मतः ।
आलापादिनिबन्धो यः स च मार्गः प्रकीर्तितः ॥

मतङ्गः

नानादेशसमुद्भवाश्च ललनास्ताभिस्ततः शिक्षिताः
ताभ्योऽप्यत्र परंपरागतमिदं लोकप्रतिष्ठामगात् ।
पार्थायैतदुपादिशत्पुनरिदं गन्धर्वलोकाधिपः
श्रीमांश्चित्ररथस्तदेतदखिलं मार्गाभिधं तत्त्वतः ॥

कुम्भः

चित्रश्चित्रतरश्चित्रतमो वार्तिकदक्षिणौ ।
अतिचित्रतमः प्रोक्तः तालमार्ग इति स्मृतः ॥

भरतकल्पलता

मार्गाः स्युस्तत्र चत्वारो ध्रुवश्चित्रश्च वार्तिकः ।
दक्षिणश्चेति तत्र स्यात् ध्रुवके मात्रिकाकला ॥
शेषेषु द्वे चतस्रोऽष्टौ क्रमान्मात्राकला भवेत् ।
ध्रुवकापतिता चित्रे वार्तिके त्वादिमे उभे ।
द्वे चान्तेऽपि प्रयोक्तव्ये क्रमादष्टौ च दक्षिणे ॥

कुम्भः

**मार्गदेशी**

नन्वत्र प्रत्ययैकार्थे मार्गदेशीति का भिधा ।
उच्यतेऽत्र तदैक्येऽपि ये यत्र विनियुज्यते ।
विवक्षावशतो ब्रूते सर्वमप्येमिति स्थितम् ॥

कुम्भः

**मार्गपटहः**

सवितस्तिकरद्वन्द्वं दैर्घ्ये स्यात् परिधौ पुनः ।
षष्ठ्यङ्गुलो मध्यदेशे पृथुः खदिरदारुणः ॥
उत्तमो बीजकाष्ठादिकृतो धातुमयोऽथवा ।
दक्षिणं वदनं तस्य स्यात्सार्धैकादशाङ्गुलम् ॥
वामं तु वदनं कार्यं सार्धैर्दशभिरङ्गुलैः ।
दक्षिणे वदने तस्य वलयं लोहनिर्मितम् ॥
वामे च वलयं वक्त्रे कार्यं वल्लीसमुद्भवम् ।
षाण्मासिकस्य वत्सस्य मृतस्यानाच्य पारिकाम् ॥
तयावगुण्ठ्य वलयं वामं वल्लीसमुद्भवम् ।
अङ्कितं सप्तभिश्छिद्रैः शून्यभभूतैरदृढम् (?) ॥
तत्र सप्तसु रन्ध्रेषु निक्षिप्तैः सूक्ष्मदोरकैः ।
कलशाः सप्त हेमादिधातुभेदविनिर्मिताः ॥

नियन्तव्या श्लथतरदैर्घ्येण चतुरङ्गुलाः ।
पटहस्य च वामास्य पंक्त्यङ्गुलचतुष्टयम् ॥

विस्तारतस्त्र्यङ्गुलया स्वर्णादिकृतया ततः ।
वेष्टयेत्पटहं कण्ठे तया पत्रिकया दृढम् ॥

वाह्यं कायस्य यच्चर्म पशोस्तत्कवलं स्मृतम् ।
कृतान्तःसुषिरानेन घनेन वदनद्वयम् ॥

पिदध्यादस्य वदने दक्षिणे कवलं पुनः ।
सर्वतो विहितः छिद्रं विदध्याद्वाद्यसिद्धये ॥

गुणैः सुषिरनिक्षेपैः गाढमाकृष्य यत्नतः ।
वामवल्कस्य वलये सप्तरन्ध्रनिवेशितान् ॥

गुणानाकृष्य सुदृढं यथास्थानं निवेश्य तत् ।
वामस्य कवलं तत्र सप्तछिद्रनिवेशितैः ॥

तैर्गुणैः स्वर्णकलशानावेष्ट्य विधिवत्सुधीः ।
दक्षिणास्यस्य वलये लोहे प्रक्षिप्य मध्यतः ॥

सम्यक्कृष्टैस्तु सुदृढैः वलयं गाढतां नयेत् ।
कलशेभ्यो बहिर्वामवल्लीवलयपल्लवे ॥

कच्छाकटीवेष्टनाय सांचलं बध्यते दृढा ।
इत्येवं मार्गपटहो लक्षितः शास्त्रवार्गतः ॥

कुम्भः

## मार्गलक्षणम्—(अभिनयः)

नाट्यवेदप्रवृत्तत्वाद्भरतादिमहर्षिभिः ।
सद्भिः सञ्चारितत्वाच्च मार्गमाहुरिदं बुधाः ॥

नृत्तरत्नावली

## मार्गस्वरूपम्

दक्षिणो वार्तिकश्चित्रो ध्रुवश्चित्रतरस्तथा ।
अतिचित्रतमश्चेति षण्मार्गाश्शास्त्रचोदिताः ॥

अनुघर्षणकश्चैव स्वरश्चापि प्रकीर्तितः ।
सर्वेषां मतमाश्रित्य मार्गा द्वादशधा मताः ॥

धर्मादिसाधनं नाट्यं सर्वदुःखापनोदकम् ।
अनुसेवध्वमृषयस्तस्योत्थानं तु नाटकम् ॥

वाग्भिरङ्गैर्मुखरसैर्यैः सत्त्वाभिनयेन च ।
कवेरन्तर्गतं भावं भावयन् भाव उच्यते ॥

## मालवगौलः

शुद्धाः सरिमपाः शुद्धो धः पतादिसमध्यकी ।
मेळे मालवगौळस्य रागस्यापि तदा भवेत् ॥

कुम्भः

## मालवभाषा

नियोज्या दीपनादौ तु सङ्कीर्णत्वमुपेयुषी ।
निषद्देत्वौडुवत्वेन विनाप्यल्पेन केनचित् ॥
पषौडुवेन विज्ञेया नानामतविचारतः ॥

कुम्भः

## मालवश्रीः

पूर्णा षड्जत्रयोपेता मालवश्रीः सदा भवेत् ।
रिधाल्पा रसशृङ्गारवर्धनी चित्तरञ्जनी ॥

कुम्भः

## मालवी—विभाषा

तथा मतङ्गमुनिना भिन्नषड्जे समीरिता ।
संपूर्णांशग्रहन्यासा धैवता भूयसी पुनः ॥

सरिमैश्च प्रयोगार्हाः टक्ककैशिकसंज्ञिनः ।
रागस्य साम्ययोगेन विभाषा मालवाभिधा ॥

कुम्भः

षड्जग्रामे टक्करागे भाषा मालविका स्मृता ।
षड्जांशग्रहणन्यासा चार्षभेण विवर्जिता ॥

औडुवा षड्जगान्धारपञ्चमैर्दीप्तिमागता ।
भाषेयं मालवीनाम योज्या वाक्कलहे बुधैः ।
मालवादेः पञ्चमस्य टक्करागस्य मिश्रणात् ॥

कुम्भः

## माल्यम्

गर्भितं गुम्भितं चैव वेष्टितं लम्बितं तथा ।
माल्यं चतुर्धा केशान्तं दृश्यादृश्यं तु गर्भकम् ॥

केशोपरिष्टात्तत्प्रथितं पुष्पगुम्भितकं तु तत् ।
वेष्टितं यत्तु मालाभिः तत्तु वेष्टितमुच्यते ॥

विलम्बितं वेणिचूडाकण्ठेष्वालम्बिते तु तत् ।
गर्भितं तु द्विजातीनां विटादीनां च गुम्भितम् ॥

द्विजेतराणां धम्मिल्लभाजामावेष्टितं भवेत् ।
वेणिच्युताग्रकण्ठेषु लम्बितं स्याद्यथोचितम् ॥

गोपवेषहरेः केशी बहुगुञ्जादिभिर्युता ।
निष्पाशानां तु कर्तव्यं नीलचामूरगुम्भितम् ॥

सङ्गीतनारायणे

**मिथुनम्—(नक्षत्रहस्तः)**

व्यत्ययाभिमुखीभूतौ सूची मिथुनभाजने ।

शृङ्गारशेखरः

**मिथोऽसवीक्षावाह्यम्**

एकः करश्चेदन्यस्य स्कन्धदेशमृजुर्गतः ।
निवृत्तसन्निजे पार्श्वे क्रमाद्विहितमण्डलः ।
मिथोऽसवीक्षावाह्यं तत्कथ्यते चालयं तथा ॥

**मिश्रकः**

कृत्वा घने कल्पनं तु गायेन्मिश्रक ईरितः ।

भरतकल्पलता

**मिश्रकरणम्**

स्वरैः पाटैस्तथा तेनैर्यत्रोद्ग्राहध्रुवौ कृतौ ।
तन्मिश्रकरणं प्राह मोक्षदेवः स्फुरद्यशाः ॥

मोक्षदेवः

**मिश्रछाया**

रागे रागान्तरच्छायां मिश्रयन्दोषवर्जितः ।
प्रवीणत्वेन यो गायन् बुधैर्मिश्र उदाहृतः ॥

कुम्भः

**मिश्ररागाः**

सारङ्गनाटसौराष्ट्रसावेरीशुद्धचौलिका ।
मालवश्रीश्च तोडी च ततो घण्टारवोऽपि च ॥

नादरामक्रिया सिन्धि मुखारी मेचबौलिका ।
दशालरागाः कथिताः ततो मङ्गलकौशिका ? ॥

रागज्ञैः केवला शुद्धवसन्तोऽपि प्रयुज्यते ।
केदारगौलसामन्तौ पाडिस्थानं ततःपरं ।
मधुमाधविका पश्चादुपरागा इति स्मृताः ॥

शृङ्गारशेखरः

**मीनम्—(राशिहस्तः)**

त्रिपताकाह्वयौ हस्तौ चान्योन्यमुखमिश्रितौ ।
स्थापितावग्रभागे तु मीनार्थे सुप्रयुज्यते ॥

शृङ्गारशेखरः

**मुकुन्दतालक्षणम्**

लघुर्द्रुतचतुष्कं च गुरुरेको मुकुन्दके ।
।००००ऽ

सोमराजदेवः

**मुकुलः—हस्तः**

मुकुलो विरलीभूतोऽप्यलपद्मकरश्च यः ।
मन्त्रशक्तौ तथा सम्यग्भागधेयानुभुञ्जने ॥

भरतकल्पलता

**मुक्तजानु**

मुक्तजानूत्कटस्यैव जान्वेकं भूमिपृष्टगम् ।
हवने सान्त्वने चैव सज्जने साधुकर्तृके ।
प्रसादने मानिनीनां विनियुक्तं महर्षिभिः ॥

कुम्भः

**मुक्ता**

स्वराणां मोचनं व्याप्तं मुक्तेति परिकीर्तिता ।

भरतकल्पलता

**—मृदङ्गप्रहारभेदः**

उभयोश्च परित्यागात्तथैकान्तरघाततः ।
क्षणे क्षणे कलासश्च मुक्ताख्यस्स उदाहृतः ॥

सङ्गीतनारायणे

**—वृत्तमालाः**

बुधैर्मुक्तावली ज्ञेया छन्दसा वर्जितैःपदैः ।
निबद्धैः केनचिद्वृत्तबन्धेनावृत्तबन्धिनी ॥

युग्मिनी वृत्तयुग्मेन निबद्धा परिगीयते ।
ग्रन्थिता बहुभिर्वृत्तैर्वृत्तमाला स्मृता बुधैः ॥

मोक्षदेवः

**मुक्तावलिव्यतिरिक्तत्रयाणां टेङ्कीणां विभागः तल्लक्षणानि च**

हित्वा मुक्तावलीं तिस्रो भवन्ति त्रिविधाः पराः ।
गणिका वर्णिका चान्या मातृका परिकीर्तिता ॥

गणिका गणिकैर्वृत्तैर्वर्णजैर्वर्णिका मता ।
मात्रिका मातृकैर्वृत्तैर्नैव भेदा भवन्त्यमी ॥ मोक्षदेवः

**मुखगुम्फिनी—(कला)**

असिं ललाटे दधती मुखान्तं नानाविधाय स्फुलिकाःसुमुक्ताः ।
प्रभाति सूत्रेण स नृत्यपाणिर्यल्लाद्भुतोक्ता मुखगुम्फिनीयम् ॥

नागेन्द्रसङ्गीते

**मुखरागः**

रसानुशायिनी सम्पत् पदार्थाः सम्प्रकाशते ।
तामात्मस्थां व्यनक्त्यत्र मुखरागो रसे रसे ।
स चतुर्धा स्मृतो राज्ञा पूर्वः स्वाभाविकस्तथा ॥ कुम्भः

### मुखरीलक्षणम्

वाद्यप्रबन्धनिर्माता निष्णातो गीतवादने।
स्वरेष्वन्तर्मुखत्वं च नृत्तशिक्षाविचक्षणः॥

अर्धाङ्गमिव नर्तक्या वादयेद्रङ्गभूगतः।
वादकैः प्रेक्षितमुखो वादनार्थं मुखर्यसौ॥

मोक्षदेवः

### मुडुपम्

मुडुपं प्रपदस्य स्यात्कम्पनं द्रुतरासतः।

सङ्गीतमुक्तावली देवेन्द्रकृता

### मुडुपचार्यः

अङ्गुलीपृष्ठभागं हि नृत्तज्ञा मुडुपं जगुः।
चार्यते तेन मुडुपचारीत्यन्वर्थसंज्ञकम्॥

निरुक्तिमेवं केप्याहुरन्ये संज्ञां डविद्धवत्।
मुडुपोपपदाश्चार्यस्सन्ति यद्यप्यनेकशः॥

तथाप्यमूर्मया काश्चिल्लिख्यन्ते लोहितोदिताः।
पुरःपश्चात्सदाचारी तथा पश्चात्पुरस्सरः॥

मध्यवक्राभिधा चारी तथैकपन्कुट्टिता।
पदद्वयनिकुट्टाऽन्या पादस्थितिनिकुट्टिता॥

पुरक्षेपनिकुट्टा च पश्चात्क्षेपनिकुट्टिता।
पार्श्वक्षेपनिकुट्टान्या चक्रकुट्टनिकापरा॥

मध्यस्थापनकुट्या च चतुष्कोणनिकुट्टिताः।
चारी त्रिकोणचारान्या तिरश्चीननिकुट्टिका॥

अनुलोमविलोमा च प्रतिलोमानुलोमका।
पुरस्ताल्लुठिता पृष्ठलुठिता चक्रकुट्टिता॥

पार्श्वद्वयचरी मध्यलुठिताख्या परा तथा।

श्रीमतोऽशोकमल्लेनेत्युद्दिष्टाः पञ्चविंशतिः।
इमा मुडुपचार्योऽथ लक्षणं प्रतिपाद्यते॥

अशोकः

### मुद्रा

संप्रदायानुसरणं मुद्रा हृदयरंजनी।

### मुद्राहस्तः

मध्यमाङ्गुष्ठयोर्योगः शेषाङ्गुल्यः प्रसारिताः।
मुद्रा हस्तस्समाख्यातः करन्यासविचक्षणैः॥

अणुरित्यर्थके वेनोराननै तृणभावने।
चिन्मुद्रायां च चरूच्वर्थे मुद्राहस्तो नियुज्यते॥

भरतकल्पलता

### मुनिस्तम्भलक्षणम्

योगाभ्यासजपादिषु मुनीनां निश्चलाङ्गत्वम्।
मुनिस्तम्भः।

[illegible]

### मुरजकर्तरीचालयम्

अंसावधिस्तनक्षेत्राद्भ्रान्त्वा मण्डलवृत्तितः।
ततो वक्षःस्थलं प्राप्तौ मुहुर्निक्षिप्य पार्श्वतः॥

अधस्तत्र व्रजत्येको द्वितीयो मण्डलभ्रमः।
विलोडितो यदा पश्चादुभौ हस्तौ कटिस्थितौ।
अन्योन्याभिमुखौ भ्रान्तौ तदा मुरजकर्तरी॥

### मुरजलक्षणम्

मुरजस्य त्रिभिर्वेधैर्मध्यं गाढं प्रवेशयेत्।
अस्योपकण्ठे कुण्डल्यौ बद्ध्न्ये धातुनिर्मिते॥

तत्र वामास्यकुण्डल्यां स्निग्धां पट्टमयां नवाम्।
कच्छामष्टाङ्गुलायामां सांचलद्द्वितयां शुभाम्।
निवेश्य दक्षिणास्येऽथ कुण्डल्यां तां निवेशयेत्॥

कुम्भः

मुरजं त्वङ्गुलैरेकविंशत्या प्रमितायतिसु।
कुर्यादासनकाष्ठस्य पृथुमन्तर्मनोहरम्॥

पिण्डमर्धाङ्गुलं प्रोक्तमङ्गुलानि चतुर्दश।
निर्द्वन्द्वस्य च वामास्ये दक्षिणास्ये त्रयोदश॥

प्रत्येकमास्ययोश्चर्म कार्यमेकाङ्गुलादिकम्।
चत्वारिंशच्च रन्ध्राणामङ्गुलव्यवधानतः॥

कुर्याद्गोमूत्रिकाबन्धे रन्ध्रनिक्षिप्तकर्करैः।
मुरजे मध्यमेतस्य त्रिभिर्वध्रैस्तु बन्धयेत्॥

कुण्डलीद्वितयं प्रान्ते कृत्वा कच्छां निबन्धयेत्।
लेपयेद्वदनद्वन्द्वं भक्तिमिश्रेण भस्मना॥

टकारश्च धिकारश्च धोङ्कारश्चेन्थकारकः।
नकारश्च सदोङ्कारः पाटवर्णा मृदङ्गजाः॥

सोमराजदेवः

### मुरजवादकः

वादको मुखरी गीतानुगः प्रतिमुखर्यपि ।
इत्थं चतुर्विधत्वेन प्रोक्तः मौरजिको बुधैः ॥

अथैषां क्रमतो वक्ष्ये लक्षणानि समानतः ।
वादो जल्पो वितण्डेति वादभेदो द्विधा मतः ॥

वीतरागः कथावादः स च पक्षपरिग्रहः ।
स्वपक्षसाधनं तद्वत्परपक्षस्य दूषणम् ॥

विजगीषुकथा जल्पः प्रतिपक्षेऽप्यसाधिते ।
जल्प एव वितण्डः स्यादिति तल्लक्षणत्वतः ।
वादं रागप्रधानत्वादत्र सम्यक् प्रपञ्च्यते ॥

कुम्भः

### मुरजस्य पाटाक्षराणि

कच्छां शुभानुगां न्यस्येत् द्विगुणत्वमुपागताम् ।
अथ वामेऽन्यवदने पिण्डिकान्तरिताकृतिम् ॥

भक्तस्य भूतिमिश्रस्य मर्दनाच्चिक्कणीकृताम् ।
विवेश्य वोहणाख्येनास्यं च दक्षिणं लिपेत् ।
एवं च प्रभवेन्नादो मेयध्वनिमनोहरः ॥

कुम्भः

### मुरजादिजातिवाद्यानि

आदौ मध्येऽवसाने च प्राचुर्यं यत्र दंकृतेः ।
आद्ये खण्डे द्वितीये च तादृगेव यदा भवेत् ॥

तत्र वोल्लावणी प्रोक्ता वाद्यविद्याविशारदैः ।
वाद्यान्तरेऽपि वाद्यं स्यादस्याः खण्डद्वयं यदि ॥

तत्तद्वाद्यप्रधानार्थौ पार्थक्येन प्रयोजितौ ।
देंकृतिं देंकृतिस्थाने हुडुक्कायां च मर्दले ॥

टेंकृतिः करटायां स्यात्प्रधानाक्षरयोजना ।
एवमेव बुधैर्ज्ञेयाः पाटवाद्यान्तरेष्वपि ॥

चल्लावणी तु सा यत्र मण्डली वाद्यते यदा ।
उडुवस्तु सकोणेन ललितेन प्रवादनात् ॥

तालहस्तेन वामेन पाणिना दक्षिणेन तु ।
स्वस्तिकेन तु हस्तेन खकारबहुताश्रितम् ॥

उद्दलीपिहितं वक्त्रं वाद्यते सा कुचुम्बिनी ।
जोल्लावण्येव विज्ञेया चारुश्रवणिका बुधैः ॥

क्रमाद्वा युगपत्पाटैः पाणिभ्यां सूरिभिः कृतैः ।
सा द्विधा च क्रमाद्ज्ञेया पाटोपाधिवशाद्यदा ॥

शुद्धैः पाटैः कृता शुद्धा चित्रैश्चित्रा मता सताम् ।
अस्पृष्टकुण्डलीं कोणघातेनालप्तको भवेत् ॥

परिश्रवणिका सोक्ता वाद्यते यत्र तु क्रमात् ।
कर्तरी समपाणिश्च वाद्यवादनकोविदैः ॥

समप्रहारो वाद्यं स्यात्कराभ्यां युगपद्धतेः ।
कुडुपादुद्भवं यत्र पाटा ये वाद्यसंश्रयाः ॥

तद्वाद्ये वाद्यमाचख्युराद्यं कुडुपचारणम् ।
केवलैर्हस्तपाटैर्या वाद्या सा करचारणा ॥

हस्ताभ्यां क्रमतो द्वाभ्यां मृदुना दक्षिणेन च ।
वाद्यते तादृशैः पाटैः दण्डहस्तः स उच्यते ॥

पाटैर्निरन्तरैर्द्वाभ्यां पाणिभ्यां पाणिनाथ वा ।
कुर्याद्घनरवं वाद्यं निरन्तरघनस्वनम् ॥

कुम्भः

### मुरजाडम्बरम्

गत्वा विदिशि तत्रैव भवेदादत्तमण्डलः ।
सव्यापसव्यतो यत्र पार्श्वयोर्वर्तनान्वितः ॥

दक्षिणस्तु ततो वामः स्कन्धदेशमुपाश्रितः ।
क्षिप्रं विदिशि यात्वाथ लुठितस्सव्यपार्श्वके ॥
ततोऽन्यस्मिन् करे तिर्यक् नाभिदेशसमर्पणे ।
लुठत्येतत्समादिष्टं मुरजाडम्बरं बुधैः ॥

### मुष्टिः—हस्तः

अङ्गुल्यः स्थलमध्यस्थाः सर्वाङ्गुष्ठनिपीडिताः ।
तथैवाङ्गुष्ठगर्भा वा भवेयुः मुष्टिके करे ॥

एष प्रहारव्यायामे निर्दयस्तनपीडने ।
संवाहनेऽसियष्टीनां दण्डकुन्तग्रहे तथा ॥
अवधात् प्राङ्मुखाङ्गुष्ठाश्चापेऽङ्गुष्ठनिपीडितः ।
दोडने मल्लयुद्धादौ मध्यगाङ्गुष्ठको भवेत् ।
रसवद्द्रव्यजातस्य रसनिष्पीडने तथा ॥

सङ्गीतनारायणे

### मुष्टिकस्वस्तिकौ

लताख्यावलितौ ज्ञेयौ स्वरिवक्रीकृतकूर्परौ ।
अथ मूर्ध्नि विवृत्तौ तौ मुष्टिकस्वस्तिकौ मतौ ॥

कुम्भः

### मुष्टिकस्वस्तिकयोर्लक्षणम्

एकं वर्तनयारालं तथान्यमलपल्लवम् ।
हस्तं मुहुः क्रमात्कृत्वा क्रियते स्वस्तिकाकृतिः ॥

कटकामुखहस्तौ चेन्मुष्टिकरवस्तिको तदा।
कपित्थौ शिखरौ मुष्टावथवा स्वस्तिकाकृती ॥

हम्मीरः

## मुष्टिवर्तना

व्यावृत्तक्रियया मुष्टिः कृत्वा चोद्भ्रामयेन्मुहुः।
सव्यापसव्यतो मुष्टिवर्तना सद्भिरीरिता ॥

अशोकः

## मुहरीलक्षणम्

मुहरी काहलाकारा दारवी शृङ्गजाथवा।
चतुरङ्गुलसंयुक्ता हस्तायामा विधीयते ॥
गुञ्जाकृतिमुखछिद्रं तस्याधो रन्ध्रसप्तकम्।
चतुर्भिरङ्गुलैः कार्यं वंशरन्ध्रप्रमाणतः ॥

सोमराजदेवः

## मूर्छना

मूर्छा मोहसमुछ्राययोः —
मूर्छते येन रागो हि मूर्छनेत्यभिसंज्ञिता।
आरोहणावरोहणक्रमेण स्वरसप्तकम्।
मूर्छनाशब्दवाच्यं हि विज्ञेयं तद्विचक्षणैः ॥

मतङ्गः

शुद्धनट्टादयस्तस्माज्जायन्तेऽन्ये मनोहराः।
शुद्धनट्टः स विज्ञेयो ग्रहांशन्यासषड्जकः।
ग्रामकैर्गीयते सायं यस्याद्या मूर्छना भृता ॥

कुम्भः

मूर्छामोहसमूहे स्यान्निष्पत्तिर्मूर्छनापदे।
येनैव मूर्छते रागो मूर्छनेत्यभिशङ्किता ॥
मध्यसप्तकसंस्थेन षड्जेनारभ्यतेऽग्रिमा।
अधोगतैर्निषादाद्यैर्मूर्छना षट्परा मताः ॥

कुम्भः

स्वरः संमूर्छते यत्र रागतां प्रतिपद्यते।
मूर्छनामिति तामाहुः कवयो ग्रामसंभवाः ॥
ललिता मध्यमा चित्रा रोहिणी च मतङ्गजा।
सौवीरी षड्जमध्या च षड्जमध्यमपञ्चमाः ॥
मत्सरी मृदुर्मध्याच शुद्धान्ता च कलावती।
तीव्रा रौद्रा तथांध्री श्री वैष्णवी खेचरी सुरी ॥
नादावती विशाला च त्रिषु ग्रामेषु विश्रुताः।
एकविंशतिरित्यत्र मूर्छनाश्चन्द्रमौलिना ॥

शुभङ्करः

—(मध्यमग्रामे)

सौवीरी हरिणाश्वाथ स्यात्कलोपनता तथा।
शुद्धमध्या तथा चैव मार्गी स्यात्पौरवी तथा ॥
हृष्यका चेति विज्ञेया सप्तमी द्विजसत्तमाः।
मध्यमग्रामजा ह्येता विज्ञेयाः सप्तमूर्छनाः ॥

नाट्यशास्त्रे

—(षड्जग्रामे)

आदावुत्तरमन्द्रा स्याद्रजनी चोत्तरायता।
चतुर्थी शुद्धषड्जा च पञ्चमी मत्सरीकृता ॥
अश्वक्रान्ता तथा षष्ठी सप्तमी चाभिरुद्गता।
षड्जग्रामाश्रिता ह्येता विज्ञेयाः सप्तमूर्छनाः ॥

नाट्यशास्त्रे

## मूर्छनातानयोर्भेदः

ननु मूर्छनातानयोः को भेदः। उच्यते। मूर्छनातानयोरन्त्वान्तरत्वमिति विशाखिलः। एतच्चासङ्गतम्। भरतस्य संग्रहश्लोके तु मूर्छनातानयोर्भेदस्य प्रतिपादितत्वात्। तत्कथं। मूर्छनारोहक्रमेण तानोऽवरोहक्रमेण भवति भेदः।

मतङ्गः

## मूला—(नक्षत्रहस्तः)

पूर्वोक्तार्धपताके तु तर्जनीमध्यमापि च।
फणीवद्वक्रताकारे मूलार्धे संप्रयुज्यते ॥

शृङ्गारशेखरः

## मृगकलासकः

पादाङ्गुलीभिराक्रम्य भूमिमुत्थाय जानुनी।
मुहुरापातयेद्यत्र मृगशीर्षकराञ्चिता।
गर्भखिन्ना मृगीवेयं लास्याङ्गैर्नृत्यतः परा ॥
हरिणप्लुतयाचार्यो गुरुमानेन चेन्नता।
त्रिविधं प्लुतिमाधत्ते तदा मृगकलासकः ॥

कुम्भः

पादाङ्गुलीभिराक्रम्य भुवमुत्थाय जानुनी।
मुहुर्मुहुरसन्निपात्य गर्भखिन्नमृगीव चेत्।
सालस्यगमनोपेतां मृगशीर्षकरान्विता ॥

अशोकः

—द्वितीया

नर्तकीगुरुमानेन हरिणप्लुतया प्लुतम्।
विदध्याद्द्विविधां यत्र कलासोऽसौ मृगादिकः ॥

अशोकः

**मृगी—गतिः**

मृगीव चकिताङ्गैर्या स्वनुरागमनोरमा ।
प्रोक्ता मृगगतिः सैव नित्यसौन्दर्यवर्धिनी ॥

संगीतमुक्तावली देवेन्द्रकृता

**मृतिः—व्यभिचारिभावः**

शरीरात्प्राणसन्त्यागो मृतिर्भवेत् ।

शुभङ्करः

**मृदङ्गः**

बीजवृक्षशरीरोऽयं कर्करैस्सुदृढीकृतैः ।
चर्मवद्वर्ध्रलोपेतैा ब्रह्मणा निर्मितः पुरा ॥
एकविंशाङ्गुलायामो मध्ये किञ्चित्पृथुर्भवेत् ।
मन्वङ्गुलमुखं वामं दक्षिणास्यं त्रयोदश ॥
एकाङ्गुलाधिके वक्त्री चर्मणी वर्तुले घने ।
मध्ये तयोश्च रन्ध्राणि चत्वारिंशत्पृथक् पृथक् ॥
प्रान्ते रन्ध्राणि कुर्वीत तेषामङ्गुलमन्तरम् ।
तेषु रन्ध्रेषु वध्रे च सावरी तु ततो न्यसेत् ॥
तस्मिन् वध्रे तु प्रोतव्या विवरात्ककरात्मिका ।
अधश्चोर्ध्वं च कर्तव्या दृष्टोदरनिदर्शनी ॥
मध्यं विवेष्टयेत्प्राज्ञस्त्रिभिर्वध्रैर्दृढं ततः ।
तत्र गोमूत्रिकाबन्धं द्विरन्ध्रे संमुखं न्यसेत् ॥
प्रान्ते कुण्डलते कार्ये कच्छाबन्धनहेतवे ।
तत्र कच्छां विनिक्षिप्य सव्यतो द्विगुणं न्यसेत् ॥
प्रोतां द्विगुणितां कक्षां वध्रमध्यां द्विरंचलाम् ।
कुर्वीत यस्य तन्नाम मृदङ्ग इति कीर्तितम् ॥

**मृदङ्गायतिः**

मध्ये सूक्ष्मलया प्रान्ते स्थूलो ज्ञेया पिपीलिका ।
पिपीलिकाविपर्या स्यान्मृदङ्गायतिरुच्यते ॥

कुम्भः

**मृदङ्गलक्षणम्**

तत्रादावुच्यते लक्ष्म मृदङ्गस्य क्रमागतम् ।
रक्तचन्दनतो बीजवृक्षाद्वाखादिरादपि ॥
वर्णाक्तकांस्यतो वापि मृदङ्गः क्रियते बुधैः ।
एकविंशत्यङ्गुलः स्याद्दैर्घ्ये मध्ये पृथुर्महान् ॥
हरीतक्याकृतिः पिंडे स्यादर्धाङ्गुलसंमितः ।
अङ्गुलैर्मनुमिर्वामे वदने दक्षिणे पुनः ॥
वह्नीन्दुनिर्मितस्त्रिंशदङ्गुलो दैर्घ्यतस्तु यः ।
अङ्गुलो नमितः पिण्डे वामास्ये द्वादशांगुलः ।
दक्षिणस्योरुपिण्डेऽस्य सार्धैरेकादशाङ्गुलैः ॥

कुम्भः

पुरा मुरासुरं हत्वा भगवान् भक्तवत्सलः ।
तत्कलेबरमादाय मर्दलं कृतवान् प्रभुः ॥
रक्तचन्दनपिण्डेन खादिरस्य च वा पुनः ।
निर्दोषेणान्यजेनापि कारयेन्मर्दलं सुधीः ॥
अष्टचत्वारिंशदाहुरङ्गुलानि प्रमाणकम् ।
चतुर्दश तु वामास्ये दक्षिणे तु त्रयोदश ॥
मध्येऽर्धाङ्गुल्युन्नमितं कुर्याद्वृत्तं तु मर्दलम् ।
तन्मध्ये कोटरं वृत्तं रन्ध्राकारेण कारयेत् ॥
चर्मत्रययुतं चक्रे द्वे कृत्वा तु ततः परम् ।
एकस्य मध्यमे भागे च्छेदयोद्द्वादशाङ्गुलम् ॥
तच्चक्रं योजयेदन्यचर्मणा चक्ररूपिणा ।
चक्रान्तयोः प्रकुर्वीत द्वात्रिंशन्नेत्रबृन्दकम् ॥
तद्वामास्ये क्षिपेच्चक्रमन्यस्याचांतिमाजने
द्वादशाङ्गुलमात्रं तु वर्धयेद्वर्तुलाकृतिम् ॥
मेलयित्वा तु मध्येन चक्राकारेण चर्मणि ।
तद्दक्षिणास्ये निक्षिप्य चक्रबन्धं प्रकल्पयेत् ॥
त्र्यङ्गुलद्वयसेनाथ चतुर्धान्येन चर्मणि ।
चक्रद्वये दृढं गृह्णन्नेतेषु च यथाक्रमम् ॥
एकाङ्गुलप्रमाणेन तथान्येनाजिनेन च ।
चक्रे गोमूत्रिकाबन्धाकारेणावेष्टयेद्दृढम् ॥
तत्सन्नादविधानं यत्तु संस्कारं प्रकल्पयेत् ।
एतल्लक्षणसंयुक्तं नन्दिकेश्वरदैवतम् ।
गीते नृत्ते मर्दलं तु वादयेत्तालकोविदः ॥

भरतकल्पलता

**मृदङ्गस्वरूपम्**

निर्दोषबीजवृक्षोत्थो मृदङ्गः परिकीर्तितः ।
रक्तचन्दनजो यद्वा खादिरो वाथ चान्दनः ॥
पिण्डमर्धाङ्गुलं तस्य पृथुमध्यं मनोहरम् ।
अङ्गुलैरेकविंशत्या दैर्घ्यमानमुदाहृतम् ॥
चतुर्दशाङ्गुलानि स्युर्वामास्ये तु त्रयोदश ।
दक्षिणास्ये द्वयोश्चर्म देयमेकाङ्गुलाधिकम् ॥

चत्वारिंशत्तु रन्ध्राणि त्वङ्गुलव्यवधानतः।
कार्यो गोमात्रिकाबन्धो रन्ध्रेषु प्रोतवध्रकैः ॥
भृशं दृढाय मध्यं तु त्रिभिर्वध्रैस्तु बन्धयेत्।
कुण्डलीद्वितयं प्रान्ते कृत्वा कच्छांनि बन्धयेत् ॥
मुखं विलेपयेद्वामं नक्तमिश्रेण भस्मना।
दक्षिणं मोहणाख्येन कट्यां न्यसेत्सुवाससा ॥
सम्यङ्निष्पादितो धीरैर्गभीरं तनुते ध्वनिम्।
त्रिंशदङ्गुलिर्दीर्घो वा पिण्डस्त्वङ्गुलसम्मितः ॥
कार्यं वामाननं तस्य द्वादशाङ्गुलमानतः।
दक्षिणं तु मितं सार्धैरेकादशभिरङ्गुलैः ॥
श्रीकण्ठेन समुद्दिष्टा देवता जगदीश्वरः।
पाटाश्च तद्धि थोटत्ते हैन्दमित्यत्रकेवलाः ॥
अत्यन्तत्वरितस्फुर...युगो वाद्ये प्रवीणोऽखिल-
वर्णव्यक्तिपरायणो यतिलयाभिज्ञः सुरेखः सुधीः।
पाटोद्धट्टनतत्परः श्रमजयो मोक्षोऽपि दक्षो ग्रहे
श्रोतुर्मानसरञ्जको भुवि मतो मार्दङ्गिको नान्यथा ॥

कुम्भः

**मेघरागः**

मेघः पूर्णो मलयः स्यादुत्तरायतमूर्छनः।
विकृतो धैवतो गेयः शृंगाररसपूरकः ॥
नीलोत्पलाभा वपुरिन्दुचेलः
पीताम्बरस्तृषितचारुतयाच्यमानः ? ।
पीयूषमन्दहसितो घनमध्यवर्ती
वारेषु राजति युवा किल मेघरागः ॥
ध नि स रि ग प म ध

संगीतदर्पणः

**मेलापकः**

उद्ग्राहध्रुवयोर्योगादिति मेलापकः स्मृतः।
तस्मादन्वर्थनामत्वं ध्रुवस्य कथितं बुधैः ॥

सङ्गीतसूर्योदयः

मेलापकः पुरा प्रोक्तो मेलनादुभयोस्तयोः।

सोमराजदेवः

**मेलापनी**

तिर्यक्पताके चोत्ताने त्वन्येनाच्छादिते सति।
यथा भ्रमर्यां भ्रमरी प्रोक्ता मेलापनी बुधैः ॥

कुम्भः

**मेषः**—(राशिहस्तः)

करो ह्यजामुखाभिख्यो मेषराशौ प्रयुज्यते।
काङ्गुलश्चापि विज्ञेयो मेषराशौ गुरोर्मते ॥

शृङ्गारशेखरः

**मैनवी**—गतिः

कोपान्तर्गतमीनस्य विश्रान्तिरणिता गतिः।
यथा तथैव नटति सा गतिर्मैनवी मता ॥

सङ्गीतमुक्तावली

**मोटितः**

एकः पादः समस्त्वन्यः कुञ्चितोर्ध्वतलाङ्गुलिः।
अग्रतावूर्ध्वगौ हस्तौ कर्कटौ मोटिताभिधम्।
कामावस्थासु सर्वासु विनियोगोऽस्य कीर्तितः ॥

कुम्भः

**मोट्टायितः**—(सात्विकभावः)

शरीरविकृतिर्लज्जादिकमङ्गादिमोटिकम्।
मुरारेश्चरितं श्रुत्वा गोप्या मोट्टायितो यतः ॥

यद्वा—

दृष्ट्वा श्रुत्वाथवा कृष्णं गात्रभङ्गीविजृम्भणम्।
कर्णकण्डूयनं गोपस्त्रीणां मोट्टायितो मतः ॥

शुभङ्करः

वल्लभस्तुतिसल्लापलीलाहेलादिभिर्यदा।
तद्भावभावनं यत्तु तन्मोट्टायितमुच्यते ॥

वेमभूपालः

**मोहः**—(व्यभिचारिभावः)

दुःखावेशचिन्तनप्रभवचित्तविक्षेपो मोहः।

शुभङ्करः

**मौलिरेचितकम्**

कटिदेशगतस्यैकोऽपरस्तु पुरतो गतः।
अथैतौ केशपर्यन्तं लीलया लुठितौ यदि।
वथात्र सद्भिराख्यातं मौलिरेचितकं तथा ॥

**मौलिः**

मौलिस्तु त्रिविधो ज्ञेयः किरीटी पार्श्वकस्तथा।
मस्तकी चेति तेषां तु विनियोगो निगद्यते ॥
उत्तमानां तु देवानां किरीटी मौलिरिष्यते।
मध्यमानां मनुष्याणां मौलिः पार्श्वगतो मतः ॥

इतरेषां तु देवानां मस्तकी मौलिरिष्यते ।
उत्तमानां महीपानां कार्यो मौलिः किरीटवान् ॥

इतरेषां यथादेशस्वभावं परिकल्प्यते ।
मस्तके युवराजस्य तथा सेनापतेरपि ।
कर्तव्यमर्धमकुटं नाट्ये नाट्यविचक्षणैः ॥

## य

**यकलः—गायकः**

एको गानं करोत्येव यकलः कथ्यते बुधैः ।

भरतकल्पलता

**यड्डपुः**

त्रिस्थाने स्वरदीर्घं च व्याप्तं यड्डपुरुच्यते ।

भरतकल्पलता

**यतिः**

कूटवर्णैरेकरूपै रचितोऽतिमनोहरः ।
विरावैरभिघातैश्च बहुभिश्छन्दसोज्ज्वलः ।
यावद्यतो वाद्यखण्डे यतिरित्यभिधीयते ॥

कुम्भः

**यतिलक्षणम्**

तालच्छन्दोऽभिरामो यो विरामः श्रुतिसौख्यदः ।
वाद्यते पाटरहितः सा यतिः परिकीर्तिता ॥

सोमराजदेवः

**यतिप्रकरणे अङ्गलक्षणम्**

पाटं विनैव या शुद्धा यतिरूपं तदुच्यते ।

सोमराजदेवः

**यन्त्रकाकुः**

वंशवीणादियन्त्रोत्था छाया या यत्र दृश्यते ।
रागे सा विबुधैर्ज्ञेया यन्त्रकाकुरिति स्फुटम् ।

कुम्भः

**यन्त्रच्छाया**

वीणावंशादियन्त्रोत्था यन्त्रच्छाया स्मृता बुधैः ।

दृश्यन्ते यत्र मन्त्रोत्थरागेष्वेव विचक्षणैः ।
बाहुल्यात्ते तु विज्ञेया छाया यन्त्रसमुद्भवा ॥

कुम्भः

**यन्त्रजश्रुतिविभागः**

नादान्ता निःकला गूढाः सकला मधुरा तथा ।
ललितैकाक्षरा भृङ्गजातिश्च रसगीतिका ॥

रञ्जिका चापरा पूर्णा तथालङ्कारिणी मता ।
वैणिका ललिता चैव त्रिस्थाना सुखरा तथा ॥

सौम्या भाषाङ्गिका चाथ वार्तिका व्यापका तथा ।
प्रशंसा सुभगा चेति यन्त्रजाः श्रुतयः स्मृताः ॥

हम्मीरः

**यमः—हस्तः**

तर्जनीमध्यमे सम्यक्कुञ्चिते तलमाश्रिते ।
शेषाः प्रसारितास्सोऽयं नाम्नायं यमहस्तकः ।
प्राणायामे महायोगे यजमानस्य भावने ॥

भरतकल्पलता

**यमलः—गायकः**

गानं द्वितीयसहितः करोति यमलो मतः ।

भरतकल्पलता

**यमलहस्तः—पाटः**

दक्षिणः पीडयित्वाद्यं वादयेदितरः पुनः ।
अवष्टभ्य पुटं हन्यात् तदा यमलहस्तकः ॥

यथा—

कुं द २ वों हें तों हें डा . कुम्भः

**यमलहस्तकः—हौडुक्किकपाटः**

हस्ताभ्यां यत्र रेफाभ्यां ऊर्ध्वघातद्वयं पृथक् ।
विधीयते यतोः वाद्ये युगहस्तः प्रजायते ॥
दां दां

कुम्भः

**योगप्रदः**

संश्लिष्टाग्रौ पताकौ चेद्धस्तौ योगप्रदस्तदा ।
मेलने प्रतियोगे च परस्परमयं मतः ॥

कुम्भः

**योगिनामचञ्चलता**

देहात्ममानिनां तेन नीचानां झटिति स्फुरन् ।
उत्तमानान्तु देहादिव्यतिरिक्तात्ममानिनाम् ॥
एकैकशीलिनां नीचान्तबर्हिर्दृश्यते क्वचित् ।
योगिनां सर्वथा नेति तैर्यथैकोपदिश्यते ॥

कुम्भः

## योग्यभ्यासशिक्षा

न चातिव्यग्रमनसा तारकाया विलोलितम्।
शक्यक्रियं न वा योग्यभ्यासशिक्षात्र कारणम्॥
स्तम्भादावपि सा तुल्ययोगक्षेमोऽत्र दृश्यते।
एकाग्रबुध्यवसाय शून्ये नाट्ये नटेन च।
किञ्चिदप्यधुना कर्तुमशक्यं विद्यते क्वचित्॥

कुम्भः

## यौवतम्—लास्यम्

मधुराबद्धलीलाभिर्नर्तकीभिर्यत्र नृत्यते।
वशीकरणविद्याभं तल्लास्यं यौवतं स्मृतम॥

सङ्गीतनारायणः

## यौवनम्

पीवरोरुजघनं कठिनोच्चैः पीनमूलघनसंभ्रमस्तनम्।
मन्मथस्य मृतजीवनौषधं यौवनं निगदितं द्वितीयकम्॥

कुम्भः

—प्रथमम्

यौवनत्रितयं पात्रे प्रथमादिविभेदतः।
नीचाधारस्तनाभोगकपोलजघनोरुजम्।
सुरतं प्रति सोत्साहं प्रथमं यौवनं मतम्॥

—द्वितीयम्

पीनोरुजघनं पीनकठिनोच्चघनस्तनम्।
जीवितं यौवनस्योक्तं द्वितीयं यौवनं बुधैः॥

—तृतीयम

उन्मादकं प्रियाजुष्टं सम्पन्नरतिनैपुणम्।
कामशिक्षितभावं तु तृतीयं यौवनं विदुः॥

सङ्गीतनारायणः

र

## रक्तः

रक्तः स्यादठणो रौद्रे करुणेऽद्भुतवीरयोः।

कुम्भः

## रक्तवांशिकलक्षणम्

स्थानकामिनयाभङ्गो गमकाढ्यः स्फुटाक्षरः।
शीघ्रहस्तकलाभिज्ञः वांशिको रक्त उच्यते॥

सङ्गीतनारायणे

## रक्षिजनस्थापनम्

तत्र रक्षिजनास्थाप्या अप्रमत्ताः समन्ततः।
एवं विधानसम्युक्ता नाट्यवेश्मभुवो विदुः॥

कुम्भः

## रङ्गकर्म

रङ्गशब्देन तत्कर्मोच्यते तौर्यत्रिकाश्रितम्।
तत्पूर्वभागं विद्वद्भिः पूर्वरङ्ग उदीरितः॥

कुम्भः

## रङ्गतालः

चतुर्द्रुतास्तु गुर्वन्ता रङ्गताले प्रतिष्ठिताः।

कुम्भः

## रङ्गदेवतामन्त्राः

ओंकारमांत्रयं दत्तं विषादे सर्वसिद्धये।
प्रदेयेति नमोन्तो यं शृङ्गारे मन्त्रनायकः॥
शृङ्गाररसदेवानामयं मन्त्रः प्रकाशकः।
ओं अं अं अं विद्महे सर्वसिद्धिप्रदाय नमः॥
ओं हंकारमात्रयं दत्वा प्रमथाधिपतयेदं।
मां रक्ष युग्ममोन्नमो न ह्यत्यमन्त्रोयमीरितः॥
ओं हं हं हं प्रमथाधिपतये मां रक्षरक्ष ओं नमः।
ओं मिङ्कारत्रयमिन्द्राय वज्रपाताय इत्यपि।
रक्ष रक्षेति हं फट् मन्त्रो वीररसे मतः॥

ओं इं इं इं इन्द्राय वज्रपाणये रक्ष रक्ष हुंफट्। इति वीररसे ओं ब्रह्मणो वास्तुपुरुषाय सर्वलोकपितामहाय नाट्याधिपतये वायमो चमोन्तोद्धृतोनमः?।

ओं ब्रह्मणे वास्तुपुरुषाय सर्वलोकपितामहाय नाट्याधिपतये नमः। ओं हुं कारद्वयं सर्वविघ्नविनाशाय च।

चण्डरूपाय च ततः सकामप्रदाय च।
हुं अघोराय पदं मूर्तये इति पदं ततः।
महाकालाय नमोऽन्तो बीभत्समन्त्र ईरितः॥

ओं हुं हुं सर्वविघ्नविनाशनाय चण्डरूपाय सर्वकामप्रदाय हुं अघोराय मूर्तये महाकालाय नमः इति बीभत्से। ओं नमो भूतपतये प्रेतपरिवृताय च।

भूतहृदयाय पदं कालरूपिण इत्यपि।
ठकारयुगलं चान्ते मन्त्र एष भयानके॥

ओं नमो भूतपतये प्रेतपरिवृताय भूतहृदयाय सकलरूपिणे ठठ इति भयानके। ॐ नमो भगवते रुद्राय ततः। क्रोधेश्वराय च नमो ज्योतिःपतंगाय सिद्धिरुद्रायाज्ञापयति सिद्धिं देहि स्वाहा इति रौद्रे। ॐ यमाय दण्डहस्ताय सर्वसमाय हुं त्रयं। यं त्रयं करुणे मन्त्रो नमोऽन्तोयं प्रकीर्तितः। ॐ यमाय दण्डहस्ताय सर्वसमाय हुं हुं हुं यं यं यं नमः। ततो विघ्नविनाशार्थं जर्जरं पूजयेत्पुनः।

सङ्गीतसर्वस्वम्

## रङ्गप्रतिष्ठा

श्रीरङ्गमण्डपे चास्मिन् सरसं सर्वरञ्जकम्।
यथोत्तररसोपेतं प्रेक्षणीयं प्रकुर्वते ॥

कारयान्युपशृण्वन्ति ते धन्याः पृथिवीतले।
असारे खलु संसारे तेषामेव तनूभृताम्।
जीवितं च धनं जन्म सारभूतं प्रकीर्तितम् ॥

हम्मीरः

## रङ्गभूमिः

विलम्बितलयोऽभीष्टमानसासारितस्य तु।
कलाकलापसम्युक्तो पोहनस्यार्थभागितः ॥

समाश्वतस्रश्चतुरा नर्तक्यः पुष्पपाणयः।
अन्तर्धानमथाकृत्यालंकुर्यू रङ्गभूमिकाम् ॥

तत्रावकीर्य पुष्पाणि नमस्कुर्युः क्रमेण ताः।
इन्द्रादिलोकपालेभ्भः परिवृत्य चतुर्दिशम् ॥

वन्दनानि प्रकुर्वन्ति चतस्रः परिवर्तनान्।
उपोहनार्थाभिनयमङ्गहारैः प्रयुज्यताम्।
पिण्डीं बध्नन्ति तत्रस्थाः कनिष्ठासारिताश्रये ॥

कुम्भः

## रङ्गभूमिपूजा

अवधाय ततः कार्यं रङ्गभूमिप्रपूजनम।
पश्चिमाभिमुखी नटरम्याणां भूषणाम्बरैः ॥

नायकाभिमुखीनां तु गायन्तीनां परस्परम्।
ताले कृतावधानानां नटीनामुपवेशनम् ॥

पार्श्वयोरुभयोस्तासां मृदङ्गानां चतुष्टयम्।
दक्षिणे मुरजस्तापं पृष्ठे यवनिकान्तया ॥

तन्मध्ये मण्डलस्थानं नेपथ्यं तत्र नीयते।
तत्रोपविश्य पात्रैस्तु कर्तव्यं मण्डलादिकम् ॥

मुक्षेताम् मुरजस्यात्र तेनागीतस्य नाटके।
ताभ्यां विनोपहासाय नाटकं जायते किल।
वर्णिकावरणार्थाय बुधैर्यमनिका मता ॥

जगद्धरः

## रङ्गभूषणताललक्षणम्

गुरुद्वये लघुद्वन्द्वं लुप्तैको रङ्गभूषणः ऽ ऽ ॥ ऽ

सोमराजदेवः

## रङ्गमण्डपम्

प्रेक्षार्थं स्निग्धरम्यायां भूमौ श्रीरङ्गमण्डपम्।
प्रकृष्टं चतुरस्रं च शस्तं च परिकल्पयेत्।
प्रमाणत्रयमेतस्य श्रेष्ठं मध्यं तथाऽधमम् ॥

हम्मीरः

## रङ्गमण्डलम्

दूतीदर्शितमार्गस्तु प्रविशेद्रङ्गमण्डलम्।
तस्याद्य प्रकृतिं ज्ञात्वा भावं कार्यं च तत्त्वतः ॥

गतिप्रचारं विभजेन्नानावस्थान्तरात्मकम्।
म्लेच्छानां जायते यस्तु पुलिन्दाद्याः द्विजोत्तमाः ॥

तेषां देशानुरूपेण कार्यं गतिविचेष्टितम्।
पक्षीणां श्वापदानां च पशूनां च द्विजोत्तमाः ॥

स्वस्थजातिसमुत्थेन भावेन प्रतियोजयेत्।
सिंहश्वाननराणां च गतिः कार्या प्रयोक्तृभिः ॥

या कृता नरसिंहेन विष्णुना प्रभविष्णुना।
अलातस्थानकं कृत्वा गात्रं तस्यैव चानुगम् ॥

जानूपरिकरं त्वेकमपरं चैव खस्थितम्।
अवलोक्य दिशः सर्वाश्चिबुकं बाहुमस्तके ॥

गन्तव्यं विक्रमैर्विप्राः पञ्चतालान्तरोत्थितैः।
शेषाणामर्थयोगेन गतिं स्थानं प्रयोजयेत् ॥

शेषं स्थानं प्रयोगेषु रङ्गावतरणेषु च।
एवमेते प्रयोक्तव्या नराणां गतयो बुधैः ॥

आतोद्यैर्वाद्यमानेषु यतिप्रहरणादिषु।
रुद्रभक्ताः स्त्रियो यद्वा पुमांसः सौष्ठवान्विताः ॥
रुद्राक्षवलयं भस्मत्रिपुण्ड्रः शिवरूपिणः ॥

कुम्भः

## रङ्गस्थलदैवतानि

शरच्चन्द्रप्रतीकाशाथवा बालार्कसंन्निभा।
नानावर्णाथवा रत्ननिकरैः खचिता नवा ॥

कोणेषु परितश्चापि मुक्ताजालपरिष्कृता ।
चिह्निता दैवतैस्तत्तत्स्थानभागनिवेशितैः ॥
मध्ये महेश्वरः पार्श्वे चतुर्मुखचतुर्भुजौ ।
सूर्याचन्द्रमसौ तेषां सव्यदक्षिणपार्श्वयोः ॥
तारकाः स्युस्तत्परितो देव्यस्तत्कोणगाः स्मृताः ।
वामे सरस्वतीरङ्गौ तारकावीशकोणगा ॥
भैरवी नैऋतेः कामगामिनी दक्षिणे पुनः ।
गोरक्षः सिद्धनाथस्तु पश्चिमे पूर्वदिग्गतः ॥
मीननाथ उत्तरस्यां चतुरङ्गं क्रमादिमाः ।
देवताः पूजयेत्पूर्वं स्थानेषूक्तेषु मन्त्रवत् ॥

कुम्भः

## रङ्गश्रमविधिः

नृत्ये च तालरूपेण सिद्धिर्नान्येन रूपतः ।
चार्वधिष्ठानवन्नृत्तं नृत्तमन्यद्विडम्बनम् ॥
विघ्नेशं भारतीं देवीं ब्रह्मविष्णुमहेश्वरान् ।
रङ्गं तद्देवतास्तालं वाद्यभाण्डानि च क्रमात् ॥
उपाध्यायं नृत्तकन्यां स्तम्भयुग्मं च दण्डिकाम् ।
कस्तूरिकाचन्दनाद्यैः सामादैरनुलेपनैः ॥
शुभ्रैः सुगन्धिभिः पुष्पैर्धूपैरारात्रिकैरपि ।
नैवेद्यैर्वस्त्रैस्ताम्बूलैर्वालिभिस्तथा ? ॥
अर्चयित्वा शुभे लग्ने प्रारभेत श्रमं सुधीः ।
स्तम्भद्वयोपरि न्यस्यत्कन्यां हृदयसंमिताम् ॥
हस्तग्राह्यां तिरश्चीनामवष्टम्भामदण्डिकाम् ।
विदित्वा चोलनं रेखातालसाम्यं लयानपि ॥
अङ्गादीनि पुरोक्तानि लास्याङ्गान्यखिलान्यपि ।
गीतवाद्यानि सुमनः शिक्षेत सुमनाः सती ॥

हम्मीरः

## रङ्गाङ्गानि

अस्तोकलोकव्यापारभारजर्जरितात्मनाम् ।
विश्रामाय कृतं राज्ञां सङ्गीतं ब्रह्मणा पुरा ॥
अङ्गानि तस्य सप्त स्युः सभासभ्याः सभापतिः ।
उपाध्यायो गायकाश्च वादकाद्याश्च नर्तकी ॥

हम्मीरः

## रञ्जकः

मनो हरति गीतेन विदित्वा श्रोतुराशयम् ।
रङ्गं गीते विधत्ते यो रञ्जकः सोऽभिधीयते ॥

कुम्भः

## रतितालक्षणम्

रतितालो लघुर्गुरुः (। S)

सोमराजदेवः

## रतिलेखाया लक्षणम्

रुद्रसङ्ख्या कला आद्ये पादे तद्वद्द्वितीयके ।
मात्रा दश तृतीयेऽहो रतिलेखा रते गणैः ॥

मोक्षदेवः

## रतेः स्थायिता

प्रारम्भात् फलपर्यन्तां व्यापिनी स्मरसंवृता ।
संविदोरैक्यसंपत्त्या क्रोडातः स्थायिनी रतिः ॥

हम्मीरः

## रथचक्रचारीलक्षणम्—(देशी चारी)

चतुरस्रस्थितौ पादौ संहतौ परिसर्पतः ।
पुरतः पृष्ठतो यद्वा रथचक्रा तदोदिता ॥

मोक्षदेवः

## रथचक्रा—गतिः

चतुरश्रस्थितौ पादौ भलग्नौ चेत्प्रसर्पतः ।
परतः पृष्ठतः पार्श्वे रथचक्रा तदोदिता ॥

संगीतमुक्तावली देवेन्द्रकृता

चतुरश्रगमं कृत्वा संलग्नौ चेत्प्रदर्शयेत् ।
पादावग्रेच पृष्ठे वा रथचक्रा तथा स्मृता ॥

कुम्भः

## रथनेमिसमम्

आदिमध्यावसानेषु दधतौ स्वस्तिकाकृती ।
तथा चक्राकृती तिर्यगेकदा क्रमतोऽथवा ।
हस्तौ विलुठितौ यत्र रथनेमिसमं विदुः ॥

## रथोद्धतं नर्कुटम्

चत्वारस्त्रैष्टुभाः प्रोक्तं नर्कुटं तद्रथोद्धतम् ।
मुनिना भरतेनाहं तदुदाहरणं ब्रुवे ॥
शारदामितखचन्द्रशेखरं भालवह्निकवलीकृतस्मरम् ।
वामभागकृतकामिनीवरं भावयन्तु यमिनं महेश्वरम् ॥

विप्रदासः

## रसदृष्टिलक्षणम्

जातहर्षप्रसादाभ्यां दृष्टिः कान्तासमं तथा ।
सभ्रूक्षेपकटाक्षा च रसे शृङ्गारसंज्ञिके ॥

क्रमेणाकुञ्चितपुटा किञ्चिद्विभ्रान्ततारका ।
कुहकाभिनया दृष्टिर्हास्य हास्यरसे मता ॥

प्रभ्रष्टोष्ठपुटा सा भ्रूशोषमन्थरतारका ।
नासाग्रनिहिता दृष्टिः करुणा करुणे रसे ॥

विमृद्धपुटतारा तु क्रूरा रूक्षा तथारुणा ।
भ्रूभङ्गकुटिलो धृत्वा क्षौद्री रौद्ररसे भवेत् ॥

क्षुब्धा विकसिता दीप्ता गम्भीरा समतारका ।
उत्फुल्लमध्या दृष्टिः स्याद्वीरा वीररसाश्रये ॥

उद्धृतादिस्फुरत्तारास्तब्धोद्वृत्तपुटद्वया ।
दृष्टिर्भयान्तका प्रोक्ता भयानकरसे मता ॥

संश्लिष्टस्थिरपक्ष्मा तु घृणोपप्लुततारका ।
निकुञ्चितपुटोपान्ता बीभत्सा दृष्टिरिष्यते ॥

सौम्या विकसिता तारा साश्रयोद्वृत्ततारका ।
समाकुञ्चितपक्ष्माग्रा दृष्टिः स्याद‍द्भुताद्भुते ॥

सोमराजदेव.

## रसविकल्पनम्

अष्टावेव रसा इति केचित्, केचिन्नवेति, दशेत्यपरे । तेन संशयलोलानां प्रीतये किञ्चिदुच्यते । तथाहि–विभावादिभिः स्वादतां नीयमानो भावः स्थायी रस इति प्रत्यज्ञायि । स च स्वादानन्दलक्षणो, वस्तुत एकोऽपि, उपाधिभेदादनेकधा भिद्यते । उपाधिरपि चिद्भूमिकैव । ताश्च प्राधान्याच्चतस्रः, विकासो, विस्तरः, क्षोभो, विक्षेप इति । तत्र विकासोपाधिकः स्वादः शृङ्गारः । विस्तारोपाधिको वीरः । क्षोभोपाधिको बीभत्सः । विक्षेपोपाधिको रौद्रः । हास्याद्भुतभयानककरुणेष्वपि विकासादिरेवोपाधिरिति हास्यादीनां चतुर्णां शृङ्गारादिजन्यत्वम् । यदुक्तं—

स्वादुकाव्यार्थसंभेदादात्मानन्दसमुद्भवः ।
विकासविस्तरक्षोभविक्षेपैस्स चतुर्विधः ॥

शृङ्गारवीरबीभत्सरौद्रेषु मनसः क्रमात् ।
हास्याद्भुतभयोत्कर्षकरुणानां त एव हि ।

अतस्तज्जन्यता तेषां मत एवावधारणम् ॥

अत्र विकासादिचित्संभेदाभेदेन हेतुहेतुमद्भाव एव रसानां विवक्षितः, न तु कार्यकारणभावः, तेषां प्रत्येकं विभावादिकारणभेदस्य दृष्टत्वात् ।

शृङ्गारानुकृतिर्या तु स हास्य इति संज्ञितः ।
वीरस्य चापि यत्कर्म सोद्भुतः परिकीर्तितः । इति भरतः ॥

तेषां सात्त्विकादिसंभेदैक्यमेव स्फुटं विभाव्यते । शृङ्गारहास्ययोर्विकासः, वीराद्भुतयोर्विस्तरः, बीभत्सभयानकयोः क्षोभः, रौद्रकरुणयोर्विक्षेप इति । तेषां द्वयोर्द्वयोः संभेदैक्येऽपि नास्त्येव साङ्कर्यम्, प्रतिरसं नियतभावादेरेव विकासादिरूपविशेषस्यापि सिद्धेः । शृङ्गारविभावादेरन्य एव हास्यविभावादिः । अतस्तज्जन्येऽपि विकासरूपेऽपि उपाधौ कोऽपि विशेषः काव्ये कल्प्यः, येन भेदः सिद्ध्येत् ।

तयोर्हेतुहेतुमद्भावोऽपि सिद्धः । तत्र हेतुत्वं तत्प्रयोजकमेव । एतदुक्तं भवति । धाराधिरूढ इव शृङ्गारे, प्रत्यासीदति च हास्ये, तदुन्मेषहेतोर्विकासात्मिकायाश्चित्तभूमेस्समुद्भावनप्रवीणकारण - कलापव्यापारस्य स्वकार्यनिर्वहणसिद्धेः पूर्वोत्तरायास्तथाविधाया भूमिकायाः शृङ्गारानुगुणाया हास्यंप्रत्यनुकूलत्वाच्च, समानाकारयोः परस्परोपात्तकार्यकारणप्ररूढप्रागल्भ्ययोः, अन्योन्यसङ्कलनसात्म्यप्रत्यस्तमितभेदवादयोः, तुल्याधिकारयोः, समरसीभूतयोः, चित्तभूमिकयोरैकात्मतायाः प्रतीतेः शृङ्गारबीजस्य हास्यं प्रति निमित्तत्वप्रतीतिसिद्धौ सिद्धैवेयं वाचोयुक्तिः "शृङ्गाराद्धि भवेद्धास्य" इति । इयमेव प्रक्रिया वीराद्भुतादिद्वयेष्वपि द्रष्टव्या । एतच्च विकासादिसंभेदचतुष्टयस्यैव रसभेदोपाधिकत्वेन सङ्ग्रहात् ।

रसविवेकः

## रसस्वरूपविचारः

ननु कोऽयं रसो नाम पदार्थस्तद्विचार्यते ।
रस्यते वा सहृदयैः स्वयं वा रस्यते रसः ॥

सामाजिकान् रसयति ते वायं रसयन्ति च ।
रसनं वा नटेनात्र चित्तवृत्तिर्नटस्य यः ॥

रसतीति रसो वा स्यात् रसयत्यथवा रसः ।
रामः स्याद्वा न वेत्यादिप्रतीतिं नटसंश्रिताम् ॥

अथवा रस्यते सभ्यै रामोऽयमिति तत्त्वतः ।
इत्यादिपक्षस्तद्विद्भिरादृता रसरूपणे ॥

कुम्भः

## रसस्वरूपे लोल्लटमतम्

विभावैर्जनितो भावोऽनुभावैरनुबोधितः ।
व्यभिचारिभिरास्फीतो रस इत्यभिधीयते ॥

स चानुकार्ये रामादौ वर्तते मुख्यवृत्तितः ।
तद्रूपतानुसन्धानान्नर्तकेऽपीति लोल्लटः ॥

व्यावर्त्य सम्यग्मिथ्याभ्यां कोटिद्वयविलम्बतः ।
ज्ञानात्तत्सदृशाकारप्रतीतेश्च निरासतः ॥
तत्तद्विलक्षणास्थानाच्चित्ररूपकवन्नटः ।
सेर्यामत्येष संविदित्तमाह्यः सामाजिकैरिह ॥

कुम्भः

## रसहेतुविचारः

नन्वत्र भारते सूत्रे विभावाद्या रसस्य हि ।
हेतुत्वेन समादिष्टाः कविवासनया पुनः ॥
रसेभ्यो भावनिष्पत्तिर्वैपरीत्यमिदं भवेत् ।
नैवमत्र स एव स्यात् कश्चिदर्थः प्रवर्तते ॥
न रसेन विनात्वैवं संमतिस्तस्य दृश्यते ।
परस्परकृता सिद्धिस्तयोरभिनयो भवेत् ॥

कुम्भः

## रसाः

शृङ्गारहास्यौ करुणो रौद्रो वीरो भयानकः ।
बीभत्सश्चाद्भुतः शान्तो नवधेति रसो मतः ॥
शान्तस्य शमसाध्यत्वात् नटे च तदसम्भवात् ।
अष्टावेव रसा नाट्येष्विति केचिदचूचुदन् ॥

हम्मीरः

## रसानां जन्यजनकभावः

साम्या ह्यधिरसो हावा विभावा व्यभिचारिणाम् ।
बीभत्से सति भीरूणामुत्पद्येत भयानकः ।
अन्योन्यजन्यजनकाः भवन्त्येवमिमे रसाः ॥

हम्मीरः

## रसानां निश्चयकारणम्

फलं बन्धुवधो रौद्रे विभावो वारयोश्च सः ।
जगदुस्तद्विदो रौद्रमतः कारणकारणम् ॥

हम्मीरः

## रसानां सङ्करे स्थाय्यैकत्वम्

एक एव रसः स्थायी रसानां यत्र सङ्करः ।
अन्ये चास्योपकाराय जायन्ते व्यभिचारिणः ॥

जगद्धरः

## रसाश्रयः

तत्प्रधानप्रबन्धानामनुपादेयता यतः ।
सर्वोऽपि प्रेक्षकादेव रसः पर्यवसीयते ॥

कुम्भः

## रसेषु वृत्तयः

कैशिकीवृत्तिराख्याता रसे शृङ्गारनामनि ।
मुख्ये वीरे सात्त्वती स्यात्तथा रौद्रेऽद्भुते क्वचित् ॥
नियतारभटीवृत्ती रसे रौद्रसमाह्वये ।
भयानके च बीभत्से वीरे चापि भवेत्क्वचित् ॥
भयानकेऽद्भुते हास्ये करुणे चापि भारती ।
सूच्यमाने रसाभासे बीभत्सेऽपि क्वचिद्भवेत् ॥

वेमभूपालः

## रसोत्पत्तिदेशाः

शम्भोः पश्चिमवदनाद्धास्यशृङ्गारसंभवः ।
उत्तराद्वदनादेव वीरसंज्ञो रसोऽभवत् ॥
भयानकश्च बीभत्सो दक्षिणाद्वदनादभूत् ।
पूर्ववक्त्राच्च सञ्जातौ रौद्राद्भुतरसावुभौ ॥
पश्चमाद्वदनाज्जातः करुणः शान्त इत्यपि ।
विभावभावहीनोऽयं नवमो रस इष्यते ॥

संगीतसर्वस्वम्

## रागः

स्वरवर्णविशेषेण ध्वनिभेदेन वा पुनः ।
रज्यते येन यः कश्चित् स रागः सम्मतः सताम् ॥

अथवा —

योऽसौ ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स च राग उदाहृतः ॥
सामान्यं च विशेषश्च लक्षणं द्विविधं मतम् ।
चतुर्विधं तु सामान्यं विशेषश्चांशकादिकम् ॥
इत्येवं रागशब्दस्य व्युत्पत्तिरभिधीयते ।
रञ्जनाज्जायते रागो व्युत्पत्तिः समुदाहृता ॥
अश्वकर्णादिवद्रूढो यौगिको वापि वाचकः ।
योगरूढोऽथवा रागो ज्ञेयः पङ्कजशब्दवत् ॥

मतङ्गः

## रागकदम्बकः

नन्द्यावर्तः स्वस्तिकश्च द्विधा रागकदम्बकः ।

हम्मीरः

## रागकाकुः

सा रागकाकुर्विशे...

### रागच्छाया

या रागस्य निजच्छाया रागच्छायां तु तां विदुः ।

कुम्भः

### रागाप्राधान्यम्

दृष्ट्या हि सूचितो भावः पश्चादङ्गैर्विभाव्यते ।
न ह्यङ्गाभिनयात् कश्चिद्दते रागः प्रवर्तते ।
सर्वस्य सहजो रागः सर्वो ह्यभिनयोऽर्थजः ॥

कुम्भः

### रागमेला

रन्ध्रेषु मध्यतारेषु स्थानेषु निखिलैः स्वरैः ।
युक्ता यदि तदा सर्वरागमेला प्रकीर्तिता ॥

कुम्भः

### रागरङ्गः

उपक्रम्य यथारागो मेलनं सममिश्रकम् ।
पुनस्तन्मार्गगमकं रागरङ्गः प्रकीर्तितः ॥

सङ्गीतमकरन्दे

### रागरागिण्यः

श्रीरागोऽथ वसन्तश्च भैरवः पञ्चमस्तथा ।
मेघरागो बृहन्नाटः षडेते पुरुषाः स्मृताः ॥
मालवी त्रिवणी गौरी केदारी मधुमाधवी ।
ततः पाहाडिका ज्ञेयाः श्रीरागस्य वराङ्गनाः ॥
देशी देवगिरी चैव वैराटी तोडिका तथा ।
ललिता चाथ हिन्दोली वसन्तस्य वराङ्गनाः ॥
भैरवी गुर्जरी चैव रेवा गुण्डकरी तथा ।
बङ्गाली बहुली चैव भैरवस्य वराङ्गनाः ॥
विभामश्चाथ भूपाली कर्णाटी वदुहंसिकौ ।
मालवश्रीः पठमञ्जर्या सहैताः पञ्चमांगनाः ॥
मालारी सोरगी चैव सावेरी कौशिकी तथा ॥
गान्धारी हारशृङ्गारा मेघरागस्य योषितः ।
कावेरी चैव कल्याणी आभीरी नाटिका तथा ।
मारङ्गी नट्टहम्मीरी नट्टनारायणाङ्गनाः ॥

संगीतदर्पणः

### रागलक्षणम्

यैस्तु चेतांसि रज्यन्ते जगत्त्रितयवर्तिनी ।
तै रागा इति कथ्यन्ते मुनिभिर्भरतादिभि ॥

शुभङ्करः

योऽयं ध्वनिविशेषस्तु स्वरवर्णविभूषितः ।
रञ्जको जनचित्तानां स रागः कथितो बुधैः ॥

सङ्गीतदर्पणः

### रागलिप्ता

रागलिप्ता ततो नादैः स्वररागसमाश्रिता ।

भरतकल्पलता

### रागवेलाः

मधुमाधवी च देशाख्या भूपाली भैरवी तथा ।
वेलावली च मल्लारी बङ्गाली सामगुर्जरी ॥
धन्यश्री मालवश्री च मेघरागश्च पञ्चमः ।
देशकारो भैरवश्च ललितश्च वसन्तकः ॥
एते रागाः प्रगीयन्ते प्रातरारभ्य नित्यशः ।
गुर्जरीकैशिकश्चैव सावेरी पटमञ्जरी ॥
रेवागुणकरश्चैव भैरवा रामकर्यपि ।
सोरठी च तथा गेया प्रथमप्रहरणोत्तरम् ॥
वैराटी तोडिका चैव कावोदी च कुडाद्रका ।
गान्धारी नागशब्दी च तथा देशी विशेषतः ॥
शङ्कराभरणो गेयो द्वितीयप्रहरात्परम् ।
श्रीरागो मालवाख्यश्च गौडी त्रिवणसंज्ञकः ॥
नटः कल्याणसंज्ञश्च सालङ्गनटकं तथा ।
सर्वे नाटाश्च केदारी कर्णाटाभीरिका तथा ॥
चण्डहंसपहाडी च तृतीयप्रहरात्परम् ।
अर्धरात्रावधिगेया रागा एते सुखप्रदाः ॥
यथोक्तकाला एवैते गेयाः पूर्वविधानतः ।
राजाज्ञया सदा गेया न तु कालं विचारयेत् ॥

सङ्गीतदर्पणः

### रागस्वरूपः

वैलक्षण्यमुभयस्य न साक्षादीक्ष्यतेऽपि च ।
न चानुभावं जनयेत्तं तमत्र रसः स तु ॥
प्रभाव्यमानं सहसा तस्य चान्यगतस्य च ।
अन्वयव्यतिरेकाभ्यां सम्यग्भावनमिष्यते ॥
परानन्दस्य जनको नित्यस्यानतिशायिनः ।
प्रवृत्तिरपि तत्रैवं घटते हि मनीषिणः ॥

कुम्भः

### रागहस्ताः

नाभेरुद्वेष्टितो ज्ञेयो सर्वरागविवेचने ।
हस्तानामत्र कलनामिन्नत्वं प्रतिपाद्यते ॥

भूपाले स्वलपद्मः स्यान्नाभेरुद्वेष्टितश्चली ।
भैरवे त्रिपताकः स्यात्तथैव गुणमाश्रितः ॥

श्रीरागे कर्तरीहस्तो तथा चेष्टागुणान्वितः ।
उद्वृत्ताभिधहस्तौ तु तथाऽसौ रागपञ्जरे ॥

वसन्ते विप्रकीर्णाख्यास्तद्वधूसमुपाश्रिताः ।
मालवेऽपि तथा भूतौ शिखरासिधहस्तकः ॥

बङ्गाली च तथा ज्ञेया हस्तोऽयं च पताकिकः ।
नाटाभिधानरागे तु सूचिरेवं प्रयुज्यते ॥

करोऽयं श्लिष्टमुकुलं वेलावल्यां प्रयुज्यते ।
योज्ये मलहरीरागे तालो लाङ्गूलहस्तकः ॥

चोल्यां भ्रमरहस्तोऽपि मूर्धन्यंवक्रियामते ।
मेघरागे ताम्रचूडः कुरञ्ज्यां चतुराभिधः ॥

हिन्दोल्यामर्धचतुरं माधुर्यां मकरः करः ।

(माधुरीः माळववसन्तः)

चोलाख्यां शुकतुण्डाख्यः सन्दंशः शिवभूषणे ॥

देश्यामर्धपताकोऽपि ललितायां लताकरः ।
बाणो रामक्रियायां च वराल्यां श्लिष्टकर्तरी ॥

कैशिक्यां पद्मकोशाख्यं चक्रो गुण्डक्रियाविधौ ।
गुर्जर्यां युक्तसूची स्यात् गौळायां युक्तचन्द्रकः ॥

मृगशीर्षश्च कर्णाटगौळरागविवेचने ।
नारायणाख्यगौळे च हंसास्योऽपि तथाविधः ॥

देशाक्ष्यामर्धमुकुलश्चाभीर्यामपविद्धकः ।
सारङ्गनाटरागेऽपि करः संयमनामकः ॥

सौराष्ट्रे हंसपक्षोऽपि सावेर्यां ज्ञानहस्तकः ।
संकीर्णाख्यपताकस्तु शुद्धवौली विवेचने ॥

मालवश्रीप्रभेदेऽपि करः कलशनामकः ।
सोड्यां च वरमानौ तु रेखः घण्टारवे तथा ॥

नादनामक्रियायां च सूचिकाहस्तमिष्यते ।
हेज्जुज्यामर्धचन्द्राख्यो मुखार्यां नागबन्धकौ ॥

मेचबौल्यां दण्डपक्षादौ शार्ङ्ग्यं वैष्णवौ करौ ।
करो मङ्गलकौशिक्यां करटी स्वस्तिकाह्वयः ॥

अञ्जलिश्च करो ज्ञेयो वसन्ते शुद्धपूर्वके ।
पाडिस्थाने सिंहमुखो मधुमाधविकाक्रमे ।
केदारगौलरागेऽपि विज्ञेयौ रेचितौ करौ ॥

शृङ्गारशेखरः

## रागाः

चतुर्णामपि वर्णानां योगा रागास्तु शोभनाः ।
स सर्वो दृश्यते येन तेन रागा इति स्मृताः ॥

दशलक्षणलक्षितं गीतं रागशब्दाभिधेयम् ।

मतङ्गः

सामभ्यः स्वरसम्भवः स्वरभवग्रामाभाख्यः संमताः
षड्जो मध्यम इत्युभौ क्षितिगतौ गान्धारमाहुर्दिवि ।
ग्राहैच्छा दशजातयः स्युरखिला रागाश्च जात्युद्भवाः
भाषारागसमुद्भवाश्च कथितास्तैर्विबुधवृन्दारकैः ॥

सोमराजदेवः

औडवः पञ्चभिः प्रोक्तः स्वरैः षड्भिस्स षाडवः ।
सम्पूर्णः सप्तभिश्चैवं त्रिधा रागा बुधैर्मताः ॥
रागास्ते त्रिविधाः प्रोक्ताः शुद्धाश्छायालगास्ततः ।
सङ्कीर्णाश्च पृथक् तेषां लक्षणं प्रतिपाद्यते ।

कुम्भः

## रागाङ्गलक्षणम्

रागच्छायानुकारित्वाद्रागाङ्गमिति कथ्यते ।

सङ्गीतदर्पणः

## रागाङ्गादिनिरूपणम्

नवरोजादिरागानां देशभाषादिकीर्तनात् ।
काकुच्छायादियुक्तानां ज्ञानं स्यादनया दिशा ॥

हम्मीरः

## रागाङ्गानि

तन्त्रीतानक्रियायोगात्क्रियाङ्गं कथ्यते बुधैः ।
अथ प्रसिद्धरागाणामुद्देशं व्याहरामहे ॥
रागाद्यो मध्यमादि स्त्रिपुररिपुसुहृद्भैरवो मालवश्री
श्रीरागो दीपकाद्यस्तदनुनिगदितः शुद्धबङ्गालसंज्ञः ।
धन्नासी स्याद्वराटी प्रथितगुणगणा देशिहिन्दोलतोड्यो
देशाख्या गूर्जरी च श्रवणसुखकरी देशिकोलाहलाख्यौ ॥

मोक्षदेवः

## रागाध्याये सोमरागलक्षणम्

ग्रहांशन्याससन्मन्द्रतारयोर्निगयोर्बहुः ।
श्रीरागाङ्गं सोमरागः पूर्णो वा वीरसंश्रयः ॥

सोमराजदेवः

### रागाणां गेयकालः

प्रातर्गेयास्तु देशाक्षी ललितप्रथमञ्जरी।
विभाषा भैरवी चैव कामोदी गोण्डकिर्यपि॥
एका वराटी मध्याह्ने सायं कर्णाटमालवौ।
नाटश्चैव विशेषेण शेषा गेयास्तु सर्वदा॥

शुभङ्करः

### रागाणां संख्या

रागाः षडेव तु प्रोक्ता रागिण्यस्त्रिंशदेव हि।

शुभङ्करः

### रागान्तरच्छाया

रागे रागान्तरच्छाया सैव स्यादस्य रागता।

कुम्भः

### रागार्णवमतम्

भैरवः पञ्चमो नाटो मल्लारो गौडमालवः।
देशाख्यश्चेति षड्रागाः प्रोच्यन्ते लोकविश्रुताः॥
बङ्गाली च गुणकरी मध्यमादिर्वसन्तकः।
धनाश्री चेति पञ्चैते रागभैरवसंश्रिताः॥
नट्टनारायणः पूर्वगान्धारो मालवस्तथा।
ततः केदारकर्णाटौ पञ्चैते नाटसंश्रिताः॥
मेघमल्लारिका माला कौशिकः पटमञ्जरी।
असावरीति विज्ञेया रागा मल्लारसंश्रिताः॥
भूपाली च कुडारी च कामोदी नाटिका तथा।
वेलावली च विज्ञेया रागा देशाख्यसंश्रिताः॥

सङ्गीतदर्पणः

### रागोत्पत्तिप्रकारः

पञ्चास्यात्पञ्चरागाः स्युः षष्ठस्तु गिरिजामुखात्।
श्रीरागः सद्योवदनाद्वामदेवाद्वसन्तकः॥
अघोराद्भैरवो जातस्तत्पुरुषात्पञ्चमोऽभवत्।
ईशानाख्यान्मेघरागो नाट्यारम्भे शिवादभूत्।
गिरिजाया मुखाल्लास्ये नट्टनारायणोऽभवत्॥

सङ्गीतदर्पणः

### राघवतालः

विरामान्तं लघुः प्रान्ते राघवेऽपि प्रकीर्तितः।

कुम्भः

### राजतालः

राजतालाभिधाने तु लघुद्रुतौ लघुस्ततः।
अनेन तु समायुक्तो मकरन्दाह्वतालकः॥

गान्धर्ववेदे

### राजनारायणः—तालः

द्वद्वयं जगणो गुरुः। राजनारायणे ताले।
० ० । ऽ । ऽ

कुम्भः

### राजविद्याधरः—तालः

लघुवक्रे द्रुतौ। । ऽ ० ०

कुम्भः

### रामक्रीडम्

हास्यप्रायं प्रेरणं तु स्यात्प्रहेलिकयान्वितम्।
ऋतुवर्णनसंयुक्तं रामक्रीडं तु भाष्यते॥

वेमः

### रासः

स्वराद्यं पाटपूर्वं च बन्धाद्यं च पदाभिधम्।
तेनाद्यं विरुदाद्यं च चित्राद्यं मिश्रपूर्वकम्॥
इत्यष्टौ करणानि स्युः क्रमाल्लक्षणमुच्यते॥
उद्ग्राहगमकौ सान्द्रस्वरैर्बद्धौ यदा पुनः।
आभोगाख्यः पदैर्बद्धो गातृस्वाम्याख्यया युतः॥
तालो रासश्च विज्ञेयः कइणं स्वरपूर्वकम्।
अन्यान्यपि तथैव स्युः स्वभेदः किञ्चिदुच्यते॥

कुम्भः

### रासकम्

नर्तनं यन्मया प्रोक्तमासारितामिधां पथि।
चारीभिर्मण्डलैश्चापि लास्याङ्गैरुपबृंहितैः॥
देशीतालैश्च संयोज्य तच्चेदत्र प्रवर्तते।
तदा रासकसंज्ञं स्यादिति नृत्यविदो विदुः॥

कुम्भः

### राहडीलक्षणम्

बहुभिश्चरणैर्यत्र रसे वीरे प्रगीयते।
स्तुतिः सङ्ग्रामविजये वर्णस्य राहडी मता॥

मोक्षदेवः

### रीतीनां लक्षणानि

अस्पृष्टदोषमात्राभिः समग्रगुणगुम्फिता।
विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरुच्यते॥

या समस्तोद्भटपदा ओजःकान्तिगुणान्विता ।
गौडीयामिति गायन्ती रीतिं रीतिविचक्षणाः ॥
आश्लिष्टश्लथभावा तु पुराणच्छाययाश्रिता ।
मधुरा सुकुमारा च पाञ्चाली सा च कथ्यते ॥
लाटीया रीतिरिन्द्राण्याः प्रीत्यै वीररसाश्रिता ।
प्रतितालेन सा गेया रागे माल्लवकैशिके ॥

हम्मीरः

## रुन्धकः

सरतो युगपद्यत्र प्रपदेन तु रुन्धकः ।

कुम्भः

## रूढा

घर्घरा गृह्यते सर्वा रूढा रेखात्र सा मता ।

कुम्भः

## रूपकनृत्तम्

रूपकेन यदोद्ग्राहाभोगयोर्गीयते द्रुतम् ।
ततो नृत्ते ध्रुवे गीते द्रुतादिलयसंयुतम् ।
तदा रूपकनृत्तं स्यात्तालेरूपकसंज्ञकम् ॥

## रूपकः—तालः

द्रुतं त्वेकं लघुश्चैको मात्राषट्कं च यत्र सः ।
रूपकश्चतुरश्रः स्यादित्याहुस्तालवेदिनः ॥

भरतकल्पलता

## रूपकगायकः

आलप्तेरपि यद्गीतं भवेदतिमनोहरम् ।
उक्तो गायकभेदज्ञः सोऽयं रूपकगायकः ॥

कुम्भः

## रूपकलक्षणम्

स्वरैः पदैश्च तालैश्च गणैर्वर्णैरलङ्कृतम् ।
विचित्राभोगमुद्ग्राहं रूपकं कथ्यते बुधैः ॥

मोक्षदेवः

उद्ग्राहश्चान्यधातुः स्यात् ध्रुवकश्चान्यधातुकः ।
मेलापकश्चान्यधातुराभोगश्चान्यधातुकः ।
चतुर्धातुकमेतद्धि रूपकं कीर्त्यते बुधैः ॥

गान्धर्ववेदे

## रूपकालप्तिलक्षणम्

रूपकस्थेन रागेण तालेन च विधीयते ।
प्रोक्ता सा रूपकालाप्तिः सा पुनर्द्विविधा भवेत् ॥

हम्मीरः

## रूपकालप्तिभेदः लक्षणं च

प्रतिग्राहणिकैकान्या भञ्जनीत्यभिधीयते ।
विधाय स्थायमालप्ते रूपकावयवो यदि ॥
प्रतिगृह्यते सा प्रोक्ता प्रतिग्राहणिका बुधैः ।
भञ्जनी तु द्विधा प्रोक्ता स्थायरूपकभञ्जनात् ॥

हम्मीरः

## रूपलिप्ता

रूपलिप्ता च नादैश्च रागस्वरसमाश्रिता ।

भरतकल्पलता

## रेखा

या शिरोऽङ्घ्रिकरनेत्रपङ्कजाद्यङ्गमेलनविधौ सति स्फुटम् ।
केचिदत्र दिशि मनोहरा सास्थितिर्निगदितात्र रेखिका ॥

कुम्भः

शिरोनेत्रकरादीनामङ्गानां मेलने सति ।
कायस्थितिर्मनोनेत्रहारिरेखा प्रकीर्तिता ॥
अथवा अङ्गप्रत्यङ्ग सन्निवेशो यथोचितः ।
रेखोक्ता जनताचित्तनयनानन्ददायिनी ॥
कज्जलेन यथाशोभं रेखाः शृङ्गारिणो भवेत् ।
कपोलफालनेत्रान्ते वलनं मसृणं समम् ॥
ललाटे तिलकं कार्यं शुद्धं कज्जलनिर्मितम् ।
रेखां दद्याच्च नेत्रान्ते ललाटे तिलकं लिखेत् ॥
भ्रुवोः कण्ठे च रेखा च समाः शृङ्गारिणो भवेत् ।
गौरिकैवलये...त्वै वरे गौरिकलेखिका ॥
विद्वेषके रावणादौ भृङ्गादौ बहुधोदितम् ।
नालेखि तन्मया पात्रविशेषात्तत्तदुन्नयेत् ॥

सङ्गीतनारायणे

## रेखालक्षणम्

शिरोनेत्रकरादीनां युगपन्मेलके सति ।
कार्या स्थितिर्मनोनेत्रहरा रेखाः प्रकीर्तिताः ॥

हम्मीरः

## रेचकविभागः तल्लक्षणं च

अमीषामङ्गहाराणां सम्यङ्निर्दिश्य लक्षणम्।
चतुरो रेचकान्वक्ष्ये नाट्यनृत्योपयोगिनः ॥
पादरेचक एकःस्यादपरः कररेचकः।
ग्रीवारेचक उक्तोऽन्यश्चतुर्थः कटिरेचकः ॥
पार्ष्ण्यङ्गुलाग्रयोरन्तर्बहिश्च सततं गतिः।
नमनोन्नमनोपेतः प्रोच्यते पादरेचकः ॥
परितो भ्रमणं तूर्णं हस्तयोर्हंसपक्षयोः।
यत्पर्यायेण रचितं स भवेत् कररेचकः ॥
विरलः प्रसृताङ्गुष्ठाङ्गुलेस्तिर्यक् भ्रमेण वा।
ग्रीवाया विधुतभ्रान्तिः कथ्यते कण्ठरेचकः ॥
सर्वतो भ्रमणं कट्याः कटिरेचकमूचिरे।
अङ्गहाराङ्गमध्यातो जनयन्ति पृथक् फलम् ॥

हम्मीरः

## रेचितः—पाटः

अङ्गुष्ठतर्जनीघातः स्कन्धप्रस्फुरणं तथा।
यत्र प्रान्तं गता वाद्ये पाटं पाठान्तरे विदुः ॥

यथा—दें दें थां थां दें दें न न ण झे।

अङ्गुष्ठतर्जनीघातः स्कन्धप्रस्फुरणं तथा।
यत्र प्रान्तं गता वाद्ये पाटं तं रेचितं विदुः ॥

कुम्भः

## रेचितलक्षणम्

प्रसारितोत्तानतलावुच्यते रेचितौ करौ।
अथवा रेचितौ प्रोक्तौ हंसपक्षौ द्रुतभ्रमौ ॥
यद्वा रेचितयोर्लक्ष्मलक्षणे मिलिते इमे।
प्रयोज्यौ तौ नृसिंहस्य दैत्यवक्षोविदारणे ॥

हम्मीरः

## रेफः

रेफस्यात्स्कन्धसंचेन समस्तोऽङ्गुलिनाततः।

कुम्भः

## —हौडुक्किकपाटः

तदा पाटो रेफसंज्ञः प्रजायते।
स्कन्धसङ्गेन सर्वाभिः प्रहारोऽङ्गुलिभिः सदा ॥

यथा— नहथों जे जे रे डें टें

कुम्भः

## ल

## लक्ष्मीपूजा

क्षीरसागरसम्भूते विष्णुवक्षःस्थलाश्रिते।
वन्दिता पूजितासि त्वं रङ्गभूमौ स्थिरा भव ॥

जगद्धरः

## लक्ष्मीशताललक्षणम्

लक्ष्मीशे तु विरामान्तौ द्रुतौ ह्रस्वद्वयं प्लुतः।
० ० । । S

सोमराजदेवः

## लङ्घितजाङ्घिका

स्याल्लङ्घितजाङ्घिका।
खण्डसूच्यभिधे स्थाने तिष्ठन्नङ्घ्रिस्तु वेगतः।
आकृष्य लङ्घ्यतेऽन्येन चरणेन तदा तु सा ॥

कुम्भः

## लघुकिन्नरी

तिस्रः किंनरवीणाः स्युर्बृहद्देशीसमाधिताः।
बृहती मध्यमा लघ्वी त्वथासां लक्षणं ब्रुवे ॥
अत्राङ्गुलं निस्तुषैः स्यात्पङ्क्तिस्तिर्यग्यवोदरैः।
पञ्चाशदङ्गुलो दैर्घ्ये परिणाहे षडङ्गुलः ॥
वैणवः खादिरो वाथ रक्तचन्दनजोऽथवा।
कांस्यजो वा भवेद्दण्डो ऋजुः श्लक्ष्णो व्रणोज्झितः ॥
दण्डमानं दधद्गर्भे सुषिरं पृथुलं समम्।
शाकजः ककुभस्तस्य दण्डो दैर्घ्ये षडङ्गुलः ॥
ककुभस्य शिरस्तत्र दीर्घं स्याच्चतुरङ्गुलम्।
चतुरङ्गुल विस्तारमुच्छ्राये द्व्यङ्गुलं मतम् ॥
ककुभस्य तु दण्डन्तु वीणादण्डान्तरे क्रियेत्।
परिशेषश्च दण्डांशस्तावान् यावति शेषितः ॥
ककुभस्य शिरोमध्यवीणादण्डान्तमध्यतः
तन्त्रीभागस्तुरीयांशोधिकत्र्यङ्गुलको भवेत्।
इति लघ्वी समादिष्टा किन्नर्यथ परोच्यते ॥
एतस्या अधिका दैर्घ्ये द्वादशाङ्गुलमानतः।
परिणाहेऽङ्गुलेनापि तन्त्री स्नायुमयी भवेत् ॥
आलापिन्या यथा पूर्वमुक्तं तुम्बं तृतीयकम्।
तथास्यामपि कर्तव्य एवमेषा त्रितुम्बिका ॥
लघ्वावदस्यां विज्ञेयं लक्ष्मशेषं विजानता।
विदध्यात्काकुभे मूर्ध्नि श्लक्ष्णां कूर्मवदुन्नताम् ॥

परितोऽर्धाङ्गुलन्यूनां पत्रिकामायसीं समाम्।
नादातिशयसिद्ध्यर्थं वीणावादनकोविदः ॥
सार्धाङ्गुलद्वयं त्यक्त्वा वीणादण्डस्य मूर्धतः।
अर्धाङ्गुलपरीणाहं वि ध्यात्सुपिरं ततः॥
अधस्तात्तिर्यगपरं रन्ध्रं सोभयतो मुखम्।
अधस्तादूर्ध्वरन्ध्रस्य सार्धद्व्यङ्गुलके भवेत् ॥
मेरुः सकलरन्ध्रेण कर्तव्या वान्वितो भवेत्।
मेरुरन्ध्रस्य वीणाया दण्डस्य च तथान्तरम् ॥
द्व्यङ्गुलं सयवं ज्ञेयं मेरुरङ्गुलमुच्छ्रितः।
सार्धाङ्गुलान्तरे शङ्कुः स्थिरो मेरोः पुरो भवेत् ॥
अत्र तिर्यग्भवेद्रन्ध्रं चलशंकुवदायतम्।
सिन्दूरेणाथवा वस्त्रकज्जलेनाथवा युतम् ॥
श्लक्ष्णेष्टिकायाश्चूर्णेन मर्दयन्मदनं घनम्।
विमिश्रान्तेन कर्तव्याः सारिकास्युश्चतुर्दश ॥
अष्टादशाथवा दण्डपृष्ठेन्यस्या यथायथम्।
ताश्चतस्रो निवेश्यास्तु तारसप्तकसिद्धये ॥
मन्द्रसप्तकसिद्ध्यर्थं सारीद्वन्द्वं परे जगुः।
एवं त्रिस्थानसंशुद्धरागव्याप्तिर्भवेदिह ॥
आमन्द्रसप्तकान्मध्यसप्तकावधियुक्तितः।
सार्धाङ्गुलपरीणाहास्तथा सार्धाङ्गुलायताः॥
गृध्रवक्षोऽस्थिनलिका यद्वा तच्चरणास्थिजा।
आयस्यकांस्यमय्यो वा नलिका· सारिका मताः ॥
मेलोर्ध्वतन्त्रिकापार्श्वतन्त्र्यौद्वे षड्जगे यदि।
ह्रस्वा पञ्चमगा चेत् स्यात् षड्जग्रामो भवेदियम् ॥
ऊर्ध्वतन्त्री यदि भवेन्मध्यमस्वरयोगिनी।
तत्पार्श्वे तान्त्रिकाद्वन्द्वं षड्जमध्यमगं यदि।
मध्यमग्रामगा ज्ञेया तदेयं किंनरी बुधैः ॥

कुम्भः

## लघुनृत्तम्

उपैति करणैरल्पैः रञ्जिताद्यैः लघु स्मृतम्।

सङ्गीतनारायणे

## लघुशेखरः

नानाविधौ स्वस्तिकौ हि करावत्र प्रकीर्तितौ।
विरामान्तेन लघुना तालः स्याल्लघुशेखरः ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

—तालः

लघुर्गुरुश्च भवति लघुशेखरतालके।
शंकोजमरतालश्च गीयते सत्तुकोविदैः ? ॥

गान्धर्ववेदे

## लज्जा—व्यभिचारिभावः

धाष्टर्यनाशो लज्जा।

शुभङ्करः

## लताक्षेपः

पश्चान्न्यस्य पुरस्ताच्च चरणश्चेत्प्रसार्यते।
भूमिं निकुट्टयेत्तेन लताक्षेपस्तदा भवेत् ॥

कुम्भः

## लताकरलक्षणम्

पताकौ दोलितौ तिर्यक् प्रसृतौ तौ लताकरौ।
अनयोः करयोः केशबन्धयोश्च नितम्बयोः।
त्रिपताकाकृतिं केचिदाचार्याः प्रतिजानते ॥

हम्मीरः

## लतावृश्चिकम्

वृश्चिकं चरणौ यत्र वामहस्तो लताभिधः।
तल्लतावृश्चिकं प्रोक्तं गगनोत्पतनेषु च ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## लतावेष्टितम्

अन्तर्बहिः करावूर्ध्वं वलित्वोद्वेष्टितौ यदि।
पार्श्वयोः क्रमतस्तत्र तिर्यग्लुठति चैकके।
लुठितोऽन्यः करो यत्र तल्लतावेष्टितं तदा ॥

## लयः

अङ्गभूता हि तालस्य यतिपाणिलयः स्मृता।
बन्धोऽक्षरविदानां हि समत्वं यत्प्रकीर्तितम्।
कला कलान्तरकृतः स लयोनाम संज्ञितः ॥

नाट्यशास्त्रे

## लयलयविचित्रितम्

यवन्या भाषया युक्तं यत्र गीतं धृतांचलम्।
कौलादिगजरोपेतलास्यांगेन विराजितम्।
विदध्यान्नर्तनं नाम लयलयविचित्रितम् ॥

## ललाटतिलकम्

अङ्गुष्ठे वृश्चिकाङ्घ्रेश्चेल्ललाटतिलकं लभेत्।
तदा ललाटतिलकं विद्याधरगतौ मतम् ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## ललितः—तालः

ताले ललितसंज्ञे स्यात् द्रुतद्वन्द्वं लघुर्गुरुः ।
००।ऽ

कुम्भः

## ललितम्—पौरुषः

ललितं स्यान्निर्विकारं शृङ्गाररसचेष्टितम ।

वेमभूपालः

अनुल्बणश्च मधुरो दृष्टिभ्रूविभ्रमान्वितः ।
सुकुमारोऽङ्गविन्यासस्त्रीणां ललितमुच्यते ॥

वेमभूपालः

पल्लवौ शीर्षदेशस्थौ ललितौ कलितौ बुधैः ।
चतरश्रीः भजन्तौ तौ शिरःस्थावचलौ करौ ॥
ललितौ च परे प्राहुरन्ये च खटकामुखौ ।
शनैः प्राप्य शिरोऽन्योन्यलग्नाग्रौ ललितौ विदुः ॥

हम्मीरः

## ललितगाढः

स एव मृदामितः ।
प्रोक्तो ललितगाढस्तु

कुम्भः

## ललिता भाषा

तथैव ललिता भाषा मद्दांशन्यासधैवता ।
रिगमैर्भूरिसिस्तारमन्द्रैर्युक्तार्धमन्द्रभाक् ।
रितारा भिन्नषड्जोत्था रिलोपात् षाडवा मता ॥
मतङ्गस्य मते पूर्णा ।

कुम्भः

## ललिता—रागः

टक्कभाषैवललिता मद्दापन्यासषड्जभाक् ।
पञ्चमर्षभहीना च तारगान्धारधैवता ॥
षड्जानु मन्द्रा बहुला मध्यस्वरविराजिता ।
ललिता ललितैः स्यानैर्ललितैरुत्कटस्वरैः ॥
षाडवा याष्टिकमते ऋषभैकविलोपतः ।
सङ्ग्रामे विनियोक्तव्या वीरोत्साहविवर्धनी ॥

कुम्भः

ठक्कभाषैव ललिता ललितैरुत्कटैः स्वरैः ।
षड्जांशग्रहणन्यासा षड्जमन्द्रा रिपोज्झिता ॥

हम्मीरः

## लहरीचक्रसुन्दरम्

एकस्मिन्नाभिदेशस्थे तिर्यग्लुठति हस्तके ।
ततोवासं सपर्यन्तं परं प्राप्य पराङ्मुखम् ॥
कर्मणां दोलने नाडी प्रसार्य............ (?)।
क्षिप्रमन्तरमाक्षिप्य शिरसः पार्श्वयोर्द्वयोः ॥
विलोड्य पार्श्वयोस्तोकं यद्विलासेन जायते ।
तदवादि तदासद्भिर्लहरीचक्रसुन्दरम ॥
नाभिक्षेत्रसमीपस्थो तिर्यग् लुठति चैकके
अपरं तु पराचीनमान्दोलितसमर्पणाम् ॥
नीत्वा वामांसपर्यन्तं बहिरेव प्रसार्य च।
करमन्तः प्रसार्यैकमर्धसव्यापसव्ययोः ॥
विलोड्य पार्श्वयोर्मन्दं विलासेन तु यद्भवेत् ।
प्रकीर्तितं तु तद्धीरैः लहरीचक्रसुन्दरम् ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## लहरीभेदाः

लहरी त्रिविधा ज्ञेया मङ्गलारम्भसंज्ञका ।
आनन्दवर्धिनी कीर्तिस्तासां ब्रूमोऽथ लक्षणम् ॥

मोक्षदेवः

## लावकी—गतिः

कुञ्चिताभ्यां पदाभ्यां चेद्द्रुतमानेन वेगतः ।
पार्ष्णिश्च संस्पृशेद्भूमिं गच्छेत्सा लावकी गतिः ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## लावणी

समपादजनितं पात्रं कटौ न्यस्यार्धचन्द्रकम् ।
पञ्चमेन कटेरूर्ध्वं भ्रामयेल्लावणी तदा ॥

## लासः

लासः स्त्रीपुंसयोर्भावः तत्रार्हीये तु तद्धिते ।
सा धात्वर्थे लासपशब्द. कामोल्लासनहेतुकः ॥

कुम्भः

## लासस्वरूपम्

भावः स्त्रीपुंसयोर्लासहेतु मृदङ्गहारवत् ।
देव्यैरेवोपदिष्टत्वात्प्रायः स्त्रीभिः प्रयुज्यते ॥

नृत्तरत्नावलिः

## लास्यम्

सुकुमारैः स्त्रीरचितैः प्रयोगैर्लास्यमुच्यते ।

विप्रदासः

लास्यं तु सुकुमाराङ्गं मकरध्वजवर्धनम ।
स्फुरितं यौवतं चेति तदर्गद्विविधं मतम् ॥
स्फुरितलास्यं यौवतलास्यं चेति द्विविधमित्यर्थः ।

सङ्गीतनारायणे

प्रयोगैस्सुकुमारैर्यत्साधितं लास्यमत्र तत् ।
लासः स्त्रीपुंसयोर्भावस्तत्र ह्रीयेत्तु तद्धिते ।
लाधात्वर्थे लास्यशब्दः कामोल्लासनहेतुकः ॥

कुम्भः

नियतो हस्ततो दृष्टिर्यतो दृष्टिस्ततो लयः ।
यतो लयस्ततो भावो यतो भावस्ततो रसः ॥
अङ्गैर्व्यावर्तते गीतं पादाभ्यां तालदर्शनम् ।
दृष्टिभ्यां भावयेद्भावं लास्यं नृत्यं तदुच्यते ॥

हम्मीरः

## लास्यमण्डलिका

लास्ये तु या भुवस्त्यक्तं वस्तु गृह्णातु पण्डितः ।
मुहुर्मुहुर्भ्रमी या सा लास्यमण्डलिका मता ॥

कुम्भः

## लास्याभरणम्

बाह्याश्चास्या भवन्त्वेताः सव्यजा अपसव्यजाः ।
लास्येनैव समुद्भूता धन्यास्ता अन्यतोऽधमाः ॥

एते राजपुरन्ध्रीणामुद्दिष्टं यन्मयाधुना ।
नात्र ग्राम्यकृता भावा योज्यास्ते शिल्पकोविदैः ॥

कुम्भः

## लास्ये गेयपदम्

लसनाल्लास्यमित्युक्तं स्त्रीपुंभावसमाश्रयम ।
एकार्थं पृथगर्थं च तदङ्गैस्तु प्रकीर्तितम् ॥
भाणवच्चैकहार्यं स्याद्रूढवस्तु तथा भवेत् ।
तत्र गेयपदं तावत्प्रथमं परिकीर्तितम् ॥

स्थापिते भाण्डविन्यासे पटे चैवापकर्षिते ।
ब्राह्मणाः स्वेषु पार्श्वेषु चासने संप्रकल्पिते ॥
मार्जितेषु मृदङ्गेषु प्रयुक्ते च विसाम्नि तु ।
मार्गासारितकं कुर्यात्तन्त्रीवेणुविभूषितम् ॥

भाण्डवाद्येन संयुक्तं ततश्चासारितं बुधैः ।
परिवृत्तैस्त्रिभिर्युक्तं ततश्चोपोहनं भवेत् ॥

त्र्यश्रेण द्विकलेन स्यात्ततश्च परिधानकम् ।
प्रयोक्तव्यः प्रयोगज्ञैः परिवर्तनमेव च ॥

परिवर्तनके चैव पुंवाक्यं प्राक् प्रयोजयेत् ।
पुरुषोऽत्र त्रिवाक्यः स्याच्चतुवाक्याङ्गना स्मृता ॥
कार्यं तथा निर्वहणं प्रत्यर्थं परिधानके ।
इत्येतत्प्रथमं त्वङ्गं लास्ये गेयपदं बुधैः ॥

नाट्यशास्त्रे

## लीनः

लीनः स्यान्मूर्च्छिते वायुः ।

कुम्भः

## लीलालक्षणम्

हर्षातिशयसम्भूतैर्हृद्यैर्वागङ्गचेष्टितैः ।
वल्लभानुकृतिर्या तु सा लीलेत्यभिधीयते ॥

वेमभूपालः

## लुलितः

घूर्णनामृदुतायुक्तो लुलितः परिकीर्तितः ।

कुम्भः

## लोकदुष्टस्वरलक्षणम्

यत्र गीतस्वरालोकदुष्टस्तु लयवर्जितः ।

भरतकल्पलता

## लोकधर्मी

लोकधर्मी नाट्यधर्मी चेति धर्मी द्विधा मता ।
स्वभावभावोपगतस्वभावाभिनयाद्युतम् ॥
शुद्धं च विकृतिं चैव लोकवार्ताक्रियान्वितम् ।
अङ्गलीलाविरहितं नानास्त्रीपुरुषाश्रयम् ।
एवं विधं तु यन्नाट्यं लोकधर्मीति सा मता ॥

वेमभूपालः

## लोकनाट्ययोः पन्थाः

लोकवृत्तानुसारेण चोह्यतामनया दिशा ।
नेत्रभ्रूमुखरागाद्यैरुपभोगैश्च संहता ॥

हम्मीरः

## लोकशास्त्रानुसरणिः—शब्दप्रयोगः

अनेकार्था यथा शब्दा व्यापारा आङ्गिकास्तथा ।
द्योतयन्ति बहूनर्थान् प्रयोगाच्चार्थनिर्णयः ॥

प्रयोगस्यापि शरणं लोकाः शास्त्रमपि क्वचित्।
लोकशास्त्रानुसारेण तस्मादेषां विनिर्णयः ॥

विप्रदासः

## लोहडी

कृत्वालगं निपत्योर्व्यामुत्तानोरस्तलं स्थितः।
पृष्ठतः शिरसाश्रोणिं स्पृशंश्चेदन्तरालगम् ॥
यत्र कृत्वा समौ पादौ विवृत्य त्रिकमुत्प्लुतेत्।
तिर्यक् तल्लोहडी संज्ञं लोहडीलुलितं भुवा ॥

कुम्भः

## लोहडीकरणम्

यत्रोर्द्धं समपादस्य कुर्यात् त्रिकविवर्तनम्।
गतलिर्यक् समुत्पाद्य लोहडीकरणं तु तत् ॥

सोमराजदेवः

## लोहडीकरणभेदाः लक्षणानि च

पादानेकेनासेवस्यादिकपादारलोहडी ?।
विहितो स्वस्तिकाङ्घ्रिभ्यां भवेत्कूर्चरिलोहडी ? ॥
स्थानका वैष्णवी स्थित्वा यत्र तिर्यक् त्रिपद्यते ?।
जल्पन्ति दर्पसरणं करणं तन्मनीषिणः ॥
कृत्वा तु दर्पसरणं यदिस्याज्जलशायितत्।
करणं प्रोच्यते तत्तु जलशायी तु नामतः ॥
विधाय दर्पसरणं करणं प्रथमं यदि।
नागबन्धं निबध्नाति नागबन्धामिधा तदा ॥
विधाय समपादं च भुवं संस्पृश्य मौलिना।
भ्राम्यते यत्र करणं कपालचूर्णनं तु तत् ॥
कपालचूर्णनं कृत्वा प्रोत्तानद्वदयाननम्।
स्थीयीत यत्र करणं तत् स्याद्वंकालसंज्ञिकम् ॥
वामपार्श्वे यदोत्प्लुत्य तमस्मात्परिवर्तनम् ?।
विदधाति तदा प्राहुः करणं मत्स्यदामकम् ॥

सोमराजदेवः

## लंघनम्

स्वरात्स्वरान्तरं गच्छन् गाता तन्मध्यवर्तिनम्।
मनाक् स्पृशति तत्प्रोक्तं लङ्घनं पूर्वसूरिभिः।
लङ्घनं वर्जनं प्राहुः केचिद्गीतविशारदाः ॥

कुम्भः

## लंघितजङ्घिका

पुरः प्रसार्य चरणं लङ्घयेदपराङ्घ्रिणा।
सूत्पूर्वं वदान्वर्था प्रोक्ता लङ्घितजङ्घिका ॥

# व

## वक्षःस्वस्तिकलक्षणम्

चतुरश्रौ पुरःक्षेत्रे भवतो यत्र रेचितौ।
व्यावृत्तक्रियया मुग्नौ वर्जितौ स्वस्तिकौ करौ ॥
पादौ च स्वस्तिकौ जङ्घागुल्फस्य वलनान्मिथः।
तद्वक्षःस्वस्तिकं प्रोक्तं लज्जानुशयगोचरम् ॥
उत्प्लुत्य घटयेत्पाणिपादेन स्वस्तिकाविति।
ऊचे कीर्तिधराचार्यः किञ्चिल्लक्ष्यनिरीक्षणात् ॥

नृत्तरत्नावली

## वक्रः

विद्युल्लतेव कुटिलप्रचारो वक्र उच्यते।

कुम्भः

## वक्रकुट्टनिका

कुट्टयित्वा च विन्यस्य भ्रमितो लुठितस्ततः।
कुट्टितः स पुनः स्थाने वक्रकुट्टनिकामिधा ॥

कुम्भः

## वक्री

वक्रीकृतगलो गायन् धीरैर्वक्रीत्युदाहृतः।

भरतकल्पलता

## वज्रलेपः—लेपः

ओदनं छागविट्भस्म भस्म चापि पुरातनम्।
लोहविण्मूषयोश्चूर्णं समभागं सुपेषयेत्।
लेपयेद्दक्षिणे भागे लेपोऽयं वज्र ईरितः ॥

सङ्गीतनारायणे

पुरातनं भस्मेति बहुदिनमेकत्रस्थितं यत्किञ्चिद्भस्म मूषा इति ताम्रपात्रं।

## वनमाली—तालः

प्लुतमेकं द्रुतौ द्वौ च वनमालिनि तालके।
निःशङ्कस्त्वङ्गतालः स्याद्बुधैस्तेनैव गीयते ॥

गान्धर्ववेदे

## वनमालिनी—तालः

चतुर्द्रुती लघू द्वौद्वौ गुरुश्च वनमालिनी।
००००।।००ऽ

कुम्भः

**वरदाभयदौ—हस्तः**

वरदाभयदावर्धचतुरस्त्राविति द्वयम् ।
अन्यच्छिरोमणिः प्राह तत्ते द्वात्रिंशदीरिताः ॥

सङ्गीतनारायणे

**—रासकः**

लघुद्रुतौ गुरुर्यत्र तालोऽयं गजलीलकः ।
वरदो रासकत्वेन श्रोतॄणां च सुखावहः ॥

गान्धर्ववेदे

वामदक्षिणभागस्थौ वरदाभयदौ करौ ।
अरालौ कटिपार्श्वस्थौ कथितौ वरदाभयौ ॥

कुम्भः

वरदाभयदौ हस्तौ वामदक्षिणभागगौ ।
अरालौ वा कटीदेशे कथितौ वरदाभयौ ।
इत्युक्ता विप्रदासेन द्वात्रिंशन्नृत्यहस्तकाः ॥

विप्रदासः

पृथक् दक्षिणवामौ चेद्वरदाभयदौ करौ ।
अरालौ कटिपार्श्वस्थौ तदोक्तौ वरदाभयौ ॥

हम्मीरः

वामः पताकोर्ध्वभागे दक्षिणश्चाप्यधोमुखः ।
भुजे कुक्षौ क्रमात्कृत्वा वरदाभयहस्तकः ॥
स्त्रियाः प्रदर्शने सम्यग्वेङ्कटेशनिरूपणे ।
ताराणां पतने चैव तस्य रूपणमुच्यते ॥

भरतकल्पलता

**वराटीरागः**

षड्जग्रहांशकन्यासा वराटी कथिता बुधैः ।
प्रथमा मूर्छना यस्यां संपूर्णा कीर्तिवाहिनी ॥
विनोदयन्ती दयितं सुकेशी
सुकङ्कणा चामरचालनेन ।
कर्णे दधाना सुरवृक्षपुष्पं
वराङ्गनेयं कथिता वराटी ॥

स रि ग म प ध नि स.

सङ्गीतदर्पणः

**वराहः—हस्तः**

मृगशीर्षेत्वन्यकरस्तेन श्लिष्टस्थितो यदि ।
कनिष्ठाङ्गुष्ठयोर्योगाद्वराहकर ईरितः ॥

भरतकल्पलता

**वर्णाः**

अकवर्गे पदे विप्रश्चटवर्गे च क्षत्रियः ।
तपवर्गपदे वैश्यो यशवर्गे च शूद्रकः ॥

शुभङ्करः

**वर्गेषु ग्रहदेवताः**

अवर्गे स्याद्देवगुरुः कवर्गे भार्गवः स्मृतः ।
चवर्गे चन्द्रमाः ख्यातः टवर्गे कुजशुक्रकौ ॥
तवर्गे च बुधः प्रोक्तः शनिः सङ्गीतकोविदैः ।
यशवर्गे राहुकेतू वर्गेषु ग्रहदेवताः ॥

शुभङ्करः

**वर्णप्रबन्धलक्षणम्**

वर्णे कर्णाटभाषायां विरुदैर्वर्णतालतः ।
वर्णयन्ति त्रिधा वर्णं तालत्रैविध्यतो बुधाः ॥

मोक्षदेवः

**वर्णभेदाः**

वर्णास्तु मातृकोद्भूता मातृका द्विविधा मताः ।
स्वरव्यञ्जनरूपेण ।

मतङ्गः

**वर्णसरकलक्षणम्**

स्वरः पदं च पाटश्च तेन्नकश्च यदृच्छया ।
बध्यते यत्र तालेन स वर्णसरको मतः ॥
स्वरादिभिस्तेन्नकान्तैः क्रमादादौ निवेशितैः ।
चत्वारो वर्णसरकाः कथिता सोमवर्मणा ॥

सोमराजदेवः

**वर्णाः**

पदवाक्यस्वरूपेण वाक्यार्थवहनेन यत् ।
वर्णो यत्र जगत् सर्वं तेन वर्णाः प्रकीर्तिताः ॥

मतङ्गः

**वर्णाढ्या—गीतिः**

गुर्वक्षरैस्तु पृथुला वर्णाढ्या दक्षिणे सदा ।

दत्तिलः

**वर्णानां मध्यविलम्बितत्वम्**

विकृष्टमुक्तमुच्चाराद्द्रुते मध्ये विलम्बितः ।
नीचोच्चयोश्च वर्णानां सुश्राव्यं श्लाघ्यमुच्यते ॥

कुम्भः

## वर्णैलाभेदाः

रागेण येन केनापि या रसेन च गीयते ।
प्रक्रान्तवर्णनियमा वर्णैला साभिधीयते ॥
षड्वर्णादारभ्यानन्दाधिकविंशतिर्भवति पादः ।
यस्यां सा वर्णैला भेदैश्चतुरधिकविंशत्या ॥
तत्रादौ मधुकरिकास्तु स्वराकरणी ? ।
सुरसापि प्रगातव्या प्रभञ्जन्यपि चापरैः ॥
कामवती सोमवती कथ्यतेऽन्या प्रभावती ।
मालिनी ललिताश्चैव प्रोक्ता भोगवती परा ॥
अतः कुसुमवत्याख्या ततः कान्तिमती मता ।
ज्ञेया सोमप्रभानाम कालिका स्यादनन्तरम् ॥
कमला विमला चान्या नलिनी स्यादनन्तरम् ।
कालिन्दी विपुला चैव प्रोक्ता विद्युल्लता तथा ॥
बिलासा सरला नाम विज्ञेया तरलापि च ।
इति क्रमेण निर्दिष्टं वर्णैलानां कदम्बकम् ॥

सोमराजदेवः

## वर्णैलाया भेदाः लक्षणानि च

सा भवेत् त्रिविधा शुद्धा सङ्कीर्णा विकृता परा ।
शुद्धा चतुर्विधा नादावती हंसावती तथा ॥
नन्दावती च भद्रावत्यथासां वेद्मि लक्षणम् ।
गणवर्णादिनियमः पाटखण्डद्वयाश्रितः ॥
नादावती पञ्चभिः स्याद्गगणैर्नगणेन च ।
टक्करागोऽत्र निर्दिष्टस्तालो मण्ठाभिधो बुधैः ॥
ऋग्वेदप्रभवा शुभ्रा प्रीत्यर्थं शशिनः सदा ।
रगणैः पञ्चभिर्हंसावती स्यात्सगणेन च ॥
द्वितीयताले हिन्दोलः यजुर्जा कुङ्कमप्रभा ? ।
क्षत्रियारभटीं वृत्तिं लटीरीतिं च संश्रिताम् ॥
रौद्रे च देवता चण्डी तत्प्रीत्यै गीयते बुधैः ।
नन्दावती स्यात्तगणैः पञ्चभिर्जगणेन च ॥
सा मता प्रतितालेन रागे मालवकैशिके ।
पीता वेश्या च गौडीयारीतिं वृत्तिं च सात्वतीम् ॥
संश्रिता देवतेन्द्राणी वीरे स्यात्प्रीतिहेतवे ।
पञ्चभिर्मगणैर्भद्रावती स्याद्यगणेन च ॥
ककुभेऽथ वर्णो जाता कृष्णा कङ्कालतालकः ।
शूद्रा च भारतीं वृत्तिं वैदर्भीरीतिमाश्रिता ।
वाराही देवता प्रीत्यै बीभत्से गीयते रसे ॥

मोक्षदेवः

## वर्तना

अस्याश्च कथिता सप्त वर्तना नृत्यवेदिभिः ।
वर्तना शिखरस्याद्या द्वितीये तेलकस्य च ॥
वर्तना नागबन्धः स्यात्सा सिंहमुखवर्तना ।
वैष्णवीयेकानलमुखे सप्त स्युः कलशाभिधा ।
नाम मात्रप्रसिद्धास्तैरेवं स्युर्न च लक्षणाः ॥

कुम्भः

## वर्तनाभरणम्

एकः करो यदा कर्णदेशगोऽन्यस्तु वर्तितः ।
उत्सार्योद्वेष्टितेन स्याद्वर्तनाभरणं तथा ॥

## वर्तनास्वस्तिकम्

एकस्य वलने पार्श्वे विद्युदाकृतिधारिणः ।
अन्वक्षरेण हस्तेन यो गच्छेच्च्युतिपूर्वकः ॥
असकृद्यत्र तत्प्रोक्तं वर्तनास्वस्तिकं तदा ।
अथवेदं त्रिखण्डोक्तं वर्तनाभिर्भवेदिति ॥

## वर्तिनीलक्षणम्

यस्यामावृत्तिरुद्ग्राहे ध्रुवाभोगौ सुसंयुतौ ।
ध्रुवके स्यात्ततो मुक्तिर्वर्तिनी साभिधीयते ॥
कङ्कालप्रतितालौ च कुडुक्कद्रुतमण्ठकान् ।
संत्याज्येतरतालैश्च स्वरैश्च परिगीयते ॥
मन्तव्योऽत्र सदा भेदैः वर्तिन्याः करणस्य च ।
सविलम्बस्वरैरेव वर्तिनी कथिता बुधैः ॥
वर्तिन्यां वा विवर्तिन्यामालापस्तालवर्जितः ।
आदावारोप्यते यस्याः स स्यादालापपूर्विका ॥

सोमराजदेवः

## वर्धमानः

द्वारवातायनादीनां कवाटोद्घाटने मतः ।
श्रीमत्कीर्तिधराचार्यो द्वितयं निषधं करम् ।
वर्धमानाभिधं प्राह विनियोगस्तु पूर्ववत् ॥

कुम्भः

बालं नवकलं ज्ञेयं दश सप्तलयान्तरम् ।
मध्यमं तु लयस्त्रिंशत्पञ्चषष्टिस्ततोत्तरम् ॥
कलानां वृद्धिमासाद्य स्वक्षराणां च वर्धनात् ।
लयस्य वर्धनाच्चापि वर्धमानकमुच्यते ॥
वर्णताललयग्रन्थवाद्याभिनयवन्धनात् ।
पात्राणां वृद्धियोगाच्च वर्धमानकमुच्यते ॥

नाट्यशास्त्रे

उत्पत्तिं लक्षणं चास्य गदतो मे निबोधत।
निहत्य दानवं घोरं रुद्रेणामिततेजसा॥

नृत्तमुत्पादितं पूर्वं चित्रं ताण्डवसंश्रितम्।
अथ भूतगणैः सर्वैस्तस्मिन् काले महात्मभिः॥

वर्धमानमिदं दृष्ट्वा पिण्डीबन्धैर्विभूषितम्।
परितुष्टश्च तद्दृष्ट्वा समस्त्रीको वृषध्वजः॥

प्रददौ च परं श्रेष्ठं सहदेव्या गणाधिपैः।
लक्ष्यलक्षणसंपत्त्या मार्गयुक्तिविधिक्रमैः।
वर्धमानप्रयोक्तारो यास्यन्ति शिवगोचरम्॥

नाट्यशास्त्रे

## वर्धमानासारितभेदः

वर्धमाने शरीरस्य भवेदासारितस्य च।
कार्यकारणभावेन परस्परविकल्पनम्॥
यथा वृक्षाद्भवेद्बीजं बीजाद्वृक्षस्य सम्भवः।
अन्योन्यहेतुसंयोगात्प्रत्येतव्यस्तदेह तु॥

नाट्यशास्त्रे

## वलितम्—पाटः

पटहादिषु वाद्येषु समुदग्रेषु कल्प्यते।
अङ्गुष्ठतर्जनी पूतो यत्र तं वलितं विदुः॥

यथा—

खुं खुं दं दं धों दां धों गि धों गि.

कुम्भः

अपक्रामति देहस्य क्षेत्रात्सूचीमुखे करे।
सूचीपादेऽप्यपक्रामेत्तद्दिको भ्रमरी ततः।
पुनरङ्गान्तरेणैव यत्र तद्वलितं मतम्॥

नृत्तरत्नावली

मुष्टिकस्वस्तिकौ मूर्ध्नि विवृतौ वलिताविति।

नागेन्द्रसम्मते

अथ वान्योन्यलग्नाग्रावूर्ध्वयोरनुकूर्परौ।
पृष्ठतः खटकावक्तौ वलितौ गदितौ करौ॥

कुम्भः

## वल्लभः—तालः

वल्लभो मगणद्वन्द्वं मध्यगे लघुनि स्मृतः।
ऽ ऽ ऽ । ऽ ऽ ऽ

कुम्भः

## —मण्ठकः

मलयाख्यो भवेत्तालो गुरुर्लघुस्ततो गुरुः।
वल्लभो मण्ठको ज्ञेयस्तालेऽस्मिन् करुणे रसे॥

मलयतालः ऽ । ऽ

गान्धर्ववेदे

## वल्लिः—हौडुक्किकः

त्रिविधोत्पद्यते वल्लिः सोल्लासा स्वरवाद्यगा।
स्कन्धस्य कुडपस्याथ चालनात् ......... ॥

कुम्भः

## वल्लिपाटः—पाटः

वल्लिपाटस्तथावल्यामर्धं वाद्यद्वयं तथा।
स्वैः स्वैः पाटैः कृतं संयोजनं वाथ वियोजनम्॥

कुम्भः

## वसन्तः

षड्जत्रययुतः पूर्णो वसन्तो वा रिपोज्झितः।

कुम्भः

## —तालः

समौ वसन्ततालः स्यात्।
। । ‿ ऽ ऽ ऽ

कुम्भः

## वसन्तकालाभिनयः

असह्यवायुस्पर्शेन रूपयेदृतुं............।
उपभोगैर्बहुविधैर्विविधैः कुसुमैरपि।
वसन्तस्त्वभिनेतव्यः सौरभैश्च मनोहरैः॥

वेमभूपालः

## वसरम्—नाट्याङ्गम्

झंतद्द्वयाक्षराण्यादौ धणकुड्डणमध्यमे।
इदं तु वसरं नाम प्रोच्यते पूर्वसूरिभिः॥

- भरतकल्पलता

## वस्तूत्थापनम्

कपटादिकृतं कर्म वस्तूत्थापनमुच्यते।

वेमभूपालः

कार्यं विभज्यते यत्र सविद्रुवमविद्रुवम् ।
अनेकरससंयुक्तं तद्वस्तूत्थापनं मतम् ॥

कुम्भः

## वस्त्वैलालक्षणम्

तत्तल्लक्ष्म यदा तासु पादस्तुर्यो निबध्यते ।
तदेता गदिता सर्वाश्छन्दस्त्रयः पुरातनैः ॥
आद्यमङ्घ्रियुगं प्रासवर्जितं गीयते यदा ।
तृतीयाङ्घ्रिः ध्रुवाभागे स्वल्पप्रासा भवन्त्यमी ॥
चद्वाहादित्रये कार्या पृथक् यतिचतुष्टयी ।
वर्णैलावच्च शेषः स्याद्वस्त्वैला सा प्रकीर्तिता ॥

मोक्षदेवः

## बहनी

गमके युवतिर्नाम योक्तव्यं विधरूपिणी ।
वहनी नाम सा ज्ञेया यन्त्रवादनकोविदैः ।
येषु रागेषु तच्छाया वहन्यास्ते प्रकीर्तिताः ॥

कुम्भः

## वंशः

वंशस्य विनियोगः ---

अथ वंशविशेषस्य विनियोगोऽत्र दर्शितः ।
कामिनीनिर्जितानां च प्रवासं समुपेयुषाम् ॥
शोकार्तानां पुरो योज्यो मृदुमध्यलयध्वनिः ।
द्रुतादिललितध्वानो वंशः शृङ्गारिणां पुरः ॥
क्रोधाभिमानयुक्तानां पुरो वंशो निगद्यते ।
कम्पितस्फुरितध्वानस्तथा द्रुतलयाश्रयः ॥

कुम्भः

## वंशलक्षणम्

वञ्जुलः सरलश्चैव पर्वदोषविवर्जितः ।
वैणवः खादिरो वापि रक्तचन्दनतोऽथवा ॥
श्रीखण्डजोऽथ सौवर्णो दन्तिदन्तमयोऽथवा ।
कनिष्ठाङ्गलितुल्येन गर्भरन्ध्रेण शोभितः ॥
शिल्पविद्याप्रवीणेन वंशः कार्यो मनोहरः ।
तत्र त्यक्त्वा शिरो देशादयो निर्मितमञ्जुलम् ॥
फूत्काररन्ध्रं कुर्वीत ... ... मङ्गुलिपर्वणा ।
पञ्चाङ्गुलानि सन्त्यज्य पररन्ध्राणि कारयेत् ॥
कुर्यात्तत्रान्यरन्ध्राणि सप्तसंख्यानि कौशलात् ।
बदरीबीजतुल्यानि सन्त्यज्यार्धार्धमङ्गुलम् ॥

प्रान्तयोर्बन्धनं कार्यं स्वर्णाद्यैः नादहेतवे ।
सिक्थकेन कलां देया ते सुस्वर ... भवेत् ॥

कला – कलभा ।; स्वर्णादिमुखरन्ध्रे स्थिरीकरणं सिक्थकेन सम्पादनीयमिति भावः । अयमुक्तप्रकारो वंशो नाम्ना पञ्चाङ्गुलः । एवं फूत्काररन्ध्रात् यावत्यङ्गुलानि परित्यज्य पररन्ध्राणि कारयेत् तानि तन्नामानि भवन्ति । यथा षडङ्गुलित्यागे षडङ्गुलनामा वंशरीत्यष्टादशपर्यन्तम् । तदुक्तम् ---

पञ्चाङ्गुलोऽयं वंशः स्यादेकैकाङ्गुलवर्धतः ।
षडङ्गुलादि नाम स्याद्यावदष्टाङ्गुलं पुनः ॥
फूत्कारपररन्ध्रस्य यावदङ्गुलमन्तरम् ।
तदेव नाम वंशस्य वांशिकैः परिकीर्तितः ॥

तत्र त्याज्याङ्गुलमाह ---

एकाङ्गुलो द्व्यङ्गुलश्च त्र्यङ्गुलश्चतुरङ्गुलः ।
अतितारतरत्वेन वांशिकैः समुपेक्षते ॥
त्रयोदशाङ्गुलो वंशोऽपरः पञ्चदशाङ्गुलः ।
निन्दितो वंशतत्त्वज्ञैः तथा पञ्चदशाङ्गुलः ॥

फूत्काररन्ध्रदेवताङ्गुलत्यागेन पररन्ध्रं तु कार्यमित्यर्थः ।

तत्राप्यङ्गुलिविशेषत्यागेन श्रैष्ठ्यमाह ---

महानन्दस्तथानन्दो विजयस्तु जयस्तथा ।
चत्वार उत्तमा वंशा देवतामुनिसम्मताः ।

ततः कथमेषां महानन्दादिकं संज्ञेत्याह---

दशाङ्गुलो महानन्दो नन्द एकादशाङ्गुलः ।
द्वादशाङ्गुलमानस्तु विजयः परिकीर्तितः ॥
चतुर्दशाङ्गुलमितो जय इत्यभिधीयते ।

एतेन दशैकादशद्वादशचतुर्दशाङ्गुलाः श्रेष्ठाः । पञ्चादिनवाङ्गुला मध्या एकद्वित्रिचतरश्रयो दशपञ्चदशाङ्गुलानि न दातव्या तद्दोषाच्छादनं तथा---

वांशिकस्य गुणा एते मया संक्षिप्य दर्शिताः ।
गातृणां स्थानदातृत्वं गायकानां विनोदनम् ॥

सङ्गीतनारायणे

अर्धाङ्गुलान्तराणि स्युः रन्ध्राण्यन्यानि सप्त वा ।
तस्याष्टौ बदरीबीजसङ्काशानि भवन्ति हि ।
एष पञ्चाङ्गुलो वंशः कथितो वंशवादकैः ॥

कुम्भः

## वंशवाद्यलक्षणम्

त्वक्सारदन्तबादरशिंशुपारक्तचन्दनैः।
निर्ग्रन्थिर्निर्व्रणः कार्यो वंशः सरलवर्तुलः ॥
कनिष्ठाङ्गुलिमानेन तस्यान्तः सुषिरं भवेत्।
द्वे त्रीणि चत्वारि शिरोदेशं त्यक्त्वाङ्गुलानि तु
फूत्काररन्ध्रं तस्य स्यात्तुल्यमङ्गुष्ठपर्वणा।
कुर्वीत शररन्ध्रं तु विहायाङ्गुलिपर्वकम् ॥
बदरीबीजसंकाशान्यङ्गुलार्धान्तराणि च।
कल्पयेत्तारन्ध्राणि सप्त तस्यैतत्यपि तु ॥
एष पञ्चाङ्गुलो वंशः कथ्यते वंशवादकैः।
पञ्चाङ्गुलादिहारभ्य यावदष्टादशाङ्गुलम् ॥
एकैकाङ्गुलवृत्ताः स्युर्वंशाः पञ्चाङ्गुलादयः।
त्र्यङ्गुलक्रमवृद्धया च वंशानां दैर्घ्यकल्पना ॥

सोमराजदेवः

## वंशस्य विनियोगः

अथ वंशविशेषस्य विनियोगोऽत्र दर्शितः।
कामिनीनिर्जितानां च प्रवासं समुपेयुषाम् ॥
शोकार्तानां पुरो योज्यो मृदुमध्यलयध्वनिः।
द्रुतादिललितध्वानो वंशः शृङ्गारिणां पुरः ॥
क्रोधाभिमानयुक्तानां पुरो वंशो निगद्यते।
कम्पितस्फुरितध्वानस्तथा द्रुतलयाश्रयः ॥

कुम्भः

## वंशस्वरूपे मतङ्गमुनिमतम्

मुखरन्ध्राद्भवेत्तारं स्वररन्ध्रं मनोहरम्।
एकाङ्गुलान्तरं तत्तु मतङ्गमुनिसम्मतम् ॥

कुम्भः

## वंशे वैदिकस्वरनिर्णयः

श्रुतिसंख्या स्वरेषु स्यादेवमङ्गुलिकर्मभिः।
उदात्तश्चानुदात्तश्च स्वरितश्चेति नामतः ॥
अत एव स्वरास्सप्त विज्ञेया गीतवेदिभिः।
अनुदात्ताः स्वरास्तत्र चतुःश्रुतियुतास्त्रयः ॥
त्रैग्रामिकेऽपि ते वेणौ विमुक्ताङ्गुलयो मताः।
उदात्तौ चात्र विज्ञेयौ श्रुतिद्वययुतौ स्वरौ ॥
तौ भवेतामर्धमुक्ताङ्गुली ग्रामत्रयेऽपि च।
स्वरिताख्यौ स्वरौ चात्र त्रिश्रुती परिकीर्तितौ ॥
स्वरसाधारणं षड्जे प्राहुरर्धाङ्गुलीकृतम्।
मध्यमस्य श्रुतिं याति गान्धारो यद्वदन्ति तम् ॥
अन्तरस्वरजात्यैव कम्पमानाङ्गुलिं तदा।
मध्यमग्रामिके वेणौ षड्जमध्यमधैवताः ॥
विमुक्ताङ्गुलयो ज्ञेयाः चतुःश्रुतियुतास्त्रयः।
ऋषभः पञ्चमश्चापि त्रिश्रुती भवतः स्वरौ ॥
कम्पमानाङ्गुली चैतावुभौ ज्ञेयौ मनीषिभिः।
निषादश्चैव गान्धारः विज्ञेयौ द्विश्रुतिस्वरौ।
एतावप्यत्र कथितावर्धमुक्ताङ्गुली तदा ॥

नान्यः

## वाक्यम्

पदैस्तु निर्मितं वाक्यं क्रियाकारकसंयुतम्।

मतङ्गः

स्वरश्च गीतरागौ च नाभेरूर्ध्वं तु वाक्यता।

भरतकल्पलता

## वाक्यलक्षणम्—पाठ्यम्

अनियुक्तात्मकं वाक्यं साकाङ्क्षमिति कथ्यते।
वाक्यं तादृग्विधं स्वल्पवर्णालङ्कारयोजनम् ॥
तारेणारभ्य मन्द्रान्तं प्रयुञ्जीत विचक्षणः।
वाक्यं तत्स्यान्निराकाङ्क्षं युक्तार्थं नितरां तु यत् ॥
तादृग्भूतमिदं भूरि वर्णालङ्कारयोजितम्।
मन्द्रेणारभ्य तारान्तं प्रयुञ्ज्यात् पाठ्यकर्मणि ॥
छन्दोवशादर्थवशात् प्रयोजनवशादपि।
वाक्यार्थस्य समाप्त्या च तथा प्राणवशेन च।
तथा पदावसाने च विरामस्तु विधीयते ॥

वेमभूपालः

## वागुपकारगुणाः

शब्दानुशासनज्ञानमभिधानप्रवीणता।
गणछन्दोऽनुबन्धत्वमलङ्कारेषु कौशलम् ॥
तौर्यत्रितयचातुर्यंहृद्यशारीरपालितम्।
लयतालकलाज्ञानं विवेकोऽनेककाकुषु ॥
देशीरागेषु विज्ञत्वं वाक्यदुरत्वं सभाजयः।
इति वागुपकारस्य गुणाः प्रतिनिरूपिताः ॥

गान्धर्ववेदे

## वागुपकारभेदाः

अधमो धातुकारश्च मातुकारश्च मध्यमः।
धातुमातुक्रियाकार उत्तमः परिकीर्तितः ॥

अधमो लक्षणेन स्यान्मध्यमो लक्ष्यमाचरेत् ।
लक्ष्यलक्षणसंयुक्त उत्तमः परिकीर्तितः ।।

गान्धर्ववेदे

## वाग्गेयकारकः

प्रभूतिप्रतिभोद्भेदभाक्त्वं सुभगगेयता ।
द्रुतगीतविनिर्माणं पदान्तरविदग्धता ।।
देशीरागेष्वभिज्ञत्वं देशगीतिषु चातुरी ।
परचित्तपरिज्ञानं वाक्पटुत्वं सभाजयः ।
गुणैरेतैः समायुक्तो वरो वाग्गेयकारकः ।।

हम्मीरः

सर्वभाषाभिधानज्ञः छन्दोलक्षणवेदिता ।
रसालङ्कारभावज्ञस्तौर्यत्रितयकोविदः ।।
कलाशास्त्रेषु कुशलो हृद्यशारीरशालिनः ।
देशस्थितिषु चतुरो लयतालकलादिषु ।।
सर्वकाकुसुविज्ञानी परचित्तपरीक्षकः ।
देशीरागेषु विज्ञाता वक्ताभ्यस्तसभाजयः ।।

मोक्षदेवः

## वाग्गेयकारस्य गुणाः

सर्वजन्तुषु मैत्रीवानीषद्द्वेषविवर्जितः ।
प्रगल्भो दृढनिर्बन्धो नव्योक्तिपदपङ्क्तिकृत् ।।
त्रिस्थानगमकालिप्तस्तूर्णगीतिनिरूपकः ।
सावधानो गुणैरेभिर्वीरो वाग्गेयकारकः ।।

मोक्षदेवः

## वाङ्निष्ठा

वाङ्मयानीह शास्त्राणि वाङ्निष्ठाणि तथैव च ।
तस्माद्वाचः परं नास्ति वाचः सर्वस्य कारणम् ।।

कुम्भः

## वाचिकमार्गाः

अथोच्यते वाचिकस्य मार्गा द्वादश ते पुनः ।
आलपश्च प्रलापश्च विलापश्चानुलापकः ।।
सल्लापश्चापलापश्च सन्देशो व्यपदेशकः ।
उपदेशश्चापदेशो निर्देशश्चातिदेशक ।।

वेमभूपालः

## वाचिकमार्गाणां लक्षणानि

आभाषणं स्यादालापः प्रलापो वागनर्थकः ।
विलापः करुणं वाक्यमनुलापो मुहुर्वचः ।।
सल्लापोऽन्योऽन्यभाषा स्यादपलापस्तु नी … ।
इदं ब्रूहीति सन्देशो व्याजोक्तिर्व्यपदेशयुक् ।।
विधिर्वागुपदेशः स्यादपदेशः परार्थवाक् ।
निर्देशः स्यादयमिति सोऽतिदेशस्तु कथ्यते ।
त्वदुक्तमेतात्सदुक्तमिति यत्रातिदिश्यते ।।

वेमभूपालः

## वाचिकाभिनयः

गीतानां च प्रबन्धानां वाक्यानां वृत्तसंसदाम् ।
द्विपदी चूर्णिकानां च श्लोकानां गीतसंसदाम् ।।
अन्येषां गीतबन्धानामेषां च नटनक्रमात् ।
वाचिकाभिनयः प्रोक्तो भरतार्थविवेकिभिः ।।

शृङ्गारशेखरः

## वाचिकाभिनयस्वरूपम्

वागात्मा वाचिको द्वेधा संस्कृतप्राकृताश्रयः ।
नामाख्यातादिभिर्भेदैर्यं च विस्तरमश्नुते ।।

नृत्तरत्नावली

## वाञ्छितः—निःसारुकः

लघुत्रयं द्रुतद्वन्द्वं ताले शरभलीलके ।
अयं निःसारुको ज्ञेयो वाञ्छितो वाञ्छितप्रदः ।।

गान्धर्ववेदे

## वार्णलेखायाः लक्षणम्—बाणलेखा

द्वात्रिंशत्प्रतिपादं तु मात्रा यत्र भवन्ति हि ।
वाणलेखा मतङ्गोक्ता गणैर्वीणाह्वयैः कृता ।।

मोक्षदेवः

## वादकलक्षणम्

स्वपक्षपोषणे दक्षः परपक्षप्रदूषणे ।
वादपक्षपरिग्राही वादकृत्याच्च वादकः ।।

मोक्षदेवः

## वादनप्रकारः

एकहस्तं द्विहस्तं च कुदुम्बाधानजं तथा ।
कोणकाहननञ्चैव धनुराकर्षसंभवम् ।
फूत्कारजनितं चान्यद्वादनं बहुभङ्गिकम् ।।

सोमेश्वरः

### वादनमार्गः

अङ्कितारूया विकृष्टा च गोमुख्यालप्तिका तथा ।
वादनस्य चतुर्मार्गाः कथिताश्चन्द्रमौलिना ।।

संगीतसारः

### वादाः

कलासो विकलासश्च ढाकी चाद्धटकाकली ।
जोलाटकालिकाचैव गोमूत्री मुरजस्तथा ।।
पलमानो दण्डमानो वादिविस्वावलान्वितः ? ।
धूमकेतुरिति प्रोक्ता दशवादाः मनोहराः ।।

सङ्गीतसारः

### वादिप्रभृतिषूपचारः

ते वादिनः स्युर्वदनात्समस्ताः संवादिना संवदनात्प्रतिष्ठाः ।
तथानुवादा अनुवादिनश्च विवादिनस्तत्र विवादभावात् ।।

हम्मीरः

### वादिमत्तगजाङ्कुशः—देशीतालभेदः

चत्वारो गुरवो लौ द्वौ गलौ पश्च गुरू तथा ।
लद्वयं गुरवश्चाष्टौ तथा द्रुतचतुष्टयम् ।।
ततो वक्रश्च लद्वन्द्वं द्रुतानां चैव पञ्चकम् ।
ज्ञेयमेतद्यथा शोभं वादिमत्तगजाङ्कुशे ।।
SSSS।। ०० SIऽ SS।। SSSSSSSS ००००ऽ।। ०००००

हम्मीरः

—कस्यचिद्ग्रन्थस्य नाम

अयं ग्रन्थः भरतकृत इति ग्रन्थ एव वर्तते । शतत्रयश्लोक-परिमितोऽप्ययं बहुविषयप्रतिपादकः । यथा जीमूतादिकाः ग्रामा-स्त्रयः, एकोनपञ्चाशत्तानाः तेषां लक्षणं, द्विपञ्चाशत्प्राकृतादि-भाषाणां, उदाहरणानि च नामानि सन्ति । अस्य मातृका पुण्यपत्तने नेपालराजभाण्डागारे च वर्तते ।

### वाद्यम्

ततं वाद्यं च देवानां गन्धर्वाणां च सौषिरम् ।
आनद्धं राक्षसानां च मानवानां घनं विदुः ।।

सङ्गीतनारायणे

### वाद्यपृथक्ता

पृथग्वाद्यं भवेदेकं द्वितीयं गीतसंगतम् ।
नृत्तानुगं तृतीयं च तुरीयं गीतनृत्तगम् ।।

सोमेश्वरः

### वाद्यप्रकरणे उपाङ्गानि

उपाङ्गानां च केषांचिद् वाद्यप्रकरणेऽप्यहम् ।
आलापवीणयालापान् वक्ष्ये तन्नात्र दर्शिता ।।

मोक्षदेवः

### वाद्यप्रकरणे मङ्गलाचरणम्

वितन्वाने विष्णौ पटुपटहपाटप्रकटनं
मृदङ्गन्यासङ्गं रचयति विरञ्चौ भगवति ।
कृतानन्दे नन्दिन्युरुडमरवादिन्यवतु वः
शिवः कुर्वन्नाद्यं सुरवरचमत्कारचतुरम् ।।

सोमराजदेवः

### वाद्यप्राधान्यम्

वाद्येनय...जते गीतं तन्नृत्तं वाद्यवर्जितम् ।
तस्माद्वाद्यं प्रधानं स्याद्गीतनृत्तक्रियाविधौ ।।

सोमेश्वरः

### वाद्यभेदाः

ततं चानद्धसुषिरघना इति चतुर्विधम् ।
ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् ।
वंशादिकं तु सुषिरं कांस्यं तालादिकं घनम् ।।

सङ्गीतनारायणे

### वाद्यभेदाः तेषां लक्षणानि

तन्त्रीयन्त्रविभेदेन ततं प्रोक्तमनेकधा ।
विपञ्ची वल्लकी ज्येष्ठा नकुलोष्ठी च किन्नरी ।।
शततन्त्री जया चित्रा हस्तिका परिवादिनी ।
कुब्जिका कच्छपी घोषवती सारङ्गिका तथा ।।
उदुम्बरी च त्रिसरा ढक्कयालापनी ततः ।
प्रोक्ता रावणहस्तश्च षट्कर्णो आदिकं मतम् ।।
कार्यः सुवृत्तो वीणायाः दण्डः खादिरदारुणा ।
सदैर्घ्यषड्वितस्तिः स्यात् परिधौ द्वादशाङ्गुलः ।।
सार्धाङ्गुलपरीणाहो गर्भे च सुषिरोऽखिलः ।
छिद्दस्य न संयुक्तस्तुम्बबन्धनहेतवः ? ।।
दण्डाघोष्टाङ्गुलायामाश्चतुरङ्गुलपार्श्वकः ।
मध्येच कच्छपोतुङ्गपत्रिकाधारगर्तवान् ।।
अधस्यान् मध्यभागे तु सुश्लक्ष्णः किञ्चिदुन्नतः ।
पार्श्वतोरुभयोर्लिम्नो दण्डतः द्वारसंयुतः ? ।।
दण्डरन्ध्रप्रमाणेन शङ्कुना च विराजितः ।
कर्तव्यः ककुभो वीणा वादकैश्चारुदारुणा ।।

षष्ट्यङ्गुलपरीणाहवृत्तं त्र्यङ्गुलनाभिकम् ।
तुम्बं स्यात्तन्मुखं छिन्द्याद्विस्ताराद्द्वादशाङ्गुलम् ॥
वीणादण्डशिरोभागादधः सप्तदशाङ्गुले ।
अलाबुबन्धनकृते कुर्वीत विवरद्वयम् ॥
तत्र रन्ध्रद्वये तन्त्रीप्रोतां द्विगुणितां दृढाम् ।
तुम्बस्य नाभिच्छिद्रेण मध्ये निःकासयेत्ततः ॥
आकृष्य नारिकेलीयं कर्परच्छिद्रमध्यतः ।
भ्रामयेत्कीलकेनैतां यावत्तुम्बो दृढीभवेत् ॥
तुम्बादूर्ध्वमतिश्लक्ष्णसूत्ररज्जुविनिर्मितः ।
क्रियते नागपाशस्तु तेन तन्त्रीं नियन्त्रयेत् ॥
कार्या स्नायुमयी श्लक्ष्णा सुदृढा सा मनोरमा ।
वेष्टयेत् ककुभं गाढं तथा निष्पीड्य पत्रिकाम् ॥
तन्त्रीपत्रिकयोर्मध्ये न्यासजीवां जवायताम् ।
स्थापयेदङ्गुलं दैर्घ्ये सा जीवा नादजीवनात् ॥
तुम्बस्याधो विधातव्या रज्जुसन्मन्द्रसिद्धये ।
सारणा वैणवी कार्या प्रमाणे द्वादशाङ्गुला ॥
आसां समस्तवीणानां एकतन्त्री गरीयसी ।
दृष्टा श्रुतापि च नृणां पापव्यूहमपोहति ॥ सोमराजदेवः

वाद्यानामुपयोगः

गीतं नृत्तं च वाद्येन धत्ते शोभां यतस्ततः ।
देवयात्राविवाहादौ वाद्यमादौ प्रयुज्यते ॥
हस्ताभ्यामेकहस्तेन गुलिकाकोणफूत्कृतैः ।
रञ्जनाय जनस्यैतद्वाद्यते वाद्यकोविदैः ॥ सोमराजदेवः

वामदक्षतिरश्चीनम्

वामदक्षिणयोस्तिर्यग्लुठनं करयोर्यथा ।
स्वस्तिकाकारयोर्यत्र तत्तदा तण्डुना मतम् ।
वामदक्षतिरश्चीनं तदाप्यन्वर्थनामकम् ॥

वामदक्षिणहस्तः

स्वपुटं पीडयेद्वामस्तदा पाण्यन्तरो भवेत् । कुम्भः

वालव्यजनचालः—चालकभेदः

उत्प्रकोष्ठावुभौ हस्तावंसदेशादधोगतौ ।
पर्यायमण्डलाकाराद् भ्रमणं कुरुते यदि ।
वालव्यजन चालाख्यश्चालकस्समुदाहृतः ॥ वेमः

पर्याये ...... त्प्रकोष्ठं चेत्कंठदेशान्तरं गतौ ।
करौ विलुठितौ भूत्वाधोगतौ चक्रभावतः ।
यत्र तत्र तदादिष्टं वालव्यजनचालयम् ॥

वासकसज्जा—नायिका

या रम्यवेश्मनि सुकल्पिततल्पमध्ये
ताम्बूलपुष्पवसनैश्च समं सुसज्जी ।
कान्तस्य सङ्गसमयं समवेक्ष्यमाणा
सा कथ्यते कविवरैरिह वाससज्जी ॥
शुभङ्करः

वांशिकगुणाः

स्वस्थानत्वं सुस्वरत्वमङ्गुलीसारणत्रिधा ।
समस्तगमकज्ञानं रागरागाङ्गवेदिता ॥
क्रियाभाषाविभाषासु दक्षता गीतवादने ।
स्वस्थाने चापि सुस्थाने नादनिर्माणकौशलम् ॥
गातॄणां स्थानदातृत्वं तद्दोषाच्छादनं तथा ।
वांशिकस्य गुणा एते मया संक्षिप्य दर्शिताः ॥
शुभङ्करः

वांशिकदोषाः

बहुफूत्कशिरःकम्पः स्वस्थानप्राप्तिरेव च ।
वृथा प्रयोगबाहुल्यः वा...... गीतवादने ।
एभिर्दोषैर्युतोतीव निन्दितो वांशिको मतः ॥
सङ्गीतनारायणे

विकटम्

विरूपवेषावयवव्यापारं विकटं मतम् ।
कुम्भः

विकृतम्—मण्डलभेदः

दक्षिणो विच्यवीभूत्वा स्पन्दितोऽनन्तरं भवेत् ।
पार्श्वक्रान्तो दक्षिणाङ्घ्रिर्वामस्तु स्पन्दितस्ततः ॥
उद्वृत्तो दक्षिणोऽलातो वामस्सूची तु दक्षिणः ।
पार्श्वक्रान्तस्तु वामोऽङ्घ्रिराक्षिप्तीभूय दक्षिणः ॥
भ्रान्त्या सव्यापसव्येन दण्डपादत्वमागतः ।
वामः क्रमेण सूची स्याद् भ्रमरश्चाथ दक्षिणः ।
भुजङ्गत्रासितो वामोऽतिक्रान्तो विकृतामिधे ॥
(विप्रदास)

विहृतमेव विकृतं विहित विद्रुतं इत्यादर्शेषु दृश्यते । लक्षणेऽपि क्रियाप्रारम्भे भेदो दृश्यते । विच्यवस्पन्दितः उद्वृत्तः । सूचीत्यादिस्थलेषु तत्तच्चारीगतपादो विवक्षितः । अन्ते चार्येव ।

विकृतः—सात्त्विकभावः

सम्प्राप्तावसरं वाक्यं मुच्यते यत्र लज्जया ।
विकृतं तं विजानीयादिति नाट्यविदां मतम् ॥

यद्वा—

मुग्धादीनामङ्गनानां यद्विपर्ययमीरितम् ।
कुमुन्तिवलीलानां स चैव विकृत उच्यते ? ॥

शुभङ्करः

विकृतैलानां लक्षणानि—तत्र वासवीलक्षणम् संगतालक्षणञ्च

वासवी सङ्गता त्रेता चतुराबाणसंज्ञका ।
एलानां विकृताः पञ्च जातयः प्रथिता इमाः ॥

एकद्वित्रिचतुःपञ्च गणानां विकृतौ क्रमात् ।
गणस्याद्यस्य विकृतेरेला समाभिधो भवेत् ॥

द्वितीयगणविकाराद्भवेदेला मनोरमा ।
तृतीयस्य गणस्यात्र विकृतेरुन्नता मता ॥

शान्तिस्तुर्यगणस्याथ विकारः कीर्त्यते बुधैः ।
नागरा विकृतेर्ज्ञेया पञ्चमस्य गणस्य च ॥

इति पञ्चविधा प्राहुर्वासवी लक्ष्मवेदिनः ।
स्यादाद्यस्य द्वितीयस्य रमणीया विकारतः ॥

आद्यतृतीयविकृतेरुच्यते विषमा च सा ।
प्रथमस्य तुरीयस्य विकृतेः कथिता समा ॥

आद्यपञ्चमयोर्लक्ष्मीर्गणयोर्विकृतौ भवेत् ।
द्वितीयस्य तृतीयस्य विकारात्कामुकी मता ॥

द्वितीयतुर्यगणयोर्विकारान्मदनोत्सवा ।
पञ्चमस्य द्वितीयस्य विकृतेर्नन्दिनी मता ॥

तुर्यतृतीयगणयोर्भवेद्गौरी विकारतः ।
पञ्चमस्य तृतीयस्य सौम्याख्या विकृतेर्मता ।
तुर्यपञ्चमयोः प्रोक्ता रतिदेहा विकारत. ॥

मोक्षदेवः

विकोशा

विकोशा सा विकसितपुटद्वन्द्वविकासिनी ।

सङ्गीतमुक्तावली देवेन्द्रकृता

विक्षेपः—कलामानम्

तस्य दक्षिणतः क्षेपो विक्षेपः परिभाषितः ।

दत्तिलः

विक्षेपा

मुहुः प्रसार्य चरणमग्रतो गगनाङ्गणे ।
आकम्पयेत्तदा प्रोक्ता विक्षेपा नाम चारिका ॥

कुम्भः

विचित्रसुरता—नायिका

शृङ्गाररससंसिद्धा कान्ता केलिकलान्विता ।
नानाबन्धविधानज्ञा विचित्रसुरता मता ॥

शुभङ्करः

विचित्रनृत्तम्

मध्ये मध्ये भ्रमरिका प्रयोगं चालकान्वितम् ।
गीत्वा कलासेनालापं लसल्लास्याङ्गसुन्दरम् ॥
विविधं नर्तनं कुर्यादेकताल्यानुगं यदा ।
नृत्तं विचित्रया रीत्या तदा जनमनोहरम् ॥

विच्छित्तिः—सात्विकभावः

शृङ्गारस्याथ विच्छेदो विच्छित्तिरिति कथ्यते ।

यद्वा —

प्रियापराधमालोक्य कुपितायाः सखीजनैः ।
प्रसादनं विलसिन्या विच्छित्तिरिति कथ्यते ॥

शुभङ्करः

विच्छित्तिलक्षणम्

माल्याङ्गरागवसनंभूषणादेरनादरात् ।
विन्यासो यो विलासस्य स्वल्पीयानपि भूयसीम् ।
शोभां प्रकाशयत्यङ्गे सा विच्छित्तिरिति स्मृता ॥

वेमभूपालः

विच्छुरितः—पाटः

शुद्धेन करसञ्चेन घातेनाङ्गुष्ठहेतुना ।
क्रमादुत्पद्यते स्त्रीणां पाटो विच्छुरिताभिधः ॥

यथा—

रुद्रं २ डें गिगिडि २ नं गिरिगिडिन ।
एतेषु पाटवर्णेषु स्वराः सप्त प्रकीर्तिताः ।
अ आ इ ई उ ए ओ च वाद्यविद्याविशारदैः ॥

कुम्भः

विच्यवा

भवेत्स्वस्तिकरूपेण संवेधो जंघयोर्मिथः ।
ततो वलनमूरुभ्यां यस्यां बद्धेतिसामृता ॥

अस्यां स्वस्तिकविश्लेषं यावत्पादतलाग्रयोः ।
मण्डलभ्रमणात्स्वस्वपार्श्वयोर्गमन......... ।
इत्यूचुर्ललनायुक्तं केचिदूचुर्विपश्चितः ? ॥

ज्जायनः

**विजयः**

शीलो विजय इत्येव त्वावद्गुलौ स्मृतौ यथा ?।
द्रुतद्वयं विरामान्तं लघुनैकेन संयुतम् ॥

हम्मीरः

**—प्रबन्धः**

निरूप्यतेऽथ विजयः तालोऽत्र विजयाभिधः ।
गीयन्ते तेन्नकाः पाटाः पदानि प्रकटस्वराः ।
आभोगस्तु पदैरन्यैः न्यासस्तेन्नैर्विधीयते ॥
लक्षणं विजयस्यैतन् । हरिपालः
विजयाभिधतालेन तेन्नपाटपदस्वरैः ।
विजयो यत्र वीराणां गीयते विजयाभिधः ।
आभोगोऽन्यपदैरस्य तेन्नैर्न्यासो विधीयते ॥

जग-मल्लः

**विजयानन्दः—तालः**

लद्वयं गत्रयं ताले विजयानन्दसंज्ञके ।
॥ ऽऽऽ कुम्भः

**वितालकः**

लयलुप्तश्च विज्ञेयो वितालस्तालविच्युतः ।

भरतकल्पलता

**विदारणकला—कला**

यदि नो निधने ह्यान्तिरतिमिन्नो हृदो भयम् ।
संदेहदिग्धहृदया कुर्यात् पूगीविदारणम् ॥
धृत्वा भूमौ करौ या चरणयुगमपि प्राप्य कर्ण्यान्तमूलं
कुर्यात्पश्चात्प्रदेशोन्नमितगति लघुन्यस्य तद्वारिकाग्रे ।
पूगी चातो भिनत्ति द्युगततनुलता वक्षसा यात्र सोक्ता
वक्षः प्राग्यन्नेत्रीत्यमितगुणकला नागमध्यक्षितीशैः ॥

नागेन्द्रसङ्गीते

**विदारी**

पदवर्णसमाप्तिस्तु विदारीत्यभिसंज्ञिता ।

नाट्यशास्त्रे

**विदूषकः—उपनायकः**

हास्यप्रधानवाक्येन विनोदं प्रतनोति यः ।
नायकस्य सदा प्रीतो विदूषक इति स्मृतः ॥ यद्वा—
आप्तः पुरश्चरो राज्ञां नर्मामात्यो विदूषकः ।

शुभङ्करः

**विद्धा**

चरणौ स्वस्तिकीकृत्य किञ्चिदान्दोलयेत्पुरः ।
कुञ्चितं चरणं यत्र सा विद्धा परिकीर्तिता ॥

कुम्भः

**विद्युत्कलासः—कलासभेदः**

यस्मिन्नूर्ध्वमधोऽधः पताकमायान्ति हस्तकाः सततम् ।
विद्युदिव सञ्चलास्तं वदन्ति विद्युत्कलासमिह ॥
वर्षासु जलदराशिषु सचमत्कारं यथा चिरविलासात् ।
विलसति तथा पताकप्रमुखैः प्लुतमनास्तिर्यक् ॥

कुम्भः

**—प्रथमः**

वामं करं पताकाख्यं नीत्वा दक्षिणकर्णगम् ।
तथापरं करं वामां कटीं वामां च जङ्घिकाम् ॥
एवद्व्यत्यासनेनापि कृत्वा पाणिद्वयं ततः ।
समुखं रचयेद्विद्युद्भेद आद्यो भवेदसौ ॥

अशोकः

**—द्वितीयः**

विधाय दक्षिणं पाणिमर्धचन्द्रं स्वसम्मुखम् ।
विनीय च नटी कुर्यात् धनुराकृति जानु चेत् ।
तदा भेदो द्वितीयः स्याद्विद्युदाद्यकलासजः ॥

**—तृतीयः**

समदृष्टिर्नटीहस्तमञ्जलिं प्रविधाय चेत् ।
अस्याङ्गुलीः प्रसार्याथ पुरतश्शिखरं करम् ।
कृत्वा प्रसारयेद्बाहू तदा भेदस्तृतीयकः ॥

**—चतुर्थः**

केशबन्धौ करौ कृत्वा क्रमादलिकमूर्धगौ ।
करौ दक्षिणवामौ चेन्निधाय द्वौ पताककौ ।
कुर्यात्तदा भवेद् भेदः चतुर्थश्च पुरोदितः ॥

—पञ्चमः

कृत्वा पुष्पपुटं पाणिमुच्चैस्तं द्विर्निरीक्ष्य च।
तदनूत्सङ्गमारुह्य चरणे दक्षिणं द्रुतम् ॥
स्पृशेद्दक्षिणहस्तेन वामाङ्घ्रिं वामपाणिना।
यत्रासौ पञ्चमो भेदः कलासज्ञैरुदीरितः ॥

—षष्ठः

प्लुतमानकृताङ्घ्रिश्चेदथो हि मकरं करम्।
कृत्वा नृत्यति पाणिभ्यां षष्ठो भेदस्तदोदितः ॥

अशोकः

## विद्युद्भ्रान्तम्

पृष्ठतो भ्रामितं पादं सर्वतो मण्डलत्वतः।
भ्रामितं च शिरःक्षेत्रे विद्युद्भ्रान्तं तदोच्यते ॥

संगीतमुक्तावली देवेन्द्रकृत

## विद्युद्भ्रान्ता

पुरस्तादङ्घ्रिमुत्क्षिप्य नामयित्वा त्रिके द्रुतम्।
भूमौ चेन्न्यस्यते प्रोक्ता विद्युद्भ्रान्ता तदा बुधैः ॥

कुम्भः

## विद्युद्भेदः

मेघपंक्तौ यथा विद्युच्चकास्ति सचमत्कृतिः।
तदा यत्र पताकादीन् प्लुतमानकृताकरान् ॥
तिर्यगूर्ध्वमधोदश्चेदारादातन्वती नटी।
विभाति विद्युदाद्यस्तु कलासस्स तदोदितः ॥
वामं करपताकाख्यं नीत्वा दक्षिणकर्णगम्।
तथापरं करं वामं कटिं वामां च जङ्घिकाम् ॥
एतद्द्वयत्यासनेनापि कृत्वा पाणिद्वयं ततः।
सम्मुखं रचयेद्विद्युद्भेद आद्यो भवेदसौ ॥

अशोकः

## विद्युद्विलासः—पाटः

विद्युद्विलसितः पाटो वलितार्धार्धहस्ततः।
तर्जन्यङ्गुष्ठघातेन जायते राजशासनात् ॥

यथा—

कुम्भः

तेण तेण तिटडें डिहि…।

## विनिवर्तना

परिवर्तनतोऽङ्गानां पृष्ठतो विनिवर्तना।

कुम्भः

## विन्यासभेदाः

विन्यासभेदाः पाटानां वाद्यन्ते मुरजादिषु।
बोलावणी च चल्लाच रासवश्च कुचुम्बिनी ॥
चारुश्रवणिकालग्नः परिश्रवणिका ततः।
समप्रहारः कुडुपं चारिणी करणा तथा।
दण्डहस्तो घननखस्तानि द्वादशधावदन् ॥

कुम्भः

## विन्यासलक्षणम्

विदारी भोगरूपस्य पदस्यान्ते यदा क्वचित्।
विन्यस्यते तदा ह्येष विन्यासोंऽशविवादवान् ॥
पाडायां रक्तगान्धार्यां मापाधापापमाधपा।
मगेति ब्रह्मणा पूर्वं प्रयोगोऽत्र प्रदर्शितः ॥

मोक्षदेवः

## विपञ्ची—वीणा

एषैवतु विपञ्ची स्याद्विशेषो विनिगद्यते।

एषा रुद्रवीणेत्यर्थः

तन्त्रीद्वयस्य स्थित्यर्थं वामभागे तु काकुभे।
उच्चोच्चद्व्यङ्गुलदलं लोहपत्रिसमन्वितम् ॥
मन्द्रतन्त्र्यर्थसंसिध्यै दातव्ये पदिके इह।
बृहत्यौ सारिके न्यासः तयोरपि च कथ्यते ॥
मन्द्रपञ्चकमासाद्योभयतस्तिष्ठतो यथा।
रमन्त्यावनुरागिण्यौ कान्तमेकान्तवर्तिनम्।
इत्यादि लक्षणोपेता रौद्रीवत्तु विपञ्चिका ॥

सङ्गीतनारायणे

## विप्रकर्षप्राधान्यम्

संभोगो विप्रलम्भेन विना न रतिकारकः।
कषायते हि वस्त्रादौ भूयान् रागो यतो भवेत् ॥
विप्रयोगोऽनुरागो तु यूनोरेकमनस्कयोः।
पारतन्त्र्येण दैवाद्वा विप्रकर्षादसङ्गमः ॥

कुम्भः

## विप्रलब्धा—नायिका

अहरहरथ रागादूतिकां प्रोष्य पूर्वं
मदभयमभिजाताकापि सङ्केतदेशे।
स मिलति खलु यस्यावन्नलोदौरयोगा-
त्कथयति भरतस्तां नायिकां विप्रलब्धाम् ॥

शुभङ्करः

विप्रलब्धाः खण्डिताश्च कलहान्तरिता अपि ।
इत्थं प्रदर्शयेन्नाट्ये तथा प्रोषितभर्तृकाः ॥
विचित्रमण्डनैर्हर्षैः वेषैर्नानाविधैरपि ।
तथातिशयशोभाभिर्दिशेत्स्वाधीनभर्तृकाः ॥
एवं वासकसज्जापि निर्देश्या नाट्यकोविदैः ।
नियुज्यन्ते बुधैरेतेऽभिनयाभावसंयुताः ॥
या यस्य नियता लीला गतिश्च स्थितिरेव च ।
तस्य रङ्गप्रतिष्ठस्तां नटस्तावद्विनिर्दिशेत् ॥
यावन्न निर्गतोरङ्गादिति सामान्यतो विधिः ।

## विप्रलम्भशृङ्गारः

स्वदतेऽतीवसंभोगाद्विप्रलम्भो विनाकृतः ।
विप्रलम्भे य विच्छिन्नः संभोगस्य मनोरथः ॥
न संभोगरसास्वादप्रत्याशा यत्र कामिनोः ।
तद्विप्रलम्भः शृङ्गारः तत्रान्यः करुणो रसः ॥
शङ्कासूयाश्रमौत्सुक्यनिर्वेदग्लानिमृत्यवः ।
उन्मादव्याध्यपस्मारविबोधजडतास्तथा ॥
दैन्यं निद्रा तथा स्वप्नसुप्तचिन्तादयश्च ये ।
तदीयैरनुभावैस्तु विप्रलम्भोऽभिधीयते ॥

हम्मीरः

## विप्रलम्भस्य विधिः

दशां वा भाविविधनां सूचयेन्न त्विमां वदेत् ।
ननु दुःखात्मकः कस्माद्विप्रलम्भो रसो मतः ॥
मैनं रत्यनुसन्धानं विप्रलम्भे च दृश्यते ।
विप्रलम्भोद्भवा शङ्का संभोगे दुस्त्यजा ध्रुवम् ॥
शोको हि करुणे स्थायि विप्रलम्भे रतिर्मता ।
स्थायिभेदाद्धि भागोऽस्तस्तयोरुत्तमपूरुषे ॥
नरे वीरे तु माल्यादिविभावानामसम्भवात् ।
इत्यभावो विप्रलम्भः शृङ्गारो जायते कथम् ।
अतः स्यात्करुणः स्पष्टस्तत्रेष्टविरहोद्भवः ॥

हम्मीरः

## विभावः

विभाव्यन्ते वितन्यन्ते वागङ्गाभिनयास्तु सा ।
एभिरेव च यत्तस्माद्विभावा इति भाषिताः ॥

शुभङ्करः

रसान् प्रमुखते ते स्युर्विभावस्तद्विभावनात् ।

हम्मीरः

## विभावलक्षणम्

उपादानं निमित्तं च काव्यशब्दैः समर्पिताः ।
नाट्ये नटैस्तदाकारानुकृत्याक्षतां गताः ।
भावान् विभावयन्तीति ते विभावास्तथा स्मृताः ॥

विप्रदासः

## विभ्रमः—सात्त्विकभावः

स्त्रीरङ्गसङ्गमाप्राप्तैस्त्वरया परिवर्तनम् ।
अलङ्कारविशेषाणामिति योषित्सु विभ्रमः ॥

शुभङ्करः

## विभ्रमलक्षणम्

प्रियासन्दर्शनोद्भूतत्वरया परिकल्पितः ।
वागङ्गभूषणानां तु विन्यासो विभ्रमो भवेत् ॥

वेमभूपालः

## विमुक्तः

निरुद्धश्चिरमामुक्तो विमुक्तः कथ्यते मरुत् ।
प्राणायामे तथा ध्याने योगे चैष नियुज्यते ॥

कुम्भः

## विरसः

रसहीनं तु विरसो विरसश्चेति विश्रुतः ।

भरतकल्पलता

## विलम्बः—प्रतिमण्ठः

लघुद्वन्द्वं विरामान्तं ताले कन्दुकसंज्ञके ।
विरागो गीयते तेन विलम्बश्च लयो भवेत् ॥

कन्दुकतालः । गान्धर्ववेदे

## विलम्बितः

प्रबन्धाङ्कं सतालं च पदद्वन्द्वं पृथक्कृतः ।
द्विर्गीत्वा गायते यत्र प्रयोगोऽपि विलम्बितः ॥

हम्मीरः

## विलासाधिरोहणकला

परस्परासक्ततलोन्नतेषु
धृत्वेत्युरः स भ्रूविलासकेषु ।
योऽक्षिप्य पादौ खलु पृष्ठभागे
ततो विधत्तेऽप्युचितौ शिरोऽधः ॥

नीत्वा ततः कांस्यमयं च ताल्यां
पात्रं सतोयं कुरुते च मूर्ध्नि।
पुरःस्थितं यत्र च चक्रकानि
विधुन्वती हस्तपदाङ्गुजैश्च ॥
निराश्रया नृत्यविधिप्रवीणा
विभासयन्ती विदिशश्चतस्रः।
मुग्धा श्वसन्ती मधुराक्षराणि
सा सभ्रुवो लोकर्मणि प्रदिष्टा ? ॥

नागेन्द्रसङ्गीते

## विलासः

नायकालोकनादौ तु विशेषो हि क्रियासु यः।
शृङ्गारचेष्टासहितो विलासः स निगद्यते ॥

सङ्गीतनारायणे

—सात्त्विकभावः

माधवविलोकनादौ विशेषो हि क्रियासु यः।
शृङ्गारचेष्टासहितो विलास इति कीर्तितः ॥

यद्वा—

वीक्षणभ्रमणे यत्र विकारः प्रियदर्शनात्।
कोपे हि स्मितमात्सर्यं विलासः स निगद्यते॥

शुभङ्करः

—पौरुषः

गतिर्गजेन्द्रोपमा दृष्टिस्तृणीकृतजयत् त्रया।
स्मितपूर्वं वचो यत्र विलासः सोऽभिधीयते ॥

वेमभूपालः

सुश्लिष्टस्थानगमनहस्तभ्रूनेत्रकर्मणाम्।
विशेषो यस्य चलनैर्विलास इति कथ्यते ॥

वेमभूपालः

## विवर्तनम्

दक्षिणाङ्गेषु वामाङ्गे स्वरपाटगतं यदि।
नृत्तं विवर्तनाख्यं स्यादङ्गोपाङ्गसमन्वितम्।
ध्रुवतालेन यन्नृत्तं सर्वलोकमनोहरम् ॥
ठिंठिंठिंणकषविण क्काधाढेंगा ढेंण्ढां गिणढोंगा ढोंगा।

## विवर्तितम्

करं चरणमाक्षिप्य यत्र त्रिकविवर्तनम्।
करोऽपरो रेचितश्चेत्तद्वदन्ति विवर्तितम् ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## विवर्त्तिन्योर्लक्षणम्

द्विरुद्ग्राहो ध्रुवाभोगो सकृद्गीत्वा ध्रुवे न्यसेत्।
विलम्बिततलयस्यां वर्तिनी कीर्त्यते बुधैः ॥
कङ्कालश्च ध्रुवो मण्ठः प्रतितालकडुचकः।
वर्तिन्यां न भवन्त्येते एभिरेव विवर्त्तिनी ॥

मोक्षदेव

## विवधः

एककं तु विदार्यैका ते चोभे विवधः स्मृतः।
षट्परं त्र्यवरं वाऽपि विदार्यावृत्तमिष्यते ॥

नाट्यशास्त्रे

## विविधस्थायः

ये भजन्ते च विचित्रकारिणीं भङ्गिमञ्जसा।
रागे नानाविधोल्लासैः स्थायास्ते विविधत्वजाः ? ।

कुम्भः

## विशालादिखण्डिकाः

विशाला सङ्गता चैव सुनन्दा सुमुखी तथा।
पञ्चप्रभृत्येकवृद्धाः कलास्तासामुपोहनम् ॥

दत्तिलः

## विशुद्धनट्टः

निगौ त्रिश्रुतिकौ यत्र पताद्यौ षड्जमध्यमौ।
विशुद्धनट्टमेलोऽसौ शुद्धाः षड्जमपञ्चमाः ॥

कुम्भः

## विश्रृङ्गाटकबन्धाख्यम्

प्रतिलोमानुलोमाभ्यां भवेदेतस्य या क्रिया।
विश्रृङ्गाटकबन्धाख्यं तद्विदः स्वदवादिषु ? ॥

## विश्लिष्टवर्तितम्

विधाय स्वस्तिकौ तत्र तिर्यगोकेविलोडितः।
अपरा पार्श्वपर्यन्ता शीर्षमूर्ध्वमधस्तका।
लोडितस्स्यात्तदाख्यातं सद्भिर्विश्लिष्टवर्तितम् ॥

## विश्लिष्टा

विश्लिष्य पार्ष्णिविद्धायाश्चरणावुपसर्पतः।
यद्वापसर्पतः प्रोक्ता विश्लिष्टा चारिका बुधैः ॥

कुम्भः

—गतिः

पार्ष्णिविद्धयुताबंघ्रीचेद्विश्लिष्टोपसर्पतः ।
यथापसर्पतो वासौ विश्लिष्टा तु तदोदितम् ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

विशेषलक्षणम्

यमत्वेऽप्यनयोः कश्चिद्विशेषः स च कथ्यते ।

कुम्भः

विशेषिताः

योगप्रदालिङ्गनाख्यौ हस्तौ द्विशिखरोऽपरः ।
कलापकः किरीटश्च चषकश्चेति संयुतान् ।
तान षडन्यान् विप्रदासो हस्तकान् प्रत्यपीपदत् ॥

विप्रदासः

विषमः

पताककम्पनं यत्र चलनं मणिबन्धतः ।
पादकम्पोऽथ जनकः कथितो विषमे यथा ॥

कुम्भः

—पाटः

हस्तवैषम्यविन्यासादपाटो विषमो भवेत् ।
यथा—खें दथरि २ थो गि थरि खेखे खरकटा ॥

कुम्भः

—हस्तपाटः

चलनं मणिबन्धस्य पताकस्य तु कम्पनम् ।
कम्पनं चरणस्यायं परोऽत्र विषमो यथा ॥
दहें खुंखुं धहें । तकि २

कुम्भः

विषमकर्तरी—हस्तपाटः

विषमकर्तरी द्वाभ्यां ताडनात्क्रमतो मता ।
रि रि टि रि थो दि गि द कि टि रे घ रे घं न कि

कुम्भः

विषमनृत्तम्

विषमं तत्समुद्दिष्टं यदृज्जुभ्रमणादिकम् ।

सङ्गीतनारायणे

विषमम्

स्यादत्रोत्प्लुतिपूर्वं यत्करणं विषमं हि तत् ।

कुम्भः

विषमपाणिः—हस्तपाटः

तमाहुर्विषमं पाणिं व्यत्ययाद्द्वयापतौ करौ ।
साङ्गुष्ठाङ्गुलिभिर्वाद्यं यस्मिन् क्रमतया हतः ॥
दा दां गिड गिड दां दां

कुम्भः

विषमसूची

तिर्यग्भवेतां चेत्स्थानं समसूचि तदोदितम् ।
युगपत्पुरतः पश्चात्सूचीपादौ प्रसारितौ ॥
पृथग्वा कथितं स्थानं प्राच्यैर्विषमसूचि तत् ।
चरणौ भूमिसंलग्नजानुगौ तु कचिन्मतम् ॥

कुम्भः

विषादः—व्यभिचारिभावः

कर्तव्येष्ववाप्तिदैवव्यापत्तिकृतसत्त्वनाशो विषादः ।

शुभङ्करः

विष्कम्भः

कुपितो स्वेच्छया प्राप्तः सङ्गतो नोभयोरपि ।
विष्कम्भकः स विज्ञेयः कथार्थस्यापि सूचकः ॥

शुभङ्करः

विष्कम्भितम्

नेत्रे निमीलिते पादौ यत्र विस्तारिताञ्चितौ ।
भुजौ विस्फारितौ पूर्वे विष्कम्भितमिदं मतम् ।
भटासनेत्वनाविष्टे नियुक्तं ध्यानयोगयोः ॥

कुम्भः

विष्णुभक्तः

कनिष्ठाङ्गुष्ठयोर्योगाच्छेपाङ्गुलिविवर्तनात् ।
कोणाहतो हस्तपाटो विष्णुभक्तोदितो यथा ॥

कुम्भः

विस्तारः—धातुः

सङ्घातजोऽथ समवायजश्च विस्तारजोऽनुबन्धकृतः ।
ज्ञेयश्चतुष्प्रकारो धातुर्विस्तारसंज्ञश्च ॥

नाट्यशास्त्रे

विस्मयः

चमत्कारि च यत्कर्म तस्य श्रवणदर्शनैः ।
चित्ते या विकृतिः स्वल्पा स विस्मय उदाहृतः ॥

## विस्मितः

मनस्यन्यपरे कस्माद्वर्तमानस्तु विस्मितः ।
चिन्तायामद्भुते चार्थे विस्मये च प्रवर्तते ॥

कुम्भः

## विहृतलक्षणम्

व्रीडाव्याजात्स्वभावाद्वा क्रियते यदभाषणम् ।
प्राप्तेऽपि काले वचसां विहृतं तदुदाहृतम् ॥

वेमभूपालः

## वीणादितन्त्रीभेदाः

वीणाघोषैकतन्त्र्या स्यात्तन्त्रीभ्यां नकुलाभिधा ।
त्रितन्त्रीमिश्रितन्त्र्याख्या चित्रा सप्तभिरेव च ॥
विपञ्ची नवभिः ख्याता रम्या स्यान्मत्तकोकिला ।
तन्त्रीणामेकविंशत्या स्थानत्रयविभूपिता ॥

कुम्भः

## वीणादेहः

वीणादेहं प्रवक्ष्यामि तदङ्गानि यथाक्रमम् ।
शिरांसि त्रीणि देहस्य ग्रामत्रयमुदाहृतम् ॥
मन्द्रमध्यमताराख्यमुखानि त्रीणि कथ्यते ।
सानुपादाय चत्वारो गीतजिह्वा प्रकीर्तिता ॥
वादी स्वराणां राजा स्यान्मन्त्री संवादिरुच्यते ।
स्वरो विवादी वैरी स्यादनुवादी च भृत्यवत् ॥
तेषां मार्गास्तु चत्वारः सुषिरं घनतन्तुवत् ।
देशीशुद्धमृदङ्गाद्या उपाङ्गा अङ्गमार्गकाः ॥
सप्तस्वराणि नेत्राणि गीतदेहस्य सप्त वै ।
द्वाविंशच्छ्रुतयो जाता नारदेन विवक्षिता ॥
षड्जमध्यमपञ्चैते चत्वार श्रुतयो मताः ।
निषादगान्धारौ द्वे द्वे त्रिस्त्रि ऋषभधैवतौ ॥

सङ्गीतमकरन्दे

## वीणाभेदाः

कच्छपी कुब्जिका चित्रा वहन्ती परिवादिनी ।
जया घोषवती ज्येष्ठा नकुलीष्टेति कीर्तिता (?) ॥
महती वैष्णवी ब्राह्मी रौद्री कूर्मी च रावणी ।
सारस्वती किन्नरी च सैरन्ध्री घोषका तथा ॥
दशवीणास्समाख्यातास्तन्त्रीविन्यासभेदतः ।
षट्त्रिंशदङ्गुली वीणा विस्तारः षड्भिरङ्गुलैः ॥

सङ्गीतमकरन्दे

## वीणावादकलक्षणम्

वीणावाद्यं नृपात्पञ्च शुद्धतालकसप्तमे ।
दशहस्ते कथागीतं विंशहस्ते च नाटकम् ॥
त्रिंशद्धस्ते च कोल्हाटा इति गानादिनीतिका ।
यो वीणावादनं वेत्ति तत्त्वतः श्रुतिजातिवत् ॥
तालालापकलाभिज्ञः स क्लेशान्मोक्षमृच्छति ।
तस्माद्वीणा निषेव्येति याज्ञवल्क्यादयोऽब्रुवन् ॥

हम्मीरः

## वीणास्वराः

दारव्यां समवायस्तु वीणायां समुदाहृताः ।
स्वराः ग्रामावलङ्कारा वर्णाः स्थानानि जातयः ।
साधारणे च शारीर्यां वीणायामेष सङ्ग्रहः ॥

नाट्यशास्त्रे

## वीरभल्लटोक्तदेशनिर्णयः

तथापि धनुजाचार्यमतमालोक्य धीमता ।
वीरभल्लटनाम्ना हि निर्मितो देशनिर्णयः ॥
देशानां निर्णयविधौ ख्यातौ प्रेरितपुंखितौ ।
पताकश्च ततश्चोर्ध्वमङ्गदेशे निरूप्यते ॥
मुख्यहस्तोऽपि चलितो वङ्गदेशे निरूप्यते ।
कलिङ्गे कर्तरी भूयात् प्रेरितत्वमुपाश्रितः ॥
काशीदेशे च लाङ्गूलो मुखाभिमुखरीकृतः ।
कटकामुखहस्तः स्यात् काम्भोजं देशमाश्रितः ॥
कर्णाटे च मयूरः स्यात् दक्षिणां समुपाश्रितः ।
करहाटे चक्रहस्तो वक्षःस्थलमुपाश्रितः ॥
हंसास्यः कुरुदेशस्य ललाटेऽतिनमिश्रियः (?) ।
कुरोः केतुकरो भूयात् कोङ्कणस्याबरालकः ॥
टेंकणे शुकतुण्डः स्याञ्जगर्ते मुष्टिरीरितः ।
पाञ्चाले मुकुलो भूयात् चर्चरे शिखरो मतः ॥
कपित्थो मालवे ज्ञेयो नेपाले सूचिरीरितः ।
मलयाले पाद्मकोशश्चोले च चतुरः करः ॥
लाटे तु बाणहस्तः स्यात्मृगशीर्षो मराटके ।
सन्दंशोऽपि च सौराष्ट्रे गुर्जरे ताम्रचूडकः ॥
विदेहे विप्रकीर्णः स्यादर्धचन्द्रो विदर्भके ।
द्रविळे सिंहवक्त्रः स्याद्यवने मकरो भवेत् ॥
अञ्जलिः स्यात्समाख्यातो मुखान्ध्रकमुत्तश्रितः ।
पौण्ड्रे कपोतो विख्यातो पाण्ड्यार्थे गजदन्तकः ॥

उद्वृत्तौ च पुलिन्दस्य गान्धारे पक्षवञ्चितः ।
शाल्मल्यां चतुरस्रः स्याद्येयां च करिहस्तकः ॥
उत्संगो गौडदेशे तु घूर्जरे नागबन्धकः ।
निषधे डमरुः प्रोक्तो ह्युत्कले दण्डपक्षकः ॥

शृङ्गारशेखरः

## वीरश्रीलक्षणम्

निबद्धैरनिबद्धैश्च पदैश्च विरुदैश्च यम् ।
गायन्त्येकेन तालेन स वीरश्रीरिति स्मृतः ॥

सोमराजः

## वीरावतारः शृङ्गारतिलकश्च

ततो मङ्गल्यवचनमालापे न्यासमादिशेत् ।
वीरशृङ्गारभेदाभ्यां प्रबन्धोऽयं द्विधा भवेत् ॥
वीरावतारो नाम्नैकः शृङ्गारतिलकोऽपरः ।
श्रीरागः कौशिकी तोडी नट्टा शुद्धवराटिका ॥
वेलाकुली च हिन्दोलो मालवश्रीरिति स्फुटम् ।
गेया रागाः प्रबन्धेऽस्मिन्नन्येऽपि च रसाश्रयाः ॥
प्रबन्धतालशृङ्गारवीरवैचित्र्ययोगतः ।
वहन्ति ब्रह्मवैकुण्ठरुद्रविद्याधरा मुदम् ॥

सोमराजदेवः

## वीरुढबन्धनम्

अनुसृत्य त्रिकोणत्वं करो यत्र विलोड्यते ।
पुरतः पार्श्वयोरन्तर्यद्वामण्डलवृत्तितः ।
चालकज्ञास्तदा प्राहुरिदं वीरुढबन्धनम् ॥

## वृश्चिकः—हस्तः

कपिरास्ययदाङ्गुष्ठो मध्यमोपरि पीडितः ? ।
तदुक्तो वृश्चिकस्तेन कुशाङ्कुशकुठारकम् ।
कुद्दालं लाङ्गलं शस्त्रं प्रेरणादि च दर्शयेत् ॥

सङ्गीतनारायणे

## —(राशिहस्तः)

पूर्वोक्तकर्कटे हस्ते मध्यमाऽपसृता यदि ।
किञ्चिद्रेचितगश्चेत्तु वृश्चिको वृश्चिके भवेत् ॥

शृङ्गारशेखरः

## वृत्तयः

उपाङ्गतावमीषां स्यात्पृथग्वृत्तेरभावतः ? ।
तथा हि त्रितयेऽह्यस्मिंश्चतस्रो वृत्तयः स्मृताः ।

कुम्भः

## न्यञ्चितं—हस्तप्राणः

पुरोभागे कुञ्चितो वा रेचितो वा प्रसारितः ।
यो हस्तस्तु पताकाख्यो नाम्नाऽसौ न्यञ्चितो भवेत् ॥

भरतकल्पलता

कैशिक्यारभटी चैव सात्त्वती भारती यथा ।
चतस्रो वृत्तयः प्रोक्ता नाट्यसंभवकारकाः ॥

शुभङ्करः

वृत्तिरित्युच्यते सा तु चतुर्धा परिकीर्तिता ।
कैशिकी भारती चैव सात्त्वत्यारभटीति च ॥

वेमभूपालः

कैशिक्यारभटी वृत्तिः सात्त्वती भारतीति च ।
वर्तन्तेऽभिनया काश्चित्येतासामेव वृत्तिताम् ।
अकुर्वतां क्रियां कांचिच्छोभामात्रोपयोगिनाम् ॥

विप्रदासः

## वृत्तलक्षणम्

छन्दोऽनुगेन तालेन येन केनचिदिच्छया ।
स्वरैर्हीनमहीनं वा वृत्तं गायन्ति गायनाः ॥
एकैकं चरणप्रान्ते वृत्तप्रान्तेऽथवा पुनः ।
गेयाः स्वरयुते रागे स्वरा वृत्ते गणास्त्वमी ॥
मस्त्रिगुस्त्रिलघुर्न स्यादादिगुर्भो य आदिलः ।
मध्यगुर्जो लमध्यो रः सोऽन्तगुस्तोऽन्तलः स्मृतः ॥

सोमराजदेवः

## वृत्तीनां लक्षणानि

भारत्यभ्यर्हिता यत्र वृत्तिः सा भारती मता ।
वृत्तिः सा कैशिकी या तु कैश्यवत्सौक्ष्म्यशालिनी ।
अभिनेयपरां शोभां काञ्चित्सम्पादयन्त्यपि ॥

कुम्भः

## वृषभः—हस्तः

अनामिका कनीयस्या विपर्यङ्गुष्ठपीडने ।
शेषयन्त्रोर्ध्वविरले कुटिले वृषभः करः ॥
गोमहिष्यादयः शृङ्गाः युजान्ये श्वापदाश्च ये ।
दर्शनीया मुनिश्रेष्ठ धनुर्द्वौ खटकामुखौ ॥

तथा वत्सतरी वत्सावर्धचन्द्रावधोमुखम् ।
जानुनो निकटं कृत्वा अभिनेयौ सुबुद्धिना ॥
सङ्गीतनारायणे

—(राशिहस्तः)
खरौ च पृष्ठवदनौ योज्यौ वृषभराशिके ।
शृङ्गारशेखरः

## वेगस्वरूपः

अत्यन्तं त्वरितं भ्रमिं वितनुते किं वाच्यमत्यद्भुतं
साङ्क्षेपाङ्गविभागवेदनमहो तन्व्यास्तदा जायते ।
किञ्चेयं किल सम्मुखं च विमुखं सव्यापसव्यप्लुतं
पोक्तं यद्भरतेन तत्प्रकुरुते तूर्णं निमेषादपि ॥
कुम्भः

## वेण्वङ्गानि

पादसन्धिर्मोषघातवक्षांशश्लिष्टतं तथा ।
एकैकं चतुरस्रं च तथा चैवोपवर्तनम् ॥
उपपातः प्रवेणी च द्व्यङ्गं संहरणं तथा ।
अङ्गानि द्वादशाङ्गस्य स्मृतान्यो वेणुकस्य हि ॥
नाट्यशास्त्रे

यत्रोत्क्षिप्त .........वेतिक्रान्तेति तां विदुः ।
अनुक्तत्वाद्विशेषस्य मुनिना तस्य चित्तवित् ॥
पादस्य पार्श्वे एवेति न्याय्यात्कीर्तिधरोऽब्रवीत् ।
ऊरुक्षेत्रो द्वितीयस्य यावदुत्क्षिप्य पातयेत् ॥
पादमुत्.........कस्य नाम कीर्तिधरोऽब्रवीत् ।
तत्राब्रवीत् पार्ष्णिचण्डघातेति किल लोकतः ॥
ज्यायनः

## वेपथुव्यञ्जकम्

लुवनेत्येकरीतिर्व्यङ्गामिदेशगते सति ।
ततोऽन्यदेशवचनं यन्मञ्जुलरसोज्ज्वलम् ।
हस्तयोस्तत्समाख्यातं वेपथुव्यञ्जकं तथा ॥
तिर्यक्श्लिष्टं विधायैकं पश्चादस्यैव चेद्बहिः ।
अन्तश्च लीलयान्यस्मिन् लुठिते सेति हस्तयोः ॥
पुरस्तात् त्रिस्तिर्यक्त पर्यायेण तदीरितम् ।
पुरोदण्डभ्रमाख्यं तच्चालयं पूर्वसूरिभिः ॥

## वेशभेदाः

शुद्धो विचित्रो मलिनः त्रिविधो वेश उच्यते ।
सङ्गीतनारायणे

## वेश्मद्वारम्

पूर्वतो द्वारमेवं स्यात्तत्र द्वारद्वयं श्रुतम् ।
नेपथ्यमन्दिरे तत्र रङ्गशीर्षं प्रकल्पयेत् ॥
षड्दारुकयुतं तस्य विधिरत्र प्रपञ्च्यते ।
पूर्वद्वारस्य पार्श्वस्थं कर्तव्यं स्तम्भयुग्मकम् ॥
तदधश्चोर्ध्वतश्चापि दारुद्वन्द्वं मनोहरम् ।
विचित्ररचनं कार्यमेवं षड्दारुकं भवेत् ॥
ब्राह्मणादिचतुःस्तम्भा ह्यन्तराले यदीरितम् ।
रङ्गपीठं च तत्कार्यं नात्युच्चं नातिनिम्नकम् ।
समन्तादष्टहस्तं तदादर्शतलसन्निभम् ॥
कुम्भः

## वेश्मबलिः

तादृशस्तत्र दातव्यो बलिर्मन्त्रपुरस्कृतः ।
सितरक्तनीलकृष्णपीतधूम्रोऽरुणामलम् ॥
कुम्भः

## वेष्टितम्

एकमन्येन पादेन वेष्टयेद्वेष्टनं तदा ।
तदेव चलनं प्राहुर्नृत्यवर्गणकर्मठाः ॥
कुम्भः

## वैतालिकलक्षणम्

नर्मज्ञोऽखिलरागराजिषु परं वेदी पुनः किङ्किणी-
वाद्ये चापि वृतोऽत्र नर्तकगणैर्द्राक्षामृतश्चारणः ।
भाषाशेषविशेषलिप्तसुमतिर्लोकापवादे नृणाम्
सर्वेषामपि नर्मशर्मकरणे दक्षोऽत्र वैतालिकः ॥
कुम्भः

## वैभविकलक्षणम्—लासः

दृष्ट्वा स्वप्ने प्रियं यत्र मदनानलतापिता ।
करोति विविधान् भावान् तद्वैभविकमुच्यते ॥
नृत्तरत्नावली

## वैशिकलक्षणम्

वेश्याबहुलसंभोगसमासादितगौरवः ।
वित्तव्ययी विलासी च वैशिकः परिकीर्तितः ॥
भरतकल्पलता

**वैश्यवर्णहस्तः**

वामे करे तु हंसास्यो दक्षिणे खटकामुखः ।
वैश्यहस्तोऽयमाख्यातो भरतागमवेदिभिः ॥

भरतकल्पलता

**वैष्णवः—हस्तः**

श्लिष्टाङ्गुष्ठौ पताकौ चेत्सकरो वैष्णवः स्मृतः ।
समूहे दम्पतीयोगे चक्रवाकस्य भावने ।
संघर्षे युज्यते सोऽयं वैष्णवाभिधहस्तकः ॥

भरतकल्पलता

**वैष्णवम्**

एकं कृत्वा समं पादमीषदन्यच्च कुञ्चितम् ।
पुरः प्रसारितं तिर्यगेतत्स्याद्वैष्णवं तदा ॥

कुम्भः

**—स्थानकम्**

ततस्तु वैष्णवं स्थानं प्रोक्तमाविद्धवक्रकम् ।
धुतमत्र शिरः प्रोक्तं कान्ता दृष्टिस्तु तत्र हि ॥
एकः पादः समस्त्वन्यः वक्षस्तु त्र्यश्रतां गतः ।
सार्धतालान्तरस्थश्च स्त्रीहिंवुन्नमितसन्धिकम् ।
सौष्ठवाधिष्ठितं विष्णुदैवतं वैष्णवं मतम् ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

**वैष्णवलक्षणम्—तलपुष्पपुटम्**

वक्षःक्षेत्रे विधातव्यो लताहस्तस्तु दक्षिणः ।
चतुरश्रत्वहेतुत्वाद्वैष्णवं केचिदूचिरे ॥
चरणाभिनयेष्वेव हस्तौ वा चरणोऽथवा ।
प्राथम्याद्दक्षिणः प्रोक्तो विशेषो यत्र सूच्यते ॥

नृत्तरत्नावली

**व्यञ्जनम्**

व्यञ्जनत्वं तु सर्वेषां कादिवर्गेषु संस्थितम् ।
शक्त्यभिव्यक्तिमात्रेण व्यञ्जनं शिवतां गतम् ॥

मतङ्गः

**व्यञ्जनः—धातुः**

व्यञ्जनधातोः पुष्पं करतलनिष्कोटितं तथोद्घृष्टम् ।
रेफोऽनुबन्धसंज्ञोऽनुस्वनितं विन्दुरवमृष्टम् ॥

नाट्यशास्त्रे

**व्यभिचारिदृष्टयः**

मलिना शङ्किता ग्लाना जीवशून्या विषादिनी ।
लज्जिता मुकुला श्रान्ताभितप्ताकुञ्चिता तथा ॥
आकेकरा विनाशार्धमुकुला च वितर्किका ।
विभ्रान्ता विप्लुता त्रस्ता ललिता मन्थरेति च ।
विगतिर्व्यभिचारिण्यो दृष्टयः कथिता इमाः ॥

सङ्गीतनारायणे

**व्यभिचारिभावलक्षणम्**

ये तूपकर्तुमायान्ति स्थायिनं भावमुत्तमम् ।
उपकृत्य च गच्छन्ति कथ्यन्ते व्यभिचारिणः ॥

शुभङ्करः

**व्यस्तोप्लुतिनिवर्तकम्**

यत्र पार्श्वमुखौ पूर्वं निस्सृतौ त्वरया करौ ।
तीक्ष्णौ कूर्परकौ स्यातां श्लिष्टपूर्वमुखौ ततः ।
धाराभिमुखतौ तौ स्याद्व्यस्तो प्लुतिनिवर्तकः ॥

**व्यादीर्णं**

जृम्भा हास्यादिषु प्रोक्तं व्यादीर्णं दूरनिर्गतम् ।

कुम्भः

**व्यापकस्वरः**

ऊर्ध्वनाडीप्रयत्नेन सर्वभित्तिनिघट्टनात् ।
मूर्छितो ध्वनिरामूर्ध्नः स्वरोऽसौ व्यापकः परः ॥

मतङ्गः

**व्यावृत्ताभिधः**

चतुःस्वरैरिवमाद्या रिगमाद्याः कलास्ततः ।
चतुस्स्वराः प्रोक्तरूपाश्चेद्व्यावृत्ताभिधस्त्वसौ ।
स ग रि म स रि म ग प रि ग प म ध ग म ध प नि स म.

## श

**शङ्कितः—गायकः**

देहस्सर्वस्समायाति कम्पनं यस्य शङ्कितः ।

भरतकल्पलता

**शङ्खः**

कृत्वाऽङ्गुष्ठं करे वामे कुरुते शिखराकृतिम् ।
शाखायोगस्तदङ्गुष्ठो कृतः शङ्खो विधीयते ॥

नागेन्द्रसङ्गीते

### शङ्खलक्षणम्

शङ्खं निर्दोषमादाय निधायोत्थापनाभिकम् ।
अर्धाङ्गुलमुखे रन्ध्रं तस्य स्यान्माखमात्रकम् (?) ॥
ग्रामहीनां कलां कुर्यात्तदग्रे धातुशिल्पकम् ।
हस्तद्वयेन धृत्वाऽगुं सितैरेकादशाङ्गुलैः ॥
शनैः शनैः प्रकुर्वीत श्वासेनापूरितोदरम् ।
द्रुतं नादं करोत्येष वर्णैर्घोदगदैर्युतम् ॥

सोमराजदेवः

### शठः—नायकः

तनोति पुरतः प्रीतिं पश्चाच्चरति विप्रियम् ।
कृतदोषोऽपि निःशङ्कः शठः स परिकीर्तितः ॥

शुभङ्करः

### शब्दः—वाचिकः

शब्दं स्ववचसा चार्यां नर्तकेन समं नटी ।
ढक्कप्रणवहीत्यादि शब्दजालानुरञ्जितम् ॥

शृङ्गारशेखरः

### शब्दगतौ ढाललक्षणम्

द्रावकत्वात्समुल्लासो रागे ढालः प्रकीर्तितः ।

मोक्षदेवः

### शम्भुपूजा

नमस्तुभ्यं सहस्राक्ष प्रकाशितजगत्त्रय ।
शम्भवेऽत्र प्रसीद त्वं कुरु नाटकरक्षणम् ।
प्राच्यमेवं विधातव्या पूजा विघ्नप्रशान्तये ॥

जगद्धरः

### शम्भुवदनप्रभवत्वं रसानाम्

शम्भोः पश्चिमवदनाद्धास्यशृङ्गारसम्भवः ।
उत्तराद्वदनादेव वीरसंज्ञो रसोऽभवत् ॥
भयानकश्च बीभत्सो दक्षिणाद्वदनाद्भवेत् ।
पूर्ववक्त्राच्च सञ्जातौ रौद्राद्भुतरसावुभौ ॥
पञ्चमाद्वदनाज्जातः करुणः शान्तरसोऽपरः ।
विभावभावहीनोऽयं नवमो रस इष्यते ॥
उन्मीलन्नवमीलनीरजवपुः सौन्दर्यसारोदयः
खेलन् खंजनलोचनः सुललितः कन्दर्पलीलालयः ।
ज्ञेयः षोडशहायनप्रविरसन् पीताम्बरः कुण्डली
साक्षाद्विष्णुरयं सहारवलयश्शृङ्गारनामा रसः ॥

जगद्धरः

### शम्यातालः सन्निपातश्च

सर्वहस्तनिपातः स्याच्छम्यातालश्च वामतः ।
हस्तयोस्तु समः पातः सन्निपात इति स्मृतः ॥

नाट्यशास्त्रे

शम्या दक्षिणपातस्तु तालो वामस्तु कीर्तितः ।

दत्तिलः

### शरत्कालाभिनयः

स्वास्थ्यात्सर्वेन्द्रियाणां च प्रसन्नेन मुखेन च ।
विचित्रकुसुमं लोकैः शरत्कालं निरूपयेत् ॥

वेमभूपालः

### शरसंधानकम्

पराङ्मुखे लुठत्येक करे सति विलासतः ।
परः करो मूर्धदेशपर्यन्तं वेगतागतः ।
पुनस्तन्मुख एव स्यात् शरसन्धानकं तदा ॥

### शरीरम्

यतस्तु वाचिको नाट्यशरीरत्वेन चोदितः ।
अतः कृतं वाचिकस्य शरीरव्यपदेशनम् ॥

वेमभूपालः

### शरीरभेदे वाक्यलक्षणम्

अथ शरीरभेदानां क्रमाल्लक्षणमुच्यते ।
नानारसार्थसंयुक्तैर्नानावृत्तिनिबन्धनैः ॥
अनिबद्धपदैश्चापि पाठ्यैः प्राकृतसंश्रितैः ।
विविधैर्विहितो वाक्याभिनयः परिकीर्तितः ॥

वेमः

### शरीराङ्गानि

शिरः करोऽथ हृदयं जठरं पार्श्वयुग्मकम् ।
कटिश्चेति षडङ्गानि कथितानि शरीरिणाम् ॥

शुभङ्करः

### शस्त्रपातनम्

वार्षगण्यविषयोऽपि दृश्यतेऽप्येवमेव फलकं समन्त्रवत् ।
पृष्ठतो निगदितस्त्विहाधिकं स्कन्धदेश अथ वक्षसि स्फुटम् ॥
शस्त्रहस्तविषयो तथा क्लिष्टोद्वेष्टनं निगदितं तथा पुनः ।
हृत्प्रदेशविषयं च तद्विदा शस्त्रपातनमिहोदरीकृतम् ॥

कुम्भः

### शस्त्रपातविधिः

सत्त्वतेऽपि विधिरेष शस्यते पृष्ठतो भ्रमणमत्र शस्त्रगम् ।
शस्त्रपातविधिरत्र पादयोः कीर्तिता भरतमुख्यसूरिभिः ॥

कुम्भः

### शस्त्रमोक्षणन्यायाः

भारते न गदितस्तु कैशिकः शस्त्रपातनविधिस्तु मूर्छने ।
सौष्ठवान्वितततनुः सुशिक्षितो न्यायवर्गमयमाश्रितो नटः ॥
शक्तितोमरशिरश्शासनादिकान्यायुधान्यपिसमाचरेत्सुखम् ।
सौष्ठवे वरमुशन्ति तद्विधो येन तेन हि विनाकृतः परम् ॥
युद्धकर्मणि च नर्तनोऽपि येवा नैव भान्तिनिखिलाः प्रविचाराः ।
न प्रहारविधिरत्र वास्तवः संज्ञयैव निखिलो विधीयते ॥
तं प्रहारमथवाऽत्र दर्शयेदैन्द्रजालिकमधात्र मायया ।
एतेन्यायाः प्रयोक्तव्याश्चारीमिश्शस्त्रमोक्षणे ॥

कुम्भः

### शाखाङ्कुरनृत्तानां लक्षणानि

शाखाङ्कुरं च नृत्तं च प्रधानं तेष्वनुक्रमात् ।
शाखा स्यान्नृत्तहस्तानां वैचित्र्यात्मविवर्तना ॥
अङ्कुरः सूचना रूपो भूतवाक्यैकगोचरः ।
भविष्यद्वाक्यविषयः स तु सूचीति कथ्यते ॥

नृत्तरत्नावली

### शान्तस्य परमावधिः

यथा प्रधानं महतः कारणं लोकवर्त्मनि ।
लभ्यते महतः कश्चिन्न हेतुः परमार्थतः ॥
प्रधानसाम्यावस्थायां लयं यान्ति यथा गुणाः ।
तथा शान्ते विलीयन्ते रसाः सम्यगुपासिताः ॥
आत्मारामस्वरूपायावस्था तस्यामितो रसाः ।
प्रलीयन्ते ततो नैव रसः शान्तः पृथक् भवेत् ॥

कुम्भः

### शान्तस्य शमस्थायिकत्वम्

शमस्थायी भवेच्छान्तः सर्वत्र समदर्शनः ।
तत्त्वज्ञानावृतंच्छोः स तमोरागपरिक्षयात् ॥

कुम्भः

### शान्तो रसः

न यत्र दुःखं न सुखं न चिन्ता न द्वेषमोहौ न च काचिदिच्छा । रसस्तु शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु समान एव ॥

कुम्भः

### शान्तरसः

निर्वेदतो भवति सर्वविहीनरूपः
सम्यगाक्रोशजनितोऽपि च रागहीनः ।
शान्तोऽयमुत्तमजनप्रकृती रसो यो
इत्यादिष्ठ इह चापि तमोविहीनः ॥

वैराग्यजाततत्त्वैकज्ञानाच्छास्त्रार्थचिन्तनात् ।
साधुदौर्गत्यसन्दर्शादागमश्रवणादपि ॥
इष्टदेवतानुग्रहणे दमस्थैर्यादिभिः सदा ।
सत्यादिशीलनादेषु रसः शान्तः प्रजायते ॥
मुखनेत्रप्रसादेन स्मितपूर्वप्रियोक्तिभिः ।
स्थिरालोकनवैराग्यश्लाघासर्वाश्रमधरैः ॥
विविक्तदेवस्थानादिवासैर्वात्सल्यशान्तिभिः ।
परनिन्दादिदानाद्यैः शान्तस्याभिनयो भवेत् ॥
शून्यदृष्टिर्निरालम्बो ध्यानधारणतत्परः ।
समः सर्वेषु भावेषु भवेच्छान्तरसो ततः ॥
धृतिर्मतिर्जुगुप्साऽवहित्थो निद्रा स्मृतिः क्षमा ।
अविरोधग्लानिलज्जाश्च वितर्कौत्सुक्यसंमदा ।
स च शान्ते प्रयोक्तव्या एते भावा मनीषिभिः ॥

षष्ठयाऽद्भुतोऽधिकवया हरिदैवतोऽपि
निर्वेदभावजनितोऽपि च रागहीनः ।
शुद्धाम्ववायजनितो विमलाङ्गयष्टिः
शान्तो रसः सकलसज्जनताश्रयश्च ॥

जगद्धरः

### शान्तस्वरूपम्

नाटकेऽभिनये नास्ति शान्तस्य व्यभिचारिभिः ।
अन्येषां तु कुतश्शक्तिः शान्तस्य परिपोषणे ॥
अङ्गीकुर्वन्ति चेत्केचिद्रसं शान्तं मनीषिणः ।
करिष्ये कथनं तस्य रसानां प्रविचारणे ॥
स्वीयं निमित्तमासाद्य शान्तादुत्पद्यते रसः ।
पुनर्निमित्तापाये च शान्त एव प्रलीयते ॥

कुम्भः

### शाबरनृत्यम्

नृत्यन्ति शबरा यत्र गायन्तो निजभाषया ।
तदिदं शाबरं नृत्यमित्याहुर्नृत्यकोविदाः ॥

सङ्गीतनारायणे

## शारीरम्

रागव्यक्तिनिबन्धः स्यादभ्यासेन विना यदा।
सहोत्पन्नं शरीरेण शारीरं तन्निगद्यते ॥

कुम्भः

अभ्यासमन्तरेणापि रागव्यक्तिं करोति यत्।
शरीरसहजं प्राहुः शारीरं तच्च पुण्यजम् ॥

सोमराजदेवः

## शारीरलक्षणम्

ध्वनेर्यदश्रमेपि स्याद्रागाभिव्यक्तिशक्तिता।
शारीरेण सहोत्पत्तेस्तच्छारीरं जगुर्बुधाः ॥

मोक्षदेवः

## शारीरगुणाः

तारानुध्वनिमाधुर्यरक्तिगाम्भीर्यमार्दवैः।
घनता स्निग्धता कान्तिप्राचुर्यादिगुणैर्युतम्।
सुशारीरमिति प्रोक्तं लक्ष्यलक्षणवेदिभिः ॥

मोक्षदेवः

## शारीरदोषाः

अनुधानविहीनत्वं रूक्षत्वं व्यक्तिरक्तता।
निःसारता विस्वरता काकित्वं स्थानविच्युतिः।
कार्श्यं कार्कश्यमित्याद्यैः कुशारीरं नु दूषणैः ॥

मोक्षदेवः

## शारीरभेदः

करालं मधुरं मिश्रं पेचलं बहुभङ्गिकम्।
शारीरं पञ्चधा चेति प्राहुर्भीमतनूरुहः ॥

मोक्षदेवः

## शारीरस्वराः

स्वरग्रामौ मूर्छनाश्च तालाः स्थानानि वृत्तयः।
शुष्कं साधारणे वर्णा ह्यलङ्काराश्च धातवः।
श्रुतयो यतयश्चैव नित्यं स्वरगतात्मकाः ॥

नाट्यशास्त्रे

## शार्ङ्गदेवः—तालः

द्द्वयं गपगा पश्चाल्लघुश्चेति क्रमादमी।
०० ऽऽऽऽऽ।

कुम्भः

## शावरीरागलक्षणम्

मध्यग्रहांशा धन्या साममन्द्रा ऋकुभोद्भवा।
रङ्गस्याङ्गं च तारा च शावरी स्यात्पवर्जिता ॥

सोमराजदेवः

## शिखर-कपित्थ-सूचीमुखवर्तनाः

शिखरस्य कपित्थस्य तथा सूचीमुखस्य च।
भवन्ति वर्तना मुष्टिवर्तनोक्तप्रकारतः ॥

अशोकः

## शिखिसारसादिपक्षीणामभिनयः

शिखिसारसहंसाद्या स्थूला ये च पतत्रिणः।
तेषामभिनयः कार्यः करणै रेचकान्वितैः ॥

वेमभूपालः

## शिरिपिटी

भूलग्नतलपादस्यासरणं वस्तु रो भवेत्।
तथाऽपसरणं पश्चान्मुहुः शिरिपिटी भवेत् ॥

कुम्भः

## शिरिहिरं

विधायैकं समं पादमङ्घ्रेरन्यः पुरो यदि।
प्राहुः शिरिहिरं धीरा नटाः केचन तद्विदः ॥

कुम्भः

## शिरोधारणा—(कला)

भूमौ लुठन्ती दधती च कांस्यपात्रं शिरोऽग्रे सजलं हि यत्र।
नटी समं भ्रामयते कराङ्घ्रिपद्मौ तु चक्राण्यथ सा तरन्ती ॥

नागेन्द्रसंगीते

## शिरोभ्रमरी

सा शिरोभ्रमरी ज्ञेया शिरसैव भुवि स्थिता।
पादावूर्ध्वकृतौ बिभ्रत्तिकभ्रमणतो द्रुतम् ॥

कुम्भः

## शिवस्तुतिः

नानामार्गलयाद्यत्र यतीनां स्यात्कलानिधौ।
तं दक्षिणं शिवं नौमि चित्तवृत्तिमयं ध्रुवम् ॥

संगीतशिरोमणिः

## शीर्षकीध्रुवाया विनियोगः

आश्चर्यदर्शने रोषे विषादे सम्भ्रमे तथा।
उत्पातविस्मये चैव प्रत्यक्षावेदने तथा ॥

वीरे भयानके रौद्रे कार्या द्रुतलया ध्रुवा ।
प्रसादने याचने च वाक्ये सातिशये ... ॥
नूतने सङ्गमे हर्षे शृङ्गारेषु द्रुता स्मृता ।
शीर्षकी च ध्रुवा कार्या तज्ज्ञैर्मध्यलयाश्रया ॥
प्रायः शृङ्गारसंपूर्णा मृदुवर्णपदान्विता ।
या चोत्तमाश्रया सेयं शीर्षकी परिकीर्तिता ॥

वेमभूपालः

## शीर्षपल्लवद्वयं

ललाटे च पताकः स्यादन्यवेदन्यः प्रसारितः ।
बाह्वोः प्रसारणं कृत्वा करौ स्यातां द्रुतभ्रमौ ।
नर्तनाच्च शिरोदेशे द्वितीया शीर्षपल्लवा ॥

कुम्भः

## शुद्धजातिः

तद्ग्रहा तदपन्यासा तदंशा च यदा भवेत् ।
मन्द्रन्यासा च पूर्णा च शुद्धा जातिस्तथोच्यते ॥

मतङ्गः

## शुद्धनेरिः

शुद्धस्यैव पताकस्य विचित्रावर्तयोर्यदि ।
रथचक्रगतिर्यत्र विलम्बादादितालतः ।
शुद्धनेरिरसौ प्रोक्ता नटैर्नृत्तविचक्षणैः ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## शुद्धपद्धतिः

प्रबन्धे चापशामझे वाद्यमानेऽपि वादकैः ? ।
प्रक्षिपेद्रङ्गपीठान्तः पात्रं पुष्पाञ्जलिं यतः ॥
मध्ये रङ्गभुवं देवोऽधिष्ठितः कमलासनः ।
नृत्येदुपशमेनैव धात्रं हर्षसमन्वितं ॥
पादमाता च कथिता मलपाठस्थकाविति ।
रेङ्गिणी मुडकैरेभिः प्रबन्धैर्नियतक्रमैः ॥
क्रमैः स्वेच्छाकृतैर्यद्वा वाद्यमानैः समन्ततः ।
कोमलैर्विषमाङ्गैर्वाऽभयैर्वा नृत्तमाचरेत् ॥
अथ शुद्धप्रभेदैर्वा गीयमानैर्यदृच्छया ।
विविधं नर्तनं कृत्वा पात्रं त्यागं समाचरेत् ॥

शुद्धपद्धतिरित्युक्ता एका परवडिर्मता ।
जगदुः प्राक् प्रवेशेऽन्ये मद्दलस्य च वादने ॥
समहस्तादिभिः पादैः सर्वातोद्यैस्त्रिसमौ भवेत् ।
स्थानेन समपादेन प्रवेशं तन वक्ष्यते ॥

मोक्षदेवः

## शुद्धप्रहसनम्

शुद्धं च तदिह प्रोक्तं परिव्राड्तापसाश्रयं ।
सङ्कीर्णं च यदा बद्धं वेशचेटीविटादिभिः ।
मुखनिर्वहणे चात्र संज्ञितो यो मनीषिभिः ॥

शुभङ्करः

## शुद्धमेलाः

अन्तरे कथिता नैव सारी काकलिनि स्वरे ।
साङ्कर्यं जायते यस्मान्नानुकूल्यं भजेत्ततः ॥
अन्तरस्य स्वरस्यापि सूक्ष्माः काकलिनो ध्वनिः ।
विचार्यो विज्ञवर्येण पतादिषड्जमध्ययोः ॥
पतादिसमयोः सर्वैकैकश्रुतिवर्जिते ।
अन्तरः काकली स्यातां तयोः प्रतिनिधी च तौ ।
शुद्धमेला मया प्रोक्ता मध्यमेलाधुनोच्यते ॥

कुम्भः

## शुद्धसूडलक्षणम्

एलादिः शुद्ध इत्युक्तो ध्रुवादिः सालगो मतः ।

हम्मीरः

## शुद्धसूडमते तालभेदाः

हेलाकरणढेङ्केति वर्तिन्या घोम्बडेन च ।
लम्भरासैकृतालीभिः शुद्धसूडोऽष्टभिर्मतः ॥

कुम्भः

## शुष्कापकृष्टा

यत्र शुष्काक्षरैरेव ह्यपकृष्टा तु या ध्रुवा ।
यस्मादभिनयान् सूत्री प्रथमं ह्यभिसार्यते ।
तस्माच्छुष्कापकृष्टेयं जर्जरश्लोकदर्शिका ॥

कुम्भः

## शुष्कावकृष्टकलक्षणम्

नन गुर्वक्षराण्यादौ लघवः षड्गुरुत्रयम् ।
अष्टादशाक्षरात्मैकपादयोरियमिष्यते ॥

विप्रदासः

### शृङ्गारभेदाः

अन्योन्यालोकनाश्लेषचुम्बनादिविभेदतः।
अन्याभिलाषविरहेर्ष्याप्रवेशाख्यशापकैः॥

हेतुभिः पञ्चधा भिन्नो नायिकानायकस्तथा।
एतयोराश्रयः प्रोक्तो यथालक्षणलक्षितौ।
प्रकाश्यते तयोर्भेदः क्रमाच्छास्त्रानुसारतः॥

कुम्भः

### शृङ्गाररसः

सविलासाङ्गविक्षेपमधुराक्षरजल्पनैः।
स्वाङ्गेऽनुभूयमानैश्चानुभावैरेवमादिभिः॥

अनालस्यजुगुप्साद्यैर्भावैश्च व्यभिचारिभिः।
अभिव्यक्तोऽथ चित्तस्य चर्वणीयत्वमागतः॥

स्थायिभावो रतिर्नाम युवस्त्रीपुंसहेतुकः।
सम्भोगविप्रलम्भात्मा शृङ्गारो रस उच्यते॥

हम्मीरः

शृङ्गारः शुचिरुज्ज्वलः स्मरकला निर्वेदसंयोगतो
ह्यावार्थान् समुपद्यते निरुपमाद्भावात्सुखैकाश्रयः।
नारीनायकयोः परस्परभवत्संश्लेषविश्लेषजः
सम्भोगः स च विप्रलम्भ इति च द्वेधा समुत्कीर्तितः॥

भ्रूविक्षेपकटाक्षवीक्षणकलाश्वेदास्यरोमाञ्चितै-
रन्यैश्चापि विलासचेष्टितलयैरेषाडेभिनयो नटैः।
सम्भोगस्त्वथ विप्रलम्भनविधावश्रुप्रपातानना-
म्लेयस्य श्रवणोपतापिवचनक्ष्मातल्पसंसेवनैः॥

जगद्धरः

### शृङ्गाररसलक्षणम्

विभावैर्वरकान्ताद्यैः स्वकाले कविगुम्फितैः।
साक्षात्कारमिवाभीतैर्नटेन स्वप्रयोगतः।
नीतो रतिः स्थायिभावः सदस्य रसमीयताम्॥

हम्मीरः

### शृङ्गाररसानुभावाः

कान्ता दृष्टिः कटाक्षाख्यं तारकाकर्म शर्मकृत्।
चतुरे च भ्रुवो चारुगोचरा मधुरा गिरः॥

रोमाञ्चमुखरागादिलचितः सात्त्विकोत्करः।
अनुभावा भवन्त्येते शृङ्गाररसपोषिणः॥

हम्मीरः

### शृङ्गारादिरसेषु स्वराः

तत्र तु स्वरितोदात्तौ हास्यशृङ्गारयोर्मतौ।
उदात्तकम्पितौ योज्यौ वीरे रौद्रेऽद्भुते तथा॥

करुणे चापि बीभत्से तथा चैव भयानके।
रसेऽनुदात्तस्वरितकम्पितान् संप्रयोजयेत्॥

वेमभूपालः

### शृङ्गारेऽभिनयः

चारुलोचनलीलाभिर्भ्रूक्षेपैः कण्ठकादिभिः।
स्मितैरलक्ष्यदन्ताग्रैर्ललितैरङ्गहारकैः॥

एभिः सम्भोगशृङ्गारे द्रष्टव्याभिनये क्रिया।
शङ्काऽसूये मदे ग्लानिनिर्वेदैर्मूर्च्छनादिभिः॥

निद्रालज्जाविलापाद्यैरौत्सुक्योन्मादविस्मितैः।
विप्रलम्भाख्यशृङ्गारे कर्तव्योऽभिनयो बुधैः।
शृङ्गारद्विविधे चैवं भरतेऽभिनयः कृतः॥

जगद्धरः

### शेखरः

दशखण्डाभिधायादौ भिन्नभिन्नानुवाद्यकान्।
शेखराख्यो भवेद्वाद्यो रञ्जको भिन्नपाठकः॥

कुम्भः

### शैथिलगाढे

विशिष्टसन्धिराधेयः तथाऽन्ते दृढबन्धवान्।
प्रोक्तः शैथिलगाढोऽसौ निराधारः स उच्यते।
नापेक्षते वह्न्यादि यः स्वनिर्वाहसिद्धये॥

कुम्भः

### शैवम्

समस्थाङ्घ्रिस्तु सव्यस्य जानुशीर्षसमः परः।
उद्धृतो दक्षिणः पादः कुञ्चितं शैवमत्र तत्॥

कुम्भः

### शोकः

इष्टवस्तुवियोगेन या ह्यल्पा विकृतिर्भवेत्।
चेतसो भावतत्त्वज्ञैः स शोक इति संज्ञितः॥

### शोभा—पौरुषः

उत्साहे दक्षिता शाठ्यकुत्सानिन्द्येषु वस्तुषु।
स्वसागुणेपूत्तमेषु यत्र शोभेति सा मता॥

वेमभूपालः

## श्मश्रुकर्म

शुद्धं श्यामं विचित्रं च तथा पिङ्गलमेव तु ।
चतुर्धा श्मश्रुकर्म स्यात् पुनश्च त्रिविधं मतम् ।
श्मश्रुलं मध्यमं लिप्तं विनियोगस्य कथ्यते ॥

शुद्धं शुक्लं । श्यामं कालं । विचित्रं श्यामशबलम् । पिङ्गलं प्रसिद्धं । श्मश्रुलं दीर्घश्मश्रुयुक्तम् । मध्यमं च दीर्घं । लिप्तं चर्मलग्नम् ।

सङ्गीतनारायणे

## श्यामः

श्यामो यथार्थो विज्ञेयः बीभत्से च भयानके ।

कुम्भः

## श्यामश्मश्रुकाः

दिव्या ये पुरुषाश्चैव सिद्धविद्याधरादयः ।
पार्थिवाश्च कुमाराश्च ये च राजोपजीविनः ॥

शृङ्गारिणो ये च मर्त्या यौवनोन्मर्दिनश्च ये ।
श्यामं लिप्तं श्मश्रु तेषां भरतादिभिरीरितम् ॥

सङ्गीतनारायणे

## श्रीकण्ठः

लघुर्गुरुर्लघुद्वन्द्वं श्रीकण्ठे तु प्रतिष्ठितम् ।

कुम्भः

## श्रीकण्ठकवित्वर्णनम्

द्वारावत्याः समीपे नवनगरपुरे क्ष्मापितः पूर्वभागे
जामिः श्रीशत्रुशल्यः सकलजनमनोरञ्जकः पुण्यराशिः ।
श्रीकण्ठस्तत्सभायां कविरमलमतिर्विद्यते विप्रवर्य-
स्तेन प्रौढप्रमेयव्यतिकरसुभगं रच्यते काव्यमेतत् ॥

## श्रीकण्ठीभाषा

धैवतांशग्रहन्यासा त्यक्तपा धैवतालिपका ।
गतारमन्द्रधा चापन्यासेनर्षभभाषिता ॥

श्रीकण्ठी भिन्नषड्जोत्था भवेदुत्कण्ठिते जने ।
याष्टिकः पुनराचष्ट रिलोपात् षाडवामिमाम् ॥

श्रीकान्यकुब्जकाश्मीरदेश्यौ पञ्चममध्यमौ ।
महाराष्ट्रचोलदेश्यौ स्वरावृषभधैवतौ ॥

गान्धारश्च निषादश्च गौडनेपालदेशगौ ।
षड्ज उत्तरदेशीयः स्वरो देशा अमी मताः ॥

ऋचुर्गीतविदश्शाखां माध्वीमृषभषड्जयोः ।
गान्धारमध्ययोश्शाखश्शस्तो माध्यंदिनी विदुः ॥

मध्यमो धैवतश्चैतौ स्वरौ कौथुमशाखिनौ ।
काण्वशाखा निषादस्य स्वरशाखाः क्रमादमूः ॥

षड्जो द्वादशवर्षस्स्यादृषभः षोडश द्विकः ।
क्षुरकर्मणि षड्जस्स्यादृषभो ध्यानिकर्मणि ॥

गान्धारदेशसत्कारे स्वरकर्मणि मध्यमः ।
उत्सवे पञ्चमो ज्ञेयः क्षात्रकर्मणि धैवतः ।
विनोदकर्मणि बुधैः निषादः कथितस्स्वरः ॥

## श्रीशङ्कुकमतम्

वासनाभावितस्वीयकार्यप्रकटनेन च ।
विभावाद्यैर्नटेनैवोद्भासितैरनुमापितः ॥

रसनीयत्वमासाद्य लक्षण्यात्परस्य च ।
संभाव्यमानो रत्यादि स्थायित्वेन तदा त्विह ॥

असन्नपि प्रेक्षकाणां चर्व्यमाणो रसः स्मृतः ।
इति श्रीशङ्कुकाचार्यो रसव्यक्तिं न्यवेदयत् ॥

कुम्भः

## श्रीहनुमन्मतम्

भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा ।
श्रीरागो मेघरागश्च षडेते पुरुषाः स्मृताः ॥

मध्यमादिर्भैरवी च वङ्गाली च वराटिका ।
सैन्धवी च पुनर्ज्ञेया भैरवस्य वराङ्गनाः ॥

तोडी खम्भावती गौरी गुणक्री ककुभा तथा ।
रागिण्यो रागराजस्य कौशिकस्य वराङ्गनाः ॥

वेलावली रामकरी देशाख्यापटमञ्जरी ।
ललिता सहिता एता हिन्दोलस्य वराङ्गनाः ॥

केदारी कानडादेशी कावोदी नाटिका पुनः ।
दीपकस्य प्रियाः पञ्च ख्याता रागविशारदैः ॥

वसन्ती मालवी चैव मालश्रीश्च धनाश्रिका ।
असावरी च विज्ञेयाः श्रीरागस्य वराङ्गनाः ॥

मल्लारी देसकारी च भूपाली गुर्जरी तथा ।
टक्कश्च पञ्चमी भार्या मेघरागस्य योषितः ॥

सङ्गीतदर्पणः

हृद्यूर्ध्वधमनीस्यूता नाड्यो द्वाविंशतिस्थिताः ।
तिरश्च्यो जनयन्त्येतान् ध्वनीन् वायुताडिता ॥

नादस्य भेदास्ते ज्ञेयाः श्रवणाच्छ्रुतयो मताः ।
मन्द्रादिस्थानसंभूताः समकालनियन्त्रिताः ॥

द्विगुणः किल मानेन पूर्वः स्यादुत्तरोत्तरः ।
हृदूर्ध्वधमनीरयूता नाड्यो द्वाविंशतिस्थिताः ॥

श्रुतिभ्यो जायमानो यः स्वनोऽनुरणनात्मकः ।
रञ्जयन्मानसं श्रोतुः स स्वरो गीयते बुधैः ॥

आद्याक्षरैस्सरिगमपधनीतिक्रमोदितैः ।
अन्यापि दृश्यते संज्ञा स्वराणां प्राक्तनैः कृताः ॥

चतुर्ध्यादिश्रुतिः पूर्वपूर्वश्रुत्युपबृंहिताः ।
स्वराणां कारणमिति न पूर्वासामहेतुता ॥

## श्रुतयः

विवक्ष्यमाणः पुरुषः प्राक्प्रेरयति मानसम् ।
मनः कायगतिं वह्निं हन्त्यसौ प्राणमारुतम् ।
ब्रह्मग्रन्थिस्थितं सोऽस्माद्गच्छन्नूर्ध्वपदे क्रमात् ॥

## श्रुतिः

श्रु श्रवणे चास्य धातोः क्तिप्रत्ययसमुद्भवः ।
श्रुतिशब्दः प्रसाद्ध्योऽयं शब्दज्ञैर्भावसाधनः ॥

श्रवणेन्द्रियग्राह्यत्वात् ध्वनिरेव श्रुतिर्भवेत् ।
सा चैकापि द्विधा ज्ञेया स्वरान्तरविभागतः ॥

नियतश्रुतिसंस्थानात् गीयन्ते सप्त गीतिषु ।
तस्मात् स्वरगता ज्ञेयाः श्रुतयः श्रुतिवेदिभिः ॥

अन्तः श्रुतिविवर्तिन्यो ह्यन्तरश्रुतयो मताः ।
एतासामपि वैश्वर्यं क्रियाग्रामविभागतः ॥

मतङ्गः

## श्रुतितादात्म्यादिविकल्पः

तादात्म्यं च विवर्तत्वं कार्यत्वं परिणामिता ।
अभिव्यञ्जकता चापि श्रुतीनां परिकथ्यते ॥

विशेषस्पर्शशून्यत्वात् श्रवणेन्द्रियग्राह्यता ।
स्वरश्रुत्योस्तु तादात्म्यं जातिव्यक्त्योरिवानयोः ॥

नराणां च मुखं यद्वत् दर्पणे तु विवर्तितम् ।
प्रतिभाति स्वरस्तद्वत् श्रुतिष्वेव विवर्तितः ॥

श्रुतीनां श्रुतिकार्यत्वमिति केचिद्वदन्ति हि ।
मृत्पिण्डदण्डकार्यत्वं घटस्येह यथा भवेत् ॥

श्रुतयः स्वररूपेण परिणमन्ति न संशयः ।
परिणमेत् यथा क्षीरं दधिरूपेण सर्वथा ॥

षड्जादयः स्वराः सप्त व्यज्यन्ते श्रुतिभिः सदा ।
अन्धकारस्थिता यद्वत् प्रदीपेन घटादयः ॥

इति तावन्मया प्रोक्तं श्रुतीनां च विकल्पनम् ।
इदानीं संप्रवक्ष्यामि विकल्पस्य च दूषणम् ॥

भेदः स्वरलक्षणतः सामान्येनान्यवस्तुवत् सिद्धः ।
तद्धि विशेषैः शून्यं भवति नभः शष्पसङ्काशम् ॥

नानाबुद्धिप्रसाद्ध्यत्वात् स्वरश्रुत्योस्तु भिन्नता ।
आश्रयाश्रयिभेदाच्च तादात्म्यं नैव सिद्ध्यति ॥

यदभाणि विवर्तत्वं श्रुतीनां तदसङ्गतम् ।
विवर्तत्वे स्वराणां हि भ्रान्तिज्ञानं प्रसज्यते ॥

कार्यकारणभावस्तु स्वरश्रुत्योर्न सम्भवेत् ।
श्रुतीनामिह सद्भावे प्रमाणं नैव विद्यते ॥

मतङ्गः

## श्रुतिभेदाः

मन्द्रा चैवानुमन्द्रा च घोरा घोरतरा तथा ।
मण्डला च तथा साम्या ससिनापुष्करा तथा ? ॥

शंकिनी चैव नीला च उत्फुल्ला चानुनासिका ।
घोषावती कीरनादा आवर्तिन्यपि चापरा ॥

रणवा चैव गम्भीरा दीर्घतारा अतिनादिनी ? ।
(मं) व्रजानुप्रसन्ना च ननवामन्द्रसप्तके ॥

नादान्ता निष्कला गूढा सकला मधुरा तथा ।
एकाक्षरा भृङ्गजातिरजनीसुरशीर्षका ॥

पूर्णालङ्कारिणी चैव वासिका वैनिका तथा ।
त्रिस्थाना सुस्वरा सौम्या भाषाङ्गी वार्तिका तथा ॥

संपूर्णा च प्रसन्ना च सर्वव्यापिनिका तथा ।
द्वाविंशतिसमाख्याता श्रुतयो मध्यसप्तके ॥

ईश्वरी चैव कौमारी सवराकी तथा परा ।
भोगादित्या मनोरामा सुस्निग्धा च तथाऽपरा ॥

दिव्यदेहानुललिता विभ्रामा च तथाऽपरा ।
महाकाली शङ्किनी च कालजावा तथापरा ॥

रामसूक्ष्मातिसूक्ष्मा च पुष्टा चैव सुपुष्टिका ।
विस्पष्टा काकली चैव कराली च तथाऽपरा ।
विस्फोटान्तर्भेदिनी च इत्येतास्तारसप्तके ॥

सङ्गीतसूर्योदये

नामिकाधर्वणी घस्त्रा चतुर्येति च कंबली ।
अविका सरली नाली रसनी रञ्जनी तथा ॥

प्राणिनी पधनी मन्दा मौर्घावी कम्बिभाषिणी।
स्वरन्तीति तथा प्रोक्ता अष्टादश श्रुतिस्मृताः ॥

नाभिकाघर्षणीधस्ताः षड्जस्वरसमाश्रिताः।
चतुर्घातिचधा चैव ऋषभस्वरमाश्रिते ॥

कम्बली श्रविका नाली गान्धारं सरलीति च।
रसनी रञ्जनी चैव मध्यमस्वरमाश्रिते ॥

प्राणिनी पधनी मन्दा पञ्चमस्वरमाश्रिताः।
मौर्धावी कम्बिनी चैव धैवतस्वरमाश्रिते।
भाषिणी च स्वरन्ती च निषादस्वरमाश्रिते ॥

भरतकल्पलता

## श्रुतिशब्दनिष्पत्तिः

श्रुश्रवणे चास्य धातोः क्तिप्रत्यये सुसङ्गते।
श्रुतिशब्दः प्रसाध्योऽयं शब्दज्ञैर्भावसाधने ॥

कुम्भः

## श्लक्ष्णगुणः

नीचोच्चं द्रुतमध्यादौ नूतनं श्लक्ष्णमुच्यते।

भरतकल्पलता

## श्वशुरहस्तः

पताकस्य पृष्ठभागस्तिर्यक् चैव प्रदर्शितः।
श्वशुरार्थे नियुज्येत नन्दिना परिकीर्तितः ॥

भरतकल्पलता

## श्वश्रूहस्तः

पताकमुदरे कृत्वा वामे चाप्यलपद्मकम्।
श्वश्रवां च परियुज्येत कथितो भरतादिभिः ॥

भरतकल्पलता

## श्वसितम्

अधस्तादङ्गुलं सस्तं श्वसितं वीक्षितेऽद्भुते ॥

कुम्भः

## श्लिष्टकर्तरी—नवसंख्याहस्तः

कर्तरी मुखहस्ते तु मध्यमाङ्गुष्ठमेव च।
मध्यमा तर्जनी मध्यं श्लिष्टं चेत् श्लिष्टकर्तरी।
बुधार्थे नवसंख्यायां कथ्यते श्लिष्टकर्तरी ॥

शृङ्गारशेखरः

# ष

## षट्काकुलक्षणम्

श्रुतिन्यूनाधिकतया रागस्वरस्य कस्य चित्।
या कृत्वा दृश्यते तां तु स्वरकाकुं जगुर्बुधाः ॥

या रागस्य निजां छायां रागकाकुं तु तां विदुः।
रागे रागान्तरछाया काकुः स्यादन्यरागजा ॥

देशछायोद्भवा रागे देशकाकुर्निगद्यते।
रागस्योत्पत्तिभूः क्षेत्रं शरीरं जगदुर्बुधाः ॥

तस्यैवानुकृतित्वाच्च क्षेत्रकाकुरिति स्मृता।
वीणावंशादियन्त्रोत्था यन्त्रकाकुः स्मृता बुधैः ॥

मोक्षदेवः

## षट्तालः—तालः

षट्तालसंज्ञके ताले द्रुतषट्कं निरन्तरम्।
० ० ० ० ० ०

कुम्भः

## षड्जकपालम्

यत्र स्यात्पञ्चमो न्यासो बहू मध्यमधैवतौ।
गान्धारर्षभकावल्पौ तरां तद्वैवती भुवम्।
षाड्ज्या इह कपालिकं कपालं समुदीरितम् ॥

कुम्भः

## षड्जकपालः

व्याघ्रचामरभूपालकुलालङ्करणं विभुः।
शुद्धजातिभुवां लक्ष्म कपालानां ब्रवीत्यथ ॥

यया जन्यते जात्या कपालं तत्र चेष्यते।
रागस्तज्जातिवद्येषा राजराजस्य संमतिः ॥

यस्मिन्नंशो ग्रहष्षड्जोपन्यासश्च तथा बहू।
गान्धारपञ्चमौ चाथ निषादर्षभधैवताः ॥

पञ्चमश्चाल्पकालंस्य ऋषभश्च तथोदितः।
कला द्वादशसंख्याका गान्धारे न्यसनं तथा ॥

षाड्ज्या जातेः कपालं तत् ब्रवीति स्वरकोविदः।
अन्याऽथ प्रोच्यते राज्ञा ब्रह्मप्रोक्ता पदावलिः ॥

कुम्भः

## षड्जग्रामः

षड्जग्रामः पञ्चमश्च धैवतश्च श्रुतिक्रमात्।
मध्यमः पञ्चमः शुद्धषड्जसंवादिरुच्यते ॥

संगीतमकरन्दः

त्रिस्रो द्वे च चतस्रश्च चतस्रस्तिस्र एव च।
द्वे चतस्रश्च षड्जाख्ये ग्रामे श्रुतिनिदर्शनम् ॥
नाट्यशास्त्रे

## षड्जश्रुतिनिर्देशः

दक्षिणेनालपद्मेन वामेन चतुरेण तु।
परिमण्डलितेनाथ मयूरललितेन च।
एवं विनिर्दिशेत्षड्जं कोविदो नाट्यनृत्तयोः ॥

## षड्जसाधारणम्

एवं काकल्यन्तरौ द्वौ षड्जग्रामे यदा तदा।
षड्जसाधारणं प्रोक्तं भरतज्ञेन भूभुजा ॥
तथैवान्तरकाकल्याख्यौ मध्यमगतौ यदि।
तदा मध्यमपूर्वं स्यात्साधारणमिह स्फुटम् ॥
कुम्भः

## षड्जस्वरोत्पत्तिः

सर्वसन्धिषु जायन्ते क्रमात् षड्जादयः स्वराः।
कण्ठोरुस्तालुनासाभ्यो जिह्वया दशनादपि।
षड्जस्संजायते तेन षड्जस्वर इहोच्यते ॥

## षड्जादिस्वराभिनयः

दक्षिणेनालपद्मेन वामेन चतुरेण च।
परिमण्डलितेनाथ मयूरललितेन च ॥
वीराख्यया तथा दृष्ट्या शिरसोद्वाहितेन च।
एवं विनिर्दिशेत्षड्जं कोविदो नाट्यनृत्तयोः ॥
अशोकः

## षड्जादिस्वरादिनिर्णयः

मयूरचातकौ छागक्रौञ्चौ कोकिलदर्दुरौ।
गजश्च षड्जप्रमुखाननुवदन्ति क्रमात्स्वरान्।
षड्जमध्यमगान्धाराः स्युर्देवकुलसंभवाः ॥

## षष्ठं पताकम्

अधो मकरमाधाय हस्ताभ्यां यत्र नृत्यति।
सप्लुतैश्चरणाभ्यासैर्भेदः षष्ठोऽयमीरितः ॥
कुम्भः

## षाडवा, ओडुविता, धारिणी

सा पूर्णा तत्र विज्ञेया गीयते सप्तभिः स्वरैः।
या गीयते स्वरैः षड्भिः षाडवां तां प्रचक्षते ।
ओडुविता तथाऽऽख्याता पञ्चभिर्गीयते स्वरैः।
काकल्यन्तरसंयुक्ता ज्ञेया सा धारिणीति सा ॥
कुम्भः

## षिद्गकः

सदस्याः समक्षं भर्त्तुर्यदुद्धतं नृत्तमुच्यते।
मसृणं च क्वचिद्धूर्तचरितं षिद्गकश्च सः ॥
(अत्राल्पसुकुमारमुद्धतप्रचुरं नृत्तं प्रविधातव्यम्)
वेमः

# स

## सकलनिष्कलवाद्यम्

सकलं निष्कलं चेति द्विविधं वाद्यमीरितम्।
एकतन्त्र्यास्त्वयं भेदः कथितश्शंभुना पुरा ॥
जीवालग्ना प्रकर्तव्या यथा नादोऽभिजायते।
स्थूलो ध्वनिर्भवेद्यत्र वाद्यं तत् सकलं भवेत् ॥
कलाहीना प्रकर्तव्या बिन्दोरुत्पातहेतवे।
तर्जनीमूलसंलग्ना तन्त्रीवै निष्कलं भवेत् ॥
सोमेश्वरः

## सङ्कीर्णं

सङ्कीर्णं तद्भवेन्नित्यं यदेतत्त्रयसङ्करात्। कुम्भः

## सङ्कीर्णनेरिः

असंयुतैस्संयुतैश्च नृत्तहस्तैस्तथैव च।
सङ्कीर्णनेरिं तं प्राहुः नृत्तं नृत्तविशारदाः ॥
संयुतासंयुतैर्यत्र हस्तश्चातिमनोरमः।
सङ्कीर्णनेरिरुक्तः स्यादादितालश्च तद्वये ॥
सङ्गीतमुक्तावली देवेन्द्रकृता

## सङ्घोटना

गुरुणी लघून्यष्टौ दीर्घे द्विगुणं तथा च कर्तव्यम्।
लघुदीर्घे लघु च पुनश्चतुर्गुणं संप्रकर्तव्यम् ॥
पुनरष्टौ ह्रस्वानि स्युरिह तथा नैधनं च कर्तव्यम्।
संघोटनवस्तुविधौ ह्रस्वगुरुविधिः समुद्दिष्टः ॥
नाट्यशास्त्रे

## संक्षिप्तकः

अन्वर्थकल्पसंयुक्तो बहुपुस्तवचोयुतः।
संक्षिप्तवस्तुविषयो ज्ञेयः संक्षिप्तको बुधैः ॥
कुम्भः

## संख्यानियमेऽपवादः

शुद्धसालगसङ्कीर्णैर्धातुमातुविचारतः ।
देशभाषाविशेषैश्च रागसंख्या न विद्यते ॥

शुभङ्करः

## सङ्करजातयः

षड्जाया मध्यमायाश्च संसर्गात् षड्जमध्यमा ।
षड्जायाश्चैव गान्धार्या जायते षड्जकैशिकी ॥

तयोरेव सधैवत्योः षड्जोदीच्यवती भवेत् ।
आसां समध्यमानां तु गान्धारोदीच्यवा भवेत् ॥

गान्धार्या मध्यमायाश्च पञ्चम्याश्चैव सङ्करात् ।
सधैवतानामासां तु मध्यमोदीच्यवा भवेत् ॥

आसां स्यात् रक्तगान्धारी नैषादी चेच्चतुर्थिका ।
आर्षभ्यास्तु भवेदान्ध्री गान्धार्याश्चैव सङ्करात् ॥

अनयोस्तु सपञ्चम्योर्नन्दयन्ती प्रजायते ।
सनिषादा स्वगान्धार्योः कुर्युः कार्मारवीमिमाम् ॥

गान्धारी पञ्चमी चैव तथा गान्धारपञ्चमी ।
आर्षभी धैवती वर्ज्याः कैशिकीमिति सङ्करः ॥

मतङ्गः

## सङ्गीतप्रशंसा

अणोरणीयान् महतो महीयान् सोऽयं ध्वनिः स्वरग्राममूर्छनाः । तानः श्रुतिमयं ब्रह्माहं तस्मान्मनोऽयं भवति सोऽमृतत्वं गच्छति इति गन्धर्वोपनिषदि । रामार्चनचन्द्रिकायां गीतनृत्तादित्यानि कुर्वीत द्विजोदेवाम्रितुष्टये । भारते तु—

नृत्यगीते तु यः कुर्यात् विप्रः स्वाभाविकेऽपि च ।
स्वाभाविकोऽपि भगवान् प्रीणातीत्याह शौनकः ॥

पञ्चमसारसंहितायां—

सङ्गीतकेन रम्येण सुखं यस्य न चेतसि ।
मनुष्यवृषभो लोके विधिनैव स वञ्चितः ॥

यो वित्तलोभेन सुखेन वापि शाठ्येन रागायति गीतमात्रम् ।
सञ्जायते वर्षसहस्रमीशपूरः सदा सर्वगणाग्रणीशः ॥

सङ्गीतविद्यां मुरलीं स्वयं कृष्णो हि सेवते ।
शम्भुना गीयते गीतं नारदेन महात्मना ॥

अन्ये च योगिनः सर्वे संगीतयोगतत्पराः ।
तस्मात्सर्वप्रयत्नेन गानयोगं समभ्यसेत् ॥

भरतसंहितायां—

संसारदुःखदग्धानां उत्तमानामनुग्रहात् ।
प्रभुणा शङ्करेणात्र गीतविद्या प्रकाशिता ॥

गीतं पीनपयोधरा समदना वापी विचित्रा कथा
रम्यं हर्म्यतलं सुधांशुकिरणप्रोद्दीपिता यामिनी ।
चित्तज्ञाः सुहृदः सतां सुमनसो भक्ताः पुनः सेवकाः
शुद्धं गीतफलं कवित्वमतुलं संसारसारा मताः ॥

सङ्गीतसारः

## सङ्गीतरत्नाकरे स्वरलक्षणम्

श्रुत्यनन्तरभावी यः स्निग्धोऽनुरणनात्मकः ।
स्वतो रञ्जयति श्रोतृचित्तं स स्वर उच्यते ।
सुव्यक्तमेव वीणायामस्यार्थस्य निदर्शनम् ॥

हम्मीरः

## सङ्गीतलक्षणम्

सुस्वरं सरसं चैव सुरागं मधुराक्षरम् ।
सालङ्कारप्रमाणं च षड्विधं गीतलक्षणम् ॥

गान्धर्ववेदे

## सङ्गीतस्याङ्गानि

अङ्गानि तस्य सप्त स्युः सभा सभ्यः सभापतिः ।
उपाध्यायो गायकाश्च वादका नर्तकी तथा ॥

सोमराजदेवः

## सङ्घातः

सर्वाङ्गुल्यग्रघातश्च सर्वाङ्गुलिविवर्तनम् ।
यस्य निःपादकं सोऽत्र संघातः कथितो यथा ।
दरगिड दरगिड दिदोणकिटमटटकुसं भ्रान्तः ॥

कुम्भः

## सञ्चः—पाटः

सञ्चो विच्छुरितश्चेति पाटावलगसंज्ञकौ ।
अर्धाङ्गुल्यग्रघातेन तत्र सञ्चः प्रजायते ॥
यथा—थुकर थुकरगिण णगि ।

कुम्भः

स्कन्धस्य मणिबन्धस्य कूर्पराङ्गुष्ठयोस्तथा ।
वामस्य चरणस्यापि कम्पनं सञ्च उच्यते ॥

कुम्भः

### सञ्चारी

मन्द्रे च मध्यमे तारे सञ्चारीति स्वरः स्फुटम् ।

भरतकल्पलता

### सञ्चारिणः

अथ सञ्चारिजान्भूयः कीर्त्यमानान्निबोधत ।
मन्द्रस्तथा प्रसन्नादिर्बिन्दुः प्रेङ्खोलितस्तथा ॥

संनिवृत्तप्रवृत्तश्च रेचितः कम्पितः स यः ।
कुहरश्चैव वेणुश्च रञ्जितो ह्यवलोकितः ।
आवर्तितपरावृत्तौ ज्ञेयाः सञ्चारिणस्तथा ॥

नाट्यशास्त्रे

### सञ्चारिता

यदान्येनाङ्घ्रिणान्योऽङ्घ्रिरुत्क्षिप्योत्क्षिप्य कुञ्चितः ।
युज्यते तिर्यगन्यस्तु सर्पन् सञ्चारिता तदा ॥

कुम्भः

### सजीवलक्षणम्—(आहार्याभिनयः)

सजीवं प्राणिनां रङ्गे प्रवेशः परिकीर्तितः ।
द्विचतुश्चरणौ पादरहितश्चेति स त्रिधा ॥

द्विपादस्तत्र विज्ञेयो देवमानुषपक्षिणः ।
चतुष्पादस्तु पशवः पादहीना भुजङ्गमाः ॥

नृत्तरत्नावली

### सञ्जीवः—(प्रवेशः)

प्रवेशः प्राणिनां नाट्ये सञ्जीव इति कथ्यते ।
भृत्यहस्तितुरङ्गाद्या मुख्यपात्रोपकारकाः ।
नाट्ये प्रवेशयोग्याश्च प्राणिनस्त्वत्र संमताः ॥

वेमभूपालः

### सत्कृतं

शीतक्लेशे प्राह्णवायौ शब्दानुकरणेऽपि च ।
नखक्षते मृगाक्षीणां निर्दयाधरखण्डने ॥

कुम्भः

### सत्त्वलक्षणम्

अव्यक्तमयसत्त्वं च रसभावसमाश्रयम् ।
रोमाञ्चाश्रुप्रभृतिभिर्भेदैर्बोद्धव्यमञ्जसा ।
तस्मात्सत्त्वमिदं प्रोक्तं तज्ज्ञैर्नाट्यस्य जीवितम् ॥

वेमभूपालः

### सन्दष्टः—गायकः

सन्दष्टदशनोष्ठो यः सन्दष्टः परिकीर्तितः ।

भरतकल्पलता

### सन्दिग्धस्वरलक्षणम्

सन्दिग्धलक्षणं यत्र पदसन्दिग्धमुच्यते ।

भरतकल्पलता

### सन्देशहारकः—(दूतः)

सन्देशं हरते यस्तु यावद्वाचिकमात्रकम् ।
नापरं किमपेक्ष्येत तस्मात्सन्देशहारकः ॥

यथोक्तं यो वदत्यर्थं समासादुभयोर्वशे ।
कार्यजाते मुनीन्द्रेण प्रोक्तः सन्देशहारकः ॥

शुभङ्करः

### सन्दंशः

अरालस्य यदाङ्गुष्ठतर्जन्यग्रौ सुसङ्गतौ ।
तलमध्यो मनाङ्निम्नः स सन्दंशाभिधः करः ॥

अग्रजो मुखजश्चैव पार्श्वजश्चेत्ययं त्रिधा ।
प्राङ्मुखोऽग्रज इत्युक्तः संमुखो मुखजो मतः ॥

पार्श्वजः स्यात्पार्श्वमुखस्त्रयाणां कर्म कथ्यते ।
सूक्ष्मे प्रसूनावचये कण्ठकोद्धरणे तथा ॥

कुसुमोद्धरणे वृन्तादग्रसन्दंश इष्यते ।
वर्त्यञ्जनशलाकादिपूरणेष्वग्रजो मतः ॥

पुष्पाणां ग्रथने केशपर्णसूत्रग्रहेषु च ।
वस्त्रान्तालम्बनश्चैव मुखसन्दंश इष्यते ॥

धारणे यज्ञसूत्रस्य गुणनिक्षेपणे तथा ।
मणिमुक्ताप्रवालानां छेदेन तत्त्वभाषणे ॥

चित्रकर्मण्यलक्तादिनिःपीडादौ च पार्श्वजः ।
पार्श्वाभिमुखहस्ताभ्यां निर्धनत्वनिरूपणम् ॥

विप्रदासः

### सन्निपातः—कलामानम्

उभयोर्हस्तयोः पातः सन्निपात इति स्मृतः ।

दत्तिलः

### सन्निपाताः

चत्वारः सन्निपाताः स्युः प्रावेशिक्यां प्रकीर्तिताः ।
शेषाः प्रत्येकमाख्याताः सन्निपातद्वयान्विताः ।

अधिकाः सन्निपाताः षट्शीर्षक्यां परिकीर्तिताः ॥

वेमभूपालः

## सप्तविधस्वरयोगनामानि

आर्चिकं, गाथिकं, सामिकं, स्वरान्तरं, औडुवं, षाडवं, संपूर्णं चेति ।

मतङ्गः

## सभापतिः

पात्रापात्रविवेकज्ञः प्रसन्नः कीर्तिलोलुपः ।
गम्भीरभावो वाग्मी च तूर्यत्रितयकोविदः ॥

कलाकलापकुशलश्चतुरश्च बहुश्रुतः ।
प्राज्ञो गुणलवस्यापि ग्राहको रसिकस्तथा ।
भावको धारणे युक्तः सभापतिरुदाहृतः ॥

वेमभूपालः

## सभापतयः

शश्वद्राजकुलोद्भवाः सुनिपुणा नित्यानुरक्ता नृपे
नो भिन्ना न च संहिता परिगतान्योन्यानुरागस्पृहाः ।
स्पर्धाबन्धमनोहरा परिगतानेकाङ्गविद्योद्धुरा-
स्तिष्ठेयुः परितोऽस्य रक्षणविधावुद्यत्समस्तायुधाः ॥

कुम्भः

## सभापतिस्वरूपम्

राजा युत्तमनायकप्रतिनिधिः स्वस्थः कुलीनो युवा
पात्रापात्रविशेषवित्स्थिरतरप्रेमा कलाकोविदः ।
गीतज्ञः सकलागमार्थनिपुणो विद्वत्प्रियः सत्यवान्
स्वाधीनाखिलसेवको बहुधनोऽभीष्टार्थदानोद्धुरः ॥

रूपेण स्मरचित्रविद्गुणगणग्राही कृतज्ञो गुणी
धर्मिष्ठो रसभावविज्जनमनोहारी सुवेषः सुखी ।
शृङ्गारी बहुदोऽनपेक्ष्यविभवः कीर्तिप्रियः कामुकः
प्रायौचित्यविशेषविच्छुचिमतां प्रोक्तस्सभाधीश्वरः ॥

कुम्भः

## सभापतिस्थानम्

पुरतो रङ्गपीठस्य मध्यपङ्क्तौ सुलोष्टके ।
पञ्चमे वाथ षष्ठे वा स्थानं कार्यं सभापतेः ॥

कुम्भः

## सभालक्षणम्

क्रमेण लक्षणं तेषां संक्षेपेणाभिधीयते ।
सम्यक् प्रणीतमालोक्य मतङ्गादिमहर्षिभिः ॥

चारुचन्द्रोदयेऽनल्पपुष्पप्रकरशोभिते ।
कर्पूरागुरुकस्तूरीधूपदीपाधिवासिते ॥

राज्यलक्ष्मीविलासैकस्थानमास्थानमण्डपे ।
न्यसेत्सिंहासनं राज्ञः प्राङ्मुखं वाप्युदङ्मुखम् ॥

तस्मिन्नुपविशेद्राजा राज्ञी तस्याथ वामतः ।
तिष्ठेदुभयतस्तं च चामरग्राहिणीद्वयम् ॥

पार्श्वयोश्च विलासिन्यो दक्षिणे मन्त्रिमण्डलम् ।
मन्त्र्याद्या मण्डलाधीशाः प्रधानानि तु पृष्ठतः ॥

तिष्ठेयुर्दक्षिणे पार्श्वे विद्वांसः कवयोऽपि च ।
वामे वाग्गेयकाराद्या निषीदन्ति महीपतेः ॥

परमण्डलिनः पश्चात्तत्पृष्ठे मागधादयः ।
गान्धर्ववृन्दं पुरतः पाश्चात्यामङ्गरक्षकाः ॥

प्रतीहाराः पुनर्द्वारे सुभटाः पार्श्वयोर्द्वयोः ।
यथौचित्यमथान्यापि निविशेरन् सभोचिताः ॥

पृष्ठभागं परित्यज्य द्वारं कुर्याद्यदृच्छया ।
इत्थं भवति भूपानां सभोद्भैः संवृतायता ॥

सोमराजदेवः

चारुचन्द्रोदये तल्पे पुष्पप्रकरसुन्दरे ।
कर्पूरागरुकस्तूरिधूपधूमादिवासिते ॥

राज्यलक्ष्मीविलासैकस्थाने श्रीरङ्गमण्डपे ।
न्यसेत्सिंहासनं राज्ञः प्राङ्मुखं वाप्युदङ्मुखम् ॥

तस्मिन्नुपविशेद्राजा राज्ञी तस्याथ वामतः ।
तिष्ठेयुर्दक्षिणे पार्श्वे विद्वांसः कवयोऽपि च ॥

वामे वाग्गेयकाराश्च निषीदन्ति महीपतेः ।
परिमण्डलिनः पश्चात्तत्पृष्ठेमागधादयः ॥

गन्धर्ववृन्दं पुरतः परिधावङ्गरक्षकाः ।
प्रतीहारा पुनर्द्वारे सुभगाः पार्श्वयोर्द्वयोः ॥

यथोचित्यमथान्येऽपि तिष्ठेयुर्ये विचक्षणाः ।
विलासिनो विलासिन्यः परितोऽन्तःपुरस्य च ॥

पुरतोऽपि नृपस्य स्युः पृष्ठभागेऽपि भूपतेः ।
चारुचामरधारिण्यो रूपयौवनसंभृताः ॥

स्वकङ्कणझणत्कारनिर्वाणजनमानसाः ।
पृष्ठभागं परित्यज्य द्वारं कुर्याद्यदृच्छया ॥

सन्निवेश्य सभामेवं राजा सङ्गीतमीक्षते ।
सा सभा यत्र सङ्गीतं सा सभा यत्र पण्डिताः ।
सा सभा यत्र शास्त्राणां कथानादविजृम्भणम् ॥ हम्मीरः

## सभासदः

अध्वस्ताः सावधानाश्च वाग्मने न्यायवादिनः।
अगर्वा रसभावज्ञाः तौर्यत्रितयकोविदाः ॥

दृष्टिवात्रृटितामिज्ञा असदादिनिषेधकाः।
सानन्दा रसभावज्ञा गुम्पिनस्स्युः सभासदः ॥

सङ्गीतनारायणे

## सभ्याः

मध्यस्था वाग्मिनश्चैव तूर्यत्रितयवेदिनः।
उचितानुचिताभिज्ञा रसभावविवेचकाः।
सुमुखाः सावधानाश्च सभ्यास्तज्ज्ञैरुदीरिताः ॥

वेमभूपालः

## समः

समाद्या वायवोऽन्यार्थसमानः किन्तु कथ्यते।
विनियोगः समो ज्ञेयः सहजे कर्मणि स्थितः ॥

कुम्भः

## समकर्तरी—हस्तपाटः

समघातात्कर्तरीभ्यां कराभ्यां समकर्तरी।
ढनकिट वनरकिटंकिट झें थो दिगिदतिरिटिरिकिट।

कुम्भः

## समग्रहः—हस्तपाटः

सममेव तलाभ्यां वै करयोः पुटघातनम्।
समग्रहं परेऽप्याहुर्व्यङ्गुष्ठाङ्गुलिके तले ॥

तकट तकट।

कुम्भः

## समनखः—पाटः

यत्राङ्गुलीनखाघातैर्दृश्यते समता बुधैः।

पाटवर्णसमा हस्तपाटाः समनखस्तु सः ॥

यथा—

हरहरतरकिटिधि कणट तकिधिकिधिकि दर न न गिरगि।

कुम्भः

## समनखस्य विनियोगः

नृत्यप्रवेशनारम्भे विनियोगोऽस्य संमतः।
भयादिविषये प्रोक्तो विचारविमुखैः परैः ॥

प्रलम्बिताविति प्रोक्तौ भरतेनात्र यौ करौ।
तौ डोलाविति मन्यन्ते यत्र केचिन्न सांप्रतम्।
शोकैकविषयावेताविति मन्यामहे वयम् ॥

नृत्तरत्नावली

## समपाणिः—हस्तपाटः

अङ्गुष्ठाङ्गुलिसंहत्या पीडयेतां करौ यदा।
युगपत्पुटयोर्द्वन्द्वं समपाणिस्तदा मतः ॥

दां गिड गिडदां दां।

कुम्भः

## —पाटः

समपाणिश्च विश्रान्तविरलाङ्गुलिघातनम्।

यथा—

नन गिन गंदें गेथों गिनद्जों उकरजें।

कुम्भः

## समपादा

स्थित्वैव समपादेन भौमीमाकाशिकीमपि।
यतः कुर्यात्ततश्चायं समपादा निगद्यते ॥
श्लिष्टपार्ष्णिनखन्निष्ठन्त्येकैकशो व्रजेत्।
समं पादद्वयं स्यात्तत् समपादेति संस्मृता ॥
मुनेराशयमज्ञात्वा कैश्चिच्छास्त्रविधायिभिः।
समपादयुगस्थानमात्रेणैषः प्रकीर्तितः ॥
यद्येवं करणं न स्यात् भिन्ना समनखात्कथम्।
अस्याश्चलनशीलत्वात् पादैरित्यब्रवीन्मुनिः ॥

जायनः

## समपादा—(चारी)

यत्र पादौ समनखौ निरन्तरकृताङ्गुलिः।
स्थानकं समपादाख्यमास्थाय धरणौ क्रमात् ॥
संहत्य चरतः सोऽयं समपादेति कथ्यते।
अजानानो मुनिमतं केचिदुक्तानबुद्धयः ॥
एतस्यां समपादायामभ्ययुः केवलां स्थितिम्।
तदज्ञानस्य साम्राज्यं यतस्तेषां मते पुनः ॥
अस्याश्चार्यः समनखकरणस्याश्रिताभिधा।
चारीयोग्यत्वमात्रेण भेदश्चेदुभयं समम् ॥
किञ्चात्र समपादायां क्रियायोगममन्यत।
पादैरिति प्रियं जानो बहुत्वं भरतो मुनिः।
स्थित्वाऽऽदौ समपादायां सर्वचारीं प्रयोजयेत् ॥

वेमभूपालः

समपादनिकुट्टा

विपरीतप्रचारा सा प्रतिलोमानुलोमिका ।
निकुट्टितौ तथा पादौ स्थितौ चाङ्गुलिपृष्ठयोः ।
समपादनिकुट्टा च कीर्तितावर्थलक्षणा ॥

कुम्भः

समप्रहारः—पाटः

समप्रहारो वाद्यं स्यात्कराभ्यां युगपद्धतेः ।

कुम्भः

समरः—(निःसारुकः)

लघुद्वयं विरामान्तं ताले कन्दुकसंज्ञके ।
समरो गीयते तेन मध्यमोऽत्र लयो भवेत् ॥

गान्धर्ववेदे

समलक्षणम्

स्वाभाविकं मतं शीर्षं स्वभावाभिनये समम् ।

हम्मीरः

—(शिरः)

प्रकृतिस्थं समं प्रोक्तं यतो भेदाविति स्मृतं ।
तस्मात्समं जपध्यानस्वभावाभिनयादिषु ॥

नृत्तरत्नावली

समस्स्खलतिका

युगपच्चरणौ यत्र पुरतः पृष्ठतोऽपि च ।
तिर्यक् स्खलतिका प्रोक्ता समस्खलतिका तदा ॥

कुम्भः

सम्फेटः

शस्त्रप्रहारबहुलो युद्धसंरम्भसङ्कुलः ।
सम्फेटो नाम विज्ञेयो निर्भेदकपटाकुलः ॥

कुम्भः

—(प्रकीर्णम्)

क्रुद्धयोर्योः समापातः स सम्फेट इति स्मृतः ।

वेमभूपाल.

सम्भाविता—गीतिः

वृत्तौ लघ्वक्षरप्राया गीतिः सम्भाविता स्मृता ।

दत्तिलः

सर्ववाद्याश्रयाः पाटाः

अथ प्रतिस्वरान् वर्णानधिकान् मुरजादिषु ।
दर्शयामो मतङ्गादिमतमाश्रित्य तत्त्वतः ॥

मुरजे वदिथोटेहं नं दें सप्त प्रकीर्तिताः ।
केषांचन मते पाठा दटक्तादधला इति ॥

परेषां गभमा वर्णाः वर्ण्यन्ते धिकतामिता ।
तत्र मध्यादयः सप्त केवलाः शुद्धसंज्ञकाः ॥

ते कार्यैर्व्यापकैर्मिश्राः कूटा इत्यभिसंज्ञिताः ।
शुद्धाः कूटविमिश्राश्च खण्डपाटाः प्रकीर्तिताः ॥

आवजे त्वधिकावुक्तौ मजकारौ मनीषिभिः ।
इह स्युः प्रथमे वर्णाः दङ्कारेण विना कृताः ॥

करटायां पुनः पाटा अधिकाः करटा इति ।
टिरिकिः करटिश्चैव तत्र पाटद्वयं मतं ॥

गोङ्कारो घटने प्रोक्तो ढेङ्कारो डवने मतः ।
डक्कायामपि ढेंकारः क्रेङ्कारः कुडवागतः ॥

घेङ्कारवर्जिता पूर्वे रुञ्जा रुङ्कारवर्णिका ।
डवर्णो डमरौ प्रोक्तः भरटा इति पाटजा ॥

डक्कारढङ्कारबहुला निगौकखरटाश्रया ।
बंबुं तु भमिमे पाटाः डकुली वाद्यसंश्रयाः ॥

सेलुकायां पिधीपाटौ त्रिवल्यां तटघा इति ।
ते दोंदेति वर्णास्तु द्रोंकारो दुन्दुभौ तदा ॥

भेर्या गेधधटाः पाटाः निःस्साणे परिकीर्तिताः ।
पाटाः घनकूटाः प्रोक्ताः कांस्यताले मनीषिभिः ॥

टणत्कारोत्कटा घण्ठा जयघण्ठाऽथ कथ्यते ।
देंकारपाटबहुला कम्रा किरिटिकाक्षरा ॥

शुक्तिः किरिटिका पाठाः पट्टघट्टरठाः कपौ ।
धुक्कारबहुलं शृङ्गं हुंभुव्यादिगिदित्वतः ।
पाटवर्णाः स्मृताः शंखे मुनित्रयसुसंमते ॥

कुम्भः

सर्वार्थस्वीकृतिः

उदयास्तमयौ तत्तद्धर्मैर्व्यक्तैः प्रदर्शयेत् ।
तर्जनाभ्रमणाच्चापि दृष्टेः परिगमादपि ।
पीडनाच्चलपद्मस्य सर्वार्थस्वीकृतिर्भवेत् ॥

वेमभूपालः

संप्रविष्टः

संप्रविष्टः स विज्ञेयो योऽवरोहे स्वरो घनः ।

कुम्भः

संभ्रान्तः—हस्तपाटः

सर्वाङ्गुल्यग्रघातेन सर्वाङ्गुलिविवर्तनम् ।
यत्र पाठे भवेत्सोऽत्र संभ्रान्तः कथितो यथा ।
दरगिड २ दरगिड २ दणकिर मटटकु इति ॥

कुम्भः

संयुतहस्तः

शिखरद्वन्द्वसंयोगात्करो द्विशिखरो मतः ।
शयनार्थेऽङ्गुलिस्फोटे स्त्रीणामनुनये तथा ।
नास्त्यर्थे तूपसंभुज्य वियुक्तं शिखरद्वयम् ॥

हम्मीरः

संलापलक्षणम्

हास्यशृङ्गारकरुणहीनः पाषण्डनायकः ।
त्र्यङ्कोऽथ चतुरङ्को वा कैशिकीभारतीच्युतः ॥
पुरोऽवरोधसंग्रामविद्रवैः कपटैर्युतः ।
अमर्षप्रतिमुख्याभ्यां हीनः संलाप उच्यते ॥

शुभङ्करः

संस्कृतपाठ्यभेदाः

निबद्धमनिबद्धं चेतीत्येतद्द्विविधं भवेत् ।
पादविच्छेदसहितं प्रमाणनियताक्षरम् ॥
छन्दोभिर्बहुभिर्युक्तं निबद्धं पाठ्यमुच्यते ।
छन्दोविरहितं पादविच्छेदपरिवर्जितम् ।
उत्प्रेक्षितपदं पाठ्यमनिबद्धं निगद्यते ॥

वेमभूपालः

संहतम्

अङ्गुष्ठौ च तथा गुल्फे पादयोश्चेन्मिथो युतौ ।
देहे स्वाभाविके तत्स्यात्संहतं स्थानकं वरम् ।
विनियोगोऽस्य कथितः पुष्पाञ्जलिविसर्जने ॥

कुम्भः

संहतलक्षणम्

कनिष्ठाङ्गुष्ठकौ यत्राधो गतौ संहतं पुनः
तर्जन्यादित्रयं स स्यान्मेलने द्रवचूर्णयोः ॥

कुम्भः

संहितम्

संहितं मीलितमुखं निश्चलं मौनकर्मणि ।

कुम्भः

संहितः

तारान्मन्दस्थितिं यावत् घण्टानादवता यतः ।
संहितः परिविज्ञेयाः ... ... ... ... ... ... ... ... ... ॥

कुम्भः

साक्षेपकीध्रुवा

प्रक्रान्तं लयमुल्लङ्घ्य गीयते यद्द्रुते लये ।
प्रस्तुतार्थसमाक्षेपात् ज्ञेया साक्षेपकी ध्रुवा ॥

वेमभूपालः

साची दृष्टिः

स्वस्थाने तिर्यगाकारमपाङ्गचलनक्रमात् ।
साची दृष्टिरिति ज्ञेया नाट्यशास्त्रार्थकोविदैः ॥

भरतकल्पलता

सात्त्वतविधिः—(न्यायः)

प्रविचारः सात्त्वतेऽपि कार्यो भारतवद्बुधैः ।
किन्तु खड्गभ्रमाः कार्याः केवलं पृष्ठभागतः ।
खड्गपातश्चरणयोः कर्तव्योऽत्र विचक्षणैः ॥

वेमभूपालः

सात्त्वतीवृत्तिः

सत्त्वसंवेदनमस्त्यस्मिन्निति सत्त्वं मनोऽस्य सा ।
वृत्तिः सा सात्त्वती यस्यां सामुख्या साऽत्र सात्त्वती ॥

विप्रदासः

सात्त्विकभावलक्षणम्

अत्यन्तस्थिरचित्तत्वात्सत्त्वमुत्पद्यते गुणः ।
तेन सत्त्वेन निर्वृत्ताः सात्त्विकाः परिकीर्तिताः ॥

शुभङ्करः

सात्त्विकभेदाः

चतुर्धा च त्रिधा द्वेधैकधा सात्येवमव्ययम् ।
चतुर्विधो भुवो भर्ता लक्ष्यते लक्ष्मविन्मुदे ॥
शाखानृत्ताङ्कुरोपाधिभेदात्तत्राङ्गिकास्त्रिधा ।
वर्तनाकरयोः शाखास्तत्र वैचित्र्यचित्रिताः ॥
अङ्गोपाङ्गक्रियैस्तत्र स्वस्थानैरुपबृंहितैः ।
करणैरङ्गहारैश्च निष्पन्नं नृत्तमुच्यते ॥

कुम्भः

भावो हावश्च हेलाचेत्यङ्गजाः कथितास्त्रयः ।
लीला च हासो विच्छत्तिर्विभ्रमः किलकिञ्चितं ॥

मोट्टायितं कुट्टमितं बिब्बोकं ललितं तथा ।
विहृतं चेति विख्याता दश स्त्रीणां स्वभावजाः ॥

वेमभूपालः

## सात्त्विकरसनिर्णयः

अत्र दुःखमदुःखेन सुखञ्चासुखितेन च ।
नाभिनेतुं क्षमं तस्मादुतयामिस्रुतेन च ।
द्रष्टव्यावश्रुरोमाञ्चाविति सात्त्विकनिर्णयः ॥

कुम्भः

## सात्त्विकलक्षणम्

सत्त्वं रजस्तम इति प्रथिता गुणा ये
चित्तं तदात्मकमिहोपदिशन्ति सन्तः ।
सत्त्वोत्कटं मनसि ये प्रभवन्ति भावा-
स्ते सात्त्विका निगदिता मुनिभिः पुराणैः ॥

कुम्भः

शुद्धं स्यात्त्वन्मते सत्वं केषाञ्चन मते पुनः ।
बीजस्थानीयमव्यक्तरूपं सत्त्वमुदीरितम् ॥
मनसा सहितं चात्मतत्त्वमेव क्वचिन्मते ।
सत्त्वशब्दाभिधेयं यत्स्थानं तत्सात्त्विकं मतम् ॥

कुम्भः

## सात्त्विकाः

नृत्त्यिका आङ्गिकेष्वेव पर्यवस्यन्ति तत्त्वतः ।
नटस्यातत्स्वरूपस्य किं तादात्म्यमतो न हि ।
स्तम्भादीनां सात्त्विकत्वं केवलानामिहोदितम् ॥

कुम्भः

## सात्त्विकानां प्रचारकारणम्

एवं तथाविधे बुध्यध्यवसायेऽष्टकस्य तु ।
मानसैकाश्रयहेतुत्वे यौगपद्योदयाश्रितः ॥
बाह्यबाष्पाद्यष्टकस्य यौगपद्यादयोऽपि च ।
तत्र सामभ्यन्तरं चेत्किमवान्तरकल्पनैः ॥

कुम्भः

## सात्त्विकानां मानसो हेतुः

तस्मादनन्यमनसो जायन्ते ते तु सात्त्विकाः ।
स्तम्भादीनां न चैवं स्यात्समाधीनान्तु मानसम् ॥
हेतुः समानकालीनोऽष्टकाद्येन निमित्ततः ।
तद्वाष्पञ्च नटे यं यो नटबुद्ध्यवसायकाः ॥

ते स्युर्नटगतानां तु बाह्यबाष्पादिहेतवः ।
एवं ते सात्त्विकाः सत्येनादृताः संसदि स्फुटम् ॥

कुम्भः

## सात्त्विकादीनामाङ्गिकप्रसिद्धिः

अत्र प्रयत्ननिर्वर्त्ये समाने भाववर्गगे ।
अतिप्रसक्तिमुख्येषु दोषरूपस्थितेषु च ॥
सात्त्विका आङ्गिकेष्वेवमुच्यन्त इति साम्प्रतम् ।
तस्मान्मुख्याभिनयने वागङ्गप्रमुका मता ॥

कुम्भः

## साधनप्रकारः

तैलाभ्यक्तेन गात्रेण लब्धाहारो निजतश्रमः ।
स्तम्भे वा भित्तिदेशे वा निस्तन्द्रः तत्तदभ्यसेत् ॥
रूक्षाहारं शाकमम्लं सकण्टकरुषानपि ।
वर्जयेत्साधने तेषां भोजनोपरि नाभ्यसेत् ॥
न्यायाश्च शार्ङ्गदेवोक्ता भरतादिश्चतुर्विधः ।
परं युद्धे प्रयोज्यत्स इति नात्र मयोदितः ॥ तदुक्तम्
युद्धे परास्तशस्त्राणां क्रमाद्धारणपातने ।
विधातुमुचिता गात्रवलनान्याय उच्यते ॥
नाट्याङ्गानि मयोक्तानि परमुद्देशमात्रतः ।
विशेषलक्षणान्येषां ज्ञायन्तां तत्तदाकरात् ॥
ज्ञेयानभिनयैरेव यान्न केवललक्षणैः ।
तन्नालेखिषतैतानि मया बाहुल्यभीरुणा ॥

सङ्गीतनारायणे

## साधारणम्

अत्र साधारणं केचिद्वदन्ति स्वरकोविदाः ।
षड्जगं मध्यमं चापि केशाग्रवदणुत्वतः ॥
कैशिकं नाम तद्ज्ञाता कश्चिद्गायति वा न वा ।
साधारणं तु षड्जस्य निरिभ्यामुपजीवनात् ॥
साधारणं मध्यमस्य गपाभ्यामुपजीवनात् ।
इतो तद्द्विविधं षड्जमध्यमाभ्यां विशेषणात् ।
ग्रामसाधारणं केचिदवादिषुरतद्विदः ॥

कुम्भः

कटिदेशगतौ हस्तौ तिर्यग्यदि विलोडितौ ।
ततोऽन्तर्मण्डलभ्रान्तावथवा बहिरेकदा ।
यत्र साधारणमदश्चाळंयं कथितं तथा ॥

साधारणकृता—मूर्छना:

क्रमयुक्ताः स्वराः सप्त मूर्छनास्त्वभिसंज्ञिताः।
सत्पञ्चकस्वरास्तासां षाडवौडुविता स्मृताः॥

साधारणकृताश्चैव काकलीसमलंकृताः।
अन्तरस्वरसंयुक्ता मूर्छना ग्रामयोर्द्वयोः॥

नाट्यशास्त्रे

साधारणता

स्वरसंयोगतो जातिसंयोगात्तत्पुनर्मतम्।
चतुर्धाद्यं तु निसग मध्यमाश्रयतो भवेत्॥

श्रुतिद्वयस्य ग्रहणान्निसयोस्स्वरयोरिह।
काकलीसाधारणं स्यात् षड्जसाधारणं पुनः॥

निषादर्षभाभ्यां च षड्जाद्यन्त श्रुतिद्वयम्।
परिग्रहीते भवति तथान्तरविशेषितम्॥

साधारणं तु गमयोः श्रुतियुग्मपरिग्रहात्।
मध्यमाद्यन्तःसंश्रित्य श्रुतियुग्मं मपौ स्वरौ॥

गृह्णीत तत्र विज्ञेयं मध्यसाधारणं बुधैः।
यदत्र मध्यमस्योक्तं बुधाः साधारणं स्फुटम्॥

...... मध्यम एव स्यात् तदिति प्राज्ञसंमतम्।
स्वस्थानाद्व्यच्युतस्त्वीयं स्थानमप्राप्तवान् स्वरः॥

साधारणं तु तद्भावो भावप्राधान्यतः स्मृतम्।
अत्र साधारणं केचिद्वदन्ति स्वरकोविदाः॥

षड्जगं मध्यमं चापि केशाग्रवदणुत्वतः।
कैशिकं नाम तद्गाता कश्चिद्गायति वा न वा॥

साधारणं तु षड्जस्य निरिभ्यामुपजीवनात्।
साधारणं मध्यमस्य गपाभ्यामुपजीवनात्॥

इतो तद्द्विविधं षड्जमध्यमाभ्यां विशेषणात्।
ग्रामसाधारणं केचिदवादिषुरतद्विदः॥

ग्रामे तु मध्यमे नूनं चतुःश्रुतिसमाश्रयात्।
पंचमे षड्जतानास्ते षड्जग्रामिकलक्षणे॥

चतुःश्रुतिकतामास्ते धैवते मध्यमाभिधाम्।
षड्जे गते भवेल्लक्ष्म षड्जग्रामस्य यत्र तु॥

एकप्रयोगे दृश्येते ग्रामे साधारणत्वतः।
तुल्यक्षयतया तत्र ग्रामसाधारणं मतम्॥

श्रिते विकारेऽनंशत्वमन्यत्वं वागनीश्वरौ।
प्रयुज्येते यथा काकल्यन्तरत्वे तथोच्यते॥

उच्चार्यप्रथमं षड्जं काकली धैवतो वदेत्।
यद्वा षड्जं समुच्चार्य ततः काकलिनं वदेत्॥

पुनः षड्जं प्रोच्चरेच्च प्रयोगः क्रममाश्रितः।
धकाकल्योरन्यतमं प्रोच्चरेत्स्वरतत्त्ववित्॥

उच्चार्य मध्यमं पूर्वं प्रयुंजीतान्तरर्षभौ।
यद्वा मध्यममुच्चार्य प्रयुंजीतान्तरस्वरम्॥

ततश्च मध्यमो ग्राह्यस्तत्पदान्धतमोऽपि च।
अत्रेषदर्थे काशब्दः कलेरविकलः स्मृतः॥

एतौ धर्मौ यत्र शब्दे विद्येते काकलीति सः।
अत्र साधारणं षड्जं षड्जग्रामेऽनुसम्भवि॥

साधारणं मध्यमस्य मध्यमग्राम एव हि।
षड्जग्रामे काकली हि विद्यते नान्तरस्वरः॥

स चेदत्रापतेत्तर्हि काकलीस्वरसंश्रयात्।
अन्तरो मध्यमग्रामे नित्यमेवावतिष्ठते॥

तत्रचेत्काकली कापि दृश्यते सांतराश्रयात्।
अत औडुवकृत् षड्जग्रामे काकलवान् स्वरः॥

प्रयुक्ते षाडवं नैव कालजिद्रूपसंमतात्।
मध्यमे त्वौडुवाशंसी काकली नैव कर्हिचित्॥

तनोति षट्स्वरं गीतमिति गीतविदो विदुः।
एवं काकल्यन्तरौ द्वौ षड्जग्रामे यदा तदा॥

षड्जसाधारणं प्रोक्तं भरतज्ञेन भूभुजा।
तथैवान्तरकाकल्यौ द्वौ मध्यमगते यदि॥

तदा मध्यमपूर्वं स्यात्साधारणमिह स्फुटम्।
यत्कैश्चिदेते संप्रोक्ते कैशिके सूक्ष्मदृष्टिभिः॥

साधारणेन यद्राजराजसम्मतिमर्हति।
यतोऽभिनवगुप्तोक्तिरदस्यज्ञः क्षमाधिपः॥

अन्यथैतद्वचो गुम्फयुक्तिव्याकरणं व्यधात्।
कैशिकी षड्जकैशिक्यो यतस्तत्वज्ञसंमते॥

एते कैशिकमाश्रित्य प्रवृत्तेऽत्र निशम्यताम्।
अल्पप्रयोगता योक्तन्तरकाकलिनोरिह॥

सान्यथाभूतयोरत्र बहुत्वस्योरीकृते।
इति चेदुच्यते विद्वन् त एव तु तथाविधे॥

तत्र वास्तु तयोर्नाम बहुत्वं कांक्षितस्तु मे।
नैवं लोपविधेरत्र निरर्थत्वप्रसंगतः॥

उत्तरोत्तरदोषाणां प्रसंगादश्रुतामुखम्।
क्षेत्रराजमतादेतत्स्वरसाधारणं स्फुटम्॥

कालसेनेन विभुना विवृतं तत्त्वबिन्दुदे।
जातिसाधारणमथो यथोद्देशं प्रतन्यते॥
एकांशोपचितास्वेकग्रामजेषु च जातिषु।
यद्गानं समतामाप्तजातिसाधारणं तु तत्॥
दन्तिलाद्याः पुनरिदं रागानेव प्रचक्षते।
भिन्नग्रामभवास्वेतत्केषांचन मते मतम्॥
एकांशतादिवसतो न तत् सर्वजनप्रियम्।
यत्र श्रुतिसमुत्कर्षात्स्वरोऽन्यस्वरदेशगः॥
विलुप्त इव तत्त्वज्ञैर्गीयते तत्र केचन।
श्रुतिसाधारणं नाम वदंतत्रोच्यते त्विदम्॥
धैवतर्षभयोश्चैवात्र गान्धारनिषादयोः।
सांकर्ये संनिकर्षेण स्वरव्यक्तेरभावतः॥
परिशेषेण निगयोः स्थितौ तत्र तयोः पुनः।
श्रुतिद्वयोत्कर्षवशात्काकल्यन्तरता स्थिता॥
उत्कृष्ये तु यदैकां तु श्रुतिं तत्कैशिकं भवेत्।
एकश्रुतिसमुत्कर्षात् षड्जमध्यमपञ्चमाः॥
पञ्चश्रुतिकतायोगान्न ते रक्तिप्रदा मताः।
श्रुतिसाधारणं तस्माद्यदुक्तं षण्मुखादिभिः॥
काकल्यन्तरयोश्चैव कैशिकाच्च न तत् पृथक्।
षड्जमध्यमयोश्चैवमपि त्रिश्रुतियोगतः॥
एतद्भिन्नं कुतो न स्यादिति चेदुच्यते त्वया।
प्रश्नोत्कर्षवशादेवं श्रुत्युत्कर्षविधानवित्॥
भवान् केन निवार्येत गान्धर्वस्यापकर्षणात्।
पण्डितंमन्यमानैश्च कैश्चिदत्रोपवर्णितम्॥
तानसाधारणं तत्र युक्तिलेशो न विद्यते।
षाडवौडुवयोर्हेतुभूता ये तानगाः स्वराः॥
लोप्यतामावतस्तेषां विशेषानाश्रयादिह।
अन्तर्भावाद्यमितो न पृथक्तदतः स्मृतम्॥
इति साधारणं नाम सविशेषं निरूपितम्।
असाधारणकेतदमाश्रितानां महीभुजा॥
केचिदन्ये वदन्त्यत्र द्विस्वरान्तरितौ स्वरौ।
विवादिनोर्तन्मते स्यात्समयोस्तु विवादिता॥
तथा हि पञ्चमेऽशत्वमासन्ने बहुधा तथा।
तस्य सन्यासविन्यासयोग्यताऽपि न युज्यते॥
समश्रुतिकता येन हेतुः संवाद ईरिता।
षड्जग्रामेण संवादस्तन्मते गपयोर्भवेत्॥

सा चैतयोः सुप्रसिद्धा दृश्यते तद्विदां वरैः।
अत्र प्रतिसमाधानमीर्यते पृथिवीभुजा॥
नाभेरूर्ध्वं चरन्वायुः स्पृशन्स्थानचतुष्टयम्।
चतुःश्रुतीर्जनयति समदाषड्जपंचमौ॥
ननु यस्यां स्वरो वृत्तिः श्रुतौ संताडिते तयां।
स्वरेऽन्यश्रुतिसंघाता स्वरोत्पत्तिः प्रदृश्यते॥
रक्तिहानिकरत्वेन न स्थानं स्पृशते क्वचित्।
किं वा वायुशरीरान्तः श्रुतिस्थानानि संस्पृशन्॥
क्रमेण हि प्रतिस्थानं स्वरानुत्पादयन् स्वतः।
अन्त्यस्वरस्य संस्थाने स्वस्थाप्तः श्रुतिसंज्ञकः॥
स चाल्पश्रुतिसंभूतः स्वरोऽल्पः स्यात्तथा बहु।
बहुश्रुतिसमारब्धो नैवं हि घटनामियात्॥
यतः स्वरस्य बहुताऽल्पता वा क्वापि दृश्यते।
स्वकारणश्रुतीयत्ताहेतुका न हि कोविदैः॥
किन्तु प्रयत्नातिशयजनिता सा प्रतीयते।
तथाहि शिखिनाजातः षड्जकुंजरसम्भवम्॥
निषादं द्विश्रुतिमपि नास्तीतिस्वमहत्तथा।
तद्धेतुस्तु श्रुतिबाहुल्यं स्वराणां रक्तिकारणम्॥
नासमश्रुतिकत्वेऽत्र कल्प्यमानेऽस्ति कारणम्।
तद्वयादिकसंसिद्धौ प्रागेव भणितं मया॥
अन्तरालश्रुतिस्थानाद्यथा वायुः स्पृशन्नपि।
तेषु स्वतानजनमत्स्वरं जनयतीति चेत्॥
नैतत्कारणता वाऽस्य तत्स्पर्शः कथ्यते कथम्।
अत्र वायोरन्तरालश्रुतिस्थाने वहन्नपि॥
स्पृशन्विना भिद्यते नात्यश्रुतौ जनयेत्स्वरम्।
अन्तरालश्रुतिस्पर्शाज्जायते यो ध्वनिः कियान्॥
सोऽतिसूक्ष्मत्वतायोगि गम्यः प्रागेवकीर्तितः।
एवं यस्मिन् स्वरे यावत् श्रुतिस्थानं प्रकीर्तितम्॥
तावत् श्रुतिक एवायं स्वरस्संपद्यते ध्रुवम्।
चतुश्श्रुतिस्त्रिश्रुतिश्च द्विश्रुतिश्च क्रमात् स्वराः॥
षड्जश्च ऋषभश्चैव गान्धारश्चेति ते त्रयः।
अत्र वेदश्रुतेः सम्यक् वादिनो द्विश्रुतिर्भवेत्॥
विवादिगस्त्रिश्रुतिरनुवादी तु मध्यगः।
एकश्रुत्यैव च कथं षड्जगान्धारकौ स्वरौ॥
विलक्षणौ वादिनश्च स्वरस्यर्षभसंज्ञिनः।
विवादी द्विश्रुतिश्चैकोऽनुवाद्यन्यश्चतुश्श्रुतिः॥

कथं च वादिनो गम्यः सरी अप्यनुवादिनौ ।
सङ्क्रमेतद्यतस्तल्लोके हीनं नैवं गुणाधिका ॥

विवदेत्तं च विवदत्यन्यस्योत्कर्षहेतवे ।
जनश्रुतिकतायां तु सत्यां षड्जस्य रिस्वरः ॥

उभयोर्मध्यवर्तित्वादनुवाद्येव संमतः ।
लोकेऽपि मध्यवर्ती स्यादुभयोरनुवादवान् ॥

कालसेन महीन्द्रेण लोकवृत्तानुसारतः ।
वाद्यादिसंज्ञा लोकानुसारिण्यः संप्रवर्तिताः ॥

एवमुक्ततयाख्याता सरिगा एव ते स्वराः ।
स धनित्वेन तेषां हि मध्यमेऽवधिमाश्रितः ॥

यद्भाणि स्वरस्थानश्रुतेरन्तरगोचराः ।
अस्पृशन्नेव जनयेत्स्वरवायुः श्रुतेरिह ॥

तदचारु यतो दारुवीणायां सारणाविधौ ।
प्रवृत्तातुलहुंकारप्रयोगेऽध्यक्षगोचरः ॥

अन्तरालश्रुतिस्थानस्पर्शः संजायते स्फुटः ।
स तु प्रथममञ्जर्याः श्रीरागच्छाययाऽपि च ॥

कामोदाभीरिकयोश्च छायया दृश्यते बुधैः ।
अत्रोदाह्रियते श्रीमन् मातृगुप्तवचो यथा ॥

गीयमाने स्वरः श्रोतुः स्वसंवेद्योऽणुशः क्रमः ।
श्रूयमाणः पुनर्नाद एक एवान्यरञ्जकः ॥

संप्रदायविधानातः परं श्रुत्यपकर्षणम् ।
अलङ्कारकृताभ्यासैः शरीरेऽपि श्रुतिक्रमः ॥

कम्पितान्दोलनकृतौ स्वराणां दृश्यते स्फुटः ।
षड्जमध्यमयोः कार्यं कार्यैरक्तिविशोधकृन् ॥

काकलित्वादिना येन यस्यया गृह्यते श्रुतिः ।
सा तु तस्यैव तानस्य यतस्तल्लक्ष्येऽत्वगोचरः ।
तस्मादन्तरकाकल्यौ समयोर्न पृथक्कृतौ ॥

कुम्भः

## साधारणविधिः

साधारणं नामान्तरस्वरता । कस्मात् । द्वयोरन्तरे योऽर्थो भवति स साधारणः ।

नाट्यशास्त्रे

## साधारणस्वरूपः

शिशिरस्य वसन्तस्य मध्यस्थस्समयो यथा ।
साधारणस्तयोरेव गीते साधारणस्वरः ॥

तद्द्वेधा भवेदाद्यं स्वरसाधारणं परम् ।
जातिसाधारणमिति तयोराद्यं चतुर्विधम् ॥

काकल्यन्तरषड्जश्च मध्यमेन विशेषणात् ।
यदा श्रुतिसमुत्कर्षात् स्वनो लुप्तश्च न स्फुटः ॥

गीतज्ञैः गीयते गेयं स्वरसाधारणं तदा ।
अत्युत्कर्षस्तु सपयो न भवेद्द्वियोरपि ॥

वैस्वर्याद्यवधानाच्च श्रुतीनां तेन जायते ।
गन्योस्ताभ्यां तु सांकर्ये स्वरव्यक्तिर्नलभ्यते ॥

पारिशेष्यादतो गन्योः श्रुत्युत्कर्षस्फुटो भवेत् ।
गान्धारो वा निषादो वा विकृतो यत्र गीयते ॥

तत्र श्रुतिसमुत्कर्षाद्ज्ञातव्योऽसौ मनीषिणा ।
काकलीसंयुतो यश्च यश्च स्यादन्तराग्वितः ॥

सगन्योरप्रयोगोऽपि प्रोक्तो वेसरषाडवः ।
मतङ्गीनां स्वरत्वेऽपि प्रयोगोऽस्त्यनयोस्ततः ॥

निषादः काकली रूपो गान्धारश्चान्तरात्मकः ।
न स्वरो गण्यते तज्ज्ञैरनंशत्वाल्पतावशात् ॥

षड्जस्याद्ये श्रुतीक्रामन् निषादः काकली भवेत् ।
निषादषड्जयोरेष यतस्साधारणः स्मृतः ॥

अस्यास्साधारणत्वं स्याद्धर्मस्साधारणं हि तत् ।
मध्यमाद्ये श्रुतीक्रामन् गान्धारस्त्वन्तरो भवेत् ॥

साधारणोऽयं गमयोरस्य धर्मस्य यो भवेत् ।
साधारणं तु तद्ज्ञेयमत्र साधारणं बुधैः ।
पूर्वं षड्जं समुच्चार्य काकलीदैवतौ ततः ॥

## सानुलोमविलोमा

त्रिकोणचारी या चारी स्वनुलोमविलोमगा ।
स्वस्थाने स्थापितपदा ततस्तत्रापि कुट्टिता ।
सानुलोमविलोमाख्या चारीयं परिकीर्तिता ॥

कुम्भः

## सामान्याभिनयः

अथ ब्रवीमि सामान्यविचित्राभिनयौ क्रमात् ।
यश्च वागङ्गसत्वैस्तु सामान्येनोपकारिभिः ॥

निष्पाद्योऽभिनयः सोऽयं सामान्याभिनयः स्मृतः ।
स भवेत्त्रिविधस्तत्र सत्त्वभूयिष्ठ उत्तमः ।
समसत्त्वो मध्यमः स्यात्सत्त्वहीनोऽधमः स्मृतः ॥

वेमभूपालः

**साम्वकः**

घनध्वनिरिवागयन्नूर्ध्ववक्त्रोक्षरैः स्खलन् ।
हीनस्वरेण संयुक्तः स साम्वक इति स्मृतः ॥

भरतकल्पलता

**सारङ्गी—वीणा**

गम्भीरा पानसी वाऽपि सारदारुभवापि वा ।
त्रिवितस्तिमिता दैर्घ्ये शिरः पञ्चदशाङ्गुलम् ॥

तत्तु सर्पफणाकारं तन्मध्ये शिखरो भवेत् ।
गलभागे क्रमान्न्यूनं तस्मादुद्वृन्तकर्णिका ॥

अस्या अधः स्थितो दण्डो दैर्घ्ये सप्तदशाङ्गुलः ।
स्थूलमूलः कृशाङ्गश्च क्रमेण वलितो भवेत् ॥

दण्डस्य शिरसश्चैव गर्भं शून्यं च कारयेत् ।
दण्डस्य पृष्ठदेशे तु शिरसः क्रोडतस्तथा ॥

सारीगृहं भवेदस्याः सारङ्ग्याश्चतुरश्रकम् ।
दैर्घ्ये षडङ्गुलं प्रोक्तं प्राशस्त्ये चतुरङ्गुलम् ॥

शून्यो गर्भश्च तस्याथ गाम्भीर्ये चतुरङ्गुलः ।
तिस्रस्तस्यैव मोटिन्यो विन्यस्यास्तद्विलत्रये ॥

अग्रं तत्र सुचूडं स्यात् यथा देवकुले तथा ।
अस्याः शिरः पिधातव्यं कच्छप्या इव चर्मणा ॥

स्थाप्या मकरिका तत्र रेखाङ्गुष्ठविनिर्मिता ।
दशाग्रे कलिका देया साचिरेका स्थिता भवेत् ॥

तिस्रः तन्त्र्यः पट्टसूत्रभवाः स्थाप्या अनुक्रमात् ।
निर्मायैवं धनुर्वंशपृष्ठस्य त्रिंशदङ्गुलम् ॥

अश्वपुच्छसमाकृष्टैः वालैरस्य गुणो मतः ।
तं घृष्ट्वा सालनिर्यासै तेन तंत्रीस्तु वादयेत् ।
एषा सारङ्गिका वाद्या तद्ज्ञानामुपदेशतः ॥

सङ्गीतनारायणे

**सालगसूडभेदाः**

केचित्सालगसूडस्य भेदमन्यं प्रचक्षते ।
ध्रुवो मण्ठो रूपकं चाट्टतालो यतिरेव च ॥

प्रतितालस्तथाचैकतालीत्येवं स सप्तभिः ।
तत्र कल्प्यस्तथा तालो ग्रहन्यासाभिधानकौ ॥

यो पदादौ पदान्ते वा ह्यतीतः स्पर्शैरञ्जितः ।
स कल्प्यो भण्यते विद्भिः पदाद्यन्यस्थ च ग्रहः ॥

य उद्ग्राहादिधातूनां समाप्तिं ज्ञापयेदथ ।
तालताडनभेदोऽसौ ताल इत्यभिधीयते ॥

गीतादौ तु भवेत्कल्यं तालः कल्यसमापने ।
मध्ये कलासो विज्ञेयः कैश्चिदेष विधिः स्मृतः ॥

कुम्भः

**सिंहनादः—तालः**

यगणो लगुरुस्सिंहनादताले प्रकीर्तितौ ।
॥ऽ।ऽ कुम्भः

**सिंहविक्रीडितम्**

आलातावङ्घ्रिपुरः कुर्यादूर्णनाभमपि द्रुतम् ।
यथाऽङ्गान्तरमप्येयं सिंहविक्रीडितं तदा ॥
विषयोऽस्य विनिर्दिष्टो रौद्रप्रायः परिश्रमः ।
कुञ्चितं वत्परानन्दनिर्भराभिनये भवेत् ॥

नृत्तरत्नावली

**सिंहविक्रीडिततालक्षणम्**

सिंहविक्रीडिते द्विस्थुलैपगालपगालगौ ।
।ऽऽ।ऽऽ।ऽऽ।ऽऽ।ऽ सोमराजदेवः

**सिंहास्यः**

कनिष्ठाङ्गुष्ठकौ लग्नावधोमुखमुपागतौ ।
तर्जनीमध्यमानामा तिस्रोऽङ्गुल्योतिसंहताः ॥
यत्रादौ सिंहवदनाकारः सिंहस्य उच्यते ।
एष सिंहास्याभिनये मेलने द्रवचूर्णयोः ॥

विप्रदासः

**—हस्तः**

अधो मुखाङ्गुष्ठकोष्ठौ लग्नाग्रा चेत्कनिष्ठिका ।
मध्यस्तिस्रोऽधसंयुक्ताः स सिंहस्यादुदीर्यते ।
सिंहास्याभिनये त्वेष मेलने द्रवचूर्णयोः ॥

सङ्गीतनारायणे

**सीत्कारः—गायकः**

गाने मुहुर्मुहुश्चैव सत्कृतिं च करोति यः ।

भरतकल्पलता

**सुकराभासः, दुष्कराभासश्च**

यो दुष्करोऽपि सुकरवदाभाति च ध्वनिः सदा ।
विज्ञेयः सुकराभासः सुकरो दुष्करो यथा ।
भासते दुष्कराभासः विज्ञेयः स्थायवेदिभिः ॥

कुम्भः

**सुकुमारम्**

प्रयोगैश्चापि सम्पूर्णं सुकुमारमथोच्यते।
लावण्यं गुणसंपूर्णं लघुप्रायाक्षराञ्चितम् ॥

कुम्भः

**सुगीतलक्षणम्**

स्वरेण पदसंयुक्तछन्दसा वर्गसंयुतम्।
सुमानं च सुतालं च सुगीतं तेन भण्यते ॥

गान्धर्ववेदे

**सुघटः**

स्वरो वर्णश्च तालश्च स्पष्टं घटयति त्रयम्।
सुन्दरध्वनिसंयुक्तः सुघटं तं प्रचक्षते ॥

कुम्भः

**सुघोषः**

महान् यः स्निग्धमधुरो वहन्यापि च ते वह्नौ।
एष ध्वनिः सुघोषा स्यान्मन्द्रे ते घोषजा मताः ॥

कुम्भः

**सुतीक्ष्णः**

सुतीक्ष्ण इव यस्तारे स्वरः पूर्णश्रुतिर्भवेत्।
सुतीक्ष्णः प्रोच्यते स्थायः स्वरमर्मविशारदैः ॥

कुम्भः

**सुदेशिकः**

यत्रौज्वल्यं भवेद्रागं कथ्यते स सुदेशिकः।
यो वल्लभो विदग्धानां ............ ॥

कुम्भः

**सुन्दरः—मण्ठकः**

गुरुद्वन्द्वं लघुद्वन्द्वं ताले त्रिपुटसंज्ञके।
सुन्दरो गीयते तेन वीरे वाऽप्यद्भुते रसे ॥
त्रिपुटतालः ऽऽ॥

गान्धर्ववेदे

**सुप्तम्—व्यभिचारिभावः**

सर्वेन्द्रियसंमोहजनित निद्राधिकरण किञ्चित्पदार्थविलोकन-ज्ञानं सुप्तम्।

शुभङ्करः

**सुरत्नगुणलक्षणम्**

सुरत्नं वल्लकीवंशकण्ठध्वन्येकतां गतम्।

भरतकल्पलता

**सुला**

मन्दानिलवलद्दी पशिखेवाङ्गस्य चालनम्।
सुलाशब्देन तद्ज्ञेयं

सङ्गीतमुक्तावली देवेन्द्रकृता

**सुषिरभेदाः**

वंशो धपारिमधुरीतित्तिरीशङ्खकाहलाः।
डोक्कही मुरली बुक्काश्शृङ्गिकास्वरनाडयः ॥
श्रृङ्गला पिकवंशश्च चर्मवंशस्तथाऽपरः।
एते सुषिरभेदाः स्युः कथिता पूर्वसूरिभिः ॥

सङ्गीतनारायणे

**सुषिरवाद्यभेदाः**

तत्र वंशश्च पाठी च धपाश्चमुहरी तथा।
शङ्खश्शृङ्गं काहला च प्रोक्ता बुक्का च तित्तिरी ॥

सोमराजदेवः

**सूकरः**

.................. सूकरः कोमलो ध्वनिः।

कुम्भः

**सूचाङ्कुरः**

ससूचा स्यात्पिण्डिका बन्धादङ्कुरः शृङ्खलादिभिः।
उभयं स्मृतमारोहोऽवरोहोऽङ्कुर ईरितः ॥

कुम्भः

**सूचाभिनयः**

भविष्यदर्थानुगमाद्वाक्यार्थौ वाक्यमेव वा।
यस्त्वाङ्गैः सूच्यते पूर्वं वचनाभिनयस्ततः।
सूचाभिनयनो नाट्ये वेदिभिः प्रतिपादितः ॥

वेमभूपालः

**सूचिका**

न साक्षान्मरणं तस्य सूचिकां दर्शयेद्दशाम्।
तदनन्तरसम्भूतां दर्शयेत्सुखिनीं दशाम् ॥

मोक्षदेवः

**सूची**

यस्यां विन्यस्य चरणं क्षितौ पार्श्वेन तं पुनः।
प्रसारयेत्तु तीक्ष्णाग्रं सा सूची गदिता बुधैः ॥

कुम्भः

### सूच्यन्तम्

सूचीनां त्रितयं प्रोक्तं तद्द्विधा परिकीर्तितुम्।
भौमाकाशविभेदेन स माद्यन्त्परमं यदि ॥
कारणानि दधात्वन्ते सूचीं प्राक्कथितानि तु।
सूच्यन्तानि तथा तानि जायन्ते इति सूरयः ॥

कुम्भः

### सूच्यास्यलक्षणम्

मध्यमासङ्गताङ्गुष्ठौ चतुरस्रप्रदेशगौ।
सर्पशीर्षौ क्रमात्तिर्यक् प्रसरन्तौ प्रदेशिनीम् ॥
बहिः प्रसारितं यद्यौ यदि सूचीमुखौ तदा।
पताकौ प्रथमं कार्यौ व्यावृत्तपरिवर्तितौ ॥
भ्रान्त्वा प्रसारणं चात्र विशेषं केचिदूचिरे।
मध्यप्रसारिताङ्गुष्ठौ सर्पशीर्षाकृती करौ।
रचितस्वस्तिकौ केचिदूचुः सूच्यास्यलक्षणम् ॥

हम्मीरः

### सूडः

सूडशब्दोऽत्र देशीं मा गीताल्यर्थः प्रकीर्तितः।
छायालगेतिशब्दापभ्रंशः सालग इत्ययम्।
एष सालगसूडाख्यः सप्तधा कथितो बुधैः ॥
तथा चोक्तं भारतीये तत्रैव—
शुद्धश्छायालगश्चेति द्विविधः सूड उच्यते।
एलादिः शुद्ध इत्युक्तो ध्रुवादिः सालगो मतः ॥ इति
तत्रोक्तः शुद्धसूडः प्राक् सालगस्त्वधुनोच्यते।
आद्यो ध्रुवस्ततो मठः प्रतिमठो निसारुकः।
अड्डतालस्ततो रास एकतालीत्यसौ मतः ॥ इति

तुलजः

### सूडप्रबन्धलक्षणम्

एलाकरणढेङ्कीभिर्वर्तिन्यां झोम्बडेन च।
लम्भरासैकतालीभिरष्टाभिः सूड उच्यते ॥

हम्मीरः

### सूडालिक्रमे विप्रकीर्णाः

सूडक्रमस्य मध्ये चेद्सावालिक्रमो भवेत्।
सूडालिक्रमसंबन्धाद् द्वात्रिंशदिति कीर्तिताः ॥
ततोऽन्यान्विप्रकीर्णांस्तान् प्रसिद्धान् कतिचिद्ब्रुवे।
श्रीरङ्गः श्रीविलासः स्यात्पञ्चभङ्गिरवः परम्।
पञ्चाननो मातलिको त्रिपदी च चतुष्पदी ॥

हम्मीरः

### सूत्रधारः

सोपोहनास्तद्विना वा ध्रुवा सधपनीमुखाः।
सूत्रधारप्रवेशार्थमुक्तोऽस्मिन् पूर्वमेव हि ॥

कुम्भः

सूत्रधारः स्मृतो नाट्ये सूत्रं धारयतीत्यतः।
विद्वान्वाग्मी कविर्दक्षस्तौर्यत्रयविचक्षणः ॥
नाट्यप्रयोगकुशलो रसभावविवेचकः।
नानादेशसमुद्भूतवेषभूषाविशारदः ॥
कामशास्त्ररहस्यज्ञो नानाशिल्पविचक्षणः।
ऊहापोहान्वितः शक्तो धारणे चोपदेशने।
उत्तमप्रकृतिर्नाट्याचार्यः स सूत्रधारकः ॥

वेमभूपालः

### सूत्रधारपठिता आर्या

सूत्रधारः पठेदार्यामथ शृङ्गारमङ्गलाम्—
रतिकेलिभग्नवलयस्फुटमुण्डितगण्डमाननं मुकुरे।
सनखक्षरितधिया स्थगयन्ती जयति वल्लभा शम्भोः ॥

विप्रदासः

### सूत्रधारविभागः

चतुरश्रत्र्यश्रभेदाद्विविधः स पुनर्द्विधा।
शुद्धचित्रविभेदेन पृथगेवं चतुर्विधः ॥
करणाङ्गहारराहित्यं शुद्धता चित्रता पुनः।
तत्सद्भावोऽथ चित्राचैर्मार्गैर्भिन्नध्रुवायुतः ॥
चतुरश्रस्तथा त्र्यश्रः षड्विधः कैश्चिदिष्यते।
केषांचन मते मिश्रो द्वयं संमिश्रणान्मिथः ॥

कुम्भः

### सूत्रधारस्य गतिप्रचाराः

सूत्रधारः सललितैः पार्श्वक्रान्तक्रमोद्यतैः।
तालवाद्यलयोपेतैः पादैः प्रकृतिकोमलैः ॥
रङ्गकोणं समुद्दिश्य सम्यक् पञ्चपदीं व्रजेत्।
गमने पञ्चपाद्यास्तु वेपमानाङ्घ्रिणा भवेत् ॥
विक्षेपो दक्षिणे च स्यादेवं सर्वासु दिक्ष्वपि।
परिवृत्तिरतश्चैव कोणेष्वन्येष्वपि क्रमात् ॥
पृथक् पृथक् पञ्चपदीं विदधानो नटाग्रणीः।
सह मध्यपदे नाट्यपदानामेकविंशतिम् ॥

गतागतैर्भवेदेवं विकृष्टे रङ्गमण्डपे।
त्र्यश्ररङ्गे सूत्रधारस्त्र्यश्रां पञ्चपदीं व्रजेत्।
चतुरश्राभिधे रङ्गे चतुरश्रं गतिं भजेत्॥

वेमभूपालः

## सूनुशब्दः

हस्तोपरि न्यसेद् दृष्टिं यत्र दृष्टिस्ततो मनः।
मनसि स्थापयेद्भावं यत्र भावी रसस्ततः।
गीतमालम्बयेदङ्गैरर्थं हस्तेन दर्शयेत्॥
नानाभावं तु नेत्राभ्यामङ्घ्रिभ्यां तालदर्शनम्।
मन्दंमन्दचलद्दीपशिखारेखाङ्घ्रिचारणम्।
नृत्ते तत्त्वविचारज्ञैः सूनुशब्द इति स्मृतः॥

कुम्भः

## सूरिः

लक्ष्यप्रवीणे स हि शास्त्रवेत्ता शास्त्रप्रवीणे स हि दक्ष्यलक्ष्यः।
यो वेत्ति लक्ष्यं सकलं च शास्त्रं वाग्गेयकारश्च स एव सूरिः॥

कुम्भः

## सूलादम्

ध्रुवादिसप्ततालश्च स्वरभाषापदान्यपि।
स्वररागैः प्रगायन्ते सूलाद्यमिति कथ्यते॥

भरतकल्पलता

## सैन्धवलक्षणम्—लासः

पात्रं वञ्चितसंकेतं पाठ्यं नाट्येन चोज्झितम्।
भाषा च सैन्धवी यत्र तज्ज्ञास्तत्सैन्धवं विदुः॥

नृत्तरत्नावली

## सैन्धविकम्

नर्कुटं खड्गकं चैव त्रिविधं संप्रयोजयेत्।
सैन्धवीमाश्रितां भाषां ज्ञेयं सैन्धविकं बुधैः॥
रूपवाद्यादिसंयुक्तं युग्मतालकृतं तथा।
वितस्तालिप्तमार्गेण सैन्धवं वाद्यमिष्यते।
सपाठ्यं स्वल्पमप्यत्र प्रकुर्वीत विचक्षणः॥

नाट्यशास्त्रे

## सैन्धवीलक्षणम्

सैन्धवी भूरिगान्धारा षड्जधैवतकम्पिता।
सन्यासांशेत्युपाङ्गानि वराद्याः कथितानि षट्॥

मोक्षदेवः

## सोपोहनाः उत्थापिन्यादयः ध्रुवाः

उत्थापिन्या ध्रुवाया स्यात्कलाष्टकमुपोहनम्।
षट्कलं परिवर्त्ताया ध्रुवायाः स्यादुपोहनम्॥
कलाभिरपकृष्टायाश्चतुर्भिः स्यादुपोहनं।
अर्चिताया ध्रुवायाः स्याद्विकलं स्यादुपोहनम्।
उपोहनं स्यात्त्रिकलं विक्षिप्ताया उपोहनम्॥

विप्रदासः

## सोमवल्लभलक्षणम्

स्वराः सप्ताङ्कपाटाश्च मालिनीच्छन्दसा पदम्।
सोमवल्लभतालश्च त्रितालस्तोभका अपि॥
गातृनेतृप्रबन्धानामाभोगे नाम सूत्रिणी।
सोमवल्लभसंज्ञे स्यात्प्रबन्धे बन्धहारिणी॥

सोमराजदेवः

## सोमराजदेवः

आसीद्गम्भीरलक्ष्मीहठतरुणदृढप्रौढवल्गत्कृपाणः
सङ्ग्रामोच्चापचापोत्कटकुलनलिनीषण्डचण्डांशुरूपी।
द्वास्थः श्रीभीमभर्तुर्नृपमुकुटमणेः श्रीजगद्देवनामा
तस्य श्रीसोमराजः समजनि तनयः काश्यपीकल्पवृक्षः॥

सोमराजदेवः

## सोमेश्वरमतम्

श्रीरागो रागिणीयुक्तः शिशिरे गीयते बुधैः।
वसन्तः स्वसहायैस्तु वसन्तार्थे प्रगीयते।
भैरवस्त्वसहायैस्तु ऋतौ ग्रीष्मे प्रगीयते॥
पञ्चमस्तु तथा गेयो रागिण्या सह शारदे।
मेघरागो रागिणीभिर्युक्तो वर्षासु गीयते॥
नट्टनारायणो रागो रागिण्या सह हेमके।
यथेच्छयाऽवगातव्यः सर्वर्तुषु सुखप्रदः॥

सङ्गीतदर्पणः

## संयुतहस्तेषु योगप्रदस्य लक्षणम्

पताकावक्रसंयुक्तौ हस्तौ योगप्रदो भवेत्।
अन्योन्यप्रीतिकरणे मेलनेऽपि विधीयते॥

विप्रदासः

## स्कन्धभ्रान्तम्

पृथ्व्यां स्थित्वांसयुग्मेन कृत्वा चैवोत्कटासनम्।
करणञ्चाञ्चितं कृत्वा भृत्वाऽङ्गान्तरसञ्चरे॥

बाहुभ्यां भुवमाक्रम्य भ्रामं भ्रामं च पूर्ववत् ।
तिष्ठेत्प्रतिदिशं यत्र तत्स्कन्धभ्रान्तमुच्यते ॥

कुम्भः

## स्कन्धवाद्यम्

ईदृशः पटहो यस्तु कवलाप्रमुखद्वयम् ।
नाटके घटिते तद्वैरूर्ध्ववक्त्रस्तु वाद्यते ॥
चतुर्विंशाङ्गुलायामास्त्वष्टाविंशति वेदनाः ।
पिण्डेऽङ्गुलमिता सा स्यादष्टाङ्गुलमितान्तरा ॥
एकादशाङ्गुले कार्ये वल्लीमण्डलिके शुभे ।
वल्लीपिहिते कार्ये षड्रन्ध्रे सूत्रगुम्फिते ॥
अर्गलानि पुरस्त्रीणि द्विपार्श्वकलशानि च ।
पश्चाद् द्वेधा विधातव्ये तद्वत्कलशसंयुते ॥
मध्ये सूत्रान्तराले च भवेदुदरपट्टिका ।
तदन्तर्वद्धिकाले तु वामहस्तं विनिक्षिपेत् ॥
रज्वासमं विनिपत्य द्वयेप्युत्कस्तकौ तयोः ।
तद्योजनाय द्विगुणा कर्तव्या स्कन्धपट्टिका ॥
अङ्गुलस्य चतुर्भागं छिद्रमेकं प्रकल्पयेत् ।
कृतं भूलोकमल्लेन स्कन्धवाद्यस्य लक्षणम् ॥

सोमेश्वरः

## स्खलितः

यो निर्गच्छति दुःखेन स्खलितः सोऽभिधीयते ।
अव्यवस्थासु सव्याधेः प्रसूतिसमयेऽपि च ॥

कुम्भः

## स्तब्धः

बद्धः स्तब्धस्तु विज्ञेयः ... ... ... ।

कुम्भः

## स्तम्भक्रीडनका

स्तम्भक्रीडनका तदा ।
तिर्यक् प्रसृतपादस्य यदा पार्श्वं स्पृशेन्मुहुः ।
तालेन चान्यपादस्य ।

कुम्भः

## स्तम्भस्थापनम्

प्रागादिदिक्पतिभ्योऽन्नं कल्पयेत्प्रयतात्मवान् ।
मुहूर्तेनानुकूलेन मूलेन श्रवणेन वा ॥
रोहिण्यां वोपोषितस्सन्नुपाध्यायस्समाहितः ।
स्तम्भानां स्थापनं कुर्याल्लग्ने सुग्रहवीक्षिते ॥

कुम्भः

## स्तम्भस्थापनमन्त्रः

परचक्रभयं तस्मात्तत्र यत्नो विधीयते ।
स्तम्भस्थापनमन्त्रोऽयं प्रणवादिनमोऽन्तकः ॥
यथाऽचलो गिरिर्मेरुर्हिमवांश्च महाचलः ।
जयावहो नरेन्द्रश्च तथा त्वमचलो भव ॥

कुम्भः

## स्तम्भपूजनम्

स्तम्भान् संपूजयेत्पश्चाद्वस्त्रमाल्यानुलेपनैः ।
सितै रक्तैस्तथा श्वेतैर्नीलैश्चैव यथाक्रमात् ॥
पायसं गुडोदनं च कृतान्नं कृशरां तथा ।
द्विजेभ्यो पूजनं दद्यात्स्तम्भानुक्रमतः सुधीः ॥

कुम्भः

## स्तम्भाः

सुशिल्पिघटिता स्थाप्याः कुम्भिन्यः पूर्वमेव तु ।
अन्तर्बहिर्मानसूत्रादर्धेन स्युः स्थिरं स्थिताः ॥
अग्निकोणं पुरस्कृत्य स्तम्भाः स्युर्ब्राह्मणादयः ।
स्वर्णताम्ररूप्यलोहस्तन्मूलेऽनुक्रमात् क्षिपेत् ॥

कुम्भः

## स्तुतिः

श्रीफलोपमकुचाधरलीलाभृत्कपोलजघनोरुविभ्रमम् ।
प्रीतिपूर्वसुरतं प्रतितोत्साहमत्रगदितं मया ॥

कुम्भः

## स्त्रीणां स्थानानि

वामस्तालान्तरत्र्यस्रो दक्षिणश्चरणः समः ।
प्रसन्नं वदनं वक्षः समुन्नतमनुन्नता ॥
कटिर्नितम्बगो हस्तो दक्षिणोऽन्यो लताकरः ।
यत्रायतं तदाख्यातं कमला चात्र देवता
अवहित्थं तदेव स्यात् विपर्यासेन पादयोः ॥

हम्मीरः

## स्त्रीणां भूषणानि

अथ स्त्रीणां भूषणं तु कथ्यते नात्र संशयः ।
चूडामणिः शिखापाशसुवर्णस्थासकास्तथा ॥
गवाक्षाकाररचना चारुमौक्तिकजालकम् ।
ततश्चैव भ्रमरकं तथा मौक्तिककुब्जकम् ॥
शिरोभूषणमित्यादि धार्यं देशानुसारतः ।
कीलितं विविधै रत्नैर्ललाटतिलकं तथा ॥

कर्णिका कर्णपत्रं च कर्णवेष्टनमेव च।
कर्णमुद्रा तथा कर्णोत्कीलकप्रभृतीनि च ॥
कर्णयोर्भूषणानि स्युः कपोले पत्रवल्लरी।
नासिकाभरणं चैव तथा पादाङ्गुलीयकम् ॥
... ... ... ... ... नेत्रयोरञ्जनं तथा।
मनोहरेण ताम्बूलरागेणाधररञ्जनम् ॥
मुक्तावली रत्नमाला ग्रीवायां पदकादि च।
कण्ठस्य भूषणं बाह्वाः पुनर्भूषणमङ्गदम् ॥
कटकानि च चित्राणि तथा रत्नाङ्गुलीयकम्।
काञ्ची कलापा विविधाः किङ्किणीजालमञ्जुलाः ॥
नूपुरौ हंसकश्चैव तथा पादाङ्गुलीयकम्।
अलक्तकादिना पादनखरञ्जनमित्यपि ॥
भूषणान्येवमादीनि स्त्रीणां नाट्ये यथोचितम्।
तत्तद्देशानुसारेण कल्पयेन्नाट्यकोविदः ॥

वेमभूपालः

## स्त्रीनृत्यम्

स्त्रीनृत्यं लास्यमुच्यते।

सङ्गीतनारायणे

## स्त्रीरागाः

एतेषां कामिनीर्वक्ष्ये सङ्गीतक्रमयोजिताः।
वेलावुली मलहरी भौलिर्भूपालयोषितः ॥
देवक्रिया मेघरञ्जी करञ्जी भैरवस्त्रियः।
हिन्दोली माहुरी चैव बाला श्रीरागवल्लभाः ॥
शङ्कराभरणं चैव देशी च ललिता मता।
योषितः पञ्चरस्यैव कीर्तिता गीतवेदिभिः ॥
रामक्रिया वराली वा कौलिका मधुयोषितः।
गुण्डक्रिया गुर्जरी च गौळमालवयोषितः ॥
धन्यासिका च काम्भोजी तथा कर्णाटगौलिका।
बङ्गालस्य स्त्रियः ख्याताः सङ्गीतक्रमवेदिभिः ॥
नारायणाख्यो गौळाख्यो देशाक्षी चाहरी मता।
नाटकं नटमाख्याता रागमर्मविशारदैः ॥

शृङ्गारशेखरः

## स्थानकलक्षणम्

पादौ पक्षस्थितौ पादौ स्थानके मण्डलाह्वये।
अस्यैव दक्षिणे पादे पञ्चतालप्रसारिते ॥
स्यादालीढमत्यप्रत्यालीढमङ्घ्रिविपर्ययात्।
एकतालान्तरस्त्र्यस्रो वामोऽङ्घ्रिर्दक्षिणः समः ॥
नितम्बस्थौ लतासंज्ञौ हस्तौ स्यात्कटिरुन्नता।
समं समुन्नतं वक्षः प्रसन्नमुखमायतम् ॥
आयतास्यैव हस्ताङ्घ्रिविपर्यासेऽवहित्थकम्।
एको यत्र समोऽङ्घ्रिः स्यादन्यस्त्वर्गलसंस्थितः।
सूच्या विद्धे न विद्धे वा तदश्वक्रान्तमुच्यते ॥

सोमराजदेवः

## स्थानभ्रष्टः

तारकामन्द्रमध्येषु अशक्तो यस्तु गायति।

भरतकल्पलता

## स्थानमाधुर्यम्

त्रिषु स्थानेषु कठिनं करालं तद्विदुर्बुधाः।
माधुर्यं मन्द्रमध्ये च शारीरं मधुरं स्मृतम् ॥
रागप्रकाशकं तारे सौबलं परिकीर्तितम्।
बहुभङ्गी तदेव स्यादेतत्त्रितयमिश्रितम् ॥

कुम्भः

## स्थानानि

वैष्णवं समपादं च वैशाखं मण्डलं तथा।
प्रत्यालीढमथालीढं स्थानान्येतानि षट् नृणां ॥
स्थानकानि पुनस्त्रीणि स्त्रीणामाहुर्मनीषिणः।
आयतं चावहित्थं च स्यादश्वक्रान्तमेव च ॥
एकः समो हि यत्रान्यो सार्द्धतालद्वयान्तरः।
भवेत्पक्षस्थिते अस्रे जङ्घायां किञ्चिदुन्नतः ॥
सावष्टम्भं वपुः शेषं स्थानकं चेति वैष्णवम्।
समपादे सशेषादौ तालमात्रकृतान्तरौ ॥
सार्धतालद्वयस्थोरु सार्धतालद्वयान्तरौ।
व्यक्तौ पक्षस्थितौ पादौ वैशाखस्थानके मतौ।
कटिरावसनौ स्यातां चतुस्तालान्तरस्थिती ॥

सोमराजदेवः

## स्थानानां विनियोगः

पदार्थानुनयेऽप्येव वाक्यार्थानुप्रवेशतः।
आदौ मध्येऽवसाने वा कुर्यात्तानि यथोचितम् ॥
प्राधान्यख्यापनायेति रहस्यमिदमीरितम्।
यत्राभिनयहस्तानां प्राधान्यं करणे भवेत् ॥

वाक्यार्थाभिनयस्तत्र कार्यो नृत्तेन केवले ।
नृत्ते हस्तप्रधानं तु करणं तत्र शस्यते ॥

नृत्तरत्नावली

## स्थाप्याः

अंशो जीवस्वरस्तस्य तत्प्राधान्येन वर्तिताः ।
ये ते जीवस्वरस्य तु तथा वेदध्वनेरपि ।
वेदध्वनिर्न मध्यानां स्थाप्या ये ते प्रकीर्तिता ॥
अन्यायतः प्रयोगा ये स्थाप्यास्ते स्युरिहाध्वनः ।

कुम्भः

## स्थायगतिः

मत्तमातङ्गवद्यत्र सविलासा भवेद्यदि ।
गीतस्य तद्युता स्थायागतेरुक्ता मनीषिभिः ॥

कुम्भः

## स्थायगुणः

स्थापनायास्तु ये ज्ञेया स्थाया गुणमिधावशात् ।
पुनः पुनः स्थापयित्वा येषां प्रतिपदं कृतिः ॥

कुम्भः

## स्थायाः

स्थाया गीतेषु ते ज्ञेयाः घटनाया मनीषिभिः ।

कुम्भः

रागस्य भजते रक्तिः प्रयत्नाद्भजनं मतम् ।
तद्युजो भजनस्योक्ताः स्थापनायाश्च तान् जगुः ॥
येषां संस्थाप्य संस्थाप्य कृतिः प्रतिपदं भवेत् ।
शक्तेरतिशयाधानाद्रक्तेश्छायाः प्रकीर्तिताः ॥

मोक्षदेवः

## स्थायिदृष्टिलक्षणम्

साभिलाषा महर्षात्र विकासा समतारका ।
मधुरा च भवेद्दृष्टिः स्निग्धेति रतिभावजा ॥
ऋज्वाततारा च लोला च स्मरगर्भा विमेषभाक् ।
किञ्चिदाकुञ्चिता दृष्टिः क्रुद्धा क्रुद्धे प्रशस्यते ॥
निश्चले तारके यस्याः स विलासा स्थिरा च या ।
सत्त्वोद्गारपरा दृष्टिः सा दृप्तोत्साहसम्भवा ॥
स्फारोभयपुटा तारा तरलीकृततारका ।
निष्कम्पमध्या निर्दिष्टा भावदृष्टिर्भयानका ॥
लक्ष्यं वीक्षितुमुद्विग्ना ध्यानोन्मीलिततारका ।
ससङ्कोचपुटा दृष्टिः जुगुप्सायां जुगुप्सिता ॥
अतिस्पष्टपुटद्वन्द्वा भृशमुद्धततारका ।
सविकासा समा दृष्टिर्विस्मये विस्मृता स्मृता ॥

सोमराजदेवः

## स्थायिनो मुख्यता

एवं विभावादिवर्गे भावाः स्थायिन एव हि ।
रसत्वव्यपदेशस्य योजनं नान्यदिष्यते ॥

कुम्भः

## स्थायिलक्षणम्

रसचर्वणपर्यन्तं यस्य स्याद्व्यभिचारिणः ।
व्याप्तिः स एव भावः स्यात्स्थायी संचारिणः परे ॥

विप्रदासः

## स्थायिभावः

या स्वकारणताप्रोक्तानुभावानां तु साऽन्यथा ।
तीव्रसंवेदनगताभिनयप्रतिपादिता ॥
भावस्य रसता तस्माद्भावावस्थाजुषोऽस्य च ।
हेतुत्वमनुभावानां सामाजिकधियं प्रति ॥
अर्धार्धे भरताचार्यसंमतिः सम्यगीर्यते ।
यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम् ॥
आस्वादयन्ति भुञ्जानां भुक्तं भक्तविदो जनाः ।
भावाभिनयसंबन्धान् तान्तान् भावांस्तदा बुधाः ॥
आस्वादयन्ति मनसा तस्मान्नाट्ये रसाः स्मृताः ।
यथा गुडादिभिर्द्रव्यैः व्यञ्जनौषधिसंयुतैः ॥
निर्वर्तन्ते षाडवाद्या नानाभावोपसङ्गताः ।
स्थायिनो रसतां भावास्तथैव प्राप्नुवन्ति हि ॥

कुम्भः

रतिर्हासः शुचः क्रोधोत्साहौ भयजुगुप्सने ।
विषादश्चाथ निर्वेदः स्थायिभावाः नवेत्यमी ॥

हम्मीरः

## स्थायिभावदृष्टयः

स्निग्धदृष्टा च लीना च क्रुद्धा दृप्ता भयान्विता ।
जुगुप्सिता विस्मितेति दृष्टयः स्थायिभावजाः ॥

सङ्गीतनारायणे

**स्थायिस्वरूपः**

सत्यसंस्काररूपेण स तु स्थायी सभागतः।
न तिरस्कृतसंस्कारास्त्वङ्गे गच्छन्ति नापरे ॥

मोक्षदेवः

**स्थायिभावलक्षणम्**

प्रथमे यः समुद्भूतस्तथाऽन्तेऽप्यवतिष्ठते।
स्थायी भावः स विज्ञेयो ............ ॥

शुभङ्करः

**स्थायी**

आदौ मन्द्रस्वरासक्तं स्थायी चेत्यमिधीयते।

भरतकल्पलता

सर्वेषां समवेतानां रूपं यस्य भवेद्बहु।
स मन्तव्यो रसः स्थायी शेषाः सञ्चारिणो मताः ॥

कुम्भः

**स्थितपाठ्यलक्षणम्—लासः**

आसनस्था वदेद्यत्र प्राकृतं विरहे वधूः।
मन्मथानलतप्ताङ्गी स्थितपाठ्यं तदुच्यते ॥

नृत्तरत्नावली

**स्थितपाठ्यविधिः**

स्थितपाठ्यस्य वक्ष्यामि विधानं चाप्यतः परम्।
वृत्तमेकमथ द्वे वा योजयेत्पञ्चपाणिना ॥
ततःपरं ते भूयोऽपि युग्मतालेन वा स्मृते।
अवसानं च कर्तव्यं त्वरितं पञ्चपाणिना ॥
द्विकलेनेति विज्ञेयं स्थितं पाठ्यं प्रयोक्तृभिः।
उपोह्य तालं त्र्यश्रं तु वृत्त्या तैस्तैः समैस्तथा ॥
आसीनंपाठ्यं युञ्जीत सर्वैर्भूपैस्तु पौरुषैः।
गेयं चतुर्भिः पादैस्तु समैरर्थवशानुगैः।
आसीनपाठ्यं कर्तव्यं विधिवत्पञ्चपाणिना ॥

नाट्यशास्त्रे

**स्थिरकम्पः**

स स्थिरो यत्र कम्पः स्यात्स्वराणां छायवर्णगः।

कुम्भः

**स्थूलहस्तः—हस्तपाटः**

स्थूलहस्तस्तदा ज्ञेयो यदा वाद्यपुटं द्वयम्।
ऊर्ध्वघातद्वयं त्यक्त्वा तलहस्तेन हन्यते ॥
खुं ड दां

कुम्भः

**स्निग्धमधुसूदनरासावलयप्रबन्धः**

मालवश्रीस्मृतो रागस्तालो निःसारुसंज्ञकः।
वाग्गेयकारनामांकात् पदतस्तेन सन्ततिः ॥

ततपाटपदानि स्युः पञ्चषानि रसोऽत्र च।
शृङ्गारो वासुदेवस्य क्रीडनं रासकादिभि ॥

छन्दोऽपि रासको ज्ञेयं स्वेच्छया वा कृतं भवेत्।
स्निग्धमधुसूदनोदयरासावलयनामकः।
प्रबन्धः पृथिवीभर्त्रा प्रबन्धप्रीतये हरेः ॥

कुम्भः

**स्नुपाहस्तः**

पताकेन भुवं दर्शयन् वामहस्तेऽर्धचन्द्रकम्।
स्नुषायां च प्रयोक्तव्यं कोहलेन प्रकीर्तितम् ॥

भरतकल्पलता

**स्फुरितम्**

स्फुरितं कम्पितं प्रोक्तं शीते शीतज्वरे बुधैः।

शुभङ्करः

**स्यन्दिता**

वक्षोजप्रणयीमुष्टिः अन्योन्यावर्जिताः कराः।
यस्यां सा जनिता ज्ञेया पादस्तु तलसंचरः ॥

एता देशीविदः केचिदूचुर्मुसलघाटिका।
जनीविषण्णोरुसमे वामेतिर्यक्प्रसारितः ॥

पञ्चताळान्तरं तस्यां स्यन्दिते यन्निगद्यते।
ताळस्तत्तत्करांगुष्ठमध्ययोस्तु तयोर्मतम् ॥

जायनः

**स्रस्तालसम्**

शरीरमलसं नेत्रे मन्थराकारधारिणी।
हस्तौ स्रस्तौ वियुक्तौ च तदा स्रस्तालसम्मतम्।
व्याधिमूर्च्छामदग्लानिहानिभीतिषु तन्मतम् ॥

कुम्भः

**स्वच्छाया**

स्वररागानुमिश्रा च स्वच्छाया परिकीर्तिता।

भरतकल्पलता

**स्वस्तिकाश्लेषः**

विभ्रतो स्वस्तिकाकारं करयोः स्कन्धदेशतः।
वलनं चेत्तदा प्रोक्तं स्वस्तिकाश्लेषचालयम् ॥

### स्वरः

राजते यः स्वयं नादः स स्वरः सान्वयो मतः ।

सोमराजदेवः

तारकादौ समासक्तः स्वरश्च परिकीर्तितः ।

भरतकल्पलता

राजृ दीप्ताविति ... स्वशब्दपूर्वकस्य च ।
स्वयं यो राजते यस्मात् तस्मादेष स्वरः स्मृतः ॥

मतङ्गः

### स्वरसाधारणम्

स्वरसाधारणं काकल्यन्तरस्वरौ । तत्र—द्विश्रुतिप्रकर्षणान्निषादवान् काकलीसंज्ञो निषादः; न षड्जः ।

कलत्वात्काकली कष्टत्वाद्वाति सौक्ष्म्यादथवा काक्षित्वात् । उभयसंबन्धात्काकलीसंज्ञा । यथा:— षण्णां रसानां मध्ये लवणः क्षारसंज्ञः, एवं निषादः काकलीसंज्ञो गान्धारश्चान्तरसंज्ञो भवति ।

नाट्यशास्त्रे

### स्वरकरणम्

पदैश्च यत्र ... ध्रुवोद्ग्राहौ निरन्तरौ ।
न्यासांसौ च स्वरेऽभीष्टे रासस्तालो द्रुतो लयः ।
आभोगनामने तु स्याद्द्वातुश्चैव ग्रहः पुनः ॥

मोक्षदेवः

### स्वरकाकुः

श्रुतिन्यूनाधिकत्वेन या स्वरान्तरसंश्रया ।
स्वरान्तरस्य रागे स्यात्स्वरकाकुरसौ भवेत् ॥

कुम्भः

### स्वरकुलानि

रिधौ ऋषिकुले जातौ निषादोऽसुरवंशजः ।
देववंशास्तु समगाः पञ्चमः पितृवंशजः ॥
ब्रह्मजाती समौ ज्ञेयौ रिधौ क्षत्रियजातिकौ ।
निगौ वैश्याविति प्रोक्तौ पञ्चमः शूद्रजातिकः ॥

सङ्गीतमकरन्दे

### स्वरगोत्राणि

षड्जस्य जमदग्निश्च आत्रेयो ऋषभस्य च ।
गान्धारस्य गौतमस्तु वसिष्ठो मध्यमस्य च ॥
श्रीवत्सः पञ्चमस्यैव धैवतस्य पराशरः ।
शालङ्कायो निषादस्य गोत्राणि कथितानि च ? ॥

सङ्गीतमकरन्दे

### स्वरछन्दांसि

क्रमादनुष्टुब् गायत्री त्रिष्टुब् च बृहती तथा ।
पङ्क्त्युष्णिगौ च जगती छन्दांसि परिकीर्तिताः ॥

संगीतमकरन्दः

### स्वरच्छाया

श्रुतिनानाधिकतया रागे स्वरस्य कस्यचित् ।
च्छायाया दृश्यते तां तु स्वरच्छायां जगुर्बुधाः ॥

कुम्भः

### स्वरताराः

षड्जः शतभिषग्जश्च चित्रा च ऋषभस्य च ।
गान्धारस्य धनिष्ठा भं मध्यमस्य मखा स्मृता ॥
पञ्चमस्योत्तरा भं स्यात्पूर्वाषाढा तु धैवतम् ।
अनूराधा निषादस्य षड्जादीनां तु तारकाः ॥

सङ्गीतमकरन्दे

### स्वरस्थानानि

तत्र षड्जश्चतुर्थी स्यात्सप्तमी ऋषभस्वरः ।
ततो गान्धारसंस्थाना नवमी स्यात्ततःपरम् ॥
त्रयोदशी श्रुतिस्तत्र मध्यमस्वरवादिनी ।
पञ्चमः स्यात्सप्तदशी धः स्याद् विंशतिका श्रुतिः ।
स्याद्द्वाविंशतिका तत्र निषादस्वरवादिनी ॥

सङ्गीतसूर्योदये

### स्वरदेवताः

वह्निर्ब्रह्मा शारदा च शर्वश्रीनाथभास्कराः ।
गणेश्वरादयो देवाः षड्जादीनां तु देवताः ॥

सङ्गीतमकरन्दे

### स्वरदोषाः

दुष्टं लोकेन शास्त्रेण श्रुतिकालविरोधि च ।
पुनरुक्ताङ्कितं बाह्यं गतक्रममपार्थकम् ।
ग्राम्यं सन्दिग्धमित्येवं दशधा स्वरदुष्टता ॥

भरतकल्पलता

### स्वरद्वीपाः

जम्बुशाककुशक्रौञ्चशाल्मलीश्वेतनामसु ।
द्वीपेषु पुष्करे चैव जाताः षड्जादयः स्वराः ॥

सङ्गीतमकरन्दे

## स्वरप्रबन्धाः

प्रबन्धान् संप्रवक्ष्यामि नामलक्षणसंयुतान् ।
स्वरार्थः स्वरपूर्वं च करणं वर्तिनी तथा ॥
विवर्तिनी मातृका स्यादेला ढौङ्की तु जोम्बडः ।
लम्भको जयमाला च चर्या मङ्गल एव च ॥
एकावली रासकः स्याद्दङ्कचारिण्यतःपरम् ।
कैवाडो नन्दनामाथ पञ्चतालेश्वरामिधः ॥
गद्यं च मङ्गलाचारो मनोरम उदीरितः ।
प्रमोदो वर्णरसको रससन्दोहकस्तथा ॥
सोमकीर्तिप्रबन्धः स्यात्ततो रागकदम्बकः ।
आर्या गाथा चच्चरी च वीरश्रीशुकशारिका ॥
सोमवल्लभसंज्ञः स्यादथ कन्दश्चतुर्मुखः ।
प्रतापवर्धनाख्यश्च विजयश्चक्रवालकः ॥
त्रिभङ्गिर्विक्रमश्चाथ वाच्यः क्रौञ्चपदस्तथा ।
कलहंसोऽथ मन्तव्यो नाम्ना हरिविलासकः ।
पबन्धानामिति प्रोक्ताश्चत्वारिंशद्द्वयाधिकाः ॥

सोमराजदेवः

## स्वरप्रमेयाः

श्रुतयोऽथ स्वरा ग्रामौ मूर्छनास्तानसंयुताः ।
स्थानानि वृत्तयश्चैव शुष्कं साधारणे तथा ।
जातयश्चैव वर्णाश्च नानालङ्कारसंयुताः ॥
एष स्वरगतोद्देशः ... । दत्तिलः

## स्वरभिन्नः

यदा वादी गृहीतः स्यात् संवादी च विमोक्ष्यते ।
विवादी चानुवादी वा स्वराभिन्नः स उच्यते ॥

मतङ्गः

## स्वरभेदाः तेषां लक्षणानि च

षड्जः स्यादृषभश्चैव गान्धारो मध्यमस्तथा ।
पञ्चमो धैवतश्चाथ निषादश्चेति ते क्रमात् ॥
तेषां संज्ञा सरिगमपधनीसपरा मताः ।
नासा कण्ठ उरस्तालुर्जिह्वा दन्तस्तथैव च ॥
षड्भ्यः सञ्जायते यस्मात्ततः षड्ज इति स्मृतः ।
नाभेः समुत्थितो वायुस्तालुर्जिह्वामसंहतः ॥
ऋषभो नदते यस्मात्तस्मादृषभ उच्यते ।
वायुः समुत्थितो नाभेर्जिह्वातालवन्तकण्ठजः ॥
जातो मुख्यश्च गान्धर्वे गान्धारस्तेन स स्मृतः ।
वायुः समुत्थितो नाभेर्हृद्घोष्ठससमाहतः ॥
स्वरमध्यस्थितो यस्मात्तेनासौ मध्यमो मतः ।
वायुः समुत्थितो नाभेरुरःकण्ठशिरोहतः ॥
पञ्चमेन च सञ्जातः पञ्चमस्तेन कथ्यते ।
वायुः समुत्थितो नाभेरुरो दन्तशिरस्तथा ॥
कण्ठस्थानस्थितो यस्मात्तेनासौ धैवतो मतः ।
निषीदन्ति स्वराः सर्वे निषादस्तेन कथ्यते ॥

हम्मीरः

## स्वरभेदाः

स्वरा वादी च संवादी विवादी च चतुर्विधाः ।
अनुवादी च सर्वत्र प्रयोगे बहुशः स्मृतः ॥
वादी स्वरस्तु राजा स्यान्मन्त्री संवादिरुच्यते ।
स्वरो विवादी वैरी स्यादनुवादी च भृत्यवत् ॥

सङ्गीतमकरन्दे

## स्वरमहिमा

येषु स्वरेषु वा प्रोक्ता बहुता चाल्पताऽपि वा ।
अनुक्ताऽपि हि सा ज्ञेया जातिष्वेषु स्वरेषु हि ॥

कुम्भः

## स्वररसाः

षड्जस्याद्भुतवीरौ च ऋषभस्य तु रौद्रकः ।
गान्धारस्य च शान्तं च हास्याख्यं मध्यमस्य च ॥
पञ्चमस्य च शृङ्गारो बीभत्सो धैवतस्य च ।
करुणा च निषादस्य सप्तस्थान रसा नव ॥

सङ्गीतमकरन्दे

## स्वरर्षयः

दक्षोऽत्रिः कपिलश्चैव वसिष्ठो भार्गवस्तथा ।
नारदस्तुम्बुरुश्चैव षड्जादीनां ऋषीश्वराः ॥

सङ्गीतमकरन्दे

## स्वरलक्षणम्

आवृत्य प्रथमं खण्डं गीयतेऽथ द्वितीयकम् ।
तृतीयं नाम युक्तं च ततस्त्वायमुदीर्यते ॥
अविच्छिन्नैः स्वरैर्यत्रारभ्यते खण्डयुग्मकम् ।
यतिः करणसंज्ञः स्यात्स्वराख्यं करणं मतम् ॥

ग्रहः कार्यो यथा काममत्र न्यासोंऽशसंयुतः।
प्रभोर्नाम स्वकीयं च देयं वाग्गेयकारकैः॥

सोमराजदेवः

स्वयं यो राजते नादः स स्वरः परिकीर्तितः।
सोऽपि सप्तविधस्तज्ज्ञैः प्रोक्तः षड्जादिभेदतः॥

हम्मीरः

## स्वरलङ्घितः

षड्जङ्घयन् स्वरान् भूरीन् लाघवादन्तरान्तरान्।
स्वरलङ्घितनामा स्यात्स्थायः सङ्कीर्णलक्षणः॥

कुम्भः

## स्वरस्वरूपः

स्वरः स्यात् हृदयानन्दकरः श्रवणगोचरः।
द्वाविंशतिश्च श्रुतयः स्वराश्च श्रुतियोनयः॥

षड्जश्चर्षभगान्धारो मध्यमः पञ्चमस्तथा।
धैवतश्च निषादश्च सप्तैते परिकीर्तिताः॥

भवन्ति षाड्जीप्रमुखाः सप्तैकादशजातयः।
न जातिरहितं किञ्चिद्गानं स्याद्भुवनत्रये॥

सोमराजदेवः

## स्वराः

स्वर्यते देशभाषायामाविक्षान्तं यथाविधि।
तेन स्वराः समाख्याता अन्ये षड्जादयः स्वराः॥

मतङ्गः

## स्वरादिलक्षणम्

ग्रामान् जातीः स्वरान् वर्णान् पञ्चगीतीरलङ्कृतीः।
अनिबद्धस्वरज्ञेयो स स्वरादिरिहोच्यते॥

मोक्षदेवः

## स्वराभ्यासः

यस्यामभ्यासवेगेन निर्यान्तीवोपरि स्वराः।

कुम्भः

## स्वस्तिकः

पादोऽथ स्वस्तिकाकारकारितः।

कुम्भः

तालेनैकतः केचित्तु स्वस्तिको द्विगुणस्ततः।
अब्जपत्त्रान्तगर्भश्च भ्रमराम्रेडिते मते।
केषांचित् पूर्वपूर्वस्माद्द्विगुणः स्यात्परः परः॥

हम्मीरः

—हस्तपाटः

स्वस्तिकौ चेत्करौ भूत्वा पुटमेकं प्रयत्नतः।
निहन्यतां स्वस्तिकं तं स्वस्तिकोऽत्र गतोऽवदत्॥
तकट तकट तक·

कुम्भः

## स्वस्तिकं, मध्यनन्द्यावर्तित च

मिथः श्लिष्टकनिष्ठौ च चरणौ कुञ्चितौ यदा।
स्वस्तिको संहितास्थाने स्वस्तिकं कीर्तितं तदा॥

तिर्यञ्चौ चरणौ पार्श्वसङ्गतौ वर्धमानकौ।
चरणौ वर्धमानस्थावितस्त्यन्तरितौ यदा।
षडङ्गुलान्तरौ मध्यनन्द्यावर्तं तदोदितम्॥

कुम्भः

## स्वस्तिकलक्षणम्

उत्श्लिष्टहंसपक्षाभ्यां गदितौ स्वस्तिकौ करौ।

हम्मीरः

## स्वस्थौ

स्वस्थौ स्वभावजौ प्रोक्तौ वायुस्वस्तिक्रियासु तौ।

कुम्भः

## स्वस्थम्

हस्तावूरु कटी न्यस्तौ हृदयं किञ्चिदुन्नतम्।
विस्तारिताञ्चितौ पादौ स्थानं तत्स्वस्थमुच्यते॥

कुम्भः

## स्वाधीनभर्तृका—नायिका

आश्लेषचुम्बनशतैः कुसुमादिदानैः
प्रेमोत्तरप्रणयकोमलचाटुवाग्भिः।
संस्तूयते प्रियतमेन च यानुरागात्
स्वाधीनभर्तृकपदप्रकटीकृता सा॥

शुभङ्करः

## स्वाभाविकः

स्वभाविको यथार्थस्तु भावेनाश्लिष्ट उच्यते।

कुम्भः

ह

## हतस्वरालक्षणम्

हतस्वरा वराटी स्यात्पञ्चमा हतकम्पिता ।
षड्जांशन्याससंयुक्ता मन्द्रधैवतभूषिता ॥

मोक्षदेवः

## हरिणत्रासिका

तलेऽङ्घ्र्योः स्वस्तिकीकृत्य कुञ्चिते वलितान्तके ।
उत्प्लुत्य निपतेताञ्चेद्धरिणत्रासिका तदा ॥

कुम्भः

## हरिणप्लुता

निपतेतां समुत्क्षिप्य यत्राङ्घ्री संहतौ भुवि ।
हरिणीव तदा चारी विज्ञेया हरिणप्लुता ॥

कुम्भः

## हरितालः

हरितालो देवमयः तं विना स्यान्मसी वृथा ।
तदेवं मन्त्रमुच्चार्य मन्त्रयेद्धरितालकम् ॥

वर्णिकाग्रहनाथ त्वं निर्मितोऽसि स्वयं भुवा ।
सर्वसिद्धिप्रदो नाट्ये सर्वदेवैश्च वन्दितः ॥

सर्वपापहरः साक्षात् हरिताल नमोऽस्तु ते ।
तस्मात्प्रयच्छ मे सिद्धिं सर्वदेवमय प्रभो ॥

ततः स्निग्धे शिलापट्टे हरितालं च चूर्णयेत् ।
विशोषितां मृदं कृत्वा कराभ्यां मर्दयेन्मुखम् ॥

समाश्लेषा यथा वक्त्रे समस्ते मृत्तिका भवेत् ।
नवनीतेन लिप्त्वाऽथ धूपं सर्वरसोवितम् ।
कृत्वा वक्त्रे लिपेत्तत्र हरितालं ततः समम् ॥

सङ्गीतनारायणे

## हर्षपुरी भाषा

षड्जांशग्रहणन्यासा तारपञ्चमभूषिता ।
मन्द्रमध्यमभूयिष्ठा धैवतेन विना कृता ॥

भाषा हर्षपुरी नाम हर्षादौ विनियोजिता ।
आचष्ट याष्टिकस्त्वेनां पूर्णां मालवकैशिके ॥

कुम्भः

## हसितः

नीनीनी । नीनीनीनी । धाधाधाधाधाधा । पापापापापा ।
मामामामा गागागारी रीस । इति हसितः ।

## हस्तक्षेत्राणि

पार्श्वद्वयपुरस्ताच्च पश्चादूर्ध्वमधःशिरः ।
ललाटकर्णस्कन्धोरोनाभयः कटिशीर्षकौ ।
ऊरुद्वयं च हस्तानां क्षेत्राणीति त्रयोदश ॥

कुम्भः

## हस्तः—सद्भेदाश्च

गजवाजिविमानाद्रि धूमं वर्णध्वजादि यत् ।
नाट्ये विधीयते सोऽयं हस्त इत्यभिधीयते ॥

स पुनस्त्रिविधो ज्ञेयः सन्धिमो व्याजिमस्तथा ।
वेष्टिमश्चेति यत्कीलवस्तुचर्मादिभिः कृतः ॥

सुसन्धिरूपं नाट्ये तु स सन्धिम इतीरितः ।
कृतं यन्लाक्षादिभिर्व्याजैः रूपं व्याजिम उच्यते ।
वेष्ट्यते जतुसिक्थाद्यैर्यद्रूपं वेष्टिमो मतः ॥

वेमभूपालः

## —वाद्यम्

चतुरश्रत्र्यश्रमिश्रखण्डतालैश्चतुर्विधः ।
हस्तोऽसौ यत्र खण्डानि दिंकारादीनि षोडश ।
यद्वाऽष्टौ वाऽथ चत्वारि द्वे वा खण्डे यथाविधि ॥

कुम्भः

## हस्तकरणम्

निष्पत्तौ निरपेक्षायां करस्याभिनयाय यः ।
क्रियाविशेषः क्रियते तद्धस्तकरणं मतम् ॥

सङ्गीतनारायणे

## हस्तकरणलक्षणम्

निष्पत्तौ निरपेक्षायां करस्याभिनयो हि यः ।
क्रियाविशेषः क्रियते तद्धस्तकरणं मतम् ॥

हम्मीरः

## हस्तकाः

योगप्रदालिङ्गनाख्यौ करौ द्विशिखरस्तथा ।
कलापकः किरीटश्च चषकश्चाथ लेखनः ॥
सप्तैते हस्तकास्सन्ति बृहद्देशीविदां मते ।
अष्टचत्वारिंशदेते भवन्त्यभिनये कराः ॥

कुम्भः

उपधानः सिंहमुखः कदम्बश्च निकुञ्चकः ।
असंयुतेषु चत्वारो भवन्त्यन्ये च हस्तकाः ॥

विप्रदासः

### हस्तकानामशीतित्वम्

सम्प्रदायाद्युक्तिबलाल्लोकाच्चात्र विशेषधीः ।
क्रमादशीतिरेवं स्युः सर्वे सम्भूय हस्तकाः ॥

कुम्भः

### हस्तप्राणाः

प्रसारितं कुञ्चितं च रेचितं चोचितं तथा ।
अपवेष्टितकं चापि प्रेरितोद्वेष्टिते तथा ॥

व्यावृत्तपरिवृत्ते च सङ्केतस्तदनन्तरम् ।
चिह्नं पदार्थटीकेति प्राणा द्वादश हस्तगाः ॥

भरतकल्पलता

### हस्तपाटः

हस्तपाटत्वमप्येषां हस्तेनोन्नमतो मतम् ।
त एव तलपाटाः स्युस्तलसंयोगसंभवाः ॥

तानुत्प्रेक्ष्य यथा वर्णं चत्वारो नन्दिनोदिताः ।
स्युरेकविंशतिर्हस्तपाटा वाद्यसमाश्रयात् ॥

षोडशान्ये हुडुक्कायां प्रायिकत्वे व्यवस्थिताः ।
हस्तपाटा अपाटाख्या अष्टौ विषमसंज्ञिनः ॥

कुम्भः

### हस्तपाटभेदाः

उत्फुल्लः खलकश्चैव पाण्यन्तरनिकुट्टकः ।
दण्डहस्तः पिण्डहस्तो युगहस्तोऽर्धहस्तकौ ॥

स्थूलहस्तोऽर्धार्धपाणिः पार्श्वपाण्यर्धपाणिकौ ।
कर्तरीसमकर्तर्यौ तथा विषमकर्तरी ॥

समपाणिश्च विषमपाणिः स्यात्पाणिहस्तकः ।
नागबन्धावघटकौ स्वस्तिकश्च समग्रहः ।
इत्येकविंशतिर्हस्तपाटाः स्युर्मुरजादिषु ॥

तलप्रहारः प्रथमः प्रहारो वलितस्तथा ।
गुरुगुम्फितसंज्ञश्चार्धसञ्चक्षिसञ्चकः ।
विषमः न्यस्त इत्यष्टौ ............... ॥

कुम्भः

### हस्तप्रचारः

अल्पो हस्तप्रचारः स्यात्प्रत्यक्षे भूरि सात्त्विके ।
परोक्षे प्रचुरः स स्यान्मध्यमे मध्यमो मतः ॥

कार्याः सुव्यक्तलक्ष्माणः पात्रैरुत्तममध्यमैः ।
स सौष्ठवा सुनीचैस्तु पाणयस्तद्विलक्षणाः ॥

हम्मीरः

### हस्तप्राणाः

प्रसारणं कुञ्चितं च रेचितं चापि पुंखितम् ।
अपवेष्टितकं चापि प्रेरितोद्वेष्टिते अपि ॥

व्यावृत्तपरिवृत्तश्च सङ्केतस्तदनन्तरम् ।
चिह्नं पदार्थटीकेति प्राणा द्वादश हस्तजाः ॥

शृङ्गारशेखरः

### हस्तप्राणविधिः

मणिबन्धाभिधायां तौ करौ सम्यक्प्रसारितौ ।
रेचिताख्यमिति ख्यातौ सर्वहस्तेष्वयं विधिः ॥

शृङ्गारशेखरः

### हस्तभेदाः

उत्तानः पार्श्वगश्चैव तथाऽधोमुख एव च ।
हस्तप्रचारस्त्रिविधो भरतेन प्रकीर्तिताः ॥ क्वचित्तु

उत्तानोधःस्थलः पार्श्वतलो हस्तोऽग्रतस्तलः ।
स्वयंमुखतलश्चोर्ध्वमुखोऽधोवदनस्तथा ॥

पराङ्मुखः सम्मुखश्च हस्तोऽन्यपार्श्वतो मुखः ।
ऊर्ध्वगोऽधोगतः पार्श्वगतो हस्तस्तिरोगतः ।
सम्मुखगत इत्याहुः हस्तान् पञ्चदशापरे ॥

सङ्गीतनारायणे

### हस्तरेचकलक्षणम्

हस्तयोर्भ्रमणं तूर्णं समं तद्धस्तपक्षयोः ।
पर्यायाः क्रियते यत्र स भवेद्हस्तरेचकः ॥

मोक्षदेवः

### हस्तलक्षणम्

प्रोक्तं हस्तद्वयं कैश्चिदसंयुक्तो निकुञ्चकः ।
युक्तो द्विशिखरे नृत्यहस्तकौ वरदाभयोः ॥

अनामापार्श्वसंलग्ना चतुरस्य कनीयसी ।
यस्मिन्निकुञ्चको वेदभाषणे स्वल्पदर्शने ॥

समं शिखरयोर्योगात् भवेद्विशिखराभिधः ।
शापार्थमङ्गुलीस्फोटे भामिनीकोपकर्मणि ॥

अस्य विश्लेषणादिष्टौ नास्तीत्यभिनयो बुधैः ।
पराङ्मुखतलौ भिन्नौ पताकौ कटिपार्श्वगौ ।
अतः स्खलतगौ स्यातां क्रमेण वरदाभवेत् ॥

जायनः

## हस्तलक्षणविस्तारः

स्थानादिन्यासभेदेन संभवन्तोऽप्यनेकधा ।
कियन्तोऽपि मया प्रोक्ता करा विस्तरभीरुणा ॥

दृष्टिभ्रूमुखरागाद्यैरुपाङ्गैरपि पोषिताः ।
व्यक्ताङ्गैश्च करा योज्या रसभावप्रकाशकाः ॥

अभिनेयेषूत्तमेषु फालस्था मध्यमेषु च ।
उत्तमे निकटस्थाः स्युः मध्यस्थाः मध्यमेषु च ॥

मध्यमे सात्त्विके प्रोक्तो मध्यमोऽल्पसात्विके ।
प्रचुरः सबुधैरेवं प्रचारस्त्रिविधस्स्मृतः ॥

नियोज्यास्तूत्तमैः पात्रैः प्रत्यङ्गाद्युपबृंहिताः ।
ससौष्ठवाः सुलक्ष्माणः करास्थैर्मध्यमैः पुनः ? ॥

सुव्यक्तलक्ष्मगाः कार्यं सैष्ठवाधिष्ठितास्तथा ।
नीचैस्तैस्ते प्रयोक्तव्याः लोकवृत्तसमाश्रयाः ॥

मूर्छिते तन्द्रिते भीते व्याकुले च जुगुप्सिते ।
ग्लाने जरार्दिते सुप्ते ज्वरिते शोकपीडिते ॥

शीतार्ते व्याधिते मत्ते विषण्णोन्मत्तयोरपि ।
चिन्तान्विते प्रमत्तेऽपि निश्चेष्टे तापसेऽपि च ॥

न कराभिनयः कार्यं इत्युक्तं पूर्वसूरिभिः ।
ये करास्त्वन्तरं भावं सूचयन्तीह ते मताः ।
मूर्छितादिष्वपि प्रायः कराः कर्कटकादयः ॥

अशोकः

## हस्तसंख्या

सर्वेऽपि मिलिता हस्तास्त्रिषष्टिः सूरिभिर्मताः ।

कुम्भः

## हस्ता—नक्षत्रहस्तः

हस्ता रिक्षेः पताका स्यादूर्ध्वं चलितरूपकः ।

श्रृङ्गारशेखरः

## हारदामविलासकम्

भुजावंसांतरं गत्वा युगपत्पार्श्वयोर्द्वयोः ।
एते ता यत्र तत्प्रोक्तं हारदामविलासकम् ॥

## हावलक्षणम्

भाव एव प्रकृष्टः सन् श्रृङ्गाररससूचकः ।
नानावस्थान्तरकृतो हाव इत्यभिधीयते ॥

वेमभूपालः

## हावभावादिलक्षणम्

भावात्समुत्थितो हावो हावाद्धेला समुत्थिता ।
श्रृङ्गारप्रौढिमा हेला कार्या वने हि यः ? ॥

हम्मीरः

## हासः

बालकादिवचोवेषवैषम्ये जनिता हि या ।
चेतसो विकृतिः स्वल्पा स हासः कथितः खलु ॥

## हास्यः

दीर्घस्वरहितो हास्यः ।

कुम्भः

## हास्यभेदाः

स्मितं च हसितं चैव विहसितं साहसितम् ।
भवेत्प्रहसितं चापि तथाऽतिहसितं भवेत् ।
षड्भावसंश्रितं हास्यमेवं षड्विधमुच्यते ॥

जगद्धरः

## हास्यरसः

हास्यं नाम रसः शिवप्रियतमो हासाविभावप्रतो
हर्षादप्यनुभावतः सुखमयः सम्पद्यते पञ्चधा ।
स्त्रीनीचप्रकृतिर्निगूढविषयः सम्रामकाणां प्रियः
श्रृङ्गारानुगतः स्वयं निगदितो देवेन कामद्विषा ॥

जगद्धरः

## हास्ये प्रयोक्तव्यानि पात्राणि

स्त्रीनीचबालमूर्खादि विषयो हास्य इष्यते ।
प्रहासश्चातिहासश्च धीराणां नैव दृश्यते ॥

स्मितं विहसितं चैषां प्रबलेष्वपि हेतुषु ।
विपर्यासेन वैषम्यं नाटकादौ विशेषतः ॥

स्मितं च हसितं चापि विशिष्टानां प्रकीर्तितम् ।
मध्यमानां विहासश्चावहासश्चैव दृश्यते ॥

प्रहासोऽप्यतिहासश्च मन्दानामिह जायते ।
विरुद्धैश्चेष्टितैस्तैस्तैर्विकृतैरुपभूषणैः ॥

विकृतैरेव वचनैरन्यैर्हास्यरसोदयः ।
शङ्काऽसूयाऽवहित्थं च निद्रा चपलता मतिः ॥

ग्लानिकामश्च लज्जा च हास्यभावा भवन्त्यमी ।
स्थायी भावोऽस्य हासश्च कथितो भरतादिभिः ॥

अङ्गनेपथ्यवाक्येन त्रिधैव परिकीर्तितः ।
प्रसिद्ध आश्रयश्चास्य चेटचेटीविटादयः ॥

जगद्धरः

## हिन्दोलकलक्षणम्

हिन्दोलकस्य छावाटी वल्लवातसमुद्भवा ?।
षड्जांशार्षभहीना स्यात् श्रृङ्गारे मन्द्रधैवता ॥

मोक्षदेवः

## हुडुका

अथोच्यते हुडुक्काया लक्ष्मोद्देशं क्रमागतम् ।
वितस्तिद्वितयं दैर्घ्ये वितःस्तद्वितयं पुनः ॥
चतुर्भिरङ्गुलैर्युक्तैः परिधावङ्गुलोन्मिता ।
पिण्डे सप्ताङ्गुले वक्त्रे मण्डलये वक्त्रयोः पुनः ॥
एकादशाङ्गुले वल्ली संभवे स्थौल्यतः पुनः ।
सपादाङ्गुलके स्यातां मुद्गली कृतबन्धने ॥
स वक्त्रे चैतयोः कार्यं रन्ध्रषट्कं तथाऽग्रतः ।
वध्ररज्जुनिवेशार्थं विदधीतार्गलात्रयम् ॥
पश्चाद्भागेऽर्गलाद्वन्द्वमन्तरे कलशान्वितम् ।
ततो निधीयते मध्ये वध्ररज्ज्वन्तरे तथा॥
अङ्गुलत्रयविस्तीर्णा मनोज्ञाधरपट्टिका ।
द्वात्रिंशत्तंतुमथितरज्ज्वा कक्षाद्वयं दृढम् ॥
बध्वा निवेश्यते तद्वदैर्त्रिगुणा स्कन्धपट्टिका ।
तत्रोत्पेक्षणसंस्था च कुर्यात्पादाङ्गुलोन्मितम् ॥
रन्ध्रं तस्याश्चतुर्थांशे नादनिर्मुक्तिहेतवे ।
हुडुकैषा स्मृता अस्यां देवता सप्तमातरः ॥
निधायस्कन्धदेशे च वादकः स्कन्धपट्टिकाम् ।
धृत्वा वामेन हस्तेन रम्यामुदरपट्टिकाम् ॥
हुडुक्का वादनं कुर्यात् मञ्जादक्षिणपाणिना ।
देंकारवर्जितास्तत्र मञ्जाकारसमन्विताम् ॥
कुर्वीत व्यापकान् वर्णान् कादिकान् पाटकोविदः ।
लोके स्कन्धावजमिमामावजं च प्रचक्षिरे ॥
हौडुक्किकस्यानुगताः श्रेष्ठा मार्दलिका स्मृताः ।
खदिरानौकहोद्भूतो मितास्यों मध्यमो महान् ॥
त्रिवितस्तिर्भवेद्दीर्घ्या षट्पङ्गुलसुविस्तृतः ।
पञ्चाङ्गुलं भवेत्तस्य मुखं सव्यापसव्यकम् ॥
चतुर्विंशाङ्गुलं लोहं दक्षिणं वलयं भवेत् ।
वामास्यवलयं वल्ल्यो कुर्यात्किंचित्ततोऽधिकम् ॥
चतुरङ्गुलमुत्सृज्य वामास्ये लोहपत्तिकाम् ।
अङ्गुलत्रयविस्तारां दृढाकम्पे विवेष्टयेत् ॥

कलशाश्च भवेत्सप्त रीतिकोरि विनिर्मिताः ?।
परितः कीलितास्तेषां चतुरङ्गुलमन्तरम् ॥
रन्ध्राणि तेन मानेन कुर्यात्सव्यास्यचर्मणि ।
आवेष्टय कलशांस्तांश्च वलयं लोहनिर्मितम् ॥
आकृष्य सुदृढां कुर्यात्सप्तरन्ध्रनिबन्धनैः ।
षाण्मासिकस्य वत्सस्य मृतस्यादाय पारिकाम् ॥
अङ्गुल्य वल्लीवलयं तया सुश्लक्ष्णभूतया ।
हौडुक्का हस्तपाटा चित्रपाटावपाटकौ ॥
हुडुक्का एव संमण्डिढक्काभेरीसमुद्भवा ।
कंसारघर्घराकम्राभार्गलीसंभवास्तथा ॥
क्रमादष्टादशपदेष्वेते पाटाः प्रतिष्ठिताः ।
द्वादशादिपदेष्वस्ति विशेषः सोऽभिधीयते ॥
ढक्काकुडुक्ककरटा प्रोद्भवा द्वादशेऽधिकाः ।
त्रयोदशे सेलुकाजानिस्सानोत्थाश्चतुर्दशे ॥
घण्टोद्भवाः पञ्चदशे पदे सप्तदशेऽपि च ।
किरिकिट्टभवा अष्टादशे पाटा अमी स्थिताः ॥
वीरदण्डयां वनिभवा अधिकाः संप्रकीर्तिताः ?।
रागाणां षाडवाद्यां च ग्रामसंभवतापि च ॥
वर्ण्या वाग्गेयकारेण तालरागार्णवः स च ।
प्रबन्धः पृथिवीभर्ता मुरारिप्रीतये कृतः ॥

कुम्भः

## हुडुकाहस्तपाटाः

उल्लोलः पाण्यन्तरश्च निर्घोषः खण्डकर्तरी ।
दण्डहस्तः समनखो विंदुरमूलहस्तकः ॥
रेचको भ्रमरो विद्युद्विलासश्चार्धकर्तरी ।
अलग्नको रेफसप्तपाणिस्तु परिव्यस्तकः ॥
इति षोडशपाटाः स्युः सर्ववाद्योपयोगिनः ।
प्रायेणैतान् प्रयुञ्जन्ते हुडुक्कायां मुनीश्वराः ।
अथोदाहरणं तेषां वक्ष्ये लक्ष्यपुरःसरम् ॥

कुम्भः

## हुरमयी

आलातं परिवर्त्यांगं पादं पृष्ठगतं यथा ।
अलातांघ्री पृष्ठगते शीघ्रमन्यांघ्रिलङ्घने ।
लङ्घयेदङ्घ्रिणान्येन प्रोक्ता हुरमयी नटैः ॥

## हृदयङ्गमः

ताभ्यः कियत्यो वक्ष्यन्ते कामसञ्जीविकास्तु याः ।
पताकं हृदये न्यस्य करे न्यासोऽपसारिते ॥

तदेवाङ्कं बहिः क्षिप्त्वा भ्रमणाद्धुदयङ्गमाः ।
भ्रामे यत्र स्मृतोऽभ्यासस्तद्धुस्त्रिपुरःसरम् ॥

कुम्भः

## हेतवः पञ्च

अत ऊर्ध्वं प्रवक्ष्यामि विकल्पान् पञ्चहेतुकान् ।
जातिः स्थानं प्रकारश्च प्रमाणं नाम चैव च ॥
ज्ञेयो ध्रुवाणां गानज्ञैर्विकल्पः पञ्चहेतुकः ।
वृत्ताक्षरप्रमाणं हि जातिरित्यभिसंज्ञिता ॥
समार्धविषमामिश्र प्रकारः परिकीर्तितः ।
षट्कलाष्टकले चैव प्रमाणे द्विविधे स्मृते ॥
यथा गोत्रकुलाचारैर्नृणां नामाभिधीयते ।
एवं नामाश्रयोपेतं ध्रुवाणामपि चेष्यते ॥

नाट्यशास्त्रे

## हेमन्तकालाभिनयः

सङ्कोचनाच्च गात्राणामभिलाषाच्च पावके ।
हेमन्तसमयो नाट्यचतुरैरभिनीयते ॥

वेमभूपालः

## हेला—सात्त्विकभावः

प्रौढेच्छयाऽतिरूढानां नारीणां सुरतोत्सवे ।
मधुविस्तारमालम्ब्य हेला सा परिकीर्तिता ॥

शुभङ्करः

## हेलालक्षणम्

सग्रीवा रेचको नेत्रभ्रूविकारोपबृंहितम् ।
शृङ्गारनिर्भरो हाव एव हेलेत्युदाहृता ॥

वेमभूपालः

## हौडुक्किकवाद्यानि

वल्लिश्च वल्लिपाटश्च घत्ताभेदो गडप्पणी ।
अनुश्रवणिका हस्तो जोडणी त्रिगुणा ततः ॥
पञ्चहस्तः पञ्चपाणिर्वाद्यं स्यात्पञ्चकर्तरी ।
ततश्चन्द्रकलामेतान्याहुराद्यास्त्रयोदश ।
प्रायेणैतानि दृश्यन्ते हुडुक्कायां परेष्वपि ॥

कुम्भः

## हंसकः—ध्रुवः

द्वादशाक्षरपादोऽन्यो भागैकफलभाक्प्रभोः ।
हंसके च रसे वीरे गीयदेशे खराह्वये ।
लघुर्गुरुर्लघुर्यत्र स तालो हंसकः स्मृतः ॥

गान्धर्ववेदे

## हंसकलासः

हस्तौ विधाय हंसास्यौ यत्र हंसीव नर्तकी ।
अतिरम्यांघ्रिविन्यासैर्नानागतिमनोहरम् ॥
यद्वा नृत्यति हंसाद्यः कलासस्तदोदितः ।
नर्तकी दक्षिणे पार्श्वे विधाय मकरं करम् ॥

अशोकः

## हंसपक्षः

स्त्रीणां विभ्रमभेदेषु स्थापनीयः स्तनान्तरे ।
निर्वेदादिषु भावेषु शृङ्गारादिरसेष्वपि ।
रोमाञ्चाद्यनुभावेषु प्रयोज्योऽयं यथोचितम् ॥

विप्रदासः

## हंसप्लुतम्

चार्या तदाख्यया ज्ञेयं करणं हंसकप्लुतम् ।
करौ सामान्यतः प्रोक्तौ वक्षःपादानुगाविह ।
चार्या एव द्विरावृत्त्या भट्टतण्डुरिदं जगौ ॥

नृत्तरत्नावली

## हंसावतीलक्षणम्

रागो वसन्तनामा स्याद्यस्यां तालो द्वितीयकः ।
वृत्तिरारभटी रीतिर्लाटी रौद्ररसः पुनः ॥
वर्णो रक्तश्च देवी तु चामुण्डा क्षत्रजं कुलम् ।
सप्रासाङ्घ्रित्रयन्यासः प्रोक्ता हंसावती तु सा ॥
विभावसुगणाः पञ्च समीरणगणोऽग्रतः ।
इत्येला लक्षणयुतामुवाच कुलशेखरः ॥
ऽ। ऽऽ। ऽऽ। ऽऽ। ऽऽ। ऽ॥ ऽ

सोमराजदेवः

## हंसावत्यां कामगणाः

आदौ मध्ये तथा प्रान्तेऽनुप्रासैः संयुतो भवेत् ।
हंसावती कामलेखा कर्णाटैः परिगीयते ।
साम्नः पश्चिमवक्त्रेच्छा गायत्री ब्रह्मविप्रपैः ॥
स देवता वैश्यजातिः प्रत्येकं करणत्रये ।
आद्यमध्यभवाः प्रासाः चत्वारो मान्मथा गणाः ॥

मोक्षदेवः

## हंसी—गतिः

हंसस्येव गतिर्मन्दा मन्दव्यावर्तनान्तरा ।
या कौशलाद्धंसलीलागतिः सा प्रोच्यते नटैः ॥

सङ्गीतमुक्तावली देवेन्द्रकृता

## प्रस्तारलक्षणम्

खण्डप्रस्तारः

क्रमप्रस्तारः

विपरीत-क्रमप्रस्तारः

| | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| इति संख्या १८ | १ | २ | ३ | ६ | १० | २९ | ३३ | ६० | २६ | १०९१ | ३४० | ६२० | १०८९ | १९५० | ३४८४ |

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ६ | १० | १९ | ३३ | ५० | १०५ | इति पातालः |
| १ | २ | ५ | १७ | २२ | ४४ | ६० | २८९ | ३५८ | |

## द्रुतमेरुः

| | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| | | | | | | | | | | | | | १ |
| | | | | | | | | | | | १ | १ | १३ |
| | | | | | | | | | १० | ११ | ११ | १२ | ७७ |
| | | | | | | | १ | १ | ९ | १० | ५४ | ६५ | २५४ |
| | | | | | १ | १ | ७ | ८ | ३४ | ४४ | १४७ | २०० | ५४६ |
| | | | १ | १ | ५ | ६ | २० | २० | ७० | १४ | २०० | ३५७ | ६४६ |
| | १ | १ | ३ | ४ | ९ | १४ | २५ | ४४ | ५३ | १२५ | १५३ | ३३६ | ३४९ |
| १ | १ | २ | २ | ५ | ४ | १२ | ७ | २६ | १३ | ५६ | २४ | ११८ | ४४ |